॥श्रीकाशीजीमेमहल्लाभदयनीदिवाकरछापाखानेमेसिद्धांतकौमुदीतत्वबोधिनीटीकासंयुक्ता छापीगई
शिवचरनकेइहाँ लिखामहीपनारायनपांडे छापनेवाला बदल सुधापंडित बटुक जिसेलेनाहोयसोचादनीचो
कमेकुंजगलीकेपच्छिमतरफ शिवचरनकेदुकानमेमिलेगी॥ श्रीसंवत् १९३७ मी: पोषवदी ९ वारशनी ॥

॥श्रीगणेशायनमः॥श्रीगुरुभ्योनमः॥नत्वागजाननंदेवंशारदांचगुरून्जिनान्॥वालानांवोधकर्त्रीयंलिख्यतेतत्ववोधिनी १नत्वाविश्वेश्वरंसांवंकृत्वाचगुरुवंदनं॥ सिद्धांतकौमुदीव्या
ख्याक्रियतेतत्ववोधिनी १ विघ्नविघातायकृतंमंगलंशिष्यशिक्षायैनिवध्नन्चिकीर्षितंप्रतिजानीते।मुनित्रयमित्यादिना। त्रयोऽवयवायस्यतत्त्रयंसंख्यायाअवयवेतयप्॥द्वित्रि
भ्यांतयस्यैत्ययच्।मंतारोवेदशास्त्रार्थतत्वावगंतारोमुनयः मनेरुच्चेत्यौणादिकसूत्रेणमनेरुःउकारोमनेः परइन्नत्ययश्चगणसूत्रेहभवति।किदित्यनुवर्तनात्तपरकरणाद्वा।तेषां
पाणिनिकात्यायनपतंजलीनांत्रयं मुनित्रयं॥ ननुस्वयंभुवेनमस्कृत्येत्यत्रेवात्रापिनमःस्वस्तिइत्यादिनाचतुर्थीस्यादितिचेन्नैवम्।उपपदविभक्तेःकारकविभक्तिर्वलीयसीतिवक्ष्यमा
णत्वान्नमस्करोतिदेवानितिवद्द्वितीयायाएवयुक्तत्वात्। किंचजहत्स्वार्थावृत्तिरितिपक्षेनमः शब्दस्यात्रनिरर्थकत्वात्तद्योगेचतुर्थीनभवति अर्थवद्ग्रहणपरिभाषायाः प्रवृत्तेः।
स्वयंभुवेनमस्कृत्येत्यत्रतुस्वयंभुवमनुकूलयितुमित्यर्थेविवक्षायांक्रियार्थोपपदस्येत्यादिनाचतुर्थीतिमूले एवस्फुटीभविष्यतिनचैवंनमःस्वस्तीतिसूत्रेनमः पदंव्यर्थमितिशं
क्यंहरयेनमइत्यत्रतुहरिमनुकूलयितुमित्यर्थेऽविवक्षितेसंवंधसामान्येषष्ठ्यांप्राप्तायांतदपवादतयातस्यावश्यकत्वात्। तदुक्तीरिति। तेषांपाणिन्यादीनामुक्तीः सूत्रवार्त्ति

## ॥श्रीगणेशायनमः॥पाणिनयेनमः॥मुनित्रयन्नमस्कृत्यतदुक्तीःपरिभाव्यच॥ वैयाकरणसिद्धांतकौमुदीयंविरच्यते॥१॥

कभाष्याणीत्यर्थः तस्यमुनित्रयस्योक्तीरितिव्याख्यानेपिमुनिसमुदायेनसूत्रंवार्तिकं भाष्यंवानोक्तमितिसमुदायिनांमुनीनामेवोक्तीरितिपर्यवस्यति॥ परिभाव्येति पर्यालोच्येत्य
र्थः।नचपरिपूर्वस्यभवतेस्तिरस्कारार्थत्वात्कथमत्रज्ञानार्थतेतिशंक्यंपरीत्यस्यभानीतिचुरादिणिजंतेनयोगात्॥केचित्त्वत्रभवतिनायोगमभ्युपेत्याहुः परोभुवोऽवज्ञानइतिसू
त्रेपरौभुवइत्यस्यावज्ञानइतिविशेषणान्नतिरस्कारार्थत्वनियमः।मनसापरिभाव्यकिंचिदित्यादिश्रीहर्षप्रयोगाच्च।अतएवचात्राप्रयुक्तत्वदोषशंकापिनास्तीति।अन्येतुअ
नादरः परिभवः परिभावस्तिरस्क्रियेतिकोशात्परिपूर्वकाद्भवतेर्धात्वं तादेवतिरस्कारप्रतीतिर्नान्यस्मादित्याशंकेवात्रनास्तीत्याहुस्तन्मंदम्।परिभूयपरिभवतीत्यत्रापितिर
स्कारप्रतीतेः।वैयाकरणेति।व्याकरणमधीयतेविदंतिवावैयाकरणाः तत्सिद्धांतानांकौमुदीप्रकाशिकेत्यर्थः।निदुष्टसकलजनाह्लादकत्वसाम्येनकौमुदीशब्दप्रयोगः।क
रिष्यमाणायाअपिकौमुद्याःबुध्यासंनिधापितत्वादियमित्यंगुल्यानिर्देशः।विरच्यतइतिमयेतिशेषः रचप्रतियत्नेप्रतिपलोगणाधानंविपूर्वादस्माद्वर्तमानसामीप्येभविष्यदर्थेवर्तमानप्र

अइउण्।णानुबंधोऽण्संज्ञार्थः यायासंज्ञासासाफलवती॥ऋलृक्। ककारस्तु कइक्उक्संज्ञार्थः।एओङ्।इतिङकार एङ्संज्ञार्थः।ऐऔजितिचकारस्तुच्इच्एच्ऐच्संज्ञा
र्थः वर्णानामसंदिग्धत्वेनबोधनायसंहितायाअविवक्षणादेतेषुसंधिः।स्वराणांचादिषुपाठाच्चादयोसत्वइतिनिपातसंज्ञायांनिपातएकाजनाङितिप्रगृह्यत्वेप्रकृतिभावान्नसंधिरित्य
न्ये स्यादेतत्।अकारादुपदेशेनयथातत्सवर्णानामाकारादीनांलाभात्पृथगाकारादयोनोपदिष्टास्तथाऋलृवर्णयोरपिसावर्ण्यादृकारोपदेशेनैवोभयसिद्धेः।किंपृथगुपदे
शेनानचजातिपक्षेऋलृवर्णयोः पृथगुपदेशआवश्यकस्तयोर्भिन्नजातित्वादितिवाच्यं।सावर्ण्योद्देवैकजात्युपदेशेजात्यंतरस्यापिलाभात्।ऋलृवर्णयोः प्रत्येकंत्रिंशतः
संज्ञासिद्धयेऽणुदित्सवर्णस्येतिसूत्रेऽणग्रहणस्यजातिपक्षेप्यावश्यकत्वादितिचेदत्राहुः।ऋलृवर्णयोःसावर्ण्यस्यानित्यतां ज्ञापयितुंउभयोर्निर्देशः।तत्फलंतुक्लृप्तशिखायस्ये
तिक्लृप्तशिखस्तस्यदूरात्संबोधनेक्लृप्तशि३खेतिप्लुतः।ऋलृवर्णयोःसावर्ण्यस्यनित्यत्वेतुअनृतइतिपर्युदासादृकारस्येवलृकारस्यापिप्लुतोनस्यादिति समाधानांतरमप्याहुरणइत्य

अइउण्।ऋलृक्।एओङ्।ऐऔच्।हयवरट्।लण्।ञमङणनम्।झभञ्।घढधष्।जबगडदश्।खफछठथचटतव्।कपय्।शषसर्।हल्।इतिमाहे
श्वराणिसूत्राणि।अणादिसंज्ञार्थानि।एषामन्त्याइतः।लण्सूत्रेऽकारश्चाहकारादिषुकारउच्चारणार्थः।हलन्त्यम्१।३।३॥हलितिसूत्रेऽन्त्यमित्स्या
त् आदिरन्त्येनसहेता१।१।७१॥अन्त्येनेतासहितआदिर्मध्यगानांस्वस्यचसंज्ञास्यात्। इतिहल्संज्ञायां॥ नदर्शीइष्यते।हयवरट्।टानुबंधोऽट्संज्ञार्थः।हकारो
पदेशस्तुइ अश्हश्इण्ग्रहणेषुहकारग्रहणार्थः।अर्हेण।अड्व्यवायेपीतिणत्वं देवाहसंति भोभगोइतिरोर्यत्वंदेवोहसतिहशिचेत्युत्वं।लिलिहिढ्वे लिलिहिध्वे।विभाषेटइति
वाढत्वं।लण्।णकारानुबंधोऽण्इण्यण्संज्ञार्थः।नन्वणितिपूर्वेणकारेणाणादित्युच्यते कचित्परणकारेण।इणितिनुपरणकारेणैव।तथाचनिः संदेहायअनुबंधांतरमेव
कर्तुमुचितं।सत्यम्।व्याख्यानतोविशेषप्रतिपत्तिर्नहिसंदेहादलक्षणमितिपरिभाषाज्ञापनायपुनर्णकारानुबंधइतिस्थितमाकरे।ञमङणनम् मकारइहअम्यम्ङम् ञ
मङ्म्संज्ञार्थः।झभञ्।ञकारोयञ्संज्ञार्थः घढधष्इतिषकारस्तुझष्भष्संज्ञार्थः।जबगडदशितिशानुबंधोऽश्हश्वश्झश्जश्बश्संज्ञार्थः।खफछठथचटतव् इति
सूत्रेवकारस्तुछव्संज्ञार्थः।कपयितियकारोयय्मय्झय्खय्चय्संज्ञार्थः।शषसरितिरेफस्तुयर्झर्खर्चर्शर्संज्ञार्थः। हलितिलकारस्तुअल्हल्वल्रल्झल्शल्सं
ज्ञार्थः।पुनर्हकारोपदेशस्तुवल्रल्झल्शल्सुहकारग्रहणार्थः।रुदिहि।स्वपिहि।रुदादिभ्यःसार्वधातुकेइतिवलादिलक्षणइट्।स्निहित्वा।स्नेहित्वा। नत्का॥ ॥

सेडिति निषेधं बाधित्वा रलो व्युपधादिति वा कित्त्वं। अदाग्धाम् घत्वस्यासिद्धत्वेपि हकारस्य झलत्वात् झलो झलीति सलोपः। अलिक्षत् शल इगुपधादनिटः क्सः। ननु पुनर्हकारस्यावश्यकत्वे पिश
ध्येहकारं पठित्वा। अलोंत्यस्य हलोनंतरा संयोगः। झलो झलि शल इगुपधेत्यादिसूत्राणि यावेतित्वानुबंधानिता नि अलोंत्यस्य हलोनंतरा इत्येवं रूपेणारेफानुबंधान्येव च कृत्वा हलि
ति पृथक् सूत्रं त्यज्यतां मैवं। तथाहि सति हरिहें सति हरिहें रित्यादि न सिध्येत्। तत्र खरवसानयोर्विसर्जनीयो वा शरीत्यादि प्रसंगात् तो हलि तिसूत्रमावश्यकमेव एवं च हलिति सू
त्रेंऽत्यमिति वक्ष्यमाणग्रंथोपि स्वरसतः संगच्छते। अणादिसंज्ञार्थानीति। अणादिसंज्ञाऽर्थः प्रयोजनं येषां तानि इति विग्रहः। अणादिसंज्ञाभ्य इमानीत्यस्वपदविग्रहो वा। अर्थेन नित्य
समासो विशेष्यलिंगता चेति वक्ष्यमाणत्वात्। एषामंत्या इत इति सर्वसूत्राणामंत्याः णादयो हलंत्यमित्यनुपदं वक्ष्यमाणेनेत्संज्ञका इत्यर्थः। लण्सूत्रेऽकारश्चेति। अनंत्यत्वात् पृथगुक्तिः।
वचनविपरिणामेन इदिति संबध्यते इत्संज्ञा चास्योपदेशेऽजनुनासिक इदित्यनेन। एवं च णादिभिरिङ्गिरादिरंत्येनेति वक्ष्यमाणेन प्रत्याहारग्रहणादणादिसंज्ञार्थानीति यदुक्तं तत्संगच्छत
इति भावः। अकार उच्चारणार्थ इति। ननु लण्सूत्रस्याकार इव प्रयोजनार्थ इत्यर्थः। हलंत्यं। अंतेऽवसाने भवमंत्यम् दिगादित्वाद्यत्। उपदेशेऽजनुनासिक इदित्यत उपदेश इदिति चानुवर्त
ते। आदिरंत्येनेति सूत्रेण सहान्योन्याश्रयमाशंक्य आरंभात्तं परिहरति। हलिति सूत्रेंत्यमिति हलि अंत्यमिति विग्रहे सप्तमीति योगविभागात् सुप्सुपेति वा समास इति भावः। यद्वा षष्ठी तत्पुरु
षोयं। हलिति सूत्रस्यांत्यमित्यादिति ष्यास्यानसंभवात्। आदिरंत्येन सहेता। अंत्येनेति किं। सुडिति प्रत्याहारस्तृतीयैकवचनावयवेन माभूदिति काशिकाकृत्। यद्यपि टकारांतसंघस्य
टकारोंत्यो भवति तथाप्यंत्येनेति ग्रहणसामर्थ्यादंत्यत्वप्रयुक्ता यस्येत्संज्ञा तेनेव प्रत्याहारः न हि टाटकारे हलंत्यमिती त्संज्ञा प्रवर्तते नचैवं प्रत्याहारासिद्धिः। लण्सूत्रस्थावर्णस्यानुनासि
कत्वप्रतिज्ञासामर्थ्यादनंत्येनापि इता प्रत्याहारात् सिध्यतीति काशिकाकाराशयः निष्कर्षस्तु हस्वोजसमोडिति सूत्रे दर्शयिष्यते विस्तरस्तु शब्दकौस्तुभेऽनुसंधेयः। इतेति किं। रप्रत्या
हारो यथा स्यात्। सत्यनुनासिकत्वप्रतिज्ञासामर्थ्यादनंत्येनापि ग्रहणस्यात् इत्युक्तं। न चैतदिति त्यस्य विरहे लभ्यतार इति शब्दकौस्तुभे स्थितं। आ— द्यंताभ्यामवयवाभ्यामवयवी समुदाय
आक्षिप्यते। तस्य च युगपदुच्चारणे प्रयोगाभावात्तदवयवेष्ववतरंती संज्ञा मध्यगेषु विश्राम्यति न त्वाद्यंतयोः संज्ञा स्वरूपांतर्भावेन तयोः पारार्थ्ये निर्णयादित्याशयेनाह। मध्यगानामिति स
स्य चेति स्वं रूपमित्यनुवर्तत इति भावः। स्वं रूपं चादेरेव स्यात् नांत्यस्य। अंत्येनेत्यप्रधान तृतीयानिर्देशात्। सर्वनाम्न उत्सर्गतः प्रधानपरामर्शित्वात्। ननु स्वमित्यस्यानुवृत्तौ कः संशोत्या
कांक्षायाः शांतत्वादवयव्याक्षेपो न स्यात्। तथा चैको यणचीत्यादाविकारस्य स्थाने यकारः स्यादकारे परे इत्येवमर्थः स्यात्। मैवं। आदेरेव संज्ञित्वे तु आदिरंत्येनेति संज्ञाकरणस्य वैय
र्थ्यापत्तेः। किंच अण् अक् अच् अम् अशादीनां पृथक् निर्देशोपि व्यर्थः स्यात् सर्वत्र अकारस्यैव संज्ञित्वादिति दिक्। शब्दकौस्तुभे तु आद्यंतावयवद्वारा समुदायानुकरणेन सिद्धेऽस्य व्याप्

उपदेशेंत्यंहलिति उपदेशेकिम् अग्निचित् सोमसुत्इतिकाशिका अत्रेत्संज्ञायांलोपःस्यात् नचतुकोवैयर्थ्यं आगत्येत्यादौचरितार्थत्वात् नचक्विपःपित्वस्यवैयर्थ्यं आग्नच
ता वित्यादौचरितार्थत्वादितिहरदत्तः अंत्यंकिं मनिनोमकारस्यमाभूत् सत्यांहीत्संज्ञायामंत्यादचः परःस्यात् वेश्मसद्मसर्वधातुभ्योमनिन् हलितिकिंभूसत्तायांभविता न
चप्रयोजनाभावान्नेत्वमितिवाच्यं सत्यामित्संज्ञायामूदितइतिइड्विकल्पापत्तेः अन्येतुचिरिणोतिजिरिणोतिइहभात्तोरंत्यस्यमाभूत्सत्यामित्संज्ञायामिदितइतिनुम्स्यादि
त्याहुः आद्योच्चारणमिति आद्योच्चारणविषयीऽभूतोयःशब्दस्तस्यांत्यंहलित्स्यादितिफलितोर्थः उपदेशेजनु उपदेशनमुपदेशोभावेघञ् उपदेशेकिंअभ्रआँअपःसप्तम्यर्थ
द्योतकोत्राङ् आङोनुनासिकश्छंदसीत्याकारोनुनासिकः यद्यप्यत्रउञ ऊँइत्यत्रेवानुनासिकविधानसामर्थ्यान्नेत्वमितिसुवचंतथाप्युत्तरार्थमवश्यंकर्तव्यमुपदेशग्रहणं
स्पष्टप्रतिपत्तयेइहैवकृतं अकिम् मनिनोमकारस्यमाभूत् नचहलंत्यमित्यंत्यग्रहणसामर्थ्यादनंत्यस्यमकारस्यनभवेदितिवाच्यं आलच्इत्यत्रालच्प्रत्ययादावतिप्रसं
गवारणेनतस्यचरितार्थत्वात् अनुनासिकइतिकिं ईक्षदर्शने ईक्षितःसत्यांहीत्संज्ञायांश्वीदितोनिष्ठायामितीण्नस्यात् यद्यप्यत्रोपज्ञीव्यत्वादनुनासिकसंज्ञाप्रथमंवक्तुमु

हलंत्यम्॥उपदेशेंऽत्यंहलित्स्यात्॥उपदेशआद्योच्चारणंततोऽण्अच्इत्यादिसंज्ञासिद्धौ॥उपदेशेऽजनुनासिकइत्१।३।२॥उपदेशेनुनासि
कोऽजित्संज्ञःस्यात् प्रतिज्ञानुनासिक्याःपाणिनीयाःलण्सूत्रस्थावर्णेनसहोच्चार्यमाणोरेफोरलयोःसंज्ञा ॥ चितातथापिनासिकामनुगतइति

योगाश्रयणेनैवगतार्थत्वादनुनासिकसंज्ञासूत्रंमंदप्रयोजनमितिध्वनयितुंनेहोपन्यस्तं नचैवंपरोनुनासिकइत्यत्रयरः पदांतस्यानुनासिकशब्देपरेअनुनासिकः
वःस्यादित्यर्थः प्रसज्येतस्वंरूपमितिपरिभाषोपस्थानात् संज्ञाकरणेतुअशब्दसंज्ञेतिनिषेधान्नायंदोषइतिवाच्यं उक्तपरिभाषायाभाष्येप्रत्याख्यानात् उपात्मंत्रकरणेपञ्चभाँडची
वणसिड्ङमुसित्यमित्यादिनिर्देशेनस्वंरूपमितिपरिभाषाया अनुपस्थितिकल्पनात्सूत्रमतेपिदोषाभावात् ननूक्तनिर्देशाश्रयणेनप्रतिपत्तिगौरवमितिचेत् अतएवनिष्प्रयो
जनमित्युक्त्वामंदप्रयोजनमित्युक्तं प्रतिज्ञायतइतिप्रतिज्ञा आतश्चोपसर्गइतिकर्मण्यङ् अनुनासिकस्यभावआनुनासिक्यं गुणवचनब्राह्मणादिभ्यइतिष्यञ् प्रतिज्ञा आ
नुनासिक्यंयेषामितिविग्रहः केचित्तुप्रतिज्ञानंप्रतिज्ञासाअस्यास्तीतिप्रतिज्ञं अर्शआद्यच् प्रतिज्ञंआनुनासिक्यमेषामितिविग्रहःइति यद्यपिसूत्रकारस्योतानुनासिकपाठइदानीं
परिभ्रष्टस्तथापिवृत्तिकारादिव्यवहारबलेनयथाकार्यंप्राक्स्थितइत्यनुमीयतइतिभावः पाणिनीयाइति पाणिनिनाप्रोक्तंपाणिनीयंवृद्धाच्छः तदधीयतेविदंतिवापाणिनीयाः तदधीतइ

ननु रलयो रितिन्सूत्रं टकारस्यापि मध्यगत्वादत्त आह प्रत्याहारेष्विति ॥ ॥ अनुनासिकइत्यादी ति आदिशब्देन पापाणके कुत्सितैरेङः पदान्तादतिइत्यादिग्राह्यं प्र
त्याहारशब्देनेति प्रत्याह्रियंते संक्षिप्यंते वर्णा यत्रेति प्रत्याहारः करणाधिकरणयोश्चेति ल्युटि प्राप्ते कृत्यल्युटो बहुलमिति बहुलग्रहणादधिकरणे घञ् यद्यपि योगमा
त्रमकारादिसंज्ञा स्वतिप्रसक्ता तथापि योगरूढिरिति भावः ऊकालोच् ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वे सौत्रं पुंस्त्वं उइति त्रयाणां प्रश्लेषेण निर्देश इत्याह उश्च ऊश्च ऊ
श्चेतिवः वामिति त्रयाणां सवर्णदीर्घे कृते जसि परतो यणिवः आमिनुवां कालइव कालो यस्येति फलितार्थकथनमिदं विग्रहस्तु वः कालो यस्येति बोध्यः उशब्देन सोऽच्च
रणकालो लक्ष्यते अन्त्विम् संयोगस्य माभूत् प्रतक्ष्य प्ररक्ष्य कषयोरेकमात्रत्वेन ह्रस्वसंज्ञायां ह्रस्वस्य पिति कृतीति तुक् स्यात् आयेइति निपातान्नाद्युदात्ता इत्याकार

प्रत्याहारेष्वितांनग्रहणं अनुनासिकइत्यादिनिर्देशात् नत्वत्र ककारेयरेऽच्चकार्यं दृश्यते आदिरंत्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्या
हारशब्देनव्यवह्रियंते ऊकालोज्झ्रस्वदीर्घप्लुतः १।२।२७। उश्च ऊश्च ऊ३श्च वः वांकालइव कालो यस्य सोच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञस्स्या
त् स प्रत्येकमुदात्तादिभेदेन त्रिधा॥ उच्चैरुदात्तः १।२।२९। ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् आये नीचैरनुदा
त्तः १।२।३०। स्वस्थाअर्वाङ्‌ समाहारः स्वरितः १।२।३१। उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच्स्वरितसंज्ञः स्यात् ॥ ॥

उदात्तः पञ्चव्स्सुफिषइत्यंतोदात्तः ततः परस्य जसः सुप्त्वादनुदात्तत्वे त्यदाद्यत्वे पररूपत्वे शीभावे आद्गुणे च सति एकादेशउदात्तेनेत्येकार उदात्तः अर्वाङिति अर्वं
तमंचतीति अर्वाङ् ऋत्विगादिना अंचतेः सुप्युपपदे क्विन् ऋगताविति अस्मात् स्नामदिपद्यर्त्तीत्यादिना वनिपि गुणे च निष्पन्नोऽर्वन् शब्दो धातुस्वरेणाद्युदात्तः व
निपः पित्वेनानुदात्तत्वात् अंचतेरकारो पिधातुस्वरेणापित्स्वरेणवा उदात्तः उपपदमतिङिति समासे कृते समासस्येति स्वरेण तदपवादभूतेन गतिकारकोपपदात्कृ
दिति कृदुत्तरपदप्रकृतिस्वरेणवा अंचतेरकार उदात्तः वनो नलोपे सवर्णदीर्घे च कृते एकादेशउदात्तेनेत्याकार उदात्त इति अनुदात्तं पदमेकवर्जमिति शेषनि
घाता दाद्याकारोऽनुदात्तः एतच्च संभवाभिप्रायेणोक्तं वेदभाष्ये अर्वाङ् अभिमुख इति स्थितं ॥ ६ ॥ ॥

अतंत्रमिति अविवक्षितमित्यर्थः॥ तस्य चोदात्तस्वरितपरत्व इति उदात्तस्वरितौ परौ यस्मात्तदुदात्तस्वरितपरं तस्य भावस्तत्त्वं तस्मिन् सति उदात्तो वा स्वरितो वा परश्चेत्पूर्वस्य स्वरित
स्य यदुत्तरार्द्धं अनुदात्तं तस्य श्रवणं स्पष्टमित्यर्थः अन्यत्रेति उदात्तस्वरितपरत्वाभावे क्वेति किमोत् तित्स्वरितं व इति अनुदात्तं सर्वमपादादावित्यधिकारादनुदात्तः अश्वा इति
अशेः क्वनि नित्स्वरेणाद्युदात्तं संहितायां त्वेकादेश उदात्तेनोदात्त इत्योकार उदात्तः उदात्तपरत्वे ह्रस्वस्वरितस्योदाहरणमुक्त्वा दीर्घस्वरितोदाहरणमाह रथानां न येरा इति पर्द्ध
य इति फिट्स्वरेणान्तोदात्तः ततः पर
यमपि फिट्स्वरेणान्तोदात्तत्वमेकादेश स्वरितो वानुदात्ते पदादावित्युक्तेः स्वरितपरत्वे उदाहरणमाह शतचक्रमिति य इति फिट्स्वरेणान्तोदात्तः ततः पर
स्य सकारस्य रुत्वे उत्वे कृते आद्गुणे च उदात्तेनैकादेश ओकार उदात्तः अह्य इति स्वरितान्तत्वात् इकारस्य शेषनिघातत्वे ओकारेण सह एकादेशे च कृते स्वरितो वानुदात्ते पदा

२ स्व

तस्यादित उदात्तमर्द्धह्रस्वम् १।२।३२ ह्रस्वग्रहणमतन्त्रं स्वरितस्यादितोऽर्द्धमुदात्तं बोध्यं उत्तरार्द्धं तु परिशेषादनुदात्तं तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टं अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा क्वोऽश्वाः रथानां न येराः शतचक्रं योऽह्य इत्यादिष्वनुदात्तः अग्निमीळे पुरोहितमित्यादावुदात्तश्रुतिः स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा॥ मुखनासिकावचनोऽनुनासिकः १।१।८ मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्॥ तदित्थम् अइउऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः लृवर्णस्य द्वादश तस्य दीर्घाभावात् एचामपि द्वादश तेषां ह्रस्वाभावात्॥

दावित्योकारः स्वरितः कथमत्यस्य स्वरितत्वमिति चेत् अत्राहुः अहव्यासावित्यस्मात्कर्मणि ण्यत् तित्स्वरितं च ह्यभावस्तु संज्ञापूर्वकविधे
रनित्यत्वादिति अग्निमीळ इति ईकारः स्वरितः ळे इति तु प्रचयापरपर्याया एकश्रुतिरिति च स्वरप्रक्रियायां मूल एव स्फुटीभविष्यति मुखनासिका मुखं च नासिका चे
ति विग्रहे प्राण्यंगत्वादेकवद्भावे मुखनासिकमिति स्यादत आह मुखसहितेति नासिकयोच्चार्येति फलितार्थकथनमिदं उच्यतेऽनेनेति वचनं मुखनासिकावचनम
स्येति विग्रहः तुल्यास्य आस्ये भवमास्यं शरीरावयवाद्यदित्यभिप्रेत्याह ताल्वादीति आभ्यन्तरेति एतच्च प्रशब्दबलाल्लभ्यते ओष्ठात्प्रभृतिप्राक्काकलकादास्ये

तुल्यास्यं किं तप्तौ अत्र पकारस्य तकारे परे करोम्रीति लोपो मा भूत् प्रयत्नग्रहणं किं वाक्‌श्चो ततिं इति शस्य लोपो न ञमङणनानामिति नासिका चेति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते एदैतोरित्यादौ तत्परत्वमसंदेहार्थं न तत्कालग्रहणार्थं तेन क्लृप्तस्यापि संग्रहः चतुर्द्धेति निष्कर्षपक्षेनुपपन्नं यथा ऊष्मणामीषद्विवृतप्रयत्नाभ्युपगमात् स्पृष्टेषत्स्पृष्टेति एतेषामाभ्यंतरत्वं वर्णोत्पत्तिप्राग्भावित्वात् तथाहि नाभिप्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहंति ततो वर्णस्तदभिव्यंजकध्वनेर्वा उत्पत्तिः तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशंति तदा स्पृष्टता ईषच्चेदा स्पृशंति तदा ईषत्स्पृष्टता एवमि

तुल्यास्यप्रयत्नं सवर्णं १।१।९। ताल्वादिस्थानमाभ्यंतरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णं स्यात् अकुहविसर्जनीयानां कंठः इचुयशानां तालु ऋटुरषाणां मूर्द्धा लृतुलसानां दंताः उपूपध्मानीयानामोष्ठौ ञमङणनानां नासिका च एदैतोः कंठतालु ओदौतोः कंठोष्ठं वकारस्य दंतोष्ठं जिह्वामूलीयस्य जिह्वामूलं नासिकानुस्वारस्य इति स्थानानि यत्नो द्विधा आभ्यंतरो बाह्यश्च आद्यश्चतुर्द्धा स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् तत्र स्पृष्टं प्रयतनं स्पर्शानां ईषत्स्पृष्टमंतस्थानां विवृतमूष्मणां स्वराणां च ह्रस्वस्यावर्णस्य प्रयोगे संवृतं प्रक्रियादशायां तु विवृतमेव एतच्च सूत्रकारेण ज्ञापितं तथाहि अ अ इति ८।४।६८ विवृतमनूद्य संवृतोऽनेन विधीयते अस्य चाष्टाध्यायीं संपूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव तथा च सूत्रं ॥ ८८

पावस्थानमात्रे संवृतता दूरत्वे विवृतता अत एव इचुयशानां तालव्यताविशेषे पि तालुस्थानेन सह जिह्वाग्रादीनां च वर्णोच्चारणे कर्त्तव्ये सम्यक् स्पर्शः यकारे ईषत्स्पर्शः शकारेकारयोस्तु दूरे वस्थितिरित्याद्यनुभवे शिक्षाकारोक्तिं चानुसृत्य विवेचनीयं विवारसंवारादयस्तु वर्णोत्पत्तेः पश्चान्मूर्द्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यंत इति बाह्या इत्युच्यते गलबिलस्य संकोचात्संवारः तस्यैव विकासाद्विवारः एतौ च संवृतविवृतरूपाभ्यामाभ्यंतराभ्यां भिन्नावेव तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयं अ अ ॥ सुपामिति विभक्तेर्लुक् आद्यो विवृतः द्वितीयस्तु संवृतस्तदाह विवृतमनूद्येति विवृतस्य स्थान इत्यर्थः विवृतत्वमस्त्येवेति तेन दंडाग्रमित्यादौ सवर्णदीर्घः सिद्ध्यतीति भावः ॥ ॥

त्यत्रत्रिमात्रोनतरतीत्यत्रत्वकारएवनतुकदाचिदाकारः नचप्रमाणतआंतर्येणनियमसिद्धिः रपरत्वेकृतेएकस्याध्यर्द्धमात्रत्वात् अपरस्यार्द्धतृतीयमात्रत्वात् गुणप्रदेशास्तु आद्गुणः अ
तोगुणेइत्यादयः॥ ॥ भूवादयइति भूश्चवाश्चभूवाविति द्वंद्वः आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः आदिश्च आदिश्च आदी भूवौ आदीयेषामितिविग्रहः भूप्रभृतयोवासदृशाः
सादृश्यंचक्रियावाचकत्वेनेत्यभिप्रेत्याह क्रियावाचिनइति क्रियावाचिनइति किं याः पश्यसीत्यादौधातुत्वंमाभूत् सतिहितस्मिन्नातोधातोरित्याकारलोपःस्यादितिस्थितंमनोरमायां
भ्वादयः किंहिरुक् पृथक्इत्याद्यव्ययानांशिष्येइतिभावार्थेतिङ् तस्यमाभूत् स्तंभ्वादीनांउदित्करणेनरोत्राणांधातुत्वंज्ञाप्यते चुलुंपादीनांबहुलमेतन्निदर्शनमितिगणसूत्रेणसंग्रहः
प्राग्रीश्वरात् रेफविशिष्टग्रहणंकिं ईश्वरेतोसुन्कसुनावित्यस्यव्याप्तिन्यायेनावधित्वंमाभूत्इति यदितुमत्यासत्त्यैवाधिरीश्वरइत्यस्यावधित्वसिद्धिरित्युच्यते तर्हिस्पष्टप्रतिपत्त्यर्थंमे
वाङ्गुचादयः अद्रव्यार्थाः किं पशुः लिंगसंख्यान्वितंद्रव्यंइहतुस्यादेवलोपंनयंतिपशुमन्यमानाः पशुइतिसम्यगर्थे गतिश्चउपसर्गसंज्ञायांसमावेशार्थश्चकारः अन्यथा आकडारा

भूवादयोधातवः १।३।१ क्रियावाचिनोभ्वादयोधातुसंज्ञाःस्युः प्राग्रीश्वरान्निपाताः १।४।५६ इत्यधिकृत्य चादयोऽसत्त्वे १।४।५७ अद्रव्यार्थाश्चादयोनि
पातसंज्ञाःस्युः प्रादयः १।४।५८ अद्रव्यार्थाःप्रादयस्तथा उपसर्गाःक्रियायोगे १।४।५९ गतिश्च १।४।६० प्रादयःक्रियायोगेउपसर्गसंज्ञाःस्युर्गतिसंज्ञा
श्च प्रपराअपसम् अनुअवनिस्निरदुस्दुर् वि आङ् निअधि अपि अतिसुउद्अभिप्रति परि उप एतेप्रादयः नवेतिविभाषा १।१।४४ निषेधविक
ल्पयोर्विभाषासंज्ञास्यात् ॥ द्वितिपर्यायःस्यात्तत्फलंतुप्रणीयमित्यादावुपसर्गादसमासइतिणत्वंगतिकारकेति कृदुत्तरपदप्रकृतिस्वरसिद्धिश्चेतिदिक्निस्निरदुस्दुरइ
ति उपसर्गस्यायतावितिनिर्दुरोर्लत्वं निलयते दुलयतेनिसोदुसश्चरुत्वस्यासिद्धत्वाल्लभावःनिरयतेदुरयते नवेतिविभाषा नेतिप्रतिषेधोवेतिविकल्पस्तदाह निषेधविकल्पयोरिति वि
भाषाश्वेरित्यादिषुप्रतिषेधविकल्पावुपतिष्ठेते तत्रप्रतिषेधेनसमीकृतेविषयेपश्चाद्विकल्पः प्रवर्त्तते शुशावशिश्वायेत्यत्राप्राप्तौविकल्पः।शुशुवतुः।शिश्वियतुरित्यादौतुवच्चि
ष्वपीतिनित्यप्राप्ताविति ---- विवेकः अत्रेदंबोध्यं इतिशब्दः काकाक्षिन्यायेनोभाभ्यांसंबध्यते सचपदार्थविपर्यासकृत् तेननिषेधोविकल्पश्च नवाशब्दार्थः संज्ञीविभाषाशब्दा
र्थौविकल्पःसंज्ञा उभयत्रविभाषार्थंचेदंसूत्रं ---------------- प्राप्तविभाषायामप्राप्तविभाषायांचनास्योपयोगः प्राप्तविभाषायांभावांशस्यसिद्धत्वेनविभाषाश्रुत्यापक्षेभ
वतीतिभावांशमनूद्यपक्षेनभवतीत्यभावांशमात्रकरणात् अप्राप्तविभाषायांतुअभावांशस्यसिद्धत्वेनपक्षेनभवतीत्यभावांशमनूद्यपक्षेभवतीतिभावांशमात्रकरणात् विभाषाश्वेरित्यु

स्यानरात्वेनसवर्णग्राहकत्वात् एवंचतपरत्वाद्दीर्घेन उपऋकारीयतीत्यादिवक्ष्यमाणग्रंथोपिसंगच्छते एवंऌकारोपि इतित्रिंशतः संज्ञेत्यनुषज्यते एतच्चन्यायसाम्यादुक्तं
वस्तुतो ऌकारस्य ऋकारग्राहकत्वंनकुत्राप्युपलभ्यते सूत्रारंभसामर्थ्यादिति सतितुसावर्ण्ये एकारेणऐकारग्रहणादोकारेणऔकारग्रहणादैऔजितिसूत्रारंभोवृथा
स्यादितिभावः नापादनीयमिति तेनग्लावंग्लावइत्यत्रऔतोम्शसोरितिनप्रवर्त्ततइति मूलएवस्फुटीभविष्यति॥ ॥ यद्यपीति ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरितिभावः
एतच्चाकःसवर्णेदीर्घइत्यत्रव्युत्पादयिष्यामः आक्षरेति अक्षराणांसमाम्ना—यउपदेशसूत्राणितत्रभवाआक्षरसमाम्नायिकाः वहूचेंतोदात्तादितिठञ् होढइतिनभवतीतीतिय
द्यप्याकारप्रश्लेषाभावेसंयोगांतलोपएवप्राप्नोतिनतुढत्वंतस्यासिद्धत्वाद्दतोत्रसंयोगांतलोपोनभवतीतिवक्तुमुचितम् तथापिकार्यकालंसंज्ञापरिभाषमितिपक्षेत्रेपादिकंतरंगेव
हिरंगपरिभाषायाः प्रवृत्तेरंतरंगेढत्वेकर्त्तव्येवहिरंगः संयोगांतलोपोऽसिद्धइतिमत्वेदमुक्तमित्येके अन्येतुसंज्ञापूर्वकोविधिरनित्यइतिलोपस्यवारणंकथंचित्कर्तुंशक्यमित्याशयेन

नाज्झलाविितिनिषेधोयद्यप्याक्षरसमाम्नायिकानामेवतथापिहकारस्याकारेणसवर्णः तत्राप्याकारस्यप्रश्लिष्टत्वात् तेनविश्वपाभिरित्यत्रहोढइतिढ
त्वंनभवति अनुनासिकाननुनासिकभेदेनयवलाद्विधातेनाननुनासिकास्तेद्वयोर्द्वयोः संज्ञा तपरस्तत्कालस्य १।१।७० तःपरोयस्मात्सचतात्परश्चोच्चा
र्यमाणःसमकालस्यैवसंज्ञास्यात् तेनअत्इत्उत्इत्यादयः षण्णांषण्णांसंज्ञाः ऋत्इतिद्वादशानां वृद्धिरादैच् १।१।१ आदैच्चवृद्धिसंज्ञःस्यात् अदेङ्गुणः
१।१।२ अदेङ्चगुणसंज्ञःस्यात् ॥ ढत्वंनेत्युक्तमित्याहुः विश्वपाभिरित्यत्रेत्युपलक्षणं विश्वपाःविश्वपाभ्यामित्यादावपिनभवति होढइत्युपलक्षणं घ्यगाधुरित्यादौहोज
योहइत्याकारस्यघकारोनेतिदिक् यदितुविवृतमूष्मणामित्यत्रईषत्स्पृष्टमित्यतईषदित्यनुवर्त्यस्वराणांचेत्यत्रनिवर्त्यईषद्विवृतमूष्मणांविवृतंस्वराणांइतिप्रयत्नभेदोव्याख्यायते
तदानाज्झलाविितिसूत्रंत्यक्तुंशक्यमित्याकरेस्थितं अननुनासिकास्तेइतियेत्वाक्षरसमाम्नायिकाअणस्तएवसवर्णानांसंज्ञाभवंतीतिभावः एवंचरेफोहकारश्चअणप्रत्याहारांतर्गतोपि
नकस्यचित्संज्ञातत्सवर्णस्यान्यस्याभावादित्यवगंतव्यम् सचतात्परश्चेतितंत्रादिनाउभयंविवक्षितमितिभावः वृद्धिरादैच् आच्चऐच्चेतिइतरेतरयोगद्वंद्वःसुपांसुलुगितिडेङःसुलुग्वा
यद्वासमाहारद्वंद्वः नचैवंद्वंद्वाच्चुदषहांतात्समाहारइतिटच्स्यादितिवाच्यंसमासांतविधेरनित्यत्वात् तच्चप्रमाणंसमासेषुवक्ष्यामः अथवाआदित्यसमस्तमेवास्तु वृद्धिशब्दः तेनेणाद्या
वायोजनीयः अयस्मयादित्वेनभत्वाच्चोःकुर्नऐजिहद्दिमात्रएवतात्परत्वात्तेनखट्वैकत्वमित्यत्रत्रिमात्रोनवृद्धिप्रदेशाःवृद्धिरेचीत्यादयः अदेङ्गुणः तपरकरणमिहसरूपार्थंतेनगंगोदकं

यामिति यदीत्यस्य च अघोषस्य महाप्राणस्य सस्थानत्वात् दश एव थकारः घोषवतो नादवतो महाप्राणस्य सस्थानत्वाद्दशो वर्गचतुर्थ इत्यादि मूले एव स्फुटीभविष्यति ॥ ॥ कादय इति लो
कप्रसिद्धपाठापेक्षमिदं चतुर्दशसूत्र्यां मावसानत्वायोगात् कपाभ्यां प्रागिति एतच्चोपलक्षणं खफाभ्यां प्रागित्यपि बोध्यं अर्द्धविसर्गेति सादृश्यमुच्चारणोल्लेखनेन च बोध्यं ऋलृव
र्णयोरिति ऋत्यक इति प्रकृतिभावः विग्रहस्तु ऋच लृवर्णश्च ऋलृवर्णौ तयोरित्येके मनोरमायां तु ऋच ऋच रलौ तौ वर्तौ वर्णौ चेत्यादि स्थितं नाज्झलौ आकारसहित इति
कालसमयवेलास्वित्यादिनिर्द्देशाः आकारप्रश्लेषे लिंगं पणादिकमिति शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः इह अस धदित्यादौ हो ढ इति ढत्वं नेत्यपि स्तुवचं णश्चेति

कादयो मावसानाः स्पर्शाः यरलवा अंतस्थाः शषसहा ऊष्माणः अचः स्वराः ≍क≍प इति कपाभ्यां प्रागर्द्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ
अं अः इत्यचः परावनुस्वारविसर्गौ इति स्थानप्रयत्नविवेकः ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् अकारहकारयोरिकारशकारयोः ऋकाररेफयोर्लृ
कारसकारयोश्च मिथः सावर्ण्ये प्राप्ते नाज्झलौ १।१।१० आकारसहितोऽच् अाच् स च हल् चेत्येतौ मिथः सवर्णौ न स्तः तेन दधीत्यस्य हरति शीत
लं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलाद्ध्रत्वं स्यात् तथाहि अणुदित्सवर्णस्य
चाप्रत्ययः १।१।६९ प्रतीयते विधीयते इति प्रत्ययः अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् अत्राण् परेण णकारेण तदेवमइत्यष्टा
दशानां संज्ञा तथेकारोकारौ ऋकारस्त्रिंशतः एवं लृकारोपि एचो द्वादशानां एदैतोरोदौतोश्च न मिथः सावर्ण्यं ऐऔजिति सूत्रारंभसामर्थ्यात् ते
नैच श्चतुर्विंशतेः संज्ञास्स्युरिति नापादनीयं ॥ ९ सस्य षत्वमपि नेति तु न स्तुवचं ढत्वं प्रति तस्यासिद्धत्वादिति दिक् अन्यथेति नाज्झलावित्यस्यारंभे ग्रहणकशास्त्रबला
दिति अयंभावः दीर्घादीनामिव हकारादीनामप्यकारादिवाच्यत्वेऽभ्युपगमे त्यचुत्वं स्यात् प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमादिति अविधीयमानोऽणिति तेन इद
म इश् इत्यत्र त्रिमात्र इकारो न भवति उदिच्चेति इहाविधीयमान इति न संबध्यते उदित्करणसामर्थ्यात् तेन विधीयमानोप्युदित्सवर्णान् गृह्णात्येव कुहोश्चुः जगाद जगदे
परेण णकारेणेति व्याख्यानतो विशेषप्रतिपत्तेः उपसर्गादृति ऋत उदित्यादौ तपरकरणलिंगाच्च यदि पूर्वेण स्यात्तर्हि तपरत्वमित्यनर्थकं स्यात् ऋकार ॥

पूर्वत्रासिद्धं यद्ययं स्वतन्त्रो विधिः स्यात्तर्हि त्रिपादी पूर्वं प्रत्यसिद्धेत्येव लभ्येत अपादिकं तु पूर्वं प्रति परं नासिद्धं स्यात् तथा च प्रशानित्यत्र मो नो धातोरिति नत्वस्यासिद्धत्वान्नलोपः स्यात् नत्वविधेः संबुद्धौ चरितार्थत्वात् तथाऽनड्वानित्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपः स्यात्तु म्विधेस्तु संबुद्धौ चरितार्थत्वात् अत आह अधिकारोऽयमिति त्रिपाद्यां विहितं कार्यमिति कार्यासिद्धिपक्षे तु अमू अमुमित्यादि न सिद्ध्येदिति भावः यथा चैतन्न सिध्यति तथाऽदः शब्दव्याख्यानावसरे स्वामिरुपपादयिष्यते एकादशधेति यद्यपि भाष्ये अष्टावुक्ता उदात्तादयस्तु नोक्तास्तथापि केयटोक्तिमनुसृत्यैकादशोक्ता इति बोध्यं खयां यमा इति बालबोधनाय बाह्यप्रयत्नाः केचित्सुगमोपायेनोपनिबद्धाः तद्यथा खरो विवाराः श्वासा

पूर्वत्रासिद्धं ८।२।१ अधिकारोऽयं तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं बाह्यप्रयत्नस्त्वेकादशधा विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति खयां यमाः खयः ँक ँपौ विसर्गः शर एव च एते श्वासानुप्रदाना अघोषाश्च विवृण्वते १ कंठमन्ये तु घोषाः स्युः संवृता नादभागिनः। अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः २ वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः पलिक्क्नी चख्खनतुः अग्ग्निः घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमास्तत्र वर्गाणां प्रथमद्वितीयाः खयः तथा तेषामेव यमाः जिह्वामूलीयोपध्मानीयौ विसर्गः शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च अन्येषां तु संवारो नादो घोषश्च वर्गाणां प्रथमतृतीयपंचमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः अन्ये महाप्राणा इत्यर्थः बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यं ॥ ९

अघोषाश्च हशः संवारा नादा घोषाश्च वर्गाणां प्रथमतृतीयपंचमाः यणश्चाल्पप्राणाः वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणा इति एते श्वासानुप्रदाना इति श्वासप्रयत्नका इत्यर्थः विवृण्वते कंठमिति विवारस्तेषां प्रयत्न इति भावः अन्ये त्विति हशो हशां यमा अनुस्वारश्च नादेति नादभागिनो नादप्रयत्नवंत इत्यर्थः अयुग्मा इति प्रथमतृतीयपंचमा वर्गेष्वयुग्माः वर्गयमगा इति वर्गगा यमगाश्चेत्यर्थः अल्पेति अल्पासवोऽल्पप्राणाः असुभिर्भूमासवः प्राणा इत्यमरः अनुपयुक्ता इति अन्यथा कखगघादीनां परस्परं सावर्ण्यं न स्यादिति भावः आन्तरतम्यपरीक्षा

त्युभयत्र विभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव संप्रसारणविकल्पः स्यात् कित्सु यजादित्वाद्वचिस्वपीति नित्यमेव स्यात् अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव प्रवृत्तिः स्यात् न तु पित्सु न च पित्सु विधिमुखेन कित्सु तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्तीति वाच्यम् वैरूप्यलक्षणवाक्यभेदप्रसंगात् संज्ञाकरणे तु श्रुतक्रमानुरोधेन नेति प्रतिषेधः प्रथमं कित्सु प्रवर्तते ततः कित्कित्रूपे सर्वस्मिन् लिटि एकरूपे प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव प्रवर्तते इति इति किंच संज्ञावत् स्वं रूपमिति वचनाच्छब्दस्य संज्ञा माभूत् तथा हि सतिविभाषाश्वेरित्यस्य न वा शब्दः श्वयतेरादेश इत्यर्थः स्यात् इति शब्दे तु सति अर्थः संज्ञीति लभ्यते तथा हि लोके ह्यर्थप्रधानः शब्दः गौरित्ययमाहेत्यादौ तु शब्दरूपपरः संपद्य ते व्याकरणे तु स्वं रूपमिति परिभाषणात् स्वरूपपरत्वमौत्सर्गिकं इति शब्दसमभिव्याहारे त्वर्थपरतेति विशेषः इदमेवेति शब्दस्य पदार्थविपर्यासकत्वं नाम संज्ञात्वर्थस्यैव न तु विभाषाश ब्दस्येति व्याख्यानस्य हक्रोरन्यतरस्यामित्यादौ वैरूप्योद्धारः फलं उभयत्र विभाषा हि तत्सूत्रे अभ्यवहृतेर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थस्य करोतेरकर्मकत्वाद्गतिबुद्धीत्यादिना अणौ क र्तुः कर्मत्वे प्राप्ते अर्थान्तरे चाप्राप्ते तदारंभात् उदाहृतं च भाष्ये प्राप्ते तावत् अभ्यवहारयति सैंधवान् अभ्यवहारयति सैंधवैः विकारयति सैंधवान् विकारयति सैन्धवैः अप्राप्ते तु हरति भा रं देवदत्तः हारयति भारं देवदत्तं हारयति भारं देवदत्तेन करोति कटं देवदत्तः कारयति कटं देवदत्तं कारयति कटं देवदत्तेनेति दिक् ॥ ॥ स्वरूपं शब्दस्य अग्नेर्ढक् अ

**स्वं रूपं शब्दस्याशब्दसंज्ञा १।१।६८ शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना येन विधिस्तदन्तस्य १।१।७२ विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य समासप्रत्ययविधौ प्रतिषेधः ॥** ९ ग्रेयं आग्नेयम् हन्यः आयच्छते आहते इह अग्नि आङ् यम् हन् एत एव संज्ञिनः न त्वग्न्यादिवाच्यार्थं गाणादेर्ढगादिप्रत्ययो न सं भवतीति स्वरूपादेव स्यात् प्रातिपदिकादित्याद्यधिकाराच्च किमनेन सूत्रेणेति चेत् सत्यं अग्न्यादिशब्दपर्यायेभ्यो वह्न्यादिभ्यो माभूदिति सूत्रस्यारंभः नन्वत्र रूपग्रहणं विनापि स्व शब्देन रूपमेव ग्रहीष्यते प्रतीतावुपदेशानपेक्षत्वात् साधारणत्वादन्तरंगत्वान्नियतोपस्थितिकत्वाच्च अर्थो हि प्रतीतौ संबंधग्रहणमपेक्षते पर्यायैरपि प्रत्यायनादसाधारणः प दज्ञानजन्यबोधविषयत्वाद्बहिरंगः अनुकरणदशायामप्रतीतेरनियतोपस्थितिकश्चेति किमनेन रूपग्रहणेन उच्यते इह शास्त्रे अर्थोपि विवक्षितो रूपवदिति ज्ञापनार्थं रूप ग्रहणं तेनार्थवद्ग्रहणे नानर्थकस्येत्युपपन्नं भवति तन्त्रोक्तज्ञापकार्थो आद्यः स्वमिति वचनाद्रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणं तेन काशे कुशे इत्यत्र शे इत्ययं प्रगृ ह्यसंज्ञो न भवति प्राद्वहोढ इत्यत्र तु ढग्रहणेन क्तान्तमेव गृह्यते न तु तावत्वं तस्यैकदेश इत्यन्यत्र विस्तरः अशब्दसंज्ञेति किं उपसर्गे घोः कि दाधाभ्यो यथा स्यात् घुधातोः शब्दार्थकान्माभूत् न च दाधाघ्विति घुसंज्ञाकरणसामर्थ्यादेव दाधाभ्यः किः स्यादिति वाच्यं घुमास्थेत्यादिना आत ईत्व विधौ संज्ञाकरणस्या वश्यकतया सामर्थ्योपक्ष

मात् इह शब्दस्य संज्ञाशब्देन संज्ञेति न षष्ठीसमासः कर्मकरणमित्यादिषु यः संज्ञाशब्दः स्वरूपग्रहणापत्तेः किंतु शब्दशास्त्रे तत्र संज्ञाशब्दः संज्ञेति सप्तमीसमासस्तदाह शास्त्रेण शब्देन संज्ञेति यन विधिः विधिरित्यत्र उपसर्गे घोः किरिति कर्मणि किः प्रत्ययः येनेति करणे तृतीया न तु कर्तरि तस्याः कृद्योगषष्ठ्या बाधात् न चोभयप्राप्तौ कर्मणीति नियमेन निर्वाहः कर्मणा उक्तत्वेनोभयप्राप्त्यभावात् तथा चात्र करणे तृतीयैव करणं च परतन्त्रं कर्त्रधिष्ठितस्यैव करणत्वात् एवं चेह तृतीयया पारतन्त्र्यं लक्ष्यते न च एरजित्यादौ इकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव संभवति किंतु वैवक्षिकं तेन विशेषणम प्रधानं गम्यते तस्य संज्ञेति फलितं तदेतदाह विशेषणं तदन्तस्येति स्वस्य चेति स्वरूपमित्यनुवृत्तेरेतल्लभ्यते एरच् इकारान्तादिकाररूपाच्च धातोरच् चयः अयः समासप्रत्ययविधाविति कृष्णश्रितः कृष्णश्रितः द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते वा तत्पुरुषः नेह कृष्णमुपाश्रितः नडादिभ्यः फक् नडस्य गोत्रापत्यं नाडायनः नेह सूत्रनडस्यापत्यं सौत्रनाडिः नुशतिकादित्वादुभयपदवृद्धिः ॥ ॥ उगिद्वर्णेति उगिद्वर्णग्रहणं वर्जयित्वा उगिद्वर्णग्रहणवर्जं द्वितीयायां चेति णमुल् महान्तमतिक्रान्तो अतिमहती महच्छब्दस्य

उगिद्वर्णग्रहणवर्जं विरामोऽवसानं १।४।११ वर्णानामभावोऽवसानसंज्ञः स्यात् परः सन्निकर्षः संहिता १।४।१० वर्णानामतिशयितः संनिधिः संहितासंज्ञा स्यात् सुप्तिङन्तं पदं १।४।१४ सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ (( गोस्त्रियोरुपसर्जनस्येति ङीपोऽन्तत्वेऽगितश्चेत्युगिदन्तान्ङी ऽप्युतेत्थमृदन्तास्त्रि इ: न चेह सामर्थ्यात्तदन्तविधिः अस्यापत्यं इः काम इत्यत्र चरितार्थत्वात् नैवं मिनोति निर्वृत्यर्थमिति वाच्यं बह्वादिभ्यश्चेत्यत्र यथायथं इच्चाशुदात्ताभ्यां चरितार्थत्वात् न चैवमपि त्रोपगविरित्यादावेव अतइञ् स्यान्न तु दाक्षिरित्यादौ अकारस्येहानर्थकत्वादिति चेन्न वर्णग्रहणे अर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः विरामोऽवसानं विरमणं विरामः भावे घञ् शब्दानुशासनप्रस्तावादाह वर्णानामिति संज्ञाप्रदेशा अवसाने इत्यादयः अभावस्यापि बुद्धिस्थत्वेनोपपर्यमस्येव यो उच्चरितप्रध्वंसिनो नित्यविभूनां वा वर्णानां यद्वा विरम्यतेऽनेनेति विरामः बाहुलकात्करणे घञ् यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते सोऽन्त्यवर्णः अवसानसंज्ञ इत्यर्थः अस्मिंस्तु पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते खरि परे रेफस्य विसर्गः अवसाने च रेफस्यानीति सुप्तिङन्तं पदं अन्तग्रहणं अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति ज्ञापनार्थं तेन ईदूदेद्द्विवचनं प्रगृह्यमिति न द्विवचनान्तस्य प्रगृह्यत्वं अन्यथा कुमार्योरगारं कुमार्य्यगारमित्यत्र प्रकृतिभावः स्यात् कथं तर्हि प्रातिपदिकसंज्ञायां कृत्तद्धिताभ्यां तदन्तग्रहणमिति चेत् अत्राहुः कृत्तद्धितेति सूत्रे अर्थवद्ग्रह

हलोनंतराः संयोगः लघ्वर्थमेकाक्षरायां संज्ञायां कर्त्तव्यायां संयोग इति महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञापनार्थं संयुज्यंतेऽस्मिन्समुदाये वर्णा इति तेनात्र समुदाये वाक्यपरिसमा
प्तिर्न तु गुणवृद्ध्यादिसंज्ञावत्प्रत्येकं तथाहि सति दृषद्भिर्तीत्यत्र वकारसन्निधौ दकारस्य संयोगत्वात्संयोगांतलोपः स्यात् निर्याप्यादित्यत्र यकारः संयोग इति वान्यस्य संयोगा
देरित्येत्वं स्यात् सिद्धांते त्वचोरहाभ्यामिति द्वित्वे सत्यपि तस्यासिद्धत्वादेत्वमत्र न भवति हल इति जातौ बहुवचनं जात्याख्यायामेकस्मिन्बहुवचनमिति वचनात् तेन द्वयोरपि संयोगसंज्ञा
भवतीति शिक्षेत्यादौ गुरोश्च हल इत्यप्रत्ययः सिद्ध्यति यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण संज्ञेति स्थितमाकरे यदि तु बहूनामेव स्यात्तर्हि ग्रामान्करोतीत्यत्र म
नुपस्तकारस्य संयोगांतलोपो न स्यादिति दिक् हलः किं तितउभ्यां अनतनोतेर्डउः सन्वच्चेति डउप्रत्ययः सन्वद्भावाद्द्वित्वं सन्यत इतीत्त्वं च व्यक्तोच्चारणे सामर्थ्याद्गुणाभावः
यदि त्वचोरप्यनंतरयोः संयोगसंज्ञा स्यात्तर्हि इह संयोगांतस्येत्युकारलोपः स्यात् अनंतरा इति किं पनसं पश्येह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि स्कोरिति सलोपः स्यात् ॥

हलोनंतराः संयोगः १।१।७ अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ह्रस्वं लघु १।४।१० संयोगे गुरु १।४।११ संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् दीर्घं च
१।४।१२ इति संज्ञाप्रकरणम् इको गुणवृद्धी १।१।३ गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र इक इति षष्ठ्यंतं पदमुपतिष्ठते। अचश्च १।
२।२८ ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राच इति षष्ठ्यंतं पदमुपतिष्ठते ॥ ९ इति संज्ञाप्रकरणम् ॥ इको गुणवृद्धी ॥ यत्र साक्षात्स्थानी न निर्दिष्टः सार्व

धातुकार्द्धधातुकयोः सिचि वृद्धिरित्यादौ तत्रैवेयं परिभाषा प्रवर्त्तते न त्वचो ञ्णितीत्यादौ स्थानिनिर्देशात् गुणवृद्धिशब्दाभ्यामिति एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदद्वय
नुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते तेनेह न त्यदादीनामः इमं दिव उत् द्योः विधीयत इति यत्र त्वनुवादो वृद्धिर्यस्याचामादिरित्यादौ तत्रेक इति नो
पतिष्ठते अनुवादे परिभाषाणामनुपस्थितेरिति भावः अनुवादे परिभाषाणामित्यस्यानूद्यमानविशेषणेष्वित्यर्थः अनुपस्थितौ लिंगं फलं चोदीचामातः स्थाने इत्यत्र
स्फुटीकरिष्यते षष्ठ्यंतमिति सूत्रे षष्ठ्यंतस्यानुकरणात् शब्दस्वरूपपरतया नपुंसकत्वात्सोर्लुकि अत्वसंतस्येति दीर्घो नेति भावः पदमिति तच्च संभवति सामानाधिकर
ण्ये इगंतस्यांगस्येत्यादिक्रमेण संबध्यते मिदेर्गुणः मृजेर्वृद्धिरित्यादौ तु सामानाधिकरण्यासंभवात् मिदिमृज्योरवयवस्येक इति संबध्यते अचश्च ह्रस्वदीर्घेत्यादि
एतच्च ऊकालोज्झ्रस्वदीर्घप्लुत इति सूत्रात् ह्रस्वदीर्घप्लुत इत्यनुवर्त्य ह्रस्वो दीर्घः प्लुत इति योजनया लभ्यते ह्रस्वेत्यादि किं दिव उत् द्युभ्यां अपठन अविभक्तौ अपो अपदाभ्यत्रौ

ह्रतात्वनिर्देशाज्ज्ञापकाज्ज्ञ श्शसोर्विषये प्रवर्त्तमानस्याश्नइत्यात्वस्याचः स्थानिकत्वे सति नैतत्सिध्येदिति दिक् षष्ठ्यंतं पदमिति तत्त्वसतिसंभवे सामानाधिकरण्येनैव सं
वध्यते न वैयधिकरण्येन तेन ह्रस्वो नपुंसक इत्यजंतप्रातिपदिकस्यैव ह्रस्वः श्रीपं नेह सुवाक् ब्राह्मणकुलं १ शामामष्टानां दीर्घ इत्यत्र तु सामानाधिकरण्यासंभवात् श्मा
दीनामचइति संवध्यते तेन शाम्यतीत्यादि सिद्धम् वाक्यस्यटेः प्लुत इत्यत्र सामानाधिकरण्यसंभवेपि टेर्ग्रहणसामर्थ्यादेरवयवस्याचः प्लुत इति व्याख्यायते अन्यथाऽलो
त्यस्याचश्चेति परिभाषाभ्यामेहि कृष्णेत्यादिवाक्यांत्यस्याचः प्लुत सिद्धौ किमनेन टेर्ग्रहणेन तेनाग्निचिता अनेन धीन्द्र वर्मन् इत्यादि सिद्ध्यतीति दिक्॥ ॥ आद्यंतौटकितौ
भविता आर्द्धधातुकस्येट् पापयति शाच्छासाह्वेत्यादिनायुक् पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः प्रत्ययः परश्चेत्यनेन तु परत्वादयं बाध्यते तेन चरेष्टः गा
पोष्टक् इत्यादयः पराएव भवंति मिदचोंत्यात्परः स्थानेयोगत्वस्य परश्चेति परत्वस्य चायमपवादः यशांसि वनानि नपुंसकस्य झलच इति नुम् रुणद्धि रुधादिभ्यः श्नम् न
नु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यापवादो स्त्विति चेन्न वाध्यसामान्यचिंतामाश्रित्य स्वविषये प्राप्तसर्वं बाध्यते इतीहाभ्युपगमात् अन्यथा

आद्यंतौटकितौ १।१।४६ टित्कितौ यस्योक्तौ तस्य क्रमादाद्यंतावयवौ स्तः मिदचोंत्यात्परः १।१।४७ अचइति निर्द्धारणे षष्ठी अचां मध्ये योंत्य
स्तस्मात्परस्तस्यैवांतावयवो मित्स्यात् षष्ठी स्थानेयोगा १।१।४९ अनिर्द्धारितसंबंधविशेषा षष्ठी स्थानेयोगा बोध्या स्थानं च प्रसंगः॥ ॥

अमो मित्करणं व्यर्थं स्यात् न च अवणार्थ एव मकारः स्यादिति वाच्यं तृणाह इमिति निर्देशात् अचां मध्ये इति सूत्रे जात्यभिप्रायेण अच इत्येकवचनमिति भावः अचां मध्य इ
ति किं मुंचति लुंपति अत्यादचः परो मित्स्यात् इति प्राचो व्याख्यायां नैतत्सिध्येत् शेमुचादीनामिति अंत्यस्याचोऽसंभवेन मित्परिभाषाया अनुपस्थिति प्रसंगात् अन्येतु अचो
न्त्यात्परो मित्स्यादिति व्यत्यासेन योजयित्वा प्राचो व्याख्यानमपि कथंचित् समर्थयंते पूर्वसूत्रादंत इत्यनुवर्त्तते एकदेशे स्वरितत्वप्रतिज्ञानात् तो व्याचष्टे अंतावयव इति तेन
वारिणीत्यादावङ्गस्य नांतत्वेन दीर्घः सिद्धः परादित्वे स न सिद्ध्येत् अभक्तत्वे तु वहंलिह इत्यत्र वहाभ्रे लिह इति खशि अरुर्द्विषदिति मुम् मोनुस्वारो न स्यादपदांतत्वादिति भा
वः यत्तु केश्चिदुक्तं अभक्तत्वे वारिणीति दीर्घो न स्यादिति तत्तदादिग्रहणं श्यादिनुमर्थमिति अंगसंज्ञासूत्रस्य वार्त्तिकेनैव दूषितप्रायं षष्ठी स्थानेयोगा स्थानेन योगोऽस्या
स्तीति विग्रहः निपातनादेत्वं षष्ठ्याः संबंधमात्रवाचित्वे पीह शास्त्रे या षष्ठी सा स्थानेयोगा बोध्या किमविशेषेणेत्याह अनिर्द्धारितसंबंधविशेषेति अनिर्द्धारितेति किं ऊ इ

हः शास इदङ् हलोरित्यादावुपधासंनिधानेनावयवषष्ठीत्वे निर्णीते गोहः शास इत्यादौ मा भूत् सति हि तत्रापि स्थानेयोगत्वे गोहि शासि स्थाने धातुमात्रस्योपधायाश्च स्था
नेऽनुदितो स्यातामिति दिक्। स्थाने च प्रसंग इति। न चास्य प्रसंगार्थकत्वे विवदितव्यं दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्युक्ते दर्भाणामिति प्रसंग इति प्रतीतेः एवं च इकोय
णचीत्यादावियणुच्चारणप्रसक्तौ यणुच्चारणीय इत्याद्यर्थः संपद्यते॥ ॥ स्थाने सदृशतम इति॥ अर्थात् प्राप्यमाणानां तन्मध्य एव अत एव गंगोदकमित्यत्र त्रिमात्र ओका
रो न। इह स्थाने इत्यनुवर्तमाने पुनः स्थानग्रहणादन्योपि वाक्यार्थः संमतः। ताल्वादिरूपे स्थाने योऽन्तरतमस्तत्प्रयुक्तो न त्वेवानिति यावत्। तु प्राप्यमाणानां मध्ये स्यादिति तदेत
दाह। यत्रानेकविधमिति। स्थानार्थगुणप्रमाणतश्चतुर्विधमित्यर्थः। स्थानतो यथा दध्यत्र। तालुस्थानस्येकारस्य तालुस्थानो यकारः। अर्थतो यथा वातण्ड्ययुवतिः। वतं
डशब्दाद् वतंडाच्चेति गोत्रापत्ये यञ्। तस्य लुक् स्त्रियामिति लुक्। शार्ङ्गरवादित्वात् ङीन्। वतंडी चासौ युवतिश्चेति विग्रहे पोटायुवतीत्यादिना समासः पुंवत्कर्मधारयेत्य
ति दिश्यमानः पुंशब्दो वतंडापत्यवाचिनो वतंडीशब्दस्य तदपत्यवाचीवातण्ड्यशब्दो भवति। न तु वतंडादिः॥ गुणतो यथा वाग्घरिः। घोषवतो महाप्राणस्य तादृश

**स्थानेऽन्तरतमः १।१।५०॥ प्रसंगे सति सदृशतम आदेशः स्यात्। यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः॥ तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।**
**६६॥ सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम्॥** ९ एवं प्रकारः। प्रमाणतो यथा। अमुं अमू अमून् अदसो से

रित्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः। तमप् ग्रहणं किं। वाग्घरिरित्यत्र झयो होऽन्यतरस्यामिति पूर्वसवर्णे क्रियमाणे महाप्राणत्वसाम्येन द्वितीयो नादवत्वसाम्येन
तृतीयश्च मा भूत्। किं तु नादवान् महाप्राणश्च चतुर्थो घ एव यथा स्यादिति तेन चेतास्तोतेत्यत्र प्रमाणत आंतर्यं वा न कारेणेति भावः। तस्मिन्निति। सप्तम्यतानुकरणमिदं॥
निः शब्दो नैरंतर्यपरः दिशिरुच्चारणक्रियः। अचि यणित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तमव्यवहित एवेति पूर्वस्य परस्य च प्राप्ते पूर्वस्यैवेति नियम्यते। अव्यवहितस्ये
ति फलितार्थकथनम्। पूर्वस्यैवेति किं। दध्युदकम्। अन्तोकारस्य मा भूत्। अव्यवहितस्यैवेति किं। अग्निचिदत्र। सोमसुदत्र। व्यवधानं चात्र वर्णकृतमेव निषिध्यते न तु का
लकृतम्। संहितायामधिकारज्ञापकात्। अन्यथा निर्दिष्टग्रहणादेवासंहितायां यणाद्यप्रसंगात् किं तेन संहिताधिकारेणेति व्याचष्टे। वर्णान्तरेणेति। एवं च संहिताधिकार
वहिर्भूतविषयः। कालव्यवायेऽपि संभवतीति। तेनाग्नावियाणुइत्यादाव वग्रहे प्यानङ् ऋतो द्वंद्वे देवताद्वंद्वे चेत्यादिना उत्तरपदे परतो विहिता आनङादयो भवन्तीति दिक्॥

तस्मादिति। उत्तरस्येति किं। तिङ्ङतिङः इति निघातः उत्तरस्यैव यथा स्यात्। अग्निमीडे नेहईडे अग्निम्। अव्यवहितस्येति। एतच्च निर्दिष्टग्रहणानुवृत्त्या लभ्यते उत्सं स्थाने उत्सं ल
भनमित्यादौ उदस्थेति पूर्वसवर्णो न प्रवर्तते अलोऽन्त्यस्य। स्थानषष्ठी निर्दिष्टस्य यच्च्यते सोऽन्त्यस्याल स्थाने स्यादित्यर्थः। त्यदादीनामः। सः यः स्थानषष्ठीति किं आर्ध
धातुकस्येड् नृतेः नकारात् पूर्वो मा भूत्॥ इदं च षष्ठी स्थान इत्यनुवृत्त्या लभ्यते। अल इति किं। पदस्येत्यधिकृत्य विधीयमानं वसुस्रंसीति दत्वं परमानडुद्भ्यामित्यादाव
न्त्यस्य पदस्य मा भूत्॥ — — ॥ ङिच्च॥ अयमपी ति अवङ् स्फोटायनस्य। गवाग्रम्। अनङ् सौ सखा। परस्य यदिति। तस्मादित्युत्तरस्य आदेरिति न सूत्रितम्। आदेरित्यंशस्य
सर्वादेश बाधकत्वापत्तेः सिद्धांते तु परत्वात् सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति। आदेर्बोध्यमिति। आदेरलो बोध्यमित्यर्थः। अल इति त्वनुवर्तते। अनेकाल्। अ
सेर्भूः। बभूव। ननु निर्दिश्यमानस्यादेशा भवंत्यनेकालादेशस्य सर्वादेशत्वं सिद्ध्यति। तत्किमनेनानेकाल्ग्रहणेन नचालोऽन्त्यस्येत्यंत्यस्य स्यादिति शंक्यं। ङिच्चेत्यस्य

तस्मादित्युत्तरस्य १।१।६७ पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम्। अलोऽन्त्यस्य १।१।५२ षष्ठीनिर्दिष्टाऽ
न्त्यस्यादेशः स्यात्॥ ङिच्च १।१।५३ अयमप्यन्त्यस्यैव स्यात्। सर्वस्येत्यस्यापवादः। आदेः परस्य १।१।५४ परस्य यद्विहितं कार्यं तत्तस्यादेर्बो
ध्यं। अलोऽन्त्यस्येत्यस्यापवादः। अनेकाल्शित्सर्वस्य १।१।५५ अलोऽन्त्यसूत्रापवादः। अष्टाभ्य औशित्यादावादेः परस्येत्येतदपि परत्वादनेन बाध्यते॥

नियमार्थत्वाभ्युपगमात्। उच्यते। अनेकाल्ग्रहणाभावे तामेरित्यादावेसादेशः। आदेः परस्येति मकारस्यैव स्थाने स्यान्नतु सर्वस्य स्थाने इति दिक्। शित उदाहरणं इद
म इश् इत इत्यादाविति आदिशब्देनातो भिस इत्यादि गृह्यते॥ परत्वादिति। अत एव आदेः परस्येति पृथक् क्रियत इत्युक्तं नन्वनेकाल्शित्सर्वस्येत्यतः प्रागेव तस्मादि
त्युत्तरस्यादेरिति पठ्यतां किमनेन पृथक् सूत्रकरणेन॥ नचैवं तस्मिन्निति निर्दिष्ट इत्यपेतो निर्दिष्टग्रहणं नात्रानुवर्तत इति वाच्यं॥ तस्यापि सूत्रस्य प्राक् पठने बाधका
भावेन निर्दिष्टग्रहणानुवृत्तिसिद्धेः। मैवं। ब्राह्मणा अष्टौ इत्यत्र अष्टाभ्यः पूर्वयोरपि जश्शसोरौश्प्रसंगात्। यथास्थित सूत्राभ्युपगमे तूत्तरस्येत्यंशः प्रवर्तत एवेति नायं
दोषः प्रसज्यत इति अत्र केचिन्निष्कर्षमाहुः अनेकाल्शित्सूत्रात् प्रागेव वर्णलाघवाय तस्मादित्युत्तरस्यादेरिति सूत्रितं परत्वात् सर्वादेशेन आदेरित्यंशवदविशेषा
दुत्तरस्येत्यंशस्यापि बाधितत्वाद्वाक्यसंस्कारपक्षे ब्राह्मणा अस् अष्टन् अस् इति स्थिते अष्टाभ्य औ॥

शित्यस्य दिग्योगे पंचमीत्वात् व्याप्तिन्यायेन अष्टनो ऽगात् पूर्वयोरपि जश्शसोरौशस्यात् व्याप्तिन्यायस्तु प्राग्रीश्वरान्निपाता इति पठितेपि प्रत्यासत्तिन्यायेनाधिरीश्वर इति सूत्राव
धिकत्वं स्यात्तथा सिद्धावीश्वरे तोसुन्कसुनाविति सूत्रादर्शिकत्वनिराकरणाय रेफविशिष्टग्रहणं कुर्वता सूत्रकृतैव ज्ञापितः ततश्च सर्वादेशेनोत्तरस्येत्यस्य बाधनार्थं निर्दि
ष्टग्रहणानुवृत्त्यर्थं च तस्मिन्निति सूत्रात्परत्र कृते तु आदेरित्यस्य सर्वादेशबाधकत्वं स्यात्तथा चातो भिस ऐसित्यादेश आदेरेव स्यात्। अनेकालसूत्रस्यास्तेर्भूरित्यादौ चरि
तार्थत्वात्॥ यथान्यासे तूत्तरस्येत्यं शः प्रवर्तते एवेत्यष्टाभ्यः परयोरेव जश्शसोरौशस्यान्न तु पूर्वयोः तस्मादित्युत्तरस्यादेरिति न सूत्रितमित्यादि मनोरमाग्रन्थस्यापि अ
यमेवाशय इति। अन्ये तु यथाश्रुतसूत्रनिराकरणपरतयैव मनोरमां योजयन्ति तद्यथा॥ न सूत्रितमित्यस्यानेकाल्शित्सूत्रात्प्राङ् न सूत्रितमिति नार्थः। आदेरित्यंशस्य
सर्वादेशबाधकत्वापत्तेरित्याद्यग्रिमग्रन्थविरोधात् किन्तु तद्व्याख्यानुकूल्याय स्वरूपमिति सूत्रात्प्राक् न सूत्रितमित्यर्थोभ्युपेयः एवं चानेकाल्सूत्रात्प्राक् सूत्रिते तु नास्य
व दोष इति मनोरमाग्रन्थाशयः। एवं स्थिते निर्दिष्टग्रहणानुवृत्तिलाभाय तस्मिन्निति निर्दिष्टसूत्रात्तस्मादित्युत्तरस्यादेः परस्येत्यस्मात्प्रागेव पठनीयः अष्टनो गात्पू

## स्वरितेनाधिकारः १।३।११ स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यं ॥ ॐ॥

र्वयोरप्यौशस्यादित्युक्तदोषस्स इत्थं परिहरणीयः तस्मादित्युत्तरस्यादेरित्यत्रादेरिति पृथग्वाक्यं तत्रोत्तरस्येत्यनुवर्तते। सा च स्थानषष्ठी षष्ठी स्थानेयोगेत्यस्य प्राप्तेः त
त्र चायमर्थः पंचमीनिर्देशेन यत्कार्यं तदुत्तरस्यैव भवति उत्तरस्य स्थाने यद्विधीयते तदादेर्भवतीति इत्थं वाक्यभेदेन व्याख्यानाश्रयणादनंतरस्येति न्यायेनादेरित्यंशस्य सर्वादेशेन
बाध्यते न तूत्तरस्येत्यंशोपि इति नास्त्येव पूर्वोक्तदोषः। वाक्यभेदेन व्याख्यानं तूत्तरस्यादेरित्यसमस्तन्यासकरणेन ज्ञाप्यते। अन्यथा उत्तरादेरिति न सूत्रितमिति वदे
त्। किं च। अष्टाभ्य औशित्यस्य दिग्योगे पंचमीत्वेन पूर्वपरसाधारणतया अष्टनो ऽगाज्जश्शसोरित्युक्तेपि अष्टनोऽगसंज्ञानिमित्तभूतौ यौ जश्शसौ तावेव शीघ्रोपस्थिति
काविति पूर्वशब्दाद्युत्तरयोरेव औशस्यान्न तु पूर्वयोरिति दिक्॥ ॐ॥ स्वरितेनाधिकारः। अत्रेत्थंभूतलक्षणे तृतीया। अधिकारो विनियोगः। कियद्दूरमधिकार इत्य
त्र तु व्याख्यानमेव शरणं। यथा आसप्तमाध्यायपरिसमाप्तेरंगाधिकारः न तु प्राग्भ्यासविकारेभ्य एवेत्यादि। यद्वा स्वरित इति सप्तम्यंतं स्वरिते दृष्टे अधिकारो निव
र्तत इत्यर्थः। कः स्वरिताधिकारार्थः। कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणं। नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तः किमनेन सूत्रेणेति चेदत्राहुः॥

अर्थांतरसंग्रहायेदंसूत्रंकृतंतथाहि अधिकः कारोअधिकारः अधिकंकार्यंगोणोपिशास्त्रप्रवृत्तिरित्यर्थः तथाचगौणमुख्यन्यायोयत्रनेष्यते। अपादानाधिकरणादौ
तत्रस्वरितःपाठ्यः। किंच। अधिकःकारःकृतिरियंयत्पूर्वंसन्परंवाधते। तथाचतुमचिरतृज्वद्वाबेभ्योनुङित्यादिवस्यमाणपूर्वविप्रतिषेधाःसंर्वेसंग्रहीताभवंति। तत्रस
रितपाठेनैवगतार्थत्वादित्यादि॥ ॥ परनित्येति। परन्नित्यंयथा। तुदादिभ्यःशःतुदति। रुधादिभ्यःश्नम् रुणद्धि परमपिलघूपधगुणंबाधित्वानित्यत्वात्शश्नमो। त
था। धिनवाबधिनवा। भ्रापरमपिलोपश्चास्यान्यतरस्याम्वोरित्युकारलोपंबाधित्वानित्यत्वादाडुत्तमस्येत्याट्। परादंतरंगंयथा उभयेदेवमनुष्याः इहप्रथमचरमेति पर
मपिविकल्पंबाधित्वासर्वादीनीतिसर्वनामसंज्ञाविभक्तिनिरपेक्षत्वेनांतरंगत्वात्। तथास्त्रवतेर्णिश्रीतिचङिद्वित्वंउपधागुणादंतरंगत्वादुवङ्असुस्रुवत्। परात् प
वादोयथा। परमप्यनेकाल्शित्सर्वादेशंबाधित्वाङिच्चेत्यंतादेशः इआदङ्‌ग्रा अस्थिदधीत्यनङ् नित्यादंतरंगंयथा। ग्रामणिनीकूले। नित्यमपीकोचीतिनुमंबाधित्वाह्रस्वो
नपुंसकइतिह्रस्वः। कृतेतुनुमिअनजंतत्वाद्ध्रस्वोनस्यात्। अंतरंगादपवादोयथा। दैत्यारिः श्रीशः परमपिसवर्णदीर्घंबाधित्वोअंतरंगत्वादाद्गुणः यणिचप्राप्तेऽपवा

परनित्यान्तरङ्गापवादानामुत्तरोत्तरम्बलीयः। असिद्धम्बहिरङ्गमन्तरङ्गे। अंतरंगेकार्येकर्तव्येबहिरङ्गमसिद्धंस्यात्। अकृतव्यूहाःपाणि
नीयाः। निमित्तम्विनाशोन्मुखन्दृष्ट्वातत्प्रयुक्तङ्कार्यन्नकुर्वन्तीत्यर्थः॥ इतिपरिभाषाप्रकरणं॥ संहितायामित्यधिकृत्य ॥ ॥ ॥

दत्वात्सवर्णदीर्घः तथाउन्न्यो। उन्यः। सुल्वौ। सुल्वः। इत्यत्रांतरंगत्वादियङुवङ्च प्राप्तेऽपवादत्वादेरनेकाचइत्योःसुपीतियण्। यच्चापवादोऽन्यत्रचरितार्थः तर्हि
परांतरंगाभ्यांबाध्यतएव तथाहि ङिच्चेत्येतदन्यार्थङकारयुक्तेष्वनङादिषुचरितार्थत्वात्तातङ् नप्रवर्तते किंतुपरेणानेकाल्शिदित्यनेनबाध्यते। जीवतात्। भवतात्।
अयजेइन्द्रम्। ग्रामेइह। सर्वेइत्यम्॥ अत्रअयजइन्द्र। ग्रामइइह सर्वइइत्यमितिस्थिते अंतरंगेणगुणेनसवर्णदीर्घो बाध्यते॥ तस्यसमानाश्रयेदैत्यारिः। श्रीशइत्यादौ
चरितार्थत्वात्। असिद्धमिति। तेनपचावेदमित्यादौएतऐइत्यैत्वंन। अकृतव्यूहाइति। अकृतकार्याइत्यर्थः। एवंतर्हिसर्वस्यशास्त्रस्यवैयर्थ्यंस्यात्। अतआह निमित्त
विनाशोन्मुखंदृष्ट्वेति। लोकेसिद्धार्थकथनमेतत्। यद्वा। अक्षरार्थेनाप्येतत्कथनं। ऊहस्तेततर्कितेइत्यूहः। कार्यविशिष्टोयऊहोविनाशोन्मुखनिमित्तकंकार्यं। अकृतोव्यू
होयैस्तेअकृतव्यूहाइति। यद्यपिकृतमपिशास्त्रंनिवर्तयंतीति। परिभाषांतरंपठ्यतेफलंचतुल्यंतथापिअकृतव्यूहाइत्येवलघु। प्रक्षालनाद्धिपंकस्यदूरादस्पर्शनं

त्यालोच्यनकुर्वन्ती १

वरमिति न्यायादिति भावः नकुर्वन्तीति यथा निषेदुषीमित्यादौ कसोरिटमंतरंगत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नंक्ष्यतीत्यर्थः ॥ इति परिभाषाप्रकरणं ॥ ॥ इको यणचि ॥ प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढलक्षणा ॥ पूर्वत्रासिद्धे त्वादिभ्य इति च निर्देशात् ॥ तेन इक् शब्देन षट् षष्टिर्गृह्यते । यण् शब्देन चत्वारः ॥ भाव्यमानस्याणः सवर्णग्राहकत्वादेवं चेह यणित्तद्वाच्यवाच्ये लक्षणा तु न शंक्यैव भाव्यमानस्याणः सवर्णवाचकत्वाभावेन यण्वाच्ययकारादिवाच्यानामभावात् ततो नास्ति यथासंख्यं न च लक्ष्यार्थे वो धात्पूर्वभाविनं शक्यार्थज्ञानमादाय यथासंख्यमस्त्विति वाच्यं । एवमपि ऌतायचतुर्थीभ्यां ऋकारऌकाराभ्यां प्रत्येकं त्रिंशद्वयस्थितौ ऌवर्णेनो रेफादेशस्य ऋवर्णेना लादेशस्य च प्रसंगात् । तस्मादिह स्थानेन्तरतम इति सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्यानुपदं वक्ष्यति स्थानत आन्तर्यादिति । अचीति कस्मादचि पर इत्याकांक्षायां अर्थादिक इति संवध्यते । संहितायां विषय इति । दध्यत्रेत्यादौ कार्यिनिमित्तयोर्यदा । अतिशयितसंनिधिर्विवक्ष्यते तदैव यण् भवतीति भावः ।

इको यणचि ६।१।७७ इकः स्थाने यण् स्यादचि संहितायाम्विषये । सुधी उपास्य इति स्थिते । स्थानत आन्तर्यादिकारस्य यकारः सुध्य् उपास्य इति स्थिते । अनचि च ८।४।४७ अचः परस्य यरो वा द्वे स्तो न त्वचि । इति धकारस्य द्वित्वं । स्थानिवदादेशोऽनल्विधौ १।१।५६ आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । अनेनेह यकारस्य स्थानिवद्भावेनाऽच्त्वमाश्रित्याऽनचि चेति द्वित्वनिषेधो न, शङ्क्योऽनल्विधाविति तन्निषेधात् ॥ ॥

। अनचि च । यरोऽनुनासिक इति सूत्राद्यरो वेति चानुवर्तते ॥ अचो रहाभ्यामिति सूत्रादचो द्वे इति च तदाह अचः परस्येत्यादि ॥ एवं चात्र वाग्रहणानुवृत्त्यैवेष्टसिद्धेस्त्रिप्रभृतिषु शाकटायनस्य सर्वत्र शाकल्यस्य दीर्घादाचार्याणां इति च सूत्रत्रयं नारंभणीयमिति भावः । अच इति किं । तादात्म्यमित्यादौ मस्य द्वित्वं माभूत् अनचीति यदि पर्युदासः स्यात्ततो नञिवयुक्तमन्यसदृशे तथा ह्यर्थगतिरिति न्यायादज्भिन्नेऽज्सदृशे वर्णे हलीत्यर्थः स्यात् । ततो लाघवात् हलीत्येव वदेत् ॥ तस्मात् प्रसज्यप्रतिषेध इति ब्रवीति न त्वचीति । एवं चावसानेपि द्वित्वं भवति । वाक् । वाक्क् । स्थानिवदादेशः । आदेशे कृते स्वरूपभेदात् स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते । अस्तेर्भूः । आर्धधातुके विवक्षिते । भ्वादेशो धातुवत् । तेन तव्यदादयो धातुप्रत्ययाः भव्यं बभूव । किमः कः । अंगादेशोऽङ्गवत् । तेन इनादेशदीर्घस्वभावाः । केन । काभ्यां । कैः । आदेशग्रहणं किमर्थं । स्थानिवदित्येतावतैव संबंधिशब्दमहिम्ना तल्लाभात् । यथा पितृवदधीते इत्युक्ते पुत्र इति गम्यते इति चेन्नाहुः । द्विविध आदेशः प्रत्यक्ष आनुमानि

कश्चेति। अस्तेर्भूः इत्यादिः। प्रत्यक्षः। ते स्तुरित्यादिस्त्वानुमानिकः। एस्तुरित्यत्र हि इकारेणोकारांतस्थानी अनुमीयते। उकारेणापि ओकारांत आदेशः। तथा चैतेऽस्तुरिति फलितो र्थः। तत्रासंत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं। न त्वानुमानिकस्य स्यात्। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहस्तेन पचत्वित्यादेस्तिङंतत्वात् पदसंज्ञा सिध्यति। नन्वे रुरित्यादि यथाश्रुतमेवास्तु एकदेशविकृतस्यानन्यत्वा देव भविष्यतीति चेन्न। अर्थवत्येव स्थान्यादेशभाव विश्रांतेर्वीच्यत्वात्तस्यैव प्रसंगसंभवात्। तथा हि षष्ठी स्थानेयोगेत्युक्तो स्थाने च प्रसंगः। स चार्थवतः अर्थप्रत्ययार्थं शब्दप्रयोगात् यद्यपि ञ्जः सिजादावसंभवी तथापि सति संभवे अर्थप्रयुक्त एव प्रसंगो ग्राह्य इत्यनेनैवा देशग्रहणेन त्वाप्यते। उक्तं च। सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः एकदेशविकारे हि नित्यत्वं नोपपद्यते इति पदमिहार्थवत्। पद्यतेऽनेनेति व्युत्पत्तेः। यद्यपि सर्वेवि कारेष्वंतरं नित्यत्वानुपपत्तिस्तथापीदृग्विकार एव नास्तीति तात्पर्यमेतच्च शब्दकौस्तुभे स्पष्टम्। अनल्विधाविति किं। पश्चालाविधिः। पश्चालः परस्य विधिः पश्चाल्विधिः। पश्चालि

अचः परस्मिन्पूर्वविधौ १।१।५७। अल्विध्यर्थमिदम्। परनिमित्तोऽजादेशः स्थानिवत् स्यात्। स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्य इति स्थानिवद्भावे प्राप्ते। न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु १।१।५८। पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। इति स्थानिवद्भावनिषेधः। झलां जश् झशि ८।४।५३। इति धकारस्य दकारः॥ १ विधिस्तत्र माभूत्। तत्रालविधौ य

थाव्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदुत्वमाश्रित्यादुव्यवाय इति णत्वं प्राप्तं अलः परस्य यथा। द्यौः पन्थाः सह हल्ङ्यादिलोपो न। अलोविधौ सुकामः। लोपो व्योर्वलीति लोपो न न चोत्वविधिसामर्थ्याल्लोपो न भवेदिति शंक्यं। सुयानमित्यादौ तस्य सावकाशत्वात्। अलि विधौ यथा पञ्चः जकरः इह शि चेत्युत्वेन नचेह स्थानिवद्भा वेन जातेष्वुत्वे आद्गुणोऽवादेशे च कृते हलि सर्वेषामिति नित्यं लोपेन कः इष्ट इति रूपं सिध्यत्येवेति वाच्यं कपिष्ट इति रूपांतरासिद्धिप्रसंगात्। सिद्धांते तु क इष्टः भोभगो अघो पूर्व स्येति यत्वे लोपविकल्पः। कपिष्ट इति च रूपद्वयमभ्युपगम्यते। अलन्विहस्थान्यवयव एव गृह्यते तेन रामायेत्यादौ सुपि चेति दीर्घः सिध्यति तदेतदाह तद्विधौ हिपञ्चा दित्वमाश्रितं। यत्र त्वादेशावयवो न तु स्थान्यवयवस्तथा रुदितामित्यादौ रुदादिभ्य इति वलादिलक्षण इट् च सिध्यति। तदेतदाह। न तु स्थान्यलाश्रय इति। आश्रयणं चेह यथा कथंचिन्न तु प्राधान्येनेवेत्याह ग्रहणेन प्रपञ्चेत्यत्र वलादिलक्षण इडेव॥ ःः॥ अचः परस्मिन्पूर्वविधौ। अचः किं। आगत्य। वात्प्यपीत्यनुनासिकलोपस्य कि

व्येन स्थानिवत्। परस्मिन् किं। आदीध्ये। नित्यत्वादिट् एत्वं तच्च न परनिमित्तं तेन यीवर्णयोरिति लोपे कर्तव्ये तन्न स्थानिवत् पूर्वविधौ इति किं नैधेयः निपूर्वाद्धाञः उपसर्गे घोः
किः आतो लोप इटि च इति स्थानिनि अः इति ढक्। आकारस्य स्थानिवत्त्वे तु अच्त्वव्यपदेशेन द्व्यच्त्वं विरुद्धत्वान्नाश्रीयेत न हि त्रिवर्णो द्विपुत्रव्यपदेशं लभते। नन्वेवमपि विधिग्र
हणं व्यर्थं पूर्वस्येति षष्ठ्या कार्ये कर्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेन्न। पूर्वस्य विधिः पूर्वस्माद्विधिः इति समासद्वयलाभार्थं विधिग्रहणात्। यद्यप्यत्र पंचमीसमासपक्षो
मूले नोक्तस्तथापि पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अड्व्यवाय इत्येवात्र णत्वमिति पदमञ्जर्यादिग्रन्थे स्वीकृत एव सः। अल्विध्यर्थमिदमिति तेन वव्रश्चेत्यत्र वस्य सं
प्रसारणं न उरदत्वस्य स्थानिवत्त्वेन संप्रसारणात् यान संप्रसारणा इति निषेधात् न चोरदत्वं परनिमित्तकमिति वाच्यं। अंगाच्छि प्रत्यये परे तद्विधानात् पूर्वस्माद्विधिः पूर्वविधिरिति
पंचमीसमासपक्षे तु प्रयोजनं। तन्वति। तन्वते। इह यणादेशस्य स्थानिवद्भावान्नेट्। अत्र हि तनित्यंगं निमित्तं तच्च स्थानिभूतादुकारात्पूर्वमिति। नन्विदं न प्रयोजनं बहिरंगस्य यणो
ऽसिद्धत्वादिडागमस्यात्राप्रसक्तेः। न च नाजानंतर्ये इति निषेधः। यत्रांतरंगबहिरंगयोरानंतर्यमिति हरदत्तादिमते निषेधप्रवृत्तावपि उत्तरकार्ये पश्चाच्च आनंतर्यमाश्रितं तत्र बहिष्ठ
प्रकृप्तिर्नेति कैयटमते तदभावात्। नन्वेवमपि पचन्तीति प्रयोजनं भवत्येव। इह हि अंते रकारस्य चङ्कारस्य चातो गुणे इति पररूपत्वे तस्य च परादिवद्भावाज्झिग्रहणेन ग्रहणे
सति सिजभ्यस्तेति जुस् प्राप्नोति णिलोपस्य एकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यं चेत्तर्हि लङ्ये वानंतरो झिः संभवतीति तत्साहचर्यादभ्यस्तादपि लङ एव जुस् वि
धानात्। न च सिचा साहचर्यात् लुङ एव ग्रहणमस्त्विति शंक्यं विप्रतिषेधे परमिति परसाहचर्यस्य बलीयस्त्वान्नैवमप्यदभ्यस्तादित्यदादेशस्य निवारणाय पंचमीसमा
सपक्ष आवश्यक इति वाच्यं चङ्कारस्यांते रकारस्य चातो गुणे इति पररूपे कृते श्नसाभावाददादेशाप्रसक्तेः अन्नत्वेकादेशस्य परादिवद्भावाज्झग्रहणेन ग्रहणं न भवति।
अल्विधौ अंतादिवद्भावाप्रवृत्तेः। अन्यथा अयजे इंद्रमित्यादौ सवर्णदीर्घो द्वौ रएव स्यात्। अस्तु वा परादिवद्भावस्तथापि ककारस्यात्स्यादित्यदादेशे कर्तव्ये ऽतादे
शो न स्थानिवदल्विधित्वात्। तस्मात्पंचमीसमासपक्षो निरर्थक एवेति चेदाहुः। पंचमीसमासप्रयोजनं तु या अपीपचन्नित्युदाहरतो भगवतः सूत्रेण साहचर्यं नियामकतया
संमतम्। द्विस्त्रिश्चतुरिति सूत्रे कृत्वोऽर्थग्रहणज्ञापकात् साहचर्यं न सर्वत्राश्रीयते एवं च भवेतर्यङ्लुकि अभ्यस्ताश्रयस्य जुसः प्रवृत्त्या अबोभुवुरिति रूपं सिध्यति आतर
ति नियमस्य सिचः परत्वमाश्रित्य योजुस्याप्रसक्तेः मात्रपरतया माधवादिभिर्व्याख्यातत्वात्। अत एवाभ्यस्ताश्रयो जुसनित्यत्वाद्वक्। अबोभूवुरिति मूले यङ्लुङन्तेषू

त्कम्।तथाचापिपच न्नित्येतत्सिद्धयेपंचमीसमासपक्ष आश्रयणीयइतिअन्येत्वाहुः।पंचमीसमासपक्षप्रयोजनतयाभाष्येवेभिद्दितामाथितिकइत्यस्याप्युदाहृतत्वान्न
तस्य वैयर्थ्यशंकाकार्या।यद्यपिपिपठोऽकारस्यलोपस्यस्थानिवद्भावंविनापिएकाच उपदेशेऽनुदात्तादित्यादिविहितविशेषणाश्रयणादेवइतिनिषेधाप्रवृत्तौभिद्दियेइ
तान्नृविविभिद्दितेतिरूपंसुसाधंतथापिमाथितिकइत्यादिसिध्यर्थंसपक्षोऽभ्युपगंतव्यःनचमथितंपण्यमस्यमाथितिकइत्यत्रापितदस्यपण्यमितिठकिइकादेशेचकृतेयस्ये
तिचेतिलोपादिसुसुसंगतादितिइकस्थानेप्रसज्यमानोयःकादेशःसोऽप्यल्लोपस्यस्थानिवद्भावंविनैवसुपरिहरःठस्यकइत्यत्रस्थान्यादेशयोरकारउच्चारणार्थइत्यभ्यु
पगमेअल्विधित्वेनस्थानिवद्भावाप्रवृत्त्याठस्थानिकइकादेशस्तेनभवतीतिकादेशाप्रसक्तेर्मातिथिकइतिरूपसिद्धौकिमनेनपंचमीसमासपक्षाश्रयणेनेतिवाच्यम
थितयतेःक्विपिटिलोपणिलोपयोर्वेरपृक्तलोपेचमथितातेनचरतिमाथितिकइत्यत्रचरतीतिठकितस्यैकादेशसिद्धयेतत्पक्षस्यावश्यकत्वात्।नत्वत्रस्थानिवद्भावंविना
पिइकादेशापवादःकादेशःसुपरिहरः॥नाप्येतादृशकल्पनायांमानाभावःशंक्योमाथितिकइतिभाष्योदाहरणस्यैवमानत्वादितिस्यादेतत्पूर्वत्वस्यसावधित्वेनसन्निहि
तस्यैवावधित्वमुचितंसंनिहितंचेहत्रयंस्थानीआदेशोनिमित्तंचतत्रतावत्स्थानिनअवधिनतस्यादेशेनापहारात्नाप्यादेशनिमित्तेवैय्याकरणइत्यत्रएकारस्याया
देशापत्तेरित्याशंक्याह।अचःपूर्वत्वेनदृष्टस्येतिपूर्वत्वमुपलक्षणंनतुविशेषणमितिभावः॥नपदांत॥पदांतादीनांचरंतानांद्वंद्वःततोविधिशब्देनकर्मषष्ठ्यंतस्यस
मासः।विधिशब्दश्चभावसाधनोविधानंविधिरितिसचद्वंद्वांतेश्रूयमाणत्वात्प्रत्येकंसंबध्यतेपदस्यचरमावयवइतिवृक्षंचेतीतिवृक्षवीःवृक्षंवातीतिवृक्षवाःतमाचष्टे
वृक्षवयतिततोविच्वृक्षव्इहलोपोव्योर्वलीतिवलोपेनटिलोपस्यणिलोपस्यवास्थानिवत्वात्नचऊठंवतासिनिदितिहरदत्तादिमतेअंतर्वर्तिसुपापवादत्वान्नपदां
तेतिनिषेधःशंक्यःविधेयस्यलोपस्यपदानवयवत्वात्।पदांतस्यस्थानेविधौनेतिव्याख्यानेतुनपदांतेतिस्थानिवत्वनिषेधाद्वलोपःस्यादेवेत्यादिमनोरमायांस्थितं।द्वि
र्वचनादौचेतियलोपादयआदिशब्दार्थः।वरेइतित्वरेर्योजादेशःसनस्थानिवदितिव्याख्येयंसहविवक्षाभावेपिनिपातनात्द्वंद्वःसप्तम्यलुक्चाभयोरुदाहरणानि
पदांत्तेकानिसंतिकौस्तःइहयणावादेशयोःकर्तव्ययोःश्नसोरल्लोपोनस्थानिवत्।नचेकारौकारयोःस्थानिभूतादचःपूर्वत्वविरहादेवाल्लोपोनस्थानिवदितिवाच्यं
॥वाक्यादयोरूपत्यपद्यानिसंस्क्रियंतेइतिपक्षेस्थानिभूतादचःपूर्वत्वस्यसत्वात्यद्वागोचःगोचेत्याद्यवोकारस्यावङ्कर्तव्येऽचइत्यल्लोपोनस्थानिवदितिउदाहार्यं

अत्रहिलोपस्यान्यकारात्पूर्वत्वेनदृष्टत्वादोकारस्यद्विर्वचने।सुत्स्युपास्यः।नाजानंतर्येइतिनिषेधाद्बहिरंगपरिभाषात्रनप्रवर्त्तते।स्थानिवद्भावनिषेधसामर्थ्याच्च।एवंचाविर
न्यत्राप्यूर्ध्वंवरेयायावरः।यातेर्यङ्।ताच्छील्येयङ्।इतिवरच्।अतोलोपः।सचआतोलोपइटिचेत्यालोपेकर्त्तव्येनस्थानिवत्।यलोपेयातिः।यातेर्यङ्।तान्तिच्।अतोलोपः।यलोपः।
।अल्लोपस्यस्थानिवत्त्वाद्द्वितोलोपः।यलोपः।नचपुनरालोपःशंक्यः।चिरणोलुक्न्याये नालोपस्यासिद्धत्वात्स्थानिवद्भावाच्च।ननुयदिलोपविधिंप्रतिस्थानिवत्त्वनिषेधस्त
र्हिकथंवाय्वोरितिउच्यते।असिद्धंबहिरंगमितिपरत्वोऽसिद्धत्वान्नलोपः।नचनाजानंतर्यइतिनिषेधः।उत्तरकार्येअचआनंतर्यंयत्रतत्रैवतदभ्युपगमात्।किंचात्रस्वरदी
र्घयलोपेषुलोपाजादेशएवनस्थानिवदितिवार्तिकमस्ति।तेनान्यःस्थानिवदितिभवतीतिनदोषः।स्वरे चिकीर्षकईकारस्यलितीत्युदात्तत्वेकर्त्तव्येसत्यातोलोपोन
स्थानिवत्।नचलितीत्यारंभसामर्थ्यकारकइत्यादौसावकाशत्वात्।सवर्णानुस्वारयोःशिण्ढिश्नसोरल्लोपोनस्थानिवत्।यद्यप्यनुस्वारोनस्थानिभूतास्त्वःपूर्वइति
तस्यपरसवर्णेकर्त्तव्येऽल्लोपस्यस्थानिवत्त्वप्रसंगएवनास्तितथापिस्थानिद्वारानुस्वारोपिइष्टइत्यस्यैवतत्प्रसंगइत्याहुः।ननुसवर्णग्रहणमात्रेणानुस्वारोप्याप्स्येतुशा
कयइतिकिमनेनपृथगनुस्वारग्रहणेनसत्यंपृथग्ग्रहणाभावेयत्रपरसवर्णस्तत्रैवेतिसंभाव्येत तथाचयत्रनपरसवर्णप्रसंगःशिंषतीत्यादौतत्रयलोपेस्थानि
वद्भावंनिषेद्धुंवरेग्रहणात्पृथग्यलोपग्रहणमितिज्ञेयम्।दीर्घप्रतिषेधः।हलिचेतिदीर्घकर्त्तव्येअल्लोपोनस्थानिवत्।यणादेशस्तुस्थानिवद्भवत्येव।अलोपाजा
देशएवनस्थानिवदितिज्ञातत्वात्।तेनहलिचउपधायांचेतिदीर्घप्रवृत्याकिर्योःगिर्योःविव्यत्तुरित्यादिसिद्धंजशिस्ग्धिस्त्रे।अदन्नग्धिः।तत्रअदेःतिनिवहुलं
छंदसीतिघस्लादेशःघसिभसोर्हलीत्युपधालोपः।झलोझलीतिसलोपः।झषस्तथोरितिधत्वंघस्यझलांजश्झशीतिजस्त्वेकर्त्तव्येउपधालोपोनस्थानिवत्।स
मानस्यछंदस्यमूर्धप्रभृत्युदर्केषुइतिसः।समानाग्धिःसग्धिः।नचात्रसलोपेधत्वेचकर्त्तव्येपूर्वत्रासिद्धमपिइतिस्थानिवद्भावात्सग्धिरितिरूपंनस्यादितिशंक्यंपंच
मीसमासपक्षस्यानित्यत्वात्तत्रनिष्ठायांसेटीतिलिंगात्।तथाहितत्रसेटीतिपदंनतावदनिड्व्यावृत्त्यर्थंणिजंतात्तदसंभवात्।ननुसंज्ञपितःपशुरित्यत्रयस्यविभा
षेतिइण्निषेधेसंभवत्येवानिट्त्वंसन्नीवंतेतिविकल्पितेट्त्वादितिचेन्न।यस्यविभाषेत्यत्रएकाचइत्यनुवृत्तेः।अन्यथादरिद्रितइतिरूपंनस्यात्तत्रतनिपतिद
रिद्रातिभ्यइतिवार्तिकेनसनोविकल्पितेट्त्वात्।तस्मात्कालावधारणार्थंसेड्ग्रहणंइटिकृतेणिलोपोनतुततःप्रागिति।अन्यथाकारितमित्यादौणिलोपे

स्यादिति॥यदितुश्र्वस्मादिधौस्थानिवत्वं १

कृते एकाच उपदेशे इति इण्निषेधः। तर्हि णिचा व्यवधानान्निषेधप्राप्तिरेव नास्तीति सेटीत्यनर्थकं सत् स्थानिवत्तां ज्ञापयति इति स्थितं। ननु जश्त्वविधौ यदि स्थानिव
त्वनिषेधस्तर्हि पटयतीत्यत्रांतवर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वं स्यान्नैवं। इष्ठवदित्यतिदिष्टया भसंज्ञया पदसंज्ञाया बाधाज्जश्त्वाप्रवृत्तेः। चरि। जक्षतुः। जक्षुः।
घसेर्लिटि अतुस्उस् च गमहनेत्युपधालोपः खरि चेति चर्त्वं शासिवसिघसीनां चेति षत्वं प्रति नस्थानिवत्। भाष्ये तु पूर्वत्रासिद्धेन स्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्या
ख्याताः तद्रीत्या तु सलोपे षत्वे च कर्तव्ये स्थानिवद्भावशंकैव नास्तीति बोध्यम्॥ ॥ अदर्शनं लोपः। अत्र दर्शिर्ज्ञानसामान्यवचनः। दर्शनं ज्ञानं तदिह शब्दानुशास
नप्रस्तावाच्छब्दविषयकं सत् श्रवणं संपद्यते। तच्च श्रोत्रव्यापारस्तन्निषेधोऽश्रवणं ननु एवं लोपो व्योर्वलीत्यादौ वकारयकारौ न श्रोतव्याविति श्रोतृव्यापार एव नि
षिध्येत प्रयोक्तृव्यापार उच्चारणमनिषिद्धं स्यात्। अत्राहुः। असति श्रवणे उच्चारणमनर्थकमेवेति सामर्थ्याच्छ्रवणनिषेधे तद्धेतुभूतं उच्चारणमपि निषिद्धं भवतीति।

अदर्शनं लोपः। १।१।६०। प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्॥ संयोगान्तस्य लोपः। ८।२।२३। संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्। इति यलोपे प्राप्ते। य
णः प्रतिषेधो वाच्यः॥ यणो मयो द्वे वाच्ये॥ मय इति पञ्चमी यण इति षष्ठीति पक्षे यकारस्यापि द्वित्वं। तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रू
पाणि। एकधमेकयं द्विधं द्वियं द्विधमेकयं एकधं द्वियं सुद्ध्युपास्यः मद्ध्वरिः धात्त्रंशः लाकृतिः॥ ॥ प्रसक्तस्येति। इह स्थाने इत्यनुवर्तनादेतल्लभ्यते। प्र
सक्तस्येति किं। दधि। मध्वित्यादौ नुगागमो माभूत्। अस्ति हि तत्र क्विपो दर्शनं तच्च लोप इति प्रसक्तविशेषणाभावे प्रत्ययलक्षणेन नुक् स्यादेवेति दिक्। संयोगान्तस्ये
ति। तदंतस्येति। अलोऽन्त्यस्येति परिभाषयेति भावः। यद्यपि विशेषणेन तदंतविधिलाभः। संयोगस्येत्येव सूत्रयितुमुचितं तथापि प्रत्येकं संयोगसंज्ञा इति पक्षे दृषत्क
रोति इत्यादौ लोपं वारयितुं संयोगान्तेति पस्येति द्विवचनात्तेन समासलाभार्थं अंतग्रहणमिति मनोरमायां स्थितं। संयोग इति महासंज्ञाकरणसामर्थ्यादेक
स्य संयोगसंज्ञा न भविष्यतीति अंतग्रहणमिहत्यक्तुं शक्यं परः। प्रतिषेध इति वाचनिकमिदं। यद्वा वाच्यो व्याख्येयः। व्याख्या च हे धौ स्वलोऽस्वलीत्यतो झलग्रहण
मपकृष्य झल एव लोपो विधीयत इति। अंतरंगे लोपकर्तव्ये वहिरंगस्य यणोऽसिद्धत्वमिति वा। न च षाष्ठी परिभाषा त्रैपादिकमंतरंगलोपं न पश्यती॥ ॥

तिवाच्यं।कार्यकालपक्षाभ्युपगमात्। नचनाजानंतर्यइतिनिषेधः।उत्तरकालप्रवृत्तेलोपेअजानंतर्याभावात्।तदुक्तं।संयोगांतलोपेयणः प्रतिषेधः।नवाझलो लोपाद्
हिरंगलक्षणाद्वेति। चत्वारिरूपाणीति। इहधकारस्यद्वित्वेजश्त्वेचकृते पूर्वत्रासिद्धीयमद्वित्वइतिजशोऽसिद्धत्वाभावेनलक्ष्यभेदात्पुनर्दकारेद्वित्वप्रवृत्तौरूपा
धिक्यमस्ति। अत्रकेचिदाहुः। उकारात्परस्ययरोद्वित्वेकृतेपुनःस्तकारात्परस्ययरोद्वित्वंनभवतिनिमित्तभेदाभावादित्याशयेनेदमुक्तमिति तेषांतुदाद्धिणोवत्र
श्चेत्यत्रउरदत्वस्याचः परस्मिन्निति स्थानिवद्भावान्नसंप्रसारणइतिवस्योत्वंनेतिसमाधानग्रंथोमूलस्थोविरुध्येत।तन्निमित्तस्यलिटोभेदाभावादितिदिक्। अ
न्येतुधकारस्यजश्त्वेकृतेपूर्वत्रासिद्धीयमद्वित्वेइतिजशोसिद्धत्वाभावाद्दकारेपुनर्द्वित्वंभवत्येवव्यक्तिभेदात्।अतएवसंय्यंतेत्यादौपरसवर्णद्वित्वंभाष्यकृता
उदाहृतं। यद्संतरइत्यत्रसकारद्वित्वसिद्धये पूर्वत्रासिद्धीयमद्वित्वेइतिमनोरमायामप्युक्तं। एवंयकारेपिद्वित्वस्यपुनः प्रवृत्तौसत्यभावः। आष्टमिकद्विर्वचन
स्यस्थानेद्विर्वचनरूपत्वात्स्थान्यादेशव्यक्त्योश्चभेदात्।यदुक्तंमनोरमायामेकस्यांव्यक्तौएकंलक्षणंसकृदेवप्रवर्तत इत्येकः पूर्वपरयोरितिसूत्रेभाष्येसिद्धं
तितत्वात्कथंपुनर्द्वित्वप्रवृत्तिरन्यथाद्वित्वानंत्यापत्तेरित्यादितदवधाननिबंधनं तत्राधानादिशास्त्रदृष्टांतेनकचिदेवैकस्मिन्प्रयोगेगुणादिशास्त्रस्यानुष्ठापक
त्वंस्यान्नप्रयोगांतरइत्याशंक्यज्योतिष्टोमादिशास्त्रदृष्टांतेनप्रयोगांतरेपिगुणादिशास्त्रप्रवृत्तेरेवसिद्धांतितत्वात्।ननुसकृच्छास्त्रप्रवृत्तेः।आनंत्यापत्तिरपि
प्रकृतेनदोषः। साहि अनंतकार्यसहितप्रयोगस्याशक्यत्वात्तच्छास्त्रकर्तव्यस्यपरिनिष्ठितप्रयोगस्याभावात्तच्छास्त्रस्याननुष्ठापकत्वापत्त्या दोषः। प्रकृतेतुना
स्तिद्वित्वस्यवैकल्पिकत्वेनयावच्छक्तिद्वित्वप्रयोगसहितस्यपरिनिष्ठितत्वेनतेनैवशास्त्रस्यकृतार्थत्वात्।। लिटिधातोरिति।।द्वित्वस्यतुनित्यत्वादानंत्यापत्तेः।घा
चिद्विश्रांतौकल्पनीयायांलाघवात्प्रथमप्रवृत्तावेवविश्रांतिविकल्पनाद भ्यासग्रहणंप्रत्याख्यातं।अतएवसर्वस्यद्वेइत्यस्यापिपुनः पुनः प्रवृत्तिरित्याहुः।
नन्वत्रैकोसवर्णइतिशाकल्येनरूपांतरमस्त्विति चेन्मैवंसमासेतन्निषेधात्। नचनित्यसमासएवतन्निषेधइतिवाच्यं।सिन्नित्यसमासयोःशाकलप्रतिषेध
इतिवार्तिकस्यनित्यग्रहणस्यभाष्येप्रत्याख्यातत्वात्।मनोरमायांतुजश्त्वेनदकारेकृतेतस्यद्वित्वंनेत्याद्याशयेनसकारद्वित्वेनाष्टौविसर्गद्वित्वेनषोडशेत्युक्तं
द्धिधमिति।यद्यपिधस्यजश्त्वेनदकारे धद्वयंनास्तितथापिभूतपूर्वगतिमाश्रित्यैवमुक्तं सुद्ध्युपास्यइति। कर्त्करणेकृताबहुलमिति ॥ ॥ ॥

तृतीयासमासः। नन्विहयणो वद्दुर्लभः सुधीशब्दस्य ध्यायतेः संप्रसारणेन निष्पन्नत्वेन संप्रसारणाच्चेति पूर्वरूपापत्तेरिति चेन्मैवं। संप्रसारणपूर्वत्वे समानाङ्गग्रहण मितिवार्तिकोक्तेः। नन्वेवमपि न भूसुधियोरिति यण्निषेधः शंक्यः आङ्गत्वेन प्रत्यये परत एव तन्निषेधस्य प्रवृत्तेः। सुपीत्यनुवर्त्य सुपि परत एव यणि निषेधाच्च॥ धा त्रं शरति। अत्र रेफस्य द्वित्वं न द्वित्वप्रकरणे रहाभ्यामिति साक्षाच्छ्रुतेनानिमित्तभावेन रेफस्य कार्यित्वबाधनात्। सुद्ध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिको नबाध्यते। तस्मादित्युत्तरस्य वा न्वृतुपितृष्वस इत्यादिनिर्देशात् ज्ञापकात्। तकारस्य तु द्वित्वं भवत्येव। तत्त्र वेत्यतो रूपद्वयेनादिः स्त्री षाक्रोशः प्रायेण प्रवर्तत इति स्त्रीलिंगमुदाहरति पुत्रादिनीति। रहस्य प्रजातावितिणिनिः। तत्परे चेति। आदिनिपः पुत्रशब्दस्तस्मिन् परे पि पुत्रशब्दस्य न द्वे स्त इत्यर्थः। वाहतेति। द्वित्व

नादिन्याक्रोशे पुत्रस्य ८।४।४८। पुत्रशब्दस्य न द्वे स्त आदिनिशब्दे परे आक्रोशे गम्यमाने। पुत्रादिनी त्वमसि पापे आक्रोशे किं। तत्त्वकथने द्विर्वचनं भवत्येव पुत्रादिनी सर्पिणी। तत्परे च। पुत्रपुत्रादिनी त्वमसि पापे। वाहतजग्धयोः पुत्रहती। पुत्त्रहती। पुत्रजग्धी। पुत्त्रग्धी। त्रिप्रभृतिषु शाकटायनस्य ८।४।५०। त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वं। इन्द्रः। इन्द्र्रः। राष्ट्रं। राष्ट्रं। सर्वत्र शाकल्यस्य ८।४।५१। द्वित्वं न। अर्कः। ब्रह्मा। दीर्घादाचार्याणां ८।४।५२ द्वित्वं न। दात्रं। पात्रं। अचो रहाभ्यां द्वे ८।४।४६ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। हर्य्यनुभवः। नह्यस्ति। हलो यमां यमि लोपः ८।४।६४ हलः परस्य यमो लोपः स्याद्वा यमि। इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यं लोपारम्भफलं तु आदित्यो देवताऽस्येति आदित्यं हविः। यमां यमीति यथासंख्यविज्ञानान्नेह। माहात्म्यं। एचोयवायावः ६।१।७८ ॥ स्यवैकल्पिकत्वे वार्तिकमिदं नारंभणीयमित्येके। अन्ये

तु हतजग्धयोः परतः पुत्रशब्दस्यैवानचि चेति द्वित्वं नान्येषामित्यादिनियमसंभवात्। तदर्थमारंभणीयमेवेदमित्याहुः। पुत्रहतीति। पुत्रो हतो यया सा। अस्वाङ्ग पूर्वपदाद्वेति ङीष्। एवं पुत्रो जग्धो यया सा पुत्रजग्धी। अचो रहाभ्यां। अचः किं। ह्नुते इत्यादौ नकारस्य मा भूत्। हलो यमां यमि। हलः किं। न्याय्यं। इह यकारादीनां यकारादौ परे यथासंभवमुदाहरणान्यूच्यन्ते सुद्ध्युपास्यः। मध्वरिः। अत्र यणो मय इति मयः परस्य यस्य वस्य च द्वित्वे कृते अनेन लोपो। दुर्लभः। दर्ज्जुरं वा क्रुमिः। अत्र तु अचो रहाभ्यामिति लस्य जस्य मस्य च द्वित्वे कृते लोपः। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः। अत्रा नचि चेति ङमो द्वित्वे सत्यनेन ङ ॥

कारणाकारलकाराणांलोपः। लोपः स्याद्देति। झयोह इति सूत्रादन्यतरस्यामित्यनुवर्तत इतिभावः। लोपारंभफलं त्विति आदित्योदेवता आदित्यशब्दाद्दित्यदित्येति ण्यप्रत्यये यस्येति चेत्यकारलोपे अनेन च यलोपे आदित्यमित्येकयकारकं रूपं सिध्यति नान्यथा इतिभावः। नचापत्यस्य च तद्धितेनातीत्यनेन यलोपे कृते एकयकारकं सिध्यतीति वाच्यं। अदितेजात आदित्य इत्यादि विनृक्षायांतस्याप्रवृत्तेः। यथासंख्यविज्ञानादिति। उक्तोदाहरणेषु लोपारंभफलाभावाद्रेफस्य रेफे परत उदाहरणाभावाच्च यथासंख्यसूत्रमिह नोपन्यस्तमामात्यमिति। अत्र मलोपो नेत्यर्थः। हलोयमांयमि सवर्णे लोप इति तु न सूत्रितं। मूर्द्धः शार्ङ्गमित्यादौ रेफात्परस्य लोपापत्तेः॥ ॥ एचः क्रमादिति। नन्वत्रैव यथासंख्यसूत्रं वक्तुं चितं। प्रत्याहारग्रहणेषु तद्वाच्यवाच्येनिरूढलक्षणाभ्युपगमेतिलघ्यार्थबोधात्पूर्वंभाविशक्यार्थज्ञानमादाय यथासंख्यत्वस्यावश्यं वक्तव्यत्वात्। अन्यथा एचां क्रमेण

एचः क्रमादय् अव् आय् आव् एते स्युरचि॥ तस्यलोपः। १।३।९। तस्येतो लोपः स्यात्। इति यवयोर्लोपो न। उच्चारणसामर्थ्यात्। एवञ्चेत्संज्ञापीह न भवति। हरये। विष्णवे। नायकः। पावकः॥ वान्तो यि प्रत्यये। ६।१।७९। यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गोर्विकारो गव्यं। गोपयसोर्यत्। नावा तार्यं नाव्यं। नौवयोधर्मेत्यादिना यत्। गोर्यूतौ छन्दस्युपसंख्यानं अध्वपरिमाणे च। गव्यूतिः। ऊतियूतीत्यादिना यूतिशब्दो निपातितः। वान्तस्येत्यत्र वकारात् गोर्यूतावित्यत्र छकारादग्रे च भागे लोपो व्योरिति लोपेन वकारः प्रश्लिष्यते तेन श्रूयमाणवकारान्त आदेशः स्यात्। वकारो न लुप्यत इति यावत्॥

१ यवायावो न सिद्ध्येरन्निमेवं। अंतरतमत्वेनापि तत्सिद्धेः। तथाहि। एचः संध्यक्षराणि। तत्रसंवृताकारतालव्यस्य एकारस्य संवृताकारतालव्यो ऽय् संवृताकारौष्ठ्यस्यौ तादृश एव अव् एचोश्चोत्तरभूयस्त्वादैकारे इकारः। अध्यर्द्धमात्रः। अकारस्त्वर्द्धमात्र एव। एवमौकारेप्युकारः। अध्यर्द्धमात्रः अकारस्त्वर्द्धमात्रः एवं च विवृताकारतालव्यस्य ऐकारस्य विवृताकारतालव्य आय्। विवृताकारौष्ठ्यस्य विवृताकारौष्ठ्य आव्। वान्तो यि प्रत्यये यीति किं। गोभ्यां। नौभ्यां। प्रत्यये किं। गोयानं। यकारादाविति। येन विधिरिति सूत्रस्यापवादभूते न यस्मिन्विधिस्तदादावल्ग्रहणे इति वार्त्तिकेनायमर्थो लभ्यते। ओदौतोरिति पूर्वसूत्रे तयोरेव वान्तो प्रतिस्थानि त्वेन निर्णीतत्वादिति भावः। अध्वेति। भाषार्थमिदं। गोर्यूतौ लोके पिवान्तादेशः स्यात्समुदायेन अध्वनः परिमाणं गम्यते चेदित्यर्थः। गव्यूतिः स्त्री क्रोशयुगमि

निपातितइति। तैन्त्रं ततत्वेनेत्यर्थः। ननु गर्व्यनाव्यमित्यत्र भत्वेन पदत्वाद्धलोपाभावेपि गव्यूतिरित्यत्र हलि सर्वेषामिति लोपः शाकल्यस्येति वा लोपः स्यादत आह वीतरत्यत्रेति। व कारोनल्लुप्यतइति। एवंच हलि सर्वेषामिति सूत्रे व्योरित्यनुवृत्तावपि वकारं परित्यज्य यस्य लोपः स्यादिति व्याख्यास्यमानं सगच्छते। एतच्चात्रैव स्फुटीकरिष्यते॥ ॥ धातोस्तन्निमि त्तस्यैव पूर्वत्रासिद्धे नियमार्थमिदं। अत्रच पूर्वसूत्रमनुवर्तते। एचइतिचात च्छब्देन यादिप्रत्ययः परामृश्यते योग्यत्वान्न तु सन्निहितोपि धातुः। नहि स्वस्यैव स्वयं निमित्तं भ वति। एवकारस्त्विष्टतोवधारणार्थः। अन्यथा हि तन्निमित्तस्यैचो यद्भिवतितर्हि धातोरेवेति विपरीतनियमः संभाव्येत। ततश्च बाभव्य इत्यत्र न स्यात्। धातोस्त्व तन्निमित्त

धातोस्तन्निमित्तस्यैव ६।१।८०। यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य। लव्यं। अवश्यलाव्यं। तन्निमित्तस्यैवेति किं। ओयते। औयत। क्षय्यजय्यौ शक्यार्थे ६।१।८१ यान्तादेशनिपातनार्थमिदं। क्षेतुं शक्यं क्षय्यं। जेतुं शक्यं जय्यं। शक्यार्थे किं। क्षेतव्यं जेतव्यं। क्षे यं पापं जेयं मनः। क्रय्यस्तदर्थे। ६।१।८२ तस्मै प्रकृत्यर्थाय प्रयेस्त दर्थे क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यं। क्रेयमन्यत्। क्रयणार्ह मित्यर्थः। लोपः शाकल्यस्य ८।३।१९ अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे पूर्वत्रासिद्धमिति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिः। हरएहि। हरयेहि। विष्णइह। विष्णविह। श्रिया उद्यतः। श्रियायुद्यतः। गुराउत्कः। गुरावुत्कः। कानिसन्ति कोस्ति इत्यत्रास्तेरल्लोपस्य स्थानिवत्त्वे न यणावादेशौ प्राप्तौ न पदान्तेति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः। एकः पूर्वपरयोः ६।१।८४। इत्यधिकृत्य॥ आद्गुणः ६।१।८७। अव र्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। संहितायां। उपेन्द्रः। रमेशः। गङ्गोदकं। अणच्(?)॥ उरण्रपरः १।१।५१। इति त्रिंशत्सस्यंज्ञेत्युक्तान्तत्स्थानेयोऽण् स रपरस्सन्नेव प्रवर्तते। तत्रान्तरतम्यात् कृष्णर्द्धिरित्यत्रार्। तवल्कार इत्यत्राल्। अचो रहाभ्यामिति पक्षे द्वित्वं ॥ • ॥ ॥

स्यापिस्यादो यत इत्यादौ तदेतत्सकलमभिप्रेत्याह यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेश इत्यादि। लव्यमिति। लुनातेरचो यत्। सार्वधातुकार्द्धधातुकयोरिति गुणः। अ वश्यलाव्यमिति। ओरावश्यक इति ण्यत्। मयूरव्यंसकादयश्चेति समासः। लुंपेदवश्यमः कृत्य इति मकारलोपः। लव्यमित्यादेः पूर्वसूत्रेणैव सिद्धे नियमसूत्रमिदं व्यर्थमित्याक्षिपति। तन्निमित्तस्यैवेति किमिति। एकदेशाक्षेपेपि सूत्रस्यैवायमाक्षेपः पर्यवसन्नः॥

ओयत इति आङ्पूर्वाद्वेञः कर्मणि लङ् पगात्मनेपदे यञादित्वात्संप्रसारणं पूर्वरूपं। अकृदिति दीर्घः आङ्गुणस्य परादिवद्भावेन धातोरेकत्वेनापि यादिप्रत्ययनिमित्तक त्वं नास्तीति भावः ओयत इति। वेञ एव कर्मणि लङ् पगादि प्राग्वत्। आडजादीनामाटश्चेति वृद्धिः क्षय्यमिति। शकिलिङ् चेति। चात्कृत्याः। क्षेयमिति॥ अर्हे कृत्यतृच श्चेतियत्। प्रकृत्यर्थायेति। प्रकृत्यर्थो द्रव्यविनिमेयः। लोपः शाकल्यस्य। अवर्णपूर्वयोः किं। दध्यत्र। मध्वत्र। अशिपर इति। एतेच भो भगो इति सूत्रादनुवर्तते। अशि किं। वृक्षवृक्रोति। अत्र लोपो माभूत्। नचात्र टिलोपस्य स्थानिवद्भावेन निर्वाहः। पूर्वत्रासिद्धे न स्थानिवदित्यभ्युपगमात्। नचैवमपि हलि सर्वेषामिति नित्यं लोपः स्या दिति शंक्यं। तत्राशीत्यनुवर्त्य अशा हलो विशेषणात्। लोपो व्योर्वलीति लोपस्तु न शंकनीय एव। स्थानिवत्त्वान्नेति न पराते तिसूत्र एवोक्तत्वात्। हरएहीति। ओमाङोश्चे तिपररूपं प्राप्तं। तन्निषेधादिति। न च स्थानिवत्त्वनिषेधे व्यसिद्धं बहिरंगमन्तरंगमित्यल्लोपस्यासिद्धत्वाद्गुणादेशो स्तएवेति वाच्यं। पदद्वयाश्रयत्वेन तयोरेव बहिरं

झरो झरि सवर्णे। ८।४।६५। हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि॥ द्वित्वाभावे लोपे सत्येकधं। असति लोपे द्वित्वलोपयोर्विद्धिं सति द्वित्वे लोपे चासति त्रिधं। कृष्णर्धिः। कृष्णर्द्धिः। पराइति पञ्चमीमयइति षष्ठीति पक्षे ककारस्य द्वित्वं। लस्य त्वं न चेति तेन तवल्कार इत्यत्र रूप चतुष्टयं द्वित्वलस्यैव ककस्यैव नोभयोरुभयोरपि तवल्कारादिषु वधैर्वोध्यं रूपचतुष्टयं॥ ९९ गत्वान्नाजानन्तर्येति निषेधाच्च। उरण् रपरः। अनुवादे

षष्ठी स्थानेयोगेति परिभाषाया अनुपस्थितावपि स्थाने ग्रहणं ततोनुवर्तत इति आशयेनाह। तत्स्थानेयोणिति। स्थानेन्तरतम इत्यतोपि स्थाने ग्रहणमिहानु वर्तते। तेन प्रसंगावस्थायामेवाण् रपरो भवति। तदेतद्ध्वाचष्टे रपरः सन्नेव प्रवर्तत इति। उः किं। ईद्यति गेयं देयं। अण् किं। रीङन्दीनां रपरत्वं माभूत्। रीङ् तः मात्रीयति रीङ् क्रियते। आंतरतम्यादिति। रेफशिरस्कस्य अ रित्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः पक्षे द्वित्वमपि ऋध्वर्धस्येति भावः। ॥ हलो हलि हलोपमामित्यतो हल इत्यनुवर्तते तदाह। हलः परस्येति। हलः किं। प्रत्त्वा इन्द्र इति किं। शार्ङ्ग। झरि किं। प्रियपञ्चा। अत्र लोपोत्र पूर्वत्रासिद्धे स्थानिवन्न भवतीति चक्का रस्यत्रकारे परे लोपः स्यात्। सवर्ण इति किं। तर्प्ता। सवर्णग्रहणसामर्थ्याद्यथासंख्यमत्र न भवति। तेन शीरा ढीत्यत्र डस्य विकल्पेन लोपः सिद्ध्यतीति द्विकालो पो वेति। झयो ह इति सूत्रादन्यतरस्यामित्यनुवृत्तेः। असति लोप इति द्वित्वाभाव इत्यनुषज्यते द्वित्वलोपयोरसतोरित्यर्थः॥ ॥ ॥

क्षमितिपणोमपइतिलक्षणं।तेरणउनद्वित्वेचतुर्थमितिबोध्यं॥ ॥ वृद्धिरेचि।पूर्वसूत्रादादित्यनुवर्त्तते।तदाह।आदेचीति।कृष्णैकत्वमिति।कृष्णेति।संबोधने॥थकृपदं
।एवंदेवेत्यपि।इत्थं चात्रषष्ठीसमासत्वमभ्युपेत्य ष्टरणगुणेति निषेधमाशंक्य संज्ञाप्रमाणत्वादित्यादिनिर्देशेनगुणेननिषेधोनित्यइतिकेचित्‌व्याख्यानं नात्यंतासंगतम्
कमितिबोध्यं।एत्येधत्यूठ्सु।अत्रएचीत्यनुवर्त्तते।तच्चएत्येधत्योर्विशेषणंनतूठः।असंभवात्।आद्गुणइत्यत आदित्यनुवर्त्ततएवातोव्याचष्टे।अवर्णादेजाद्योरितिप्रष्ठौ
हइति।प्रष्ठंवहतीतिप्रष्ठवाट्।वहश्चेतिण्विः।ततःशसिवाहऊठ्।गुणापवादतया अनेनवृद्धिः।प्रदिधदिति।प्रपूर्वस्यैधतेर्ण्यंतस्यलुङिरूपं।नमाङ्योगेइत्याडभावः

वृद्धिरेचि ६।१।८८ आदेचिपरेवृद्धिरेकादेशस्स्यात्।गुणापवादः।कृष्णैकत्वं।गंगौघः।देवैश्वर्यं।कृष्णौत्कण्ठ्यं।एत्येधत्यूठ्सु ६।१।८९।अवर्णादे
जाद्योरेत्येधत्योरूठि च परेवृद्धिरेकादेशःस्यात्।पररूपगुणापवादः।उपैति।उपैधते।प्रष्ठौहः।एजाद्योः किं।उपेतः।माभवान्प्रेदिधत्।पुरस्ताद
पवादन्यायेनेयंवृद्धिरेङिपररूपस्यैवबाधिकानत्वोमाङोश्चेत्यस्य तेनावेहीतिवृद्धिरसाधुरेव।अक्षादूहिन्यामुपसंख्यानं॥अक्षौहिणीसेना।
स्वादीरेरिणोः।स्वैरः।स्वैरी।स्वैरिणी।प्रादूहोढोढ्येषैष्येषु।प्रौहः।प्रौढः।अर्थवद्ग्रहणेनानर्थकस्यग्रहणम्।ग्रहणवतेतिसूत्रेरा
जेःपृथक्‌भ्राजिग्रहणात्तेनऊढग्रहणेनक्तान्तमेवगृह्यतेनतुक्तवत्वन्तस्यैकादेशः।प्रौढवान्।प्रौढिः।इषइच्छायांतुदादिः।इषगतौदिवादिः।
इषआभीक्ष्ण्येक्र्यादिः।एषांघञिण्यतिच।एषएष्यइतिरूपे।तत्रपररूपेप्राप्तेऽनेनवृद्धिः।प्रैषः।प्रैष्यः।यस्तुईषउञ्छे यश्चईषगतिहिंसादर्शने
षुतयोर्दीर्घोपधत्वात्।ईषः।ईष्यः।तत्राद्गुणः।प्रेषः।प्रेष्यः।ऋतेचतृतीयासमासे।सुखेनऋतःसुखार्तः।तृतीयेतिकिं।परमर्तः।प्रवत्सतरकम्ब
लवसनार्णदशानामृणे॥प्रार्णं।वत्सतरार्णमित्यादि।ऋणस्यापनयनाययदन्यदृणंक्रियतेतदृणार्णं।दशार्णोदेशः।नदीचदशार्णा।ऋण
शब्दोदुर्गभूमौजलेच॥८८ भावः।पुरस्तादिति।पुरस्तादपवादाअनंतरान्विधीन्बाधंतेनोत्तरानितिन्यायेनेत्यर्थः॥अक्षादिति।आदित्यनुवर्त्तते।अचीतिच।तेनपूर्वपर
वर्णयोरेवभवति।एवमन्यत्रापित्वं।अक्षौहिणीति।ऊहःसमूहःसोस्त्यस्याःसाऊहिनी।अक्षाणामूहिनीतिविग्रहः।परिमाणविशेषविशिष्टासेना।अक्षौहिणी।पूर्वपदा
त्संज्ञायामितिणत्वं।अक्षाणामित्यस्यऊहशब्देनसमासेततइनौतुअक्षौहिणीत्येवभवति।नतुतत्रवृद्धिः।अंतरंगेणगुणेनबाधात्।अपवादभूतायाअपिवृद्धेरूहिनीश

यथोक्तं प्राक्। यद्यपवादोन्यत्र चरितार्थस्तर्हि परांतरंगाभ्यां बाध्यत इति। स्वादीरेरिणोः। ईरेरिण्योरिति क्वचित्कोऽपपाठः। स्वैरीति। णिन्यंतस्यास्वैरिणीत्युक्तभावप्रसंगात्। इरि
न्ग्रहणस्य फलमाह। स्वेनेरितुमिति। यदा त्वीर इति घञ् तेन स्वशब्दस्य समासे स्वादीरे इति वृद्धौ कृतायां मत्वर्थीय इनिः यदा वा मत्वर्थीये निप्रत्यये ते नेरिन्शब्देन स
शब्दस्य समासः। तदापि तदेकदेश ईरशब्दोस्त्येवेति। पृथगीरिन्ग्रहणं व्यर्थं स्यादिति भावः। स्वैरीति। सुप्यजातौ णिनिः। उपपदसमासः। स्वैरिणीति। ङीप्। प्र
ग्भागमीरिन् शब्दमादाय वृद्धिः। केचित्तु लिंगविशिष्टपरिभाषया नेह वृद्धिरित्याहुस्तन्निष्फलमिति भावः। नानर्थकस्येति। उपस्थितस्यार्थस्य शब्दं प्रति विशेषणात्व
संभवेत्याग्यायोगादिति भावः। प्रैष्य इति। स्वसाहचर्यादेष्योप्यनव्ययं गृह्यते तेन एयंतादिषेः क्विपोल्यपि पररूपमेव न तु वृद्धिः। प्रेष्यगतः। लघूपधगुणमाशंक्या
ह तयोर्दीर्घोपधत्वादिति। प्रवत्सतरेति। इह केचिद् ऋणशब्दं वत्सरशब्दं च प्रक्षिपंति तत् ज्ञाप्यादावदृष्टत्वादुपेक्ष्यं। वत्सतराणामिति। तकारमकारयोर्द्वित्वविकल्पा
च्चत्वारि रूपाणि। रेफात्परस्य तु अचो रहाभ्यामिति द्वित्वे यणो मय इति वचनात्तरेणा पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश रूपाणि। शर इति सकारद्वित्वे चतुर्वि

उपसर्गादृति धातौ ६।१।९१ अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। उपार्छति।। प्रार्छति

शतिः। न चेह शरोचीति द्वित्वनिषेधः शंक्यः। तस्य सोत्र द्वित्वमात्रविषयत्वात्। अत एव खयः शर इति वार्तिकस्य वत्सरः अप्सरा इत्युदाहरणं भाष्ये दत्तं। न च व
देस्सरप्रत्यये परतश्चर्त्वे कृते तस्यासिद्धत्वात् स्य खयः परत्वं नेति शंक्यं पूर्वत्रासिद्धीयमद्वित्व इत्युक्तेः। अत एव मनोरमायां षट्संत इत्यत्र टकारात्परस्य सस्य
द्वित्वं स्वीकृतमिति दिक्॥ ॥ उपसर्गादृति। उपसर्गात् किं। खट्वर्छति। ऋति किं। उपेतः। तपरकरणमुत्तरार्थं। इह दीर्घऋकारादेर्धातोरसंभवेन व्यावर्त्यालाभा
त्। धातौ किं। उपर्कारः। नन्वत्र उपेत्युपसर्ग एव न भवति। क्रियायोग एवोपसर्गत्वात्। उपगत ऋकार इति विग्रहे क्रियायोगत्वसंपादनेपि यत्क्रियायुक्ताः प्रादय
स्तं प्रत्येव गत्युपसर्गसंज्ञा इति ऋकारं प्रति अनुपसर्ग एव। तथा चात्र तेपि धातुग्रहणेन ऋकारादिधातावेव वृद्धिर्भविष्यत्युपसर्गेणा धातो रास्तेपान्नत्वे नेति चेत्सत्यं
अत एव योगविभागे न पुनर्विधानार्थमित्यनुपदं वक्ष्यतीति न काप्यनुपपत्तिः ॥

अंता दिवच्चा इह एकः पूर्वपरयो रित्यनुवर्त्ततेयथासंख्यं चाश्रीयतेइत्यभिप्रेत्याह। पूर्वस्यांतवदिति। स्थानिवत्सूत्रेणोवगतार्थमिदं नचात्विध्यर्थमिदमस्त्विति शंक्यं। अस्याप्यल्विधावनिष्टत्वात्। अन्यथा अयजेइंद्रमित्यत्र सवर्णदीर्घापत्तेः। नविसर्गइति। एतच्च खरवसानयोरित्यादावपिबोध्यं। सुब्धाताविति। सुबंतावयवके इत्यर्थः। सुबंतस्य धातोरसंभवात्। यद्यपि कृत्जगतावित्यादीनां क्विपिधातुत्वं सुबंतत्वं च संभवति। तथापि नतादृशेषु तपरत्वव्यावर्त्यत्वं प्रसिद्धं। नामधातुष्वेवतत्संभवतीतित एवेहगृह्यतइतिभावः। प्रार्षभीयतीति। शरोचीतिवक्ष्यमाणेनह्रित्वनिषेधः। एङि पररूपं। एङ्येङित्येवसिद्धे पररूपग्रहणमुत्तरार्थं। रूपग्रहणंतु स्पष्टार्थं।

अन्तादिवच्च ६।१।८५ योयमेकादेशस्स पूर्वस्यांतवत्परस्यादिवत्स्यादिति रेफस्य पदान्तत्वे। खरवसानयोर्विसर्जनीयः ८।३।१५ खरि अवसाने चरेफस्य विसर्जनीयस्स्यात्पदान्ते। इति विसर्गे प्राप्ते अन्तवद्भावेन पदान्तस्य नविसर्गः। उभयतआश्रये तु नान्तादिवत्। कन्त्तरिचार्षि देवतयोरित्यादिनिर्देशात्। उपसर्गादृति धातौ ६।१।९१ अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। वासु पूर्वपदत्वात् प्रार्छति। सुबन्तावयवधातोराक्षेपसिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानार्थं। तेनऋत्यक इति पाक्षिकोपि प्रकृतिभावोऽत्रनभवति। वासुप्यापिशलेः ६।१।९२ अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ वृद्धिर्वा स्यात्। आपिशलिग्रहणम्पूजार्थं प्रार्षभीयति। प्रर्षभीयति। सावर्ण्याल्लृवर्णस्य ग्रहणं। प्राल्कारीयति प्रल्कारीयति। तपरत्वाद्दीर्घेन। उपऋकारीयति। उपर्कारीयति। एङि पररूपं ६।१।९४ आदुपसर्गादेङादौ धातौ पररूपमेकादेशस्स्यात्। प्रेजते। उपोषति। इह वासुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयन्तेन एङादौ सुब्धातौ वा उपेडकीयति। उपैडकीयति। एवेचानियोगे। नियोगोऽवधारणं। क्वचभोक्ष्यसे। अनवक्लृप्तावेवशब्दः। अनियोगे किं त्वमेव ॥ ॥ ॥ ॥

अमि पूर्ववदेङि पररूपेसिद्धे प्रेजत इति। एजृदीप्तौ कंपनार्थस्तु परस्मैपदी। प्रेजति। नियोगोवधारणमिति। निर्द्धारणमित्यर्थः। तदुक्तं। नावक्लृप्तौ यदा दृष्टः पररूपस्यगोचरः। एवस्तु विषयो वृद्धेर्नियमे पदाभवेदिति। अस्यार्थः। अनवक्लृप्तौ अनिश्चये यदा एवकारो दृष्टः स पररूपस्यविषयः। यस्तु नियमे नि---र्द्धारणे यदा दृष्टः सवृद्धिविषय इति। येतु नियोगे त्वयैवगन्तव्यमिति प्राचोग्रंथे स्थितस्य प्रत्युदाहरणस्यानुरोधेन तथा नियोजनं नियोगो व्यापार इति व्याचक्षते तेषां यदैवपूर्वे ज्वलनेशरीरं ममैवजन्मांतरपातकानामिति लौकिकप्रयोगः तपस्तपः कर्मकस्यैवलङः शाकटायनस्यैव ॥

त्यादिसौत्र प्रयोगाश्च न सिद्ध्येयुः उदाहृतवृत्तिस्लोकविरोधश्च स्यात्। अवधारणमिति व्याकुर्वतां तु सर्वेष्टसिद्धिः॥ ॐ ॥अचोन्त्यादिटि। अच इति निर्द्धारणे षष्ठी। जातावे
कवचनं तदाह। अचां मध्य इति। शकंध्वादिष्विति। शकंध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः। अत एवाहात त्वं टेरिति। यदि तु आदित्यधिकाराद् अकारस्यैवे
ष्येत तर्हि मनीषा पतंजलिरिति न सिध्येत्॥ केचित्तु मनःपतञ्जल्योः पृषोदरादित्वाद् अन्त्यलोपे अकारस्यैव पररूपमाहुः शकानां देशविशेषाणामंधुः कूपः शकंधुः।
कर्कीणां राजविशेषाणामंधुः कर्कंधुः। अटतीत्यटा पचाद्यच् टाप्। कुलस्य अटा कुलटा। यदि तु कुले अटतीति विगृह्येत तदा कर्मण्यणि ङीपि कुलाटीति स्यात्। दे

अचोन्त्यादि टि १।१।६४। अचां मध्ये योन्त्यः स आदिर्यस्य तत् टिसंज्ञं स्यात्। शकन्ध्वादिषु पररूपं वाच्यं तच्च टेः। शकन्धुः कर्कन्धुः। कुलटा। सी
मन्तः केशवेशे। सीमान्तोऽन्यः। मनीषा। हलीषा। लाङ्गलीषा। पतञ्जलिः। सारङ्गः पशुपक्षिणोः। साराङ्गोऽन्यः। आकृतिगणोऽयम्। मार्तण्डः। ओत्वो
ष्ठयोः समासे वा। स्थूलोतुः। स्थूलौतुः। बिम्बोष्ठः। बिम्बौष्ठः। समासे किम्। तवौष्ठः। ओमाङोश्च ६।१।९५। ओमि आङि चात् पररूपमेकादेशः स्या
त्। शिवायोन्नमः। शिव एहि। शिवेहि। अव्यक्तानुकरणस्यात इतौ ६।१।९८ ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः
स्यात्। पटत् इति। पटिति। एकाचो न। श्रदिति। नाम्रेडितस्यान्त्यस्य तु वा ६।१।९९ आम्रेडितस्य प्रागुक्तन्न स्यात्। अन्त्यस्य तु तकारमात्रस्य
वा स्यात्। डाचि बहुलं द्वे भवत इति बहुलवचनाद् द्वित्वं तस्य परमाम्रेडितम् ८।१।२ द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात्। पटत्पटेति। कला
ञ्जशोन्ते ८।२।३९। पदान्ते झलां जशः स्युः। पटत्पटदिति॥ ११ घञं ङ्कौ ईषगत्यादिषु। आभ्यां गुरोश्च हल इत्यप्रत्यये ईषा। मनस ईषा मनीषा। हलस्य ई
षा हलीषा। हलीषा लांगलदंडः। पततः अंजलयोऽस्मिन् पतंजलिः। मार्तंड इति। पररूपेणानेन मृतंड इति सिद्धे तत अण्यादिवृद्धिः। परमार्तोऽण्डमास्य तु पुनर्मार्तो
ऽमाभरदित्यादिषु तु दीर्घश्छान्दस इति भावः। केचिदत्र सवर्णदीर्घमाहुः। पूर्वोक्ता वैदिकप्रयोगास्तेषामनुकूलाः। ओत्वोष्ठयोः समासे वा। अकारस्य ओत्वोष्ठयोश्च
एकत्र समासे स्थितौ सत्यामिदं प्रवर्त्तते। नेह वृषलस्तु ओष्ठं पश्य इति। शिवेहीति। ननु शिव आ इहि इत्यत्र सवर्णदीर्घे कृते पश्चादाद्गुणे च सिद्धमिष्टं तत्किमाङ्ग्रहणे
न। सत्यं। पूर्वं धातुरुपसर्गेण युज्यते इति दर्शने धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं गुणे कृते वृद्धिः॥
नमस्कार्यत्वाद्य ४

स्यात्। तन्माभूदित्याङ्ग्रहणं। अव्यक्तानुकरणस्यात इतो। यद्यप्यतो गुण इति पूर्वसूत्रादात इत्यनुवर्त्यातो ग्रहणमिह त्यक्तुं शक्यं। तथापि पूर्वसूत्रे अत इति तपरकरणा ह्रस्वाकारस्य ग्रहणमिह तु शब्दाधिकारपक्षाश्रयणात् अच्छब्दस्य ग्रहणमिति व्याख्यानक्लेशः स्यादिति पुनस्तातो ग्रहणं कृतं। अव्यक्त शब्दं व्याचष्टे। ध्वनेरिति। अनुकरणस्येति। परिस्फुटाकारादिवर्णस्येति भावः। तस्य चानुकरणत्वं किंचित्साम्येन बोध्यं पररूपस्यास्य नित्यत्वेपि संहितायामविवक्षितायां तदभावादाह। पटत् इतीति। ॥ नाज्झलावित्यादि। अयं भावः। विधेयभेदे वाक्यभेदात् संभवत्यामेकवाक्यतायां तद्योगात् तुल्यास्यप्रयत्नमित्यस्य नाज्झलावित्यस्य च एकवाक्यत्वलाभायाज्झल् भिन्नं तुल्यास्यप्रयत्नं सवर्णमित्यर्थोभ्युपेयते। अज्झल् भिन्नेत्यत्र परस्परनिरूपितं तुल्यत्वविशिष्टास्यप्रयत्नको यावज्झलौ तदुभयभिन्नत्वं वि

अकः सवर्णे दीर्घः ६।१।१०१। अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात्। दैत्यारिः। श्रीशः। विष्णूदयः। अचि किं। कुमारी शेते। नाज्झलाविति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः। ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः। अकः किं। हरये। अको कि दीर्घ इत्येव सुवचं। ऋति सवर्णे ऋ वा। होतृकारः। होतृकारः। ऌति सवर्णे ऌ वा। होऌकारः। होतृकारः। पक्षे ऋकारः सावर्ण्यात्। ऋति ऋ वा ऌति ऌ वेत्तु भयत्रापि विधेयं वर्णद्वयं द्विमात्रं। आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा अभितोऽज्भक्तेरपरा। द्वितीयस्य तु मध्ये द्वौ लकारौ। शेषं प्राग्वत्। इहोभयत्रापि ऋत्यक इति पाक्षिकः प्रकृतिभावोवस्यते ॥ १८ वक्षितं। तथा चयोर्ह्रस्वदीर्घाद्यात्मको वर्णो येन वर्णेन तादृशेन तुल्यास्यप्रयत्नस्तदुभयं मिथः

सवर्णं भवति। तथा येन हला तुल्यास्यप्रयत्नकं यद्धल् तन्मिथः सवर्णं स्यात् यश्च दीर्घप्लुतात्मको वर्णो येन हला तुल्यास्यप्रयत्नस्तदुभयमपि मिथः सवर्णमित्यर्थः। फलितः। ततश्चानेन सूत्रद्वयेन सवर्णसंज्ञायां सिद्धायामणुदित्सवर्णस्येति ग्राहकशास्त्रं प्रवर्त्तते न तु ततः प्राक् अतो नाज्झलावित्यनेन आक्षरसमाम्नायिकानामेव सावर्ण्यं न्युदस्यते न तु सर्वेषां तेनात्र दीर्घशकारयोः सावर्ण्यमस्त्येवेति तद्वारणाय अकः सवर्ण इत्यत्राचीत्यनुवर्त्तनं युक्तमिति यदाहुस्तद्गुणाभीषद्दिश्रुतत्वं परिकल्प्य नाज्झलाविति सूत्रं प्रत्याख्यायते तदेह सवर्णसूत्रे अचीति नानुवर्त्तनीयं। हे र पाशोइत्यादौ गुरोरनृत इत्याकारस्य प्लुते कृते ततः परस्य सस्य रुः परत्वेन षत्वं स्यात्। नाज्झलावित्यत्राकारप्रश्लेषेण दीर्घहकारयोः सावर्ण्याभावेपि प्लुताकारस्य हकारसवर्णत्वेन इण्त्वादित्याशंक्यत ॥ ॥ ॥

समाधानार्थमाह आद्येति। इह ऋत्वा सवर्णे दीर्घे ऋ ॠ दीर्घात्परत्र प्लुतोपि प्रश्लिष्यते इति क्लिष्टव्याख्यानमपि नाश्रयणीयं विश्वपाभिरित्यादौ ढलादेरप्यप्रसक्तेः। स्वराणां मूष्मणां च प्रयत्नभेदेन सावर्ण्याभावादिति सुगमोयं पंथाः। अकोकीत्येवेति। अको कि दीर्घ इत्येवेत्यर्थः। सुवचमिति। यथासंख्यसंबंधेन दध्यत्रेत्यादावतिप्रसंगाभावादृ इति त्रिंशतः संज्ञेत्युक्तत्वात् होतॢकार इत्यत्र ऋकारस्य ऋकारपरत्वमस्त्येवेत्यप्रसंगाभावा दीकारशकारयोः सावर्ण्ये सत्यप्यचीत्यनुवर्त्तनेन विनैव समाहितरूपसिद्ध श्चेति भावः। ऋति ऋ वा ॡति ॡ वेति वार्त्तिकं सूत्रस्थेन सवर्णपदेन योजयित्वा पठति ऋति सवर्णे इत्यादिना। एवमकः सवर्णे इति सवर्णपदाकरणे वार्त्तिकयोः सवर्णग्रहणं कर्तव्यं सूत्रे त्वको कीति कर्तव्यमिति विपरीतगौरवात्कथमको कीत्येव सुवचमित्युक्तमिति चेदत्राहुः। भाष्यकारैरेतद्वार्त्तिकद्वयस्य प्रत्याख्यानात्तास्येव गौरवमिति। प्रत्याख्याने तूपपत्तिः ॡकारांतेषु विचारयिष्यते। वर्णद्वयं द्विमात्रमिति एतेन दीर्घप्राप्ते ह्रस्व ऋकारो ह्रस्व ॡकारश्च विधीयत इति प्राचो व्याख्यानमाकरविरुद्धमिति ध्वनितं॥ ॥ एङः पदांतात्। अयवोरपवादः॥ ङसिङसोश्चेत्यस्यारंभादस्य पदांतविषयत्वे लब्धे उत्तरार्थं पदांतादिति स्पष्टप्रतिपत्तये इहैव कृतमिति मनोरमायां स्थितं॥ केचित्तु पदांतादि

एङः पदान्तादति। ६।१।१०९। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव विष्णोऽव। सर्वत्र विभाषा गोः। ६।१।१२२। लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते। गो अग्रम् गोऽग्रम्। एङन्तस्य किं। चित्रग्वग्रम्। पदान्ते किं। गोः॥

त्येतदिहाप्यावश्यकमेवान्यथाऽ पदांतादपि स्यात्। ङसिङसोश्चेति सूत्रं तु सुप्संबंधिन्यति परतः पूर्वरूपं चेन्ङसोरेवाति पर इति नियमार्थं स्यात्। तत्फलं तु हरयः। गुरवः। इः स्मृतौ ये स्मृतय इत्यादौ पूर्वरूपाप्रवृत्तिरित्याहुः। एङः किं। दध्यत्र। पदांतात् किं। चयनं लवनं। अचिनव। अति किं। हरयिह विष्णविह। तपरः किं। वायवायाहि। सर्वत्र विभाषा। यद्यपीह छंदसि इति न प्रकृतं तथापि पञ्चपुरु इत्यादि प्रक्रमात् छंदस्येव संभाव्येत अतः सर्वत्रेत्युक्तं। तद्व्याचष्टे लोके वेदे चेति। इह एङ इत्यनुवर्त्य एङंतस्य गोरिति व्याख्येयो प्रकृतिभाव इति। एतच्च प्रकृत्यांतःपादमिति सूत्रात्प्रकृत्येत्यनुवृत्त्या लभ्यते। नांतःपादमिति पाठे तु सर्वत्र विभाषेति सूत्रेण पूर्वरूपमेव विभाषा निषिध्यते इत्यवधेयं। निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन पूर्वरूपमेव विकल्प्यत इति मनोरमायां स्थितं॥ ॥ ॥ ॥

अवङ् स्फोटायनस्य स्फोटायनं पारायणं यस्य सः स्फोटप्रतिपादनपरो वैयाकरणः तस्य स्फोटायनस्य। अत्रापि एङः तस्य गोरिति व्याख्येयं। अगित्येव सूत्रयितुमुचितं विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थं। अतीति निवृत्तमिति। अन्यथा गवेशः गवोद्धः इत्यादि न सिध्येदिति भावः। अचि पर इति। अत्राचीत्यनुवर्त्तते। अतीति तु निवृत्तमित्यत्र व्याख्यानमेव शरणं गवाक्ष इति। गवां किरणानां अक्षीवेति विग्रहः। अक्ष्णो दर्शनादित्यच् समासांतः। वातायने रूढोयं। उस्त्वं लोकात्। इंद्रे च। आरंभसामर्थ्यान्नित्यमिदं द्वंद्वं च सूत्रं त्यक्तुं शक्यं। अन्यार्थं स्वीकृतेन व्यवस्थितविभाषाश्रयणेनैव इष्टसिद्धेरित्याहुः। प्लुतप्रगृह्या इति सूत्रादव्यवहितपूर्वोयं प्रकृतिभाव इति पाठो मूलपुस्तकेषु प्रायेण दृश्यते स्वाप पाठ एव सर्वत्र विभाषा गोरिति प्रकृतिभावस्य प्रागेवारब्धत्वादित्येके। अन्ये तु अवङ् स्फोटायनस्य इंद्रे चेति सूत्रद्वयं प्रकृतिभावप्रकरणपठितम्

अवङ् स्फोटायनस्य। ६।१।१२३। अतीति निवृत्तम्। अचि परे पदान्ते गोरवङ् वा स्यात्। गवाग्रं। पदान्ते किं। गवि। व्यवस्थितविभाषया गवाक्षः। इन्द्रे च। ६।१।१२४। गोरवङ् स्यादिन्द्रे। गवेन्द्रः। अथ प्रकृतिभावः। प्लुतप्रगृह्या अचि नित्यं। ६।१।१२५। प्लुताः प्रगृह्याश्च वक्ष्यन्ते ते ऽचि नित्यं प्रकृत्या स्युः। एहि कृष्ण ३ अत्र गौश्चरति। हरी एतौ। नित्यमिति किं। हरी एतावित्यादावयमेव प्रकृतिभावो यथा स्यात्। इकोऽसवर्णे इति ह्रस्वसमुच्चितो माभूत्। इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च। ६।१।१२७। पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा। अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्त्तव्य इति भाष्ये स्थितं। चक्रि अत्र। चक्र्यत्र। पदान्ता इति किं। गौर्यौ। न समासे। वाप्य श्वः। सिति च। पार्श्वं॥

पितद्वहिर्भूतमित्यवश्यं वक्तव्यं। ताभ्यां तद्विधानात्। न च अवङ् सूत्रस्य प्रकृतिभावापवादत्वेनोत्सर्गापवादरूपत्वात् तत्प्रकरणस्थत्वं स्वपादमित्यवङादेशानुवृत्त्यर्थं तदनंतरं पठितस्येंद्रे चेति सूत्रस्यापि तिवाच्यं। पूर्वरूपापवादत्वस्य अवङ् सूत्रस्योक्तत्वात्। एतत्प्रकरणपाठस्य गोशब्दानुवृत्त्यर्थतया चरितार्थत्वात्। एवं च स्वलेख्यप्रतिभावप्रकरणाद्बहिः स्तनसूत्रद्वयं लिखितं तदनुकूलत्वेन सर्वत्र विभाषेति सूत्रमपि तत्रैवेति स्थितस्य गतिर्वाच्येत्याहुः। प्लुतप्रगृह्या। प्रकृतिभावं प्रति प्लुतो नासिद्धः प्लुतमनूद्य प्रकृतिभावविधानसामर्थ्यात्। अचि किं। जानु उ जानू। उञः प्रगृह्यत्वेपीह सवर्णदीर्घः। अचीत्यनुवर्तमाने पुनरचिग्रहणमादेशनिमित्ते एवाचि प्रकृतिभावस्तेन इहाप्येकादेशः स्यादेव जानु उ अस्य रुजति जानू अस्य रुजति। इहमय उञ इति पाक्षिके वकारे तु ज प्ररुजति। एहि कृष्णेति। दूराद्धू

तेचेति प्लुतः प्राचामनुकर्षणात् एहीति उदाहृतं तदसत्॥ वाक्यस्य टेरित्यधिकारात् ह्रस्वसमुच्चितो मा भूदिति। अयं भावः। हरी ईशावित्यादौ प्लुतप्रगृह्येत्येतत्सावकाशं। चक्रि अत्रेत्य त्वेति प्लुतः प्राचामनुकर्षणात् एहीति उदाहृतं तदसत्॥ ... वाक्यस्य टेरित्यधिकारात् ह्रस्वसमुच्चितो मा भूदिति।

त्विकोऽसवर्ण इति। ततश्च हरी एतावित्यत्र परत्वात् ह्रस्वसमुच्चित एव स्यात्। नित्यग्रहणोक्तेः तत्सामर्थ्यात् परमपि बाधत इति। चक्र्यत्रेति। इहस्कोरिति कलोपो न। यण: कार्यकालपक्षे बहिरंगपरिभाषया असिद्धत्वात् स्थानिवद्भावाच्च। पूर्वत्रासिद्धेन स्थानिवदिति तु नास्ति। तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति वक्ष्यमाणत्वात्। पार्श्वमिति। पर्शूनां समूहः। पर्श्वाणस्वत्ताव्य इति णस्। ओर्गुणस्तु नसि तिचेति पदत्वस्याभावात्॥ ॐ ॥ ऋत्यकः। ब्रह्म ऋषिरिति। ननु ऋत्यस्येत्येव सूत्रमस्तु। दधि ऋच्छतीत्यादाविको सवर्ण इत्यनेनैव प्रकृतिभावसिद्धेः। मैवं। होतृ ऋकार इत्यत्र प्रकृतिभावार्थमक्ग्रहणस्यावश्यकत्वात्। एतेनाकोऽसवर्ण इत्ये

ऋत्यकः। ६।१।१२८। ऋति परेऽकः प्राग्वत्। ब्रह्म ऋषिः। ब्रह्मर्षिः। पदान्ता इत्येव आर्च्छत्। समासेऽप्ययं प्रकृतिभावः। सप्त ऋषीणां सप्तर्षीणां॥ वाक्यस्य टेः प्लुत उदात्तः। ८।२।८२। इत्यधिकृत्य। प्रत्यभिवादेऽशूद्रे। ८।२।८३। अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् स चोदात्तः। अभिवादये देवदत्तोऽहं। भो आयुष्मान् एधि देवदत्त ३। स्त्रियां न। अभिवादये गार्ग्यहं। भो आयुष्मती भव गार्गि। नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते। नेह आयुष्मान् एधि। भो राजन्यविशां वेति वाच्यं॥ आयुष्मान् एधि भो। आयुष्मानेधीन्द्रवर्मन्। आयुष्मानेधीन्द्रपालिता ३। दूराद्धूते च। ८।२।८४। दूरात्सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात्। सक्तून् पिब देवदत्त ३। हैहे प्रयोगे हैहयोः। ८।२।८५। एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात्। है ३ राम। राम है ३॥ ९

कथमेव सूत्रमस्त्विति शंकाया निरवकाश एव। उक्तदोषानतिवृत्तेः। सप्त ऋषीणामित्यत्र न समास इति निषेधापत्तेश्च। न समास इति निषेधवार्तिकं हि इकोऽसवर्ण इति सूत्रेणैव न तु ऋत्यक इत्यत्रेति सिद्धान्तः। अत एवाह समासेऽप्ययमिति। एवं च ऋलृवर्णयोरिति पूर्वोक्तो निर्देशः संगच्छते। प्रत्यभिवादे। इह प्रत्यभिवादशब्देन आशीर्वचनमुच्यते। अशूद्रे किं अभिवादये तुषजकोऽहं। भो आयुष्मानेधि तुषजक। आयुष्मानेधीति। अस्तेः सेर्हि। घ्वसोरिति एत्वं। हुझल्भ्यो हेर्धिः। श्नसोरल्लोपः। नाम गोत्रं वेति। गोत्रस्योदाहरणं। अभिवादये गार्ग्योऽहं। भो आयुष्मानेधि गार्ग्या ३ इत्यूह्यं। दूराद्धूते च। आहूतमाह्वानं। तच्च संबोधनमात्रोपलक्षणमित्याह दूरात्संबोधन इति। उपलक्षणतया व्याख्यानस्य फलमुदाहरति

रोरनृतः। अनंत्यस्यापीति। अत्र वदंति। यद्यप्यंत्यस्य गुरोः प्लुतार्थोपि शब्द इति व्याख्यायते तर्हि गुरुस्थानिकप्लुतानामेव पर्यायता स्यात्तथा च दूराद्धूत इति लक्षणांतरेणालघोष्टेः स्थाने विहितेन प्लुतेन सह युगपत् प्रयोगः प्रसज्येत। तस्मादपि शब्दो गुरोरगुरोश्चटेः प्लुतार्थ इत्येव व्याख्यातव्यः। टेरिति प्रश्लेषात्तलादिति। देवदत्तेति वाक्यत्वसंपत्तये अस्यादिरेही ति शब्दो बोध्यः। एवमग्रेपि। सर्वः प्लुतो विकल्प्यत इति। एतेन द्वैपायनो विरहकातर आजुहाव पुत्रेति भागवतं व्याख्यातं। प्लुतस्य वैकल्पिकत्वात्। आर्षप्रयोग इति श्रीधराचार्योक्तिः प्लुतानादृत्त्यैव। विस्तरस्त्वत्र मनोरमायामनुसंधेयः। यणादिकं करोतीति। अत्र नव्याः। पचैवमग्नी इति विष्णू इतीत्यत्र प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादनेन यणादिकार्यं स्यात्ततश्च वत्करणप्रयोजनं यणादिकमेव स्यात्तस्मात् प्लुतकार्यं प्रकृतिभावं न करोतीत्यर्थः।

गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचां ८।२।८६। दूराद्धूते पदादीनामन्त्यस्य ऋदिन्नस्याऽनन्त्यस्यापि गुरोर्वा प्लुतः स्यात्। दे३वदत्त। देवदा३त्त। देवदत्त३। गुरोः किं। वकारात्परस्याकारस्य माभूत्। अनृतः किं। कृष्णा३। एकैकग्रहणम्पर्यायार्थं। इह प्राचामिति योगो विभज्यते। तेन सर्वः प्लुतो विकल्प्यते। अप्लुतवदुपस्थिते ६।१।१२९। उपस्थितोऽनार्ष इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवद्भवति। अप्लुतकार्यं यणादिकं करोति। सुश्लोका३ इति। सुश्लोकेति। वत्किं। अप्लुत इत्युक्ते प्लुत एव निषिध्येत। तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्। अग्नी३ इति। ई३ चाक्रवर्मणस्य ६।१।१३०। ई३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात्। चिनुहीति चिनुहि ३ इति। चिनुही३ इदं चिनुही३दं। उभयत्र विभाषे-

। इति प्राचां व्याख्यैव ज्यायसी। एवं च कोयणाचीत्यत्र इकग्रहणस्यैवैयर्थ्यशंकापि नास्ति। तथा हि तत्रेकग्रहणाभावेपि ह्रस्वसपि तिस्रति जुकादिर्धादित्यतो ह्रस्वदीर्घपदानुवृत्त्या तयोर्यण्विधानान्न व्यंजनस्य भविष्यति। प्लुतस्य तु प्रकृतिभावेनैव भवितव्यमेचोत्वयोदयोपवादः हरय इत्यादौ। उपेंद्रः कृष्णौकत्वमित्यादौ त्वाद्गुणः वृद्धिरेचीति बाधके भविष्यतः। यथा सत्यपि इकग्रहणे श्रीश इत्यादौ सवर्णदीर्घत्वं बाधकमतो नार्थ इकोग्रहणेन। तथापि सह्द्विकरमो रू इति। स्तत नू इति चिनुही अन्नेत्यादावप्लुतवदुपस्थिते ई३ चाक्रवर्मणस्येति प्रकृतिभावनिषेधेपि आभ्यां यणादिकार्याऽविधानात् प्लुतस्यास्य यण् न स्यात् ह्रस्वदीर्घपदानन्तर्वर्त्तिनो व्यंजनस्य स्यात्। तस्मादिकग्रह॥

णांव्यर्थमिति न शक्यते शंकितुमित्याहुः। अन्ये तु विकल्पग्रहणस्य प्रयोजनान्तरमप्याहुः। इको यणो वक्ष्यचि यथा स्यात् परं न्यक् प्राप्नोति तन्माभूत् किंच अन्यत्र प्राप्नोति। ऋकोऽसवर्णे इति शाकलं। एवंच यदुक्तं न समासे सिति चेति तदनेन संगृहीतं भवतीति। चिनुहीति। चिन्विति लोडन्तं। हीत्यव्ययं। अनन्त्यस्यापि प्रश्नाख्यानयोरित्यनेन प्लुतः। उभयत्र विभाषेयमिति। इति शब्दे परतः पूर्वेणाप्राप्ते अन्यत्र प्राप्ते चारंभादिति भावः॥ ः॥ ईदूदेद्वित्यमिति। अत्र विशेषणेन तदन्तविध्याश्रयणं किं पचेते इमाविति यथा स्यात्। हरी विष्णू इत्यादिषु एकादेशस्य पूर्वान्तवद्भावाश्रयेण इकारादीनां द्विवचनत्वादीदूदेद्रूपं द्विवचनमित्युक्तेऽपि प्रगृह्यत्वं सिध्यतीति बोध्यम्। द्विवचनमिति। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति सुप्तिङन्तमित्यत्र ग्रहणात् ज्ञापकात्तेन कुमार्योर्वध्वोश्च आगारं कुमार्यगारं वध्वगारमिति सिद्धं द्विवचनान्तं प्रगृह्यं स्यादिति व्याकुर्वतः प्राचस्तु नेदं सिद्ध्येत्। हरी एतौ विति। इति ह्रस्वसमुच्चितप्रकृतिभावेन। प्लुतप्रगृह्या इत्यत्र नित्यग्रहणादित्युक्तेः। अत्र वृत्तिकारेण मणीवादीनां प्रतिषे

ईदूदेद्द्विवचनं प्रगृह्यं १।१।११ ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू। पचेते इमौ। मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः। अदसो मात् १।१।१२ अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात्किम्। अमुकेऽत्र। असति मात्ग्रहणे एकारोऽप्यनुवर्तेत। शे १।१।१३ अयं प्रगृह्यः स्यात्। अस्मे इन्द्राबृहस्पती। निपात एकाजनाङ् १।१।१४ एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात्। इ उ विस्मये। इ इन्द्रः। उ उमेशः। अनाङिति किम्। ङिदाकारः प्रगृह्य एव। आ एवं नु मन्यसे। आ एवं किल तत्। ङित्तु न प्रगृह्यः। ईषदुष्णं ओष्णं। वाक्यस्मरणयोरङित्। अन्यत्र ङिदिति विवेकः॥ ११ धोवत्तत्त्व इति पठित्वा मणीवौदसी वजयन्ती वेत्युदाहृतं। तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटादयः।

। एवं स्थिते मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ ममेति भारतप्रयोगसमर्थनपरे इवार्थे इति। वशब्द इत्यादि। वप्रचेतसि जानीयादिवार्थे च तद्व्ययमिति मेदिनी। वा यथा तथैवैवं साम्ये इत्यमरः। कादंवखंडितदलानि व पंकजानीत्यादिप्रयोगदर्शनाच्चेति भावः। अदसो मात्। इह एकारो नानुवर्तते असंभवादित्यभिप्रेत्याह। ईदूताविति। अदसः किं। शम्यत्र वाम्यत्र। ननु कारानुवृत्तिर्व्यर्था स्त्रियोः फलं वा अमू आसाते इत्यत्र ईकारोऽवसिद्धेः सत्त्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह रामकृष्णाविति। पुंसि ईकारानसिध्यत्यौकारान्तत्वादिति भावः। अदसो मादिति सूत्रं प्रति मुत्वमीत्वं च नासिद्धं आरंभसामर्थ्यात्॥ ॥

सु॰
सि॰ कौ॰
टी॰ त॰
२९

अमुकेत्रेति। स्त्रीलिंगद्विवचनस्य तु पूर्वसूत्रेण प्रगृह्यत्वे प्रकृतिभाव एव अमुके अत्र। एकारोप्यनुवर्तते इति। तथा च एकारानुवृत्तितात्पर्यग्राहकफलकं माङ्ग्रहण
मिति भावः। शे। छांदसमपीदं संदर्भशुद्ध्यर्थमुक्तमित्याहुः। अस्मे इति। अस्मभ्यमित्यर्थः। सुपां सुलुगिति भ्यसः शे आदेशः। शेषे लोपः। निपात एकाजनाङ्। निपातः किं। अतर्तेङः। अ
। हे अ आगच्छ। हे आगच्छ अत्र प्रगृह्यसंज्ञा माभूत्। एकग्रहणाभावे येन विधिरिति सूत्रात्तदंतलाभे प्रेदमित्यत्र स्यादत आह मे केति। एकाजिति तु न बहुव्रीहिः रुक्माति
प्रसंगस्तादवस्थ्यात्। पूर्वकाले केति कर्मधारय एव। ननु निपातोजनाङिति उक्ते हलंतस्य सत्यपि प्रगृह्यत्वे प्रयोजनाभावादजंतप्राप्तेरज्ग्रहणसामर्थ्यादजूप
-स्यैव निपातस्य प्रगृह्यत्वसिद्धेः किमेकग्रहणेन। न च पुरोस्तीत्यादौ हलंतस्य संज्ञायां सत्यां प्रकृतिभावात्तो रि रिति रोरुत्वं न स्यादतोज्ग्रहणसामर्थ्यमुपक्षीण
मित्येकग्रहणमावश्यकमिति वाच्यं। प्रगृह्यसंज्ञां प्रति रुत्वस्यासिद्धतया रेफांतस्यैतस्य प्रगृह्यसंज्ञाभावेन दोषाप्रसक्तेः। ननु सांतस्य सतः प्रगृह्यसंज्ञा एकदेश
विकृतन्यायेन रेफांतस्यापि स्यादेवेति प्रकृतिभावादुत्वाभावप्रसंगस्तदवस्थ इति वाच्यं। प्रगृह्यतां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्यासिद्धत्वात् प्रकृतिभावाप्रवृत्तेः
सकारांतस्य तु न किंचिदपि सिद्धकांडस्थं प्रयोजनं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्येत। न चाज्ग्रहणसामर्थ्यादजंतस्यैव प्रपरा अपेत्यादिनिपातस्य प्रगृह्यसंज्ञा स्या
न्नत्वजूपनिपातस्येति विपरीतशंकानिवारणार्थमेकग्रहणमिति वाच्यं। अनाङ्ग्रहणस्यैवैयर्थ्यापत्तेर्व्याहरति मृगइत्यादिनिर्देशविरोधाच्चोक्तशंकाया अप्रवृ
त्तेः॥ किंच निपातोऽनाङित्युक्तेप्यनाङिति प्रतिषेधसामर्थ्यान्निपातस्य विशेषणत्वाभ्युपगमे तदंतविध्यप्रवृत्त्या निपातरूपो योच् स प्रगृह्य इत्यर्थलाभादजूपस्यैव
निपातस्य प्रगृह्यत्वं सिद्धमिति नास्यैव प्रयोजनमेकग्रहणस्य। नन्वेवमपि समुदायनिवृत्त्यर्थमेकग्रहणमावश्यकमेवान्यथा अ इ उ अपेहीत्यत्रैकाच् द्विर्वचन
येन समुदायस्यैव संज्ञा स्यान्नावयवानामिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति चेन्न। अजित्येकत्वस्य विवक्षयैव समुदायनिराससंभवात्समुदायसंज्ञया अ
वयवानामननुग्रहेणैकाज्द्विर्वचनन्यायस्याप्यप्रवृत्तेरेकस्मिन्निपातसंज्ञाविधानसंभवेन न निपातसमुदायस्य निपातग्रहणेनाग्रहणाच्च। अत्राहुर्भाष्यकाराः। अत्र समु
दायग्रहणशंकानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसंख्या न विवक्ष्यते किंतु जातिरेव निर्दिश्यत इति तेन हलंतान्चेति सनः कित्वं तदं भइत्येभि
प्सतीत्यादि सिद्धो। हल्ग्रहणस्य व्यक्तिपरत्वे तु योयं इकः समीपो हल् न कारेण ततः परः सन् यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्वं न स्यात् तत्रश्च नस्यो॥

राम॰
२९

पानस्यात्वस्तुतस्तुअप्रगृह्यसंज्ञायामेकग्रहणमुक्तार्थज्ञापकमित्याश्रित्यप्रकृतसूत्रेसंकाज्ग्रहणंत्यक्तुंशक्यमतएवमनोरमायामनाङि·तिपर्युदासादेवाङ्रूपनिपातेलब्धे
निपातग्रहणमुत्तरार्थंस्पष्टप्रतिपत्त्यर्थमिहैवकृतमितिनिपातग्रहणस्यैवप्रयोजनमुक्तंनत्वेकाज्ग्रहणस्य।अत्रनव्याः।यदुक्तंमनोरमायामनाङि·तिपर्युदासादित्यादि
तच्चिंत्यं।ओत्सूत्रेभाष्यकारैःप्रसज्यप्रतिषेधस्यैवांगीकृतत्वात्।नचलक्ष्यभेदाभावात्सौढिवादमात्रंभाष्यमितिवाच्यं।अस्मादेवभाष्यवचनाल्लक्ष्यभेदोप्यस्तीतिसुवच
त्वात् तथाहि।अततेर्डः।अअकारोवासुदेवःस्यादितिवचनाद्वृद्धिशब्दोवा।अनेननञशब्देनसहाङ्·मर्यादाभिविध्योरितिआङोऽव्ययीभावेसवर्णदीर्घेअव्ययीभाव
त्वेतिनपुंसकत्वाद्ध्रस्वत्वेसोरम्यमिपूर्वेचकृतेअमितिरूपंभाष्यकृत्संमतं।तथाइणोनिष्ठायामितःक्तेवत्सुनिष्ठायांसंप्रसारणेउतःअंइतःएतःअंउतः।ओतःइत्यास
सुद्धक्षितिवत्समासेरूपंचतत्संमतं।तत्रपर्युदासपक्षेअमिपूर्वोगुणश्चनसिध्यति।अशब्दस्याङ्·भिन्नत्वात्स्थानिवद्भावेननिपातत्वाच्चप्रगृह्यत्वात्।प्रसज्यप्रतिषे
धाश्रयेतुसिध्यतितस्याङ्·त्वेनप्रगृह्यत्वनिषेधात्।नचैतादृशप्रयोगोऽप्रामाणिकइतिवक्तुंयुक्तं।प्रकृतभाष्यस्यैवप्रमाणत्वात्।अन्यथाहिभाष्यकारैरमितमात्रा

ओत्।१।१।१५ओदन्तोनिपातःप्रगृह्यःस्यात्।अहोईशाः।सम्बुद्धौशाकल्यस्येतावनार्षे।१।१।१६।सम्बुद्धिनिमित्तकओकारोवाप्रगृह्योऽवै
दिकेइतौपरे।विष्णोइति।विष्णइति।विष्णविति।अनार्षइतिकिं।ब्रह्मबन्धवित्यब्रवीत् ॥ ११ वर्जंवनेनतत्त्रप्राचांग्रंथानामधिक्षेपायभवतांप्र

वृत्तयोव्याहन्येरन्नित्याद्याहुः॥आङ्वर्जइति।प्रतिषेधपक्षेतुप्रगृह्यःस्यादित्यतदुत्तरमिदंद्रष्टव्यं।वर्ज्यतइतिवर्जः।वृजेर्ण्यन्तात्कर्मणिघञ्वर्जनीयइत्यर्थः।
आङोनभवतीतियावत्।आएवमिति।पूर्वप्रक्रान्तवाक्यार्थस्यअन्यथात्वद्योतकोयमाकारः।पूर्वमित्थंनामंस्थाःइदानींत्वेवंमन्यसइत्यर्थः।आएवंकिलेतिस्मरणा
द्योतकोयमाकारः।वाक्यस्मरणयोरित्यादिअत्रायमाशयःईषदर्थेक्रियायोगइतिभाष्यस्याङि·त्त्वस्मरणएवतात्पर्यंलाघवात्।अन्यस्यङि·त्त्वंत्वर्थसिद्धं।ईषदर्थइत्या
दिस्त्वेकदेशानुवादः।एवंचअभ्रआअपइत्यत्रसप्तम्यर्थवृत्तेरप्याकारस्यङि·त्त्वादाङोऽनुनासिकश्छन्दसीतिप्रवर्ततइति॥ः ॥ओत्।निपातइतिकिं।देवोसिवायवा
याहि।संबुद्धौ।ऋषिर्वेदस्तदुक्तमृषिरोत्यादौतथादर्शनादित्यभिप्रेत्याह।अवैदिकइति।संबुद्धौकिं।अहोइति।अत्रपरत्वाद्विकल्पोमाभूत्।नचओदितिसूत्रस्य ॥
निरवकाशत्वंशंक्यं।अहोईशाइत्यादेतस्यसावकाशत्वात्।इतावितिकिं।पटोत्र।अनार्षेकिं।ब्रह्मबंधवित्यब्रवीत्॥ ॥ ॥

उञः। निपात एकाजिति नित्यं प्राप्ते विभाषेयं। शाकल्यस्येतौ प्रगृह्यमिति चात्रानुवर्तते तदाह इतौ वा प्राग्युक्तमिति। इह उञ ऊँ इत्येकमेव सूत्रं योगविभागेन व्याख्यातमेकसूत्रत्वे तु उञ इतौ ऊँ शाकल्यस्येत्यर्थात् ऊँ इतीत्येव रूपं शाकल्यमते सिध्यति। अन्येषां तु मते नित्यं प्रगृह्य इति उ इतीत्येव रूपं सिध्यति विती ति रूपं तु न सिध्यत्येवेति ज्ञेयं ऊँ॥ अनुनासिक इति। तेनास्मिन् परे यरोऽनुनासिक इति विकल्पः। यद्वा तन्नूँ इति पठसि यद्वा तद्दूँ इति वा तत्र दीर्घमित्यादि। एतदर्थमेवात्रानुनासिकग्रहणं। अन्यथा यरोऽनमि अनुनासिको वेत्येवावस्यत्। यरोऽनमि अम्वा वावस्यदित्युक्तौ तु यथासंख्यप्रवृत्त्या अम्भयं तन्नेत्यादि सिद्धावपि विन्नपयं एतन्मुरारिरिति न सिध्येत्। छन्नमेजतः। ङमुण्नित्यमित्यादिनिर्देशाश्च यरोऽनुप्रतिपत्तिगौरवं। वस्तुतस्तु यरोऽनुनासिकेऽम्वेत्येव सूत्रयितुं युक्तमित्याहुः प्रगृह्यमित्यनुवर्तनादाह प्रगृह्यश्चेति। ननु दीर्घोच्चारणसामर्थ्यादेव प्रकृतिभावसिद्धौ किमनेन प्रगृह्यत्वेनेति चेदत्राहुः प्रगृह्याप्रगृह्ययोर्द्वयोरस्थानादेशापत्तौ प्रगृह्यादेशे प्रकृतिभावादिष्टसिद्धा

उञः। १।१।१७। उञ इतौ वा प्राग्युक्तं॥ उ इति विति॥ ऊँ। १।१।१८। उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात्। ऊँ इति। मय उञो वो वा ८।३।३३। मयः परस्य उञो वो वा स्यादचि॥ किमु उक्तं। किम्वुक्तम्। वस्यासिद्धत्वान्नानुस्वारः॥ ईदूतौ च सप्तम्यर्थे। १।१।१९। सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात्। सोमो गौरी अधिश्रितः। मामकी तनू इति। सुपां सुलुगिति सप्तम्या लुक्। अर्थग्रहणं किं। वृत्तावर्थान्तरोपसंक्रान्ते मा भूत्। वाप्यामश्वो वाप्यश्वः॥

वपि अप्रगृह्यादेशस्यानुनासिको वकारः स्यात्तन्निवारणाय प्रगृह्यत्वाश्रयणमिति। आदेशस्यास्थानित्वेनोञ्त्वादुञ इति प्रगृह्यत्वविकल्पे प्राप्ते नित्यार्थं तदाश्रयणमित्यन्ये। यदि तु प्रगृह्यमित्यस्य स्थानिविशेषणत्वे स्त्रीत्वप्रगृह्यस्योञः ऊँ इत्ययमादेश इति व्याख्यायेत तदा दीर्घानुनासिकोक्तिवत्प्रगृह्यश्चेत्युक्तिरपि स्वरूपकथनमेवेति बोध्यं। ऊँ इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्ततश्च विति ऊँ इत्येते द्वे रूपे स्यातां। तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे त्रीणि रूपाणि सिध्यन्तीति केयटस्तदाह। अयमादेशो वा स्यादिति। वस्यासिद्धत्वादिति। अत एवेदं वर्तत्रिपाद्यां विधीयते प्रकृतिभावमात्रेवाधनार्थत्वे हि इकोयणोत्यनन्तरं मय उञो वेत्येवावस्यत् परां चान्ववर्तयिष्यत्॥ ईदूतौ च॥ ईदूतावित्येतदिति किं॥ प्रियः सूर्यः प्रियो अग्ना भवाति। अग्निशब्दात् परस्याः सप्तम्याः सुपां सुलुगित्यादिडादेशः पदकारैः प्रगृह्यत्वेपुत इति शब्दप्रयोगस्य नियमितत्वेन रक्षापि पदकाले इति शब्दप्रयोगप्रसंगः सत्वानिष्ट इति बोध्यं सप्तमीग्रहणं किं। धीती। मती। सु

ग्रामेत्तृतीयैकवचनस्य पूर्वसवर्णे ईकारः । ततोऽकः सवर्णे दीर्घ इत्येकादेशः । न त्विह सुपां सुलुगिति लुक् । ह्रस्वश्रवणापत्तेः । सोमो गौरी इति । वातप्रमीः अत्र पी आसक्ता इत्या
द्युदाहरणे सत्यप्युकारान्तस्य लौकिकोदाहरणाभावात् । उभयोरपि वेदस्थोदाहरणमुक्तौ मामकी तनू इति । यद्यप्यत्र संहितायां प्रगृह्यप्रयोजनं नास्ति तथापि माम
की इति तनू इतीति पदकाले तस्यैव । सीधोतनू कृत्वेनाधमानामित्यत्र संहिताकालेऽप्यस्ति तथापि त्यकइति पाक्षिकप्रकृतिभावेनाप्येतत्सिद्धं इदं त्वक्षरसरूपात
रस्यापादयितुमशक्यत्वादिति बोध्यम् । सप्तम्या लुगिति । यदि धीत्यादावेव विभक्तेः पूर्वसवर्णे कृते सवर्णदीर्घ एकादेश इति व्याख्यायेत तदा एकादेशं बाधित्वा पू
रत्वादागतत्वाच्च आसनदा इत्यादौ रामश्चस्यादिति भावः । अर्थग्रहणं किमिति । वाप्यश्व इत्यादावपि सप्तम्यर्थोऽस्त्येवेति नार्थग्रहणेनेति प्रश्नः । अर्थात रोपसंक्रां
त इति । वाप्यश्व इत्यत्र योऽवापीशब्दः स तु वाप्यधिकरणकद्रव्ये उपसंक्रान्तः । सोमो गौरी इत्यत्र गौरीशब्दस्तु सप्तम्यर्थमात्रे पर्यवसन्नः न तु तदधिकरणकद्रव्येऽपि

अणोऽप्रगृह्यस्यानुनासिकः । ८।४।५७ । अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात् । दधिँ । दधि । अप्रगृह्यस्य किम् । अग्नी ॥ इत्यच्सन्धिः ॥ स्तोः
श्चुना श्चुः । ८।४।४० । सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥ शात् । ८।
४।४४ । शात्परस्य तवर्गस्य चुत्वं न स्यात् । विश्नः । प्रश्नः ॥

त्यभावादिति भेदः ॥ अणोऽप्रगृह्यस्य । अण इति किम् । कर्तृ हर्तृ । अच्सन्धिरिति । कुत्वं श्चुत्वं
चात्र न कृतं स्पष्टप्रतिपत्त्यर्थम् । अत एवानुस्वारस्याप्यच्त्वादित्यादिनिर्देशोऽप्युपपन्नः । इत्यच्सन्धिः । स्तोः श्चुना श्चुः । स्तोरिति समाहारद्वन्द्वः सौत्रं पुंस्त्वम् । एवं श्चुः श्चुरित्य
पि बोध्यम् । श्चुनेति । सहयुक्तेऽप्रधान इति सूत्रे विनापि तद्योगं तृतीयेति वक्ष्यमाणत्वात्तृतीया । योगे इति । एतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासंख्यम् । निमित्तकार्यि
णोर्न शादिति ज्ञापकात् । यथासंख्यसूत्रमिह नोपन्यस्तं स्थानेऽन्तरतम इत्यनेनापि इष्टसिद्धेर्नात्यन्तावश्यकत्वात् । हरिश्शेत इति । वा शरीति पाक्षिकत्वाद्विस
र्जनीयस्य सत्त्वस्य शेन योगे शः । चवर्गयोगे रामश्चिनोति । तवर्गस्य तु चवर्गयोगे सच्चिदित्यादि । शेन योगे तु न चु शिव इत्याद्युदाहरिष्यति ॥ शात् । नेति तोरिति चानुव
र्तते तदाह तवर्गस्येत्यादि । जश्त्वमित्यादिव्याख्यानं निर्देशे निःसंदिग्धत्वेन बोधनाय यथा प्रश्न इति मत्वं जश्त्वं च न कृतं तथा श्चुत्वमपि न कृतमिति परिहारसं
भवाद्व्यर्थमेवोदाहरति । विश्नः प्रश्न इति । विच्छ गतौ प्रच्छ ज्ञीप्सायाम् यजयाचेत्यादिना नङ् । च्छ्वोः शूडिति छस्य शत्वम् । नङो ङित्वाद्गुणाभावः । प्रच्छेस्तु स ॥

श्नुवासन्नेतिनिर्देशात्संप्रसारणाभावः।ननुञमङणनानांनासिकास्थानाधिक्याद्वर्गीयाद्यैश्चतुर्भिःसहतुल्यस्थानत्वाभावेनसावर्ण्याभावात्।लोऽस्त्वितितु
शब्देननकारोनगृह्यतेकिंतुस्ववर्गीयाद्याश्चत्वारएवेतिविभ्रमःप्रश्नरूपत्वनश्चुत्वप्रसक्तेःकिमनेननिषेधेनेतिचेदत्राहुःशादितिनिषेधाल्लिङ्गादेवतुल्यास्यप्रयत्नमित्य
त्रास्यग्रहणेननासिकास्थानभिन्नंताल्वादिस्थानंगृह्यते।तत्स्थानतत्तुल्यमेवेतितुशब्देनपंचमस्यापिग्रहणात्श्चुत्वप्रसक्तौनिषेधोयमावश्यकः।एवंचतो
र्लीतितुशब्देननकारस्यापिग्रहणंविद्वांल्लिखतीत्यादिसिध्यतिनचनिमित्तकार्यिणोर्यथासंख्यनिरासज्ञापकमित्युक्तत्वात्तेनैवचार्थवत्वेकथमुक्तार्थज्ञा
पकंभवेदितिवाच्यंतुशब्देननकारग्रहणेसिद्धेहियथासंख्यनिवृत्तिरनेनज्ञापनीयेत्युभयज्ञापनेबाधकाभावात्।नापितुल्यास्यमित्यत्रयत्किंचित्स्थानतु
ल्यत्वविवक्षायांवर्गेषुपंचापिवर्णाःपरस्परंसवर्णाभवेयुरित्युक्तोदाहरणेश्चुत्वप्रसक्तौशादित्यारंभआवश्यकइत्येतज्ज्ञापकाश्रयणंकिमर्थमितिवाच्यं
।तथाहिसतिञमङणनानांपरस्परसावर्ण्यापत्त्यात्वंनयसीत्यादौअनुस्वारस्ययपिपरसवर्णःवापदान्तस्येत्यनुस्वारस्यञादयोपिस्युः।ताल्वादिस्थानसाम्याभावे
पिनासिकारूपस्ययत्किंचित्स्थानस्यतुल्यत्वात्।नापितुल्यास्यत्वमन्यूनास्यत्वमितिव्याख्यायांञादीनांपरस्परसावर्ण्यंनभवेत्तेषांनासिकास्थानसाम्येपिताल्वा
दिस्थानसाम्याभावेनन्यूनस्थानकत्वात्ततश्चत्वंनयसीत्यादिषुनातिप्रसंगःस्ववर्गीयैःसहतुञादीनांसावर्ण्यंस्यादेवनासिकास्थानाधिक्येपितदन्यूनस्थान
कत्वात्तेषामितिविद्वान्लिखतीत्यादिरूपंसिध्यतिवर्गीयाणांतुनासिकास्थानाभावेनन्यूनस्थानकत्वात्पंचमेनसावर्ण्याभावेपिनक्षतिरितिज्ञापकाश्रयणेनि
नैवशषसहिरितिवाच्यंहैगौरिएहीत्यादौसवर्णदीर्घापत्तेरिकोसवर्णइतिशाकलप्रकृतिभावानापत्तेश्चाइकारान्यूनस्थानकत्वेनतत्सवर्णकत्वादेकारस्यास्वरणा
मूर्धन्याचैवविवृतंकरणंस्मृतं।तेभ्योपिविवृतावेङौताभ्यामैचौततोपिचेतिवचनात्प्रयत्नभेदेनसावर्ण्याभावमभ्युपगम्योक्तानिराकरणोपितद्रुतद्रुमित्य
न्नेतोलीतिपरसवर्णविधिनारेफकारस्यचकारापत्तेःवकारस्यओष्ठस्थानाधिक्येपिदंतस्थानसाम्येनलकारान्यूनस्थानकत्वात्।यदितुवकारस्यदंतोष्ठमितिसमाहार
निर्देशात्।ओष्ठस्थानदंतस्थानभिन्नमेवदंतोष्ठस्थानमितिवकारस्यलकारसावर्ण्याभावात्तद्व्लित्यादौनातिप्रसंगइतिब्रूयात्तर्हिलुग्वाद्रुहेत्यादिनादंत्येतङिविधी
यमानोपक्लृप्तस्यलुकअद्रहहीत्यत्रनस्यात्।किंतुअद्रुग्धेत्यादावेवस्यात्।तथापिद्रूतःपिपरतीत्यादौविधीयमानमुदोष्ठ्यपूर्वस्येत्युत्वंस्तूर्षतीत्यादौनस्याद्रुणादि

वकारस्योष्ठ्यत्वाभावात्। न च वस्योष्ठ्यत्वे दन्त्यत्वे च सति सेकृसृपितिषोपदेशलक्षणे स्विदादीनां पृथग्ग्रहणं व्यर्थं स्यात् तेषामपि दन्त्योष्ठ्यत्वादिति भ्रमितव्यं। दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोपीत्यादेर्मूल एव वक्ष्यमाणत्वात्। यत्तु पाणिनिशिक्षायां यमानुस्वारयोरेव नासिकास्थानत्वकथनादन्येषां स्थानेनासिका न भवति किं त्वनुनासिकत्वं गुण एव नासिकाव्यापारेणोच्चार्यमाणत्वमात्रेण नासिकास्थानत्वकथने त्वकारादीनामप्युक्तरीत्या नासिकास्थानमिति स्थाननिरूपणे तेषां तदकथनान्न्यूनतेत्यादि वदन्ति। तेषामत्रोक्तज्ञापकाश्रयणं विनैवेष्टसिद्धिः अन्ये त्वकारादीनां नासिकया सर्वदानुच्चारणादनुनासिकत्वं गुणः सत्वे निविशतेऽयेतीत्यादिलक्षणालक्षितत्वात्। ञमङणनानां त्वनुनासिकत्वं नापैति सर्वदैव तथोच्चारणादिति। नगणाः किन्तु यमानुस्वारयोरिव स्थानमेव नासिकेति स्थाननिरूपणे

ष्टुना ष्टुः। ८।४।४१। स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे। न पदान्ताट्टोरनाम्। ८।४।४२। अनामिति लुप्तषष्ठीकम्पदं। पदान्ताट्टवर्गात्परस्याऽनामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। पदान्तात्किं। ईट्टे। टोः किं। सर्पिष्टमं। अनाम्नवतिनगरीणामिति वाच्यं॥ षण्णां। षण्णवतिः। षण्णगर्यः। तोः षि। ८।४।४३। तवर्गस्य षकारे परे न ष्टुत्वं। सन्षष्ठः। झलाञ्जशोन्ते। ८।२।३९। वागीशः। चिद्रूपं। यरोऽनुनासिकेऽनुनासिको वा। ८।४।४५। यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः। एतद्मुरारिः। स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्त्तते। चतुर्मुखः। प्रत्यये भाषायां नित्यं। तन्मात्रं। चिन्मयं। कथन्तर्हि मदोदग्राः ककुद्मन्त इति यवादिगणे दकारनिपातनात्। तोर्लि। ८।४।६०। तवर्गस्य लकारे परे परसवर्णः स्यात्। तल्लयः। विद्वाल्लिखति। नकारस्याऽनुनासिको लकारः॥ ० ॥

ञमङणनानां नासिका चेत्युक्तं न त्वकारादीनां नासिका चेति। यत्तूक्तं तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां तद्धस्त्वित्यादौ तोर्लीति दकारस्य वकारप्रसंग इति तदापाततः। तोर्लीत्यत्र लकारद्वयनिर्देश इति स्वीकृत्य लकाररूपे लकारे परे परसवर्ण इति व्याख्यायामुक्तदोषाप्रसक्तेरित्याहुः॥ ः ॥ ष्टुना ष्टुः॥ इहायिकार्थिनिमित्तयोर्यथासंख्यं न तोः षीति ज्ञापकात्। सर्पिष्टममिति। ह्रस्वात्तादौ तद्धित इति षत्वं॥ यरो। पदान्तस्येति किं। वेद्मि। क्षुभ्नाति। स्पर्शे चरितार्थ इति। प्रसिद्धप्रयोगाभिप्रायेणेदमुक्तं। कमल् मुरारिः। व्व्वं नेता इत्यादौ लकारवकारयोरनुनासिकप्रवृत्तौ बाधकाभावात्। स्पर्शस्यैवेष्यते इति प्रा चाम्ग्रन्थानुरोधेन स्पर्शभिन्नेषु अनुना

सिकविधिर्नप्रवर्त्तते। अनभिधानादिति वा। योऽन्त्यरेफेन प्रवर्त्तत इति। यद्यपि व्यक्तिः पदार्थ इति पक्षे लक्ष्यभेदे लक्षणभेदात्। अस्यां व्यक्तौ लक्षणस्य चरितार्थत्वात् रेफेऽपि प्रवृत्तिर्दुर्वारैव तथापि लक्ष्यानुरोधेन जातिपक्षमाश्रित्येदमुक्तं दकारनिपातनादिति। ननु पवादिगणे ककुदित्येव पठ्यते न तु ककुद्यत इति मतुब्विशिष्टं। तथा च यरोऽनुनासिकोऽदुर्वारः। न च यरोऽनुनासिकप्रवृत्तौ झयन्तत्वाभावेन झय इति मतुपो मकारस्य वत्वाप्रसक्त्या पवादिगणे ककुदिति पाठो निरर्थकः स्यादिति वाच्यं। अनुनासिकविधेरसिद्धत्वेन झयन्तत्वानपायात् गणे तत्पाठस्य सार्थक्यादिति चेदत्राहुः। यद्यत्र ककुद्दकारस्य नकार इष्टः स्यात्तर्हि ग

उदस्स्थास्तम्भोः पूर्वस्य ८।४।६१ उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। आदेः परस्य। उत्थानं। उत्तम्भनं। अत्राऽघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य झरो झरीति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणं न तु खरि चेति चर्त्वं चर्त्वं प्रति थकारस्याऽसिद्धत्वात्। उत्थानं। उत्तम्भनं। झयो होऽन्यतरस्यां ८।४।६२ झयः परस्य हस्य पूर्वसवर्णो वा स्यात्। घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृश एव वर्गचतुर्थ एवादेशः। वाग्घरिः। वाग्हरिः॥ शश्छोऽटि ८।४।६३ झयः परस्य शस्य छो वा स्यादटि। दस्य चुत्वेन जकारे कृते खरि च ८।४।५५ इति जकारस्य चकारः। तच्छिवः। तच्शिवः। छत्वममीति वाच्यं॥ तच्छ्लोकेन। तच्श्लोकेन। अमि किं। वाक् श्च्योतति। मोऽनुस्वारः ८।३।२३ मान्तस्य परस्याऽनुस्वारः स्याद्धलि। अलोऽन्त्यस्य। हरिं वन्दे। पदस्येति किं। गम्यते। नश्चापदान्तस्य झलि ८।३।२४ नस्य मस्य चापदान्तस्य झल्यनुस्वारः। यशांसि। आक्रंस्यते। झलि किं। मन्यसे। अनुस्वारस्य ययि परसवर्णः ८।४।५८ स्पष्टम्। अङ्कितः। अञ्चितः। कुण्ठितः। शान्तः। गुम्फितः। कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे तस्यासिद्धत्वान्न णत्वं॥ ९९ णोऽककुन्नित्येव पठेन्न तु ककुति। मतुपः प्रकृतिभूतकाकुच्छब्दस्यनान्तत्वनिपातनेऽपि अन्यत्र दकारान्तप्रयोगस्य निर्बाधत्वात्तस्माद्यरोऽनुनासिकोऽत्र न प्रवर्त्तत इति। अन्ये त्वाहुः। यद्विभक्तसोमत्वर्थ इति संहितया पाठे तत्साविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यात्तत्साविति द्विर्वचननिर्देशस्तु दन्तयोः समाहारद्वन्द्वकृतत्वादन्तरेतरयोगद्वन्द्वेऽकृते समुपपद्यत इति॥ ॥ उदः स्था॥ अनुस्वारस्य ययीत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य संबध्यते। एकदेशे स्वरितत्वप्रतिज्ञानादित्यभिप्रेत्याह। पूर्वस

वर्णः स्यादिति॥ शश्छोटि। इह पदान्तादित्यनुवर्त्य पदान्तात् झय इति व्याख्येयं तेनेह न मध्वश्चोतत्यभितो विरप्शः। विपूर्वाद्रपेरौणादिकः शः। छत्वममीति। शश्छोटीति सू
त्रे शश्छोमीति पठनीयमित्यर्थः। तच्छ्लोकेनेति। तच्छ्लोकेनेत्याद्युदाहर्तव्यं। मोनु। हलि सर्वेषामित्यतो हलीत्यनुवर्तते पदस्येति च तदाह मान्तस्येत्यादि। हलि किं
। त्वमत्र। किमत्र। नश्चापदान्तस्य। अपदान्तस्य किं। राजन् पाहि। आक्रंस्यत इति। आङ्‌ उद्गमन इति तङ्‌। स्नुक्रमोरिति नेट्‌ अनुस्वारस्य। अत्र ययीति स्पष्टार्थं अविप
रे अनुस्वाराभावात्। शलि तु परसवर्णोनुस्वारान्तरतमो न संभवतीति कुंडं रथेनेत्यत्रेव दंशनमित्यादावपि परसवर्णविध्यप्रवृत्तेः। अत्र वदंति। ईषद्विवृतमूष्म
णां विवृतस्वराणामिति भाष्यमते ययीत्यस्यापार्थकत्वं। सूत्रकारमते तदावश्यकमेवान्यथा दंशनमित्यादावनुस्वारान्तरतमः परसवर्णोनुनासिक ईकारः
स्यात्। ईकारशकारयोस्तन्मते सावर्ण्यस्य सत्त्वात्। तथा कुंडं शेते इत्यादावनुस्वारस्य वा पदान्तस्येति स्यादिति। अंकित इति अंक पदे लक्षणे चेति चुरादिर्ण्यन्तान्क्तः

वा पदान्तस्य ८।४।५९। पदान्तस्याऽनुस्वारस्य ययि परे परसवर्णो वा स्यात्। त्वङ्करोषि त्वंकरोषि। संयन्ता संयंता। सम्वत्सरः संवत्सरः। यल्लोकम्
यंलोकम्। अत्राऽनुस्वारस्य पक्षेऽनुनासिका यवलाः। मो राजि समः क्वौ। ८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्‌। हे मपरे वा
८।३।२६। मपरे हकारे मस्य म एव स्याद्वा। ह्मलह्मल सञ्चलने। किम्ह्मलयति किंह्मलयति। यवलपरे यवला वेति वक्तव्यम्॥ यथासंख्यम
नुदेशः समानाम्। १।३।१०। समसम्बन्धी यो विधिर्यथासंख्यं स्यात्। कियँह्यः किंह्यः। कियँह्वलयति किंह्वलयति। किल्ँह्लादयति किंह्लादयति॥

निष्ठायां सेटीति णिलोपः परसवर्णो नङः। अकि लक्षण इत्यस्माद्धातोः नुमोनुस्वारे परसवर्णो नङः अञ्चित इति। अचेः पूजायामिति निष्ठायामिट्‌
। नाञ्चेरिति नलोपनिषेधः कुंठित इति। कुठि प्रतिघाते क्तः नुमोनुस्वारे परसवर्णो नणः। शान्त इति। शम उपशमे क्तः॥ ० ॥ वादान्तशान्तेति निपातनादिड्भावः। अनुनासिक
स्य क्वीति दीर्घः। मस्य अनुस्वारे परसवर्णो ननकारः। गुंफित इति। गुंफ ग्रंथे क्तः। मस्यानुस्वारे परसवर्णो नमः ॥ मो राजि समः क्वौ। राजीति किं। संपत्‌। सम इति किं। इदंराट्‌।
क्वाविति किं। संराजिता। संराजितव्यं। मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं तदाह। म एव स्यादिति। सम्राडिति। राजृ दीप्तौ। संपूर्वादस्मात्सत्सूद्विषेत्यादिना क्विप् व्रश्चादि
ना षत्वं। जश्त्वचर्त्वे। हे मपरे वा। मपर इति बहुव्रीहिः। यवलेति। यवलाः परा यस्मात्स यवलपरस्तस्मिन् हकारे परे मस्य यवला भवन्तीत्यर्थः। यथासंख्यमनुदेशः। अनुदिश्य
त इति अनुदेशः पश्चादुच्चार्यत इत्यर्थः। समानामिति संबंधे षष्ठी तदाह। समसंबंधी विधिरिति। समकर्मकं विधानमिति तु नोक्तं। तथा हि सति यत्रोद्देशेषु समेषु समानो

सि॰ कौ॰ टी॰ त॰ २५

विधाने पाणाद्दिषु विवादीनां प्रियस्थिरादिषु च प्रस्थादीनां तत्रैव यथाक्रमं प्रवृत्तिः स्यात्। इष्यते तु अनुवाद्ययोरपि यथासंख्यत्वं समूलाकृतञ्जीवेत्यहन्कन्ग्रहस्त्यन
यथा समानामिति। किं लक्षणेत्थंभूतेत्यत्र लक्षणादयश्चत्वारोर्थाः प्रत्यादयस्तु त्रयः तत्र सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा यथा स्यात्॥ ॥ नपरेऽयमपि वह्
त्रीहिरेवाहेरिति तु अनुवर्तते तदाह। नपरे हकारे इति। ञ्णोः॥ चयो द्वितीया इति। एतच्च नादिन्याक्रोश इति सूत्रे भाष्ये स्थितम्। अत एव मनोरमायां ङः सीति सूत्रे तु डित्यु
च्यमाने चयो द्वितीया इति पक्षे थकारापत्तिरुक्ता। यदि तु ञ्णोरिति सूत्रस्थं स्यात्तर्हि तु डित्येव सुवचं स्यात्। तुटोऽसिद्धत्वेन चयो द्वितीया इत्यस्याप्रवृत्तेः पौष्करसादेरि
ति। पुष्करे तीर्थविशेषे सीदतीति पुष्करसित् तस्यापत्यं पौष्करसादिराचार्यः बाह्वादित्वादिञ् अनुशतिकादित्वादुभयपदवृद्धिः। ङः सि धुट्। उभयनिर्देशे पञ्चमी

नपरे नः। ८।३।२७ नपरे हकारे मस्य नस्स्याद्वा। किन्ह्नुते। किं ह्नुते। ङ्णोः कुक्टुक् शरि ८।३।२८ ङकारणकारयोः कुक्टुकावागमौ वा स्तः श
रि कुक्टुकोरसिद्धत्वाज्जश्त्वं न। चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्॥ प्राङ्क्षष्ठः प्राङ्ख्षष्ठः प्राङ्षष्ठः। सुगण्ट्षष्ठः। सुगण्ठ्षष्ठः। सुगण्
षष्ठः सुगण्षष्ठः। ङः सि धुट्। ८।३।२९। डात्परस्य सस्य धुड्वा स्यात्। षट्सन्तः। षड्त्सन्तः। नश्च। ८।३।३०। नकारान्तात्सस्य धुड्वा स्यात्। सन्त्सः। सन्सः। शि
तुक्। ८।३।३१ नस्य पदान्तस्य शे परे तुग्वा स्यात्। शश्छोऽटीति छत्वविकल्पः। पक्षे झरो झरीति चलोपः। सञ्छम्भुः। सञ्च्छम्भुः। सञ्च् शम्भुः
सञ्शम्भुः। ञ्छौ ञ्च्छौ ञ्च्शौ ञ्शाविति चतुष्टयं रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्॥ ९ निर्देशो बलीयान्परत्वादित्यभिप्रे

त्याह। सस्येति। सीति सप्तमीनिर्देशस्तु लाघवार्थः। षट्सन्त इति। धुटश्चर्त्वेन तकारः। चयो द्वितीया इति तस्य थो न चर्त्वस्यासिद्धत्वात्। अत एव धुड्भावे षट्सन्त इत्यत्र टस्य
ठो न भवति। न चैवमपि ङः सीति धुगिति धुग्विधीयताम्। डकारस्य सकारे परे धुगिति व्याख्यानसंभवात्। किमनेन न धुटः परादित्वाऽभ्युपगमेन मेवं। पूर्वान्तत्वे तु न पदान्ता
ट्टोरनामिति निषेधाप्रवृत्त्या धकारस्य ष्टुत्वप्रसंगात्। अत एव वक्ष्यमाणस्तुगिहैव न कृतः। ङस्य तु कि ष्टुत्वे तस्यासिद्धत्वेन चयो द्वितीया इत्यस्यापि प्रसंगाच्च। इह धुड्वि
कल्पेन रूपद्वये सति टकारतकारविसर्गाणां द्वित्वविकल्पात् षोडश रूपाणि। खयः शर इति द्वित्वे द्वात्रिंशत्। शरोऽचीति निषेधोऽत्र न प्रवर्तते। तस्य सोत्र द्वित्वमात्र
विषयत्वस्योक्तत्वात्। न च चर्त्वस्यासिद्धत्वात् खयः परत्वमेव नास्तीति शंक्यं। पूर्वत्रासिद्धीयमद्वित्व इत्युक्तेः। शि तुक्। शीति सप्तमी पूर्वत्र कृतार्थाया नः इति पंचम्याः॥ ॥

राम २५

षष्ठीं कल्पयतीत्याह। नस्येति। चलोपइति। झरोझरीत्यत्र सवर्णग्रहणसामर्थ्यात् यथासंख्यं न प्रवर्त्तत इति भावः। सञ्छंभुरिति। इह श्चुत्वतुकोरसिद्धत्वमाश्रित्य न
च्छ्वीति रुत्वं नाशंक्यं। छत्वस्यासिद्धत्वात्। चतुष्टयमिति। अत्र तुकः श्चुत्वे चयो द्वितीया इति पक्षे चस्य छत्वे शस्यापि छत्वविकल्पात्। सञ्च्छ्छंभुः सञ्च्छशंभु
रिति रूपद्वयवृद्धिर्बोध्या। न च शस्य छत्वपक्षे शर्परत्वाभावाच्चयो द्वितीया इति पक्षे चस्य छो नेति शंक्यं। शश्छोटीति छत्वस्यासिद्धत्वादित्याहुः॥ ॥ ङमो ह्रस्वात्॥
ङम्प्रत्याहारः। संज्ञार्थं च कृतं टित्वं सामर्थ्यात् संज्ञिभिः संबध्यते। तेन यथासंख्यं ङुट् णुट् नुटः प्रवर्त्तते नित्यग्रहणं विस्पष्टार्थं। हे मपर इति मयउञो व इति च विक
ल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात्। नन्विह नित्यग्रहणाभावे हे मपरे वेति वाग्रहणमुत्तरसूत्रेषु पंचस्वप्यनुवर्ततेवा न वेति शंका स्यादिति चेत् सत्यं। अत ए
वाविस्पष्टार्थमित्युक्तं। न तु व्यर्थमिति। तस्मात् परस्या च इति। न तु ङम इत्यस्य षष्ठ्यंततामाश्रित्याचि परे पूर्वस्यैव विधीयतां को दोष इति चेन्न। मैवं। तथा हि सति ङमंत

ङमो ह्रस्वादचि ङमुण्नित्यम्। ८।३।३२। ह्रस्वात् परो यो ङम् तदन्तं यत्पदं तस्मात् परस्याचो नित्यं ङमुडागमः स्यात्। प्रत्यङ्ङात्मा। सुगण्णीशः।
सन्नच्युतः। समः सुटि। ८।३।५। समो रुः स्यात् सुटि। अलोन्त्यस्य। अत्रानुनासिकः पूर्वस्य तु वा। ८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिक
स्यात्। अनुनासिकात् परोऽनुस्वारः। ८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात् परोऽनुस्वारागमः स्यात्। खरवसानयोर्विसर्जनीयः ॥

स्य पदस्य पूर्वावयवः स्यादित्यनिष्टं प्रसज्येत। पदस्य यो ङम् तस्येति वैयधिकरण्येन व्याख्यायामपि कुर्वन्नास्ते इत्यत्र णत्वं प्रसज्येत। पदांतस्येति निषेधस्याप्रवृत्तेः
यद्यपि बहिरंगपरिभाषया ङमुड्विधेरसिद्धत्वादिष्टं सिध्यति तथापि यथोद्देशपक्षे नैपादिकेऽन्तरंगे बहिरंगपरिभाषाया अप्रवृत्तेः। प्रसज्यत एव णत्वमिति यथो
क्तं व्याख्यानमेव साध्विति दिक्। सुगण्णीश इति। णत्वं पूर्वत्रासिद्धे तन्निषेधात्। न तु परमदंडिनावित्यादौ अन्तर्वर्त्तिविभक्त्या पदत्वान्नुट् स्या
दिति चेन्न। उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न प्राचा तु उत्ति
च पद इत्यतः पद इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानान्नमुएनेत्युक्तं। तदनेन प्रत्युक्तं। इहैव नलोपवारणाय पुनःश्रुतिरेव तेनाप्यनुसर्तव्यत्वात्। समः सुटि।
यद्यपि मोनुस्वारेण सिद्धं तथापि अनुनासिकत्रिसकारसिध्यर्थमिदं। अत्रानुनासिकः। अयमधिकारो विधिर्वेति पक्षद्वयं। आद्ये अत्रग्रहणमनर्थकं। अधि

कारादेव रु प्रकरणलाभात्। तुशब्दस्तु अधिकारपक्षे परस्मात्कार्यिणः पूर्वकार्यस्य विशेषद्योतनार्थः। परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक इति विधिपक्षे व्यर्थः त्वाग्रहणस्य स्पष्टार्थं। अनुनासिकात्पर इति ज्ञापकादेव सिद्धेः। नहि विकल्पं विना अनुनासिकं विहायेत्यनुनासिकाभावपक्षः संभवति। इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दावनुक्तौ। रोः पूर्वस्यानुनासिकः स्यात् इत्येवोक्तम्। रोः पूर्वस्येति। उपलक्षणमेतत्। लोपस्यापि अत्र रुप्रकरणे यो विधिस्ततः पूर्वस्येति निष्कृष्टोऽर्थः। एवं रोः पूर्वस्मात्पर इत्यस्यापि रुप्रकरणे यो विधिस्ततः पूर्वस्मात्पर इत्यर्थो बोध्यः। अनुनासिकात्। ल्यब्लोपे पञ्चमीत्याह। अनुनासिकं विहायेति। अनुनासिकाभावपक्ष इत्यर्थः। पूर्वस्येति प्रकृतस्य तु विभक्तिविपरिणामेन पञ्चम्यन्ततेत्यभिप्रेत्याह। रोः पूर्वस्मादिति। संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात् स्वत्सा धेनुरानीयतामित्यत्रेव

विसर्जनीयस्य सः ८।३।३४ खरि विसर्जनीयस्य सः स्यात्। एतदपवादेन वा शरीति पाक्षिके विसर्गे प्राप्ते। सम्पुङ्कानां सो वक्तव्यः। संस्कर्त्ता। सं स्कर्त्ता। समो वा लोपमेके इति भाष्यं। लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयं द्विसकारं तूक्तमेव। तत्रानचि चे ति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम्। अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वे नानुस्वारस्याप्यच्त्वात्। अनुनासिकवतां त्रयाणां शरः खय इति कद्वित्वे षट्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश। एषामष्टाद शानां तकारस्य द्वित्वे वचनान्तरेण पुनर्द्वित्वे च एकतान्द्वितान्त्रितमिति चतुष्पञ्चाशत्। अणोऽनुनासिकत्वेऽष्टोत्तरशतम्॥ ॥

संभावितानुनासिकत्वगुणस्योपस्थितत्वादाकांक्षितत्वाच्चावधित्वेन संबध्यत इत्यभिप्रेत्याह॥ रोः पूर्वस्मादिति तु मनोरमायामवतारितं। तत्तु पूर्वस्येत्यनुवर्त्तनं विभक्तिविपरिणामं चानपेक्ष्य लौकिकन्यायेनैवेष्टं सिध्यतीत्याशयेनोक्तमित्याहुः। अनुस्वारागम इति। आगमत्वं च परशब्देनैव लभ्यते। यथा पूर्वौ तु ताभ्यामैजित्यत्र पूर्वशब्देन वैचोरागमत्वमिति भावः॥ ॥ विसर्जनीय। खरीति। एतच्च खरवसानयोरिति सूत्रान्मण्डूकप्लुत्यानुवर्तते। संस्कर्तेति। संपरिभ्यामिति करोतेः सुट् । ननु अनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेति अनुस्वारपक्षे त्रिसकारकं रूपं कथं स्यादित्याशंक्याह। अनुस्वारविसर्गेत्यादि। अकारोपरीति। यदि त्विकारो परि पठ्येरन् तर्हि पयः सु॥ यशः सु इत्यादौ इणः परस्येति षत्वं स्यादिति भावः। अच्त्वादिति। नन्वेवं हरिः करोति। हरिं स्मरति। रामः पातीत्यादौ यणादिप्रसंगः

त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। अनुस्वारस्यापिद्वित्व इति। अपिशब्दात्ककारस्य। कचनोत्तरेणेति। अचो रहाभ्यामिति द्वित्वेपि यणो मय इति भवत्येवेतिभावः॥ ॐ॥ पुमः खय्यि॥ पुंस् संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम्। अम्पर इति बहुव्रीहिः। पर्युदासादिति। इदुदुपधस्येति षत्वविधायके सूत्रे इति भावः। ख्याञादेशे नेति। चक्षिङः ख्याञ् इत्यत्र खशादिरयमादेशः। असिद्धकाण्डे णत्वानन्तरं शस्य यो वेति स्थितमिति वक्ष्यते। एवं च यत्वस्यासिद्धतया अम्परत्वाभावान्न पुमः खयीति रुत्वं नेत्यर्थः। पुंख्यानमिति। चक्षिङो ल्युट् चेति ल्युटि ख्याञादेशः। ननु आदेश इह दुर्लभः। वर्जने प्रतिषेधः असनयोश्चेति वार्तिकादिति चेत्सत्यं बहुलं तणयन्त्रं वधक गात्र विचक्षण अजिराद्यर्थमिति वार्तिके बहुलग्रहणात्समाधेयम्। विस्तरस्त्विह मनोरमायामनुसंधेयः। त्रायस्वेति। त्रैङ् पालने। लोटि शप्यायादे

पुमः खय्यम्परे। ८।३।६। अम्परे खयि पुम्शब्दस्य रुः स्यात्। व्युत्पत्तिपक्षेऽप्रत्ययस्येति षत्वपर्युदासात् ≍क ≍पयोः प्राप्तौ। अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ संपुङ्कानामिति सः। पुंस्कोकिलः। पुंस्कोकिलः। पुंस्पुत्रः। पुंस्पुत्रः। अम्परे किम्। पुंक्षीरम्। खयि किम्। पुंदासः। ख्याञादेशे न। पुंख्यानम्। नश्छव्यप्रशान्। ८।३।७। अम्परे छवि नकारान्तस्य पदस्य रुः स्यात्। न तु प्रशान्शब्दस्य। विसर्गः। सत्वं श्चुत्वम्। शार्ङ्गिंश्छिन्धि। शार्ङ्गिंश्छिन्धि। चक्रिंस्त्रायस्व। चक्रिंस्त्रायस्व। पदस्य किम्। हन्ति। अम्परे किम्। सन्त्सरुः खड्गमुष्टिः। अप्रशान् किम्। प्रशान्तनोति। नॄन्पे। ८।३।१० नॄनित्यस्य रुः स्याद्वा पकारे परे। कुप्वोः ≍क ≍पौ च। ८।३।३७। कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः। चाद्विसर्गः। येन नाप्राप्तिन्यायेन विसर्जनीयस्य स इत्यस्यापवादोयम्। न तु शर्परे विसर्जनीय इत्यस्य। तेन वासः क्षौममित्यादौ विसर्ग एव। नॄँ≍पाहि। नॄँ≍पाहि।

शः। प्रशानिति। प्रपूर्वात् शाम्यतेः क्विप्। अनुनासिकस्येति दीर्घः। मो नो धातोरिति नः। तस्यासिद्धत्वान्नलोपो न। नॄन्पे पकार 《《 नॄँः पाहि। नॄँः पाहि। नॄन्पाहि॥ रोपरि अकार उच्चारणार्थः। तेन नॄँ≍पुनातीत्यादि सिद्धम्। उभयथर्क्ष्विति तत उभयथेति अनुवृत्तेर्विकल्पः फलितः इत्याशयेनाह। रुः स्याद्वेति। कुप्वोः ≍कः। अत्र कुप्वोरिति रेफस्य विसर्गः। जिह्वामूलीयस्य खर्त्वात्। खर्परे शरीति विसर्गस्यास्य लोपः। जिह्वामूलीयस्य शर्त्वात्। वा शरीति। विसर्ग एव वा। आदेशयोः ककारपकारावुच्चारणार्थौ। चाद्विसर्ग इति। प्राचा तु चाद्विकल्प इत्युक्तं तदसत्। ≍क ≍पाभ्यां मुक्तौ विसर्जनीयस्य सत्त्वप्रसङ्गात्॥ ॐ॥ ॥ ॥

कानाम्रेडिते। कान्कानीतिवाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात्। इह माभूत्। कान्कान्पश्यसीति। अत्र एकः किम्शब्दः प्रश्ने। द्वितीयः क्षेपे। कान् कुत्सितान् पश्यसीत्यर्थः। वार्तिके कान्ग्रहणाभावेपि सत्वं सिध्यतीत्याशयेनाह। यद्वेति। संपुमोस्तु वार्तिकेनैव सत्वं। कस्कादिषु संस्कर्ता। संस्करिष्यति। पुंस्कोकिलः। पुंस्कामइत्यादिवत् नापाठे गौरवात्। कस्कादिषु संपुम्कानिति पठित्वा सर्वमपि वार्तिकं त्यक्तुं शक्यं। पुंस्कोकिल इत्यादौ विसर्गः परत्वेन विसर्गस्य षत्वप्रसंगात्। किं तु कान्ग्रहणमिव समग्रहणं वार्तिके त्यक्तुं शक्यमित्यन्ये। कस्कादिषु च। अत्र सोपदादावित्यतः स इति इणः ष इति सूत्रं चानुवर्तते तदाह। एष्विणउत्तरस्येत्यादि। कौतस्कुत इति। कुतः कुत आगत इत्यर्थे अध्ययात्यपि प्राप्ते गणपाठसामर्थ्यात् अणित्याहुः। अव्ययानां भमात्र इति वक्ष्यमाणेनात्र टि

कानाम्रेडिते ८।३।१२। कान्नकारस्य रुः स्यात् आम्रेडिते परे। संपुङ्कानामिति सः। यद्वा। कस्कादिषु च ८।३।४८ एष्विणउत्तरस्य विसर्गस्य षः स्यात् अन्यत्र तु सः। कुप्वोः पयोरपवाद इति सः। कांस्कान् कांस्कान्। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका। धनुष्कपालं। आकृतिगणोयं। संहितायां ६।१।७२ इत्यधिकृत्य। छे च ६।१।७३ ह्रस्वस्य छे परे तुगागमः स्यात् संहितायाम्। चुत्वस्यासिद्धत्वाज्झश्त्वेन दः। ततश्च त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः। तस्य चर्त्वेन चः। चुत्वस्यासिद्धत्वाच्चोः कुरिति कुत्वं न। शिवच्छाया। स्वच्छाया। आङ्माङोश्च ६।१।७४ एतयोश्छे परे तुक् स्यात् पदान्ताद्वेति विकल्पापवादः। आच्छादयति। माच्छिदत्। दीर्घात् ६।१।७५ दीर्घाच्छे परे तुक् स्यात्। दीर्घस्य यन्तु कृतं तु कृत्वा सेनासु राच्छायेति ज्ञापकात्। चेच्छिद्यते। पदान्ताद्वा ६।१।७६ दीर्घात्पदान्ताच्छे परे तुग्वा स्यात्। लक्ष्मीच्छाया। लक्ष्मीच्छाया इति हल्सन्धिः॥

लोपः सर्पिष्कुण्डिकेति। नित्यं समास इत्येव सिद्धे इह पाठस्य प्रयोजनमसमासेप्यपेक्षाविरहेपि षत्वार्थ इत्यादिवक्ष्यति। संहितायामित्यधिकृत्येति। एतच्च द्वकोपराचीत्यत्र वक्तव्यमपि स्त्रक्रमानुरोधेनात्रोक्तं। छे च। छकारोपरि अकार उच्चारणार्थः विदिभिदिच्छिदेरिति निर्देशात्तेन विच्छिन्नमित्यादि सिद्धं। ह्रस्वस्येति। एतच्च ह्रस्वस्य पिति कृतीत्यतोनुवर्तते तुक् चासेनासुरेति। यदि हि छस्य तुक् स्यात्तर्हि छस्य चर्त्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चेत्वा प्रवृत्तौ तु छकारोपरिचकारः श्रूयेतेति भावः। पदान्ताद्वा। प्रकृतेन दीर्घग्रहणपदविशेषणात्तदन्तविधिलाभेनेष्टसिद्धौ वर्ण्यतग्रह॥ ॥ ॥

रांपदां तस्यैव तुग्यथा स्यात्पदस्य माभूदित्येतदर्थं। अन्यथा पदविधित्वात्समर्थपरिभावोपस्थितौ समर्थेषु लक्ष्मीच्छायादिष्वेव स्यात्तिष्ठतु कुमारी छत्रं हर देवदत्तात्य
त्र न स्यादसामर्थ्यादेव न पदान्ताट्टोरिति सूत्रे पदान्ताट्टोरिति वक्तव्ये तग्रहणादुष्टाः षट्संतस्वय — इत्यत्रापि ष्टुत्वनिषेधार्थमित्याहुः॥ इति हल्संधिः॥ ॥ विष्णु
स्त्रातेति। प्रातिपदिकात्स्वौजसमौडिति सुप्रत्यये तस्य रुत्वे खरवसानयोरिति विसर्गे च कृते विसर्जनीयस्येति सः अस्य च रुत्वं नाशंक्यं। रुत्वं प्रति विसर्जनीयसत्व
स्यासिद्धत्वात्। शर्परे विसर्जनीयः। शर्पर इति बहुव्रीहिरनुवर्तमानस्य खरः अन्यपदार्थः। सत्वादेरयमपवादः। यदि तु शर्परे नेत्येवोच्येत. तर्हि प्रकृते सत्वे निषि
द्धेपि कुप्वोः ≍क≍पौ स्याताम्॥ वासः क्षौममम्भिः स्नातमित्यादौ विसर्जनीयवचनात्तु विकारमात्रं बाध्यत इत्याशयेनाह। नत्वन्यदिति। तदेव स्फुटयति। इहेति। सोप

विसर्जनीयस्य सः। विष्णुस्त्राता। शर्परे विसर्जनीयः ८।३।३५ शर्परे खरि विसर्जनीयस्य विसर्जनीयो न त्वन्यत्। कः त्सरुः। घनाघनः क्षोभणः।
इह यथायथं सत्वं जिह्वामूलीयश्च न। वा शरि। ८।३।३६ शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते। हरिश्शेते। खर्परे शरि वा
विसर्गलोपो वक्तव्यः॥ रामस्थाता। रामः स्थाता। हरिस्फुरति। हरिः स्फुरति। पक्षे विसर्गसत्वे च त्रैरूप्यम्। कुप्वोः ≍क≍पौ च। क≍करोति।
कः करोति। क≍खनति। कः खनति। क≍पचति। कः पचति। सोपदादौ। ८।३।३८ विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः। पाशकल्प
ककाम्येष्विति वाच्यम्। पयस्पाशं। यशस्कल्पम्। यशस्कम्। यशस्काम्यति। अनव्ययस्येति वाच्यम्॥ प्रातःकल्पम्। काम्ये रोरेवेति वाच्यम्॥ नेह।
गीःकाम्यति॥

दादौ। अपदाद्योरिति। सूत्रे व्यत्ययेनैकवचनं। यदि तु विसर्जनीयस्य सः शर्परे विसर्जनीय इत्यत्र मण्डूकप्लुत्यानुवर्तितो यः खर् स इहाप्यनु
वर्त्य विशेष्यते अपदादौ खरीति यथाश्रुतं साधु। परं तु पुनर्मण्डूकप्लुत्यानुवर्तने क्लेश इति भावः। अन्ये त्वाहुः। पुनर्मण्डूकप्लुतिं विनाप्यनुवर्तितुं शक्यः। वा शरीत्यत्र शरा
खरं विशेष्य शरूपे खरीति व्याख्यानं कुप्वोरिति सूत्रे कुप्वोः खरीति व्याख्याने च क्षत्यभावादिति। पयस्पाशमिति। याप्ये पाशप्। ईषदसमाप्तौ कल्पप्। अज्ञाते
कुत्सित इति कः। काम्यच्चेति काम्यच्। पाशकल्पककाम्येष्विति वृत्तिः। संभवप्रदर्शनमेतत्। न तु परिगणनमन्यस्यासंभवात्। प्रातःकल्पमिति। अधिकरणशक्ति
प्रधानस्यापि प्रातःशब्दस्येह वृत्तिविषये शक्तिमत्परत्वाद्दोषाभूत्तमहः दिवाभूता रात्रिरितिवत्॥ गीःकाम्यतीति॥ न च सत्वनिषेधेपीह इणः ष इति षत्वं स्यादि

त्तिवाच्यं। तत्रापिकास्येरोरेवेत्यस्यानुवृत्तेनयदित्तइणः षइत्यत्रैवेदंयम्येतततर्हिषत्वमात्रप्रतिषेधेपिपूर्वेणासत्वंस्यात्॥ ॥इणः षः। सोपदादावित्यस्यापवादःउरः
प्रष्ठव्याइति। दृपालनपूरणयोः॥ ॥भ्राजभासेत्यादिनाक्विप्। ततदंताज्जस। जसंतत्तोस्पुटीकर्त्रेपूः पुराविस्तुपन्यस्तरदुदुपधस्याइदुदिति किं। गीः करोति। धूः करो
ति। इदुइदुत्तोउपधेयस्यसमुदायस्यतस्यावयवोयोविसर्गइतिवैयधिकरण्येनसंबंधः। अप्रत्ययस्येतितुअप्रत्ययोयोविसर्गइतिसंबध्यते। संभवतिसामानाधि
करण्येवैयधिकरण्यस्यान्याय्यत्वात्। नचविसर्गस्यप्रत्ययत्वमप्रसिद्धमितिवाच्यं। अग्निः करोतीत्यादौस्थानिवद्भावेनतत्प्रसिद्धेः। नचातिदेशप्रतिनि
पाद्या असिद्धत्वंशंक्यं। अप्रत्ययस्येतिनिषेधेनैवसिद्धत्वज्ञापनात्। अतएवअग्निरित्यादेरोर्विसर्गः सिध्यति। अन्यथाअपदांतत्वान्नस्यात्। विसर्गविधिस्तुप

इणः षः। ८।३।३९। इणः परस्यविसर्गस्यषकारःस्यात्पूर्वविषये। सर्पिष्पाशं। सर्पिष्कल्पं। सर्पिष्कं। सर्पिष्काम्यति। नमस्पुरसोर्गत्योः। ८।३।४०। ग
तिसंज्ञयोरनयोर्विसर्गस्यसः स्यात्कुप्वोः परयोः नमस्करोति। साक्षात्प्रभृतित्वात्कृञोयोगेविभाषागतिसंज्ञा। तदभावेनमः करोति। पुरोऽ
व्ययमितिनित्यङ्गतिसंज्ञा। पुरस्करोति। अगतित्वान्नेह। पूः पुरौ। पुरः प्रष्ठव्याः। इदुदुपधस्यचाऽप्रत्ययस्य। ८।३।४१। इकारोकारोपधस्याऽप्रत्य
यस्यविसर्गस्यषः स्यात्कुप्वोः। निष्प्रत्यूहं। आविष्कृतम्। दुष्कृतम्। अप्रत्ययस्यकिं। अग्निः करोति। वायुः करोति। एकादेशशास्त्रनिमित्तकस्यनषत्व
म्। कस्कादिषुभ्रातुष्पुत्रशब्दस्यपाठात्। तेनेहन। मातुः कृपा। मुहुसः प्रतिषेधः। मुहुः कामा। तिरसोऽन्यतरस्याम्। ८।३।४२। तिरसः सोवास्यात्
कुप्वोः। तिरस्कर्ता। तिरः कर्ता॥

नरित्यादेश्चरितार्थः। ज्ञापकंचविशेषापेक्षं। तेनाचः परस्मिन्नितित्रिपाद्यांनप्रवर्त्तते। एवंचपूर्वत्रासिद्धेनस्थानिवदितिसि
द्धांतः। उक्तयुक्तिमूलकोनञ्वा चनिकइतिमनोरमायांस्थितं। अत्रवदंतिअप्रत्ययस्येत्यत्रप्रत्ययस्ययोविसर्जनीयोनभवतीत्याद्यर्थएवआकरेस्थितइति। अप्रत्ययोयोवि
सर्गइतिसामानाधिकरण्येनान्वयोनयुक्तः। सर्पिष्करोतीत्यत्रइसुसोःसामर्थ्यइतिवैकल्पिकषत्वप्रवृत्तावपितिष्ठतुसर्पिः पिबत्वमुदकमित्यत्रइदुदुपधस्येत्य
ननित्यंषत्वप्रसंगात्। नचाकरमतेपुरादीनामव्युत्पत्त्याश्रयणेनतयासीकारादिष्टापत्तिरितिवाच्यं। व्युत्पत्त्याश्रयणेदोषतादवस्थ्यात्। इसुसोरित्यत्रसर्पिष्करो
तीत्युदाहरणेनव्युत्पत्तिपक्षस्येववार्तिककारेणास्वीकृतत्वानुमानात्। अन्यथाइदुदुपधस्येत्यनेनैवव्युत्पत्त्यव्युत्पत्तिपक्षभेदेनषत्वविकल्पसिद्धेस्तदुदाहरण

निमित्त

स्यासंगतिप्रसंगात्। किंचातिष्ठतुसर्पिरित्यादाविदुदुपधस्येतिषत्वस्येष्टत्वेकस्कादिषुसर्पिष्कुंडिकाशब्दोअसमासेव्यपेक्षाविरहेपिषत्वार्थइतिस्वमूलग्रंथविरो
धइति। अत्रकेचित्। इदुद्भ्यामप्रत्ययस्येतिवक्तव्येइदुदुपधस्येतिग्रहणंनित्ययः इदुदुपधस्तस्यैवविसर्गस्यषत्वंयथास्यात्। कविभिः कृतमित्यादौमाभूदित्येवमर्थमि
सोविसर्गस्यहिनित्यमिदुदुपधत्वंनास्तिगमैरित्यादौतदभावात्इतितन्न। अग्निः करोतीतिनिषेधोदाहरणस्यासंगत्यापत्तेः देवइत्यादौअकारोपधत्वात्प्रियचत्वाइ
त्यादौवकारोपधत्वेनचतुष्कपालइत्यादौषत्वानापत्तेश्चेतियत्किंचिदेतत्। अन्येतुप्रत्ययस्ययोविसर्जनीयोनभवतिइत्यादिव्याख्यानेनूक्तोदाहरणेषत्वस्याप्रवृत्ते
रुपधस्येत्येतत्त्यजमित्याहुः। स्यादेतत्। अप्रत्ययग्रहणमेवस्थानिवत्सूत्रंप्रतित्रिपादीसिद्धेत्यत्रज्ञापकमित्युक्तं। तदिदंवैयधिकरण्येनान्वयमभ्युपगच्छतान
सिद्धेदत्राहुः। नमुनेत्यत्रनेतियोगंविभज्यस्थानिवत्सूत्रंप्रतित्रिपादीनासिद्धेतिव्याख्यायतेप्रत्ययः परश्चेत्यादिनिर्देशाश्चेहानुकूलाः। योगविभागस्येष्टसिद्ध्यर्थ
त्वादचः परस्मिन्नितिसूत्रंप्रतित्वसिद्धेवाततश्चपूर्वत्रासिद्धेन स्थानिवदितिसिद्धांतोयुक्तिमूलकइत्यादिसर्वंसंगच्छतइति अप्रत्ययोयोविसर्गइतिसामाना
धिकरण्यपक्षेमातुः कृपेत्यादाविदुदुपधस्येतिषत्वमाशंक्याह। एकादेशशास्त्रनिमित्तकस्येति मातुरित्यत्रहिऋतउदित्येकादेशशास्त्रंविसर्गंप्रतिपरंपरया
प्रयोजकं। आकरेतुएकादेशनिमित्तादितिप्रचुरःपाठः तत्रएकादेशः एकादेशशास्त्रंतन्निमित्तंयस्यउकारस्यतस्मादित्यर्थः। नन्वेवंमप्रत्ययस्येत्यत्रसामानाधिकरण्य
पक्षोप्याकरसंमतइतिचेदत्राहुः। प्रत्येकंसंयोगसंज्ञेतिपक्षआकरसंमतोपियथानिष्प्रयोजनस्तथायमपिवैयधिकरण्यपक्षस्त्वावश्यकएवान्यथातिष्ठ
तुसर्पिः पिबत्वमुदकमित्याद्यसिद्ध्यापत्तेरिति। भ्रातुष्पुत्रपाठादिति। ननुषत्वंतुकोरसिद्धइत्येकादेशशास्त्रस्यासिद्धत्वात्षत्वाभावोविध्यर्थएवतत्रपाठोन
ज्ञापनार्थइतिवाच्यं। षत्वेतुकिंचकर्तव्येपदांतपदाद्योः सतोरेवैकादेशोऽसिद्धइतिसिद्धांतात्। अन्यथाशकहूषित्यत्रापिषत्वंनस्यात्। शकान्हूयतीत्यत्रादे
चउपदेशइत्यात्वेक्किपिसंप्रसारणेकृतेसंप्रसारणाच्चेतिपूर्वैकादेशेचहलइतिदीर्घःभवतिहिकोसिचत्सोसिचत् इत्यादौपदांतपदाद्योरादेशस्तेनतत्रष
त्वनिषेधः सिद्ध्यतिनतुशकहूषित्यत्र। एवंचभ्रातुष्पुत्रइत्यत्रापिषत्वंतुकोरित्येकादेशशास्त्रमसिद्धंनभवतीत्युक्तज्ञापकंतस्यैवानूक्तज्ञापकात्शकहू
षित्यत्रापिमातुः कृपेत्य नैवषत्वंनस्यात्। मैवं। तुल्यजातीयस्यज्ञापकत्वात्। कस्तुल्यजातीयः। कुर्वोरितिदिक् ॥ ॥

द्वित्रिश्चतुरिति। इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव गृह्यते। कृत्वोर्थग्रहणं तु साहचर्येण न सर्वत्र व्यवस्थापकमित्यत्र ज्ञापकं। तेन दीधीवेवीटामित्यत्र धातुसाहचर्येप्यागमस्येटो ग्रहणं॥ चतुष्कपाल इति। चतुर्षु कपालेषु संस्कृत इत्यर्थे संस्कृतं भक्षा इत्यण्। द्विगोर्लुगनपत्य इति लुक्। अत्र मनोरमायामिदुदुपधस्येति नित्यं ष इत्युक्तं। एवं च द्वित्रितमिति चतुःपंचाशदिति स्वमूलग्रंथप्रयोगश्चिंत्यः। चतुष्कपालवत्तत्रापि नित्यतया षत्वप्रवृत्तेरतः षत्वनिवारणाय प्रत्ययस्येत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्यर्थ एव स्वीकर्तव्यः। चतुष्कपाल इत्यत्रापि तु कस्कादेराकृतिगणत्वात् षत्वप्रवृत्तिरित्याहुः। व्यपेक्षाविरहे

द्विस्त्रिश्चतुरिति कृत्वोर्थे। ८।३।४३ कृत्वोर्थे वर्त्तमानानामेषां विसर्गस्य षकारो वा स्यात् कुप्वोः। द्विष्करोति। द्विः करोति इत्यादि। कृत्वोर्थे किम्। चतुष्कपालः। इसुसोः सामर्थ्ये। ८।३।४४ एतयोर्विसर्गस्य षः स्याद्वा कुप्वोः। सर्पिष्करोति। सर्पिः करोति। धनुष्करोति। धनुः करोति। सामर्थ्यमिह व्यपेक्षा। सामर्थ्ये किं। तिष्ठतु सर्पिः पिब त्वमुदकम्। नित्यं समासेऽनुत्तरपदस्थस्य। ८।३।४५ इसुसोर्विसर्गस्याऽनुत्तरपदस्थस्य समासे नित्यं षः स्यात् कुप्वोः परयोः। सर्पिष्कुण्डिका। अनुत्तरपदस्थस्य किं। परमसर्पिःकुण्डिका। कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः। व्यपेक्षायां नित्यार्थश्च। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। ८।३।४६ अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात् करोत्यादिषु परेषु न तूत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रं। अयस्कुशा। अयस्कर्णी। अतः किं। गीःकारः। अनव्ययस्य किं। स्वःकामः। समासे किं। यशः करोति। अनुत्तरपदस्थस्य किं। परमयशःकारः। अधःशिरसी पदे। ८।३।४७ एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे। अधस्पदं। शिरस्पदं। समास इत्येव। अधः पदं। शिरः पदं। अनुत्तरपदस्थस्येत्येव। परमशिरःपदं। कस्कादिषु च भास्करः॥ इति विसर्गसंधिः॥

ऽऽपीति। तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। व्यपेक्षायामिति। इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। अत्र सर्पिरित्यसमस्तं पदमिति बोध्यं। समासे तु नित्यं समास इत्यनेन न सिद्धेः समासाभावमेव ज्ञापयितुमिदमिति सर्पिर्विशेषणमुक्तं। नित्यार्थश्चेति। अयंभावः। असमासे व्यपेक्षाविरहे अत्यंताप्राप्तौ नित्यतया षत्वार्थः पाठः। व्यपेक्षायां त्वसमासे इसुसोरिति विकल्पेन प्राप्तौ नित्या

अयःसहितेति। नत्वयसो विकारः जानपदेति ङीष्प्रसंगात्। अयस्करीति। अयइव करौ यस्याः नासिकोदरेति ङीष्। अधः शिरसी। एतयोरिति। सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोध्या। अधस्पदमिति। पदस्याध इति विग्रहः। मयूरव्यंसकादित्वात्समासः। शिरस्पदमिति। षष्ठीसमासः॥ इति विसर्गसंधिः॥ ः॥ शिव इत्यस्यावसाने विसर्गस्तस्याच्र्य इत्यनेन समभिव्याहारे सस्याभावाद्रुत्वं कथं स्यादित्याशंकायामाह॥ स्वौजसमौडित्यादिनेति। एवं चात्र मूलभूत एव सुरस्तीति रुत्वादिकं स्यादेव। विसर्गस्त्विह न भवति खरवसानाभावात्॥ भाविन्यवसानभंगे अकृतव्यूहपरिभाषया अर्च्य पदसमभिव्याहारात्पूर्वमपि न भवतीति बोध्या। ससजुषो रुः। पदस्येत्यनुवृत्तं ससजूभ्यां विशेष्यते विशेषणेन तदंतविधिः। न च सजूः शब्दांशे ग्रहणवत्ता प्रातिपदिकेन तदंतविधिर्नेति निषेधः शंक्यः। तस्य प्रत्ययविधिविषयकत्वात्। सांतं सजुष्शब्दांतं च यत्पदं तस्य रुः स्यात्स चालोंत्यस्य। एवं स्थिते फलितमाह। पदांतस्य सस्येति। सजुष्शब्दस्येति। तदंतस्य पदस्येत्यर्थः। तेन सजुषौ सजुषस्त्रापि नातिव्याप्तिः।

स्वौजसमौडिति सुप्रत्यये शिवस् अर्च्य इति स्थिते। ससजुषो रुः ८।२।६६ पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात्। जश्त्वापवादः। अतो रोरप्लुतादप्लुते ६।१।११३ अप्लुतादतः परस्य रोः उः स्यादप्लुते ऽति। भोभगोअघो इति प्राप्तस्य यत्वस्यापवादः। उत्वंप्रति रुत्वस्याऽसिद्धत्वं न भवति। रुत्वमनूद्य उत्वविधेः सामर्थ्यात्॥

१ त्रिःनच सजूरित्यत्राव्याप्तिः व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति निषेधादिति वाच्यं। तस्यापि प्रत्ययविधिविषयकत्वात्। अत एव व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति ग्रहणवतेति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिव उदित्यत्र हरदत्तेनोक्तं। कैयटहरदत्ताभ्यामिति तु मनोरमायां स्थितं। तत्र कैयटेनानुक्तत्वात्कैयटग्रहणं प्रमादपतितमिति नव्याः। केचित्तु दिव उदित्यत्र यस्मिन्निति बहुव्रीहिरयं सूत्रसमुदायपक्षो न्यपदार्थः। तथा च दिव उत्सूत्रशब्देन इद्वे चेति सूत्रस्यापि क्रोडीकरणात् तत्र कैयटेनोक्तत्वान्नोक्तदोष इति कुकवितर्कयन्ति तत्र क्लेशेन मनोरमायोजनेति। यत्वस्यासिद्धत्वादुत्वे कृतेपि तस्यस्थानिवत्वेन रुत्वाद्यत्वं स्यादित्याशंकायामाह। यत्वस्यापवाद इति। उत्वविधेः सामर्थ्यादिति। न चातो रोरप्लुतादिति सूत्रं परित्यज्य रोः सुपीति सूत्रानंतरं अत उदतीत्येव लाघवादुच्यतां किमनेन सामर्थ्याश्रयणप्रयासेनेति वाच्यं। तथा हि सति उत्वस्यासिद्धतया शिवो ऽर्च्य इत्यादावाद्गुणस्याप्रवृत्तिप्रसंगात्

प्रथमयोः। अत्र प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौणः। द्विवचनं तु समुदायापेक्षया। इको यणचीत्यतो अचीत्यकः सवर्णे दीर्घ इत्यतोऽको दीर्घ इत्येकः
पूर्वपरयोरिति सूत्रं चानुवर्ततइत्याशयेन व्याचष्टे। अकः प्रथमाद्वितीययोरचीत्यादिना। अचि किं। रामः। अकः किं। गावौ। नावौ। प्रथमयोः किं। वृक्षे। प्लक्षे। यद्यपी
दिनादिचीत्यनेनैव सिध्यति। तथापि हरी इत्यत्र वहयोरित्यत्रापि पूर्वसवर्णदीर्घः स्यात् तद्वारणाय प्रथमयोरित्युक्तमिति दिक्। पूर्वग्रहणं किं। अग्नी इत्यत्र
पक्षे परसवर्णो माभूत्। दीर्घग्रहणं किं। त्रिमात्रे स्थानिनि त्रिमात्रो माभूत्। आङ्गुण इति। अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिरिति न्यायादिति भावः। अत्र मिथो

प्रथमयोः पूर्वसवर्णः। ६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् इति प्राप्ते॥ नादिचि। ६।१।१०४। अवर्णाद् इचि
परे न पूर्वसवर्णदीर्घः। आद्गुणः। एङः पदान्तादति। शिवोऽर्च्यः। अत इति तपरः किम्। देवा अत्र। अतीति तपरः किं। श्व आगन्ता। अप्लुतात् किम्।
एहि सुस्रोत ३ अत्र स्नाहि। प्लुतस्याऽसिद्धत्वादतः परोऽयम्। अप्लुतादिति विशेषणं तु तत्सामर्थ्यान्नासिद्धत्वम् तपरकरणस्य तु न सामर्थ्यं दी
र्घनिवृत्त्या चरितार्थत्वात्। अप्लुत इति किम् तिष्ठतु पय आग्निदत्ता गुरोरनृत इति प्लुतः। हशि च। ६।१।११४। अप्लुतादतः परस्य रोरुः स्याद्धशि। शि
वो वन्द्यः। रोरित्युकारानुबन्धग्रहणान्नेह। प्रातरत्र। यातगौच्छ। देवास इह इति स्थिते रुत्वम्। भो भगो अघो अपूर्वस्य योऽशि। ८।३।१७। एतत्
पूर्वस्य रोर्यादेशः स्यादशि परे। असन्धिः सौत्रः। लोपः शाकल्यस्य। देवा इह। देवायिह अशि किम्॥ देवास्सन्ति। यद्यपीह यत्वस्याऽसिद्
त्वाद्विसर्गो लभ्यते। तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाच्चत्वं स्यात्। न ह्ययमल्विधिः। रोरिति समुदायरूपाश्रयणात्। भोस् भगोस् अ
घोस् इति सकारान्ता निपाताः। तेषां रोर्यत्वे कृते॥ ११ ज्ञोनदेतौसदित्यादिलिंगात् तद्भिन्नादिचीति पूर्वसवर्णदीर्घे निषिद्धे पुनरुत्सर्गस्य वृद्धेः प्रवृत्त्यै

व सिध्यति नान्यथेति। नन्वेवं नातः पादमव्यपर इति पाठे सुजाते अश्वसूनृते। उप प्रयन्तो अध्वरमित्यादावेङः पदान्तादतीति पूर्वरूपमेव हितेन निषिध्यते। तस्मिंश्च
निषिद्धे एचोऽयवायाव इत्युत्सर्गोऽपि प्रवर्त्तताम् एवं वा बाधके निषिद्धे बाध्यमपि क्वचिन्नेति स्वीकाराज्जातिसिद्धेः॥ भो भगो। असंधिः सौत्र इति। सूत्रे कृतः सौत्रः कृतलव्येत्य
ण्। भगो अघो शब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः यदि तु भोस् भगोस् अघोस् इति सान्तरं तवानुकृत्य भो इत्यादीनां त्रयाणां अलोऽन्त्यस्य॥ ॥

पःस्यात् अपूर्वस्परोश्चेतिव्याख्यायते तर्हि असंभविन्याप्यएवेतिवोध्यं ननु रोरुकारस्यानुबंधत्वाद्रेफमात्रे विसर्गस्थानितथाच अनल्विधाविति स्थानिवद्भावो न स्यादि
त्याशंक्याह नत्वयमिति। यथा अग्रहीदित्यत्र ग्रहोलिटि दीर्घस्य स्थानिवद्भावेन इट्त्वान्न इटईटीति प्रवर्त्तते एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्त्ततेति भावः।
यच यपिरोरीत्यतो र इत्यनुवर्त्य रो यो रेफः तस्य यादेश इतिव्याख्याने अयमल्विधिरेव तथापि उत्तरार्थं कर्त्तव्यमशिग्रहणं र इत्यस्यानुवृत्तिः शवारणार्थमिहैव
कृतं। निपाता इति। भोभगो इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र वोध्याः। यदि तु विभाषा भवद्भगवदघवतामोच्चावस्येति वार्त्तिकेन एषां रुः स्यात्। अवस्योका
रो वा संबुद्धावित्यर्थकेन निष्पन्ना एव भोःशब्दादयो नृत्स्वेरनंतसाग्रह्लिंगैकवचनमात्रे भोहरे इत्यादिसिद्धावपि भोहरिहरौ भोगंगे इत्यादि न सिद्ध्येत्तस्माद्विभाषा
भवदिति वार्त्तिकं नावश्यमाश्रयणीयमिति भावः। मनोरमायां तु भाष्यस्वरसरीत्या तु विभाषेति वार्त्तिकमारब्धव्यमेवेत्युक्तं तथाहि हे भगवन् इतिवत् हेभो इति
प्रयोगस्यापि इष्टत्वात्तस्य च वार्त्तिकारंभ एव सिद्धेः स्युः पाद्यष्टाउ गहे हे भोरित्यमरोक्तानां तु संबोधनार्थानां निपातानां सहप्रयोगायोगात्।। किंच।। अत्र भवान् ह
रिः तत्रभवान् ततोभवानिति वत्तत्रभो इत्याद्यपि वार्त्तिके सत्येव सिध्यति इतराभ्योपि दृश्यंते इति सर्वविभक्त्यंतात्त्रतसोर्भवदादियोग एव इष्टत्वात्। किंच। आमंत्रितत्वे
पदात्परस्याष्टमिकनिघातः। आमंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्भावश्चेत्यादि सिध्यति नान्यथा। भोहरिहरावित्यादि सिद्धये भो इति निपातोप्यवश्य
मभ्युपगंतव्यः। यदि तु भगो अघो इति प्रामाणिकौ तर्हि स्तानामवार्त्तिकं नूतनप्रयोजनाय स्वीकर्तव्यमेवेति दिक्। स्यादेतत्। निपातानामभ्युपगमेयत्नविधेयो तएव गृह्ये
रन् प्रतिपदोक्तत्वान्न तु संबुद्ध्यंताः लाक्षणिकत्वादिति चेन्मैवं स्वरितेनाधिकार इत्यत्राधिकःकारोधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्याभ
यग्रहणात्। लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वाच्च अनित्यत्वे लिंगं भुवश्चमहाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणं यावत्पुरेति सूत्रे निपातग्रहणं चान चैवं
लाक्षणिकानामपि ग्रहणे विभोरिदं सुप्रभागो यस्य स सुप्रभगुः तस्य सुप्रभगोरिदं रघोरिदं इत्यत्रापि यत्वापत्तिरिति वाच्यं। परस्परसाहचर्येण निपातानां वा
र्त्तिकोक्तानां च ग्रहणेप्यन्येषामग्रहणात् साहचर्यं त्वेषां संबोधनार्थ इति वोध्यं। भो इत्यादीनां त्रयाणामलोत्यस्य यःस्यादिति व्याख्याने तु अर्थवद्ग्रहणपरिभाषया
नातिप्रसंगः। न चाजहत्स्वार्थावृत्तिरिति पक्षे विभोरिदं प्रभोरिदमित्यत्र भोः इत्येकदेशस्य अर्थोस्तीति शंक्यं जहत्स्वार्थावृत्तिरिति मुख्यपक्षे तदभावादिति दिक्।।

सु॰
सि॰कौ॰
टी॰त॰
३९

व्योर्लघु। वकारयकारयोरिति। भोभगोअघोअपूर्वेयोरित्यर्थः। लघुप्रयत्नतरः लघूच्चारणात्तरः। सचांतरतम्याह्रस्वः। यस्य यत्नाहावयानिति विधानसामर्थ्यात्त
लघुप्रयत्नतरस्य न भवतीत्याशयेनाह। अलघुप्रयत्नस्येति। भोयच्युतेति। एवं भगोयच्युत। अघोयच्युत। वकारस्योदाहरणं तु असावादित्यः। एतच्च काशिकायां स्पष्टं
उत्तरार्थं पदग्रहणमिति। वस्तुतस्तूत्तरत्रापि नोपयुज्यते पदस्येत्यनुवृत्त्यैव निर्वाहात्। उञि च पदे इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानात्परमं
डिनावित्यादौ ङमुण्णेति प्राचो व्याख्यानस्य ङमो ह्रस्वादचीति सूत्रे मनोरमायां निरस्तत्वाच्च। न तु हलि सर्वेषामित्यत्र पदेग्रहणानुवृत्तौ हलादौ पदे इति व्याख्यानलाभात् वृ
क्षवृभ्यां वृक्षवृभिरित्यत्र वस्य नित्यं लोपो न भवति। किं तु लोपः शाकल्यस्येति वैकल्पिक एव लोप इत्यस्ति पदेग्रहणस्य प्रयोजनमिति चेन्मैवं। हलि सर्वेषामि

व्योर्लघुप्रयत्नतरः शाकटायनस्य ८।३।१८ पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे। यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां
शैथिल्यं भवति स लघूच्चारणः। ओतो गार्ग्यस्य ८।३।२० ओकारात्परस्य पदान्तस्याऽलघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात्। गार्ग्यग्रहणं पू
जार्थम्। भो अच्युत। लघुप्रयत्नपक्षे भोयच्युत। पदान्तस्य किम्। तोयम्। उञि च पदे ८।३।२१ अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोप उञि परे।
स उ एकाग्निः। पदे किम्। तन्त्र्युतम्। वेञः सम्प्रसारणे रूपं। यद्यपि तु प्रतिपदोक्तो निपात उञिति श्रूयते। तर्हि उत्तरार्थं पदग्रहणम्। हलि सर्वेषाम्
८।३।२२ भोभगोअघोअपूर्वस्य लघ्वऽलघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन। भो देवाः। भो लक्ष्मि। भो विद्वद्वृन्द। भगो नमस्ते।
। अघो याहि। देवा नम्याः। देवा यान्ति। हलि किम्। देवा यिह॥ ९९ त्यत्र वस्यानुवर्तितत्वात्। किं च माभ्यां माभिरित्यत्र भ्यामादौ परतो यस्य विकल्पेनैव

भवन्मते लोपः स्यात्तत्र हलि सर्वेषामित्यस्याप्रवृत्तेः न चेष्टापत्तिः। भाष्यकारैर्दण्डिनेत्यत्र ङमुडागमस्य ङमो ह्रस्वादचीत्यत्रानुवृत्त्यर्थपदग्रहणमित्युक्तत्वात्। न च तद
वप्रयोजनमस्त्विति वाच्यं ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडिति व्याख्यानेन दण्डिनेत्यत्र ङमुटः प्रसक्त्यभावात्। हलि सर्वेषां। यकारस्येति वका
रस्तु नानुवर्तते। भोभगोअघोअपूर्वस्यासंभवात्। अपूर्वस्यापि संभवति वृक्षव् करोतीति तथापि तत्र लोपाप्रसंगः। अशीत्यनुवर्त्याशा हलो विशेषणात्। वृक्षवृह
सतीत्यादि त्वनभिधानादसाध्वित्याहुः। गव्यमित्यत्र तु पदांतत्वं नास्ति गव्यूतिरित्यत्र वकारप्रश्लेषान्न वलोप इत्युक्तं॥ ॥ ॥

शम॰
३९

रेवान्म्या इति। अत्र लोपो व्योर्वलीति न प्रवर्तते तत्प्रति यत्वस्यासिद्धत्वात्॥ हलि किं। देवा यिहेति। उत्तरार्थमावश्यकं हलीति ग्रहणमिहैव कृतं। तेन लोपः शाकल्यस्ये
त्यस्यास्य च विषयविभागोऽत्र सिद्ध्यतीति भावः॥ ॥ रोऽसुपि। असुपीति यदि पर्युदासः स्यात्ततः सुप्सदृशे प्रत्यय एव स्याद्रहर्पतीत्यादौ न त्वहर्भातीत्यादाविति स्यात्
सज्यप्रतिषेध एवेति व्याचष्टे नतु सुपीति। अहरहरिति। नित्यवीप्सयोरिति द्वित्वं। न चात्र रेफादेशस्यासिद्धत्वात्पूर्वेन लोपेऽकारस्यैव रेफः स्यादिति वाच्यं। अह
न्नित्यादौ त्वपरत्वेन लोपाभावं निपात्य द्वितीयेन रुर्विधेय इत्यहन्निति सूत्रे वक्ष्यमाणतया रुत्वापवादस्यापि रेफादेशस्य नकारस्थानिकत्वलाभात्। अहोरात्र इ
ति। अहः सर्वैकदेशेत्यादिना समासांतो वक्ष्यते। रात्राह्नाहाः पुंसीति पुंस्त्वं। अहोरथंतरमिति। रथंतरसाम तेनाह्नः समाहारद्वंद्वः पृथक्पदत्वं वा। अहरादीनामि

रोऽसुपि ८।२।६९॥ अह्नो रेफादेशः स्यादसुपि। रोरपवादः। अहरहः। अहर्गणः। असुपि किम्। अहोभ्याम्। अत्राहन्निति रुत्वम्। रूपरात्रिरथ
न्तरेषु रुत्वम्वाच्यम्॥ अहोरूपं। गतमहो रात्रिरेषा। एकदेशविकृतस्यानन्यत्वात्। अहोरात्रः। अहोरथन्तरम्। अहरादीनाम्पत्यादिषु वा रे
फः। विसर्गापवादः। अहर्पतिः। गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपध्मानीयौ॥ रो रि ८।३।१४ रेफस्य रेफे परे लोपः स्यात्॥ ढ्रलोपे पूर्वस्य दीर्घो
ऽणः ६।३।१११॥ ढरेफौ लोपयतीति तथा तस्मिन्वर्णे अर्थाड्ढकाररेफात्मके परे पूर्वस्याणो दीर्घः स्यात्। पुनारमते। हरीरम्यः। शम्भूराजते॥
अणः किम्। तृढः। वृढः। तृहू हिंसायाम्। वृहू उद्यमने। पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्यैव दीर्घार्थम्। अजर्घाः। लीढः। मनस्‌रथ इत्य
त्र रुत्वे कृते हशि चेत्युत्वे रो रीति लोपे च प्राप्ते॥ ९८ ति। उभयत्राप्यादिशब्दः प्रकारे। तेन स्व्वेस्वारथिनः कविः काव्येनास्वेनेत्यादिग्रहणं। विसर्गापवाद इ
ति। मोराज्जिवद्रेफस्य रेफो विधीयते विकारनिवृत्त्यर्थमिति भावः॥ ढ्रलोप इत्यकार उच्चारणार्थः। ढश्च रश्च ढ्रौ तौ लोपयतीति ढ्रलोपः। णिजंतात्कर्मण्यण्। उपपदस
मासः। तृढो वृढ इति। उदित्वेन वेट्कत्वाद्यस्य विभाषेति निष्ठायां नेट्। ढत्वधत्वष्टुत्वढलोपाः। प्राचा तु ढ इति प्रत्युदाहृतं तदसत् तत्र ढलोपस्यैवाभावात्। दृढः स्थूल
बलयोरिति सूत्रेणादिदृहेर्नकारहकारयोर्लोपः तकारस्य ढत्वं च निपात्यते तेन त्वसिद्धकांडस्थढत्वस्य दृहप्रवृत्तिः दादेर्धातोरिति घत्वेन बाधात्। न चेड्भावो दृढत्वं
न लोपश्च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यंत्येवेति वाच्यं। तथा सति परिवृढ्येत्यत्र ल्यपि लघुपूर्वादिति णेरयादेशो न स्यात्॥ ॥ ॥

पारिट्ढी कन्येत्यत्र इतो मनुष्यजातेरिति ङीषं बाधित्वा अणिञोरिति ष्यङ् स्यात् ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादित्याकरे स्थितम्। ननु परिवृढ्येत्यत्र ल्यबादेशः कथं भवेत्। यावता परिवृढमाचष्ट इति णिच् कृते क्त्वाप्रत्यये च त्वक्तं तदेव परे रन्तर्भावात् समासाभावः। इति चेत्। अत्र कैयटः संग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात् परिशब्दं पृथक् कृत्य दृढशब्दादेव णिच् क्रियते णिजन्तस्य धातुत्वात् क्त्वाप्रत्यये कृते परेः क्त्वान्तेन कृदुतेन समास इति सिद्धो ल्यबादेशः॥ णा विद्धवड्ढा वाडभाव इति। ननु पूर्वस्येति व्यर्थं सप्तमीनिर्देशादेव तल्लाभात्। अत आह। पूर्वग्रहणमित्यादि। ढ्रलोपे पूर्वस्येति। सूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव ढरेफयोः परतो दीर्घः स्यात्। ननु लीढः अजर्घा इत्यत्रेति भावः। यद्यप्यसंभवादेवानुत्तरपदस्थढकारे दीर्घो भवेत्तथाप्यजर्घा इत्यत्र दीर्घो न स्यादिति ज्ञेयम्। वस्तुतस्तु उत्तरपद

विप्रतिषेधे परं कार्यम् १।४।२। तुल्यबलविरोधे परं कार्यं स्यात्। इति लोपे प्राप्ते पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव। मनोरथः। एतत्तदोः सुलोपो कोरनञ्समासे हलि ६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। अकोः किम्। एषको रुद्रः। अनञ्समासे किम्। असः शिवः। हलि किम्। एषोऽत्र। सोऽचि लोपे चेत्पादपूरणम् ६।१।१३४। स इत्येतस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत। सेमामविड्ढि प्रभृतिम्। इह कस्मात् एवं गृह्यत इति वामनः। अविशेषात् श्लोकपादेऽपीत्यपरे। सैष दाशरथी रामः। लोपे चेदिति किम्। स इत् क्षेति। स एव भुक्त्वा सत्येवेत्यवधारणान्नु स्यम्। छन्दसि बहुलमिति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते। तेनेह न। सोऽहमाजन्मशुद्धानाम्॥ इति स्वादिसन्धिः॥ ९ स्वसमासचरमावयवे रूढत्वात् तनारमत इत्यादावपि न स्यात्। किं तु नीरक्तं दूरक्तमित्यादावेव स्यादिति तत्त्वम्। लीढ इति। लिह आस्वादने। क्तः ढत्वधत्वष्टुत्वढलोपाः। इह ढलोपं प्रति ष्टुत्वं नासिद्धं ढकारे परतो लोपविधिसामर्थ्यात्। अत एव ढो ढे लोप इत्यस्य पदाधिकारस्थत्वेऽप्यपदान्तस्य ढलोपो भवति। अजर्घा इति। गृधु अभिकाङ्क्षायाम्। यङ्लुकि द्वित्वे अभ्यासस्य रुक्। लङः सिपि शब्लुकि सिप ईडभावपक्षे लघूपधगुणो रपरः। इतश्चेतीकारलोपे हल्ङ्यादिलोपः भष्भावः। जश्त्वं दश्चेति रुत्वपक्षे अजर्घर् इति स्थिते रो रीति रेफलोपे अनेन दीर्घः। अत्रेयं सुगमव्याख्या। ढ्रलोपे पूर्वस्य दीर्घोऽणः। लीढः। नीरक्तं दूरक्तम्। अणः किं। तृढः। वृढः। पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्। अजर्घाः। पुनारमतो हरी रम्यः शंभूराजत इति॥ ✻ ॥ विप्रतिषेधे विप्रतिषेधात् विप्रतिषेधः शास्त्रमाङ्गल्येच विघ

द्धाधातोर्घञ्।उपसर्गात्सुनोतीतिषत्वं।उपसर्गवशाच्चविरोधार्थकत्वं।कार्यमिति।अर्हेकृत्यतृचश्चेत्यर्हार्थेकृत्यप्रत्ययःतेनतुल्यवलविरो धइतिपर्यवसानादतुल्य
वलेषूत्सर्गापवादनित्यान्तरंगवहिरंगविधिषुनेदंप्रवर्तते।नत्वपवादादीनांसन्निधावुत्सर्गादीनांकृत्यर्हत्वंतेवाधितत्वात्तत्रनित्यमावश्यकत्वाद्बाधकमंतरंग
तुलाघवादपवादस्तुवचनप्रामाण्यात्तद्भिन्नस्तुप्रकृतसूत्रस्यविषयः।अतएवपरनित्यांतरंगापवादानामुत्तरोत्तरंवलीयइत्युक्तं।यद्यपितुल्यवलेष्वपिपरमेवस्यात्त
न्नोपपद्येत।ऽतोव्याचष्टे।तुल्यवलविरोधइति।जातौपदार्थेविध्यर्थमिदंसूत्रं।वृक्षेषुवृक्षाभ्यामित्यत्रहिलब्धावकाशयोरेत्वदीर्घत्वशास्त्रयोर्वृक्षेभ्यइत्यत्रप्राप
त्प्रसंगेविनिगमकाभावादप्रतिपत्तिरेवस्यात्।तदुक्तंअप्रतिपत्तिर्वाउभयोस्तुल्यवलत्वादिति तत्रास्माद्वचनात्परस्मिन्कृतेयदिपूर्वस्यापिनिमित्तमस्तितर्हितद
पिभवतियथामिथकीत्यत्रपरत्वाद्द्विर्भावेकृतेप्यकच्।तदुच्यतेपुनःप्रसंगविज्ञानात्सिद्धमिति।व्यक्तौतुपदार्थेतत्तद्व्यक्तिविषयकयोर्लक्षणयोरन्यत्रचरितार्थ
त्वासंभवात्तव्यत्तव्यानीयरामिवपर्यायेणप्रवृत्तौनियमार्थमिदंसूत्रंविप्रतिषेधेपरमेवस्यान्नतुपूर्वमिति।एतल्लक्षणारंभाच्चतत्रतत्रपूर्वस्यानारंभोऽनुमीयते।
तथाचजुहुतात्त्वमित्यत्रपरत्वात्तातङिकृतेस्थानिवद्भावेनहुझल्भ्यइतिधित्वंनभवतितदुच्यते।सकृद्गतौविप्रतिषेधेयद्बाधितंतद्बाधितमेवेति।लक्ष्यानुरोधा
द्व्यवस्थाप्यमेतत् द्वयमपितत्रविधिपक्षेनूत्वेरेफलोपेचप्राप्तेइति पाठ्यं।नियमार्थमितिपक्षेपरमेवकार्यंस्यादित्येवकारोऽध्याहर्तव्योवृत्तौ।उत्वमेवेतिसिद्धासि
द्धयोस्तुतुल्यवलत्वेनविप्रतिषेधेपरमित्यस्याप्रवृत्तौनिष्प्रतिपक्षत्वादुत्वमेवभवतीत्यर्थः।तदुक्तं।पूर्वत्रासिद्धेनास्तिविप्रतिषेधोऽभावादुत्तरस्येति।एतेनविभ
तिकार्यंप्राक्पश्चाद्धल्मत्वइतिवक्ष्यमाणग्रंथोव्याख्यातः।एतत्तदोः।अत्रत्यदाद्यत्वमेकशेषश्चनकृतःसौत्रत्वात्।प्रकृतिवदनुकरणमितिवैकल्पिकातिदेशा
द्धा।एवंचवृत्तावप्येतत्तदोरितिप्रयोगःसाधुः।हल्ङ्याब्भ्यइत्यस्यानंतरमेवेदंलाघवायनकृतं संहिताधिकारोपजीवनादित्याहुः।सूत्रेसुइतिपृथक्पदंतुप्रष
ष्ठीकमित्याह।एतत्तदोर्यस्सुरिति।एतत्तदर्थगतसंख्याभिधायीयःसुस्तस्येत्यर्थः।एतत्तदोर्विहितइतिव्याख्यानेतुपरमसदसातिपरमैषददातीत्यादौसुलोपो
नस्यात्।एतत्तदोःपरइतिव्याख्यानंतुनसंभवति।एतत्तद्भ्यामितिपंचम्यभावात्।एतत्तदोरवयवइतितुनसंभवत्येवसोःप्रत्ययत्वात्तस्मादर्थद्वारकसंवंधस
वाश्रितः तदाश्रयणेलिंगंतुअनञ्समासइतिवोध्यं।एतत्तदोः किं।योददाति।अकोः किमिति।साकच्कयोःशब्दांतरत्वादप्रसंगइतिप्रश्नःएषकइति।अकोशिति

तिषेधएवतन्मध्यपतितस्तद्ग्रहणेनगृह्यतइतिपरिभाषांज्ञापयतीतिभावः।सोचिलोअचीतिविस्पष्टार्थमितिवृत्तौस्थितं।ससइतितच्छब्दस्यप्रथमैकवचनं।तस्यानु
करणात्सुप्तषष्ठीकृमित्याहुसइत्यस्येति।बहुलग्रहणेति।अतएवलोपंविनापादपूरणेपिक्वचिद्भवति।सास्माअरमिति।अत्रवदंतियेतुसोहमाजन्मशुद्धानामित्यादि
सिध्यर्थपादश्लेषच्छोयेसत्येवपूर्येतेतिसावधारणंव्याचख्युस्तेषांसास्मानअरमित्यादौसुलोपानापत्तिः।अत्रहिसःअस्मैइतिच्छेदः।बहुलग्रहणानुवृत्त्यातदुपपाद
नेतुसोहमाजन्मेत्याद्येवतथाउपपाद्यतां।किमवधारणेनेति॥ॐ॥ इतिस्वादिसंधिः॥ ॥अर्थवदधातुप्रत्ययंप्रत्ययांतंचेतिसूत्रेतत्रादिनोभयंविवक्षितमितिभा
वः।अर्थवदितिनपुंसकनिर्देशस्यानुगुणंविशेष्यमध्याहरतिशब्दस्वरूपमिति।अधातुरप्रत्ययइतितूल्लिंगनिर्देशस्तुपरवल्लिंगंद्वंद्वतत्पुरुषयोरित्युत्तरलिंगवृत्त्याहो
ध्यइत्याहुः।यदितुधातुभिन्नमित्यर्थंपरित्यज्यारोपितोधातुरधातुरितिव्याख्यायेततदानपुंसकत्वप्राप्तिशंकैवनास्तीतिज्ञेयं।अर्थवदितिकिं।धनंवनमित्यादौप्रति
वर्णसंज्ञामाभूत्।तस्यांचसत्यांस्वादयःस्युः।ननुसंख्याकर्मादेरभावान्नभविष्यंतीतिचेन्न।एकवचनमुत्सर्गतःकरिष्यतइतिसिद्धांतात्।हुंफडादिभ्यइवसोर्ईर्वास्त्वा

अर्थवदधातुरप्रत्ययःप्रातिपदिकम् १।२।४५ धातुंप्रत्ययंप्रत्ययान्तंचवर्जयित्वाऽर्थवच्छब्दस्वरूपंप्रातिपदिकसंज्ञंस्यात्॥ ॥

त्।नचार्थवद्ग्रहणपरिभाषया अनर्थकेनस्यादितिवाच्यं।तस्याःविशिष्टरूपोपादानविषयत्वात्।माद्रूढोढइत्यत्रतुढइतिविशिष्टरूपमुपात्तमितिक्वचित्तेक
शस्यानर्थकस्याढशब्दस्यग्रहणंनेत्युक्तं।नत्वत्रतथाविशेषरूपस्योपादानमस्ति।यद्यप्यधातुरित्यादिपर्युदासेनार्थवत्त्वंलभ्यतेतथाप्युत्तरार्थमर्थवद्ग्रहणंस्प
ष्टप्रतिपत्तयेइहैवकृतं।नचैकाजद्विर्वचनन्यायेनसमुदायस्यैवसंज्ञास्यात्।नावयवानामित्यर्थवद्ग्रहणंव्यर्थमितिशंक्यंसमुदायेहिदृष्टाअवयवाअपिदृष्टाभ
वंति।वृक्षःप्रचलन्सहावयवैःप्रचलतीतिन्यायात्।इहतुसमुदायेप्रवृत्तयाप्रातिपदिकसंज्ञयानावयवानांतत्कार्यसिद्धिरितिवैषम्यात्।अतएवयत्रबहवोहलः
श्लिष्टास्तत्रद्वयोर्बहूनांवाविशेषेणसंयोगसंज्ञेतिसिद्धांतःसंगच्छते।अन्यथात्वदुपन्यस्तन्यायेनसमुदायएवसंयोगसंज्ञाप्रवर्तेत।अत्रकेचित्।धनंवनमित्या
प्रतिवर्णंसत्यामपिसंज्ञायांसत्त्वपिस्वादिषुनक्षतिः।हल्ङ्यादिनासुलोपात्।नचनलोपोधस्यजश्त्वंचस्यादितिशंक्यं।धातुपाठेधनवनेत्युच्चारणसामर्थ्यात्
प्रवृत्तेरित्याहुस्तदसत्।अकारात्सोरुत्यत्तौरुत्वप्रवृत्तेः।यद्य पिसमुदितप्रातिपदिकस्यावयवत्वेनसुपोलुकिरुत्वंनभवेत्तथापिचिकीर्षतिविप्रइत्यादौरेफघकार

पदांतत्वेसतिखरवसानयोरितिविसर्गस्ययरोनुनासिकेनुनासिकस्यचप्रसंगादितिदिक्॥अथात्तुःकिं।अहन्धातोःप्रातिपदिकसंज्ञायांसत्यांतिङंस्वाद्यपवादत्वा
दहन्नित्यत्रहंतेस्तिपिसिपिवाकृतेइतश्चेतिइकारलोपेहल्ङ्यादिलोपेचप्राकृतेताप्रातिपदिकसंज्ञानापगेतेतिनलोपः प्रातिपदिकांतस्येतिनलोपःस्यात्तन्मा
भूत्।अहन्नितिरुत्वंरोऽसुपीतिरत्वंचेहनशंक्यंलाक्षणिकत्वात्।नचकार्यकालपक्षेप्रत्ययांतत्वेनपर्युदासात्।प्रातिपदिकसंज्ञाभावेननलोपोनभवेदितिवाच्यं।
प्रत्ययलक्षणेनउक्तपर्युदासप्रवृत्तेर्नङिसंबुध्योरितिनिषेधेनज्ञापितत्वात्॥कथमन्यथाराजेत्यादौनलोपःस्यात्।यद्यपिव्युत्पत्तिपक्षेराजन्शब्दस्यकनिन्प्र
त्ययांततयाकृत्तद्धितेतिप्रातिपदिकसंज्ञायांराजेत्यादौनलोपःस्यात्।तथाचनङिसंबुध्योरितिनिषेधोनज्ञापकइतिकार्यकालपक्षेऽधातुग्रहणंव्यर्थं तथाप्यव्यु
त्पत्तिपक्षेज्ञापकएवेतिकार्यकालेपितत्स्वीकर्तव्यं नचसुपोधात्वितिसूत्रेप्रातिपदिकात्पृथग्धातुग्रहणाद्धातोर्नेयंसंज्ञेतिवाच्यं।पचतीयतीत्यादौप्रत्ययांतेधातु
ग्रहणस्यचरितार्थत्वात्।अप्रत्ययःकिं।हरिषु।करोषि।अत्रसुप्सिपोर्माभूत्।अप्रत्ययांतःकिं।तेनैवविभक्तिविशिष्टयोर्माभूत्।नचांतवद्भावेनकांडेकुंडेइत्यादौ
प्रातिपदिकत्वंस्यादेवतथाचह्रस्वोनपुंसकइतिह्रस्वःसोरुत्पत्तिश्चस्यादितिवाच्यं।सप्तम्यधिकरणेचेत्यादिनिर्देशेनविभक्त्येकादेशस्यांतवद्भावानभ्युपग
मादितिदिक्।ननुप्रत्ययपर्युदासोनकर्तव्यःप्रत्ययांतपर्युदासेनैवगतार्थत्वात्।व्यपदेशिवद्भावेनतस्यापिप्रत्ययांतत्वात् इतिचेन्मैवं।प्रत्ययग्रहणेयस्मात्स
विहितस्तदादेर्ग्रहणात् केवलस्यचातथात्वात्॥अन्यथासुसिङोरपितदंतत्वात्पदत्वंस्यात्।तथाचहरिषुकरोषीत्यादौषत्वंनस्यात्।सात्पदाद्योरितिनिषेधात्।
नचषत्वविधेर्निरवकाशतासर्पिषएषइत्यादौचरितार्थत्वात्।अन्येतुव्याचक्षतेकृत्तद्धि तेत्यत्रहितदंतविधिर्वक्ष्यते।तथाचतद्धितग्रहणस्यतद्धितांतानामेव
नत्वन्यप्रत्ययांतानांसंज्ञेतिनियमार्थतामाश्रित्यप्रत्ययांतपर्युदासोननकर्तव्यः।अथवासात्पदाद्योरितिसूत्रेसातिग्रहणात्प्रत्ययोनप्रातिपदिकमितिसिद्धे
प्रत्ययग्रहणसामर्थ्यात्तदंतपरं।उत्तरसूत्रेतद्धितग्रहणंविध्यर्थमेवास्तु।यद्वासातिग्रहणात्प्रत्ययस्यप्रातिपदिकत्वाभावेतद्धितग्रहणस्योक्तरीत्यानियमा
र्थत्वेचार्थवदधातुःप्रातिपदिकमित्येवसुवचमितितेषामिकोयणाचीतिसूत्रंव्यर्थंस्यात् तस्मादित्युत्तरस्यवाग्रहणपितुषसइत्यादिनिर्देशात्ज्ञापकादिष्ट
सिद्धेः।नाझलावितिअत्राकारसहितोच् आजितिमूलस्थग्रंथोयमपिविरुध्येत।कालसमयवेलास्वित्यादिज्ञापकादेवढत्वाभावसिद्धेः।यदिज्ञापकेनप्र

त्याख्यानमयुक्तमिति यदि वाऽऽकारप्रश्लेषे एवतल्लिंगमित्यादि दृत्वाभ्युपगमे सूत्राक्षरैरेवेष्टं सिध्यतीत्युच्येत तर्हि अप्रत्यये त्येतदभ्युपगम्य प्रत्ययपर्युदा
से सातिग्रहणं लिंगं प्रत्ययांतपर्युदासे तु तद्धितग्रहणमित्यप्रत्ययग्रहणमेवावर्त्य व्याख्यायतां किमनया कुसृष्ट्येति दिक्। अधातुप्रत्ययावितिसिद्धे नत्रद्व
योपादानमप्रत्यय इत्यस्यावृत्तिसौकर्यार्थं। महासंज्ञाकरणं स्त्वन्वर्थत्वात्। तथा चार्थवत्त्वोपपद्यते। को धातुः किं प्रातिपदिकं वा प्रत्यय इति डित्थादीन्यव्युत्पन्ना
नीहोदाहरणं। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः। वस्तुतस्तु व्युत्पत्तिपक्षे बहुपटव इत्याद्यर्थं सूत्रमिति नव्याः। नन्वेवं बहुच्पूर्वः प्रातिपदिकमित्ये
व सूत्र्यतामिति वाच्यं। मूलकेनोपदंशमित्यादौ कृदंतत्वेनातिप्रसंगात् गतिकारकपूर्वस्यापि कृदंतत्वात्। न च समासग्रहणं नियमार्थमिति निस्तारः। अर्थ
वत्सूत्रारंभं विना समासग्रहणस्य नियमार्थत्वायोगात्॥ ॥ कृत्तद्धितसमासाश्च। अर्थवदित्यनुवर्तते तत्सामर्थ्यात्तदंतविधिः। नन्वयच्चार्थवत्ता पारमार्थिकी वि

कृत्तद्धितसमासाश्च १।२।४६। कृत्तद्धितान्तौ समासश्च प्रातिपदिकसंज्ञाः स्युः। पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थं
म् । यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैवेति। तेन वाक्यस्य न॥ प्रत्ययः ३।१।१। आपञ्चमपरिसमाप्तेरधि
कारोऽयम्। परश्च ३।१।२ अयमपि तथा॥ ९९ वक्ष्यते सा पदस्य वाक्यस्य वा अस्ति न तु कृत्तद्धितांतस्य यदि तु प्रक्रियादशायां याकाचित्तासा
विवक्ष्यते तर्हि कृत्तद्धितयोरपि सा अस्तीति कथमर्थवद्ग्रहणानुवृत्त्या तदंतग्रहणमिति चेदत्राहुः। अत एवार्थवद्ग्रहणसामर्थ्यमुक्तं प्रत्ययांतेन स्वे का
र्थीभूते न प्रतीयमानोऽर्थ इह गृह्यते। तस्य लोकिकार्थं प्रतिप्रत्यासन्नतरत्वात् मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात् अत एव तदुपादानं सार्थकं पूर्वसूत्रेऽप्र
धातुरिति पर्युदासबलेनापि तल्लाभसंभवादिति। तदेतत्सकलमभिप्रेत्याह। कृत्तद्धितांताविति। लिङ्। उकृइत्यादावधातुरिति कर्तोऽभ्युपगव इत्यादौ अप्रत्ययां
तमिति पर्युदासे प्राप्ते कृत्तद्धितेत्यारंभः नियमार्थमिति। न च प्रत्ययांतत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शंक्यं। वाक्यस्याप्रत्ययांतत्वात्। प्रत्ययग्रहणे यस्मात्स
हितस्तदादेरेव ग्रहणात्। न चैवमपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावाद्राजकुमारीत्यादौ अंते विध्यर्थमस्त्विति वाच्यं। अंतरंगानपि विधीन्बहिरं
गो लुग्बाधत इति लुग्विषये हल्ङ्याब्भ्यो लोपाप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः। तत्र च कुमारीशब्दस्य सुबंतत्वेपि॥ ॥ ॥ ॥

राजकुमारीशब्दस्यातथात्वात् प्रत्ययांतत्वेन प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात्। अतएव गोमत्प्रियइत्यादौ नुमादयो न लुकः
प्रागंतरंगस्य हल्ङ्याब्भ्यो लोपस्य प्रवृत्तौ नुमसुरेवेति दिक्। नियमशरीरमाह। यत्र संघात इति। नियमश्चात्र सजातीयापेक्ष इत्याह। पूर्वो भागः पदमिति। षड्विधपि
समासे पूर्वभागस्य पदत्वाव्यभिचाराद्भवत्ययं सजातीयः पूर्वो भाग इत्युपलक्षणं। उत्तरस्तु प्रत्ययो नेत्यपि बोध्यं। अन्यथा जन्मवानित्यादौ संज्ञा न स्यात्। स्यादि ष्वि
त्यनेन पूर्वभागस्य पदत्वात्। नच तद्धितग्रहणसामर्थ्यात्तत्र स्यादेवेति वाच्यं। तद्धितग्रहणस्य भानव इत्यादौ कृतार्थत्वात्तत्र हि पूर्वभागस्य भत्वेन तु पदत्वं। नचैव
मयमिया नित्यादिसमुदायस्य प्रातिपदिकत्वं स्यादेव पूर्वभागस्य पदत्वेप्युत्तरस्य प्रत्ययत्वादनेन नियमेन वारयितुमशक्यत्वादिति वाच्यं। उत्तरस्तु प्रत्ययो नेत्यत्र
तद्धिहितप्रत्ययो नेति व्याख्यानात्। पूर्वो भागः पदमिति किं। बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात्। तेन बहुपटव इत्यत्र उपोत्तमोदात्तत्वं सिध्यति। प्रथ
मजसो लुकि चितः सप्रकृतेर्बह्वकजर्थमिति चित्स्वरे कृते पुनर्जस उत्पत्तेः। प्रातिपदिकसंज्ञायामसत्यां तु जसेवोदात्तः स्यात् यद्वा। प्रकृतिप्रत्ययभावेनाऽपन्नस्
घातस्य चेद्भवति तर्हि समासस्यैवेति नियमार्थं समासग्रहणं तेन गवित्ययमाहेत्यादौ नातिप्रसंग इति दिक्। नियमफलमाह। तेन वाक्यस्य नेति। गामभ्याजशु
क्लामित्यादिवाक्यस्य न भवतीत्यर्थः। सत्यां हि संज्ञायां सुप्लुक् स्यात्। नचैवमपि मूलकेनोपदंशं भुंक्ते इत्यादिवाक्यस्य संज्ञा दुर्वारा कृद्ग्रहणे गतिकारकपूर्व
स्यापि ग्रहणादिति चेन्मैवं। समासग्रहणकृतनियमेन परत्वाद्बाधात्। एवं च कृत्तद्धितेति सूत्रे कृद्ग्रहणपरिभाषा निष्फलत्वान्नोपतिष्ठते तस्याश्च परिभाषा
याः व्यावक्रोशी व्यावहासीत्यत्रावकाशः तत्र हि कर्मव्यतिहारे णच् स्त्रियामिति धातोर्णचि कृते गतिपूर्वस्य णजंतत्वात् णचः स्त्रियामित्यञि सत्युपसर्गाकारस्या
दिवृद्धिस्वरौ भवतः। कृद्ग्रहणे कारकपूर्वस्याप्युदाहरणं भवतां नेन कुलस्थितमित्यादि स्फुटीभविष्यति। चकारोऽनुक्तसमुच्चयार्थः। तेन निपातस्यानर्थक
स्य प्रातिपदिकसंज्ञा वक्तव्येति वार्तिकं गतार्थं। येषां द्योत्योप्यर्थो नास्ति तदर्थमिदं। अवयति। अत्र करणेऽवतअवकार्येण सहाभेदविवक्षायामर्थवत्ता
भावादेव न प्रातिपदिकत्वं। भू सत्तायामिति यथा। भेदविवक्षायां तु संज्ञा स्यादेव भुवोऽवगीति यथा। अधिकारोऽयमिति। प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इ

ङ्याप्प्रातिपदिकात्॥ समाहारद्वंद्वादेकवचनं। ङी ति ङीप् ङीष् ङीनां सामान्यग्रहणं। आविति चटाप् डाप् चापां। आपंचमसमाप्तेरिति। ननु घकालतनेष्विति ज्ञापका त्सुबंतात्तद्धितोत्पत्तिरित्यभ्युपगतेः किमर्थस्तद्धितेषु प्रातिपदिकाधिकार इति चेदत्राहुः। असतित्वधिकारे अत इञित्यत्रातइत्येतत्सुबंतस्यैव विशेषणं स्यात्। ततश्च दक्षस्यापत्यमित्यत्रैव इञ् स्यान्नतु दक्षयोर्दक्षाणामित्यत्र। किंचावृद्धाच्छ इत्यत्र वृद्धमित्येतत्सुबंतविशेषणं माभूत्। अन्यथा जानंतीति ज्ञाः इगुप धेति कः। ज्ञानाम यमित्यत्र सुबंतस्य वृद्धत्वात् छः स्यात्। प्रातिपदिकाधिकारे तु वृद्धं यत्प्रातिपदिकं तत्प्रकृतिकात्सुबंतात् छ इत्यर्थलाभादिह प्रातिपदिकस्या वृद्धत्वाच्छो न भवति। किंतु अण् एव भवति। शब्दकौस्तुभे तु सत्यस्मिन्नधिकारे वाक्यादपि कप्रत्ययादयः स्युः। ततो विशिष्टस्य प्रातिपदिकतया सकलसुब्लो पे सत्यपि स्वार्थेऽपि नाशः स्यादिष्टमेव वा निष्टमिति स्थितं। लिंगविशिष्टस्येति। लिंगबोधकप्रत्ययविशिष्टस्यापीत्यर्थः। परिभाषायाः प्रयोजनं स्पष्टं। प्रत्ययात्वेनाप्रातिपदिकत्वेपि इ

ङ्याप्प्रातिपदिकात्। ४।१।१। ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्या पञ्चमपरिसमाप्तेरधिकारः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि त्युक्तेरिह ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्। ङ्याब्भ्याम्प्राग्माभूदित्येवमर्थम्॥ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसि भ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्। ४।१।२। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः। सुङसोरुकारेकारौ जशटङपाश्चेतः ॥

ह्रस्वादपः। न च स्वश्रुरः स्वश्र्वा इति निर्देशादेव स्वादिसिद्धिरिति वाच्यं। निर्देशस्य शब्दपरत्वात्। विपराभ्यां जेः ङेः प्रे इति वत्। किंच कुमारीमाचष्टे कुमारयति णा विष्ठवदिति टिलोपः। एवं यामिन्य इवाचरंति यामिनयंतीत्यत्राचारे क्विपि फलं। ङ्याब्भ्यां प्रागिति। तेन एनिका आर्यिका च सिध्यति। तथाहि। न सामिवचन इ ति ज्ञापयिष्यमाणोऽस्त्येतः स्वार्थिकः कन्। एतार्य शब्दाभ्यां ङ्यापौ बाधेत ततश्च एतिका आर्यिके त्येव रूपं स्यात्। ङ्याब्ग्रहणसामर्थ्यात्तु ङीबंतात्क एनिके त्ये पि सिध्यति। वर्णादनुदात्तादित्यस्य वैकल्पिकत्वात्। आबंतात्क निउदीचामातः स्थाने इतीत्व विकल्पादार्यिका आर्यिके ति रूपद्वयं सिध्यति। वस्तुतस्तु ङ्यापो र्ग्रहणं मास्तु घकालतनेष्वित्यलुग्विधानसामर्थ्यात्सुबंतात्तद्धितोत्पत्तिरिति हि निष्कर्षः। तथा च सुपः प्रागेव ङ्यापौ प्रवर्तेते। स्वार्थद्रव्यलिंगसंख्याका रकप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयं। स्वौजसमौट्। समाहारद्वंद्वः। सुङ स्योरिति। सोरुकारोऽर्वणस्त्रसावित्यत्र विशेषणार्थः। भसौ ॥ ॥

बहुषु। अयमपि संख्यापर एवेत्याह बहुत्व इति। बहुवचनत्वं। अपद्रव्यगतं बहुत्वं धर्मे आरोप्य कृतं। तत्फलं तु बहुः पर्वत इति वैपुल्यवाचिनो नेह ग्रहणमिति सूच
नमेवावसुतो व्यर्थे तत्परत्वादेकवचनसंभवादिति शब्दकौस्तुभादौ स्थितं। रुत्वविसर्गाविति। ननु रुत्वस्यासिद्धत्वादकारस्येत्संज्ञालोपयोरभावात् स्यान्निवृत्ता
देश इत्यस्यापि त्रिपाद्यामप्रवृत्या रेफात्तस्य सुप्तिङन्तमिति पदसंज्ञाभावेन च विसर्गोऽत्र दुर्लभः। विधेस्तु पुनरित्यादौ चरितार्थत्वादिति चेन्मैवं। न मु न इति सूत्रे नेति यो
गविभागस्य असिद्धं नेति व्याख्यायां भिसुः सिद्धिरित्युक्तत्वात्। राम इति। संज्ञाशब्दोऽयमव्युत्पन्न इति पक्षे अर्थवत्सूत्रेण प्रातिपदिकसंज्ञा। कारणाधिकरणयोश्चेत्यधि
कारे घापवादेन हलश्चेति घञा रमन्ते ऽस्मिन्निति व्युत्पादने तु कृत्तद्धितेति सूत्रेणेति विवेकः। अत्र केचित् परिष्कुर्वन्ति। गन्धर्वः शरभो रामः सृमरो गवयः शशः। इत्या
दयो मृगेन्द्राद्यागवाद्याः पशुजातय इत्यमरोक्त्या यदि पशुविशेषे प्रयुज्यते तदा रूढोऽयं रामशब्द इत्यर्थवत्सूत्रेण संज्ञा। यदा तु रामचन्द्रे भगवति प्रयुज्यते तदा रमन्ते
योगिनो यस्मिन्निति व्युत्पत्त्याश्रयणात् कृत्तद्धितेति सूत्रेण संज्ञेति। सरूपाणामेकशेष। इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थः। न च विरूपेष्वेकशेषप्रसक्त्या घ

बहुषु बहुवचनम् ।१।४।२१। बहुत्वे एतत् स्यात्। रुत्वविसर्गौ। रामः। सरूपाणामेकशेष एकविभक्तौ ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव
दृष्टानि तेषामेक एव शिष्यते। प्रथमयोः पूर्वसवर्णः। नादिचि। वृद्धिरेचि। रामौ ॥

" टकलशाविति द्वन्द्वापत्तिरिति शंक्यं विरूपाणामिति वार्तिकस्य
वक्ष्यमाणत्वात्। वस्तुतस्तु सूत्राक्षरैरेव वार्तिकार्थो लभ्यते। रूप्यते बोध्यते इति रूपमर्थः। समानं रूपं येषामिति सरूपाः ज्योतिर्जनपदेत्यादिना समानस्य सभाव.
तथा समानं रूपं स्वरूपं येषां ते सरूपाः सरूपाश्च सरूपाश्च सरूपाश्च सरूपाः तेषामित्येकशेषेण व्याख्यानात्। न च स्वांगस्वव्यापारायोगः वाक्यापरिसमाप्तिन्यायादि
ति वाच्यं। उद्देश्यतावच्छेदक[illegible]रूपाक्रान्ततया स्वस्मिन्नपि प्रवृत्तेः। अन्यथा तुल्यास्यप्रयत्नमित्यादौ सवर्णदीर्घो न स्यात्। तथा अर्थवत्सूत्रान्तर्गतानां प्रातिपदि
कत्वं प्रत्ययः परश्चेत्यत्र सुप्रत्ययः। ससजुषो रुरित्यत्र रुः। खरवसानयोरिति सूत्रे विसर्गश्च न स्यादिति सर्वोपप्लवः स्यात्। त्वोध्यायो ध्येतव्य इत्यस्य नेह नानेत्यादि
श्रुतेश्च स्वस्मिन्नपि यथा प्रवृत्तिस्तथा दीर्घादीनामपीति च तुल्यमेकशेषेऽपि। एतेन अइउण् इत्यादावाद्गुण इत्यादिसंधिकार्यं कुतो नेत्याशंकायां वर्णोपदेशकाले ऽ
जादिसंज्ञानामनिष्पादात्सन्धिर्नेति केषांचित्समाधानं परास्तं। वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां गुणादीनामप्रवृत्तेरित्याहुस्तत्त्वस्य

रवउद्देश्यतावच्छेदकरूपाक्रांतेवर्णोपदेशादावपिप्रवृत्तेरावश्यकत्वात्। स्यादेतत्। सरूपाणामेकएकविभक्तौ इत्येवसूत्रमस्तु किमनेनशेषग्रहणेन। अत्राहुः।
तथाहिसतिसरूपाणांस्थानेएकोन्तरतमआदेशोभवतीत्यर्थःस्यात्तथाचाश्वश्वाश्वश्वेत्यत्रोदात्तद्वयवतःस्थानेउदात्तद्वयवानादेशः। तथाअनुदात्तद्वयवतःस्था
नेअनुदात्तद्वयवानादेशःप्रसज्येतेति। एकविभक्तौयानीति। विभक्तिःसारूप्येउपलक्षणंनत्वेकशेषेनिमित्तं। एवंचानैमित्तिकत्वेनान्तरंगोयमेकशेषःसुबुत्पत्तेःप्रा
गेवप्रवर्तते। यद्येतन्नारभ्येततर्हिप्रत्येकंविभक्तिःस्यात्द्वंद्वश्चप्रवर्तेत। आरब्धेत्वेकशेषेऽनेकसुबंतविरहान्नद्वंद्वप्राप्तिरेवनास्तीतिभावः। ननुसुबुत्पत्तेःप्रागे
कशेषप्रवृत्तौशिष्यमाणंयत्प्रातिपदिकंतदेकमेवार्थंबोधयतीतिद्विवचनाद्यनुत्पत्तौरामोरामाइत्यादिनसिध्येत्। नैषदोषः। शिष्यमाणस्यलुप्यमानार्थाभि
धायित्वात्। अतएवकृत्तद्धितसमासैकशेषेत्येकशेषोवृत्तिषुगण्यते। परार्थाभिधानंहिवृत्तिः। अतएवचलुप्तेपिप्रत्ययेलिट् धकृइत्यादौकर्ताप्रतीयतइतिदि
क्। सरूपाण्येवेति। एतच्चउत्तरसूत्रस्थस्यैवकारस्यइहानुकर्षणाल्लभ्यते। अत्रचएकस्यामपिविभक्तौपरतःविरूपाणिनदृष्टानीतिपर्यवसन्नोर्थः। तेनमातृशब्द
योर्जननीवाचिपरिच्छेतृवाचिनोर्नैकशेषःमातृभ्यांमातृभिरित्यादौसारूप्येपिओजसादिषुवैरूप्यात्। नन्वेवंपयःपयोनयतिदेवदेवेत्यादावतिप्रसंगःस्यादेवेति
चेदुच्यते। सहविवक्षायामेवएकशेषःप्रवर्तते। इतरेतरयोगद्वंद्वस्यविषयइतियावत्। यत्रत्वनेकस्यार्थस्यमिलितस्यइतरान्वयःसतथाभूतोविषयः। इदंचइदि
तोनुम्धातोरितिलिंगाल्लभ्यतेन्यायाच्च। तथाहि। यच्छिष्यतेसलुप्यमानार्थाभिधायीतिइतिस्थितेश्रूयमाणैकशब्दोपस्थितंसर्वमविशेषादेकरूप्येणैवान्वेतुम
र्हति। यद्वा। तिष्यपुनर्वस्वोरितिसूत्रात्द्वंद्वेइत्यनुवर्त्यद्वंद्वेप्रसक्तेसतिइतिव्याख्येयं। नतुद्वंद्वेकृतेसतीति। पंथानौपंथानइत्यादौऋक्पूरब्धूरित्यादिनासमासा
न्तापत्तेः करीकराइत्यादौद्वंद्वश्चप्राणितूर्येत्यादिनाएकवद्भावापत्तेश्चेतिदिक्। सूत्रेशेषशब्दःकर्मसाधनइत्याह। एकएवशिष्यतइति। असत्येकग्रहणेद्विबह्वोरपि
शेषःस्यादित्येकग्रहणं। नन्वेवमप्येकविभक्तावित्यत्रएकग्रहणंव्यर्थमितिशंक्यं। एकस्यामपिविभक्तौपरतःविरूपाणिनदृष्टानीत्यर्थलाभायतस्यावश्यकत्वा
त्। किंच। स्वसाचस्वसारौचेत्यादौविभक्तौपरतःस्वंभागयोर्वैरूप्यदर्शनात्स्वसारइत्येकशेषस्तत्रनस्यात्।। तथास्वसारिचस्वस्रोश्चेत्यत्रवैरूप्यदर्शनात्स्वसृष्वि
॥

तिनस्यात्। किंतु कमलौ कमलस्यादिष्वेव स्यात्। कृते त्वेकग्रहणे नायं दोषः प्रसज्यते। एकविभक्तौ परतः सर्वत्र वैरूप्यादर्शनात्। यदा तु विभक्ताविति मात्रं कृतं वि
वक्षितत्वात् तमास्त्वत्र एकग्रहणमित्युच्यते तर्हि स्वरूपप्रतिपत्त्यर्थमेवास्त्विति केचित्। अन्ये त्वाहुः एकग्रहणमेकैकविभक्ताविति अर्थलाभार्थं। तथा च सकल वि
भक्ताविति अर्थलाभादेव कारायकर्षणाविनैव सिद्धमिष्टमिति दिक्। एकश्च द्वौ च द्वौ चेत्यादावेकशेषो न भवत्यनभिधानात्। द्वंद्वोप्यत्रानभिधानेनैव वारणीयः
उत्सर्गतः संख्याशब्देष्वेवमेवा विंशत्यादौ त्वेकशेषः स्पष्ट एवेति बोध्यं॥ ॥ चुटू॥ आदिर्ञिटुडव इत्यत आदिः षः प्रत्ययस्येत्यतः प्रत्ययस्येति चानुवर्त्तते तदा
हा प्रत्ययाद्याविति। प्रत्ययाद्याविति किं। चाचाटः तेन वित्तश्चुञ्चुप्चणपाविति अत्र प्रत्ययादौ पकारो लुप्तनिर्दिष्टस्तेन च स्यनेत्संज्ञेति वक्ष्यति। न विभक्तौ हलन्त्य

चुटू १।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः। इति जस्य इत्संज्ञा। न विभक्तौ तुस्माः १।३।४ विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। इति सकारस्य
नेत्त्वं। अतो गुणे ६।१।९७ अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात्। इति प्राप्ते परत्वात्सवर्णदीर्घः। अतो गुणे इति हि परस्ता
दपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायेनाकः सवर्णे दीर्घ इत्यस्यैवापवादो न तु प्रथमयोरित्यस्यापि। रामाः। एकवचनं सम्बु
द्धिः २।३।४९। सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥ ९

मितीत्संज्ञाप्राप्तौ निषेधारंभः। तु इत्यस्योदाहरणं। रामात्। पचेरन्। मका
रस्य तु रामम्। अह्राक्षं। विभक्तौ किं। अचो यत्। उणादयः स्तथादिभ्यः स्नम्। एतेषां त्यस्येत्संज्ञा यथा स्यात्। इदमस्थमु इत्यत्र मकार परित्राणार्थमुकारानु
बंधासजनादनित्योयमिति ज्ञाप्यते अन्यथा प्राग्दिशो विभक्तिरिति थमो विभक्तित्वादानीमोमकारस्यानेनैव सूत्रेणेत्त्वनिषेधसिद्धेः किं तेनेति। तेन किमोत
श्चेति सिद्धा। एकवचनं सं संबुद्धिरित्येव सुवचं। न च सप्तमीबहुवचनेति प्रसंगः। संबोधने प्रथमेत्यधिकारे चेत तदभावादिति नव्याः। अन्ये त्वाचख्युः। सुः संबु
द्धिरिति वाच्ये एकवचनग्रहणमेकोर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थं अन्यथा सामन्त्रितमिति सूत्रे सूत्रे तदन्तस्यामन्त्रितसंज्ञा स्यादिति प्रक्रमाभेदा
यइयमपि संज्ञा तदन्तस्यैव स्यादिति॥ ॥

एङ्ह्रस्वात्संबुद्धेः। यद्यत्र हल्ङ्याब्भ्य इत्यतो हलमनुवर्त्य एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परस्याः संबुद्धेर्लोप इति व्याख्यायेत। हलनुवृत्तावपि अङ्गात्परा या संबुद्धिः
तस्याः यद्धलिति वा। उभयथापि हे ज्ञानेति न सिध्येत्। लोपात्परत्वात्सोरतो मि पूर्वत्वे च कृते एकादेशस्य परादिवद्भावे ह्रस्वान्तात्परत्वाभावात्पूर्वान्तवद्भावे अम एवा
भावादुभयत आश्रयणे तु नान्तादिवदिति निषेधात्। नो व्याचष्टे। एङन्तादित्यादिना चेदित्थं तेन। संबुध्याक्षिप्तस्येति। तदन्तस्यैव संज्ञाऽभ्युपगमे तु संबुद्ध्या अङ्गमाक्षे
प्तुं न शक्यते इति बोध्यम्॥ ह्रस्वात्परत्वं नास्तीति। तथा च सूत्रे एङ्ग्रहणमावश्यकमिति भावः। किंच। इमां किमाचामयसेन च सुषी इति श्रीहर्षप्रयोगे स इति पृथक्प
दं सलक्ष्मीके हे दमयंतीत्यर्थ इति निगरणचलनार्थेभ्यश्चेति सूत्रे मनोरमायां व्युत्पादितं ततश्च तत्रापि संबुद्धिलोपार्थं एङ्ग्रहणमावश्यकमेव॥ स्यादेतत्। ए
ङ्ग्रहणस्य सेइत्यत्र सावकाशतया हे हरे इत्यादौ संबुद्धिलोपो न स्यात्। सन्निपातपरिभाषाविरोधात्। तथा ह्रस्वग्रहणस्यापि हे रामेत्यत्र सावकाशत्वात् हे गौरि इ

एङ्ह्रस्वात्संबुद्धेः ६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत्। संबुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह। हे कतरत् कु
लेति। हे राम। हे रामौ। हे रामाः। एङ्ग्रहणात्किम्। हे हरे। हे विष्णो। अत्र हि परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ति॥ अमि पू
र्वः ६।१।१०७॥ अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्। रामं। रामौ॥

९ त्यादौ परत्वाद्धल्ङ्यादिलोपं बाधित्वा अम्बार्थनद्योरिति ह्रस्वे कृते संबु
द्धिलोपो न स्यात्। लक्ष्मीशब्दे तु हल्ङ्यादिलोपस्याप्यभावात् हे लक्ष्मि इत्यत्र सुतरां संबुद्धिलोपो न स्यात्॥ सत्यं गुणात्संबुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रह
णसामर्थ्यात्सन्निपातपरिभाषां बाधित्वापि संबुद्धिलोपः प्रवर्तत इति दिक्॥ अमि पूर्वः। प्रथमयोरिति पूर्वसवर्णदीर्घप्राप्ते प्रमारंभः। इको यणचीत्यतो अ
चीत्यनुवर्तते तदाह। अम्यचीति। अमि यो ऽच् तस्मिन् अमोऽवयवे अचीति यावत्। तेन मकारसहितस्य पूर्वं रूपं नेति स्थितं मनोरमायां। एवमस्माद्धि न्यामि
त्यादावपि। उहिन्यां यो ऽच् तस्मिन् इत्यादि बोध्यं। पदात्स्वेरिवात्त्वेत्यादिनिर्देशाच्च अस्मिन् व्याख्याने लिंगमित्यपि स्थितं। कथं तर्हि काशिकादावमि परत इ
त्येवोक्तं न त्वम्यचीति चेदत्राहुः। तस्मादित्युत्तरस्यादेः परस्येत्यादेरेवादेश इति निर्णीते एकः पूर्वपरयोरित्यादेशः पूर्वपरयोर्वर्णयोरेव भविष्यतीत्या
शयेन नोक्तमिति॥

।आदिर्ञिटुडवइत्यत आदिरनुवर्तते षः प्रत्ययस्येत्यतः प्रत्ययस्येति। अतद्धित इति पर्युदासाह्लभ्यत इत्याह। प्रत्ययाद्या इति। लश्व शश्व कुश्चेति समाहा
रद्वंद्वे लशक्विति नपुंसकं। तदितरेतरयोगद्वंद्वेन विवृणोति। लशकवर्गा इति। अतद्धित इति किं। प्राणिस्थादात इति लच्। चूडालः। लोमादिभ्यः शः। लोमशः। अ
त्र प्रयोजनाभावादेव नेत्संज्ञेति नेदं प्रत्युदाहरणमिति नव्याः। कर्णललाटेति भवार्थे कन्। कर्णिका। सत्यां हीत्संज्ञायां किति चेति वृद्धिः स्यात् प्रत्ययाद्या इति किं
॥जल्पभिक्षेति षाकन्। वराकः। अत्र किति चेति गुणो न स्यात्॥ तस्माच्छसो। तच्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते। दीर्घमात्रपरामर्शे तु ए
तान् गाः पश्येत्यत्रापि नत्वप्रसंगात्। शस इत्यवयवषष्ठी सचावयवः परत्वेन विशेष्यते पूर्वसवर्णदीर्घात्परस्य शसोवयवस्येति। तदेतदाह परो यः शसः सका
र इति परोयः शसिति न व्याख्यातं। कृते पूर्व सवर्णदीर्घे ततः परस्य शसोऽसंभवात्। अट्कुप्वाङ्। रषाभ्यामिति पंचमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमि

लशक्वऽतद्धिते १।३।८ तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतस्युः। इति शस शकारस्येत्संज्ञा। तस्माच्छसो नः पुंसि ६।१।१०३ पूर्वसवर्णदीर्घात्प
रो यः शसः सकारस्तस्य नस्स्यात् पुंसि॥ अट्कुप्वाङ्नुम्व्यवायेपि ८।४।२॥ अट्कवर्गपवर्गआङ्नुम् एतैर्व्यस्तैर्यथासम्भवमिलितैश्च व्यवधा
नेपि रषाभ्यां परस्य नस्य णस्स्यात्समानपदे। पदव्यवायेपीति निषेधं बाधितुं नाङ्ग्रहणं। नुम्ग्रहणमनुस्वारोपलक्षणार्थं। तच्चाकर्तुं श
क्यम्। अयोगवाहानामट्सूपदेशस्योक्तत्वात्॥ इति णत्वे प्राप्ते। पदान्तस्य ८।४।३७ पदान्तस्य नस्य णत्वन्न स्यात्। रामान्॥ ॥ ॥

।तत्र सर्वैर्व्यवायोऽसंभवी। एकैकमात्रव्यवाय इत्यपि नार्थः। क्षुभ्नादिषु क्षुभ्नपाठस्य सामर्थ्यात् सरूपाणामित्यादिनिर्देशाच्चेति अभिप्रेत्याह। व्यस्तैर्यथासंभवंमि
लितैश्चेति। नन्वेवं कृत्स्नकार्त्स्न्यमित्यादावडादिव्यवधानाभावाण्णत्वाभावेप्यादर्शेनेत्यादावड्व्यवधानादिति प्रसंगः। न च अडादिभिरेव व्यवधान इति नि
यमः। अप्राप्ते विधिरयमित्युक्तत्वात्। सत्यं। योगविभागोऽत्र बोध्यः। व्यवायेपीत्येको योगो विध्यर्थः। अट्कुप्वाङ्नुमित्यन्यो नियमार्थः। क्रां इत्सोमि सोलुक्। अत्र योग
विभागं विनापि निर्वाहः सुकर इति तु नव्याः। तथाहि। अट्कुप्वाङ् इति सूत्रे रषाभ्यामित्यनुवर्त्तते पंचमीश्रुत्यात् तस्मादित्युत्तरस्येति परिभाषोपतिष्ठते। उपस्थितापि
सा वचनप्रामाण्याद् इडादिव्यवायेन प्रवर्तते। तदन्यव्यवाये तु प्रवर्तत एव॥

अत एव येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादेकवर्णव्यवहितस्यैव इको गुणो न तु भिनत्तीत्यादावनेकव्यवहितस्येक इति उगन्तलघूपधस्येति सूत्रे वक्ष्यति
एवं च यत्राडादिभिरेव व्यवधानं रामेणेत्यादौ तत्र भवत्येव णत्वं यत्र त्वडादिभिन्नेन व्यवधानमादर्शेनेत्यादौ तत्र न भवति तस्मादिति परिभाषाया जागरूकत्वात् । निषे
धं बाधितुमिति । तेन पर्याणद्धमित्यत्र उपसर्गादसमासेऽपीति णत्वं सिध्यतीति भावः । उपलक्षणार्थमिति । नुम्स्थानिकस्य स्वाभाविकस्य चानुस्वारमात्रस्योपलक्षणा
र्थं नुम्ग्रहणमित्यर्थः तेन बृहि वृद्धौ इदित्वान्नुम् तस्यानुस्वारः । तृहि हिंसायां स्वाभाविकोऽत्रानुस्वारः बृंहणं तृंहणं । उभयत्रापि णत्वं सिद्धं अयोगवाहानामिति । अविद्यमा
नो योगः प्रत्याहारेषु संबंधो येषां ते अयोगाः अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसंबंधशून्या इत्यर्थः । वाहयंति निर्वाहयंति प्रयोगमिति वाहाः ।
अयोगाश्च ते वाहाश्च अयोगवाहाः । अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः । अट्स्विति निष्कर्षे स्वकारो यरीति तेन पयःस्वित्यादावि णः परस्येति
षत्वं न भवति । अत एवोक्तं प्राक् अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरीति णत्वं न स्यादिति । न भाभूपूकमिगमीत्यतो नेत्यनुवर्तत इति भावः ॥

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१३ ॥ यः प्रत्ययो यस्मात् क्रियते तदादि शब्दरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात् । भवामि भविष्यामी
त्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम् । विधिरिति किम् । स्त्री इयती । प्रत्यये किम् । प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भू
त् । अङ्गस्य ६।४।१ इत्यधिकृत्य ॥ ९९ ॥ ॥:ः॥ यस्मात् । तदादीति । तत्प्रकृतिरूपमादिर्यस्य शब्दरूपस्येति बहुव्रीहिः । ननु यस्मात्प्रत्ययविधिस्तदङ्गमि
त्येवास्तु किमादिग्रहणेनेत्यत आह । भवामीत्यादि । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वादङ्गत्वे तेन कर्तीकारक इत्याद्यपि सिध्यतीति भावः । अङ्गसंज्ञा
र्थमिति । अन्यथा अतो दीर्घो यञीति दीर्घो न स्यादिति भावः । न चारम्भसामर्थ्यादेव दीर्घः स्यादिति वाच्यं । पय गतौ । वय गतौ । आभ्यां यङ्लुकि पापामि पापावः । वा
वामि वावामः । इत्यादौ चरितार्थत्वात् । स्त्री इयतीति । इदमः परिमाणे वतुप् । किमिदंभ्यां वो घः इति घस्तस्य इयादेशः । इदंकिमोरीश्की इति ईश् यस्येति चेति ईशो लो
पः । उगितश्चेति ङीप् । सत्यां हि संज्ञायां स्त्रीशब्दस्य यस्येति चेति लोपः स्यात् । न च ईशो लोपस्यासिद्धवदत्राभादित्यसिद्धत्वान्नातिप्रसंग इति वाच्यं । प्राग्भादसि
द्धत्वमिति पक्षाभ्युपगमादनित्यत्वादिति व्याख्यातारः ॥

नब्यास्तुस्त्रीअंपश्यतीत्यत्रस्त्रीशब्दस्यस्त्रियाइतिइयङ्स्यात्।अकारादमिकृतेअमिपूर्वइत्येकादेशस्यपरादिवद्भावेनप्रत्ययत्वात्।अतत्तेईप्रत्ययेटिलोपेचसत्यका
रस्यस्ततएवप्रत्ययत्वाच्च।विधिग्रहणाकृतेतुनायंदोषःप्रसज्यते।अम्प्रत्ययस्यअकारादप्रत्ययस्यचातत्तेविहितत्वेपिस्त्रीशब्दाद्विधानात्स्यादेतत्।वत्तुयोऽ
मप्रत्ययस्यचस्त्रीशब्दादविधानेपिसोविधिरस्त्येवेतितद्दोषतादवस्थ्यमितिचेन्नैवं।सन्निधानवलेनयस्मात्यःप्रत्ययोविहितःतस्मिन्तदंगमितिव्याख्या
नात्।प्रत्ययेकिमिति।तदादिरूपंकियदित्यपेक्षायांयस्मात्यइतिप्रत्ययस्यश्रुतत्वात्प्रत्ययपर्यंतमेवांगंभविष्यतीतिमत्वाप्रश्नः।प्रत्ययस्यश्रुतत्वेपिप्रत्ययविशि
ष्टस्येत्यादिततोप्यधिकंवानिरवधिकमंगंस्यात्तदादिरित्यस्यार्थेनिर्णयेप्रत्ययश्रवणस्योपक्षयादित्याशयेनव्याचष्टे।प्रत्ययविशिष्टस्येत्यादिना।प्रत्ययविशि
ष्टस्येतिकिं।वव्रश्च।अत्रविशिष्टस्यांगसंज्ञायामुरदित्यदादेशस्यपरनिमित्तत्वालाभादचःपरस्मिन्नितिस्थानिवत्वाप्रवृत्यानसंप्रसारणइतिनिषेधाभावात्स्या
सस्यपुनरपिसंप्रसारणंप्रवर्त्तेत।तथाध्यर्थंश्र्यर्थमित्यत्राचिश्नुधातुभ्रुवामितिइयङुवङौस्यातामुक्तरीत्याअचीत्यनेनाजादौप्रत्ययइत्य~लाभात्ततोधिकस्यां

टाङसिङसामिनात्स्याः।७।१।१२।अकारान्तादङ्गाट्टादीनाङ्क्रमादिनादयआदेशास्स्युः।णत्वं।रामेण।।सुपिच७।३।१०२।यञादौसुपिपरेअतो
ङ्गस्यदीर्घस्स्यात्।रामाभ्याम्।अतोभिसऐस्७।१।९।अकारान्तादङ्गाद्भिसऐस्स्यात्।अनेकाल्त्वात्सर्वादेशः।रामैः ॥ ॥ ॥

गसंज्ञायांतुदेवदत्तओदनमपाक्षीत्इत्यत्रदेवशब्दात्प्रागडागमःस्याद्देवदत्तशब्दात्तुप्रत्ययस्यविहितत्वेनलुङःप्राग्वर्तिसमुदायस्यांगत्वात्।द्वितीयप्रत्ययग्रहणेकृ
तेतुनकोपिदोषःप्रसज्यते।अन्येतुयस्मात्त्रुडादिविधिःप्रत्यासत्यातस्यैवांगस्याडागमःस्यादितिततोप्यधिकस्येत्येतदनास्थयोक्तंकिंतुएतस्यापिविशिष्टस्यांगत्वे
यद्दूषणंतदेवेत्याहुः॥ ॥टाङसि।अतोभिसऐसइत्यस्मादनुवृत्तेनअतइत्यनेनसामानाधिकरण्येनविशेषणादंगस्येत्यधिकृतंषष्ठ्यंतमपिपंचम्याविप
रिणम्यतेविशेषणेनतदंतविधिस्तदाह।अकारांतादंगादिति।सुपिच।यञीत्यनुवर्त्तते।अल्ग्रहणात्तदादिविधिरित्याह।यञादौसुपीति।यञिकिं।रामः।अतइति
किं।अग्निभ्यां।अतोभिसऐस।ननुऐसइत्येवास्तुनचातोगुणइतिपररूपापत्तिः।ऐकारोच्चारणवैयर्थ्यापत्तेः।अन्यथाइसमेवविदध्यात्इतिचेत्सत्यं।एदैतोर्द्वि
मात्रत्वाविशेषेणगौरवाभावात्।बहुलंछंदसीत्यत्रअनतोपिभवति।नद्यैरितिकाशिकोदाहृतप्रयोगस्यऐस्करणंविनाअनिर्वाहाच्च।केचित्तुऐस्करणंनिर्जरसैरि
त्येकारश्रवणार्थमितिव्याचख्युः।तच्चिंत्यं।सन्निपातपरिभाषयाजरसादेशाप्रवृत्तेर्निर्जरैरित्येवभाष्येसिद्धांतितत्वात् ॥ ॥ ॥

ङेर्यः। ङे इतिचतुर्थ्येकवचनस्यग्रहणं। नसप्तम्येकवचनस्यव्याख्यानात्। अतएवङेरामित्यत्रास्याग्रहणं। समानाधिकरणेस्त्रियांइत्यादिनिर्देशाच्चस्थानिवद्भावेनेति। आ
देशालाश्रयविधौस्थानिवत्त्वनिषेधाभावादितिभावः। सुपिचेतिदीर्घइति। नचपरत्वादकृत्सार्वधातुकयोरितिदीर्घःस्यादितिशंक्यं। तत्रायङ्‌यिङ्‌क्ङितीत्यतःक्ङितीत्य
नुवर्तनादन्यथाऊरूयेत्यत्रापिदीर्घःस्यात्। ऊरुशब्दात्परस्यटाइत्यस्यसुपांसुलुगितियादेशः एतच्चकाशिकायांस्पष्टं। यद्यपिङेयादेशस्यङित्त्वमस्तिनत्वपीतिज्ञा
पकेनाजन्तुबंधकार्येष्वल्विधावपिस्थानिवत्त्वाभ्युपगमात्तथापिशानचःशित्वेनलिंगेनक्वचिदनुबंधकार्येष्वस्थानिवत्त्वानभ्युपगमाद्यादेशेङित्त्वंनेत्यभ्युपेत्यैवंविरोधाभा
वात्परत्वमत्राकिंचित्करमित्यनादरेणवाअकृत्सार्वधातुकेतिदीर्घोनोक्तइतिस्थितं। तस्यगतिमाहुः। नतुज्यादादीयसइतिज्यशब्दात्परस्यईयसआकारविधानमंगव
त्तपरिभाषायालिंगं। अन्यथावहोर्लोपइत्यतोनुवर्त्यलोपमेवविदध्यादाकारंतुनविदध्यात्। अकृत्सार्वधातुकयोरितिदीर्घेणाज्यायानितिरूपसिद्धेरितिभाष्येस्थितं।

ङेर्यः। ७।१।१३। अतोङ्गात्परस्यङेरित्यस्ययादेशस्स्यात्। रामाय। इहस्थानिवद्भावेनयादेशस्यसुप्त्वात्सुपिचेतिदीर्घः। सन्निपातलक्षणोविधिरनि
मित्तंतद्विघातस्येतिपरिभाषातुनेहप्रवर्त्तते। कष्टायक्रमणइतिनिर्देशेनतस्याअनित्यत्वज्ञापनात्। रामाभ्यां। बहुवचनेझल्येत्। ७।३।१०२
। झलादौबहुवचनेसुपिपरेअतोङ्गस्यएकारस्स्यात्। रामेभ्यः। बहुवचनेकिं। रामः। रामस्य। झलिकिं। रामाणां। सुपिकिं। पचध्वं। जश्त्वं ॥ ॥

त्तादिदानींविरुध्येत। क्ङितीत्यनुवृत्तौतुज्यायानित्यत्राकृत्सार्वेतिदीर्घोप्रवृत्तेः। तथाचाकृदितिसूत्रेक्ङितीतिनानुवर्त्तनीयं। ऊरूयाधृष्णुयेत्यत्रदीर्घाभावःछांदसि
इत्येवाभ्युपेयइतिचेत्। अत्राहुः। ज्ञाजनोर्जेत्याकारग्रहणमुक्तपरिभाषालिंगं। अन्यथाजमेवविदध्यात्। अतोदीर्घोयञीतिजायतेजानातीत्यादौदीर्घसिद्धेरित्यपि
भाष्येस्थितं। तच्चज्ञापकमकृदित्यत्रक्ङितीत्यनुवृत्तावपिसंगच्छते। एवंचसतिज्यादादित्याकारग्रहणंलिंगमितितुभाष्यप्रौढिवादमात्रमस्तु। सन्निपातेति। सन्निपा
तःसंश्लेषःलक्षणंनिमित्तंयस्यससन्निपातलक्षणःतंसन्निपातंविहंतीतितद्विघातःकर्मण्यण्। कुत्वतत्त्वे। उपजीव्यविघातकविधेर्निमित्तंनभवतीत्यर्थः। ॥राम
रामस्येत्यत्रसन्निपातपरिभाषयाप्यत्वंसुपरिहरंतथाप्यदःसर्वेषामितिनिर्देशादेत्वविधौसन्निपातपरिभाषानप्रवर्त्ततइत्याशयेनोक्तमितिस्थितस्यगतिःस
। मर्षणीयाजश्त्वं ॥ वकविधिःसोपज्ञीर ॥

वावसान इति। अत्राहुः। जश्त्वे कृते अवसाने चर्त्वमिति न मन्तव्यं किं तु येन नाप्राप्तिन्यायेन अवसाने चर्त्वस्य जश्त्वापवादत्वाच्चर्त्वाभावपक्षे जश्त्वमिति योज्यं द्वित्व इति। अनचि चेत्यनेन अनचीति प्रसज्यप्रतिषेध इति प्रागेवोक्तं। पर्युदासाभ्युपगमे तु इह द्वित्वं न स्यात्। तादेश आरभ्यत इति। वत्स्यतीत्यादौ चर्त्वेन तकारो न लभ्यत इति सस्यार्द्धधातुक इत्यनेन सकारस्य तकारो विधीयत इत्यर्थः। ह्रस्वनद्यापो। अंगस्येत्यनुवर्तते। तच्च पंचम्यंतेन सामानाधिकरण्यात् अंगादिति विपरिणम्य ह्रस्वादिभिर्विशेष्यते विशेषणेन तदंतविधिरित्याशयेनाह। ह्रस्वांतादिति। एतेन ह्रस्वनद्याप इति पंचमी न तु षष्ठीति स्फोटितं। ज्ञापकं त्वत्र नामीति। न हि षष्ठ्या आगमत्वे अंगसंज्ञानिमित्तं नाम संभवति। एवं चानया पंचम्या ऽनन्तर्यार्थतया तस्मादित्युत्तरस्येति परिभाषोपस्थित्या आमि सर्वनाम्नः सुडित्यतो ऽनुवृत्तं नामीति सप्तम्यन्तं षष्ठ्या विपरिणम्यते आमीति सप्तम्यास्त्रेस्त्रय इत्यत्र चरितार्थत्वादित्यभिप्रेत्याह। आमो नुडागमः स्यादिति। अत्र नव्याः। नुडिति योगविभज्याग्रात्परस्यामो नुडित्युत्सर्ग

वावसाने। ८।४।५६। अवसाने झलां चरो वा स्युः। रामात्। रामाद्। द्वित्वे रूपचतुष्टयं। रामाभ्यां। रामेभ्यः। रामस्य। सस्य द्वित्वपक्षे खरि चेति चर्त्वेप्यान्तरतम्यात्सस्य स एव न तु तकारः। अल्पप्राणतया प्रयत्नभेदात्। अत एव सः सीति तादेश आरभ्यते। ओसि च। ७।३।१०४। ओसि परे अतोङ्गस्य एकारः स्यात्। रामयोः। ह्रस्वनद्यापो नुट्। ७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात्॥

॥ विधिं कृत्वा न द्याप इत्यंशेन दीर्घान्तात्परस्यामो नुट् चेद्भवति तर्हि नद्याप एवेति नियमविधिं व्याख्याय ह्रस्वग्रहणं प्रत्याख्येयं। न चैवं लिहां दुहामित्यादौ अतिप्रसंग इति वाच्यं। हलंताच्चेद्भवति तर्हि षट्चतुर्भ्य एवेति नियमाभ्युपगमात्। ध्वंस्वनडुहां कतिपयचतुरां युजिं कुंचां सलामित्यादिनिर्देशाच्च। तस्मात् ह्रस्वग्रहणप्रत्याख्यानेन को ऽपि दोष इत्याहुः। अन्ये वदंति। नुडिति पृथक् योगे कृते सति ङेः रामि कृते परमप्याटं बाधित्वा अंतरंगत्वादामो नुट् स्यात् तथा च परत्वादाटा नुड् बाध्यत इति वक्ष्यमाणग्रंथेन आटि कृते सकृद्गतिन्यायात् नुट् नेति भाष्यग्रंथेन च विरोधः स्यात्। यद्यपि नियमसूत्राणां विधिमुखेन प्रवृत्तिरिति पक्षे ङेः रामि कृते तस्य नद्याप इत्यनेनैव नुडागमे प्रसज्यमाने आण्नद्या इत्यनेन स बाध्यत इति परत्वादाटा नुड् बाध्यत इत्यादिग्रंथः संगच्छते तथापि नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे परमप्याटं बाधित्वा अंतरंगत्वान्नुट् स्यादेव। किंचानद्याप इत्यत्र नद्यापः पर॥ ॥ ॥

स्यामोनुडेवस्यान्नान्यदित्यर्थः स्यात्तथाचगोर्यां रमायां सर्वासां सर्वस्यामिति न सिद्ध्येत्। तासुडागमस्य पुंसि आट्याट्स्याडागमानां नुड्डिन्देत्तरे चरितार्थत्वात् अपिचागौ र्यामित्यादौ डेः राम्भिरुक्ते नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणं। एवं रमायां सर्वासां सर्वस्यामित्यादौ प्राप्तं याटं सुटं च बाधितुं आप्ग्रहणमिति। नद्याप एतद्विध्य र्थमेव स्यान्न नियमार्थं। ततश्च विश्वपां वातप्रम्यामित्यादौ नुट् दुर्वार एव। नद्यां मतुप्भाषायां सर्वसः श्रुवः। सर्वासां प्रायदर्शनं तदस्य प्रहरणमित्यादि निर्देशा त् शरणीकृत्य विध्यर्थतापादनस्य नुडेवेति प्रागुक्तनियमस्य निवारणे तु प्रतिपत्तिगौरवं। अपिच। आकारान्तादीकारान्तादूकारान्ताच्चेद्भवति तर्हि नद्याप एवेति नियम स्यापि संभवात्। विश्वपां वातप्रम्यां खलप्वामित्यादौ नुडागमाभावेपि गवामित्यादौ नु ट् स्यात्। न च ह्रस्वदसि गोः पदान्त इत्यारंभात् लोके गोशब्दात्परस्याम्नो नुडेन भवेदिति वाच्यं। पदान्ते गोशब्दात्परस्यामो नुट् चेत् ह्रस्वस्यैवेति नियमेन लोके पादान्ते गोनामिति प्रयोगस्याभावेप्यपादान्ते तस्यानिवार्यत्वापत्तेः। रायां ग्लावां नावा मित्यादौ तु निर्वाहः स्याद्यदि तु दीर्घात्परस्यामो नुट् चेदित्यादिनियमे गोः पादान्त इति सूत्रं विध्यर्थं भवेत्। आकारान्तादिभ्यः परस्यामो नुट् चेदित्यादिनियमे तु

नामि ६।४।३ नामि परे ऽजन्ताङ्गस्य दीर्घः स्यात्। रामाणां। सुपि चेति दीर्घो यद्यपि परत्वात्तथापीह न प्रवर्त्तते। सन्निपातपरिभाषाविरोधात्। ना मीत्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते। रामे। रामयोः। सुपि एत्वे कृते। अपदान्तस्य मूर्द्धन्यः। ८।३।५५ आपादपरिसमाप्तेरधिकारोयं॥

नियमार्थं स्यात्तत्र विधिनियमयोर्विधिरेव ज्यायानिति न्यायानुसंधानेन दीर्घात्तात्परस्यामो नुट् चेदित्यादिनियम एव स्वीक्रियत इत्युच्यते तथापि पुनः प्रतिपत्ति गौरवमस्त्येव तस्मात् ह्रस्वग्रहणप्रत्याख्यानस्यातिक्लेशसाध्यत्वाद्यथाश्रुतमेव रमणीयमिति॥ ॥ नामि ढ्रलोप इत्यतो दीर्घ इत्यनुवर्त्तते। दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्येति विशेष्यते। विशेषणेन च तदन्तविधिः। तदेतदाह। अजन्ताङ्गस्येत्यादि। अर्थवद्ग्रहणपरिभाषया नामिति नुट्सहित एवाम् गृह्यते तेन पामना मंगनामित्यादौ न भवति। तत्र हि पामादिलक्षणेन प्रत्ययेनापि द्वितीयैकवचनेन चकृते तत्र पाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेपि नामिति समुदायस्यानर्थकत्वा त्। यद्यपि नलोपस्यासिद्धत्वात् अनेन पामनामित्यत्र दीर्घः सुपरिहरस्तथापि नोपधापा इत्यनेन नुट् स्यादेवेति बोध्यं। नुटीति न सूत्रितं। भृञः किन्तु ह्रस्वेत्योणादि कगन्प्रत्ययान्ते भृंगश ब्दे माभूदिति। स्यादेतत्। नुडागमस्याम् भक्तत्वादाम्ग्रहणेन सनकारो प्याम् गृहीष्यत इति। आमीत्येव सूत्रमस्तु। न चामीति दीर्घस्य कृता

णित्वेननित्यत्वात्परमपिनुटंबाधित्वाअग्नीनामिंदूनामित्यत्रदीर्घेकृतेह्रस्वाश्रयोनुट्नभवेदितिवाच्यं।ह्रस्वांतान्नुडितिवचनसामर्थ्यात् कृतेपिदी
तुपूर्वंगत्याश्रयेणोतत्प्रवृत्तेः।नापिनतिसृचतसृइतिनिषेधात्तिसृणामित्यत्रह्रस्वांतान्नुडितिवचनाप्रयोजनमस्तीतिवाच्यं।चतसृणामित्यत्रषट्चतुर्भ्य
१ श्चेत्यनेनैवनुट्सिद्धेः।ह्रस्वनद्यापइतिसूत्रेत्रेस्त्रयइत्यतःत्रेरित्यनुवर्त्यत्रिशब्दात्परस्यामोनुडितिव्याख्यानात्।तिसृणामित्यत्रापितत्सिद्धेः।यद्यपिनृणामि
त्यत्रप्रयोजनमस्तितथापिनैकमुदाहरणंह्रस्वग्रहणंप्रयोजयति।अन्यथानृनद्यापःइत्येववदेत्।तस्मादामीत्युक्तेनकिंचिद्बाधकमस्तिइत्यामःसनकारस्यग्र
हणमनर्थकमितिचेदत्रोच्यते।उत्तरार्थंसनकारस्यग्रहणंकर्तव्यंनोपधायाइतिदीर्घोनामियथास्यात्।चर्मणांवर्मणामित्यत्रमाभूदिति।।तदुक्तंवार्तिककृता।ना
मिदीर्घआमिचेत्स्यात्कृतेदीर्घेननुड्भवेत्।वचनाद्यत्रतन्नास्तिनोपधायाश्चवर्मणामिति।अत्रवदंति।वचनाद्यत्रपूर्वंगत्याश्रयेणातत्प्रवृत्तिरित्येतच्चिंत्यं।
गोणत्वेषट्चतुर्भ्यश्चेतिनुटोप्रवृत्त्याप्रियचतसृणामित्यत्रनुडर्थंह्रस्ववचनस्यचरितार्थत्वेनसामर्थ्यापक्षयात्।तत्रहितुमचिरेतिरादेशात्पूर्वंविप्रतिषेधेननुडि
ष्यतइतितदयुक्तं।कृन्नद्यापइतिसूत्रितेपिकृदंतान्नुट्सिद्ध्यत्येवेतिह्रस्वग्रहणस्यसामर्थ्यानुपक्षीणत्वादितिदिक्।परिभाषाविरोधादिति।कृताकृतप्रसंगित्वेन
नामीतिदीर्घस्यनित्यत्वात्परोपिसुपिचेतिदीर्घोनप्रवर्ततइतिनोक्तं।शब्दांतरस्यप्राप्नुवन्विधिरनित्योभवतीतिनामीतिदीर्घस्याप्यनित्यत्वात्।।आरंभसामर्थ्या
दिति।सुपिचेत्यस्यतुनसामर्थ्यं।रामाभ्यामित्यादौसावकाशत्वादितिभावः।ननुकतीनामित्यत्रपरत्वात्षट्चतुर्भ्यश्चेतिनुटिनामीतिदीर्घःसन्निपातपरिभाषाम्बा
धित्वैवप्रवर्ततइत्यारंभसामर्थ्यस्योपक्षयान्नामीतिसूत्रमपिरामाणामित्यत्रसन्निपातपरिभाषयानप्रवर्तेतेतथाचआचार्याणामितिनिर्देशेनोक्तपरिभाषा
याअनित्यत्वमाश्रित्यसुपिचेतिदीर्घएवपरत्वात्प्रवर्ततामितिचेत्।अत्रकेचित्समाधयंति।चतुर्ग्रहणसाहचर्यात्हलंतषट्संज्ञकादेवपरस्यामःषट्संज्ञाश्र
योनुट्भवतिनतुकतिशब्दात्परस्यामः।तथाचकतीनामित्यत्रह्रस्वाश्रयएवनुडित्यारंभसामर्थ्येनोपेक्षणीयमितितदपरेनक्षमंते।रेफोपधात्हल्संज्ञकस्तथा
अम्संज्ञकोपिभवतीत्यमतषट्संज्ञकादेवपरस्यामःषट्संज्ञाश्रयोनुट्भवतिनतुवकारांतात्परस्येतिवक्तुंशक्यतयाषण्णामि त्यत्रनुडभावप्रसंगात् तस्मादिह
साहचर्यंनग्राह्यमेव।अन्येतुषट्चतुर्भ्यइतिबहुवचननिर्देशादर्थपरोयंनिर्देशस्तथाचार्थप्राधान्येयत्रतत्रैवषट् संज्ञाश्रयोनुट्भवतिनतुप्रियपंचांप्रियष

षां इत्यादौ इति सिद्धांतात्। बहिरंगः षट्संज्ञाश्रयो नुट्। तथा चांतरंगत्वात्कतीनामित्यत्र ह्रस्वाश्रय एव नुडिति नामीति दीर्घः सन्निपातपरिभाषां बाधित्वैव प्रवर्त्ती
तेनतश्चारंभसामर्थ्यादिति मूलोक्तग्रंथस्य न काप्यनुपपत्तिरिति समादधुः। इतरेत्तु आरंभसामर्थ्यादित्यस्यायमर्थः। न तिसृचतसृ इति निषेधारंभसामर्थ्यादि
ति। तिसृणामित्यत्र ह्रस्वांतलक्षणो नुट्कृते नामीति दीर्घप्रवृत्तौ हि न तिसृचतसृ इति निषेध आरभ्यते। सन्निपातपरिभाषया दीर्घाप्रवृत्तौ तु किमनेन निषेधेन। अतो ज्ञायते ना
मीति दीर्घः सन्निपातपरिभाषां बाधत इति। येत्तु ह्रस्वनद्यापइत्यत्र ह्रस्वग्रहणं प्रत्याख्यायेते तेस्तु नामीति दीर्घे आरंभसामर्थ्येनाश्रयणीयमेव। अपदांतस्य षइत्ये
वसिद्धे मूर्धन्यग्रहणमिणः षीध्वमिति ढत्वार्थं। चकृढ्वे। अकृढ्वं॥ ॐ॥ इणकोः॥ समाहारद्वंद्वे सौत्रं पुंस्त्वं। कोः किं। गवाक्षु। गवाङ्क्षु। आदेशप्रत्यययोः। प्रत्यय
शब्दः प्रत्ययावयवे लाक्षणिकः। हलि सर्वेषामिति निर्देशात्सात्पदाद्योरित्यत्र सातिग्रहणाच्च लिंगादित्याशयेन व्याचष्टे। आदेशः प्रत्ययावयवश्चेति। यदित्तु आ

इणकोः ८।३।५७ इत्यधिकृत्य। आदेशप्रत्यययोः। ८।३।५९। सहेः साढः सः इति सूत्रात्स इति षष्ठ्यन्तम्पदमनुवर्त्तते। इण्कवर्गाभ्याम्परस्या
ऽपदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सकारस्तस्य मूर्द्धन्यादेशः स्यात्। विवृताघोषस्य सस्य तादृश एव षः। रामेषु। इण्कोः किं। रामस्य।
आदेशप्रत्यययोः किं। सुपीः। सुपिसौ। सुपिसः। अपदान्तस्य किं। हरिस्तत्र। एवं कृष्णमुकुन्दादयः॥ ९ देशावयवो गृह्येत तर्हि तिसृणामित्यादौ

दोषः। यद्यपि सकारोच्चारणसामर्थ्यात्तत्र षत्वं न स्यात्तथापि विसं विसं मुसलं मुसलमित्यादौ षत्वं दुर्वारं स्यात्। आष्टमिकद्विर्वचनस्यादेशरूपत्वात्। यदि तु प्र
त्यययोः सकार इति गृह्येत तर्हि रामेषु करिष्यतीत्यादौ न स्यात्। किंतु इन्द्रो मा वक्षदित्यादावेव स्यात्। इह मनोरमायामेकापि षष्ठी विषयभेदात् भिद्यते इत्युक्ता सह वि
वक्षाभावेपि सौत्रत्वान्न द्वंद्व इत्युक्तं तत्तु प्रत्ययशब्दे लक्षणामनंगीकृत्य यथाश्रुताभिप्रायेण उक्तमिति बोध्यं। विवृताघोषस्येति विवृतस्य सस्य तादृश एवेत्युक्ते
ऋकारेऽतिप्रसंगस्तद्वारणाय अघोषस्येति। अघोषस्येत्येतावदुच्यमाने ठकारेऽतिप्रसंगः तद्वारणायोभयमुपात्तं। तादृश एव ष इति। तादृश एव षादेशो भवति नान्य इ
त्यर्थः। ननु दधिसेचो दधिसेच इत्यादौ प्राक्सुबुत्पत्तेः समासे षत्वं वारयितुं॥ पदादादिरिति पंचमीसमासो भाष्ये उक्तस्ततश्च इहापि सात्पदाद्योरिति निषेधः क ॥
रिष्यतीत्यादौ षत्वविधेः सावकाशत्वादिति चेन्मैवं। स्वादिष्विति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्त्तते इति सातिग्रहणेन ज्ञापितत्वात्॥

रामस्येति॥ टाङसिङसामिनात्स्याः इति वक्तव्ये सकारोच्चारणसामर्थ्यात्षत्वं न भवेन्नडादिषु अमुष्येति निपातनात्। ततः फणादौ आमुष्यायणेत्यादिवार्तिकनिर्देशा
च्च अमुष्येत्यत्र षत्वं भवेत्। तर्हि विश्वपात्स्वित्यादि प्रत्युदाहर्तव्यं न च तत्रापि षुविति वक्तव्ये सुविति सकारोच्चारणसामर्थ्यादेव न भवेदिति शक्यं। लिट्सुप्र
शान्सु इत्यत्र ङः सि धुट् नश्चेति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति दिक्॥ ❀ ॥ सर्वादीनि इति॥ तद्गुणसंविज्ञानो बहुव्रीहिरयं भेदः
सर्वेषामिति लिङ्गात्। आदिशब्दोऽत्रावयववाची सर्व आदिरवयवो येषां तानीति विग्रहः। उद्भूतावयवभेदः समुदायः समुदायः समासार्थ इति बहुवचनं। त
स्य समुदायस्य गुणपदत्वस्य प्रयोगाभावादानर्थक्यात्तदङ्गेष्विति न्यायेन तदवयवेषु प्रवर्तमाना सर्वनामसंज्ञा अविशेषात्सर्वशब्देऽपि प्रवर्तत इति युक्तं तद्गुणसं
विज्ञानत्वं तस्यान्यपदार्थस्य गुणाः वर्तिपदार्थरूपाणि विशेषणानि तेषां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यक्षरार्थः। लोकवेदयोरपि—
संयोगसमवायान्यतरसंबन्धे लोहितोष्णीषा ऋत्विजः प्रचरन्तीति लम्बकर्णमानयेत्यादौ तद्गुणसंविज्ञानत्वमेव। स्वस्वामिभावसंबन्धे त्वतद्गुणसंविज्ञानत्वं चित्रगु

**सर्वादीनि सर्वनामानि १।१।२७ सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः। तदन्तस्यापीयं संज्ञा। द्वन्द्वे चेति ज्ञापकात्। तेन परमसर्वत्रे
तित्रल्। परमभवकानित्यत्राकच्च सिध्यति ॥** ११ मानयेत्यादौ। ननु सर्वनामानीत्यत्र सर्वपदात्संज्ञायामिति णत्वं कस्मान्न भवति। सोऽत्रत्वानेति
चेत्तोके सर्वणामशब्दस्य साधुत्वापत्त्या सर्वनामसंज्ञानि स्युरित्युत्तरग्रन्थस्यासाधुत्वापत्तेरिति चेन्मैवं निपातनाण्णत्वं नेति। भाष्योक्तव्याख्याश्रयणादि
प्रसिद्धेः। अत्र भाष्यानुसाराद्बाधकान्येव निपातनानि भवन्तीति पक्ष आश्रितः। अबाधकान्यपि निपातनानि भवन्तीति पक्षस्तु विभाषा फाल्गुनीति सूत्रे श्रव
णशब्दे निपातितेऽपि प्रावर्णीति प्रयोगोऽपि साधुरित्येवमर्थमाश्रयिष्यते। विशेषणानुगुणविशेष्यमध्याहरति। शब्दरूपाणीति॥ द्वन्द्वे चेति। स हि नि
षेधः समुदायस्यैव न तु तदवयवानामिति वक्ष्यति। न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः। ननु गणाधिकारे तदन्तविधिनैव परमसर्वस्माद्
त्यादौ स्मायादिसिद्धेस्तदन्तसंज्ञायाः किं फलमित्यत आह। तेनेति। नन्वेहापि प्रातिपदिकादित्यनुवृत्तेः। सर्वनाम्नात हि ॥ ॥
॥

शेषणे तदंतविधिर्भविष्यतीति वाच्यं। समासप्रत्ययविधौ प्रतिषेध इत्युक्तत्वादिति भावः। अकच्चेति। चकारात्परमसर्वेत्यत्र तसिल्॥ ॐ॥ जसः शी। दीर्घोच्चारणा
मुत्तरार्थं वा रिशीभ्यसुनी। अनेकाल्त्वादिति। ननु शित्वादिति भावः। इत्संज्ञाया एवाभावादिति। तृइत्यत्रोपदेशकाल एव नकारस्येत्संज्ञा शीभावस्य तु सर्वादेशत्वा
न्तरस्थानिवत्त्वेन प्रत्ययत्वे लश्क्वेलशचात द्धित इति प्रत्ययादेशस्येत्संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैशम्यमिति भावः। अवर्णान्तादिति अवर्णान्तादङ्गात्परस्येत्यर्थः। ते

जसः शी ७।१।१७ अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। न चाऽवर्णास्त इत्यादाविव नाऽनुबन्धकृतमनेकाल्त्वमिति
वाच्यं। सर्वादेशत्वात्प्रागित्संज्ञाया एवाऽभावात्। सर्वे। सर्वनाम्नः स्मै ७।१।१४ अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात्। सर्वस्मै। ङसिङ्योः स्मात्स्मिनौ ७।
१।१५। अतः सर्वनाम्नो ङसिङ्योरेतौ स्तः। सर्वस्मात्। आमि सर्वनाम्नः सुट् ७।१।५२। अवर्णान्तात्सर्वनाम्नो विहितस्यामः सुडागमः स्यात्। एत्वषत्वे।
सर्वेषां। सर्वस्मिन्। शेषं रामवत्। सर्व विश्वादयोऽप्यदन्ताः। सर्वादयश्च पञ्चत्रिंशत्। सर्व विश्व उभ उभयडतरडतम अन्य अन्यतर इतर त्वत् त्व ने
म सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायां। स्वमज्ञातिधनाख्यायां। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एत
त् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् इति। उभशब्दो द्वित्वविशिष्टस्य वाचकः। अत एव नित्यं द्विवचनान्तः। तस्येह पाठस्तु उभका
वित्यकजर्थः। न च कप्रत्ययेनेष्टसिद्धिः॥ द्विवचनपरत्वाभावेनोभयत्रउभयनेत्यादावित्यथच प्रसङ्गात्। तदुक्तं। उभयोन्यत्रेति। अन्यत्रेति द्वि
वचनपरत्वाभावे। उभयशब्दस्य द्विवचनं नास्तीति कैयटः। अस्तीति हरदत्तः। तस्माज्ज्ञस्य यप् जादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्र
थमचरमेति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनाऽन्तरङ्गत्वान्नित्यैव संज्ञा भवति। उभये॥ १९ नयेषांतेषामित्यादौ नाव्याप्तिः। सर्वनाम्नो विहितस्येति।

सर्वनाम्नः परस्येति तु नोक्तं। वर्णाश्रमेतराणामित्यत्र सुट्प्रसङ्गात्। द्वंद्वे चेत्यनेन समुदायस्य सर्वनामसंज्ञानिषेधेऽप्यवयवस्यानिषेधात्। विहितविशेषणत्वाश्रयणे प्र
माणं तु दक्षिणोत्तरपूर्वाणामिति भाष्यकारप्रयोग एव। आमइति सर्वनाम्न इति पञ्चम्या निरवकाशतया आमीति सप्तम्याः स्वस्वपत्युक्तस्य सूत्रे [illegible] षष्ठी प्रकल्प्यत
इति भावः। पंचत्रिंशदिति। पंच च त्रिंशच्चेति द्वंद्वः। पंचाधिका त्रिंशदिति तत्पुरुषो वा। न च संख्याया गत्पुरुषस्येति वक्ष्यमाणो वा तिकेन समासात् डच् स्यादिति वाच्यं

तदृत्तमितिवा
चेदेवं तर्हि योगविभागस्येष्टसिद्ध्यर्थं तथा उभौ साभ्यासस्येति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यायते न तु वृत्तिविषय इति न दोषः । आश्र
नि कृत्स्नेति शेषः । उभयोन्यत्रेति । उभयेति यः स्वार्थिकायजन्तः सः अन्यत्र प्रयुज्यते न तु द्विवचने परत इत्यर्थः । न च उभावित्यादौ द्विवचनपरत्वेऽदुरुपपादं उभयतः आश्र
यणोऽन्तादिवद्भावविरहादिति वाच्यम् । उभशब्दादुत्पन्ने द्विवचने लुकानापहृते यत्र ततोऽन्यत्रायजिति विवक्षितोऽर्थ इति मनोरमायामुक्तत्वात् । एवं च सर्वादिषूभशब्द
पाठोऽकजर्थ इति । स्थितं भाष्ये तु कप्रत्ययस्य स्वार्थिकत्वेन स्वार्थाभिधानसमर्थत्वादुभशब्दात्परस्य द्विवचनपरत्वमस्तीत्याश्रित्योभशब्दपाठः सर्वादिगणे प्रत्या
ख्यातः । मनोरमायां तु भाष्ये प्रत्याख्यानं प्रौढिवादमात्रं कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वादन्यथा त्रतसिलादावतिप्रसंगत्वादित्यादि स्थितं । उभयशब्द
स्यातः । मनोरमायां तु भाष्ये प्रत्याख्यानं प्रौढिवादमात्रं । कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वादन्यथा । तथापीह तदन्तग्रहणं । केवलयोः संज्ञायाः
डतरडतमौ प्रत्ययौ । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति सुप्तिङन्तमिति ज्ञापकात् । तथापीह तदन्तग्रहणं । केवलयोः संज्ञायाः
प्रयोजनाभावात् । अन्यतरोऽन्यतमशब्दाववयुत्पन्नौ स्वभावाद्द्विबहुविषये निर्धारणे वर्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा । त्वत्त्व
इति द्वावप्यदन्तावन्यपर्यायौ । एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे । नेम इत्यर्द्धे । समस्त्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते ।
यथासंख्यमनुदेशः समानामिति ज्ञापकात् । अन्तरस्य हि योगे तिगणसूत्रे पुरीति वक्तव्यं । अन्तरायां पुरि । पूर्वपराऽवरदक्षिणोत्तरापराऽधरा
णि व्यवस्थायामसंज्ञायां १।१।३४। एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः । स्वाभिधे
यापेक्षाऽवधिनियमो व्यवस्था । व्यवस्थायां किं । दक्षिणा गाथकाः कुशला इत्यर्थः । असंज्ञायां किं उत्तराः कुरवः ॥ ९ स्येति । उभौ अवयवौ यस्य उ
भयः । उभादुदात्तो नित्यमिति तयपोऽयच् नास्तीति । अनभिधानादिति भावः । तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेन अव्ययत्वप्राप्तेन द्वितश्ना
सर्वविभक्तिरिति सूत्रे तद्धितानां ग्रहणं च पाठे इति भाष्यं कैयटेनावतारितं । अस्तीति पचति कल्पं पचतिरूपमित्यादिवारणेन पाठस्योपक्षीणत्वादनभिधा
नेप्रमाणं नास्तीति भावः । तस्मादिति । उभयशब्दादित्यर्थः । तयप्प्रत्ययान्ततयेति । उभयशब्दस्येति शेषः । यदि तूभयशब्दादयच् स्यात्तर्हि न तु तयप आदेश इति नि
त्यर्थः सौकर्यतः तदा त्र प्रथमचरमतयेति वैकल्पिकप्राप्तिर्नास्त्येवेति बोध्यं । नित्यैवेति । उभयाऽभिन्ना इति तु छान्दसत्वाद् बोध्यं ॥ ॥ डतरडतमाविति । किंयत्तदो नि

वावहूनांजातिपरिप्रश्नेडतमच्।।एकाच्चप्राचामितिविहितौ।अव्युत्पन्नाविति।एतच्चपस्पशायांकैयटेस्पष्टं।एकेइतिकाशिकाकारः।एतत्त्वंमन्येइत्युदा
त्तस्यउतत्वःपश्यन्नित्यनुदात्तस्यचदर्शनादितिभावः।एकइति।प्रथमइत्यर्थः।संहितपाठेतौतत्त्वास्फुटत्वेनदिति तांतस्यैत्तव्यः।अन्यथाएकस्तुत्यास्तृ
देवपठेत्।नचतोतेविप्रतिपत्तव्यां।त्वतत्त्वसमसिमेत्यत्रच्चानीतिफिट्सूत्रात्।तथाचऋग्मंत्रः।स्तरीरुत्वद्भवतिसूतउत्वदिति।जयदेवोपिप्रायुंक्त।त्वदधरम
धुरमधूनिपिबंतमिति।त्वत्तोऽन्यस्याधरइतिविग्रहोनतुत्वाधरइति।पश्यसिदिशिदिशिरहसिभवंतमितिपूर्ववाक्येनसहान्वयापत्तेः।समइति।तथाचश्रूय
ते।मानोवृकायवृक्येसमस्मै।उतोसमस्मिन्नित्यादि।सिमःकृत्स्नेचशक्तेचस्यान्मर्यादावचन्योः।गणसूत्रइति।यद्यपिभाष्येऽष्टाध्यायीस्यसूत्रेऽप्युरीतिवक्तव्यमि
तिवार्तिकंपठितंतथापितद्गणसूत्रस्यैवशेषोनतुजसिविभाषाविधायकस्य।अतइत्यपिकृत्यजसःशीविधानादावंतात्पर्यमाचात्।अंतरायामिति।प्राकारादा
द्यायांतदंतवर्तिन्यांवेत्यर्थः।लिंगविशिष्टपरिभाषयाएकादेशस्यपूर्वांतत्वेनग्रहणाद्वासर्वनामताप्राप्तिर्बोध्या।त्यदादयइत्यतोउक्तपरामर्शकौ।तत्रा
च्यन्त्स्वारसइतिगणरत्नकारोक्तिर्नोदर्तव्या।स्यन्दूंद्रसिवद्भलमितिसूत्रेछंदोग्रहणवैयर्थ्यापत्तेः।एकइतिएकोन्यार्थेप्रधानेचप्रथमेकेवलेतथा।साधार
णेसमानेऽल्पेसंख्यायांचप्रयुज्यते।इत्थंसर्वादिगणंव्याख्यायेदानींतदंतर्गतत्रिसूत्रीसमानाकारामष्टाध्यायीस्थांत्रिसूत्रींव्याचष्टेपूर्वापरेत्यादिना।स्वाभिधे
येति।स्वस्यपूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियमइत्यर्थः।अपेक्ष्यतइत्यपेक्षःकर्मणिघञ्।कथंतर्हिदिशःसपत्नीभवदक्षिणस्याइति।अत्राहुः
।अस्त्येवात्रापिव्यवस्था।प्रसिद्धत्वान्नावधिवाचीशब्दःप्रयुज्यते।नचसंज्ञात्वान्निषेधः।आधुनिकसंकेतोहिसंज्ञानतुदिक्षुसाऽस्तीति।दिक्षुनिरूढतनःकुरु
त्वाधुनिकःसंकेतइत्यत्रतुव्याख्यानंवचनमेवप्रमाणं।एतेनविश्वेषांदेवानामितिव्याख्यातं।वेदेप्रसिद्धत्वाद्देवगणविशेषेविश्वशब्दस्याधुनिकसंकेताभाव
त्।दक्षिणागाथकाइति।गाथकान्निति शिल्पिनिथकन्।इहाप्रकस्मात्कुशलाइत्यवधिव्यन्वयसंभवे पितन्नियमोनास्तीतिभावः।एवमधरेताचूलरागः।उत्तरेप्रत्यु
त्तरेचशक्तइत्यपिप्रत्युदाहर्तव्यं।उत्तराःकुरवइति।सुमेरुमवधिमपेक्ष्यकुरुषुउत्तरशब्दोवर्ततेइत्यस्तीहव्यवस्था।किंत्वाधुनिकसंकेतोयमित्याहुः।।।
॥

स्वमज्ञेति। आत्माऽत्मीयज्ञातिधनवाची स्वशब्दस्तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीयो परिशिष्टावित्याशयेन व्याचष्टे। आत्मीया इत्यर्थः। आत्मान इति वा। येत्वाहुः। आत्मनि स्वशब्दो नपुंसकस्तेन स्वे स्वा इत्युदाहरणं तत्रायुक्तमिति तद्भ्रमात्। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन इत्यमरसिंहोक्तेरात्मन्यपि स्वशब्दस्य पुंस्त्वात्। न च स्वो ज्ञातावित्यमरकोशे आत्मनीत्यस्य स्वमित्युत्तरेणान्वयादात्मवाची स्वशब्दो नपुंसक एवेति वाच्यं स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये स्वोऽस्त्रियां धने इति मेदिनीको

स्वमज्ञातिधनाख्यायाम् १।१।३५। ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्तसंज्ञा जसि वा स्यात्। स्वे स्वाः। आत्मीया इत्यर्थः। आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः ज्ञातयोऽर्था वा। अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्तसंज्ञा जसि वा स्यात्। अन्तरे अन्तरा वा गृहाः बाह्या इत्यर्थः। अन्तरे अन्तरा वा शाटकाः परिधानीया इत्यर्थः। पूर्वादिभ्यो नवभ्यो वा ७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात् पूर्वात्। पूर्वस्मिन् पूर्वे। एवं परादीनामपि। शेषं सर्ववत्। एकशब्दः संख्यायां नित्यैकवचनान्तः। न बहुव्रीहौ १।१।२९। बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात्। त्वकम्पिता यस्य स त्वत्कपितृकः। अहकम्पिता यस्य स मत्कपितृकः। इह समासात्प्राग्वाऽलौकिके प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते। अन्यथा लौकिके विग्रहवाक्य इव तत्राप्यकच् प्रवर्त्तेत स च समासेऽपि श्रूयेत। अतिक्रान्तो भवकन्तमतिभवकानिति वत्। भाष्यकारस्तु त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ। यथोत्तरं मुनीनां प्रामाण्यम्। संज्ञोपसर्जनीभूतास्तु न सर्वादयः। महासंज्ञाकरणेन तदनुगुणानामेव गणे संनिवेशात्। अतः संज्ञाकार्यमन्तर्गणकार्यञ्च तेषां न भवति। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय। अतिकतरं कुलम्। अतितत् ॥ ॥ ॥

शविरोधेनात्मनीति पूर्वान्वयिनस्तूत्तरान्वयि इति व्याख्यानमुचितत्वात्। किंच। विभाषा जसीति प्रकरणे स्वमात्मीय इत्येव वक्तव्ये गुरुनिर्देशं कुर्वन् सूत्रकारोऽप्यात्मवाचि स्वशब्दस्य पुंस्त्वे प्रमाणं तस्मात् स्वे स्वा इत्यस्य आत्मान इति विवरणं सम्यगेवेति स्थितम्। ज्ञातिधनवाचिन स्त्विति। ताच्छील्येन णिनिना ज्ञातिधनयोरप्यात्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामता स्यादेवेति ध्वनयति। एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतं स्वमात्मीयाख्यायामिति वक्तव्ये ज्ञातिधनयोः १४॥

दासाश्रयणांमात्रालाघवापानचस्वमोत्मात्मीययोरित्युच्यमानेआख्याग्रहणंनापेक्षितमितिवाच्यं।वस्तुतःआत्मीयस्यापिज्ञातित्वेनधन त्वेनविवक्षायांसर्वनाम
तामाभूदितितस्यावश्यकत्वात्।अंतरंवहिर्योगोपसंव्यानयोरिति।वहिरित्यनावृत्तोदेशोवाह्यंचोच्यते।तत्राद्यमर्थंगृहीत्वाह।वाह्याइत्यर्थइति।द्वितीयेत्वा
भ्यंतराइत्यर्थोवोध्यः।वाह्येनाभ्यंतरस्ययोगोस्ति।अर्थद्वयमप्याकरेस्थितं।इदमेवार्थद्वयंमनसिनिधाय अंतरायांपुरीत्यत्रप्राकाराद्वाह्यायांतदंतर्वर्तिन्यांवे
तिव्याख्यातं।उपसंव्यानशब्दोधिकरणव्युत्पत्त्याउत्तरीयपरः।कर्मव्युत्पत्त्यात्वंतरीयपरः।एकशब्दस्याष्टावर्थाउक्तास्तत्रविशेषमाह।संख्यायामिति।अन्येषु
तुसप्तस्वर्थेषुवचनांतरमपिस्यादेवएकेएकेषामितियथेतिभावः।नवहुव्रीहौ।वृत्तेवहुव्रीहौनिषेधोव्यर्थः।उपसर्जनीभूतानसर्वादयइतिवक्ष्यमाणत्वात्
अतआह।चिकीर्षितइति।वहुव्रीहावित्यत्रविषयसप्तम्याश्रयणादयमर्थोलभ्यते।त्वकमिति।अज्ञातेकुत्सितेवाव्ययसर्वनाम्नामित्यकच्।एवमहकमित्यत्रा
पि।प्रक्रियावाक्यइति।अलौकिकविग्रहवाक्यइत्यर्थः।तच्चयुष्मद्सुपितसुइत्याद्याकारकं।ननुतत्राकच्प्रवर्त्ततांकोदोषइत्यतआह।सचेति।नचनिमित्त
स्याउपसर्जनत्वस्यविनाशोन्मुखत्वात्कृतव्यूहपरिभाषयासमासात्प्रागपिसर्वनामतानभविष्यतीतिवाच्यं।तस्याअनित्यत्वात्।तत्रचैतत्सूत्रस्यैवज्ञापक
त्वात्।अतिभवकानिति।इदमेवज्ञापनफलमितिभावः।अत्यादयःक्रांताद्यर्थेद्वितीययेतिप्रादिसमासः।प्रत्याचख्याविति।क्लोःस्नूडितिसत्रुक्यहणंप्रकृति
प्रत्यापत्तिवचनंवाअनित्यत्वेज्ञापकं लक्ष्यानुरोधाच्चव्यवस्थेतिभावः।यथोत्तरमिति।तथाचसंप्रतिभाष्यकारोक्तैवव्यवस्थेतिभावः।गणेसन्निवेशादिति
एतेनपूर्वापरेतिगणसूत्रेऽसंज्ञायामितिग्रहणंमंदप्रयोजनमितिध्वनितं।संज्ञायांयानिपूर्वादीनितेषांगणेसंन्निवेशाभावात्।एवमष्टाध्यायीस्थेपूर्वपरा
वरेतिसूत्रेप्यसंज्ञायामित्येतत्त्यक्तुंशक्यं।नचतदभावेजसिपरतःसंज्ञायामुत्तराः कुरवइत्यत्राप्राप्तविकल्पःस्यादितिवाच्यं।सर्वनामसंज्ञायाअन्वर्थ
त्वेनसंज्ञायामप्राप्तविधेरसंभवादसंज्ञायामेवपूर्वेणप्राप्तासंज्ञाजसिवास्यादितिवक्तुमुचितत्वात्।।संज्ञाकार्यमिति।सर्वनामसंज्ञाप्रयुक्तंस्मायादिकमित्य
र्थः।अंतर्गणकार्यमिति।अद्डितरादिभ्यः।त्यदादीनामः।तदोसःसावित्यादिकमित्यर्थः।अतिकतरमिति।अत्राद्डादेशोन।अतितदित्यत्रतुत्यदाद्यत्वंतदोः
।

तृतीयासमासे।अत्रविभाषादिक्समासेइत्यतःसमासइत्यनुवर्तमानेपुनःसमासग्रहणंगौणार्थस्यापिसंग्रहार्थमित्यभिप्रेत्याह।तृतीयासमासार्थेति।इहपू
र्वंसदृशेतिविहितःसमासोऽयंत्वनेप्रतिपदोक्तत्वात्।नतृकर्तृकरणेतिसमासः।तेनत्वयकाकृतमित्यत्रनिषेधोनभवति।ओकारसकारभकारादौसुपीतिव्यवस्था
पयिष्यमाणत्वादिहसुपष्ठेः।आगकच्।समुदायस्येति।तन्नैवंद्वंद्वस्यमुख्यत्वात् नचद्वंद्वेयानिसर्वादीनीतिसंबंधः।कारकाणांक्रिययैवान्वयात्।नचद्वंद्वेविद्य
मानानियानीतिसंबंधः।विद्यतिक्रियाध्याहारेगौरवात्निषेध्यायाःभवतिक्रियायाएवप्राधान्येनतदन्वयस्यैवन्याय्यत्वाच्चेतिभावः।सुट्प्रसंगइति।नचद्वंद्वे
चेतिनिषेधसामर्थ्याद्वर्णाश्रमेतराणामित्यादौसुट्नप्रसज्यतइतिवाच्यं।अनांगस्यन्नतसिलादेर्व्यावृत्त्यातत्सामर्थ्यस्योपक्षीणत्वात्।जसाधारमिति।शीभा

तृतीयासमासे।१।१।३०।अत्रसर्वनामतानस्यात्।मासपूर्वीयात्।तृतीयासमासार्थवाक्येपिन।मासेनपूर्वाय।द्वन्द्वेच।१।१।३१।द्वन्द्वेउक्तासंज्ञान।
वर्णाश्रमेतराणां।समुदायस्याऽयंनिषेधोनत्ववयवानां।नन्वेवंतदन्तविधिनासुट्प्रसङ्गः।सर्वनाम्नोविहितस्यामःसुडितिव्याख्यातत्वात्।
विभाषाजसि।१।१।३२।जसाधारंयत्कार्यंशीभावाख्यंतत्रकर्तव्येद्वन्द्वेउक्तासंज्ञावास्यात्।वर्णाश्रमेतरे।वर्णाश्रमेतराः।शीभावम्प्रत्येवविभाषे
त्युक्तां।अतोनाकच्।किन्तुकप्रत्ययएव।वर्णाश्रमेतरकाः।प्रथमचरमतयाल्पार्धकतिपयनेमाश्च।१।१।३३।एतेजसःकार्यंप्रत्युक्तसंज्ञावास्युः।प्र
थमे।प्रथमाः।इत्यादि।शेषंरामवत्।तयप्प्रत्ययस्ततस्तदन्ताग्राह्याः।द्वितये।द्वितयाः।शेषंरामवत्।नेमे।नेमाः।शेषंसर्ववत्।विभाषाप्रकरणेतीयस्य
ङिन्त्सूपसंख्यानं।द्वितीयस्मै।द्वितीयायेत्यादि।एवन्तृतीयः।अर्थवद्ग्रहणान्नेहापटुजातीयाय॥ १९ वेनजस्यपह्नतेर्योपचारिकमाधारत्वमत्रबो

ध्यं।।यद्वा।।जसइजसि।तस्मिन्सोत्तरःसप्तम्यालुक्इत्यर्थतोव्याचष्टे।जसाधारमिति।अन्यथासत्यकचिजसःशीत्यस्यप्रवृत्तौवर्णाश्रमेतरकेइत्यपिरूपंस्यादितिभावः।य
द्वाअज्ञातःकुत्सितोवाइतरःइतरकःइत्यकच्कृत्वावर्णाश्चआश्रमश्चइतरकश्चेतिद्वंद्वःक्रियेततदारूपद्वयंस्यादेवापरंतुइतरशब्देनद्वंद्वंकृत्वाअज्ञातावर्णाश्रमेतरा
इत्यज्ञाताद्यर्थयोगोयदाक्रियतेतदावर्णाश्रमेतरकाइत्येकमेवरूपंसाध्वितिबोध्यं।ननुद्वंद्वावयवस्येतरशब्दस्यापिअकच्द्वाराःअवयवस्यसर्वनामतानपायात्।
द्वंद्वेचेत्यनेनहिसमुदायस्यनिषेधोनत्ववयवानामित्युक्तमितिचेत्अत्राहुः।सिद्धांतेहिजहत्स्वार्थावृत्तिपक्षोमुख्यस्तस्मिंस्तुपक्षेअवयवानांनिरर्थकत्वादज्ञाताद्यर्थ

चःप्राप्तिरेव नास्ति। येस्तुद्वंद्वे चेति चकारेणावयवेष्वपि संज्ञा निषिध्यत इत्युच्यते तेषां अजहत्स्वार्थवृत्तिपक्षाभ्युपगमेपि न दोष इति। प्रथमचरमेनेम शब्दस्य नित्यं प्राप्ते अन्येषामप्राप्ते वायमारंभः। तयः प्रत्यय इति। संख्याया अवयवे तयबिति विहितः। तीयस्येति। द्वेस्तीयः। त्रेः संप्रसारणं चेति विहितस्य। पटुजातीयायेति। प्रकारवचने जातीयर्॥ ॥ जराया जरा। अष्टन आ विभक्ताविति तो विभक्तावित्यनुवर्त्य अचिरनुक्त इत्यतो ऽच्वृत्तेनाचीत्यनेन विशेष्यते विशेषणेन हि तदादिविधिः यस्मिन्विधिस्तदादावल्ग्रहण इत्यस्य तदंतविधेरपवादत्वादित्याशयेनाह। अजादौ विभक्ताविति। अजादौ किं। जराभ्यां जराभिः। विभक्ताविति किं। जरायाइदं जारं। न च जराया असुङ् वास्त्विति वाच्यं। जराशब्दात्तत्करोतीति णिचि णाविष्ठवदिति टिलोपे ततः क्विपि णिलोपे चैकदेशविकृतस्यानन्यतया जरित्यस्य जराशब्दत्वादसुङि ङिच्चेत्यस्य प्रवृत्त्या जसौ जस इति रूपापत्तेः। इष्यते त्वत्रापि जरसौ जरस इति। न च णिलोपस्य स्थानिवद्भावाद्विभक्तिपरत्वाभावेन जरसावि

जराया जरसन्यतरस्यां ७।२।१०१ जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ। पदाङ्गाधिकारे तस्य तदन्तस्य च। अनेकाल्त्वात्सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति। एकदेशविकृतस्यानन्यत्वात् जरशब्दस्य जरस्। निर्जरसौ। निर्जरसः। इनादीन्बाधित्वा परत्वाज्जरस्। निर्जरसा निर्जरसे। निर्जरसः। पक्षे हलादौ च रामवत्। वृत्तिकारास्तु पूर्वविप्रतिषेधेन इनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपं न तु निर्जरसा निर्जरस इति केचिदित्युक्तौ। तथा भिसि निर्जरसैरिति रूपान्तरमुक्तां तदनुसारिभिस्त्वषष्ठ्येकवचने निर्जरस्येत्येव रूपमिति स्वीकृतमेतच्च भाष्यविरुद्धं॥ ९९

त्यादिनसिध्यतीति शंक्यं। चौ लुप्तं न स्थानिवदिति निषेधात्। यद्यपि चौ लुप्तं न स्थानिवदिति क्वाचित्कं तथापीह तदाश्रयणे जरसिति गुर्वादेशकरणमेव मानमित्यवधेयं। पदाङ्गाधिकार इति परिभाषेयं येन विधिरित्यस्य प्रपंचभूता। अत एव मनोरमायां पदमंगं च विशेष्यं विशेषणेन च तदंतविधिरित्युक्तं। विशेष्यमिति तु प्रायेणेति बोध्यं तेनास्त्रोपीन इति सूत्रे अंगावयवो योनिति वक्ष्यमाणो ग्रंथः संगच्छते। अत्र नव्याः। नन्वाकरे तस्य तदन्तस्य पदस्य चेति प्रचुरः पाठः। तदंतस्येति पाठे तु बहुच्पूर्वके ष्वपि पदांगाधिकारकार्याणि प्रवर्तेरन्नित्याशंक्य समाधत्ते अनभिधानात्पदांगाधिकारकार्याणि बहुच्पूर्वके न प्रवर्तन्त इत्याशयेन फलितार्थकथनपरत्॥ ॥ ॥ ।

मातदुत्तरपदस्यचेतिपठितंनत्विदमपूर्ववचनमिति।सोपसर्गस्यसर्वस्यस्थानेजरसादेशमाशंक्याह।निर्दिश्यमेति।ननुतदंतविधिनापिजराशब्दांतंयदंगंतत्रैव निर्दिश्यमानजराशब्देजरसादेशेनभवितव्यंनतुनेत्यतआह।एकदेशविकृतस्येति।पदाधिकारेपितदंतविधावुदाहरणंतदंतस्यापिरूत्वरत्वेदीर्घोहोनिदाघ इत्यादिवक्ष्यति।अलुगुत्तरपदइत्यस्मउत्तरपदाधिकारोपिपदाधिकारग्रहणेनगृह्यते।तत्फलंतुतत्रैवस्फुटीकरिष्यते।पक्षेइतिजरसादेशाभावे।तदनुसारि भिरिति।येतुनिर्जरसिनेत्यादिव्याचक्षतेतन्मतानुसारिभिरित्यर्थः।निर्जरस्येत्येवेति।पूर्वविप्रतिषेधेनस्यादेशेकृतेजरसादेशोनप्रवर्त्ततइत्येकमेवरूपमि तितेषामाशयः।अतएववीतजन्मजरसंपरंशुचिब्रह्मणःपदमितिभारविप्रयोगमसमंजसंमत्वावीतजन्मरजसइतिपठनीयमितितैरुक्तं।एतच्चेतिभाष्य कृताहिटाङसीतिसूत्रेइनाऽऽतौप्रत्याख्यायनादेशमदादेशंचविधायनादेशेपरेएत्वंआङिचापइत्यत्राङिचेतियोगंविभज्यसाधितं।तथाचनिर्जरसिन

पद्दन्नोमासहृन्निशऽसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ६।१।६३। पाददन्तनासिकामासहृदयनिशाअसृग्यूषदोष यकृत्शकृत्उदकआस्यएषांपदादयआदेशाःस्युःशसादौवा।यत्तुआसनशब्दस्यआसन्नादेशइतिकाशिकायामुक्तंतत्प्रामादिकं॥ पादः।पादौ।पादाः।पादं।पादौ।पदः।पादान्।पादेन।पदा।इत्यादि॥

॥ निर्जरसादित्येतद्भाष्यविरुद्धमितिस्पष्टमेव।नचनादेशेकृतेहलिलो पप्रवृत्त्याअनेनेत्येतन्नसिध्यतीतिशंक्यं।नशब्देपरतोविशिष्यानादेशविधानात्॥तथाहि।अनाप्यकइत्यत्रअनन्नापीतिपदच्छेदः।नपुंसकत्वात्सोर्लुकि नलोपः।नापीतिसमाहारद्वंद्वात्सप्तम्येकवचनं।नचङसेरदादेशेकृतेपररूपंस्यादित्यपिशंक्यं।अकारोच्चारणसामर्थ्याद्दीर्घसंभवात्।तथाजरयाजरसन्य तरस्यामित्यस्मिन्नेवसूत्रेभाष्येउक्तमतिजरैरितिभवितव्यं।सन्निपातपरिभाषयेति।ततश्चनिर्जरसैरित्यपिभाष्यविरुद्धमेव।एतेनातोभिसइतिसूत्रेएसिति वक्तव्येऐस्करणंनिर्जरसैरितिरूपार्थमितिकेषांचिद्व्याख्यानंप्रामादिकमितिस्पष्टमेव॥ ॥पद्दन्नो॥शसादौवेतिअनुदात्तस्यचर्दुपधस्यान्यतरस्यामित्यनुवर्त्ततइतिभावः।अत्रशस्प्रभृतयोनिमित्ततयोपात्तास्तेचपदाद्यादेशानुरूपान्प्रकृतिविशेषान्आक्षिपंतीत्याह।पाददंतेति॥ ॥ ॥

यद्यपि शीर्षश्छंदसीत्यतः छंदसीति अनुवर्तते तथापि भाषायामपि क्वचित्पदादयो भवंति मासश्छंदसीति वार्तिके छंदोग्रहणसामर्थ्यादिति वक्ष्यति॥ प्रामादिकमिति। तथाहि। आस्नोद्रकस्य वार्तिकामिति मंत्रे मुखादित्यर्थः औचित्यात्। द्रकस्य चित् वर्तिकामंतरा स्यादिति मंत्रांतरसंवादाच्च। तथाहि व्याघ्र स्नानमासनीति मंत्रे मुखे इत्यर्थः। एवमासन्यं प्राणमूचुरित्यादि बोध्यं॥ ॥ सुडनपुंसकस्य। सुट् स्त्रीपुंसयोरिति वक्तव्ये अनपुंसकस्येति वचनं ज्ञापकं प्रसज्यप्रतिषेधेपि नञ्समासोस्तीति कैयटः। तेन असूर्यंपश्यानि मुखानीत्यादि सिद्धं। स्वादिष्वसर्वनामसु इत्यत्र सप्तमी बहुवचनमिति न शंक्यं किंत्वसर्वनामस्थान इति पर्युदासात् त्वर्थमेकवचनमेव। सुपीत्येव सिद्धे आदिग्रहणमधिकपरिग्रहार्थमित्याशयेनाह। कप्रत्ययावधिष्विति। नन्वेवं राजेत्यत्र नलोपो न स्यात् प्रत्ययलक्षणेन सर्वनामस्थानपरतया पदत्वाभावात् नैष दोषः सौ परतः स्वादिष्वित्यनेन पदत्वासंभवेपि सुप्तिङंतमिति पदसंज्ञायां हल्ङ्यादिना सुलोपे एकदेशविकृतन्यायेन नकारांतस्य पदत्वात्। यदि तु स्वादिष्विति योगेन स्वादिषु परेषु पूर्वं पदं भवतीति पूर्वस्य पदसंज्ञां विधाय यचि भमित्यत्र यचीति छित्वा यजादौ सर्वनामस्थाने परतः पूर्वं पदं नेति निषिध्यते तदा औजसादिषु पदसंज्ञाभावेपि सौ परतः पदत्वसंभवात्। राजेत्यादौ नलोपकार्येन काप्यनुपपत्तिः। यचि भं। यचीत्यल्ग्रहणे न सप्तमीनिर्देशात्तदादिविधिरित्याह। यकारादिष्विति। यकारादिषु किं। गार्ग्यः। वात्स्यः। गर्गादिभ्यो यञि यस्येति चेत्यकारलोपो यथा स्यात्। असर्वनामस्थाने किं। सुपादौ सुपादः। विद्वांसौ विद्वांसः। दित्यवाहौ दित्यवाह इत्यादौ पादः पत् वसोः संप्रसारणं वाह ऊठ् इत्यादयो माभूवन्निति। आकडारात्। इह प्राक्कडारात् समास इत्यस्य नावधित्वं व्याप्तिन्यायात्। तत्पुरुषो दिगुश्चेति लिंगाच्च संज्ञा स्य॥

सुडनपुंसकस्य।१।१।४३। सुट्प्रत्याहारः। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य। स्वादिष्वसर्वनामस्थाने।१।४।१७। कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात्। यचि भं।१।४।१८। यकारादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात्॥ आकडारादेका संज्ञा।१।४।१। इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या परा ऽनवकाशा च। तेन शसादौ च विभसंज्ञैव न पदत्वम्। अतो जश्त्वन्नादतः। दता जश्त्वं दद्भ्यामित्यादि। मासः। मासा माभ्यामित्यत्र रुत्वे यत्वे च यलोपः। माभ्यां माभिरित्यादि॥

समावेशार्थं तत्र चकारस्तदाह । कडाराः कर्मधारय इत्यत इति । एकस्यैवोभयसंज्ञेति । उभयोः सावकाशत्वे विप्रतिषेधे परमिति परैव गृह्यते निरवकाशत्वे तु सैवा तत्र पर स्या उदाहरणं धनुषा विध्यतीति । अत्र शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसंगे परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते नि रवकाशायाः पूर्वस्यास्तूदाहरणं भवतस्तक्षको भवदीय इति । अत्र हि सिति चेति पदसंज्ञा परामपि भसंज्ञां बाधते निरवकाशत्वात्तेन तकारस्य जश्त्वं भवति । प्रकृते तु परा अनवकाशा भसंज्ञा पदसंज्ञां बाधत इति शसादावचि सैव गृहीतु मुचितेत्याशयेनाह । यापरेत्यादि यचो प इति । हलि सर्वेषामित्यनेन लोपो व्योर्वली ति तु न प्रवर्त्तते । । यत्वस्यासिद्धत्वात् । । ॐ । । अल्लोपोनः । । भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषः । अंगचेति ह्ययमनो विशेषणं अन्तु अकारस्येत्यभिप्रेत्य व्याचष्टे । । अंगावयव इत्यादि । अन्नंतस्य भस्यांगस्याकारस्य लोपः स्यादिति प्राचां व्याख्याने तक्ष्णोत्यादौ तकाराकारस्यापि लोपः स्यात् । भस्यांगस्यानोकारस्येति व्याख्या

अल्लोपोऽनः । ६ । ४ । १३४ । अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात् । ।

नेतु अनसा मनसेत्यादौ स्यात् । तन्नाऽन्त्यादिना अन्नंतस्य भस्यांगस्यानो कारस्येति व्याख्यानेपि अनस्तक्ष्णोत्यादावतिव्याप्तिरेवेति भावः । सूत्रे तपरकरणं नञ् समासभ्रमनिवारणाय कृतमित्येके । । ननु प्राणितीति प्राण् ततः शसादि प्रत्यये प्राणः प्राणेत्यादावनितेरिति णत्वस्यासिद्धतया अतिप्रसंगः स्यादिति तद्वा रणायैव तपरकरणमस्त्विति चेन्मैवं । सवर्णदीर्घे कृते अन एव तत्रासत्त्वात् । न च वार्णादांगं बलीय इति सवर्णदीर्घात्प्रागेव लोपः प्रवर्त्तत इति । अस्त्येवानरूप मिति वाच्यं । तथा हि सति व्यावर्त्यालाभेन तपरकरणवैयर्थ्यस्य तदवस्थत्वात् । वस्तुतो वार्णापरिभाषेह न प्रवर्त्तते युगपत्प्रवृत्तावेव वार्णादांगस्य बलीयस्त्वात् । किंच तनासिकस्येति दीर्घे सवर्णदीर्घात्प्रागपि अनो अभावाच्च । तस्मात् भ्रमनिरासार्थमेव तपरकरणं न तु प्राणा इत्यादावनोकारलोपवारणार्थमि तितेषामाशयः । । वस्तुतस्तु एकदेशविकृतन्यायेन भवत्येव तत्रातिप्रसंग इति । तपरकरणमत्राव श्यकमेवेति नव्याः । । । ।

रषाभ्यांनोणः॥ अत्रापदांतस्य मूर्द्धन्य इत्यनुवर्त्य णग्रहणं पदांतस्येति सूत्रं च भाष्ये प्रत्याख्यातं। समानपदे इति। निमित्तनिमित्तिनोरेकपदस्थत्वासंभवात् पदे इ
तीयतैव सामर्थ्यादेकपदत्वे लब्धे समानग्रहणं यत्समानमेव पदं निमित्तवत् पदभिन्नपदत्वाभाववदिति यावत्। तत्र यथा स्यादित्येतदर्थं। तेन समासे रामना
मगंधर्वेगानमित्यादौ न भवति। तत्र हि नकारस्यैकपदवृत्तित्वेपि निमित्तवत्पदभिन्नपदस्थत्वात्। भवति हि पूष्ण इत्यादौ णत्वं। निमित्तवत्पदभिन्नपदत्वाभाव
वद्वृत्तित्वान्नकारस्य मातृभोगीण इत्यादावपि न स्यात् णत्वं भवत्येवा प्रत्ययवृत्तित्वेपि निमित्तवत्पदभिन्नपदवृत्तित्वाभावात्। एतेन समानग्रहणमखंडपदत्वा
भार्थमिति व्याख्यायरामनामेत्यादावतिप्रसंगे निवारितेपि मातृभोगीण इत्यादाव व्याप्तिः स्यादेवेति केषांचिदुक्तिः परास्ता। उक्तरीत्या त्वव्याप्तिशंकाया निरस्तत्वा
त्। पूष्ण इति पूषामंडः। मुद्गामलकयूषस्तु भेदी दीपन पाचन इति दर्शनात्॥ पूर्वत्रासिद्धे न स्थानिवदिति। एतच्च न्यायसिद्धं। निपात्याश्च सिद्धत्वेन तत्रत्ये कर्त
व्ये अचः परस्मिन्नित्यतिदेशस्याप्रवृत्तेः। तस्येति। तस्य पूर्वत्रासिद्धेनेत्यस्य तथा च स्थले न येस्थानिवद्भावो वक्तव्य इत्यर्थः। संयोगादिलोपे। चक्रयत्र इहा च॥

रषाभ्यान्नो णः समानपदे ८।४।१ एकपदस्थाभ्यां रेफषकाराभ्याम्परस्य नस्य णः स्यात्। पूष्णः। पूष्णा। पूर्वस्मादपि विधौ स्थानिवद्भाव इति य
क्षेतु अड्व्यवाय इत्येवाऽत्र णत्वं। पूर्वत्रासिद्धे न स्थानिवदिति तु इह नास्ति तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषेधात्॥ ११ परस्मिन्निति यण

देशस्य स्थानिवत्त्वात् स्कोरिति कलोपो न। लत्वे। निगाल्यते। अत्र णिलोपस्य स्थानिवत्त्वादचि विभाषेति लत्वं। णत्वे। माषवपनी। इह यस्येति चेत्यल्लोपस्य स्थानिव
त्वेन नकारस्य प्रातिपदिकांतत्वाभावात् णत्वं न। ननु गर्गभगिनीत्यत्रेव माषवपनीत्यत्रापि णत्वप्राप्तिर्नास्त्येव। उत्तरपदं यत्प्रातिपदिकं तदंतस्येति वक्ष्यमाण
त्वात्। अत्राहुः। साधनं कृतेति ल्युडं तेन समासे पश्चान्ङीपि यस्येति चेति अल्लोपे कृते नकारस्योत्तरपदांतत्वात् णत्वप्राप्तिरस्त्येवेति। स्यादेतत्। पूष्ण इत्यादौ रषाभ्या
मित्यस्य नोपयोगः ष्टुत्वेनैव रूपसिद्धेः। अत एव षग्रहणमुत्तरार्थमित्याकरे स्थितं इति चेदुच्यते। उत्तरार्थतयापीह षग्रहणं स्थितं ततस्त्व पूष्णः। उष्णातीत्यादौ र
भ्यामिति णत्वस्य प्रवृत्तिः केन वार्यतां ष्टुत्वेनेति चेन्न। तस्यासिद्धत्वात्। न च वचनप्रामाण्यात्सिद्धत्वं शंक्यं पुष्टः। उष्टिः। षष्ठ इत्यादौ चरितार्थत्वात्। न स्य षयो
गेण इत्यंशोऽचरितार्थ इति चेन्न। तस्य पृथगनुक्तेः। इह षात्परस्येत्युक्ति रचरितार्थेत्यस्यापि तुल्यत्वात्। एवमप्युत्तरार्थं षग्रहणमित्याकरो विरु ॥ ॥

ध्यत इति चेन्न। आकरेहीहषग्रहणं विना पूष्णातीत्यादिलक्ष्यस्यासिद्धिर्नास्तीत्येतावदभिप्रेतं न तु पुष्णातीत्यादौ रषाभ्यामित्यस्याप्रवृत्तिरिति॥ ॥ नलोपः प्राति
पदिकान्तस्य। लुप्तषष्ठीकेयं इति। सौत्रत्वात्। न तु षष्ठीतत्पुरुषयोः पूर्वपदे सापेक्षत्वे समासासंभवात्। प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः। तदंतस्येति षष्ठी
तत्पुरुषोयं। तस्य प्रातिपदिकसंज्ञकपदस्य अंतो नकारस्तस्येत्यर्थः। यदि तु प्रातिपदिकेनेत्यनेनापि पदं विशेष्यते तदा विशेषणेन तदंतविधौ सौत्रमंतग्रहणं श
क्यमकर्तुमिति मनोरमायां स्थितं। प्रातिपदिकेति किं। अहन्। पदमिति किं। राजानौ। राजानः। विभाषा ङिश्योः। शीति नपुंसकाच्चेति विहितो गृह्यते तेन तु जश्शसोः शिः
त स्मिन्मत्वा हं भं तु। भस्येत्यनेनासर्वनामस्थाने इत्येवयजादौ राक्षेपात्। तदेतदाह। असर्वनामस्थानेत्यादि। ककुद्दोषणी इति। ककुद् दोषणी इति छेदः। एकपदत्वे
वा
नलोपः प्रातिपदिकान्तस्य। ८।२।७। नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपस्स्यात्। नलोपस्या
ऽसिद्धत्वाद्दीर्घत्वमेत्वमैस्त्वञ्च न। पूषभ्यां। पूषभिः। पूषभ्यः। इत्यादि। विभाषा ङिश्योः। ६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादि
परो योऽन् तस्याऽकारस्य लोपो वा स्यात् ङिश्योः परयोः। पूष्णि। पूषणि। पक्षे राम वत्। पद्दन्निति सूत्रे प्रभृतिग्रहणम्प्रकारार्थं। तथा च। औङः
श्यामपि दोषन्नादेशो भाष्ये ककुद्दोषणी त्युदाहृतः। तेन पदं घ्रिस्वरणोऽस्त्रियां स्वान्तं हन्मानसम्मन इति सङ्गच्छते। आसन्यम्प्राणमूचुरि
तिच। आस्ये भवः आसन्यः। दोषशब्दस्य नपुंसकत्वमप्यत एव भाष्यात्। तेन दक्षिणं दोर्निशाचर इति सङ्गच्छते। भुजबाहू प्रवेष्टो दोरिति साह
चर्यात्पुंस्त्वमपि। दोषन्तस्य तथाविधस्य भजत इति। द्वयोरङ्ह्रो र्भवो भ्यहूः॥ ९९

त्वनुपपत्तिरत्र पदमेव वक्ष्यते। आसन्यमिति। ये चाभावकर्मणोरिति प्रकृ
तिभावान्नस्तद्धित इति टिलोपो न। अत एवेति। ककुद्दोषणी इति भाष्यप्रयोगादेवेत्यर्थः। यद्यपि ककुच्च दोश्च तयोः समाहारः ककुद्दोः ककुद्दोश्च ककुद्दोश्च ककुद्दोषणी त्येकशेषे कृते भाष्यंसु
योज्यमिति दोःशब्दस्य नपुंसकत्वे नेदं प्रमाणं तथापि ककुदित्यस्य पृथक्पदत्वमेवन्याय्यं। अन्यथा वाहूहोर्हिल्लेलब्धे पि ककुद एकत्वं न लभ्यते इति भावः। तस्य पाद्ववद्घम्प दक्षिणं दोर्निशा
चर इति रघुस्तत्र दक्षिणं दोरुद्यम्य तस्य पाद्रवदित्यन्वयः। दोषं तस्येति। अयं च श्रीहर्षप्रयोगः। दोषं हस्तं दूषणं च भजतः। चापस्येति संबंधः। द्वयोरन्होर्भव इति। तद्धितार्थेति समासः। राजाहः

अन्हः सायइति स्यते र्घन्ति अवसानवचनः सायशब्दः संख्याविसायेति ज्ञापकादेकदेशिसमासः । इत्यदन्ताः ॥ विश्वपा इति । विश्वं पाति रक्षतीति विग्रहे पा रक्षण इत्य
स्मादातोनुपसर्गे क इति कं बाधित्वा आतो मनिन्क्वनिब्वनिपश्चेति चकाराद्विजिति व्याख्यातारः । इह र्न्तु दस्यातो मनिनिति विच्, लोके त्वन्येभ्योपि दृश्यंत इति अनेनेति वि
वेकः । दीर्घाज्जसि चाच्चकारादिचीत्यनुकृष्यते नेति च वर्त्तते तदाह । दीर्घाज्जसि इचि चेति । सूत्रे चकाराभावे ह्रस्वाकारादिचि दीर्घाकारान्तु जसीति व्यवस्था संभाव्येतेति

संख्याविसायपूर्वस्याह्नस्याऽहनऽन्यतरस्यां ङौ । ६।३।११० । संख्यादिपूर्वस्याह्नस्याऽहनादेशो वा स्यात् ङौ । द्व्यह्नि । द्व्यहनि । द्व्यह्ने । विगतमहः व्य
न्हः व्यह्नि । व्यहनि । व्यन्हे । अन्हः सायः । सायान्हः । सायान्हि । सायाहनि । सायान्हे । इत्यदन्ताः । विश्वपाः । दीर्घाज्जसि च ६।१।१०५ दीर्घाज्जसि इ
चि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । वृद्धिः । विश्वपौ । सवर्णदीर्घः । विश्वपाः । यद्यपीह औङि नादिचीत्येव सिद्धं जसि तु सत्यपि पूर्वस
वर्णदीर्घे क्षतिर्नास्ति । तथापि गौर्यौ गौर्य इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तं । आतो धातोः ६।४।१४० आकारान्तो यो धातुस्तदन्तस्य भ
स्याऽङ्गस्य लोपः स्यात् अलोन्त्यस्य विश्वपः विश्वपा विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किं । हाहान् । टा । सवर्णदीर्घः । हाहा । ङेः । वृ
द्धिः हाहै । ङसि ङसोर्दीर्घः हाहाः २ । ओसि वृद्धिः । हाहौः । ङौ । आद्गुणः । हाहे । शेषं विश्वपावत् । आत इति योगविभागादधातोरप्याऽकारलोपः क्व
चिन्त । क्त्वः । श्नः । इत्यादन्ताः । हरिः । प्रथमयोः पूर्वसवर्णः । हरी । जसि च । ७।३।१०९ । ह्रस्वान्तस्याऽङ्गस्य गुणः स्याज्जसि परे । हरयः । ह्रस्वस्य गुणः ।
७।३।१०८ । ह्रस्वस्य गुणः स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति सम्बुद्धिलोपः । हे हरे । हरिं । हरी । हरीन् । शेषो घ्यऽसखि । १।४।७ अनदीसंज्ञौ ह्रस्वौ याविव
र्णोवर्णौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् । शेषः किं । मत्यै । एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थं । ह्रस्वौ किं । वातप्रम्ये पूकिंमाने ॥ ॥

भावः । इत्याद्यर्थमिति । ननु सूत्रमाख्योत्वादिभ्य इति निर्देशादिक्प्रत्याहार अच्प्रत्याहारयोरेव निरूढलक्षणेति व्याख्यायते तथा च दीर्घस्याच्त्वाभावाद्गौर्यावित्यादौ पूर्व
सवर्णदीर्घो न प्राप्नोतीति किमनेन निषेधेनेति चेन्मैवं । अस्मादेव निषेधात् ज्ञापकादिगजिमन्नेष्वपि प्रत्याहारेषु लक्षणा स्वीक्रियते । अन्यथा गौरीरित्यादौ शसि परतः पूर्वसव
र्णदीर्घो न स्यात् किं च । उपार्छतीत्यादौ उरण्रपरः नैषादकर्षुकः इत्यादौ विसुसुगिति ठस्य कादेशः । अमीषामित्यादौ इणः परस्य सस्य षत्वं च न सिध्यतीति दिक् । प्रथमयोरि ॥

तिसूत्रानंतरं दीर्घाज्जसीत्येव तु वचं दीर्घाज्जस्येव पूर्वसवर्णदीर्घ इति तस्यार्थः। एवं च चकारेण कर्त्तव्यो नेति च नानुवर्त्तनीयमिति महल्लाघवमित्येके। शसि दीर्घादे-
वेति विपरीतनियमवारणाय न्द्रन्ये काना म्रेडिते इति निर्देश आश्रयणे प्रतिपत्तिगौरवं स्यात् इति यथान्यासमेव श्रेय इत्यन्ये। हाहानिति। गंधर्वविशेषवाचकमव्यु
त्पन्नं प्रातिपदिकमिदं। हाहाहूहूश्चैवमाद्या गंधर्वा इत्यमरः। केचित्तु अकारो वासुदेवस्तेन सह वर्त्तत इति सास्तान् सानिति प्रत्युदाहरंति। त्क्वाः क्नः। यद्यपि त्क्वोल्य
प्यश्नः शानंश्चेत्क्रमश्च त्क्वीति निर्देशादेतत्सूत्रे षात्तो लोपः सिध्यति तथापि त्क्वोल्यपभवति श्नः शानज्भवतीति व्याख्यानवाक्येषु साधुत्वसंख्यावारणाय दमुक्तं।
इत्यादं ताः। सूत्रे शेषपदस्य प्रयोजनमाह। अनदीसंज्ञाविति। यूस्त्र्याख्याविति अतः यूङितिहूस्वश्चेति अतः ह्रस्व इत्यनुवर्त्तते तदाह। ह्रस्वौ याविव्यादि मत्ये इति।
नदीसंज्ञापक्षे घिसंज्ञायां सत्यामाङो नाऽस्त्रियामित्याडागमे घेर्ङितीति गुणे अयादेशे च मते येइति स्यादिति भावः॥ ॥ आङो नाऽस्त्रियामिति तु नोक्तं अमुनाकुलेनेत्यत्र

आङो नाऽस्त्रियां। ७।३।१२०। घेः परस्याऽऽङो ना स्यादस्त्रियां। आङिति टासंज्ञा प्राचां। हरिणा। अस्त्रियां किं। मत्या। घेर्ङिति। ७।३।१११। घिसंज्ञस्य
ङिति सुपि गुणः स्यात्। हरये। घेः किं। सख्ये। ङिति किं। हरिभ्यां। सुपि किं। पट्वी। घेर्ङितीति गुणे कृते। ङसिङसोश्च। ६।१।११०। एङो ङसिङसोरति
परे पूर्वरूपमेकादेशः स्यात्। हरेः। हर्य्योः। हरीणां। अच्च घेः। ७।३।११९। इदुद्भ्यामुत्तरस्य ङेः औत्स्यात् घेरन्तादेशश्चाऽकारः। हरौ। हर्य्योः।
हरिषु। एवं श्रीपत्यग्निरविकव्यादयः॥

यथा स्यात्। न च नुमा रूपसिद्धिः। नुम्‌स्तस्यासिद्धत्वादिकोचीति नुमोऽप्रवृत्तेः। नादेशे तु नासिद्धत्वं। न मुने इति निषे-
धात्। न च न मुने इति निषेधो नुम्येव किं न स्यात्। न इत्यकारस्याविवक्षितत्वादिति वाच्यं। अमुना घटेनेत्याद्यसिद्ध्यापत्तेः। अमुष्मै कुलायेत्यादौ नुम्प्रसंगाच्च। न च तत्र स्माया-
देशे सति नुमोऽप्रवृत्तिरिति शंक्यं। स्मायादेशं बाधित्वा परत्वान्नुमः प्रवृत्तेः। प्राचामिति आचार्याणामिति शेषः। ङसिङसोश्च। इह ङसिङसो द्वौ एङन्वपितयोर्यथासं-
ख्यं नास्वरितत्वात्। अल्पाच्तरस्य पूर्वनिपाताकरणात्। त्रिंगात्‌च्च घेरुपसर्गघोः किरिति निर्देशाच्च। अच्च घेः। अत्र इदुद्भ्यामौदिति ङेः राम् इत्यतो ङेरिति च पदत्र-
यमनुवर्त्तत इत्याशयेनाह। इदुद्भ्यां परस्य ङेः औत्स्यादिति। घेरुत्तरपदस्येति प्राचा व्याख्यातमिह तु नोक्तं। सूत्रे घेरित्यस्य षष्ठ्यंतत्वात्तत्रारव्यादेशे च प्रमाणाभावात्। औदि-

अश्र्वादयः अश्रूव्याप्तावस्मात् रन् प्रत्ययो नञ्पूर्वात् श्रयतेर्डुन् चयनूर्ज्वलरत्नेनोक्तं अश्रोतेर्ईन् रुट् चेति तद्यत्नाम् डित्वाट्टिलोपे सति धातोश्श्रवणाप्रसङ्गात् न चटिलोपाभावो निपात्यत इति वाच्यम् तथा सति डित्वोत्क्षेपणस्य निष्फलत्वापत्तेरिति दिक् जनेः जनीप्रादुर्भावे अस्माद्रन्प्रत्ययः स्याद्धातोरन्त्यलोपश्च जटालग्नकचे मूले मांस्यां प्रक्षेपे उनर्जेरी इति मेदिनी जंघेति जनेरच् प्रत्यये सति अजाद्यतइति टाप् हन्तेः देहावयवे वाच्ये हंतेरच्प्रत्ययः स्यात् द्वित्वञ्च धातोः अभ्यासकार्यं अभ्यासाच्चेति कुत्वम् अमरोक्तिमाह पश्चान्नितम्ब इति जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपीति मेदिनी क्लिशेः क्लिशूविबाधने ऽस्माद्रन्स्यात् केशः स्यात्पुंसि वरुणे ह्रीबेरे कुण्डले पिचेति मेदिनी फलेः फलनिष्पत्तौ पलितं जरसा शौक्ल्यमित्यमरः पलितं शैलजे तापे केशपाके च कर्दमे इति मेदिनी कृञादिभ्यः वुन् करणे कारकः कामराडलुक्

अश्र्वादयश्च अश्रुनयनजलम् जनेष्टन् लोपश्च जरा अचतस्य जङ्घ् च तस्य जनेः जंघादेशः स्यादच्च जङ्घा हन्तेः शरीरावयवे द्वे च जघनं पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनम् पुरः क्लिशेरन् लो लोपश्च लकारस्य लोपः केशः फलेरितजादेश्चयः पलितम् कृञादिभ्यः संज्ञायां वुन् कारकः करका कटकः नरकाम् नरकः नारकोऽपि चेति द्विरूपकोशः सरकं गगनं कोरकः कोरकश्च चीकयतेराद्यन्तविपर्ययश्च कीचको वंशभेदः पचिमच्योरिच्चोपधायाः पेचकः मेचकः ॥ ९१ रकारादिपाषाणः कटेवर्षावरणयोः कटको वलये सानोः कुन् शिल्पिसं

ज्ञयोरिति कुनाप्ययं सिद्धस्तथा च गुणभाज इहेह वुनि उदाहार्याः गुणनिषेधभाजस्तु कुनि उदासीनास्तु यत्र कुत्र चिदिति भावः न्हनयेस्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियामित्यमरः नरकः पुंसि निरये दैत्यान्तरप्रभेदयोरिति मेदिनी उदयनाचार्यास्तु न च नरकान्येव सन्तीति क्लीबे प्रयुंजते तन्निर्मूलमित्याहुः सरतौ सरको ऽस्त्री शीधुपात्रे शीधुपाने च शीधुनोरिति मेदिनी कुशब्दे कोरको ऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोरिति मेदिनी विचकारकोरकानीति माघः कोरकः पुमानित्यमरोक्तिस्तु नादर्त्तव्येत्याहुः अपचरकादयोऽपि इहैव बोध्याः चीकयतेः चिक आमन्त्रणे चीकाश्चचुरादिः अस्याद्यन्तविपर्ययः पचिमच्योरित्वं चानुपदं वृत्स्यमाणं बाहुलकवललभ्यम्बोध्यम् कीचको दैत्यभिद्वाताहतसस्वनवंशयोरिति मेदिनी डुपचष्पाके उलूके करिणः पुच्छमूलोपान्ते च पेचक इत्यमरः पेचको गज

गति गतौ कारके चोपपदेऽसिस्स्यात् तपसन्तापे विद् ज्ञाने · विद्लृ लाभे चन्द्रे चं दं रञ्जतममृतं स्रवत् दिवमीयते असौ चन्द्रमा इति हरदत्तः स च डिदिति · डित्वाट्टिलोपे चन्द्रमसौ · चन्द्रमस इत्यादि सिध्यति · वयसि डुधाञ् · धारणे आङ्पूर्वस्तु यपदेऽसिः स्यात् स च डित् पयोधा इति · पयः शब्दे उपपदे डुधाञः पूर्ववत् · पुरसि च · पुरःश ब्द उपपदे पूर्ववत् · पुरोधास्तु पुरोहित इत्यमरः रौतेरिति · रुशब्दे पुरूरवा बुधसुतो राजर्षिश्च पुरूरवा इत्यमरः चक्षेः चक्षिङ् · व्यक्तायां वाचि · अस्मादसिरण्या त्स च बहुलम् · शित् · शित्वात्सार्वधातुकसंज्ञायां ख्याञ् न नृचक्षाः राक्षसः शित्वाभावपक्षे ख्याञादेशः नृख्याः प्रजापतिः उषः उष दाहे ऽस्मादसिस्स्यात्स च कित् · उषः प्रभातम् · दशपाद्यां तु वसः किदिति पाठः वसति सूर्येण सहेति · उषाः देवताविशेषः अपो भीति सूत्रे · उषसश्चेष्यते इति वार्तिकस्य समुद्भिरित्युदाह

गति कारकोपपदयोः पूर्वपद प्रकृतिस्वरत्वञ्च असिः स्यात् सुतपाः जातवेदाः गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् चन्द्रे मोडित् चन्द्रोपपदान्माङोऽसिः स्यात् स च डित् चन्द्रमाः वयसि धाञः वयोधास्तरुणः पयसि च पयोधाः समुद्रो मेघश्च पुरसि च पुरोधाः पुरूरवाः पुरुशब्दस्य दीर्घो रौते रसिश्च निपात्यते चक्षेर्बहुलं शिच्च नृचक्षाः उषः कित् · उषः दमेरुनसिः सप्तार्चिर्दमूनाः अङ्गतेरसिः इरुडागमश्च अङ्गिराः सर्त्तेरप्पूर्वादसिः अप्सराः प्रायेणायं भूम्नि अप्सरसः विदि भुजिभ्यां विश्वे विश्ववेदाः विश्वभोजाः वशेः कनसिः सम्प्रसारणं उशनाः ॥ ⸓ रणम् विदुरेव ङ्गि हेरदत्तादिभिरपपाठः पुरस्कृतः दमेः

दम उपशमे सप्तार्चिर्दमूनाः शुक्र इत्यमरः पक्षेऽन्येषामपि दृश्यते इति दीर्घः जुहो दमूनाः दमूनसं गृहपतिं वरेण्यम् · दशपाद्यां तु दमेरूनसिरिति सूत्रं एवं दी र्घः पठ्यते तन्मते बाहुलकाद्ध्रस्वो बोध्यः अङ्गिराः अगि गत्यर्थः अङ्गिरा नाम विभेदः सर्त्तेरिति · सृ गतौ · प्रायेणेति · स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा इति शब्दा र्णवः अप्सरस्त्वप्सराः प्रोक्ताः सुमनाः सुमनसश्चेति द्विरूपकोशः एकाप्सरः प्रार्थितयोर्विवाद इति रघुः विदि · विद् ज्ञाने · भुज पालनाभ्यवहारयोः आभ्यां विश्व शब्दे उपपदेऽसिस्स्यात् ॥ शब्दस्वरूपपरत्वाद्विश्वे इत्यत्र स्मिन्नादेशो न कृतः ॥ ॥ ॥

तनोतेः तनुविस्तारेऽस्मात् डउः प्रत्ययस्तस्य सन्वद्भावात् द्वित्वमभ्यासस्येत्वञ्च डित्वाट्टिलोपः पृथगुच्चारणसामर्थ्यान्नुणो न· तितउः चालिनी सक्तुमिव तितउ
ना पुनन्तो यत्र धीरा मनसा वाचमक्रत नितितउः परिपवनं भवतीति· पस्यशायामभाष्यम्· चालिनी तितउः पुमानित्यमरः चालनं तितउन्तु क्लमिति कोशान्तरम्· सा
द्यास्तु हिंगतितउ इति पुन्नपुंसकवर्गे त्रिकाण्डशेषः अर्भक· एते निपात्यन्ते निपातनप्रकारमेवाह· ऋधुवृद्धावित्यादि· प्रथेरिति· प्रथप्रख्याने· पापाने पिबति
स्तनादिकमिति पाकः पोतः पाकोर्भको डिम्भः पृथुकः शावकः शिशुरित्यमरः अर्भकः कथितो बाले मूर्खेपि च कृशेपि च· पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयव
त् पाकः परिणतौ शिशौ केशस्य जरसा शौक्ल्ये स्थात्स्यादौ पचनेपि चेति मेदिनी· अवद्य एते कुत्सिते निपात्यन्ते· वदव्यक्तायां वाचि· अव रक्षणादौ· ऋगतौ रि

तनोतेर्डउः सन्वच्च तितउः पुंसि क्लीबे च अर्भक पृथुक पाका वयसि ऋधुवृद्धौ अतो वन् भकारश्चान्तादेशः प्रथेः कुकन् सम्प्रसारणञ्च पिब
तेः कन् अवद्यावमाधमार्व रेफाः कुत्सिते वदेर्नञि यत् अवद्यं अवतेरमः वस्य पश्चैव· अवमः अधमः अर्तेर्वन् अर्वा रिफतेरौणादि
कादेः रेफः लीरीङोर्ह्रस्वः पुक् च तरौ श्लेषणकुत्सनयोः तरौ प्रत्ययौ क्रमात् लोधातोर्ह्रस्वः प्रत्ययस्य पुट् लिप्तं श्लिष्टं रिप्रं कुत्सितं क्लिशे
रीच्चोपधायाः कन् लोपश्च लो नाम् च क्लिशेः कन् स्यात् उपधाया ईत्वं लस्य लोपो नामागमश्च कीनाशः यमः कित्व फल ञ्चिन्त्यम् अश्नो
तेराशुकर्म्मणि वरट् च चकाराढुपधाया ईत्वम्॥ ११

फ कात्यन ग्रुड निंदाहिंसादानेषु निकृष्ट प्रतिकृष्टार्वरेफयाप्यावमाधमा इत्यमरः कुपूय कुत्सि
ताव द्यखेटगर्ह्याणकाः समा इति चअधमः स्यान्न्यूने पीतिमेदिनी· अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्ग· कः रेफो रवर्णे पुंसि स्यात्कुत्सिते पुनरन्यवदिति च
मेदिनी· लीङ् रीङोः लीङ् श्लेषणे रीङ् श्रवणे क्रमादिति· श्लेषणे वाच्ये तप्रत्ययः कुत्सिते वाच्ये रप्रत्यय इत्यर्थः लिप्तं विषाक्ते भुक्ते च वाच्यवत् स्याद्दिग्धे लिप्ते इति
विश्वः क्लिशेः क्लिशू विबाधने नामागमश्च· प्रत्ययस्येति शेषः चिन्त्यमिति· ईत्वविधानसामर्थ्यादेव गुणाभावसिद्धेरिति भावः कीनाशः कर्षकः क्षुद्रो पांशुधू
लिषु वाच्यवत्· यमे ना इति मेदिनी· अश्नोतेः अशू व्याप्तौ· अस्माद्वरट् स्यात्· आशुकर्म वरं दानादि क्रिया यस्य तस्मिन्वाच्ये शीघ्रदातरीत्यर्थः ॥ ॥

लाङ्गूलमूलोपान्तेचकौशिकइतिमेदिनी· मचस्तुचिकल्पने· मेचकस्तुमयूरस्यचन्द्रकेश्यामलेपुमान्· तद्युक्ते वाच्यवत्क्लीवंस्रोतोञ्जनान्धकारयोरितिमेदिनी॰॥ ❁ ॥जनेः जनजनने·जनीप्रादुर्भावेवा·जठरः कठिनेपिस्यादित्यमरः जठरोनस्त्रियांकुक्षौवृद्धकर्कटयोः स्त्रिषितिमेदिनीवचि वचपरिभाषणे मनज्ञाने आभ्यामरप्रत्ययःस्यात्सचचित्· ठश्चान्तादेशः·वठरःकुक्कुटेवंटेशठेचेतिमेदिनी·उञ्जिदविदारणेऽस्मादूर्ध्वेपपदेअलचौप्रत्ययौस्तः·कृदरादयश्च· कृत्स्मृएतदव्ययपूर्वकदृणातिप्रकृतिकालजन्तानिपात्यन्ते·हंतेः हनहिंसागत्योः क्रमिक्रमुपादविक्षेपेगम्लृगतौ·क्षमूषसहने एभ्यस्तुन्स्यादेषांवृद्धिश्च हर्य्यतेः हर्यगतिकान्त्योः हिरण्यं

जनेररष्ठच् जठरं वचिमनिभ्यांचिच्च वठरोमूर्खः मठरोमुनिशौण्डयोः विदादित्वान्माठरः गर्गादित्वान्माठर्य्यः उञ्जिदृणातेर
लचौपूर्वपदान्त्यलोपश्च उदरः शूररक्षसोः कृदरादयश्च कृदरः कूशूलः मृदरम्बिलंस्तृदरः सर्प्पः हन्तेर्युन्नाद्यन्तयोर्घत्वततवेधा
तनोमारकः क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च क्रान्तुः पक्षी गान्तुः पथिकः क्षान्तुर्म्मशकः हर्य्यतेः कन्यन्हिरच् कन्यन्प्रत्ययः हिरणादेशः
हिरण्यं कृत्रः पासः कर्प्पासः बिल्वादित्वात्कार्प्पासंवस्त्रं जनेस्तुरश्च जर्त्तुः हस्तीयोनिश्च ऊर्णोतेर्डः उर्णाद्धातेर्यत्नुट्च धान्यं जीर्य्य
तेः क्रिन्रश्चवः जिव्रिःस्यात्कालपक्षिणोः बाहुलकाद्गुणेचेतिदीर्घोन मव्यतेर्य्यलोपोमश्चापतुड्वालः मव्यतेरालप्रत्ययःस्यात्त
स्यापतुडागमोधातोर्यलोपोमकारश्चान्त्यस्य ममापतालोविषये ऋजेः कीकन् ऋजीकइन्द्रोधूमश्च ॥ ॥

रेतसिद्धयेशातकुम्भवराटयोः अक्षयेमानभेदेस्याद्रुणेचनपुंसकमितिमेदिनी·कृञ्दुकृञ्· करणेजनेःतुरत्यविभक्तिकंजनेस्तुप्रत्ययोरेफश्चान्तादेशः स्यात्· ऊर्णोतेः ऊर्णुञ् आच्छादनेऽस्मात् डःस्यात्·डित्वाट्टिलोपः टाप् ऊर्णामेषादिलोम्निस्यादावर्तेचान्तराभ्रुवोरित्यमरः भ्रुवोर्मध्ये य आवर्तस्तत्रेत्यर्थः अन्तरान्तरेणेतिद्वितीया· दधातेः डुधाञ्धारणादौ अस्माद्यत् प्रत्ययःस्यात्तस्यनुडागमश्च धान्यंव्रीहिस्तुधान्यकेइतिमेदिनी·जीर्यतेः जॄवयोहानावस्मात्क्रिन्स्यात्· न्रित्यह्रासो रपरत्वम्·रेफस्यवकारादेशः मव्यतेः मव्यबन्धने· अन्त्यस्येति· वकारस्येत्यर्थः ऋजेः ऋजगतौ· ॥ ❁ ॥ ॥ ॥

सि·कौ· त्येवसुवचम्·मङ्गेः उरवउरवीत्यादिरएडकेगत्यर्थेको मगिःपश्यतेकल्याणंमङ्गलंशुभंमङ्गलो ग्रहभेदः मङ्गला सितदूर्वी यामुमायांपुंसि भूमिजेनपुंसकन्तुकल्याणो
सर्वार्थेरक्षणेपिचेतिमेदिनी·भावेष्यञिमाङ्गल्यम्·तत्रसाधुरितियत्मङ्गल्यः स्यात्त्रायमाणाश्वत्थविल्वमसूरके स्त्रियांशम्यामथ·उष्याग्निसिशुक्लावसाशुच
रोचनायामथोदभिल्लोवंशिवकरेत्रिषितिमेदिनी॥ ॥ इत्युणादिषुपञ्चमःपादः॥उणादिप्रत्ययाःसन्तिपादोत्तरशतत्रयम्·तेषांविवेचनंतत्रत्तानेन्द्रस्वा
मिभिःकृतम् १ प्राचातुकतिपयानामेवोणादीनामुपन्यासःकृतोनतुसर्वेषांसोप्युपन्यासोऽनेकत्रघट्टकतयाकृतःकिन्तुविच्छिद्येतिस्पष्टम्·तत्रापिकेचित्प्रमा
दामनोरमायांप्रदर्शितास्तेष्वेवकांश्चित्प्रमादान्दर्शयामः भजोण्विरितिण्विप्रकरणेछन्दसिसहः·वहश्चेत्युपन्यस्यपरौव्रजेःषःपदान्त इतिण्विस्तेनेवषःपरिव्राडि
त्ययंहिप्राचोग्रन्थस्तद्व्याख्यायांतत्त्योनेणपञ्चपाद्युणादिसूत्रेइदम्पयस्यते·इत्युक्तंतदुभयमपिप्रामादिकम्· किंचचीति किंन्दीर्घौहिप्रक्रम्यपरौव्रजेरितिसूत्रस्यपा

चरेश्चाचरमः।मङ्गेरलच्।।मङ्गलं।इत्युणादौपञ्चमःपादः॥उणादयोवहुलम्।३।३।१।।एतेवर्तमानेसंज्ञायाञ्चवहुलंस्युः।केचि
दविहिताअप्यूह्याः।।संज्ञासुधातुरूपाणिप्रत्ययाश्चततःपरे।कार्य्याद्विद्यादनूवन्धमेतच्छास्त्रमुणादिषु॥ ११ ठात्·अस्मिन्नंशेपञ्चपादीद

शपाद्योरेकवाक्यत्वात्·यदपिधनर्तिचक्षिङ्·वपितपिजनिपजेरुसरइतिपठितं·तदप्यनाकरम्·तथाहिजनेरुसिःअर्तिपृवपियजितनिधनितपिभ्योनित्·ए
तेर्णिच्चचक्षेःशिच्चेतिसर्वसम्मतःपाठः·तथूपितस्मैवपुषोवपुष्टरमित्यादिमन्त्रेषुआद्युदात्ततायाअनुकूलश्चवेदभाष्येएवमेवस्थितम्·इत्यादयोद्वितीयपादेप्रमा
दाः·तृतीयपादेपिस्तनिहृषिपुषिगदिहृदिभ्योणेरित्नुचितिप्राचापठितंतत्रहूषीहृदीकेषामपिइत्निकृतांग्रन्थेनपठितो·हूषयित्नुःहृदयित्नुरितिप्रयोगोपिआर्क
रेनदृष्टःस्तनिहृषिपुषिगदिमदिभ्य इतिहिपञ्चपादीपाठः·श्रुविगन्धिमरिङजनिनमिभ्य इतिदशपाद्याम पिकं पठितमित्यन्यदेतत् यदपिशुदक्षिस्पृहिगृहि
भृञ्भ्यआय्य इतिपठित्वादक्षाय्यःजराय्यइति प्राचोक्तंतदपिनदक्षग्रहणस्याकरानारूढत्वात्·इत्यादयस्तृतीयपादेप्रमादाः।।यदपिकृगृहस्तृजागृभ्यःक्विन्·की
विःगीर्विःस्तीर्विरितिप्राचोक्तंतदपिलिपिभ्रमप्रयुक्तमेव·कृविक्षेपेगृनिगरणेस्तृञ्आच्छादनेइतिप्राचोग्रन्थस्थितएवतामुक्तिरपिमूलाशुद्धेवाशुद्धान्तृश्चस्त्य
प्र

ईश्वर इति · स्त्रियां तु टित्वान्ङीप् ईश्वरी प्रत्ययस्वरेण मध्योदात्ता ईशेः वनिपि वनोरचेति ङीब्रयोस्तु धातुस्वरेणाद्युदात्ता पुंयोगलक्षणो ङीषपि अनोदात्ता स्पेशभासपिसकस इति वरच्चित्तदन्ताट्टापि ईश्वरेति विवेकः ईश्वरो मन्मथे शम्भौ नाथे स्वामिनि वाच्यवत् ईश्वरी चेश्वरो मायामिति मेदिनी · ईश्वरा उमायामिति च्छेदः ईश्वरः शंकरे धी शेतत्पत्न्यामीश्वरी ईश्वरा इति वोपालितः विन्यस्तमङ्गलमहौषधिरीश्वराया इति भारविः दशपाद्यां तु सूत्रान्तरमपि · हन्तेरनघश्च · हन हिंसागत्योरस्माद्रन्प्रत्ययः स्यात् · घश्चान्तादेशः हन्यते गम्यतेऽतिथिभिरिति घरः गृहम् · चतेः चते याचनेऽस्माद् उरन्स्यादकार उच्चारणार्थः चतुरनड्होरामुदात्त इत्याम् · प्रातेः अत सातत्यगमनेऽस्मात् पूर्वादस्माद् अरन्स्यात् · रेफादकार उच्चारणार्थः स्वरादिपाठादव्ययत्वम् · अमेः अम गतिसम्भक्तिषु अस्माद् अरन्स्यात्तस्य तुडागमश्च अन्तः

ईश्वरः ॥ चतेरुरन् ॥ चत्वारः ॥ प्राततेररन् ॥ प्रातः ॥ अमेस्तुट् ॥ अन्तरम् मध्यम् ॥ दहेर्गो लो पोरश्च नः ॥ गप्रत्ययो धातो रन्त्यस्य लोपो दकारस्य नकारः ॥ नगः ॥ सिचेः संज्ञायां हनुमौ कश्च ॥ सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् ॥ सिंहः ॥ व्याङि घ्रातेश्च जातौ ॥ कप्रत्ययः स्यात् ॥ व्याघ्रः ॥ हन्तेरच् घुरच ॥ घोरम् ॥ क्षमेरुपधालोपश्च ॥ चात् रच् ॥ क्ष्मा ॥ तरत्तेर्डिः ॥ तयः ॥ ग्रहेरनिः ॥ ग्रहणिः ॥ ङीष् ॥ ग्रहणी व्याधिभेदः ॥ प्रथेरमच् ॥ प्रथमः ॥ ११

शब्दोऽपि प्रातः शश्वत् · अव्ययम् दहेः दह भस्मीकरणे · नगो महीरुहे शैले भास्करे पवनाशने इति मेदिनी · सिचेः षिच क्षरणे · हकारादेश इति · धातोरन्त्यस्येत्यर्थः सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः सिंही क्षुद्रबृहत्योः स्याद्वासके राहुमातरीति विश्वः व्याङि घ्रा गन्धोपादानेऽस्माज्जातौ वाच्यायां कः स्यात् · कित्वादातो लोपः व्याघ्रः स्यात् पुंसि शार्दूले रक्ते रण्डकरञ्जयोः श्रेष्ठे नरादुत्तरस्थः कण्टकार्यां योषितीति मेदिनी · हन्तेः हन्तेरच्स्याद्धातोर्घुरादेशश्च घोरं भीमे हरे इति विश्वः क्षमेः क्षमूष् सहनेऽस्मात् वनिर्मेदिनी महीत्य — च — मरः तरतेः तॄ प्लवनतरणयोरस्मात् डिः स्यात् डित्वाट्टिलोपः ग्रहेः ग्रह उपादाने · ङीषिति शदिकारादित्यनेन ग्रहणी रुक् प्रवाहिकेत्यमरः प्रथेः प्रथ प्रख्याने · प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवदिति मेदिनी · प्रथमचरमेति वैकल्पिकसर्वनामत्वात्तस्य जसः शीभावः प्रथमे प्रथमाः चरेश्च चर गतिभक्षणयोरस्मादमत्स्यात् · चरमे चरमाः

भूतेपि दृश्यन्ते · नन्वेवं वर्तमानग्रहणान्वोणादयो बहुलमित्यत्र नानुवर्त्यताम् · एतच्चोत्तरसूत्रं च त्यज्यताम् · अविशेषेण कालत्रयेपि प्रत्ययलाभादिति चेन्नाहुः
बाहुल्येन वर्तमाने भवन्ति · भूतभविष्यतोस्तु क्वाचित्केवेति विवेकप्रदर्शनायेदमिति भविष्यति गम्यादयइति · गमिष्यतीति गमी ग्रामं · आगमिष्यतीति · आगामी ग
मेरिनिः आङि · णिदित्याङ् · पूर्वस्य तु णित्वादुपधावृद्धिः भीमो भीष्मइति · भियो हेतुभये षुगिति मप्रत्ययसन्नियोगेन वैकल्पिकः षुक् प्रस्कन्दत्यस्मादिति प्रस्कन्दनः
अपादाने ल्युट् प्रस्रवत्यस्मादिति प्रस्रवः · पचाद्यच् · मुह्यत्यस्मादिति मूर्खः मुहेः खो मूर् च · स्खलत्यस्मादिति खलतिर्निष्केशशिरइति प्रागुक्तम् · ताभ्यामितीति · ता
भ्यामित्यनुक्तौ त्वसन्निहितापादानस्यैव परामर्शी दपादानादन्यत्रेत्यर्थः स्यादिति भावः ततोसावितितनोतेः कर्त्तरि क्तिः · अनुदात्तोपदेशेत्यनुनासिकलोपः असौ

भूतेऽपि दृश्यन्ते ।३।३।२। भविष्यति गम्यादयः ।३।३।३। दाशगोघ्नौ सम्प्रदाने ।३।४।७३। एतौ सम्प्रदाने कारके निपात्येते । दाशन्ति तस्मै दाशः । गां
हन्ति तस्मै गोघ्नोऽतिथिः । भीमादयोऽपादाने ।३।४।७४। भीमः । भीष्मः । प्रस्कन्दनः । प्रस्रवः । मूर्खः । खलतिः । ताभ्यामन्यत्रोणादयः ।३।४।७५।
सम्प्रदानपरामर्शार्थं ताभ्यामिति । ततोसो भवति तन्तुः । वर्तन्ते इति वर्त्म । चरन्ति इति चर्म । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।३।३।१०।
क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वासरूपेण तृजादयो न तु

ततो भवति विस्तृतो भवतीत्यर्थे तनोतेस्तुन् · वृत्तमिति · गमनादिना निष्पन्नं यत्तद्वर्त्म वृत्तेः कर्मणि मनिन् · अयनं वर्त्म मार्ग इत्यमरः तुमुन्ण्वुलौ · क्रियार्थः प्रयोजनं यस्याः
सा क्रियार्था तस्यां · अत्रेदं बोध्यम् · तुमुन्ण्वुलोः कृत्त्वाविशेषेपि अव्ययकृतो भावइति वचनाद्भावे तुमुन् · ण्वुल् तु कर्त्तरि · क्रियायामिति निर्देशात्तद्वाचकस्य याती
त्यादेरेवोपपदत्वं सप्तमीस्थमित्युपपदत्वमिति · कृष्णं द्रष्टुमिति · कृष्णकर्मकं यद्विषयदर्शनं तत्प्रयोजनकं यानमित्यर्थः · कृष्णं दर्शकइति · कृष्णकर्मकभविष्यद्दर्श
नकर्तृकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः · क्रियायां किम् · भिक्षिष्ये इत्यस्य जटाः · इहभिक्षार्थो जटाः · नाश्वत्वं न तु क्रियाभिक्षितु जटाइति प्रयोगस्तु धारयती
त्यध्याहारेण समर्थनीयः · क्रियार्थायां किम् · धावतस्ते पतिष्यति · दण्डः अत्र न धावत इति क्रियान्तरत्वे सो दण्डपातं नीयो · धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्य

जागृभ्यः क्विन्निति हि पाठः उणादिवृत्तिकृतां माधवादीनां च सम्मतः जीविः पशुः शीविर्हिंस्रः स्तीविरध्वर्युरिति तद्ग्रन्थे व्युत्पादितं स्तृ इत्यस्य दीर्घान्त
त्व एव हि ॠत इद्धातोरितीत्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि तस्माद्यथाकरमेव हि गृहीतमुचितमिति दिक् यदपि प्राचोक्तं ग्लाज्याहात्वरिभ्यो निरिति तदप्यनाकरम्
आकरे हि वीज्याज्वरिभ्यो निरिति पठित्वा सूत्रद्वयानन्तरं वहिश्रीति सूत्रे ग्लाहात्वरिभ्यो निदिति सूत्रितत्वात् तूर्णिः रथः सदानव इत्यादावाद्युदात्तदर्शनाच्च न
च स्त्रियां क्तिन्नित्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं न तूणादिसूत्रस्थमिति वाच्यमेवमपि त्वरतेः पाठस्यानुचितत्वात् न त्वसौ वार्तिकेऽस्तीति दिक् एवं संस्त्या
ने स्त्यायतेर्ड्रट् इत्यपि प्राचोदाहरणमनाकरम् स्त्याते ड्रडित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात् संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्प्रसवे सुमानिति भा
ष्ये श्लोकपाठो ——— न तु सूत्रपाठस्य तथात्वं दृश्यते एवं तद्ग्रन्थव्याख्यातॄणामपि प्रमादा उक्ताः तद्यथा पाणिन्यादिमुनीनिति व्याचक्षाणो रक्तमने रुच्चोप
धाया इति न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वास्ति अत इत्यनुवर्तमाने मनेरुच्चेत्येव सूत्रितत्वादिति दिक् इति चतुर्थपादे प्राचः प्रमादाः॥ ॥उणादयो बहुल
म्॥ ॥ वर्तमाने लडित्यतो वर्तमानग्रहणं प्रवः संज्ञायामित्यतः संज्ञाग्रहणञ्चानुवर्तते तदाह एते इति अत्र हि सूत्रे धातोः प्रत्ययः कृदतिङिति चानुवर्त्त
ते तेन कृवापाजिमीत्यादिना विहितानामष्टाध्यायीबहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा कृत्संज्ञा च सिध्यति तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र कर्तरि
कृदिति कर्त्रर्थे भवन्ति उणादिप्रत्ययान्तस्य कृत्तद्धितेति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादि सर्वमपीष्टं सिध्यति अपरिदृष्टानामुणादीनां परिदृष्टार्थं बहु
लग्रहणं तस्य फलमाह क्वचिदविहिता अपीति हृतेरुलन्विहितः स तु शंकेरपि भवति शंकुलेति प्रयोगदर्शनात् किञ्च फिड्फिड्डू प्रत्ययौ कुत्रापि न विहितौ अर्ते
रुत्येते ऋफिडः ऋफिड्डः इति तयोः कित्त्वञ्च कल्प्यते तथा षण्ड इत्यत्र सत्वाभावश्चेत्यादि संज्ञास्विति अनादिसंज्ञास्वेव न तु सर्वास्वित्याहुः हृषेरुलजिति प्रत्ययं दृ
ष्ट्वा शंकिः प्रकृतिरूह्यते तेन शंकुलेति सिद्धम् ऋगताविव्यादिभ्यः फिड्फिड्डादिप्रत्यया गृह्यन्ते कार्याद्धि विद्यादिति ऋफिड इत्यादेर्गुणप्रतिषेधादिकार्यानु
रोधादनुबन्धकककारादिकं विद्यात् अनूबन्धमित्यत्रोपसर्गस्य घञीति दीर्घः एतदुणादिषु शास्त्रं शासितव्यमित्यर्थः ॥ ॥ ॥

मोक्तुं घटते इत्यत्र तु भोक्तुमर्हतीति योग्यता आरभते भोक्तुमित्यत्र भोक्तुं प्रक्रमते· उत्सहते इति भुजेराद्यावस्थां लभते इत्यर्थः प्रत्या स्थानमस्ति भोक्तुमित्यादौ तु सम्भव मात्रे· पर्याप्तो भोक्तुमिति· भोक्तुं समर्थ इत्यर्थः उपलक्षणार्थमिति· तस्य फलमाह· अनेहा इति कालो दिष्टोऽप्यनेहापीत्यमरः· तेनेह नेति· अनुवादेन भवतीत्यर्थः यागायेति यष्टुमित्यर्थः तुमर्थाच्च भाववचनादिति चतुर्थी· एतुलोपवाद इति· अव्ययकृतो भाव इति भावे विहितत्त्वात्तुमुनः प्राप्तिरेव नास्तीति भावः॥ ॥ पदरुज पद्यतेऽसाविति· करणस्य कर्तृविवक्षाऽत्र बोध्या· पद्यते गच्छति येनेति फलितोऽर्थः सृ स्थिरे सर्त्तेरिति श्वादेर्ग्रहणात्पादेश्च ग्रहणं स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशे

पदरुजविशस्पृशो घञ् ३।३।१६ भविष्यतीति निवृत्तम् पद्यतेऽसौ पादः रुजतीति रोगः विशतीति वेशः स्पृशतीति स्पर्शः सृ स्थिरे ३।३।१७ सृ इति लुप्तविभक्तिकं सर्त्तेः स्थिरे कर्त्तरि घञ् स्यात् सरति कालान्तरमिति सारः व्याधिमत्स्यबलेषु चेति वाच्यं अतीसारो व्याधिः अन्तर्भावितण्यर्थोऽत्र सरतिः रुधिरादिकमतिशयेन सारयतीत्यर्थः विसारो मत्स्यः सारो बलं दृढांशश्च भावे ३।३।१८ सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् पाकः पाको स्फुरतिस्फुलत्योर्घञि ६।१।४७ अनयोरेच आत्वं स्यात् घञि स्फारः स्फालः उपसर्गस्य घञीति दीर्घः परीहारः इकः काशे काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः नीकाशः अनूकाशः इकः किं प्रकाशः नोदात्तोपदेशेति न वृद्धिः शमः आचमादेस्तु आचामः कामः वामः विश्राम इति त्वपाणिनीयं स्यदो जवे ६।४।२८ स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते स्यदो वेगः अन्यत्र स्यन्दः॥

षणां न तूपपदमिति ध्वनयन्नाह· स्थिरे कर्त्तरीति· अर्द्धर्चादिषु सारशब्दपाठो न मानम्· व्याधीत्यादि· अस्थिरार्थमिदं वचनं तेन विसारेम त्स्य इत्यत्र विविधं संगच्छते· अतीसार इति· उपसर्गस्य घञीति दीर्घः सारो बलमिति· अत्रापि सृधातुरन्तर्भावितण्यर्थः सारयति चेष्टयतीत्यर्थानुरोधात्· बलवानेव हि म्रृते· सिद्धावस्थापन्न इति· पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः आचमेति· नोदात्तेति सूत्रे अनाचमेरित्युक्तत्वादिति भावः तत्रैव सूत्रेऽनाचमि कमिवमीनामिति वार्त्तिकाद्वृद्धिनिषेधो नेत्याहुः· कामो वाम इति· अपाणिनीयमिति· अमेरुदात्तोपदेशत्त्वात् घञि वृद्धेर्दुर्लभत्वात्· ॥ ६ ॥

समानकर्तृकेषु अक्रियार्थेति· भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छेतिप्रतीयते न तु भोजनार्थेच्छेति· अतः पूर्वेणाप्राप्तिरिति भावः सूत्रस्थ समानशब्द एकतावच
न इत्याह· एककर्तृकेष्विति· एकेति किम्· पुत्रस्य पठनमिच्छति· पुत्रस्येति कर्तरि षष्ठी· पुत्रकर्तृकं पठनमित्यर्थः इह सूत्रे समानकर्तृकेति पदाभावे पुत्रस्य पठितुमि
च्छतीति प्रयोगः स्यात्· देवदत्तम्भुञ्जानमिच्छतीति काशिका· अत्र काशिकायामुक्तम्· इच्छं करोतीत्यत्रानभिधानान्नेति· अत्र निष्कर्षमाह· उक्तविषये इच्छन्क
र्तुमिति प्रयोगाभावेपि· इच्छन्कर्तुं गच्छतीत्यादौ तुमुन्ण्वुलौ विति सूत्रेणास्यादिति तच्चिन्त्यम्· करोतीत्यर्थे तुमुनः प्राप्ते रेवाभावात् तस्य भावार्थकत्वात् इ

समानकर्तृकेषु तुमुन् ३।३।१५८ अक्रियार्थोपपदार्थमेतत् इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन्स्यात् इच्छति भोक्तुम् वष्टि वा
ञ्छति वा शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३।४।६५ एषूपपदेषु धातोस्तुमुन्स्यात् शक्नोति भोक्तुम्। एवं धृष्णो
तीत्यादौ अर्थग्रहणमस्तिनैव सम्बध्यते अनन्तरत्वात् अस्ति भवति विद्यते वा भोक्तुम् पर्याप्तिवचनेष्वलमर्थेषु ३।४।६६॥ पर्याप्तिः
पूर्णता तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन्स्यात् पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि पर्याप्तिवचनेषु किम् अलं भुक्त्वा
अलमर्थेषु किम् पर्याप्तम्भुङ्क्ते प्रभूतं तेह गम्यते न तु भोक्तुः सामर्थ्यम् कालसमयवेलासु तुमुन् ३।३।१६७। पर्यायोपादानमर्थोपल
क्षणार्थं कालार्थेषूपपदेषु तुमुन्स्यात् कालः समयो वेला अनेहा वा भोक्तुम् प्रैषादिग्रहणमिहानुवर्त्तते नेह न भूतानि कालः पचती
ति वार्त्ती भाववचनाश्च ३।३।११ भाववर्त्तन्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायाम्भविष्यति स्युः यागाय याति। अण् कर्मणि च।
३।३।१२ कर्मण्युपपदे क्रियार्थायां क्रियायाञ्चाण्स्यात् ण्वुलोपवादः काण्डलावो व्रजति परत्वादयं कादीन्बाधते कम्बलदायो व्रजति ॥

ह चलया कर्तृप्रतीतेः किन्त्विच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः कर्तुमिच्छन्निति प्रयोगस्य सकलसम्मतत्वात्· पदानुपूर्व्याश्चाहरपात्रं पात्रमाहरेत्यादाविव
स्वेच्छायत्तत्वात्· विस्तरस्त्विह मनोरमादावनुसन्धेयः वष्टीति वशकान्तौ· कान्तिरिच्छेति व शधातुरपीच्छार्थकः शकधृष अयमप्यक्रियार्थोपपदार्थं आरम्भः भो
क्तुं शक्नोति· धृष्णोति जानाति इत्यत्र हि भुज्यर्थो विषयतया सम्बध्यते नैपुण्यं त्वगम्यते· ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गम्यते ॥

सु.
सि. कौ.
टी. त.
५०

त्रेड्ढ्भ्यामन्तरस्येङे रिति क्रमसंबंधस्यत्यागायोगाच्चाय त्वव्याचख्युः। अदितितपरत्वं तु द्धा वित्यादावत्वे कृते स्त्रियांटाप्माभूदित्येतदर्थ इति तच्चिंत्यं। तपरग्रहणा
द्धियापासह दीर्घोमाभूत् टाप् तु स्यादेव लक्षणाद्व्यवाधेमानाभावात्। अत एव कृन्मेजंत इति सूत्रे भाष्यादौ सन्निपात परिभाषया पुद्धतावित्यत्र टाप् नेत्युक्तं।
टापोव्यवधाने त्वानंतर्यविघातः स्यादिति। तपरकरणाद्वावभावे तु सन्निपातपरिभाषोपन्यासस्तत्र विरुध्येत। यदपि व्याचख्युः। ओतस्तकारः स्वरितार्थ इति
तदपि नास्तीर्णो वर्हिषि सन्निधाने अग्ना वित्यादौ स्वरितत्वादर्शनात्। न विभक्तावितिसूत्रे ङेरेत स्तुतकार उच्चारणार्थो नेत्संज्ञक इति स्वयमेवोक्तत्वाच्चातस्मादुभ
यत्रतपरकरणमुच्चारणार्थमेवेति मनोरमायां स्थितं॥ ॐ ॥ अनङ्सौ। नकारादकार उच्चारणार्थः। असंवुध्यावितिपर्युदासात्। साविति प्रथमैकवचनं गृह्यते न
तु सप्तमीवहुवचनं। सोर्डेत्येव सिद्धे अनङ्विधानमन्यतोपि स्यादिति ज्ञापनार्थं। तेन उशनसः संवुद्धावनङ्सिद्ध्यतीति प्राचः। यद्यपि सोर्डेत्युक्ते डशनेत्या

अनङ्सौ।७।१।९३। सख्युरङ्गस्याऽनङादेशस्स्यादसम्बुद्धौ सौ परे। ङिच्चेत्यन्तादेशः। अलोन्त्यात्पूर्वउपधा।१।१।६५। अन्त्यादलः पूर्वोवर्ण
उपधासंज्ञस्स्यात्। सर्वनामस्थाने चाऽसम्बुद्धौ।६।४।८। नान्तस्योपधाया दीर्घस्स्यादसम्बुद्धौ सर्वनामस्थाने परे॥ ९९ रसूत्रेणापि ङ्स्यात्। ततश्च

उशनेत्यत्र सर्वनामस्थाने चासंवुद्धाविति दीर्घः स्यात्। परुदंसेत्यत्र तु सांतमहत इति स्यात्। तथापि संज्ञापूर्वकविधेरनित्यत्वात्। अंगवृत्तपरिभाषया वा तत्समाधेयमिति ते
षामाशयः। अलोंत्यात्पूर्वः। अल इति पंचमी अंत्यादित्यनेन विशेष्यत इत्याह। अंत्यादल इति। अलः किं। शिष्टः शिष्टवानित्यादौ अंत्यात्से घातात् पूर्वस्य शकारस्य मा
भूत्। सत्यां हीसंज्ञायां शास इदङ्हलो रिति शस्येत्वं स्यात्। नन्वेवमप्यंत्यादलः पूर्वस्य संघातस्योपधासंज्ञायां शिष्ट इत्यादौ शकारविशिष्टस्याकारस्य इत्वं स्यादि
त्यति प्रसंगदोषस्तदवस्थ एवेति चेदुच्यते। तथा हि। लोके अमीषां ब्राह्मणानामंत्यात्पूर्व आनीयतामित्युक्ते यथाजातीयकोंत्यात्पूर्व आनीयते तथा अत्राप्यंत्याऽ
लात्मक इति तत्पूर्वोप्यलेव गृह्यते तदेतदाह। पूर्वो वर्ण इति। अत्र अचोंत्यादि टीत्यत्रेव अल इति निर्धारणे षष्ठीत्यपि सुवचमिति केचिदाहुः अलां मध्ये योंत्यस्तस्मात्पू
र्वो वर्ण उपधासंज्ञः स्यात् इति व्याख्यायामपि संभवदुक्तिकत्वात्। सर्वनामस्थाने। नोपधाया इति सूत्रे ढ्लोपस्त्रादीर्घग्रहणं चानुवर्तते इत्याशयेनाह। नांतस्येत्यादि।

राम
५०

णि

यदित्रधुर्यान्विश्रामयेत्यादिवण्यिचि वृद्धिमाश्रित्यणिजन्तादेरच् क्रियतेतदारूपंसिध्यति नचणिच्यपिवृद्धिनिषेधः शंक्यः नोदात्तेत्यत्रकृतीत्यनुवृत्त्याणि चिनिषेधाभावात् नचैवमपिमितांह्रस्वइतिह्रस्वः स्यादितिशंक्यम् वेत्यनुवर्त्यव्यवस्थितविभाषाश्रयणेनह्रस्वाभावसिद्धेः परन्तुणिजन्तकल्पनायामर्थाभिधा तेरितिभा वः वस्तुतस्तुनिवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थेणिजितिविवक्षायान्तुनदोषइत्यवधेयम् एवञ्चरोगीचिरप्रवासीपरान्नभोजी परावसथशायीयञ्जीवति तन्मरणंयन्मरणंसोऽस्यविश्रामइत्यादिकविप्रयोगाःसाधवएवेतिबोध्यम्॥ ॥अवोदे अवोदइति उन्दीक्लेदने अवपूर्वः घञिनलोपोनिपात्यते एधइति इन्धे घञिनलोपोगुणश्चनिपात्यते नधातुलोपइतिनिषेधादप्राप्तेगुणस्यनिपातनमितिज्ञेयम् ओद्मइति उन्देरौणादिकेमन्प्रत्ययेनलोपोगुणश्चात्रापिनिपात्यते

अवोदैधौद्मप्रश्रथहिमश्रथाः ६।४।२९ अवोदः अवक्लेदनम् एधइन्धनम् ओद्मः उन्दनम् अन्थेनलोपोवृद्ध्यभावश्च अकर्त्तरिच कारकेसंज्ञायाम् ३।३।१९ कर्तृभिन्नेकारकेघञ्स्यात् घञिचभावकरणयोः रञ्जेर्नलोपःस्यात् रागः अनयोःकिम् रज्यत्यस्मिन्रङ्गः प्रास्यते इतिप्रासः संज्ञायामितिप्रायिकम् कोभवतालाभोलब्धः इतउत्तरम्भावेअकर्त्तरिकारकेइतिकृत्यल्युटोबहुलमितियावद्रूपमप्य नुवर्त्तते।परिमाणाख्यायांसर्वेभ्यः ३।३।२० घञप्अजपोर्बाधनार्थमिदम् एकस्तण्डुलनिचायः द्वौशूर्पनिष्पावौ॥ ११ अन्थेरिति प्रपूर्वस्यहि

मपूर्वस्यचघञिनिपात्यते इतिबोध्यम् प्रायिकमिति सर्वात्मनासंज्ञाग्रहणत्यागेकृतः कटइत्यत्रकारःकटइतिस्यादितिभावः भाष्येत्वनभिधानमाश्रित्यप्रत्या ख्यातम् परिमाणाख्यायाम् सर्वेभ्योधातुभ्यः परिमाणंपरिच्छित्तिः आख्यानमाख्याउक्तिः परिच्छित्तेरुक्तौसत्यामित्यर्थः कस्यपुनःपरिच्छित्तिरितिचेत्प्रत्ययार्थस्ये त्युच्यते आख्याग्रहणंरूढिनिरासार्थंतेनपरिमाणग्रहणेनसंख्यान्गृह्यते सर्वेभ्यःकिम्अन्यथापुरस्तादपवादन्यायेनाचमेवघञ्बाधेतनत्वयम् तण्डुलनिचाय इति॥निचीयतेराशीक्रियतेइतिनिचायः अत्रराश्येकत्वेनसमुदायिनांपरिच्छित्तिरर्थाद्गम्यते एरजित्यचिप्राप्तेघञ्निष्पूयतेशोध्यतेतुषाद्यपनयनेनयस्तण्डुला दिःसनिष्पावः ऋदोरबित्यपिप्राप्तेघञ्शूर्पेणेति करणेतृतीयातस्यकर्तृकरणेकृताबहुलमितिसमासः अत्रशूर्पसंख्ययातण्डुलादेरपिपरिच्छित्तिःशूर्पद्वित्व

नु आर्थिकं न तु शाब्दं निष्पावगतः द्वित्वं तु शाब्दं यद्यप्यत्र निरभ्योः पूल्वोरिति घञ् लभ्यते तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः अप्रत्ययस्य सुखो
साहरणमाह ॥ ॐ ॥ द्वौकाराविति ॥ क्वचित् इति कर्मणि घञ् शूर्पादिना विक्षिप्तो धान्यादिराशिः कारः इह प्रकृत्याश्रय एवापवादो न त्वर्थाश्रयः सर्वेभ्य इति

द्वौकारौ दारजारौ कर्तरि णिलुक् च दारयन्तीति दाराः जारयन्तीति जाराः इङश्च ।३।३।२१ घञ् अ चोपेवादः उपेत्य अस्मादधीयते उपाध्यायः
अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् उपाध्याया उपाध्यायी शृवायुवर्णनिवृत्तेषु शृ इत्यस्य विभक्तिकोनिर्देशः शारो वायुः कार
णो घञ् शारो वर्णः चित्रीकरणमिह धात्वर्थः निव्रियते आव्रियतेऽनेनेति निवृत्तमावरणं बाहुलकात्करणे क्तः गोरिवाकृतनीशारः
प्रायेण शिशिरे कृशः अकृतप्रावरण इत्यर्थः उपसर्गे रुवः ।३।३।२२ घञ् संरावः उपसर्गे किम् रवः अभिनिसः स्तनः शब्दसंज्ञायाम् ८।३।
८६ । अस्मात् स्तनः सस्य मूर्धन्यः अभिनिष्टानो वर्णः शब्दसंज्ञायां किम् अभिनिःस्तनति मृदङ्गः समियुद्रुदुवः ।३।३।२३ संयूयते मि
श्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः सन्द्रावः सन्दावः श्रिणीभुवोऽनुपसर्गे ।३।३।२४ श्रायः नायः भावः अ
नुपसर्गे किम् प्रश्रयः प्रणायः प्रभवः कथम् प्रभावो राज्ञ इति प्रकृष्टो भाव इति प्रादिसमासः कथं राज्ञो नय इति बाहुलकात् वौक्षुश्रुवः
।३।३।२५ । विक्षावः विश्रावः वौ किं क्षवः श्रवः अवोदोर्नियः ।३।३।२६ अवनायः अधोनयनम् उन्नायः ऊर्ध्वनयनं कथमुन्नयः उ
त्प्रेक्षेति बाहुलकात् प्रे द्रुस्तुस्रुवः ।३।३।२७ प्रद्रावः प्रस्तावः प्रस्रावः प्रे इति किम् द्रवः स्तवः स्रवः निरभ्योः पूल्वोः ।३।३।२८ निष्पूयते
शूर्पादिभिरिति निष्पावो धान्यविशेषः अभिलावः निरभ्योः किम् पवः लवः उन्न्योर्ग्रः ।३।३।२९ उद्गारः निगारः उन्न्योः किम् गरः कृ धा
न्ये ।३।३।३० कृ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् उत्कारो निकारो धान्यस्य विक्षेप इत्यर्थः धान्ये किं भिक्षोत्कारः पुष्पनिकरः ॥

पञ्चमीनिर्देशेन तत्रैवावगमात्तेनायं प्रकृत्याश्रयो घञ्क्तिनोऽपवादो न भवति एकानिलो क्ष्विति ॥ ॥

उत्सृष्टवेकांव्ह्यते कर्मणिभावेवाक्तिन् ऊर्ध्वीकृतो राशीकृतं इत्यर्थः तदेतत्सूचयितुमुक्तम् अजपोरपवाद इति तयोरपिप्रकृत्याश्रयत्वाद् यवाधापवादयोः समानविष
यो चित्यात् स्त्रियांक्तिन् त्वर्थाश्रय इति दिक् दारजाराविति अकर्त्तरिकारके इत्यधिकाराद्दृदोरविस्त्यस्य घञपवादत्वाच्च कर्त्तरि घञर्थमिदं वचनम् णिलुक्चेति चात्
घञ्लोपे हि सति यत्राश्रया वृद्धिर्नस्याण्णिलोपस्य स्थानिवद्भावेन व्यवधानात् नच णिञ्निमित्तैव वृद्धिरस्तीति वाच्यम् जारशब्दे मितां ह्रस्व इति ह्रस्वापत्तेः जनी जृष्
ति जृधातो र्घोमित्वात् लुकि तु सति तस्य परनिमित्तत्वाभावेन क्विलुगुपधेति कौलुप्तस्य निषेधेन वास्थानिवत्त्वाभावाज्जार इति रूपं सिध्यतीति भावः एतेन दीर्यते ये
स्तेदाराः जीर्यतेऽनेनेति जार इत्ययन्ताभ्यामेव करणे घञ् अस्तु किमनेन वचनेनेति केषांचिदुक्तिः परास्ता ऋदोरविस्त्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात् अ
धिकाराद्दूर्ध्वे वा सरूपविधेरनङ्गीकाराद् अपवादोऽप्यत्र करणाधिकरणयोरिति ल्युटा वाधादिह दुर्लभ इत्यन्यदेतत् उपेत्येति गुरुसमीपमेत्येत्यर्थः अपादाने

यज्ञे समि स्तुवः ३।३।३१ समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः यज्ञे किम् संस्तवः परिचयः प्रे स्त्रोऽयज्ञे ३।३।३२ अ
यज्ञे इति छेदः यज्ञे इति प्रकृतत्वात् प्रस्तारः अयज्ञे किम् बर्हिषः प्रस्तरो मुष्टिविशेषः प्रथने वावशब्दे ३।३।३३ विस्तीर्णे स्तृणातेर्घ
ञ् स्यादशब्दविषये प्रथने पटस्य विस्तारः प्रथने किम् तृणाविस्तरः अशब्दे किम् ग्रन्थविस्तरः छन्दोनाम्नि च ३।३।३४ स्तुरित्य
नुवर्त्तते विष्टारः पङ्क्तिश्छन्दः विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् ततः कर्म्मधारयः ॥ ॥ ॥

इति परस्तादपवादन्यायेन इङश्चेत्यस्याचएवापवादत्वात् स्त्रियांतुक्तिन् स्यादिति तद्बाधनायायमारम्भः घञनुक्रमणमजयोर्विषय इति वचनात् स्त्रियांघ
ञ् न स्यादिति स्त्रियांग्रहणम् उपाध्यायेति यास्वयमध्यापयति तस्या इदं रूपद्वयम् पुंयोगे तु ङीषेवाऽऽनुगागमस्त्वपाक्षिक इत्युक्तम् कारणोक्तमिति चञ्चवरणा इ
त्यस्माद्दिप्यर्थः नीशार इति उपसर्गस्य घञ्यीति दीर्घः ननु प्रदक्षिणप्रसव्यगामिनां शारणामिति कथं प्रयोगः वाग्रवर्णोत्यर्थपरिगणनादिति चेदत्राहुः अतएववा
र्तिकप्रयोगादक्षेष्वपि स्तृणाते र्घञ् स्व इति ऋदोरविस्त्यप् राज्ञो नय इति णीञ् प्रापणे इत्यस्मादच् ॥ ॥ यज्ञे समि अधिकरणे ल्युटोऽपवादोऽयं घञ् ॥

श·
सि·कौ·
टी·त·
९४

आक्रोशे ग्रहत्वदृत्यप्राप्तेऽयमारम्भः अवग्रहः पदस्येति छेदविशेषइत्यर्थः निग्रहो निरोधः प्रेलिप्सायाम् लिप्सायांकिं देवदत्तस्यप्रग्रहः प्रकृष्टो विनिवेश इत्यर्थः
पात्रप्रग्राहेणेति भिक्षापात्रोपादानेन पात्रंगृहीत्वेतियावत् नौरः नौउपपदेरुओभावादौघञ्स्यात् निवराकन्येति ग्रहवृदृत्यादिनाकर्मण्यपुनर्तुस्त्रीत्वविशिष्टे कर्म
णिपरत्वात् क्तिनाभाव्यम् अजब्प्यांस्त्रीखलनाइत्यनेनेरतआह क्तिन्विषयेपीति एवंचप्रायेणभावार्थएवघञजवंताः पुंसीतिाद्रष्टव्यं रश्मौच रथादियुक्तानां
अश्वानांसंयमनार्थारज्जुःरश्मिः तस्यामभिधेयायांसेउपपदेग्रहेर्घञ्वासाङ्गवादौ इहृद्धिःकृत्वोग्रहिरूपात्तःसक्तदेवतुवक्तुंशक्यम् तथाहि उद्ग्रहः समि

आक्रोशेऽवन्योर्ग्रहः ३।३।४५ अवनिएतयोर्ग्रहेर्घञ्स्यात्शापे अवग्राहस्तेभूयात् अभिभवइत्यर्थः निग्राहस्तेभूयात् वाधइत्यर्थः आ
क्रोशेकिम् अवग्रहः पदस्य निग्रहश्चोरस्य प्रेलिप्सायाम् ३।३।४६ पात्रप्रग्राहेणचरतिभिक्षुः॥ परौयज्ञे ३।३।४७ उत्तरपरिग्राहः स्पे
नवेदेःस्वीकरणं॥ नौरधान्ये ३।३।४८ वृइतिलुप्तपञ्चमीकम् नीवाराः धान्ये किम् निवराकन्या क्तिन्विषयेपिवाहुलकाद्प्रवराःसेनेतिव
त् उदिश्रयतियौतिपृद्रुवः ३।३।४९ उच्छ्रायः उद्यावः उत्पावः उद्रावः कथम्पतनान्ताःसमुच्छ्रयाइतिवाहुलकात् विभाषाङिरुप्लुवोः
३।३।५० आरावःआरवः आप्लावः आप्लवः अवेग्रहोवर्षप्रतिवन्धे ३।३।५१ विभाषेतिवर्त्तते अवग्रहः अवग्राहः वर्षप्रतिवन्धे किम्
अवग्रहः पदस्य प्रेवणिजाम् ३।३।५२ प्रेग्रहेर्घञ्वावणिजांसम्बन्धिचेत्प्रत्ययार्थः तुलासूत्रमितियावत् तुलाप्रग्राहेणचरति तुलाप्र
ग्रहेण रश्मौच ३।३।५३ प्रग्रहः प्रग्राहः वृणोतेराच्छादने ३।३।५४ विभाषाप्रइत्येव प्रवारः प्रवरः परौभुवोऽवज्ञाने ३।३।५५ परि
भावः परिभवः अवज्ञानेकिम् सर्वतोभवनम्परिभवः एरच् ३।३।५६ चयःजयः भयादीनामुपसंख्यानम् नपुंसकेक्तादिनिवृत्त्यर्थ

॥ श ॥ प्र ॥

मुष्टौ· आक्रोशेवन्योः प्रेलिप्सायां परौयज्ञे· अवेवर्षप्रतिवन्धेविभाषाप्रेवणिजामित्यादि· परौभुवोऽवज्ञाने इत्यस्यानन्तरम्· आङिरुप्लुवोरित्यस्यतथात्वनहत
मित्त्येव· वृणोतेः प्रावारइति· उपसर्गस्यघञ्यमनुष्येवहुलमित्युपसर्गस्यदीर्घः आच्छादनेकिं प्रवरोगोत्रप्रशस्तइत्यर्थः॥ परिभावः अनादरः ॥

वर्षमिति॰ परिभवः परीभावस्तिरस्क्रियेत्यमरः परत्वाद्धित्वात्ल्युटौ प्राप्तौ॰ तथाच पूर्वविप्रतिषेधोऽयं फलितः एवञ्च वासरूपन्यायोऽत्र न प्रवर्तते अनयोरपवादत्वादिति भावः
वृषभो वर्षणादिति भाष्यप्रयोगात्तु ल्युडपि वर्षणम्॰॥ ऋदोरप्॰ ऋच्च उच्च ऋतौ तयोः समाहारे सौत्रं पुंस्त्वम्॰ ऋदोरित्ययं न तकारः किं तर्हि दकारः निरभ्योः पूल्वोरित्य

अनयोर्विपूर्वे स्यस्त्रः षत्वं
ऋदोरप् ३।३।५७ ऋवर्णान्तादुवर्णान्तादप् करः गरः शरः यवः लवः स्तवः पवः वृक्षासनयोर्विष्टरः ८।३।९३ अनयोर्विपूर्वे स्यस्त्रः षत्वं निपात्यते विष्टरो वृक्ष आसनञ्च वृक्षेति किम् वाक्यस्य विस्तरः ग्रहवृदृनिश्चिगमश्च ३।३।५८ अस्मात् घञोऽपवादः ग्रहः वरः दरः निश्चयः गमः वशिरण्योरुपसंख्यानम् वशः रणः घञर्थे कविधानम् प्रस्थः विघ्नः द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् चक्रं चिक्लिदं चक्रसः उपसर्गेऽदः ३।३।५९ अस्मात् घञपोऽश्च अदेर्घस्लृ स्यात् घञि अपि च प्रघसः विघसः उपसर्गे किं घासः नौण च ३।३।६० नौ उपपदे अदेर्णः स्यादप् च न्यादः निघसः व्यधजपोरनुपसर्गे ३।३।६१ अस्मात् व्यधः जपः उपसर्गे तु आव्याधः उपजापः स्वनहसोर्वा ३।३।६२ अप् पक्षे घञ् स्वनः स्वानः हसः हासः अनुपसर्ग इत्येव प्रस्वानः प्रहासः यमः समुपनिविषु च ३।३।६३ एषु अनुपसर्गे च यमेरप् वा संयमः संयामः उपयमः उपयामः नियमः नियामः वियमः वियामः यमः यामः नौ गदनदपठस्वनः ३।३।६४ अब्वा स्यात् निगदः निगादः निनदः निनादः निपठः निपाठः निस्वनः निस्वानः क्वणो वीणायाञ्च ३।३।६५ नौ अनुपसर्गे च वीणाविषये च क्वणतेरब्वा स्यात् वीणाग्रहणं प्राद्यर्थम् निक्वणः निक्वाणः क्वणः क्वाणः वीणायान्तु प्रक्वणः प्रक्वाणः नित्यं पणः परिमाणे ३।३।६६ अप् स्यात् मूलकपणः शाकपणः व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः परिमाणे किं पाणः॥

पवा रतयाघ इति धान्त्तापकादीन्धीन्तादप्युदाहरति॰ लवः पवः इति॰ घञोऽपवाद इति॰ निश्चय इत्यत्र अचः प्राप्तिरन्यत्र घञ इति विवेकः हस्तादाने तु प्रपूर्वे काचि नोति घेञ् इत्याहृतः॰ वशिरण्योरिति॰ घञि प्राप्ते वचनम्॰ वशनं वशः रणन्ति शब्दं कुर्वन्त्यस्मिन्निति रणः संग्रामः॰ व्यथते विशेषेण भक्ष्यते इति विघसः वैश्वदेवशिष्टमन्नम्॰ शष्पं बालतृणं घास इत्यमरः॰ उपजा

यजयाच भावेऽकर्त्तरि कारके चेतिवर्त्तते· अतएव यज्ञेन यज्ञमयजन्त देवा इत्यत्र इज्यते यज्ञ इति व्याचक्षते· विश्न इति छ्वोः शूडनुनासिके चेति शः· उपसर्गे घ्वः किरित्यादि
कित्वादातो लोपः· अन्तर्धिरिति· अन्तः शब्दस्याङ्कि विधीतिवार्तिकादुपसर्गत्वम्· उपाधीयतेऽनेनेति· एतेन उपसमीपे स्वधर्ममादधातीत्युपाधिः बाहुलकात्कर्त्तरि
किरिति माधवादिग्रन्थोनादर्त्तव्य इति ध्वनितम् विधाता विश्वसृड्विधिरित्यत्रापि कर्त्तरि माभूत् किः किन्तु विधविधाने इत्यस्मादिगुपधात्किदितीनि रूपसिद्धेः स्त्रियां
क्तिन्· घञोपवाद इति· यत्तु प्रक्रियाग्रन्थं व्याचक्षाणा आहुः भाष्ये त्वधिकः कारोऽधिकार इति घञ्युदाहृत इति तद्भ्रमसात्· नहि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः किं

यजयाचयतविच्छप्रच्छरक्षो नङ्·३।३।९०·यज्ञः याञ्ञा यत्नः विश्नः प्रश्नः प्रश्ने चासन्नेतिज्ञापकान्न सम्प्रसारणं ङित्वन्तु विश्न इत्यत्र गुणनि
षेधाय रक्ष्णः स्वपो नन् ३।३।९१ स्वप्नः उपसर्गे घोः किः ३।३।९२ प्रधिः अन्तर्द्धिः उपाधीयतेऽनेनेत्युपाधिः कर्मण्यधिकरणे च ३।३।९३ कर्म
ण्युपपदे घोः किः स्यादधिकरणेऽर्थे जलानि धीयन्ते अस्मिन्निति जलधिः स्त्रियां क्तिन् ३।३।९४ स्त्रीलिङ्गे भावादौ क्तिन् स्याद्घञोपवादः अ
जपोस्तु परत्वाद्बाध्यते कृतिः चितिः स्तुतिः स्फायी स्फातिः स्फीतिका मइति त्रप्रामादिकम् क्तान्ताद्भावत्वर्थं णिविश्च इरितिवा समाधेयम् श्रू
यजीषिस्तुभ्यः करणे श्रूयतेऽनया श्रुतिः यजेरिषेश्च इष्टिः स्तुतिः ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः तेन नत्वं कीर्णिः गीर्णिः लूनिः धूनिः पूनिः।

नुपुंस्त्वविशिष्ट इति ध्येयम्· अजपोस्त्विति· तयोरवकाशः चयः लवः क्तिनोऽवकाशः कृतिः हृतिः चिनोति लोतिभ्यान्तु स्त्रियामुभयप्रसङ्गे परत्वात्· क्तिन्नित्यर्थः प्रा
मादिकमिति· स्फायः स्फी निष्ठायामिति निष्ठायामेव स्फीभावविधानादिति भावः· श्रुयजीति· परत्वात्करणाधिकरणयोश्चेति ल्युटि प्राप्ते वचनम्· श्रुतिः श्रोत्रम्· य
जेरिति यजेः क्तिनि वचिस्वपीति सम्प्रसारणे व्रश्चभ्रस्जेति षत्वे इष्टिरिति रूपम्· इज्यतेऽनयेति विग्रहः एवमिष्यतेऽनया इष्टिः स्तूयतेऽनया स्तुतिः तेन नत्वमिति की
॥ र्णिरित्यादौ रदाभ्यामित्यनेन नत्वम्· लूनिरित्यादौ तु ल्वादिभ्य इत्यनेनेति विवेकः॥ ॥

ल्हादइति·ल्हादो निष्ठायामित्यनेनेत्यर्थः·चूर्त्तिरितितिचेतिचरफलोरुत्त्वेर्वोरुपधायादीर्घः·चायतेश्चाय्पूजानिशामनयोः॥क्तिन्नपीति·अस्त्रियामितिप्रतिषेधेनस्त्रि
यांवासरूपविधेरभावादिदमुक्तम्·अङोऽपवादइति·पुरस्तादपवादन्यायेनस्थादिभ्यआतश्चोपसर्गेइति·पचेस्तुषिद्भिदादिभ्यइतिप्राप्तस्याङोऽपवादोनतुण्वुलिनोरि
तिभावःण्वुलिनोतुपरत्वाद्बाधतएव·कोत्वंस्थापिकांकोत्वंस्थापिमितिभाष्यकारप्रयोगात्·प्रस्थितिरिति·द्यतिस्यतिमास्थामित्यात्तइत्वम्·सङ्गीतिरिति·घुमास्थेत्यादि
नाईत्वम्·उदात्तइतीति·मन्त्रेवृषेतिसूत्रादनुवर्त्ततेइत्यर्थः·एवञ्चक्तिनंतस्याद्युदात्तत्वेप्राप्ते·ऊतियूतीत्यादयोन्तोदात्ताइतिपर्यवसन्नोर्थः·ईत्वाभावइति·द्यतिस्य

ल्हादइतियोगविभागात्क्तिनिह्रूत्वः।प्रल्हत्तिः।तिचाचूर्त्तिः।फुल्तिः।चायतेःक्तिनिचिभावोवाच्यः।अपचितिः।सम्पदादिभ्यःक्विप्॥सम्पत्।
विपत्।क्तिन्नपीष्यते।सम्पत्तिः।विपत्तिः॥स्थागापापचोभावे।३।३।९५॥क्तिन्स्यादङोपवादः।प्रस्थितिः।उपस्थितिः।सङ्गीतिः।सम्पीतिः।पक्तिः।
कथमवस्थासंस्थेति।व्यवस्थायामिति ज्ञापकात्।ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च।३।३।९७॥अवतेर्ज्वरत्वरेत्यूठ्।ऊतिः।स्वरार्थंवचनं।उदा
त्तइतिहिवर्त्तते।यूतिः।जूतिः।अनयोर्दीर्घत्वञ्चनिपात्यते।स्यतेः।सातिः।द्यतिस्यतिमास्थेतीत्वम्प्राप्तं।इत्वाभावोनिपात्यते।सनोतेर्वा॥जनसने
त्यात्वेकृतेस्वरार्थंनिपातनं।हन्तेर्हिनोतेर्वाहेतिः।कीर्त्तिः।व्रजयजोर्भावेक्यप्।३।३।९८॥व्रज्या।इज्या।संज्ञायांसमजनिषदनिपतमनविदषु
ञ्शीङ्भृञिणः।३।३।९९॥समजादिभ्यःस्त्रियाम्भावादौक्यप्स्यात्सचोदात्तः·संज्ञायां।अजेःक्यपिवीभावोनेतिवाच्यं।समजन्तिअस्यामिति
समज्या।सभा॥निषीदन्त्यस्यान्निषद्या।आपणः।निपतन्त्यस्यामितिनिपत्या।पिच्छिलाभूमिः।मन्यतेऽनयेतिमन्या।गलपार्श्वेशिरा।विदन्त्यन
याविद्या।सुत्या।अभिषवः।शय्या।भृत्या।ईयतेऽनयाइत्याशिविका॥ ॥ १९ तीतिप्राप्तस्याभावइत्यर्थः·हन्तेरिति·नकारस्येत्वंहिनोतेस्तुगुणइतिबोध्यम्·

कीर्त्तिरिति·कीर्त्तयतेर्ण्यासश्रन्थेतियुचिप्राप्तेक्तिन्निपात्यते·उदात्तत्वञ्चतांशुतेकीर्तिं·व्रजयजोःउदात्तइत्येवपित्करणान्नूत्तरत्रानुगत्यर्थम्·गलपार्श्वेति·तयाहिनुद्योत्य
यतेइतिभावः·शेरतेऽस्यामितिशय्या·भरणंभृत्याजीविका·कुमारभृत्याकुशलैरधिष्ठितइतिरघुः·संज्ञायांकिंप्रतिः·स्मृतिः·आसुतिः ॥ ॥ ॥

तथाचव्यवहृतम्· मतिबुद्धिपूजार्थेभ्यश्चकर्मणि भृतो·रुजः रुच्यासुतीत्यादि एतेनमतिबुद्धीत्यादिसूत्रप्रयोगादेवमतिभृतीत्यादीनांसाधुत्वमितिदर्घटावृत्तिः प्रत्यु
क्ता॥ ः॥ क्रियेति·यदाभावकर्मणोः शः तदासार्वधातुकेयक्रिङ्·शयग्लिङ्·स्विति रिङादेशः अन्यत्रतुयगभावेपिशेपरतोरिङादेशेकृते इयङि·सतिरूपंतुल्यं
इच्छा इषेर्भावइतिनत्वकर्त्तरिकारकेपीत्यर्थः अतएवकरणोऽर्थेइष्यतेऽनयाइष्टिरितिप्रागुक्तम्·यकारनिवृत्तिरितिहलादिशेषस्तुनास्तिषाष्ठद्वित्वेधातुद्वित्वे

कृञः शच्च॥३।३।१००॥ कृञइतियोगविभागः। कृञः क्यप्स्यात्। कृत्या। शच्चाचात्क्तिन्। क्रिया। कृतिः। इच्छा॥३।३।१०१ इषेर्भावेशः।
यगभावश्च निपात्यते। इच्छा। परिचर्य्या परिसर्य्या मृगयाटाट्यानामुपसंख्यानम्॥ शेयक्च निपात्यते। परिचर्य्या पूजा। परिसर्य्या
परिसरणं। अत्रगुणोपि। मृगअन्वेषणेचुराद्यावदन्तः अतोलोपाभावोपिशेयक्णिलोपः। मृगया। अटतेः शेयक्रियशब्दस्यद्वित्वं
पूर्वभागेयकारनिवृत्तिर्दीर्घश्च। अटाट्या। जागर्तेरकारोवा॥ पक्षेशः जागरा जागर्य्या। अप्रत्ययात्॥३।३।१०२॥ प्रत्ययान्तेभ्योधातुभ्यः
स्त्रियामकारप्रत्ययःस्यात्। चिकीर्षा। पुत्रकाम्या। गुरोश्चहलः॥३।३।१०३॥ गुरुमतोहलन्तात्स्त्रियामकारःस्यात्। ईहा। ऊहा। गुरोः किम्।
भक्तिः। हलः किम्। नीतिः। निष्ठायांसेटइतिवक्तव्यं। नेह। आप्तिः। तितुत्रेतिनेट्। दीप्तिः। तितुत्रेष्वग्रहादीनामितिवाच्यं॥ निगृहीतिः॥
निपठितिः। षिद्भिदादिभ्योऽङ्॥३।३।१०४॥ षिद्भ्योभिदादिभ्यश्चस्त्रियामङ्। जॄष्क्षदशोङि· गुणः। जरा। त्रपूष् त्रपा। भिदा। विदारण
एवायम्। भित्तिरन्या। छिदा। मृजा। कृपेः सम्प्रसारणञ्च॥ कृपा॥ ॥ ९ वाभ्याससंज्ञास्वीकारात्· इहचतदुभयाभावादितिभावः अटाट्येति

यदातु अटतेर्यङन्तादप्रत्ययादित्यकारस्तदाऽलोपयस्यहलइतियलोपेऽटाटेतिरूपंबोध्यम्·द्वित्वेहलादिशेषेसतिदीर्घोऽकितइत्यभ्यासस्यदीर्घप्रवृत्तेः जा
गर्त्तेरिति·शेपरतः सार्वधातुकेयक्·जाग्रोविचिण्णलिङित्सुगुणः गुरोश्च धातोरित्यनुवृत्त्याह लइति· धातोर्विशेषणात्तदन्तविधौहलन्तोधातुर्लभ्यते·नचायंगुरुरि
तिसम्भवति·अज्विषयोहिगुरुः अतोमत्वर्थीलक्षणेनदाह·गुरुमतइति· ननुविपरीतमस्तुगर्वन्ताद्धलन्तइति· तादृशस्यापिधातोर्ईक्षीनित्यादेःसत्त्वादितिचेन्नैव

अपृक्त एकाल्। असहायवाच्येकशब्दः संख्यावाची वा। न च संख्यावाचित्वे अभैत्सीदित्यत्र हलंतात्परस्य सिचोऽपृक्तत्वाल्लोपः स्यादिति वाच्यं। विभक्तिसाहचर्याद्वि भक्तेरेव लोप इति व्याख्यानात्। एकालिति किं। जागृविः। वेरपृक्तस्येति लोपो न। इदमेवैकग्रहणं वर्णग्रहणे जातिग्रहणं ज्ञापयतीत्यभ्युपगम्य निपात एकाजनाङ् इत्यत्र एकाज्ग्रहणं त्यक्तुमवोचाम। हल्ङ्याप्भ्यो दीर्घादित्येतत् ङ्यापोरेव विशेषणं न तु हलोऽसंभवादित्याह। दीर्घौ याविति। न त्विदं विहितविशेषणं प्रमाणा भावात्। यासा कारित्यादावव्याप्तेश्च न चात्र हलंताद्विहितत्वेन निर्वाहः। यः सरित्यादावतिव्याप्तेः। कर्त्री सखेत्यादावव्याप्तेश्च। पद्यपीत्यदायत्वविधौ विभक्ताविति स्वविषयसप्तमीत्वे स्वीकृते यासेत्यादौ नोक्तदोषः। सुविभक्तेरावंताद्विहितत्वस्य संभवात्। तथा अनङ्विधौ साविति स्वविषयसप्तमीत्वे कर्त्री सखेत्यादावपि न दोषः। हलंताद्विहितत्वस्य सोः संभवात्। तथापि बहुश्रेयसीत्यत्राव्याप्तिप्रसंग इति भावः। हलिति। तस्य सुतिसीत्येवं रूपत्वं एकदेशविकृतन्यायेन बोध्यं। लुप्यत इ

अपृक्त एकाल्प्रत्ययः। १।२।४१। एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्। हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्। ६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते। हल्ङ्याब्भ्यः किं। ग्रामणीः। दीर्घात्किं। निष्कौशाम्बिः। अतिखट्वः। सुतिसीति किं। अभै त्सीत्। तिपा सहचरितस्य ग्रहणात् सिचो ग्रहणं नास्ति। अपृक्तमिति किं। बिभर्त्ति। हल्किं। बिभेद। प्रथमहल्किम्। राजा। नलोपो न स्यात्। सं योगान्तलोपस्याऽसिद्धत्वात्। सखा। हे सखे ॥ ९९ त्ति। यद्यपीह लोपो व्योर्वलीत्यतो लोप इत्यनुवर्तते तेन च तत्र भावसाधनं तथापीह कर्मसाधनं। हलिति प्रथमांतेन सामानाधिकरण्यादिति भावः। निष्कौशाम्बिरतिखट्व इति। प्रादिसमासे गोस्त्रियोरिति ह्रस्वः। न न्विह समस्तस्य ङ्यावंतत्वं नास्ति। न च स्त्रीप्र त्यये तदादिनियमो नास्तीति वाच्यं। अनुपसर्जने हि तथा। इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येव। अन्यथा अतिकारीषगंध्यपुत्र इत्यत्र ष्यङः तत्पूर्वपदलक्षणा संप्रसारणाप्रसंगात्। सत्यं। तथाप्युत्तरपदस्य ङ्यावंतत्वेन सोस्ततः परत्वानपायात् दीर्घग्रहणाभावे सुलोपः स्यादेव। न हीदं ङ्याप्ग्रहणं विहितविशेषणमित्यु क्तं नैवोक्तत्वात्। स्यादेतत्। गंगामात्मन इच्छति गंगीयति ततः। क्विप्। अल्लोपयलोपयेच गंगीः। इह ईकारस्य स्थानिवद्भावेनापृक्तत्वादीर्घत्वाच्चातिव्याप्तिः। न चाल्लो पस्य स्थानिवत्त्वात् सोराप परत्वं नेति शंक्यं। क्वौ लुप्तं न स्थानिवदिति निषेधादिति चेन्नैवं। ङी ई आ आप् इति ॥ ॥ ॥ ॥

इक्श्तिपौ धातोर्निर्देशोनुकरणम् बहुलमित्यनुवृत्तेः क्वचिन्नगुणः स्निक्ज्यः सन् भुवोवुक्लुङ्लिटोः पचतिरिति उपसर्गात्सुनोतिसुवतिस्यति धायतेः सम्प्र
सारणञ्चेत्यादिनिर्देशात्कर्त्तवाचिन्यपिसार्वधातुकेपरे शवादयः एवम्भावकर्मवाचिन्यपिसर्वधातुकेक्वाचिद्गुरुविभाषालीयतेरिति यथात्रहिलीलीङोर्य
कानिर्देशोनतुश्यनेत्युक्तम् यत्तुप्राचाश्तिपःशित्करणसामर्थ्याच्छवादयइत्युक्तम् तन्नपिवतिर्ग्लायतिरित्यादौपिवादेशप्रवृत्त्याआत्वनिवृत्त्याचशित्वस्य
चरितार्थत्वात् ॥ ॥ वर्णादिति वर्णानुकरणादित्यर्थः ननुवर्णादुच्चार्यमाणादिति तथाहि सत्यकारइत्यादावेवस्यान्नतुककारइत्यादौअत्रहिसंघात
स्योच्चारणात् अतुकार्यतिहवर्णमात्रंअकारस्योच्चारणार्थत्वात् कथंतर्हिसमुच्चयार्थश्चकारः एवकारोऽन्यनिवृत्त्यर्थइत्यादिप्रयोगाइतिचेदत्राहुः क्वचित्तं

वर्णात्कारः ॥ निर्देशइत्येव। अकारः। ककारः। रादिफः ॥ रेफः। मत्वर्थीच्छः ॥ बहुलवचनादकारलोपः। मत्वर्थीयः ॥ इणजादिभ्यः।
॥ आजिः। आतिः। इञ्वपादिभ्यः ॥ वापिः। वासिः। स्वरेभेदः। इक्कृषादिभ्यः ॥ कृषिः। गिरिः ॥ ॥ ॥

घात्तादपिभवतिउच्चैस्तरांवावषट्कारइतिसूत्रनिर्देशात् सर्वेचकाराःप्रत्याख्यायन्तेभाष्यप्रयोगाद्बहुलवचनाच्चेति इहकारप्रत्ययस्यधातोरविहितत्वेपिधा
त्वधिकारस्थत्वात्कृत्संज्ञा तेनकृदन्तत्वात्प्रातिपदिकत्वम् प्रयोजनाभावान्नककारस्येत्संज्ञा आर्द्धधातुकत्वाभावादिडागमोन अस्यच्वावित्यादौतुकारप्र
त्ययाभावोबाहुलकादेव रादिफः चासरूपविधिनाकारोपि तेनरकारादीनिनामानिश्रृएवतामम पार्वतीत्यादिप्रयोगःसाधुरेवअकारलोपइति अतद्धितपर
त्वादभत्वाच्चयस्येतिलोपस्याप्राप्तिरितिभावः कृदन्तत्वात्प्रातिपदिकत्वमिहपूर्ववद्बोध्यम् तस्मैमत्वर्थेइत्यत्रबाहुलकाच्छोन शैषिकान्मतुवर्थीयादित्यत्रतु
बाहुलकादेवमतुवर्थशब्दाच्छः अन्येतुनैतत्कृदन्तंमत्वर्थेभवइतिविगृह्यगहादित्वाच्छप्रत्ययेतद्धितान्तमेवेत्याहुः इणजाः धात्वर्थनिर्देशोपात्तस्यएवलो
पवादोऽयम् एवमग्रेपि आजिरिति बाहुलकाज्जेर्वीभावोन ॥

त्वेष्टापामनध्वनि· आशंसायांभूतवच्चेतिनिर्देशेन विपरीतशंकाया अप्रवृत्तेः पिद्भिदा॥ कथं तर्हि मुखाब्जगन्धलब्धेरिति माघः प्रेक्षोपलब्धिरित्यमरश्च षित्वादङि·लभे त्येवस्युचितम्· सत्यम्·अनर्थकास्तुप्रतिवर्णमनुपलब्धेरिति भाष्यप्रयोगाद्बाहुलकाद्वाक्तिन्नपि वोध्यः विस्तरस्त्विह मनोरमायां वोध्यः भिदेति· एवमादयोदन्ताः समु दाया एवगणे पठ्यन्ते तत्र ये प्रकृति भागाभिदच्छिदइत्यादयस्ते आदिशब्देन सूत्रेनिर्दिष्टाः गणे विशिष्टपाठस्तुलोकप्रसिद्धार्थविशेषस्यचाविद्लाक्षणिककार्यस संग्रहार्थः भित्तिरन्येति· भिद्यतइतिभित्तिः कुड्यम्· छिदेति· द्वैधीकरण एवायंः अन्यत्र तुच्छित्तिश्छिद्रम्· मृजेति· मृजूशुद्धौ· असाषित्वाङ्गिदाद्रीपाठः॥ ॥ चि न्तिपूजि· चकारोऽनुक्तसमुच्चयार्थः तेन तोलयतेस्तुलेतिहरदत्तः अतएवतुलायदारोहतिदन्तावासमेतिनैषधस्तदाह·युचोऽपवादइति· एयासश्रन्थेतिवक्ष्यमाण

चिन्तिपूजिकथिकुम्बिचर्चश्च॥३।३।१०५॥ अङ् स्याद्युचोपवादः॥ चिन्ता। पूजा। कथा। कुम्बा। चर्चा। आतश्चोपसर्गे॥३।३। १०६॥ अङ् स्या त्। क्तिनोपवादः। प्रदा। उपदा। श्रदन्तरोरुपसर्गवद्वृत्तिः। श्रद्धा। अन्तर्द्धा। उपसर्गे घोः किरित्यनेन किः अन्तर्द्धिः। एयासश्रन्थोयुच्॥३।३। १०७ अकारस्यापवादः। कारणा। हारणा। आसना। श्रन्थना। घट्टिवन्दिविदिभ्यश्चेतिवाच्यं॥ घट्टना। वन्दना। वेदना। इषेरनिच्छार्थ स्य। अन्वेषणा। परेर्वा॥ पर्य्येषणा। परीष्टिः। रोगाख्यायां ण्वुल्बहुलम्।३।३।१०८॥ प्रच्छर्दिका। प्रवाहिका। विचर्चिका। क्वचिन्न। शिरोर्त्तिः ।धात्वर्थनिर्देशे ण्वुल्वक्तव्यः॥ आसिका। शायिका। इक्श्तिपौ धातुनिर्देशे॥ पचिः पचतिः॥ ॥ स्येत्यर्थः आसनेति आस्यतेऽस्यामिति विग्रहः

ऋहलोर्ण्यदिति ण्यत्प्रत्यये त्वास्या· नचस्त्रीप्रत्यये वासरूपविधिर्नेति शंक्यम्· अपवादस्ययुचः स्त्रीप्रकरणस्थत्वेपि· उत्सर्गस्य ण्यतस्तदभावात्· घट्टिवन्दि॥ विदिर्लाभार्थोगृह्यते ज्ञानार्थस्यतुसम्वित्तिः इषेरिति· अनिच्छार्थस्यइच्छार्थस्यात्विषारिच्छेत्येव रोगाख्यायां तोर्बहुलं ण्वुल्स्यात्प्रत्ययान्तेचेद्रोगस्य संज्ञा क्तिन्नादीनामपवादः प्रच्छर्दिकेति· छर्दवमने· प्रवाहिकेति· प्रवाहयति मुहुर्मुहुः प्रवर्तयतीति प्रवाहिका ग्रहणी· विचर्चिकेति· चर्च अध्ययने प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः पामपामाविचर्चिकेत्यमरः शिरोऽर्त्तिरिति शिरःपीडा अर्दहिंसायाम्· तितुत्रेतिनेट्· धात्वर्थनिर्देश इति· क्रियानिर्देश इत्यर्थः आसिका· शायिकेति· आसनं शयनमित्

शेषत्वविवक्षामाश्रित्य वार्त्तिकमिदम्प्रत्याख्यातमाकरे इति चेत्तर्हि तत्सामान्यात्प्रायेण शेषत्वविवक्षैवेत्यस्तु तथा च घटं कृतमित्यादि तु न प्रसज्यते एवं च क्वचिद् द्वितीयापि दृश्यते भ्रान्तं देशमनेकदुर्गविषममिति दिक् ॥ ॥ कर्मणि च कर्त्तुरिति कर्मणि षष्ठी उभयप्राप्तौ कर्मणीति नियमाद्योनेति न तृतीयात दाह येन स्पृश्यमानस्य क

कर्म्मणि च येन संस्पर्शात्कर्त्तुः शरीरसुखम् ३।३।११६। येन स्पृश्यमानस्य कर्त्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्म्मण्युपपदे ल्युट् स्यात् पूर्वेण सिद्धे नित्यसमासार्थं वचनम् पयःपानं सुखम् कर्त्तरीति किम् गुरोः स्नापनं सुखम् नेह गुरुः कर्त्ता किन्तु कर्म्म वा यौ २।४।५७ अजेर्वी वा स्यात् ल्योः प्रवयणं प्राजनं करणाधिकरणयोश्च ३।३।११७ ल्युट् स्यात् इध्मप्रव्रश्चनः कुठारः गोदोहनी स्थाली खलः प्राक्करणाधिकरणयोरित्यधिकारः अन्तरदेशे अन्तःशब्दाद्धन्तेर्णत्वं स्यात् अन्तर्हणनं देशे तु अन्तर्हननो देशः अत्पूर्वस्येत्येव अन्तर्घ्नन्ति तपरः किम् अन्तर्घानि अयनञ्च अयनस्य णोऽन्तःशब्दात्परस्य अन्तरयणम् अदेश इत्येव अन्तरयनो देशः पुंसि संज्ञायां घः प्रायेण ३।३।११८ करणाधिकरणयोः दन्तच्छदः आकुर्वन्त्यस्मिन् आकरः गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च ३।३।११९ घान्ता निपात्यन्ते हलश्चेति वक्ष्यमाणस्य घञोऽपवादः गावश्चरन्त्यस्मिन्निति गोचरो देशः सञ्चरन्तेऽनेनेति सञ्चरो मार्गः वहन्त्यनेनेति वहः स्कन्धः व्रजः व्यजस्तालवृन्तं निपातनाद्वीभावो न आपणः पण्यस्थानं निगच्छन्त्यनेनेति निगमश्छन्दः चात्कषः निकषः अवे तॄस्त्रोर्घञ् ३।३।१२० अवतारः कूपादेः अवस्तारो जवनिका हलश्च ३।३।१२१ हलन्ताद्घञ् स्यात् घापवादः रमन्ते योगिनोऽस्मिन्निति रामः अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः विमार्गः समूहनी अध्यायन्यायोद्यावसंहाराश्च ३।३।१२२ अधीयतेऽस्मिन् अध्यायः नियन्ति उद्युवन्ति संहरन्त्यनेनेति विग्रहः ॥ १९ ल्युरिति ल्युट् स्यादिति नपुंसके भावे इति बोध्यम् अत एवाह पूर्वेणेति ल्युडित्यनेनेत्यर्थः नेहेति नकर्त्तृत्वेऽपि स्नापने न गुरुः कर्त्ता किन्तु शिष्य इत्यर्थः शरीरग्रहणं किं पुत्रस्य परिष्वञ्जनं सुखं मानसी प्रीतिरत्र करणाधिकरणयोर्येन नाप्राप्तिन्यायेन घञोऽपवादोऽयम

सञ्ज्ञायाम् अधिकरणे ण्वुल् अर्थोऽयमारम्भः उद्दालकः श्लेष्मान्तकः तस्य पुष्पाणि भज्यन्ते यस्यां क्रियायां सा तथा भञ्जनं भञ्जिका भावे ण्वुल् उद्दालकपुष्पाणां भञ्जिकेत्य
न्ये॰ सूत्रे आख्यानशब्दस्याल्पाच्तरत्वेन पूर्वनिपाते व्याख्यानस्य प्रश्नपूर्वकतयाऽर्थतः प्राप्तक्रममनुसृत्य व्याचष्टे॰ परिप्रश्ने आख्याने चेति॰ परिपाटीति॰ पटगतौ प
रिपूर्वः इणजादिभ्य इतीण् कृदिकारादिति ङीष्॰ आक्रोशे आक्रोशः शापः नपुंसके भावे क्तः ननु तयोरेव कृत्यक्तखलर्था इति लिङ्ग॰ त्रयसाधारण्येन भावकर्मणोः
कृत्यादिविधानात्तेनैव नपुंसके भावे क्तः सिध्यति किमनेन पुनर्विधानेनेति चेदत्राहुः भूते इत्यधिकृत्य निष्ठेति सूत्रेण विहितस्य क्तस्य भावोऽर्थस्तयोरेवेति सूत्रे

सञ्ज्ञायाम् ३।३।१०९ अत्र धातोर्ण्वुल् उद्दालकपुष्पभञ्जिका विभाषाख्यानपरिप्रश्नयोरिञ्च ३।३।११० परिप्रश्ने आख्याने च गम्ये इञ् स्या
च्चाण्ण्वुल् विभाषोक्तेर्यथाप्राप्तमन्येऽपि कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम् ए
वं गणिं गणिकां गणनां पाचिं पाचिकां पचां पक्तिम् पर्यायार्हर्णोत्पत्तिषु ण्वुच् ३।३।१११ पर्यायः परिपाटीक्रमः अर्हणमर्हः योग्यता पर्यो
यादिषु द्योत्येषु ण्वुच् स्यात् भवत आसिका शायिका अग्रगामिका भवानिक्षुभक्षिकामर्हति ऋणे इक्षुभक्षिकां मे धारयति उत्पत्तौ इ
क्षुभक्षिका उदपादि आक्रोशे नञ्यनिः ३।३।११२ विभाषेति निवृत्तं नञि उपपदे ऽनिः स्यादाक्रोशे अजीवनिस्ते शठ भूयात् अप्रयाणिः कृ
त्यल्युटो बहुलं ३।३।११३ भावेऽकर्त्तरि च कारके संज्ञायामिति च निवृत्तं राज्ञा भुज्यन्ते राजभोजनाः शालयः नपुंसके भावे क्तः ३।३।११४ ल्युट् च
३।३।११५ हसितं हसनं योगविभाग उत्तरार्थः ॥ ९९ णाविहितः अनेन तु काल सामान्येन नपुंसके भावे क्तो विधीयते एवञ्च स्वविषये परत्वात् घञजपां बाध
क इति परिशेषात्तेषां तु विषयत्वं सिध्यति॰ किञ्च इह भावे चाकर्मकेभ्य इत्यस्यासन्निधानात्सकर्मकेभ्योऽप्ययं भवति॰ यज्ञादिवत् गतं तिरश्चीनमनूरुसारथेरित्यादिद
र्शनात्॰ तथा च नास्य त्वशंकेति॰ नन्वेवं तद्योगे कर्मणि द्वितीया स्यात्॰ कृद्योगलक्षणा षष्ठी न लोकेति निषेधादेवञ्च घटं कृतं इक्षुं भिन्नमित्यादि प्रसज्येत॰ अनूरुसा
रथेरित्यत्र कर्त्तरि तृतीया नापाद्यते॰ कारकषष्ठ्या निषेधेऽपि शेषत्वविवक्षया षष्ठीति॰ समाधानसम्भवात्॰ इति चेन्मैवम् नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यात

ईषत्कार्यस्स्वल्पं कार्यमित्यर्थः खलितिलकारः स्वरार्थः खित्करणान्तूत्तरत्र मुमर्थम् निमिमीति मिनाति मिनोति दीङ्‌ल्यपि च विभाषा लीयतेरिति प्राप्तं निषिध्यते नि
मयइत्यादिसूत्रं च ॥ ःः ॥ उपसर्गात्खल्घञोः लभेश्चेत्यनेनैव सिद्धे नियमार्थमिदमित्याह उपसर्गादेवेति प्रशस्वतीति सुः पूजायाम् अतिरति क्रमणे चेति तयोः
कर्मप्रवचनीयत्वं कर्तृकर्मणोः चकारः सन्नियोगार्थः यदा कर्तृकर्मणोरीषदादीनां च युगपत्प्रयोगस्तदैव प्रत्यययोर्यथा स्यात् न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवा

उपसर्गात्खल्घञोः ७।१।६७ उपसर्गादेव लभेर्नुम्स्यात् ईषत्प्रलम्भः दुःप्रलम्भः सुप्रलम्भः उपालम्भः उपसर्गात्किम् ईषल्लभः
लाभः न सुदुर्भ्यां केवलाभ्याम् ७।१।६८ उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः सुलभं दुर्लभम् केवलाभ्यां किम् सु
प्रलम्भः अतिदुर्लम्भः कथन्तर्हि अतिसुलभमतिदुर्लभमिति यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति ः कर्तृकर्मणोश्च भूकृञोः ३।३
१२७ कर्तृकर्मणोरीषदादिषु च भूकृञोः खल्स्यात् यथासंख्यं नेष्यते कर्तृकर्मणी च धातोरर्थं प्राप्नेन प्रयोज्ये ईषदाढ्यम्भवं ततः प्राक् क व
र्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् खित्वान्मुम् अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् ईषदाढ्यम्भवम् स्वाढ्यम्भवम् ईषदाढ्य
ङ्करः दुराढ्यङ्करः स्वाढ्यङ्करः च्व्यर्थयोः किम् आढ्येन सुभूयते आतो युच् ३।३।१२८ खलोपवादः ईषत्पानः सोमो भवता दुष्पानः सुपानः
भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः दुःशासनः दुर्योधन इत्यादि षात्पदान्तात् ८।४।३५ नस्य णो न निष्पानं सर्पिष्पानं
पात्किं निर्णयः पदान्तात्किं पुष्णाति पदे अन्तः पदान्तोयमिति सप्तमीसमासोयम् तेनेह न सुसर्पिष्केण आवश्यकाधमर्ण्ययोर्णिनिः
३।३।१७० अवश्यङ्कारी शतन्दायी कृत्याश्च ३।३।१७१ आवश्यकाधमर्ण्ययोरित्येव अवश्यं हरिः सेव्यः शतन्देयं ॥ ६ ॥

सुनन्तूपपदत्वमिति वाच्यम् ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयर्थ्यापत्तेः मुमर्थं हि तत्मुम् चानव्ययस्य विधीयते तस्मात्कर्तृकर्मणोरिति उपपदत्वमे
वतदेतदाह ईषदादिषु चेति कर्तृकर्मणी द्वे भूकृञौ च द्वौ तयोर्यथासंख्यं प्राप्तम् सौत्रन्तु काशिकाकृतान्यासकारहरदत्तादिभिः ॥ ॥ ॥

उक्तं हि· अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति इध्मेति· इध्मानि प्रवृश्च्यन्ते येन· गोदोहत्यन्ते यस्यामिति विग्रहः· आकुर्वन्तीति· एत्य कुर्वन्त्यस्मिन्व्यवहारमि त्याकरः· उत्पत्तिस्थानम्· अवे· अवेउपपदे तॄस्तृभ्यां करणाधिकरणयोः पुंसि संज्ञायां घञ् स्यात्· घस्यापवादः॥ ॐ॥ अवहारेत्यादि· वृत्तिकारस्त्वाधारावापशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं संजग्राह· तदसम्बद्धमिति सूत्रमेव उदंको हलश्चेत्येव सिद्धे उदकप्रतिषेधार्थमिदम्· उदकोदञ्चन इति· पुंसि संज्ञायामिति घे प्राप्ते घञि हित· उदके तु घञि प्रतिषिद्धे घ एव स्यान्न तु ल्युडिति चेन्मैवम्· प्रतिषेधसामर्थ्यात् घस्याप्यप्रवृत्तेः· नहि इह घे घञि वा रूपे विशेषोस्ति· न च स्वरे विशेषः घे सति कृदुत्तरप

अवहाराधारावायानामुपसंख्यानम्। उदङ्कोऽनुदके ३।३।१२३ उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके घृतमुदच्यतेऽस्मिन्निति घृतोदङ्कः· चर्ममयम्भाण्डम्। अनुदके किं उदकोदञ्चनः जालमानायः ३।३।१२४ आनीयन्ते मत्स्यादयोऽनेनेत्यानायः· जालमिति किम् आनयनः· खनो घच ३।३।१२५ चाद्घञ् आखनः· आखानः· घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम् तेन भगः पदमित्यादि खनेर्डडरकरकवकाव्याः आखः आखरः· आखनिकः· आखनिकवकः· एते खनित्रवचनाः ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३।३।१२६ करणाधिकरणयोरिति निवृत्तम् एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् तयोरेवेति भावे कर्म्मणि च कृच्छ्रे दुष्करः कटो भवता· अकृच्छ्रे ईषत्करः सुकरः नि मिमीलियां खल्चोरात्त्वन्नेति वाच्यम् ईषन्निमयः दुर्निमयः सुविलयः। निमयः मयः लयः॥ ९ इत्प्रकृतिस्वरेणान्तोदात्तता घञ्यपि थाथादि स्वरेणान्तथैवेति· जालम्॥ जलधान्ये ज्वलितिकसन्तेभ्यो ण इति णप्रत्यये जालशब्दः सिद्धः तेन जालशब्दोऽत्र निपात्यत इति नभ्रमितव्यम्· खनो· घित्करणमिति· आख न इत्यादौ चजोरिति कुत्त्वस्य प्रसक्त्यभावादिति भावः भगः पदमिति· ननु पदमित्यत्र घस्य किं प्रयोजनमिति चेदत्राहुः करणाधिकरणयोः पुंसि संज्ञायामिति यदि घः स्यात्तदा यदमिति नपुंसकं न स्यादनेन नचेत् घो भवति तदा त्विष्टसिद्धिरिति· एते इति· आखनादयः षडित्यर्थः ईषद्दुःसुषु इह सामान्योक्तावपि योग्यतावलाद्विशेषया स्य विषयविभागो लभ्यते· दुरिति कृच्छ्रार्थे इतरौ त्वकृच्छ्रार्थे इति तदेतद्दर्शयति· कृच्छ्रे दुष्कर इत्यादिना भवतेति· न लोकेति षष्ठीनिषेधात्कर्त्तरि तृतीया कृच्छ्रे त्यादि किं

पूजार्थमिति॰ ननु विकल्पार्थमेवास्तु॰ अलंकृत्वा अलंकृत्वेनेति रूपद्वयसिद्ध्यर्थमिति चेन्मैवम्॰ वासरूपन्यायेनैव तत्सिद्धेः न च क्त्वा ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नेति सिद्धान्तात् ल्युटि वासरूपन्यायो नास्तीति वाच्यम्॰ क्त्वा ल्युडादयोऽपवादभूताः स्ववाध्यं नित्यं बाधन्ते॰ इति हि तस्य निष्कृष्टोऽर्थः इह तु ल्युटोऽपवादः क्त्वेति वैषम्यात्॰ ननु प्रैषादिषु कृत्याश्चेति वचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत्किं ततः ज्ञापकसिद्धं न सर्वत्रेति तात्पर्यविरोधेन तत्र दृश्यमानस्य गमैवाधकाभावात्॰ अलंदत्त्वेति॰ अपानेन देयमिति फलितोऽर्थः॥ ॥ उदीचाम्॰ व्यतिहारो व्यतिक्रमः मेङः कृतात्वस्य माङ इति निर्देशो नानुबन्धकृतमनेजन्तत्वमिति परिभाषां ज्ञापयति॰ तेन घुसंज्ञायां देपो प्यदाविति पर्युदासः सिध्यति अपमित्येति॰ समासेऽनञ्पूर्वे इति वक्ष्यमाणेन क्त्वो ल्यपि तुक्॰ याचित्वा प्रणिदत्तात्पर्यः

उदीचां माङो व्यतीहारे।३।४।१९॥ व्यतीहारेऽर्थे माङः क्त्वा स्यात्। अपूर्वकालार्थमिदम्। मयतेरिदन्यतरस्याम्। ६।४।७०॥ मेङः इकारोऽन्तादेशः स्याद्वा ल्यपि। अपमित्य याचते। अपमाय उदीचांग्रहणाद्यथाप्राप्तमपि। याचित्वा अपमयते। परावरयोगे च।३।४।२०॥ परेण पूर्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात्। अप्राप्य नदीं पर्वतः परनदीयो गोत्र पर्वतस्य। अतिक्रम्य पर्वतं स्थिता नदी अवरपर्वतयोगो त्वनद्याः समानकर्तृकयोः पूर्वकाले।३।४।२१॥ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। क्त्वातु अव्ययकृतो भावे। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। स्नात्वा भुक्त्वा पीत्वा व्रजति। अनुदात्तेत्यनुनासिकलोपः। विश्रुन्न त्वा सेठिति। स्वरत्यादेः श्र्युकः कितीति नित्यमिडभावः पूर्वविप्रतिषेधेन। स्वृत्वा सूत्वा धूत्वा।

परावर अप्राप्येति॰ दक्षिणदेशस्थानां गङ्गामप्राप्य विन्ध्यः गङ्गाप्राप्तिविरहविशिष्टदेशस्थो विन्ध्य इत्यर्थः अत्र विन्ध्यात्परा गङ्गेति गम्यते॰ अतिक्रम्येति॰ दक्षिणदेशस्थानामेवायमपि प्रयोगः अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते॰ इह त्रिसूत्र्यां क्त्वाप्रत्ययस्य भावमात्रार्थत्वेऽपि विशेषणविशेष्यसंसर्गा भिद्यन्त इति नास्ति वैयर्थ्यमिति दिक्॰ समानका॥ इह धात्वधिकारेऽपि समानकर्तृत्वं क्रिययोरेव सम्भवतीत्याशयेनाह॰ धात्वर्थयोरिति॰ निर्धारणे षष्ठी सप्तमी वा धात्वर्थयोर्मध्ये पूर्वकालो यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः एवञ्च निर्द्धारणे विभक्तिरेव पूर्वकाल इत्यस्य बहुव्रीहित्वं द्योतिकेति फलितम्॰ क्त्वा स्यादिति॰ स च भावे अव्ययकृत इति वचनात्॰ भावोऽपि घञादाविव नेह सिद्धावस्थः किन्तु साध्यावस्थः स च धातुनैव लब्धः क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं

प्राचापि तथैवोक्तम् तद्व्याख्यातृमिश्रानुमोदितम्' तत्सर्वं न्यादर्तव्यम्' यथासंख्य सूत्रस्थभाष्यविरोधादिति ध्वनयन्नाह' यथासंख्यं नेष्यतइति' ननूपपदयोर्मध्ये पूर्वोप
रीभावव्यवस्था न सिध्यति भूक्तोरव्यवहितत्वं कर्तृकर्मणोरेवेष्यते' नत्वीषदादीनाम्' एवञ्च कथमत्रेष्टव्यवस्था सिध्यतीति चेदत्राह' बहुलग्रहणानुवृत्त्या दुराढ्यंभ
वइति भाष्योदाहरणाच्चेष्टव्यवस्था सिध्यतीति तदेतदभिप्रेत्याह' कर्तृकर्मणी चेति भवतेः कर्तृत्वदाहरति' अनाढ्येनाढ्येनेति' कर्मणि त्वनाढ्य आढ्यो भूयतइति वि
ग्रहः भाव्यतेइति तदर्थः' एवमग्रेपि विग्रहद्वयमुन्नेयम्' अनाढ्येनाढ्येन स्वयमेव क्रियते' अनाढ्यः आढ्यः क्रियतइति' इत्यादीति' आदिशब्देन दुर्दर्शनः दुर्धर्षणः
दुर्मर्षणः॥ ॥ क्तिच्क्तौ' क्तिचश्चकारो न क्तिचीति विशेषणार्थः' नक्ताविन्यक्तेहि क्तिनोपि ग्रहणं स्यादिति प्राञ्चः' तन्न' एकानुबन्धपरिभाषयैव क्तिनो व्यावृत्तिसिद्धे

क्तिच्क्तौ च संज्ञायाम्।३।३।१७४॥ धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम्॥ तितुत्रेति नेट्। भवतात् भूतिः। न क्तिचि दीर्घश्च।६।४।३९॥ अनिटाव
न्ति तनोत्यादीनाञ्च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे। यन्तिः। रन्तिः। वन्तिः। तन्तिः। सनः क्तिचि लोपश्चास्यान्यतरस्याम्।६।४।४५॥
सनोतेः क्तिचि आत्वं स्याल्लोपश्च वा। सनुतात् सातिः। सतिः। सन्तिः। देवा एनं देयासुः देवदत्तः। अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा।
३।४।१८॥ प्रतिषेधार्थयोरलङ्खल्वोरुपपदयोः क्त्वा स्यात्। प्राचां ग्रहणं पूजार्थम्। अमैवाव्ययेनेति नियमान्नोपपदसमासः। दोदद्घोः। अ
लन्दत्वा। घुमास्था। पीत्वा खलु॥ अलङ्खल्वोः किम्। माकार्षीत्। प्रतिषेधयोः किम्। अलङ्कारः॥

१ रितिहरस्तः यत्तु वदन्ति तितुत्रेत्यत्र सामान्यग्र
हणार्थश्चकारः' अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिनइति तद्भ्रमात्' तितुत्रेति सूत्रेऽनुबन्धविशिष्टरूपानुच्चारणेनैकानुबन्धपरिभाषाया उक्तिसम्भव
स्यैवाभावात्' एतेन तितुत्रेति सूत्रे एकानुबन्धत्वात्ति वेव गृह्यते तन्न त्वयं क्तिच्' ततश्चरोदितीति रूपं न स्यादिति शङ्काप्यपास्ता भूतिरिति यद्यपीह परत्वात् श्युकः कितीत्ये
वेट्निषेधो न्याय्यस्तथापि वन्तितन्त्योरिण्निषेधार्थमावश्यकत्वात्फले विशेषाभावाच्च तितुत्रेत्युपन्यस्तम्' दीर्घानुनासिकेति' अनुनासिकस्य क्विझलोरिति दीर्घस्यानु
दात्तोपदेशेत्यादिनानुनासिकलोपस्य च प्राप्तिरिति बोध्यम्' यन्तिरित्यादि' यमउपरमे रमक्रीडायाम्' वनुयाचने' तनुविस्तारे अलंखल्वोः । ॥ ।

तथाचात्रस्थानिवत्त्वाभावाणेरयादेशोभवत्येव॰ निष्ठायांसेटीत्यस्यानित्यत्वज्ञापकत्त्वंत्वचः॰परस्मिन्निति सूत्रेएवास्माभिरुपपादितमितिनात्रोपपाद्यते॰प्रणमय्येति॰ श्रमन्तत्त्वान्मित्वेमितांह्रस्वः॰प्रवेभिदेय्येति॰भिदेर्णिच्॰न्ताह्रेभिद्यत्यस्माण्णि च्यत्त्वोपे यस्य हलइतियलोपः॰ननुह्रस्वयलोपाल्लोपानामाभीयत्त्वेनासिद्धत्वात्त्व गुपूर्वकवर्णात्परोणिर्नास्तीतिकथमिह णेरयादेशः स्यादिति चेन्मैवम्॰ असिद्धवदत्राभादित्यत्रसमानाश्रयेतस्मिन्कर्त्तव्येतदसिद्धंस्यादितिहिव्याख्यातंतेनात्राशंकैवनास्ति॰ ह्रस्वात्परोहिणोणेरयादेशस्तुल्यपिपरतइतिव्याश्रयत्वात्॰॥ ॥ विभाषापः॰ अप्राप्तविभाषेयम्॰ आप्नोतेरिति॰यद्यपीङ्जेणिचि परतः क्रीङ्जीनांणावित्यात्वेऽर्तिह्री

विभाषापः ६।४।५७ आप्नोतेर्णेरयादेशोवास्यात्ल्यपि प्रापय्य प्राप्य क्षियः ६।४।५९ क्षियोल्यपिदीर्घः स्यात् प्रक्षीय ल्यपिच ६।१।४१ वेञोल्यपिसम्प्रसारणन्नस्यात् प्रवाय ज्यश्च ६।१।४२ प्रज्याय व्यश्च ६।१।४३ उपव्याय विभाषापरेः ६।१।४४ परेर्व्येञोवासम्प्रसारणंस्यात्ल्यपि तुकम्बाधित्वापरत्वान्हलइतिदीर्घः परिवीय परिव्याय कथंमुखंव्यादायस्वपितिनेत्रेनिमील्यहसतीति व्यादानसम्मीलनोत्तरकालेपिस्वापहासयोरनुवृत्तेःतदंशविवक्षयाभविष्यति आभीक्ष्ण्येणमुल्च ३।४।२२ पौनःपुन्येद्योत्येपूर्वविषयेणमुल्स्यात् क्त्वाच। द्वित्वं स्मारं स्मारंनमतिशिवं स्मृत्वा स्मृत्वा पायं पायं॰भोजंभोजं॰श्रावं श्रावं॰चिण्णमुलोरितिणमुल्परेणौवादीर्घः गामंगामं गमंगमं। विभाषाचिण्णमुलोरितिनुम्वा लम्भं लम्भं लाभं लाभं व्यवस्थितविभाषयाउपसृष्टस्यनित्यंनुम् प्रलम्भंप्रलम्भम् जागोविचिण्णल्ङित्सुगुणः जागरंजागरम् ण्यन्तस्याप्येवम्॰ ॥

॥ त्यादिनाप्रकि आविति शब्दोऽस्तितथापितस्यनेहग्रहणंलाक्षणिकत्वादितिभावः॰प्राप्येति॰ एतेनायमयोगिवसूत्रपातकैर्भ्रेमिमवाप्यदिवःखलुपात्यतेइतिश्रीहर्षप्रयोगोव्याख्यातः॰अवाप्येत्यस्यावापय्येत्यर्थसम्भवात् एतेनतत्रान्तर्भावितण्यर्थतेति क्लेशमनुभवन्तःपराास्ताः॰ल्यपस्थानिनाकित्त्वाद्वचिस्वपीतिप्राप्तंसम्प्रसारणंनिषेधयितुमाह ल्यपिचेति॰ज्यश्चसम्प्रसारणन्नस्यात्॰एवंव्य श्चेत्यत्रापि व्याख्येयम्॰ कथमिति ल्यवादेशस्यस्थानिभूतं क्त्वाप्रत्ययोदुर्लभः॰तद्विधौपूर्वकालेइत्युक्तेः नचेहतदस्तिपूर्वत्वस्योस्वपितिपश्चान्मुखंव्यादत्ते यदैवहसतितदैवनेत्रेसम्मीलयति॰तथाचक्त्वाप्रत्ययस्यदुर्लभत्वा

धातुसम्बन्धाधिकारात्· संसर्गश्चेह सामानाधिकरण्यं पूर्वोत्तरकालत्वं च तत्र संसर्गविशेषतात्पर्यग्राहकाः क्त्वाणमुलादयः· अत्र च समानकर्तृकयोरिति सूत्रांशे न सामानाधिकरण्यमुपनिबद्धम्· धातूपात्तव्यापाराश्रयस्य कर्तृत्वे तयात तथा पर्यवसानादिति दिक्·। द्वित्वमिति· नन्वमीषां ब्राह्मणानां पूर्वमानयेत्यत्र मध्यमो नानीयते तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वाप्रत्ययो न स्यादिति चेन्नाह· इहाप्याख्यातवाच्या —— क्रियाप्रधानम्· तां प्रति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणम्· न तु तासां परस्परसम्बन्धः गुणानां च परार्थत्वादिति· न्यायात्· अत एव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्यादि नियमेन प्रयुज्यते इति स्वरतिसूतीत्यादिना विकल्पे प्राप्ते नित्यार्थमाह· स्वरत्यादेरिति·॥ ॥ क्त्वि स्कन्दिस्कन्दिर्गतिशोषणयोः· इरइत्संज्ञेति वार्तिकादिकारमात्रस्येत्संज्ञा नेत्यनिदितामिति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम्· स्कन्त्वेति· एकाच इति नेट्· मृड मृद· मृड सुखने· मृद क्षोदे· गुध परिवेष्टने· गुध रोषे· च कुष निष्कर्षे· क्लिशू हिंसायां दि

क्त्वि स्कन्दिस्यन्दोः। ६।४।३१। एतयोर्नलोपो न स्यात् क्त्वि परे स्कन्त्वा। ऊदित्त्वाद्विट्। स्यन्त्त्वा। स्यन्दित्वा। न क्त्वा सेट्। १।२।१८। सेट् क्त्वा किन्न स्यात्। शयित्वा। सेट् किम्। कृत्वा। मृडमृदगुधकुषक्लिशवदवसः क्त्वा। १।२।७। एभ्यः सेट् क्त्वा कित्। मृडित्वा। क्लिशः क्त्वेति वेट्। क्लिशित्वा। क्लिष्ट्वा। उदित्वा। उषित्वा। रुदविदेति कित्त्वं रुदित्वा। विदित्वा। मुषित्वा। गृहीत्वा। नोपधात्थफान्ताद्वा। १।२।२३। सेट् क्त्वा कित् स्याद्वा। श्रथित्वा। श्रन्थित्वा। गुफित्वा। गुम्फित्वा। नोपधात्किम्। कोथित्वा। रेफित्वा। वञ्चिलुञ्च्यृतश्च। १।२।२४। सेट् क्त्वा किद्वा। वचित्वा। वञ्चित्वा। लुचित्वा। लुञ्चित्वा। ऋतित्वा। अर्तित्वा·॥

वादिः क्लिशू विबाधने क्र्यादिः· वद व्यक्तायां वाचि· वस निवासे· कि दिति· असंयोगाल्लिट् किदित्यतः किदित्यनुवर्तते इति भावः· उदित्वेति· यजादित्वात्सम्प्रसारणम्· उषित्वेति· वसतिक्षुधोरिडिति इट् यजादित्वात्सम्प्रसारणम्· शासिवसीति षः· गृहीत्वेति· ग्रहिज्येति सम्प्रसारणम्· ग्रहोलिटीति इटो दीर्घः· नोपधात्थ· अन्तग्रहणं स्पष्टार्थम्· थफादित्युक्तेपि भातो रेव क्त्वाप्रत्ययविधानाद्विशेष्यसन्निधानेन तदन्तविधिना थफान्तादिति लाभात्· कोथित्वा रेफित्वेति· कुथ पूतीभावे रिफ कत्थनयुद्धनिन्दाहिंसादानेषु· इह रलो व्युपधादिति विकल्पोपि न भवति नोपधग्रहणसामर्थ्यात्· वचित्वेति· वञ्चु प्रलम्भने· लुचित्वेति· लुञ्च अपनयने· ऋतित्वेति· ऋतिः सौत्रो धातुर्घृणार्थकः तस्मादीयङ् आर्धधातुकविषये· ऋतेरीयङिति तस्य वैकल्पिकत्वात्तदभावे कित्त्वमनेन विकल्प्यते· ॥ ॥ ॥

श्रिय्यदीर्घग्रहणस्यप्रत्याख्याततत्वेनप्रकृतेआकाररूपस्यआपोऽभावादुक्तातिप्रसंगाभावात्।निक्कोशांनीयतेः क्विपितुनिक्कोशानीइतिभवत्येव।ईकाररूपई
वंतत्वेनसुलोपप्रवृत्तेः।अप्रवृत्तौकिंविभक्तीतितिद्दंचप्रत्युदाहरणंचिंत्यं।विशिष्टस्याहल्त्वात्।सुतिसीनांहल्तितिक्विपंव्याख्यायअतिप्रसंगापादनस्यानुचि
तत्वात्।यत्तुव्याचख्युः।सुरांसुनोतीतिसुरासुत्तमाचष्टेसुरासयतिततःक्विप्।सुराः।सुरासौ।सुरासः।इहसुनोतेरवयवस्यसस्यलोपंव्यावर्तयितुमपृक्तग्रहणं
इतितदपिचिंत्यं।परस्यरसाहचर्येणसुतिसीनांविभक्तीनामेवग्रहणात्।अन्यथासिचोलोपापत्तेरुक्तत्वात्।प्रत्ययाप्रत्यययोःप्रत्ययस्यैवग्रहणाच्च।पसुतिन
स्वरितमितिसूत्रेवैयटेनोक्तेनकाचिदियंपरिभाषाभाष्यवार्तिककाराभ्यामाश्रितेतितद्भ्रमसात्।भस्येतिसूत्रेभाष्यादौतस्याःपठितत्वात्स्वयमपितत्वाख्या
तत्वाच्च।संयोगांतलोपस्यासिद्धत्वात्इति।ननुसंयोगांतलोपोनासिद्धः।नङिःसंबुद्ध्योरितिसूत्रेसंबुद्धिग्रहणात्तज्ज्ञापकात्।नचैवंगोमानित्यादावपिनलोपा
पत्तिः।ज्ञापकस्यविशेषविषयत्वात्।यत्रहिनकारविभक्त्योरानंतर्यंतत्रैवसिद्धं।व्याख्यानात्।यत्त्वाहुः।हेअह्नन्नितिनपुंसकार्यत्वात्तेनतज्ज्ञापकमितितन्न
लुकालुप्तेप्रत्ययलक्षणाभावात्संबुद्धौनपुंसकानामित्यस्यावश्यकत्वाच्च।संबुद्धिग्रहणस्यनपुंसकविषयत्वासंभवेनोक्तज्ञापकस्यसुस्थत्वात्।तस्मान्नलो
पोनप्रयोजनमितिचेदिहतर्हिअभितोभ्रेत्यत्ररोरुत्वंनस्यात्।सिपिद्धेतिरुत्वेविभक्तिसकारस्यसंयोगांतलोपेतस्यासिद्धत्वात्तथाअविभर्भवान्।अजाग
भवानित्यत्रतिलोपोनस्यात्।रात्सस्येतिनियमात्।तदुक्तं।संयोगांतस्यलोपेहिनलोपादिर्नसिध्यति।रात्तुतेनैवलोपःस्याद्धलस्तस्माद्विधीयतेइति।नलोपादि
रित्यादिशब्देनोत्वंसंगृह्यते।अत्रेदमवधेयं।ङ्यापग्रहणंसौरेवविशेषणंनतुतिसोः।व्याख्यानात्।तेनमालेवाचरत्अमालात्।गंगेवाचरत्अगंगात्।इत्यत्र
नातिप्रसंगस्तथाचहल्ङ्यान्तात्परंसुतिसीत्येतदपृक्तंहल्लुप्यतेदीर्घौयौङ्यापौतदंतात्परंसुतिसीत्येतदपृक्तंहल्लुप्यतेइतिव्याख्यातोर्थःपर्यवसन्नः।यत्तु
व्याचख्युः।ङ्याप्भ्यांतिस्योरसंभवएवेति।तत्रङ्यंतात्संभवइतिसत्यं।आवंतात्तुआचारक्विवंतात्त्वरःस्त्रिपसिपोस्त्वएव।अगंगात्।अगंगाइतियथा।न
चशपाव्यवधानं।एकादेशस्यपूर्वांतत्वेनग्रहणात्।नचस्थानिवद्भावः।अल्विधित्वात्।अन्येत्वाहुः।ङ्याप्ग्रहणंअसंभवादेवतिस्योर्विशेषणंनभ
वतीतियदुक्तंतत्सम्यगेव।नचअगंगात्।अगंगाइत्यत्रसंभवोस्तीत्युक्तमितिवाच्यं।तत्रस्थानिभूतस्यशपःपूर्वस्मान्निमित्तभ्रू॥ ॥ ॥

प्रसक्तिरेव नास्तीति प्रश्नः समाधत्ते व्याख्याने त्यादिना एतेनेश्वरः सर्वं व्याप्य वर्त्तते आत्मातिष्ठतीत्यादि व्याख्यातम् श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते इत्यादौ तु समानाक
र्तृकतानिर्वाहार्थं स्थितस्येत्यादि यथासम्भवमध्याहार्य्यं आभीक्ष्ण्ये णमुल् च ननु वासरूपन्यायेन क्त्वाप्रत्ययो भविष्यतीति चग्रहणमिह व्यर्थमिति चेन्मैवम् उक्तन्यायप्रवी
कारे तु लडादिरपीह प्रवर्त्तेत न चेष्टापत्तिः विभाषाग्रे इति वक्ष्यमाणसूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात् तत्र हि क्त्वाणमुलोर्विभाषाग्रहणेन लडादिसमावेशार्थं वि
कल्प्येते यद्यपि वासरूपन्यायेनैव लडादिः सिध्यति तथापि णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वासरूपविधिर्न प्रवर्त्तत इति ज्ञापनार्थं विभाषाग्रहणं तत्फलं तु आ
भीक्ष्ण्ये णमुल् चेत्यत्र लडाद्यप्रवृत्तिः तत्तश्च चकारेणैव क्त्वाप्रत्ययो लभ्यत इति नास्त्येव तस्य वैयर्थ्यं किन्तु वासरूपविधिनैव क्त्वालडाद्योः स्वीकारे तु न यद्यनाकाङ्क्षे इत्य
त्र क्त्वाप्रत्ययवत् लडादिरपि निषिध्येत तथा च यदयं भुङ्क्ते ततः पठतीत्युदाहरणं न स्यात् सिद्धान्ते त्वाभीक्ष्ण्ये णमुल् चेति विशेषविहितयोः क्त्वाणमुलोरेव निषेधा

न यद्यनाकाङ्क्षे ३।४।२३ यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकाङ्क्षते चेत् यदयं भुङ्क्ते ततः पठति इह
क्त्वाणमुलौ न अनाकाङ्क्षे किम् यदयम्भुक्त्वा व्रजति ततोऽधीते विभाषाग्रेप्रथमपूर्वेषु ३।४।२४ आभीक्ष्ण्ये इति नानुवर्त्तते एषूपपदेषु
समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः अग्रेभोजं व्रजति अग्रेभुक्त्वा प्रथमम्भोजम् प्रथमम्भुक्त्वा पूर्वम्भोजम् पूर्वम्भुक्त्वा पक्षे ल
डादयः अग्रेभुङ्क्ते ततो व्रजति आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः अग्रेभोजम्भोजं व्रजति भुक्त्वाभुक्त्वा कर्म्मण्याक्रोशे कृञः
खमुञ् ३।४।२५ कर्म्मण्युपपदे आक्रोशे गम्ये चौरङ्कारमाक्रोशति करोतिरुच्चारणे चोरशब्दमुच्चार्येत्यर्थः ॥ ९ त्सामान्यविहितलडादिर्भवत्ये

वेति नास्त्येवानुपपत्तिरिति दिक् पूर्वविषय इति समानकर्तृकयोः पूर्वकाल इत्यर्थे पायंपायमिति आतो युक् वा दीर्घ इति गमेर्ण्यन्ताण्णमुलि मित्तां ह्रस्व इति ह्रस्वे च कृते
तिवा दीर्घ इत्यर्थः ण्यन्तस्यापीति यत्तु प्राचा ण्यन्तजागर्तेश्च णमुलो वा वृद्धिरिति मतमुपन्यस्तं तदप्रामाणिकमिति भावः ॥ ॥ न यदि अनाकाङ्क्ष इति पचाद्यज
न्तेन नञ्समासस्तद्दर्शयति नाकाङ्क्षते चेदिति इहेति नन्वेवमनन्तरस्येति न्यायात् णमुलमाभूत् क्त्वा तु समानकर्तृकयोरिति सूत्रान्तरेणस्यादेवेति चेदत्राहुः पूर्वका
ले यत्प्राप्तमिति तन्नेति व्याख्यानात् क्त्वाप्रत्ययोपि न भवतीति विभाषाग्रे पद्यप्यग्रशब्दो देशविशेषवचनोप्यस्ति प्रभोरग्रे भुङ्क्ते इत्यादिप्रयोगात्तथापीह कालविशेषवाची

वगृह्यते॰ प्रथमशब्दसाहचर्यात् प्रथमं भुङ्क्ते इत्यादौ तत्काल एव प्रतीयते॰ अग्रे इति सप्तम्यन्तस्यानुकरणं॰ प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वादिभक्तेर्लुङ्‌ कृतः अस्यवामीयमितिवत्‌ अग्रेभोजमिति॰ अमेवाव्य येनेति नियमाद्यस्तमेवेदं॰ नत्वत्रोपपदसमासः॰ नन्वग्रे प्रथम पूर्व शब्दैः पूर्वकालत्वमुच्यते॰ इति कथमिह॰ क्त्वाणमुलौ स्यातामिति चेदत्राहुः॰ अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीति हि वाक्यार्थस्तत्राग्रे प्रभृतिभिर्भोक्त्रपेक्षया पूर्वत्वमुच्यते चेदत्रापि अन्येभ्यो भोक्तृभ्यः पूर्वं व्रजतीति व्रजनापेक्षया पूर्वत्वं तु क्त्वाणमुलभ्यां द्योत्यत इत्याशङ्क्य वाच्यनास्तीति॰ नित्यमेव विधिरिति॰ अग्रे भुङ्क्ते इत्येवं लडादिर्न प्रयुज्यत इति भावः ॥ ॥ स्वादुमि स्वादुमीत्यर्थग्रहणं व्याख्यानात्तदाह॰ स्वाद्वर्थेष्विति॰ मान्तत्वमिति॰ नत्वस्यादौ इत्येव सूत्रमस्तु मास्त्वत्र णमुलखमुञ्जे वानुवर्त्यतां॰ अरुर्द्विषदिति मुम्भविष्यति॰

स्वादुमि णमुल् ३।४।२६ स्वाद्वर्थेषु कृञो णमुल्स्यादेककर्तृकयोः पूर्वकाले पूर्वपदस्य मान्तत्वं निपात्यते अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते॰ सम्पन्नङ्कारं लवणङ्कारं सम्पन्नलवणशब्दौ स्वादुपर्यायौ वासरूपेणक्त्वापि स्वादुं कृत्वा भुङ्क्ते॰ अन्यथैवङ्कथमित्थंसु सिद्धाप्रयोगश्चेत् ३।४।२७ एषु कृञो णमुल्स्यात् सिद्धः अप्रयोगोऽस्य एवंभूतश्चेत्कृञ् व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः॰ अन्यथाकारम् एवङ्कारं कथङ्कारम् इत्थंकारं भुङ्क्ते इत्थं भुङ्क्त इत्यर्थः॰ सिद्धेति किम् शिरोऽन्यथा कृत्वा भुङ्क्ते॰ यथातथयोरसूयाप्रतिवचने ३।४।२८ कृञः सिद्धाप्रयोग इत्येव असूयया प्रतिवचने ॥ ॥

एवञ्च निपातनं विनापि मान्तत्वं सिध्यतीति महच्छायवमिति चेन्मैवम्॰ च्व्यन्तस्य मुम् न स्यादनव्ययस्येति वचनात्ततश्च स्वादुंकारमित्यत्र च्वौ चेति दीर्घः स्यात्॰ संपन्नंकारमित्यादिषु स्यच्वावितीत्त्वं स्यात्॰ किं च अस्ति पाम्वोतो गुणवचनादिति ङीपि स्वाद्वींकारमिति स्यात्॰ अतोऽत्र स्वादुमीति रूपं निपात्यते॰ ततश्चानजन्तत्वान्नेत्वदीर्घौ न वा ङीष्॰ निपातनमिह भावप्रत्ययमात्रविषयकं तेन स्वादुं कृत्वेत्यपि सिध्यति॰ स्यादेतत्॰ उक्तदोषपरिहाराय स्वादुमीत्येव सूत्रमङ्गीक्रियतां णमुलनुवर्त्यतां कृञः खमुञ्जिकृते पि स्वादुंकारमित्यादिषु रूपसिद्धिरिति चेन्मैवम्॰ तथा सत्युत्तरसूत्रेषु सन्निहितत्वात्॰ खमुञेवानुवर्तेत इति कन्यादर्शं ब्राह्मणवेदमित्यादिषु पूर्वपदस्य मुमागमः स्यादिति दिक्॰ व्यर्थत्वादिति॰ निष्प्रयोजनत्वादित्यर्थः

तदेतद्दर्शयति इत्थंभुक्त इत्यर्थ इति इह शाब्दबोधे विशेषसत्त्वेपि फलितार्थकथनपरतया कारमिति णमुलन्तस्य निः फलत्वमुक्तमनतिप्रयोजनत्वात् विस्तरस्तु
मनोरमादावनुसन्धेयः शिरोन्यथेति इह शिरोऽन्यथाशब्दो दनादिकं भुक्त इत्यर्थलाभाय करोतेः प्रयोग आवश्यकः तदभावे तु भुक्तिक्रियागत एव प्रकारो गम्य
तेन तु शिरसोऽन्यथाकरणम् अतः करोतेः प्रयोगार्हत्वमस्तीति णमुलन्तः करोतिरिह न प्रयुज्यत इति भावः ॥ ॥ यथाकारमिति प्रस्तुमनर्हः सन्पदिशच्छति
तदेतदुत्तरम् अत्रापि वा सरूपन्यायेन पक्षे क्त्वाप्रत्ययो बोध्यः कन्यादर्शमिति अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थे अन्वयात्साकल्यम्बोध्यम्
सर्वा इति दर्शनविषयीभूताः सर्वा इत्यर्थः अतिशयप्रतिपादनपरमेतत् ब्राह्मणवेदमिति विद ज्ञाने विद्लृ लाभे विद विचारणे इति धात्व र्थो न्यर्थालो

यथाकारमहंभोक्ष्ये तथाकारम्भोक्ष्ये किन्तवानेन ॥ कर्म्मणि दृशिविदोः साकल्ये ३।४।२९ कर्म्मण्युपपदे णमुल् स्यात् कन्यादर्शं वरयति
सर्वाः कन्या इत्यर्थः ब्राह्मणवेदम्भोजयति यं यं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः यावति विन्दजीवोः ३।४।३०
यावद्वेदम्भुङ्क्ते यावल्लभते तावदित्यर्थः यावज्जीवमधीते चर्म्मोदरयोः पूरेः ३।४।३१ कर्म्मणीत्येव चर्म्मपूरं स्तृणाति उदरपूरं भुङ्क्ते व
र्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ३।४।३२ कर्म्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये गोष्पदपूरं
वृष्टो देवः गोष्पदप्रं वृष्टो देवः अस्येति किम् उपपदस्य माभूत् मूषिकाविलप्रम् ॥ ९ ॥ ॥ ॥

चाच्याचष्टे जानातीत्यादि सत्तार्थस्य विदेरनेकार्थत्वान्नेह ग्रहणमिति भावः यावति विन्द विन्देर्लाभार्थस्यानुकरणं तस्य हि विन्दतीत्यादौ शेमुचादीना
मितिनुमस्ति यावल्लभत इति असाकल्यमनेन दर्शयति साकल्ये हि कर्मणि दृशिविदोरित्यनेनैव सिद्धम् चर्मोदरं कर्मणीत्येवेति एवञ्च पूरेरिति ण्य
न्तस्य निर्देशो न तु केवलस्य इकृक्षिपेति इकानिर्देशः तस्याकर्मकत्वादिति भावः चर्मपूरमित्यादि चर्म पूरयित्वा ॥ उदरं पूरयित्वा उदरपूरणविशि
ष्टाभुजि क्रियेत्यर्थः इह पूर्वकाल इति न सम्बध्यते सम्भवादप्रतीतेश्च एवमन्यत्रापि यथासम्भवम्बोध्यम् ॥ ॥ ॥ ॥

स्त्रमितिभावः॰ एतच्चमनोरमाग्रन्थानुसारेणोक्तम्॰ अत्रवेचित्॰ नन्वेवमुपदंशः॰कर्मणीत्येवसूत्रमस्तु॰ अथवोपदंशइत्येतावत्तु उपमानेकर्मणीत्यतः॰कर्मणीत्यनुवर्त्यकर्मण्युपपदे॰ उपपूर्वकाद्दंशेर्णमुलितिव्याख्यायतां किमनयाकुसृष्ट्येति॰ नचैवंकर्मण्युपपदेनित्यसमासः॰स्यादितिवाच्यम्॰ करणेइत्युक्तेप्युक्तदोषस्यतुल्यत्वात् नचतृतीयाप्रभृतीनीति सूत्रेकरणप्रभृतीनीत्युक्तेनास्त्येवदोषः॰करणेहनइत्यारभ्यविकल्पइतिसन्देहवारणाय व्याख्यानतोविशेषप्रतिपत्तिर्नहिसन्देहादलक्षणमितिपरिभाषास्वीकारादितिवाच्यम्॰तृतीयाप्रभृतीतिसूत्रेकर्मणिप्रभृतीत्युक्तेपिदोषाभावात्॰ कर्मण्याक्रोशेकृञः॰ खमुञ्कर्मणिदृशिविदोरित्यारभ्यविकल्पइतिसन्देहस्यव्याख्यानतोविशेषप्रतिपत्तिरितिपरिभाषयावारयितुंशक्यत्वात्॰ तस्मादुपदंशःकरणेइत्येवब्रूयात्॰ इतिमनोरमाचिन्त्येत्या

दण्डताडम् समानकर्मकाणामितिकिम् दण्डेनचोरमाहत्यगाःकालयति सप्तम्यांचोपपीडरुधकर्षः ३।४।४९ उपपूर्वेभ्यःपीडादिभ्यः सप्तम्यन्तेतृतीयान्तेचोपपदेणमुल्स्यात् पार्श्वोपपीडंशेते पार्श्वयोरुपपीडम् पार्श्वाभ्यामुपपीडं व्रजोपरोधंगाःस्थापयति व्रजेनव्रजे उपरोधम्वा पाण्युपकर्षंधानाः संगृह्णाति पाणावुपकर्षं पाणिनोपकर्षं ॥ ॥ ॥

हुःवस्तुतस्तुकर्मणिप्रभृतीन्यन्यतरस्यामित्युक्ते॰ उपमानेकर्मणिचेत्यतः॰ कर्मणीत्यनुवर्त्यउपदंशइत्येवसूत्रमितिस्वीकारपक्षेकषादिषुयथाविध्यनुप्रयोगोपिविकल्पेनस्यात्॰ मण्डूकप्लुत्याश्रयणान्त्वगतिकगतिः॰ उपदंशःकर्मणीतिसूत्रस्वीकारपक्षेपिमूलकोपदंशमितिसमासस्यवैकल्पिकत्वात्समासाभावपक्षेलकमुपदंशमितिवाक्यंस्यादिष्यतेतुमूलकेनोपदंशमितिकरणेप्रभृतीनीतिमनोरमोक्तौतुसमासाभावपक्षेमूलकेनोपदंशमितिसिध्यत्येवकरणेतृतीयायाःप्रवृत्तेरितिदिक्॰ कालयतीतिकालविक्षेपेचुरादिः प्रेरयतीत्यर्थः॥ ☼ ॥ दण्डताडमिति॰ तडआघाते अयमपिचुरादिरेव॰ सप्तम्यांचो॰उपपूर्वेभ्यइति॰ सूत्रेपीडादीनांसमाहारद्वन्द्वंकृत्वा॰उपपूर्वः॰पीडरुधकर्षइति॰उत्तरपदलोपोसमासइतिभावः॰ इहसौत्रंपुंस्त्वंपञ्चम्यर्थे ॥ ॥ ॥

प्रथमेति त्रेधंकर्षेति शपा निर्देशः कृषविलेखने इत्यस्य गणसहितस्योच्चारणात्तत्फलं तुदादेर्व्युदासः यद्यपि विलेखन एव सोपि पठ्यते तथापि क्षेत्रविषय
कविलेखन एव सम्प्रयुज्यते पञ्चभिर्हलैः कर्षतीति दर्शनात् एवञ्च तौदादिकात्कृषेः क्त्वाप्रत्यय एव भवति क्षेत्रे उपकृष्य हलेनोपकृष्येति न त्विह णमु
लिति स्थितमाकरे ॥ ॥ समासत्तौ । केशग्राहमिति केशेषु ग्रहणम्भवतु वा मा भूत् सन्निकर्षप्रतिपादनपरमेतत् द्व्यङ्गुलोत्कर्षमिति द्वयोरङ्गुल्योः स
माहारो द्व्यङ्गुलं तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरित्यच् समासान्तः द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः खण्डः खण्डिका ह्रस्वः खण्डः खण्डिकेति मनो

समासत्तौ ३।४।५० तृतीयासप्तम्योर्धातोर्णमुल् स्यात् सन्निकर्षे गम्यमाने केशग्राहं युध्यन्ते केशेषु गृहीत्वा हस्तग्राहं हस्तेन गृ
हीत्वा प्रमाणे च ३।४।५१ तयासप्तम्योरित्येव द्व्यङ्गुलोत्कर्षं खण्डिकाञ्छिनत्ति द्व्यङ्गुलेन द्व्यङ्गुलं वोत्कर्षम् अपादाने परीप्सा
याम् ३।४।५२ परीप्सा त्वरा शय्योत्थायं धावति द्वितीयायाञ्च ३।४।५३। परीप्सायामित्येव ॥ ६ ॥ ६ ॥

रमा पाञ्चजन्यम् यद्यपि ह्रस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते अल्पे ह्रस्व इति पृथक् सूत्रस्वारस्यात् तथापि ह्रस्वदीर्घ इत्यादिनिर्देशात्से
तनेष्वपि क्वचिद्भवतीत्याहुः द्वितीया परीप्सायामित्येवेति कथन्तर्ह्यनुदात्तं पदमेकवर्जमिति नह्यत्र त्वरा गम्यते अत्राहुः अस्यां हि परिभाषायां त्वरा विव
क्षिता तेनायमर्थः उदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्तव्यं न विलम्बितव्यमिति ॥ ६ ॥

कौ॰
सि॰कौ॰
टी॰त॰
१०७

यष्टिग्राहमित्यादि॰ एवं खलु युद्धाय त्वरन्ते परासन्नं पश्चादिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्त इति भावः॰ अस्यपगोरमिति॰ असिमुद्यम्येत्यर्थः॰ उपपदसंज्ञा

यष्टिग्राहं युध्यन्ते। लोष्टग्राहं। अपगुरो णमुलि। ६।१।५३।। गुरी उद्यमने इत्यस्यैचो वा आत्स्यात् णमुलि। अस्यपगोरं युध्यन्ते। अस्यपगारं। स्वाङ्गेऽध्रुवे। ३।४।५४।। द्वितीयायामित्येव। अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल्। भ्रूविक्षेपं कथयति। भ्रुवं विक्षेपं। अध्रुवे किम्। शिर उत्क्षिप्य। येन विना न जीवनं तद्ध्रुवं। परिक्लिश्यमाने च। ३।४।५५।। सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल्स्यात्। उरःप्रतिपेषं युध्यन्ते। कृत्स्नमुरः पीडयन्त इत्यर्थः॰ उरोविदारं प्रतिचस्करे नखैः। ध्रुवार्थमिदम्। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः। ३।४।५६।। द्वितीयायामित्येव। द्वितीयान्त उपपदे विश्यादिभ्यो णमुल्स्याद्व्याप्यमाने आसेव्यमाने चार्थे गम्ये। गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः। क्रियायाः पौनःपुन्यमासेवा। नित्यवीप्सयोरिति द्वित्वं तु न भवति। समासेनैव स्वभावतस्तयोरुक्तत्वात्। यद्यप्याभीक्ष्ण्ये णमुलुक्त एव तथापि उपपदसंज्ञार्थमासेवायामिह पुनर्विधिः। गेहानुप्रवेशमास्ते। गेहङ्गेहमनुप्रवेशं। गेहमनुप्रवेशमनुप्रवेशं। एवं गेहानुप्रपातं। गेहानुप्रपादं। गेहानुस्कन्दं। असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वं। अस्यतितृषोः क्रियान्तरे कालेषु। ३।४।५७।। क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः तस्मिन्धात्वर्थे वर्त्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषु उपपदेषु णमुल्स्यात्। द्व्यहात्यासं गाः पाययति द्व्यहमत्यासं। द्व्यहतर्षं द्व्यहन्तर्षं। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः। नाम्न्यादिशिग्रहोः। ३।४।५८।। द्वितीयायामित्येव। नामादेशमाचष्टे नामग्राहमाह्वयति॰।।

र्थमिति विशिपतीति सूत्रे द्वितीयायामित्यनुवर्तनात्तदन्तस्योपपदसंज्ञार्थमित्यर्थः ।। ।। ।।

अव्यये अयथेति नयथाभिप्रेतं तथाख्यान इत्यर्थः प्रियस्योच्चैः अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानम् तद्विपरीताख्याने इति यावत् नच प्रियाख्याने इत्येव कुतो नोक्तमिति चेत्त्राह: प्रियस्य नीचैः कथनमपि प्रियाख्यानमेव न त्वप्रियाख्यानमिति नीचैः कृत्य नीचैः कारं प्रियं ब्रूते इति प्रयोगो न स्यात् अप्रियस्य नीचैः कथनमप्यप्रिया ख्यानमिति नीचैः कृत्य नीचैः कारमप्रियं ब्रूत इति प्रयोगोऽपि स्यादित्ययथाभिप्रेताख्याने इत्युक्तमिति तिर्यक्कृत्येति अतुजत्वादग्रतः स्थितं पार्श्वतः कृत्वा गत इत्यर्थः स्वाङ्गे ॥ तसूप्रत्ययो यस्मात्तस्मात्प्रत्ययस्तस्मिन् स्वाङ्गे उपपदे इत्येके प्रत्ययग्रहणपरिभाषया तस्प्रत्ययान्ते स्वाङ्गे इत्यन्ये तसश्चासौ प्रत्ययश्चेति कर्मधारयः तस्य

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।३।४।५९। अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनं । उच्चैः कृत्य । उच्चैः कृत्वा । उच्चैः कारमप्रियमाचष्टे । नीचैः कृत्य । नीचैः कृत्वा । नीचैः कारं प्रियं ब्रूते । तिर्यच्यपवर्गे ।३।४।६०। तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यायाम् । तिर्यक्कृत्य गतः । तिर्यक्कारं समाप्य गत इत्यर्थः । अपवर्गे किं । तिर्यक्कृत्वा काष्ठं गतः । स्वाङ्गे तस्प्रत्यये कृभ्वोः ।३।४।६१। मुखतः कृत्य गतः । मुखतः कृत्वा । मुखतः कारम् । मुखतो भूय । मुखतो भूत्वा । मुखतो भावम् । नाधार्थप्रत्यये च्व्यर्थे ।३।४।६२। नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः अनाना नाना कृत्वा । नाना कृत्य । नानाकारं । विनाकृत्य । विनाकृत्वा । विनाकारं । नानाभूय । नानाभूत्वा । नानाभावं । अनेकं द्रव्यमेकं भूत्वा ॥ ११

त्यये परतो यत्स्वाङ्गं तस्मिन्नुपपद इति तु प्राञ्चः तन्न यद्यपि स्वाङ्गमात्रं नोपपदं तथापि तस्मिन्नित्येतत्प्रकृतिप्रत्ययसमुदायपरमिति बोध्यम् मुखतः कारं मुखतो भूयेति क्त्वाणमुलोः कृभुवोश्च यथासंख्यं नेष्यते इति भावः मुखत इत्यत्राद्यादित्वात्सप्तम्यर्थे तसि: प्रत्ययग्रहणं किम् मुखेन तस्यति मुखतः तसु उपक्षये क्विप् धातुत्वादिहात्वं संतस्येति शेषेण मुखतः कृत्वा गत इति काशिकादौ स्थितं वस्तुतस्तु प्रत्यया प्रत्ययपरिभाषयैवेष्टसिद्धेः प्रत्ययग्रहणं स्पष्टजम् नाधार्थ नाधौ विनञ्भ्यामिति विहितौ नानाञौ धार्थाः द्वित्र्योश्च धमुञिति धमुञादयः संख्याया विधार्थे धा इति धाप्र

एकधाभूयेत्यादि॰ एवं द्वैधंकृत्य त्रैधंभूय द्वैधम्भावमित्याद्युदाहर्त्तव्यम्॰ ननु नानार्थे प्रत्ययो धाच प्रत्ययः धमुञादिविधौ तु एकाद्धो धमुञन्यतरस्यामित्यतो धइत्यनुवर्त्यते तस्या आदेशत्वात् अयरोपि स्थानिवद्भावेन धमुञादिर्धाप्रत्ययो भवतीति किमर्थं प्रत्ययग्रहणमित्याक्षिपति॰ प्रत्ययग्रहणमिति॰ यद्यप्युक्तरीत्या धाग्रहणेन धमुञादेर्ग्रहणं सम्भवतीत्यर्थ ग्रहणमिहव्यर्थम्॰ तथापि धमुञन्तात्स्वार्थे डदर्शनमिति डप्रत्ययान्तसंग्रहार्थं ग्रहणं॰ अर्थग्रहणं तत्फलन्तु द्वैधीकृत्येत्यादिप्रयोगः तूष्णीमिति तूष्णीमित्यर्थे तूष्णींग्रहणम्॰ अन्वच्यानुलोम्य इहाचरत्यकारलोपे चावितिपूर्वस्याणो दीर्घः नूचीरिति निर्देष्टुमुचितम्॰ तु

एकधाभूय। एकधाभूत्वा। एकधाभावं। एकधाकृत्य। एकधाकृत्वा। एकधाकारं। प्रत्ययग्रहणं किं। हिरुकृत्वा। पृथग्भूत्वा। तूष्णीमि भुवः ।३।४।६३। तूष्णींशब्दे भुवः क्त्वाणमुलौ स्तः। तूष्णींभूय। तूष्णींभूत्वा। तूष्णींभावं। अन्वच्यानुलोम्ये ।३।४।६४। अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने अन्वग्भूय आस्ते अन्वग्भूत्वा अन्वग्भावं अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वा आस्त इत्यर्थः आनुलोम्ये किं अन्वग्भूत्वा तिष्ठति॥

प्रागपागिति सूत्रे प्रतीचोपदिति वत्॰ एवं तिर्यच्यपवर्ग इति सूत्रेपि तिरश्चीत्येव निर्देष्टुमुचितमिति चेदत्र केचित्॰ शास्त्रोक्तं कार्यमर्थवदेव भवति अर्थश्च लोके प्रसिद्ध एव गृह्यते॰ अभिव्यक्तपदार्था ये स्वतन्त्रा लौकिकास्तु ताः शास्त्रार्थं तेषु कर्त्तव्य इति न्यायात् अतोनुकरणेन भविष्यतीत्यन्वचीति सम्यगेवेति॰ तच्चिन्त्यम्॰ एवन्तर्हि क्षियो दीर्घादित्यादावियङादिकं न स्यात्॰ प्रतीचोयदित्यपि न सिध्येदिति॰ वस्तुतस्तु प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वादन्वचीत्यादिनिर्देशे तु न दोषः॰ वैकल्पिकत्वञ्च यन्न देतेभ्य इति सूत्रे त्यदाद्यत्वस्य वारणादेक॥

॥

शेषाभावदर्शनाच्च निर्णीयत इति प्रागेव प्रपञ्चितम् · अग्रत इत्यादिस्त्वन्वक् शब्दस्यानुकल्पमात्रे विश्रान्तो देशविशेषवाचित्वे नियमो नेति ध्वनयितुमिदम् ।
॥ ॐ ॥ पृष्ठतो भूत्वेत्यर्थ इति · इहान्वक् शब्देनानुकूलोऽननुकूलो वेति न स्पृश्यते तस्य देशविशेषमात्रे पर्यवसानात् प्रमाणान्तरेण तु क्वचिदनुकूलालाभे

पृष्ठतो भूत्वेत्यर्थः इत्थं लौकिकशब्दानान्दिङ्मात्रमिह दर्शितं विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे भट्टोजिदीक्षितकृतिः से
यासिद्धान्तकौमुदी प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धं समाप्तं ॥

पि · अन्वक् च्छब्दस्य तत्समर्पणे व्यापाराभावाण्णमुल्न · किन्त्वेवं भवतीति व्यवस्था बोध्या · इति श्रीपरमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामि
चरणसेवकज्ञानेन्द्रसरस्वतीरचितायां सिद्धान्तकौमुदीव्याख्यायां तद्धितान्तं समाप्तम् · ॥ ॥

तादपः परयोस्तिस्योर्लोपे कर्तव्ये स्थानिवद्भावेन शपाव्यवधानात्तिस्योर्लोपस्याप्रसक्तेः। न च फलाभावात्स्यचमीसमासपक्षो न स्वीक्रियते इत्यपि वाच्यं। तत्प्रयोजनस्य प्रागेव प्रदर्शितत्वादिति। सखेति। समानं ख्यायते जनैरिति सखा। ङिच्च यलोप इति चानुवर्तमाने समाने ख्यः स चोदात्त इति ख्याइत्यस्मादिण्। स मानशब्दस्योदात्तः सभावश्च। न चेह सुविभक्तिसन्नियोगेन सखिशब्दस्यानङ् कृते सन्निपातपरिभाषया हल्ङ्याब्भ्य इति सुलोपो न भवतीति शंक्यं। स्वतन्त्रः कर्तेत्यादिनिर्देशेनानङोनकारमाश्रित्य सुलोपे कर्तव्ये तत्परिभाषाया अप्रवृत्तेः॥ ॥ सख्युरसंबुद्धौ॥ इह इतोत्सर्वनामस्थान इत्यतः सर्वनामस्थान इत्यनुवर्तते तदसंबुद्धावित्यनेन विशेष्यते। गोतो णिदिसूत्राण्णिदित्यनुवृत्तं तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यत इत्याह। संबुद्धिवर्जं सर्वनामस्थानमिति। सख्युरसंबुद्धिरित्येव सूत्रयितुमुक्तं इति मनोरमायां स्थितं। ननु सखेत्यत्रोपधादीर्घं बाधित्वा परत्वादत उपधाया इति वृद्ध्याभाव्यं सो णित्वादिति चेदत्राहुः। कृताकृतप्र

सख्युरसम्बुद्धौ ७।१।९२॥ सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्। अचो ञ्णिति। ७।२।११५। ञिति णिति च परे अजन्ताङ्गस्य वृद्धिः स्यात्। सखायौ। सखायः। सखायं। सखायौ। घिसंज्ञाऽभावान्न तत्कार्य्यं। सख्या। सख्ये। ख्यत्यात्परस्य। ६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः स्यात्। सख्युः। सख्युः॥ ११ संगित्वमात्रेणापि नित्यत्वस्वीकारात्। अंतरंगत्वाच्च सखेत्यत्र वृद्धिं बाधित्वा सर्वनामस्थाने चासंबुद्धावित्युपधादीर्घेणैव भवितव्यं। सख्युरसंबुद्धाविति णिद्भावमुपजीव्यात्र प्रवर्तमानस्यात उपधाया इत्यस्य बहिरंगत्वादिति। अचो ञ्णिति। ञ्णिति वृद्धिरित्यतो वृद्धिरित्यनुवर्तते अंगस्येति चानुवृत्तं अचा विशिष्यते विशेषणेन तदंतविधिरित्याशयेनव्याचष्टे अजन्ताङ्गस्येति ख्यत्यात् पंचमीनिर्देशादेव परस्येति लब्धे परस्येतिग्रहणं एकः पूर्वपरयोरिति निवृत्तमिह नाधिक्रियत इति ज्ञापनार्थं। ख्यश्च त्यश्चेति समाहारद्वंद्वे ख्यत्यं तत्र खिखीशब्दयोः कृतयणादेशयोः अनुकरणं ख्येति। एवं तितीशब्दयोस्त्येति उभयत्राप्यकार उच्चारणार्थो न तु सख्यापत्यादिशब्दैकदेशानुकरणमिदं। सख्युर्यः। पत्युर्नः। संख्यायाः संवत्सरसंख्यस्य च आपत्यस्य चेत्यादिनिर्देशादित्यभिप्रेत्याह। खितिशब्दाभ्यामिति। एवं च यत्र यण्प्रवृत्तिः तत्रैवोत्वं न त्वतिसखेरित्यादौ। न चैवं यणादेशस्योक्तप्रयोजनत्वात् ह्रस्वांतयोरेव ग्रहणं स्यान्न तु दीर्घांतयोरिति शंक्यं। निर्देशस्य ह्रस्वदीर्घसाधारणत्वात् स्वस्य बहुविषयत्वसंभवे तत्संकोचस्यान्याय्यत्वाच्चेति भावः॥

॥श्रीगणेशायनमः॥सिंदूरेणविराजितंत्रिनयनंदिक्संख्यदोर्भिर्युतं॥भक्तानुग्रहकारकंप्रमदयाश्लिष्टंसदानंदनंअष्टाविंशतिवर्णकेऽस्रसततंयंचिंतयंतेजनास्तं
देवंगणपंस्मरामिसततंचंद्रार्कचूडंविभुं १ यस्तर्कादिसमस्ततंत्रकमलत्राते प्रसादेष्विवप्रत्यक्षःप्रमितःपरःकिरणवानन्वर्थगोवर्द्धनः सोयंपंडितमंडलोद्भ
टरटत्वादींद्रवृंदाग्रणीः श्रीरामांघ्रिनिषेवकःसमजनिश्रीमौनिगोवर्द्धनः २ रघुनाथपदारविंदसेवावशतस्तस्यबभूवनंदनः रघुनाथइतीज्यनामगम्यो
रघुनाथांघ्रिनिसेवकःसुधीः ३ बभूवुस्तस्यचत्वारस्तनयास्तनयाबुधाः महादेवाभिधःश्रेष्ठोमहाभाष्यसुभाषितः ४ रामकृष्णोद्वितीयोसौरामकृष्णांघ्रिसेव
कः तृतीयोजयकृष्णोस्मिश्रीकृष्णानामसूद्भवः ५ श्रीमत्सिद्धांतकौमुद्याःस्वरवैदिकखंडयोः नत्वासुनित्रयंहृद्यांटीकांकुर्वेसुबोधिनीं ६ सुशब्दव्रातश्रीकुमुदव
नविद्योत्तनकरीसदासद्व्युत्पत्तिप्रसरणपरानंदनकरी कुशब्दध्वांतस्यप्रसभमभिविध्वंसनकरीकृतिर्भूयाद्देवाबुधजनमनःप्रांगणचरी ७ इयताप्रबंधेनलौ
किकेषुशब्देष्वन्वाख्यातेष्वपिवैदिकान्वाख्यानमवशिष्यते नचेदिदमप्रयोजनं रक्षोहागमलघ्वसंदेहाः प्रयोजनमितिवदताभाष्यकारेणवेदरक्षाव्या
करणारंभप्रयोजनत्वेनमुख्यतयाभिधानात् ब्राह्मणेननिःकारणः षडंगोवेदोध्येयोज्ञेयश्चेतिवेदार्थज्ञानोपायतयावेदांगत्वेनैवव्याकरणाध्ययनविधानाच्च
नन्वेवमपिवैदिकशब्दानांलौकिकशब्दाभिन्नत्वात्तदनुशासनेनैवसिद्धेःकिमर्थंतेषामनुशासनमितिचेन्नलौकिकशब्देभ्योभिन्नाअपिवैदिकशब्दाःसं
ति तद्यथात्मनादेवेषुमध्वाजभारगृभ्णामितेइत्यादयोवेदेदृश्यंते लोकेतुआत्मनाजहारगृह्णामीत्यादयः अतएवभाष्यकारोलौकिकेभ्योवैदिकाङ्भेदे
नव्यपदिशति अथशब्दानुशासनंकेषांशब्दानांलौकिकानांवैदिकानांचेतीतितेषामाख्यानमावश्यकमितिमनसिविभाव्याह ॥ ६ ॥

अस्मादात्तोऽनुपसर्गे केऽ इति कः बहुलस्य भावो बाहुलकं मनोज्ञादित्वाद्वुञ् वृष वृषणित्येतद्द्वसु अश्वयोश्च परतो भं स्यात् निपातनान्येतानि छंदोविषयाणीति कैयटः वृषण्वसुरिति लोके वृषवसुः वृषाश्वः नलोपः प्राप्त इति नलोपः प्रातिपदिकांतस्येत्यनेन अत एवेति भत्वादेवेत्यर्थः अनंगत्वादिति अल्लोपोऽन इत्यत्रांग स्येत्यधिकारात् ३॥ ॥अयस्मयादीनि आनंतर्यादुभ संज्ञाद्वारेणैव निपातनेप्राप्तमित्याह संज्ञाद्वयमिति नन्वनंतरस्येति न्यायं बाधित्वोभयसंज्ञाविधाने किं प्रमाणमित्याशंक्याह तथा च वार्त्तिकमिति कुत्वमिति चोः कुरित्यनेन जश्त्वाभाव इति झलां जशोंऽत इति प्राप्तस्य ऋक्वातेति अयस्मयादिषु ऋक्वतेत्यादयः

अयस्मयादीनि च्छन्दसि। १। ४। २०। एतानि छन्दसि साधूनि। भपदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यं। तथा च वार्त्तिकम्॥ उभयसंज्ञान्यपीति वक्तव्यमिति॥ स सुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वं। भत्वाज्जश्त्वाभावः॥ जश्त्वविधानार्थाया पदसंज्ञाया भत्वसामर्थ्येन बाधात्। नैनं हिन्वंत्यपि वाजिनेषु। अत्र पदत्वात् जश्त्वम्। भत्वात्कुत्वाभावः॥ ते प्राग्धातोः॥ छन्दसि परेऽपि। १। ४। ८१। व्यवहिताश्च। १। ४। ८२। हरिभ्यां याह्योक आ। आ मन्द्रैरिन्द्र हरिभिर्याहि॥ इन्धिभवतिभ्यां च। आभ्यां परो लिट् कित्। समीधे दस्युहन्तमम्। पुत्र ईधे अथर्वणः। बभूवाऽऽदमत्यास्यानम्। इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः कित्वचनानर्थक्यमिति॥ इति प्रथमोऽध्यायः॥

समुदाय एव बोध्याः तेन जश्त्वम् स्तु कुत्वं माभूदिति वैपरीत्येन प्रसज्येतेति बोध्यम् नैनमिति वाचामिना प्रभवस्ते स्वप्येनं विद्वांसं न हिन्वंति विवदितुं न गच्छंतीत्यर्थः ते प्राक् व्याख्यातम् अस्यापवादमाह छंदसीत्यादि गत्युपसर्गसंज्ञकाश्छंदसि परे प्रयोक्तव्याः॥५ अपिशब्दात्पूर्वे व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्तव्याः सूत्रद्वयस्योदाहरणे आह हरिभ्यामित्यादि आ याहीति प्राप्ते तिप्रागित्यत्र संज्ञानियमपक्षो भाष्ये उक्तः ते इत्यनेन प्रादीनुपेत्येतत्पर्यंतान्स्वरूपेण परामृश्य धातोः प्राक् प्रयुक्तानामेषां पूर्वसूत्रैकवाक्यतया संज्ञाविधानात् अस्मिंश्च पक्षे छंदसि परेऽपि व्यवहिताश्चेति सूत्रद्वयं न कर्त्तव्यम् इधि इंधीत्युच्चारणार्थेन इकारेणानि।

छंदसीत्यादि॥ ॥पुनर्वसुशब्देनोद्भूतावयवस्यज्योतिः समुदायस्याभिधानाद्वयोर्द्विवचनेप्राप्तेएकवचनंविधीयतेतदाह॥द्वयोरित्यादि वास्यादिति॥द्वयोरेकवच नंवास्यादितिजात्याख्यायामित्यतः अन्यतरस्यामित्यनुवर्तनात् लोकेत्विति गांगताविवदिवःपुनर्वसूइत्यादो॥विशाख प्राग्वदितिद्वयोरेकवचनंवास्यादित्यर्थः ॥विशाखेति अमरस्तुविशाखेतिप्रयुंजानोद्विवचननियमंनेच्छति सूत्रंतूदासीनं २ षष्ठीयुक्तश्छंदसिवा पतिःसमासएवेत्यतः पतिरितिवर्त्ततेपत्तिःसमासए वेतिनियमादसमासेनप्राप्नोतीतिवचनमारभ्यते पतिनेतिघित्वादाङोनेतिनाभावः षष्ठीतिकिम् मयापत्याजरदष्टिर्यथासः छंदसीतिकिम् ग्रामस्यपत्येयो

॥ॐ॥श्रीगणेशायनमः॥छन्दसिपुनर्वस्वोरेकवचनम् १।२।६१ द्वयोरेकवचनंवास्यात्॥ ।पुनर्वसुर्नक्षत्रम्।पुनर्वसू वा।लोकेतुद्विवचनमेव॥विशाखयोश्च १।२।६२ प्राग्वत्॥विशाखानक्षत्रं।विशाखे॥ षष्ठीयुक्तश्छन्दसिवा १।२।९ षष्ठ्यन्तेनयुक्तः पतिशब्दश्छन्दसि घिसंज्ञोवास्यात्॥क्षेत्रस्यपति नावयम्।इहवेतियोगंविभज्यछन्दसीत्यनुवर्तते।तेनसर्वेविधयश्छन्दसिवैकल्पिकाः।बहुलंछन्दसी त्यादिरस्यैवप्रपञ्चः।यचिभम्॥ नभोंगिरोमनुषाम्वत्युपसंख्यानम्॥नभसातुल्यन्नभस्वत्।भत्वान्नरुत्वाभावः।अङ्गिरस्वदङ्गिरः।मनु ष्वदग्ने।जनेरुसीतिविहितउसिप्रत्ययोमनेरपिवाहुलकात्॥वृषण्वस्वश्वयोः।वृषन्वर्षकंवसुयस्यसःवृषणवसुः।वृ षाअश्वोयस्यवृ षणाश्वः।इहान्तवर्तिनीविभक्तिमाश्रित्यपदत्वेसतिनलोपःप्राप्तोभत्वाद्वार्य्यते।अतएवपरान्तस्येतिणत्वनिषेधोपिन।अल्लोपोनइत्य ल्लोपोनअनङ्गत्वात्॥

गंविभज्येति षष्ठीयुक्तश्छंदसीतिउक्तएवार्थः ततोवाछंदसीति निवर्त्तते यावदिहशास्त्रेकार्यंतच्छंदसिवाभवति तदाहते नेत्यादिनानभोंगिरो नभसअंगिरसमनुषएषांवतिपरेभत्वंवक्तव्यमित्यर्थः नभस्वदिति तेनतुल्यमितिवतिः भत्वफलमाहरुत्वाभावइतिससजुषोरि ति प्राप्तस्यतत्रहिपदस्येत्यनुवर्त्तते अंगिरसातुल्यमंगिरस्वत् अत्रापिदेहलीदीपकन्यायेनरुत्वाभावइतिसंवध्यते मनुष्वदिति मनुषातुल्यम् अत्रभ त्वादादेशप्रत्यययोरितिषः पदसंज्ञायान्तुरुत्वंस्यात्नतुषत्वंअपदांतस्येतिवचनात् बाहुलकादिति वहूनर्थान्लातीतिवहुलम् लाआदाने ॥

सि॰कौ॰ वै॰सु॰ ३

बहुलग्रहणाच्चंद्रमसेरुद्रमोराश्वेइत्यादौषष्ठ्यभावः ९॥ॐ॥ यजेर्धातोः करणेकारके छंदसिविषयेबहुलंषष्ठीस्यात् १० बहुलंअदोजग्धीत्यतः अदइतिलुङ्सनोरि
त्यतः घस्लृइतिच अदोबहुलंघस्लादेशःस्यात् छंदसिघस्तामिति अदेर्लुङि रूपम् अडभावइति बहुलंछंदसिनमाङ्योगइत्यनेन नन्विदंलुङ्सनोरित्यनेनसिद्धमि
त्याशंक्योदाहरणांतरमाहस ग्धिरिति अदनंग्धिः अदेः क्तिनिघस्लादेशोघसिभसोर्हलिचेत्युपधालोपेझलोझलीतिसलोपः झषस्तथोरितिधत्वम् घस्यजश्त्वम्
नचजश्त्वेकर्तव्येऽल्लोपस्यस्थानिवत्त्वं नपदांतेतिसूत्रेणजश्लेतन्निषेधात् ततःसमानशब्देनसमासेकृतेसमानस्यछंदस्यमूर्द्धप्रभृत्युदर्केषितिसूत्रेणसमानस्यस
११ हेमंतशिशिरा परवल्लिंगंद्वंद्वतत्पुरुषयोरितिप्राप्तम् अहोरात्रेइति अहश्चरात्रिश्चेतिद्वंद्वेकृतेऽहःसर्वैकदेशेत्यनेनसमासांतो अच् यस्येतिचेतीकारलोपः रा

यजेश्चकरणे २।३।६३ इहछन्दसिबहुलंषष्ठी॥घृतस्यघृतेनवायजते॥बहुलञ्छन्दसि २।४।३९ अदोघस्लादेशःस्यात्॥घस्तान्नूनम्॥लु
ङि मन्त्रेघसेतिच्लेर्लुक्॥अडभावः॥सग्धिश्चमे॥हेमन्तशिशिरावहोरात्रेचच्छन्दसि २।४।२८ द्वन्द्वःपूर्ववल्लिङ्गः॥हेमन्तश्चशिशिरश्चहेम
न्तशिशिरौ॥अहोरात्रे॥अदिप्रभृतिभ्यःशपः॥बहुलञ्छन्दसि २।४।७३ वृत्रंहनतिवृत्रहा॥अहिःशयतउपपृक्॥अत्रलुङ्न॥अदादि
भिन्नेऽपिक्वचिल्लुक्॥त्राध्वंनोदेवाः॥जुहोत्यादिभ्यःश्लुः॥बहुलञ्छन्दसि २।४।७६ दातिप्रियाणिचिद्वसु॥अन्यत्रापि॥पूर्णाविवष्टि॥

त्रान्ताहाः पुंसीतिप्राप्तम् द्वित्वमतंत्रं अहोरात्राणिविदधत् छंदसिकिं॥हेमंतशिशिरे अहोरात्रौ यद्यपिपाठक्रमेणेदं बहुलंछंदसीति घस्लादेशविधायकस्य
त्रात्पूर्वंव्याख्यातुंयुक्तं तथापिव्यत्ययोबहुलमितिवक्ष्यमाणेनलिंगव्यत्ययविधायकेनगतार्थमितिध्वनयितुंतथानव्याख्यातं १२ बहुलंछंदसिबहुलंश
पोलुक्स्यात् अदिप्रभृतिभ्यइत्युक्तं ततोनभवतितथैवोदाहरति वृत्रंहनतीत्यादि हंतिशेतेइतिलोके त्राध्वमिति त्रैङ्पालने आदेचउपदेशेशितीत्यात्वं त्रायं
ध्वमितिलोके दातीति ददातीतिलोके अन्यत्रापीति जुहोत्यादिभिन्नेपिश्लुर्भवतीतिशेषः विवष्टीतिवशकांतौ अदादिःश्लाविति द्वित्वं भुजामिन् बहुलंछं

म॰ २

ईशःसुरिति योरितिवत् नतु इक्स्तिपाविति इकानलोपापत्तेः असंयोगादित्यतः लिट् किदित्यनुवर्त्तते तदाह लिट् किदिति निरीथी दीधी लिटः कित्वादनिदितामिति नलो
पः संयोगात्परत्वात्पूर्वेणाप्राप्तौ वचनं बभूवेति कित्वाद्वृद्ध्यभावे भुवो वुगिति वुक् अत्रपित्वात्पूर्वेणाप्राप्तौ वचनं इद्रमिति ईधीतिसूत्रम् छंदोविषयत्वादिति अयमभि
प्रायः ईक्षेभीपायामिजादेश्चेत्यमाभाव्यं छंदसितु अमंत्रे इति प्रतिषेधात् यद्यप्याम् नास्ति तथापि छंदस्युभयथेति लिटः सार्वधातुकत्वे ङित्वात्समीधे इति नलोपः आम
भावस्त्वार्धधातुकत्वात् छंदसि दृष्टानुविधानात् वुको नित्यत्वादिति यद्यनित्येति परिभाषयापि अनित्यस्य बलीयस्त्वात् कृताकृतप्रसंगित्वेन नित्यत्वात् ६॥ ॥इतिप्रथ
मोध्यायः॥ ॥ तृतीयाकर्मणि द्वितीयेत्यतः कर्मणीति वर्तते द्वितीयायां प्राप्तायां तृतीया विधीयते चशब्दात्सापि भवति तदाह कर्मणीति यवाग्वेति अत्र यवागूशब्दा

तृतीया च होश्छन्दसि २।३।३ जुहोतेः कर्मणि तृतीया स्यात् द्वितीया च। यवाग्वा यवागूं वाऽग्निहोत्रं जुहोति। अग्निहोत्रशब्दोऽत्र हविषि वर्त्तते। यस्याग्नि
होत्रमधिश्रितममेध्यमापद्येतेत्यादिप्रयोगदर्शनात्। अग्नये हूयत इति व्युत्पत्तेः। यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः॥ द्वि
तीया ब्राह्मणे २।३।६० ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात्। षष्ठ्यपवादः। गामस्य तदहः सभायां दीव्येयुः॥ चतुर्थ्य
र्थे बहुलं छन्दसि २।३।६२ षष्ठी स्यात्। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। वनस्पतिभ्य इत्यर्थः। षष्ठ्यर्थे चतुर्थीति
वाच्यम्। या खर्वेण पिबति तस्यै खर्वः॥

तृतीया अग्निहोत्रशब्दाच्च द्वितीया अग्निहोत्रशब्दो हविर्वाचकः जुहोतिः प्रक्षेपणार्थः यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्य
र्थस्तदाह यवाग्वाख्यमित्यादि भिन्नविभक्त्यवरुद्धत्वेपि भिन्नार्थकविभक्त्यनवरुद्धत्वान्नामार्थयोरभेदान्वयः भाष्ये त्वेतत्सूत्रं प्रत्याख्यातं अग्निहोत्रशब्दोऽत्राग्नावपि वर्त्तते यस्य
अग्निहोत्रे प्रज्वलितमित्यादिदर्शनात् हूयतेऽस्मिन्निति व्युत्पत्तेश्च तच्च यदा यवागूशब्दात्तृतीया तदाग्निहोत्रशब्दोऽत्यग्नौ वर्त्तते जुहोतिः प्रीणने यवाग्वा अग्निं प्रीणयतीत्यर्थः
यदा यवागूशब्दाद्द्वितीया तदा अग्निहोत्रशब्दो हविषि वर्त्तते जुहोतिः प्रक्षेपणे यवाग्वाख्यं हविर्द्रव्यं प्रक्षिपतीत्यर्थः ७। द्वितीया दिवस्तदर्थस्येति वर्त्तते तदाह
ब्राह्मणेत्यादि सोपसर्गस्य छंदसि विभाषोपसर्ग इत्यनेन व्यवस्थितविभाषयापि सिद्धे निरुपसर्गार्थ आरंभः षष्ठ्यपवाद इति दिवस्तदर्थस्येति प्राप्तायाः ८ चतुर्थ्यर्थे

रसां निपात्यंते षद्ल्लृविशरणगत्यवसादनेषु जनी प्रादुर्भावे रमक्रीडायां एभ्यंतेभ्य एभ्यो लुङि आम प्रत्ययो निपात्यते चिञ् चयने सुद्वादस्मादाम् प्रत्यये द्विर्वचनं कुत्वं च अकर इति प्रत्येकं संबध्यते तदाह आचेषितिति अकर इति कृञो लुङि तिपि च्लेर्मंत्रे घसेत्यादिना लुक् इतिपो हल् ङ्यादिलोपः सादयामकरिति आमंति लुङो लुक् अस्पुर सीषददिति सदेर्ण्यंतात् लुङि च्लेः चङि णौ चङ्युपधाया इति ह्रस्वः चङीति द्विर्वचनं हलादिः शेषः सन्वल्लघुनीति सन्वद्भावे सन्यत इतीत्वं लघोर्दीर्घः लोक इति व दिपिपाक्षि कमिदंवोध्यम् विदांकुर्वंत्विति सूत्रादन्यत्र रसां ग्रहणानुवृत्तेः पावयामिति पवतेः णिजन्ताद्वर्णान्ताद्वाशीर्लिङ्याम् क्रियादित्यनुप्रयोगश्च क्रियादिति करोतेराशीर्लिङि रूपम् लिङाशिषीत्यार्द्धधातुकत्वाद्विकरणाभावः रिङ्शयग्लिङ्क्षु इति रिङ् विदामक्रन्निति विदेर्लुङि आम् गुणाभावः लुङ् नकरोत्यनुप्रयोगश्च ॥ ःः ॥ गुपेः आम्प्रत्ययाभावस्थले एवेदं सूत्रे केवलस्योच्चारणात् अजूगुपतमिति गुपेर्लुङ्णौ तस्थस्थमिपामिति थस्य तम् णेजादीनां दीर्घो ऽभ्यासस्येत्यभ्यासस्य दीर्घः अगोप्नमिति ॥

गुपेश्छन्दसि ३।१।५०। ल्ले श्वङ्गा। गृहानजूगुपतं युवं। अगोप्तमित्यर्थः॥ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ३।१।५१। च्लेश्चङ्न। मा त्वायतो जरितुः काममूनयीः। मा त्वाग्निर्ध्वनयीत्॥ कृमृदृरुहिभ्यश्छन्दसि ३।१।५९। च्लेरङ्वा। इदं तेभ्यो करं नमः। अमरत्। अदरत्। यत्सानोः सानुमारुहत्॥

दित्वादिडभावे वदव्रजेतिवृद्धिः झलो झलीति सिचो लोपः इडुपक्षे अगोपिष्टम् आय प्रत्यये ऽगोपायिष्टम् इत्थं च त्वा दिछन्दसि लोके तु चङं वर्जयित्वा त्रीण्येवेति विवेकः ॥ नोनयतिं ऊन परिहाने ध्वन शब्दे इल प्रेरणे अर्द गतौ याचने च एभ्यो एयंतेभ्यश्च्लेर्णिश्रीति प्राप्तश्चङादेशो नेत्यर्थः तत्रोनयत्येलयती चुरादी एयंतो ध्वनयतिरपि चुरादिरदंतो घटादिर्णिजन्तश्च अर्दयतिस्तु हेतुमण्यन्तः ऊनयीरिति मध्यमपुरुषैकवचनम् नमाङ्योग इति आट्प्रतिषेधः इट ईटीति सिज्लोपः अत्र पक्षे चैव नम् त्वा पतस्त्वामिच्छतः जरितुः स्तोतुः मम काममभिलाषमा ऊनयीः ऊनं मा कार्षीरित्यर्थः ओनन दिति भाषायाम् ध्वनयीदिति तिप् नमाङ्योग इत्यट्प्रतिषेधः भाषायां तु घटादेरदिध्वनत् चुरादेरदध्वनत् ऐलयीत् आर्दयीत् आर्दिदत् ऐलिलदिति लोके क्रमेण च ञ्लिषु इत्यतः ञ्लिरिति अस्यतिवक्तीत्यतो ऽङिति इरितो वेत्यतो वेत्यनुवर्त्तते तदाह ल्लेरित्यादि अकरमिति डुकृञ् करणे मिप् ऋदृशो ऽङि गुण इति गुणः अमरदिति मृङ् प्राणत्यागे व्यत्ययेन परस्मैपदम् अदरदिति।

दसीति सूत्रेणाभ्यासस्येकारः ऋश्चेति षत्वं कुत्वं॥ ॥ मंत्रे घस घस्ऌ अदने आदेशः ह्वृ ह्वृ कौटिल्ये अस्य ऋतगुणानुकरणं ह्वरेति अकारस्तूच्चारणार्थः णश अदर्श-
ने वृञ् वरणे वृङ् संभक्तौ दह भस्मीकरणे आत् आकारांताः प्राप्रणेत्यादयः वृजी वर्जने डुकृञ् करणे गम्लृ गतौ जनी प्रादुर्भावे अक्षन्निति अत्ते लुङि च्लिः घस्ला-
देशस्येति लुङ् सनोरिति विहितस्य मा ह्वरिति माङि उपपदे ह्वृ अस्तेः लुङि तिप् इतश्चेतीकारलोपः च्लेर्लुकि ऋतो सार्वधातुके इति गुणे ऋतेरपरत्वे हल्ङ्याब्भ्य इति लो-
पः अप्रणगिति प्रपूर्वो नसे लुङ् हल्ङ्याबिति लोपः उपसर्गादसमासेऽपीति णत्वं मर्त्यस्येति मकारेऽनुनासिकपरे यरोऽनुनासिक इति ङः कुत्वमिति पक्षे अक्षेति म

मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः २।४।८० एभ्यो लेर्लुक् स्यान्मन्त्रे। अक्षन्नमीमदन्त हि। घस्लादेशस्य गमहनेत्युपधालोपे शा-
सिवसीति षः। मा ह्वर्मित्रस्य। धूर्तिः प्रणङ् मर्त्यस्य। नशेर्वेति कुत्वं। सुरुचो वेन आवः। मा न आयन्। आदित्याकारान्त ग्रहणं। आप्रा द्यावापृथि-
वी। परावर्गभारभृद्यथा। अक्रन्नुषासः। त्वे रयिं जागृवांसो अनु ग्मन्। मन्त्र ग्रहणं ब्राह्मणस्याप्युपलक्षणं अत्तनवाऽसदन्ताः। विभाषानुद-
त्ते। नेहानन्तात्रुट् भ्रन्नजनिष्ट हि षः॥ इति द्वितीयोऽध्यायः॥ अभ्युत्सादयाम्प्रजनयाञ्चिकयाम्रमयामकः पावयां क्रियाद्विदामक्रन्निति च्छन्द-
सि ३।१।४२ आद्येषु चतुर्षु लुङि आम् अकरित्यनुप्रयोगश्च। अभ्युत्सादयामकः। अभ्युदसीषददिति लोके। प्रजनयामकः। प्राजीजनदित्यर्थः
। चिकयामकः। अचैषीदित्यर्थे चिनोतेराम् द्विर्वचनं कुत्वं च। रमयामकः। अरीरमत्। पावयां क्रियात्। पाव्यादिति लोके। विदामक्रन्। अवेदिषुः ॥

त्वे नन्ङिति रूपं वो ध्मम् आवः इति वृञो रूपं आधगिति आङ्पूर्वो दहेर्लुङ् दादेर्धातोरिति घः एकाचो बशो भष् भावः आप्रा इति आङ्पूर्वोत्प्राधातोः सिप् रुत्व यत्वे च य-
लोपः परावर्गिति परापूर्वो वृजेस्तिप् उपधागुणे चोः कुरिति कुत्वं अक्रन्निति सेर्ङित्वाद्गुणाभावे यण् अनु ग्मन्निति अनुपूर्वो गच्छतेर्झिः गमहनेत्युपधालोपः ननु मंत्र शब्दः
संहितायां रूढ इति अत्तेत्यादौ ब्राह्मण प्रयोगे लुग् न प्राप्नोतीत्याशंक्याह मंत्रग्रहणमित्यादि अत्तेति गमहनेत्युपधालोपः ब्राह्मणप्रयोगोऽयं मंत्रेति किं अघसत् अह्वार्षीत्
अनशत् अवारीत् अधाक्षीत् अप्रासीः अवर्जीत् अकार्षीत् अगमत् अजनि अजनिष्ट॥ इति द्वितीयोऽध्यायः॥ अभ्युत्सादयाम् अभ्युत्सादयामित्यादयश्छंदसि विषयेऽन्यत्

छंदसि यह मर्षणे भजो ण्विरिति वर्तते तदाह ण्विः स्यादिति॥ ननु उरसाहं पुरोधायेति लोके प्रयोगाद्दृश्यन्ते तेषां का गतिरिति --- चेत् णिजंताड्ढिव्बोध्यः पृतनाषाडिति स
हेः साडः सइति षत्वम् २१ वहः प्राग्वदिति ण्विः स्यादित्यर्थः २२ हव्ये अंत शब्दो मध्यमवाची हव्यशब्दे उपपदे वहेर्ञ्युट् स्यात् पादमध्ये चेन्न पदांते इति फलितोऽर्थः हव्यवालग्निरिति अत्र
डस्य लः ढ्योश्चास्य स्वरयोर्मध्यमेत्य संपद्यते सडकारो लकार इति प्रातिशाख्ये विहितः॥ जनसन जनादिभ्यो धातुभ्यश्छंदसि विट् स्यात् अग्रेगा इति हलदंतादिति सप्त
म्यलुक्॥ मंत्रे श्वेतवहो श्वेतादिशब्देभ्यो वहादिभ्यो ण्विन् स्यात् अस्मात् क्षणिककार्यार्थं निपातनम् श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि कारके ण्विन् प्रत्ययः उक्थेक

छन्दसि सहः ३।२।६३ ण्विः स्यात्। पृतनाषाट्॥ वहश्च ३।२।६४ प्राग्वत्। दित्यवाट्। योगविभाग उत्तरार्थः॥ कव्यपुरीषपुरीष्येषु ञ्युट् ३।२।६५ एषु
वहेर्ञ्युट् स्याच्छन्दसि। कव्यवाहनः पुरीषवाहनः। पुरीष्यवाहनः॥ हव्येऽनन्तःपादं ३।२।६६ अग्निश्च हव्यवाहनः। पादमध्ये तु वहश्चेति ण्विरेव। हव्य
वालग्निरजरः पिता नः॥ जनसनखनक्रमगमो विट् ३।२।६७ विड्वनोरित्यात्वम्। अब्जाः। गोजाः। गोषा इन्द्रो नृषा असि। सनोतेरन इति षत्वम्। इयं शु
ष्मेभिर्बिसखा इवारुजत्। आ दधिक्राः शवसा पञ्च कृष्टीः। अग्रेगाः॥ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ३।२।७१ श्वेतवाहादीनां डस् पदस्येति
वक्तव्यं॥ यत्र पदत्वम्भावि तत्र ण्विनो पवादो डस् वक्तव्य इत्यर्थः। श्वेतवाः। श्वेतवाहौ। श्वेतवाहः। उक्थानि उक्थैर्वा शंसति। उक्थशा यजमानः। उक्थ
शासौ। उक्थशासः। पुरो दाश्यते दीयते पुरोडाः॥ अवे यजः ३।२।७२ अवयाः। अवयाजौ। अवयाजः॥ अवयाः श्वेतवाः पुरोडाश्च ८।२।६७ एते सम्बुद्धौ कृ
तदीर्घा निपात्यन्ते। चाडुक्थशाः॥

मणिकरणे चोपपदे शंसतेः प्रत्ययः नलोपश्च पुरः पूर्वस्य दाशृ दाने इत्यादेर्डित्वे कर्मणि च प्रत्ययः डस् पदस्येति पदस्येति प्रत्येकमभिसंब
ध्यते भाविपदत्वाश्रयणेन चेत् सुच्यते तदाह यत्र पदत्वं भावीति डसंतस्येत्यर्थः श्वेतवा इति श्वेता एवं तं वहन्ति श्वेतवा इन्द्रः अत्वसंतस्येति दीर्घः उक्थशासाविति नलोपे कृते ऽतउप
धाया इति वृद्धिः अवे योगविभाग उत्तरार्थः पुरोडाशावयजो ण्विन् इत्येकयोगे श्वेतवहादीनामप्युत्तरत्रानुवृत्तिः स्यात् मंत्रेश्चाव पूर्वस्यैवानुवृत्तिः स्यात् केवलस्यैवेष्यते इति॥ अवयाः
त

दृविदारणे अरुहदिति रुहवीजजन्मनिप्रादुर्भावे च लोके तु अकार्षीत् अभृत अदारीत् अरुक्षत ॥ ॥ छन्दसि निष्टर्क्यो इयः शब्दाः छन्दसि निपात्यन्ते इति क्य
पिप्राप्नइति ऋदुपधाच्चेति सूत्रेण आपृच्छ्यमिति प्रच्छी ज्ञीप्सायाम् ग्रहिज्येति संप्रसारणं प्रतिषीव्येति षिवु तन्तुसंताने हलि चेति दीर्घः उपचाय्यपृडमिति उपचा
यं चतत्पृडं चेति कर्मधारयः हिरण्यइति हिरण्ये ऽभिधेये इत्यर्थः ॥ छन्दसि एभ्य इति वनषणसंभक्तौ रक्षपालने मथविलोडने एभ्य इत्यर्थः स्तंव शब्दतो रिन् इ

छन्दसिनिष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्य्यस्तर्य्याध्वर्य्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडा
नि ३।१।१२३ कृन्ततेर्निसपूर्वात्क्यपि प्राप्ते ण्यत् आद्यन्तयोर्विपर्य्यासः निसः सत्वञ्च। निष्टर्क्यं चिन्वीत पशुकामः। देवशब्दे उपपदे ह्वय
तेर्जुहोतेर्वा क्यप् दीर्घश्च। स्पर्द्धन्ते वा उ देवहूये। प्रउत् आभ्यां नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप्। उच्छिष्यः। मृङ् स्तृञ्
ध्वृ एभ्यो यत्। मर्य्यः। स्तर्य्या। स्त्रियामेवायं। ध्वर्य्यः। खनेर्ण्यत् एयतौ। खन्यः। खान्यः। यजेर्य्यः। शुन्धध्वं दैव्याय कर्म्मणे देवयज्यायै। आङ्
पूर्वात्पृच्छेः क्यप्। आपृच्छ्यं धरुणं वाज्यर्षति। सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मणि वदेर्ण्यत्। ब्रह्मवाद्यम्। लोके तु वदः सुपि क्यप्
चेति क्यप्यतौ। भवतेः स्तौतेश्च ण्यत्। भाव्यः। स्ताव्यः। उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे। उपचाय्यपृडम्॥ हिरण्य इति वक्त
व्यं। उपचेयपृडमेवान्यत्। मृडसुखने पृड चेत्यस्मादिगुपधलक्षणः कः॥ छन्दसि वनसनरक्षिमथाम् ३।२।२७ एभ्यः कर्म्मण्युपपदे इन्
स्यात्। ब्रह्मवनिं त्वा। क्षत्रवनिं। उत नो गोषणिं धियम्। ये पथां पथिरक्षयः। हविर्म्मथीनामभि॥ त्यतः इन्निति वर्त्तते तदाह

इन्स्यादिति वनषण संभक्तौ विति म्वादिगणेन सह निर्दिष्टयोरेव ग्रहणं न तु वनु याचने षणु दाने इति तनादिकयोः सानुबन्धकत्वात् ब्रह्मवनिमिति ब्रह्म वनति सेवत इ
नति गां सनतीति विवक्षायामिन् तदन्तात् द्वितीयैकवचनं सुपामादित्वात्षत्वम् पथिरक्षयइति पथानं रक्षयतीति विग्रहः पथिरक्षीति पथानं रक्षत इति विग्रहः हविर्मथतइ

औत्। एतच्च सूत्रं नदीसंज्ञके षु रुद्ड्याम् इति पूर्वसूत्रे णा वाध्यते घिसंज्ञके षु च घेर्ङिति उत्तरसूत्रेण। तस्मात् संज्ञाद्वयशून्यो स्य विषयः। न च तादृश उकारोस्तीत्यत आह। उकारानुवृत्तिरिति। प्राचा तु घिनदीसंज्ञकाभ्याम् इदुद्भ्यां परस्येत्युक्तं तदसत्। तादृशस्योकारस्याप्रसिद्धेः। सुसखेति। प्रादिसमासे राजाहःसखिभ्यष्टजिति टचो न पूजनादिति निषेधः। शेषोप्यसखीत्यत्रासखीति नायं प्रसज्यप्रतिषेधः। असमर्थसमासादिदोषापत्तेः। किंतु पर्युदास एवेति सुसखीत्यस्य सखिशब्दभिन्नत्वात् घिसंज्ञा स्यादेवा न च समुदायस्य सखिशब्दभिन्नत्वेपि सखिशब्दात् भिन्नत्वं नेति कथमसखीति निषेधाप्रवृत्तिरिति शंक्यं। विशेष्यासन्निधानादसखीत्यत्र येन विधिस्तदंतस्येत्यस्य प्रवृत्तेस्तदंतत्त्स्कलमभिप्रेत्याह। समुदायस्येत्यादि। एवमतिसखेत्यत्रापि समासांतनिषेधादिकं बोध्यं। गोणत्वेपीति। अतिदिष्टेत्यत्र

औत्। ७।३।११८। इदुद्भ्याम्परस्य ङेरौत्स्यात्। उकारानुवृत्तिरुत्तरार्था। सख्यौ। शेषं हरिवत्। शोभनस्सखा सुसखा। सुसखायौ। सुसखायः। अनङ्णिद्वद्भावयोराङ्गत्वात्तदंतेपि प्रवृत्तिः समुदायस्य सखिरूपत्वाऽभावादसखीति निषेधाऽप्रवृत्तेर्घिसंज्ञा। सुसखिना। सुसखये। ङसिङसोर्गुणो कृतेकृतयणादेशत्वाऽभावात् ख्यत्यादित्युत्वन्न। सुसखेः। सुसखौ। इत्यादि। एवमतिशयितः सखा अतिसखा। परमः सखा यस्येति विग्रहे परमसखा। परमसखायावित्यादि। गौणत्वेऽप्यनङ्णित्वे प्रवर्तेते सखीमतिक्रान्तोऽतिसखिः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नटच्। हरिवत्। इहाऽनङ्णित्वे न भवतः। गोस्त्रियोरिति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात्। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्॥

दावस्थायामनङ्दिति भावः। तथा च येन विधिरिति सूत्रे परमसखायाविति बहुव्रीहिस्तत्पुरुषे हि टचा भाव्यमिति कैयटः। तथा द्वितीयाश्रितेति सूत्रे सोमसखेति प्रतीकमुपादाय बहुव्रीहित्वान्न समासांत इति स एवाह। अनच्युक्षो वरुण इंद्रसखा। आग्रेया हि मरुत्सखा। तीव्रं सोमं पिबति गोसखायमित्यादिप्रयोगाश्चैवमेव संगच्छंते। तत्र बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात्। एतेन घिसंज्ञासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरंतो हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः। अनित्यत्वादिति। शक्तिलांगलांकुशेति वार्तिके घटघटीग्रहणमत्र लिंगं ॥ ॥ ॥

श्वेतवा ननुमंत्रे श्वेतवहेत्यादिनाडस्युक्ते सावत्वसंतस्येति दीर्घत्वे च श्वेतवा इत्यादि सिद्धेनार्थो नेनयोगेनेत्याशंक्याह एते संबुद्धाविति संबुद्धौ हि अत्वसंतस्येति न प्राप्नोतीति
त्वासंबुद्धावित्यनुवर्तनात् ॥ ॥ विजुपेनन्तु छंदसीति व्यर्थं मंत्रे इत्यनुवृत्तेरेव भाषायां न भविष्यतीति चेत् सत्यम् ब्राह्मणसंग्रहार्थं छंदोग्रहणं मंत्रव्यतिरिक्तो वेदभागो ब्राह्मणं
तदुक्तं तच्चोदकेषु मंत्राख्या शेषे ब्राह्मणशब्दः सुधीवा सुपीवेति घुमास्थेतीत्वं कीलालपा इति कीलालं जलम् पयः कीलालममृतं जीवनं भुवनं वनमित्यमरः तत् पिवतीति पा
पाने विच् उपपदं तरपीति ब्रह्मभ्रूणवृत्रभिन्नेष्वपीत्यर्थः आततानेति राल्लुत्तमो वेति णित्वपक्षे वृद्धिः अररिवानिति रादाने लिटः क्वसुः वस्वेकाजाद्घसामित्यादंतत्वादिट् ततो न

विजुपे छन्दसि ३।२।७३ उपे उपपदे यजेर्विच् । उपयट् ॥ आतो मनिन्क्वनिब्वनिपश्च ३।२।७४ सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः चाद्विच् । सुदामा । सुधीवा । सुपीवा । भूरिदावा । घृतपावा ॥ विच् । कीलालपाः ॥ बहुलं छन्दसि ३।२।८८ उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात् । मातृहा । पितृहा ॥ छन्दसि लिट् ३।२।१०५ ॥ भूतसामान्ये । अहं द्यावापृथिवी आततान ॥ लिटः कानज्वा ३।२।१०६ क्वसुश्च ३।२।१०७ छन्दसि लिटः कानच् क्वसू वा स्तः । चक्राणा वृष्णि । छंदसि परिक्षायामपि क्वसुर्वक्तव्यः ॥ यो नो अग्ने अररिवाँ अघायुः ॥ क्याच्छन्दसि ३।२।१७० । उप्रत्ययः स्यात् । अघायुः । एरजधिकारे जवसवौ छन्दसि वाच्यौ ॥ जवे याभिर्यूनः । ऊर्वोर्मे जवः । देवस्य सवितुः सवे ॥ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ३।३।९६ वृषादिभ्यः क्तिन् स्यात् स चोदात्तः । वृष्टिं दिवः । सुम्नमिष्टये । पचात् पक्ती । इत्ता इयं ते नव्यसी मतिः । वित्तिः । भूतिः । अग्न आयाहि वीतये । राती स्याम
भयासः ॥

न्समासः दीर्घादटीति वक्ष्यमाणेन नस्य रुत्वं आतोऽटि नित्यमिति रोः पूर्वस्यातो नित्यमनुनासिकः प्रसंगादघायुशब्दस्युत्पादयितुमाह ॥ ॥ छंदसीति सुप आत्मन इत्ये
न आत्मन इति विशेषणात्परेच्छायां न प्राप्नोतीति वचनम् ॥ क्याच्छंदसि सनाशंसभिक्ष उरित्यतः उरिति वर्तते क्यानाड्जातो रुः स्यात् छन्दसि अघायुरिति परस्य अघमिच्छतीत्यर्थे क्यच् अ
श्वाघस्यादिति वक्ष्यमाणेनाकारादेशः तदन्तादुप्रत्ययः जवसवाविति जुइति सौत्रो धातुः षूङ् प्राणिगर्भविमोचने षुप्रसवैश्वर्ययोरिति आभ्यामृदोरविति अपि प्राप्ते ऽज्विधीयते स्वरे भेदः

मन्त्रे वृषेषपच्यविरविदिविधृत्वियां क्तिन्नित्यतः क्तिन्निति वर्त्तते वीराइति पंचम्यर्थे प्रथमा तदाह वृषादिभ्यइति वृष्टिमिति वृषु सेचने इष्ट्येइति इषुइच्छायां चतुर्थ्येकवचनम् मतिरितिमनस्ता नेक्तिन् अनुदात्तोपदेशेत्यनुनासिकलोपः वित्तिरिति विद्सत्तायाम् क्तिवान्न लघूपधगुणः वीतयेइति वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु रातावितिरादाने॥ ८३ ॥ छन्द सिलुङ्लङ्लिटः उदाहरणेषु धातुसंबंधोमृग्यः आगमदिति गम्लृगतौपुषादीतिलृदिलादङ् अकरमिति कृमृदृरुहिभ्यश्छन्दसि इतिच्लेरङ् ऋदृशोऽङीतिगुणः अवृणीते तिवृञ्वरणेलङ् क्र्यादिभ्यःश्नाईहल्यघोरितीत्वम् इतश्च लेटोऽडाटावित्यतः लेटइतिवेतोन्यत्रेत्यतोवेतिचानुवर्ततेतदाह॥ ॥ लेटइत्यादि लेटोआगमौस्तइति तौचप

छन्दसि लुङ्लङ्लिटः ॥३।४।६॥ धात्वर्थानां सम्बन्धे सर्वकालेष्वेते वा स्युः। पक्षे यथास्वम्प्रत्ययाः। लुङि। देवो देवेभिरागमत्। लोडर्थे लुङ्। इदन्तेभ्यो करन्नमः। लङ्। अग्निमद्यहोतारमवृणीतायंयजमानः। लिट्। अद्यममार। अद्य म्रियत इत्यर्थः॥ लिङर्थे लेट् ॥३।४।७॥ विध्यादौ हेतुमत्याद्यर्थे चायम्। तौ लेट् स्याच्छन्दसि॥ सिब्बहुलं लेटि ॥३।१।३४॥ इतश्च लोपः परस्मैपदेषु ॥३।४।९७॥ लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु॥ लेटोऽडाटौ ॥३।४।९४॥ लेटः अट् आट् एतावागमौ स्तः तौ च पितौ॥ सिब्बहुलं णिद्वक्तव्यः॥ ॥ तृदिः। प्रण आयूंषि तारिषत्। सुपेशसस्करति। जोषिषत्। आसाविषदर्शसानाय। सिप इलोपस्य चाभावे पताति दिद्युत्। प्रियस्सूर्ये प्रियो अग्ना भवाति॥ स उत्तमस्य ॥३।४।९८॥ लेडुत्तमसकारस्य वा लोपः स्यात्। करवाव॥ करवावः। टेरेत्वं॥ आत ऐ ॥ लेट आकारस्य ऐः स्यात्। सुतेभिः सुप्रयसा मादयैते। आतामित्याकारस्य ऐकारः। विधिसामर्थ्याद्दाट ऐत्वं नत्वा अन्यथा ॥ ६८ ॥

यीयेणनतुयौगपद्येन अद्विधिसामर्थ्यात् अन्यथा सवर्णदीर्घेकृते विशेषाभावात् आडुत्तमस्येति सूत्रानंद्ककृत्वा ११ हिरण्टमेवविदध्यात्। योयज्ञातियज्ञात्पिचेत्यनुवर्तते इत्याशयेनाह तौचपितावेति तत्फलंतु विकर्दसीउर्वराडुव्रतेनेत्यादिषुगुणः॥ ० ॥ तृदिरिति अचोञ्णितीत्यनेन तारिषदिति तृप्लवनतरण योः तिपइकारलोपः सिपइट् जोषिषदिति जुषीप्रीतिसेवनयोः अनुदात्तेत् व्यत्ययेनपरस्मैपदम् असाविषदिति आङ् पूर्वात्षुप्रसवैश्वर्ययोरित्यस्माल्लेट् पताती तिपतृपत्तनेतिप् आडागमः करवावेति कृञोलेटोवस् तनादिकृञ्भ्यइति उः गुणः रपरः लेटोऽडाटावित्याट् तस्यपित्वेनाऽङित्त्वाद्विकरणस्यगुणः अतउत्सार्वधा

ञुक इत्युक्त्वाभावश्च मदीहर्षेणि च तदंताल्लेट् आतामित्यते आह टेरेत्वमिति टित आत्मने पदानामित्यनेन आकारस्येति प्रथमस्येत्यर्थः द्वितीयस्य टित आत्मनेपदाना
मित्यनेनैत्वमेव नित्यत्वात् न च शब्दांतरप्राप्त्याऽनित्यत्वं कृताकृतप्रसंगित्वमात्रेण कचिन्नित्यताश्रयणात् उत्तरसूत्रेऽन्यत्रेति लिङ्गाच्च आट एत्वन्नेत्युक्तं तस्य फ
लमाह यजाति यजात इति यज देवपूजादौ लेट आडागमः ३५ ॥ ॥ वैतोऽन्यत्र किमपेक्ष्येत्याकांक्षायां पूर्वसूत्रविषयादिति लभ्यते सन्निधानात् तदाह आत इत्या
दि ईशै इति ईश ऐश्वर्ये उत्तमैकवचनमिट् इतश्च लोपो नास्ति परस्मैपदेषु इत्युक्तेः टेरेत्वे तस्य ऐः गृह्यांता इति ग्रहेः कर्मणि लेट् झः तस्याडागमः यक् ग्रहिज्येति सं
प्रसारणं टेरेत्वं पूर्ववदैत्वम् पणावन्ध इति यदि मे भवानिदं कुर्यात्तर्हीदमहं दास्यामीति समयकरणं पणावंधः आशंकासंभावना अहमेवेति त्रिष्वर्विज ये दैवैः

वैतोऽन्यत्र ।३।४।९६ लेट एकारस्य ऐः स्यादात ऐ इत्यस्य विषयं विना। पशूनामीशै। ग्रहा गृह्यान्तै। अन्यत्र किम्। सुप्रयसा मादयैते। ३१ स
म्वादाशङ्कयोश्च ।३।४।८ परावन्धे आशङ्कायां च लेट् स्यात्। अहमेव पशूनामीशै। नेज्जिह्मायन्तो नरकम्पताम॥ हलः श्नः शानज्झौ॥ छन्दसि शा
यजपि ।३।१।८४ अपिशब्दाच्छानच्। हृग्रहोर्भश्छन्दसीति हस्य भः। गृभाय जिह्वया मधु। बधान देव सवितः। अनिदितामिति नलोपः। गृभ्
णामि ते। मध्वा जभार॥ व्यत्ययो बहुलम् ।३।१।८५ विकरणानां बहुलं व्यत्ययः स्यात् छन्दसि। आण्डा शुष्णस्य भेदति। भिनत्तीति प्राप्ते। जरसा मरते
पतिः। म्रियत इति प्राप्ते। इन्द्रो वस्तेन नेषतु। नयते लोट् शप्सिपौ द्वौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रं। तरेमेत्यर्थः। तरतेर्विध्यादौ लिङ् उः सिप् शप्

प्राप्ते तस्य स्वरूपस्येदम्वचनम् पशवः संसारिणः नेदिति इच्छब्द आशंकां द्योतयति जिह्माचरणेन नरकपातः समाभूदित्यर्थः पत ॥ ८ चेतित्रयो विकरणाः॥
मेति स उत्तमस्येति सलोपः छंदसि शायच्छंदसि श्नः शायजपावादेशः स्याद्धौ परे गृभायेति ग्रहउपादाने लोटः सेर्हिः क्र्यादिभ्यः श्ना ग्रहिज्येति संप्रसारणम् बधानेति बंध बंध
ने अतो हेरिति लुक् प्रसंगात् हृग्रहोर्भश्छंदसीत्यस्योदाहरणमाह गृभ्णामि इति जभारेति हृञ् हरणे लिटो णलि वृद्धौ हस्य भः हृत्वा निजहारेत्यर्थः इन्भेदतीति भिदिर्
विदारणे रौधादिकः श्नमि प्राप्ते शप् म्रियत इति मृङ् प्राणत्यागे तुदादिभ्य इति शे कृते रिङ् शयग्लिङ्क्षु इति रिङादेशः इयङ् नेषत्विति नयत्वित्यर्थः द्वौ विकरणाविति तत्र

सिप्तुवाहुलकात् एतेनसेमाममविड्ढि इत्यादिव्याख्यातम् अवरक्षसोऽस्मात्तोटिशपिप्राप्तेवाहुलकात्सिप् हुसल्भ्योहेर्धिः षत्वंष्टुत्वम् जश्त्वम् तरुषेमेति तरुषमसिति
जातेयासुट्लिङःस्सलोपोऽनेत्यस्यनित्यंङितः अतोयेयः लोपोव्योर्वलि आद्गुणः अत्रोप्रत्ययांतस्यसिपप्रत्ययत्वात्सार्वधातुकेतिगुणःप्राप्तः सिवंतस्यशपिलघू
पधगुणश्चप्राप्तोवाहुलकान्नभवति॥ ॥सुप्तिङिति शास्त्रकृत्पाणिनिराचार्यएषांसुप्रभृतीनांव्यत्ययमिच्छति सोपितथाविधोव्यत्ययोवाहुलकेनसिध्यति। व
हुलस्यभावोबाहुलकंमनोज्ञादित्वाद्वुञ् तत्पुनर्बहुलशब्दस्यप्रवृत्तिनिमित्तम् बहूर्थादानत्वंचशब्दोहेतौयस्मादेवमुक्तप्रकारोव्यत्ययोबहुलग्रहणेनैवसिध्य

सुप्तिङुपग्रहलिङ्गनराणांकालहलच्स्वरकर्तृयङांच्चव्यत्ययमिच्छति शास्त्रकृदेषांसोपिचसिध्यतिबाहुलकेन॥१॥धुरिदक्षिणायाःदक्षि
णस्यामितिप्राप्तेचषालंयेअश्वयूपायतक्षतितक्षन्तीतिप्राप्ते।उपग्रहः परस्मैपदात्मनेपदे।ब्रह्मचारिणमिच्छते इच्छतीतिप्राप्ते।प्रतीपमन्यऊ
र्मिर्युध्यति।युध्यतइतिप्राप्ते।मधोस्तृप्ताइवासते।मधुनइतिप्राप्ते।नरः उरुषःअधासवीरैर्दशभिर्वियूयाः।वियूयादितिप्राप्ते।कालःकालवाचीप्रत्य
यः।श्वोऽग्नीनाधास्यमानेन।लुटोविषयेलृट्।तमसोगाअदुक्षत्।अधुक्षदितिप्राप्ते।मित्रवयञ्चसूरयः।मित्रावयमितिप्राप्ते।स्वरव्यत्ययस्तुव
क्ष्यते। कर्तृशब्दःकारकमात्रपरः।तथाचतद्धाविनांकृत्तद्धितानांव्यत्ययः।अन्नादाय।अण्विषयेअच्।अवग्रहेविशेषः।यङोयशब्दादारभ्य
लिङ्याशिष्यङितिङकारेणप्रत्याहारः।तेषांव्यत्ययोभवतीत्यादिरुक्तएव॥ तितस्माद्बहुलग्रहणंकृतमित्यर्थः।वियूयाइति यूमिश्रणेविरवं आशि
षिलिङः आधास्यमानेनेति आङ्पूर्वाद्धधातेर्लृटः सद्वेत्यनेनशानजादेशः स्यतासीइतिस्यः आनेमुगितिमुक्।मित्रवयमितिदीर्घस्यह्रस्वव्यत्ययः स्वरव्यत्ययस्त्विति ग
वामिवश्रियसेइत्यत्रजमर्येइत्यनेन कसेनित्कृतेञ्नित्यादिरित्याद्युदात्तेप्राप्तेव्यत्ययेनमध्योदात्तता कृत्तद्धितानामितितेनदीव्यतीत्यादौविधीयमानानांठगादीनां
देवतादिकर्तृत्वादेवमुक्तम् नात्रिहकारकवाचित्वेप्याग्रहः कृत्तद्धितमात्रे तात्पर्यात् तथाचक्विमोविहितोऽतिर्यच्छब्दादपिभवति त्वंवेत्थयतितेजातवेदःविश्वेदेवा
सोमरुतोपतिष्ठत्त अन्नादायेति अन्नमत्तीत्यन्नादस्तस्मैअन्नेकर्मण्युपपदेऽदेःकर्मण्यणिप्राप्तेऽच् अवग्रहइति अणिकृतेअन्नआदायेति अचितुअन्नअदायेतिभा

वोचेमेति वचेराशीर्लिङि मस् अङ् वच उम् यासुट् छन्दस्युभयथेति लिङः सार्वधातुकसंज्ञाप्यस्ति तेन यासुट् इयादेशः वलि लोपः ४० आदृ परार्थे प्रयुज्यमानाः शब्दा व
ति मंतेरणापि वत्यर्थे गमयंति गौर्वाहीक इतिवदित्याशयेनाह लिङ्वदिति किं किनौ भवतः लिट् प्रत्ययस्य भवतीत्ययमर्थस्तु न भवति तथा हि सत्ति लिट् किं किन इ
त्येव ब्रूयात् वभ्रिरिति भ्रत्र अस्मात् किः लिङ्ग्वाद्वाद्वित्वे किं किनोः स्थानेतिवादयस्तु न लिङ्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् न लोकाव्ययेति षष्ठी निषे
धे वज्रशब्दाद्द्वितीया जग्मिरिति गमहनेत्युपधालोपः जघ्निरिति हो हन्तेरिति कुत्वं जज्ञिरिति श्नुत्वे ज ज्ञोर्ज्ञः ननु लिङ्वद्भावे सत्यसंयोगाल्लिट् किदित्येव सिद्धे कित्वक

लिङ्याशिष्यङ्॥३।१।८६॥ आशिर्लिङि परे धातोरङ् स्याच्छन्दसि। वच उम्। मन्त्रं वोचेमाग्नये॥ दृशेरग्वक्तव्यः॥ पितरञ्च दृशेयं मातरञ्च॥ अङि
तु ऋदृशोऽङीति गुणः स्यात्॥ छन्दस्युभयथा॥३।४।११७॥ धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात्। वर्द्धन्तु त्वा सुष्टुतयः। व
र्धयन्त्वित्यर्थः। आर्धधातुकत्वात् णिलोपः। विशृण्विरे। सार्वधातुकत्वात् श्नुः। श्रुभावश्च। हुश्नुवोरिति यण्॥ आदृगमहनजनः किकिनौ लिट् च॥३।२।१७१
। आदन्तादृवर्णान्ताद्गमादेश्च किकिनौ स्तस्तौ च लिड्वत्। बभ्रिर्वज्रं पपिः सोमं ददिर्गाः। जग्मिर्युवा जघ्निर्वृत्रममित्रियं जज्ञिः। लिड्वद्भावाद्द्वित्वसि
द्धम्। ऋच्छत्यृतामिति गुणबाधनार्थं कित्त्वं बहुलं छन्दसीत्युत्वम्। ततुरिः। जगुरिः॥ तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन् ... कध्यैकध्यैन्श
ध्यैशध्यैन्तवैतवेङ्तवेनः॥३।४।९॥ सेः। वक्षे रायः। सेन्। ता वामेषे। असे। शरदो जीवसे धाः। असेनित्याद्युदात्तः। क्से। प्रेषे। कसेन्। गवामिव श्रियसे
॥ अध्यै। अध्यैन्। जठरं पृणध्यै। पक्षे आद्युदात्तः। कध्यै। कध्यैन्। आहुवध्यै। पक्षे निःस्वरः। शध्यै। राधसः सह मादयध्यै॥ शध्यैन्। वायवे पिबध्यै। तवै।
दातवा उ। तवेङ्। सूतवे। तवेन्। कर्तवे॥

रणमनर्थकमित्याशयेनाह लिड्वद्भावादिति असंयोगाल्लिट् किदिति कित्वं सिद्धमिति भावः आदिति मुखसुखार्थो दकारो
ननु तकारः तेन तात्परत्वाभावाद्दीर्घस्यापि ऋकारस्य ग्रहणं तदाह ततुरिः जगुरिरिति तॄ प्लवनतरणयोः गॄ निगरणे आभ्यां किः द्वित्वात्परत्वाद् बहुलं छन्दसीत्युत्वे प्रा
प्ते द्विर्वचनेऽचीति निषेधादुत्वाभावे द्वित्वम् उरदत्वम् उत्तरस्योत्वं ४१ तुमर्थे तुमुनोऽर्थस्तुमर्थो भावः ननु कर्त्तरि कृदिति वचनात्कर्त्तरि तुमुनो विधानात्कथं भावो

र्थेइति चेच्छृणु अव्ययकृतो भावे इति वचनात्तुमुनो भावे विधानात् तुमर्थे पञ्चदश प्रत्यया भवंति वक्षे इति वचः से कुत्वषत्वे काषसंयोगे क्षः एषे इति इणो गुणः नका
रोऽन्नित्यादिर्नित्यमित्याद्युदात्तार्थः प्रेषे इति इणः से कित्त्वाद्गुणो आद्गुणः श्रियसे इति इयङ् नित्त्वादाद्युदात्तः इहमंत्रे मध्योदात्तः पठ्यते तत्र बाहुलकात्प्रत्ययस्व
रो वोध्यः आहुवध्ये इति जुहोतेरुवङ् मादयध्ये इति मदी हर्षे ण्यन्ताच्छध्ये प्रत्ययः तस्य भाववाचि सार्वधातुकत्वात्सार्वधातुके यकि प्राप्ते व्यत्ययेन शप् गुणायादे
शोऽपि वध्ये इति अत्रापि यक्प्रसंगे व्यत्ययेन शप् पाघ्रेति पिबादेशः दातवा उ इति ददातेस्तवे आयादेशे लोपः शाकल्यस्येति यलोपः सूतवे इति ङित्त्वान्न गुणः कर्तवे
इति कृञो गुणः कर्तुमित्यर्थः॥ ॥ प्रये· प्रपूर्वीद्यातेः केप्रत्ययः रुहेरिष्येन्नपूर्वाद्व्यथेश्च· दृशे· योगविभागश्चिन्त्यप्रयोजनः दृशेः ख्यातेश्च के प्रत्ययः कित्त्वाद्दृशेर्न

प्रयै रोहिष्यै अव्यथिष्यै।३।४।१०। एते तुमर्थे निपात्यन्ते। प्रयातुं रोढुं अव्यथितुमित्यर्थः॥ दृशे विख्ये च।३।४।११। द्रष्टुं विख्यातुमित्यर्थः॥ शकि णमु
ल्कमुलौ।३।४।१२। शक्नोतावुपपदे तुमर्थे एतौ स्तः। विभाजं नाशकत्। अपलुपं नाशकत्। विभक्तुमपलोप्तुमित्यर्थः॥ ईश्वरे तोसुन्कसुनौ।३।
४।१३। ईश्वरो विचरितोः। ईश्वरो विलिखः। विचरितुं विलेखितुमित्यर्थः॥ कृत्यार्थे तवैकेन्केन्यत्वनः।३।४।१४। नम्लेच्छितवै। अवगाहे। दिदृक्षेण्यः। भू
र्यस्य पृष्टकर्त्वम्॥ अवचक्षे च।३।४।१५। रिपुणा नावचक्षे। अवख्यातव्यमित्यर्थः॥ गुणः ख्यातेरालोपश्च विभाजमिति विपूर्वाद्भजतेर्णमुल् णित्त्वादत

उपधाया इति वृद्धिः अपलुपमिति· लुप्लृ छेदने कित्त्वाद्गुणाभावः ईश्वरे· ईश्वरशब्दे उपपदे धातोस्तोसुन्कसुनौ स्तश्छन्दसि विचरितोरिति· चर गतौ विद् विलिख इति
लिख विलेखने कित्त्वान्न गुणः त्क्तातोसुन्कसुन इत्यव्ययत्वादव्ययादाप्सुप इति विभक्तेर्लुक्· नलुमतेति निषेधाद्दत्वसन्तस्येति दीर्घो न· कृत्यार्थे कृत्यानामर्थौ भावकर्मणी
तयोरेवेति कृत्यानां भावकर्मणोर्विधानात्· तत्र एते प्रत्ययाः स्युः यद्यपि कृत्यानामर्थौ भव्यगेयेत्यादौ कर्तापि वस्त्यस्नानीयमित्यादौ करणादिरपि तथापि न तत्र कृत्यत्वेन क
र्त्रादिषु विधानं किं तर्हि स्वरूपेण· कृत्यतया विधानं तु भावकर्मणोरेवेति भावः नम्लेच्छितवै इति नम्लेच्छितव्यमित्यर्थः अवगाहे इति गाहू विलोडने दिदृक्षेण्य इति दृ
शेः सन्नंतात्केन्यः अतो लोपः कर्तव्यमिति· दाजः त्वन् कृत्यमित्यर्थः यद्यपि तुमर्थे सेसेनित्यनेन तुमर्थे तवै विहितस्तथापि भावभिन्नेऽपि कर्मकारके तवै यथा स्यादि

त्येवमर्थम् अवचक्षे अवरुध्वोच्चक्षिङ एशप्रत्ययो निपात्यते शित्वात्सार्वधातुकत्वं तेन ख्याञादेशो न॥ ॥भावलक्षणे॥ कृत्यार्थे इति निवृत्तम् तुमर्थ इति वर्त्तते
प्रकृत्यर्थविशेषणं भावलक्षणग्रहणं भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यस्तुमर्थे तोसुन् स्याच्छन्दसि संस्थानादीनामवधित्वेन लक्षणं भावः
आसमाप्तेरिति संस्थो हितिष्ठतिः समाप्तौ रूढः सं तिष्ठते पिंडपितृयज्ञ इत्यादौ तथा दर्शनात् आतमितो रिति तमुन्लानौ सृपितृदोः सृप्लृ गतौ उत्तृदिर् हिंसानादरयोः
भावलक्षणेर्थे वर्तमानयोः सृपितृदोस्तुमर्थे कसुन् विसृप इति गमनादित्यर्थः॥ इति तृतीयाध्यायः ३ रात्रेश्चाजसौ नजसि अजसि तस्मिन् इकार उच्चारणार्थः आहौ प्रभृतादि

भावलक्षणे स्थेणकृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्।३।४।१६। आसंस्थातोः सीदन्ति। आसमाप्तेः सीदन्तीत्यर्थः। उदेतोः। अपकर्तोः। प्रवदितोः। प्रच
रितोः। होतोः। आतमितोः। कामममा विजनितोः सम्भवामः। सृपितृदोः कसुन्।३।४।१७। भावलक्षणे इत्येव। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जत्रुभ्य
आतृदः॥ इति तृतीयोध्यायः॥ ३ ॥रात्रेश्चाजसौ।४।१।३१। रात्रिशब्दान्ङीप् स्यात् अजस्विषये छन्दसि। रात्री व्यख्यदायती। लोके तु कृदिकारादिति ङी
ष्यन्तोदात्तः॥ नित्यं छन्दसि।४।१।४६। वह्वादिभ्यश्छन्दसि विषये नित्यं ङीष्। बह्वीषु हित्वा॥ नित्यग्रहणमुत्तरार्थम्॥ भुवश्च।४।१।४७। ङीष् स्यात्
छन्दसि। विभ्वी। प्रभ्वी। विप्रसंभ्य इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते। उत इत्यनुवृत्तेः उवङादेशस्तु सौत्रः। मुद्गलाच्छन्दसि लिच्च। ङीषो लित्त्वमानुगाग
मः। लित्स्वरः। रथीरभून्मुद्गलानी॥ भ्य इतिवत् छन्दसीति नवृत्तिमिर पदे रथगुहिता रात्र्य इति प्रयोगो न स्यात् छन्दसीत्युच्यते न चेदं छन्दः अजसावितिनिषेधाच्च किंच
वेदेपि रात्र्य इति प्रयोगो न स्यात् इत्याशंक्याह लोके त्विति तु शब्दो युक्तसमुच्चयार्थः लोके जसि वेदे चेत्यर्थः कृदिकारादिति रात्र्यादिभ्यो त्रिविति व्युत्पत्ति पक्षे कृदिकारान्तः
अव्युत्पत्तिपक्षे तु सर्वतोक्तिन्नर्थादिति ङीष् वोध्यः नित्यम् बह्वादिभ्यश्चेति वर्त्तते अन्यतो ङीषित्यतो ङीषिति च ततश्चाह बह्वादिभ्य इति नन्वारंभसामर्थ्यादेव नित्य
त्वसिद्धे नित्यग्रहणं व्यर्थमित्याशंक्याह नित्यग्रहणमुत्तरार्थमिति॥ भुवः विभ्वी इति विप्रसंभ्यो ड्वसंज्ञायामित्यतो डुप्रत्ययान्तान्ङीष् ननु स्वयंभूरत्रापि स्यादित्याशं
क्याह डुप्रत्ययान्तमिति ननु डुप्रत्ययान्तानुकरणे प्रमाणं किमत आह उत इत्यनुवृत्तेरिति वोतो गुणवचनादिति सूत्रात् ननु तर्हि डुप्रत्ययान्तस्य घेर्ङितीति गुणो स्यात्तभोरि

तनिर्देशः प्राप्नोतितदाह उवङादेशस्तुसोत्र इति सुद्गला इन्द्रवरुणेतिसूत्रस्थंवार्तिकमिदम् लित्स्वर इति लितोत्यानुगाकारस्योदात्तत्वम्॥ ॥दीर्घजिह्वी दीर्घजि
ह्वीतिनिपात्यतेछंदसि अप्राप्तोङीषितिस्वाङ्गाच्चोपसर्जनादितिनप्राप्नोतितत्रत्यसंयोगोपधादितिप्रतिषेधात् कद्रू ऊङ् तइत्यतऊङितिवर्तते कद्रुशब्दात्कमण्डलुश
ब्दाच्चस्त्रियामूङ् स्याच्छंदसि गुग्गुलु मधु एषांव्यत्ययेनच्छंदसिस्त्रीत्वम् पतयालुशब्दः स्पृहिगृहीत्यादिनाआलुजन्तः अव्यया व्याख्यातमपित्यवनुवृत्तिप्रदर्श
नार्थंस्मारितम् आविष्ट्यस्येति अव्ययात्यबित्यत्रामेहक्वतसित्रेभ्यइतिनियमात्प्राप्तः शैषिकस्त्यब्विधीयते आविष्ट्यइति आविर्भूतमाविष्ट्यम् ह्रस्वात्तादाविति

दीर्घजिह्वी चच्छन्दसि।४।१।५९।संयोगोपधत्वादप्राप्तोङीष्विधीयते।आसुरीवैदीर्घजीह्वीदेवानांयज्ञवाट्॥कद्रुकमण्डल्वोश्छन्दसि।४।१।७१।
ऊङ् स्यात्।कद्रूश्चवै।कमण्डलूः।गुग्गुलुमधुजतुपतयालूनामितिवक्तव्यं॥गुग्गुलूः।मधूः।जतूः।पतयालूः॥अव्ययात्त्यप्।आविष्ट्यस्योपसंख्या
नञ्छन्दसि॥आविष्ट्योवर्द्धते॥छन्दसिठञ्।४।३।१९।वर्षाभ्यःठकोपवादः।स्वरेभेदः।वार्षिकं॥वसन्ताच्च।४।३।२०।ठञ्स्यात्छन्दसि।वासन्तिकं॥
हेमन्ताच्च।४।३।२१।छन्दसिठञ्।हैमन्तिकम्।योगविभागउत्तरार्थः॥शौनकादिभ्यश्छन्दसि।४।३।१०६।णिनि प्रोक्ते।छाणोरपवादः।शौनकेनप्रो
क्तमधीयते शौनकिनः।वाजसनेयिनः।छन्दसिकिम्।शौनकीयाशिक्षा॥द्व्यचश्छन्दसि।४।३।१५०।विकारेवामयट्स्यात्।शरमयम्बर्हिः।यस्यपर्ण
मयीजुहूः॥नोत्वद्वर्ध्रबिल्वात्।४।३।१५१।उत्वान्।उकारवान्।मौञ्जंशिक्यं।वर्ध्रंचर्मतस्यविकारोवार्ध्रीरज्जुः।बैल्वोयूपः।सभायायः॥

षत्वम् तकारस्यष्टु
त्वम् ठकोपवादइति वर्षाभ्यष्ठगितिप्राप्तस्य ननुठकठञोः कोविशेषस्तत्राह स्वरेभेदइति ठञिकृतेञ्नित्यादिर्नित्यमित्याद्युदात्तत्वंठकितुसतिकितइत्यनेनान्तोदात्तत्वं
स्यादितिभावः।वार्षिकमिति ठस्येकः उत्तरार्थइति सर्वत्राग्नत्तलोपश्चेत्येतदर्थः तत्रत्यस्यैवानुवृत्तिर्यथास्यात् वसन्तस्यमाभूत् शौनककाश्यपकौशिकाभ्यामृषिभ्यांणि
निरितिवर्ततेतत्राहणिनिरितिप्रोक्तेइति तेनप्रोक्तमित्यतस्मिन्नर्थे शौनकीयेति वृद्धाच्छः द्व्यचः मयड्वैतयोर्भाषायामित्युक्तेर्वैदिकेऽप्राप्तोविधीयते नोत्वत् उकारवतः प्रातिपदि
काद्वर्ध्रबिल्वशब्दाभ्यांचमयण्नस्यात् द्व्यचश्छंदसीतिप्राप्तः प्रतिषिध्यते मौञ्जमितिमुञ्जशब्दादौत्सर्गिकोण्वार्ध्रीति वर्ध्रशब्दादौत्सर्गिकोण् टिड्ढाणञितिङी ॥

ढश्छन्दसि सप्तम्यन्तात्सभाशब्दात् ढः साध्वर्थे अणादीनां चेति तत्र भव इति प्राप्तानाम् पाथोनदीभ्यां सप्तम्यन्ताभ्यामाभ्यां भवार्थे ड्यण् स्यात् पाथसीति पाथो जलम्
कबंधमुदकं पाथ इत्यमरात् पाथोन्तरिक्षमिति वृत्तिः वेशंतीभ्य इति विशेर्झच् वेशन्तः पल्वलम् तत्र भवा आपः वैशन्त्यः सगर्भसयूथस अर्त्तिगृभ्यां भन् गिरति गीर्यते वा
गर्भः युता भवेत्यस्मिन्निति यूथम् तिथपृष्ठगूथयूथप्रोथा इति थक् ग्रत्ययान्तो निपातितः दीर्घोपि निपातनादेव कर्मधारया इति समानस्य सो गर्भस्य तत्र भव सगर्भ्य

ढश्छन्दसि।४।४।१०६।सभेयो युवा॥ भवे छन्दसि।४।४।११०। सप्तम्यन्ताद्भवार्थे यत्। मेध्याय च विद्युत्याय च। यथायथं शैषिकाणामणादीनामपवादोयं यत्। पक्षेत्तेऽपि भवन्ति। सर्वे विधीनां छन्दसि वैकल्पिकत्वात्। तद्यथा। मुंजवान्नाम पर्वतः। तत्र भवः। मौजवतः। सोमस्येव मौजवतस्य भक्षः। आ चतुर्थसमाप्तेश्छन्दोऽधिकारः॥ पाथोनदीभ्यां ड्यण्।४।४।१११। तमु त्वा पाथ्यो वृषा। च नो दधीत नाद्यो गिरो मे। पाथसि भवः पाथ्यः। नद्यां भवो नाद्यः॥ वेशन्तहिमवद्भ्यामण्।४।४।११२। भवो वैशन्तीभ्यः स्वाहा। हैमवतीभ्यः स्वाहा॥ स्रोतसो विभाषा ड्यड्ड्यौ।४।४।११३। पक्षे यत्। ड्यत्ड्ययोस्तु स्वरे भेदः। स्रोतसि भवः स्रोत्यः। स्रोतस्यः॥ सगर्भसयूथसनुताद्यत्।४।४।११४। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्यः उत वा जिघत्नुः। नुतिर्नुतं नपुंसके भावे क्तः। सगर्भादयस्त्रयोऽपि कर्मधारयाः। समानस्य छन्दसीति सः। ततो भवार्थे यन्। यतोऽपवादः॥ तुग्राद्घन्।४।४।११५। भवे ज्ज्यो। पक्षे यदपि। आवः शमं वृषभं तुग्र्यासु। क्षितिवह्वृचाः। तुग्रिया। क्षितिशाखान्तरे। धनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः॥ अग्राद्यत्।४।४।११६। घच्छौ च।४।४।११७। चाद्यत्। अग्रे भवोऽग्र्यः॥ अग्रियः। अग्रीयः॥ समुद्राभ्राद्घः।४।४।११८। समुद्रिया अप्सरसो मनीषिणा। नानद्रतो अभ्रियस्येव घोषाः॥ बर्हिषि दत्तं।४।४।११९। प्राग्घिताद्यदित्येव। बर्हिष्येषु निधिषु प्रियेषु॥

इति विग्रहः यतोपवाद इति भवे छन्दसीति मासस्य अग्राद्यत्। भवे छन्दसीत्येव सिद्धे घादिभिर्बाधा माभूदिति यद्विधीयते समुद्रा समुंदतीति समुद्रः स्फायितञ्चीति रक् अपो बिभर्तीत्यभ्रम् मूलविभुजादित्वात्कः अभ्रसमुद्रादिति वक्तव्ये समुद्राभ्र इत्युक्तिः पूर्वनिपातस्यानित्यत्वज्ञापनार्था बर्हिषि तत्र भव इति निवृत्तं बर्हिः शब्दाद्दत्तमित्यर्थे

यत्प्रत्ययोभवति·वर्हिष्येषिति·वृंहत्तेर्नलोपश्चेति सप्रत्ययः वर्हिस्तस्मायत्।।ःः।।दूतस्य·दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययःस्यात् भागेत्तस्येर
मित्यणिप्राप्ते वचनम्·कर्मणि च दूतवणिग्भ्यां चेत्युपसंख्यानिकेये·दूत्यमित्यादिद्दूतस्यभागो दूत्यः·वा कर्म दूत्यम् रक्षोयातूनां·षष्ठीवहुवचनांताभ्यां रक्षस्यातुश
ब्दाभ्यांहननीत्यस्मिन्नर्थे यत्स्यात् रक्षोरक्षु निरक्षः कमितनिमनीत्यादिनायातेस्तुन् यातृशब्दोरक्षः शब्दपर्यायः नचविरूपाणामपिसमानामित्येकशेषःस्यादितिवा
च्यम्·वहूर्थाभिधायिस्वरूपवचनेनसूत्रभिन्नार्थत्वात्·रक्षस्येति·हन्यतेनयासाहननीरक्षसी एवंयातव्या·वहुवचनंस्तुतिवैशिष्ट्यज्ञापनाय·वहूनांरक्षसांहननेहि
स्तुतिः प्रतीयतेरेवतीजगती·प्रशंसनंप्रशस्यं·प्रपूर्वाच्छंसुस्तुतावित्यस्माद्भावेक्यप्·तदाह प्रशंसनेइति·रयिरस्यास्तीति रेवती·रयिशब्दान्मतुप्·छन्दसीरइतिवत्व
म् रयेमतौ वहुलमिति संप्रसारणं·उगित्वान्ङीप्·नक्षत्रेगौरादित्वान्ङीष्·जगच्छब्दाद्वर्तमाने इत्यनेन शत्रन्वच्चावादुगितश्चेति ङीप्·हविषेहिताहविष्या।उगवादि

दूतस्यभागकर्म्मणी।४।४।१२०भागोंशः।दूत्यं।।रक्षोयातूनांहननी।४।४।१२१यातेअग्ने रक्षस्यातनूः।।रेवतीजगतीहविष्याभ्यःप्रशस्ये।४।४।१२२
प्रशंसनेयत्स्यात्।रेवत्यादीनाम्प्रशंसने रेवत्यं।जगत्यं।हविष्यं।।असुरस्यस्वम्।४।४।१२३।असुर्य्यन्देवेभिर्धायिविश्वं।।मायायामण्।४।४।१२४आ
सुरीमाया।।तद्वानासामुपधानोमन्त्र इतीष्टकासुलुक्चमतोः ४।४।१२५ वर्चस्वानुपधानोमन्त्र आसामिष्टकानां वर्चस्याः क्रतव्याः॥

त्वाद्यत् तासांप्रशं
सनंहविष्यंयस्येतिलोपः हलोयमांयमीतियलोपः·असुरस्यस्वं·असुरशब्दात्षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्स्यात् असुर्यमिति नसुरोऽसुरः सुरप्रतिपक्षी·अथवा
असेरुरन्·अस्यति·अस्यतेवा असुरः तस्यस्वमसुर्यम्·मायायामण्·मीयतेऽनयेतिमाया असदर्थप्रकाशनशक्तिः माङ औणादिको यः तस्यां वाच्यायामसुरशब्दादण्
स्यात्पूर्वसूत्रापवादः आसुरीति·टिड्ढाणञिति ङीप्·तद्वानासां·मतन्तात्प्रथमासमर्थादासामितिषष्ठ्यर्थे यत्स्यात्·तत्प्रथमासमर्थमुपधानोमंत्रश्चेत्सभवति यत्तदासामितिनि
र्दिष्टमिष्टकाश्चेत्ताः भवन्ति मतोश्च लुक् वर्चस्वानिति वर्चः शब्दोयस्मिन्मंत्रेऽस्तिसवर्चस्वान् कुंभेष्टकोपधानमंत्रः भूतंचस्थभव्यंचस्थ देवस्यवःसवितुःप्रसवइत्यादिकः उ
पधीयतेऽनेनेत्युपधानं चयनंरचनमित्यर्थः क्रतव्याइति·क्रतुशब्दोयस्मिन्मंत्रेऽस्तिसक्रतुमान्·सचमधुश्चमाधवश्चेत्यादिकः क्रतुमानुपधानोमंत्रआसामिष्टकानाम्

पतिः समास एव। एवकार इष्टतोऽवधारणार्थः। अन्यथा हि समासे पतिरेवेति नियमः संभाव्येत ततश्च महाकविनेत्यादिप्रयोगो न सिध्येत। अनल्विधौ धात्वादेरित्यादिज्ञा
पकानुसरणात्प्रतिपत्तिगौरवं स्यादिति भावः। पत्येत्यादि। नन्वेवं शेषो घ्यसखिपतीत्येवोच्यतां किमनेन पतिः समास एवेति सूत्रेणेति चेन्न। समुदायस्य पतिरूपता
भावेन बहुच्पूर्वकपतिशब्दस्यापि घिसंज्ञा स्यात्ततश्च सुसखिनेत्यादिवद्बहुपतिनेत्यादि प्रसज्येत इष्यते तु बहुपत्येत्यादि। नापि सखिपती समास एवेत्येव सूत्र्यतां
मिति शंक्यं। बहुपत्येत्यादिवद्बहुसख्येत्याद्यापत्तेः इष्यते तु बहुसखिनेत्यादि। अथ कथं सीतायाः पतये नम इति नष्टे मृते प्रव्रजिते क्लीबे च पतिते पताविति पराश
रश्च। अत्राहुः। पतिरित्याख्यातः पतिस्तत्करोति तदाचष्ट इति णिचि टिलोपे अच इरित्यौणादिक इप्रत्यये णेरनिटीति णिलोपे च निष्पन्नोऽयं पतिशब्दः पतिः समास एवे
त्यत्र न गृह्यते लाक्षणिकत्वात् इति। एतेन कृष्णस्स सखिरर्जुन इति भारतं सखिना वानरेन्द्रेणेति रामायणं च व्याख्यातं। कतिशब्द इति। का संख्या येषां ते कति। किमः

पतिः समास एव।१।४।८। पतिशब्दः समास एव घिसंज्ञः। पत्या। पत्ये। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु। भूपतिना। भूपतये। कतिशब्दो नित्यं ब
हुवचनान्तः। बहुगणवतुडति संख्या।१।१।२३। एते संख्यासंज्ञास्स्युः। डति च।१।१।२५। डत्यन्ता संख्या षट्संज्ञा स्यात्। प्रत्ययस्य लुक्श्लुलुपः।१।१।६१
लुक्श्लुलुप् एतैश्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्॥१९ संख्यापरिमाणे डति चेति डतो डित्वाट्टिलोपः। बहुगणवतु। बहुगणौ प्रातिपदिके

संख्यावाचके गृह्येते न तु संघे वैपुल्यवाचके अपि संख्यायते अनयेत्यन्वर्थसंज्ञाविज्ञानात्। अत एव डतिरपि किमः संख्यापरिमाणे डति चेति विहितस्तद्धित एव गृ
ह्यते वतुसाहचर्याच्च न तु पातेर्डतिः यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदंतग्रहणं नास्ति तथापीह वतुडत्योः केवलयोः संज्ञाविधौ फलाभावादन्वर्थताबलाच्च तदंत
योरेव संज्ञा प्रवर्तते सा च एवं धनिर्देशस्तु ब्राह्मणा बहवः सन्तीत्यादावतिप्रसंगशंकां निराकर्तुमित्याहुः। न चैवं संख्याकार्येषु कृत्वसुजादिषु कृत्रिमसंख्याया एव ग्र
हणं स्यात् न त्वकृत्रिमाया इति पंचकृत्व इत्यादि न सिध्येत्। कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययात् इति वाच्यं। संख्याया अतिशदंतायाः कन्नित्यत्रातिशदंतप
र्युदासबलेन संख्याकार्येषु कृत्रिमाकृत्रिमन्यायाप्रवृत्तेः। नन्वेवं भूरिशब्दात्कृत्वसुच्प्रत्यय इति चेत् अत्राहुः। अनियतसंख्यावाचिनां चेत्संख्याकार्यं स्यान्न तर्हि बहु
गणयोरेवेत्येवंभूतनियमफलकसंख्याविज्ञानान्नास्त्यतिप्रसंग इति। डति च। ष्णांता षडित्यतः षडित्य नुवर्तते। संख्येति च प्रकृतं डतीत्यनेन विशेष्यते तदाह।

मतुब्विहितस्तस्मिन्नर्थे प्रथमान्तात्स्यात्॰ मासतन्वोरभिधेययोः॰ ननु प्रथमासमर्थमितिकस्माद्गतमितिचेन्मत्वर्थग्रहणादित्यवेहि॰ हृषिचमितनिभनिसर्जिखर्जिभ्य उरिति उकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः॰ ननुभृमृशीङ्॰ तृचरित्सरितनिभनिमिमस्जिभ्य उरित्युकारान्तः द्वन्द्वे घिरिति पूर्वनिपातप्रसंगात्॥ ॥ ओजस्य इति॰ ओजोयस्यास्यास्तीत्योजस्या॰ मधोः मधुशब्दान्मत्वर्थे ञः स्याच्चाच्यत्॰ मधव्या इति॰ ओर्गुणः वान्तोयीति अवादेशः॰ ओजसोह॰ ओजःशब्दान्मत्वर्थे यत्खौ स्तोऽहन्यभिधेये॰ ननु यद्ग्रहणं व्यर्थम्॰ खश्चेत्येवास्त्विति चेन्नैवम्॰ खश्चेत्युच्यमानेनन्तरसूत्रविहितस्यञमात्रस्य समुच्चयो विज्ञायेत तस्माद्यद्ग्रहणम्॰ वेशोयश॰ वेशश्च

ओजस्यातनूः॥ मधोर्ञ्च॥४।४।१२९॥ माधवः। मधव्यः। ओजसोऽहनियत्खौ॥४।४।१३०॥ ओजस्यमहः। ओजसीनं वा॥ वेशोयशआदेर्भगाद्यल्खौ॥४।४।१३१॥१३२॥ यथासंख्यं नेष्यते। वेशोबलं तद्देव भग इति कर्मधारयः। वेशोभग्यः। वेशोभगीनः। यशोभग्यः। यशोभगीनः॥ ख च॥ कृतमिनियौ च॥४।४।१३३॥ गम्भीरेभिः पथिभिः पूर्विणोभिः॥ येतेपन्थाः सवितः पूर्व्यासः॥ अद्भिः संस्कृतम्॥४।४।१३४॥ यस्येदमप्स्यं हविः॥ सहस्रेण सम्मितौ घः॥४।४।१३५॥ सहस्रियासोऽपांनोर्म्मयः सहस्रेण तुल्या इत्यर्थः॥ मतौ च॥४।४।१३६॥ सहस्रशब्दान्मत्वर्थे घः स्यात्। सहस्रमस्यास्तीति सहस्रियः॥ सोममर्हतियः॥४।४।१३७॥ सोम्यो ब्राह्मणः। यज्ञार्ह इत्यर्थः॥ मये च॥४।४।१३८॥ सोमशब्दाद्यः स्यान्मयडर्थे॥ सोम्यं मधु॥ सोममयमित्यर्थः॥

पशश्चवेशोयशसी ते आदेौ यस्य तस्माद्वेशोयशआदेर्भगात्प्रातिपदिकाद्यत्खौ स्तो मत्वर्थे॰ लकारः स्वरार्थः॰ पूर्विणोभिरिति॰ पूर्वैः कृताः पूर्विणाः॰ ते एव पूर्व्यासः॰ पूर्वीणः॰ अद्भिः तृतीयान्ताद्प् शब्दात्संस्कृतमित्यर्थे यत्स्यात्॰ सहस्रेण तृतीयान्तात्सहस्रशब्दात्संमितमित्येतस्मिन्नर्थे घः स्यात्॰ संमितः सदृशस्तुल्य इत्यर्थः॰ सहस्रिया इति॰ सहस्रेण संमिताः सहस्रियाः॰ यस्येति चेत्यकारलोपः॰ संमिताविति पाठान्तरम्॰ मतौ॰ तपःसहस्राभ्यां विनीनावित्यस्यापवादः॰ सोममर्हेति॰ द्वितीयान्तात्सोमशब्दादर्हतीत्यस्मिन्नर्थे यः स्यात्॰ सोम्य इति॰ सोममर्हतीति सोम्यः॰ मये च॰ आगतविकारावयवप्रकृतामयडर्थाः॰ तत्रागते पंचमी समर्थविभक्तिः॰ विकारावयवयोः षष्ठी प्रकृतवचने प्रथमा॰

व्याः तद्वानिति किम् · मंत्रादेव समुदायान्मा भूदिति काशिका अत्र हरदत्तः नतु तद्वानित्यस्मिन्नसति समर्थानां प्रथमाद्वेति वचनादासामिति प्रथमानिर्दिष्टत्वात्षष्ठ्यन्तादिष्टका
मिधायिनः उपधानमंत्रे प्रत्ययः स्यादिति वाक्यार्थः स्यात् तथाच समुदायान्न प्राप्नोतीति चेत्सत्यम् आसामिति प्रथमं न करिष्यत इति मत्वा प्रश्नप्रतिवचने गतश्चोपधानो मंत्रश्चा
सामिष्टकासु लुक् मतोरिति योगः करिष्यते तथाच तद्वानित्यस्याभावे भूतं चस्य भव्यं चस्येत्ययमुपधानो मंत्र आसामिष्टकानामिति वाक्यं स्यात् तथाचेति नापरामृष्टान्मंत्र
समुदायादेव प्रत्ययः प्राप्नोतीति भावः उपधान इति किम् · वर्चस्वदभिमंत्रणमासामित्यत्र मा भूत् · शिवेन मा चक्षुषेत्यनुवाकः कुंभेष्टकाभिमंत्रणे विनियुक्तः मंत्र इति किम् · अंगु
लिमानुपधानो हस्त आसामित्यत्र मा भूत् · इष्टकास्विति किम् वर्चस्वानुपधान आसां शर्कराणामित्यत्र मा भूत् · इतिकरणं नियमार्थम् अनेकपदसंभवे केनचिदेव पदेन तद्वान्मं
त्रो गृह्यते न सर्वेण मतुपग्रहणमुत्तरार्थम् · अश्विमानित्यत्र मतुप एव लुक् यथा स्यात् इनेर्मा भूत् इह तु मत्वंतात्प्रत्ययविधानात्तस्यैव लुक् भविष्यति ॥ः॥ अश्विमान् · अश्वि

अश्विमानण्।४।४।१२६। आश्विनीरुपदधाति॥ वयस्यासु मूर्ध्नो मतुप्।४।४।१२७ तद्वानासामिति सूत्रं सर्वमनुवर्तते मतोरिति पदमावर्त्य पञ्चम्य
न्तो बोध्यम्। मतुवन्तो यो मूर्द्धशब्दस्ततो मतुप् स्यात् प्रथमस्य मतोर्लुक् च। वयश्शब्दवन्मन्त्रोपधेयास्विष्टकासु। यस्मिन्मन्त्रे मूर्द्धवयःशब्दौ स्तस्तेनोप
धेयासु। मूर्द्धन्वतीरुपदधातीति प्रयोगः॥ मत्वर्थे मासतन्वोः।४।४।१२८ नभोऽभ्रातदस्मिन्नस्तीति नभस्यो मासः॥ ॥ ० ॥ ॥

शब्दो यस्मिन्मंत्रेऽस्ति सोऽश्विमान्मंत्रः सच अश्वत्त्रिक्षितिरित्यादिकः प्रथमान्तादश्विमच्छब्दादासामिति षष्ठ्यर्थे अण् स्यात् · यत्प्रथमानिर्दिष्टमुपधानो मंत्रश्चेत्स भवति ·
यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवंति मतोश्च लुक् आश्विनीरुपदधातीति · अश्वशब्दादत इनिठनावित्यस्त्यर्थे इनिः तदन्तान्मतुप् · अश्विमान्स उपधानो मंत्रश्चा
सामिष्टकानामिति विग्रहवाक्यानि विहिते मतोश्च लुक् क्रियते इनण्यनपत्य इति प्रकृतिभावः वयस्यासु · वयस्वानुपधानो मंत्र आसामिष्टकानां ता वयस्यास्तास्वभिधे
यासु प्रथमासमर्थान्मतुवन्तमूर्द्धशब्दादासामिति षष्ठ्यर्थे मतुप् स्यात् · यत्प्रथमानिर्दिष्टमुपधानो मंत्रश्चेत्स भवति · यदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवंति · य
स्मिन्मंत्रे मूर्द्धशब्दो वयःशब्दश्च विद्यते · स मूर्द्धवान् वयस्वान् · यथा मूर्द्धा वयः प्रजापतिश्छंद इति तत्र वयस्वच्छब्दादिव मूर्द्धवच्छब्दादपि पूर्वेणापतिप्राप्ते मतुब्वि
धीयते इत्याशयेनाह यस्मिन्मंत्र इति · मूर्द्धन्वतीरिति अनोनुडिति नुडागमः मूर्द्धन्वान् इति वक्तव्ये भाविनं मतुपं लुकं चेतसि कृत्वा मूर्द्ध इत्युक्तं ·।मत्वर्थे ·।यस्मिन्नर्थे

सादन्यमिति सदनं गृहमर्हतीति सादन्यः अन्येषामपीति दीर्घः विदथ्यमिति विदथो यज्ञस्तमर्हतीत्यर्थः इद्वत्सरीय इति इद्वत्सरेण निर्वृत्तः इद्वत्सरमधीष्टो भृतो भूतो भावी वा इद्वत्सरीयः इद्वत्सर इदावत्सरश्च द्वौ पञ्चवर्षे युगे द्वयोर्विषयोः संज्ञे एवं संवत्सरपरिवत्सरशब्दावपि सम्परिपूर्वौ सम्परिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः स्याच्चाच्छः छन्दसि घस् समयस्तदस्य प्राप्तमित्यतस्तदस्य प्राप्तमिति ऋतोरणित्यतः ऋतोरिति चानुवर्त्तते तदाह ऋतुशब्दादित्यादि ऋत्वियइति सितिचेति पदत्वेन भत्वे निरस्ते ओर्गुण इति गुणाभावे यण् उपसर्गात् इह धातुशब्देन धातुवाच्या क्रिया लक्ष्यते स्वार्थः प्रयोजनं यस्य साधनस्य तस्मिन्वर्त्तमानादित्यर्थे

सादन्यं विदथ्यम्॥ वत्सरान्ताच्छश्छन्दसि ५।१।९१ निर्वृत्तादिष्वर्थेषु। इद्वत्सरीयः। सम्परिपूर्वात्ख च ५।१।९२ चाच्छः। सम्वत्सरीणः। सम्वत्सरीयः। परिवत्सरीणः। परीवत्सरीयः॥ छन्दसि घस् ५।१।१०६ ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे। भागऋत्वियः। उपसर्गाच्छन्दसि धात्वर्थे ५।१।११८ धात्वर्थविशिष्टे साधने वर्त्तमानात्स्वार्थे वतिः स्यात्। यदुद्वतो निवतः। उद्गतान्निर्गतानित्यर्थः॥ थट् च छन्दसि ५।२।५० नान्तादसंख्यादेः परस्य डटः थट् स्यान्मट् च। पञ्चथम्। पञ्चमम्॥ छन्दसि परिपन्थिपरिपरिणौ पर्य्यवस्थातरि ५।२।८९ अपत्यम्परिपन्थिनम्। मा त्वा परिपरिणो विदन्॥ बहुलं छन्दसि ५।२।१२२ मत्वर्थे विनिः स्यात्। अग्रावी छन्दो विन्प्रकरणेष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्। इति दीर्घः। मंहिष्ठमुभयावि नं शुनमष्टाव्यचरत्॥ छन्दसीवनिपौ च वक्तव्यौ॥ इ रथीरभूत्। सुमङ्गलीरियं वधूः। मघवानमीमहे॥ सत्राह धात्वर्थविशिष्ट इति उपसर्गा अपुनरेव मात्मकाः यद्युत्तश्रुतायां क्रियायां तामेव विशिंषन्ति यथा आगच्छति यत्र तु न श्रूयते तत्र क्रियाविशिष्टसाधनमाहुः यथा निष्कौशाम्बिः यथा वा तत्र क्रियापदं न श्रूयते तत्रैव यथा स्यादित्येवमर्थं धात्वर्थ इत्युक्तम् थट् च तस्य श्रवणे इत्यतः डडिति नान्तादसंख्यादेरिति च तदाह नान्तादित्यादि पञ्चथमिति पञ्चानां पूरणमित्यस्मिन्नर्थे डटि कृते तस्य थडागमः छन्दसि परिपन्थिन् परिपरिन् एतौ निपात्येते छन्दसि पर्य्यवस्थातरि वाच्ये पर्यवस्थाता प्रतिपक्षः सपत्न इत्युच्यते निपातनं चात्र पर्यवस्थातृशब्दात्स्वार्थे इति प्रत्ययोऽवस्थानशब्दस्य पन्थि परि एतावादेशौ च निपात्येते बहुलम्॥ ॥अस्मायामेधास्रजो विनिरिति वर्त्तते तदाह विनिः स्यादिति अष्टावीती अष्टोःघ्नन् अ

मघोर्यः स्यादिति वृत्तिकारस्तु अदेवानुवर्त्तयति नतु यं नक्षत्रात् स्वार्थ इति समूह इति नानुवर्त्तते तेनाऽनिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय उत्पद्यत इत्यर्थः सर्वदेवात् सर्वश ब्दाद्देवशब्दाच्च तातिल् स्यात् शिवशम करशब्दसामानाधिकरण्यात् शिवशमरिष्टस्येत्युभयप्राप्तौ कर्मणीति षष्ठी॥ ॥इति वैदिकस्तु चतुर्थोध्यायः॥ सप्तनोञ् स प्तन्शब्दादञ्स्याच्छन्दसि साप्तानीति सप्तन्शब्दादञि नस्तद्धित इति टिलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां जस् जश्शसोः शिः नपुंसकस्येति नुम् उपधादीर्घः शन्शतोः डिनिः शन्शतान्ताद्डिनिः स्यात् टिलोपार्थम् पञ्चदशिन इति पञ्चदशाहानि परिमाणमेषामिति डिनिः टिलोपः एतेन त्रिंशिनो व्याख्याताः विंशिनोऽङ्गिरस इति। विंशतिर्गोत्राणि परि

मधोः॥४।४।१२९। मधुशब्दान्मयडर्थे यत्स्यात्। मधव्यः। मधुमय इत्यर्थः॥ वसोः समूहे च॥४।४।१४०॥ चान्मयडर्थे यत्। वसव्यः। अक्षरसमूहे छन्दस उपसंख्यानम्॥ छन्दःशब्दादक्षरसमूहे वर्त्तमानात्स्वार्थे यदित्यर्थः। आश्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं येयजामह इति पञ्चाक्षरं यजेति द्व्यक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशाक्षरश्छन्दस्यः॥ नक्षत्राद्घः॥४।४।१४१। स्वार्थे। नक्षत्रियेभ्यः स्वाहा॥ सर्वदेवात्तातिल्॥४।४।१४२। स्वार्थे। सविता नः सुवतु सर्वतातिं। प्रदक्षिणिद्देवतातिमुराणः॥ शिवशमरिष्टस्य करे॥४।४।१४३। करोतीति करः। पचाद्यच्। शिवङ्करोतीति शिवतातिः याभिः शन्ताती भवथो ददाशुषे। अथो अरिष्टतातये॥ भावे च॥४।४।१४४। शिवादिभ्यो भावे तातिः स्याच्छन्दसि। शिवस्य भावः शिवतातिः। शन्तातिः। अरिष्टतातिः॥ इति चतुर्थोध्यायः॥ सप्तनोञ्छन्दसि॥५।१।६१। तदस्य परिमाणमिति वर्ग इति च। सप्त साप्तानि असृजत। शन्शतोर्डिनिश्छन्दसि। तदस्य परिमाणमित्यर्थे वाच्यः॥ पञ्चदशिनोऽर्द्धमासाः। त्रिंशिनो मासाः। विंशतेश्चेति वाच्यं॥ विंशिनोऽङ्गिरसः। युष्मदस्मदोः सादृश्ये वतुब्वाच्यः। त्वावतः पुरूवसो। नत्वावाँ अन्यः। यज्ञं विप्रस्य मावतः॥ छन्दसि च॥५।१।६७। प्रातिपदिकमात्रात्तदर्हतीति यत्॥ माणमेषामिति विग्रहे डिनि कृते विंशतेर्डिति तीतिति शब्दलोपे कृते यस्येति लोपः अंगिरसः। अयास्यगार्ग्यगौतम इत्यादि प्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः त्वाव त् इति त्वमिव त्वावान् तस्य त्वावतः अहमिव इति मावान् तस्य मावतः प्रत्ययोत्तरपदयोश्चेति त्व मादेशौ आ सर्वनाम्न इत्यात्वम्॥

 ॥

स्याव्ययत्वेसुपोलुक् अत्रोदिकरणमिच एकाचोऽप्रत्ययवच्चेत्यत्रास्यग्रहणंमाभूत् यदिस्यात्तर्हि अत्रापियदृष्टंकार्यंतदप्यतिदिश्येत तत्रकोदोषः इह स्वि
धंमन्यमानः यस्येतिलोपः प्राप्नोति॥ ॥अनसन्तात् अन्नन्तस्योदाहरणमाह ब्रह्मसाममिति असन्तस्याह देवछंदसानीति बहुप्रजाःबहुप्रजाइति निपात्यते
छन्दसिबहुप्रजाइतियह्वःप्रजायस्येतिबहुव्रीहिः असिच्प्रत्ययःयस्येतिचेत्यकारलोपःअत्वसंतस्येतिदीर्घःरुत्वविसर्गौ छंदसिच वयसिदंतस्यदतृइत्यतोदंत
स्यदतृइत्यनुवर्ततेतदाह दन्तस्यदतृस्यादिति उभयतोदतइति उभयतोदन्तायस्येतिविग्रहःहतमाताइति नद्यृतश्चेतिनित्यंकप्प्राप्तः इतिसुं न्यांपंचमोऽध्यायः
जागारेतिजागृनिद्राक्षये लिटिप्रथमपुरुषेकवचनम् दातीतिडुदाञ्दाने लट्शपःश्लुःश्लाविति नित्यद्वित्वेप्राप्तेविकल्पः ततृजानइति तुजेर्लिटस्कानजा

अनसन्तान्नपुंसकाच्छन्दसि।५।४।१०३ तत्पुरुषाट्टच्स्यात्समासान्तः।ब्रह्मसामम्भवति देवछन्दसानि॥बहुप्रजाश्छन्दसि५।४।१२३।बहुप्रजा
निर्ऋतिमाविवेश॥छन्दसिच।५।४।१४२।दन्तस्यदतृस्याद्बहुव्रीहौ।उभयतोदतःप्रतिगृह्णाति ॥ऋतश्छन्दसि।५।४।१५८।ऋदन्ताद्बहुव्रीहेर्न्नकप्।
हतामातायस्यहतमाता॥ ॥इतिपञ्चमोध्यायः॥ ॥एकाचोद्वेछन्दसिवेतिवक्तव्यम्।योजागारदातिप्रियाणि॥तुजादीनान्दीर्घोऽभ्यासस्य।६।१।
७तुजादिराकृतिगणः।प्रभरातूतुजानः।सूर्य्यंमामहानंदाधारयःपृथिवीम्।सतूताव॥बहुलञ्छन्दसि।६।१।३४।ह्वःसम्प्रसारणंस्यात्।इन्द्रमाहु
वहूतये॥ऋचित्रेरुत्तरपदादिलोपश्चछन्दसि॥ऋत्वशब्देपरेत्रेः सम्प्रसारणमुत्तरपदादेर्लोपश्चेतिवक्तव्यम॥तृचंसूक्तं।छंदसिकिमात्र्यृचा
नि॥रयेर्म्मतौबहुलम्॥रेवान्।रयिमान्पुष्टिवर्द्धनः॥ देवाः मामहानमिति महपूजायांकानच् तूताववेति तुःसौत्रोधातुःतस्माल्लिट् बहुलंछन्दसिहूः
संप्रसारणमितिवर्त्ततेतदाहहुःसंप्रसारणंस्यादिति आहुवेइति आङ्पूर्वात् ह्वेञोलडात्मनेपदोत्तमैकवचनम् बहुलंछंदसीतिशपोलुकिकृतेसंप्रसारण
मुवङादेशश्च तृचंसूक्तमिति तिस्रःऋचोयस्मिन्तत्तृचंऋक्पूरब्धूःपथामानक्षेइतिसमासान्तोऽः रयेर्मतौ रयिशब्दस्यमतौपरतःसम्प्रसारणंस्याच्छन्द
सि रेवानिति छन्दसीरइतिवत्वम् रयिमानिति बहुलग्रहणात्संप्रसारणवत्वयोरभावः ॥ ६ ॥ ॥ ॥

इतिप्रत्ययोऽवस्थाने...

श्चार्दश्चापर्यायोऽयम् मेखलावी द्वयावी उभयावी रुजावी हृदयावी अत्र द्वयोभयहृदयान्यवदीर्घत्वं प्रयोजयंति अन्येषां तत एव दीर्घत्वात् छंदसी ईश्च वनिप् च ईवनि
पौ ई इति ईप्रत्ययस्योदाहरणमुच्यते रथीरिति रथोस्यास्तीति रथी सुमंगलीरिति सुष्ठु मङ्गलमिति सुः पूजायामिति समासः ततोऽनेन मत्वर्थीय ईकारप्रत्ययः
मघवानिति मघं धनं तदस्यास्तीति वनिपि मतुपि मघवच्छब्दः॥ ॐ ॥ तयोः तच्छब्देन इदमोर्हिल् तदोदा चेति सन्निहिताविदंतदौ परामृश्येते तेन तदाह इदन्तो
रिति सूत्रे व्यत्ययेन पञ्चम्याः स्थाने षष्ठी यथासंख्यं स्त इति इदम्शब्दात् दा तच्छब्दात् हिल् इदा इति इदंशब्दाद्दा इदमर् इश इत्यनेनेशादेशः थाहेतौ प्रकारव
चनेथालित्यतः प्रकारवचन इति किमश्चेति तदाह किमस्थास्यादित्यादि कथायामं न पृच्छसीति केन हेतुना न पृच्छसीत्यर्थः। तस्यप्राग्दिशो विभक्तिरित्यधिकारे

तयोर्दार्हिलौ च छन्दसि ५।३।२०। इदन्तदोर्यथासंख्यं स्तः। इदा हि व उपस्तुतिम्। तर्हि॥ थाहेतौ च छन्दसि ५।३।२६। किमस्थास्याद्धेतौ प्रकारे
च। कथा ग्रामं न पृच्छसि। कथा दाशेम॥ पश्चपश्चा च छन्दसि ५।३।३३। अवरस्य अस्तात्यर्थे निपातौ। पश्च हिंसः। नोत पश्चा॥ तुश्छन्दसि ५।३।
५९। तृजन्तात् तृन्नन्ताच्च इष्ठन्नीयसुनौ स्तः। आसुतिं करिष्ठः। दोहीयसी धेनुः॥ प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ५।३।१११। इवार्थे। प्रत्नथा
पूर्वथा विश्वथेमथा॥ अमु च छन्दसि ५।४।१२। किमेत्तिङव्ययघादित्येव। प्रतं नय प्रतरम्॥ वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि ५।४।
४१। स्वार्थे। यो नो दूरे वो वृकतिः। ज्येष्ठतातिं बर्हिषदम्॥ विभक्तिसंज्ञायां किमः क इति कादेशः प्रकारवचने उदाहरणमाह कथा दाशेमेति केन प्रकारेणे
त्यर्थः। पश्च पश्चा॥ अवरस्य पश्चभावः अकाराकारौ च प्रत्ययौ निपात्येते अस्तात्यर्थे इति दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः करिष्ठ इति
कर्तृशब्दादिष्ठन् तुरिष्ठेमेयःस्विति तृलोपः॥ दोहीयसीति अतिशयेन दोग्ध्रीत्यर्थः। लिंगविशिष्टपरिभाषया दोग्ध्रीशब्दात्प्रत्ययः भस्याढे इति पुंवद्भावेन ङी
पो निवृत्तिः। ततस्तुरिष्ठेमेयःस्विति तृचि निवृत्ते निमित्ताभावाद् उत्वकुत्वयोरपि निवृत्तिः प्रत्नपूर्व प्रत्नपूर्वविश्वइमएभ्यः स्यात् त्स्यात् अमु च किमेत्तिङव्य
यघात् इत्यप्रकर्षवर्त्तमानादमुप्रत्ययो भवति प्रतरामिति प्रकर्षार्थस्य प्रकर्षे तरप् प्रकृष्टतर इतिवत् तदंतादमुः स्वरादिषु अम् आम् इति पठ्यते तेन तदन्त

मानुषीरिति प्रथमाबहुवचनम् मनोर्ज्ञाताबन्यतोषुक्चेति अञ् मनोःषुगागमः सूत्रद्वये इति अमि पूर्वः संप्रसारणाच्चेत्यत्र वाक्यभेदेनेति अकः अमि पूर्वरूपं वा स्याच्छंदसि तथा संप्रसारणाच्चेति पूर्वरूपं वा स्याच्छंदसि तदाह तेनेति शम्यस्त्रेति विकल्पविधानसामर्थ्यात्पूर्वरूपत्वाभावे पूर्वसवर्णदीर्घोपि न भवति तयोरत्र विशेषाभावादिति यणादेश एव भवति यज्यमान इति यजेर्लटः शानच् सार्वधातुके तियक् आने मुगिति मुक् यजि ज्येति संप्रसारणं पूर्वरूपस्य वैकल्पिकत्वात्तदभावे यण् या ते इति यानीत्यर्थः यच्छब्दात्परस्य शेर्लोपे कृते प्रत्ययलक्षणेन त्यदादीनाम इति अत्वे नपुंसकस्य झलच इति नुम् सर्वनामस्थाने चेति दीर्घः नलोपः ताता इति तानि तानीत्यर्थः पूर्ववत् भय्यप्रवय्ये विभेतेः प्रपूर्वस्य वी इत्येतस्य च यति प्रत्यये परतश्छन्दसि विषये यादेशो निपात्यते भय्य इति कृत्यल्युट इति अपादाने यत् हृदय्या इति अकार

मानुषीरीळते विशः। उत्तरसूत्रद्वयेऽपीदं वाक्यभेदेन सम्बध्यते। तेन। अमि पूर्वत्वं वा स्यात्। शमीम्त्वा। शम्यन्त्वा। सूर्यं सूर्मिं च। सम्प्रसारणाच्चेति पूर्वरूपमपि वा। इज्यमानः। यज्यमानः॥ शेश्छन्दसि बहुलम्। ६।१।७०॥ लोपः स्यात्। या ते गात्राणाम्। ताता पिण्डानाम्॥ एमन्नादिषु छन्दसि पररूपं वक्तव्यम्॥ अपां त्वेमन्। अपां त्वोद्मन्॥ भय्यप्रवय्ये च छन्दसि। ६।१।८३॥ बिभेत्यस्मादिति भय्यः। वेतेः प्रवय्या इति स्त्रियामेव निपातनम्। प्रवेयमित्यन्यत्र। छन्दसि किम्। भेयम्। प्रवेयम्॥ हृदय्या उपसंख्यानम्॥ हृदे भवा हृदय्या आपः॥ भवे छन्दसि यत्॥ प्रकृत्यान्तःपादमव्यपरे। ६।१।११५। ऋक्पादमध्यस्य एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारे। उपप्रयन्तो अध्वरम्। सुजाते अश्वसूनृते। अन्तःपादमिति किम्। एता एते चेन्ति। अव्यपरे किम्। तेऽवदन्॥

स्यायादेशः प्रकृत्या॥ पादस्य मध्ये इत्यन्तःपादमित्यव्ययीभावः अन्तरित्यव्ययमधिकरणशक्तिप्रधानं मध्यमा चष्टे पादश्चेह ऋक्पाद एव गृह्यते न श्लोकस्य वा छंदसीत्यतो मंडूकप्लुत्या छंदसीति वर्त्तते तेनास्य वैदिकत्वं संपद्यत इत्याशयेनाह ऋक्पादमध्यस्य इति एङः परांतादतीति सूत्रादेङ इति पंचम्यन्तमनुवृत्तं प्रथमया विपरिणम्यते अन्यस्य कार्यित्वाऽसम्भवात् इत्यभिप्रेत्याह एङ् प्रकृत्येति संधिरूपं विकारं न यातीत्यर्थः उपप्रयन्तो अध्वरमिति एङः परांतादतीति प्राप्तम् अंतःपादं किमिति ऋचीत्येव किं नोक्तमित्यर्थः॥ एते चेतीति कपामतीकृत एता स एते चेति सुप्त्वद्वणो वरूपा इति

चायः की चायते र्वहुलं की त्ययमादेशः स्याच्छंदसि चिक्युरिति कुहो श्चुरिति चुः निचाय्येति वा हस्रज्ञानि शामनयोः अस्मात्क्वा गतिसमासे समासेनञ्पूर्वे क्त्वो ल्यपि तिल्यबादे
शः स्पर्धे लेड्व्याथामिति द्विर्वचनं रेफस्य संप्रसारणमकारलोपश्च निपातनात् अस्पर्धेथामिति भाषायाम् अपरे तु अपस्पर्धेस्य स्पर्धेर्लेङ्व्याथामि संप्रसारणमलोप
श्च निपातनात् बहुलं छंदस्यमाङ्योगेपीत्यडागमाभावः तन्मते प्रत्युदाहरणमपास्पर्धेथामिति भाषायाम् अर्चेर्तर्हेश्चेति संप्रसारणमलोपश्च निपातनात् ततो द्विर्वचनमु
रदत्वमतश्चादेरिति दीर्घत्वम् तस्मान्नुड्द्विहल इति नुडागमः आनर्चुरानर्हुरिति भाषायाम् चुच्युडो लिटीति अभ्यासस्य संप्रसारणमनिट्त्वं च निपातनात् चुच्युविषेति
भाषायामत्यजेर्णलीति त्यजवयोर्हानो अभ्यासस्य संप्रसारणं निपात्यते तत्याजेति भाषायाम् श्रातारिति श्रीञ्पाके इत्यस्य निष्ठायां श्राभावः श्रिताइति तस्यैव श्रीण

चायः की। ६।१।३५। नाभ्यस्त्विक्युः। निचिक्युरन्यं। लिटिउसि रूपं। बहुलग्रहणानुवृत्तेर्नेह। अग्निज्योतिर्निचाय्य। अपस्पृधेथामानृचुरानृहुश्चि
च्युषेतित्याजश्राताश्रितमाशीराशीर्त्ताः। ६।१।३६। एते छंदसि निपात्यन्ते। इन्द्रश्च विष्णो यदपस्पृधेथाम्। स्पर्द्धेर्लङि आथाम्। अर्कमानृचुः। वसू
न्यानृहुः। अर्चेर्हेश्च लिट्युसि। चिच्युषे। च्युङो लिटि थासि। यस्तित्याज। त्यजेर्णलि। श्राता स्त इन्द्रसोमाः श्रिता नो ग्रहाः। श्रीञ् पाको निष्ठायाम्। ना
शीरं दुदुह्रे। मध्यतश्चाशीर्त्तः। श्रीञ एव क्विपि निष्ठायां च॥ खिदेश्छंदसि। ६।१।५२। खिदं दैन्ये। अस्यैव आस्यात्। चिखाद। चिखेदेत्यर्थः॥ शीर्षश्छं
दसि। ६।१।६०। शिरःशब्दस्य शीर्षन् स्यात्। शीर्ष्णो जगतः॥ वा छन्दसि। ६।१।१०६। दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात्। वाराही। वाराह्यौ॥

तेहस्त्वं च आशिरमिति आङ्पूर्वस्य श्रीणातेः क्विप् धातोः शिर आदेशः तस्माद्द्वितीयैकवचनम् अशीर्त्त इति श्रिञः आङ्पूर्वस्य शिर इत्यादेशः निष्ठायाश्च नत्वाभा
वो निपातनान्न हलि चेति दीर्घः खिदेश्छन्दसि आदेच उपदेशे इत्यतः आदिति एजिति च वर्त्तते विभाषा लीयतेरित्यतो विभाषेति च तदाह आदस्यादिति चखादेति व्यत्यये
न परस्मैपदम् शीर्ष्ण इति अल्लोपोन इत्यल्लोपः रषाभ्यामिति णत्वम् पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अट्कुप्वाङित्यनेन वा छंदसिनादिचि दीर्घाज्जसि चेति च
वर्त्तते तदाह दीर्घादित्यादि वाराही इति वराहस्य विकार इति अवयवे च प्राण्योषधिवृक्षेभ्य इति मा शार्ङ्गजतादिभ्योऽञ् ङीप् द्विवचने पूर्वसवर्णदीर्घः पूर्वसवर्णाभावे यणादे

नातच्छेन इति शब्दार्थमाचष्टे तस्याग शब्दस्य आदिस्तदादिस्तद्रूपोयअकारस्तस्मिन् परे पूर्वो यएङ्‌ सइत्यर्थः नन्वत्र चकारः किमर्थ इति चेच्छृणु असति चकारेऽगश
ब्दस्यैवेङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात्तत्र श्वागे अंगे इत्यत्रैव स्यात् अंगे अदीव्यदित्यत्र न स्यात् सति तु तस्मिन्नगशब्दस्य यएङ् यत्र कुत्र चिदति प्रकृत्या
भवति तदादौ चाति परतो यः कश्चिदेङ् स प्रकृत्या भवतीत्ययमर्थो भवति तेन अंगे अंगे अदीव्यत् प्राणो अंगे इत्युभयत्रापि भवति॥ ॥अनुदात्ते च कुधपरे कु धौ परौ यस्मा
त्तत्र यो ज्ञः कवर्गधकारे इति धकारे अकार उच्चारणार्थः अग्निरिति अग्निशब्दो अंगेर्निर्नलोपश्चेति निप्रत्ययान्तोऽन्तोदात्तः अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदात्त आद्युदा
त्त इति ऋज्रेन्द्राग्रेत्यादिना रणादिसूत्रेण निपातितः आङोआङिति ङि द्विशिष्ट आकारो गुह्यते य ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः एतमातं ङितं विद्याद्वाक्य

अनुदात्ते च कुधपरे। ६।१।१२०।कवर्गधकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि। अयं सोऽग्निः। अयं सो अध्वरः।अनुदात्ते किम्।अधोऽ
ग्रे रुद्रो। अग्रशब्द आद्युदात्तः।कुधपरे किम्।सोऽयमग्निमन्तः॥ अवपथासि च। ६।१।१२१।अनुदात्ते अकारादौ अवपथाः शब्दे परे यजुषि ए
ङ् प्रकृत्या। त्री रुद्रेभ्यो अवपथाः। वपेस्थासि लङि तिङ्ङतिङ इत्यनुदात्तत्वम्। अनुदात्ते किम्। यद्रुद्रेभ्योऽवपथाः। निपातैर्यद्यदि हन्तेति निघातो न॥
आङोऽनुनासिकश्छन्दसि। ६।१।१२६। आङोऽचि परेऽनुनासिकः स्यात् स च प्रकृत्या। अभ्र आँ अपः। गभीर आँ उग्रपुत्रे॥ ईषा अक्षादीनां छन्द
सि प्रकृतिभावो वक्तव्यः।ईषा अक्षो हिरण्ययः। ज्या इयम्। पूषा अविष्टु॥ स्यश्छन्दसि बहुलम्। ६।१।१३३। स्य इत्यस्य सोर्लोपः स्याद्धलि। एष
स्य भानुः॥ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। ६।१।१५१। ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे। हरिश्चन्द्रो मरुतः। सुश्चन्द्र दस्म॥

स्मरणयोरङित्यनेन लक्षितः यद्यपि अभ्र आँ अप इत्यत्र आकारो न ईषदर्थादिद्योतकः तथापि सप्तम्यर्थद्योतकत्वात्तथापि वाक्यस्मरणयोरङित्यत्रैव तात्पर्यम्।
अन्यत्र सर्वत्राङ् ङिदेव दृश्यः एवं ताव ज्ञाप्ये स्थितम् अभ्र आँ अप इति सप्तम्यर्थद्योतकोऽत्राङ् उपदेशेऽजनुनासिक इतीत्संज्ञा तु न उपदेशग्रहणात् स्यश्छन्दसि स्य इ
त्यदित्येतस्य प्रथमान्तस्यानुकरणम् सुपां सुलुगिति लुप्तषष्ठीकम् एषस्येति एतदस्त्यदश्च त्यदाद्यत्वं तदोः सः साविति सः एतदस्त्यदश्च परस्य सोः एतत्तदोः सुलोप

अत्र एते इति पादस्यान्ते एङ् इति अकः अपरस्य पादस्यादाविति तन्निमित्तनिमित्तयोः पादमध्यस्थत्वमिति सत्यपि न कलि प्रकृतिभावः ॥ ११५ ॥ अव्यात् एषामनुकरणात्सु वन्तेन समासः अवरस्पृणो आशीर्लिङ् अवद्यादिति पञ्चम्येकवचनान्तम् अवक्रसुरित्यवपूर्वस्य क्रमे र्लिङ्युसि द्विर्वचनप्रकरणे छन्दसि वा वचनमिति द्वि
र्वचनाभावे रूपम् केचित्तु अवचक्रमुरिति सूत्रे कृतद्विर्वचनं ये पठन्ति ते पाशुदाहरणं मृग्यम् बहूचास्तावदवक्रमुरित्यधीयते अत्र नेति वृङ् वृञोर्मन्त्रे घसेति
ल्लेर्लुक् आत्मने पदे षिति झस्यादादेशः अयमिति इदमः सोर्ऽदीयुंसि अवते र्लोट् अवन्तु अवस्युरिति अवेरसुन् औणादिकः ततः क्यच् क्याच्छन्दसीत्युः य
जुष्युरः उरोऽन्तरिक्षमिति नन्वत्र प्रकृत्यान्तःपाद इत्यनेनैव सिद्धे व्यर्थोऽयं योग इत्याशंक्याह यजुषि पादाभावादित्यादि आपो जुषाणो आपो इत्यादीनि पृथक् प

अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च । ६।१।११६। एषु व्यपरेष्वपि एङ् प्रकृत्या । वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । तेनो अव्रत शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । यद्यपि बह्वृचैस्तेनो ऽवन्तु रथतूः सोऽयमागात् तेऽरुणेभि रित्यादौ प्रकृतिभावो न क्रियते तथापि बाहुलकात्समाधेयम् । प्रातिशाख्ये तु वाचनिक एवायमर्थः ॥ यजुष्युरः । ६।१।११७। उरःशब्द एङन्तोऽ तिप्रकृत्या यजुषि । उरो अन्तरिक्षम् । यजुषि पादाभावादनन्तःपादार्थं वचनम् ॥ आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे । ६।१।११८। ॥ यजुषि अतिप्रकृत्या । आपो अस्मान्मातरः । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधिनाके । अम्बे । अम्बाले । अम्बिके । अस्मादेव वच नादम्बार्थेति ह्रस्वो न ॥ अङ्ग इत्यादौ च । ६।१।११९। अङ्गशब्दे य एङ् तदादौ च अकारे य एङ् पूर्वः सोऽतिप्रकृत्या यजुषि । प्राणो अङ्गे अङ्गे अदी

दान्यनुकरणानि विभक्तिस्तु अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वान्न भवति सुपां सुलुगिति विभक्तेर्लुग्वा अंबिके पूर्वे इत्येतदप्यनुकरणमेव तत्र प्रथमं जसंतम नुकरणम् द्वितीयं स्वंतं तृतीयम् शसंतं चतुर्थं ङ्यन्तमिति रेसंबुध्यन्ते आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दाः अंबिके शब्दात्पूर्वौ यो अंबे अंबाले शब्दौ तौ च वर्तते अतिप रतः प्रकृत्या स्युः अंग इत्यादौ च अंगशब्दे य एङ् तिप्रकृत्या भवतीति वक्ष्यमाणेन सम्बन्धः तदादौ अकारे य एङ् पूर्व इति अत्रापि पूर्वत्वसंबंधः अतिक्रान्तपरामर्शि

उत्यंता संख्येति। संख्येति किं। पतयः। प्रत्ययस्य लुक् श्लु लुपः। अदर्शनं लोप इत्यतोनुवृत्तस्यादर्शनस्यानेकसंज्ञाकरणसामर्थ्यात्तन्नाम्ना श्रित्य तद्भावितसंज्ञा इह वि
ज्ञायंते तेन संज्ञासंकरोत्र न भवति तद्दाह। लुक् श्लु लुप् शब्दैरित्यादि। सति तु संज्ञासंकरे हंतीत्यत्र शब्लुकि श्ला विति द्वित्वं स्यात्। जुहोतीत्यत्र श्लो सति उतो वृ
द्धिर्लुकि हलि इति वृद्धिः स्यात्। न च तत्र अभ्यस्तस्येत्यनुवृत्तेर्योयोतिनोनोतीत्यादौ वृद्धिर्न भविष्यतीति वाच्यं। संज्ञासंकरपक्षे तदनुवृत्त्यसंभवात् अन्यथा
सूत्रस्य निर्विषयत्वापत्तेः। न च योतीत्यादिरवकाशः। संज्ञासंकरे तत्रापि द्वित्वस्य दुर्वारत्वादिति भावः। पले लुक्। जुहोत्यादिभ्यः श्लुः। जनपदे लुप् वित्यादिविषयप्रदे
शेषु सूत्रशाटकवद्भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः॥ ॥ षड्भ्यो लुक्। सर्वनाम्नः स्मै इति वत् षड्भ्यो लुगिति वक्तव्ये बहुवचननिर्देशो अत्रार्थप्राधान्यसूचनार्थः। द्वित्रिमा
त्रत्रिमन्यायेन स्वरूपनिरास सिद्धेस्तेन षडर्थगतसंख्याभिधायिनो रेव जश्शसोर्लुगित्यर्थपर्यवसानात् प्रियपंचान इत्यादौ नातिप्रसंगः। जश्शसोः शिरित्यतो अनु

षड्भ्यो लुक्। ७।१।२२ षड्भ्यः परयोर्जश्शसोर्लुक् स्यात्। प्रत्ययलोपे प्रत्ययलक्षणं। १।१।६२ प्रत्यये लुप्तेपि तदाश्रितं कार्यं स्यात्। इति जसि चे

तिगुणे प्राप्ते ॥

वर्तनादाह। जश्शसोर्लुक् स्यादिति। प्रत्ययलोपे विशेषविहिता अपि लुगादिसंज्ञा लोपसंज्ञां न बाधते। एकसंज्ञाधिकारादन्यत्र सं
ज्ञानां बाध्यबाधकभावानंगीकारादिति भावः। स्थानिवत्सूत्रेण सिद्धे नियमार्थमिदं सूत्रं। प्रत्ययस्यासाधारणं रूपं यत्र प्रयोजकं तदेव कार्यं प्रत्ययलोपे सति भव
ति न तु प्रत्ययाप्रत्ययसाधारणमिति। तेन शोभना दृषदो यस्य सुदृषत् प्रासाद इत्यत्र न नुम्। भ्यामित्यतो दात्तत्वाविधित्वात् सोमसनसी अलोमोषसी इत्युत्तरपदाद्युदा
त्तत्वमत्वसंतस्येति दीर्घश्च न भवति। यद्यपत्र प्रत्ययः प्राधान्येनाश्रीयते तत्रात्त्विधावपि विध्यर्थमिदं तेन अतृणोडित्यत्र हलादौ पिति सार्वधातुके विहित इ
मल्लुप्तेपि तस्मिन् भवति। वर्णाश्रयेनास्ति प्रत्ययलक्षणमिति तु वर्णप्राधान्यविषयकं तेन गवे हितं गोहितमित्यत्र अवादेशो न। यद्यपीदं यस्य द्वयं आकारा द्वित
यापि नियमपक्ष एव प्रबल इति पङ्लुगंते मनोरमायां स्थितं। स्यादेतत्। सूत्रस्यावश्यकत्वेपि प्रत्ययलोपे तल्लक्षणमित्येव सूत्र्यतां किमनेन द्वितीयप्रत्ययग्रहणेन।
अत्राहुः। प्रत्ययस्यासाधारणं रूपं यत्रेत्यादि लाभाय द्वितीयप्रत्ययग्रहणमिति ॰ ॥

चंद्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति सच भवन् चंद्रशब्दस्यैवोभयनिर्देशे पंचमीनिर्देशो बलीयानित्याशयेनाह चंद्रशब्दस्योत्तरपदस्येति सुडागमः स्यादि
ति सुट्कात्पूर्व इत्यतः सुडित्यनुवर्त्तनात्॥ ॥ पितरा पूर्वपदस्यारङादेशो निपात्यते उत्तरपदे तु सुपां सुलुगित्यादिना विभक्तेराकारादेशः ऋतो ङि सर्वनामस्थान
योरिति गुणः समानस्य सः स्यादिति सह स्य स इत्यतः स इत्यनुवर्त्तते सगर्भ्य इति समानो गर्भः सगर्भः तत्र भवः सगर्भ्यः सगर्भसयूथसनुताद्यदिति यत् प्रत्ययः अमूर्द्धेत्या
दि किम् समानमूर्द्धा समानप्रभृतयः समानोदर्काः छन्दसि स्त्रियाम् विष्वग्देवयोरिति सर्वनाम्नोऽप्युपलक्षणम् बहुलग्रहणात् क्वचिन्न भवति विश्वाचीः देवद्रीची
ति विश्वमञ्चतीति देवानंचतीति क्विन् उगितश्चेति ङीप् अच इत्यकारलोपः चाविति दीर्घत्वम् अत्र विष्वग्देवयोरद्र्यादेशः प्राप्तो बाहुलकान्न क्वचिच्च भवतीत्या

पितरामातराच छन्दसि।६।३।३३।द्वन्द्वे निपातः। आ मा गन्तां पितरामातरा च। आ हि परीतमपि मातरापितरा नू विदिष्टो॥ समानस्य छन्द
स्यऽमूर्द्धप्रभृत्युदर्केषु॥ समानस्य सः स्यान्मूर्द्धादिभिन्ने उत्तरपदे। सगर्भ्यः॥ छन्दसि स्त्रियाम्बहुलम्॥ विष्वग्देवयोरद्र्यादेशः। विश्वाचीच।
घृताचीच देवद्रीचीन्नयत देवयन्तः। कद्रीची॥ सधमादस्थयोश्छन्दसि।६।३।९६। सहस्य सधादेशः स्यात्। इन्द्र त्वास्मिन्सधमादे। सोमः सध
स्थम्॥ पथि च छन्दसि।६।३।१०८। पथिशब्दे उत्तरपदे कोः कवकौ वा। कवपथः। कापथः। कुपथः॥ साढ्यै साढ्वा साढेति निगमे।६।३।११३॥

ह कद्रीचीति कुत्सितमञ्चतीति कद्रीची किंशब्दस्य टेरद्र्यादेशः ङीन्नलोपदीर्घाः पूर्ववत् सधमादसहस्य सध्रिरित्यतः सहस्येति वर्त्तते मादस्थ इत्येतयोरुत्तरप
दयोः सहस्य सध इत्ययमादेशः स्यात् सधेत्यविभक्तिको निर्देशः सधमाद इति सह माद्यन्ति देवा अस्मिन्निति सधमादो यज्ञ इति मदोऽनुपसर्गे इत्यपि प्राप्तेऽज
ब्भ्यां स्त्रीखलना इति तद्बाधके ल्युटि हलश्चेति घञ् सूत्रे मादेत्यकार उच्चारणार्थः तेन मादयतेः क्विबन्तस्य मादिति यद्रूपं तत्रापि भवति आ त्वा वहन्तो हरयो यु
ज्यमाना अर्वागिन्द्र सधमादो वहन्तु सहस्थ इति सह तिष्ठतीति सहस्थः आतोऽनुपसर्गे इति कः साढ्यै एते त्रयो निपात्यन्ते निगमे ॥ ९ ॥ ॥

सहेः क्त्वाप्रत्ययइति पक्षेक्त्वाप्रत्ययस्यध्ये आदेशश्च निपात्यते साढ्यै सहेः क्त्वाप्रत्ययस्य ध्ये होढः ष्टुत्वं ढो ढे लोपः ढ्लोपेति दीर्घः साढ्वा इति ढत्वादिस्थ्र्ववत् तृनि तृ
तीयमिति तृचित्वनोदात्तं स्यात्तथाभूत्स्विकेत्तिमंत्रे साहूत्यासुदात्तं पठ्यते तन्नसंगच्छेतेतिभावः सूत्रेइति शब्दः प्रकारार्थः तेन निष्ठायामपि निपातनम्बाध्यम् आषा
ढेवृषभः द्व्योरिति अस्य आचार्यस्य द्व्योः स्वरयोर्मध्यमेत्य डकारो लकारतां संपद्यते ऊष्मणा संप्रयुक्तः डकारः ह्ळकारतामेतीत्यन्वयः अष्टापदीति अष्टौपादा अस्या इति ब
हुव्रीहौ संख्यासु श्वेस्येति पादस्य लोपे कृते पादोऽन्यतरस्यामिति ङीप् मंत्रे सोम सोम अश्व इंद्रिय विश्वदेव्य एषां मतुप्प्रत्यये परे दीर्घः स्यान्मंत्रे ओषधेश्च नचर्क्षा

सहेः क्त्वाप्रत्यये आद्यं हयं तृनि तृतीयं निपात्यते। मरुद्भिरुग्रः पृतनासु साढा॥ अचोर्मध्यस्थस्य डस्य ळः ढस्य ळ्हश्च प्रातिशाख्ये विहितः। आ
हहि द्व्योश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो लकारः ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्त इति॥ छन्दसि च। अ
ष्टनआत्वं स्यादुत्तरपदे। अष्टापदी॥ मन्त्रे सोमाऽश्वेन्द्रियविश्वदेव्यस्य मतौ। ६।३।१३१। दीर्घः स्यान्मन्त्रे। अश्वावती सोमावती इन्द्रियावान्मदिन्त
मः। विश्वकर्मणा विश्वदेव्यावता॥ ओषधेश्च विभक्तावप्रथमायाम्। ६।३।१३२। दीर्घः स्यान्मन्त्रे। यदोषधीभ्यः। अदधाम्योषधीषु॥ ऋचितुनु
घमक्षुतङ्कुत्रोरुष्याणाम्। ६।३।१३३। दीर्घः स्यात्। आतू न इन्द्र वृत्रहन्। उत वा घा स्यालात्। मक्षू गोमन्तमीमहे। भरता जातवेदसम्। तङिति
थादेशस्य ङित्त्वपक्षे ग्रहणम्। तेनेह न। शृणोत ग्रावाणः। कूमनाः। अत्रा ते भद्रा। यत्रा नश्चक्रा। उरुष्याणः॥

कारं इति इन इति ङीषागतार्थता अ
न्तोदात्तता पत्तेः इष्यते त्वाद्युदात्तो लघावंत इति फिट्सूत्रात् ऋचि तुनुघ इति स्वरूपग्रहणेनातर प्रत्तमपोन्छंदसि घशब्दस्यैव दीर्घदर्शनात् उत्वेति भार्यायाः भ्राता स्यालः
ततः पञ्चमी भरतेति लोण्मध्यमपुरुषबहुवचनस्य थस्य लोटो लङ्वदित्यतिदेशात्तस्य स्थाने तादेशस्तस्य स्थमिपामित्यनेन शृणोतेति तमनप्तनथनाश्चेति तबादेशः
अत्र पित्वान्ङित्त्वं नास्ति उरुष्याण इति उरुष्येति कंड्वादियगंतो रक्षणार्थः लोटः सेर्हि अतोहेरिति लुक् नश्त्यस्य नश्च धातुस्थोरुषुभ्य इति णत्वम् ॥ ६ ।

इनिपमादिडागमः प्राप्नोति नचरेभावस्यवैयर्थ्यम् ह्रसप्रभृतिष्वित्यत्रचरितार्थत्वादत आह अत्रेति कथंपुनर्लोक्षणिकस्यैरेशब्दस्यरेभावोभवतितत्राह॥ ॥
दर्थेचेति। द्विवचननिर्देशाल्लक्षणप्रतिपदोक्तपरिभाषानप्रवर्तत इतिभावः तन्वादीनां तन्वादीनां बहुलमियङुवङादेशस्याच्छंदसि तनुवमिति अधातुत्वादप्राप्त
वङ्विधीयते तन्वमिति वा छंदसीत्यपि पूर्ववत्ताभावेयण् त्र्यम्बकमिति त्रीणिअम्बकानिनेत्राणियस्यासौत्र्यम्बकोरुद्रः वित्न्निरेइति तनुविस्तारेलिटः प्रथमपुरुष
बहुवचनं अत्राल्लोपस्यासिद्धत्वेपिअतएकहल्मध्यइति एत्वाभ्यासलोपौनलोपविधानसामर्थ्यात् पप्तिमेति पत्लृपतनेलिटोमसो मस्यइट्वितेनिरेपेतिमेतिभाषा
यां घसिभसो अनयोरुपधालोपः स्याद्धलादावजादौचक्ङिति सग्धिरिति अदेःक्तिन् बहुलं छंदसीति घस्लादेशेउपधालोपचक्त्वे झलोझलीतिसलोपस्तकारस्यधत्वं

तदर्थेसूत्रेद्विवचनान्तनिर्दिष्टइरयोरिति॥ छन्दस्युभयथा। ६।४।८६। भूसुधियोर्यण्स्यादियङुवङौचावनेषुचित्रंविभ्वा। विभुवंवा। सुध्योन
व्यमग्ने। सुधियोवा॥ तन्वादीनांछन्दसिबहुलम्॥ तन्वंपुषेम। तनुवंवा। त्र्यम्बकं। त्रियम्बकम्॥ तनिपत्योश्छन्दसि। ६।४।९९। एतयोरुपधालो
पः क्ङितिप्रत्यये। वितत्निरेकवयः। शकुनाइवपप्तिम॥ घसिभसोर्हलि। ६।४।१००। सग्धिश्चमे। बब्धांतेहरीधानाः॥ हुश्नुल्भ्योहेर्धिः। श्रुश्रृणुपृकृव
भ्यश्छन्दसि। ६।४।१०२ श्रुधीहवम्। शृणुधीगिरः। रायस्पूर्धि। उरुणस्कृधि। अपावृधि॥ वाछन्दसि ६।४।८८ हिरपिद्वा। अडितश्च ६।४।१०३ हेर्धिःस्या
त्। रारन्धि। रमेर्व्यत्ययेनपरस्मैपदम्। शपः श्लुरभ्यासदीर्घश्च। अस्मेप्रयन्धि। युयोध्यस्मज्जुहुराणमेनः। ममत्तु नः परिज्मा वसर्हणा ममत्तु वातो अपां वृषण्वान्। शिशीतमिन्द्रापर्वता युवं न इति च। युयोधि जातवेदः॥ समवरुद्धत्वं ततः समानान्धिः सग्धिरिति समासे कृते समानस्यछन्द

समूर्द्धप्रभृत्युदर्केष्विति सूत्रेण समानस्य सः बब्धामिति भसेर्लोटि तांस्तुः परनित्यमप्युपधालोपंवाधित्वा बाहुलकात्प्रथमंश्लाविति द्वित्वम् ततउपधालोपसलोपधत्वजश्त्वा
कर्तव्यानि श्रुश्रृणु एभ्योहेर्धिः स्यात् श्रुधीति बहुलंछंदसीतिशपोलुक् अन्येषामपीतिदीर्घत्वम् शृणुधीति श्रुवः शृचेतिश्रुवः शृभावश्नुविधानसामर्थ्यात् उतश्चप्र
त्ययादितिन हेर्लुक् दीर्घः पूर्ववत् पृधीति पृपालनेशपोलुक् उदोष्ठ्यपूर्वस्येत्युत्वम् हलिचेतिदीर्घः उरुणस्कृधीति नश्चधातुस्थोरुषुभ्यइति णत्वम् कःकरदित्या
देनाविसर्जनीयस्यसत्वम् अपावृधीतिदीर्घः पूर्ववत् अभ्यासस्यदीर्घश्चेतितजादित्वादितिभावः रारंधीत्यत्रानुदात्तोपदेशेत्यादिनामलोपोनहेरङित्वात् ॥ ॥

यमेः शपो लुगिति बहुलं छन्दसीत्यनेन एवमुत्तरत्रापि विभाषर्जोः र ऋतो हलादेर्लघोरित्यतः ऋत इति तुरिष्ठेमेयस्स्विति च तदाह ऋतस्थाने इत्यादि ऋत्व्य वास्त्व्य ऋतुश
ब्दाद्यति वा सुशब्दाद्दशि यति च यणादेशो निपात्यते मशब्दस्येति तस्यासिद्धत्वाच्च स्येति लोपो न अतः सार्वेति दीर्घस्त्वङ्गवृत्तपरिभाषया वारणीयः यद्वा मकारमात्रस्य
लोपः ततो यस्येति लोपे कृते प्रत्ययाकारस्य श्रवणं इति षष्ठोऽध्यायः ६॥ बहुलं छन्दसि छन्दसि विषये बहुलं रुडागमः स्यात् दुह्रे इति दुहेर्लटस्त्वेझस्यादेशे रुट्
तलोपः लोपाभावे इति लोपस्त आत्मनेपदेष्वित्यस्य वैकल्पिकत्वादित्यर्थः अदृश्रमिति दृशिर्प्रेक्षणे लुङ् व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैक

यमेः शपो लुक्। यौति। शपः श्लुः। मन्त्रेष्वाङ्यादेरात्मनः। ६।४।१४१। आत्मन्शब्दस्यादेर्लोपः स्यादाङि। त्मना देवेषु॥ विभाषर्जोश्छन्दसि। ६।
४।१६२। ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु। त्वं रजिष्ठमनुनेषि। ऋजिष्ठं वा॥ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि। ६।४
१७५। ऋतौ भवं ऋत्व्यम्। वास्तुनि भवं वास्त्व्यम्। वास्त्वम्। मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते। माध्वीर्नः सन्त्वोषधीः। हिरण्यशब्दाद्वि
हितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्ययेन सविता रथेन॥ इति षष्ठोऽध्यायः॥ शीङो रुट्॥ बहुलं छन्दसि। ७।१।८। रुडागमः स्यात्।
लोपस्त आत्मनेपदेष्विति पक्षे तलोपः। धेनवो दुह्रे। लोपाभावे घृतं दुह्रते। अदृश्रम्। अतो भिस ऐस्॥ बहुलं छन्दसि। ७।१।१०। अग्निर्देवेभिः॥ ने
तराच्छन्दसि। ७।१।२६। स्वमोरद्ड् न। वार्त्रघ्नमितरम्। छन्दसि किम्। इतरत्काष्ठम्॥ समासेऽनञ्पूर्वे क्त्वो ल्यप्। क्त्वापि छन्दसि। यजमानम्परिधाप
यित्वा ॥

वचनमिप् तस्य रुडागमः नेतरात् इतरशब्दात्परयोः स्वमोरद्डादेशो न स्याच्छन्दसि इतरमिति अद्ड्डतरादिभ्य इत्यद्डभावे अतोऽमित्यम् क्त्वो ल्यपि
ति। समासेऽनञ्पूर्वे क्त्वो ल्यपि प्राप्ते छन्दसि क्त्वापि विधीयते तदाह क्त्वापि अनञ्पूर्वे समासे क्त्वा इत्ययमादेशः स्यात् अपिशब्दाल्ल्यबपि समासेऽसमासे च भवति अप्रा
प्तविषये ल्यपः प्रापणार्थत्वादपिशब्दस्य अन्यथा वा छन्दसीत्येव ब्रूयात् तथा च छन्दो विधिमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते आज्येनाक्ष्णी आज्येति ॥
परिधापयित्वेति णिजन्तात्परिपूर्वाद्धातेः क्त्वा तस्य ल्यबादेशे प्राप्ते क्त्वादेशः ॥ ६ ॥ ६ ॥

सुपांसुपांस्थाने सुलुक्पूर्वसवर्णआआत् शेयाडाड्यायाच्आल्एतेआदेशाःस्युः छन्दसिपन्थाइतिव्यत्ययोबहुलमित्येवसिद्धमिदमुक्तंहितन्नसुप्तिङुपग्रहेत्यादितस्यैवार्थ
प्रपञ्चः धीतीत्यादि धीतीमतीसुष्टुतीशब्देभ्यस्तृतीयैकवचनस्यपूर्वसवर्णईकारः प्रमाणतआन्तर्योत्सवर्णदीर्घत्वं दिविस्पृशावितिप्राप्ते आइतिअनेनादित्यन्नाकारोपि
प्रश्लिष्यतइतिदर्शितम् नतादिति नतशब्दात्म् तस्यादादेशःनविभक्तौतुस्मइतीत्संज्ञाप्रतिषेधः यादेवेत्यादियत्तच्छब्दाद्म्नस्यात् युष्मेइति युष्मदःसप्तमीबहुवच
नस्यशेआदेशः शेषेलोपः अस्मेइन्द्रेति शेइति प्रगृह्यत्वाद्यादेशाभावः नाभाइति डित्वाट्टिलोपः ताअनुष्ठ्येति षड्विंशति रस्यवैकृयइति प्रकाम्यइदमध्वर्युप्रेषे

सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः।७।१।३९।ऋजवःसन्तुपन्थाः।पन्थानइतिप्राप्तेसुः।।परमेव्योमन्।व्योमनिइतिप्राप्तेङेःलु
क्।धीती।मती।सुष्टुती।धीत्यामत्यासुष्टुत्येतिप्राप्ते।पूर्वसवर्णदीर्घः।यासुरथारथीतमा।दिविस्पृशाश्विनायोसुरथौदिविस्पृशावित्यादि
प्राप्ते।आनताद्ब्राह्मणाम्।नतमितिप्राप्ते।आत्।यादेवविद्मतात्वा।यमितिप्राप्ते।आत्।यादेवविद्मतात्वा।नयुष्मेवाजबन्धवः।अस्मेइन्द्राबृह
स्पती।युष्मासुअस्मभ्यइतिप्राप्ते।शे।उरुया।धृष्णुया।उरुणाधृष्णुनेतिप्राप्ते।या।नाभापृथिव्याः।नाभावितिप्राप्ते।डा।ताअनुष्ठ्योच्यावयता
त्।अनुष्ठानमनुष्ठा।व्यवस्थावद्ङः।आडोड्या।साधुया।साध्विति प्राप्ते।याच्।वसन्तायजेत।वसन्तेइति प्राप्ते।आल्।इयाडियाजीकाराणा
मुपसंख्यानम्।।उर्विया।दार्विया।उरुणादारुणेतिप्राप्ते।इया। ९९

पठितेताः वेकोः अनुष्ठ्याः अनुष्ठानेनअनुक्रमेणगणानयागणयित्वाच्यावयतात् भ
वान्विशसनंकरोतुपृथक्करोतुभवानित्यर्थः अनुष्ठानमनुष्ठेति अनुपूर्वात्तिष्ठतेरङ् तृतीयैकवचनस्यड्यादेशोडित्वाट्टिलोपः नन्वनुपूर्वात्तिष्ठतेरातश्चोपसर्गइत्यङ्वा
धित्वास्थागापापचोभावेइतिक्तिनाभाव्यमितिचेत्सत्यम् पूर्वपरावरदक्षिणोत्तरेतिसूत्रेव्यवस्थायामितिनिर्देशाद्ङपिसामान्यापेक्षज्ञापकाश्रयणात् तदेतद्
ध्वनयतिव्यवस्थावदिति साधुइतिप्राप्तइति सोर्लुकिप्राप्तइत्यर्थः वसन्तेइतिप्राप्ते आल्इति पूर्वसवर्णेतु अतोगुणइतिस्यात् उर्वियेति उरुदारुशब्दात्तृतीयै
कवचनस्येयादेशः ॥ ९ ॥ ९ ॥

सुक्षेत्रियेति सुक्षेत्रिन्शब्दात्तृतीयैकवचनस्य। डियाजादेशः डित्वाट्टिलोपः बाहुनेति प्राप्ते इति काशिकायां तु प्रबाहुनेति प्राप्त इत्युक्तं तत्समासभ्रमादित्यवधेयम् प्रेति हि न समस्तं पृथक् स्वरदर्शनात्पदकारैर्विच्छिद्य पाठाच्च अतः आख्यातान्वयीति ध्येयम् स्वप्नयेति अयाचोऽकारः सुपि चेति दीर्घनिवृत्त्यर्थः अतो गुण इति पररूपम् नावयेति नौशब्दाट्टा इत्यस्याऽयार् रित्स्वर इति रितीति सूत्रेण अमो अम इति मिबादेशो गृह्यते तेन द्वितीयैकवचनं छन्दसि दृष्टानुविधानात् तदेतदाह मिबादेशस्येति शित्वात्सर्वादेश इति शित्करणाभावे तु अलोन्त्यस्येति मकारस्य स्यात् आदेः परस्येति तु न पञ्चमीनिर्देशाभावात् नच मकारस्य मकारवचने प्रयोजनाभावात् सर्वादेशो भविष्यतीति वाच्यम् मकारस्य मकारवचनमनु

सुक्षेत्रिया। सुक्षेत्रिणेति प्राप्ते डियाच्। दृतिं न शुष्कं सरसी शयानम्। ङे·रीकार इत्याहुः। तन्नाद्युदात्ते पदे प्राप्ते। व्यत्ययेनान्तोदात्तता। वस्तुतस्तु ङीषन्तात् ङे·र्लुक्। ईकारादेशस्य तूदाहरणान्तरं मृग्यम्। आङ्याजयारामुपसंख्यानम्॥ प्रवाहवासिस्तम्। बाहुनेति प्राप्ते। आङादेशः। घेर्ङितीति गुणः। स्वप्नया। स्वप्नेनेति प्राप्ते। अयाचा स्वनः सिन्धुमिव नावया। नावेति प्राप्ते। अयार्। रित्स्वरः॥ अमो मश्॥ ७।१।४०॥ मिबादेशस्यामो मश् स्यात्। अकार उच्चारणार्थः। शित्त्वात्सर्वादेशः। अस्तिसिच इति इट्। वधीं वृत्रम्। अवधिषमिति प्राप्ते॥ लोपस्त आत्मनेपदेषु॥ ७।१।४१॥ छन्दसि। देवा अदुह्र। अदुहतेति प्राप्ते। दक्षिणतः शये। शेत इति प्राप्ते। आत्मेति किम्। उत्सं दुहन्ति॥ ध्वमो ध्वात्॥ ७।१।४२॥ अन्तरेवोष्माणं वारयध्वात्। वारयध्वमिति प्राप्ते॥ यजध्वैनमिति च॥ ७।१।४३॥ एनमि परे ध्वमोऽन्त्यलोपो निपात्यते। यजध्वैनं प्रियमेधाः। वकारस्य यकारो निपात्यत इति वृत्तिकारोक्तिः प्रामादिकी॥

स्वारनिवृत्त्यर्थं स्यात् मो राजि समः क्वावित्यत्र यथा वधीमिति हन्तेर्लुङ् हनो वध लिङि लुङि चेति वधादेशः झेः सिच् इट् तस्थस्थ इति मिपोऽम्भावः तस्य मश् अस्ति सिच इति मस्यापृक्तस्येट् इट ईटीति सिचो लोपः सवर्णदीर्घत्वं बहुलं छन्दसीत्यडभावः लोपस्त॥ आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपः स्यात् अदुहेति दुहेर्लङ् आत्मनेपदेष्वनत इति झस्यादादेशः बहुलं छन्दसीति रुट् तकारस्य लोपे द्वयोरकारयोरतो गुण इति पररूपं शये इति शेते इत्यत्र तलोपे कृतेऽयादेशः ध्वमो॥ ध्वमो ध्वादित्यादेशः स्याच्छन्दसि वारयध्वादिति वृञो णिचि लोट् यज॥ वृत्तिकारस्तु यजध्वैनमिति पाठं ज्ञात्वा वकारस्य यकारश्च निपात्यत इत्याह तद्दूषयति व

कारस्येत्यादि प्रापादिकी तिलस्येवकारपाठस्य निर्विवादत्वात् वेदभाष्ये पि प्रकृतसूत्रस्य मलोपमात्रपरतोक्तेश्चेति भावः ॥ ॥ तस्य मध्यमपुरुषबहुवचनस्येति
प्रथमपुरुषैकवचनस्य तु न ग्रहणम् छन्दसि दृष्टानुविधानात् पूर्वोत्तराभ्यां बहुवचनाभ्यां साहचर्याच्च कृणुतादिति कृवि हिंसाकरणयोश्च धिन्विकृण्वोरच्चेत्यु
प्रत्ययः वकारस्य चाकारः अतो लोपः गमयतादिति गमेर्णिच् जनीजृषिति अमंतलान्मित्संज्ञायां मितां ह्रस्वः लोट् मध्यमपुरुषबहुवचनस्य तादेशः तप्तनप्त तस्य
स्थाने एते आदेशाः सुः शृणोतेति श्रुश्रवणे श्रुवः शृ चेति श्नुप्रत्ययः शृभावश्च पित्त्वेनाङित्त्वाद् गुणः सुनोतनेति षुञ् अभिषवे स्वादिभ्यः श्नुः तरत्पस्तन प्रधानेनेति अ
त्राप्यङित्त्वात् श्नाभ्यस्तयोरित्याकारलोपाभावः इदंतो अन्तशब्दोऽवयववचनः इत् अंतो यस्य स इदंतः तपरकरणमसंदेहार्थम् तथा चायमर्थः एमस इत्ययं शब्द

तस्य तात् ॥ ७।१।४४ ॥ मध्यमपुरुषबहुवचनस्य स्थाने तात् स्यात् । गात्रमस्य नूनं कृणुतात् । कृणुतेति प्राप्ते । सूर्यं चक्षुर्गमयतात् । गमयतेति प्रा
प्ते ॥ तप्तनप्तनथनाश्च ॥ ७।१।४५ ॥ तस्येत्येव । शृणोत ग्रावाणः । शृणुतेति प्राप्ते । तपा सुनोतन । पचत नत्रस्यवाहसो दधातन द्रविणं चित्रमस्मे ॥ तप्तन
प्। मरुतस्तज्जुजुष्टना । जुषध्वमिति प्राप्ते । व्यत्ययेन परस्मैपदं । स्नुश्चाचि ये देवासो मरुतो यतिष्ठन् ॥ यत्संख्याकाः स्थेत्यर्थः । यच्छ्रू दाच्छ्रांद सोड
ति । अस्ते स्तस्य थनादेशः ॥ इदन्तो मसि ॥ ७।१।४६ ॥ मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । मस इत्ययमिकाररूपचरमावयवविशि
ष्टः स्यात् । मस इगागमः स्यादिति यावत् ॥ नमो भरन्त एमसि त्वमस्माकं तव स्मसि । इमस्म इति प्राप्ते ॥ क्त्वो यक् ॥ ७।१।४७ ॥ दिवं सुपर्णो गत्वाय ॥

इकारान्तो भवति मसः सकारांतस्य इगागमो भवति स च तस्यान्तो भवतीत्यर्थः स्यादेतदाह मस इत्ययमिति तत्र यदि सकारोपमर्देन इकारांतत्वमभिप्रेतं स्यात्तर्हि मस इ
दिति वाच्यं स्यात् तस्मादवस्थित एव सकारे इकार उपसंजनीयः अंतग्रहणाच्च तदग्रहणे न गृह्यते ततश्च टित्किन्त्वादेरागमलिंगस्याभावे प्यर्थादागमो यं संपद्यते तदे
तद्ध्वनयन्नाह मस इगागमः स्यादिति एवं च मस इगिति वक्तव्यं प्रत्याहारसंदेहप्रसंगात्तथा नोक्तम् एमसीति इणगतौ मस् तस्य इकारः अन्तावयवः स्मसीति
अस्तेर्मस् श्नसोरल्लोपः क्त्वो यक् त्वा इत्यस्य यगागमः स्याच्छंदसि गत्वायेति गमेः क्त्वा अनुदात्तोपदेशेत्यनुनासिकलोपः त्वा इत्यस्य यगागमः ॥ ९ ॥

इष्ट्वीनत्वाप्रत्ययस्येति यजेः परस्येति शेषः इष्ट्वीनमिति यजेः त्वाव विस्वपीति संप्रसारणम् व्रश्चेति षत्वम् ष्टुत्वम् आकारस्येनमादेशः पीत्वेति पिबतेः त्वा घु
मास्थेतीत्वम् आज्जसेर्जसेरिति पूर्वाचार्यानुरोधेन निर्देशः देवासः इति असुकि कृते जसः सकारस्य श्रवणं असुकः सकारस्य विसर्गः श्रीणामिति अस्य वामीति न
दीत्वविकल्पान्नदीत्वाभावे उदाहरणमिदम्बोध्यम् नदीत्वपक्षे तु ह्रस्वनद्यापो नुडिति अनेनैव सिद्धम् सूत ग्रामणीनामिति सूताश्च ग्रामण्यश्चेतीतरेतरयोगः
गोः पागोः इत्येतस्मादुत्तरस्यामो नुडागमः स्यात् पादान्ते पादश्चेह ऋक्पादो गृह्यते छंदसीत्यधिकारात् छन्दस्य छंदसि चेत्येव सिद्धे अपि दृश्यत इत्येतत्सर्वोपाधि

इष्ट्वीनमिति च।७।१।४८। त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते। इष्ट्वीनं देवान्। इष्ट्वा इति प्राप्ते॥ स्नात्व्यादयश्च।७।१।४९। आदिशब्दः
प्रकारार्थः। आकारस्य ईकारो निपात्यते। स्विन्न स्नात्वी मलादिव। पीत्वी सोमस्य वावृधे। स्नात्वा पीत्वेति प्राप्ते॥ आज्जसेरसुक्।७।१।५०। अव
र्णान्तादङ्गात्परस्य जसोऽसुक् स्यात्। देवासः। ब्राह्मणासः॥ श्रीग्रामण्योश्छन्दसि।७।१।५६। आमो नुट्। श्रीणामुदारो धरुणो रयीणाम्। सू
तग्रामणीनाम्॥ गोः पादान्ते।७।१।५७। विद्मा हि त्वा गोपतिं शूर गोनाम्। पादान्ते किम्। गवां शता पृक्षयामेषु। पादान्तेऽपि क्वचिन्न। छन्दसि सर्वे
षाम्वैकल्पिकत्वात्। विराजं गोपतिं गवाम्॥ छन्दस्यपि दृश्यते।७।१।७६। अस्थ्यादीनामनङ्। इन्द्रो दधीचो अस्थभिः॥ ई च द्विवचने।७।१।७७
। अस्थ्यादीनामित्यर्थः। अक्षीभ्यान्ते नासिकाभ्याम्॥ दृक्स्ववस्स्वतवसाञ्छन्दसि।७।१।८३। एषां नुम् स्यात् सौ। कीदृङ्। स्ववान्। स्वत
वान्॥ उरोष्क्य दृवेस्य॥ बहुलञ्छन्दसि।७।१।१०३॥

१९ व्यभिचारार्थम् अन्यथा आरंभसामर्थ्यात् कस्यचिदेव व्यभिचारः संभाव्येत टादावपीत्युक्ते हला
दावपि भवति अस्थभिः विभक्तावित्युक्तम् अविभक्तावपि भवति अस्थन्वन्तपरनस्याविभक्ति अस्थन्वन्तमित्यत्रास्थिशब्दान्मतुप् अनङि कृते नोनुडिति मतुपो नुट् अ
नङोन्त्कारलोपः दृक् आच्छीनद्योर्नुम् सावनडुह इत्यतो नुम् सावित्यनुवर्तते तदाह नुम् स्यादिति कीदृङिति किम्शब्दे उपपदे त्यदादिषु दृशोऽनालोचने कञ्चेति दृशेः
क्विन्नन्तं किमोरीदर्कीति किमः की आदेशः नुम् संयोगान्तस्य लोपः क्विन्प्रत्ययस्येति कुत्वेन नस्य ङः ङमो ह्रस्वादचीति ङुट् स्ववानिति अवतेरसुन् तुट् अवो यस्येति विग्रहः

स्ववः शब्दात्तुमिकृते सांतमहतेति दीर्घः संयोगांतलोपः तस्यासिद्धत्वान्नलोपो न स्वतवानिति त्वधातुः सो चोर इत्यर्थः ततो ऽसुन् स्वतवोवृद्धिर्यस्येति विग्रहः ॥ आततुरि
रितितरतेराङ्पूर्वात्गमेति किन्प्रत्ययः उत्वं तस्य द्विर्वचने ऽचीति स्थानिवद्भावात् इत्येतस्य द्विर्वचनं उरदत्वम् हृ ह्वरेः श्वीदितो निष्ठायामित्यतो निष्ठायामिति वर्त्तते तदाह नि
ष्ठायामिति अह्रुतमिति न ह्रुतम् अह्रुतम् अपरिह्रुताः छन्दसि बहुवचनांतस्यैव प्रयोगदर्शनाद्बहुवचनांतस्य निर्देशः सोमे इड्गुणाविति ह्रुरित्यादेशस्याभावोपि बोध्यः
ग्रसित ग्रसु अदने स्कभु स्तंभु रोधनार्थौ सौत्रौ चते याचने कस गतौ शसु हिंसायाम् शंसु स्तुतौ शासु अनुशिष्टौ नृत्त वनगतरणयोः वद् संभक्तौ ध्वन रणे ज्वल दीप्तौ क्षर

ततुरि ॥ ह्वृ ह्वरेश्छन्दसि ।७।२।३१। ह्वरेर्निष्ठायां ह्रुरादेशः स्यात् । अह्रुतमसि हविर्धानम् ॥ अपरिह्वृताश्च ।७।२।३२। पूर्वेण प्राप्तस्यादेशस्याभावो
निपात्यते । अपरिह्वृताः सनुयाम वाजम् ॥ सोमे ह्वरितः ।७।२।३३। इड्गुणौ निपात्येते । मा नः सोमो ह्वरितः ॥ ग्रसितस्कभितस्तभितोत्तभितचत्त
विकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ।७।२।३४। अष्टादश निपात्यन्ते । तत्र ग्रसु स्क
म्भु स्तम्भु एषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इण्णिपात्यते । युवं शचीभिर्ग्रसिताममुञ्चतम् । विष्कभिते अजरे । येन स्वः स्तभितम् । सत्येनोत्त
भिता भूमिः । स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य माभूदिति । चते याचने । कस गतौ । आभ्यां क्तः इडभावः । चत्ता इत अश्व
त्तामुतः ॥ त्रिधा ह श्यावमश्विना विकस्तम् । उत्ताना या द्वयं यद्धिकस्तम् ॥ ११ संचलने समूह्यसहने इत्येके अङ्गिरसो अपगत्यादिषु अष्टादशेति स्कभितः ॥

पाठपक्षे तु एकोनविंशतिः उदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इति उदितो वेति क्त्वायां वेट्त्वाद्यस्य विभाषेति निषेधे प्राप्ते इत्यर्थः विष्कभिता इति अनिदितामिति न ॥
लोपः वेः स्कभ्नातेर्नित्यमिति षत्वम् उत्तभितेति उदः स्थास्तम्भोरिति पूर्वसवर्णः सकारस्य थकारः तस्य झरो झरि सवर्णे इति लोपः अन्योपसर्गपूर्वस्य माभूदिति य ॥
दि स्यात् उत्तभितग्रहणं व्यर्थं स्यात् चत्ता इति चतशब्दाट्टापि उत्ता सह आकृणः निपातेन सह एकीकृत्य छेदः सुप दकाराणां संप्रदायसिद्धः भूयामो इति मंत्रे भू ॥
यामो इति यथा अस्य स्याविशस्तेति अन्येषामपीति पूर्वपदस्य दीर्घः ॥ ॥ ॥ ॥

नलुमतांगस्या॰लुमतेतिकिं।कार्यतेहार्यते।अत्रणेरनिटीतिणिलोपेपिणिजपेक्षावृद्धिर्भवत्येव।अंगस्येतिकिं।पंचसप्तकतीत्यादौप्रत्ययांतकार्यंसुप्तिङंतमितिप
दसंज्ञायथास्यात्।अस्मदिति।प्राचात्वव्ययास्मदितिपठितंतत्रअव्ययेत्वपेक्षितं।सदृशंत्रिषुइतिश्रुतेर्लिंगत्रयाचपरत्वेनअव्ययानामलिंगत्वात्।अव्ययीभावस्य

नलुमताऽङ्गस्य।१।१।६३।लुक्श्लुलुप्एतेलुमन्तः।लुमताशब्देनलुप्तेतन्निमित्तमङ्गकार्यंनस्यात्।कति२।कतिभिः।कतिभ्यः२।कतीनां।क
तिषुयुष्मदस्मद्षट्संज्ञास्त्रिषुसरूपाः।त्रिशब्दोनित्यंबहुवचनान्तः।त्रयः।त्रीन्।त्रिभिः।त्रिभ्यः।त्रेस्त्रयः।७।१।५३।त्रिशब्दस्यत्रयादेशःस्या
दामि।त्रयाणां।परमत्रयाणां।गौणत्वेतुनेतिकेचित्।प्रियत्रीणां।वस्तुतस्तुप्रियत्रयाणां।त्रिषु।द्विशब्दोनित्यंद्विवचनान्तः।त्यदादीनामः।७
।२।१०२।एषामकारोन्तादेशःस्याद्विभक्तौ।द्विपर्यन्तानामेवेष्टिः।द्वौ२।द्वाभ्यां३।द्वयोः२।द्विपर्यन्तानामितिकिं।भवान्।भवन्तौ।भवन्तः।संज्ञा
यामुपसर्जनत्वेचनात्वम्।सर्वाद्यन्तर्गणकार्यत्वात्।द्विर्नामकश्चित्।द्विः।द्वौ।द्वयः।द्वावतिक्रान्तोऽतिद्विः।हरिवत्।प्राधान्येतुपरमद्वौ।इत्यादि।पि
ओडुलोमिः।ओडुलोमी।उडुलोमाः।लोम्नोऽपत्येषुबहुषुकारोवक्तव्यः।वाह्वादीञोऽपवादः।ओडुलोमिं।ओडुलोमी।उडुलोमान्।इतीदन्ताः।वातप्र
मीःशितिउणादिसूत्रेणमाङःईप्रत्ययःकित्।वातम्प्रमिमीतेइतिवातप्रमीः।दीर्घाज्जसिच।वातप्रम्यौवातप्रम्यः।हेवातप्रमीः।अमिपूर्वः।वातप्रमी
म्यौ।वातप्रमीन्।वातप्रम्या।वातप्रमीभ्यां३।वातप्रम्ये।वातप्रम्यः२।वातप्रम्योः२।वातप्रम्यां।दीर्घत्वान्ननुट्।ङौतुसवर्णदीर्घः।वातप्रमी।वातप्रमीषु।ए
वंययीपप्यादयः।यात्यनेनेतिययीर्मार्गः।पातिलोकमितिपपीःसूर्यः।यापोःकिद्द्वेचेतिईप्रत्ययः।क्विवन्तवातप्रमीशब्दस्यतुअमिशसिङौचवि
शेषः।वातप्रम्यं वातप्रम्यः।वातप्रम्यि।एरनेकाचइतिवक्ष्यमाणेयण्प्रधीवत्।वेद्यास्त्रयस्त्रयस्यसबहुश्रेयसी।दीर्घङ्यन्तत्वाद्धलङ्याबि

तुक्वचनात्क्लीवत्वेपिलिंगांतराभावाच्च।त्रिशब्दइति।तरतेर्ड्रिन्।डित्वाट्टिलोपः।त्रेस्त्रयः।त्रेरितिषष्ठीनतुपंचमी।त्रयइत्यदंतंनतुसांतंनिजांत्रयाणामितिनिर्देशादित्य
भिप्रेत्याह।त्रिशब्दस्यत्रयादेशइति।नचनिजांत्रयाणामितिनिपातनादेवत्रयादेशोसिद्धेकिमनेनसूत्रेणेतिचेन्मैवं।अबाधकान्यपिनिपातनानिभवंतीत्यनेनज्ञापना

मीनातेः घादीनां ह्रस्वः स्यात् तो ह्रस्व इति वर्त्तते तदाह छिति ह्रस्व इति प्रमीणन्तीति हि ञ्मीनेति णत्वम् आरद्ग्मिति अस्तेर्लङ् तिप् आडजादीनामित्याट् अपृक्तस्य लुक् अस्तिसि
चस्तीडभावे अहन्नास्तेलुङ् ह्याद्लोपः हल्त्व विसर्गौ संहितायान्तु भोभगोइति रोर्यत्वम् लोपः शाकल्यस्येति यलोपः जसादिष्विति आदिशब्दः प्रकारे तेन ङ्वेयोगनि
र्दिष्टानामपि ग्रहणम् शतक्रत्व इति जसि चेति गुणाभावपक्षे प्रथमयोः पूर्वसवर्णे दीर्घोपि बहुलं छन्दसीति वचनाद्वचनमवतीति यणादेशः प्रवर्त्तते पश्वेइति घेर्ङिति इत्य

मीनातेर्निगमे। ७।३।८१। छिति ह्रस्वः। प्रमिणन्ति व्रतानि। लोके प्रमीणाति॥ अस्तिसिचोऽपृक्ते॥ बहुलं छन्दसि। ७।३।९७। सर्वमा इदम्। ह्रस्वस्य गु
णः। जसि च। जसादिषु छन्दसि वा वचनम्। प्राङ् णौ चङ्युपधायाः॥ अम्बा शतक्रत्वो। उपमा शतक्रतवः। पश्वे नृभ्यो यथा गवे। पशवे। नाभ्यस्तस्याची
ति निषेधे बहुलं छन्दसीति वक्तव्यम्॥ आ नु पश्चुजोषत॥ नित्यं छन्दसि। ७।४।८। छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋ नित्यम्। अवीवृधत्।
न छन्दस्यपुत्रस्य। ७।४।३५। अपुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न। मित्रयुः। क्याच्छन्दसीति उः। अपुत्रस्य किम्। पुत्रीयन्तः सुदानवः॥ अपुत्रा
दीनामिति वाच्यम्॥ जनीयन्तो न्वग्रवः। जनमिच्छन्त इत्यर्थः॥ दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति। ७।४।३६। एते क्यचि निपात्यन्ते। भाषाया
न्तु उप्रत्ययाभावात्। दुष्टीयति। द्रविणीयति। वृषीयति। रिष्टीयति॥ अश्वाघस्यात्। ७।४।३७। अश्व अघ एतयोः क्यचि आत् स्यात् छन्दसि। अश्वायन्तो
मघवन्। मा त्वा वृका अघायवः। न छन्दसीति निषेधेन ईत्वमात्रस्य किन्तु दीर्घस्यापीति। अत इदमेव सूत्रं ज्ञापकम्॥ देवसुम्नयोर्यजुषि का
ठके। ७।४।३८। अनयोः क्यचि आत् स्याद्यजुषि कठशाखायाम्। देवायन्तो यजमानाः। सुम्नायन्तो हवामहे। इह यजुःशब्दो न मन्त्रमात्रपरः कि
न्तु वेदोपलक्षकः। तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति। किं च। ऋग्वेदेऽपि भवति। स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः। यजुषीति किम्॥

साभावे यणादेशः जुजोषदिति जुषी प्रीतिसेवनयोः लेटि व्यत्ययेन परस्मैपदमिति प इतश्च लोपः परस्मैपदेष्विति लेटोऽडाटावित्यट् व्यत्ययेन शपः श्लुः द्वित्वम् न छन्दसीति ह
यथानन्तर्यो दीर्घत्वमात्रं प्रतिषिध्येत तर्हि अकृत्सार्वेति दीर्घः स्यात् अपवादे उत्सर्गस्थितेः अत आह ईत्वदीर्घौ नेति क्वचिदुक्तं तत्रेति व्याख्यानादिति भावः अत्र चराम्

निपातनं बहुत्वापेक्षमिति तेन छुंदसः प्रयोग एकवचनांतोप्युदाहृत इति भावः ततो ङीपा इति न्नन्तेभ्य इति विहितेन बभूथाँ निगमो वेदः एषां वेट् इडभावो निपात्य ते वृञः क्रादिसूत्रेणेडभावे सिद्धे निगम एवेति नियमार्थं निपातनं तदेतदाह भाषायां तु ववरिथेति सनिंससनिर्वांसमिति निप त्यते वा सोरिडिति नेड्वशि कृतीति निषेधे प्राप्ते निपातनम् पावका इति पुनंति पावयंति वा पावकाः पुनातेः पावयतेर्वा ण्वुल् टाप् स्थदिति स्थातेर्लेट् इति प्रस्ता

निपातनं बहुत्वापेक्षं सूत्रे बहुवचनं विकस्ता इति तेनैकवचनान्तोऽपि प्रयोगः साधुरेव। शसु शंसु शासु एभ्यस्तृच इडभावः। एकस्त्वष्टुरश्वस्या विशस्ता। ग्रावग्राभ उत शंस्ता। प्रशास्ता पोता। तरतेर्वृङ्वृञोश्च तृच उट् ऊट् एतावागमौ निपात्येते। तरुतारं रथानाम्। तरूतारम्। वरुतारम्। वरूतारम्। वरूत्रीभिः सुशरणो नो अस्तु। अत्र ङीबन्तनिपातनं प्रपञ्चार्थम्। वरूत्रशब्दो हि निपातितः। ततो ङीपा गतार्थत्वात्। उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते॥ ज्वल दीप्तौ। क्षर संचलने। टुवमु उद्गिरणे। अम गत्यादिषु। इह क्षरितीत्यस्यानन्तरं क्षमितीत्यपि केचित्पठन्ति। तत्र क्षमूष् सहने इति धातुर्बोध्यः। भाषायां तु ग्रस्तः स्कब्धः स्तब्धः चत्तः विकसितः। विशसिता। शंसिता। शासिता। तरीता। तरिता। वरीता। वरिता। उज्ज्वलति। क्षरति। पाठान्तरे क्षमति। वमति। अमति॥ बभूथाततन्थजगृभ्मववर्थेति निगमे ७।२।६४। विद्मात सुत्संयतश्चाबभूथ। येनान्तरिक्षमुर्वाततन्थ। जगृभ्मा ते दक्षिणमिन्द्र हस्तम्। त्वं ज्योतिषा वि तमो ववर्थ। भाषायां तु बभूविथ। आततिथ। जगृहिम। ववरिथेति॥ सनिंससनिवांसम् ७।२।६९ सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिट् एत्वाभ्यासलोपाभावश्च निपात्यते॥ पावकादीनां छन्दसि प्रत्ययस्थात्कादित्वं नेति वाच्यम्॥ हिरण्यवर्णाः शुचयः पावकाः॥ घोर्लोपो लेटि वा ७।३।७०। दधद्रत्नानि दाशुषे। सोमो ददद्गन्धर्वाय। यदग्निरस्मै ददात्॥

विति द्वित्वम् दधातिरिति स्थिते आकारलोपः लेटोडाटावित्यडागमः इतश्च लोपः परस्मैपदेष्विति इकारलोपः दाशुषे यजमानाय रत्नानि दधत् दध्यादित्यर्थः ददत् इति ददाते रूपम् लोपाभावे उदाहरणमाह ददादिति ॥ ८ ॥

नमूउरूषेकवचनेदधातेरित्वंनिपात्यते तदाह आशीर्लिङीतिमाद्भिरिति पद्न्नोमासइतिमासशब्दस्यमास्आदेशः॥ ॥नकवतेरिति अनुवृत्त्यर्थउपन्यासःकरोत्ये

नकवतेर्य्यङि॥कषेश्छन्दसि।७।४।६४।यङि अभ्यासस्यचुत्वन्नाकरीकृष्यते॥दाधर्तिदर्दर्तिदर्दर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संस
निष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्याऽगनीगन्तीतिच।७।४।६५॥एतेऽष्टादशनिपात्यन्ते।आद्या
स्त्रयःधृङोधारयतेर्वा।भवतेर्य्यङ्लुगन्तस्यगुणाभावः।तेनभाषायांगुणोलभ्यते।तिजेर्य्यङ्लुगन्तात्तङ्।ऋयतेर्लटिहलादिःशेषापवादोरेफ
स्यलत्वं।उत्वाभावश्चनिपात्यते।अलर्षिरपिधर्मसजकृत्सुरन्दर।सिपानिर्देशोनतन्त्रम्।अलर्तिदक्षआ।फणतेराङ्सर्वस्ययङ्लुगन्तस्यशतरिअ
भ्यासस्यनीगागमोनिपात्यते।आपनीफणत्।स्यन्देःसम्पूर्वस्ययङ्लुकिशतरिअभ्यासस्यनिक्।धातुसकारस्यषत्वम्।करोतेर्य्यङ्लुगन्त
स्याभ्यासस्यचुत्वाभावःकरिक्रत्।क्रन्देर्लुङिच्लेरङ्।द्विर्वचनंअभ्यासस्यचुत्वाभावोनिगागमश्चाकनिक्रदज्जनुषम्।अक्रन्दीदित्यर्थः।बिभर्तेर
भ्यासस्यजश्त्वाभावःरिगागमश्चयोभरिभ्रदोषधीषु॥ध्वरतेर्यङ्लुगन्तस्यशतरिअभ्यासस्यविगागमः।धातोर्ऋकारलोपश्चादविध्वतोरश्मयःसूर्य्य
स्याद्युतेरभ्यासस्यसम्प्रसारणाभावोऽत्वंविगागमश्चादविद्युतद्दीद्यच्छोशुचानः।तरतेःशतरिश्लौअभ्यासस्यरिगागमः।सहोर्जातरित्रतः।सृपेः
शतरिश्लौद्वितीयैकवचनेरीगागमोऽभ्यासस्य।वृजेःशतरिश्लावभ्यासस्यरीक्।मृजेर्लिटिणल्अभ्यासस्यरुक्।धातोश्चयुक्।गमेराङ्पूर्वस्य
लटिश्लावभ्यासस्यचुत्वाभावोनीगागमश्च।वस्यन्तीवेदागनीगन्तिकर्णं॥ससस्वेतिनिगमे।७।४।७४।सृजेर्लिटिपरस्मैपदंदुगागमोऽभ्यास
स्यचात्वन्निपात्यते।शृष्टिःससस्वस्थविरम्।सुषुवइतिभाषायाम्॥बहुलंछन्दसि।७।४।७८।अभ्यासस्यइकारःस्याच्छन्दसि।पूर्णांविवष्टिवशोरे

तद्रूपम्॥इतिसप्तमोऽध्यायः



ष्यतइतिस्थिकोचक्रुकोतिरिगागमःलोकेतुचरीकृष्यतेकषीवलःषडइति षडःनवस्थानेधारयतेर्वेतिसएवएयन्तः तन्नदाधर्तीत्यत्रधारयतेःशपःश्लौणिलुक्अभ्यासस्य

गीर्वाणितीर्वो रुपधायादीर्घ इकइति दीर्घः। ऋष्ण एवंत्तइति। अक्षिशब्दान्मतुप्। अस्थिदधिसक्थ्यक्ष्णामनङ्। रात्तः छंदस्यपि दृश्यतेइत्यनङ्। नुटोऽसिद्धत्वात्पूर्वं नलो
पेभूतपूर्वगत्या नुट्णत्वं। ननु यदि परादिरनुट् क्रियते तस्य मतुप्ग्रहणेन ग्रहणान्मादुपधायाइति वत्वं स्यात्। मतुप्मस्य तु न स्यात्। नुटा व्यवधानात्। यदि तु पूर्वांतो नु
यते तर्हि णत्वं न स्यात्। पदांतस्येति निषेधादिति चेत्सत्यम्। नुटोऽसिद्धत्वान्नोक्तदोषः। नन्वेवमवग्रहे दोषः स्यात्। अक्षण्वतीति णांतस्यावग्रहत्वेति अक्षेत्यकारांतमवग्र
हं पश्यंतीति चेत्सत्यम्। न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्तनीयं तस्माद्यथालक्षणं पदं कर्तव्यमिति महाभाष्ये स्थितम्। किंच इयिवांसमित्यादौ पद
त्वं विनापि अवग्रहः क्रियते पूर्वैभिरग्निभिरित्यादौ सत्यपि पदत्वेन क्रियतइति घस्येति। तरप्तमपोरित्यर्थः। तरप्तमपौ घइति तरप्तमपोर्घसंज्ञाविधानात्। सुपथिंतरइति।
सुपथिन्शब्दात्। द्विवचनविभज्योपपदेइति तरप्। नलोपः। तरपो नुट्। तस्यानुस्वारः। भूरिदान्नइति। भूरिदान्नः परस्य घस्य तुट् वाच्यइत्यर्थः। भूरिदावत्तरइति। आतो

गीर्वीनाम्नोनुट्। ८।२।१६। अन्नन्नान्मतोर्नुट् स्यात्। ऋष एव नः कर्णीवनः। अस्य न्वन्तं यदनस्या॥ नाद्घस्य। ८।२।१७। नान्तात्परस्य घस्य नुट्।
सुपथिन्तरः। भूरिदाव्नस्तुड्वाच्यः। भूरिदावत्तरो जनः। ईद्रथिनः॥ रथीतमं रथीनाम्। नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि। ८।२।६१। अस
देर्नत्र पूर्वान्नि पूर्वाच्च निष्ठाया नत्वाभावो निपात्यते। नसत्तमञ्जसा। निषत्तमस्य चरतः। असन्नं निषण्णमिति प्राप्ते। उदेर्नत्रपूर्वस्यानुत्तम्।
प्रतूर्तमिति त्वरतेः। तूर्वीत्यस्य वा। सूर्तमिति सृइत्यस्य। गूर्तमिति गुरी इत्यस्य॥ १९ मनिनित्यादिना दाधातोर्वनिप् तदंतात्तरप्। नलोपः प्रातिपदिकां
तस्येति नलोपः। तुडागमः। ईद्रथिनइति। रथिन इकारांतादेशो घे परे रथीतरइति रथशब्दादत इनिठनाविति मत्वर्थीय इनिः। तदंतात्तरप्। नकारलोपे कृते इकारस्य
ईकारादेशः यदि तु नकारलोपापवादो नकारस्यानेईकारो विधीयेत तदा तस्यासिद्धत्वादेकादेशो न स्यात्। रथीतममिति। इह पदकाराह्रस्वांतमवग्रह्णंति। अ
न्येषामपीति। अन्येषामपीति संहितायां दीर्घइति तदाशयः। नसत्तादीनि छंदसि विषये निपात्यंते नत्वाभावइति। रदाभ्यामिति प्राप्तस्य। निषत्तमिति सदिरप्रतेरिति
षत्वम्। अनुत्तममिति। अनुन्नमिति भाषायां एतन्निपातनारंभसामर्थ्याद्भाषायां तु दविदोरन्यतरस्यामिति विकल्पो नेत्याहुः। प्रतूर्तमिति। यदा त्वरतेस्तदा ज्वरत्वरेत्यादि
नाऊठ्। यदा तु र्वी हिंसायामित्यस्य तदा राल्लोपः। सृइत्यस्येति। निपातनादुत्वं रपरत्वं तु उरण्रपरइत्येव सिद्धं कार्यका ॥ ॥

दीर्घत्वञ्च निपात्यते धृङो वा शे प्राप्ते व्यत्ययेन शप् तत्र श्लावभ्यासस्य दीर्घत्वं च अत्र परस्मैपदमपि निपात्यतस्यैव यङ्लुक्यभ्यासस्य रुगाद्ययवादकं दीर्घत्वं निपात्य
तइति दर्धर्तीत्यत्र यङ्लुक्पक्षे दाधर्तीति निपातनेन प्राप्तस्य दीर्घस्याभावो निपात्यते रुग्रिकौ च लुकि ऋतश्चेत्येव रुक् सिद्धः श्लुपक्षे तु रुगपि निपात्यः दर्धर्षी
त्यत्र यङ्लुक्पक्षे न किंचिन्निपातनं किंतु श्लावेव भवतेर्यङ्लुगन्ताल्लोट् गुणाभावइति ननु भूसुवोस्तिङीत्येव गुणनिषेधे सिद्धे निपातनमनर्थकमिति चेत्सत्यम्
ज्ञापकार्थं तर्हि निपातनम् एतज्ज्ञापयति अन्यत्र यङ्लुगन्ते स गुणप्रतिषेधो न भवतीति तेन बोभवीत्यत्र भाषायां गुणनिषेधः सिद्धस्तदेतदाह तेन भाषायामिति ति
जर्यङ्लुक्यात्मनेपदं निपात्यते तदाह तिजेरिति ऋगतौ लटि सिपि श्लोः इति द्वित्वम् अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते अर्तिपिपर्त्योश्चेत्यभ्यास
स्य प्राप्तस्येत्वस्याभावो निपात्यते तदाह इयर्तेरिति करोतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य चुत्वाभावो निपात्यते ऋतश्चेति रिगागमस्तदाह करोतेरिति चुत्वाभावइति

प्रसमुपोदः पादपूरणे ।८।१।६। एषां द्वे स्तः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे । उपोप मे परामृश । किन्नोदुदुहर्षसे ॥ छन्दसीरः ।८।२।१५।
इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात् । हरिवते हर्यश्वाय ॥

कुहोश्चुरिति प्राप्तस्य विभर्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाभावो नि
पात्यते तदाह बिभ्रतेरिति जश्त्वाभावइति अभ्यासे चर्चेति प्राप्तस्य दविध्वतइति ध्वरतेर्यङ्लुगन्तस्य शतरि रूपम् नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः द्युतेर्यङ्लुग
न्तस्य शतरि अभ्यासस्य संप्रसारणाभावोऽत्वं च नि— पात्यते तदाह द्युतेरिति सम्प्रसारणाभावइति द्युतिस्वाप्योः संप्रसारणमिति प्राप्तस्य सरूवेति निगमे दाधर्त्यो
दिश्वेतत्पठितव्यम् विवष्टीति वशकान्तौ लटि तिपि शपः श्लो द्वित्वम् अभ्यासस्येत्वं व्रश्चेति षत्वम् ष्टुत्वम् ॥ इति सप्तमोऽध्यायः समाप्तः ॥ ॥ प्रसमुपोदः पादपूरणे समा
हारद्वन्द्वः समासान्तविधेरनित्यत्वाद्द्वन्द्वाच्चु दषहान्तादिति न टच् । प्रप्रायमग्निरिति । नात्र द्विर्वचनस्य किंचित्प्रयोजनं केवलं पादपूरणमेव कार्यम् न चैवं विधस्य भाषायां प्रयोगो
सीति सामर्थ्याच्छन्दस्येवेदं विधानमित्याहुः ॥ छन्दसीरः ॥ हरिवतेरिति । हरयो विद्यंते यस्येति हरिवान् तस्मै । हरिशब्दान्मतुपमकारस्य वकारः ॥ ९ ॥

अन्तः किमिति इतरोऽपि विदिताभिप्राय आह याज्यानामृचामिति याज्या नाम काश्चिद्वाक्यसमुदायरूपाः तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति सर्वान्तस्यैवेष्य
ते ग्रहणं तदर्थमेतद्ग्रहणमिति भावः अग्नीत्प्रेषणे परस्य च अग्नीधः प्रेषणमग्नीत्प्रेषणं तस्मिन्नाह अग्नीधः प्रेषण इति विभाषा पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति निगृह्यानि
गृह्येति ल्यबन्तं स्वमतात्प्रच्यावनं निग्रहः तस्यैव स्वमतस्य एवं किल त्वं निरुपपत्तिकमात्थेति शब्देन प्रतिपादनमनुयोगः तत्र यद्वाक्यं तदाह अत्र यद्वाक्यमिति निगृ
ह्यानुयोगे यद्वाक्यमित्यर्थः अद्यामावास्येत्येवं केन चित्प्रतिज्ञातं तमुपपत्तिभिर्निगृह्य तस्याभ्युपगममनुवदति अद्यामावास्येति आत्थेति तदेव विवृणोति अमावास्येत्येव

अन्तः किम् । याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात् । सर्वान्तस्य चेष्यते ॥ ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ।८।२।९१। एषामा
देः प्लुतो यज्ञकर्मणि । अग्नयेऽनुब्रू३हि । अग्नये गोमयानि प्रे३ष्य । अस्तु श्रौ३षट् । सोमस्याग्ने वीही३वौ३षट् । अग्निमा३वह ॥ अग्नीत्प्रेषणे परस्य च ।८
।२।९२। अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात्परस्य च । ओ३श्रा३वय ॥ विभाषा पृष्टप्रतिवचने हेः ।८।२।९३। प्लुतः । अकार्षीः कटं । अकार्षं हि३ । अका
र्षं हि । पृष्टेति किम् । कटं करिष्यति हि । हेः किम् । करोमि ननु ॥ निगृह्यानुयोगे च ।८।२।९४। अत्र यद्वाक्यं तस्य टेः प्लुतो वा । अद्यामावास्येत्यात्थ३ । अद्या
मावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते ॥ आम्रेडितं भर्त्सने ।८।२।९५। दस्यो३ दस्यो३ घातयिष्यामि त्वाम् । आम्रेडितग्रहणं द्वि
रुक्तोपलक्षणम् । चौर३ चौर३ ॥ अङ्गयुक्तं तिङाकाङ्क्षम् ।८।२।९६। अङ्गेत्यनेन युक्तं तिङन्तं प्लवते । अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म । तिङ्

मित्यादि दस्यो दस्यो इति वाक्यादेरामन्त्रितस्येत्यादिना द्विर्वचनं ननु द्विरुक्तसमुदाये परभागस्यैव प्लुतः प्राप्नोति न तु पूर्वस्य तस्य परमाम्रेडितमिति परभागस्यैवाम्रेडि
तसंज्ञाविधानात् दृश्यते द्वयोरपीत्याह आम्रेडितग्रहणमित्यादि द्विरुक्तोपलक्षणार्थमिति द्विरुक्तसमुदाये भागद्वयोपलक्षणार्थमित्यर्थः एतच्चाम्रेडितस्य भ
ने वृत्त्यसंभवाल्लभ्यते अङ्गयुक्तं आकाङ्क्षतीत्याकाङ्क्षं पचाद्यच् तिङन्तमिति आकाङ्क्षं तिङन्तमित्यर्थः अङ्ग कूज इति अङ्गशब्दोऽमर्षे कूज अव्यक्ते लोण्मध्यमपुरुषैक

लपस्याश्रयणेन परिभाषाणामसिद्धत्वप्रकरणेपि प्रवृत्तेः। गूर्तमिति। गूर्णमिति भाषायां॥ ॥अम्न उभयथेति व्याचष्टे। रुर्वा रेफो वेति। ससजुषो रुरिति नित्यं रुत्वे प्राप्ते प
क्षे रेफादेशार्थमिदम्। अम्नस् शब्द ईषदर्थे अम्नरत्तमित्तमिति यथा। अवो रक्षणम्। अम्न एवेति। यदा रुत्वं तदा भो भगो इति रो यत्वं लोपः शाकल्यस्येति लोपः। भुवश्च महाव्याहृ
तेर्भुवस् इत्येतस्य छन्दसि विषये रुर्वा रेफो वा। तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः इह तु मध्यमाया ग्रहणम्। महाव्याहृतेरिति किं भुवो विश्वेषु भुवनेषु ति
ङ्ग्रामेत भुवते छन्दसि लुङ्लङ्लिट इति वर्तमाने लङ् सिप् शपि गुणाभावश्छान्दसः बहुलं छन्दस्यमाङ्योगेपीत्यडभावः लाक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्या
हृतिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं तेन कापयतीत्यादौ पुक् सिध्यति भुव इति भुव इत्येतदव्ययमन्तरिक्षवाची महाव्याहृतिः ओमभ्यादानमारंभस्तदाह

अम्नरूधरवरित्युभयथा छन्दसि। ८।२।७०। रुर्वा रेफो वा। अम्न एव। अम्नरेव। उध एव। उधरेव। अव एव। अवरेव॥ भुवश्च महाव्याहृतेः। ८।२।७१। भुव
इति। भुवरिति॥ ओमभ्यादाने। ८।२।८७। ओंशब्दस्य प्लुतः स्यादारम्भे। ओ३म् अग्निमीळे पुरोहितम्। अभ्यादाने किम्। ओमित्येकाक्षरम्॥ ये यज्ञक
र्मणि। ८।२।८८। ये३ यजामहे। यज्ञेति किम्। ये यजामहे॥ प्रणवष्टेः। ८।२।८९। यज्ञकर्मणि टेरोमित्यादेशः स्यात्। अपां रेतांसि जिन्वतो३म्। टेः कि
म्। हलन्तोऽन्त्यस्य मा भूत्। याज्यान्तः। ८।२।९०। ये याज्यान्ता मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि। जिह्वामग्ने चकृषे हव्यवाहा३म्। ॥

आरंभ इति अत्र प्लुतश्रुत्याच्च परिभाषोपस्थानादच एव प्लुतः मकारस्त्वर्धमात्रः इति समुदायोऽध्यर्धतुर्यमात्रः संपद्यते ये यज्ञे ये इत्येतस्य यज्ञकर्मणि प्लुतो भवति प्रणवः यज्ञक
र्मणीति वर्तते यज्ञकर्मणि टेः प्रणवादेशः स्यात् तदाह यज्ञकर्मणीत्यादि जिन्वतोमिति जिविः प्रीणनार्थः लङिति प्टेः प्रणवादेशः टेः किमिति वाक्यस्य टेरित्यतः टेरित्यनुवर्तमा
ने पुनष्टेर्ग्रहणं किमर्थमिति प्रश्नः असति हि टिग्रहणेऽलोन्त्यस्येति वचनाद्यों त्योल् तस्योकारः स्यात् तस्मात्सर्वादेशार्थं टिग्रहणमित्याह हलन्तेत्यस्य मा भूदिति अर्जते विशेषा
भावाद्धलन्ते इत्युक्तं याज्यान्तः ये याज्यानाममन्त्रा इति याज्याकाण्डे पठ्यन्ते ये मन्त्राः याज्यानुवाक्याकाण्डमिति समाख्याते प्रकरणे ये मन्त्रा इत्यर्थः तेषामिति मन्त्राणामित्यर्थः तासा
मिति पाठे तासां याज्यानां इहेदमन्तग्रहणं टेरित्यस्य निवर्तकं वा स्याद्द्वितीयपक्षे वा आद्येऽचान्ते विशेषिते अजन्ताया एव याज्यायाः प्लुतः स्यात् पक्षान्तरे त्वन्तग्रहणमनर्थकं टेर्

याज्यांतेयाज्यांतइतिप्लुतःविष्णुभूतेइतिनन्विदंपरिगणनस्योदाहरणमयुक्तं यानतासूत्रेएवादूराद्धूतइत्युच्यते अत आह अदूराद्धूतइति नवक्तव्यमितिअन्यार्थमवश्यंक
र्तव्येपरिगणनेतेनैवसिद्धत्वान्अदूराद्धूतइतिनवक्तव्यं॥ॐ॥भद्रंकरोषिगोइरिति अत्रासर्वनामस्थानइतिप्रतिषेधात्सौपरतःपूर्वंपदंनभवति शोभनेमालेइइतिईदूदेदिति
प्रगृह्यसंज्ञा आमंत्रितेति अप्राप्ते एवप्लुतवचनं अग्नाइइति अग्निशब्दस्यसंबुद्धौरूपंसामंत्रितमितिआमंत्रितसंज्ञा तयोर्य्वीनन्विदंव्यर्थंइकोयणचीत्यनेनैवसि
द्धमत आह इद्वुतोरसिद्धत्वादिति ननुसिद्धःप्लुतःस्वरसंधिषुकथंज्ञायते प्लुतप्रगृह्या अचीति प्रकृतिभावविधानात् यस्यहिविकारःप्राप्नःतस्यप्रकृतिभावोविधेयः
प्लुतस्यासिद्धत्वेनतस्यस्वरसंध्याख्योविकारःप्राप्नोति अथप्लुतःसिद्धःकिमायातमिद्वुतोःउच्यते प्लुतप्रकरणेयत्कार्यंतत्स्वरसंधिषुसिद्धमितिसामान्येनज्ञापकमा

भद्रङ्करोषिगौ३रिति। अप्रगृह्यस्य किम्। शोभने माले३। आमन्त्रितेत्युक्ते सिद्धप्लुतविकारोऽयं वक्तव्यः॥ अग्ना३इ पत्नीवाः। तयोर्य्वौ वचि संहितायाम्
। ८।२।१०८। इदुतोर्यकारवकारौ स्तोऽचि संहितायाम्। अग्न३याशा। पटउवाशा। अग्न३यिन्द्रम्। पट३वुदकम्। अचि किम्। अग्ना३इ वरुणो संहितायां
किम्। अग्ना३इ इन्द्रः॥ संहितायामित्यध्यायसमाप्तेरधिकारः॥ इदुतोरसिद्धत्वादयमारम्भः। सवर्णदीर्घत्वस्य शाकलस्य वा निवृत्त्यर्थम्।
यवयोरसिद्धत्वात्। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्य बाधनार्थो वा॥ ९९ अयिष्यतेततश्चेदुतोरपिसिद्धत्वासिद्धएवयणादेशोऽत आ

ह्सवर्णदीर्घत्वस्येति यदीदंनोच्येत अग्ना३इ इन्द्रं पटा३उ उदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घःस्यात् अग्ना३याशेत्यादौ च इकोसवर्णेशाकल्यस्येतिप्रकृतिभा
वःस्यात्तद्बाधनार्थमिदंवक्तव्यमेव ननु च तन्निवृत्तये यत्नांतरमस्ति किं पुनस्तत्पुनःपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्त्यर्थःशाकलनिवृत्त्यर्थश्च अतश्चावश्यं वक्त
व्यं यदुक्तं प्लुतपूर्वःनचप्लुतविकारः भोइइंद्रभोइयिंद्रंगायतीति भोशब्दस्यकारस्यप्लुतःततःपरस्येकारस्यनिपातत्वात् प्रकृतिभावेप्राप्ते तं बाधित्वा यणादेशःतदेवंतस्या
वश्यंकर्तव्यत्वेनैवयणासिद्धेः अत आह यवयोरिति तथाचोक्तं वृत्तिकृता किंतु यणाभवतीह न सिद्ध्यति यदिदुतोर्यदयं विदधाति तेनोचममस्वरसंधिषु सिद्धौ शाकलदीर्घविधी
तु निवर्त्यौ इकृत्त्वयदाभवति प्लुतपूर्वःतस्य यणं विदधात्यपवादं तेन तयोश्च न शाकलदीर्घौ यणस्वरबाधनमेवतु हेतुः अयमर्थःइकोयणचीति यणादेशोन किंरूपं

वचनं ज्ञास्यसि जाल्मेति कुजनफलमस्मिन्नेव क्षणे ज्ञास्यसीत्यर्थः ॥ ॥ अङ्ग देवदत्तेति अङ्गशब्दोऽनुनये अङ्ग देवदत्तेत्येकं वाक्यं एतच्च मिथ्यावदसीत्यपेक्षते विचार्यमाणानां कोटिद्वयस्पर्शि ज्ञानं विचार इति कथ्यते विचार्यमाणस्तत्त्वज्ञानविषयीभूत उच्यते इह तु विचार्यमाणविषयत्वाद्वाक्यानि विचार्यमाणानि गृह्यन्ते इति सप्तम्येकवचनान्तस्य गृहे इत्यस्य एत्वोऽपृक्तस्येति प्लुतविकारः पूर्वं तु पूर्वेणैव सिद्धे नियमार्थमिदं तुशब्दस्तिष्ठतोऽवधारणार्थः यथैवं विज्ञायेत पूर्वमेव प्लुत इति मेवं विज्ञापि पूर्वं भाषायामेवेति उदाहरणे तु शब्दो वितर्के प्रतिश्रवप्रतिश्रवणार्थमाह अभ्युपगमेत्यादि अङ्गीकार इत्यर्थः प्रतिज्ञाने इति अत्रोभयत्रापि गतिसमासः

अङ्ग देवदत्त मिथ्या वदसि। आकाङ्क्षं किम्। अङ्ग पच नैतदपरमाकाङ्क्षति। भर्त्सने इत्येव। अङ्गाधीष्व भक्तं तव दास्यामि॥ विचार्यमाणानाम्। ८।२।९७। वाक्यानां टेः प्लुतः। होतव्यं दीक्षितस्य गृहा३इ। न होतव्य३मिति। होतव्यं न होतव्यमिति विचार्यते। प्रमाणेन वस्तुतत्त्वपरीक्षणं विचारः॥ पूर्वं तु भाषायाम्। ८।२।९८। विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु३ रज्जुर्नु। प्रयोगापेक्षं पूर्वत्वम्। इह भाषाग्रहणात्पूर्वयोगश्छन्दसीति ज्ञायते॥ प्रतिश्रवणे च। ८।२।९९। वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च। गां मे देहि भोः३। हन्त ते ददामि३। नित्यः शब्दो भवितुमर्हति३। दत्त किमात्थ३॥ अनुदात्तं प्रश्नान्ताभिपूजितयोः। ८।२।१००। अनुदात्तः प्लुतः स्यात्। दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते॥

अर्थद्वयेऽपि प्रतिपूर्वः शृणोतिः प्रसिद्धः आभिमुख्ये चेति अत्र लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः दत्त किमात्थ इति किं ब्रूषे इत्येवं पृच्छ्यते अत्र श्रवणाभिमुख्यं गम्यते अनुदात्तं प्रश्नान्ते प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः नानेन प्लुतो विधीयते किन्तु दूराद्धूतादिषु विहितस्य प्लुतस्योदात्तत्वे प्राप्ते प्रश्नान्ताभिपूजितयोरनुदात्तत्वगुणमात्रं विधीयते तदाह दूराद्धूतादिष्विति तत्रैषां वचनं व्यक्तिः प्रश्नान्ते अभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति तत्राभिपूजिते दूराद्धूते चेति प्लुत इति इतरत्र त्वनन्त्यस्यापि प्रश्नाख्यानयोरिति ॥ ६ ॥ ६ ॥

॥

तेनपुरातनमितिसिद्ध्यति।अन्यथापुराणप्रोक्तेष्वपिनिपातनात् एतद्व्याख्येतान्नेरपङ् इत्येवनसूत्रितं।तत्करोतिआचष्टेवेत्यर्थेतत्करोतीत्यादिनाणिचिततःक्वि पिप्रकृत्यैकाच्इतिप्रकृतिभावाट्टिलोपाभावेह्रस्वस्यपितीतितुकिकृते।ततोबहुत्वविवक्षायामामिकृतेनेरयङिन्नयाणामितिरूपासिद्धेः।नचवार्णादांगंवलीय इतिवुकःप्रागेवायंस्यादितिशंक्यं।युगपत्प्रवृत्तावेवांगस्यबलीयस्त्वात्।केचिदिति।नेःसंबधिन्यामीतिविज्ञानान्नेर्णेनयादेशोनभवतीतितेषामाशयः।वस्तुतस्त्वि ति।अर्थप्राधान्यबोधकस्यबहुवचनस्याभावान्नेर्णात्वेपियादेशोन्याय्यः।प्रियास्मेत्यादावस्याद्यनङ्दितिभावः।त्यदादीनामः।अष्टनआविभक्तावित्यतोनुवर्तनादा ह।विभक्ताविति।विभक्ताविति किम्।तद्यदसोर्लुकालुप्तत्वात्प्रत्ययलक्षणेन द्विपर्यंतानां।किमिति।युष्मदस्मद्भ्यामनयोरिष्यभावेपिदोषोनास्ति।आत्वयत्व लोपैर्विशेषविहितैरात्वस्यबाधनात् तथाकिम्शब्देपिनदोषः।किमःकादेशस्यविशिष्यविधानादितिप्रश्नः।भवानिति।भवत्सुइतिस्थितेतकारस्यानेअत्वे कृते अतोगुणइतिपररूपेउगिदचामितिनुमिसतिसर्वनामस्थानइत्यनेनदीर्घेसुलोपेनलोपेचसतिभवा इतिरूपंस्यादितिभावः।भवंताविति।पूर्ववत्तकारस्या त्वेपररूपेनुमिदीर्घेचभवानाविरूपंस्यादितिभावः।उडुनीवलोमानियस्यतस्यापत्यंऔडुलोमिःइञोपवादइति।तथाचबहुत्वेअकारांतोयंउडुलोमशब्दः स औडुलोमिशब्दादन्यएवतस्यचइकारांतेषुव्युत्पादनंप्रासंगिकमितिबोध्यं॥ ॥इतिइदंताः॥ ॥ क्विदिति।नेनआतोलोपइटिचेत्यालोप इतिभावः॥ क्विवंतवात्तप्रमीइति।माङ्धातोःक्विपिईत्वमवकारावितिनिषेधादीत्वंनेति शंकायांमीनातेरेवक्विप्बोध्यः।यद्वा।ईप्रत्ययांतवात्तप्रमीशब्दाद्वाचारक्विवं तात्कर्तरिक्विप्बोध्यः।बहुश्रेयस्यइति।प्रशस्यस्यश्रइतीयसुनिश्रादेशः।उगितश्चेतिङीप्।बहुश्रेयसीति।स्त्रियाःपुंवदितिपुंवद्भावः।ईयसश्चेतिनकप् नाप्युपसर्जनह्रस्वः।ईयसोबहुव्रीहौनेतिनिषेधात्॥ ॥

॥ ॥

प्रसिध्यतियतोयमाचार्यःइदुतोर्व्वौविदधातितौचेदुतौस्वरसंधिषुसिद्धौममेतिसूत्रकारेणोकीभूतस्यवचने स्वंचोदितेपरिहरति शाकलदीर्घविधौतुनिवर्त्याविति शाक
लस्येदंशाकलेकरणवाद्भियोगोनेदत्यणएवनञ्चोदयतिइकूचयदेतिवार्त्तिककारोपिइकःसुतएवस्वयणंविदधातिसचप्रकृतिभावस्यैवशाकलदीर्घविध्योरपिअपवादःततश्चते
नैवयणाएतयोरपिइदुतोःशाकलदीर्घौनभविष्यतइतिनार्थएतेनपरिहरति यणःस्वरेतियणःस्वरबाधनार्थमेवहेतुःसूत्रारंभस्येति॥ ॥ मतुअनुबंधपरित्यागेनसकारां
तस्यवसइत्यस्यमतुपासहद्वंद्वःअल्पाचतरस्यापिसोर्न्नःपरनिपातःमरुत्वइति मरुतोयस्यसंतीतिमतुप्असिन्नइतिवत्वंततःसोमत्वर्थइतिभत्वाज्जश्त्वंनहरिवोमेदिन

मतुवसोरुसंबुद्धौछन्दसि।८।३।१।रुइत्यविभक्तिकोनिर्देशः।मत्वन्तस्यवस्वन्तस्यचरुःस्यात्।अलोऽन्त्यस्येतिपरिभाषयानकारस्य इन्द्र
मरुत्वइहपाहिसोमम्।हरिवोमेदिनंत्वा।छन्दसीरइतिवक्तव्यम्॥ग्राव्णान्साहान्मीढ्वस्त्रा।६।१।१२।एतेक्वसन्तानिपात्यन्ते।मीढ्वस्तोकायत
नयाय॥वनउपसंख्यानम्॥क्वनिब्वनिपोःसामान्यग्रहणम्।अनुबन्धपरिभाषातुनोपतिष्ठते।अनुबन्धस्यहानिर्देशात्।यस्त्वायन्तंवसुनाप्रा
तरित्वः॥इणःक्वनिप्॥उभयथर्क्षु।८।३।८।अम्परेछविनकारस्यरुर्वापञ्चूंस्तांश्चक्रे॥दीर्घादटिसमानपादे।८।३।९।दीर्घान्नकारस्यरुर्वा
स्यादटितौचेन्नाटौएकपादस्थौस्याताम्॥देवाँअच्छासुमती।महाँइन्द्रोऽयओजसा।उभयथेत्यनुवृत्तेर्नेह।आदित्यान्याचिषामहे॥

मिति हरयोविद्यंतेयस्येतिमतुप्हरिवच्छब्दात्संबुध्येकवचनेउगिदचामितिनुम्हल्ङ्यादिलोपेसंयोगांतलोपेचकृतेनकारस्यरुःसंयोगांतलोपोरुत्वेसिद्धोवक्तव्यइ
तिवचनाद्दृशिचेत्युत्वंप्रसंगादाहग्राव्णानितिक्वनिप्वनिपोःसामान्येनग्रहणमिति अनुबंधनिर्देशात्तदनुबंधकपरिभाषायाअनुपस्थानात्क्वनिपोपिग्रहणंप्रातरि
त्वइतिप्रातरेतीतिक्वत्यन्येभ्योपिदृश्यंतेइतिक्वनिप्ह्रस्वस्यपितिकृतितुक्तदाहइणःक्वनिबितिउभयथानेष्ठुव्यप्राणानितिवर्तते तेनैवनित्येप्राप्तेविकल्पार्थंवचनं प
ञ्चूंस्तांश्चक्रेइतिपञ्चन्तानितिस्थितेनस्यरुः पूर्वेणात्रानुनासिकइतिवानुनासिकःअत्रत्वात्तोटिनित्यमित्यनुनासिकःरेफस्यविसर्गःतस्यविसर्जनीयस्येतिसःदीर्घाद

टिसमानपदे एकपर्यायस्समानशब्दस्तदाह तौचेन्नाटावेकपादस्थाविति नाटीनकारश्चेत्ते देवाँ अच्छामहाँ इन्द्रो इति देवान् अच्छा महानिति न स्यात् ॥ ॥ आतोटि नित्य
मिति नित्यमनुनासिकः नेहेति एतेन महान् हि स इति बह्वृचानां पाठोपि व्याख्यातः आकरेतु महां ही त्युदाहृतं तच्छाखांतरे अन्वेषणीयं एवंचेति विकल्पस्यैव व्यवस्थितत
याप्रकृतसूत्रत्यागेन महद्दृष्टवं सूत्रारंभेतु व्यत्ययोपि शरणीकरणीय इति महान् ह्मोत इति भावः स्वतवान् पायौ स्वतवानित्येतस्य नकारस्य रुर्वा पायुशब्दे परे स्वतवा

आतोऽटि नित्यम्। ८।३।३। अटि परतः रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः। महाँ इन्द्रः। तैत्तिरीयास्तु अनुस्वारमधीयते। तत्र छान्दसो व्यत्यय इ
ति प्राञ्चः। एवञ्च सूत्रस्य फलञ्चिन्त्यम्॥ स्वतवान्पायौ। ८।३।११। रुर्वा। भुवस्तस्य स्वतवाँ ४ पायुरग्ने॥ छन्दसि वाऽप्राम्रेडितयोः। ८।३।४९। विसर्ग
स्य सो वा स्यात्। कुवोः प्रशब्दमाम्रेडितञ्च वर्जयित्वा। अग्ने त्रातऋतस्कविः। गिरिर्न विश्वतस्पृथुः। नेह। वसुनः पूर्व्यस्पतिः। अप्रेत्यादि किम्। अ
ग्निः प्रविद्वान्। परुषः परुषः॥ कः करत्करति कृधिकृतेष्वनदितेः। ८।३।५०। विसर्गस्य सः स्यात्। प्रदिवो अपस्कः। यथा नो वस्यसस्करत्। सुपेश
सस्करति। उरुणस्कृधि। सोम मन्त्रचारुम्मघवत्सु नस्कृतम्। अनदितेरिति किम्। यथा नो अदितिः करत्॥ पञ्चम्याः परावध्यर्थे। ८।३।५१। पञ्च
मीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः। दिवस्परि प्रथमं जज्ञे। अध्यर्थे किम्। दिवस्पृथिव्याः पर्योजः॥ पातौ च बहुलम्। ८।३।
५२। पञ्चम्या इत्येव। सूर्यो नो दिवस्पातु॥ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु। ८।३।५३। वाचस्पतिं विश्वकर्म्माणम्। दिवस्पुत्राय सूर्या
य। दिवस्पृष्ठं मन्दमानः। तमसस्पारमस्य। परिवीत इडस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु॥ इडाया वा। ८।३।५४। पतिपुत्रादि
षु परेषु। इडायास्पुत्रः। इडायाः पुत्रः। इडायास्पदे। इडायाः पदे॥ ९९

इति तवक्षोसि तेनोधातुः ततोऽसुन् स्वं तवो यस्यासौ स्वतवान् दृक्स्ववः स्वतवसा
छन्दसीति नुम् परुषः परुष इति वीप्सायां द्विर्वचनं कः करत्करिति कृञो लुङ् मंत्रे घसेत्यादिना च्लेर्लुक् इति पिग्रणः हल्ङ्यादिलोपः बहुलं छन्दस्यमाङ्योगेपीत्य
डभावः करदिति कृञ एव लङ् कृमृदृरुहिभ्यश्छन्दसीति च्लेरङ् ऋदृशोऽङि इति गुणः करतीति लट् व्यत्ययेन शप् कृधीति लोट् सेर्हिः श्रुशृणुपृकृवृभ्यश्छन्द

सीतिहेर्षिरादेशः स्तात् इति रूपमेवतः पर्योजइति अत्र परिः सर्वतोभावे पातौ चक्रचित्यन्यतेपताविति धातुनिर्देश इति अन्ये तूदाहरणपर्यालोचनयालोडं
नानुकरणमन्यंते षष्ठ्याः वाच स्यातिमिति तत्पुरुषे कृति बहुलमिति षष्ठ्युपलुक् ॥ ❀ ॥ निसस्तपतावासेवनं पौनःपुन्यं ततोन्यस्मिन्नित्यर्थः युष्मत्तत्ततक्षु
षिति सकारान्तानुकरणात् परस्यसुपसकारस्यनुम् विसर्जनीयशर्व्यवायेपीति षत्वम् ह्रस्वात्तादावित्यतः तादाविति वर्तते तदाह तकारादिष्विति एतद्युष्मर

निसस्तपतावनासेवने। निसः सकारस्य मूर्द्धन्यः स्यात्। निष्टप्तं रक्षो निष्टप्ता अरातयः। अनासेवने किं। निस्तपति। पुनः पुनस्तपतीत्यर्थः॥
युष्मत्तत्ततक्षुष्वन्तःपादम्। ८।३।१०३। पादमध्यस्थस्य सस्य मूर्द्धन्यः स्यात्तकारादिषु परेषु। युष्मदादेशाः त्वंत्वातेतवाः। त्रिभिष्ट्वं देव सवितः।
तेभिष्ट्वा। अभिष्टे। अप्स्वग्ने सधिष्टव। अग्निष्टद्विश्वम्। द्यावापृथिवी निष्टतक्षुः। अन्तःपादं किम्। तदग्निस्तदर्यमा। यन्म आत्मनो निन्दाभू
दग्निस्तत्पुनराहजातवेदा विचर्षणिः। अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यगः। यजुष्येकेषाम्। ८।३।१०४। युष्मत्तत्ततक्षुषु परतः सस्य मू
र्द्धन्यो वा। अर्चिर्भिष्ट्वम्। अग्निष्टेऽग्रम्। अर्चिर्भिष्टतक्षुः। पक्षे अर्चिस्त्वमित्यादि॥ स्तुतस्तोमयोश्छन्दसि। ८।३।१०५। नृभिष्टुतस्य नृभिस्तुत
स्य गोष्टोमम्। गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम्॥ पूर्वपदात्। ८।३।१०६। पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा। यदिन्द्रा
ग्नी दिविष्ठः। युवां हि स्थः स्वर्पती॥ सुञः। ८।३।१०७। पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः। ऊर्ध्व ऊ षुणः। अभी षुणः ॥

एवविशेषणेनेतरयोर्व्यभिचारात् त्वंत्वातेतवा इति एतेषामेव संभव इत्यर्थः स्तुतस्तोमयोः एतयोः परतः सस्य षत्वं स्यात् पूर्वपदादित्येव सि द्ध इति पूर्वपदं पूर्वप
दमिति सामान्यत आश्रियते न तु समासावयव एवेति वाक्येपि तेनैव सिद्धं षत्वमिति भावः ततश्च स्तुतस्तोमग्रहणं प्रपंचार्थं छंदोग्रहणं तूत्तरार्थं कर्तव्यमेव उ
सुण इत्यादि इकः सुञीति पूर्वपदस्य दीर्घत्वं न सु इत्यादेशस्य न च धातुस्थोरुषुभ्य इति णत्वं ॥ ॥

सनोतेरनः अनंतस्य सनोतेः सस्य षः स्यात् गोषा इति जनसनखनक्रमगमो विट् विड्वनोरित्यात्वं गोस्त्रनिरिति छन्दसि वनिसनिरक्षिमथामितीन् प्रत्ययः निव्यभि भ्यो नरपरेत्य गो नेति वर्तते तत्र निषेधविकल्पे विधिविकल्प एव फलतीत्याह मूर्द्धन्यो वा स्यादिति अभ्यष्टौदिति उञो हहिर्लुकि हलीति हहिः छन्दस्यदव ग्रहात् हि गो विच्छिद्य पठ्यते इत्यवग्रहः ऋत्वा सावग्रह अवग्रह स्यात् नृमणा इत्यादीति अत्र संहिताधिकारात् संहिताकाल एव एतेषां णत्वं पदकाले त्ववग्रहः क्रियते तेनावग्रहयोग्यत्वादकारो व्यग्रह इत्युक्तः नतु तदशापन्नः अत्र हि नृमना इति पदकाले व गृह्यते नश्च धातुस्थात् निमित्तादुत्तरस्य उरुशब्दात् सुशब्दाच्च परस्य नस

सनोतेरनः। ८।३।१०८। गोषा इन्द्रो नृषा असि। अनः किम्। गोसनिः॥ सहेः पृतनर्ताभ्यां च। ८।३।१०९। पृतनाषाहम्। ऋताषाहम्। चात्। ऋतीषाहम्॥ निव्यभिभ्योऽड्व्यवाये वा छन्दसि। ८।३।११९। सस्य मूर्द्धन्यः। न्यषीदत्। न्यसीदत्। व्यषीदत्। व्यसीदत्। अभ्यष्टौत्। अभ्यस्तौत्॥ छन्दस्यृदवग्रहात्। ८।४।२६। ऋकारान्तादवग्रहात्परस्य नस्य णः। नृमणाः। पितृयाणाम्॥ नश्च धातुस्थोरुषुभ्यः। ८।४।२७। धातुस्थात्। अग्ने रक्षाणः। शिक्षाणो अस्मिन्। उरु णस्कृधि। अभी षु णः। मो षु णः॥ इत्यष्टमोऽध्यायः॥ ॥ इति कौमुद्यां वैदिकप्रकरणं समाप्तम्॥ ॥

इत्येतस्य णः स्यात् धातौति स्थातीति धातुस्थो रेफः षकारश्च उरु इति स्वरूपग्रहणं षु इति कृतषत्वस्य सुञो ग्रहणं न सप्तमीबहुवचनस्य तेनेन्द्रो धर्ता गृहेषु न इत्यादौ न नसिति नासिका देशस्य नसादेशस्य च सामान्येन ग्रहणं रक्षाण इति रक्ष इति लोटो मध्यमपुरुषैकवचनांतं द्व्यचोऽतस्तिङ इति दीर्घः उरु णः स्कृधीति स्कृञो लोट् से र्हिः श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः कः करत् इत्यादिना विसर्जनीयस्य सत्वं अभी षु ण इति इकः सुञीति दीर्घः एवं मो षु ण इत्यत्रापि सर्वत्रोदाहरणे अस्मदादेशो नस् इति श्रीमन्मौनिकुलतिलकायमानगोवर्द्धनभट्टात्मजरघुनाथभट्टात्मजेन जयकृष्णेन कृतायां सिद्धान्तकौमुदीव्याख्यायां वैदिकखंडं समाप्तिमगमत्॥

श्रीगणेशायनमः॥ ॥अनुदात्तंपदं परिभाषेयमिति नाधिकारोऽस्वरितत्वात् आद्युदात्तश्च समानोद्देशपठितश्चोदात्तइत्यादीनामसंग्रहश्चस्यात्परिभाषायालि
गापेक्षायामाह स्वरविधाविति सूत्रेऽनुदात्तशब्दोऽर्शआद्यजंतः पदसामानाधिकरण्यात् अत्रानुदात्तस्यक्रियमाणत्वात् तद्भिन्नउदात्तःस्वरितोवावर्ज्यतइत्याह तमे
कमिति यत्तदोर्नित्यसंबंधाद्यस्योदात्तस्वरितविधानंतस्यैववर्जनं एकग्रहणंविधीयमानस्योपलक्षणं तेनतवैचान्तश्चयुगपदितिद्वयोर्वर्जनं इंद्राबृहस्पतीइत्यत्रदेवता
द्वंद्वेचेतिसूत्रेणपदद्वयस्यापिप्रकृतिस्वरेविधेयेत्रयाणांवर्जनं बृहस्पतिशब्दोहिवनस्पत्यादित्वादाद्युदात्तइतिस्थितं गोपायतमिति गुपइत्यस्यधातोरित्यंतोदा
त्तः ततआयप्रत्ययः आद्युदात्तश्चेतिप्रत्ययस्वरेणाद्युदात्तः ततःसनाद्यंताइतिधातुसंज्ञायांधातोरितियकाराकारउदात्तः सचप्राग्उक्तयोरुदात्तयोः सतोःपश्चात्प्र
वृत्तत्वात्सतिशिष्टः अतोबलवान् तस्यानुदात्तौसुप्पिताविव्यनेनानुदात्तेनशवकारेणसहातोगुणइतिपररूपेकृतेएकादेशउदात्तेनोदात्तइत्युदात्तः यसहमादेशः

श्रीगणेशायनमः॥अथस्वरप्रकरणम्॥अनुदात्तम्पदमेकवर्ज्जम् ६।१।१५८ परिभाषेयंस्वरविधिविषया यस्मिन्पदेयस्योदात्तःस्वरितोवा
विधीयतेतमेकमचंवर्ज्जयित्वा शेषन्तत्पदमनुदात्ताचकंस्यात् गोपायतन्नः अत्रसनाद्यन्ताइतिधातुत्वेधातुस्वरेण यकाराकारउदात्तः
शिष्टमनुदात्तं सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतिवाच्यम् तेनोक्तोदाहरणेगुपेर्धातुस्वरः आयस्यप्रत्ययस्वरश्चनशिष्यते ॥

तस्यतास्यनुदात्तेन्ङिःददुपदेशादित्यनेनादुपदेशात्परत्वादनुदात्तत्वं तस्यउदात्तोदनुदात्तस्येतिस्वरितः नन्वन्नमितिस्वरितमाश्रित्यानुदात्तं पदमितिपरिभाषयाशे
षनिघातःस्यादितिचेन्नैवं यथोद्देशपक्षाश्रयणेनेयंपरिभाषात्रिपाद्यांनप्रवर्त्ततइत्यत्रज्ञापकं तन्यतास्तित्वंयतोनावइतिचसतिशिष्टेति योहियस्मिन्सतिशिष्यतेस
शिष्टःतस्यबाधकोभवतीत्यर्थः एतच्चसतिशिष्टस्यबाधकत्वंन्यायसिद्धंतथाहि उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनयाशेषनिघातःक्रियते तत्रोत्सर्गस्याप
वादस्यवाचरमायाप्राप्तिस्तत्राणाउपस्थानेपूर्वाप्रवृत्तिर्बाध्यते तद्यथा औपगवत्वमित्यत्राण्प्रत्यये त्वप्रत्ययेचआद्युदात्तश्चेतिप्रवर्त्तमानंस्वस्यैवप्रथमप्रवृत्तिंबाधते
द्वितीयप्रवृत्त्यालक्ष्यंपरिनिष्ठापयतीतिदिक् ननुयदिसतिशिष्टःस्वरोबलीयस्तर्हिसतिशिष्टत्वाद्विकरणस्वरोपिबलीयःस्यात् तथाचघ्नतीत्यादिमध्योदात्तंपदं

॥ ॐ ॥ श्रीस्वरप्र० १

अन्यत्रेति सतिशिष्टोपि विकरणस्वरः प्रत्ययस्वरं न बाधत इत्यर्थः अत्र चत्वापकं तासेः परस्य लसार्वधातुकस्यानुदात्तविधानं तथा हि यद्यपि लावस्थायां तासिर्विधीयते तत्
थापि लकारमात्रापेक्षत्वादन्तरंगेषु परस्मैपदादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सतिशिष्टत्वात् शेषनिघातेनैव सिद्धेरनर्थकं तत्स्यात् गृणीतइति अन्तोदात्तं पदं भ
वतास्यनुदात्तेति लसार्वधातुकनिघातो न अदुपदेशादिति तपरकरणात् आप्रत्ययस्यादन्तत्वाभावात् तिङ्ङतिङ इति निघातस्तु न भवति यद्वृत्तान्नित्यमिति निषेधात् स हि व्य
वहितेपि प्रवर्तते तस्यएवेति तस्य आद्युदात्तस्येत्याद्युदात्तः स्वरः शिष्यत इत्यर्थः अनुदात्तस्य देवीमिति देवशब्दोऽच्प्रत्ययान्तत्वाच्चित इत्यन्तोदात्तः पचादिषु देवडिति पाठा
त् टिड्ढेति ङीप् तस्यानुदात्तौ सुप्पितावित्यनुदात्तत्वे यस्येति चेत्यकारलोपः नन्वनुदात्तस्येति व्यर्थं नह्यनुदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति न च प्रसज्यत इति प्रसंगः कर्म
णि घञ् कर्षात्वतो घञोन्त उदात्त इत्यन्तोदात्तत्वं उपसर्गस्य घञ्यमनुष्ये बहुलमित्युपसर्गस्य दीर्घः तं वहन्तीति प्राग्घितादिति यत् तित्स्वरितः तस्मिन् यस्येति लोपः अत्र
स्वरिते परे उदात्तलोपोऽस्त्येवेति वाच्यं स्वरिते हि विधीयमाने परिशिष्टमनुदात्तपरमेकं वर्जमित्यनुदात्ते तत्कृत उदात्तलोप इति चेत्सत्यं माहि धुक्षातामित्यत्र दुहे र्लु

अन्यत्रेति किम् यज्ञं यज्ञमभि वृधे गृणीतः अत्र सति शिष्टोऽपि आत्त्यस्य स्वरो न शिष्यते किन्तु तस्यैव अनुदात्तस्य च यत्रोदात्तलोपः ६।१।१६
१ यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् देवीं वाचम् अत्र ङीबुदात्तः चौ ६।१।२२२ लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्त उदात्तः स्यात् उदा
त्तनिवृत्तिस्वरापवादः देवद्रीचीं नयत देवयन्तः ॥ ९९

आत्मनेपदमातां शल इगुपधेति क्सः आतामित्यस्य तास्यनुदात्तेन्ङिददुपदेशादिति लसार्व
धातुकानुदात्तत्वं क्सः प्रत्ययस्वरेणोदात्तः क्सस्याचीत्यकारलोपः अत्र कर्षात्वतो घञोन्त उदात्त इत्यतः अन्त इत्यधिकारादन्त्यस्योदात्तत्वं स्यात् सतित्वस्मिन्नादेर्भ
वति ननु यत्रोदात्तलोप इत्युच्यमाने कथमन्त्यस्य प्रसंगः न हि तदुदात्तलोपस्य निमित्तमिति चेत्तर्हि आदेरपि न प्राप्नोति तस्याप्युदात्तलोपं प्रत्यनिमित्तत्वात् क्सस्याचीत्य
जादौ प्रत्यये विधानात् तस्माद्यत्र प्रत्यय उदात्तलोपस्तत्संबन्धिनोऽनुदात्तस्योदात्तो भवतीति सूत्रार्थेनान्ताधिकारादन्त्यस्य प्रसंगः यदि तु निमित्तत्वानादरेण यत्रानुदात्ते
परत उदात्तलोपस्तस्योदात्तो भवतीति सूत्रार्थस्तदानुदात्तस्येति न वक्तव्यं अन्त्यस्य प्रसंगाभावात् न च माहि धुक्षातामित्यत्र तिङ्ङतिङ इति निघातः स्यादिति वाच्यम्
चेति निषेधात् उदात्तनिवृत्तीति कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्याचत्यकारस्याचइति लोपे सति अनुदात्तस्य चेति सूत्रेणोदात्तः प्राप्तस्तस्यायमपवाद इत्यर्थः।

देवद्रीचीमिति देवअच् इति स्थिते विष्वग्देवयोरिति देवशब्दस्याद्र्यादेशः उगितश्चेति ङीप् अच इत्यंचतेरकारलोपः चाविति दीर्घत्वं ङीतीकार उदात्तः ततः पश्चो
दात्तादनुदात्तस्य स्वरित इति स्वरितत्वं ॥ ॥ अतद्धित इति चौपः स्वरः स तद्धिते परतो न भवतीत्यर्थः अन्यथा देवद्रीचीमित्यादौ यथोदात्तनिवृत्तिस्वरं बाधते तथा
दाधीच इत्यादौ प्रत्ययस्वरमपि सतिशिष्टस्वरो बाधेत तस्मादतद्धित इति वार्त्तिकं अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्यायमपवाद इति फलितं दाधीच इति दधि अच्
अण् इति स्थिते ऽण्स्वर उदात्तत्वे कृते ऽच इत्यकारलोपः ततः सतिशिष्टत्वाच्चाविति स्वरः प्राप्तो निषिध्यते तथा चाण्प्रत्ययस्वरेणैव व्यवस्था तदाह प्रत्ययस्वर एवात्रे
ति अग्न इत्यादि सामंत्रितमित्यनेनामंत्रितत्वं षाष्ठिकस्याष्ट स्येति आमंत्रितस्य चेत्यस्य इमम्मे इति मेशब्दात्परत्वमाश्रित्य गंगेप्रभृतीनां त्रयाणामनुदात्तः स च पद

अतद्धित इति वाच्यम् दाधीचः माधूचः प्रत्ययस्वर एवात्र आमन्त्रितस्य च ६।१।१९८ आमन्त्रितविभक्त्यन्तस्यादिरुदात्तः स्यात् अग्न
इन्द्र वरुण मित्र देवाः आमन्त्रितस्य च ८।१।१९ पदात्परस्यापादादौ स्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् प्रागुक्तस्य षाष्ठस्याप
वादोऽयमाष्टमिकः इमम्मे गङ्गे यमुने सरस्वति अपादादौ किम् शुतुद्रि स्तोमम् आमन्त्रितम्पूर्वमविद्यमानवत् अग्न इन्द्र अत्रेन्द्रादी
नान्निघातो न पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात् नामन्त्रिते समानाधिकरणे सामान्यवचनम् समानाधिकरणे आमन्त्रिते प
रविशेष्यं पूर्वमविद्यमानवन्न अग्ने तेजस्विन् अग्ने त्रातः सामान्यवचनं किम् पर्यायेषु माभूत् अघ्न्ये देवि सरस्वति ॥ १९ पादे स एव संहि

तायां नु स्वरितात्संहितायामनुदात्तानामिति वक्ष्यमाणप्रचयापरपर्याया एकश्रुतिः प्रवर्त्तते अत एवेति षाष्ठेनामंत्रितस्य चेत्यनेनाद्युदात्तः आमंत्रितं पूर्वं अग्न इन्द्रेति सर्वो
णाक्षुनाद्युदात्तानि निघातो नेति आष्टमिकेनेति भावः नामंत्रिते अत्रोत्तरसूत्रस्थं सामान्यवचनमत्र संबंधनीयमिति भाष्यं तद्व्याचष्टे विशेष्यमिति विशेष्यसमर्पक
मित्यर्थः क्वचित्तु नामंत्रिते समानाधिकरणे सामान्यवचनमिति पाठः स त्वनुरोधेनेति ज्ञेयं अग्ने तेजस्विन्नित्यादि अग्ने इत्यस्याविद्यमानत्वात् तेजस्विन्नित्यस्य त्रात
रित्यस्य चाष्टमिकनिघातः अघ्न्ये देवि सरस्वतीति तैत्तिरीयके ब्राह्मणे सहस्रमतीं प्रक्रम्य इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्न्ये नामानि इत्यत्र

इडेकाव्येविहव्येइतिपाठः सत्तुशाखांतरेद्रष्टव्यः समानाधिकरणग्रहणंपाविनिमत्तेऽयंरेद्रवरुणाइत्यादौ व्यधिकरणानिवृत्त्यर्थं भाष्यकृन्मतेविस्पष्टार्थं सामान्यव चनापेक्षत्वात्तत्रसामानाधिकरण्यस्यावश्यंस्थितत्वात्॥ ॥सामान्यवहुवचनमिति पूर्वनिषेधस्यास्यविकल्पस्यचविषयविभागार्थं देवीःषडिति अत्रदेवीरित्या मन्त्रितंनाविद्यमानवत् तेनषडित्यस्यनिघातः शरण्याइति शरणेरक्षितत्वेतत्रसाधवःशरण्याः तत्रसाधुरितियत् द्वितीयस्येति षष्शब्दस्यशरण्यशब्दस्यचेत्यर्थः वामेन्निते परस्यांगवदिति तस्यैवपरस्यामंत्रितस्यांगवदेकदेशवद्भवतितद्ग्रहणेनगृह्यतइत्यर्थः षष्ठ्यामंत्रित अत्रषष्ठीशब्देनषष्ठ्यर्थाविभक्तिरुच्यते तेनगोषुस्वा

सामान्यवचनंविभाषितंविशेषवचने ८।१।७४ अत्रभाष्यकृताबहुवचनमितिश्रुतम् सामान्यवचनमितिचपूर्वसूत्रेयोजितम् आमन्त्रितान्तेविशेषणेपरे पूर्वम्बहुवचनान्तमविद्यमानवद्वा देवीःषडुर्वीरुरुणःकृणोत अत्रदेवीनांविशेषणंषडिति देवाःशरण्याः इहद्वितीयस्यनिघातोवैकल्पिकः सुबामन्त्रितेपराङ्गवत्स्वरे २।१।२ सुबन्तमामन्त्रितेपरेपरस्याङ्गवत्स्यात्स्वरेकर्तव्ये द्रवत्पाणीशुभस्पती शुभइतिशुभेःक्विबन्तात्षष्ठ्यन्तस्यपरशरीरानुप्रवेशेषाष्ठिकमामन्त्रिताद्युदात्तत्वम् नचाष्टमिकोनिघातःशङ्क्यः पूर्वामन्त्रितस्याविद्यमानत्वेनपादादित्वात् यत्तेदिवोदुहितर्मर्तभोजनम् इहदिवःशब्दस्याष्टमिकोनिघातः परश्वनाश्वन् षष्ठ्यामन्त्रितकारकवचनम् षष्ठ्यन्तमामन्त्रितान्तंप्रतियत्कारकन्तद्वाचकञ्चेतिपरिगणनंकर्त्तव्यमित्यर्थः तेनेहन अयमग्नेजरिता एतेनाग्नेब्रह्मणा समर्थोनइत्यावासिद्धम् पूर्वाङ्गवच्चेतिवक्तव्यम् आतेपितर्मरुताम् प्रतित्वादुहितर्दिवः अव्ययानान्न उच्चैरधीयान॥ १८ मिन्नित्यत्रापिपरांगवद्भावःस्यादिति

परश्वनाश्वन्निति आङ्परयोःखनिशृभ्यांडिच्चेतिकुप्रत्ययांतोंतोदात्तः षष्ठ्यन्तं आमंत्रितांतंप्रति यत्कारकमिति यद्यप्यामंत्रितस्यद्रव्यवचनत्वान्नकारकापेक्षातथापि आमंत्रिततपाथातुवाच्याक्रियातस्यास्तदपेक्षास्तीतितत्कारकमित्यर्थः पितर्मरुतामिति अत्रमरुतामितिपरंपूर्वस्यपितरित्यस्यांगवद्भवति पितरित्यामंत्रितनिघातेनानुदात्तंततःपरंमरुतामित्येतदप्यनुदात्तमेवभवतीत्यर्थः अव्ययानांनेति तेनोच्चैरधीयानेत्यत्रामंत्रितस्यचेत्याद्युदात्तत्वेन नचनिषेधवैयर्थ्य

निपाता आद्युदात्ता इत्याद्युदात्तत्वस्य निवारणादिति वाच्यं स्वरादिष्वंतोदात्तयोरुच्चैर्नीचैःशब्दयोः पाठात्॥ ॥अव्ययीभावस्य त्विति अव्ययीभावश्चेति अव्ययी
भावस्याव्ययसंज्ञासूत्रे तु स्वस्वरोपचारा इति गणनादन्यत्राव्ययसंज्ञाभावेनाव्ययानांनेति निषेधो न प्रवर्त्तत इति भावः उपाग्न्यधीयानेति परांगवद्भावेनामंत्रितस्ये
त्याद्युदात्तत्वं अभ्यभीति अभिशब्द उपसर्गाश्चाभिवर्जमित्याद्युदात्तनिषेधात् फिट्स्वरेणांतोदात्तः तस्य नित्यवीप्सयोरिति द्वित्वं तस्य परमाम्रेडितं अनुदात्तं चेति प
रस्यानुदात्तत्वं तस्मिन्नेव परे इकारस्योदात्तस्य यणि कृते उदात्तयणः परत्वाच्चकाराकारात्स्वरितः खलप्व्शब्दः कृदुत्तरपदप्रकृतिस्वरेणांतोदात्तः तस्य ओः सुपीति
यण् स उदात्तयण् ततः परो ङि प्रत्ययः सुप्त्वादनुदात्तः तस्यानेन स्वरितः उदात्तयणो हल्पूर्वादित्युदात्तत्वं तु न नोङ्धात्वोरिति निषेधात् तस्य च स्वरितेकारस्य यणि
ततः परस्याशाशब्दाकारस्यानेनैव स्वरितः आशाशब्दो हि आशाया अदिगाख्या चेदित्यंतोदात्तत्वादनुदात्तादिः अस्येति आशाशब्दप्रथमाकारस्यानिकस्येत्यर्थः

अव्ययीभावस्य त्विष्यते उपाग्न्यधीयान उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८।२।४ उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्या
नुदात्तस्य स्वरितः स्यात् अभ्यभिहि स्वरितस्य यणः खलप्व्याशा अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न एकादेश उदात्ते
नोदात्तः ८।२।५ उदात्तेन सहैकादेश उदात्तः स्यात् वोऽश्वाः क्वावरम्मरुतः॥ ९९ शेषेति आशाशब्दस्य निघातो नेत्यर्थः ननु यणादेशं प्रति स्वरितस्या

सिद्धत्वात्स्थानिन्येव यण् प्रवृत्तः यथा ओ न ढ इत्यत्र हूतशब्दे द्वित्वप्रवर्तते न तु ढशब्दे न च स्वरितयणः परस्येत्याश्रयणात्सिद्धत्वं शंक्यं तथा सति उदात्तादनुदात्त
स्य स्वरित इत्यनेन यत्र स्वरितः क्रियते तत्रापि त्व्सिद्धत्वं न स्यात् न चेष्टापत्तिः लक्ष्यविरोधात् प्रत्यग्निरुषसामग्रमख्यदित्यादौ स्वरितादर्शनात् न च नोदात्तस्वरि
तोदयमिति निषेधः शंक्यः अनंतरस्येति न्यायेनोदात्तादनुदात्तस्येति यत्र प्राप्तिस्तन्मात्रस्य निषेधात् अन्यथा खलप्व्याशान्या अग्निर्यीत्या अस्मा नित्या दावपिनि
षेधापत्तिरिति चेत् अत्राहुर्भाष्यकाराः योगविभागः करिष्यते उदात्तयणः परस्यानुदात्तस्य स्वरितो भवति ततः स्वरितयणः उदात्तयण इत्यनुवर्त्य ते उदात्तयण इ
त्येवं योऽभिनिर्वृत्तः स्वरितस्तद्यणः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः एवं चाश्रयात्सिद्धत्वं नान्यस्य एकादेश इति उदात्तयोरेव स्थानित्वे आंतरतम्यादे

वसिद्धं अन्यतरस्यामनुदात्तत्वे स्वरितत्वे वा आंतरतम्यात्स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नुदाहरणद्वयमाह कवोस्मा इत्यादि बहुवचनस्य वस्नसावित्यनादात्तं सर्वं
मपादादावित्यधिकारात् इस् अनुदात्तः अशेः कनिति व्युत्पाद नारम्भशब्द आद्युदात्तः वसो रुत्वं उत्वं एङः पदान्तादतीति पूर्वरूपं केति किमोत् कातीति किमः कादेशः
तित्स्वरितं अवरशब्दः स्वांगशिटामदंतानामित्युदात्तः तयोर्दीर्घ उदात्तः॥ ॥ स्वरितो वीदमित्यादि विशब्दो निपातत्वादाद्युदात्तः इदंशब्दः फिट्स्वरेणांतोदात्तः
योरेकादेशः स्वरितः दिविशब्दे उडिदंपदाद्यितिविभक्तिरुदात्ता ईयते इङ् गतौ दिवादिः तिङ्ङतिङ इति निहतम् अनेकादेश उदात्तः इकारयोः स्वरित इति ह्रस्वेकार
योरेवेत्यर्थः दीर्घप्रवेशेत्विति द्वितीयत इत्यत्र उदात्त इति एकादेश उदात्त इत्यनेन इयं च व्यवस्थोक्ता अन्येषामपि तदीयप्रातिशाख्यानुसारेणेया इ

स्वरितो वानुदात्ते पदादौ ८।२।६ अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् पक्षे पूर्वसूत्रेणोदात्तः वी ३ दं ज्योतिर्हृदये अ
स्य श्लोको द्वितीयते व्यवस्थितविभाषात्वादिकारयोः स्वरितः दीर्घप्रवेशे तूदात्तः किं त्वएङः पदान्तादिति पूर्वरूपे स्वरित एव तेऽवदन् सो
३ यमागात् उक्तं च प्रातिशाख्ये इकारयोश्च प्रश्लेषे क्षेप्राभिनिहतेषु चेति उदात्तादनुदात्तस्य स्वरितः ८।४।६६ उदात्तात्परस्यानुदात्तस्य स्व
रितः स्यात् अग्निमीले अस्याप्यसिद्धत्वाच्छेषनिघातो न॥

ति

''वेरूपे इति तेवदन्नित्यादौ ते इति तच्छब्दः फिट्स्वरेणांतोदात्तः जसः सुप्त्वादनुदात्तो सुप्पि
तावित्यनुदात्तः तयोरेकादेश उदात्तः अवदन्निति वदे र्लङि प्रथमपुरुषबहुवचनेन्तेत्यतिङ्ङतात्परस्य तस्य तिङ्ङतिङ इति निघातः सोयमिति स इति तच्छब्दस्य प्र
थमैकवचनं तच्छब्दः फिट्स्वरेणांतोदात्तः सुँ इ सुप्त्वादनुदात्तः तस्य रुत्वे उत्वे गुणे च कृते एकादेशेनोकार उदात्तः अयमितीदमः प्रथमैकवचनं फिट्स्वरेणांतोदा
त्तं तयोरेङः पदान्तादिति पूर्वरूपे ओकारः स्वरितः इकारयोश्च प्रश्लेष इति ह्रस्वयोरिकारयोः सवर्णदीर्घे ह्रस्वयोर्यत्र सवर्णदीर्घः स प्रश्लेष इत्युच्यते उदात्तस्वरितस्था
नेयोयण् सक्षेप्रः संधिः यत्र एङः पदान्तादितिस अभिनिहतसंधिरुच्यते तेषु स्वरितः स्वीक्रियत इत्यर्थः वीदं ज्योतिः अभ्यमिहि तेवदन्निति क्रमेणोदाहरणानि
उदात्तादनुदात्तस्य अनतयोर्व्यवचीत्यतः संहितायामित्यनुवर्तते तेन पदकालेऽनुदात्तमेव अग्निमीले इति अग्निशब्दः फिट्स्वरेण प्रत्ययस्वरेण वांतोदात्तः अस्मु

यूस्त्र्याख्यौ॥ ईश्चउश्चयू।आख्यानादीदीर्घयोरेवग्रहणं।अविभक्तिकोयंनिर्देशइत्येके।दीर्घाज्जसिचेतिनिषेधस्यवाऽऽङ्दसीतिपाक्षिकत्वात्प्रथमयोःपूर्वसवर्णदी
र्घइत्यन्ये।इहप्रत्ययस्यैवग्रहणमितिपरिभाषानोपतिष्ठते।नेयङुवङ्स्थानावस्त्रीतिनिषेधाल्लिंगात्तेनप्रध्येप्रध्याइत्यादौनदीकार्यंस्यादेवास्त्रियंआचक्षाते
स्त्र्याख्यौ।मूलविभुजादित्वात्कः।चक्षिङःख्याञ्आतोलोपइटिचेत्यालोपः।ईदूदन्ताविति।इहवर्णयोरेवसंज्ञेत्यपिपक्षोस्ति।आच्छीनद्योरितिसूत्रस्वरसात्तयोः
स्त्र्याख्यत्वंतुङ्यादिषुस्वतःतन्त्रीलक्ष्मीरित्यादौतुस्त्रीवाचकवर्णसमुदायेघटकत्वेनप्रवेशात्।तेननद्यन्तादिव्यवहारोनविरुध्यते।एवंशेषोघ्यसखीत्यत्रापिइव
र्णोवर्णयोरेवघिसंज्ञेतिपक्षोप्यस्तीतिबोध्यं।तेनघ्यन्ताजाद्यन्तयोर्घ्यन्तंपरमितिव्यवहारःसंगच्छते।वर्णसंज्ञापक्षेअसखीत्यस्यसखिभिन्नस्यावयवइत्यर्थोनतु
सखिशब्दावयवंवर्जयित्वेति।तेनसमुदायस्यसखिशब्दभिन्नत्वादतिसखिनेत्यादिनिर्बाधमित्यवधेयं।स्त्रियामित्यनुवर्तत्वेआख्याग्रहणंनित्यस्त्रीत्वलाभार्थं

यूस्त्र्याऽऽख्यौनदी।१।४।३।ईदूदन्तौनित्यस्त्रीलिङ्गौनदीसंज्ञौस्तः।प्रथमलिङ्गग्रहणंच॥पूर्वस्त्र्याख्यस्योपसर्जनत्वेपिनदीत्वंवक्तव्यमित्य
र्थः।अम्बार्थनद्योर्ह्रस्वः।७।३।१०७।अम्बार्थानांनद्यन्तानांच ह्रस्वःसम्बुद्धौ।हेबहुश्रेयसि।शसिबहुश्रेयसीन्॥आण्नद्याः।नद्यन्तात्परेषांङि
तामाडागमस्स्यात्।आटश्च।६।१।९०।आटोऽचिपरेवृद्धिरेकादेशस्स्यात्।बहुश्रेयस्यै।बहुश्रेयस्याः।नद्यन्तात्परत्वान्नुट्।बहुश्रेयसीनां॥ ॥

इत्याशयेनाह।नित्यस्त्रीलिंगाविति।यूकिं।मात्रे।स्त्र्याख्यावितिकिं।ग्रामण्ये।पूर्वमिति।वृत्तेःप्रागित्यर्थः।संज्ञायाःयथोद्देशप्रवृत्तौन्यायसिद्धमिदं।कार्यकालपक्षे
तुवाचनिकमित्याहुः।वर्णसंज्ञापक्षाश्रयेणाह।नद्यन्तानामिति।हेबहुश्रेयसीति।अत्रह्रस्वविधानसामर्थ्याद्गुणोनप्रवर्तते।अन्यथाअंबार्थनद्योर्गुणइत्येवब्रूयात्।नच
लाघवाभावःशंक्यः।ह्रस्वग्रहणेमात्राधिक्यात्।ह्रस्वस्यगुणइत्युत्तरसूत्रेगुणग्रहणात्यागेनसुतरांलाघवसंभवाच्च।अन्येतुकृतेपिह्रस्वेयदिगुणइष्टःस्यात्तर्हिवार्था
नांह्रस्वइत्युक्त्वानदीह्रस्वयोर्गुणइत्येवब्रूयादित्याहुः।तत्रपदलाघवाभावेपिप्रक्रियालाघवमस्तिपरंतुजसिचेत्यत्रह्रस्वस्येत्येकदेशानुवृत्तौक्लेशोस्तीतिबोध्यं॥आ
ण्नद्याः।अण्नद्याइत्येवसुवचं।विधानसामर्थ्यादतोगुणइत्यस्याप्रवृत्तौयथायथंवृद्धिसवर्णदीर्घाभ्यांबहुश्रेयस्यैबहुश्रेयस्याइत्यादिरूपसिद्धेः।ननुपरत्वादाय
नइत्वाध्यतइत्युत्तरग्रन्थपर्यालोचनयाङेरामितिकृतेतस्यनुडागमनिवारणार्थमड्विधानावश्यकत्वात्सामर्थ्यमुपक्षीणमितिचेत्।एवंतर्हिह्रस्वनद्यापइत्यनेनतरंङेर्नी॥

दूरत्वं यावति देशे प्रकृतिप्रयत्नोच्चारितसंबोध्यमानेन न श्रूयते किंत्वधिकं प्रयत्नमपेक्षते तत्संबुद्धौ दूरं भवति एकश्रुतिरिति उदात्तादीनां स्वराणामविभागेनावस्थान
मेकश्रुतिः आगच्छेत्यादि दूराद्धूते चेति वाक्यस्य टेः प्लुत उदात्तः प्रत्युदाहरणे तु स्वयमेव भवति तत्राङुपसर्गोऽभिवर्जमित्याद्युदात्तः गच्छेति तिङ् तस्य निघातः भोशब्दो
निपाता आद्युदात्ता इत्याद्युदात्तः शेषस्यामंत्रितनिघातः ॥ ॥ यज्ञ त्रैस्वर्येण वेदे मंत्राः पठ्यन्ते तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते मंत्र इति
एत त्वाजपेति पर्युदासाल्लभ्यते तेनोहादिषु न अत एव स्वाहेन्द्रशत्रुर्वर्द्धस्वेति समासांतोदात्तत्वे कर्त्तव्ये आद्युदात्तमशक्तमिति प्रसिद्धिः जपादीनीति जपन्यूङ्खसामानीत्य
र्थः अग्निर्मूर्द्धेति अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयं अपां रेतांसि जिन्वती २ अगेर्निर्नलोपश्चेति अग्निशब्दः प्रत्ययस्वरेणाथ फिट्स्वरेणान्तोदात्तः श्वोक्षपूषन्प्लीहक्लेदस्नेहकनि
न्युवृधितक्षिराजिधन्वीत्यतः कनिन् वर्त्तमाने श्वसुक्षन्पूषन्नित्यत्र मूर्द्धन् शब्दः कनिन्प्रत्ययांतोऽन्तोदात्तो निपातितः दिव्शब्दात्परस्य षष्ठ्येकवचनस्य ऊडिदंपदा

यज्ञकर्म्मण्यजपन्यूङ्खसामसु १।२।३४ यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन्वर्ज्जयित्वा अग्निर्मूर्द्धा दिवः ककुत् यज्ञेति किम् स्वाध्या
यकाले त्रैस्वर्यमेव अजपेति किम् ममाग्ने वर्चो विहवेष्वस्तु जपो नाम उपांशुप्रयोगः यथा जले निमग्नस्य न्यूङ्खा नाम षोडश ओंकाराः गीतिषु
समाख्या उच्चैस्तरां वा वषट्कारः १।२।३५ यज्ञकर्म्मणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा ॥ ९ ॥ ० ॥ ॥

दित्युदात्तत्वं ककुब्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः पातेर्डतिः पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः अथेपि वन्संप्रसारणं च पित्वान्ङी षष्ठ्येकवचनस्योदात्तयणो हल्पूर्वा
दित्युदात्तत्वं इदम्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः आप्नोतेः क्विप् ह्रस्वश्च ऊडिदमिति विभक्तेरुदात्तत्वं रीङ्सृजिभ्यां तुन् इत्यसुन्प्रत्ययः नित्स्वरेणाद्युदात्तो रेतःश
ब्दः जिन्वतीति जिन्व तेः प्रीणनार्थस्य तिपि पितिङ्ः तिङ् इति निघातः प्रणवष्टेरिति प्रयोगकाले प्रणवः ममेत्यादि युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं अग्नेशब्दस्यामंत्रितनिघा
तः वर्चः शब्दोऽसुन्प्रत्ययान्तः विश्वीत ह्वयतेर्हुः संप्रसारणं चेत्यप्रत्यये धाथादिसूत्रेणान्तोदात्तत्वं उच्चैस्तराम् वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते समानार्थत्वात् द्वाव
पिहितौ देवतासंप्रदानकस्य दानस्य द्योतकौ नन्वेवं प्रतिपत्तिलाघवार्थं वौषट्शब्द एव कुतो नोक्त इति चेत् विचित्रा हि सूत्रस्य कृतिः पाणिनेः क्वचिदक्षरलाघवमाश्री

स्यादनुदात्तः अभिपूर्वइति एकादेशउदात्तः ईळेइतितईडस्तुतौलटि उत्तमपुरुषैकवचनम् द्वयोश्चास्यस्वरयोर्मध्यमेत्यसंपद्यतेसडकारोळकारइतिवक्ष्यमाणेनप्रातिशा
ख्येनडस्यळः तिङ्ङतिङः इतिनिहते ईकारस्यस्वरितः नचमकारेणव्यवधाने स्वरविधौव्यंजनमविद्यमानवदितिपरिभाषणात् एवंसर्वत्रज्ञेयं ननुतित्स्वरितमित्यस्मात्
तरमिदंवक्तव्यं एवंचस्वरितग्रहणंनकर्त्तव्यंभवतीत्याशंक्याह अस्येति यदितत्रक्रियेत अनुदात्तंपदमेकवर्जमित्येतत्प्रवर्त्तेतइहप्रकरणेनप्रवर्त्ततेस्वरितस्यासिद्धत्वा
त् तेनद्वयोरप्युदात्तस्वरितयोः श्रवणंसिद्धं ॥ ॥ तमीशानासइति तमितितच्छब्दस्यद्वितीयैकवचनमंतोदात्तम् ईशानशब्दाज्जसिआज्जसेरसुगित्यसुगागमेकृतेरूपं
ईशऐश्वर्ये अस्माच्छानच् चित्त्वादंतोदात्तः जसःसुप्त्वादनुदात्तत्वे ईकारस्यसकाराकारस्यचस्वरितत्वं नोदात्त उदात्तस्वरितोउदयोयस्मादितिबहुव्रीहिः उदयशब्दः पर
शब्देनसमानार्थः प्रातिशाख्येषुप्रसिद्धः लाघवार्थंपरशब्देप्रयोक्तव्येमंगलार्थमुदयशब्दः प्रयुक्तः तथाचोक्तं भाष्ये मंगलादीनिमंगलमध्यानिमंगलांतानि शास्त्राणि

तमीशानासः नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ८।४।६७ उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितोनस्यात् गार्ग्यादिमतेतुस्या
देव प्रयआरुः वोऽम्बाः३क्का३भीशवः एकश्रुतिदूरात्सम्बुद्धौ १।२।३३ दूरात्सम्बोधनेवाक्यमेकश्रुतिः स्यात् त्रैस्वर्यापवादः आगच्छभोमा
णवक ॥ ॥

प्रथंतेवीरपुरुषाणिभवंत्यायुष्मंतपुरुषाणिच — इहादौवृद्धिशब्दोमध्येशिवशब्दः शिवशर्मरिष्टस्यकरइति अंतेचायमुदयशब्दइ
तिपाणिनीयेमंगलंकृतं प्रयआरुरिति येइतियच्छब्दस्यप्रथमाबहुवचनंफिट्स्वरेणांतोदात्तं आरुरिति ऋगतौलिटिप्रथमपुरुषबहुवचनेझिः तस्यपरस्मैपदाना
मित्युस् प्रत्ययस्वरेणोदात्तः नचतिङ्ङतिङः इतिनिघातः शंक्यः यद्वृत्तान्नित्यमितिनिषेधात् आकारस्योदात्तस्वरितपरस्येतिवक्ष्यमाणेनसन्नतरादेशः वोम्बाः वो
ति अत्रापिस्वरितात्संहितायामित्याकारस्यसन्नतरः क्वेतिकिमोत्तिस्वरितएकश्रुति संबोधनंसंबुद्धिरित्यनेनान्वर्थस्यसंबुद्धिशब्दस्यग्रहणंनएकवचनंसंबुद्धिरितिपारिभाषि
कस्य सतितस्यग्रहणे आगच्छतदेवाब्राह्मणाइत्यत्रनस्यात्तदाह दूरात्संबोधनेइति अन्वर्थग्रहणंचदूरादित्यनेनसंबध्यमानत्वात् विभक्तेः दूरत्वमदू
रत्वंचसंभवति संबोधनस्यक्रियारूपत्वादपादानत्वाद्दूरादितिविशेषणासंभवः दूरत्वंनदेशात्स्वरूपमाश्रीयतेअनवस्थितत्वात् किंतर्हिसंबोधनक्रियापेक्षया

शब्देनाऽनेनानुदात्तो विधीयते देवाब्रह्माणा इति देवब्रह्मणोर्वैयधिकरण्ये पदद्योरप्याद्युदात्तत्वे ततः परस्या

देवब्रह्मणो सुब्रह्मण्यायामेव देवाब्रह्माणा इति पठ्यते तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते देवाब्रह्माणा इति देवब्रह्मणोर्वैयधिकरण्ये पदद्योरप्याद्युदात्तत्वे ततः परस्या सामानाधिकरण्यं तदा विभावितं विशेषवचनेष्विति पूर्वस्य पक्षे विद्य

नुदात्तस्य स्वरितः तस्यानेनानुदात्तः आमन्त्रितनिघातसूत्रस्य न पूर्वामन्त्रिताविद्यमानत्वेन पदात्परत्वाभावात् यदा तु सामानाधिकरण्यं तदा विभावितं विशेषवचने इति पूर्वस्य पक्षे विद्य

मानत्वात् पदात्परत्वात् ब्रह्माणा इत्यस्य निघातोपि भवति अस्मिन्पक्षे देवशब्देव शब्दस्यैवानेनानुदात्तत्वं विधेयम् ब्रह्मग्रहणं तु न कर्तव्यम् स्वरित अनुदात्तानामिति जातौ बहुव

चनम् तेनैकस्य द्वयोर्बहूनां च भवति एकस्य पचति द्वयोः अग्निमीले पुरोहितं बहूनां तु मूल एव दर्शितं इमंमे इति इदम् शब्दः प्रातिपदिकस्वरेणान्तोदात्तः विभक्तिरनुदात्तात्यदा

द्यत्वेऽमि पूर्वः एकादेश उदात्तः मे इत्यनुदात्तं अनुदात्तं सर्वमपादादावित्यधिकारात्तस्य उदात्तादनुदात्तस्य स्वरितः तस्मात्परेषां गंगे प्रभृतीनामुदात्तानामेकश्रुतिः सर्वे एते आमन्त्रि

तनिघातानुदात्ताः ननु मे इत्यस्य स्वरितस्य उदात्तविधायकं त्रिपादीस्थत्वादसिद्धत्वं स्यात् न च स्वरितादित्याश्रयात् सिद्धम् कथं वः सुम्नेत्यादौ चरितार्थत्वादिति चेन्नैवम् तस्यादितर

देवब्रह्मणोरनुदात्तः १।२।३८ अनयोः स्वरितस्यानुदात्तः स्यात् सुब्रह्मण्यायाम् देवाब्रह्माणा आगच्छत स्वरितात्संहितायामनुदात्तानाम् १।२

।३९ स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् इमंमे गङ्गे यमुने सरस्वति उदात्तस्वरितपरस्य सन्नतरः १।२।४० उदात्तस्वरितौ परौ य

स्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात् सरस्वति शुतुद्रि। व्यचक्षयत्स्वः तस्य परमाम्रेडितम् अनुदात्तं च ८।१।३ द्विरुक्तस्य परं रूपमनुदात्तं स्यात्।

दिवेदिवे इति साधारणस्वराः

त्यारम्भ नवसंख्याः स्वस्थानादन्यत्र शास्त्रांते भाष्यवार्त्तिकयोर्निवेशात् न सुब्रह्मण्यायामिति सूत्रे स्वरितस्यानुदात्त इति वक्ता एवकौ ॥

त्कर्षस्य ज्ञापितत्वाच्च न सुब्रह्मण्योमिति सिद्धः स्वरितो स्तीति वाच्यं तत्र एकादेश उदात्तेनेति सूत्रप्रवृत्तेरावश्यकत्वात् तत्र त्वनुदात्तग्रहणं नानुवर्त्तते उदात्त सन्नशब्देन नीचे

रर्थ उच्यते तेन त्वनुदात्तत्वं लक्ष्यते इत्याह अनुदात्ततर इति प्रकर्षस्त्वन्यानुदात्तापेक्षः सरस्वतीत्यादि अत्र मे शब्दमाश्रित्य सरस्वतीत्यस्यामन्त्रितनिघातः शुतुद्रि शब्दस्य तु न पा

दादित्वात् आमन्त्रितस्येति षाष्ठेन शुतुद्रीत्यस्योदात्तं प्रथममक्षरं तस्मिन्परे पूर्वस्य सरस्वतीकारस्य सन्नतरः व्यचक्षयत्स्व इति वीति उपसर्गत्वादाद्युदात्तः ततः परस्याच

क्षयदिति तिङ् तिङ इति निघातः स्वरितिन्यङ् स्वरौ स्वरिताविति स्वरितः तस्मिन्परे यकाराकारस्य सन्नतरः साधारणा स्वरा इति एकस्मिन्पदे पदद्वयेपि च वर्त्तमानात्साधा

रण्यं आद्युदात्तश्चेत्यादिर्नित्यमित्यादयस्तु एकस्मिन्नेव पदे वर्त्तमानान्न साधारणाः। प्रकृतिर्द्विधा धातुः। प्रातिपदिकं चात्र तथा तु स्वरा नाह ॥ ॥

यत्तेकश्चित्प्रतिपन्निलाघवमिति ननु वषट्कार इत्यत्र कारप्रत्ययो न स्यात् वर्णनिर्देशो हि स विहित इति चेत् सत्यं एतदेव ज्ञापयति समुदायादपि कारप्रत्ययो भवतीति तेन ए
वकार इत्यादि सिद्धम् उच्चैः शब्दोऽधिकरणप्रधानोऽपि तद्धि शिष्टभवनक्रियायां वर्तते तेन क्रियाप्रकर्षादाम्प्रत्यय उदात्ततरो भवतीति फलितोऽर्थः ब्रूहिप्रेष्येति सूत्रेण वौ
षट्शब्दस्यादेः प्लुत उदात्तो विहितः तदपेक्षया यमुदात्ततरोऽन्यस्य विधीयते अन्ये तु स्वार्थिकस्तरबित्याहुः। ः। विभाषा वा ग्रहणेऽनुवर्तमाने विभाषाग्रहणं अछन्दसीति पद
च्छेदेन तन्त्रादिना भाषायामपि विधानार्थं अत एव श्वेतो धावति अलंबुसानां यातेति व्यर्थवाक्यमिति पस्पशान्ते भाष्यं तत्र श्वेति प्रातिपदिकस्वरेणान्तोदात्तं इत इति इदंशब्दात्तसिल् ऊ
डिदमित्यनेन श्वेत इति वर्णानां तणोत्याद्युदात्ते प्राप्ते ष्ट्वतादित्वादन्तोदात्तम् अलंशब्दो निपातत्वादाद्युदात्तः बुसशब्दः प्रातिपदिकस्वरेणान्तोदात्तः अलंबुसशब्दः फिट्स्वरेणान्तोदात्तः
तत्र भाषायां यद्येकश्रुतिर्न स्यात् तर्हि स्वरभेदेनाथ्यमेकवाक्यं व्यर्थं स्यात् न तु सुब्रह्मण्याख्ये निगद इति अयादवं धेगादिर्वर्तते यथागच्छमिति निःशब्दः प्रकर्षे उच्चैरपादवं धं यज्ञात्म [?]

विभाषा छन्दसि १।२।३६ छन्दसि विभाषा एकश्रुतिः स्यात् व्यवस्थितविभाषेयम् संहितायान्त्रैस्वर्यम् ब्राह्मणे एकश्रुतिर्बह्वृचानाम् अन्येषाम
पि यथासम्प्रदायं व्यवस्था न सुब्रह्मण्यायां स्वरितस्य तूदात्तः १।२।३७ सुब्रह्मण्याख्ये निगदे यज्ञकर्मणीति विभाषा छन्दसीति च प्राप्ता एकश्रु
तिर्न स्यात् स्वरितस्योदात्तश्च स्यात् सुब्रह्मण्योम् सुब्रह्मण्यो साधुरिति यत्॥ असावित्यन्तः॥ अस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात् गा
र्ग्यो यजते ञित्वात्प्राप्त आद्युदात्तोऽनेन बाध्यते अमुष्येत्यन्तः षष्ठ्यन्तस्यापि प्राग्वत् दाक्षेः पिता यजते स्यान्तस्योपोत्तमञ्च चाऽन्तस्तेन द्व्यु
दात्तौ गार्ग्यस्य पिता यजते वा नामधेयस्य स्यान्तस्य नामधेयस्य उपोत्तमम् उदात्तं वा स्यात् देवदत्तस्य पिता यजते॥ ः॥

१ कं यन्मन्त्रवाक्यं पठ्यते स नि
गदः नितरां गद्यत इति कर्मणि निनौ गदनदेत्यप् तस्य च सुब्रह्मण्याशब्दोपलक्षितत्वात् सुब्रह्मण्याशब्दोऽपरित्यक्तस्त्रीलिंग एव निगदविशेषस्य नाम सुब्रह्मण्योमिति तत्र
साधुरिति यत् तित्स्वरितं यतोनाव इति तु न तन्नाव इत्यनुवृत्तेः टापा सहैकादेशः स्थानेऽन्तरतम इति स्वरितः ततो निपातत्वादाद्युदात्तेन ओमुशब्देन ओमाङोश्चेत्युदात्तस्वरित
योरेकादेशः स्वरित एवेति हरदत्तादयः असाविति प्रथमान्तस्योपलक्षणं तदाह प्रथमान्तस्येति गार्ग्य इति गर्गादिभ्यो यञ् अमुष्येति षष्ठ्यन्तस्योपलक्षणं दाक्षेरिति दक्षश
ब्दादपत्येऽत इञ् अत्रापि ञित्स्वरः प्राप्तः स्यान्तस्येति स्येति रूपं विवक्षितं एवं वार्तिककारं मतस्य शब्दान्तस्योपोत्तममन्त्यश्चोभयमुदात्तं भवति ॥ ः ॥ ॥

त्यादि अन्यथा हिशाखीयेनुदात्ते इत्यमाणेमा हिस्मदद्यादित्यत्र नित्यत्वादंतरंगत्वाच्चाकारलोपेकृते आद्युदात्तत्वं न स्यात् बहुव्रीहौ विश्वानेत्र भवति हिशब्दो हिवे
तिनिघातनिषेधार्थः ॥ ॥ भीह्री आद्युदात्तस्यापवादोयं अत्र मदिर्दिवादिः दरिद्राजागावदादी अन्येतुजुहोत्यादयः उदाहरणानि बिभेति जिह्रेति बिभर्ति भृ
ञामिदित्यभ्यासस्येत्वं ममत्त्विति मदेर्लोट् बहुलं छंदसीति शपः श्लुः जजनत् दधनदिति जन जनने धन धान्ये आभ्यां लेट् तिप् इतश्चेतीकारलोपः लेटोडाटावित्य
ट् दरिद्राति जागर्ति पितिकिं दरिद्रति अत्र परत्वादाकारलोपेकृते इकारस्योदात्तत्वं माभूत् ननु पूर्वग्रहणं व्यर्थं प्रत्यये पितीत्येवोक्ते तस्मिन्निति निर्दिष्टे इति पूर्वस्यै
व भविष्यति नच पितः पूर्वमेव कार्यं भाग्यया स्यात् पिदंतमाभूदित्येवमर्थं तदिति वाच्यं कथं पुनः सप्तमी निर्देशे तदंतस्य प्रसंगः एतदेव ज्ञापयति सोवर्यः सप्तम्यंतदं
त सप्तम्य इति तेनोपोत्तमं रिति रित्प्रत्ययांते उपोत्तममुदात्तं भवति चद्यन्यतरस्यां चङं तस्येत्यर्थो नत्र रिति परतश्चाडि परत इति नन्वेवं चतुरः शसीत्यत्रापि शसंतस्य प्रा

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ६।१।१९२ भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं
स्यात् योग्निहोत्रं जुहोति ममत्तुनः परिज्मा मातायद्वीरं दधनत् जागर्षित्यम् लिति ६।१।१९३ प्रत्ययात्पूर्वमुदात्तम् चिकीर्षकः आ
दिर्णमुल्यन्यतरस्याम् ६।१।१९४ अभ्यस्तानामादिरुदात्तो वा णमुलि परे लोलूयंलोलूयं पर्येलित्स्वरः ॥ ६ ॥ ॥

ग्रोति शसग्रहणसामर्थ्यान्न भविष्यति यदि हि चतुरः शसीत्यनेन शस उदात्तत्वमिष्टं स्यात्तत उडिदंपदाद्यित्यस्यानंतरं चतुरश्चेत्येव ब्रूयात् तत्रासर्वनामस्थानग्रहणानु
वृत्त्या षट्त्रिचतुर्भ्यो हलादिरिति हलादेरुदात्तविधानाच्च शस एव भविष्यति लिति पूर्वसूत्रात्प्रत्ययात्पूर्वमिति वर्तते तदाह प्रत्ययात्पूर्वमिति तेन स्वरविधौ सप्तम्यात
दंतत्वज्ञापनात् लिदंतस्य स्वरो न शंकनीयः चिकीर्षक इति चिकीर्षतिसन्नंतात्ण्वुल् तस्याकादेशः सनोन्तो लोपः ककारे कार उदात्तः नचाल्लोपस्य स्थानिवत्त्वं स्वरवि
धौ तन्निषेधात् क्वचित्तु साकेभोरिकिविधं एषु कारिभक्तमिति दृश्यते तत्र भौरिक्याद्येषुकार्यादिभ्यो विधल्भक्तलाविति विषयो देश इत्यस्मिन्नर्थे यथाक्रमं भौरि
किशब्दादैषुकारिशब्दाच्च विधल्भक्तलौ तेषो आदिर्णमुलि अभ्यस्तानामिति यद्यपि लोलूयंलोलूयमिति मतीकमुपादाय एकाक्षु भाजुषु लित्स्वरस्यास्य चवि

धातोरिति कर्षात्त्वत इत्यतः अंतउदात्त इत्यनुवर्त्तते तदाह · अंतउदात्त इति गोपायेति · यकाराकारस्योदात्तत्वे तमित्यस्तास्यनुदात्ते ङित्यनुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितः बहुवचनस्य वस्नसाविति नसादेशस्य स्वरितात्संहितायामिति प्रचयापरपर्याया एकश्रुतिः असीति अस्तेः सिप् तासस्त्योरिति सलोपः अकारस्योदात्तत्वं ततः परस्य स्वरितः सत्यशब्दे सकारस्य उदात्तस्वरितपरस्येत्यनुदात्ततरादेशः स्वपादि तास्यनुदात्तेदित्यतः लसार्वधातुकमित्यनुवर्त्तते तदच्यनिटीति संवधादिह सप्तम्यंतं संपद्यते तदाह अनिट्यजादावित्यादि अदाद्यंतर्गण इति आगणान्तादिति भावः हिंसंतीति हिसि हिंसायां रुधादिः श्नान्नलोपः श्नसोरल्लोपः कृत्येवेष्यत इति वृत्त्यात्र धादेतदुक्तं भाष्ये तु प्रायेणेदं न दृश्यते एवं च हिनसानीत्यत्राद्युदात्तत्वमपि पक्षे भवति यदि तु आद्युदात्तत्वं पक्षे नेष्यते तर्हि व्यवस्थितविभाषाश्रयणान्न केचि

धातोः ६।१।१६२ अन्तोदात्तः स्यात् गोपायतन्नः असि सत्यः स्वपादिहिंसामच्यनिटि। ६।१।१८८ स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् स्वपादिरदाद्यन्तर्गणः स्वपन्ति २ श्वसन्ति २ हिंसन्ति २ पक्षे प्रत्ययस्वरेण मध्योदात्तता कृत्येवेष्यते नेह स्वपानि हिनसानि अभ्यस्तानामादिः ६।१।१८९ अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः ददति प्रियावसु परत्वाच्चित्स्वरमयं बाधते दधाना इन्द्रे अनुदात्ते च ६।१।१९० अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः दधासि रत्नं द्रविणञ्च दाशुषे ॥

स्वपादीत्यत्रैतदभावे धातुस्वरेणाद्युदात्तत्वमेवेति विशेषाभावादयं विधिर्न प्रवर्त्तते तत्साहचर्याद्धिनसानीत्यत्राप्ययं न प्रवर्तत इति वृत्तिकाराशयं कल्पयंति हिनसानीति अत्र श्नमस्तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति न्यायात् धातुग्रहणेन नकाराकारउदात्तः ततः परस्य स्वरितत्वं अनिटि किं स्वपितः रुदादिभ्यः सार्वधातुक इतीट् अभ्यस्तानां आदिः सिचोऽन्यतरस्यामित्यतः आदिरिति वर्त्तमाने पुनरादिग्रहणं नित्यार्थं अन्यथाऽऽदिग्रहणसंबद्धमन्यतरस्यांग्रहणमनुवर्तेत अचि किं स्यात् अनिटि किं जक्षिथ येददतीति · दुदाञ् दाने लटि झिः तस्य अदभ्यस्तादित्यदादेशः श्नाभ्यस्तयोरातः इत्यालोपः चित्स्वरमिति चितः इत्यनेन विहितमन्तोदात्तस्वरमित्यर्थः दधानेति लटः शानजादेशः अनुदात्ते च न विद्यते उदात्तो यस्मिन्निति बहुव्रीहिरित्याह अविद्यमाने।

त्यान्तत्त्सोमत्त्वर्थे इति भत्वाज्जश्त्वाभावः कर्षस्वात्वां श्वेति समाहारद्वन्द्वः कर्ष इति शवंतस्यानुकरणेन यत्र्तस्य तदाह शपा निर्देशादिति पाक इति पचेर्घञ् चजोरि
ति कुत्वं काल विशेष इति कृत्तद्धापरादो भक्षशब्द इति भक्षस्त्रुदनेत्वरादिः अनित्यएयंताश्चुरादय इति पदाणिच् नास्तित्तदाघञ् एयंतात्तुएरज् इत्य चिसिद्धं स्तजएयं
ता नामिति तत्रनास्तीत्याहः उत्तमशश्वत्तमाविति तमवंतावेतौ तेनद्रव्य प्रकर्ष विवक्षायामामभावः पित्वादनुदात्तत्वे प्राप्ते पाठः ॥ ॐ ॥ चतुरः चतेरुरन्नित्वा
द्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थमिदं ननु चतस्रः पश्येत्यत्र चतसृ अस इति स्थिते परत्वादचिरऋत इति रेफादेशे तत्का शकारस्योदात्तत्वं प्राप्नोति अतआह अचिर इति

चतुरः शसि ६।१।१६७ चतुरोऽन्तउदात्तः शसि परे चतुरः कल्पयन्तः अचिर इति रादेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह चतस्रः पश्यन्त
तेरुरन् नित्वादाद्युदात्तता झल्युपोत्तमम् ६।१।१८० षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् अध्वर्युभिः पञ्चभिः
नवभिर्वाजैर्नवतीच सप्तभ्यो जायमानः आदशभिर्विवस्वतः उपोत्तमं किम् आषड्भिर्हूयमानः विश्वेदेवै स्त्रिभिः झलि किम् नावानान
वतीनाम् विभाषाभाषायाम् ६।१।१८१ उक्तविषये सर्वस्य सुपि ६।१।१९१ सुपि परे सर्वशब्दस्यादिरुदात्तः स्यात् सर्वेनन्दन्ति यशसा
न्नित्यादिर्नित्यम् ६।१।१९७ ञिदन्तस्य निदन्तस्य चादिरुदात्तः स्यात् यस्मिन्विश्वानि पोंस्या पुंसः कर्म्म णि ब्राह्मणादित्वात् ष्यञ् सु
तेरविष्वनश्वनः चायतेरसुन् चायेरन्नेह स्वश्वेति चकारादसुनो नुडागमश्च ॥ ११ निवत्त्वादिति न च स्वरविधौ स्थानिवत्त्व निषेधः स्वरदीर्घय
लोपेषु लोपाजादेश एव न स्थानिवदिति नियमात् झल्युपोत्तमं षट्त्रिचतुर्भ्यो हलादिरित्यस्यापवादः पंचभिरित्यादि पंचनवसप्तदशशब्दाः कनिन्नंताः आष
ड्भिरिति षष्शब्दः फिट्स्वरेणान्तोदात्तः तनोतेर्ड्विः त्रि अयमपि फिट्स्वरेण प्रत्ययस्वरेण वांतोदात्तः उभयत्रापि षट् त्रिचतुर्भ्यो हलादिरिति विभक्तेरुदात्तत्वं न
वानामिति अत्रापि विभक्तिरुदात्ता विभाषा उक्त विषय इति षट्त्रिचतुर्भ्यः परायां झलादिर्विभक्तिस्तदंतस्योपोत्तमं भाषायामुदात्तं वा स्यात् पंचभिः सप्तभिः ति
सृभिः चतुर्भिः पक्षे षट्त्रिचतुर्भ्यो हलादिरित्यंतोदात्तानि सर्वस्य सर्वशब्दः उंछादिष्वंतोदात्तो निपातितः सर्वस्य विकारः सार्व इत्यत्रानुदात्तादेरञ् नित्य

षाभावादनेकाच्त्वादाहृत इति हरदत्तग्रंथाद्भ्यस्तेति निवृत्तमिति प्रतीयते तथाप्यार्थिकार्यकथनपरत्वमानेयं णमुलिपर इति यद्यपि सोऽर्थः सप्तम्यन्तं तत्सप्तम्य
इति भीह्रीति सूत्रेऽव्यवस्थापितत्वात् णमुलेतस्यादिरुदात्तो भवतीति सूत्रार्थे न भाव्यं तथापि फले विशेषाभावादेवमुक्तमिति प्रतिभाति लोलूपं लोलूपमिति य
ङ् ताणमुल् नित्यवीप्सयोरिति द्वित्वं अत्र प्रथमः लोलूपशब्दः आद्युदात्तः लोरत्युदात्तः लूरिति स्वरितः ततः चत्वारः प्रचयाः॥ ॥ अचः इह कीर्यत इत्या
दौ इत्वे रपरत्वे च सति अयं स्वर इष्टः तन्निर्वाहार्थं तास्यनुदात्तेति सूत्रे समासैकदेशोऽप्युपदेशशब्द इहानुवर्तते सप्तम्या च विपरिणम्यते तदाह उपदेशेऽजंता
नामिति नन्वेवं एकं द्वादशधा ज्ञेरित्यादाविवांतर्भूतण्यंतात्कर्मकर्तृविषयात् जनेर्लोटि जायते स्वयमेवेत्यत्रैष स्वरो न स्यात् यो विभाषेत्यात्त्वे सति उत्तरका

अचः कर्तृयकि ६।१।१९५ उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा लूयते केदारः स्वयमेव चङ्यन्यतरस्याम् ६।१।२१८ चङ
न्ते धातावुपोत्तमम् उदात्तं वा माहि चीकरताम् धात्वकार उदात्तः पक्षान्तरे चङ उदात्तः॥ ॥ इति धातुस्वराः॥ ॥ कर्षात्वतो घञोऽ
न्त उदात्तः ६।१।१५९ कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात् कर्षः शपा निर्देशात्तुदादेराद्युदात्त एव कार्षः पाकः उञ्छादी
नां च ६।१।१६० अन्त उदात्तः स्यात् उञ्छादिषु युगशब्दो घञन्तोऽगुणो निपात्यते कालविशेषे रथाद्युपकरणे च वैश्वानरः कुशिकेभिर्यु
गे युगे अन्यत्र योगे योगे तवस्तरम् भक्षशब्दो घञन्तः गावः सोमस्य प्रथमस्य भक्षः उत्तमशश्वत्तमौ वपि उदुत्तमं वरुण शश्वत्तमम् ईळते॥

लमजंतत्वेपि उपदेशेऽनजंतत्वादिति चेन्नैवं ये इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवात्त्वप्रवृत्तेरित्याहुः कर्तृयकीति कर्त्रे वा चिनि सार्वधातुके विहितो
यो यक् तस्मिन्परे लूयत इति आदिर्म्योः पर्यायेणोदात्तोऽतास्यनुदात्तेति ङेरित्यस्यानुदात्तत्वे चङ्यन्यतरस्यां उपोत्तमं रितीत्यतः उपोत्तममिति वर्तते तदाह उपोत्तम
मिति ञ्यादीनामत्यमुत्तमं तस्य समीपमुपोत्तमं माहि चीकरतामिति अदुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः
उपोत्तमग्रहणानुवृत्त्या ह्रयोर्न माहि दधत् अत्र विभाषा धेट्श्व्योरिति चङ्॥ ॥ इति धातुस्वराः॥ ॥ कर्षात्वतः ञ्नित्यादिर्नित्यमित्यस्यापवादः आदस्यास्तीति अ

निष्ठादत्तइतिददातेः क्तः दोदद्घोरिति दथादेशः चिंतितइति चितिस्म
स्मृत्युच्चइति लुप् ननुप्रत्ययलक्षणेननित्वात् ञ्नित्यादिर्नित्यमित्येवसिद्धमत आह एतदेवेति निष्ठाद्त्तइतिददातेः क्तः दोदद्घोरितिदथादेशः चिंतितइति चितिस्मृ त्युच्चइति लुप् ॥ अलंकृत्याः ॥
त्यांचुरादिः क्तः तेहतमिति प्रत्ययस्वरेणांतोदात्तावेतौ असंज्ञार्थमिति संज्ञायांतु निष्ठाचद्व्यजनादित्येवसिद्धं शुष्कमिति शुषेः क्तः तस्यशुषः कइतिकादेशः ॥
आशितः कर्तृवाचीति आङ्पूर्वादशभोजनेऽस्मात्कर्तरि क्तो निपात्यते अपरआह कर्त्तेत्यनेनभूतपूर्वगत्या अशोकर्त्तेणोकर्मीभूतएवविवक्षितः तथाचाशेर्ण्यंत
स्यप्रयोज्यकर्त्तरिगतिबुद्धिप्रत्यवसानार्थेतिकर्मसंज्ञके निष्ठायामाशितइतिरूपमिति रिक्तइति रिचिर्विरेचने संज्ञायामित्यादि निष्ठाचद्व्यजनादित्यस्यावकाशः दत्तः

आशितः कर्त्ता ६।१।२०७ कर्तृवाची आशितशब्द आद्युदात्तः स्यान्निष्कालआशितम् रिक्ते विभाषा ६।१।२०८ रिक्तशब्देवादिरुदात्तः
रिक्तः संज्ञायान्तु निष्ठाचद्व्यजनादितिनित्यमाद्युदात्तत्वम्पूर्वविप्रतिषेधेन जुष्टार्पिते च च्छन्दसि ६।१।२०९ आद्युदात्तेवास्तः नित्यम्म
न्त्रे ६।१।२१० एतत्सूत्रं शक्यमकर्तुम् जुष्टोदमूनाः षळर आहुरर्पितमित्यादेः पूर्वेणैवसिद्धेः छन्दसिपाठस्यव्यवस्थिततयाविपरीतापा
दनायोगात् अर्पिताः षष्टिर्न्नचलाचलासइत्यत्रान्तोदात्तदर्शनाच्च युष्मदस्मदोर्ङसि ६।१।२११ आदिरुदात्तः स्यात् नहिषस्तवनोममङ
यि च ६।१।२१२ तुभ्यंहिन्वानः मह्यंवातः पचताम् यतोऽनावः ६।१।२१३ यत्प्रत्ययान्तस्यद्व्यचः आदिरुदात्तोनावम्विना युञ्जन्त्यस्य
काम्या कमेर्णिङ् नादचो यत् ॥ ९९

गुप्तः अस्यत्ववकाशः असंज्ञायां रिक्तोघटइतिसंज्ञायामुभयप्रसंगे पूर्वविप्रतिषेधः रिक्तोनामकश्चित् जुष्टार्पि
ते जुष्टः अर्पितइत्येतेशब्दरूपेछंदसिविषये आद्युदात्तेवास्तः जुषीप्रीतिसेवनयोः क्तः श्वीदितोनिष्ठायामितीट्प्रतिषेधः जुष्टः अर्त्तेर्णिच् अर्तीत्यादिनापु
क् अर्पितः नित्यं जुष्टार्पितेशब्दरूपेमंत्रविषये नित्यमाद्युदात्तेस्तः पूर्वेणैवसिद्धेरिति ननुपक्षेंतोदात्तत्वमपिप्राप्नोतीत्याशंक्याह छंदसीत्यादिनकेवलंगता
र्थत्वमात्रं किंत्वारभ्यमाणेसूत्रेदोषोप्यस्तीत्याह अर्पिताः षष्टिरित्यादिना युष्मदस्मदोः युष्मासिभ्यांमदिगितिमदिक् प्रत्ययांतावंतोदात्तौ ममेति युष्मदस्मदो
र्ङसोशत्तवममोर्ङसीतिमपर्यंतस्यममादेशः शेषेलोपः अतोगुणइतिपररूपत्वं एकादेशउदात्तेनोदात्तइतिविभक्तेरुदात्तत्वेप्राप्ते इदमुच्यते ङयि च ॥

तुदात्तलक्षणोऽन्यथास्यात् अवर्णांत सर्वत्राद्युदात्तस्यैव प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमाणत्वात् न्नित्यादिः भीह्रीति सूत्रे पूर्वग्रहणेन सो वर्ण्यः सप्तम्यन्तं
तसप्तम्य इति ज्ञापितत्वात् तदंतसप्तमीयमित्याह निदंतस्येति।०॥ पथिमथोः गमेरिनिः उपः कित् मथः पतेस्थ चेतीनिप्रत्ययांतावेतावंतोदात्तौ मंथः किता
पथालोपः पंथा इति पथिमथ्यृभुक्षामात् थोन्थः पथ इति भस्य टेर्लोपः उदात्तनिवृत्तिस्वरेणेति अनुदात्तस्य च यत्रोदात्तलोप इति विभक्तिरुदात्ता सतवाउर ते
ददातेः कृत्यार्थे तवेकेन्केन्यत्वन इति तवे प्रत्ययः ऐकारस्यापादेशः लोपः शाकल्यस्येति यलोपः युगपद्ग्रहणं पर्यायनिवृत्त्यर्थं अन्यथा एकवर्जमिति वचनाद्यो

पथिमथोः सर्वनामस्थाने ६।१।१९९ आदिरुदात्तः स्यात् अयम्पन्थाः सर्वनामस्थाने किम् ज्योतिष्मतः पथो रक्ष उदात्तनिवृत्तिस्व
रेणानोदात्तं पदम् अन्तश्च तवै युगपत् ६।१।२०० तवैप्रत्ययान्तस्याद्यन्तौ युगपदाद्युदात्तौ स्तः हर्यसे दातवा उ॥ क्षयो निवासे ६।१
।२०१ आद्युदात्तः स्यात् स्वे क्षये शुचिव्रत एरजन्तः जयः करणम् ६।१।२०२ करणवाची जयशब्द आद्युदात्तः स्यात् जयत्यनेन जयोऽ
श्वः वृषादीनाञ्च ६।१।२०३ आदिरुदात्तः आकृतिगणोऽयम् वाजेभिर्वाजिनीवती इन्द्रं वाणीः संज्ञायामुपमानम् ६।१।२०४ उपमान
शब्दः संज्ञायामाद्युदात्तः चञ्चेव चञ्चा कनो लुप् एतदेव ज्ञापयति क्वचित्स्वरविधौ प्रत्ययलक्षणं नेति संज्ञायां किम् अग्निर्माणव
कः उपमानं किम् चैत्रः निष्ठा च द्व्यजनात् ६।१।२०५ निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो न त्वाकारः दत्तः द्व्यच् किम् चिन्तितः
अनात् किम् त्रातः संज्ञायामित्यनुवृत्तेर्नेह कृतम् हृतम् शुष्कधृष्टौ ६।१।२०६ एतावाद्युदात्तौ स्तः असंज्ञार्थमिदम् अतः सन्त्रशुष्कम् ॥

गपद्यं न स्यात् क्षयो निवासे निवासेऽभिधेये क्षयशब्द आद्युदात्तः स्वे क्षये इति क्षि निवासगत्योः क्षयंति निवसंति यस्मिन्नित्यधिकरणे घः पुंसि संज्ञायामिति घः निवासे
किं व्याधेः क्षयः क्षि क्षये एरच् कर्तरि षष्ठी जयः जयोऽश्व इति पुंसीति करणे घः करणे किं जयो ब्राह्मणानां भावे एरच् वृषादीनां वृषु सेचने इगुपधलक्षणः कः वाजेभिरि
ति वजेर्घञ् कर्षात्वत इत्यंतोदात्ते प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तः संज्ञायां चेति उपमानशब्दोपमेयस्य संज्ञा कनो लुबिति इवे प्रतिकृताविति कनो लु

त्येवसूत्रमतं॥ आमीत्यनुवृत्त्या ङे राम्नो नुट् नेत्यर्थलाभात् तस्माद्राण्नद्या इति विधानसामर्थ्याद् ततो शग्ण इति न प्रवर्तत इति दिक्॥ आटश्च॥ यद्यपि इह ङिद्वद्भिरेचीत्येव सि
द्धं ङे सिङ सोर्ङे रामिच सवर्णदीर्घेण तथा ऐर्थं द्वित्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तं अजादीनामटा सिद्धमाङ्जादीनामिति सूत्रे मास्त्विति वदतो वार्तिककार
स्य मते तु अटश्चेत्येव सूत्रमिति बोध्यं॥ ꣲ ॥ ङे राम्नो ङेरिति सप्तम्येकवचनस्य ग्रहणं समानाधिकरणे स्त्रियामित्यादि निर्देशात्॥ आटानुट् बाध्यत इति॥ आदिश्तो
नुपुनर्न प्रवर्तते। सकृद्गतावितिन्यायाश्रयणादिति भावः। न सुलोप इति। लक्ष्मेर्मुट् चेत्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्दः इत्युपसर्जन ह्रस्वोपि नेति बोध्यं। कुमारीति।
यद्यपि क्विवर्थं प्रतिड्यन्तस्योपसर्जनत्वात् ह्रस्वत्वं प्राप्तं तथापि गोस्त्रियोरित्यत्र स्त्रिमोपसर्जनत्वं गृह्यते न त्वप्रधानरूपमिति नात्र ह्रस्वः प्रवर्तते। अतएव हरीत
क्याः फलानि हरीतक्यः इत्यत्रापि ह्रस्वो न भवति। लुक्तद्धितलुकीत्यत्र त्वप्रधानरूपमुपसर्जनमेव गृह्यते न तु स्त्रिमोपसर्जनमसम्भवादिति वक्ष्यामः। अचिश्नुधा

ङे राम्नद्याम्नीभ्यः। ७।३।११६। नद्यन्तादावन्तान्नीशब्दाच्च ङे राम् स्यात्। इह परत्वादाटानुड् बाध्यते। बहुश्रेयस्यां। शेषमीप्रत्ययान्तवात्प्रमीवत्।
अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः। शेषम् बहुश्रेयसीवत्। कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी। क्यजन्तादाचारक्विबन्ताद्वा कर्तरि
क्विप्। हल्ङ्याबिति सुलोपः। अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७ श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाङ्गस्य इयङुवङौ स्तोऽजा
दौ प्रत्यये परे। ङिच्चेत्यन्तादेशः। आन्तरतम्यादेरियङ् ओरुवङ्। इतीयङि प्राप्ते॥ ११ मेश्नुभ्रूरिति श्नुप्रत्ययान्ततत्वाद् भ्रूशब्दस्य धातोः पृथग्ग्रहणं अ

न्ये त्वाहुः। गमः क्वावित्यत्र ऊङ् च गमादीनामिति वक्तव्यमिति वार्तिकादनुनासिकलोपे ऊआदेशे कृते निष्पन्नोयं भ्रूशब्दः। तथा च धातुग्रहणेनैव सिद्धे भ्रूग्रहणं निर
र्थकमिति। इणः इति वक्तव्ये य्वोरिति गुरुनिर्देश इण् प्रत्याहारः परेणोवर्णाकारेण गृह्यत इति ज्ञापनार्थः। इह य्वोरिति धातोरेव विशेषणं न तु श्नुभ्रुवोरव्यभिचारादित्याह
इवर्णोवर्णान्तधातोरिति। श्नुधातुभ्रुवामिवर्णोवर्णयोरिति व्याख्याने तु इयङुवङोर्ङित्वं व्यर्थं स्याद्धि प्यधिकरण्यं च प्रसज्येतेति भावः। ननु सामानाधिकरण्यपक्षेपि
ङित्वं व्यर्थं निर्दिश्यमानस्यादेशा भवन्तीति इवर्णोवर्णान्तधातोः सर्वादेशत्वनिवृत्तिसंभवादिति चेन्न। श्नुभ्रुवोरपि निर्दिश्यमानत्वेन सर्वादेशत्वप्रसंगात्। इउ इ
त्यष्टादशानां संज्ञेत्युक्तत्वात् यथासंख्यमिह न प्रवर्तत इत्याह। आंतरतम्यादिति। स्थानत इति भावः। य्वोः किं। चक्रतुः। चक्रुः। अचीति किं। आलुयात्। जुहुयात्॥

योगविभागो यथासंख्यनिवृत्त्यर्थः तुभ्यं मह्यमिति ङे प्रथमयोरम् तुभ्यमह्यौ ङ पियतः तित्स्वरितमित्यस्यापवादः निष्ठा च द्व्यजनादित्यतो द्व्यजनुवर्तते तदाह द्व्यच्
इति अत्रानाव इति निषेधो ज्ञापयति स्वरविधौ व्यंजनमविद्यमानवदिति अन्यथा यस्यादिर्नकारो नासौ स्वरयोग्यः यश्च स्वरयोग्य आकारो नासावादिरिति प्रतिषेधो
नर्थकः स्यात् अनावः किं नावा तार्यं नाव्यं नौवयोधर्मेतियत् अच् किं चिकीर्ष्यं उभयत्रापि तित्स्वरः ॥ ॥ ईडवंद ईडस्तुतौ वदि अभिवादनस्तुत्योः वृङ् संभक्तौ शं
सुस्तुतौ दुह प्रपूरणे एयतो ह्यनुबंधकत्वाद्यत् ग्रहणे न ग्रहणं न प्राप्नोतीति वचनं ईड्य इति ऋहलोर्ण्यदिति एयत् वार्यमिति नन्वत्र एतिस्तुशास्वित्यादिना विशेष
विहितेन क्यपा भाव्यमिति चेत्सत्यं क्यब्विधौ वृञ एव ग्रहणं नास्येति मूल एव स्पष्टं विभाषा वेणु शब्दो नित्स्वरेण नित्यमाद्युदात्तः प्राप्तः स्थाणुरित्यनुवर्तमाने वृञ्करि

ईडवन्दवृशंसदुहां ण्यतः ६।१।२१४ एषां ण्यदन्तानामादिरुदात्तः ईड्यो नूतनैरुत आद्युदात्त न ईड्यो वन्द्यश्च अष्टुन्नो धेहि वार्यम् उ
क्थमिन्द्राय शंस्यम् विभाषा वेण्विन्धानयोः ६।१।२१५ आदिरुदात्तो वा इन्धानो अग्निम् त्यागरागहासकुहश्वठक्रथानाम् ६।१।२१६
आदिरुदात्तो वा आद्यास्त्रयो घञन्ताः त्रयः पचाद्यजन्ताः मतोः पूर्वमात्संज्ञायां स्त्रियाम् ६।१।२१९ मतोः पूर्वमाकार उदात्तः स्त्रीना
म्नि उदुम्बरावती शरावती अन्तोऽवत्याः ६।१।२२० अवतीशब्दस्यान्त उदात्तः वेत्रवती ङीपः पित्वादनुदात्तत्वं प्राप्तम् ॥ ईवत्याः ६।१।
२२१ ईवत्यन्तस्यापि प्राग्वत् अहीवती मुनीवती अथ फिट्सूत्राणि ॥ ९

भ्यो निश्चेति व्युत्पादनात् इंधानशब्दो यद्विचानशंतस्तदाचितादंतो
दात्तः यदा शानजंतस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः असोरल्लोप इति उदात्तस्य श्नमोऽकारस्य लोपात् सर्वथाप्यप्राप्तमा
द्युदात्तत्वं पक्षे विधीयते त्यागराग त्यज हानौ च जो रिति कुत्वं रंज रागे घञि च भावे इति नलोपः हसे हसने एषां पक्षे कर्षात्वतो घञो न्त उदात्त इति भवति न्यं
पचाद्यजंता इति कुह विस्मापने श्वठ असम्यग्भाषणे चौरादिकावदंतौ क्रथ हिंसायां अत्र प्रत्ययस्वरेणांतोदात्तत्वं पक्षे भवति मतोः मतोः पूर्व आकार इति
आर्थव्याख्यानमेतत् सूत्रे तु शब्दस्वरूपापेक्षया नपुंसकनिर्देशः केचित्तु सूत्रे पूर्वशब्दं पुल्लिंगमेव पठंति शरावतीति चातुरर्थिको नद्यां मतुप् मादुपधाया इति वत्वं

मतौवह्वचोनजिरादीनां शरादीनांचेतिदीर्घत्त्वंवेत्रवतीति मतुप्वत्वं नचात्रवत्वस्यासिद्धत्त्वाद्वतीशब्दोयंनभवतीतिशंक्यं तस्याश्रयात्सिद्धत्वेनासिद्धत्वाभा
वात् आवत्याइतिनिर्देशादिहनभवति राजवतीति स्वरविधौव्यंजनस्याविद्यमानत्वान्नायमवतीशब्दः अहीवतीति पूर्ववद्दीर्घःसंज्ञायामितिवत्त्वं॥ अथफिट्सूत्रा
णि॥ ॥ फिषोंतउदात्तः फिडितिपूर्वाचार्यप्रसिद्धाप्रातिपदिकमुच्यतेतदाह प्रातिपदिकं फिडिति ननुकथमपाणिनीयानिसूत्राण्युपन्यस्यतेपाणिनीयसूत्रैर्य
स्वरश्चायातिसएवप्रमाणं तथाचशताच्चठन्यताविशतेरितिसूत्रेकैयटः नियतकालाश्चस्मृतयोव्यवस्थाहेतवइतिमुनित्रयमतेनाद्यत्वेसाध्वसाधुप्रविभागइतिनै

फिषोऽन्तउदात्तः प्रातिपदिकस्यफिट्तस्यान्तउदात्तःस्यात् उच्चैःवृक्षःपाटलापालङ्कावासागरार्थानाम् एतदर्थानामन्तउदात्तः पाटलाप
लेरुहासुरूपापाकलेतिपर्यायाः लघावन्तइतिप्राप्ते अपालङ्कव्याधिघातआरेवतआरग्वधेतिपर्यायाः अम्बार्थः माताउनर्वेनन्तानामा
द्युदात्तेप्राप्ते सागरःसमुद्रः गेहार्थानामस्त्रियाम् गेहम् नविषयस्येतिप्राप्ते अस्त्रियांकिम् शालाआद्युदात्तोऽयम् इहैवपर्युदासाज्ज्ञाप
कात् गदस्यच अन्तउदात्तःस्यान्नतुस्त्रियाम् गदम् अस्त्रियांकिम् आन्त्रेभ्यस्तेगदाभ्यः स्वाङ्गशिटामदन्तानामित्यनारङ्गमाद्युदात्त
त्वम् ततष्टाप् थ्यपूर्वस्यस्त्रीविषयस्यथकारयकारपूर्वोयोऽन्त्योऽच्सउदात्तः अन्तर्धीस्त्रीविषयवर्णानामामितिप्राप्ते छाया माया
जाया यान्तस्यान्त्यात्पूर्वमित्याद्युदात्तत्वेप्राप्ते स्त्रीतिकिम् वाच्यम् यगन्तत्वादाद्युदात्तम् विषयग्रहणंकिम् इभ्याक्षत्रिया यतोना
वइत्याद्युदात्तइभ्यशब्दः क्षत्रियशब्दस्तुयान्तस्यान्त्यात्पूर्वमितिमध्योदात्तः॥ ९ तत्रअपाणिनीयान्यपिफिट्सूत्राणिपाणिनीयैराश्रीयंतेभा

ष्यात् ज्ञापकात् तथाचाद्युदात्तश्चेतिसूत्रेभाष्यंप्रातिपदिकस्यचान्तइतिप्रकृतेरन्तोदात्तत्वेशास्तीति तथातस्मिन्नेवसूत्रेप्रत्ययाद्युदात्तत्त्वस्यावकाशःयत्रानुदा
त्ताप्रकृतिः समत्वंसिमत्वमिति नहिफिषोन्तउदात्तःत्वतत्वसमसिमेत्यादिफिट्सूत्राश्रयणंविनाप्रकृतेरन्तोदात्तत्वंसर्वानुदात्तत्वंचसंभवतीतिदिक् पाट पाट
लेत्यादयओषधिविशेषस्यवाचकाःलघावन्तइतिप्राप्त इतिइदंसूत्रेण परेणचसंबध्यते पर्यायाइति वृक्षविशेषस्यवाचकाःसागरसमुद्रयोर्लघावन्तइतिप्राप्ते

गेहगेहार्थानामंत उदात्तः स्यात्स्त्रियां न गुद अगेहार्थमिदं धपूर्वं धकारेति नित्यस्त्रीलिंगस्येति शेषः प्राप्ते इति आद्युदात्तत्वे प्राप्ते इत्यर्थः यन्नंतत्वादिति वहिष
ष्ठिलोपो यश्चेति वचनात् घतो नावइति इभमर्हतीति दंडादित्वाद्यत् यांतस्यांत्यादिति सूत्राद्घइतिप्रत्ययस्वरेणापीति बोध्यम्॥ ॐ ॥ खान्तस्याशत्वम् श्मो
तौ आदीयस्य सश्मादिः न श्मादिरश्मादिः तस्य शकारसकारादिभिन्नस्य खशब्दस्यान्तोदात्तः स्यात् शीङः खो निद्ध्रस्वश्चेत्यादि नन्वहर्षूणादिषु तके घृशीङो ह्रस्व

खान्तस्याश्मादेः नखम् उखा सुखम् दुःखम् नखस्य स्वाङ्गशिटामित्याद्युदात्ते प्राप्ते उखा नाम भाण्डविशेषः तस्य कृत्रिमत्वात् खण्डवर्णो कृत्रि
मारव्याचेदित्युवर्णस्याद्युदात्तत्वे प्राप्ते सुखदुःखयोर्न विषयस्येति प्राप्ते अश्मादेः किम् शिखा मुखम् मुखस्य स्वाङ्गशिटामिति न विषयस्येति वा
आद्युदात्तत्वम् शिखायास्तु शीङः खो निद्ध्रस्वश्चेति उणादिषु नित्त्वोक्तेः अन्तरङ्गत्वाट्टाप् प्रागेव स्वाङ्गशिटामिति वा बोध्यम् हिमवत्सरति शत्या
नानाम् एषामन्त उदात्तः स्यात् अतिशयेन बहुलो बंहिष्ठः नित्त्वादाद्युदात्ते प्राप्ते बंहिष्ठैरश्वैः सुवृता रथेन यद्वंहिष्ठं नातिविधे सुदारू इत्यादौ
व्यत्ययादाद्युदात्तः सम्वत्सरः अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यते इत्याहुः सप्ततिः अशीतिः लघावन्त इति प्राप्ते चत्वारिंशत् इहापि प्रा
गवत् अभ्भूर्णीनां प्रभृथस्यायोः ॐ अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः थाथादिसूत्रेणागतार्थमेतत् दक्षिणस्य साधौ अन्त उदा
त्तः स्यात् साधुवा वित्त्वाभावेऽत्र व्यवस्थायां सर्वनामतया स्वाङ्गशिटामित्याद्युदात्तः अर्थान्तरे तु लघावन्त इति गुरुरुदात्तः दक्षिणः सरलोदारप
रच्छन्दानुवर्त्तिष्विति कोशः स्वाङ्गाख्यायामादिर्वा इह दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्तः दक्षिणो बाहुः आख्याग्रहणं किम् प्रत्यङ्मुख
मासीनस्य वामपाणिर्दक्षिणो भवति॥ ९ — श्चेत्येव पठ्यते शुहेः खो मूर्चेत्यतः खोऽनुवर्त्तते ह्रस्वविधानसामर्थ्याद्गुणाभाव इति स्वयमप्युणादिष्वेवमेवोक्तं तस्मात्

वीपरविरुद्धोऽयं ग्रन्थ इत्यस्वरसादाह अन्तरङ्गत्वादित्यादि हिष्ठ एषामिति हिष्ठवत्सरति शात्य एतदन्तानामित्यर्थः बंहिष्ठ इति बहुलशब्दादतिशायने तमबिष्ठनाविति इष्ठन्
प्रियस्थिरस्फिरेत्यनेन बहुलस्य बंहिरादेशः परिवत्सर इति क्वचित् संवत्सर इति पाठस्तत्र दसेश्च संपूर्वाच्चिदिति सरप्रत्ययस्य चित्त्वादपि सिद्धेः सप्ततिरित्यादि पंक्तिविं

शतित्रिंशदित्यत्र ज्युत्पादिता एते प्राग्वदिति लघावन्त इति प्राप्त इत्यर्थः दक्षिणस्य साः अस्यान्त उदात्तः आनीणये येर्थे नीणायां दक्षिणः प्रणीत इत्यर्थः ॥ॐ॥ छन्दसि द
क्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्यातां वेदे कृष्णस्य असान्त उदात्त छन्दसि नतु मृगाख्यायां एके इति तन्मतेऽस्मिन्सूत्रे नामधेयस्येत्यनुवर्त्तते वचनविपरिणामेनान्

छन्दसि च असाङ्गार्थमिदम् दक्षिणः इह पर्य्यायेणाद्यन्तावुदात्तौ कृष्णस्यामृगाख्या चेत् अन्त उदात्तः वर्णानां तणेत्याद्युदात्ते प्राप्ते अन्तो
दात्तो विधीयते कृष्णानां व्रीहीणाम् कृष्णो नोनाववृषभः मृगाख्यायां तु कृष्णो रात्र्यै वा नामधेयस्य कृष्णस्येत्येव अयं वा कृष्णोऽश्विना कृष्णऋ
षिः शुक्लगौरयोरादिः नित्यमुदात्तः स्यादित्येके वेत्यनुवर्त्तत इति तु युक्तम् सरो गौरो यथा पिबेत्यत्रान्तोदात्तदर्शनात् अङ्गुष्ठोदकबकवशा
नां छन्दस्यन्तः अङ्गुष्ठस्य साङ्गानामकुर्वादीनामिति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थ आरम्भः वशाग्रहणं नियमार्थं छन्दस्येवेति तेन लो
के आद्युदात्तेत्याहुः पृष्ठस्य च छन्दस्यन्त उदात्तः स्याद्भाषायाम् पृष्ठम् अर्ज्जुनस्य तृणाख्या चेत् उनर्वन्नन्तानामित्याद्युदात्तस्यापवादः
अर्य्यस्य स्वाम्याख्या चेत् यानस्यान्त्यात्पूर्वमिति पतौ नाव इति चाद्युदात्ते प्राप्ते वचनम् आशाया अदिगाख्या चेत् दिगाख्याव्यावृत्त्यर्थमिद
म् अत एव ज्ञापकाद्दिक्पर्य्यायस्याद्युदात्तता इन्द्र आशाभ्यस्परि नक्षत्राणामाविषयाणाम् अन्त उदात्तः स्यात् अश्लेषाऽनुराधादीनां ल
घावन्त इति प्राप्ते ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम् न कुपूर्वस्य कृत्तिकाख्या चेत् अन्त उदात्तो न कृत्तिका न
क्षत्रम् केचित्तु कुपूर्वोऽपि आपः तद्धितानामिति व्याख्याय आर्यिका बहुलिका इत्यत्राप्यन्तोदात्तो नेत्याहुः घृतादीनाञ्च अन्त उदात्तः घृतं मि
मिक्षे आकृतिगणोऽयम् ज्येष्ठकनिष्ठयोर्वयसि अन्त उदात्तः स्यात् ज्येष्ठ आह चमसा कनिष्ठ आह चतुरः वयसि किम् ज्येष्ठः श्रेष्ठः कनिष्ठोऽ
ल्पिष्ठः इह नित्त्वादाद्युदात्त एव बिल्वतिष्ययोः स्वरितो वा अनयोरन्तः स्वरितो वा स्यात् पक्षे उदात्तः ॥ ११ यः नामधेययोः शुक्लगौरयोरादिरुदात्त

इत्यर्थः तेन सरो गौरो यथा पिबेत्यत्रान्तोदात्तत्वमेव नामधेयत्वाभावात् अङ्गुष्ठो एषामन्तोदात्त छन्दसि अग्रस्येति उपलक्षणमिदं वकशब्दे चि प्राणि

नांकुपूर्वमित्याद्युदात्ते प्राप्ते इति बोध्यम् · वाभाषायां ट्ट्रमिति · पक्षे स्वाङ्ग · शिटामित्याद्युदात्तत्वम् · अर्जुनस्य अन्तउदात्तस्तृणाख्यायाम् · तृणाख्यायां किम् · अर्जुनोवृ
क्षः उनर्वन्नन्तानामित्याद्युदात्तः · अर्पस्य · अन्तउदात्तः स्वाम्याख्यायाम् · अर्यः स्वामिवैश्ययोरिति निपातितोयमर्यशब्दः · आशाया · अदिगाख्यायामाशाशब्द आद्युदा
त्तः स्यात् · ज्येष्ठेत्यादि · प्रशस्यस्य श्रः · ज्य चेति प्रशस्य शब्दादिष्ठनि ज्यादेशः · श्रवणं श्रवः सोऽस्त्यस्याः साश्रववती धनं विद्यते अस्याः साधनवती अतिशयिता श्रववती धनव
तीश्रविष्ठा धनिष्ठा इष्ठनि विन्मतोर्लुगिति मतुपोलुक् · आद्युदात्ते प्राप्ते इति ञ्नित्यादिरित्यनेन वृत्तिकेति · लघावन्ते इति आद्युदात्तत्वे · घृतमिति न विषयस्येति प्राप्ते ज्येष्ठ इति उदा
हरणे वृद्धशब्दस्य वृद्धस्य चेतीष्ठनि ज्यादेशः · युवाल्पयोः कनन्यतरस्यामिति युवन् शब्दस्य कनादेशः प्रत्युदाहरणे प्रशस्यस्य श्रः ज्य चेति प्रशस्य शब्दस्य ज्यादेशः श्र

इति फिट्सूत्रेषु प्रथमः पादः ॥ ॥ अथादिः प्राक् शकटेः अधिकारोऽयम् शकटिशकट्योरिति यावत् ह्रस्वान्तस्य स्त्रीविषयस्य आदिरुदात्तः
स्यात् ॥ बलिः तनुः न विषयस्यानिसन्तस्य वनेनवाय इसन्तस्यतु सर्पिः नपुंनपुंसकम् तृणधान्यानां च द्व्यषाम् द्व्यचामित्यर्थः कुशाः काशाः
माषाः तिलाः बहुचान्तु गोधूमाः त्रः संख्यायाः पञ्च चतस्रः स्वाङ्ग शिटामदन्तानाम् शिट् सर्वनाम कर्णाभ्यां चुचुकाद्दधि ओष्ठाविवमधुवि
स्वोविद्धायाः प्राणिनां कुपूर्वम् कवर्गात्पूर्व आदिरुदात्तः काकः वृकः शुकेषु मे प्राणिनां किं क्षिरः सर्पिर्मे धूदकम् खय्युवर्णं कृत्रिमाख्याचे
त् खयिपरे उवर्णमुदात्तं स्यात् कन्दुकः ॥ ११ ल्यस्यकन् नित्त्वादिति · तथा च नित्स्वरापवादोयं योगः पक्षे उदात्त इति उदात्त इत्यनुवृत्तेः ॥ ॥ इति प्र
थमः पादः १ ॥ ॥ न विषयस्य · इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्तः स्यात् सर्पिरिति · अर्चिशुचीत्यादिना इषि · तृण तृणवाचिनां धान्यवाचिनां च द्व्यचामादिरु
दात्तः स्यात् अषि ति अचः प्राचो संज्ञा तदाह · द्व्यचामित्यर्थ इति · गोधूमा इति · लघावन्ते इति मध्योदात्तता · त्रः सं · नकाररेफान्तायाः संख्याया आदिरुदात्तः स्यात् चतस्रः पा
ल इति · चत्वार इत्यान्नाम्स्वरेणभाव्यम् चतुर इत्यत्र चतुरः शसीति · चतुर्भिरित्यत्र झल्युपोत्तममिति चतुर्णामित्यत्र षट्त्रिचतुर्भ्य इत्यनेनेति समास उदाहृतः इगन्तकाल
कपालभगालेति पूर्वपदप्रकृतिस्वरेणाद्युदात्तो यम् स्वाङ्ग शिटां · स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्तः स्यात् उदकमिति · छन्दसि · अङ्गुष्ठोदकबकवशानां

उनर्वं॰ उनक्रवन्॰ एतदन्तानामादिरुदात्तः स्यात् ह्रस्वान्तस्य॰ अन्तिम नृशंसः॰ अक्षस्य॰ अदेवनस्याक्षस्यादिरुदात्तः अर्हस्य॰ असमद्योतने अर्हशब्दस्यादिरुदात्तः
ग्रामादीनां च आदिरुदात्तः लुवन्तस्य॰ उपमेयवाचिनो लुवन्तस्यादिरुदात्तः चञ्चेवेति॰ रवेप्रतिकृतातितिविहि तस्य लुम्मनुष्य इति कनो लुप् लुवन्तस्य किम् अग्निर्माणवकः नक्ष
क्षपूर्वेण प्राप्तमाद्युदात्तत्वं निषिध्यते॰ अत्र वृक्षपर्वतविशेषग्रहणात् वृक्षस्वायं वृक्षः पर्वतः अत्र पूर्वेणाद्युदात्तत्वं भवत्येव राजविशेषस्य॰ लुवन्तस्योपमेयनामधेयस्य रा

उनर्वन्नन्तानां उनवरुणां वो रिशां दसमं कर्णसारन्त्वानुरुणां वेवन् पीवानं मेषम् वर्णो नानन्तराति नितान्तानाम् आदिरुदात्तः एतः हरिणः शितिः पृ
श्निः हरित् ह्रस्वान्तस्य ह्रस्वमनृत्तच्छीलो न्यङ्कुः र्त्ये ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात् मुनिः अक्षस्यादेवनस्य आदिरुदात्तः तस्य नाक्षः देवने
नु अक्षे मर्दीव्यः अर्हस्यासमद्योतने अर्हो ग्रामस्य समः शकेत् अर्हे पिप्पल्याः पीतद्रुर्थानाम् आदिरुदात्तः पीतद्रुः सरलः ग्रामादीनाञ्च
ग्रामः सोमः यामः लुवन्तस्योपमेयनामधेयस्य चञ्चेवचञ्चा स्फिगन्तस्येति पाठान्तरम् स्फिगिति लुपः प्राचां संज्ञा न वृक्षपर्वतविशेषव्याघ्र
सिंहमहिषाणाम् एषामुपमेयनाम्नामादिरुदात्तो न तालस्वतालः मेरुरिव मेरुः व्याघ्रः सिंहः महिषः राजविशेषस्य यमन्वा चेत् यमन्वाद्
वृः आङ्गू उदाहरणम् अङ्गाः प्रत्युदाहरणम् लघावन्ते द्वयोश्च बह्वषो गुरुः अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वच्कस्य गुरुरुदात्तः कल्याणः
कोलाहलः स्त्रीविषयवर्णाक्षुपूर्वाणाम् एषामन्त्यानामाद्युदात्तः स्त्रीविषयः मल्लिका वर्णः श्येनी हरिणी अक्षुशब्दान्तः पूर्वोऽस्येषाम् अक्षु
पूर्वाः तरक्षुः शकुनीनाञ्च लघु पूर्वम् पूर्वं लघु उदात्तं स्यात् कुक्कुटः तित्तिरिः ॥ १८

जविशेषस्याद्युदात्तः यमन्वा चेन्नामधेयं भवति॰ पूर्वेणैव सिद्धे नि
यमार्थमिदं राजविशेषस्य चेद्वृद्धस्यैवेत्याहुः किं तर्हि तु वृद्धस्य चेद्राजविशेषस्यैवेति नियमो दर्शितः आङ्गू इति आङ्गूस्वायमाङ्गूः लघावन्ते इत्यस्मादिरिति न संबध्य
ते तेन नादिरपि गुरोरुदात्तः अत एव वृषाकपिशब्दस्य गुरुरुदात्त इति वृषाकप्यग्नीति सूत्रे वृत्त्यादिग्रन्थे सुविभावितम् न च गुरूणामन्त्यस्य आदिरित्यर्थोऽस्त्विति वाच्यम् अन्य
तोऽपि सिति सूत्रे सारङ्गकल्माषयोर्व्यञ्जनलघावन्त इत्यादिना मध्योदात्ताविति हरदत्तग्रन्थविरोधादित्याहुः कल्याण इति॰ पर्यायेणाद्युदात्तौ शकुनीनां पक्षिवाचिनां

पूर्वमिति अन्त्यात्पूर्वमित्यर्थः अन्त्याप्यादिरिति न संबध्यते पूर्वग्रहणात् कुक्कुटेत्यादि मध्योदात्तावेतौ ॥ ः ॥ नर्तु ऋतुवाचिनां प्राणिवाचिनां च यथालक्षणप्राप्त
मुदात्तत्वेन धान्यानां धान्यवाचिनां द्व्यक्शब्दानां षशब्दान्तानां चादिरुदात्तः श्यामाका माषा इति अन्तोशीनारेत्यनेनन्तण धान्यानामित्यनेन चाद्युदात्तत्वस्य सिद्ध
त्वात् नैषादकाराजमाषा इत्युदाहर्तव्यम् फिट्सूत्रेतु सूत्रे च शब्दो न पठितः वृत्तौ गुरुरुदात्त इति व्याख्यातं नत्वादिरुदात्त इति नैषादकाः कालाक्षा इत्युदाहृतं च यत्तु धान्यानामिति
किं श्यामाका इत्युदाहृतं तन्न श्यामाके धान्यत्वाभावश्चिन्त्यः जनपदा जनपदवाचिनामजन्तानामादिरुदात्तः स्यात् केकय इति अत्र परत्वाद्यान्तस्यान्त्यात्पूर्वमिति स्वरेण भाव्य

नर्तुप्राण्याख्यायाम् यथालक्षणंप्राप्तमुदात्तत्वन्न वसन्तः कृकलासः धान्यानाञ्च द्व्यक्षाणानाम् आदिरुदात्तः कानानाम् श्यामाकाः षान्ता
नाम् माषाः जनपदशब्दानामषान्तानाम् केकयः हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा हयिति हलः संज्ञा पललम् शललम् हयादीनांकि
म् सकलः असंयुक्तेतिकिम् मल्लः इगन्तानाञ्च द्व्यषाम् आदिरुदात्तः कृषिः ॥ ः ॥ इति द्वितीयः पादः ॥ ः ॥ अथ द्वितीयं प्राग्गोषात् ईषान्त
स्यहलादेरित्यतः प्राक् द्वितीयाधिकारः त्र्यचां प्राङ्मकरात् मकरवरूढे त्यतः प्राक् त्र्यचामित्यधिकारः स्वाङ्गानामकुर्वादीनाम् कवर्गरेफवका
रादीनिवर्ज्येथित्वात्र्यचां स्वाङ्गानां द्वितीयमुदात्तं ललाटम् कुर्वादीनान्तु कपोलः रसना वदनम् मादीनाञ्च मलयः मकरः शादीनांशाकाना
म् शीतन्या शतपष्णा पान्तानां गर्वादीनाम् पादपः आतपः लघ्वादीनान्तु अरूपम् व्यचांतु नीपम् ॥ २९

मतः अङ्गा वङ्गा इत्युदाहर्तव्यमिति व
दन्ति हयादीनां हलादीनामसंयोगपूर्वो यो लशब्दस्तदन्तानामादिरुदात्तः अन्त्यात्पूर्वं वा केचित्तु अत्र जनपदानामित्यनुवर्तयन्ति पंचालाः कोशला इत्युदाहरन्त्यपला
लमिति प्रत्युदाहरन्ति च इगं अत्रापि जनपदानामित्यनुवर्त्य कुरवश्चेदय इत्युदाहृतं कृषिरिति प्रत्युदाहृतं अक्षैर्मा दीव्यः कृषिमित् कृषस्वेत्यत्र कृषिशब्दस्यान्तोदा
त्त्वात्॥ इति द्वितीयः पादः ॥ कपोल इति लघावन्त इति मध्योदात्तत्वम् रसना वदनमिति स्वाङ्गशिटामित्याद्युदात्तत्वम् मादी मलयः मकर इति अनयोर्मकखरू
ढतियान्तस्यान्त्यात्पूर्वमिति विशिष्टस्वरविधानान्माहेन्द्र इत्युदाहर्तव्यम् शादीनां शा शकारादीनां शाकवाचिनां त्र्यचां द्वितीयमुदात्तं स्यात् केचित्तु सादीनामिति पठि

त्वासर्वधपाठस्तुदाहरति· पांतानाम्· पशब्दान्तानां शर्वादीनां च वाद्वितीयमुदात्तं स्यात् अनूपे अनोरप्रधानकनीयसीत्यनेनोदात्तत्वम्· नीपेनेरनिधानइत्यनेनेत्याहुः।
॥ सृत॥ यत अनि· अरणिरित्यादन्तानां च वाद्वितीयमुदात्तं स्यात्· इत्यादीति· आदिशब्देन पारावत वितस्तार्ज्जु आर्जिह्वा साकला उमा काष्ठा पेष्टा काशीनामिति व
त्त्यवेनुडभावश्चार्षः छन्दसि· छन्दसि मकरादीनामन्ये पांचादिर्द्वितीयं वोदात्तं· काश्यप· कर्दम कुलटा उदक गांधारि सुगन्धि· आदिरिति सुगन्धितेजनशब्दस्य·
नपः फलान्तानाम् नपुंसकम्· नपः किम्· दासीफलो वृक्षः· यान्तस्य· यशब्दान्तस्यान्त्यात्पूर्वमुदात्तं स्यात्· यान्तस्य· केचित्तु आन्तस्य च नालघुनीति पठित्वाश्वा

पांतान्यशान्तानाम् पुत अयुतम् अनि धमनिः अरणि विपणिः मकरवरूढपारेवत्तवितस्तेक्ष्वार्जिह्वा साकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा एषामादिर्द्वितीयो वोदात्तः मकरः वरूढ इत्यादि छन्दसि च अमनाराचर्थश्चारम्भः लक्ष्यानुसारादादिर्द्वितीयं वोदात्तं ज्ञेयम् कर्दमादीनां च आदिर्द्वितीयं वोदात्तम् सुगन्धितेजनस्य ते वा आदिर्द्वितीयं तेशब्दश्चेति त्रयः पर्य्यायेणोदात्ताः सुगन्धितेजनाः नपः फलान्तानाम्। आदिर्द्वितीयं वोदात्तम् राजादनफलम् यान्तस्यान्त्यात्पूर्वम् कुलायः थान्तस्य च नालघुनी नाशब्दो लघु च उदात्तं सः सनाथा सभा शिंशुमारोदुम्बरवलीवर्दोष्ट्रारपरूरवसां च अन्त्यात्पूर्वमुदात्तं द्वितीयं वा साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् द्वितीयमुदात्तं वा ईषान्तस्य हलादेरादिर्वा हलीषा लाङ्गलीषा उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् एषामादिरुदात्तः स्यात् महिष्याषाढयोर्जायेष्टकाख्या चेत् आदिरुदात्तः महिषीजाया अषाढा उपदधाति॥ ॥ ९९ कारान्तस्य नाशब्दस्य च लघुनो अन्त्यात्

त्पूर्वं उदात्तं स्त इति व्याख्यापनानादि वामुधा इत्युदाजहुः शिशुमार· शिंशुमार इति पाठान्तरम्· उष्ट्रार· उष्ट्रार इति पाठान्तरे· सांकाश्य· सांकाश्य काम्पिल्य शब्दौ
वुञ्छणेति ण्यान्तौ· दार्वाघाटशब्दो· दारावाहनोणंतस्य च टः संज्ञायामिति प्रत्ययान्तः· ईषान्तस्य ईषान्तस्य हलादेरादिरुदात्तो वा स्यात्· उशीर· अत्र श्यामाकग्रह
णं चिन्त्यं· धान्यानां च वृद्धक्षान्तानामित्यनेनैव सिद्धत्वात्· इदमेव ज्ञापयितुं मूले धान्यानामित्यत्र श्यामाक इत्युदाहृतम् देवरग्रहणमपि चिन्त्यम्· लघावन्त इत्यने·
न सिद्धत्वात्· हृदयग्रहणं सांगानामकुर्वादीनामिति द्वितीयस्योदात्तत्वं वाधितुम्ऽन्ये पालघावन्त इति प्राप्ते वचने· महिष्य· एतयोरादिरुदात्तः स्यात्· यथास

इति तृतीयः पादः ॥ अत्र एतानि सर्वाण्युदात्तानि । सिमस्य । सिमशब्दस्याथर्वणे वेदे उदात्तः उपसर्गाश्चाभि अभिशब्दं वर्जयित्वा उपसर्गा आद्युदात्ताः स्युः प्रथेति प्रथाशब्दं पार

इति तृतीयः पादः शकटिशकट्योरक्षरमक्षरं पर्यायेण उदात्तं शकटिः २ शकटी २ गोष्ठजस्य ब्राह्मणनामधेयस्य अक्षरमक्षरं पर्यायेणोदा

त्तं गोष्ठजः ब्राह्मणः अन्यत्र गोष्ठजः पशुः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः पारावतस्योपोत्तमवर्ज्जम् शेषं क्रमेणोदात्तं पारावतः धूम्रजानु

मुञ्जकेशकालवालस्थालीपाकानाम् धूजलस्थानां एषाम् चतुर्णां धूप्रभृतीनां चतुर्णां अवर्जयित्वा शिष्टानि क्रमेणोदात्तानि धूम्रजानुः मुञ्जकेशः

कालवालः स्थालीपाकः कपिकेशहरिकेशयोश्छन्दसि कपिकेशः हरिकेशः ४ न्यङ्स्वरौ स्वरितौ स्पष्टम् न्यङ्ङुत्तानाव्यचस्यत्वः न्यर्बुदव्यल्क

शयोरादिः स्वरितः स्यात् तिल्यशिक्यकाश्मर्य्यधान्यकन्याराजन्यमनुष्याणामन्तः स्वरितः स्यात् तिलानाम्भवनं क्षेत्रं तिल्यम् यतोऽनावइतिप्रा

प्ते । विल्वभक्ष्यवीर्याणि छन्दसि अन्तस्वरितानि त्वत्वसमसिमेत्यनुच्चानि त्वत्वत् उतत्वः पश्यन् नमन्तामन्यके समेसिमस्मे सिमस्याथर्व

णोऽन्तउदात्तः आथर्वण इति प्रायिकम् तत्र दृष्टस्येत्येवम्परं वा तेन वा सन्नतुते सिमस्मै इत्यृग्वेदेऽपि भवत्येव निपाता आद्युदात्ताः स्वाहा उप

सर्गाश्चाभिवर्ज्जं एवादीनामन्तः एवमादीनामिति पाठान्तरम् एव एवम् नूनम् सह ते पुत्र सूरिभिः सह षष्ठस्य तृतीये सहस्य सइतिप्रकरणे सह

शब्दस्याद्युदात्त इति प्राप्ते वाक्यमित्यम्वाचादीनामुभावुदात्तौ उभौ ग्रहणमनुदात्तं पदमेकवर्ज्जमित्यस्य बाधाय चादयोऽनुदात्ताः स्पष्टम् यथेति

पादान्ते तन्नेमिमृभवो यथा पादान्ते किम् यथा नो अदितिः करत् प्रकारादिद्विरुक्तौ परस्यान्तउदात्तः पटुपटुः शेषं सर्वमनुदात्तम् शेषं नित्यादिद्वि

रुक्तस्य परमित्यर्थः प्रप्रायम् दिवेदिवे इति शान्तनवाचार्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पादः ॥ आद्युदात्तश्च ३।१।३ प्रत्यय आद्युदात्तः स्यात्

ऋषिः कर्तव्यम् अनुदात्तौ सुप्पितौ ३।१।४ पूर्वस्यापवादः यज्ञस्य नयो युष्मत् तिशप्तिपोरनुदात्तत्वे स्वरितप्रचयौ ॥ १९ नोऽनुदात्तः स्यात् प्रकार

दिः प्रकारगुणवचनस्येत्यादिद्वित्वे पदस्यान्तोदात्तः स्यात् पटुपटुरिति । ननु कर्मधारयवदुत्तरेष्विति कर्मधारयवद्भावादेव समासस्येत्यन्तोदात्तत्वे सिद्धे व्यर्थमिद

मितिवाच्यं·तस्यपाणिनीयात्पूर्वप्रवृत्तत्वेनाशेषात्·शेषं·प्रकारादिद्वित्वादन्यस्मिन्द्वित्वेपरंसर्वमनुदात्तंस्यात् ॐ इतिचतुर्थः ॐ अथप्रत्ययस्वराः अग्निरिति अङ्गे·
नेलोपश्चेति निप्रत्ययः कर्त्तव्यमिति·तव्यप्रत्ययः तव्यतस्तु तित्वात्स्वरितो वक्ष्यते नचतव्यस्याप्याद्युदात्तत्वे उदात्तादनुदात्तस्येति स्वरितो भवत्येवेति चेत्सत्यम् किंत्वयम
सिद्धः·तित्स्वरस्तु सिद्ध इति प्रवृत्त्यप्रवृत्तिभ्यां महान्विशेषः·तव्यतस्तित्त्वमेव शेषनिघातपरिभाषायाप्रयोदेशप्रवृत्तौ ज्ञापकमिति ध्येयम्·युच्छतीति युच्छ प्रमादे·धातोरि
त्यतोदात्तः·ततः परः शत्रुदात्तादनुदात्तस्येति स्वरितः स्वरितात्संहितायामनुदात्तानामिति तियः प्रचयः॥ ॐ ॥ चितः सप्रकृतेरिति नन्विदं कथं लभ्यमिति चेन्न।
णु·चितइत्यवयवादेषा षष्ठी न कार्यिणः चिद्यो वयवस्तस्य संबंधीयः समुदायः सकार्यी·अथवा चिदस्यास्ति स चितः अर्शआदेराकृतिगणत्वादच्प्रत्ययः षष्ठ्यर्थे प्र

चितः ६।१।१६३ अन्तउदात्तः स्यात् चितः सप्रकृतेर्बह्वकजर्थं चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्तउदात्तो वाच्य इत्यर्थः नमन्तामन्य
केसमे यकेसरस्वति तकत्सुते तद्धितस्य ६।१।१६४ चितस्तद्धितस्यान्तउदात्तः पूर्वेणासिद्धे ञित्स्वरबाधनार्थमिदम् कौञ्जायनाः कितः ६।१।१६
५ कितस्तद्धितस्यान्तउदात्तः यदाग्नेयः तिसृभ्यो जसः ६।१।१६६ अन्तउदात्तः तिस्रो यावः सवितुः सावेकाचस्तृतीयादिर्विभक्तिः ६।१।१६८ सा
विति सप्तमीबहुवचनम् तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता वाचा विरूपः सोकिम् राज्ञेत्यादौ एकाचोऽपि राजशब्दात्परस्याभू
त् राज्ञो नु ते। विभक्तेर्राजनि त्वा। तृतीयादिः किम् न ददर्श वाचम्॥ ॐ ॥ (( यमात्तेन विहृतः समुदायस्येत्यर्थः अत्र च लिंगमकचश्चित्करणमन्यथा तस्यैका

च्यादनर्थकं तत्स्यात्·अन्यके इति·अव्ययसर्वनाम्नामित्यकच् ततः परा टिरुदात्ता एवं यकेतकादित्यत्रापि पत्तच्छेद्यादकच्·बहुच उदाहरणान्त बहुपठवत्यादि ज्ञेयं·ञि
त्स्वरबाधनार्थमिति·च्फञश्चकारोऽत्रातच्फञोरस्त्रियामिति विशेषणे चरितार्थः ञकारोद्योतनाऽसत्यस्मिन्परत्वात् ञित्स्वरः स्यादिति भावः कौञ्जायना इति·कुञ्जस्यापत्या
नि बहूनि·गोत्रे कुञ्जादिभ्यश्च्फञ्·व्रातच्फञोरस्त्रियामिति ञ्यः आद्यस्तद्राजाः तद्राजस्य बहुषु लुक्·आग्नेय इति·अग्नेर्ढक्·तिस इ·अर्थगतं बहुत्वं शब्दस्यारोप्य व
हुवचननिर्देशः तिसृभ्यः परस्य जसोऽन्तउदात्तः स्यादिति स्वर इति·अन्तोदात्तत्रिशब्दस्य स्थाने तिसृ आदेशः स्थानिवद्भावादन्तोदात्तः अनुदात्तौ सुप्पितौ इति जसनुदात्तः

एरनेकाचः । इणो यणित्यतो यणिति वर्त्तते । अचि श्नुधातु इति सूत्रादिह धातुरेव अनुवर्त्तते न तु श्नुभ्रुवौ तयोरिवर्णासंभवात् । धातुग्रहणं चात्र त्योभयोर्विशेषणं संयोग
स्यांगस्य चेति व्याचष्टे । धात्ववयवसंयोगेत्यादि । तत्र धातुना संयोगस्य विशेषणादिह यण् । उन्न्यौ । उन्न्यः । हरिं हरीन् इत्यादि सिध्यर्थं तु धातुना अंगं विशेष्यते । अन्य
था प्रध्यं प्रध्य इत्यादावपि पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्यात् । धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तं तत्त्वादंगस्य । प्रधीरिति । प्रध्यायतीति प्रधीः ।
ध्यायतेः संप्रसारणं चेति क्विपि संप्रसारणे पूर्वरूपे च हलः इति दीर्घः । यदा तु प्रकृष्टा धीर्बुद्धिर्यस्येति विग्रहस्तदा धीशब्दस्य नित्यस्त्रीत्वात् प्रथमलिंगग्रहणं चेति नि

एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२ धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे ।
इति यण् । कुमार्य्यौ । कुमार्य्यः । हे कुमारि । अमि शसि च । कुमार्य्यौ । कुमार्य्यः । कुमार्य्या । कुमार्य्यै । कुमार्य्याः । कुमारीणां । कुमार्य्यां । प्रधीः । प्रध्यौ । प्रध्यः । प्र
ध्यं । प्रध्यः । उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह स्यादेव यण् । उन्न्यौ । उन्न्यः । हे उन्नीः । उन्न्यं । ङेः आम् । उन्न्याम् । एवं ग्रामणीः । अनेकाचः किं ।
नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियं । नियः । ङेः आम् । नियां । असंयोगपूर्वस्य किं । सुश्रियौ । यवक्रियौ । गतिकारकेतरपूर्वपदस्य यण् नेष्य
ते । सुद्धियौ । परमधियौ । कथं तर्हि दुर्धियौ वृश्चिकभियेत्यादि । उच्यते । दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति ।
यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं न्वेह विवक्षितं । वृश्चिकसम्बन्धिनीभीः वृश्चिकभीरिति

त्यस्त्रीलिंगातिदेशे यथासंभवं नदीकार्यं बोध्यं । प्रथमलिंगग्रहणं चेति वार्तिकस्य प्रथमलिंगं गृहीत्वा यू स्त्र्याख्यौ नदीत्यनेन नदीत्वं वक्तव्य ९ नरपदलापोवा ॥
मित्यर्थात् । एरनेकाच इति यण्विषयत्वेन नेयङुवङ्स्थानाविति निषेधस्याप्रवृत्तेश्चेत्येके । अन्ये त्वाहुः एवं तर्हि यथोद्देशपक्षे न्यायसिद्धमिदमिति मनोरमाग्रन्थो विरुध्येत ।
यथोद्देशपक्षेपि प्रधीशब्दाद्यर्थतया वचनस्यावश्यकत्वात् । मूले हि उपसर्जनत्वेपि नदीत्वं वक्तव्यमित्युक्तं । न तु नित्यस्त्रीत्वमिति । तस्मात्प्रथमलिंगग्रहणमित्यने
न लिंगप्रयुक्तं यन्नदीत्वं वृत्तं प्राक् स्थितं तदिहातिदिश्यते । धीशब्दे तु नेयङुवङ्स्थानाविति निषेधेन नदीत्वाभावान्नास्त्येव प्रधीशब्दे नदीत्वातिदेश इति । ङिति ह्रस्वश्चेति
वैकल्पिकनदीत्वमपीह नातिदिश्यते । प्रथमलिंगे इतिवचनं यथोद्देशे न्यायसिद्धमिति ग्रन्थात् ॥ ॥

स्वरिग्रहार्थमिति· शासादिग्रहणंतुनकृत्तंनपुंसकेशासिमाभूत्·सुटियथास्यादिति·ऊ इदं·अत्रैकाचइतिवर्त्तते·अन्तोदात्तादितिच·एकाजंतोदात्तेभ्यः परःसर्वनामस्था
न भक्तिरुदात्तास्यात्·प्रष्ठोहइति· छन्दसिसहः वहश्चेतिण्विः वाहऊठ्·उपपदसमासेन प्रष्ठवाहशब्दोगतिकारकोपपदात्कृदित्यन्तोदात्तः अत्रप्रष्ठौहशब्दस्यानेकाच्त्वे
पिऊठ्शब्दस्यैकाच्त्वमेवऊठ्युपधाग्रहणमिति उपधाभूतऊठ्शब्दात्तेनत्वंत्यरत्यर्थः पंचमीनिर्देशात्परस्यैवग्रहणेप्राप्तेवचनं·तेनाक्षद्यूरित्यादौविभक्तेराद्युदात्तत्वं
न·अत्रहि अक्षैर्दीव्यतीतिक्विप्·अन्तरंगत्वादूठ्परा उपपदसमासत्वात्कृत्स्वरेणान्तोदात्तोयम्·अन्वादेशेनेति·अतएवसावेकाचइत्यपिस्वरेण·यदिस्यात्तर्हीहान्तो
दात्ताधिकारोव्यर्थः स्यात्·प्रतेवभ्रूइति·मित्राक्ककु·अन्वादेशप्रदर्शनार्थमाभ्यामित्यत्रोक्तामाभ्यामिति·अत्रशर्वाईर्चैवभ्रुशब्देनोक्तयोरिहेदमापरामर्शेप्यन्वादेशोस्त्येव
अन्वादेशश्चकथितानुकथितमात्रेनत्विदमाकथितस्येदमेवानुकथनमितिभाष्योक्तेः षट्पदादयइति·नततः परे·एकाचइत्यनुवृत्ते॥ ॥अष्टनोदीर्घातादष्टनः परा

अष्टनोदीर्घात् ६।१।१७२ शासादिर्विभक्तिरुदात्ता अष्टाभिर्दशभिः शतुरनुमोनद्यजादी ६।१।१७३ अनुमयः शतृप्रत्ययस्तदन्तादन्तोदात्तात्प
रानदी अजादिश्चशासादिर्विभक्तिरुदात्तास्यात् अच्छारवंप्रथमंजानती कृणवते अन्तोदात्तात्किम् दधती अम्पसानामादिरित्याद्युदात्तःअ
नुमः किम् तुदन्ती एकादेशोऽत्रउदात्तः अदुपदेशात्परत्वाल्लसार्वधातुकइतिनिघातः॥ १९ सर्वनामस्थानेविभक्तिरुदात्तारुत्युपोत्तममित्य
स्यापवादः अष्टन्शब्दोघृतादित्वादंतोदात्तः तेनउत्तरार्थमनुवर्त्तमानस्यांतोदात्तादित्यस्येहापिनान्वयः दीर्घात्किम् अष्टभिः इहरुत्युपोत्तममितिस्वरः ननुचात्राप्य
ष्टनआविभक्तौइत्यनेनभवितव्यम्· तद्विधौविकल्पस्याभावादितिचेत्सत्यम्·इदमेवदीर्घग्रहणमष्टनआत्वविकल्पंज्ञापयति·नित्येत्वात्वेव्यावर्त्याभावाद्दीर्घग्रहणम
नर्थकंस्यात्·कृतात्वस्यषट्संज्ञांचज्ञापयति·अन्यथात्वात्वपक्षेसावकाशोष्टनः स्वरः परत्वाद्नात्वपक्षेषट्स्वरेणबाधिष्यतेइतिकिंदीर्घग्रहणेन·जानतीति·ज्ञाजनोर्जे
जादेशः श्नाभ्यस्तयोरातइतिश्नाकारलोपः अत्रप्रत्ययस्वरेणशत्रन्तमन्तोदात्तं·कृणवतइति·धिन्विकृण्व्योरच·तुदन्तीति·तुदादित्वाच्छः आच्छीनद्योरितिनुम् प्रत्युदा
हरणोद्यङ्·विकलतांपरिहरति·एकादेशोत्रोदात्तइति·तुदन्तीत्यत्रशेकृतेतस्मात्परस्यशतुरदुपदेशात्परत्वात्तास्यनुदात्तेतिनिघातेएकादेशउदात्तेनोदात्तइत्युदात्तत्व
म् अस्मिन्कर्तव्येतस्यासिद्धत्वम्नास्ति· अनुमइतिप्रतिषेधाज्ज्ञापकात्·नह्येकादेशस्वरेणविनाशत्रन्तंसनुम्कमन्तोदात्तंभवति॥ ॥· ॥ ॥

अचिरस्कृत इत्ति रेफादेशे कृते उदात्तस्वरितयोर्यण इति जसः स्वरितत्वं प्राप्तमनेन वाध्यते· सप्तमीवहुवचनमिति· न तु प्रथमैकवचने व्याख्यानात् राज्ञेति· सावित्येतस्मि
न्नसति एकाचः परा तृतीयादिर्विभक्तिरुदात्ता भवतीत्यर्थो भवति· भवति चायम् ल्लोपे कृते एकाच् राज इति· राजशब्दः आद्युदात्तः कनिन्युवृषितक्षिराजिधन्विद्यु
प्रतिदिव इति कनिनन्तत्वात्॥ ॥ अनोदात्ता· एकाच इति वर्त्तते तृतीयादिविभक्तिरिति च नित्यशब्दस्स्वर्यते· तेन नित्याधिकारगतिर्भवतीत्याहुः नित्याधिकारेत्यादि
अनित्यसमासे किम् अग्निचिता· अग्नौ चेरिति क्विप्रत्ययः उपपदसमासः गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः अधिकारग्रहणं किम·

अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ६।१।१६९ नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीया
दिर्विभक्तिरन्तोदात्ता वा स्यात् परमवाचा अञ्चेश्छन्दस्यसर्वनामस्थानम् ६।१।१७० अञ्चेः परा विभक्तिरुदात्ता इन्द्रो दधीचः चाविति पूर्वपदा
न्तोदात्तत्वं प्राप्तं तृतीयादिरित्यनुवर्त्तमानेऽसर्वनामस्थानग्रहणं शस्परिग्रहार्थम् प्रतीचो बाहून् ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ६।१।१७१ एभ्योऽस
र्वनामस्थानविभक्तिरुदात्ता प्रष्ठौहः प्रष्ठौहा ऊठ्युपधाग्रहणं कर्त्तव्यम् इह माभूत् अक्षद्युवा अक्षद्युवे इदम् एभिर्नृभिर्नृतमः अन्वादेशेन
अन्तोदात्तादित्यनुवृत्तेः न च तत्रान्तोदात्तताप्यस्तीति वाच्यम् इदमोन्वादेशेऽशनुदात्तस्तृतीयादाविति सूत्रेणानुदात्तस्य अशो विधानात् एतेवभ्रू
माभ्याङ्गा अनु पद्भ्यो मासहन्निश इति षट्पदादयः पद्भ्यां भूमिः दद्भिर्न जिह्वा जायते मासि मासि मनाश्विन्मे हृदस्था अप् अपां फेनेन पुम्
अभ्रातेव पुंसः रैणया वयम् रायो धर्त्ता दिव् दिवे दिवे॥

१९ विग्रहाभावमात्रेणायोनित्यसमासस्तत्र पर्युदासो माभूत्· अवाचाम्ब्राह्मणेन· वहुव्रीहौ नञ्सु
भ्यामित्यनोदात्तत्वम्। अत्र विभक्तेर्वैकल्पिक उदात्तो भवत्येव· अन्तोदात्तात्किम्· अवाचा नञ्समासोऽयम् न तु वहुव्रीहिः तेन नञ्सुभ्यामित्यनोदात्तत्वं न भवति· किन्त्व
व्ययपूर्वपदप्रकृतिस्वर एव भवतीत्यर्थः उत्तरपदग्रहणं तु एकाच्त्वेनोत्तरपदं विशेषयितुम्· अन्यथा समासविशेषणं स्यात् तथा च शुनः ऊर्जश्व· श्वोजरत्यादावेवायं विधिः स्यात्·
एकाच्किम्· राजदृषदा· षष्ठीसमासात्टा दधीच इति· दध्यञ्चेतीति· ऋत्विगादिना क्विन्· अनिदितामिति नलोपः चाविति दीर्घत्वम्· अत्र चाविति पूर्वपदान्तोदात्तत्वं प्राप्तम्

ङ्याव्यहल्स्वरप्राप्ता वितिभाष्योक्तेरिति भावः रेवानिति रयिरस्यास्तीति मतुप् रयेर्मतौ बहुलमिति संप्रसारणं पूर्वरूपत्वं आद्गुणः ततो ह्रस्वाभाव बहुवचनम् ॥ ॥
नाम्न्य॰ ह्रस्वग्रहणमनुवर्त्ततमतुब्ग्रहणं च तद्धि सप्तम्या विपरिणम्यते तेन ह्रस्वो विशेष्यते तदाह मतुपि यो ह्रस्व इति सुमतीनामिति सुमतिशब्दो बहुव्रीहिः ननु सु
भ्यामित्यन्तोदात्तः मतुपा ह्रस्वविशेषणं किम् भूतपूर्वेऽपि ह्रस्वे यथा स्वरः स्यात् अग्नीनामित्यादौ अन्यथा परत्वान्नित्यत्वाच्च दीर्घत्वे कृते ह्रस्वाभावान्न स्यात् तिसृणामि
त्यत्र सांप्रतिके ह्रस्वे स्यात् सांप्रतिकाभावे हि भूतपूर्वगतिर्भवति न तु सत्यपि तस्मिन् नन्वेवं तिसृणामित्यत्र न स्यात् मतुपि तिसृभावस्यैवाभावात् इष्टमेवैतत् तस्य ही
तम् अत्र हि षट्त्रिचतुर्भ्यो हलादिरिति नित्यमेव विभक्तेरुदात्तत्वमिष्यते षट्त्रि॰ अन्तोदात्तादित्येतन्निवृत्तम् यद्येतदनुवर्त्तेत पंचानां नवानां चतुर्णामित्यत्र न स्यात्

नामन्यतरस्याम् ६।१।१७७ मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा चेतन्तीं सुमतीनाम् ङ्याश्छन्दसि ६।१।१७८ ङ्याः परो ना
मुदात्तो वा देवसेनानामभिभञ्जतीनाम् वेत्युक्तेर्नेह जयन्तीनां मरुतो यन्तु षट्त्रिचतुर्भ्यो हलादिः ६।१।१७९ एभ्यो हलादिर्विभक्तिरुदात्ता आ
षड्भिर्हूयमानः त्रिभिष्ट्वं देव नगोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ६।१।१८२ एभ्यः प्रागुक्तं न गवां शता गोभ्यो गातुं शुनश्चिच्छेपम् सोऽप्रथमैक
वचने अवर्णान्तात् तेभ्यो द्युम्नं नेत्राभ्यां हि शुधी हवम् ॥

११ अः संख्यायाः इत्याद्युदात्तत्वात्तर्हि स्यात् सप्तानामष्टानां सप्ताष्टशब्दौ घृतादित्वादन्तोदात्तौ
हलादिः किं चतस्रः पश्य यथैतदिह हलादिग्रहणं स्यव्यावर्त्यं तथा चत्वारः शसीत्यत्रैवावोचाम नगो सावितिः यदि सप्तमीबहुवचनग्रहणं स्यात् तेभ्यः केभ्यः इत्यत्र न
स्यात् तत्किंशब्दयोः सप्तमीबहुवचने परतः त्यदाद्यत्वे कृते बहुवचने झल्येदित्येत्वविधानात् तेषु केषु इत्यत्रावर्णान्तत्वाभावात् ताभ्यां याभिरित्यादावेव स्यात् तासु यास्वित्यत्रा
वर्णान्तत्वात्तस्मात्प्रथमैकवचनमित्याह सोऽप्रथमैकवचन इति अनन्तरप्रतिषेधस्यासंभवात्प्राप्तिकस्वरस्य प्रतिषेधो विज्ञायते इत्याह प्रागुक्तं नेति एवं च वीरवत्तममित्य
त्र ह्रस्वनुड्भ्यां मतुबिति न भवति स्फायितंचीत्यादिना रक्प्रत्ययान्तो दात्तो वीरशब्दः गोभ्य इति सावेकाच इति प्राप्तं शुनश्चिच्छेपमिति अत्र चिदिति पदं संहितापाठे बाहुलका
त् शुनःशेपशब्दस्य मध्ये प्रक्षिप्यते पदकाले तु शुनःशेपं चिदिति पठ्यते शेपपुच्छलांगूलेषु शुन इत्यलुक् वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः श्वन्शब्दे

उदात्तपरो उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति प्राप्ते वचनं चोदयित्री नेत्री सवित्रे इति तृजन्ता एते चित इत्यन्तोदात्ताः हल्पूर्वादिति किम् बह्वृतितवान्नाह्नरापा स्त्री
लिंगोपादानं नाभावनिवृत्त्यर्थम् तनोतेर्डउसन्वच्चेति उः चालनीतित उः सुमान् बहोर्नञ्वदुत्तरपदभूम्नीति बहुव्रीहिरन्तोदात्तः तन्नोदात्तस्वरितयोरिति विभक्तेः स्वरितत्वं अ
स्मिन्सूत्रे नकारग्रहणं कर्तव्यं उदात्तस्थाने यो नकारस्ततोऽपि परस्यानद्या उदात्तत्वं वक्तव्यमित्यर्थः तेन वाचांपतिः वाक्पतीति सिद्धम् अत्र हि पत्यावैश्वर्य इति पूर्वपद
प्रकृतिस्वरस्य नभूवाक्चिद्दिधिषुष्विति प्रतिषेधात्समासान्तोदात्तत्वे विभाषा सपूर्वस्येति नकारेनान्तत्वान्ङीप् अनेनोदात्तः नोङ् शसादय इति यद्यपि पूर्वसूत्रे नद्य
जादीत्यनुवर्तते तथापि ऊङ्धात्वोर्यणः परा नदी न संभवतीति नानुवर्तिता ब्रह्मबंध्वेति ऊङ्प्रत्ययस्वरेणोदात्तः तेन सह य एकादेशः सोऽप्युदात्तः तस्मात्परस्योदा
त्तत्वे प्रतिषिद्धे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति विभक्तिः स्वरिता सुभ्वे इति क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य ओः सुपीति यण् अद्विमानिति

उदात्तयणो हल्पूर्वात् ६।१।१७४ उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात् चोदयित्री सूनृतानाम् एषा नेत्री
कर्त्री देवाय कर्त्रा वेनो सवित्रे नोङ्धात्वोः ६।१।१७५ अनयोर्यणः परे शसादय उदात्ता न स्युः ब्रह्मबंध्वा सेत्य श्रिः सुभ्वे ह्रस्वनुड्भ्यां मतुप् ६।१।१७६
ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः यो अद्रिमानुदनिमानियर्ति नुटः अक्षण्वन्तः कर्णवन्तः सखायः अन्तोदात्तात्किम् मा त्वा विदद्दि
षुमान् स्वरविधौ व्यञ्जनमविद्यमानवदित्येतदत्र न मरुत्वाँ इन्द्र नियुत्वान् वायवागहि रेशब्दाच्च रेवां इन्द्रेवतः ॥ ९९ आपो दीयंते स्मिन्निति कर्तर्य
धिकरणे चेति किः उदनिशब्दो व्युत्पन्नः अस्य घृतादित्वादन्तोदात्तत्वं बोध्यम् अन्यथा ह्युदात्तान्यरापन्नानामिति द्वितीयस्योदात्तत्वं प्रसज्येत मतुवसो रुः संबुद्धौ छंद
सीति रुः आतोऽटि नित्यमित्यनुनासिकः अक्षण्वंत इति अक्षिशब्दान्मतुप् अस्थिदधिसक्थ्यक्ष्णामनङुदात्त इति छंदस्यपि दृश्यत इत्यनङ् अनोनुड्इत्यस्यासिद्ध
त्वात्पूर्वं नलोपः ततो भूतपूर्वगत्या मतुपो नुट् मादुपधाया इति वत्वं रषाभ्यामिति णत्वं धान्येनिदित्यधिकारे इषेः किं चेति उप्रत्ययान्त आद्युदात्तः इषुशब्दः तस्मात्परो मतु
बनुदात्त एव ननु मरुतोऽस्य संतीति मरुत्वान् अत्र मतुबुदात्तत्वं प्राप्नोति मृग्रोरुतिरित्युतिप्रत्यये प्रत्ययस्वरेण मरुच्छब्दस्यान्तोदात्तत्वात् न चात्र तकारेणाव्यव
धानं स्वरविधौ व्यंजनस्याविद्यमानत्वात् अत आह स्वरविधाविति नेष्यत इति समासस्येति सूत्रे मरुत्वानित्यत्र ह्रस्वनुड्भ्यां मतुबिति स्वरः प्राप्नोतीति दोषमु

तोऽङिद्दुपदेशादकारांतोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात्· ह्निङौ वर्जयित्वा· कर्तेत्यादि· लुटः प्रथमस्य डारौरसः एकत्वे नेडित्वाट्टिलोपः इतरत्र रिचेति सलोपः
॥ स्तरत्य नादादित्वाच्छ्योलुक्· ङिजरति· अस्याप्युपदेशविशेषणान्नेह· शृणु तेज रित्रहेवम्· अत्रश्रुरिति देशे न ङित् चनस्यत मिति· चनोऽन्तं तदात्मनइच्छतमित्यर्थः क्य
च्· लोट्यसस्तं शप् सचानुबंधस्यानेकांतत्वाद्दुपदेशः चित्स्वरोपीति· चित्स्वरस्यावकाशः चलनः चलनशब्दार्थादकर्मकाच्च· अस्यावकाशः आस्ते इत्यादौ वर्द्धमान
मित्यत्रत्वयं निघातश्चित्स्वरं बाधते परत्वादिति भावः वर्द्धमानमिति· वृधु वृद्धौ· लटः शानच्· शप्· आने मुगिति मुक् नचात्र मुका व्यवधानम् यच्चकारस्यागमो मुक् तदाका
रोपदेशात् परं लसार्वधातुकमिति सिद्धो निघातः स्वावयवेन व्यवधानाभावात्· यत्त्वकारान्तस्यांगस्य भक्तो मुक् तत्र तदुपदेशलसार्वधातुकमात्रापेक्षत्वादन्तरंगस्य
स्वरप्रत्ययकारान्तविशिष्टांगप्रत्ययापेक्षस्य बहिरंगस्य मुको ऽसिद्धत्वात्सिद्धो निघातः हत इति· अनुदात्तोपदेशेत्यनुनासिकलोपे कृते सत्यकारान्तात्परं लसार्वधातुकं भव

थलि च सेटीडन्तो वा ६।१।१९६ सेटि थलि इडन्तो पदे इडुदात्तः अन्तो वा आदिर्वा स्यात् यदा नैते त्रयः तदा लितीति प्रत्ययात्पूर्वमुदात्तं स्यात् लुलवि
थ अत्र चत्वारोपि पर्यायेणोदात्ताः उपोत्तमं रिति ६।१।२१७ रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यात् यदाहवनीये ॥ ❀ ॥ इति प्रत्ययस्वराः ॥ ❀ ॥

तितथापुपदेशग्रहणान्नभवति· नहि हन्तिरदंत उपदिश्यते· कतीह पचमाना इति ताच्छील्यवयोवचनशक्तिषु चानश्· कश्चित्कतीह निघ्नाना इति· दृश्यते तत्र
निघ्नशब्दादाचारक्विबन्ताच्छीदसो मुगभावः तत्रतास्यादिभ्यः परत्वाभावाच्चिंत्यं शिश्ये इति· एरनेकाच इति यणादेशः लिट् चेत्यार्द्धधातुकमेतत्· यस्थीत
इति· यच्छब्दप्रयोगो निपातैर्यद्यदिहन्तेति निघातप्रतिषेधार्थः अनप्रत्ययाद्युदात्तत्वमेव· विद विचारणे इन्धी दीप्तौ· खिद दैन्ये इति त्रयोऽनुदात्तेतः तेभ्यः परस्य सा
र्वधातुकस्यानुदात्तत्वे प्राप्ते आह विदीत्यादिभ्यः परस्य लसार्वधातुकस्यानुदात्तत्वं नेति वक्तव्यमित्यर्थः यासिष्टमिति· या प्रापणे लुङ्· थसस्तं च्लि लुङि च्लेः सि
·यमरमनमातां मितीट् सकौ· बहुलं छंदस्यमाङ्योगेपीत्यडभावः इदमाद्युदात्तत्वाभावे उदाहरणम्· आद्युदात्तत्वे तूदाहरणान्तरं मृग्यम्॥ ❀ ॥ थलि· आदि
मुल्यन्यतरस्यामित्यतोऽन्यतरस्यामित्यनुवर्त्तमाने वाग्रहणं कार्यविकल्पार्थम्· अन्यतरस्यांग्रहणेन कार्यविकल्पस्य सिद्धत्वात् तेनेडादयः पर्यायेणाकार्ये

नेभ्यः तेषामित्यत्र च सावेकाच इति प्राप्तं प्रतिषिध्यते राडिति किवन्तः राजा अडिति अञ्चतेः क्विवन्तः तस्य सनकारस्य ग्रहणं विषयावधारणार्थं यत्र नलोपो नास्ति
तत्रैव प्रतिषेधो यथा स्यात् प्राञ्चा प्राञ्चे नांचेः पूजायामिति प्रतिषिध्यते नलोपः अञ्चेश्छन्दस्यसर्वनामस्थानमिति प्राप्तं निषिध्यते गतोनुविभक्त्युदात्तः स्यादेव
प्राचा प्राचे क्रुडिति क्विवंतः क्रुञ्चा क्रुञ्चे कौटिल्याल्पीभावयोः ऋत्विगित्यादिना क्विन् तत्रैव सक्रेक्रुञ्चेति निपातनान्नलोपाभावः कृत् करोतेः कृन्ततिर्वा क्विव
न्तः कृता कृते ॥ ॥ दिवो झलादिरिति नन्वसति सप्तमीनिर्देशे कथं पुनरत्र तदादिविधिः केवलझलामिकायाविभक्तेरभावादेव तदादिविधिः ननु तर्हि तदं

दिवो झल् ६।१।१८३ दिवः पराझलादिर्विभक्तिर्नोदात्ता द्युभिः द्युभ्यः झलिति किम् उपत्वाग्ने दिवेदिवे नृचान्यतरस्याम् ६।१।१८४ ॥
नुः पराझलादिर्विभक्तिर्वोदात्ता न्रिमर्थ्यमानः तित्स्वरितम् ६।१।१८५ निगद्व्याख्यातम् कान्नम् तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकम
नुदात्तम् न्हिङ्वोः ६।१।१८६ अस्मात्परं लसार्वधातुकमनुदात्तं स्यात् तासि कर्ता कर्तारौ कर्तारः प्रत्ययस्वरापवादोऽयम् अनुदात्तेत् यआस्ते
ङितः अभिचष्टे अन्तेभिः अदुपदेशात् पुरुभुजाचनस्यतम् चित्स्वरोऽप्यनेनबाध्यते वर्द्धमानं स्वेदमे तास्यादिभ्यः किम् अभिज्ञ्घ्नाति
उपदेशग्रहणात् नेह हतो वृत्राण्यार्या लग्रहणं किम् कर्तीहनिघ्नानाः सार्वेति किम् शिश्ये अहन्विङो किम् हते यदधीते वि दीधिर्वेवि
भ्यो नेति वक्तव्यम् इन्धे राजा एतच्चानुदात्तस्य च यत्रेति सूत्रे भाष्ये स्थितम् आदिः सिचोऽन्यतरस्याम् ६।१।१८७ सिजन्तस्यादिरुदात्तो
वा यासिसम्वर्निरिभ्यनो ॥

तविधिरस्तु कापुनर्झलन्ता विभक्तिः शसादिः सकारान्ता इति चेत्सत्यम् षट्त्रिचतुर्भ्यो हलादिरित्यतः आदिरिति वर्त्तते दिवः परा
विभक्तिर्नोदात्ता भवति कीदृशी यस्या झलादिरिति द्युभिरिति सावेकाच इति वा ऊडिदमिति वा प्राप्तः स्वरः प्रतिषिध्यते दिवेदिवे इति उडिदंपदादिति विभक्तिरुदात्ता ति
त्स्वरितं निगद्व्याख्यातमिति उच्चारणेनैव व्याख्यातमित्यर्थः केति किमो त तित्स्वरितं कातीति किमः कादेशः तास्यनु तास्यादीनां समाहारद्वन्द्वः उपदेशग्रहणं सम
वव्यभिचाराभ्यां ङिद्भ्यां संबध्यते न तु तासनुदात्तेद्भ्यां ङिदिति कर्मधारयः उपदिश्यतइत्युपदेशः तस्याकारेण ङिन्ताच विशेषणात्तदन्तविधिः तथा च सूत्रार्थः तासेरनुदात्ते

णोति॰ कृगृदृशृवृ ठिमिदिक्लिदिभ्यश्चेत्योणादिकइः सचकित्॰ भुजे॰ किच्चेत्यतः किदित्यनुवर्त्तनात् तेन किरिगिरिशब्दौ प्रत्ययस्वरेणान्तोदात्तौ॰ मन्दयत्सखमिति॰ म
दिस्तुत्यादिषु एयन्तात्लटः शत्रादेशः तस्य च्छन्दस्युभयथेत्यार्द्धधातुकत्वेन शवभावात्तास्यनुदात्तेन्ङि॰ ददुपदेशादिति निघातोन अतः प्रत्ययाद्युदात्तत्वमेव॰ णेरनिटी
तिणिलोपस्तु नत्त इति सार्वधातुकत्वाश्रयणात्॰ नचैवं वैपरीत्यमापादनीयं छंदसि दृष्टानुविधानात्॰ इत्थं मंदयत्सखेत्यं तोदात्तः शस्त्री श्यामेति॰ उपमानानि सामान्यवच
नैरिति समासः शस्त्रीशब्दो गौरादिङीषन्तोदात्तः अव्यये॰ निपातत्वादेव सिद्धे नञ्ग्रहणमकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थम् अकरणिरित्यादावाक्रो
शे नञ्यनिरित्यनिः किंच तिसृ इत्यत्र तिसृभ्यो जस इति सति शिष्टोपि विभक्तिस्वरो नञ्स्वरेण बाध्यते॰ अपिव चत्वारः अनड्वाह इत्यत्र सति शिष्टोप्याम् स्वरो बाध्यते॰
न अव्यथी त्यत्र जिदृक्षीत्यादिना धातुना समासं निपात्य इनिः क्रियते तस्यापि स्वरस्य बाधनार्थं कुग्रहणं चादिषु पाठाभावात्॰ स्नात्वेति॰ मयूरव्यंसकादिरयम्॰ नन्वयंत

**वर्णौवर्णेष्वनेते ६।२।३ वर्णवाचिन्युत्तरपदे एतवर्ज्जिते वर्णवाचि पूर्वपदम्प्रकृत्यातत्पुरुषे कृष्णसारङ्गः लोहितकल्माषः कृष्ण
शब्दो नक्प्रत्ययान्तः लोहित शब्द इतन्नन्तः वर्णः किम् परमकृष्णः वर्णेषु किम् कृष्णतिलाः अनेते किम् कृष्णैतः ॥ ० ॥**

त्रैवान्तोदात्तो निपात्यतामिति चेन्न॰ सामिकृतं स्वयं धौतमित्यादिवारणाय परिगणनस्यावश्यकत्वात्॰ अन्यथा तत्रापि पूर्वपदप्रकृतिस्वरः स्यात्॰ इष्यते तु समासस्येत्य
न्तोदात्तः सामिकृतमित्यादौ सामि स्वयं क्तेनेति समासः मुहूर्त्तसुखमिति कालाध्वनोरिति द्वितीया अत्यंतसंयोगे चेति समासः मुहूर्त्तशब्दः पृषोदरादिरन्तोदात्तः भोज्यो
ष्णमिति कृत्यतुल्याख्या इति समासः भोज्यशब्दो एयदन्तः तित्स्वरितमिति स्वरितान्तः ॥ ॥ वर्णौवर्णे॰ अनेत इति प्रतिषेधाद्बहुवचननिर्देशाच्च उत्तरपदे स्वरूपग्रहणं
न तत्साह चयोत्पूर्वपदेपि स्वरूपग्रहणं न तदाह॰ वर्णवाचिनीत्यादि कृष्णशब्दो नक्प्रत्ययान्त इति कृषेर्वर्णे इति विहितो यो नक् तदन्त इत्यर्थः कृष्णशब्दः कृष्णस्या मृगा
ख्या चेदित्यंतोदात्तो वेदे भाषायां तु वर्णानां तणतिनितान्तानामित्याद्युदात्तः इतन्नंत इति॰ रुहेरश्च लो वा इति इतन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः कृष्णतिला इति॰ वर्णौव
र्णेनेति प्रतिपदोक्तः समास इह गृह्यते तेनैव सिद्धे वर्णग्रहणं चिंत्यप्रयोजनम् ॥

सिद्धत्वात् तेनेडादयः पर्यायेण कार्यं प्रतिपद्यन्ते नन्वेवं तत्रापि युगपद्ग्रहणादेवाऽन्यत्र पर्यायः सिद्धः सत्यम् आदेरपि प्राप्त्यर्थं वाग्रहणम् अन्यथा श्रुतयो
रिडन्तयोरेव कार्यित्वं विकल्प्येत सेटीति किम् यथा थलि स्वरः नन्विड्ग्रहणात्सेडेव थल् गृहीष्यत इति चेत्सत्यं इड्ग्रहणात्तु परेडागमः क्रियते तदा तस्योदात्तार्थं स्यात् यथा
कर्तुः क्यङ् सलोपश्चेत्यत्र सः ततश्च यथा लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तविधाने यपिथेत्यादौ त्वत्र थ्याभावेपि पर्यायेणोदात्तत्रयं भवति एवमिडभावेपि स्यादित्यर्थः श्री
हवनीय इति बाहुलकादधिकरणेऽनीयर् प्रीणनार्थात्कर्मणि वा ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः ॥ ॥ इति प्रत्ययस्वराः ॥ ॥ समासस्य यज्ञश्रियमिति य
श्रीतत्पुरुषः श्रीशब्दस्येकारस्योदात्ते कृते आन्तरतम्यादियङुदात्तः बहुव्रीहौ इहोदात्तस्वरितग्रहणमनुवर्तमानं तद्वृत्ति वर्तते पूर्वपदसामानाधिकरण्यात्स्वले प्र

समासस्य ६।१।२२३ अन्त उदात्तः स्यात् यज्ञश्रियम् बहुव्रीहौ प्रकृत्या पूर्वपदम् ६।२।१ उदात्तस्वरितयोगि पूर्वपदं प्रकृत्या स्यात् सत्यश्चि
त्रश्रवस्तमः उदात्तेत्यादि किम् सर्वानुदात्ते पूर्वपदे समासान्तोदात्तत्वमेव यथा स्यात् समपादः तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्य
यद्वितीयाकृत्याः ६।२।२ सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या तुल्यश्वेतः कृत्यतुल्याख्या अजात्येति तत्पुरुषः । किरिणा काणः किरिकाणः
पतयन्मन्दयत्सखम् मदयति मादके इन्द्रसखेति सप्तमीतत्पुरुषः शास्त्रीश्यामा अव्ययेन नञ्कुनिपातानाम् अयज्ञो वा एषः परिगणन
ङ्किम् स्नात्वाकालकः मुहूर्तसुखम् भोज्योष्णम् ॥ ९९ कृत्येतावदुक्तेपि स्वरप्रकरणात्प्रकृतिस्वरेणैव प्रकृतिभावो विज्ञायते पूर्वपदस्य प्रकृतिभावस्तत्स्थ
योरुदात्तस्वरितयोः प्रकृतिभावद्वारेणेत्याशयेनाह उदात्तस्वरितयोगीति चित्रेति श्रूयत इति श्रवः कीर्तिः चित्रं श्रवो यस्य स चित्रश्रवाः ततस्तत्र पवित्रशब्दः फिट्स्वरे
णान्तोदात्तः ततः परस्योदात्तादनुदात्तस्येति स्वरितः ततः परस्य स्वरितात्संहितायामनुदात्तानामिति प्रचयः समपाद इति त्वत्वसमसिमेत्यनुच्चानीति सर्वानुदात्तः स
मशब्दः पादशब्दो वृषादीनां चेत्याद्युदात्तः अन्तसमासान्तोदात्तत्वमेव तुल्यश्वेत इति नौवयोधर्मविषेति यति यतोऽनाव इत्याद्युदात्तस्तुल्यशब्दः सदृक्श्वेतः सदृश
श्वेत इति समानान्ययोश्चेति किमन्यः सदृक्शब्दः गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः एवं सदृशशब्दः कञन्तो मध्योदात्तः किरि

सिद्धेः प्रतिबंधिजायते कृच्छ्रयोगिवा कृच्छ्रं दुःखं तद्योगिवा कार्यसिद्धेः प्रतिबंधिजायते मूत्रकृच्छ्रमिति षष्ठीसमासः पदेपदेशे अपदेशो व्याजः व्याजो पदेशोत्स स्यंचेत्य मरालदाहच्याजवाचिनीति उच्चारपदेनेति उच्चारः पुरीषक्रिया विमूत्रपदमिति षष्ठीसमासः ॥ ६ ॥ निवाते॥ निवातशब्दे परे वातत्राणवाचिनीति वातत्रा णार्थे निवातशब्दे परे इत्यर्थः वातस्याभावो निवातमित्यव्ययीभावः निरुद्धो वातोऽस्मिन्निति बहुव्रीहिर्वा तत्र कुड्यादयो वर्त्तमानाः समानाधिकरणा निवातशब्देन सम स्यंते कुटी एव निवातं कुटीनिवातं कुड्य एव निवातं कुड्यनिवातं ड्यगन्ता इति कवतोर्ण्यत्कडकारस्ये त्संज्ञानभवति गुणप्रतिषेधार्थात्ककारानुबंधात् यगं तत्स्य न्ये इति॥

निवाते वातत्राणे ६।२।८ निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे पूर्वम्पदम्प्रकृत्या कुटीनिवातम् कुड्यनिवातम् कुटीशब्दो गौरादिङी षन्तः कुड्यशब्दो ड्यगन्तः यगन्त इत्यन्ये वातत्राणे किम् राजनिवाते वसति निवातशब्दो रूढः पार्श्वे शारदेऽनार्तवे ६।२।९ ऋतौ भवमार्त वम् तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे पूर्वपदम्प्रकृतिस्वरं स्यात् रज्जुशारदमुदकम् शारदशब्दो नूतनार्थः तस्यास्वपदविग्रहः रज्जोः सद्य उद्धृतम् रज्जुशब्दः सृजेरसुम् चेत्याद्युदात्तो व्युत्पादितः अनार्तवे किम् उत्तमशारदम् अध्वर्युकषाययोर्जातौ ६।२।१० एतयोः पर तो जातिवाचिनि तत्पुरुषे पूर्वपदम्प्रकृतिस्वरम् कठाध्वर्युः दौवारिककषायम् कठशब्दः पचाद्यजन्तः तस्माद्वैशम्पायनान्तेवासिभ्यश्चेति णिनेः कठचरकाल्लुगिति लुक् द्वारे नियुक्त इति ठक्यन्तोदात्तः जातौ किम् परमाध्वर्युः॥ ९ तेनुक्तवते ऽर्ण्यत्विति सूत्रमधीयते शारदे नूतनार्थ इति अ

व्युत्पन्न इत्यर्थः रज्जोः सद्य उद्धृतं रज्जुबद्धपात्राधारे रज्जुशब्दः इदानीमेव कूपादुद्धृतं नूतनं जलमित्यर्थः सृजेरसुश्चेति सूत्रेन्दे सलोपश्चेत्यतः सलोप इति वर्त्तते भृ मृशीङीत्यतः उरिति धान्ये नि दित्यतो निदिति सृजेरुः स्यात्स च नित् धातो रज्जुगागमः सलोपश्चेत्यर्थः तत्र सृजेरंत्यात्स्वः परे ऽसुमि सलोपयणादेशेऽसुस्सकारस्य जस्त्वे रज्जुरिति भवति आद्युदात्त इति प्रत्ययस्य नित्वान्नित्स्वरेण उत्तमशारदमिति शरदि कृतो भवे शारदम् अध्व कठाध्वर्युरिति अध्वरं यज्ञं यातीत्यध्वर्युः ऋत्वि ग्विशेषः कठेन प्रोक्तं छंदो धीते कठः कठशब्दात्तेन प्रोक्तमिति अण् णिनिप्रत्ययः तस्य लुक् अध्येतृणां तु प्रोक्ताल्लुगिति लुक् इति लुक् विशेषणसमासोयम् दौवारिककषाय इति

गाध॰ अरित्रगाधमिति अरित्रं नौकाङ्गं तस्य गाधं स्पृश्यमानं तलं॰ गाध्यत इति गाधः गाधृ प्रतिष्ठायां कर्मणि घञ्॰ अर्द्धर्चादित्वात्क्लीबत्वम्॰ गोलवणमिति॰ षष्ठीसमा
सः गोशब्दो गमेर्डोरिति डोप्रत्ययान्तो नोदात्तः ल्युडन्त इति॰ अर्तिलूधूसूखनसहचर इति विहितः मध्योदात्त इति॰ प्रत्ययस्वरेण इयत्तापरिच्छेदमात्रमिति इयत्तायाः परिच्छित्ति
रियत्तापरिच्छेदः क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते न पुनरायाममात्रे रूढ इत्यर्थः दायाद्यं॰ दातव्यो दायो अंशः दायमादत्ते दायादः मूलविभुजादित्वात्कः दायादस्य भावो दा
यित्वम्॰ दायस्य दानं तत्त्वं धौवाद इत्युल्क्षणाया आदीयमाने दाय एव दायाद्यशब्दो वर्तते॰ दायादशब्दे परे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं स्यात्॰ क्यप्प्रत्ययान्त इति

गाधलवणयोः प्रमाणे ६।२।४ एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात्॰ अरित्रगाधमुदकम्॰ तत्प्रमाणमित्यर्थः॰ गो
लवणम्॰ यावद्गवे दीयते तावदित्यर्थः॰ अरित्रशब्द इत्रान्तो मध्योदात्तः प्रमाणमियत्तापरिच्छेदमात्रं न पुनरायाम एव प्रमाणे किम्॰ परमगाध
म्॰ दायाद्यं दायादे ६।२।५ तत्पुरुषे प्रकृत्या धनदायादः धनशब्दः क्युप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः दायाद्यं किम्॰ परमदायादः
प्रतिबन्धि चिरकृच्छ्रयोः ६।२।६ प्रतिबन्धवाचि पूर्वपदं प्रकृत्या एतयोः परतस्तत्पुरुषे गमनचिरम्॰ व्याहरणकृच्छ्रम्॰ गमनं कारणवि
कलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते प्रतिबन्धि किम्॰ मूत्रकृच्छ्रम्॰ पदेऽपदेशे ६।२।७ व्याजवाचिनि पदशब्द उत्तरपदे
पूर्वपदं प्रकृत्या तत्पुरुषे मूत्रपदेन प्रस्थितः उच्चारपदेन मूत्रशब्दो घञन्तः उच्चारशब्दो घञन्तस्थाथादिस्वरेणान्तोदात्तः अपदेशे किम्॰ वि
ष्णुपदं ॥ ।

कृपृवृजिमन्दिनिधाञः क्युरिति विहितः परस्य दायाद इति॰ अत्र समासान्तोदात्तत्वमेव प्रतिबन्धि कार्यसिद्धिं प्रतिबध्नातीति प्रतिबंधि॰ आवश्यके
णिनिः गमनचिरं व्याहरणकृच्छ्रमिति॰ गमनव्याहरणशब्दौ ल्युडन्तौ॰ तयोर्लित्स्वरः अत्र विशेषणसमासः ननु सामानाधिकरण्ये सति विशेषणसमासो भवति॰ न चेह
तदस्ति गमनशब्दस्य गतिवाचित्वाच्चिरशब्दस्य कालवाचित्वात्॰ नैष दोषः चिरकालवाचिनि गमनेऽत्र चिरशब्दो वर्तते॰ गमनमत्र विशेष्यं तद्धि विशेषणेन चिरकृच्छ्रे तत्र
विशेष्यस्य पूर्वनिपातनार्थमपूर्व्यं सकादित्वमप्येष्टव्यं॰ पूर्वपदस्य प्रतिबंधिवाचित्वमुपपादयति॰ गमनमित्यादि॰ कारणवैकल्याद्धि चिरकालभावि गमनं कार्यं

सु॰
सि॰कौ॰
टी॰त॰
५६

शेषेन वृत्तेः प्रागवस्थायां अवयवत्वेनाभिमते विद्यमानाया एवं नदीसंज्ञायाः समुदाये अभ्युपेयत्वात्। न च प्रकृत्याधीर्यस्य तस्मै प्रध्ये प्रध्य इत्यादौ प्रथमं तधीशब्दस्याडु-
तिपरे प्रवर्तमाना नदीसंज्ञास्तीति दिक्। उन्नीरिति। सत्सूद्विषेत्यादिना क्विप्। ङेराम् इति। आंगत्वान्नीशब्दात्तदापि ङेः राम् भवतीति भावः। ग्रामं नयतीति ग्रामणीः। अत्र
ग्रामाभ्यां नयतेरिति णत्वं। नीरिति नयतीति नीः। क्विप्। गतिकारकेतरेति। गतिकारकपूर्वस्यैव यणिष्यते इति उन्नौ। कुमारीमिच्छन् ब्राह्मणः कुमारी कुमार्यौ कुमा
मेरित्यत्र यणाभावप्रसंगात्॥ ॥शुद्धधियाविति॥ यदा तु शुद्धं ब्रह्म ध्यायतीति विग्रहस्तदा भवत्येव यण्। शुद्ध्यौ। शुद्ध्यः। एवमग्रेपि। कथं तर्हीति। गतिकारके

नभूसुधियोः।६।४।८५। एतयोर्यण् न स्यादचि सुपि। सुधियौ। सुधिय इत्यादि। सखायमिच्छति सखीयति। ततः क्विप्। अल्लोपयलोपौ। अल्लोपस्य
स्थानिवत्त्वाद्यणि प्राप्ते। क्वौ लुप्तं न स्थानिवत्। एकदेशविकृतस्याऽनन्यत्वात् पाऽनङ्। णित्वे। सखायौ। सखायः। हे सखीः। अमि पूर्वरूपात्परत्वाद्यणि
प्राप्ते ततोऽपि परत्वात्सख्युरसम्बुद्धाविति प्रवर्तते। सखायं। सखायौ। शसि यण्। सख्यः। सह खेन वर्तत इति सखः। तमिच्छतीति सखीः। सुखमि
च्छतीति। सुखीः। सुतमिच्छतीति। सुतीः। सख्यौ। सुख्यौ। सुत्यौ। ख्यत्यादिति दीर्घस्याऽपि ग्रहणादुकारः। सख्युः। सुख्युः। सुत्युः। लूनमिच्छती
ति लूनीः। क्षाममिच्छतीति क्षामीः। प्रस्तीममिच्छतीति प्रस्तीमीः। एषां ङसिङसोः यणि। नत्वमत्वयोरसिद्धत्वात् ख्यत्यादित्युत्वं। लून्युः। क्षाम्युः। प्रस्तीम्युः
शुष्कीयते। शुष्कीः। पक्वीः। इयङ्। शुष्कियौ। शुष्कियः। ङसिङसोः शुष्कियः इत्यादि। इति ईदन्ताः। शम्भुर्हरिवत्। एवं भिक्षुवायुभान्वादयः॥

११ नरपूर्वपदत्वं
इह नास्तीति यणोवभाव्यमिति प्रश्नः। दुर्धिय इत्यत्र प्रादिभ्यो धातुजस्येति वार्तिकेन उत्तरपदलोपो बोध्य इत्याशयेनाह स्थिता धीर्येषामिति। वृश्चिकशब्दस्येति भाष्यकृता
हि वृद्धिपरिकल्पितमपायमाश्रित्य भीत्रार्थानामिति सूत्रं प्रत्याख्यातं। ततश्च संबंधमात्रविवक्षायां षष्ठ्येवेति नास्यत्र कारकपूर्वत्वमिति भावः। वृश्चिकसंबंधिनोभी
रिति। एवंच भयपयोगाभावाद्वृश्चिकस्य नापादानकारकत्वमिति सूत्रमतेपि न दोष इति भावः॥ ओः सुपीत्यतः सुपीत्यनुवर्तनादाह। अचि सुपीति। सुपि किं। सुध्युपास्यः व
सुनस्तु सुपीत्यननुवर्तनादपि न क्षतिः। अनंतरस्येति न्यायेन एरनेकाच इति ओः सुपीति च सूत्रद्वयेन प्रापितस्यैव यणो नभूसुधियोरिति निषेधाभ्युपगमात्। स्थानिवत्त्वा

राम॰
५६

सदृश सादृश्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या · एतयोरुत्तरपदयोः पितृसदृश इति पितृमातृशब्दावुणादितृजन्तौ · चित्स्वरेणान्तोदात्तौ · नन्वत्र पूर्वसदृशसमोनार्थेति तृती
यासमासे कृते तत्पुरुषे तुल्यार्थेत्येव सिद्धम् · न च तुल्यार्थयोगे षष्ठ्या अपि विहितत्वेन षष्ठीसमासार्थमिदमिति वाच्यम् · तत्रानभिधानात् षष्ठीसमासो नेत्यपि सुवचत्वादि
ति चेन्नैवम् अलुक्समासानुरोधेन षष्ठीसमासस्वीकारस्यावश्यकत्वात् · तद्यथा · दास्याः सदृशो वृषल्याः सदृश इति · षष्ठ्या आक्रोशे इत्यलुक् · दासीशब्दो दंसेष्टो न आ
चेति · दंसेष्टः प्रत्ययः नकारस्य चाकारः प्रत्ययस्वरेण दासशब्द उदात्तः टित्त्वान्ङीप् यस्येति लोपः अनुदात्तस्य च यत्रेति ङीप उदात्तत्वं वृषलशब्दाज्जातिलक्षणो ङीष् उभ

सदृशप्रतिरूपयोः सादृश्ये ६।२।११ अनयोः पूर्वम्प्रकृत्या पितृसदृशः सादृश्ये किम् परमसदृशः समासार्थोऽत्र पूज्यमानता न सादृश्यम् । द्वि
गौ प्रमाणे ६।२।१२ द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदम्प्रकृतिस्वरम् प्राच्यसप्तसमः सप्तसमाः प्रमाणमस्य प्रमाणे द्विगोर्नित्यमि
ति मात्रचो लुक् प्राच्यशब्द आद्युदात्तः प्राच्यश्चासौ सप्तसमश्च प्राच्यसप्तसमः द्विगौ किम् व्रीहिप्रस्थः प्रमाणे किम् परमसप्तसमः गन्तव्यप
ण्यं वाणिजे ६।२।१३ वाणिजशब्दे परे तत्पुरुषे गन्तव्यवाचि पण्यवाचि च पूर्वपदम्प्रकृतिस्वरम् मद्रवाणिजः गोवाणिजः सप्तमीसमासः
मद्रशब्दो रक्प्रत्ययान्तः गन्तव्यमिति किम् परमवाणिजः मात्रोपज्ञोपक्रमच्छाये नपुंसके ६।२।१४ मात्रादिषु परतो नपुंसकवाचिनि तत्
पुरुषे तथा भिक्षायास्तुल्यप्रमाणं भिक्षामात्रं भिक्षाशब्दो गुरोश्च हल इत्यप्रत्ययान्तः पाणिन्युपज्ञम् पाणिनिशब्दोऽन्तोदात्तः ॥ ६ ॥

यत्राप्युदात्तपरो हस्वादिति विभक्तिरुदात्ता नन्वेवं तृतीयासमासविधायके पूर्वसदृशेति सूत्रे सदृशग्रहणमास्तु सर्वत्र षष्ठीसमासोऽस्त्विति चेन्नैवम् · यत्र षष्ठ्यर्थो नास्ति तदर्थं
सदृशग्रहणम् · विद्यया सदृशो विद्यासदृश इति · अन्योऽदेवदत्तादिरत्र प्रतियोगी · प्राच्यशब्दस्याद्युदात्त इति · द्युप्रागपागुदक्प्रतीचो यदिति · यदन्तत्वाद्यतो नाव इत्याद्युदात्तः · प
रमसप्तसममिति · सप्तानां समानां समाहारः सप्तसमं · समाहारद्विगुः पात्रादित्वात् स्त्रीत्वाभावः · गंतव्यपण्यम् · वणिगेव वाणिजः प्रज्ञादित्वादण् · मद्रवाणिज इति · मद्रेषु
गत्वा व्यवहरतीत्यर्थः गोवाणिज इति · गमेर्डोः अन्तोदात्तोऽयम् · सप्तमीसमास इति · सप्तमीति योगविभागात् मद्रवाणिजेत्यत्र षष्ठीसमासः रक्प्रत्ययान्त इति : स्फायितं

दा

।तिविहितोरक्तादन्तादित्यर्थः प्रत्ययस्वरेणांतोदात्तोयम् मात्रोनथेति पूर्वपदंप्रकृतिस्वरंस्यादित्यर्थः भिक्षाशब्दोऽप्रत्ययान्तोदात्तः मात्रशब्दस्तु तुल्यपर्यायोवृत्तिविष येतुल्यप्रमाणेवर्त्ततेभिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीतत्पुरुषः तदाह भिक्षाया इति पाणिन्युपज्ञमिति उपज्ञायत इति उपज्ञः आतश्चोपसर्गेकर्मण्यङ् ।णिनिशब्दइञन्तत्वादाद्युदात्तः तस्यउपज्ञा इतिषष्ठीसमासः उपज्ञोपक्रमंतदाद्याचिख्यासायामितिनपुंसकता॥ ॥नन्दोपक्रममिति षष्ठीसमासः अत्रापिपूर्व न्नपुंसकता उपक्रम्यतेइतिकर्मणिघञ् नोदात्तोपदेशस्येतिवृद्धिप्रतिषेधः इषुच्छायमिति इषूणांछायेतितत्पुरुषः छायाबाहुल्यइतिनपुंसकता इषेःकिच्चेत्यु प्रत्ययान्तइषुः तत्रनिदधिकारादाद्युदात्तस्तदाह इषुशब्दइति गमनसुखमिति समानाधिकरणसमासेमयूरव्यंसकादिर्वा लित्स्वरइति गमनशब्दोल्युडन्तः लि

नन्दोपक्रमम् नन्दशब्दः पचाद्यजन्तः इषुच्छायम् इषुशब्दआद्युदात्तः नित्त्वात् नपुंसकेकिम् कुड्यच्छाया सुखप्रिययोर्हिते ६।२।१५ एत योः परयोर्हितवाचिनितत्पुरुषेतथा गमनसुखम् गमनप्रिय म् गमनशब्देनित्स्वरः हितेकिम् परमसुखम् प्रीतौच। ६।२।१६ प्रीतौगम्यायां प्रागुक्तम् ब्राह्मणसुखंपायसम् छात्रप्रियोऽनध्यायः ब्राह्मणछात्रशब्दौप्रत्ययस्वरेणान्तोदात्तौ प्रीतौकिम् राजसुखम् स्वंस्वामिनि ६।२। १७ स्वामिशब्देपरेस्ववाचिनिपूर्वपदंतथा गोस्वामी स्वङ्किम् परमस्वामी पत्यावैश्वर्य्ये ६।२।१८ दमूनागृहपतिर्दमेनभूर्वाविदिथिषु ६।२।१९ पतिशब्देपरेऐश्वर्य्यवाचिनितत्पुरुषेनैतानिप्रकृत्या भुवःपतिः भूपतिः वाक्पतिः चित्पतिः दिधिषूपतिः॥ ॥ ॥

तिसूत्रेणाद्युदात्तः प्रागुक्तमिति सुखप्रिययोः परयोस्तत्पुरुषेपूर्वपदंप्रकृतिस्वरंस्यादित्यर्थः योगविभागोयथासंख्यनिवृत्त्यर्थः ननुसुखप्रिययोरित्येतावत्पूर्वसू त्रंकृत्वाहितेचेतिवक्तव्यं तत्राद्येसूत्रेसुखप्रिययोः प्रीत्यव्यभिचारादेवप्रीतोगम्यमानायांभविष्यतीतिचेत्सत्यम्प्रीतिग्रहणंतदतिशयप्रतिपत्त्यर्थम् ब्राह्मणछात्र व्याविति ब्रह्मणोऽपत्यमित्यण् ब्राह्मोजाताविति जातौटिलोपाभावेऽन्नितिप्रकृतिभावः छात्रशब्दः छत्रादिभ्योणइतिणप्रत्ययान्तः पत्यौ ऐश्वर्यार्थेपतिशब्दे परेपूर्वपदंप्रकृतिस्वरंस्यात् तत्पुरुषे गृहपतिरिति षष्ठीसमासः गेहेकइतिकप्रत्ययान्तोगृहशब्दः प्रत्ययस्वरेणान्तोदात्तः नभू भ्वादीनांसमाहारद्वन्द्वेनपुंस

कात्वेंह्रस्वत्वम् एतानीति भूवाक्चिद्दिधिषू एतानीत्यर्थः नप्रकृत्येति पूर्वेणप्राप्तः प्रतिषिध्यते भूपतिरित्यादि षष्ठीसमासा एते तत्रभ्वादयस्त्रयः क्विवन्ताः दि
घूशब्दोऽन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषू इत्यूप्रत्ययान्तो निपातितः सर्वेऽप्यन्तोदात्ताः ॥ ॥ वाभु० उक्तविषये इति ऐश्वर्यवाचिनि पतिशब्दे परे भुवनशब्दः पूर्वपद
प्रकृतिस्वरं स्यात् पत्यावैश्वर्ये इति प्राप्ते विकल्पोऽयम् भुवनपतिरिति भुवनशब्दः क्युन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः आशंकाबाध० आशंकाबाधनेदीयस्सूत्तर
पदेषु सम्भावनवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् शकि शंकायां बाधृ लोडने आङ्पूर्वाभ्यां कर्मणि घञ् अतिशयेनान्तिकं नेदीयः द्वयोरन्तिकयोर्मध्ये एक
स्यातिशयविवक्षायामीयसुनि अन्तिकबाढयोरिति नेदादेशः गमनाशंकादयो विशेषणसमासाः मयूरव्यंसकादयो वा अस्तित्वाध्यवसाय इति अस्तित्वनिश्च

वाभुवनम् ६।२।२० उक्तविषये भुवनपतिः भूसूधूभ्रस्जिभ्य इति क्युन्नन्तो भुवनशब्दः आशङ्काऽऽबाधनेदीयस्सु सम्भावने ६।२।२१।
अस्तित्वाध्यवसायः सम्भावनम् गमनाशङ्कमस्ति गमनाबाधम् गमननेदीयः गमनमाशङ्क्यते आबाध्यते निकटतरमिति वा सम्भाव्य
ते। सम्भावने किम् परमनेदीयः पूर्वे भूतपूर्वे ६।२।२२ आढ्यपूर्वः पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते भूतपूर्वे किम् परमपूर्वः सविधस
नीडसमर्यादसवेशसदेशेषु सामीप्ये ६।२।२३ एषु पूर्वं प्रकृत्या मद्रसविधं गान्धारसनीडम् काश्मीरसमर्यादम् मद्रसवेशम् मद्रसदेश
म् सामीप्ये किम् सहमर्यादया समर्यादं क्षेत्रम् चैत्रसमर्यादम् ॥ ९ यः गमनाशंकमिति पूर्वपदानि ल्युडन्तानि तत्र लित्स्वरः गमनं शंक्यत इत्या

दि संभाव्यत इत्यस्य प्रत्येकमन्वयः गमनमाशंक्यते इति संभाव्यते गमनमाबाध्यत इति संभाव्यते गमनं निकटतरमिति वा संभाव्यते पूर्वे भूतपूर्वे भूतपूर्वार्थे पू
र्वशब्दे परे पूर्वपदं प्रकृतिस्वरं स्यात् आढ्यो भूतपूर्व इति यः पूर्वमाढ्य आसीत् स एवमुच्यते आढ्यपूर्व इति अत्र विशेषणसमासो मयूरव्यंसकादिर्वा आढ्यश
ब्दः आङ्पूर्वाद्ध्यायतेर्घञर्थे कविधानमिति कर्मणि कः आतो लोपः पृषोदरादित्वाद्ह्रस्व ढः थाथादिस्वरेणान्तोदात्तः परमपूर्व इति परमश्चासौ पूर्वश्चेति लोपं वा
क्यार्थः पूज्यमानतालक्षणा तस्मिन्निह प्रत्युदाहरणो समासः परमश्चासौ भूतपूर्वश्चेति विग्रहे तूदाहरणमेव सविध सामीप्यार्थेषु सविधादिषूत्तरपदेषु पूर्वपदं

प्रकृत्यातत्पुरुषे·मद्रस्रविधमिति सर्वत्रोदाहरणेषष्ठीसमासः·मद्रः·रगन्तोन्तोदात्तः·गांधारिः·कर्दमादीनांचेत्याद्युदात्तोमध्योदात्तोवा·काश्मीरोलघावन्तेइतिमध्यो
दात्तः·सविधादीनांसहविधया·इत्येवमादिकाव्युत्पत्तिरेवकेवलं समीपवाचिनस्त्वेतेसमुदायाः·मद्राणांसविधंसमीपमित्यर्थः समर्यादमिति·वोपसर्जनस्येतिस
हस्यसादेशः·चैत्रसमर्यादमिति षष्ठीसमासः·सविधादिषुकिम् मद्रसमीपम्·॥ ॐ ॥ विस्पष्टा·गुणवचनेषुपरेषुनिस्पष्टादीनिपूर्वपदानिप्रकृत्यास्युः·विस्प
ष्टकटुकमिति· स्पशबाधनस्पर्शनयोरित्यस्यण्यन्तस्यनिष्ठायांवादान्तशांतेतिस्पष्टशब्दोनिपातितः·तस्यवीशब्देनगतिसमासः विस्पष्टकटुकमितिविग्रहः·वि
स्पष्टादीनिशब्दप्रवृत्तिनिमित्तस्यविशेषणानिनद्रव्यस्य·कटुकादिशब्दैर्गुणवद्द्रव्यमभिधीयतेइतिसामानाधिकरण्याभावात्कर्मधारयाभावेसुप्सुपेतिसमासः

विस्पष्टादीनिगुणवचनेषु ६।२।२४ विस्पष्टकटुकम् विस्पष्टशब्दोगतिरनन्तरइत्याद्युदात्तः विस्पष्टेतिकिम् परमलवणम् गुणेतिकिम्
विस्पष्टब्राह्मणः विस्पष्ट विचित्र व्यक्त सम्पन्न पण्डित कुशल चपल निपुण श्रज्यावमकन्यापवत्सुभावेकर्मधारये ६।२।२५ श्रज्यश्रव
मकन् इत्यादेशवतिपापवाचिनिचोत्तरपदेभाववाचिपूर्वपदंप्रकृत्या गमनश्रेष्ठम् गमनज्यायः गमनावमम् गमनकनिष्ठम् गमनपापिष्ठ
म् श्रेतिकिम् गमनशोभनम् भावेकिम् गम्यतेनेनेतिगमनं गमनंश्रेयोगमनश्रेयः कर्मेतिकिम् षष्ठीसमासेमाभूत्॥ ९९ विचित्रेति·चित्रचित्री

करणे·चुरादिण्यंतादेरच्·विशेषेणचित्रंविचित्रंप्रादिसमासः तत्पुरुषेतुल्यार्थेत्यव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः·चितीसंज्ञानेनिष्ठा·विगतंचित्रमस्यइतिविचि
:बहुव्रीहौप्रकृत्यापूर्वपदमित्याद्युदात्तः·अञ्जूव्यक्त्यादिषुतस्यविपूर्वस्यनिष्ठायांगतिस्वरेउदात्तस्वरितयोरितिस्वरितादिः·पदेः·कर्त्तरिक्तः·थाथादिस्वरेणांतोदा
:गतिस्वरस्तुनकर्मणीतितत्रवर्त्तते·अयंकर्त्तरिक्तः·फलिपाटिनमिमनिजनांगुक्पटिनाकिधतश्चेत्युप्रत्ययान्तः·पट्टशब्दःतत्रनिदित्यधिकाराद्युदात्तः·पडि
गतोक्तः·प्रत्ययस्वरः उणादिष्वतोनपणव्यवहारेक्तोनञ्मतान्तुःपंडाउद्भिः·सासंजाताऽस्येतितारकादित्वादितच्एवसुक्तम्·कुशान्लातीतिकुशलः·आतोनुप
सर्गेइतिकः·कृत्स्वरेणांतोदात्तः·चुपमंदायांगतौ·अस्माच्चेपरश्चोपधायाइतिकलप्रत्ययः तत्रवृषादिभ्यश्चिदित्यतश्चिदितिवर्त्तनादन्तोदात्तः·णुणकर्मणिशुभेःइ

पथत्ताप्रीकिरःवाःथाथादिस्वरेणान्तोदात्तः अन्या ॰ अन्यकनामादेशानामुत्तरपदत्वासंभवात्सामर्थ्यात्तद्दुत्तरपदं गृह्यत इत्याह इत्यादेशवतीति इष्ठेयसुनोः प्रशस्यस्य श्रः ।
ज्यश्च युवाल्पयोः कनन्यतरस्याम् गमनश्रेष्ठमित्यादि अपूर्वं सकादित्वाह्नाज्ञ दत्तादित्वाद्वाविशेषणस्य परनिपातः पापिष्ठमिति विन्मतोर्लुक् उदाहरणेन पुंसके भावे
तोःल्युड्डितिभावेल्युट् तदन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि गम्यतेनेनेति करणाधिकरणयोश्चेति करणे ल्युट् केति किमिति कर्मधारय इति किमर्थमित्यर्थः ॥
ः ॥ कुमारश्च कुमारशब्दः पूर्वपदं प्रकृतिस्वरं स्यात् कुमारश्रमणेति कुमारी श्रमणा कुमारश्रमणा कुमारश्रमणादिभिरिति समासः लिंगविशिष्टपरिभाषया कुमारीशब्द
स्य समासे पुंवद्भावः अन्तोदात्त इति कुमारक्रीडायां पचाद्यच् चित्स्वरः अत्र कुमार श्रमणादिभिरित्यस्यैव ग्रहणं प्रतिपदोक्तत्वात् केचित्तु सर्वस्यैव कर्मधारयस्य ग्रह

कुमारस्य ६।२।२६ कर्मधारये कुमारश्रमणा कुमारशब्दोऽन्तोदात्तः आदिः प्रत्येनसि ६।२।२७ कुमारस्यादिरुदात्तः प्रत्येनसि परे कर्मधा(
येप्रतिगतमेनोऽस्य प्रत्येनाः । कुमारप्रत्येनाः पूगेष्वन्यतरस्याम् ६।२।२८ पूगा गणास्तेभ्यः कुमारचातकाः कुमारजीमूताः आद्युदा
त्तत्वाभावे कुमारश्चेत्येव भवति इगन्तकालकपालभगालशरावेषु द्विगौ ६।२।२९ एषु परेषु पूर्वं प्रकृत्या पञ्चारत्नयः प्रमाणमस्य पञ्चार
त्निः पञ्चमासानभूतः पञ्चमास्यः तमधीष्ट इत्यधिकारे द्विगोर्यप् पञ्चकपालः पञ्चभगालः पञ्चशरावः त्रः संख्याया इति पञ्चशब्द आ
द्युदात्तः इगन्तादिषु किम् पञ्चाश्वः द्विगौ किं परमारत्निः बह्वन्यतरस्याम् ६।२।३० बहुशब्दस्तथा वा बह्वरत्निः २ बहुमास्यः २ बहुक
पालः २ बहुशब्दोऽन्तोदात्तः तस्य यणि सत्युदात्तस्वरितयोरिति भवति ॥ ९९ राणिन्तेति तथाच कुमारब्राह्मण इत्यत्र पूर्वपदप्रकृतिस्वरत्वं मतभेदे

नभवति आदिः आदिरिति षष्ठ्यर्थे प्रथमा पूर्वेण कुमारशब्दस्य प्रकृतिभावेन यः स्वरः प्राप्तः सोत्रादेर्भवतीति सूत्रार्थः एवं स्थिते फलितमाह कुमारस्यादिरुदात्तः स्यादिति
पूगेषु गणवाचिषूत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो वा स्यात् कुमारचातक इति चातकादयः पूगशब्दाः तेभ्यः पूगाञ्ञ्योऽग्रामणीपूर्वादिति ञ्यः तस्य तद्राजस्य ब
हुष्विति लुक् कुमारश्चेत्येव भवतीति तत्र प्रतिपदोक्तग्रहणपक्षे समासान्तोदात्तत्वम् पंचारत्निरिति पंचारत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः प्रमाणे लो द्विगो
र्नित्यमिति मात्रचो लुक् पंचसु कपालेषु संस्कृतः पंचसु भगालेषु संस्कृतः पंचसु शरावेषु उद्धृतः पंचकपालः पंचभगालः पंचशरावः तद्धितार्थे द्विगुः द्वि

गोर्लुगनपत्य इत्यणो लुक् पंचाश्व इति पंचभिरश्वैः क्रीतः पंचाश्वः आर्हीयष्ठक् तस्य अध्यर्द्धेति लुक् वहू वहुशब्दः पूर्वपदं प्रकृतिस्वरं वा इगंतादिषूत्तरपदेषु द्विगौ । पूर्वे णनित्ये प्राप्ते विकल्पः वहुशब्दोंतोदात्त इति वहि वृद्धौ अस्मात् लंघि वंह्योर्नलोपश्चेति कुप्रत्ययः प्रत्ययस्वरेणांतोदात्तः पक्षे समासांतोदात्तत्वम् पूर्वेवद्धिग्रहप्रत्ययलु क्प्रत्युदाहरणानि योजनीयानि ॥ ॥ दिष्टिः दिष्टिवितस्ती प्रमाणे तेनात्रमात्रचो लुक् अत्रापि पक्षेंऽतोदात्तत्वं नोध्यम् सप्तमी शप न्नात्र इति तुन्नरुणादिषु संक्रा शादिभ्यो शपः छ्न्नन्त इति मस्ज्जिगमिनमिहनिविशपशांवृद्धिश्चेति छ्न् संयोगादिलोपः वश्चेति षत्वं नित्त्वादाद्युदात्तः अन्तोदात्त इति ऋज्रः कोट्टचेति कप्रत्यया

दिष्टिवितस्त्योश्च ६।२।३१ एतयोः परतः पूर्वपदं प्रकृत्या वा द्विगौ पञ्चदिष्टिः २ पञ्चवितस्तिः २ सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ६।२।३२ अकालवाचि सप्तम्यन्तं प्रकृत्या सिद्धादिषु सांकाश्यसिद्धः साङ्काश्येति एयन्तः । आतपशुष्कः आष्ट्रपक्वः भ्राष्ट्रेति ष्ट्रन्नन्तः चक्रबन्धः चक्रशब्दोऽन्तोदात्तः अकालात्किम् पूर्वाह्णसिद्धः कृत्स्वरेणावाधितः सप्तमीस्वरः प्रतिप्रसूयते परिप्रत्युपापा वर्ज्यमानाऽहोरात्रावयवेषु । ६।२।३३ एते प्रकृत्या वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि चोत्तरपदे परित्रिगर्तं वृष्टो देवः प्रतिपूर्वाह्णम् प्रत्यपररात्रम् उपपूर्वरात्र अपत्रिगर्तम् उपसर्गा आद्युदात्ताः वहुव्रीहितत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदम् अपपरी एव वर्ज्यमानोत्तरपदम् तयोरेव वर्ज्य मानार्थत्वात् अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्ति वर्ज्येति किम् अग्निं प्रति राजन्यवहुवचनद्वन्द्वेऽन्धकवृष्णिषु । ६।२।३४ राज न्यवाचिनां वहुवचनान्तानामन्धकवृष्णिषु वर्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या ॥

११ नः प्रत्ययस्वरेण याथादिस्वरेण वाधितः सप्तमीस्वर इति सिद्धशुष्क पक्वानां क्तान्तत्वात् वंधस्य घञन्तत्वात् याथादिस्वरेण तत्पुरुषे तुल्यार्थेत्यादिना सप्तम्यन्तस्य यः प्रकृतिभावः स परत्वाद्बाधितस्तेन पुनर्विधीयते क्वचित्तु कृत्स्वरेणावा धित इति पाठः तत्र कृदंतस्य यः स्वरस्याथादिलक्षणस्तेनेत्यर्थः परिप्रत्य परिप्रत्युप एते प्रकृत्या स्युः परित्रिगर्तमिति त्रिगर्त्तं वर्जयित्वेत्यर्थः अपपरी वर्जने इति कर्म प्रवचनीयसंज्ञा पंचम्यपाङ्परिभिरिति पंचमी अपपरिवहिरंचवः पंचम्या इत्यव्ययीभावः प्रति पूर्वाह्णमिति अणहः पूर्वो भागः पूर्वाह्णः अह्नोह्न एतेभ्य इत्यह्नादेशः

अह्नोऽदंतादितिणत्वं· पूर्वाह्णंप्रति· लक्षणेनाभिप्रती आभिमुख्येइत्यव्ययीभावः उपपूर्वाह्णमिति· पूर्वाह्णस्यसमीपं· अव्ययंविभक्तीत्यादिना सामीप्येऽव्ययीभावः उपपूर्वरा
त्रमिति· रात्रेः पूर्वोभागः पूर्वरात्रः अहः सर्वैकदेशेत्यच्· रात्राह्नाहाः इति पुंस्त्वम्· पूर्वरात्रस्यसमीपमुपपूर्वरात्रं उपसर्गा आद्युदात्तानि· पूर्वपदानि· सिद्धत्वादिति· वहुव्री
हौप्रकृत्यापूर्वपदं तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इत्यनेन· ननु किंपुनः कारणं अपपर्योरेव वर्ज्यमान उदाहृतो नेतरयोस्तत्राह· अपपर्यो
रिति· तेन त्रिगर्त्तं वर्जयित्वेत्यर्थे उपत्रिगर्त्तं प्रतित्रिगर्त्तमिति न भवति· ननु पूर्वाह्णं पूर्वरात्रं वर्जयित्वेत्यर्थे अपपूर्वाह्णं परिपूर्वाह्णं अपपूर्वरात्रं परिपूर्वरात्रमिति अ
होरात्राद्यवयवा अपपर्योः कस्मान्नोदाहृियंते इत्याशंक्याह· अहोरात्रावयवाइति· वर्ज्यमानाइति· वर्ज्यमानग्रहणेनैव सिद्धत्वान्न पृथगुदाहृताइत्यर्थः वर्ज्येति कि
मिति· वर्ज्यमानाहोरात्रावयवेषु किं· अग्निंप्रतीति· लक्षणेनाभिप्रतीत्यव्ययीभावः॥ ॐ ॥ श्वाफल्कचैत्रकाइति श्वफल्कचैत्रकाभ्यामपत्येण्· शिनिराद्युदात्तर

श्वाफल्कचैत्रकाः शिनिवासुदेवाः शिनिराद्युदात्तो लक्षणापातदपत्येवर्त्तते राजन्येति किम् द्वैप्यभैमायनाः द्वीपेभवाद्वैप्याः भैमेरपत्यं
युवाभैमायनः अन्धकवृष्णयएतेनतुराजन्याः राजन्यग्रहणमिहाभिषिक्तवंश्यानांक्षत्रियाणांग्रहणार्थम् नैतेतथा वहुवचनङ्किमास
ऊ·धैणावासुदेवौ द्वन्द्वेकिम् वृष्णीनांकुमाराः वृष्णिकुमाराः अन्धकवृष्णिषुकिम् कुरुपञ्चालाः संख्या ८।२।३५ संख्यावाचिपूर्वपदस्मद्व
त्याद्वन्द्वे द्वादश त्रयोदश त्रेस्त्रयसादेशोन्तोदात्तो निपात्यते॥ ९९

ति· वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदिति सूत्रेण वाहुलकाच्छीङोपिनिः तस्य नित्त्वे
ह्रस्वत्वंचेति· द्वैप्याइति· द्वीपादनुसमुद्रंयञ् भैमेरपत्यमिति· भीमस्यापत्यमतइञ् तदन्ताद्वृद्धाच्छः ननु च राज्ञोपत्ये जातिग्रहणमिति वचनाद्राजन्यशब्दः क्षत्रियजा
तिवचनः ततश्चद्वैप्यभैमायनाइत्यप्युक्तप्रत्युदाहरणं तेषामपि क्षत्रियत्वादतआह· राजन्यग्रहणमित्यादि· अन्धकवृष्णीनां क्षत्रियत्वाव्यभिचाराद्राजन्यग्रह
णमुक्तविशेषपरिग्रहार्थमितिभावः एकादशेति· संख्यायाअल्पीयस्याइत्येकशब्दस्यपूर्वनिपातः आन्महतइत्यत्र आदितियोगविभागात्प्रागेकादशभ्यइति नि
र्देशाद्वा आत्त्वम्· इणभीकापाशल्यतिमर्चिभ्यः कनिति निलादेकशब्दआद्युदात्तः द्वादशेति द्व्यष्टनः संख्यायामित्यात्वम्· त्रयोदशेति· त्रेस्त्रयइतित्रयसादेशः

अन्तोदात्तो निपात्यत इति इदं काशिकानुरोधेनोक्तम् वस्तुतस्तु त्रयोदशाच मे इति लक्ष्यानुरोधादाद्युदात्तो निपात्यत इति बोध्यम् ॥ ॥ आचार्योपसर्जनः आचार्यः उपसर्जनं यस्य आचार्योपसर्जनः अन्तेवासीति अन्ते वसतीत्यन्तेवासी शयवासवासिष्वकालादिति सप्तम्या अलुक् सूत्रे षष्ठीबहुवचनस्य स्थाने प्रथमैकवचनं तदाह आचार्योपसर्जनानामन्तेवासिनां द्वन्द्व इति पाणिनीयरौढीया इति वृद्धाच्छः रौढिशब्दात् इञश्चेत्यण् न द्व्यचः प्राच्यभरतेष्विति निषेधात् द्वन्द्वविशेषणार्थमिति नत्वन्तेवासिविशेषणार्थं तस्य आचार्योपसर्जनत्वाव्यभिचारात् किमर्थं पुनर्द्वन्द्वविशेषणं विज्ञायत इत्याह सकलो द्वन्द्व इत्यादि छान्दसेति छन्दोधीत इत्यण् श्रोत्रियश्छन्दोधीत इति तु न तत्र वा ग्रहणानुवृत्तेः आपिशलपाणिनीये इति आपिशलस्यापत्यमापिशलिराचार्यः तेन प्रोक्तमापिशलम् इञश्चेत्यण् पाणिनिना प्रोक्तं पाणिनीयं वृद्धा

आचार्योपसर्जनश्चान्तेवासी ६।२।३६ आचार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या पाणिनीयरौढीयाः छन्दसेमानयोदात्तत्वेऽप्याचार्योपसर्जनग्रहणं द्वन्द्वविशेषणम् सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत तेनेह न पाणिनीयदेवदत्तौ आचार्येति किम् छान्दसवैयाकरणाः अन्तेवासीति किम् आपिशलपाणिनीये शास्त्रे ॥ कार्तकौजपादयश्च ६।२।३७ एषां द्वन्द्वे पूर्वपदं प्रकृत्या कार्तकौजपौ स्वतस्येदं कुजपस्येदमित्यण्सान्तावेतौ सावर्णिमाण्डूकेयौ महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ६।२।३८ महच्छब्दः प्रकृत्या व्रीह्यादिषु दशसु महाव्रीहिः महापराह्णः महागृष्टिः महेष्वासः महच्छब्दोऽन्तोदात्तः सन्महदिति प्रतिपदोक्तसमास एवायं स्वरः ॥ नेह महतो व्रीहिर्महद्व्रीहिः ॥

च्छः आपिशलं च पाणिनीयं च आपिशलपाणिनीये कार्त कुभूमिः तत्र जाताः कुजाः तान्यातीति कुजपः कृतकुजपा ... यामपत्ये ऋष्यण् सावर्णिर्जिनः माण्डूकेयशब्दो ढक्छमण्डूकादिति ढगन्तः महाव्रीहिरिति आन्महत इत्यात्त्वम् महेष्वास इत्यादीति अत्रेकारः स्वरितो वानुदात्तोपदादावितिस्वरितो वा आदिपदेन महाजाबालः महाभारः महाभारतः महाहैलिहिलः महारौरवः महाप्रवृद्धः महच्छब्दो नोदात्त इति वर्तमाने पृषन्महदित्यन्ततया निपातनात् सन्महदिति एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते नतु महद्ग्रहणमनर्थकं कर्मधारये निष्ठेति वक्ष्यमाणेनैव सिद्धत्वात् कुगतिकार

कपूर्वस्यापि ग्रहणमिति प्रच्छशब्दस्य क्तान्तत्वादिति चेन्न कर्मधारयेनिष्ठेत्यत्रापि लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः समासः श्रेण्यादिस्तस्यैव ग्र
हणमित्यर्थः ॥ क्षुल्लक क्षुल्लकमहच्छब्दो पूर्वपदे प्रकृतिस्वरौ स्तः वैश्वदेवशब्दे परे क्षुल्लमिति आतोनुपसर्गे कः तोर्ल्लीति परसवर्णः उग्रः उग्रः पूर्वपदं प्र
कृतिस्वरं स्यात् सादिवाम्योः परतः उग्रे ऋज्रितिति उपदाहे अस्मात् ऋज्रिति वर्त्तमाने उषिखनिभ्यां किदिति सुत्यादितत्वात् गौः साद गोशब्दः पूर्वपदं प्रकृत्या सादादिषु
रपदेषु गोसादइत्यादि सदेर्घञ् तदन्तेन षष्ठीसमासः अथवा गां सादयतीति गोसादः सदेर्ण्यन्तात् कर्मण्यण् तस्मादेव णिनिः गोसादी तत्र सादसादिनोः कृत्स्वरस्या

क्षुल्लकश्च वैश्वदेवे ६।२।३९ चान्महान् क्षुल्लकवैश्वदेवं महावैश्वदेवं क्षुधं लातीति क्षुल्लः तस्मादज्ञातादिषु के ऽन्तोदात्तः उग्रःसादिवा
म्योः ६।२।४० उग्रसादिः उग्रवामिः उग्रेः ऋज्रि उग्रशब्दस्याद्युदात्तः गोः सादसादिसारथिषु ६।२।४१ गोसादः गोसादिः गोसारथिः ॥ कुरु
गार्हपत्तरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलोदासीभाराणाञ्च ६।२।४२ एषां सप्तानां समासानां दासी
भारादेश्च पूर्वपदं प्रकृत्या कुरूणां गार्हपतं कुरुगार्हपतं उप्रत्ययान्तः कुरुः वृजेरितिवाच्यम् वृजिगार्हपतम् वृजिराद्युदात्तः रिक्तोगुरुः रि
क्तगुरुः रिक्ते विभाषेति रिक्तशब्दस्याद्युदात्तः असूता जरती असूतजरती अश्लीला दृढरूपा अश्लीलदृढरूपा अश्लीलशब्दो नञ्समासत्वा
दाद्युदात्तः श्रीर्यस्यास्ति तत् श्लीलं सिध्मादित्वाल्लच् कपिलकादित्वाल्लत्वं पारेवडवेव पारेवडवा निपातनादिवार्थे समासो विभक्त्यलोप
श्च पारशब्दो घृतादित्वादन्तोदात्तः तैतिलानां कद्रूः तैतिलकद्रूः तितिलिनोऽपत्यं छात्रो वा इत्यणन्तः पण्यशब्दो यदन्तत्वादाद्युदात्तः पण्य

कम्बलः ॥

पवादइत्यर्थः सारथौ समासस्वरस्य कुरु इह पण्यकम्बलान्ताः सप्त समासाः तत्रादिनोर्द्वयोः षष्ठ्याः सेत्रौ लुक् इतरेषां पञ्चानां षष्ठ्याः स्थाने प्र
थमैकवचनं तदाह एषामिति दासीभाराणामिति बहुवचननिर्देशादाद्यर्थो वगम्यते तदाह दासीभारादेरिति उप्रत्ययान्त इति कृग्रोरुश्चेति सुत्यादितत्त्वात् प्र
त्ययस्वरेणान्तोदात्तोयम् आद्युदात्त इति वृजी वर्जने इगुपधात्किदिति इनन्तत्वात् फिषन्त इगन्तानां च द्व्यषामित्यादिर्द्वितीयो वोदात्तः एवं कुरुरपि रिक्तगुर्वौ इत्य

स्त्रपः कर्मधारयः अरूतजरती अश्लीलदृढरूपेति अस्तृताश्लीलशब्दौ नञ्समासत्वादाद्युदात्तौ श्रीरस्यास्तीति श्रीशब्दो लावण्यवचनः कपिलकादित्वाल्लत्वमि
ति रूपेरेलइत्य त्रकपिलकादीनामुपसंख्यानाल्लत्वम् लावण्यरहितापि कुब्जत्वादीनामभावात्तस्यानमात्रेण दृढेत्यर्थः पारेवडवेति पारेमध्ये इत्यव्ययीभाव
स्तेनतथासति सूत्रे दीर्घनिर्देशोऽयुक्तः स्यात् वडवायाः पारस्यासंभवाच्च तितिलिनोऽपत्यमिति तिलाः सन्त्यस्मिन्निति तितिली तिलशब्दान्मत्वर्थीय इनिः टिलोपः पृ
षोदरादित्वात्तिशब्दस्य द्वित्वम् अत्रयदाऽपत्येऽण् तदानस्तद्धितइतिटिलोपः यदातुकात्रेतदानीमि नण्यपनपत्यइतिप्रकृतिभावेप्राप्तेनान्तस्यटिलोपेसब्रह्मचारी

संज्ञायामितिवक्तव्यम् अन्यत्रसमासान्तोदात्तत्वमेव प्रतिपदोक्तेसमासेकृत्याइत्येषस्वरोविहितः दास्याभारो दासीभारः देवहूतिः यस्यतत्पु
रुषस्यपूर्वपदप्रकृतिस्वरत्वमिष्यतेनविशिष्यवचनेनविहितंससर्वोपिदासीभारादिषुद्रष्टव्यः सवाएषपुरंध्यांपुरंशरीरंन्निप्रयतेऽस्यामितिकर्म
ण्यधिकरणेचेतिकिप्रत्ययः अलुक्छान्दसः नचिविषयस्यत्याद्युदात्तः पुरशब्दः चतुर्थीतदर्थे ६।२।४३ चतुर्थ्यन्तार्थोपपत्तद्वाचिन्युत्तरपदे
चतुर्थ्यन्तम्प्रकृत्या यूपायदारु यूपदारु अर्थे ६।२।४४ अर्थेपरेचतुर्थ्यन्तम्प्रकृत्या देवार्थम् क्तेच ६।२।४५ क्तान्तेपरेचतुर्थ्यन्तम्प्रकृत्या गो
हितम् कर्मधारयेऽनिष्ठा ६।२।४६ क्तान्तेपरेपूर्वमनिष्ठान्तम्प्रकृत्या श्रेणिकृताः श्रेणिशब्द आद्युदात्तः पूगकृताः पूगशब्दोऽन्तोदात्तः क
र्मधारयेकिम् श्रेण्याकृतं श्रेणिकृतम् अनिष्ठाकिम् कृताकृतम् ॥ ११ त्यनेनटिलोपः पण्यशब्द इति अवद्यपण्येतियदन्तोपतोनावइत्याद्युदात्तः॥

॥ संज्ञायामिति नियतप्रमाणकस्यनियतमूल्यस्यकंबलस्येयंसंज्ञा समासान्तोदात्तत्वमेवेति ननुपण्यशब्दस्यकृत्यप्रत्ययान्तत्वात्तत्पुरुषेतुल्यार्थेत्यादिनापूर्वपद
प्रकृतिस्वरेणभाव्यमत आह प्रतिपदोक्तेहीति कृत्यतुल्याख्या अजात्येतिपः कृत्यसमासः अयंतुविशेषणंविशेष्येणेतिसामान्यलक्षणाविहितः कंबलशब्दस्यजातिव
चनत्वात् नचकृत्यतुल्याख्या अजात्येत्यस्यवैयर्थ्यंशंक्य तद्धिगुणक्रियावाचिनोरनियमेनपूर्वनिपातप्रसंगेकृत्यानांस्यपूर्वनिपातार्थंवचनंनतुजातिनिषेधार्थं
अजात्येतिवचनंन्यायसिद्धार्थानुवादएवेतिस्थितम् दासीभारइति दंसेष्टेनआचेतिटः टित्वान्ङीप् उदात्तनिवृत्तिस्वरेणदासीशब्दअन्तोदात्तः देवहूतिरिति देव

एरनेकाच इत्यनेनानचांतवर्तिनीं विभक्तिमाश्रित्य सखीशब्दस्य परत्वान्न पदांते इति निषेधेन अल्लोपो न स्थानिवदिति वाच्यं नः क्य इति नियमेन क्यचि नांतस्यैव पद
त्वादत आह। क्वौ लुप्तमिति। नपुंसके भावे क्तः। क्वौ लोप इत्यर्थः। इदं सर्वं कुमारीमिच्छन् कुमारीत्यत्रापि बोध्यं। क्वौ लुप्तमित्येतत्काचित्कं। क्वौ विधिं प्रति न स्थानिवदित्य
भ्युपगमात्। अन्यथा वेभिदिब्राह्मणकुलानीति हलंतनपुंसके वक्ष्यमाणं न संगच्छेत। वेभिद्यतेः क्विपि अल्लोपे यलोपे च क्वौ लुप्तत्वेनाल्लोपस्य स्थानिवत्त्वाभावे ऽ
लंतलक्षणनुम् प्रसंगात्। क्वौ विधिं प्रति न स्थानिवदित्यस्योदाहरणं लवमाचक्षाणो लौः। अत्र णिचि टिलोपः यश्च क्वौ णिलोपः तदुभयं च्छ्वोः शूडिति वकारस्य क्वि
निमित्ते ऊठि कर्तव्ये न स्थानिवत्। एत्येधत्यूठ्स्विति वृद्धिः। अत्रेदमवधेयं। न पदांतेति सूत्रे क्वि लुग् उपधात्व चङ्परनिर्ह्रासकुत्वेषूपसंख्यानमिति वार्तिकमस्ति
तदेकदेशानुवादोयं। क्वौ लुप्तमित्यादीति। लुक्लुप्तं न स्थानिवदित्यादीनामप्युदाहरणान्यत्रोच्यंते। पंचभिः पट्वीभिः क्रीतः पंचपटुः। आर्हादिति ठक् तस्या
ध्यर्धपूर्वेति लुक्। लुक्तद्धितलुकीति ङीषो लुक्। तस्य लुक्लुप्तत्वेन स्थानिवत्त्वाभावात् अत्र यणादेशो न भवति। न च ङीषो लुकः परनिमित्तकत्वाभावात् स्था
निवत्त्वं न भवेदिति शक्यं ङीषो लुकं प्रति स्थानिद्वारा तद्धितलुकः परत्वस्वीकारात्। यद्वा॥ बुद्धिपरिकल्पितपौर्वापर्यमभावेप्यस्तीति नात्रानुपपत्तिः। न च भ
ढे तद्धिते विवक्षिते भस्याढे तद्धिते इति पुंवद्भावाद् उक्तनिषेधं विनैवेष्टसिद्धिरित्यपि शंक्यं। यत्र भाविभत्त्वं तत्रैव पुंवद्भावः। इह तु लुकि भत्वाभावात्कुतः पुंव
द्भाव इति कैयटेनोक्तत्वात्। तथा पंचेंद्राण्यो देवता अस्य पंचेंद्रः। सास्य देवतेत्यण्। द्विगोर्लुगनपत्ये इति लुक्। ततो ङीषो लुकि तस्य स्थानिवत्त्वाभावात् ङीषा स
न्नियुक्त आनङ् न श्रूयते। पुंवद्भावस्यात्र शंकापि नास्ति। इंद्रे इंद्रत्वमिंद्राण्यामिंद्रस्त्रीत्वमिति प्रवृत्तिनिमित्तभेदेन भाषितपुंस्कत्वस्यानभ्युपगमात्। ये तु न पदांते
ति सूत्रे वरे इति ईकारप्रश्लेषं कुर्वंति तेषामिह लुग्ग्रहणं न कार्यं। उपधात्वे कर्तव्ये न स्थानिवत्तेन परिखाशब्दाच्चातुरर्थिके अणि कृते रद्धारके कांतरत्यादि
ना पारिखशब्दात् खोपधलक्षणो वुञ्प्रत्यये पारिखीयः सिध्यति। अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तस्यां कर्तव्यायां आलोपः स्थानिवत्स्यात्। नन्वेवं पटयतीत्या
दौ वृद्धिः स्यादिति चेन्न। यत्रोपधासंज्ञामुपजीव्य प्रत्ययो विहितस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात्। तत्र च चङ्परनिर्ह्रासग्रहणमेव ज्ञापकं। चङि परे यो ह्रस्वः
स चङ्परनिर्ह्रासस्तत्र न स्थानिवत्। वादितवंतं प्रयोजितवानवीवदद्वीणां परि॥

इति गेहे णिलुक्चेति विहितः महाराजहत इति राजाहः सखिभ्यष्टजिति टजन्तो महाराजशब्दोन्तोदात्तः रथेनयात इति गत्यर्थात्कर्त्तरि क्तः पुरोहितमिति पूर्वा
धरावराणामसिपुरधवश्चैषामित्यसिप्रत्ययांतः प्रत्ययस्वरेणान्तोदात्तः पुरःशब्दः अत्र समासान्तोदात्तत्वम् अव्ययपूर्वपदप्रकृतिस्वरः कृत्स्वर थाथादिस्वर
इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिस्वरो भवति अभ्युद्धृत इति इहहृतशब्दस्योच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्त उद्धृतशब्दस्तस्य पुनरभिशब्दे
न समासः तस्य कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया उद्धृतशब्दः क्तान्त उत्तरपदं एवं समासान्तोदात्तत्वे प्राप्ते तद्बाधकाव्ययपूर्वपदप्रकृतिस्वर
स्तेन तदपवादे कृत्स्वरे तदपवादस्याथादिस्वरः प्राप्तस्तमपोह्याभेरयं स्वरः स्यात्सोनन्तरग्रहणेन वार्यते नन्वनन्तरग्रहणेनाप्यसौ दुर्वारः कृद्ग्रहणपरिभाषया उ
द्धृतशब्दस्य क्तान्तत्वेऽभेस्तदानन्तर्यसत्त्वादिति चेन्नैवम् अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरा गतिराश्रीयते अभिश्च न तथा नन्वेवमामूदभेः स्वरस्त्विष्टसिद्धि
स्तु कथम् अभ्युद्धृतशब्दे हि उच्छब्दस्य स्वर इष्यते स संसृष्टं धनमुभयं समाहृतमिति मन्त्रे समाहृतशब्दे आङः स्वरदर्शनात् न चासौ प्रकृतसूत्रेण सिध्यति प्रथ
मसमासे तत्सत्त्वेऽपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तेरुक्तत्वात् न च तं बाधित्वा गतिस्वरः प्रवर्त्तत इति वाच्यम् द्वितीयसमासे उदः पूर्वपदत्वाभावात् अत्रो
च्यते धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरोयं प्रवर्त्तते न हि क्तप्रकृतिभूतं धातुं प्रति पूर्वपदत्वं गतेः सम्भवति तस्मादभ्युद्धृतं समाहृतमिति तावत्सु
स्थम् ननु दूरादागत इत्यादौ कारकपूर्वेपि गतिस्वरः स्यात् इष्यते तु थाथादिस्वरः अत आह कारकपूर्वेति अयं भावः अनन्तरशब्दोयमनन्तरमपेक्ष्य प्रवर्त्त
ते तत्र चानन्तरो गतिरित्युक्ते अनन्तरोपि सन्निधानाद्गतिरेव प्रतीयते ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिरूपसमवधाने एवानन्तरस्य प्रकृतिस्वरत्वं प्रापय
ति दूरादागतादौ न दोष इति अथवा कारकाद्दत्तश्रुतयोरिति सूत्रे कारकादिति योगो विभज्यते क्तः ग्रहणं गतिग्रहणं चानुवर्त्तते कारकात्परं क्तान्तं सगतिकमु
रपदमन्तोदात्तं स्यादित्यर्थः तत्र दूरादागत इत्यादौ थाथादिसूत्रेणैव सिद्धत्वात् दूरादागत इत्यादौ गतिरनन्तर इत्यस्य बाधनार्थमेवेदं सूत्रमिति दिक् दूराद
इति स्तोकान्तिकेति समासः पंचम्याः स्तोकादिभ्य इत्यलुक् प्रभृताविति क्तिनयं प्रजल्पाक इति जल्पभिक्षकुट्टलुण्ठवृङः षाकन् आगन्तुरिति सितनि
गमिमस्यविधाञ्क्रुशिभ्यस्तुन् ननु कृतीति व्यर्थम् तथा हि गतेरयं स्वरो विधीयते गतिसंज्ञा च धातुमाक्षिपति स च प्रत्ययविशिष्ट एव प्रयोगार्हः

पचाद्यजन्तः यस्य तत्पुरुषस्येत्यादिः एतेन दासीभारादेराकृतिगणत्वं दर्शितम् चतुर्थी तस्मै इदं तदर्थं तच्छब्देन चतुर्थ्यन्तस्यार्थ उच्यते तदाह चतुर्थ्यन्तार्थायेति यूपदार्विति निदिति दीर्घश्चेत्यनुवर्त्तमाने कुयुभ्यां चेति पः नित्त्वादाद्युदात्तो यूपशब्दः देवार्थमिति देवः पचाद्यजन्तः गोहितमिति चतुर्थी वाशिष्येत्यादिना चतुर्थी आद्युदात्त इति श्लिङ्घ सेवायाम् वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदिति निप्रत्ययस्य नित्त्वादाद्युदात्तः पूगशब्द इति शुद्धियोगे गो वा बहुलकात् नो पिगक् कृतात्कृतमिति क्तेन नञ्विशिष्टेनानञिति समासः अनिष्ठत्यनुच्यमाने इहैव स्यात् श्रेण्यादिसमासापेक्षया क्तेन नञ्विशिष्टेनेति समासस्य प्रतिपदोक्तत्वादिति हरदत्तः

अहीने द्वितीया ६।२।४७ अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं प्रकृत्या कष्टश्रितः ग्रामगतः कष्टशब्दोऽन्तोदात्तः ग्रामशब्दो नित्स्वरेण अहीने किम् कान्तारातीतः अनुपसर्ग इति वक्तव्यम् नेह सुखप्राप्तः थाथेत्यस्यायमपवादोऽयम् तृतीया कर्मणि ६।२।४८ कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या रुद्रहतः महाराजहतः रुद्रो रगन्तः कर्मणि किम् रथेन यातो रथयातः गतिरनन्तरः ६।२।४९ कर्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या थाथेत्यस्यापवादः पुरोहितम् अनन्तरः किम् अभ्युद्धृतः कारकपूर्वपदस्य तु सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इत्युक्तम्... दूरादागतः तादौ च निति कृत्यतौ ६।२।५० तकारादौ निति तुशब्दवर्जिते कृति परेऽनन्तरो गतिः प्रकृत्या अग्रेरायो न्रतमस्य प्रभृतौ सङ्गतिं गोः कृत्स्वरापवादः तादौ किम् प्रजल्पाकः निति किम् प्रकर्ता तृजन्तः अतो किम् आगन्तुः॥ १९ ॥ ॥ अहीने हीनं त्यक्तं न हीनमहीनं अहीनवाचिसमास इति पूर्वपदद्वारेण समासस्याहीनवाचित्वम् कष्टश्रित इति द्वितीया श्रितेति समासः कष्टशब्द इति क्तान्तत्वात् ग्रामशब्द इति ग्रसेरा चेति मन्निप्रत्ययान्त आद्युदात्तः अनुपसर्ग इति वक्तव्यमिति सूत्रेऽहीनग्रहणमपनीयानुपसर्गग्रहणं कर्त्तव्यं व्यापकत्वादित्यर्थः थाथेत्यस्यापवाद इति तथा च प्रत्युदाहरणे थाथादिस्वर इति भावः तृतीया त्वोतास इति त्वया ऊताः रक्षिताः त्वोतासः प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः अवतेः क्तः ज्वरत्वरेत्यूठ् एत्येधत्यूठ्स्विति वृद्धिः इडागमस्य चाभावश्छान्दसः तदन्तात् जसः आज्जसेरसुगित्यसुगागमः पूर्वपदप्रकृतिस्वरे कृते एकादेश उदात्तेनोदात्तः ततः स्वरितप्रचयौ रुगन्त ॥

भावेसमासांतोदात्तत्वम्· ईषद्भेदइति· ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषुखल्· कृत्स्वरएवभवतीति· परत्वात् अथवाईषद्गुणवचनेनेतिप्रतिपदोक्तसमासग्रहणात्सुपपद
समासेऽस्यप्रवृत्तिरिति· द्वेसुवर्णेइति· पंचकृष्णलकोमाषस्तेसुवर्णास्तुषोडश· पलेसुवर्णाश्चत्वारइति· द्विसुवर्णमिति· पक्षे समासस्वरः बहुव्रीहावपीति· अत्रत
त्पुरुषाधिकाराभावात्॥ ॥ प्रथमो· अचिरोपसंपत्तिरचिरोपसंश्लेषः अभिनवत्वमित्यर्थः तदाह· अभिनवत्वइति अचीतिकिमिति· अचिरोपसंपत्ताविति कि
मर्थमित्यर्थः प्रथमवैयाकरणाइति· वैयाकरणानामाद्यः मुख्योवायः प्रथमवैयाकरणशब्दः सनित्यमंतोदात्तएव· कतर· एतौशब्दौ पदभूतौकर्मधारयेप्रकृ

प्रथमोऽचिरोपसम्पत्तौ ६।२।५६ प्रथमशब्दोवाप्रकृत्याऽभिनवत्वे प्रथमवैयाकरणः २ सम्प्रतिव्याकरणमध्येतुंप्रवृत्तइत्यर्थः प्रथमश
ब्दः प्रथेरमजन्तः अचिरेतिकिम् प्रथमोवैयाकरणः कतरकतमौकर्म्मधारये ६।२।५७ वाप्रकृत्या कतरकठः २ कर्म्मधारयग्रहणमुत्तरार्थ
म् इहतुप्रतिपदोक्तत्वादेवसिद्धम् आर्य्योब्राह्मणकुमारयोः ६।२।५८ आर्य्यकुमारः २ आर्य्यब्राह्मणः २ आर्य्योण्यदन्तत्वादन्तस्वरितः आ
र्य्येः किम् परमब्राह्मणः ब्राह्मणादीतिकिम् आर्य्यक्षत्रियः कर्म्मधारयइत्येव राजाच ६।२।५९ ब्राह्मणकुमारयोः परतोवाप्रकृत्याकर्म्मधार
येराजब्राह्मणः २ राजकुमारः २ योगविभागउत्तरार्थः षष्ठीप्रत्येनसि ६।२।६० षष्ठ्यन्तोराजाप्रत्येनसिपरेवाप्रकृत्या राजप्रत्येनाः २। षष्ठी
किम् अन्यत्रन क्तेनित्यार्थे ६।२।६१ क्तान्तेपरेनित्यार्थेसमासेपूर्ववाप्रकृत्या नित्यप्रहसितः २ कालाइति द्वितीयासमासोऽयम् नित्यश
ब्दस्त्यबन्तआद्युदात्तः हसितइति थाथादिस्वरेणान्तोदात्तः नित्यार्थेकिम् मुहूर्तप्रहसितः॥

१९ तिस्वरोवास्यात्तौ कतरकतमौडतरडतमयोश्चित्वा
न्तोदात्तौ· इहत्वित्यादि· कतरकतमौजातिपरिप्रश्नइतिप्रतिपदोक्तोयः समासस्तस्यैवग्रहणं· सचकर्मधारयएवतस्मान्नेहार्थः कर्मधारयग्रहणेनेतिभावः आर्यो
ब्राह्मणः· ब्राह्मणकुमारयोरुत्तरपदयोरार्यः इत्यपदंप्रकृतिस्वरंवास्यात्कर्मधारये· स्वरितान्तइति· तित्स्वरितमित्यनेन· ब्राह्मणेतिकिमिति· ब्राह्मणकुमारयोरिति
किमर्थमित्यर्थः· राजब्राह्मणइति· राजशब्दोब्राह्मणोताद्धर्म्याद्वर्त्ततइतिसामानाधिकरण्यात्कर्मधारयः राजशब्दः कनिन्प्रत्ययांतत्वादाद्युदात्तः उत्तरार्थइति।

यातोऽस्य द्व्येप्रत्ययाः तिङः कृतश्च तत्र तिङः नोपूर्वपदत्वासंभवात् कृदन्त एव भविष्यतीति चेत्सत्यम् कृद्ग्रहणं कृत्संज्ञाप्रवृत्तिकालोपलक्षणार्थं तेन कृदुपदेशे तादि
त्वलाभात् प्रलपितेत्यादि सिद्ध्यति: स्वरप्रवृत्तिवेलायां तादित्वाभावेपि पूर्वं तत्त्वात् आदिग्रहणं शक्यमकर्तुम् यस्मिन्विधिरित्येव सिद्धेः ॥*॥ तवैचां ॥ अन्त
उदात्तइति कथं पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्यते शृणु प्रकृत्येति वर्त्तते तत्रैवमभिसंबंधः क्रियते तवैप्रत्ययान्तस्य यः प्रकृत्याश्रयः स्व
रः प्राप्तः सोऽन्तस्य भवतीति स चोदात्त एवेति युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् अन्वेतवाउ इति उपसर्गाश्चाभिवर्जमित्यत्राद्युदात्तः अनिगंतोऽञ्चतौ पराँच इति अ

तवैचान्तश्चयुगपत् ६।२।५१ तवैप्रत्ययान्तस्यान्तउदात्तो गतिश्चानन्तरः प्रकृत्या युगपच्चैतदुभयं स्यात् अन्वेतवाउ कृत्स्वरापवादः अ
निगन्तोऽञ्चतौवप्रत्यये ६।२।५२ अनिगन्तो गतिर्वप्रत्ययान्तेऽञ्चतौ परे प्रकृत्या येपराञ्चस्तान् अनिगन्त इति किम् प्रत्यञ्चो यन्तु चुत्स्वरात्प
रत्वादयमेव जहि वृष्ण्यानि कृणुही पराचः वप्रत्यये किम् उदञ्चनम् न्यधी च ६।२।५३ वप्रत्ययान्तेऽञ्चताविगन्तावपि न्यधी प्रकृत्या न्य
ङुत्तानः उदात्तस्वरितयोर्यण इति अञ्चतेरकारः स्वरितः अध्यङ् ईषदन्यतरस्याम् ६।२।५४ ईषत्कडारः २ ईषदित्ययमन्तोदात्तः ईष
द्भेद इत्यादौ कृत्स्वर एव हिरण्यपरिमाणं धने ६।२।५५ सुवर्णपरिमाणवाचि पूर्वपदं वा प्रकृत्या धने द्वे सुवर्णे परिमाणमस्येति द्विसु
वर्णम् तदेव धनं द्विसुवर्णधनं २ बहुव्रीहावपि परत्वाद्विकल्प एव हिरण्यं किम् प्रस्थधनम् परिमाणं किम् काञ्चनधनम् धने किम् निष्कमाला

ञ्चिगित्यादिना क्विन् सर्ववकारमात्रं ककारादीनामनुबंधत्वात् उगित्त्वान्नुमिति नुम् पराशब्द आद्युदात्तः प्रत्यं च इति कृदुत्तरपदप्रकृतिस्वरः परत्वादिति चुस्वरस्या
काशः दधीचा यत्र गतिर्नास्ति अनिगंतस्वरस्यावकाशः पराञ्चः पराँच इत्यादावुभयप्रसंगे परत्वादनिगंतस्वर एव भवति न चायं यणो विप्रतिषेधः चुस्वरः सति
शिष्टः भसंज्ञायामल्लोपे च कृते प्राप्तत्वात् सत्यम् नायं विप्रतिषेधः किंतर्हि इष्टिरेव चोरनिगंतोंऽचतावप्रत्यय इत्येव स्वर इष्यत इति हरदत्तः इहापि मूले परत्वादित्य
स्येष्टत्वादित्यर्थः न्यधीच अत्रापि चुस्वरादयमेव कृत्स्वरापवादो योगो ईषदन्य ईषच्छब्दः पूर्वपदं प्रकृतिस्वरं वा स्यात् अन्तोदात्त इति ॥ फिट्स्वरेण एतद

मेकुलेवापरंपरयायातः सदाचारो धर्मस्तस्मादनपेतं धर्म्यम्॰ धर्मपथ्यर्थेति यत्॰ तेनचप्राप्यमित्यर्थे नौवयोधर्मेत्यादिना यत् आचारवशादवश्यंकर्त्तव्यमित्यर्थः हारि
णयुदाहरणान्याह याज्ञिकाश्वेति॰ षष्ठीसमासः कर्मकरवर्द्धितकइति॰ वर्द्धितकोनाममूलेस्थूलोऽग्रेसूक्ष्मः ओदनपिंडः सः कर्मकरायदीयतेऽन्यथाकर्मनकुर्या
दितिनत्वयंधर्मः वाडवहरणमिति॰ कश्चिदयमाचारः बीजनिषेकानंतरंवाडवायशरीरपुष्ट्यर्थंयोग्यमश्नादिदानंव्ययदीयतेतद्वाडवहरणमित्युच्यते अत्रास्मिन्स्व
रेनिविष्टेकृत्स्वरेप्राप्तेऽनोभावकर्मवचनेइत्युत्तरपदान्तोदात्तत्वम्॰ ननुपरत्वादेवायंस्वरोभविष्यतिकिंप्रतिषेधेनेत्यतआह॰ परोपीति॰ युक्तवाचिनीति॰ युक्तः कर्त्तव्ये
तत्परः तद्वाचिनीत्यर्थः गोवल्लवः वल्लवादयः शब्दागवादीनां पालकवचनाः॥ ॥ विभाषा॰ अध्यक्षशब्देपरेपूर्वपदमाद्युदात्तंवास्यात्॰ अध्यक्षशब्दोपि

विभाषाऽध्यक्षे ६।२।६७ गवाध्यक्षः २ पापंचशिल्पिनि ६।२।६८ पापनापितः पापाणकेइतिप्रतिपदोक्तस्यैवग्रहणात्तषष्ठीसमासेन
गोत्राऽन्तेवासिमाणवब्राह्मणेषुक्षेपे ६।२।६९ भार्यासौश्रुतः सुश्रुतोपत्यस्यभार्याप्रधानतयाक्षेपः अन्तेवासी कुमारीदाक्षाः ओदन
पाणिनीयाः कुमार्यादिलाभकामायदाक्ष्यादिभिः प्रोक्तानिशास्त्राणयधीयन्तेतएवंक्षिप्यन्ते भिक्षामाणवः भिक्षांलप्स्येहमितिमाणवः।
भयब्राह्मणाः भयेनब्राह्मणाः सम्पद्यते गोत्रादिषुकिम् दासीश्रोत्रियः क्षेपेकिम् परमब्राह्मणाः अङ्गानिमैरेये ६।२।७० मद्यविशेषो
मैरेयः मधुमैरेयः मधुविकारस्यमद्यस्याङ्गम् अङ्गानिकिम् परममैरेयः मैरेयेकिम् पुष्पासवः॥ ९९ समासेयुक्तवाच्येवेतिपूर्वेणनित्येप्राप्तेवि क
ल्पः पापं॰ पापमितिस्वरूपग्रहणंशिल्पिनीत्यर्थग्रहणंव्याख्यानात्शिल्पिवाचिनिपरेपापशब्दः पूर्वपदमाद्युदात्तंवास्यात्गोत्रांतेवासिगोत्रवाचिनिअंतेवासिवा
चिनिचोत्तरपदेमाणवब्राह्मणयोश्चपरतः क्षेपवाचिनिसमासेपूर्वपदमाद्युदात्तंस्यात्॰ भार्यासौश्रुतइति॰ सुश्रुणोतीतिसुश्रुतस्तस्यापत्यंसौश्रुतः भार्याप्रधानतये
तिभार्याप्रधानः सौश्रुतइतिशाकपार्थिवादित्वादुत्तरपदलोपिसमासइतिदर्शयति॰ दक्षेणप्रोक्तंदाक्षंतदधीतेदाक्षः कुमार्यादिलाभकामइति॰ तत्प्रोक्तेग्रंथेश्रद्धाया
मसत्यामपिकुमार्यादिलाभकामः संस्तत्रप्रवर्त्ततेततएवंक्षिप्यते॰ पूर्ववत्समासः भयब्राह्मणाइति॰ तृतीयेतियोगविभागात्समासः योऽब्राह्मणः सन्राजदंडादिभ
येनब्राह्मणाचारंकरोतिसएवमुच्यते॰ अंगानि॰ अंगमारंभकं बहुवचनंस्वरूपविधिनिरासार्थम्॰ मैरेयशब्देउत्तरपदेतदर्थारंभकवाचीनिपूर्वपदान्याद्युदात्ता

उत्तरो विधिः राजशब्दस्यैव यथा स्यादार्यशब्दस्य माभूत् यथासंख्याभावोपि पृथग्योगकरणस्य प्रयोजनं ज्ञेयम् राजप्रत्येना इति प्रतिगतमेनः पापं यस्य प्रत्येनाः रा
ज्ञः प्रत्येनाः अन्यत्र नेति राजा चासौ प्रत्येनाश्च राजप्रत्येना इत्यत्र द्वितीयासमासोयमिति द्वितीया पुनरत्यन्तसंयोगे अथवाऽकर्मकधातुभिर्योगे देशः कालो भावो
गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् त्यवन्त इति त्यब्नेर्ध्रुवे इति त्यप् मुहूर्त्तप्रहसित इति थाथादिस्वरः समासस्वरस्य द्वितीया पूर्वपदप्रकृतिस्वरो वा बाधकस्तस्य

ग्रामः शिल्पिनि ६।२।६२ वा प्रकृत्या ग्रामनापितः २ ग्रामशब्द आद्युदात्तः ग्रामः किम् परमनापितः शिल्पिनि किम् ग्रामरथ्या राजा च
प्रशंसायाम् ६।२।६३ शिल्पिवाचिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या राजनापितः २ राजकुलालः २ प्रशंसायां किम् राजनापितः शि
ल्पिनि किम् राजहस्ती आदिरुदात्तः ६।२।६४ अधिकारोऽयम् सप्तमीहारिणौ धर्म्येऽहरणे ६।२।६५ सप्तम्यन्तं हारिवाचि चाद्युदात्तं
धर्म्ये परे देयं यः स्वीकरोति स हारीत्युच्यते धर्म्यमित्याचारनियतं देयम् मुकुटेकार्षापणम् हलेद्विपदिका संज्ञायामिति सप्तमीसमासः।
कारनाम्नि चेत्यलुक् याज्ञिकाश्वः वैयाकरणहस्ती क्वचिदयमाचारः मुकुटादिषु कार्षापणादि दातव्यं याज्ञिकादीनां त्वश्वादिरिति धर्म्ये
ति किम् स्तम्बेरमः अहरणे किम् वाडवहरणम् वडवाया अयं वाडवः तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमित्यु
च्यते परेऽपि कृत्स्वरो हारिस्वरेण बाध्यत इत्यहरण इति निषेधेन ज्ञाप्यते तेन वाडवहार्य्यमिति हारिस्वरः सिध्यति युक्ते च ६।२।६६ युक्त
वाचिनि समासे पूर्वमाद्युदात्तम् गोवल्लवः कर्त्तव्ये तत्परो युक्तः ॥

९९ थाथादिस्वरः तस्यापि पाक्षिकोपवादोयं ॥ ॐ ॥ ग्रामः ग्राम इति स्वरूपग्रहणं शिल्पि
न्यर्थग्रहणं ग्रामशब्दः पूर्वपदप्रकृतिस्वरं वा स्याच्छिल्पिवाचिन्युत्तरपदे ग्रामनापित इति षष्ठीसमासः आद्युदात्त इति ग्रसेरा चेति मनिन् नित्त्वादाद्युदात्तः राज
नापित इति कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा षष्ठीसमासे च राजयोग्यतया तस्य प्रशंसा स हि कर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति राजार्थ
मित्युक्ते प्रशंसा गम्यते आदिरुदात्तः पूर्वपदमित्यस्येहार्थात्लक्ष्या विपरिणामः सर्वत्र चात्र प्रकरणे पूर्वपदविषये षष्ठ्यर्थे प्रथमा सप्तमी हारीत्यावश्यके णिनिः जनपदे ग्रा

परोमुखशब्दोन्तोदात्तोनस्यात्· पूर्वपदप्रकृतिस्वरोऽत्रेति· एषूदाहरणेषु बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरेणान्तोदात्तं पूर्वपदं तथाहि· उदीचैर्ड्स्ऽसिः उच्चैः अनिगन्तोऽञ्चतावप्रत्यय इति प्रशब्द उदात्तः ततएकादेशस्वरेण प्राङ् शब्द उदात्तः गमेर्डो गोः वर्तमाने पृषदित्यादिना महच्छब्द उदात्तो निपातितः स्थूलशब्द ऋज्रेन्द्रेत्यादावन्तोदात्तो निपातितः ॥ ॥ मुषेः क्तिच् मुष्टिः प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्चेति कुः पृथुः ऋतन्वदीत्यादिना सः वत्सः उपमानलक्षणो विकल्प इति निष्ठोपमानादिति प्राप्तः बाध्यत इति· अस्य प्रतिषेधस्यावकाशोपत्रगवाद्युपमानेन न भवति गौर्मुखमिव यस्य सः वत्सो मुखमिव यस्येति सर्वत्रात्र गवाद्युपमेयं नो पमाने· अत्रस्य विकल्पस्यावकाशः पत्रगवादि पूर्वं पदं न भवति· सिंहमुखः गवाद्युपमाने उभयप्रसंगेऽयमेव भवति पूर्वविप्रतिषेधेन· सिंहमुख इति· पक्षे पूर्व

मुष्टिमुखः पृथुमुखः वत्समुखः पूर्वपदप्रकृतिस्वरोऽत्र गोमुष्टिवत्स पूर्वपदस्योपमानलक्षणोपि विकल्पोऽनेन बाध्यते निष्ठोपमाना दन्यतरस्याम् ६।२।१६९ निष्ठान्तादुपमानवाचिनश्च परस्य मुखस्याङ्गं वाऽन्तोदात्तं बहुव्रीहौ प्रक्षालितमुखः पक्षे निष्ठोपसर्गेति पूर्वप दान्तोदात्तत्वम् पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोपि भवति उपमाने सिंहमुखः जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिप न्नाः ६।२।१७० शारङ्गजग्धः मासजातः सुखजातः दुःखजातः जातिकालेति किम् पुत्रजातः अनाच्छादनात् किम् वस्त्रच्छन्नः अकृते ति किं कुण्डकृतः कुण्डमितः कुण्डप्रतिपन्नः अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः वा जाते ६।२।१७१ जातिकालसुखादिभ्यः परो जातशब्दो वाऽन्तोदात्तः दन्तजातः मासजातः॥

पदप्रकृतिस्वरः हिंसेः पचाद्यचि सिंहः पृषोदरादित्वाद्वर्णविपर्ययः जातिकाल· जात्यादिभ्यः परं क्तान्तमन्तोदात्तं स्यात् बहुव्रीहौ कृतादीन्वर्जयित्वा आच्छादनवाचकात्परं चेन्न· सारंगजग्ध इति· सारंगः पक्षिविशेषः स जग्धो भक्षितो येनेति विग्रहः प्रत्युदा हरणेषु सर्वत्र पूर्वपदप्रकृतिस्वरः तत्र पुत्रशब्दोऽन्तोदात्तः वसेः ष्ट्रन् वस्त्रशब्द आद्युदात्तः कुण्डशब्दोऽनविषयस्येति संज्ञात्वादाद्युदात्तः ननूदाहरणेषु प्रत्युदाहर णेषु च· निष्ठेति निष्ठा तस्य पूर्वनिपातः प्राप्नोति तत्राह अस्माज्ज्ञापकादिति· इदमेव मनसि विभाव्योक्तं जातिकालसुखादिभ्यः परा निष्ठा वाच्येति· दन्तजात इति ।

नाइत्यर्थ इति· अनेन प्रथानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शितं· तेनात्र गणनाभाव उक्तः· उत्तरपदस्येत्यादि· इह समासस्येति प्रकृते· उत्तरपदादिरि
त्यतः प्रभृति उत्तरपदस्येति वर्तते इहोत्तरपदं कार्यित्वेनाश्रीयते तेन यदा कचुत्पद्यते तदा कपि परतो पूर्वं प्रथमे तितत्· अन्तोदात्तं भवति न तु कवंतक प्रत्ययोर्हि स
मासस्यैवान्तो नोत्तरपदस्य उत्तरपदावयवाः समासान्ता इति पक्षेपि प्रथमपूरणयोरिति विशिष्टरूपग्रहणात् कपस्तत्राऽनन्तर्भावादुपात्तयोरेव स्वरः ॥ ॥
संख्यायाः संख्यायाः परस्तन शब्दोन्तोदात्तः स्यात्· दर्शनीयस्तनेति· पूर्वपदप्रकृतिस्वरः दर्शनीयशब्दोऽनीयरप्रत्ययान्तः रित्स्वरः· विभाषा· पूर्वसूत्रोक्तं छ
न्दसि वा स्यात् द्विस्तनीमिति अन्तोदात्तत्वे स्वांगाच्चोपसर्जनादिति ङीष्· चतुस्तनामिति· पूर्वपदप्रकृतिस्वरे राचत्ते रुरनिति चतुर् शब्दस्य निलादाद्युदात्तत्व

संख्यायास्तनः ६।२।१९३ बहुव्रीहावन्तोदात्तः द्विस्तना चतुस्तना संख्यायाः किं दर्शनीयस्तना स्तनः किम् द्विशिराः विभाषा छ
न्दसि ६।२।१९४ द्विस्तनं करोति संज्ञायां मित्राजिनयोः ६।२।१९५ देवमित्रः कृष्णाजिनम् संज्ञायां किं प्रियमित्रः ऋषिप्रतिषेधो
मित्रे विश्वामित्र ऋषिः व्यवायिनोऽन्तरम् ६।२।१९६ व्यवधानवाचकात्परमन्तोदात्तम् वस्त्रमन्तरं व्यवधायकं यस्य सवस्त्रा
न्तरम् व्यवधायिनः किम् आत्मान्तरम् स्वभावान्य इत्यर्थः मुखं स्वाङ्गम् ६।२।१९७ गौरमुखः स्वाङ्गं किम् दीर्घमुखा शाला नाऽ
व्ययदिक्शब्दगोमहत् स्थूलमुष्टिपृथुवत्सेभ्यः ६।२।१९८ उच्चैर्मुखः प्राङ्मुखः गोमुखः महामुखः स्थूलमुखः । ॥

म्· अन्तोदात्तत्वाभावात्स्वांगादिति ङीन्न संज्ञायां मित्रा· एतयोरुत्तरपदयोरन्त उदात्तः स्याद्बहुव्रीहौ संज्ञायाम्· विश्वामित्र इति· मित्रे चर्षाविति दीर्घः· अत्र व
हुव्रीहौ विश्वं संज्ञायामिति वाधित्वा परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यतेऽतो बहुव्रीहौ विश्वं संज्ञायामित्यन्तोदात्तत्वं भवति· व्यवायि· उदाहरणे व्यवधा
नवाचिनोऽन्तरशब्दात्तत्करोतीति णिचि पचाद्यच्· प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः मुखम्· स्वांगं मुखमुत्तरपदमन्तोदात्तं बहुव्रीहौ· दीर्घमुखा शालेति·
मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते· स्वांगमद्रवादि लक्षणमिह गृह्यते· न तु लमंगं स्वांगमिति व्युत्पत्तिलभ्यम् अन्यथाऽत्रापि स्यादिति भावः· नाव्यय· एभ्यः

अपृक्त इत्येव वक्तव्ये तन्त्र जितिभेदेनोपादानमवेण स्त्व्यावृत्तये। यद्यप्यर्थवत्परिभाषया तन्निवृत्तिः सिध्यति तथापि तस्याः परिभाषायाः अनित्यत्वज्ञापनाय तयोः पृथग्
पादानं। तेन अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयंतीति सिद्धमिति। व्युत्पत्तिपक्षे तन्नन्तत्वात् जंतत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत
आह। नियमार्थमिति। औणादिकानामन्येषां त्राशब्दानां माभूदित्येतदर्थमित्यर्थः धात्वश्वस्त्रौणादिकशब्दो न भवतीति। तत्र दीर्घो भवत्येव। धातारौ। धातारः। अ
व्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति। पितृभ्रातृप्रभृतीनां दीर्घशंकैव नास्तीति बोध्यं तेनेति। पितरौ। पितरः। भ्रातरौ। भ्रातरः। इत्यादौ दीर्घो नेत्यर्थः। क्रोष्टेति।
अनङ् हल्ङ्याब्भ्यो दीर्घात् परत्वाद्दुपधादीर्घः। सर्वनामस्थाने चेत्यनेन यद्यपि लभ्यते तथापि परत्वाद्गुणे नित्यत्वान्न्याय्यः। कृते अनङि एकादेशविकृतस्यानन्यत्वेन

ऋत उत्। ६।१।१११। ऋदन्तात् ङसिङसोरति परे उकार एकादेशः स्यात्। परत्वात् रात्सस्य। ८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य
रेफस्य विसर्गः। क्रोष्टुः। आमि परत्वात्तृज्वद्भावे प्राप्ते नुमचिरतृज्वद्भावेभ्यो नुट्‌ पूर्वविप्रतिषेधेन। क्रोष्टूनां। क्रोष्टरि। क्रोष्टोः। पक्षे हलादौ च श
म्भुवत्। इत्यजन्ताः। हूहूः। हूहू। हूह्वः। हूहूं। हूहू। हूहून् इत्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः। शेषं तु वित्वन्तवातप्रमीवत्। हे अतिचमु। अति
चम्वै। अतिचम्वाः। अतिचमूनां। अतिचम्वां। खलपूः॥ ९९

तृज्वत्त्वात्। अन्यथा गुणे कृतेपि क्रोष्टारावित्यादौ दीर्घो न स्यादिति भावः। विभाषातृतीयादिष्वचि
स्मिन्विधिस्त्वादाविति तदादिविधिरित्याह। अजादिष्विति॥ ॥ ऋत उत् ऋकाराकारयोरेकादेशे सति ह्रस्वऋ एव उकारः स्यान्न तु दीर्घ इत्येतदर्थं केन तपरक
रणेन भाव्यमानोऽण् क्वचित् सवर्णान् गृह्णातीति ज्ञाप्यते तेन यवलपरे हकारे मस्य विधीयमाना यवला अनुनासिका भवंति। रात्सस्य संयोगांतस्य लोपः इत्यनेनैव सि
द्धे नियमार्थमिदमित्याह। सस्यैवेति। नान्यस्येति। ऊर्क्। परिमार्ड् इत्यादौ रेफात्संयोगांतस्य लोपो नेत्यर्थः। रेफात् सस्यैवेति विपरीतनियमोऽत्र न भवति। उरः प्रभृतिषु कृ
तसंयोगांतलोपस्य उभाभ्यां नित्यस्य दर्शनात्। परत्वादिति। न च नुट्‌ नित्य इति वाच्यं तृज्वद्भावे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वात् इति भावः। नुमचिरेति।
वारीणां तिसृणां क्रोष्टूनामिति क्रमेणोदाहरणानि। ननु रेण स्वविषये प्राप्तं सर्वं बाध्यं बाध्यसामान्यचिं॥ ॥ ॥

पक्षे पूर्वपदप्रकृतिस्वरः दंतशब्दः स्वांगशिटामदंतानामित्याद्युदात्तः मासशब्दो यामादीनां चेत्याद्युदात्तः॥ ॐ॥ नञ्सु॰ नञ्सुभ्यां परमुत्तरपदमन्तोदात्तं स्यात् समा
सान्ता उत्तरपदावयवाः तेनान्तश्च इत्यनेन क्यूरित्यपि अकारस्योदात्तत्वं भवति॰ समासावयवाः समासांता इति पक्षे तु अस्मिन्सूत्रे समासस्यैव कार्यित्वमाश्रीयते नोत्त
रपदस्य कपि पूर्वमिति ज्ञापकात्॰ अचानेनोत्तरपदस्यान्तोदात्तः स्यात् ततोऽकुमारीक इत्यादावनेनैव सिद्धत्वात्कपि पूर्वमित्यवाच्यं स्यात्॰ कपि पूर्वं पूर्वं साकपएवो
दात्तत्वे प्राप्ते ततः पूर्वस्योदात्तत्वं विधीयते॰ ह्रस्वान्तेत्यात्पूर्वमिति वचनादिह दीर्घान्ता एवोदाहृताः उदाहरणेन ह्रते श्वेतिकप् ह्रस्वान्ते ह्रस्वः अन्तो यस्य तदिदं ह्रस्वान्त
मिति बहुव्रीहेरन्यपदार्थमुत्तरपदं समासो वा गृह्यत इत्याशयेनाह॰ उत्तरपदे समासे चेति॰ अत्र कपि पर इति॰ सामान्यवचनात्तदिह तदुत्तरपदं समासो वा गृह्यते

नञ्सुभ्याम् ६।२।१७२ बहुव्रीहावुत्तरपदमन्तोदात्तं अव्रीहिः सुमाषः कपि पूर्वम् ६।२।१७३ नञ्सुभ्यामुत्तरम्पूर्वमुदात्तं कपि परे अब्रह्मबन्धूकः सुकुमारीकः ह्रस्वान्तेऽन्त्यात्पूर्वम् ६।२।१७४ ह्रस्वान्ते उत्तरपदे समासे चान्त्यात्पूर्वमुदात्तं नञ्सुभ्यां बहुव्रीहौ अव्रीहिकः सुमाषकः पूर्वमित्यनुवर्तते पुनः पूर्वग्रहणं प्रकृतिभेदेन नियमार्थं ह्रस्वान्तेन्त्यादेव पूर्वमुदात्तं न कपि पूर्वमिति अज्ञकः कबन्तस्ये वान्तोदात्तत्वम् बहोर्नञ्वदुत्तरपदभूम्नि ६।२।१७५ उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात् बहुव्रीहिकः बहुमित्रकः उत्तरपदेति किं बहुषु मानोस्य स बहुमानः॥

१ नञ्सु पूर्वग्रहणमनर्थकं कपि पूर्वमित्यनुवृत्तेरत आह॰ पूर्वमित्यनुवर्तमान इति॰
प्रवृत्तिभेदेन वाक्यभेदेन तत्रैकेन वाक्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते द्वितीयेन तु नियम्यते॰ ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति न कपि पूर्वमिति तेन
किं सिद्धमत आह॰ कबन्तस्यैवान्तोदात्तत्वमिति॰ नास्ति ज्ञायस्य अज्ञकः अत्र यद्येष नियमो न स्यात्तर्हि एतस्याभावे कपि पूर्वमित्ययमेव स्वरः स्यात्॰ अस्मिंस्तु नियमे सति न भवति॰ नञ्सुभ्यामिति कबन्तस्यैव भवति॰ बहोर्नञ्॰ नञ इव नञ्वत्॰ अस्मादेव निपातनात्षष्ठ्यन्ताच्च मीसमर्थाद्वतिः बहूनां भावो भूमा॰ बहो लोपो भू च बहोः
उत्तरपदशब्देन तदर्थो गृह्यते॰ स्वरूपेणोत्तरपदस्य बहुत्वासंभवात् तदाह उत्तरपदार्थबहुत्वे॰ ति बहुव्रीहिक इत्यादि॰ ह्रस्वान्तेन्त्यात्पूर्वमिति स्वरः बहुमान इति॰

पूर्वपदप्रकृतिस्वरः बहुशब्दस्तु लघिवंत्यो नेलोपश्चेति कुप्रत्ययांतोंतोदात्तः॥ ॐ॥ नगुणा अवयववाचिनो बहोः परेइति॰ अवयववाचिन इति गुणादीनां विशेषणं॰ उपस॰ स्वांगं प्रतिक्रियायोगाभावाडुपसर्गग्रहणं प्राद्युपलक्षणं॰ प्रादेरुत्तरं ध्रुवं स्वांगवाचि पर्शुवर्जितमन्तोदात्तं स्यात् बहुव्रीहौ॰ प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः दर्शनीयशब्दोऽनीऽयर्प्रत्ययान्तः रित्स्वरः उद्बाहुरिति॰ क्रोशतीतिशेषः अत्र क्रोशनसमय एवोद्बाहुत्वं न सर्वदैवेत्यध्रुवम्॰ वनं समासे॰ बहुव्रीहावित्यस्यनिवृत्त्यर्थं समासग्रहणं॰ प्रवण इति॰ बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते प्रनिरंतइति णत्वम्॰ अन्तः॰ अन्तर्शब्दात्यं चेम्याष्ठाद्सोलुक् तत्तदाह॰ अस्मात्पर

नगुणादयो वयवाः ६।२।१७६॥ अवयववाचिनो बहोः परे गुणादयो नान्तोदात्ताः बहुव्रीहौ बहुगुणा रज्जुः बह्वक्षरं पदं बह्वध्यायः गुणादिराकृतिगणः अवयवाः किं बहुगुणो द्विजः अध्ययनश्रुतसदाचारादयो गुणाः उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ६।२।१७७ प्रपृष्ठः प्रललाटः ध्रुवमेकरूपं उपसर्गात्किम् दर्शनीयपृष्ठः स्वाङ्गं किं प्रशाखो वृक्षः ध्रुवं किं उद्बाहुः अपर्शु किं विपर्शुः वनं समासे ६।२।१७८ समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तं तस्येदिमे प्रवणे अन्तः ६।२।१७९ अस्मात्परं वनमन्तोदात्तं अन्तर्वणो देशः अनुपसर्गार्थमिदम् अन्तश्च ६।२।१८० उपसर्गादन्तः शब्दोन्तोदात्तः पर्य्यन्तः समन्तः ननिविभ्याम् ६।२।१८१ न्यन्तः। व्यन्तः पूर्वपदप्रकृतिस्वरे यणि च कृते उदात्तस्वरितयोर्य्यणइति स्वरितः परेरभितोभाविमण्डलम् ६।२।१८२ परेः परमभितउभयतोभावो यस्यास्ति तत्कूलादि मण्डलं चान्तोदात्तं परिकूलं परिमण्डलं॥ ९९

मिति॰ अन्तःशब्दात्परमित्यर्थः अन्तर्वणइति॰ अत्रापि तेनैव णत्वम्॰ अनुपसर्गार्थमिति॰ उपसर्गे तु पूर्वेणैव सिद्धम्॰ ननिविभ्यां॰ निविभ्यामुत्तरोऽन्तःशब्दोनान्तोदात्तः स्यात्॰ पूर्वपदप्रकृतिस्वर इति॰ बहुव्रीहिसमासे बहुव्रीहौ प्रकृत्येति तत्पुरुषे तत्पुरुषे तुल्यार्थेत्यनेन परेरभितः परेरुत्तरोभिशब्दो भाववाचि मंडलं चान्तोदात्तं स्यात् अभितोभावीत्यस्यार्थमाह॰ अभितोभावोऽस्यास्तीति अथवा अभितः उभयतो भवति नद्यादेः कूलादिकमित्यभितोभावी सुप्यजातौ णिनिः परिकूलमिति॰ बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा तत्र बहुव्रीहौ तत्पु

हमेच पूर्वपदप्रकृतिस्वरे प्राप्ते अव्ययीभावे तु परिप्रत्युपापा इति कूलतीरे तिच प्राप्ते परितः कूलमस्य परिगतं कूलमिति कूलात्कूलं वर्जयित्वेत्यर्थ इति उदकस्याभाव इति विग्र
हः॥ॐ॥ प्राद प्रादुत्तरम स्वांगवाचि संज्ञायामन्तोदात्तं स्यात् प्रपृहमिति प्रादिसमासः वहुव्रीहिर्वा प्रपदमिति पूर्वपदप्रकृतिस्वरः निरुदकमित्यादि निर्गत
मुदकं यस्मादिति वहुव्रीहिः निर्गतमुदकमिति प्रादिसमासो वा उदकस्याभाव इत्यव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् अभे अभेरुत्तरपदं मुखमन्तोदात्तं स्या
त् उपसर्गात्स्वांगमितीति मुखं स्वांगमिति तु न भवति नाव्ययदिक्छब्द इति निषेधात् अपाच्च अपादुत्तरं मुखमन्तोदात्तं स्यात्समासे अपमुखमिति प्रादिसमासे व
हुव्रीहौ च पूर्वपदप्रकृतिस्वरे प्राप्ते मुखं वर्जयित्वेत्यव्ययीभावेऽपि परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्विति प्राप्तेऽयमारंभः उत्तरार्थ इति उत्तरत्र अपादित्यस्यैवानुवृ

प्रादऽस्वाङ्गं संज्ञायाम् ६।२।१८३ प्रगृहं असाङ्गङ्किं प्रपदं निरुदकादीनि च ६।२।१८४ अन्तोदात्तानि निरुदकम् निरुपलम् अभेर्मुख
म् ६।२।१८५ अभिमुखम् उपसर्गात्स्वाङ्गमिति सिद्धे वहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थञ्च अभिमुखा शाला अपाच्च ६।२।१८६ अप
मुखं योगविभाग उत्तरार्थः स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च ६।२।१८७ अपादिमान्यन्तोदात्तानि अपस्फिगम् अपपू
तं अपवीणम् अञ्जस अपाञ्जः अध्वन् अपाध्वा उपसर्गादध्वन इत्यस्याभावे इदं एतदेव च ज्ञापकं समासान्ता नित्यत्वे अप
कुक्षिः सीरनाम अपसीरम् अपहलं अपनाम स्फिगपूतवीणाकुक्षिग्रहणं वहुव्रीह्यर्थमस्वाङ्गार्थञ्च ॥ ६ ॥ ॥

त्यर्थं स्यात् अभेर्माभूत् स्फिगपूत नामग्रहणं सीरेणैव संवध्यते न स्फिगादिभिः स्फिगपूतकुक्षीणां पृथग्ग्रहणादिति हरदत्तः तेन स्फिगपूतकुक्षयः पर्याया इति
निश्चीयते उपसर्गादध्वन इत्यस्याभाव इति उपसर्गादध्वन इदं समासान्ताच्प्रत्ययविधायकं तदभावे तस्मिन्सति अच्प्रत्ययस्य चित्त्वादेव सिद्धम् ननूपसर्गादध्व
न इत्यनेन नित्योच् विधीयते तत्कथमुक्तमित्यस्याभाव इतीत्यत आह एतदेव च ज्ञापकमिति यदि हि नित्यः समासान्तः स्यात् अध्वग्रहणमिहानर्थकं स्यात्
अच्प्रत्ययस्य चित्त्वादन्तोदात्तस्य सिद्धत्वात् कृतं तु अध्वग्रहणं ज्ञापयति समासान्ता अनित्या इति स्फिगपूतकुक्षिग्रहणमिति यदास्येतानि स्वांगवाची

निध्रुवाणि च भवं तिव…नीहि असमासस्तदोपसर्गात्स्वांगमित्येव सिद्धम् ॥ ॥ अधे · अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं स्यात् उपरि तिष्ठतीत्युपरिस्थं · सुपि स्थ इति कः तदेतद्दर्शयति · दन्तस्योपरीति · अधिकरणमिति · अधिक्रियतेऽस्मिन्नित्यधिकरणं नैतदुपरिस्थवाचि किं तर्हि स्थवाची · अनन्तोदात्तमुत्तरपदप्रकृति स्वरेणाककार उदात्तः अनुज्येष्ठ इति · उत्तरपदार्थस्याप्राधान्यं दर्शयति · पूर्वपदार्थप्रधानः प्रादिसमासोयमिति · प्रधानार्थं च कनीयो ग्रहणमिति · अन्यथा

अधेरुपरिस्थम् ६।२।१८८ अध्यारूढो दन्तोऽधिदन्तः दन्तस्योपरि जातो दन्तः उपरिस्थं किं अधिकरणं अनोरप्रधानकनीयसी ६।२।१८९ अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तं अनुगतो ज्येष्ठमनुज्येष्ठं पूर्वपदार्थप्रधानः प्रादिसमासः अनुगतः कनीयाननुकनीयान् उत्तरपदार्थप्रधानः प्रधानार्थं च कनीयोग्रहणं अप्रेति किम् अनुगतो ज्येष्ठोऽनुज्येष्ठः पुरुषश्चान्वादिष्टः ६।२।१९० अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः अन्वादिष्टः पुरुषोऽनुपुरुषः अन्वादिष्टः किं अनुगतः पुरुषोऽनुपुरुषः अतेरकृत्पदे ६।२।१९१ अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः अत्यङ्कुशो नागः अतिपदा गायत्री अकृत्पदे किं अतिकारः अतेर्ङीबनुलोप इति वाच्यम् इह माभूत् शोभना गार्ग्यी अतिगार्ग्यः इह च स्यात् अतिक्रान्तः कारुकमतिकारुकः नेरनिधाने ६।२।१९२। निधानमप्रकाशता ततोन्यदनिधानं प्रकाशनमित्यर्थः। निमूलं न्यक्षम् अनिधाने किम् निहितो दण्डो निदण्डः प्रतेरंश्वादयस्तत्पुरुषे ६।२।१९३ प्रतेः परेंश्वादयोऽन्तोदात्ताः प्रतिगतोंशुः प्रत्यंशुः प्रतिजनः प्रतिराजा समासान्तस्यानित्यत्वान्न टच् उपाद्द्व्यजजिनमगौरादयः ६।२।१९४ उपात्परं द्व्यच्कमजिनं चान्तोदात्तं तत्पुरुषे गौरादीन्वर्जयित्वा उपदेवः। उपेन्द्रः। उपाजिनं। अगौरादयः किम् उपगौरः उपतैषः तत्पुरुषे किम् उपगतः सोमोऽस्य स उपसोमः

प्रधानग्रहणं नैव सिद्धत्वात् · अनुगतो ज्येष्ठ इति · विग्रहविशेषेण प्रधानवाचित्वं ज्येष्ठशब्दस्य दर्शयति · पुरुष अन्वादिष्ट इति · अनु पश्चादादिष्टः कथितः कस्मिंश्चित्कथिते योन्यः कथ्यते स अन्वादिष्ट इत्यर्थः · अतेरकृत्पदे · अकृच्च पदं च अकृत्पदे तदाह · अकृदन्तं पदशब्द

अति · अत्यंकुश इति · अंकुशमतिक्रान्त इति विग्रहः · अतिकारक इति · शोभनः कारकः पूजार्थीयमतिः · अतेर्धातुलोप इति · अत्यंकुशादौ वृत्तिविषयेऽतिशब्दोऽतिक्रां
तार्थवृत्तिरिति · क्रमेरप्रयोग एव धातुलोपः · अतिगार्ग्य इति · यथान्यासे त्वत्रापि प्राप्नोति गार्ग्यशब्दस्याद्युदात्तत्वात् तस्मादव्याप्तिव्याप्तिपरिहारार्थं मक्तत्यदइत्ये
तदपनीय धातुलोप इति वक्तव्यमित्यर्थः · नेरनि · निशब्दादुत्तरपदमन्तोदात्तं स्यादनिधानेऽर्थे · निमूलमिति · निर्गतं मूलमस्य निर्गतं वा मूलं निर्मूलं · निदंड इति · निश
ब्दो निधानार्थे वर्त्तते · कथं पुनर्निशब्दस्यायमर्थ इति चेच्छृणु · प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः समासान्तस्यानित्यत्वादिति · इह राजन्शब्दस्य पाठ एव

सोरवक्षेपणे ६।२।१९५ सुप्रत्यवसितः सुरत्र पूजायामेव वाक्यार्थस्त्वत्र निन्दा असूयया तथाभिधानात् · सोः किम् कुत्राह्मणाः अवक्षे
पणे किम् सुवृषणाम् विभाषोत्पुच्छे ६।२।१९६ उत्क्रान्तः पुच्छात् उत्पुच्छः २ यदा तु पुच्छमुदस्यति उत्पुच्छयते एरच् उत्पुच्छस्त
दा थाथादिस्वरेणानित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् सेयमुभयत्र विभाषा तत्पुरुषे किम् उदस्तम्पुच्छं येन स उत्पुच्छः द्वित्रिभ्यां पा
द्दन्मूर्द्धसु बहुव्रीहौ ६।२।१९७ आभ्यां परेष्वन्तोदात्तो वा द्विपाद् त्रिपात् थाय त्रिपादूर्ध्वः द्विदन् त्रिमूर्द्धा न समासान्त इत्येवं मूर्द्धन्नित्य
कृतसमासान्त एव मूर्द्धशब्दः तस्येतत्प्रयोजनमसत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात् एतदेव ज्ञापकमनित्यः समासान्तो भवती
ति यद्यपि समासान्तः क्रियते तथापि बहुव्रीहिकार्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वपक्षे भवत्येव द्विमूर्द्धः २ त्रिमूर्द्धः २ द्वित्रि
भ्यां किम् कल्याणमूर्द्धा बहुव्रीहौ किं द्वयोर्मूर्द्धा द्विमूर्द्धा ॥ ९ ज्ञापयति · समासान्ता अनित्या इति · अन्यथा राजाहःसखिभ्यष्टजिति टच् श्वित्वादे

वसिद्धं स्यात् ॥ ॐ ॥ सोरव · सोरुत्तरपदं निंदायामन्तोदात्तं स्यात्तत्पुरुषे · सुप्रत्यवसित इति सुः पूजायामिति कर्मप्रवचनीयस्य सोः स्वती पूजायामिति समासः
तेन सुप्रत्यवसिते थाथादिविधिर्न शंकनीयः ननु यदि सुशब्दोऽत्र पूजायां वर्त्तते कथं तर्हि क्षेपो गम्यत इत्याह · वाक्यार्थस्त्विति · कथमित्याह · असूययेति · यः
खल्वनर्थे उपस्थिते सुखायमान आस्ते तं प्रत्येवमुक्तो क्षेपो गम्यते · विभाषोत् · उच्छ्व्दात्परः पुच्छशब्दः अन्तोदात्तो वा स्यात्तत्पुरुषे · सेयमुभयत्र विभाषेति ·

आद्यापांतु व्युत्पत्तौ अव्ययपूर्वपदप्रकृतिस्वरेणबाधितत्वात्समासस्यांतोदात्तत्व मप्राप्तम्· द्वितीयापांतु व्युत्पत्तौ याथादिस्वरेणनित्यमन्तोदात्तत्वंप्राप्तमितिरू
त्वोभयत्रविभाषा·द्वित्रिभ्यां· पादितिकृताकारलोपोगृह्यते· दद्दितिकृतदद्दादेशोदंतशब्द आभ्यामिति· द्वित्रिभ्यांद्विपादिति· द्वौपादौयस्येति द्विपात्संख्यासुपू
र्वस्येतिपादशब्दस्याकारलोपः द्विदन्निति· वयसिदंतस्यदतृ· मूर्ध्नित्यकृतसमासांतएवमूर्द्धन्शब्दइति· एतच्चमूर्द्धस्विति निर्देशादेवावसीयते· अन्यथा
मूर्द्धस्विति निर्देश्यंस्यात्· किमर्थंपुनरकृतसमासांतएवनिर्दिष्टइत्यत आहतस्येतियच्चकृतसमासांतस्योपादानं· तर्हियदासमासांतः क्रियते तदानप्राप्नोतीति
स्याशावानन्तरत्वादित्यत आहयदापीति· इहहिबहुव्रीहिः कार्यित्वेनोपात्तो नमूर्द्धनमूर्द्धन् शब्दः तदेकदेशत्वाच्चेति· तस्यबहुव्रीहेरेकदेशः समासान्तस्तस्यभा
वस्तत्वंतस्मादितिसएवार्थः तदेकदेशित्वादिति पाठेतुसबहुव्रीहिरेकदेशी अवयवीयस्यसतदेकदेशीसमासांतस्तद्भावःस्तत्वंतस्मादितिसएवार्थः तदेवंव

सक्थञ्चाऽक्रान्तात् ६।२।१९८ गौरसक्थः श्लक्ष्णसक्थः अक्रान्तात्किम् चक्रसक्थः समासान्तस्यषच्श्चित्वान्नित्यमेवान्तोदात्तत्व
म्भवति परादिश्छन्दसिबहुलम् ६।२।१९९ छन्दसिपरस्यसक्थशब्दस्यादिरुदात्तोवा अञ्जिसक्थमालभेत अत्रवार्त्तिकम्॥ परादि
श्चपरान्तश्चपूर्वान्तश्चापिदृश्यते पूर्वोदयश्चदृश्यन्ते व्यत्ययोबहुलन्ततइतिपरादिः उविजाताउरुक्षया परान्तः नियेनमुष्टिहत्यया स्वि
चक्रः पूर्वान्तः विश्वायुर्देहि। ॐ। इतिसमासस्वराः॥ ॐ॥ ११ बहुव्रीहेः कार्यित्वात्तदेकदेशत्वाच्चसमासांतस्येतियदासमासांतःक्रियतेतदाप्ययंविधि

र्भवत्येव· द्विमूर्द्धइति· द्वित्रिभ्यांषमूर्द्धइतिषः कल्याणमूर्द्धेति· पूर्वपदप्रकृतिस्वरएवात्रभवति· कल्याणशब्दोलघावन्तइत्यादिनामध्योदात्तः॥ ॐ॥ सक्थ
च· बहुव्रीहौसक्थ्यक्ष्णोरितिषजन्तः सक्थशब्दउत्तरपदमन्तोदात्तंवास्यात्· सचेत्क्रान्तात्परो नभवति· चित्वान्नित्यमन्तोदात्तत्वेप्राप्तेऽयंविकल्पः गौ
रसक्थइति· पक्षेपूर्वपदप्रकृतिस्वरः शुक्लगौरयोराद्युदात्तत्वेनात्रस्वरयं श्लक्ष्णसक्थइति· कृत्यल्युटोबहुलं·श्लिषेःक्सोपधायाइति
श्लक्ष्णशब्दोंतोदात्तः षचश्चित्वादिति· एतेनचित्स्वरस्यापवादःप्राप्तविभाषेयमितिदर्शयति· परादिश्छन्दसि· परशब्देनात्रसक्थशब्दएवतस्यैवपूर्वसूत्रे
सन्निहितत्वात्तदाह· परस्यसक्थशब्दस्येति· ननुतर्हिपरग्रहणमनर्थकंप्रकृतोहिसक्थशब्दोनुवर्त्ततेनैतदस्ति· बहुव्रीहेरपिप्रकृतत्वात्तस्याद्युदात्तत्वंशंक्येतविभाषा

त्युच्छ इत्यतो विभाषेति वर्त्तमाने बहुलग्रहणं बह्वर्थप्रदर्शनार्थं बहुलग्रहणस्यार्थं श्लोकेन दर्शयति पारादिश्चेति उरुक्षयेति उरूणां क्षयो निवास इति विग्रहः
क्षयो निवास इति क्षयशब्द आद्युदात्तः समासस्येत्यन्तोदात्तं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत्थाथादिस्वरेण बाधितं अतो बाहुल
केनोत्तरपदाद्युदात्तत्वं एतच्च क्षि निवासगत्योरिति धातोर्बाहुलकादधिकरणे एरजिति माधवेनोक्तं वस्तुतस्तु घप्रत्ययान्तः क्षयशब्द इति हरदत्तोक्तरीत्या थाथा
दिस्वरस्येहाप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैव सिद्धं पारादिश्चेत्यस्योदाहरणं तु चोरयितॄसूनृतानामिति बोध्यम् ऊनपरिहारो चुरादिभ्यस्तृन् णिच् क्विप् सु
तरामूनपत्यप्रियमिति सूनृ तदन्तं च सूनृतं अयस्मयादीनीति भत्वान्नलोपो न मुष्टिहत्ययेति मुष्ट्या हननं मुष्टिहत्या हनस्त चेति सुबन्ते उपपदे क्यप् कृदु
त्तरपदप्रकृतिस्वरोऽत्र प्राप्तः चित्त्वान्त इति बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्राप्तः॥ विश्वायुरिति विश्वमायुर्यस्मिन्निति बहुव्रीहिः विश्वशब्दः कन्प्रत्ययान्तः पूर्व
पदप्रकृतिस्वरेणाद्युदात्तः प्राप्तः॥ ॥ इति स्वरसुबोधिन्यां समासस्वरप्रकरणं समाप्तम्॥ ॥ तिङो पचति गोत्रमिति गोत्रं स्वकुलं पीडयतीत्यर्थः एवं

तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ८।१।२७ तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः पचति गोत्रं पचति पचति गोत्रं एवं प्रवचनप्रह
सनप्रकथनप्रत्यायनादयः कुत्सनाभीक्ष्ण्यग्रहणम्पाठविशेषणम् तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्य्यं ज्ञेयं गोत्रादी
निकिम् पचतिपापम् कुत्सेति किम् खनति गोत्रं समेत्य कूपं॥ ९

हि कुत्सा भवति आभीक्ष्ण्ये उदाहरणमाह पचति पचति गोत्रमिति अनेकार्थ
त्वात्पचिः करोत्यर्थे वर्त्तते विवाहादौ गोत्रं पुनः पुनः सुखीकरोतीत्यर्थः नित्यवीप्सयोरिति द्वित्वम् ननु किं कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणमेतयो
रर्थयोर्गोत्रादीनि भवन्ति तानि च तिङः पराण्यनुदात्तानि भवन्ति आहोस्विदनुदात्तविशेषणं तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्त्येतयोरर्थयोरिति असि
न्विचारे निर्णयमाह कुत्सनाभीक्ष्ण्यग्रहणमिति अयं चार्थो योगविभागाल्लभ्यते तिङो गोत्रादीनीत्येको योगोऽनुदात्तविधानार्थः कुत्सनाभीक्ष्ण्ययोरिति द्विती
यो योगः गोत्रादीनीत्येव परिभाषेयं इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव ग्राह्याणि तेन किं सिद्धं भवतीत्यत आह तेनेति अन्यत्रापीति तेन वित्त्व
गोत्रादित्वे द्वित्वाम्रेडितेष्वगतेरित्यत्र पचति पापमिति क्रियाविशेषणम् खनति गोत्रं समेत्य कूपमिति गोत्रं कुलं समुदितं भूत्वा कूपं खनतीत्यर्थः॥ ॥

तिङः अनुदात्तं सर्वमिति वर्त्तते तदाह निहन्यत इति· सर्वानुदात्तता निघात इति वैयाकरणानां व्यवहारः अतिङ इति किम् पचति भवति· एककर्त्तृकापत्ति क्रिया भवती
त्यर्थः नन्वतिङ्ग्रहणं व्यर्थं समानवाक्ये निघातयुष्मदस्मदादेशा इत्युक्तत्वात् एकस्मिन्वाक्ये तिङन्तद्वयाभावादिति चेत्सत्यम्· सूत्रकारेण समानवाक्याधिका
रो न कृत इत्यतिङ्ग्रहणमकारि· भाष्ये तु अतिङ्ग्रहणं प्रत्याख्यातं· नलुट् इतः आरभ्य निषेधसूत्राणि· श्वः कर्त्ता· श्वः कर्त्तारौ इति· तासेः परस्य लसार्वधातुकस्यानु
दात्तत्वे कृते तासिरुदात्तः एकवचने टिलोपे कृते उदात्तनिवृत्तिस्वरेणाडा उदात्तः निपातैः यदित्यादीनां यत्ने र्यत्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक् नतु यत्तशब्देन समासः
निपातैरिति विशेषणस्यानन्वयापत्तेस्तदाह एतैर्निपातैरिति· यत्यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र एतैरित्यर्थः यच्च दार्थे च हेतौ च विचारे यदि चेच्चणः

तिङ्ङतिङः ८।१।२८ अतिङन्तात्पदात्परन्तिङन्तं निहन्यते अग्निमीळे नलुट् ८।१।२९ लुडन्तन्न निहन्यते श्वः कर्त्ता निपातैर्यद्यदिहन्त
कुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ८।१।३० एतैर्निपातैर्युक्तन्न निहन्यते यदग्ने स्यामहं त्वम् यद्वा यदि कृथ कुविदङ्ग आसन् अचित्तिभि
श्चकृमा कच्चित् पुत्रासो यत्र पितरो भवन्ति नहप्रत्यारम्भे ८।१।३१ नहेत्यनेन युक्तन्तिङन्तन्नानुदात्तम् प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः
नहभोक्ष्यसे प्रत्यारम्भे किं नहवै तस्मिन् लोके दक्षिणामिच्छति सत्यम्प्रश्ने ८।१।३२ सत्ययुक्तन्तिङन्तन्नानुदात्तं प्रश्ने सत्यं भोक्ष्यसे प्रश्ने

किम् सत्यमद्धा उत्त वयमिन्द्र स्तवाम ॥ ० ॥

हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः कच्चित्प्रश्ने नेत् निषेधे प्रशंसायां कुवित्स्मृतं यत्रेत्यार्थे·
तन्त्रमूले कुविदुदाहृतः अन्ये पूज्याः तत्र ग्रहणं साक्षात्संबंधप्रतिपादनार्थं यदग्ने स्यामिति· अस्तेर्लिङि· अम· चकृमा कच्चिदिति· चकृमेति लिट्प्रत्ययस्वरेणां
तोदात्तं कच्चिदयं निपातसमुदायः पदकाले कत् चिदिति विच्छिद्य पाठात्· निपातैः किम्· यत्कूजति शकटम्· एतीति यत्· इणः शतरि रूपम्· इणो यणिति य
णः ननु प्रतिपदोक्तत्वात्· यदादिभिः साहचर्याच्च निपातस्यैव यच्छब्दस्य ग्रहणं स्यादिति चेत्सत्यम्· एतदेव ज्ञापयति· अस्मिन्प्रकरणे नेदमुभयमव्यव
स्थापकमिति· तेन यावद्यथाभ्यामित्यत्र यत्तदेतेभ्यः परिमाणे वतुबिति वतुप्यादितस्यापि लाक्षणिकस्य निपातस्यापि ग्रहणं भवति· यावत्स्तोत्रभ्यो रदोग्र १

णाना इति· अत्रारदद् इत्यट्स्वरेणाद्युदात्तम्· युक्तग्रहणं किम्· अन्यान्वितेमाभूत्· मन्त्रञ्च चेतमनो दक्षं दधसउत्तरमिहयन्नेत्यस्योत्तरमित्यनेनसाक्षात्संबंधः· दधथा
रणो अनुदात्तेत्· नह· प्रत्यानह शब्दो निपातसमुदायो निषेधवर्त्तते नहभोक्ष्यस इति· अदुपदेशात्परत्वात्से इत्यस्यनिघातः· स्यप्रत्ययस्वरेणमध्योदात्तपदम्· पूर्वभुंक्षे
त्युक्ते पुनः क्रोधेनापहासेनवाउनः पुनः प्रतिषिद्ध उक्तो यत्त्वं कृतेभोजनं करिष्यसि स एवमुच्यते· नहवैतस्मिन्निति तस्मिन्शब्दः फिट्स्वरेणाद्युदात्तः लोकशब्दः प्रत्ययजन्त
त्वादन्तोदात्तः दक्षिणाशब्दः स्वाङ्गशिटामदन्तानामिति शिट्त्वादाद्युदात्तः सत्यंभोक्ष्यस इति· मध्योदात्तम्॥ ॥ अंगाप्रातिलोम्यं प्रतिकूलकारित्वं ततोन्यदभि
मतकारित्वमप्रातिलोम्यं स्वंचानुलोम्य इति वक्तव्यम्· अंगशब्द उदाहरणेनुज्ञायां प्रत्युदाहरणे त्वमर्षे· अङ्गकुर्विति करोतेर्लोण्मध्यमपुरुषैकवचनेसि

अङ्गाप्रातिलोम्ये॥ ८।१।३३ अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तं अङ्गकुरु अप्रातिलोम्ये किं अङ्ग कूज सिदं वृषल इदानीं ज्ञास्यसि जाल्म अनभिप्रे
तमसौ कुर्वन्प्रतिलोमो भवति हि च ८।१।३४ हियुक्तं तिङन्तं नानुदात्तम् आहिष्मा नर्यमहं आहिरुतम् छन्दस्यनेकमपि साकाङ्क्षम्॥ ८।१।
३५ हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तं अनृतं हि मत्तो वदति पाप्मा न्वेनं पुनाति तिङन्तद्वयमपि न निहन्यते यावद्यथाभ्या
म्॥ ८।१।३६ आभ्यां योगे तिङन्तं नानुदात्तं यथा वित्त्कारवमावत॥

॥ १ तस्य से त्यपिच्चेति हिरादेशः तनादिकञ्भ्यः सार्वधातुके इति करोतेर्गुणश्च
तउत्सार्वधातुके· उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुक्· कुर्विति प्रत्ययस्वरेणान्तोदात्तं हि च· अत्राप्यप्रातिलोम्य इति संबध्यते· आहिष्मेति· स्मशब्दो निपातो
पित्वादित्वाद् अनुदात्तः दीर्घत्वं षत्वं च छान्दसं प्रातिलोम्ये तु हि कूज वृषल· उदाहरणे हिशब्दो वधारणे हेतौ वा स च प्रत्युदाहरणे त्वमर्षे· छन्दस्य अनेकमपीति·
अपिशब्दादेके तत्रानेकमुदाहरति· अनृतंहीति· हिर्यत इत्यर्थे यस्मादयं मत्तोनृतं वदति ततः पाप्मा· पापमेनं पुनाति· अनृतवदनदोषेणायुज्यत इति तात्पर्या
र्थः एकस्योदाहरणम्· अग्निर्हि पूर्वमुदजयत्तमिन्द्रोनूदयन्· अत्र एकमजयमित्याद्युदात्तम्· परं निहतम्· अनेहेतु हेतुमद्भावस्य द्योतको हिरित्यनेकमपि
तिङन्तं हियुक्तं भवति· अत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदनेकस्य क्वचिदेकस्य यथा स्यादिति वचनं· तत्र छन्दसि दृष्टानुविधानाद्यथाप्रयोगं व्यवस्था

यावद्यथा॰ इयं तृतीया पंचमीत्याह॰ आभ्यां युक्तमिति॰ तेन परभूतयोरपि भवति॰ देवदत्तः पचति यावदिति॰ यावच्च द्वौ निपातौ आनिपातस्य इत्यनेन निपातैर्यद्यदीत्यत्र ज्ञापितत्वात्॰ आद्यः साकल्ये द्वितीयः परिमाणोपाधिको वतुप्रत्ययान्तः यथा शब्दो योग्यतादिषु॰ आवत्तमिति॰ प्रवर्त्तेर्लोटो मध्यमपुरुषद्विवचनम्॰ यावत्त्वमुदाहरणात्॰ यावद् भुंक्ते देवदत्तः पचति यावदिति॰ यावत् तातृभ्यो दोषेणानारति॰ इत्सविलेखनेलङि॰ सिपि अट्॰ अटस्वरेणाद्युदात्तं॥ ※ ॥ पूजायां नानुदात्तमिति॰ अनुदात्त एव भवतीत्यर्थः यावद्देवदत्त इति॰ पूर्वेणात्र निघातप्रतिषेधो व्यवायेपरि भवति॰ उपसर्गेणैवेति नियमाद् व्यातिप्रसंगाभावेऽनंतरग्रहणाशक्यमकर्त्तुं॰ उपसर्गे यावद्यथाभ्यां युक्तमनंतरमुपसर्गेणाव्यवहितं तिङं॰ तं पूजायां विषयेनानुदात्तं स्यात्॰ अनंतरमित्येनेति॰ तच्चानन्तर्यं सोपसर्गस्य॰ न तिङः॰

पूजायान्नानन्तरम् ८।१।३७ यावद्यथाभ्यां युक्तन्तिङन्तम् पूजायान्नानुदात्तं यावत्पचति शोभनम् यथा पचति शोभनं पूजायां किं यावद्भुंक्ते॰ अनन्तरं किं॰ यावद्देवदत्तः पचति शोभनं पूर्वेणात्र निघातः प्रतिषिध्यते उपसर्गव्यपेतञ्च ८।१।३८ पूर्वेणानन्तरमित्युक्तं उपसर्गव्यवधानार्थमिदं वचनम् यावत्प्रपचति शोभनम् अनन्तरमित्येव यावद्देवदत्तः प्रपचति शोभनम् तुपश्यपश्यताहैः पूजायाम् ८।१।३९ एभिर्युक्तन्तिङन्तन्न निहन्यते पूजायाम् आदहस्वधामनु उनगोभित्त्वमेरिरे अहो च ८।१।४० एतद्योगे नानुदात्तं पूजायाम् अहो कटं करिष्यति पचति शोभनम्॥

तुमात्रस्य॰ प्रपचतीति प्रशब्दस्याद्युदात्तः तुपश्य तुप्रभृतीनि पूजाविषयाणि॰ उदाहरणानि तु माणवको भुंक्ते॰ पश्य माणवकोभुंक्ते॰ माणवक तु भुंक्ताइति॰ आश्चर्येतु शब्द इति॰ भोजनस्य पूजा गम्यते॰ एवमन्यत्रापि॰ पूजायां किम्॰ पश्य मृगो धावति॰ तत्त्वकथनमेतत्॰ ननु पूजायां नानन्तरमित्यतः पूजायामिति वर्त्तमाने पूजाग्रहणं व्यर्थमिति चेन्मैवम्॰ पूजाग्रहणं निघातप्रतिषेधार्थं॰ तद्धि पूजाग्रहणं प्रतिषेधस्य प्रतिषेधेन संबद्धम्॰ तत्तश्चतदनुवृत्तावि हापि न लुङित्यादिके विषये प्रतिषेधस्य प्रतिषेधः स्यात्॰ माभूदेवं निघातस्यैव यथा स्यादित्येतदर्थं पूजाग्रहणं॰ किं चानन्तरमित्येव तद्भून॰ इहत्वविशेषेणोच्यते॰ अहो च॰ अहो देवदत्तः पचति शोभनमित्युदाहरणम्॰ पृथग्योगकरणमुत्तरार्थम्॰ उत्तरो योग अहो योग एव यथा स्यात् तु प्रभृति भिर्योगे

तामग्रयणात्। अत एव गुणादीर्घोत्वानामपवादइति वक्ष्यति। तथा चाविशेषान्नुडप्यनेन वा ध्यत इति कथमिह विप्रतिषेधः। उत्सर्गापवादयोस्तद्योगादिति चेत्। अत्र।
हुः। अत एव तदंशे विप्रतिषेधं दूषयित्वा न तिसृचतसृ इति ज्ञापकान्नुडिति भाष्यकृतोक्तं। एवं च नमतृज्वज्ञावाभ्यामित्येव सुवचमिति। इत्युदंताः। हूहूरिति गंधर्वविशे
षवाचकमव्युत्पन्नं प्रातिपदिकमिदं। हूहू। वितिादीर्घाज्जसि चेति पूर्वसवर्णदीर्घनिषेधे सतीक इति यण्। अतिचमूशब्देत्विति। प्रथमलिंगग्रहणं चेत्युक्तेः। तथा चैव
मतिचम्वादय इति प्राचोक्तं नादर्तव्यमिति भावः। खलपूरिति। खलं पुनातीति पूञः क्विप्॥ ॐ ॥ ओः सुपि॥ इणो यणित्यतो यण्। एरनेकाच इति सूत्रं च सर्वमनु

ओः सुपि। ६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादजादौ सुपि। गतिकारकेतरपूर्वप
दस्य यण् नेष्यते। खलप्वौ। खलप्व इत्यादि। एवं सुल्वादयः। अनेकाचः किं। लूः। लुवौ। लुवः। धात्ववयवेति किं। उल्लूः। उल्ल्वौ। उल्ल्वः। असंयो
गपूर्वस्य किं। कटप्रूः कटप्रुवौ कटप्रुवः। गतीत्यादि किं। परमलुवौ। सुपि किं। लुलुवतुः। स्वभूः। न भूसुधियोः। स्वभुवौ। स्वभुवः। वर्षाभ्वश्च। ६।४।
८४। अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ। वर्षाभ्वः। दृंभतीति दृम्भूः। अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूरित्युणादिसूत्रेण व्युत्पादितः। दृंभ्वौ।
दृंभ्वः। दृम्भूं। दृम्भ्वौ। दृंभून्। शेषं हूहूवत्। दृन्निति नान्तो हिंसार्थोऽव्ययं भुवः क्विप्। दृन्भूः। दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः। दृन्भ्वौ। दृन्भ्व इत्यादि।
खलपूवत्। कारभ्वौ। कारभ्वः। दीर्घपाठे तु कार एव कारः। स्वार्थिकः प्रज्ञाद्यण्। कारभ्वौ। कारभ्वः। पुनर्भूर्यौगिकः पुंसि पुनर्भ्वौ इत्यादि। दृग्भूकाराभू
शब्दौ स्वयंभूवत्। इत्यूदन्ताः। धाता। हे धातः। धातारौ। धातारः। ऋवर्णान्नस्य णत्वं वाच्यं॥ धातॄणां। इत्यादि। एवं नप्त्रादयः। उद्गातारौ। पिता। व्युत्प
त्तिपक्षे पि नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः। पितरौ। पितरः। पितरम्। पितरौ। शेषं धातृवत्। एवं जामातृभ्रात्रादयः। ना। नरौ। नरः। हे नः॥

वर्तते। इवर्णवर्जं। ओरित्युकारस्य कार्यिणो निर्देशात्। अचि श्नुधात्विति सूत्रात् धातुः। एरनेकाच इत्यत्रैव संवध्यत इत्याशयेन व्याचष्टे। धात्ववयवसंयोगेत्यादि। वर्षा
भ्वौ वर्षाभ्व इति। अत्र इको यणचीति यणं बाधित्वा प्रथमयोरिति पूर्वसवर्णदीर्घः प्राप्तः तस्य दीर्घाज्जसि चेति निषेधे पुनरपि यणादेशप्रसक्तौ अचि श्नुधातुभ्रुवामि
त्युवङ्। तं च बाधित्वा ओः सुपीति यण्। तस्य न भूसुधियोरिति निषे
षे
धे पुनरुवङादेशस्य प्रसक्तौ वर्षाभ्वश्चेति यणिति बोध्यं। एवमन्यत्राप्युत्सर्गापवादवि ॥ ॥

उभयत्रापि निषेधेन भाव्यमिति॰ अत्र हरदत्तः ये त्वाहुः एवं किं युक्तमिति तेमन्यंते॰ अनुद्वयोः संशयविषयत्वं किंशब्देन युक्तक्रियाविषय एव प्रश्नो द्योत्यते॰ क्रियांतरविषय
स्तु प्रश्नः आहोस्विदित्यनेन क्रियाप्रश्न इति चोच्यते तस्मात्तस्यैव निघातप्रतिषेध इति॰ प्रश्ने किम्॰ किं देवदत्तः पठति॰ क्षेपे किंशब्दः कश्चित्पुस्तके किमधीयत इति प्रत्युदा
हरणं दृश्यते तन्नादर्त्तव्यं सोपसर्गत्वात्॥ ॥ लोपे॰ किं क्रियाप्रश्नेति॰ सूत्रमनुवर्त्तते॰ तथा चायमर्थः क्रियाप्रश्नेयः किंशब्दः तस्य लोपे तदर्थेन युक्तमनुपसर्गम
प्रतिषिद्धं च तिङ॰ तं वानुदात्तं स्यात्॰ सूत्रेण किमो लोपस्याविधानात् अर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो विवक्षितः दत्तः पचति॰ आहोस्वित्पठतीति॰
अत्र पक्षे निघातः पक्षे धातुस्वरेणाद्युदात्तता॰ किंशब्दाप्रयोगादप्राप्तविभाषेयम्॰ यद्वा तस्याप्रयोगेपि अर्थेन योगात्प्राप्तविभाषा॰ एवं सूत्रस्थानि प्रत्युदाहरणानि किं

लोपे विभाषा ८।१।४५ किमो प्रयोगे उक्तं वा देवदत्तः पचत्याहोस्वित्पठति एहि मन्ये प्रहासे लृट् ८।१।४६ एहि मन्ये इत्यनेन युक्तं लृडन्तं नानुदा
त्तं क्रीडायाम् एहि मन्ये भक्तं भोक्ष्यसे भुक्तं तत्त्वतिथिभिः प्रहासे किम् एहि मन्यसे ओदनं भोक्ष्यसे सुखं मन्यसे गत्यर्थलोटा लृडित्यनेनै
व सिद्धे नियमार्थोयमारम्भः एहि मन्ये युक्ते प्रहास एव नान्यत्र एहि मन्यसे ओदनं भोक्ष्ये जात्वपूर्वं ८।१।४७ अविद्यमानपूर्वं यज्जात्वतेन
युक्तं तिङन्तं नानुदात्तं जातु भोक्ष्यसे अपूर्वं किम् तदज्जातु करिष्यसि॥

॥ शब्दत्यक्तात्रयोजनीयानि॰ एहि॰ एहि मन्य इत्यनेन युक्तमिति समु
दायाभिप्रायमेकवचनं॰ अन्यथा आख्याते द्वे आङ् चापर इति बहुवचनप्रसंगः एहि मन्ये भक्तं भोक्ष्यस इति॰ मन्यसे भोक्ष्ये इत्यर्थे प्रहासे च मन्योपपदे इत्यादिनाम
न्ये भोक्ष्यस इति पुरुषव्यत्ययः इदं च वृत्तिकारमतरीत्या प्रत्युदाहरणं तन्मते उत्तमोपादानस्यातंत्रत्वात्॰ भाष्ये तु एहि मन्ये रथेन यास्यसीति प्रत्युदाहृतम्॰ तत्रायमर्थः
त्वं रथेन यास्यसीत्यहं मन्य एहीति॰ गत्यर्थलोडित्येव सिद्ध इति आङ् पूर्वादिणो लोड्सिपो हिः अत्र एहीत्यस्य गत्यर्थत्वात् गत्यर्थलोटेति सिद्धमित्यर्थः एहीत्यत्र आ
ङः परत्वादिहीत्यत्र निघातः मन्य इति मनतानेः अत्र राज्जेन श्यन्नन्तत्वादाद्युदात्तत्वम्॰ तास्यनुदात्तेदिति अदुपदेशात्परत्वादिड्नुदात्तः जातु॰ अपूर्वमित्येतज्जातुश
स्यैव विशेषणं न तिङन्तस्य॰ आहो उताहो इति सूत्रे अनंतरग्रहणाज्ज्ञापकात्॰ अन्यथा तत्राप्यपूर्वमित्यनुवृत्तेरेव केवलतिङ॰ तस्यानन्तर्यं लभ्यत इति किं तेन॰ ननु शे

शेषे पूर्वं पूजायामित्युक्तत्वात्ततोऽन्यः शेष इत्याहापूजायामिति अहो कटं करिष्यतीति पक्षे स प्रत्ययस्वरः अनाश्चर्यभूतमेव वस्तु असूयया आश्चर्यवत्प्रतिपाद्यते
न पूना शेषग्रहणं स्पष्टार्थं योगविभागसामर्थ्यादिति तत्र यावत्पुरेति भविष्यति लट् विद्योतनाद्यध्ययनं धर्मशास्त्रप्रतिषिद्धं अतस्तदुपन्यासेन त्वरित
मधीष्वेति गम्यते पक्षे द्योतत इति धातुस्वरेणाद्युदात्तं तासस्युदात्तेति लसार्वधातुकनिघातः नेतेन स्म पुराधीयत इति लट् स्मे इति भूते लट् अत्र भूतसाध्य
यनस्य चिरकालप्रवृत्तत्वं गम्यते नन्वरा नन्वि किंचित्कुर्वे स्वयमेवोद्यतस्य एवं क्रियतामित्यभ्युपगमोऽनुज्ञा तस्याः एषणा प्रार्थनाऽनुज्ञैषणाऽनुज्ञाप्रार्थ

शेषे विभाषा ८।१।४१ अहो इत्यनेन युक्तं तिङन्तं वाऽनुदात्तमपूजायाम् अहो कटं करिष्यति पुरा च परीप्सायाम् ८।१।४२ पुरेत्यनेन यु
क्तं वाऽनुदात्तं त्वरायाम् अधीष्व माणवक पुरा विद्योतते विद्युत् निकटागामिन्यत्र पुराशब्दः परीप्सायां किं नतेन स्म पुराधीयते विराती
ते त्र पुरा नन्वित्यनुज्ञैषणायाम् ८।१।४३ नन्वित्यनेन युक्तं तिङन्तं नानुदात्तमनुप्रार्थनायां ननु गच्छामि भोः अनुजानीहि मां ननु करोमि
त्यर्थः अन्विति किं अकार्षीः कटं त्वं ननु करोमि पृष्टप्रतिवचनमेतत् किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ८।१।४४ क्रियाप्रश्ने व
र्तमानेन किंशब्देन युक्तं तिङन्तं नानुदात्तम् किं द्विजः पचत्याहोस्विद्गच्छति क्रियेति किम् साधनप्रश्ने माभूत् किं भक्तं पचत्युपा
न्वा प्रश्ने किं किमधीते स्वपोयम् अनुपसर्गं किम् किं प्रपचति उत प्रकरोति अप्रतिषिद्धं किम् किं द्विजो न पचति ॥ ८ ॥

नेत्यर्थः तदाह अनुज्ञाप्रार्थनायामिति उदाहरणे वर्तमानसामीप्ये लट् प्रत्युदाहरणे ननौ पृष्टप्रतिवचने इति भूते लट् अन्विति किमिति अनुज्ञैषणायामि
ति किमित्यर्थः अगाप्रातिलोम्य इत्यादिवदिति करणं विनापि सिद्धे एकनिपातोऽयमिति प्रदर्शनार्थमिति शब्दः अन्यथा ह्ययोर्निपातयोर्ग्रहणं संभाव्येत किं
क्रिया अप्रतिषिद्धमिति अप्रतिषिद्धार्थमित्यर्थः किं द्विजः पचति आहोस्विद्गच्छतीति आहोस्विदेको निपात आद्युदात्तः अन्ये केचित् पूर्वं किं युक्तं तन्न
निहन्यते उत्तरं तु न किं युक्तमिति निहन्यत एवेति अन्ये तु पद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते तथापि सर्वस्य संशयविषयत्वात्तेन योग इति ९

शब्दोवर्त्ततेतत्सर्वंगृह्यतेतर्हि किमोयः किंतरामित्यादेरपिप्रसंगः स्यादितिमत्त्वापरिसंचष्टे॰ विभक्त्यन्तमित्यादिशेषेवि॰ अनंतरापेक्षंशेषत्वमित्याह॰ व्यवहितमितिप
चतीतिपक्षेधातुस्वरेणाद्युदात्तम्॰ गत्यर्थ॰ गतिरर्थोयेषामितिविग्रहः गत्यर्थलोटायुक्तमितियोगः पुनरर्थद्वारकोनिमित्तनिमित्ती भावः लोडंतवाच्यंहिनिमित्तंलृ
डंतवाच्यस्यनचेत्कारकंसर्वान्यदित्यस्यव्याख्यानमाह॰ यत्रैवकारकेलोडित्यादि॰ कर्त्तरिकर्मणिवा॰ आगच्छदेवदत्तग्रामंद्रक्ष्यस्येनमिति॰ आङुपसर्गः गच्छदेव
दत्तशब्दयोःपदात्परत्वान्निघातः ग्रामशब्दोग्रसेराचेतिमनंत आद्युदात्तः द्रक्ष्यसीति॰ प्रत्ययस्वरेणमध्योदात्तम्॰ उह्यन्तांदेवदत्तेनशालयोरामेणभोक्ष्यन्तइति॰
वहेःप्रापणार्थत्वेपिगतिर्गम्यतइतिगत्यर्थत्वम् उह्यंतामित्यत्र देवदत्तरामयोः कर्त्रोर्भेदेपिलकारवाच्यस्यशालेः कर्मणः अभेदात्॰ आगच्छेरिति॰ लिङयन
लोट्न्द्रक्ष्यसीतिवर्त्तमानसामीप्येलट्॰ आगच्छदेवग्राममपिन्नाते आरन्नभोक्ष्यतइति॰ कारकशब्दोनसत्त्वेकारकव्यक्तिरेवाश्रीयतेतेनकर्तृत्वाभेदेपिव्यक्तिभेदा

विभाषितंसोपसर्गमनुत्तमम् ८।१।५३ लोडन्तङ्गत्यर्थलोटायुक्तंतिङन्तंवानुदात्तं आगच्छदेवग्राममप्रविश सोपसर्गंकिम् आग
च्छदेवग्राममपश्य अनुत्तमंकिम् आगच्छानिदेवग्राममप्रशासानि॥:॥

त्कारकभेदः त्वंचाहंद्रस्यावएनमिति॰ अक्रियमाणेसर्वग्रहणेयत्र
वाच्यनभिद्यतेतत्रैवभवितव्यमिहचभिद्यतेवाच्यम्॰ एकत्रैकमन्यत्रद्वयमितिनिघातप्रतिषेधोनस्यात्॰ क्रियमाणेतुसर्वग्रहणेलोड्वाच्यकारकापेक्षयालृड्वा
च्यकारकाधिक्येपिनिघातः प्रतिषेधः सिद्धः लोड्लृड्ग्रहणंविहायगत्यर्थलोटेतिसंपूर्णसूत्रमनुवर्त्ततेतदाहगत्यर्थेत्यादि॰ आगच्छेतिगत्यर्थलोटायुक्तंपश्येतिन
निहितंगच्छेतितनिहतमेव॰ योगविभागउत्तरार्थइति॰ उत्तरोविकल्पोलोटएवयथास्यात्॰ लृटोमाभूत्इति॥ ॥विभाषितं॰ पूर्वसूत्रंसर्वमनुवर्त्ततेप्राप्तविभाषाचेयम्॰
गत्यर्थलोटायुक्तंलोडन्तंसोपसर्गमुत्तमभिन्नंविभाषानानुदात्तंस्यात्॰ नचेत्कारकंसर्वान्यत्॰ सोपसर्गमिति॰ उपसर्गेणसह॰ उपसर्गेविद्यमानइत्यर्थः सहशब्दोविद्य
मानार्थोनतुल्ययोगेनह्युपसर्गस्यनिघातप्रसंगोस्ति॰ आगच्छदेवग्रामंप्रविशेति॰ अत्रविशेति॰ पक्षेनिहतंपक्षेशप्रत्ययस्वरेणान्तोदात्तं॰ यद्यन्तोदात्तंतदातिङ्
चोदात्तवतीतिगतेर्निघातः पश्यप्रशासानीति॰ उभयत्रापिपूर्वेणनित्यमेवनिघातः प्रत्युदाहरणानिपूर्वसूत्रोक्तान्येवप्रशब्दपूर्वाणियोज्यानि॰ ॥ ॥

षे विभाषां वक्ष्यति तत्र शेषग्रहणं प्रकृत्यर्थं तस्मात् शेषे विभाषा कश्च शेषः सान्तरः शेष इति अनन्तरेणाप्यनन्तरग्रहणं प्रकृतम् शेषः कथम् अपूर्वमिति प्रकृतं सपूर्वः शे
ष इति तदेतत्सकलमभिप्रेत्याह अविद्यमानपूर्वं यज्जात्विति जातु भोक्ष्यस इति अनुपदेशात्परत्वात्सेरत्यस्य निघातः मध्योदात्तं पदं जातु शब्दो निपातत्वादाद्यु

किंवृत्तं च चिदुत्तरम् ८।१।४८ अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तं नानुदात्तम् विभक्त्यन्तो डतरडतमान्तश्च किंरूपं किं
वृत्तम् कश्चिद्भुङ्क्ते कतरश्चित् कतमश्चिद्वा चिदुत्तरमिति किम् को भुङ्क्ते अपूर्वमित्येव रामः किञ्चित्पठति आहो उताहो चाऽनन्तरम् ८।१।४९
आहो उताहो इत्याभ्यामपूर्वाभ्यां युक्तं तिङन्तं नानुदात्तम् आहो उताहो वा भुङ्क्ते अनन्तरमित्येव शेषे विभाषां वक्ष्यति अपूर्वमिति किम् दे
व आहो भुङ्क्ते शेषे विभाषा ८।१।५० आभ्यां युक्तं व्यवहितं तिङन्तं नो वानुदात्तं आहो देवः पचति गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्य
त् ८।१।५१ गत्यर्थानां लोटा युक्तं तिङन्तं नानुदात्तं यत्रैव कारकं लोटस्तत्रैव लृडपि चेत् आगच्छ देव ग्रामं द्रक्ष्यसि उह्यन्तां देवदत्तो
नशालयो रामेण भोक्ष्यन्ते गत्यर्थेति किम् पच देव ओदनं भोक्ष्यसेऽन्नं लोटेति किम् आगच्छेर्देव ग्रामं द्रक्ष्यस्येनम् लृडिति किम् आगच्छ दे
व ग्राममपश्यस्येनं न चेदिति किम् आगच्छ देव ग्रामं पिता ते ओदनं भोक्ष्यते सर्वेति किम् आगच्छ देव ग्रामं त्वं चाहं च द्रक्ष्याव एनं
मित्यत्रापि निघातनिषेधो यथा स्यात् यत्र लोडन्तस्य कारकं तत्रान्यत्र च लृडन्तेनोच्यते लोट् च ८।१।५२ लोडन्तं गत्यर्थलोटा युक्तं नानुदा
त्तम् आगच्छ देव ग्राममपश्य गत्यर्थेति किम् पच देवौदनं भुङ्क्ष्वैनम् लोडिति किम् आगच्छ देव ग्राममपश्यसि न चेत्कारकं सर्वान्यदि
त्येव आगच्छ देव ग्राममपश्यत्वेनं रामः सर्वग्रहणात्त्विह स्यादेव आगच्छ देव ग्रामं त्वं चाहं च पश्याव योगविभाग उत्तरार्थः ॥

दात्तः कटं जातु करिष्यसीति कटशब्दः फिट्स्वात्वादन्तोदात्तः ॥ ॐ ॥ किंवृत्तं वृत्तमित्यधिकरणे क्तः किमो वृत्तं किंवृत्तं अधिकरणवाचिनश्चेति कर्तरि षष्ठी अ
धिकरणवाचिना चेति समासनिषेधे प्राप्तेऽस्मादेव निपातनात्समासः इह जात्वपूर्वमित्यतोऽपूर्वमिति वर्तते तदाचष्टे अविद्यमानपूर्वमिति यदि यत्र किं

रहापि॰ गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्त इतितिङो गोत्रादीत्यत्रैवोक्तम्॰ पचति कल्पमिति॰ अनुदात्त एवतद्धितोग्राह्यः अन्यन्त तद्धितस्वरेणातिङन्तस्वरो बा
ध्यते॰ अयंपचति देश्यः॥ ॥ चादिषुच॰ नचवाहाहैवयुक्ते इति सूत्रे निर्दिष्टाश्चादयोत्र गृह्यन्ते संनिकृष्टत्वात्॰ नतुचादयोसत्त्व इतिसूत्रनिर्दिष्टा विप्रकृष्टत्वात्त
देतदाह चवाहाहैवेषु परेष्विति॰ पचतिचखादतिचेति॰ उभयत्रखादतीत्यस्यनिघातप्रसंग एवनास्ति नानावाक्यत्वात्ः चवायोगो हि समुच्चये विकल्पेवा सतिभ
वति॰ सचानेकस्यधर्म इतिकृत्वोदाहृतम्॰ चवा॰ प्रथमेतिस्त्रीलिंगस्यनिर्वाहमाह॰ प्रथमातिङ्विभक्तिरिति॰ प्रथममुच्चारितातिङ्विभक्तिरित्यर्थः अगतेरिति

चादिषुच ८।१।५८ चवाहाहैवेषु परेषु तिङन्तानुदात्तं देवःपचतिचखादतिच अगतेरित्येव देवःप्रपचतिच प्रखादतिच प्रथमस्यच
वायोग इतिनिघातः प्रतिषिध्यते द्वितीयन्तु निहन्यत एव चवायोगे प्रथमा ८।१।५९ चवेत्याभ्यांयोगे प्रथमातिङ्विभक्तिर्नानुदात्ता गा
श्चचारयति वीणांच वादयति इतोवसतिमीमहे उत्तरवाक्ययोरनुषज्जनीयनिङन्तापेक्षयेयं प्राथमिकी योगे किं एवंभूतयोरपियो
गेनिघातार्थम्प्रथमाग्रहणं द्वितीयादिस्तिङन्तस्यमाभूत् हतिक्षियायाम् ८।१।६० हयुक्ताप्रथमातिङ्विभक्तिर्नानुदात्ता धर्मव्यति
क्रमे स्वयं हरथेनयाति ३ उपाध्यायम्पदातिङ्गमयति क्षियाशीरितिप्लुतः अहेतिविनियोगेच ८।१।६१ अहयुक्ताप्रथमातिङ्विभक्ति
र्नानुदात्तानानाप्रयोजने नियोगे क्षियायाञ्चत्वमहग्रामङ्गच्छ त्वमहरथेनारण्यं गच्छ क्षियायांस्वयमहरथेनयाति ३ उपाध्याय
म्पदातिन्नयति॰

प्रथमसूत्रे चानुकृष्टत्वादिह नानुवर्तते उत्तरवाक्ययोरिति॰ देवोवापार्थिवादधि इंद्रंमहोवारसाज इत्येतयोरित्यर्थः ननुश्रुत
स्यैवतिङः तस्योत्तरत्रानुषङ्गः तत्कथंप्राथम्यमितिचेत्॰ अनुषक्तस्याप्योपाधिकंभेदंपुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्यच्छंदसिवहुशोदृष्टत्वात्॰ एतच्चेहे
वमंत्रे नियमेनसुष्ठिहत्ययेतिचमंत्रे वेदभाष्येस्पष्टम्॰ हेति॰ स्वयंहरथेनयातीति॰ उपाध्यायेपदातौगच्छति सति शिष्यस्यरथेनगमनं प्रतिषिद्धमित्याचारभेदः
अहेति॰ अनेकस्मिन्प्रयोजने प्रेषणं विनियोगस्तदाह नानाप्रयोजने नियोग इति॰ अनेकप्रयोजनो नियोगः प्रेषणमुदाहरणे एवंच प्रेषप्लुत उत्तरत्र क्षियायाम्॥

हेतच·पूर्वसूत्रमनुवर्त्ततेलोड्‌ हणांचतदाह हन्तेत्यनेनेत्यादि·प्राप्तविभाषेयं·निपातैर्यद्यदीतिनिघातनिषेधस्य सिद्धत्वात्·प्रभुञ्ज्यावहाइति·भुंजेर्लोट्·भुजोनवने
इत्यात्मनेपदंवहि·टेरेत्वंश्रम·श्राडुत्तमस्यपिच्च·एतयोः श्रनुदात्तेत्वात्सार्वधातुकानुदात्तत्वं·विकरणस्वरःश्राम·श्रंतरयतीत्यन्तरंव्यवधायकं·एकमन्तरंयस्यतदेका
न्तरम् उदाहरणेनिघातप्रतिषिद्धेषाष्ठमाद्युदात्तत्वम्·श्रनन्तिकइतिकिमिति·श्रत्रकेचिदन्तिकंदूरंतस्येवसामर्थ्यादेकश्रुतेर्निघातस्यचप्रतिषेधः·यदिनिघातमात्रनि
षेधोयंतदानिघातस्यैकश्रुत्यावाधितत्वादिदंसूत्रंव्यर्थंस्यादितिसामर्थ्यादेवचैतन्निषेधंप्रतिएकश्रुतेरसिद्धत्वाभावःप्लुतोदात्तस्तुनप्रतिषिध्यतइत्याहुःश्रपरेतुश्रन

हन्तच· ८।१।५४ हन्तेत्यनेनयुक्तमनुत्तमंलोडन्तंवानुदात्तम् हन्तप्रविश २ सोपसर्गमित्त्येव हन्तकुरु निपातैर्यद्यदितिनिघातप्रतिषेधः। श्रा
मएकान्तरमामन्त्रितमऽनन्तिके ८।१।५५ श्रामःपरमेकपदान्तरितमामन्त्रितन्नानुदात्तं श्रामपचसिदत्ता
नुत्तमङ्किम् हन्तप्रभुञ्जावहै श्रामएकान्तरमामन्त्रितमऽनन्तिके ८।१।५५ श्रामःपरमेकपदान्तरितमामन्त्रितन्नानुदात्तं श्रामपचसिदत्ता
३ एकान्तरङ्किम् श्रामप्रपचसिदत्ता ३ श्रामन्त्रितङ्किम् श्रामपचतिदत्तः श्रनन्तिकेकिम् श्रामपचसिदत्तः यद्धितुपरञ्छन्दसि ८।१
।५६ तिङन्तन्नानुदात्तंउदसृजोयदङ्गिरः उशन्निहि श्रास्यासामितुत्ते निपातैर्यद्यदितिहिचेतितुपश्यतेतिचसिद्धेनियमार्थमिदं एतैरेव
परभूतैर्योगेनान्यैरिति जायस्वारोहावेहि एहीतिगत्यर्थलोटायुक्तस्यलोडन्तस्यनिघातोभवति चनचिदिवगोत्रादितद्धिताऽऽम्रेडिते
ष्वगतेः ८।१।५७ एषुषट्सुपरतस्तिङन्तन्नानुदात्तं।देवःपचतिचन देवःपचतिचित् देवःपचतीवदेवः पचतिगोत्रम् देवःपचतिकल्प
म् देवःपचतिपचति श्रगतेः किं देवःप्रपचतिचन॥ ९ न्तिकइत्यनेनयन्नदूरंनचसंनिकृष्टंतदुच्यतेनदूरस्येव·श्रन्यथाहूरमित्येववदेत्तेनासन्ने

कश्रुतेःप्राप्तिरेवनास्ति·श्रदूरत्वात्प्लुतोदात्तोपिनोदाहर्त्तव्यइति·यद्धितु·उदसृजइति·सृजादेःसृजेर्लङि·सिप्यट् उशन्निहीति वशकान्तौ श्रदादिःलटि श्रानःगृह्या
दित्त्वात्संप्रसारणम्·नान्यैरितिन्यदिहन्तेत्यादिभिरित्त्यर्थः·जायेस्वारोहावेहीति·रुहेर्लोट्वसशप्·श्राडुत्तमस्यपिच्च·लोटोलङ्वदितिलङ्·वङ्‌वावान्नित्यंडि·तइ
तिसलोपःश्राड्·वृद्धिरेचि·लोटसिपोहि·एहि·तेनपरभूतेनयुक्तस्यरोहावेत्यस्यलोडन्तस्यप्राप्तोनिघातप्रतिषेधोनियमान्निवर्त्यते·तेनस्वशब्दाश्रयोनिघातो
भवति·स्वाशब्देरोरीतिलोपः ढ्रलोपइतिदीर्घः स्वारोहावेतिपाठेतुछांदसत्वादत्त्वम्·॥ चनचि·एष्विति· चनचिदिवगोत्रादितद्धित श्राम्रेडितएष्वित्यर्थः।

साधारणेसमानेऽन्त्येसंख्यायाँचप्रयुज्यतेइति· ननुसाहचर्यादन्यार्थकएवेकशब्दोग्रहीष्यतइतिचेत्सत्यम्·नसाहचर्यमत्रप्रकरणेव्यवस्थापकमिति·निपातेर्यद्यदि
हन्तेत्यत्रैवावोचाम·यद्ध·पदमत्रड्किति·यद्भवतीतिकिन्त्विष्यस्त्वेवयोश्चेतिटेरन्यादेशः कथंपुनःपंचमीनिर्देशसतिपदग्रहः·वाप्नोतीत्यादौव्यवधानेभवत्यत
श्राहअत्रव्यवहितेकार्यमिष्यतइति·अत्रचज्ञापकमुत्तरसूत्रेमूलएवस्फुटीभविष्यति·॥ः॥ ॥प्रजनात्·काष्ठादिभ्यइतिवार्त्तिकेदृष्टत्वदनुरोधेनप्रजनादितिबहुव
चनस्यानएकवचनमितिव्याचष्टे·प्रजनेभ्यःकाष्ठादिभ्यइति उत्तरसूत्रेतिङ्·ग्रहणादिदंसुबन्तविषयकम्·काष्ठाध्यापकइति·काष्ठाद्योऽद्भुतपर्यायाःसंतःप्र
जनवचनाभवंति·समासविषयकंसूत्रमिदं उदाहरणेमयूरव्यंसकादित्वात्समासः·मलोपश्चवक्तव्यइति·दारुणमध्यापकइतिसमासेकृतेविभक्तेर्लुकिस्वाभ्

प्रजनात्प्रजितमनुदात्तंकाष्ठादिभ्यः ८।१।६७ प्रजनेभ्यःकाष्ठादिभ्यःप्रजितवचनमनुदात्तम्·काष्ठाध्यापकः·मलोपश्चवक्तव्यः·दारुणाध्या
पकः·अज्ञाताध्यापकः समासान्तोदात्तत्वापवादएतत्समासेइष्यतेनेह दारुणमध्यापकइतिवृत्तिमतम् प्रजनादित्येवप्रजितग्रहणेसिद्धेप्र
जितग्रहणमनन्तरप्रजितलाभार्थं एतदेवज्ञापकमत्रप्रकरणेपञ्चमीनिर्देशेपिनानन्तर्यमाश्रीयतइति समतिरपिति ८·१·२६८ प्र
जनेभ्यःकाष्ठादिभ्यस्तिङन्तम्प्रजितमनुदात्तं यत्काष्ठम्प्रपचति तिङ्ङतिङइतिनिपातस्यनिपातैर्यद्यदितिनिषेधेप्राप्तेविधिरयम् स
गतिग्रहणाच्चगतिरपिनिहन्यते गतिग्रहणेउपसर्गग्रहणमिष्यते ॥ ० ॥ नेह यत्काष्ठाः शुक्लीकरोति ॥ ११ द्विकीमकारनिवृत्तिरित्यने।

वचनेनान्वाख्यायतेइतिवृत्तिन्यासकारयोर्मतंतदेतदाह·इतिवृत्तिमतमिति·भाष्यवार्तिकेकेयटास्तु·असमासएवक्रियाविशेषणीभूतानांदारुणमित्यादीना
मसमासएवास्यसूत्रस्यप्रवृत्तिमिच्छंतिमयूरव्यंसकादित्वेनास्तिप्रमाणं·हरदत्तोप्याह·यदिसमासेएवेदमभिमतमभविष्यत्तदासमासइत्येवावक्ष्यत्·युक्तंचैतत्·न
ह्यत्रसमासाधिकारोस्तियेनसमासःस्यात्·अस्मिन्पक्षेमलोपवचनंचसार्थकं·प्रजनादित्येवप्रजितपरिग्रहेसिद्धइति·प्रजनस्यप्रजितापेक्षत्वादितिभावः·अनंतर
प्रजितलाभार्थमिति·प्रजनात्प्रजितमितिसूत्रेसामान्यगतमानंतर्यविशेषणंविज्ञायतइतिभावः·कथंपुनःपंचमीनिर्देशेव्यवहितस्यप्रसंगइत्याह· एतदेवेति· ज्ञापकफलंतुप

चाहलोप· अवधारणार्थएवशब्दप्रयोगेसतिप्रथमंतिङन्तंनानुदात्तम्· सूत्रेणचाहलोपस्याविधानात्· अर्थप्रकरणादिनागम्यमानार्थत्वादप्रयोगएवलोपो
विवक्षितः चशब्दः समुच्चयार्थः हशब्दः केवलार्थः समानकर्तृकेचलोपः नानाकर्तृकेऽहलोपः उदाहरणेचलोपंदर्शयति· ग्राममरण्यंचेति· केवभोक्ष्यतइति· अनवक्लृ
प्तावयमेवशब्दः एवेचानियोगइतिपररूपम्· चादिवाजेष्विति· अवेतितिङन्तस्येहनिघातः निघाताभावस्तूदाहरणान्तरमन्वेष्यम्· ननुपूर्वसूत्रेसमानकर्तृकेचलोप
इत्युक्तम् इहतुकर्तृभेदात्· कथंचलोपइतिचेत्· अवधारणार्थएवशब्दप्रयोगेसमानकर्तृकेचलोपइतिनियमोनतुसर्वत्रेत्यस्त्यत्रचलोपः व्रीहिभिर्यजेतेतिः पक्षे

चाहलोपएवेत्यवधारणम् ८।१।६२। चआहएतयोर्लोपेप्रथमातिङ्विभक्तिर्नानुदात्ता देवएवग्रामङ्गच्छतु देवएवारण्यङ्गच्छतु ग्राम
मरण्यञ्चगच्छत्वित्यर्थः देवएवग्रामङ्गच्छतु रामएवारण्यङ्गच्छतु ग्रामङ्केवलमरण्यङ्केवलङ्गच्छत्वित्यर्थः इहाहलोपः सचकेव
लार्थः अवधारणङ्किम् देवक्केवभोक्ष्यसे नक्वचिदित्यर्थः अनवक्लृप्तावेव चादिलोपेविभाषा ८।१।६३। चवाहाहेवानांलोपेप्रथमा
तिङ्विभक्तिर्नानुदात्ता चलोपे शुक्लाव्रीहयोभवन्ति श्वेतागाआज्यायदुहन्ति वालोपे व्रीहिभिर्यजेत यवैर्यजेत वैवावेतिचछन्दसि
८।१।६४ अहर्वैदेवानामासीत् अयंवावहस्तआसीत् एकान्याभ्यांसमर्थाभ्याम् ८।१।६५ आभ्यांयुक्तंप्रथमातिङ्विभक्तिर्वानुदात्ता
छन्दसि अजामेकाजिन्वति अजामेकारक्षति तयोरन्यः पिप्पलंस्वाद्वत्ति समर्थाभ्यांकिं एकोदेवानुपातिष्ठत् एकइतिसंख्यापर
न्नान्यार्थं यद्वृत्तान्नित्यम् ८।१।६६ यत्रपदेयच्छब्दस्ततः परंतिङन्तन्नानुदात्तं योभुङ्क्ते परत्र्युड्वायुर्वीति अनव्यवहितकार्यमिष्यते॥

निहतं· पक्षेआद्युदात्तं· द्वितीयंतुनिहतमेव· एवंशेषेष्वपियथादर्शनमुदाहरणम्· वैवाव· आभ्यांयुक्तंप्रथमंतिङन्तमनुदात्तंवास्यात् छन्दसि· वैस्फुटार्थेसमा
र्थंचवावप्रसिद्धोस्फुटार्थेच· एकान्या· समौतुल्यावर्थौययोस्तौसमर्थौशकन्ध्वादित्वात्पररूपम्· जिन्वतीति· जिविःप्रीणनार्थः इदित्वान्नुमलट् तिप् शप् अ
जामेकारक्षतीति· अन्याप्रीणयति· अन्यारक्षतीत्यर्थः एकइतिसंख्यापरमिति: एकशब्दस्यानेकार्थत्वात्· तथाचोक्तम्· एकोन्यार्थेप्रधानेचप्रथमेकेवलेतथा·

इतिवचनात्स्वसंबन्धिनमाक्षिपतीतिक्रियावाचिन्येवोदात्तवतिभविष्यति॰ नचकृदन्तेगतिप्रसंगः तत्रकृत्स्वरथाथादिस्वरगतिस्वरेषुकृते कृशेषनिघातेनगतिर्नि
हन्यतएवतस्मान्नार्थः तिङ्ग्रहणेनेत्याशंक्याह॰ तिङ्ग्रहणमिति॰ परिमाणमिमत्ता॰ परिमाणार्थत्वमेवस्पष्टयति॰ अन्यथाहीति॰ अनियमार्थेतिङ्॰ग्रहणेधातुरेवक्रि
यावाचित्वाद्गतिसंज्ञानिमित्तमिति॰ तत्रैवोदात्तवतिनिघातः स्यात्नप्रत्यये तिङ्ग्रहणेकृतेतुयंधातुंप्रतिगतित्वंतद्दृष्ट्वैतिङन्तेउदात्तवतिपरेइत्यर्थोज्ञायते ।
तेनयत्प्रकरोतीत्यादेधातोः शेषनिघातेनानुदात्तत्वेपितिङन्तस्यप्रत्ययस्वरेणमध्योदात्तत्वाद्गतेर्निघातःसिद्धइत्याहुः प्रपचतीति॰ तिङ्ङिःतिङ इतिनिघातः
॥ॐ॥ इतिश्रीमन्मौनिकुलतिलकायमानश्रीगोवर्द्धनभट्टात्मजरघुनाथात्मजेनजयकृष्णेनकृतायांसिद्धांतकौमुदीव्याख्यायांतिङन्तस्वरप्रकरणंसमाप्तम् ॥

अथवैदिकवाक्येषुस्वरसञ्चारप्रकारःकथ्यते अग्निमीळइतिप्रथमाऋक् तत्राग्निशब्दोऽव्युत्पत्तिपक्षेफिषइत्यन्तोदात्तइतिमाधवः वस्तुतस्तुघृतादि
त्वादन्तोदात्तः व्युत्पत्तौतुनिप्रत्ययस्वरेण अमसुप्त्वादनुदात्तः अमिपूर्वइत्येकादेशउदात्तेनेत्युदात्तः ईळेतिङ्ङतिङ इतिनिघातः संहितायांतूदात्तादनु
दात्तस्येतीकारःस्वरितःस्वरितात्संहितायामितिळेइत्यस्यप्रचयापरपर्यायाएकश्रुतिः पुरःशब्दोन्तोदात्तः पूर्वाधरावराणामित्यसिप्रत्ययस्वरात्
हितशब्दोपिधाञोनिष्ठायान्दधातेर्हिरितित्यादेशप्रत्ययस्वरेणान्तोदात्तः पुरोव्ययमितिगतिसंज्ञायांकुगतीतिसमासेसमासान्तोदात्तेतत्पुरुषे
त्यार्थेत्यव्ययपूर्वपदप्रकृतिस्वरेगतिकारकोपपदात्कृदितिकृदुत्तरपदप्रकृतिस्वरेथाथादिस्वरेचपूर्वपूर्वोपमर्देनप्राप्तेगतिरनन्तर
पूर्वपदप्रकृतिस्वरः पुरःशब्दोकारस्यसंहितायामप्रचयेप्राप्तेउदात्तस्वरितपरस्यसन्नतरइत्यनुदात्ततरः यज्ञस्यनङः प्रत्ययस्वरः
विभक्तेःसुप्त्वादनुदात्तत्वेस्वरितत्वं देवंपचाद्यच्फिट्स्वरेणप्रत्ययस्वरेणचित्स्वरेणवान्तोदात्तः ऋत्विजं ऋत्व्क् कृदुत्तरपदप्रकृति
स्वरेणान्तोदात्तः होतृशब्दस्तृन्प्रत्ययान्तोनित्स्वरेणाद्युदात्तः रत्नशब्दोनविषयस्येत्याद्युदात्तः रत्नानिदधातीतिरत्नधाः समासस्वरे

हत्तान्नित्यमित्युक्तम् · सगति · यत्काष्ठं पचतीति · येमलोपश्चेत्यनेन वाक्येन मलोपमाहुस्तेपि तिङन्ते परतो नैव लोपमिच्छन्ति · सगतिग्रहणाद्गतिरपि निहन्यत इति
त्ययोगे अत्र सहशब्दः यत्र तुल्ययोगे सहशब्दस्तत्र द्वयोरपि कार्ययोगो भवति · तद्यथा सपुत्रो भोज्यतामित्युक्ते पुत्रोपि भोज्यते अपिग्रहणं यत्र गतिर्न प्रयुज्यते तत्र
केवलस्यापि तिङन्तस्य यथा स्यात् · गतिप्रयोगे तु द्वयोः सहैव भवतीति तिङ्ग्रहणं पूर्वयोगस्य तिङ्विषयत्वज्ञापनार्थम् ॥ ॥ कुत्सने · पदादिति निवृत्तम् · पचति
क्लिश्नातीति · कथमत्र समानवाक्यत्वस्य सामर्थ्यस्य वाभावादेवाप्राप्तेः सुपीति स्पष्टार्थम् · कर्तुः कुत्सने माभूत् · पचति पूतिर्देवदत्त इति · कर्तृत्वमात्रं कुत्स्यते · अस्येदम्
युक्तमिति · क्रियानुशोभनैव · पूतिश्चानुबंध इति · चकारानुबंध इत्यर्थः · तिवन्तः पूतिशब्द आद्युदात्तः वशेस्तिविति तिप् · बाहुलकात्सूनोऽपि भवति तस्मादेव गुणाभावः

कुत्सने च सुप्यगोत्रादौ ८।१।६९। कुत्सने च सुबन्ते परे सगतिर गतिरपि तिङनुदात्तः पचति पूति प्रपचति पूति पचति मिथ्या कुत्सने कि
म् प्रपचति शोभनं सुपि किम् पचति क्लिश्नाति अगोत्रादौ किम् पचति गोत्रम् क्रियाकुत्सन इति वाच्यम् · कर्तुः कुत्सने माभूत् पचति पू
तिर्देवदत्तः पूतिश्चानुबन्ध इति वाच्यम् तेनायं चकारानुबन्धत्वादन्तोदात्तः बावहूर्थमनुदात्तमिति वाच्यम् पचन्ति पूति गतिर्गा
तौ ८।१।७० अनुदात्तः अभ्युद्धरति गतिः किम् दत्तः पचति गतौ किम् आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः तिङि चोदात्तवति ८।
१।७१ गतिरनुदात्तः यत्प्रपचति तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् अन्यथा हि यं प्रति गतिस्तत्र धातावेवोदात्तवति स्यात् प्रत्यये
नस्यात् उदात्तवति किं प्रपचति ॥८॥ इति तिङन्तस्वराः ॥

तस्य निघातनिमित्तस्यान्तोदात्तत्वं यथा स्यादिति चित्त्वमुपसंख्यायते · बावहूर्थमिति · ब
हुवचनांतं तिङन्तं वानुदात्तं स्यात् · यदा तिङन्तस्य निघातस्तदा पूतिरन्तोदात्तः अन्यदा त्वाद्युदात्तः आमन्द्रैरिति · अत्र याहीत्येतत्प्रति क्रियायोगादाङः तेनैव गति · ति
ङि उदात्तवति · तिङन्ते परे गतिर्निहन्यते · निपाता आद्युदात्ता इत्यस्यापवादः यत्प्रपचतीति · निपातैर्यद्यदीति निघातप्रतिषेधात्तिङन्तमुदात्तवत् · ननु तिङ्ग्रहणं व्यर्थ
म् · न च तिङन्ते यथा स्यात् · मंद्रशब्दे माभूत् · आमन्द्रैरिन्द्र हरिभिर्याहीति मंद्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्त इति वाच्यम् यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा

रेफद्वययुक्तस्य लकारद्वययुक्तस्य चैव तस्य स्पष्टप्रयत्नत्वात्प्रयत्नभेदेन ऋॢवर्णाभ्यां सावर्ण्याभावेनाच्त्वाभावादूकालोऽजित्यादिना दीर्घसंज्ञा नास्तीति कथमत्र लकारद्व
यगर्भेण भवितव्यं। ऋति ऋ वा ऌति ऌ वेति वार्त्तिकप्रत्याख्यानं वा कथं संगच्छतां। अकः सवर्णे इत्यनेन इष्टरूपाणां असिद्धेः। अत्राहुः। उभयोरप्यच्त्वसिद्धये वर्णस
माम्नाये ऋॡक् सूत्रे ऌवर्णपाठः कर्तव्यस्तेन सर्वेष्टसिद्धिः। न च दीर्घत्वसिद्धावपि विवृतप्रयत्नसाम्यात् होतॄकार इत्यत्र ऋकारो दीर्घ एव स्यात् न तु रेफद्वययुक्तो दीर्घ
इति शंक्यं। ऋकारद्वयस्थाने रेफद्वयवतः साम्येन कदाचित्तस्यापि प्रवृत्तेः। होतॢकार इत्यत्र ऌकारेणांतर्यात्कदाचिल्लकारद्वययुक्तः कदाचिदृकारेणांतर्यादृ
कारश्च भवति परं तु वार्त्तिकमते होतॄकार इत्यत्र रेफद्वयगर्भो न भवति प्रत्याख्यानपक्षे तु कदाचिद्भवतीति वैषम्यमस्तीति नैषापत्तिर्वा प्रत्याख्यानस्य प्रौढिवाद
ता अभ्युपगंतव्येति॥ ॥अत्रेदं बोध्यं। अकः सवर्णे इति सूत्रस्य भाष्ये ऋति ऋ वा ऌति ऌ वेत्येतन्न प्रत्याख्यातं तुल्यास्यमिति सूत्रस्थभाष्ये तु तत्प्रत्याख्याने पि फलभेदे तद
योगात्स्वीकृते तु तस्मिन्न कोकीत्येव सुवचमिति यथोऽनुपपन्नस्वाय दितृ ऋति ऋ वेति वार्तिके उर्ऋति ॠ वेति पठ्यते तदा वार्तिकयोः सवर्णे इति पदानुवृत्त्यनपेक्षणात्तु वचमे
वाऽको की ति प्रकृतमनुसरामः। ङेनुऋतो ङीति गुणो लपरः। गमलि गम्लॄ। गम्लृ। एवं शक्लृ शब्देऽप्यूह्यं। इति त्वरंता। सेरिति। अस्यापत्यमिञ्। कामः। अस्य स्त्री ई
लक्ष्मीस्तेन सह वर्त्तत इति विग्रहे तेन सहेति तुल्ययोग इति बहुव्रीहौ वोपसर्जनस्येति सहस्य सभावे आद्गुणः। सय इति। नतु से इत्येकारस्यांतवद्भावेन पदांत
त्वादयादेशं बाधित्वा जसि परतः एङः पदांतादिति पूर्वरूपमकादेशः स्यात्। तथा च सेरित्येव रूपं स्यान्न तु सय इति चेत्। अत्र केचित्। एवं तर्हि थासः से ईशः से इति
विहितादेशस्यानुकरणशब्दोऽयमस्तु तत्र हि जसि परतोऽयादेशस्य निर्बाधत्वादिति। स्मृतेरिति इः कामः। स्मृतो येन सः ई लक्ष्मीः स्मृता येनेति वा विग्रहः। निष्ठांतस्य
तशब्दस्य पूर्वनिपातः। स्मृतय इति। नन्वत्र पूर्वोक्तरीत्या एङः पदांतादतीति पूर्वरूपेणाभाव्यं न त्वयादेशेन न च त्वयानुकरणशब्दत्वकल्पनमौचितीं लभते इति चेत्। अत्र नव्याः
। उत्तरपदत्वे चापदादिविधौ प्रतिषेध इति प्रत्ययलक्षणप्रतिषेधादेङः पदांतादतीत्यस्याप्रवृत्तिः। शिं चास्यादिष्वसर्वनामस्थाने यचि भमित्यत्र भाष्यकृता स्वादिष्वपूर्वं पदसं
ज्ञं भवतीति व्याख्यापततो सर्वनामस्थाने यचीति छित्वा नञ्चक्रियया संबध्य पजादौ सर्वनामस्थाने परतः पूर्वं पदसंज्ञं न भवतीति व्याख्यातं तत श्वानेन सुपि ङंतमिति श्वा
दिषिति च द्विविधापि पदसंज्ञा निषिध्यत इति पूर्वांतत्वप्रयुक्तापदांतता ते हुद्दुर्लभेति स्मृतय इति रूपं निर्बाधं भवतु तथा सपरत्वनरत्वा सेहत्यादिव्युत्पत्तिपक्षेपि नानुपपत्तिः। न चैकी

णाक्तुत्तरपदप्रकृतिस्वरेणवान्तोदात्तः तमपः पित्वादनुदात्तत्वे स्वरितप्रचयावित्यादि यथाशास्त्रमुन्नेयम् इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शि
तम् तदस्तु प्रीतये श्रीमद्भवानीविश्वनाथयोः ॥१॥ ॐ ॥ इति सिद्धान्तकौमुद्यां श्रीभट्टोजिदीक्षितविरचितायां वैदिकप्रक्रिया शुभमस्तु ॥ ॐ ॥

श्रीगणेशाय नमः ॥ लिङ्गम् ॥ ॐ ॥ स्त्री ॥ ॐ ॥ अधिकारसूत्रे एते ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः स्व
स्रादिकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीप इकारान्तत्वात् तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योः स्त्रीचतुरोर्ऋदन्तत्वाभावात् अन्यूप्र
त्ययान्तो धातुः ॐ अनिप्रत्ययान्त ऊत्ययान्तश्च धातुः स्त्रियां स्यात् अवनिः चमूः प्रत्ययग्रहणं किम् देवयतेः क्विप् द्यूः विशेष्यलिङ्गः अशनिभर
णिपरणयः पुंसि च इयमयं वा अशनिः मिन्यन्तः मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् भूमिः ग्लानिः वह्निवृष्ण्यग्नयः पुंसि पूर्वस्यापवादः श्रोणियोन्यूर्मयः पु
सि च इयमयं वा श्रोणिः क्तिन्नन्तः स्पष्टम् कृतिरित्यादि ईकारान्तश्च ईप्रत्ययान्तः स्त्री स्यात् लक्ष्मीः ईकारश्च ॐ ईवन्तं च प्रातिपदिकं स्त्री स्यात् देवी कुरुचरीत्यादि ऊङ
न्तश्च कुरूः विद्या व्यन्तमेकाक्षरम् श्रीः भूः एकाक्षरं किम् पृथुश्रीः विंशत्यादिरानवतेः इयं विंशतिः त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टिः
सप्ततिः अशीतिः नवतिः दुन्दुभिरक्षेषु इयं दुन्दुभिः अक्षेषु किम् अयं दुन्दुभिर्वाद्यविशेषोऽसुरो वेत्यर्थः नाभिरक्षत्रिये इयं नाभिः उभावप्य
न्यत्र पुंसि दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः नाभिः क्षत्रियः कथं तर्हि समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिरिति
भारविः उच्यते दृढाभक्तिरित्यादाविव कोमलैरिति सामान्येन पुंस्कं बोध्यम् वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात् त्व
त्वमपीह साधु अत एव नाभिर्मुख्ये नृपे चक्रमध्ये क्षत्रिययोः पुमान् द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे इति मेदिनिः रभसोऽप्याह
मुख्यराट् क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः चक्रमध्यप्रधाने च स्त्रियां कस्तूरिकामदे इति एवमन्यविधेऽन्यत्रापि बोध्यं तलन्तः अयं स्त्रियां

स्यात् शुक्लस्य भावः शुक्लता ब्राह्मणस्य कर्म्म ब्राह्मणता ग्रामस्य समूहो ग्रामता देव एव देवता भूमिविद्युत्सरिल्लतावनिताभिधानानि भूमिर्भूः वि
द्युत्सौदामनी सरिन्निम्नगा लता वल्ली वनिता योषित् यादो नपुंसकम् यादः शब्दः सरिद्वाचकोपि क्लीबं स्यात् भाःस्रुक्स्रग्दिगुष्णिगुपानहः एते स्त्रि
यां स्युः इयं भाः इत्यादि स्थूणोर्णे नपुंसके च एते स्त्रियां क्लीबे च स्तः स्थूणा स्थूणं ऊर्णा ऊर्णं तत्र स्थूणा काष्ठमयी द्विवर्णिका ऊर्णा मेषादिलोम
गृहशशाभ्यां क्लीबे नियमार्थमिदम् गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः गृहस्थूणं शशोर्णं शशलोमनीत्यमरः प्रावृड्विप्रुड्रुट्तृट्त्वि
ट्त्विषः एते स्त्रियां स्युः दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः एते स्त्रियां स्युः पक्षे ङीष् दर्वी दर्विरित्यादि तिथिनाडिरु
चिविचिनालिधूलिकिकिकेलिकविराज्यादयः एते प्राग्वत् इयं तिथिरित्यादि अमरस्त्वाह तिथयो द्वयोरिति तथा च भारविः तस्य भुवि बहुतिथा
स्तिथयः इति स्त्रीत्वे हि बहुतिथ्य इति स्यात् श्रीहर्षश्च निखिलान्निशि पौर्णिमा तिथीनिति शष्कुलिराजिकुट्यशनिवर्त्तिभ्रुकुटित्रुटिवलिपङ्क्तयः
एतेपि स्त्रियां स्युः इयं शष्कुलिः प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः इयं प्रतिपदित्यादि उषा उच्छन्ती उषाः
प्रातरधिष्ठात्री देवता आशीर्धूःपूर्गीर्द्वारः इयमाशीरित्यादि अप्सुमनस्समासिकतावर्षाणां बहुत्वञ्च अबादीनामप्त्वानां स्त्रीत्वं स्याद्बहुत्वञ्च
आप इमाः स्त्रियः सुमनसः पुष्पं सुमना मालती जातिः देववाची तु पुंस्येव सुपर्वाणः सुमनसः बहुत्वम्प्रायिकम् एका च सिकता तैलदाने असम
र्थेति अर्थवत्सूत्रे भाष्यप्रयोगात् समांसमां विजायत इत्यत्र समायां समायामिति भाष्याच्च विभाषाग्राधेडिति सूत्रे आग्रासातां सुमनसाविति वृत्तिव्या
ख्यायां हरदत्तोप्येवम् स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः इयं स्रक् त्वक् ज्योक् वाक् यवागूः नौः स्फिक् तटिसीमासम्बध्याः इयं तटिः सिमास
म्बध्या चुल्लिवेणीखार्यश्च स्यष्टम् ताराधाराज्योत्स्नादयश्च शलाका स्त्रियां नित्यम् नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति॥ ॥
इति स्त्र्यधिकारः ॥ ॥ पुमान् अधिकारोयं घञाद्यन्तः ॥ पाकः त्यागः करः गरः भावार्थ एवेदं नपुंसकत्वविशिष्टे भावे क्तल्युडन्ताः स्त्रीत्वविशि

धेनुक्तिन्नादिभिर्बाधेन परिशेषात् कर्म्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गं तथा च भाष्यं सम्बन्धमनुवर्तिष्यत इति घाजन्तश्च विस्तरः गोचरः चयः
जयः इत्यादि भयलिङ्गभगपदानि नपुंसके एतानि नपुंसके स्युः भयं लिङ्गं भगं पदम् नङन्तः नङ्प्रत्ययान्तः पुंसि स्यात् यज्ञः यत्नः याच्ञा स्त्रि
याम् पूर्वस्यापवादः क्यन्तो घुः किप्रत्ययान्तो घुः पुंसि स्यात् आधिः निधिः उदधिः क्यन्तः किम् दानं घुः किम् जनिर्बीजम् इषुधिः स्त्री च इषुधि
शब्दः स्त्रियां पुंसि च देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि एतानि पुंसि स्युः देवाः सुराः असुराः दै
त्याः २ आत्मा क्षेत्रज्ञः स्वर्गो नाकः २ गिरिः पर्वतः २ समुद्रोऽब्धिः २ नखः कररुहः २ केशः शिरोरुहः २ दन्तो दशनः २ स्तनः कुचः २ भुजः दोः २
कण्ठो गलः २ खड्गः करवालः २ शरो मार्गणः २ पङ्कः कर्दम इत्यादि त्रिविष्टपत्रिभुवने नपुंसके स्यातां तृतीयं विष्टपं त्रिविष्टपं स्वर्गाभिधानत्व
यापुंस्त्वे प्राप्ते अयमारम्भः द्यौः स्त्रियां द्यौर्दिवौ स्त्रोत्रेणोपादानमिदं इषुबाहू स्त्रियां चात्पुंसि बाणकाण्डौ नपुंसके च चात्पुंसि त्रिविष्टपेत्यादिना सूत्रेणासुरत्व
स्यापवादः नान्तः अयं पुंसि राजा तक्षा न च चर्म्म वर्म्मादिष्वतिव्याप्तिः मनन्त इत्युक्तेरिति नपुंसकप्रकरणे वक्ष्यमाणत्वात् क्रतुपुरुषकपोलगुल्फमेघाभिधा
नानि क्रतुरध्वरः २ पुरुषो नरः २ कपोलो गण्डः २ गुल्फः प्रपदः २ मेघो नीरदः २ अभ्रं नपुंसकम् पूर्वस्यापवादः उकारान्तः अयं पुंसि स्यात् प्रभुः इक्षुः हनुर्हट्टविलासि
न्यां नृत्यारम्भे गदे स्त्रियां द्वयोः कपोलावयव इति मेदिनिः करेणुरिभ्यां स्त्री नेभे इत्यमरः एवं जातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः उक्तञ्च
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित इति एवमन्यत्रापि धेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् समासे रज्जुः पुंसि च कर्कटरज्जुः
कर्कटरज्जुना श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुताललूनि नपुंसके वसु चार्थवाचि अर्थवाचीति किम् वसुर्मयूखाग्निधनाधिपेषु मद्गुमधुशी
धुसानुकमण्डलूनि नपुंसके च चात्पुंसि अयं मद्गुः इदं मद्गु रुत्वन्तः मेरुः सेतुः दारुकसेरुजतुवस्तुमस्तूनि नपुंसके रुत्वन्त इति पुंस्त्वस्यापवादः २८
न्दारु सक्तुर्नपुंसके च चात्पुंसि सक्तुः सक्तु प्राग्रश्मे रकारान्तः रश्मिदिवसाभिधानमिति वक्ष्यति प्राक् तस्माद्रकारान्त इत्यधिक्रियते कोपधः कोपधो

ऽकारान्तः पुंसि स्यात् स्तवकः कल्कः चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके पूर्वसूत्रापवादः कण्टकानीकसरकमोदकचषकमस्तकपुस्तक
तडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटककण्डकपिटकतालकफलकपलाकानि नपुंसके च चात्पुंसि अयं कण्टकः इदं कण्टकमित्यादि
टोपधः टोपधोऽकारान्तः पुंसि स्यात् घटः पटः किरीटमुकुटललाटवटवीटशृङ्गाटककराटलोष्टानि नपुंसके किरीटमित्यादि कुटकूटकपटकवाटकर्पटनट
निकटकीटकटानि नपुंसके च चात्पुंसि कुटः कुटमित्यादि णोपधः णोपधोऽकारान्तः पुंसि स्यात् गुणः गणः पाषाणः ऋणलवणपर्णतोरणरणोष्णा
नि नपुंसके पूर्वसूत्रापवादः कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च चात्पुंसि थोपधः रथः काष्ठपृष्ठरिक्थोक्था
नि नपुंसके इदं काष्ठमित्यादि काष्ठा दिगर्था स्त्रियां इमाः काष्ठाः तीर्थप्रोथयूथगाथानि नपुंसके च चात्पुंसि अयं तीर्थः इदं तीर्थं नोपधः अदन्तः पुं
सि इनः फेनः जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशाननरत्ननिम्नचिह्नानि नपुंसके पूर्वस्यापवादः मान
यानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसम्मानभवनवसनसम्भावनविभावनविमानानि नपुंसके च चात्पुंसि अयं मानः
इदं मानं पोपधः अदन्तः पुंसि यूपः दीपः सर्पः पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके इदं पापमित्यादि शूर्पकुतपकु
णपद्वीपविटपानि नपुंसके च अयं शूर्पः इदं शूर्पमित्यादि भोपधः स्तम्भः कुम्भः तलभं नपुंसकं पूर्वस्यापवादः जृम्भं नपुंसके च जृम्भं जृम्भः
मोपधः सोमः भीमः रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके इदं रुक्ममित्यादि संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च
चात्पुंसि अयं संग्रामः इदं संग्रामं योपधः समयः हयः किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसकं स्यः गोमयकषायमलयान्वयाव्ययानि नपुंसके च।
गोमया गोमयं रोपधः क्षुरः अङ्कुरः द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदरश्रा
रकन्दरमन्दरपञ्जरजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रसत्रक्षेत्रमित्रकलत्रचित्रसूत्र

वक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशास्त्रवस्त्रपत्रपात्रछत्राणि नपुंसके इदं द्वारमित्यादि शुक्रमदेवतायाम् इदं शुक्रं रेतः चक्रवज्रान्धकारसारावा
रपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च चात्पुंसि चक्रः चक्रमित्यादि षोपधः वृषः वृक्षः शिरीषर्जीषाम्बरीषपीयूष
पुरीषकिल्विषकल्माषाणि नपुंसके यूषकरीषमिषविषवर्षाणि नपुंसके च चात्पुंसि अयं यूषः इदं यूषमित्यादि सोपधः वत्सः वायसः महानसः पन
सबिसबुससाहसानि नपुंसके चमसरसनिर्यासोपवासकार्पासवाससमासकासकांसमांसानि नपुंसके च अयं चमसः इत्यादि कंसञ्चाप्राणिनि
कंसोऽस्त्री पानभाजनम् प्राणिनि तु कंसो नाम कश्चिद्राजा रश्मिदिवसाभिधानानि एतानि पुंसि स्युः रश्मिर्मयूखः दिवसो घस्रः दीधितिः स्त्रिया
म् पूर्वस्यापवादः दिनाहनी नपुंसके अयमप्यपवादः मानाभिधानानि एतानि पुंसि स्युः कुडवः प्रस्थः द्रोणाढकौ नपुंसके च इदं द्रोणम् अयं द्रोणः
खारीमानिके स्त्रियाम् इयं खारी इयं मानिका दाराक्षतलाजासूनां बहुत्वे च इमे दाराः नाड्यपजनोपपदानि व्रणाङ्गपदानि यथासंख्यं नाड्युपप
दानि व्रणादीनि पुंसि स्युः अयं नाडीव्रणः अपाङ्गः जनपदः व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रे मरुद्गरुत्तरदृत्विजः अयं मरुत्
ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः एते पुंसि स्युः अयं ऋषिः ध्वजगजमुञ्जपुञ्जाः एते पुंसि हस्तकुन्तान्तव्रातवात
दूतधूर्तसूतचूतमुहूर्ताः एते पुंसि अमरस्तु मुहूर्तो स्त्रियामित्याह षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः अयं षण्डः वंशां
शपुरोडाशाः अयं वंशः पुरोडाश्यते पुरोडाशः कर्मणि घञ् भवव्याख्यानयोः प्रकरणे पौरोडाशपुरोडाशात् ष्ठन्निति विकारप्रकरणे माघे हि पुरोडाशा इति च
निपातनात्सकृत सूत्र एव निपातनाद्धादस्य डत्वम् पुरोडाशभुजामिष्टमिति माघः ह्रदकन्दकुन्दबुद्बुदशब्दाः अयं ह्रदः अर्घपथिमथ्यृभुक्षिस्तम्बनित
म्बपूगाः अयमर्घः पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः अयमप्यन्नवदित्यादि सारथ्यतिथिकुक्षिब

स्तिपाराप्पञ्जलयः एते पुंसि अयंसारथिः इति पुल्लिङ्गाधिकारः ॥ ॥ नपुंसकम् अधिकारोयम् भावेल्युडन्तः हसनं भावे किम् पचनोग्निः इध्मव्रश्च
नः कुठारः निष्ठा च भावे या निष्ठा तदन्तं क्लीबे स्यात् हसितं गीतं त्वष्यञौ तद्धितौ शुक्लत्वं शौक्ल्यं ष्यञः षित्व सामर्थ्यात् यक्षे स्त्रीत्वम् चातुर्य्यम् चातुरी सा
मग्र्यम् सामग्री औचित्यम् औचिती कर्म्मणि च ब्राह्मणादिगुणवचनेभ्यः ब्राह्मणस्य कर्म्म ब्राह्मण्यं यच्च ढग्यगञ्रावुञ्छ्ञः स्वाभाव कर्म्मणि एतद
न्तानि क्लीबानि स्तेनाद्यन्नलोपश्च स्तेयम् सख्युर्यः सख्यम् कपिज्ञात्योर्ढक् कापेयम् पत्यन्तपुरोहितादिभ्यो यक् आधिपत्यं प्राणभृज्जातिवयोवच
नोद्गात्रादिभ्योञ् औद्गं हायनान्तयुवादिभ्योण् द्वैहायनम् द्वन्द्वमनोज्ञादिभ्यो वुञ् पितापुत्रकम् होत्राभ्यः छः अच्छावाकीयं अव्ययीभावः अधि
स्त्रि द्वन्द्वैकत्वं पाणिपादम् अभाषायां हेमन्तशिशिरावहोरात्रे च स्यष्टं अनञ्कर्म्मधारयस्तत्पुरुषः अधिकारोयम् अनल्पे छाया शस्च्छायं रा
जामनुष्यपूर्वा सभा इनसभमित्यादि सुरासेनाच्छायाशालानिशा स्त्रियां च परवत् अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् रात्राह्नाहाः पुंसि अपथपु
ण्याहे नपुंसके संख्यापूर्वा रात्रिः त्रिरात्रं संख्यापूर्वेति किम् सर्वरात्रः द्विगुः स्त्रियां च व्यवस्थया पञ्चपूली त्रिभुवनम् इसुसन्तः हविः धनुः अर्च्चि
स्त्रियां च इसन्तत्वेपि अर्चिः स्त्रियां नपुंसके च स्यात् इयमिदं वा अर्चिः छदिः स्त्रियामेव इयं छदिः छाद्यतेऽनेनेति छदेरिसुरादिरायनादर्चिशुचीत्या
दिनाइस् इस्मन्नित्यादिना ह्रस्वः पटलच्छदिरित्यमरः तत्र पटलसाहचर्याच्छदिषः क्लीबता मन्दन्तोऽमरव्याख्याता इत्युपेक्ष्याः मुखनयनलोहवनमांसरु
धिरकार्मुकविवरजलहलधनान्नाभिधानानि एतेषामभिधायकानि क्लीबे स्युः मुखमाननम् २ नयनं लोचनं २ लोहं कालं वनं गहनं २ मांसमामिशं २
रुधिरं रक्तं २ कार्मुकं शरासनं २ विवरं विलं २ जलं वारि हेलं लाङ्गलं २ धनं द्रविणं २ अन्नमशनं २ अस्यापवादानाह निरूच्या सीरार्थौदनाः पुंसि वक्तो
नेत्रारण्यगाराडीवानि पुंसि च वक्त्रो वक्त्रम् नेत्रो नेत्रम् अरण्यो अरण्यं गाण्डीवो गाण्डीवम् अटवी स्त्रियां लोपथः कुलं कूलं स्थलं तूलोपलतालकुसू

॥

तरलकम्बलदेवलवृषलाः पुंसि अयं तूलः शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालविडालखिलशूलाः
पुंसि च चात् क्लीबे शीलं शीलम् इत्यादि शतादिः संख्या शतं सहस्रं शतादिरिति किम् एको द्वौ बहवः संख्येति किं शतशृङ्गो नाम पर्वतः शतायुतप्र
युताः पुंसि च अयं शतः इदं शतमित्यादि लक्षाकोटी स्त्रियां इयं लक्षा इयं कोटिः वा लक्षा नियुतं च तत् इत्यमरात् क्लीबे पि लक्षे सहस्रः पुंसि ॥
सहस्रः इदं सहस्रं मन् द्व्यच् कोकर्त्तरि मन्प्रत्ययान्तो द्व्यच् कः क्लीबः स्यात् न चात् क्लीबेन तु कर्त्तरि वर्मा वर्म द्व्यच् कः किं अणिमा महिमा अकर्त्त
रि किं ददातीति दामा ब्रह्मन् पुंसि च अयं ब्रह्मा इदं ब्रह्म नाम रोम रणीन तु सके मन् द्व्यच् क इत्यस्यापवादः पञ्च असन्तो द्व्यच् कः यशः मनः त
पः द्व्यच् कः किं चन्द्रमाः अप्सराः स्त्रियां एता अप्सरसः प्रायेणायं बहुवचनान्तः शत्रन्तः पत्रं छत्रं पात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव भृत्राऽमि
त्रच्छात्रपुत्रमन्त्रवृत्रमेत्राः पुंसि अयं भृत्रः न मित्रं अमित्रः तस्य मित्राण्यमित्रास्ते इति माघः स्यातामभित्रौ मित्रे चेति च यत्तु द्विषो मित्र इति
सूत्रेह रदत्तेनोक्तम् अमेर्द्विषदिति यौणादिकः इत्रच् अमेरमित्रं मित्रस्यव्यथये दित्यादौ मध्योदात्तस्तु चिन्त्यः नञ्समासेप्येवं परवल्लिङ्गता
पि स्यादिति तत्र दोषान्तरमिति तत्र कृतसूत्रापर्य्यालोचनमूलकम् स्वरदोषोद्भावनमपि नञोजरमरमित्रमृता इति षाष्ठसूत्रास्मरणमूलक
मिति दिक् पत्रपात्रपवित्रसूत्रछत्राः पुंसि च बलकुसुमशुल्वपत्तनरणाभिधानानि बलं वीर्य्यं पद्मकमलोत्पलानि पुंसि च पद्मादयः शब्दाः
कुसुमाभिधायित्वेपि द्विलिङ्गाः स्युः अमरोप्याह वा पुंसि पद्मं नलिनमिति एवञ्च अर्द्धर्चादिसूत्रेणापि पद्मं नपुंसकमेवेति वृत्तिग्रन्थो मतान्तरे

॥ ॥

णभेयः आहवसंग्रामौ पुंसि आजिःस्त्रियामेव फलजातिः फलजातिवाचीशब्दोनपुंसकंस्यात् आमलकम् आम्रम् वृक्षजातिः स्त्रियामेव क्व
चिदेवेदम् हरीतकी विपज्जगत्सकृत्कृषत् पृषत्शकृच्चकृद्दध्नितः एतेक्लीबाःस्युः नवनीतावतानृतामृतनिमित्तवित्तपित्तव्रतरजतवृत्तय
लितानि श्राद्धकुलिशदैवपीठकुण्डाङ्कदधिसक्थ्यस्थ्यास्पदाकाशकण्वबीजानि एतानिक्लीबेस्युः दैवंपुंसिच दैवम्दैवः धान्याज्यसस्य
रूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यहर्म्यतूर्य्यसैन्यानि इदन्धान्यमित्यादि द्वन्द्वबर्हेदुःखवडिशपिच्छकुडुम्ब
वरशरवृन्दारकाणि असमिन्द्रिये इन्द्रियेकिम् रथाङ्गादौमाभूत् इतिनपुंसकाधिकारः॥ ॥ स्त्रीपुंसयोः अधिकारोयं गोमणिय
ष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः इयमयंवागौः मन्युसीधुकर्कन्धुकिष्कुकाण्डुरेणवः इयमयंवामन्युः गुणवचनमुकारा
न्तन्नपुंसकञ्च त्रिलिङ्गमित्यर्थः पटु पटुः पट्वी अपत्यार्थतद्धिते औपगवः औपगवी इतिस्त्रीपुंसाधिकारः पुन्नपुंसकयोः अधिकारो
यं घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः अयंघृतः इदंघृतम् शृङ्गार्घनिदाघोद्यमशल्यदृढाः अयंशृङ्गः इदंशृङ्गम् व्रजकुञ्जकु
थकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः अयंव्रजः इदंव्रजम् कबन्धौषधायुधान्ताः स्यष्टं दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकुलि
शाः एतेपुन्नपुंसकयोःस्युः कुशोरामसुतेदर्भेयोक्त्रेद्वीपेकुशञ्जले इतिविश्वः शलाकावाचीतुस्त्रियां तथाचजनपदादिसूत्रेणायोविकारेङीषि
कुशी दारुणिवावाकुशावानस्पत्याः स्थलामायातेतिश्रुतिः अतःकृकमीतिसूत्रेकुशाकर्णाच्छितिप्रयोगश्च व्याससूत्रेच होतोतृपायनशब्देशो

षत्वात्कुशाङ्कुन्द इति तत्रशारीरकभाष्येप्येवं एवञ्चश्रुतिसूत्रभाष्याणामेकवाक्यत्वेस्थिते श्राङ्कुन्द इत्याङ्‌प्रश्लेषादिपरोभागिनीयग्रन्थःप्रौ
ढिवादमात्र पर इति विभावनीयंवङ्कश्रुतेः गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च इतिपुन्नपुंसकाधिकारः ॥ ॐ ॥ अवशिष्टलि
ङ्ग‌मव्ययम् कतिग्युष्मदस्मदः ष्णान्तासंख्याशिष्टापरवत् एकःपुरुषः एकास्त्री एकंकुलं गुणवचनञ्च शुक्लःपटः शुक्लाशाटी शुक्लंव
स्त्रंकृत्याश्च करणाधिकरणयोर्ल्युट् सर्वादीनिसर्वनामानि स्पष्टार्थमन्त्रिसूत्री ॥ ॐ ॥ इतिश्रीभट्टोजिदीक्षितविरचितापाणि
नीयलिङ्गानुशासनसूत्रवृत्तिः समाप्ता ॥ ॐ ॥ संवत १९३७ पौष्यकृष्ण ५ ॥ वार मंगर शुभम् ॥ ॥

ना

यत्वात्तु पो लुक् स्यादिति शंक्यं। अव्ययसंज्ञाया अन्वर्थत्वेनोपसर्जनेतरभावात्। न चैवमपि सहइति स्थिते अंतरंगत्वाद्गुणे कृते सहे शब्दस्य सादेशएव न स्यादेकादेश स्यपरादिवद्भावे सहशब्दाभावात् पूर्वोत्तरत्वेनोत्तरपदत्वाभावात् उभयत आश्रयणे अंतादिवद्भावनिषेधाच्च अस्तु वा सहे शब्दस्य सभावस्तथापि सइत्यदंतमेव रूपं स्यान्नतु सेइत्येदंतमिति शंक्यं। नेदस्य परस्य तूत्तरपदवद्भावप्रतिषेधेन पूर्वोत्तरपदयोः प्रथमं कार्यं भवति ततएकादेश इति सामान्यज्ञापनादित्याहुः ॥ ॥ गोतो णित्। इतोत्सर्वनामस्थाने इत्यतोऽनुवृत्तं सप्तम्यंतं सर्वनामस्थानग्रहणं प्रथमया विपरिणम्यते णिदित्यनेन सामानाधिकरण्यात् तदाह। सर्वनामस्थानमिति। णित्कार्यं कृत्स्यादिति। णितिपरे पूर्वस्य यत्कार्यं तत्करोतीत्यर्थः। गौरित्यादि। चित्रगुरित्यत्र तु न भवति। ओतइति वक्ष्यमाणत्वात्। नातद्वितीयः शसस्त ओकारांतान्न संभवतीत्याशये

गोतो णित्। ७।१।९०। गोशब्दात्परं सर्वनामस्थानं णिद्वत्। गौः। गावौ। गावः। औतोऽम्शसोः। ६।१।९३। आ ओत इति च्छेदः। ओकारादम् शसोरचिपरे आकारएकादेशः स्यात्। शसा साहचर्यात् सुपेवत्र अम् गृह्यते नेह। अचिनवम्। गाम्। गावौ। गाः। गवा। गवे। गोः। इत्यादि। ओतो णिदिति वाच्यं। विहितविशेषणं च। तेनासुद्योः। सुद्यावौ। सुद्यावः। ओकारान्ताद्विहितं सर्वनामस्थानमिति व्याख्यानान्नेह। हे भानो। भानवः। उः शम्भुः। स्मृतो येन सः स्मृतोः। स्मृतावौ। स्मृतावः। स्मृताम्। स्मृतावौ। स्मृताः। इत्यादि। इत्योदन्ताः। रायो हलि। ७।२।८५। रैशब्दस्याऽऽकारान्तादेशः स्याद्धलि विभक्तौ। अचि आयादेशः। राः। रायौ। रायः। रायं। रायौ। रायः। राया। राभ्यामित्यादि। इत्यैदन्ताः। ग्लौः। ग्लावौ। ग्लावः। ग्लावम्। ग्लावौ। ग्लावः। इत्यादि। औतोऽम्शसोरिति हन प्रवर्त्तते। एओ ति मिस्रूत्रेण आओदोतोः सावर्ण्याभावज्ञापनात्। इत्यजन्ताः पुंलिङ्गाः ॥ ॥

नाह। शसा साहचर्यादिति। सुपीत्यनुवर्त्तनाच्चेत्यपि काशिकायामुक्तं। कैयटस्तु तद्धितोपि शसस्तीति कथमिह साहचर्यादमः सुप्त्वमित्याशंक्य अचीत्यधिकाराद्ज्ञादिशस् सुपेव संभवति न तु तद्धित इत्याह। अचिनवमिति। चिनोतेर्लङ् उत्तमैकवचनस्य मिपस्तस्थस्थमिपामित्यम्। ओतो णिदिति वाच्यमिति। गोतइत्यपहाय ओतइति वाच्यमित्यर्थः। एवं च गामित्यत्र परत्वाद्वृद्धिः स्यादिति शंकाया अनवकाशः। निरवकाशतया आत्वेन वृद्धेरेव बाधनात्। इत्योदंताः। रायो हलि। अष्टन आ विभक्तावित्यत आ इति विभक्ताविति च वर्त्ततेतदाह। आकारांतादेश इति। अर्थे रै विभवा अपीत्यमरः। रायिस्कोंदस इति भाष्यं तत्र कयजं तस्य रे शब्दस्य कोदसत्व परं न तु केवलस्यापीति वांतोर्यी

पक्षांतरमप्याह। इत्येदंताः। ग्लौ रिति। ग्लौर्मृगांकः कलानिधिरित्यमरः। एवं जनानवतीति जनौः। ज्वरत्वरेत्यूठ्। एत्येधत्यूठ्स्विति वृद्धिः। अव्यावादेशः। जनवौ ज
नावइत्यादौ न प्रवर्त्तत इति। हे ग्लौरित्यत्र संबुद्धिलोप न्लाव इत्यत्र ङसिङसोश्चेति पूर्वरूपं च न प्रवर्त्तत इत्यपि बोध्यं। सावर्ण्याभावज्ञापनादिति। सति सावर्ण्ये एच
श्चतुर्विंशतेः संज्ञा भवतीति वृद्धिरादैजित्येतद्वृद्धिरादेङिति पठितुं शक्यत्वादैऔजिति सूत्रे व्यर्थं सत्सावर्ण्याभावं ज्ञापयति। अत एव एदैतोरोदौतोश्च न मिथः
सावर्ण्यं ऐऔजिति सूत्रारंभसामर्थ्यादित्याद्यणुदित्सवर्णस्येति सूत्र एवोक्तमिति भावः। नन्वैऔजिति सूत्राभावे न याभ्यामिति सूत्रे ताभ्यामैजिति प्रत्याहारोऽयं न
सिध्येत्। पूर्वोक्ताभ्यामैङिति त्युक्तेः विधीयमानस्य सवर्णाग्राहकतया वैयाकरणः सौवश्व इत्यादावैदौतावेवागमौ स्तो नत्वेदोतौ। ततश्चैवं व्यर्थ्याभावादैऔजिति
सूत्रे सावर्ण्याभावेन ज्ञापयतीति चेन्मैवं। पूर्वोक्ताभ्यामैऔ इति पठनेनापि इष्टसिद्धेस्तत्सूत्रवैयर्थ्यस्य तदवस्थत्वात्। स्थितस्य गतिप्रदर्शनमिदं। वस्तुतस्तु ए
ओङिति सूत्रारंभसामर्थ्यादित्युक्ते ताभ्यामैजिति अत्रानुपपत्तिर्नास्त्येव। न च एओङिति सूत्राभावे अदेङ्गुणः एङिपररूपं एङः पदांतादतीत्यादावेङ् प्रत्या
हारः कथं सिध्येदिति वाच्यं। सति सावर्ण्ये अदेज्गुणः एचि पररूपं एचः पदांतादतीति पठितुं शक्यत्वादति प्रसंगस्य उराङ्ग्रहणेपि तुल्यत्वात्। नन्वेवमप्येचां
चतुर्णां क्रमादयायावादेशा सिध्यर्थं एओङ् ऐऔजिति सूत्रद्वयमप्यावश्यकमिति वाच्यं। स्थानेंतरतम इत्यनेनैव एचां क्रमादयादयः सिध्यंतीति प्रागेवास्माभिः
उपपादितत्वात्। यद्वा हि स्वराणामूष्मणां चैवेत्यादि प्राग्युक्तशिक्षावचनानुरोधादेङौ विवृततरावैचौ विवृततमावित्यभ्युपगम्यते तदा त्वेदैतोरोदौतोश्च मिथः
सावर्ण्यप्रसक्तिरेव नास्ति इति ऐऔजिति एओङिति वा सूत्रं नोक्तज्ञापकमिति ज्ञेयं। केचित्तु विवृततरयोरेङोर्विवृततमत्वाभावेपि विवृततरे विवृततमे च विवृत
त्वस्य सत्त्वात्तदा दायनुल्यप्रयत्नत्वमेङोरैचोश्चास्तीति सावर्ण्यप्रसक्तावुक्तज्ञापकाश्रयणं सम्यगेवेत्याहुस्तदपरे न क्षमंते। तथाहि सति इको गुणवृद्धी इति सूत्रस्थ श
ब्दकौस्तुभग्रंथेन सह विरोधप्रसंगात्। तत्र हि स्वराणामूष्मणां चेत्यादिशिक्षानुरोधाद्विवृतानेनेत्यादौ गुणाप्रवृत्तिः स्याद्विवृततरत्वरूपवैलक्षण्यस्य सत्त्वादिति न
शंक्यं विधेर्निर्विषयत्वापत्तेः। जयः करणं धान्यानां भवनं इत्यादिनिर्देशे रिकारादिषु गुणप्रवृत्त्यनुमानाच्चेति प्रकारांतरेण समाहितं त्वदुक्तरीत्या तुल्यप्रयत्नत्वेतु
तानेनेत्यादौ गुणप्रवृत्तिशंका निरालंबनैव स्यात् तस्मादीषद्विवृतभेदेन स्वराणामूष्मणामिव विवृततरविवृततमभेदेन सावर्ण्याभावोऽत्रस्तु चेति दिक्। इत्यजं

सर्वनाम्नः स्याड्ढ्रस्वश्चादीर्घो च्चारणं प्राग्वत्। अस्य च प्रतिपत्त्यर्थं। आवंतस्य सर्वादिगणे पाठाभावात् सर्वनामत्वं नेत्याशंक्याह। एकादेशस्य पूर्वांतत्वे नेति। विभाषा दिक्समासे गौणत्वादप्राप्ते विभाषेयं न तु न बहुव्रीहाविति निषेधे प्राप्ते इति भ्रमितव्यं। तस्य अलौकिकप्रक्रियावाक्यांतर्गतसर्वादिविषयत्वादस्य च समासविषयत्वात्। स्पष्टार्थमिति। प्रतिपदोक्तदिक्समासविधायके दिङ्नामानीति सूत्रे शेषो बहुव्रीहिरित्यतो बहुव्रीहिरित्यधिकारादिति भावः। त्यक्तुं शक्यमिति। न चावंतस्य द्वितीयादिशब्दस्य तीयप्रत्ययांतत्वाभावाद्विभाषा द्वितीयेति सूत्रमावश्यकमिति शंक्यं। एकादेशस्य पूर्वांतत्वेन ग्रहणादावंतस्यापि तीयप्रत्ययांतत्वात् तीयस्येति सु

सर्वनाम्नः स्याड्ढ्रस्वश्च। ७।३।११४। आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः। याटोऽपवादः। सर्वस्यै। सर्वस्याः २। एकादेशस्य पूर्वान्तत्वेन ग्रहणादामि सर्वनाम्न इति सुट्। सर्वासां। सर्वस्यां। सर्वयोः। सर्वासु। एवं विश्वादय आबन्ताः। विभाषा दिक्समासे बहुव्रीहौ। १।१।२८। अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै उत्तरपूर्वायै। दिङ्नामान्यन्तराले इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह। योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै। बहुव्रीहिग्रहणं स्पष्टार्थं। अन्तरस्यै शालायै। बाह्यायै इत्यर्थः। अपुरीत्युक्तेर्नेह। अन्तरायै नगर्यै। विभाषा द्वितीयातृतीयाभ्यां। ७।३।११५। आभ्यां ङितस्स्याट् स्यादापश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यं। तीयस्य ङित्सूपसंख्यानात्। द्वितीयस्यै। द्वितीयायै। द्वितीयस्याः २। द्वितीयायाः २। द्वितीयस्यां। द्वितीयायां। शेषं रमावत्। एवं तृतीया। अम्बार्थनद्योर्ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल। असंयुक्ता ये डलकास्तद्वतां ह्रस्वः। हे अम्बाडे। हे अम्बिके। जरा। जरसौ। शीभावात्परत्वाज्जरस्। आमि नुटः परत्वाज्जरसां। जरसामित्यादि पक्षे हलादौ च रमावत्। इह पूर्वविप्रतिषेधेन शीभावं कृत्वा सन्निपातपरिभाषाया अनित्यतां चाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलं। यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य औङ आपः। आङि चापः। याडापः। ह्रस्वनद्यापः॥ ९९ नपुंसकार्थमवश्यं वक्तव्येनानेनैव सिद्धो विभाषा द्वितीयेति सूत्रं न कर्तव्यमिति भावः। अम्बार्थ

ह्रस्वः। अत्र अम्बार्थस्य स्वरं यदीति वचनात्तदुक्तस्यैवाम्बार्थस्य ह्रस्वो भवति नान्येषामित्याशयेन फलितमाह। असंयुक्ता ये डलका इत्यादि। जरेति। ज्रष् वयोहानावित्यस्मात् षिद्भिदादिभ्य इत्यङि ऋदृशोऽङि इति गुणे कृते टाप्। शीभावात्परत्वाज्जरसित्यादि नन्वौङ आपः ह्रस्वनद्यापो नडित्यपेक्षया जराया इति सूत्रस्य परत्वा

रमेति। रमते इति रमा। रमु क्रीडायामित्यस्मात्पचाद्यचि टाप्। लिंगविशिष्टपरिभाषया स्वादयः। हल्ङ्यादिलोपः। न चानावंतत्वादेव स्वाद्युत्पत्तिरस्तु प्रत्ययांतस्यापि प्रातिपदि
कत्वे पि ङ्याप्पोः पृथक् ग्रहणादिति वाच्यं। ङ्याप्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात्। प्रत्याख्यातत्वात् च तद्ग्रहणस्य शी स्यादिति। जसः शीत्यतः शी इत्यनुवर्तत इति भावः।
संबुद्धौ च। बहुवचने इत्यतः आङि चापः इत्यतः एदाप इत्यनुवर्तते तदाह आप एकारः स्यादिति। एङ्ह्रस्वादिति। न चात्र हल्ङ्यादिनैव सुलोपोस्तु। प्रत्ययलक्षण
न्यायेन संबुद्धौ चेत्येत्वस्यापि प्रवृत्तिसंभवादिति शंक्यं। परत्वात् प्रतिपदोक्तत्वाच्च। एत्वे कृते हल्ङ्यादिलोपस्याप्राप्तेः। स्यानिवद्भावाच्चाप्युत्वेप्याकाररूपत्वाभावात्
आ आवित्याकारं प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानात्। एङ्ह्रस्वादिति लोपस्यैव परत्वेनान्याय्यत्वाच्चेति भावः। आङि। चकारेण ओसि चेति प्रकृतं परामृश्यते इ
त्याह। ओसि च पर इति। रमाभिरिति। नन्विह एकादेशस्य पूर्वांतत्वेन ग्रहणादतो भिस ऐस् इत्यैस् प्राप्नोति। न च परत्वसामर्थ्यान्नैवमिति शंक्यं। अकृते कादेशे।

रमा। औङ आपः। ७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा प्राचां। रमे। रमाः। सम्बुद्धौ च। ७।३।१०६। आप ए
कारस्स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति सम्बुद्धिलोपः। हे रमे। २ हे रमाः। रमां। रमे। रमाः। स्त्रीत्वान्नत्वाभावः। आङि चापः। ७।३।१०५। आङि ओसि
च परे आबन्तस्याङ्गस्य एकारस्स्यात्। रमया। रमाभ्यां। रमाभिः। याडापः। ७।३।११३। आपः परस्य ङिद्वचनस्य याडागमस्स्यात्। वृद्धिरेचि। रमा
यै। सवर्णदीर्घः। रमायाः। रमयोः। रमाणां। रमायां। रमयोः। रमासु। एवन्दुर्गादयः ॥ ॐ ॥ ९ विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्नैवं। अ

ल्विधावंतादिवच्चेत्यस्याप्रवृत्तेः। याडापः। घेर्ङितीत्यतो ऽनुवृत्तं ङितीति सप्तम्यंतमाप इति पंचम्यनुरोधेन विपरिणम्यत इत्याह। ङिद्वचनस्येति॥ अनसु
पि चेत्यतः सुपीत्यनुवर्तनात् सुप एव याट्। तेन अपित्सार्वधातुकस्य ङित्त्वे पि मालेवाचरतो मालात इत्यादौ न तत्सादेर्न भवति। एत च्च अचः परस्मिन् इत्यत्र
पूर्वस्य विधिः पूर्वविधिः इति षष्ठीसमासपक्षाभ्युपगमेनोक्तं। पंचमीसमासपक्षाभ्युपगमे तु शपः स्थानिवत्त्वेन व्यवधानात् मालात इत्यादौ याटः प्रसंग एव
नास्तीत्याहुः। याडित्येव वृत्ती व्येदीर्घोच्चारणं स्पष्टप्रतिपत्त्यर्थं ॥ न च आतो गुणे इति पररूपापत्तिः। अकारोच्चारणसामर्थ्यादेव तद्बाधात् वृद्धिरेचीति प्रा
चां तु आट् श्चेत्युपन्यस्तं तदुपेक्षितं। याटः स्यादौ ऐकारस्य समुदायाद्यवयवत्वेनेह आटो ऽभावात् ॥ ॐ ॥ ९ ॥ ॥

अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तौ अतिदेशस्यैवैयर्थ्यापत्तेः अतो व्याचष्टे आवर्तं यदङ्गमिति यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहण
मिति नियमादतिखट्वेति यदङ्गं तदावर्तं न भवति यच्चावर्तं खट्वेति तदङ्गं न भवति इति नात्र याडागमप्रसक्तिरिति भावः। अत्र नव्याः। प्रत्ययग्रहणे तदन्तग्रहणमि
त्यप्रग्रहणेनावर्तं गृह्यते। आवर्तस्याङ्गविशेषणेनावर्तान्तग्रहणादतिखट्वायेत्यत्रातदोषतादवस्थ्यमिति यत्तु च्यते तत्त्वङ्गेनावर्तं विशेष्यतां अङ्गसंज्ञकं यदा
वर्तमिति। तथा च नोक्तातिप्रसङ्गशङ्कालेश इत्याहुः। स्त्रीप्रत्यये तदादिनियमो नेत्याशङ्क्याह। उपसर्जनेनेति। अयं भावः। स्त्रीप्रत्यये चानुपसर्जनेनेत्यनुपसर्जनस्त्री
प्रत्यये तदादिनियमप्रतिषेधो वक्ष्यते। न तूपसर्जनेऽपि। अत एव परमकारीषगन्धीपुत्र इति कारीषगन्ध्यापुत्र इत्यत्र ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे इति संप्र
सारणं न भवति। अतिकारीषगन्ध्यस्य हि ष्यङन्तत्वाभावात्। न च बहुश्रेयसीत्यत्र श्रेयसीत्युत्तरभागस्यैव तत्त्वात्। यथा हल्ङ्यादिलोपः प्रवर्तते तथात्राप्युत्तर

ङिति ह्रस्वश्च ।१।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे। आ एन
द्याः। मत्यै। मतये। मत्याः। मतेः। नदीत्वपक्षे औदिति ङेरौत्वप्राप्तौ इदुद्भ्याम् ।७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेः आम् स्यात्। पक्षे अच्च
घेः। मत्याम्। मतौ। एवं श्रुतिस्मृतिबुद्ध्यादयः॥ ॥ ९ भामस्य ष्यङन्तत्वात्संप्रसारणं स्यादेवेति शङ्क्याह पूर्वपदस्य ष्यङन्तत्वेऽप्युत्तरपदयोः

संप्रसारणमिति ष्यङः संप्रसारणमित्यत्रैव वक्ष्यमाणत्वात्। टतपोस्तु थोनेति। धुडभावे टस्य ठो न धुट्पक्षे तु तस्य थो नेति विवेकः। न भवतीति। जश्त्वाभावाकृष्य
कत्वं न भवतीत्यर्थः। केचित्विति। परिशिष्टकारादयः। निच्युरिति। अत्र शस्योरीति पक्षे रुत्वं बोध्यं। मांसपृतनेति। पृतना सेना। नात्वं नेति। आस्त्रियामिति पर्युदा
सादिति भावः॥ ॥ ङिति ह्रस्वश्चवामीति सूत्रात्वेत्यनुवर्तते। अप्राप्तविभाषेयं ह्रस्वयोरप्राप्तावितरयोस्तु नेयङुवङ्स्थानाविति निषेधप्राप्तावारम्भात्।
इह यङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणि ईदूतोर्विशेषणानि ह्रस्वयोस्तु स्त्रियामित्येव विशेषणं न तु नित्यस्त्रीत्वपर्यन्तं। अन्यथा इक्षश
निप्रभृतीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां सर्वलिङ्गानां च स्त्रीत्वेऽपि न स्यात् केयं मते हिते ये नित्यस्त्रीत्वाभावात्। मतान्तरेऽपि ह्रस्वांशे नित्यग्रहणव्यावर्त्य
लाभाच्च॥ अत एवाख्याग्रहणं विहाय स्त्रीशब्दमात्रं निष्कृष्य संबध्यते तदेतदाह॥ ॥ ॥ ॥

ङेराममिति विषयो जरसादेशं बाधित्वा परत्वान्नुस्युरिति चेत्। अत्राहुः। आङि चापइत्येकारादेशे कृते प्येकदेशविकृतन्यायेन जरायाइति जरसादेशप्रसक्त्या नित्यत्वा
दे कारादेशं बाधित्वा जरसादेश एव भवति न त्वेकारादेशो पि नित्य एव जरसादेशे कृते पि स्थानिवत्वेनावन्तत्वादाङि चापइति प्रवृत्तेरिति वाच्यं। आकाररूपस्यैवाप:
सर्वत्र ग्रहणात्। इत्यत्र पद्रूमे वक्ष्यमाणत्वान्न दप्रवृत्तेः। पाद्याय इति याडागमं तु जरसादेशोंतरंगत्वाद्बाधते॥ आकाररूपाप: परस्य ङितः सुपो विहितस्य याटो व

ङेराम् इति पक्षेऽपि विषयः। आमाः। एवं न समनिश्च प्रत्युत थाऽप्यनल्विधाविति युक्तेर्न भवन्ति। आप् आविति प्रश्लिष्य आकाररूपस्यैवाऽऽपः सर्वत्र
ग्रहणात्। एवं हल्ङ्याब्भ्य इत्यादिसूत्रेऽपि आप् आपृङी ई इति प्रश्लेषादतिखट्वः। निष्कौशाम्बिरित्यादिसिद्धे दीर्घग्रहणमप्रत्याख्येयं। नन्वेवमप्यतिखट्वा
येत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वञ्चाश्रित्य याडापः स्यादिति वाच्यं। आवन्तं यदङ्गं ततः परस्य याड्विधानात्। उपसर्जनस्त्रीप्रत्यये तु
दादिनियमात्। पद्न्निति नासिकापानसः। नसः। नसा। नोभ्यामित्यादि पक्षे सुटि चरमावत्। निशायाः। निशः। निशा। निशा। व्रश्चभ्रस्जसृजमृजय
जराजभ्राजच्छशांषः। ८।२।३६। व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। षस्य जश्त्वेन डकारः। निड्भ्यां। निड्भिः। सु
पि डः सीति पक्षे धुट्। चर्त्वं। चर्त्वस्याऽसिद्धत्वाच्चयो द्वितीया इति टतयोश्च थो न। नानपदान्ताट्टोरिति न ष्टुत्वं। निट्त्सु। निट्सु। षढोः कः सि। ८।२।४१। ष
स्य ढस्य च कः स्यात्सकारे परे। इति तु न भवति। जश्त्वं प्रत्यसिद्धत्वात्। केचित्तु व्रश्चादिसूत्रे दादेर्धातोरिति सूत्राद्धातोरित्यनुवर्त्तयन्ति। तन्मते नश्च
न जकारः। निज्भ्यां। निज्भिः। जश्त्वं श्चुत्वं चर्त्वं। निच्शु। चोः कुरिति कुत्वं न भवति। जश्त्वस्याऽसिद्धत्वात्। मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः॥
शसादौ वा। पृतः। पृता। पृद्भ्यां। पक्षे सुटि चरमावत्। गोपा विश्वपावत्। मतिः। प्रायेण हरिवत्। स्त्रीत्वान्नत्वाऽभावः। मतीः। नात्वं नामत्या॥ ॥

द्वाश्रयत्वेन बहिरंगत्वात्। ङेराममपि जरसादेशो नित्यत्वाद्बाधते। न चाकाररूपावंतात्परस्य ङेराम् इति कृते सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तौ न तस्य नित्य
तेति वाच्यं। रूपमालायां जरसीत्युक्तत्वादिष्टानुरोधाद्रुक्तपरिभाषाया अनित्यत्वाभ्युपगमे बाधकाभावादिति ॥ स्वाश्रयमिति। यत्रादिसु वा श्रयं तन्निमित्तकमि
त्यर्थः। यत्रादिश्च पद एव याडागमापादनात्। स्व शब्देन तत्पराऽमृश्यते। स्थानिवद्भावेनेति॥ नन्वेवं लाक्षणिकत्वात्कथमिह याट्स्यादिति वाच्यं ॥ ॥ ॥

समासात्पाविभक्तिस्तस्यां परतः तिस्रादेशः स्त्रियाः पुंवदिति प्रियाशब्दस्य पुंवद्भावः। ऋदुशनेत्यनङ्। यद्यपि इह जहत्स्वार्था वृत्तिपक्षे त्रिशब्दस्य निष्ठेक
त्वेन स्त्रीवाचित्वं दुर्लभं तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या। उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिसिद्धांतप्रवादस्यैवमेव निर्वाह्यत्वात्। अजहत्स्वार्था वृत्ति
पक्षे तु स्त्रीनिष्ठसंख्यासमर्थकयोस्त्रिचतुरोरिति विवक्षितोऽर्थस्तेन प्रियास्त्रयः स्त्रियो वा यस्याः सा प्रियत्रिरित्यत्र प्रियत्रिशब्दस्य स्त्रियां वृत्तित्वेऽपि न तिस्रादेश
प्रसंगः प्रत्ययोत्तरपदयोश्चेत्येतत्सूत्रगतभाष्यग्रंथसंदर्भस्वोक्तव्याख्याने प्रमाणं। अनित्यत्वादिति। इकोऽचीत्यत्र ग्रहणमिह लिंगं। तथा हि। भ्यांभिसादिषु सत्स्वपि
नुमि नलोपः प्रातिपदिकांतस्येति तल्लोपसंभवात् अचीति व्यर्थं। न च न ङिसंबुद्ध्योरिति निषेधात् संबुद्धौ लोपो न संभवतीति तत्र निष्टवारणाय अचीत्यावश्यक
मिति वाच्यं। संबुद्धिश्च लुका लुप्तेति नुमः प्राप्तेरेव तत्र दुर्लभत्वात्। न लुमतेति निषेधस्यानित्यत्वं विना तत्र प्रत्ययलक्षणाप्रवृत्तेः। नाप्युत्तरार्थं तदिति वाच्यं। उ
त्तरत्र वक्तव्ये तत्राचीति करणस्यैव युक्तत्वात् न लुमतेति निषेधस्यानित्यत्वे तु संबुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुं तदिति भवत्येवाच्ग्रहणं लिंगं। न चे
दमनित्यत्वं संबुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यं लक्ष्यानुरोधेनान्यत्रापि क्वचित्तदभ्युपगमे बाधकाभावात्। अत एव प्रियतिसृ प्रियत्रीति रूपद्वय
मपि कैयटेन स्वीकृतं। इत्यादीति प्रियतिस्रे प्रियतिसृणो। प्रियतिस्रः प्रियतिसृणः। आमि रादेशं बाधित्वा पूर्वविप्रतिषेधेन नुमं च बाधित्वा पूर्वविप्रतिषे
धेन नुट्। प्रियतिसृणां। हे रत्वे सत्यावितिविभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तं न यासयोरिति निर्देशेन सन्निपातपरिभाषाया अनित्यत्वा
दिति भावः। अस्यं तत्वादिति। केचिदिह कृदिकारादिति पाक्षिकं ङीषमिच्छंति तन्मते तु सुलोपः पक्षे स्यादेव। अत एव वातप्रमीः श्रीलक्ष्मीति पक्षे ङ्यंताः सुस
धवश्रीरक्षितः लक्ष्मीर्लक्ष्मीहरिप्रियेति द्विरूपकोशश्चाश्रीरिति। स्यापतोऽस्यां शुक्रशोणितेऽरति॥

ह्रस्वोच इवर्णो । वर्णौ स्त्रियामिति । ओत्वे प्राप्त इति । ङेराम् इत्यपेक्षया परत्वादिति भावः । प्राचा तु औदिति सूत्रे इदुद्भ्यामन्वये घेरिति पूर्वोत्तरसूत्रद्वयबललभ्यार्थमु पादाय घिनदीसंज्ञावर्जिताभ्यामिति व्याख्यातम् इदुद्भ्यामिति सूत्रं च नोपन्यस्तमित्यसमञ्जसमेतत् ॥ ॥ त्रिचतुरोः । अष्टन आ विभक्तौ इत्यतोऽनुवर्त्तनादाह । विभक्तौ परत इति । विभक्तौ किम् । त्रिभार्यः चतुर्भार्य इति केचित्तन्न सत् । स्त्रियाः पुंवदिति पुंवद्भावेनापीष्टसिद्धेः । किं तु प्रियादौ परतः पुंवद्भावो नेति । त्रिप्रिय इत्या द्युदाहर्त्तव्यमिति नव्याः । गुणदीर्घोत्वानामिति । तिस्रः तिष्ठन्तीत्यत्र ऋतो ङीति गुणस्य रत्वमपवादः । तिस्रः पश्येत्यत्र तु प्रथमयोरिति पूर्वसवर्णदीर्घापवादः ।

त्रिचतुरोः स्त्रियां तिसृचतसृ ।७।२।९९। स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः । अचि र ऋतः ।७।२।१००। तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः । तिसृभिः । तिसृभ्यः । २ । आमि नुमचिरेति नुट् । न तिसृचतसृ ।६।४।४। एतयोर्नामि दीर्घो न स्यात् । तिसृणाम् । तिसृषु । स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः । इत्यादि मतिवत् । आमि प्रियत्रयाणामिति विशेषः । प्रियास्तिस्रो यस्येति विग्रहे तु । प्रियतिसा । प्रियतिस्रौ । प्रियतिस्रः । प्रियतिस्रम् इत्यादि । प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि । स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावान्न तिस्रादेशः । न लुमतेति निषेधस्याऽनित्यत्वात्पक्षे प्रियतिसृ । रादेशात्पूर्वं विप्रतिषेधेन नुम् । प्रियतिसृणी । प्रियतिसृणि । तृतीयादिषु वक्ष्यमाणात्पुंवद्भावविकल्पात्पर्याये नुमभावो । प्रियतिस्रा । प्रियतिसृणा इत्यादि । द्वेरत्वे सत्याप् । द्वे । द्वाभ्याम् । द्वयोः । गौरी । गौर्यौ । गौर्यः । नदीकार्यम् । हे गौरि । गौर्यै । इत्यादि । एवं वाणी नद्यादयः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणादनङ्णिद्भावे च प्राप्ते विभक्तौ लिङ्गविशिष्टाऽग्रहणम् । सखी । सख्यौ । सख्य इत्यादि गौरीवत् । अङ्यन्तत्वान्न सुलोपः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री । हे स्त्रि ।

प्रिय तिस्र आगतः प्रियतिस्रः स्वमित्यत्र ऋत उदित्युत्वस्येति विवेकः । यद्यपि मध्येऽपवादन्यायेन दीर्घोत्वयोरेव रत्वमपवादः स्यान्न तु ऋतो ङीति गुणस्य तथापि बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वमेवेह बाध्यत इति भावः । त्रिचतुरोर्विशेषणादिति । श्रुतत्वाद्धि त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषणं नाङ्गस्ये ति भावः । प्रियतिसेति प्रियजसन्निजस इति स्थिते । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इत्यत एव तिस्रादेशे सुपो लुकि कृते ॥ ॥ ॥

संज्ञाया अभावात् ङिति ह्रस्वश्चेत्यादिर्न प्रवर्त्तत इति भावः। नषट्स्वस्त्रादिभ्यः। स्त्रियां यदुक्तं तन्न भवतीति व्याख्यानादनन्तरोङीविवव्यवहितस्यापि निषेध्यत इत्याशयेनाह। ङीप्टापौ नेति। स्वस्त्रादीनां ङीप्प्राप्तः। षट्संज्ञकानां तु भोः। स्वसातिस्र इति। न तिसृचतसृ इति नामि दीर्घत्वप्रतिषेधात् ज्ञापकादेव ङीबभावे सिद्धे स्वस्रादिषु तिसृचतसृ शब्दपाठो न कर्तव्य इति कृन्मेजन्त इति सूत्रे कैयटः। स्वसेति। सावसेर्ऋन्। नत्रादु शनेत्यनङ्। ननान्दा तु स्वसा पत्युः भार्या तु भ्रातृवर्गस्य यातरः स्युः परस्परं यायोर्गो वदिति। गमेर्डो। बाहुलकात् युतेरपि। डित्वाट्टिलोपः। ओतोणिदिति णिद्वद्भावाद्वृद्धिः। राः। एवं वेदितिय च पि पुंल्लिंग एवायमर्थे रैविभवा अपीत्यमरोक्तेर्भिन्नलिंगानां न द्वन्द्व इति तेन परिभाषितत्वात्तथापि राः त्येनराः स्त्रीत्येक इति क्षीरस्वामिना स्त्रीलिंगताया अभ्युपगमादेवमुक्तं। नोर्ग्लौवदिति। ग्लानु दिभ्यां डौः। डित्वाट्टिलोपः। स्त्रियां नौ स्तरणिः स्तरिरित्यमरः। इत्यजन्ताः स्त्रीलिंगाः॥ ॥ अतोम्। अत इत्येतदधिकृतस्याङ्गस्य विशेषणं स्वमोर्नपुंसकादिति चानुवर्त्तत इत्याशयेनाह। अतोगादित्यादि। अदन्तादङ्गादित्यर्थः। स्वमोरिति। अमो मविधानं स्वमोर्नपुंसकादिति प्राप्तस्य लुको बाधनार्थं। अमस्यादिति यद्यपि मं इत्येव

अतोऽम्। ७।१।२४। अतोऽङ्गात् क्लीबात् स्वमोरम् स्यात्। अमि पूर्वः। ज्ञानं। एङ्ह्रस्वादिति हल्मात्रलोपः। हे ज्ञान। नपुंसकाच्च। ७।१।१९। क्लीबादौङः शी स्यात्। भसंज्ञायां॥

च्छित्वा सोर्मे कृते सन्निपातपरिभाषया सुपि चेति दीर्घत्वाप्रसक्त्या ज्ञानमिति रूपं सिध्यति। द्वितीयैकवचनेऽत्वादेः परस्येत्यकारस्य मकारे कृते अंत्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टं तथापि संयोगान्तलोपोऽसिद्ध इत्यभिप्रायेणेदं व्याख्यातं। यत्वाहुः। अमिति पदच्छेदाकरणे अतिजरसमिति न सिध्येदिति तन्न भसात्। सोरमि कृते सन्निपातपरिभाषया जरसादेशस्य प्रवृत्त्या अतिजरमिति रूपस्यैवेष्यमाणत्वात्। द्वितीयैकवचने त्वतोमिति बाधित्वा परत्वाज्जरसि कृते सन्निपातपरिभाषया लुकोऽप्रवृत्तावतिजरसमिति रूपसिद्धेश्चेति दिक्। ज्ञानमिति। ज्ञप्तिर्ज्ञानं। ल्युट्। ततः प्रवारणाकौ कृत्तद्धितेति प्रातिपदिकत्वात् स्वाद्युत्पत्तिः। हल्मात्रेति। हे ज्ञानस् इति स्थिते संबुद्धिलोपात्परत्वादमादेशे कृते अमि पूर्वत्वे च तस्यान्तवद्भावात् ह्रस्वान्तमंगं भवतीति ततः परस्य संबुद्धिसंबंधिनो मकारस्य लोप इत्यर्थः। नपुंसकाच्च। जसः शी औङ आप इत्यतः शी औङ इति चानुवर्त्तत इत्यभिप्रेत्याह। क्लीबादौङ इत्यादि। भसंज्ञायामिति। सुडनपुंसकस्येति पर्युदासेन असर्वनामस्थानत्वादौङ्यचि भमिति प्रवर्त्तत इति भावः॥

स्त्री। स्यायते र्ड्रट् लोपो व्योरिति यलोपः। टित्वात् ङीप्। ङ्यन्तत्वात्सुलोपः। परत्वादिति। स्त्रियाः इतीयङ्-पेक्षया इयादेशो विनान्यत्रेति। अजादौ य इयादेशो विहितः स उपस
र्जनत्वेऽंसि विद्यमानस्य स्त्री शब्दस्य ओसादिषु चतुर्ष्वेव नत्त्वन्यत्र गुणनाभावादिभिः पूर्वोक्तैः बाधितत्वादित्यर्थः। इयङ्-वङ्-स्थानावित्यस्यैवेति। सूत्राख्यावित्यनुव
र्तनादियङ्-वङ्-स्थानाविति ईदूतो र्विशेषणं तेन इयङ्-वङ्-स्थानावीदूतावेवा स्त्रीति पर्युदस्तो न तु ह्रस्वाविति भावः। श्रीरिति क्विब्विच्प्रच्छीत्यादिना क्विब्दीर्घोऽयं त

स्त्रियाः। ६।४।७९। स्त्री शब्दस्येयङ्-स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः। वाम्शसोः। ६।४।८०। अमि शसि च स्त्रिया इयङ्-वा स्यात्। स्त्रीं। स्त्रियं। स्त्रि
यौ। स्त्रियः स्त्रीः। स्त्रिया। स्त्रियै स्त्रियाः २। स्त्रियोः। परत्वान्नुट्। स्त्रीणां। स्त्रियां। स्त्रियोः। स्त्रीषु। स्त्रियमतिक्रान्तः। अतिस्त्रिः। अतिस्त्रियौ। गुणनाभावेऽत्व ङ्गिः
परत्वात्पुंसि वाध्यते। क्लीवे नुमा च स्त्री शब्दस्य पङि-त्यव धार्य्यतां १ जसि च। अतिस्त्रयः। हे अतिस्त्रे। अतिस्त्रियौ। अतिस्त्रयः। वाम्शसोः। अतिस्त्रिं।
अतिस्त्रियं। अतिस्त्रियौ। अतिस्त्रियः। अतिस्त्रीन्। अतिस्त्रिणा। घेर्ङिति। अतिस्त्रये अतिस्त्रेः २ अतिस्त्रियोः २ अतिस्त्रीणां। अच्च घेः। अतिस्त्रौ। औसो
का स्त्वनित्यं स्यादम्शसोस्तु विभाषया। इयादेशोऽचि नाऽन्यत्र स्त्रियाः पुंस्युपसर्ज्जने क्लीवे तु नुम्। अतिस्त्रि। अतिस्त्रिणी। अतिस्त्रीणि। अतिस्त्रिणा।
अतिस्त्रिणेऽडे-प्रभृतावजादौ वक्ष्यमाणपुम्वद्भावात्पक्षे प्राग्वद्रूपं। अतिस्त्रये। अतिस्त्रिणे। अतिस्त्रेः अतिस्त्रिणः। अतिस्त्रिणोः। अतिस्त्रियोरित्यादि। स्त्रि
यान्तु प्रायेण उम्वत्। शसि। अतिस्त्रीः। अतिस्त्रियाङि-ति ह्रस्वश्चेति ह्रस्वान्तत्वप्रयुक्तो विकल्पः। अस्त्रीति इयङ्-वङ्-स्थानावित्यस्यैव पर्युदासः।
तत्सम्बद्धस्यैव चानुवृत्तेः। तस्माद्दीर्घस्यैवायं निषेधो न तु ह्रस्वस्य। अतिस्त्रियै अतिस्त्रयै। अतिस्त्रियः २ अतिस्त्रीणां अतिस्त्रियां अतिस्त्रौ। श्रीः। श्रियौ।
श्रियः। नेयङु-वङ्-स्थानावस्त्री। १।४।४। इयङु-वङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न तु स्त्री। हे श्रीः। श्रियौ। श्रियै श्रिये श्रियाः श्रियः। ११

लाभावान्नञ्
लोपः। नेयङु-वङ्-स्थानावस्त्री। तिष्ठतो ययोरिति स्थानौ। अधिकरणे ल्युट्। इयङु-वङोः स्थानाविति षष्ठी समासः। तथा च फलितार्थमाह। इयङु-वङोः स्थितिर्ययोरिति। स्था
नग्रहणं किं। प्रकृष्टा धीः प्रधीः। हे प्रधि अत्र एरनेकाच इति यणा इयङो वाधनान्नेयङु-वङ्-स्थानाविति निषेधो न प्रवर्तते। यत्रेयङु-वङौ निष्पद्येते तत्रैव नदीसंज्ञाया निषेधः
यत्र त्वपवादेन वाध्येते तत्र न निषेध इत्येतदर्थं हि स्थानग्रहणं कृतं। अन्यथा नेयङु-वङोरित्येव ब्रूयात् इयङु-वङोर्निमित्तभूतो यू नदीसंज्ञको नेत्यर्थलाभात्। अस्त्रीति

यद्यत्र भाषितः पुमान्येन शब्देन स भाषितपुंस्कः शब्द इति विज्ञायेत तदा पीलुने इत्यादावतिप्रसंगः स्यात् अतो व्याचष्टे प्रवृत्तिनिमित्तैक्य इति अयं भावः भाषितः पु
मान्यस्मिन्नर्थे तत् भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति अर्शआदित्वादच् तेनैकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपं तल्लभ्यत इति। इको वि
भक्तौ इत्यतोऽचीत्यनुवर्तनादाह। टादावचीति। इगंते किं। सोमपेन कुलेन। अचि किं। ग्रामणिभ्यां कुलाभ्यां। टादौ किं। अनादिनी। अनादीनि। तत्फलमिति पीलोः फ

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः। ७।१।७५॥ एषामनङ् स्याट्टादावचि स चोदात्तः। अल्लोपोऽनः। दध्ना। दध्ने। दध्नः। दध्नोः। शदध्नां। दध्नि। दधि
नि शेषम्वारिवत्। एवमस्थिसक्थ्यक्षि। तदन्तस्याप्यनङ्। अतिदध्ना। सुधि। सुधिनी। सुधीनि। हे सुधे। हे सुधि। सुधिया। सुधिना। सुधियां। सुधी
नां। प्रध्या। प्रधिना। मधु। मधुनी। मधूनि। हे मधो। हे मधु। एवमम्वादयः। सानुशब्दस्य स्नुर्वा। स्नूनि। सानूनि। प्रियक्रोष्टु। प्रियक्रोष्टुनी। तृज्वद्भावात्पू
र्वविप्रतिषेधेन नुम्। प्रियक्रोष्टूनि। टादौ पुम्वत्पक्षे प्रियक्रोष्ट्रा। प्रियक्रोष्टुना। प्रियक्रोष्ट्रे। प्रियक्रोष्टवे। अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमे
व। प्रियक्रोष्टुना। प्रियक्रोष्टुने। नुमचिरेति नुट्। प्रियक्रोष्टूनां। सुलु। सुलुनी। सुलूनि। पुनस्तद्वत्। सुलुना। सुल्वा। धातृ। धातृणी। धातॄणि। हे धा
तः। हे धातृ। धात्रा। धातृणा। एवं ज्ञातृकर्त्रादयः। एच इग्घ्रस्वादेशे। १।१।४८। आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात्। प्रद्यु। प्रद्युनी। प्रद्यूनि।
प्रद्युनेत्यादि। इह न पुम्वत्। यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाऽभावात्। एवमग्रेऽपि। प्ररि। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतस्याऽ
नन्यत्वाद्रायो हलीत्यात्वं। प्रराभ्यां। प्रराभिः। नुमचिरेति नुट्यात्वे प्रराणामिति माधवः। वस्तुतस्तु सन्निपातपरिभाषया नुट् स्यात्वन्न। नामीति
दीर्घस्यारम्भसामर्थ्यात्परिभाषाबाध। नरं त्वं प्ररीणां। सुनु। सुनुनी। सुनूनि। सुनुना। सुनुने इत्यादि। इत्यजन्तानपुंसकलिङ्गाः ॥ ॥

लं पीलु। फले लुगिति ओरलोलुक्। प्रवृत्तिनिमित्तभेदादिति। पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तं फले तु फलत्वव्याप्यजातिर्वस्तु विशेष ६९
प्रभवत्वं वा उभयथापि पुन्नपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः ॥ ॥ अस्थिदधि। इको चीति नुमि प्राप्ते विधिरयं नकार एकार उच्चारणा
र्थः। ङकारस्तु तादेशार्थः। न चि षयस्यानिसंतस्येति फिट्सूत्रेणाद्युदात्तं स्यादपर एते आद्युदात्ताः। तत्रान्तस्यानुदात्तेकारस्य विधीयमानो ॥ ६ ॥

यस्येति। इश्च अश्च यं तस्य तदाह। इवर्णावर्णयोरिति। ईति चेति। चकारेणानस्तद्धित इत्यतस्तद्धितोऽनुकृष्यते तदाह। ईकारे तद्धिते चेति। औङः श्यामिति विभक्त्यपेक्षया स्त्रीलिंगनिर्देशः नेदं वचनं कर्तव्यं। विभाषा ङिश्योरित्यतः श्यामिति प्रकृते न संयोगादित्यतो नेति च तत्राभिसंबंधमात्रं कर्तव्यं यस्य ईकारे तद्धिते च लोपो भवति श्यां नेत्याकरः। जश्शसोः। जसा साहचर्यादिह सुबेव शस् गृह्यते। तेनेह न। कुंडशो ददाति। शिसर्वनाम स्थानं। महासंज्ञाकरणं पूर्वाचार्यानुरोधेन। नपुंसकस्य। इदितो नुम् धातोरित्यतो नुमनुवर्त्तते उगिदचामित्यतः सर्वनामस्थाने च अंगस्येति चाधिकृतं। तथा च झलन्तभ्यां नपुंसकमंगं विशेष्यते विशेषणेन च तदंतविधिर्भवतीत्याह॥ स्व

यस्येति च। ६।४।१४८। भस्य वर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे इत्यकारलोपे प्राप्ते। औङः श्यां प्रतिषेधो वक्तव्यः। ज्ञाने। जश्शसोः शिः। ७।१।२०। क्लीबादनयोः शिः स्यात्। शि सर्वनामस्थानं। १।१।४२। शिइत्येतदुक्तसंज्ञं स्यात्। नपुंसकस्य झलचः। ७।१।७२। झलंतस्याजन्तस्य च क्लीबस्य नुमागमः स्यात् सर्वनामस्थाने परे। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं रामवत्। एवं धनवनफलादयः। अद्ड्डतरादिभ्यः पञ्चभ्यः॥ ७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात्। टेः। ६।४।१४३। डिति परे भस्य टेर्लोपः स्यात्। वावसाने। कतरत्। कतरद्। कतरे। कतराणि। भस्येति किं। पञ्चमः। टेर्लुप्तत्वात् प्रथमयोरिति पूर्वसवर्णदीर्घः एङ्ह्रस्वादिति संबुद्धिलोपश्च न भवति। हे कतरत्। पुनस्तद्वत्। शेषं पुंवत्। कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमशब्दस्य तु। अन्यतममित्येव। एकतरात् प्रतिषेधो वक्तव्यः। एकतरं। सोरमादेशे कृते सन्निपातपरिभाषया न जरस्। अजरं। अजरसी। अजरे। परत्वाज्जरसि कृते झलन्तत्वान्नुम्॥

११ लंतस्येत्यादि। अद्ड्डतरादिभ्यः। पंचभ्य इति किं नेमं तिष्ठति। नेमं पश्य डतरडतमौ प्रत्ययौ डतर डतम इतरान्यान्यतरेति सर्वादिषु पठिताः। अद्डादेशः स्यादिति। जिघृक्षितादेशस्वरूपप्रतिपादनाय ड्डुत्वं न कृतं। टेः। तिविंशतेरित्यतो डितीत्यनुवर्त्तते भस्येति चाधिकृतं तदाह। डिति परे भस्येति। भस्य किं। पंचमः। अन्नडटोमडागमे भत्वाभावाट्टिलोपो न भवति॥ किंतु पदत्वात् नलोप एव। अद्डो डित्करणस्य प्रयोजनमाह। टेर्लुप्तत्वादित्यादि। ननु पूर्वसवर्णदीर्घाभावाय ददेश एव क्रियतां किमड्डादेशेनेत्याशंक्याह। एङ्ह्रस्वादित्यादि। ददेशे तु हे कतरेति स्यादिति भावः। अन्या

रयोस्तु उकारः। एकारांतस्योदाहरणंतुइः स्मृतोयेनसस्मृतेः शोभनः स्मृतेर्यस्यतत्सुस्मृतीत्यादि। एतच्चपरिभाषासूत्रमपार्थकं। तथाचवार्तिककृतोक्तं सिद्धमेङः सस्था
नत्वादेचौश्चोत्तरभूयस्त्वादिति। अस्यार्थः। शब्दपरविप्रतिषेधेनएङउत्तरभागोतरतमौइउवर्णावेवेतिसिद्धं। एचोश्चेतिचकारोभिन्नक्रमः। उत्तरभूयस्त्वाच्चेतिहेतोरनं
तरंबोध्यः। अर्द्धमात्रा अवर्णस्यअध्यर्द्धमात्राइवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मत्वग्रामादिवद्भूयसाव्यपदेशेनापिइकारोकारौभविष्यतइतिमन्युनेति। ननुप्रकृ
ष्टस्वर्गवत्वादिकंयत्प्रवृत्तिनिमित्ततत्पुंनपुंसकयोः समानमितिभाषितपुंस्कत्वात्पक्षेपुंवत्भावोनस्यादेवेत्याशंकायामाहायदिगंतमितिएतच्चरादानेइति धा
तोरतिरिन्नाप्सरणाकुलमितिप्रक्रम्यमाधवेनस्पष्टीकृतं। कथंतर्हिमघवाप्रायासुनावित्यप्युदाहृतंइतिचेदत्राहुः। प्रकृष्टस्वर्गवत्वादिप्रवृत्तिनिमित्तेक्पात्सुयोशब्दो
भाषितपुंस्कः सएवइदानीमिगंतस्तथाचप्रयुशब्दोपिभाषितपुंस्कएवएकदेशविकृतस्यानन्यत्वादजंः पुंवत्भावोभवतीतिइत्यंचपुंवत्भावः। एजंतेषुमाधवम

होढः। ८।२।३१। हस्यढस्याज्झलिपदान्तेच। हलङ्याविति सुलोपः। पदान्तत्वाड्डस्यढः। जश्त्वचर्त्वे। लिट्। लिड्। लिहौ। । लिहः। लिहा। लि
ड्भ्यां। लिड्भिः। लिट्त्सु। दादेर्धातोर्घः। ८।२।३२। उपदेशेदादेर्धातोर्हस्यघस्याज्झलिपदान्तेच। उपदेशे किं। अधोगित्यत्रयथास्यात्। दा
मलिहमात्मनइच्छतिदामलिह्यति। ततः क्विपि दामलिट्। अत्रमाभूत्॥ ९९

तेनास्तिमतांतरेत्वस्तीतिबोध्यं। प्ररीतिप्रकृष्टारायः यस्यतत्। शोभना
नौर्यस्यतत्सुनु। इत्यजंताः नपुंसकलिंगाः॥ ॥ होढः। झलोभलिपरस्यस्कोः संयोगाद्योरंतेचेत्यतोन्तलीतिपदस्यांतइतिचानुवर्तते। तदाह। झलीत्यादि। झलिपरतः
पदांतेवाविद्यमानस्यहस्येत्यर्थः। लिडिति। लिहआस्वादने क्विप्। लिट्स्विति। ढस्यजश्त्वेनडः। तस्यखरिचेति चर्त्वेनटः। तस्यासिद्धत्वान्नयोद्वितीयाइतिपक्षे
टस्यठेनास्यष्टुत्वंचनभवति। नपदांताट्टोरितिनिषेधात्। लिट्त्स्विति। ढस्यजश्त्वेनडकारेचर्त्वस्यासिद्धत्वात्ततः। प्राणेवडः सीतिपक्षेधुट्। चर्त्वेनतकारः। ततो
डस्यचर्त्वेनटः। धुटश्चर्त्वस्यासिद्धत्वात्पक्षेचयोद्वितीयाइतितस्यथोना। ष्टुत्वंतुतकारस्यनशंक्यमेवनपदांतादितिनिषेधात्। पुनेवोक्तत्वादिति। दादेर्धातोर्घः। धा
तोरित्यावर्त्तते। तत्रैकमतिरिच्यमानमुपदेशकालंलक्षयतीत्याशयेनाह। उपदेशइति। उपदेशग्रहणस्याव्याप्तिव्याप्तिपरिहारः फलमित्याह। अधोगित्यादिना।

अनङ्स्थानेऽन्तरतम इत्यनुदात्तः स्यादित्युदात्त उच्यते तत्त्वोदात्तत्वमस्त्विति ध्वनितमादावल्लोपाभावपक्षे स्फुटं दध्ना दध्ने इत्यादावनङोऽकारलोपे अनुदात्तस्य च यत्रोदात्तलोप इ
त्युदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं प्रयोजनमिति बोध्यं। तृतीयादिष्वित्यनुवर्तते। अचीति तत्तदाह। टादावचीति। टादौ किं। दधिनी। दधीनि। अचि किं। दधिभ्यां। त
दंतस्यापीति। आंगत्वादिति भावः। अतिदध्ने इति। दधि अतिक्रांतेनेत्यर्थः॥ स्त्रियामतिदध्ने इत्येव। सन्निपातपरिभाषया बहिरंगपरिभाषया च ङीपो प्रवृत्तेः। आचार्यप्रियद
ध्नाह्लादोनेत्युक्तं। स्त्रियां तु प्रियदध्ना प्रियदध्ने इत्यादावपि केचिदिच्छंति तदसत्। उरःप्रभृतिषु दधिशब्दपाठात्। बहुव्रीहौ नित्यं कप्यनङः प्रसक्त्यभावात्। उक्तपरिभा
षाभ्यां ङीपः प्रवृत्तेर्दूरापास्तत्वाच्चेति दिक्। सुधिनी इति। परत्वान्नुमा इयङ् बाध्यते सुधियेति। शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुन्नपुंसकयोरेकमेवेति भाषितपुंस्क
त्वात् तृतीयादिष्विति पुंवत्पक्षे नुमभावान्न भूसुधियोरिति यण्निषेधाच्चेयङ्। प्रध्येति। अत्रापि प्रकृष्टज्ञानवत्त्वं पुन्नपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे य
ण्। नपुंसकपक्षे तु नमिति बोध्यं। वक्तव्यः। श्रेयस्योपसतद्बहुश्रेयसीकुलमित्यत्र नपुंसकह्रस्वत्वं नाईयसो बहुव्रीहेर्नेति ह्रस्वमात्रस्य प्रतिषेधादित्येके। अन्ये तूप
सर्जनह्रस्वएव निषिध्यते। नपुंसकह्रस्वत्वं तु स्यादेव। बहुश्रेयसि बहुश्रेयसिनी इत्याहुः। मध्विति। मधु मद्ये पुष्परसे मधु वसंते चैत्रे च। इह पुन्नपुंसकयोरेकं प्र
वृत्तिनिमित्तं नास्ति किंतु मद्यत्ववसंतत्वादि रूपं भिन्नभिन्नमेव। तथा च भाषितपुंस्कत्वाभावान्मधुने मधुनः मधुनोरित्येव भवति न तु मध्वे मध्वोरित्यादीति
दिक्। स्नुर्वेति। मांसपृत्स्नानासानूनामिति वार्तिककारोक्तेरिति भावः। स्नुः प्रस्थः सानुरस्त्रियामित्युभयलिंगः सानुशब्दस्तस्य नपुंसकत्वे रूपमाह। स्नूनि सानूनीति।
पुंसि तु स्नून् सानून् इत्यादि। सुल्वेति। शोभनलवनकर्तृत्वं पुन्नपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे नुमभावादोः सुपीति यण्। सुलुनेति। यणं बाधित्वा
परत्वान्नुम्। धात्रेति। धारणपोषणकर्तृत्वं पुन्नपुंसकयोरेकमेवेति पुंवत्पक्षे यण्। एचः। आदिश्यत इत्यादेशः ह्रस्वश्चासावादेशश्च ह्रस्वादेशः। निर्धारणे सप्त
मी जातावेकवचनमतो व्याचष्टे आदिश्यमानेषु ह्रस्वेषु मध्य इति। एचां पूर्वभागोऽकारसदृशः उत्तरस्तु इवर्णोवर्णसदृशस्ततो भयांतरतमस्य ह्रस्वस्याभावा
त्पर्यायेणाकारस्यादिकारोकारौ च स्यातां तथा च माकदाप्यकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह इगेव स्यादिति। आंतरतम्यादेकारैकारयोरिकारः।
॥ ओकारौका ॥ ॥

अत्र कैयटः। यथासंख्यसंबंधात्संप्रसारणसंज्ञाऽत्र न भवतीति। नन्वनुवादे परिभाषाणामनुपस्थानात्कथमिह यथासंख्यत्वलाभः। नन्वेवं स्थानयोगोऽपि न लभ्ये तेति वाच्यं षष्ठी स्थानेयोगेत्यत्र एतत्सूत्रमनुवर्त्य व्याख्यानात्तल्लाभात्। अत्राहुः। तन्नाहत्याद्याश्रयणे न संप्रसारणस्येति सूत्रे तज्ज्ञापितग्रहणाद्दुहितरामित्यत्र हल इति संप्रसारणस्य दीर्घो न भवति। लङ्स्थानिकस्येटः संप्रसारणशब्देनाभावितत्वात्। नन्वेवमप्यक्षद्युवोऽक्षद्युव इत्यादौ ऊठः संप्रसारणसंज्ञायां संप्रसारणाच्चेति पूर्वरूपं स्यादिति चेत्तन्न। संप्रसारणे पूर्वत्वे समानाङ्गग्रहणं कर्त्तव्यमिति वार्त्तिककृतोक्तत्वात् वार्णादाङ्गस्य बलीयस्त्वाद्वा उवङेव स्यात्। अत्र नव्याः। ष्यङः संप्रसारणमित्यादिविधिप्रदेशेष्वेव पराः इक् इति पठित्वा संप्रसारणसंज्ञासूत्रं त्यक्तुं शक्यमित्याहुः। वाह ऊठ्। एत्येधत्यूठ्स्विति विशेषणार्थं षकारो हलन्त्यमितीत्संज्ञकः। अत्र भस्येत्यधिक्रियते। वसोः संप्रसारणमित्यतोऽनुवृत्तं संप्रसारणमूठो विशेषणं तेनालोऽन्त्यस्येति न भवति तदेतदाह। भस्य वाह इत्यादि। प्राचात्

सम्प्रसारणाच्च ६।१।१०८। सम्प्रसारणादचि पूर्वरूपमेकादेशः स्यात्। एत्येधत्यूठ्सु विश्वौहः। विश्वौहेत्यादि। छन्दस्येव ण्विरिति पक्षे णिजन्ताद्विच्। चतुरनडुहोराम् उदात्तः ७।१।९८। अनयोराम् स्यात्सर्वनामस्थाने परे स चोदात्तः। सावनडुहः ७।१।८२। अस्य नुम् स्यात्सौ परे। आदित्यधिकारादवर्णात्परो यं नुम्। अतो विशेषविहितेनाऽपि नुमाऽऽम्बाध्यते। आमा च नुम्बाध्यते। सोर्लोपः। नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं न। संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न। अनड्वान्। अमसम्बुद्धौ ७।१।९९। चतुरनडुहोरम् स्यात्सम्बुद्धौ। आमोऽपवादः। हे अनड्वन्। अनड्वाहौ। अनड्वाहः। अनडुहः। अनडुहा॥ ९ वाहो वाशब्दस्य संप्रसारणं स्यादित्युक्तं तच्च फलितार्थकथनपरतया कथंचिन्नेयमित्याहुः॥

॥ॐ॥ संप्रसारणाच्च। आमि पूर्व इत्यतः पूर्व इत्यनुवर्तते। इको यणचीत्यतोऽचीति च। एकः पूर्वपरयोरिति चाधिक्रियते। तदाह। संप्रसारणादचीत्यादि। छन्दस्येव ण्विरिति। वहश्चेति सूत्रे भजो ण्विः छन्दसि सह इत्यतो ण्विप्रत्ययस्य छन्दसीत्यस्य चानुवृत्तेरिति भावः। स्यादेतत्। वाह इत्येव सूत्रमस्तु संप्रसारणमेवात्र विधीयतां। तस्य लघूपधगुणो वृद्धिरेचीति वृद्धौ सिद्धं विश्वौह इत्यादि किमूठ्ग्रहणेन सत्यं। एवं स्थिते क्रियमाणमूठ्ग्रहणं वहिरङ्गपरिभाषां ज्ञापयति। तस्यां हि सत्यां जातस्य वहिरङ्गस्य संप्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितं। अन्यच्च नकारान्तोपपदेऽकारान्तोपसर्गोपपदे च रूपे विशेषः स्यादिति कथमूठ्ग्रहणं ज्ञाप॥

एकाचोवशोभष्झलीतिनिवृत्तमिति। धुग्भ्यांधुग्भिरित्यादौपदान्तइत्येवभष्भावसिद्धेरितिभावः। प्राचातुप्रातिपदिकस्यतु झलिपदान्तेचेति व्याख्यातंतन्नप्रामादि
कमेव। अधोक् अधेक्‌इत्याद्यसिद्ध्यापत्तेः। प्रातिपदिकग्रहणस्याप्रकृतत्वाच्चाननुधातोरवयवइतिवैय्यधिकरण्येनान्वयेक्विवन्तस्यदुहेर्दादेरितिघत्वेनझषन्त
त्वेपिभष्भावोनस्यात्। दुघितिसमुदायस्ययः इरवयवोदइत्येकाच्त्वस्यझषन्तत्वाभावात्। दुघइत्यत्रावयवेतुवशभावादित्यतआह। व्यपदेशिवद्भावेनेतीन
चधात्ववयवोधातुरित्येवव्यपदिश्यतां तथाचगर्भवितिसिध्येदितिवाच्यम्। अर्थवताहिव्यपदेशिवद्भावः। नचावयवोर्थवानितितस्यधातुत्वव्यपदेशासंभवात्
भष्भावइति। क्विपःप्राक्प्रवृत्तायांधातुसंज्ञायांनिरपवादत्वेनावस्थितत्वात्दादेर्धातोरितिघत्वेकृतेझषन्तत्वादितिभावः। धुगिति। दुहप्रपूरणे। क्विप्। वाद्रुहादु

एकाचोवशोभष्झषन्तस्यस्ध्वोः। ८।२।३७। धातोरवयवोयएकाच्झषन्तस्तदवयवस्यवशःस्थानेभष्स्यात्सकारेध्वशब्देपदान्तेच। एका
चोधातोरितिसामानाधिकरण्येनाऽन्वयेतुइहनस्यात्। गर्द्भमाऽऽचष्टेगर्द्भयति। ततःक्विपिणिलोपे। गर्द्भप्। झलीतिनिवृत्तम्। सध्वोर्ग्र
हणसामर्थ्यात्तेनाद्ग्धोर्दोग्ध्या। व्यपदेशिवद्भावेनधात्ववयवत्वाद्भष्भावः। जश्त्वचर्त्वे। धुक्। धुग्। दुहौ। दुहः। पत्वचर्त्वे। धुक्षु। वाद्रुहमुहष्णु
हष्णिहाम्। ८।२।३३। एषांहस्यवाघस्याज्झलिपदान्तेच। पक्षेढः। धुक्। धुग्। धुट्। धुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्। धुड्भ्याम्। धुक्षु। धुट्सु। धुट्त्सु। एवं
मुहष्णुहष्णिहाम्। इग्यणःसम्प्रसारणम्। १।१।४५। यणःस्थानेप्रयुज्यमानोयइक्ससम्प्रसारणसंज्ञःस्यात्। वाहऊठ्। ६।४।१३२। भस्यवाहःस
१९ प्रसारणमूठ्स्यात् ॥

हजिघांसायांमुहवैचित्त्ये। ष्णुहउद्गिरणे। ष्णिहप्रीतौ। द्रुहेर्दादित्वान्नित्यंप्राप्ते। अन्येषामप्राप्तेउभयत्रविभाषेयं। ननुद्रुहादयोदि
वादिष्वनेनैवक्रमेणपठ्यन्तेतत्रवाद्रुहादीनामित्येवास्तु दिवाद्यन्तर्गणस्यपुषादेरन्तर्गणोरधादिस्तदन्तर्गणोद्रुहादिरस्तु। रधादिगणसमाप्तयेस्निहधातोरनंतरं
वृत्करणस्यकृतत्वेनातिप्रसंगशंकायानिरवकाशत्वात्। मैवं। तथाहिसतियङ्लुकिदोधुक् दोधुट् इत्यादिनसिध्येत्। निर्दिष्टपद्धेनचेतिनिषेधात्। इग्यणः।
यणःस्थानेइति। विधिप्रदेशेषुसूत्रशाटकवद्भाविसंज्ञाश्रयणान्नान्योन्याश्रयः। ननुपरोःस्थानिकस्येकःसंप्रसारणत्वेऽदुहितरामित्यत्रलङोलकारस्यस्था
नेउत्तमपुरुषैकवचनमिट्। तस्ययणस्थानिकत्वेनसंप्रसारणसंज्ञायांसत्यांहलइतिदीर्घःस्यात्। नरपप्रतिलङः तस्यागत्वादितिचेत् ॥ ० ॥

णो न सानुबंधकस्येति परिभाषया तेनास्त्युरित्यादौ न भवति। न च तत्रांतरंगत्वादूठेव स्यान्न तु ओत्वप्रसक्तिरिति वाच्यं। उठि कृतेप्येकदेशविकृतन्यायेन दिवश्रौ दित्वस्यापि प्रसक्तिसंभवादिति दिक्। दिव उत् तपरकरणमिह द्युभ्यामित्यादावुकारस्य संप्रसारणत्वाद्धल इति दीर्घे प्राप्ते तन्निवारणायेत्याहुः। वांताः। चत्वार इति। चतेरुरन्नित्युरन् अत्यर्थात् स्वगुरुः शब्दस्ततो जसि चतुरनडुहोरित्याम्॥ ॥षट्चतुर्भ्यश्च। बहुवचननिर्देशादर्थस्य प्राधान्यं विवक्षितं। अर्थोच्चामः पर इति। चतेरुरन्नित्युरन् अत्यर्थात् ... त्वशब्दहारकं तेन न तदंतविधौ सत्यपि परमचतुर्णामित्यादावेव भवति नतु बहुव्रीहेति देतद्ध्वस्यति। गौणत्वे तु नुट्नेष्यत इत्यादिना द्वित्वमिति। अचो रहाभ्या मित्यनेनारो सुपि। सुपीति न प्रत्याहारः खरीत्यनुवृत्तेः। तेन पयोभ्यामित्यादौ विष्यर्थमेतन्न भवति। खरवसानयोरित्येव सिद्धे यमारंभो नियमार्थ इत्याह। रोरेवेति। रोः सुप्येव विसर्जनीय इति विपरीतनियमस्त्विह न भवति। हलो नंतराः संयोग इत्यादिनिर्देशात्। शरो चि। अचो रहाभ्यामित्यतो द्वे इति नादिन्याक्रोश इत्यतो नेति

षट्चतुर्भ्यश्च। ७।१।५५। षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात्। णत्वं द्वित्वं चतुर्णां। रोः सुपि। ८।३।१६। सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य। षत्वं षस्य द्वित्वे प्राप्ते। शरोऽचि। ८।४।४९। अचि परे शरो न द्वे स्तः। चतुर्षु। प्रियचत्वाः। हे प्रियचत्वः। प्रियचत्वारौ। गौणत्वे तु नुण्नेष्यते। प्रियचतुरां। प्राधान्ये तु स्यादेव। परमचतुर्णां। कमलम्। कमलौ आचक्षाणः। कमल्। कमलौ। कमलः। षत्वं कमल्षु। मो नो धातोः। ८।२।६४। धातोर्मस्य नः स्यात्पदांते। नत्वस्यासिद्धत्वान्नलोपो न। प्रशाम्यतीति प्रशान्। प्रशामौ। प्रशामः। प्रशान्भ्यामित्यादि॥

चानुवर्तत इत्याह। न द्वे स्त इति। नन्वस्तु द्वित्वमेकस्य भ रो भरि सवर्ण इति लोपे सिद्धमिष्टमेवं। लोपस्य वैकल्पिकत्वेन पक्षे द्वयोः श्रवणप्रसंगात्। प्रियाः चत्वारश्चत्वारि यस्य स प्रियचत्वाः। आंगत्वान्नदंतस्यापि चतुरनडुहोरित्याम्। हे प्रियचत्व इत्यत्र तु अम्संबुद्धावित्यम्। रांताः। कमलामिति। कमला श्रीर्हरिप्रियेत्यमरः। कमलमिति। तत्करोतीति तदाचष्ट इति णिच् इष्ठवद्भावाट्टिलोपः। णिजंतात् क्विप्। णेरनिटीति णिलोपः। एवं सलिलमाचक्षाणः सलिल्। सलिलौ। सलिल इत्यादि बोध्यं। नन्वेवं गोपमाचक्षाणः ... गोपौ गोपः इति यांताः अपि साधाः। न चैवं रपृक्तलोपात् हल्ङ्यादिलोपः पूर्वविप्रतिषेधेनेति यलोपः शंक्यः। लोपो व्योर्वलीति लोपे कर्तव्ये णिलोपस्य टिलोपस्य वा स्थानिवद्भावेन यकारस्य वलपरत्वाभावादिति चेत्। मैवं। न पदांतेति सूत्रेण यलोपे स्थानिवद्भावनिषेधात्। तस्माल्लोपो व्योर्वलीति॥

कमिति चेत्। अत्राहुः। वैयटादयः। भाष्यकारोक्त ज्ञापकबलेनैवत्तादृशस्थले एव प्रत्ययाभावोऽनुमीयत इति। एतेन भुवं वहतीति भुवाट्भूहः। भूहा। भ्रोहः। भ्रौहेत्यादि प्र
योगाः परास्ताः। चतुरनडुहोः। इतोत्सर्वनामस्थाने इत्यतोऽनुवर्त्तनादाह। सर्वनामस्थान इति। सा च नडुहः। आच्छीनद्योरित्यतो नुमनुवर्त्याह। नुम् स्यादिति। विशेषविहि
तेन यासुटा सामान्यविहितः सीयुडिव नुमा आम् बाध्यतामित्याशंकां निराकरोति अवर्णा सरोपमित्यादिना। उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावो नेतिभा
वः। अमाचेति। विशेषविहितेनापीत्यनुपपद्यते। आमा चनुम्न बाध्यत इति केचित्पठंति। तस्यायमर्थः। वहूनड्वांहीत्यत्र परत्वादामि कृते पुनः प्रसंगविज्ञानान्नपुंसकस्य झलच
इति नुम्भवत्येव न तु बाध्यत इति। नुमोदत्त्वमाशंक्याह। नुम्विधिसामर्थ्यादित्यादि। विधानसामर्थ्यात्स्वेत्राविकृते नतु माभवितव्यमिति भावः। नन्वेवमनड्वांसा

वसुस्रंसुध्वंस्वनडुहां दः। ८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। सान्तेति किं विद्वान्। पदान्तेति किं। स्रस्तं ध्व
स्तं। सहेः साडः सः। ८।३।५६। साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः। तुराषाट्। तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि। तुरं सहत इत्यर्थे
छन्दसि सह इति ण्विः। लोके तु सोढ इत्यतः क्विप्। अन्येषामपीति पूर्वपदस्य दीर्घः। दिव औत्। ७।१।८४। दिविति प्रातिपदिकस्यौत्स्यात्सौ परे। अ
ल्विधित्वेन स्थानिवत्त्वाऽभावाद्धल्ङ्याबिति सुलोपो न। सुद्यौः। सुदिवौ। सुदिवः। सुदिवं। सुदिवौ। दिव उत्। ६।१।१३१। दिवोऽन्तादेश उकारः स्यात्प
दान्ते। सुद्युभ्यां। सुद्युभिः। चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः। २॥ ९९ नेत्यत्र न च्छ्वीति रुत्वमपि न स्यादिति चेत्। अत्राहुर्भाष्यकाराः। यं विधिं प्रत्युप
देशोऽनर्थकस्स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। भवति हि दत्त्वं प्रति नुमो विधिरनर्थकः रुत्वं प्रति तु निमित्तमेवेति अनड्वानिति। अनः शकटं व
हतीति विग्रहे अनसि वहेः क्विप्। अनसो डश्चा यज्ञादित्वात्संप्रसारणं। अनडुह् इति स्थिते। आम् नुम् सुलोपेषु कृतेषु संयोगान्तलोपेन हकारलोपः ॥ ॐ ॥ वसुस्रं
सु वस्विति प्रत्ययस्तेन तदन्तं ग्राह्यं। ससजुषोरिति सूत्रात्सेत्यनुवर्तते तच्च वसोरेव विशेषणं। न तु स्रंसुध्वंसोरव्यभिचारात्। नाप्यनडुहः असंभवादित्यभिप्रेत्या
ह सान्त वस्वन्तस्येति। सहेः साडः सः। सहेरिति किं। सह्ड्डे न वर्त्तते। सडः यस्य नाम्नि ड शब्दोऽस्ति यथा मृड इति। सडस्यापत्यं साडिः। होताः दिव औत्। तकार उच्चा
रणार्थः प्रातिपदिकस्येति। अव्युत्पन्नस्य दिवेर्डिविरिति न्यासो हि तत्सूत्रेण व्युत्पन्नस्य वा ग्रहणं न तु दिव क्रीडादाविति धातोर्निरनुबंधकग्रह ॥ ॥

त्याभ्यामित्यादि सिध्यतीति किमनार्चं तत्तत्त्वोपन्यासेनेति शंक्यं। नित्यत्वाद्धलि लोपस्त्वस्यदीर्घोत्स्वेमेवप्रवृत्तेः। एकस्मिन्नित्यपमेयेसत्तमीदर्शनात्सप्तम्यर्थेएव
वतिरित्यभिप्रेत्याह। आद्यविवीतस्वेति। आदिवत्किं। औपगवः। अत्राणा आद्युदात्तत्वं यथा स्यात्। भाष्येत्वाद्यंतवदित्यपनीयव्यपदेशिवदेकस्मिन्निति सूत्रमूहितं
। विशिष्टोपदेशो व्यपदेशः। मुख्यो व्यवहारः सोस्यास्तीति व्यपदेशी। मुख्यइतियावत्। तेन तुल्यमेकस्मिन्नसहायेपिकार्यं स्यादित्यर्थः। तेनइयाय। आरेत्यादावेकाच
नेदमदसोरकोः। ७।१।११। अकारयोरिदमदसोर्भिसऐस्न स्यात्। एत्त्वं। एभिः। अत्त्वं नित्यत्वात् ङे स्मैपश्चाद्धलिलोपः। अस्मै। आभ्यां। एभ्यः। अस्मात्।
आभ्यां। एभ्यः। अस्य। अनयोः। एषां। अस्मिन्। अनयोः। एषु। ककारयोगे तु अयकं। इमको। इमके। इमकं। इमको। इमकान्। इमकेन। इमकाभ्यां। इम
कैः। इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ। २।४।३२। अन्वादेशविषयस्येदमोऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ। अश्वचनं साकच्कार्थं।
द्वितीयाटौस्स्वेनः। २।४।३४। द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे। किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुन
रुपादानमन्वादेशः। यथाऽनेन व्याकरणमधीतं। एनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलं। एनयोः प्रभूतं स्वमिति। एनं। एनौ। एनान्। एनेन। एनयोः
। गणयतेर्विच्। सुगण्। सुगणौ। सुगणः। सुगण् इस्। सु सुगण् त्सु। क्विपि। अत्र नासिकस्य क्वि झलोरिति दीर्घः। सुगाण्। सुगाणौ। सुगाणः। सुगाण्
सु सुगाण् इसु परत्वादुपधादीर्घः हल्ङ्यादिलोपः। ततो नलोपः। राजा। नङिसम्बुद्ध्योः। ८।२।८। नस्य लोपो न स्यात् ङौ सम्बुद्धौ च। हे राजन्। ङौ तु छन्दे
सुदाहरणं। सुपां सुलुगिति ङे र्लुक्। निषेधसामर्थ्यात्प्रत्ययलक्षणं। परमे व्योमन्। उत्तरपदे प्रतिषेधो वक्तव्यः। चर्मणि तिलाश्च स्यच्चर्मतिलः
। ब्रह्मनिष्ठः। राजानौ। राजानः। राजानं। राजानौ। अल्लोपोनः। श्चुत्वं। न चाल्लोपः स्थानिवत्। पूर्वत्राऽसिद्धे तन्निषेधात्। नापि बहिरङ्गतयाऽसिद्धः
यथोद्देशपक्षे षाष्ठीम्परिभाषामप्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावे परिभाषाया अप्रवृत्तेः। ज्ञ्ञोर्ज्ञः। राज्ञः। राज्ञा ॥ ६ ॥
इति द्वित्वं सिध्यति। अन्यथा आर्चं तोपदिष्टत्वाभावान्न द्वित्वं न स्यादिति दिक्॥ ॥ नेदमदसोः। भाष्ये तु इदमदसोः कात् नियमार्थमिदं इदमदसोः कादेव भिसऐस् नान्य
इति स्थिते नन्याङ्गा इदमदसोः कादिति सूत्रिते त्वकाङ्क्षिसऐस इदमदसोरेवेति विपरीतनियमोपि संभाव्येत। तथाच पाचकैरित्यादि न सिध्येत्। किंतु नेदमदसोः॥
गणत्सु

बिष्ण्वनुनासिकस्य क्वीति दीर्घः ॥८॥

यलोपः स्यादेवेति यांतानो क्ताः । लांताः । पदांत इति । प्राचा तु इत्लीत्यप्युक्तं तन्निष्फलत्वादुपेक्ष्यं । प्रशानिति । शम उपशमे । क्विप् । अनुनासिकस्य क्वीति दीर्घः ॥८॥ तेन न तिमष्टिमादीनां

किमः कः । कायते र्डिमिति डिमिप्रत्ययेन निष्पन्नः किम्शब्दः ॥ विभक्ताविति । अष्टन आ विभक्तावित्यतोऽनुवर्तत इति भावः । नन्वत्र इदम इत्येव सूत्र्यतां तेन नतिमष्टिमादीनां

क्विंतानामतिप्रसंगवारणाय त्यदादीनामित्यनुवर्त्यत्यदादीनामिमः अः स्यादिति व्याख्यास्यते तत इदिशब्दात्प्राक् किम्शब्दस्य पाठः कर्तव्यः नानर्थक इति निषेधा

ल्लोत्यविधिर्न भविष्यतीति तत्किं कादेशेनेत्यत आह । अकच्सहितस्यापीति । इमोकारविधौ तु साकच्कस्य क इति रूपं स्यादिति भावः । नन्वेवं गणकार्यत्वाभावादुपस

ज्ञेनेपि स्यात् । मेवं त्यदादीनामित्यनुवर्त्यत्यदादीनां किमः इति व्याख्यानात् इदमो मः । इन्द्रेः कमिर्नलोपश्च । इदम् । तदोः सः सावित्यतो नु वर्त्तनादाह । सो परइ

किमः कः । ७।२।१०३। किमः कः स्याद्विभक्तौ । अकच्सहितस्याप्ययमादेशः । कः । कौ । के । कं । कौ । कान् । इत्यादि । सर्ववत् । इदमो मः ७।२।१०८ इद

मो मस्य मः स्यात्सौ परे त्यदाद्यत्वापवादः । इदोऽय् पुंसि । ७।२।१११। इदम इदः स्थाने अय् स्यात्सौ पुंसि सोर्लोपः । अयं । त्यदाद्यत्वं पररूपत्व

ञ्चा । दश्च । ७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः । अनाप्यकः । ७।२।११२। अककारस्येदम इ

दोऽन् स्यादापि विभक्तौ । आविति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः । अनेन । हलि लोपः । ७।२।११३। अककारस्येदम इदो लोपः स्यादापि ह

लादौ । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे । आद्यन्तवदेकस्मिन् ।१।१।२१। एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात् आभ्यां ।

ति । इदोय् पुंसीति किं । इयं स्त्री । त्यदादेः संबोधनं नास्तीति । प्रत्युदाहरणं भाष्ये प्रयोगादर्शनमेवात्र मूलं । उत्सर्ग इति तेन न तदोः सः सावितिसूत्रे अनंत्ययोरिति किं । हे स इति भाष्यं

। भो अच्युत भवन्नच्युते त्यादिप्रयोगाश्च न विरुध्यंत इति भावः । अनाप्यकः । आविति प्रत्याहारो न तु टाप् । विभक्ताविति विशेषणादतो व्याचष्टे । टा इत्यारभ्य सुपः प

कारेणेति । नानर्थकेलोन्त्यविधिरिति । नन्वेवं विभर्ति पिपर्ति इत्यादौ भृञामित् अर्ति पिपर्त्योश्चेतीत्त्वं सर्वस्याभ्यासस्य स्यात् । द्वित्वाभावे केवलस्यार्थवत्त्वे पि द्वि

त्वे सति समुदायस्यैवार्थवत्त्वादित्याशंकायामाह । अनभ्यासविकार इति । आद्यंतवत् । सत्यन्यस्मिन्यस्य पूर्वो नास्ति स आदिः । सत्यन्यस्मिन्यस्य परो नास्ति सोंत इति लोके

प्रसिद्धं तदुभयमेकस्मिन्नसहायेन संभवतीति तत्राद्यंतव्यपदिष्टानि कार्याणि न स्युरतो यमतिदेश आरभ्यते । न च परत्वात्सुपि चेति दीर्घे पश्चाद्धलि लोपे स ॥ ९ ॥

व

नलोपः सुप्स्वर। पूर्वत्रासिद्धमित्यनेनैव सिद्धे नियमार्थमारंभ इत्याह। नान्यत्रेत्यादि। तेन राजाश्व इत्यादौ सवर्णदीर्घे कर्तव्ये नलोपोऽसिद्धो न भवतीति भावः। सुब्वि
धिमुदाहरति। आत्वमित्यादिना। सुपाश्रितो विधिः सुब्विधिः। स्वरविधौ पंचार्म। इत्कंसख्ये संज्ञायामिति समासे नलोपे कृते अवर्णांतं पूर्वपदं जातमिति। अमेंचावर्णं
द्व्यच्त्र्यच् इति पूर्वपदाद्युदात्तत्वं प्राप्तं नलोपस्यासिद्धत्वान्न भवति। संज्ञाविधौ पंचेत्यत्र नलोपे कृतेपीत्यादिना। स्त्रीप्रत्यये घुवस्यति। अन्यतु दंडिगृ्हो गृ मर्दं डिनावित्य
प्युदाहरणे। अत्र नलोपस्यासिद्धत्वात् घिसंज्ञा नास्तीति द्वंद्वे घीति पूर्वनिपातनियमो न भवतीत्याहुः। कृतितुग्विधौ तत्र वृत्रहभ्यां वृत्रहभ्रूणेति विहिते क्विपमाश्रित्य
ह्रस्वस्येति तुक्। न कृति तुग्विधावितिकिं। वृत्रहच्छत्रे ह्रस्वादेव कृच्चेति तुक्। यद्यपि वृत्रहभ्यामित्यत्रासिद्धं बहिरंगमंतरंग इत्यनेनैव नलोपस्यासिद्धत्वं सिध्यति।

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति। ८।२।२। सुप्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ सवर्णदीर्घ इत्य
सिद्धत्वादात्वमेत्वमैस्त्वं च न। राजभ्याम्। राजभिः। राज्ञा। राजभ्याम्। राजभ्यः। राज्ञः। राज्ञोः। राज्ञां। राज्ञि। राजनि। प्रतिदीव्यतीति प्रतिदिवा। प्रतिदिवानौ। प्रतिदिवानः।
अस्य भविषयेऽल्लोपे कृते। हलि च। ८।२।७७। रेफवकारान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि। न चाऽल्लोपस्य स्थानिवत्त्वं दीर्घविधौ तन्निषेधात्।
बहिरंगपरिभाषातः तन्न्यायेन न प्रवर्तते। प्रतिदीव्नः। प्रतिदीव्नेत्यादि। यज्वा। यज्वानौ। यज्वानः। न संयोगाद्वमन्तात्। ६।४।१३७। वकारम
कारान्तसंयोगात्परस्याऽनोऽकारस्य लोपो न स्यात्। यज्वनः। यज्वना। यज्वभ्यामित्यादि। ब्रह्मणः। ब्रह्मणा। ब्रह्मभ्यामित्यादि॰ ॥ ॥ ॥

तथापि। अस्याः परिभाषाया अनित्यत्वज्ञापनार्थं कृतितुग्ग्रहणं। तेन पपासा इत्यादि सिध्यति। अन्यथा विभक्त्याश्रयत्वात्तस्य बहिरंगत्वेनासिद्धत्वादात्वं न स्यात्। एतच्च न
जानंतर्येन हि पुष्पभ्रक्षुभिरित्यत्र यत्रांतरंगे बहिरंगे वा अचोरानंतर्यमिति हरदत्तादिमतेन केचिदुक्तौ। अत्र कार्ये अचश्च आनंतर्यमिति कैयटमतेन नात्र बहिरंगपरिभा
षा प्रवर्तते। यासेत्यत्र दापु संनिपातपरिभाषामपि बाधित्वा नपासयोरिति निर्देशादेव सिध्यतीति ज्ञेयं। प्रतिदिवेति। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति क
निन्। हलि च। वोरुपधाया दीर्घ इक इत्यनुवर्तते सिपिधातो रित्यतो धातोरिति च तच्च धातुग्रहणं वोरित्यनेन न विशेष्यते विशेषणेन तदंतविधिस्तदाह। रेफवांतस्य धा
तोरित्यादि। रेफांतस्य गीर्यति पूर्यति गीर्णः पूर्ण इत्याद्युदाहरणं। धातोः किं। रेफांतस्य पदस्य मा भूत्। अग्निः करोति। वायुः करोति। नन्वस्तु धातोरत्र वर्तनं परत्वे वोरित्यनेन यथा

ङ्सिएेस्अतइत्येवसूत्रद्वयंसुवचमित्याहुः।स्मापादेशात्परत्वादनादेशःस्यादित्याशंकायामाह।नित्यत्वाङ्केस्मेइति।इदमोन्वादेशोनन्विदमोनुदात्तमात्रविधाव
पिहलिलोपेनआभ्यामित्यादिसमीहितरूपंसिध्यतिएनेनएनयोरित्यत्रतुविशिष्येनादेशोविहितःकिमनेनाप्यग्रहणेनेत्यतआह।साकच्कार्थमिति।यद्यपीहशि
त्करणव्यर्थंअकारस्याकारविधानसामर्थ्यादेवसर्वादेशसिद्धेस्तथाउदात्तत्वार्थमेवाकारविधानमित्याशंकास्यात्तन्निवारणायशित्करणमित्याहुःअअइति
प्रश्लिष्यनिर्देशेतुअनेकाल्त्वादेवसर्वादेशसिद्धेःशिद्ग्रहणंत्यक्तुंशक्यमित्याकरः।द्वितीयाटौःसु।इदमोन्वादेशइत्यतः इदमइत्यनुवर्तते।अन्वादेशइतिच
एतदस्त्रतसोरित्यतएतदइत्यपितदाह। इदमेतदोरेनादेशइत्यादि।अनुदात्तइत्यनुवर्तनादेनादेशोनुदात्तइतिज्ञेयः।कार्यंविधातुमिति।अपूर्वंबोधयितुमि
त्यर्थः।इषदर्थेक्रियायोगेमर्यादाभिविधौचयः।एतमातङि तंविद्यादित्यत्रतुईषदर्थादयोनविधीयन्तेकिंत्वनूद्यन्तेइतिनतत्रैनादेशः।एतेननक्तंभीरुरयंत्व
मेवतदिमंराधेगृहंप्रापयेत्यपिव्याख्यातं।भीरुत्वस्यानुवाद्यत्वेनविवक्षितत्वात्।मांता।सुगणिति।क्विप्।नचअनुनासिकस्यक्वीतिदीर्घकर्तव्येअल्लोप
णिलोपयोःस्थानिवद्भावःशंक्यः।दीर्घविधौतन्निषेधात्।क्वौविधिंप्रतिनिषेधाच्चाणौताः निषेधसामर्थ्यादिति।यद्यपिनङिसंबुध्योरित्यत्रषष्ठ्यंततामा
श्रित्यङ्यंतस्यसंबुध्यंतस्यचपदस्यलोपोनेतिव्याख्यायतेतदाप्रत्ययलक्षणंसुलभमितितदर्थंनिषेधसामर्थ्यानुसरणाक्लेशोनकर्तव्यइत्याहुः पूर्व
स्मादपिविधौस्थानिवत्त्वमाशंक्याह॥नचेति।षाष्ठीपरिभाषामिति। वाह ऊठित्यत्रज्ञापितत्वेनतद्देशस्थत्वादितिभावः ॥ ॥ ॥

॥

ग्रहणस्य सार्थकत्वात्कथमेतस्य सामान्यनियमार्थतेति चेत्। उच्यते। अचामित्यत्र नलोपोऽविवक्षितः। तथा च पूर्वोक्तनियमार्थता भाष्यकैयटाद्युक्ता संगच्छत एव। इ
जार्थसांचतेर्मिस्त्यपि नश्चापदान्तस्येति सूत्रे जातिपक्षमाश्रित्य नत्वजातेरनुस्वारविधाने समीहितरूपसिद्धेः। व्यक्तिपक्षे त्वनुस्वारस्य शर्षु पठितत्वात् अनुस्वारे
परे नुमोऽनुस्वारे सति अनुस्वारवद्रूपमिष्यते। भन्त्सि चेति द्वित्वेन तद्रूपस्य तवापि मते दुर्वारत्वात्। न च भवन्मते द्वित्वेनानुस्वारस्य यंस्यादिति शंक्यं। झरो झरीति लोपे
न निवारयितुं शक्यत्वात्। लोपाभावपक्षे नयाणां श्रवणं स्यादिति चेत्। भाष्यकैयटाद्युक्तनियमानुरोधेन तत्सीकारे वा धकाभावात्। इष्टानुरोधेन जातिपक्ष एवा
त्राश्रयणीयः। नुमागमः स्यादिति। इदितो नुम् धातोरित्यतो नुमनुवर्तत इति भावः। ननु कुर्वन्नित्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वाभावाद्दीर्घत्वं न स्या
दित्याशंक्याह। इह दीर्घे कर्तव्य इति। बहुलग्रहणादिति। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। बहून् अर्थान् लातीति बहुलं। आतो नुपसर्गे क इति कर्मण्युपपदे कः। श्व
न्नुक्षन्निति। श्वन् उक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्द्धन् मज्जन् अर्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन् इत्युणादिसूत्रेणेत्यर्थः। निपातनादिति। महे
हेकारस्य घकारः। अवगागमः। कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः। प्रत्याख्यातमाकर इति। एवं च फलभेदे नादेशस्य प्रत्याख्यानासंभवात् आ
देशपक्षेऽपि दीर्घो भाष्यादिसंमत एवेति बहुलग्रहणात्संयोगान्तलोपस्य नासिद्धत्वमित्युक्तौ यत्वाहुः। मनुष्यक्षेऽपि छांदसत्वान्न दीर्घ इत्येव भाष्याशय इति। तत्र
मनुवंशस्य छांदसत्वे मानाभावात्। उदाहृतभट्टिप्रयोगविरोधाच्चेति दिक्। छंदसीवनिपाविति। मत्वर्थे ईवनिपौ स्तः छंदसीति वार्त्तिकार्थः। सुमंगलीरियं वधूः
मघवानमीमहे इत्युदाहरिष्यति वैदिकप्रक्रियायां। अंतोदात्तं त्विति यद्यपि श्वन्नुक्षन्नित्यत्र कनिन्नंतानाणेते इत्युज्ज्वलदत्तादिग्रंथपर्यालोचनया आद्युदात्तत्वं लभ्य
ते। तथापि उक्षा समुद्रो अरुणः सुपर्णः पूषा त्वेतो नयतु अग्निर्मूर्द्धा दिव इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामंतोदात्तस्य निर्विवाद तया कनिप्रत्यय एवोचित इति भावः।

॥

वांतस्यधातोरितिकिंत्विशेष्यतेरेफवांतस्यइको दीर्घः स्यात्तौ चरेफवकारौधातोश्चेत्।अंतशब्दोत्रसमीपवाचीतथाचोपधायांचेतिसूत्रंत्यक्तुंशक्यमनेनैवमूर्छितेह
र्छतीत्यादिरूपसिद्धेरितिचेन्नाभिवा।कुर्कुरीयतीत्यत्रातिप्रसंगःस्यात्तस्मात्र्वोरित्यनेनधातुरेवविशेष्यः।एतच्चाकरेस्पष्टं।यत्तूपधायांचेतिकेचिदपन्यस्तातन्नादि
वेर्वकारस्यानुपधात्वात्।उक्तन्यायेनेति।यथोद्देशपक्षेषाष्ठींपरिभाषांप्रतिदीर्घस्यासिद्धतयेत्यर्थः।प्रतिदीव्नइति।नमंकुर्छुरामित्यत्रर्वोरित्यनुवर्तनाद्रेफवांतस्यैव
भस्यनिषेधइतिनदीर्घनिषेधोत्रशंक्यःनांतस्येहभत्वात्।यज्वेति।इष्टवान्यज्वा।सुयजोर्ङ्वनिप्।ब्रह्मणाइति।सर्वधातुभ्योमनिन्निति।सकम्यवंहेर्नोच्चेतिनस्यात्वविधिः।

इन्हन्पूषार्यम्णांशौ।६।४।१२। एषांशावेवोपधायादीर्घोनान्यत्र।इतिनिषेधेप्राप्ते।सौच।६।४।१३।इन्नादीनामुपधायादीर्घःस्यादसम्बुद्धौसौप
रे।वृत्रहा।हेवृत्रहन्।एकाजुत्तरपदेणः।वृत्रहणौ।वृत्रहणः।वृत्रहणा।वृत्रहणौ।होहन्तेर्ञ्णिन्नेषु।७।३।५४।ञितिणितिप्रत्यये नकारे
चपरेहन्तेर्हकारस्यकुत्वंस्यात्।हन्तेः।८।४।२२।उपसर्गस्थान्निमित्तात्परस्यहन्तेर्नस्यणत्वंस्यात्।प्रहण्यात्।अत्पूर्वस्य।८।४।२२।हन्तेरत्पू
र्वस्यैवनस्यणत्वंनान्यस्य।प्रघ्नन्ति।योगविभागसामर्थ्यादनन्तरस्यविधिर्वाप्रतिषेधोवेतिन्यायम्बाधित्वाएकाजुत्तरपदेणइतिणत्वमपिनिवर्त्तते
नकारेपरेकुत्वविधिसामर्थ्यादल्लोपोनस्थानिवत्।वृत्रघ्नः।वृत्रघ्ना।इत्यादि।यत्तुवृत्रघ्नइत्यादौवैकल्पिकंणत्वंमाधवेनोक्तं।तद्भाष्यवार्त्तिक
विरुद्धं।एवंशार्ङ्गिन्।यशस्विन्।अर्यमन्।पूषन्।यशस्विन्नितिविन्प्रत्ययेइनोऽनर्थकत्वेपिइन्हन्नित्यत्रग्रहणम्भवत्येव।अनिनस्मन्ग्रहणान्यर्थ
वताचानर्थकेनचतदन्तविधिम्प्रयोजयन्तीतिवचनात्।अर्यमा।अर्यमणौ।हस्त्रापूषणि।।९ धानाद्ध्यानशब्दोयंनिष्पन्नः।। ।।इन्हन्नास

र्वनामस्थानेचासंबुद्धौइत्यनेनैवसिद्धेनियमार्थमिदंतदाह।शावेवोपधायाइति।उपधादीर्घस्यायंनियमः।तेनवृत्रहायतइत्यत्राकृत्सार्वधातुकयोरितिदीर्घोभवत्येव।वृत्रह
णीत्यत्रानुनासिकस्यक्विझलोरिति दीर्घःसोपिनियमेनव्यावर्त्यते।उपधादीर्घमात्रापेक्षयानियमविज्ञानादितितुमनोरमायांस्थितं।शावेवेतिनियमाद्दीर्घस्याप्राप्तावाह।
सौचेति।शिस्वोरितिवक्तव्येयोगविभागउत्तरार्थः।वृत्रहेति।वृत्रंहतवान्।ब्रह्मभ्रूणेतिक्विप्।हतेर्हस्येति।ञितिणितीत्येतदुक्तेर्विशेषणं।नकारेइतितुहस्येतियथासंभवं
बोध्यंयद्वाञ्णिन्नाःसर्वेपिहस्यैवविशेषणंञितिणितीत्यंशेपेनन्नाव्यवधानम्पेनद्वाभ्यांव्यवधानंसौक्रियतेतेनघातःघातकइत्यत्रकुत्वंभवति।इहतुनभवति।

पितदाह। नञा रहितस्येत्यादि। असावितिपर्युदासे विभक्तौ परत एव स्यात्। ततश्चार्वतीत्यादौ न स्यादित्याशयेनाह। ननु सावित्ति। नन्वेवमर्वप्रिय इत्यादावतिप्रसंगः। अं
गेन स्वनिमित्तस्य प्रसपस्यासे पाच्छुकाञ्जुप्तत्वेनात्र प्रत्ययलक्षणाभावात्। एतेन वाहेरलुप्यत सह स्त्र हगवेगर्व इति श्रीहर्षप्रयोगो व्याख्यातः॥ नन्वेवं स्थानिवदादेश इ
ति सूत्रे धात्वंगकृत्तद्धिताव्ययसुप्तिङ्पदादेशास्थानिवत्स्युरिति प्राचोग्रंथमनूद्यतत् किंपरिगणनमुदाहरणमात्रं वेति विकल्प्य नाद्यः। अव्ययस्यांगपदाभ्यां पृ
थग्ग्रहणवैयर्थ्यादिति मनोरमायां यदुक्तं तत्कथं संगच्छते। अव्ययस्योक्तरीत्या नंगत्वात्। न च नञुमतेत्यनेनांगकार्यनिषेधेप्यंगसंज्ञाया अनिषेधान्नोक्तदोष
इति वाच्यं। प्रत्ययेपरतः पूर्वस्य यत् कार्यं मांगमनांगं वा तत्सर्वं नञुमतेत्यनेन निषिध्यत इति यडोवि चेति सूत्रस्य मनोरमाग्रंथपर्यालोचनया लुमताशब्देन लुप्ते
अंगसंज्ञाया अप्यसौ कार्यत्वात्। तस्या अपि प्रत्यये परतः पूर्वस्य कार्यत्वात्। यदि लुकाञ्जुप्तेप्यंगत्वं स्वीक्रियते तदा अयं ग्रंथो यचि भं वृषण्वस्वश्वयोरित्यत्र वृषं वर्षे
कं धनं यस्य वृषण एव सुवृषा अश्वाय स्य वृषणाश्व इत्युदाहृत्य भत्वादि हन्लोपो न भवति अत्तो पस्तु अनंगत्वान्नेति मूले वैदिकप्रक्रियायां वक्ष्यमाणग्रंथेन सह
विरुध्येत। नचाल्लोपो न इत्यत्रांगावयवोऽसर्वनामस्थानयजादिस्वादिपरो यो निति व्याख्यानात् अल्लोपस्य तत्र प्रास्त्यभावादनंगत्वादिति समाधानं व्यर्थमिति मि
तव्यं। भसंज्ञैव यजादिस्वादिपरो योऽनिति व्याख्यानवत् वस्वश्वयोः परतो योऽनिति व्याख्यानस्यापि लाभात्। तस्मात्परात्पृथगित्येव वक्तव्ये अंगपदाभ्यामित्यंगग्रहणं रभस
कृतमेवेति चेत्। अत्राहुः। नञुमतेति सूत्रे लुमता लुप्ते तन्निमित्तमंगस्यांगसंज्ञकस्य कार्यं न स्यादिति व्याख्यायते तदा वेरास्त्वित्याद्यंगकार्याप्रवृत्तावप्यंगसंज्ञाया निर्बाध
त्वादंगग्रहणं तत्र त्यसम्यगेवा पदात्वागमनांगं वेत्यादि मनोरमाग्रंथस्यानंगत्वादिति मूलग्रंथस्य च स्वारस्यपर्यालोचनया लाघवाद्व्ययस्यांगत्वे फलाभावाच्च तदा
त्वविशेषेणाङ्गसंज्ञाया अपि निषेधादङ्गग्रहणं तत्र रभसाकृतमेव न च नञुमतेत्यनेनाङ्गसंज्ञा निषेधे एवोरनाकाविति सूत्रस्थभाष्ये केयटाभ्यां विरोधः स्यादिति वाच्य
मत्योस्तत्र प्रौढिवादेन प्रवृत्तत्वात्तथा च नञुमतात सिन्निति सिद्धांतो यन्निषिध्यत इति मनोरमाग्रंथश्च स्वरसतः संगच्छत इति। नन्वत्र धातोर्विच्यिगरोच अरिति रूपं
तस्मान्मतुपि अर्वतावित्यादि सेत्स्यति। ऋदसीव निपावितिवनिपि वेदे अर्वेति सेत्स्यति ऋधातोरवस्नामदिपद्यतीत्यादिना वनिपि तु लोकेप्यर्वेति सेत्स्यति। रूढिशब्द
श्चायं। वाजिवाहार्वगंधर्वहयसैंधवसप्तय इत्यमरकोशात्। तत्श्चार्थो पिनभिधीयत इति किमनेन सूत्रेणेति चेत्। अत्राहुः। नोततांतयोः सर्वत्र प्रयोगप्राप्तेसौ परे नञुपपदेवतांत

श्वयुव अल्लोपोन इत्यतोऽन इत्यपकृष्य व्याचष्टे। अन्नंतानामिति। अन्नंतानां किं मघवत इति। यद्यपि न स्थानादेशेप्येकदेशविकृतस्यानन्यत्वादन्नंततानास्त्येव तथापि विशेषणसामर्थ्यान्न श्रूयमाणनकारांतस्यैव संप्रसारणं नत्वन्नेत्याहुः। वार्तिककृता तु श्वादीनां संप्रसारणे नकारांतग्रहणमनकारांतप्रतिषेधार्थमुक्तं। नन्वेवमल्लोपोन इत्यल्लोपो दुर्वार इति चेन्मैवं। भाष्यकृता पूर्वोक्तवार्तिकमनानुवर्त्य अल्लोपोनः नकारांतस्यैवेति व्याख्यातत्वात्। एतच्च कर्त्तृकरइति सूत्रे भाष्ये स्पष्टं। एतेन बहुधीवरी राजकीयमित्यत्राप्यल्लोपाभावः सिद्धः। वनोरचराज्ञः कचेत्यादेशे कृते नकारांतत्वाभावात्। स्त्रियां मघवतीति। मघवत्योमघवत्य इत्यत्र लिंगविशिष्टपरिभाषया उगिदचामिति नुम् न शंक्यः। विभक्तौ लिंगविशिष्टाग्रहणात् इत्याहुः। न संप्रसारणे क्षः संप्रसारणमित्यतः संप्रसारणमित्यनुवर्तमाने पिपुनः संप्रसारणग्र

श्वयुवमघोनामतद्धिते। ६।४।१३३। अन्नन्तानामभसंज्ञकानामेषामतद्धिते परे सम्प्रसारणं स्यात्। सम्प्रसारणाच्च। आद्गुणः। मघोनः। अन्ननाना ङ्किं। मघवतः। मघवता। स्त्रियां मघवती। अतद्धिते किं। माघवनं। मघोना। मघवभ्यामित्यादि। शुनः। शुना। श्वभ्यामित्यादि। युवन् शब्दे वसोत्वे कृते। न सम्प्रसारणे सम्प्रसारणं। ६।१।३७। सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात्। इति यकारस्य नेत्वं। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणं। यूनः। यूना। युवभ्यामित्यादि। अर्वा। हे अर्वन्। अर्वणस्त्रसावनञः। ६।४।१२७। नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यान्न तु सौ। उगित्त्वान्नुम्। अर्वन्तौ। अर्वन्तः। अर्वन्तं अर्वन्तौ अर्वतः। अर्वता। —— अर्वद्भ्यामित्यादि। अनञः किं। अनर्वा यज्ववत्॥

हणात् प्रदेशांतरस्थश्वयुवमघोनामित्यपि संप्रसारणं निषिध्यते। तदाह। इति यकारस्य नेत्वमिति। यूनइति। ननु उकारेण व्यवधानात्कथमत्र निषेधः। विव्याध विव्यधेत्यादाव व्यवधानेपि निषेधस्य चरितार्थत्वात्। न च सवर्णदीर्घे कृते नास्ति व्यवधानमिति वाच्यं। अचः परस्मिन्निति तस्यासिद्धत्वात्। अत्राहुः। विदेशस्थनिषेधार्थो ऽत्र पुनः संप्रसारणग्रहणादेव व्यवधानेप्यत्र निषेधो भविष्यतीत्यदोषः। न च व्यथो लिटीति विदेशस्थ न यकारस्य संप्रसारणे कृते वकारस्य तदभावाय न संप्रसारणइति सूत्रं प्रवर्त्य पुनः संप्रसारणग्रहणं चरितार्थमिति व्यवधाने निषेधो न भविष्यतीति शंक्यं। व्यथो लिटीत्येतद्धलादिशेषापवाद इत्याकरेस्य दृष्टत्वात्। उत्सर्गसदेशश्चापवाद इति परस्यैव संप्रसारणं भवति न पूर्वस्येति कैयटेन व्याख्यातत्वाच्चेति। अर्वणस्तृ। अंगस्येति वर्तते तच्चार्वणा विशेष्यते अनञ इत्यन्ते।

तुनायंविषयः। मचः प्राचीनेष्वेवस्स इति वक्ष्यमाणत्वात्। पथिमथीत्यात्वं थोन्थश्च लिंगविशिष्टपरिभाषयाप्राप्तं विभक्तौ लिंगविशिष्टाग्रहणान्न भवति। अत्रेदं बोध्यं। पंथानमात्मन इच्छति पथीयति ततः क्विप्। अल्लोपयलोपौ। एकदेशविकृतस्यानन्यत्वात्पथिमथीत्यात्वं। थोन्थः पंथाः। इतोत्सर्वनामस्थान इत्यत्वं न भवति। इत इति तपरकरणात्। एरनेकाच इति यणं बाधित्वा परत्वान्नित्यत्वाच्च थोन्थः। संयोगपूर्वकत्वान्न यण्। पंथियौ। पंथियः। ———। पथियं। पंथियौ। भस्य टेर्लोपः। पथः। पथा। पथिभ्यां। पथिभिरित्यादि। एवं मथीयतेः क्विपि तु मंथाः। मंथियौ। मथियः। ऋभुक्षाः। ऋभुक्षियौ। ऋभुक्षियः इत्यादि। एतेन इतोत्सर्वनामस्थान इत्यत्र स्थानिन्यादेशे च तपरकरणं सुखप्रत्यार्थमिति हरदत्तः प्रत्युक्तः। आदेशे तपरकरणस्यानावश्यकत्वेपि स्थानिनि तु पथियौ इत्यादिसिद्धये तस्यावश्यकत्वात्। ननु नलोपस्यासिद्धत्वात्पथिमथ्यृभुक्षामिति नस्यात्वे पंथ्याः ऋभुक्षा इत्येव च भवितव्यं न तु पंथा इत्यादिरिति चेत्। अत्राहुः नलोपस्यात्र वर्तीसुब्निमित्तं आत्वस्य तु बहिर्वर्तीसुप्। प्रत्यासत्त्या हि

ष्णान्ता षट्। १।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। षड्भ्यो लुक्। पञ्च २ संख्या किं। विप्रुषः। पामानः। शतानि सहस्राणीत्यत्र सन्निपातपरिभाषया न लुक्। सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तद्विघातकत्वात्। पञ्चभिः। पञ्चभ्यः २। षट्चतुर्भ्यश्चेति नुट्। नोपधायाः। ६।४।७। नान्तस्योपधाया दीर्घः स्यान्नामि परे। नलोपः। पञ्चानां। पञ्चसु। परमपञ्च। परमपञ्चानां। गौणत्वे तु न लुङ्नुटौ। प्रियपञ्चा। प्रियपञ्चानौ। प्रियपञ्चानः। प्रियपञ्चां। एवं सप्तन् नवन् दशन्॰॥ १९ यत्र एक एव सुप् निमित्तभूतः तत्रैव नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वेनान्यत्रेति नात्र नकारस्यात्वं किंतीकारस्येति॥ ॥ ष्णान्ता षट्। स्त्रीलिंगनिर्देशः संख्यां विशेषयितुं तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि संख्याग्रहणमिह संज्ञिपरं संपद्यते। इत्याशयेनाह। संख्येति। प्राचा तूपदेशकाले षान्ता नान्ता चेत्युक्तं तत्पंचेत्यत्र नलोपे कृतेपीत्यादि वक्ष्यमाणस्वग्रंथविरुद्धं। संप्रत्यनान्तत्वेपि उपदेशे नान्तत्वमासीदिति किमसिद्धत्वेनेति दिक्। सन्निपातेति। तथा उपदेशकाल इति व्याख्यानं निष्फलमपीति भावः। यत्त्वाहुः परिभाषाया अनित्यत्वाल्लुक् स्यादिति। तत्साहसमात्रं। इष्टस्थले प्रवृत्तौ परिभाषाया अकिंचित्करत्वापत्तेः। यदप्याहुः। उपदेशग्रहणमिह कृतः समागतमित्याशंक्य ष्णान्तेत्यत्र ग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यत इति। तदपि न। संख्येत्यस्याकर्षणेन संज्ञिपरत्वसंपादनेन च सामर्थ्योपक्षयात्। नोपधायाः नेति लुप्तषष्ठीकं भस्य विशेषणं। नलोपस्यासिद्धत्वान्नामीति दी॰ ॥ ॥ ॥

इतिव्यवस्थार्थमिदंत्र्यन्तकोऽपुरितित्रिसूत्रींवदति।यत्तुकेचिदुक्तंअर्वन्मघवन्शब्दयोर्द्वयोरपिभाषायामसाधुत्वमेवअर्वणस्त्रमघोनश्चनशिष्यंछांदसंहितत्।मतुब्वन्योर्वि
धानाच्चछंदस्युभयदर्शनादितिवार्त्तिकादितितदापाततः।वार्त्तिकस्यवनिवंतमध्योदात्तपरत्वात्छंदस्येववनिपिधानात्।तथाचश्रीहर्षः।वाहेखलुप्रतसहस्रमर्वगर्वे इति
प्रयुक्ता।अर्वतो।अर्वत्तइतिव्यपदेशिवद्भावेनार्वन्नंतत्वात्त्रादेशः।नत्वव्यपदेशिवद्भा वोऽप्रातिपदिकेनेतिवाच्यं।तस्यप्रत्ययविधिविषयत्वात्।पथिमथि।गमेरिनिरित्यत
इनिरितिपरमेकिदित्यतःकिदित्यनुवर्त्तमानेमंथइत्यनेननिष्पन्नोमथिन्शब्दः।पतस्थचचादिनिः।पथिन्।ऋभुक्षः।स्वर्गवज्रयोः।ततोमत्वर्थीयेनिनाऋभुक्षिन्निति।वोध्यं।
ननुअस्थिदधीतिसूत्रेउदात्ततयापठितेष्वनङीष्टसिद्धावनङ्‌उदात्तइत्युदात्तग्रहणंगुणाअभेदकाइतिपक्षंज्ञापयतीतिनिर्विवादं।तथाचतस्मिन्पक्षेसूत्रेननुनासिकोच्चार
णविधानान्नानुनासिकः।इतोऽत्सर्वनामस्थाने
पथिमथ्यृभुक्षामात्।७।१।८५॥एषामाकारोन्तादेशस्यात्सौपरे आआदितिप्रश्लेषेणशुद्धायाएवव्यक्तेर्विधानान्नानुनासिकः।इतोऽत्सर्वनामस्थाने
।७।१।८६।पथ्यादेरिकारस्याऽकारस्यात्सर्वनामस्थानेपरे।थोन्थः।७।१।८७।पथिमथोस्थस्यन्थादेशस्यात्सर्वनामस्थानेपरे।पन्थाः।पन्थानौ।
पन्थानः।पन्थानं।पन्थानौ।भस्यटेर्लोपः।७।१।८८।भसंज्ञस्यपथ्यादेष्टेर्लोपस्स्यात्।पथः।पथा।पथिभ्यामित्यादि।एवमन्थाः।ऋभुक्षाः।स्त्रियान्ना
न्तलक्षणोङीप्।भत्वाट्टिलोपः।सुपथीनगरी।अनृभुक्षीसेना।आत्वन्नपुंसकेनभवति।नलुमतेतिप्रत्ययलक्षणनिषेधात्।सुपथिवनं।सम्बुद्धौनपुं
सकानामिन्नलोपोवावाच्यः।हेसुपथिन्।हेसुपथि।नलोपस्सुप्स्वरेतिनलोपस्याऽसिद्धत्वाद्ध्रस्वस्यगुणोन।द्विवचनेभत्वाट्टिलोपः।सुपथीशौ।सर्व
नामस्थानत्वात्।सुपन्थानि।पुनरपि।सुपथि।सुपथी।सुपन्थानि।सुपथा।सुपथे।सुपथिभ्यामित्यादि॥९ णोप्यंतरतम्यादनुनासिकाकारःस्याद
आह।आआदिति।इतोत्सर्वनामआदितिवर्त्तमानेपुनरद्वचनंकिमर्थंदातेप्यद्वचनंपंथाइत्यत्रसवर्णदीर्घेणाभाव्यमन्यत्रतूपधायादीर्घेणेतिचेत्मैवं।ऋभुक्षणमिंद्र
मित्यत्रवाषपूर्वस्यनिगमइतिदीर्घविकल्पेसतिपक्षेह्रस्वश्रवणार्थमद्वचनस्यावश्यकत्वात्।थोन्थः।स्थान्यादेशौद्वावप्यनन्तौ।थोन्थइत्येवसिद्धे इतोत्सर्वनामस्था
नइत्येतद्भुक्षिन्नर्थंत्रयाणामनुवृत्तावपिऋभुक्षस्थोनसंभवतीत्याशयेनाह।पथिमथोरिति।प्रसंगादाह।स्त्रियामिति।नांतलक्षणइति।नषूजनादितिनिषेधाद्दनू
रध्वूरित्यप्रत्ययोनेतिभावः।सुपथीति।इनःस्त्रियामितिकप्पुनहात्तःसमासांतविधेरनित्यत्वात्।यवारना॥ काविति सूत्रेसुपथोतिभाष्याच्चनपूजनादितिनिषेधस्य

दीर्घात्किं। अष्टभिः। मध्योदात्तमिदं। षट्त्रिचतुर्भ्यो हलादिरिति बाधित्वाऽन्त्युपोत्तममित्यस्य प्रवृत्तेः। षट्त्रिचतुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममु
दात्तं स्यादिति तदर्थः। ननु प्रियाष्टः प्रियाष्टत्यादौ विभक्तेरुदात्तत्वनिवारणाय दीर्घग्रहणमिहावश्यकमिति कथमस्यात्वविकल्पज्ञापकतेति चेत्। अत्राहुः।
अष्टनो दीर्घादित्यत्रातोदात्तादित्यनुवर्त्यान्तोदात्तादष्टनः परेत्यादि व्याख्यानादष्टाभिरित्यादौ विभक्तेरुदात्तत्वं सिध्यति। कृतादित्वेनाष्टनोऽन्तोदात्तत्वात्। प्रियाष्ट इत्या
दिबहुव्रीहौ तु पूर्वपदप्रकृतिस्वराभ्युपगमेनाष्टनोऽन्तोदात्तत्वाभावाद्विभक्त्युदात्तत्वं न प्रवर्तत इति दीर्घग्रहणं व्यर्थं सत् उक्तार्थज्ञापकमेवेति। अष्टानामिति। नुटः
पश्चादेव सन्निपातपरिभाषाया अनित्यत्वादात्वं न तु ततः प्रागिति मनोरमायां स्थितं। अत्र नव्याः। सन्निपातपरिभाषया आत्वाभावेऽप्यत्र न क्षतिः। नोपधाया इति दीर्घे
नलोपे पञ्चानां सप्तानामितिवद्रूपसिद्धेः। न चाष्टनो दीर्घादिति विभक्त्युदात्तत्वमात्वविधेः प्रयोजनमिति वाच्यं। षट्त्रिचतुर्भ्यो हलादिरित्यनेनैव तत्सिद्धेरिति। पूर्वं

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च। ३।२।५९। एभ्यः क्विन् स्यात्। अलाक्षणिकमपि किंचित्कार्यं निपातनाल्लभ्यते निरुपपदाद्युजेः क्वि
न् कनावितौ। कृदतिङ्। ३।१।९३। सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्। वेरपृक्तस्य। ६।१।६७। अपृक्तस्य वस्य लोपः स्या
त्। कृत्तद्धितेति प्रातिपदिकत्वात्स्वादयः॥ ९

स्मादपीति। न चात्र पूर्वत्रासिद्धीयेन स्थानिवदिति निषेधः शंक्यः। तस्य दोषः संयोगादिलोपलत्वणत्वेष्वित्यु
क्तत्वादिति दिक्। प्राधान्य एवेति। औङ्श्वं हि लुग्विधाविव प्राधान्य एव भवति। ननु गोणात्वौ अष्टाभ्य इति बहुवचननिर्देशात्। अन्यथा हि कृतात्वानुकरणेऽप्येकवच
नेनैव निर्दिशेत्। अष्टा औशिति अष्ट इति वा। एतच्च षण्णान्ता षडिति सूत्रे भाष्ये कैयटयोः स्पष्टं। तथा चौङ्विधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वं प्राधान्य एवोचित
मिति भावः। प्रियाष्टा इति प्रथमैकवचनं। उक्तार्थं संगृह्णाति। प्रियाष्टो राजवदिति। नान्ताः। अदिति। उच्यते। क्विप्। धातोः॥ ॥ ऋत्विग्दधृक्। किं च। दिति। ऋतावुप
पदे यजेः क्विन्। धृषोतेर्द्वित्वमन्तोदात्तत्वं च सृजेः कर्मणि क्विन्। अमागमश्च। दिशेः कर्मणि क्विन्। उत्पूर्वात्स्निहेः क्विन्। उपसर्गान्तलोपः षत्वं च। अञ्चेः सुप्युपपदे
क्विन् इत्यर्थः। निरुपपदाद्युजेरिति। क्रुञ्चेरप्येवं। नलोपाभावस्त्वधिकः। कनावितौ इति। इकारस्तूच्चारणार्थ इति भावः। संनिहित इति। प्राचा तु तृतीये धात्वधिका
र इत्युक्तं। तदसत्। धातोः कर्मण इति सन्निधौ धातुग्रहणस्यान्तरत्वात्त्वृत्तेरभावेनाधिकारत्रयाभावात्॥ ॥ ॥ ।

र्थेन प्रवृत्तेत इत्ययमारंभः। गोणत्वेति। बहुवचन निर्देशस्यार्थप्राधान्यार्थत्वादिति भावः। प्रियय इत्यामिति। नकारद्वयमध्ये चकारः। ॥ ८ ॥ अष्टन आ विभक्तौ। सेनत्वा दिहा लोपो न कृतः। कनिन्युवृषि तक्षी त्यतः कनिनित्यनुवर्तमाने स्पशश्वर्धा तुट् चेत्यनेन सप्तन् अष्टन् शब्दौ निष्पन्नौ। एषो हलीत्युत्तरसूत्राद् हलीत्यपकृष्यते। तत्र विभक्तौ विशेषणमित्यभिप्रेत्य व्याचष्टे। हलादाविति। हलीत्यस्यानपकर्षे तु अष्टानामिति न सिध्येत्। परत्वान्नित्यत्वाच्च नुटः प्रागात्वे कृते अनंतत्वेन षट्संज्ञाभावान्नुटोऽप्रवृत्तेः। न च यथो द्देशपक्षे अंतरंगत्वात् प्रागेव कृतात्वषट्संज्ञा एकदेशविकृतन्यायेन कृतात्वे पि सुलभेति वाच्यं। अल्विधौ उक्तन्यायायोगात्। किंच प्रियाष्टानौ प्रियाष्टानः। प्रियाष्टः। प्रियाष्टे त्यादि पि न सिध्येत्। उक्तरीत्यां तत्राप्यात्वप्रवृत्तेरिति बोध्यं। अष्टाभ्य औश्। शित्वात्सर्वादेशः। न तु अनेकाल् शित् सर्वस्येति सूत्रे शित् ग्रहणं प्रत्याख्यायमनेकाल्त्वादेव

अष्टन आ विभक्तौ। ७। २। ८४। अष्टन आत्वं स्याद्धलादौ विभक्तौ। अष्टाभ्य औश्। ७। १। २१। कृताकारादष्टनः परयोर्जस्शसोरौश् स्यात्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। वैकल्पिकं चेदमष्टन आत्वं अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणाज्ज्ञापकात्। अष्टौ २ परमाष्टौ। अष्टाभिः अष्टाभ्यः २ अष्टानां अष्टासु। आत्वाभावे। अष्ट २ इत्यादि पंचवत्। गौणत्वे त्वात्वाऽभावे राजवत्। शसि प्रियाष्ण इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वं। कार्यकालपक्षे तु बहिरंगस्याल्लोपस्याऽसिद्धत्वात्। प्रियाष्ट्ण इत्यादि। जश्शसोरनमीयमानमात्वं प्राधान्य एवेति न तु गौणतायां। तेन प्रियाष्टनो हलादावेव वैकल्पिकमात्वं। प्रियाष्टाभ्यां। प्रियाष्टाभिः। प्रियाष्टाभ्यः। प्रियाष्टासु। प्रियाष्टौ राजवत्सर्वं हाहावच्चापरं हलि भ सुभावः। जश्त्वचर्त्वे। भुत्। भुद्। बुधौ। बुधः। बुधा। भुद्भ्याम्। भुत्सु ॥ ९ ॥ सर्वादेश इति सुवचं। न च शस्येत्संज्ञायां अनेकाल्त्वं नास्तीति वाच्यं तदत्र भूतपूर्वगत्या श्रयणात्। नन्वेवमर्वणस्त्रसाविति त्रादेशस्यापि सर्वादेशता स्यादिति वाच्यं शकारोच्चारणसामर्थ्यात्। तकारस्योगित्कार्यार्थत्वेन तत्र सामर्थ्याऽपक्षयात्। न चैवमौशित्या दौ शकारः श्रवणार्थ एव स्यादिति शक्यं। अनुशतिकादिषु ऐहलौकिकमिति निर्देशेन शकारस्येत्संज्ञाभ्युपगमादिति दिक्। कृताकारादिति। ननु हलीत्यपकृष्यत इत्युक्तं तत्कथं कृताकारेत्याह। अष्टभ्य इति अष्टाभ्य इति कृतात्वस्येदमनुकरणं न तु लक्षणावशसंपन्नमात्वं तथा हि सति वक्ष्यमाणज्ञापके न तस्य वैकल्पिकतया लाघवार्थमष्टभ्य औशित्येव ब्रूयादिति भावः। इदमिति श्रुतमवगमितं चेत्यर्थः। अष्टनो दीर्घादिति। दीर्घान्तादष्टन परा असर्वनामस्थानविभक्तिरुदात्ता स्यात्। अष्टाभिः। ।

विश्वस्य वसुराड्लोपरत्यतोऽनुवर्तनादाह। विश्वशब्दस्य दीर्घः स्यादिति। स्कोः पदस्येत्यनुवर्तते झलोऽझलीत्यतो झलीति चासंयोगेति लुप्तषष्ठीकं झलं ताभ्यां विशेष्यते तत् देतदाह। पदांते झलि च परे इति। झलि किं। भ्रष्टा। भ्रज्जतीति भृट्। क्विप्। ग्रहिज्येति संप्रसारणं। व्रश्चेति षत्वं। उर्गिति। उर्जे बलप्राणनयोः। अस्मात् भ्राजादि। एयं ताभ्यां जभासे त्यादिना क्विपि णिलोपः स च चोः कुत्वे न स्थानिवत्। पदांत विधित्वात् पूर्वत्रासिद्धत्वाच्चा। इह जो नेष्व अवयाः। अवयाजौ। अवयाज इति। नोदाहृतं। मन्त्रे श्वेतवहोक्थेति प्रकृत्य अवेयज इति विहितस्य ण्विन स्तदपवादस्य पदांते उस् ङ्डांदसत्वेन वैदिकप्रक्रियायामेव वक्तुमुचितत्वात्। तदोः सः सावनंत्ययोः। त्यदादीनाम इत्यतोऽनुव

विश्वस्य वसुराटोः। ६।३।१२८। विश्वशब्दस्य दीर्घः स्याद्वसौ राट्शब्दे च परे। विश्वं वसु यस्य विश्वावसुः। राडिति पदान्तोपलक्षणार्थं। चर्त्वमवि वक्षितम्। विश्वाराट्। विश्वराजौ। विश्वराजः। विश्वाराड्भ्यामित्यादि। स्कोः संयोगाद्योरन्ते च। ८।२।२९। पदान्ते झलि च परे यः संयोगस्तदाद्योः सकार ककारयोर्लोपः स्यात्। भृट्। भृड्। सस्य श्चुत्वेन शः। तस्य जश्त्वेन जः। भृज्जौ। भृज्जः। ऋत्विगित्यादिना ऋत्तावुपपदे यजेः क्विन्। क्विन्नन्तत्वात् कुत्वं। ऋत्विक्। ऋत्विग्। ऋत्विजौ। ऋत्विजः। रात्सस्येति नियमान्न संयोगान्तस्य लोपः। चोः कुः। ऊर्क्। ऊर्ग्। ऊर्जौ। ऊर्जः। त्यदाद्यत्वं पररूपत्वं। तदोः सः सावनन्त्ययोः। ७।२।१०६। त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ। स्यः। त्यौ। त्ये। त्यं। त्यौ। त्यान्। सः। तौ। ते। परमसः। परमतौ। परमते। द्विपर्यन्तानामित्येवानेह। त्वं। न च तकारोच्चारणसामर्थ्यान्नेति वाच्यं। अतित्वमिति गौणे चरितार्थत्वात्। संज्ञापाङ्गौणत्वे चात्वसत्वेन। त्यद्। त्यदौ। त्यदः। अतित्यद्। अतित्यदौ। अतित्यदः। यः। यौ। ये। एषः। एतौ। एते। अन्वादेशे तु। एनं। एनौ। एनान्। एनेन। एनयोः २॥ ९९



तेनाह त्यदादीनामि तेत्यदादीनामिति किं। आतपः। तारकः। तदोरिति किं। यः। अनंत्ययोः किं। हे स। अत्र परत्वात्त्यदाद्यत्वं बाधित्वाददस्य सकारे सस इति हल्ङ्याद्यिना सुलोपे रुत्वविसर्गौ स्यातां। तथा च हे सः इति रूपं स्यात्। किं च स्त्रियां सेति रूपं न स्यात्। मरात् अंत्यस्य सकारे जाते पुनः प्रसंगविज्ञानात्त्यदाद्यत्वे सकारस्य सौ क्रियते तदा न किंचिद् निष्टमित्यनंत्ययोरिति त्यक्तुं शक्यं यदि तु तदोः सः सावित्यस्यानंतरं अदस औ सुलोपश्चेत्यत्रादस इति योगं विभज्यादस एव दकारस्य सत्वं नान्यस्य द स्येति नियमः क्रि तेत तदा सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न्यायेनाप्यनंत्ययोरिति त्यक्तुं शक्यं। न चैवं दानात्मन स्कृतिद्दीयति ततः कि पि स्व इति रूपं न स्यात्। किं तु द इति रूपं स्यादिति फलं॥

युजेरसमासे। उगिदचामित्यतः सर्वनामस्थान इत्यनुवर्तते। इदितो नुम्धातोरित्यतो नुमित्याशयेनाह। सर्वनामस्थाने नुम् स्यादिति। क्विन्प्रत्ययस्य। क्विनः कुरित्युक्ते ऽपि प्रत्यय ग्रहणे तदन्तग्रहणात् क्विन्नन्तस्य सिद्धे प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थमित्याशयेन व्याचष्टे। क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणफलं तु स्पृक् स्रगित्यादि सुध्यु भविष्यति। सुयुगिति। सुष्ठु युनक्तीति विग्रहे सत्सूद्विषेति क्विप्। तेनेह नेति। नुम्नेत्यर्थः। क्विन्प्रत्ययस्तु स्यादेव ऋत्विगित्यादिसूत्रे युजीति इकारनिर्देशान्नाखन्निति। खञ्ज

युजेरसमासे। ७।१।७१। युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तस्य लोपः। क्विन्प्रत्ययस्य कुः। ८।२।६२। क्विन्प्रत्ययो यस्मात्तस्य कवर्गो ऽन्तादेशः स्यात् पदान्ते। नस्य कुत्वेनानुनासिको ङकारः। युङ्। नश्चापदान्तस्येति नुमो ऽनुस्वारः परसवर्णः तस्यासिद्धत्वाच्चोः कुरिति कुत्वं न। युञ्जौ। युञ्जः। युङ्भ्याम्। युञ्जौ। युजः। युजा। युग्भ्यामित्यादि। असमासे किम्। चोः कुः। ८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। इति कुत्वं। क्विन्प्रत्ययस्येति कुत्वस्या सिद्धत्वात्। सुयुक्। सुयुग्। सुयुजौ। सुयुजः। युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न त्विका निर्देशः। तेनेह न। युज्यते समाधत्त इति युक्। युज समाधौ दैवादिक आत्मनेपदी। संयोगान्तलोपः। खन्। खञ्जौ। खञ्जः। इत्यादि। व्रश्चेति षत्वं। जश्त्वचर्त्वे। राट्। राड्। राजौ। राजः। राड्भ्याम्। राट्त्सु। एवं वि भ्राट्। देवेट्। देवेजौ। देवेजः। विश्वसृट्। इह यजिसृज्योः कुत्वं नेति क्वौ विवक्ष्यते। परिमृड्। षत्वविधौ राजिसाहचर्यात् टुभ्राजृ दीप्ताविति फणादिरेव गृ ह्यते। यस्तु एजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव। विभ्राक्। विभ्राग्भ्यामित्यादि। परौ व्रजेः षः पदान्ते। परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते विष येषत्वं च। परित्यज्य सर्वं व्रजतीति परिव्राट्। परिव्राजौ। परिव्राजः॥ ९ तीति खन्। खजिगतिवैकल्ये। एवं विभ्राडिति फणादिरयं विशेषेण भ्राजत इ ति विभ्राट्। देवान् यजतीति देवेट्। क्विपि यजादित्वात् संप्रसारणे आद्गुणः। विश्वं सृजतीति विश्वसृट्। क्विन्नतः। क्विन्प्रत्ययो यस्मात् इति बहुव्रीह्याश्रयणात् कुत्वं कस्मान्न भवतीत्याशंक्याह नेति क्वौ विवक्ष्यत इति। रज्जुसृड्भ्यामिति भाष्यकारप्रयोगात्। यद्वा व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवाद इति वक्ष्यत इत्यर्थः। परिमार्ष्टीति परिमृट्। परौ व्रजेः। क्विच्वचिप्रच्छिश्रीस्रुद्रुप्रुज्वां दीर्घो ऽसंप्रसारणं चेत्यौणादिकात् सूत्राद्दिह क्विप् दीर्घो वानुवर्तते। तदाह। क्विप् स्याद्दीर्घश्चेति॥

विश्वसृड् विश्वसृजौ विश्वसृजः ६

श। तथापि अस्मदो अहादेशार्थमिदं विंचत्वमावितिसूत्रेण। युवां युष्मान्वा अतिक्रांतो अतित्वमिति न सिध्यति। एकार्थवाचित्वाभावात् युष्मद् इति भावः। युष्मदस्मदो रिति। एतच्च युष्मदस्मदोरनादेश इत्यतो लभ्यते। शेषे। उक्तादन्यः शेषः आत्वयत्वे च प्रागुक्ते तद्विषयादन्य विभक्तिरिह शेषशब्दार्थः स्तदेतद्व्याचष्टे। आत्वयत्वनिमित्तेतरेति अत्यस्येति। अलोऽन्त्यपरिभाषयेति भावः। अतो गुण इति न व्याप्तु। त्वाहौ सौ वितियत्र त्वाहादेशयोः स्याकारउच्चारणार्थः एवास्तु किमनेन पररूपकरणप्रयासेनेत्याहुः। त्वं अहमिति। ननु युष्मानतिक्रांतः अतित्वमित्यादौ त्वाहौ सावित्यस्यावकाशो ऽस्ति त्वामतिक्रांतेनातित्वयेत्यादौ त्वमावेकवचने इत्यस्यावकाशः। त्वमहमित्यत्र उभयोः प्रसंगे त्वमावेकवचनइत्यनेन परत्वाद्बाध्यं। नैष दोषः। त्वमावपि प्रबाधेते एवं विप्रतिषेधतः इति वक्ष्यमाणत्वात्। अधिकरणत्वविवक्षयेति। यद्वि शेष इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेतत्। आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसंभवात्। न चैवमंत्यलोप इति पक्षस्य निरालंबनतापत्त्या युष्मदस्मदो रंत्यलोपः

युवावौ द्विवचने ७।२।९२। द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ। प्रथमायाश्च द्विवचने भाषायां। ७।२।८८। इह युष्मदस्मदोराकारोऽन्तादेशः स्यात्। ओ ङीत्येव सुवचं। भाषायां किं। युवम्वस्त्राणि। युवां। आवां। मपर्यन्तस्य किं। साकच्कस्य मा भूत्। युवकां। आवकां। त्वयामयेत्यत्र च त्वाम्येति मा भूत्। युवकाभ्यामावकाभ्यामिति च न सिध्येत्। यूयवयौ जसि ७।२।९३। स्पष्टं। यूयं। वयं। परमयूयं। परमवयं। अति यूयं। अति वयं। इह शेषे लोपोऽन्त्यलोप इति पक्षे जसः शी प्राप्तः अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति न भवति। ङे प्रथमयोरित्यत्र मकारान्तरस्य स्थिष्यअमम्मान्त एवावशि

स्यादिति ग्रंथो व्युत्क्रम इति वाच्यं। साम आकमिति सस्सुट्कानिर्देशेन तस्यापि पक्षस्य ज्ञापितत्वादिति भावः। अतो गुणो कृते भवतीत ^(( ध्यते। ननु विक्रियत इति व्याख्यानाद्धी
इति। वार्णादांगं बलीय इति तु समानाश्रय एव भवति। ननु व्याश्रये इह तु शेषे लोपस्य विभक्तिनिमित्तं पररूपस्य तु कार इति व्याश्रयत्वमिति भावः। समानाश्रये उदाहरणं तु कारक इत्यादि बोध्यं तत्र हि यण् इच्योः प्राप्तयोर्द्वि द्वि रेव भवति। आंगत्वात् अंतरंग विधिरित्या हृ परमत्व मित्यादि। ॥ युवावौ द्विवचने। उक्तिर्वचनं द्वयोर्वचनं द्विवचनं तदेतदाह द्वयोरुक्ताविति। न चात्र कृत्रिमन्याय विरोधः शंक्यः वचनग्रहणसामर्थ्यादेव तद्बाधात्। अन्यथा द्वित्व इत्येव ब्रूयात्। अष्टन आ विभक्तावित्यतो विभक्तावित्यधिकारात्। द्वित्वे या विभक्तिस्तस्यां परत इति व्याख्यानं संभवात्। युवं वस्त्राणीति। शेषे लोपः। मपर्यन्तस्य किमिति अधिकारसूत्रे किमर्थमिति प्रश्नः। युवकां आव।

राम
८०

भेदान्नियमपक्षो न संभवतीति वाच्यं।गौणोअत्वसत्वयोरसंभवेन हि रित्यस्यैवरूपस्यन्याप्यत्वादितिमनोरमायामुक्तत्वात्।सौ किं।तौ।ते।तं।तौ तान्।ननु तौ रसः साविस्येव
सूत्रमस्तु किमनेन तदोरिति पृथग्ग्रहणेनेति।मैवं।अनेषइत्यत्र नकारस्य सत्वप्रसंगात्।नलोपो न जस्तस्मान्नुडचीत्यजाद्युत्तरपदस्य एष इत्यस्य नुड्विधानेन त्यदादि
त्वर्गवत्वान्नकारस्याहेच सत्वे सति नुड्विधानं व्यर्थमिति वाच्यं।अनेष इत्यादौ सावकाशत्वात्।तथा च तदोरित्येव सूत्रेणुक्तं।ननु तस्मान्नुडचीति सूत्रे तस्मादिति पदं प
रित्यज्य लाघवान्नुगवीत्येवोच्यतां।तथा च अजाद्युत्तरपदे परे नञ एव नुगागम इत्यनेष इत्यत्र नोक्तदोष इति चेन्न।एवं तर्हि नलोपः प्रातिपदिकान्तस्येति नलोपः स्या
त्।विधानसामर्थ्यान्न भवतीति चेदेवमपि ङमो ह्रस्वादचीति ङमुड्दुर्वार एव।ततश्च तस्मान्नुडचीति सूत्रे पंचम्यंतमावश्यकमेव।टिद्भुवं घ श्चेत्ति तदोरिति सूत्रे

ङे प्रथमयोरम्।७।१।२८।युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात्।मपर्यन्तस्य।७।२।९१। इत्यधिकृत्य।त्वाहौ सौ।७।२।
९४।युष्मदस्मदोर्मपर्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौ परे।शेषे लोपः।७।२।९०।आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लो
पः स्यात्।अतो गुणे।अमि पूर्वः।त्वं।अहं।ननु त्वं स्त्री अहं स्त्री इत्यत्र त्व अम् अह अम् इति स्थिते।अमि पूर्वरूपत्वं परमपि बाधित्वाऽनारंभ्य त्वा ट्टाप् प्रा
प्नोति।सत्यं।अलिङ्गे युष्मदस्मदी तेन स्त्रीत्वाऽभावान्न टाप्।यद्वा शेष इति सप्तमीस्थानिनोऽधिकरणत्वविवक्षया तेन मपर्यन्तान्छेषस्य अदर
त्यस्य लोपः स्यात्।स च परोऽप्यन्तरङ्गे अतो गुणे कृते प्रवर्तते।अदन्तत्वाऽभावान्न टाप्।परमत्वं।परमाहं।अतित्वं।अत्यहं ॥ ० ॥ ॥

तोरिति वक्तुमशक्यं।अनेष इत्यत्रोक्तदोषात्।अत्रैवेयटः।त्तोरित्युक्तेऽप्यनेष इत्यत्र सत्वं न भवेत्।नुडागमस्य पदद्वयाश्रितत्वेन बहिरंगत्वादन्तरंगसत्वदृष्ट्याऽसिद्ध
त्वादिति।उत्तरपदाधिकारस्थकार्ये बहिरंगपरिभाषाभावस्य इच एकाचोमित्यत्र भाष्ये उक्तत्वादयं केयटश्चिंत्यः।गौणो वरितार्थत्वादिति गौणो हि अन्तरंगणकार्यत्वा
त्सत्वं न प्रवर्तते।त्वाहौ साविस्युक्ते तु अतिस्वमिति स्यादिति भावः।अत्वसत्वे नेति तयोः सर्वोऽयं तर्गणकार्यत्वादिति भावः।अतित्यदिति।त्यमतिक्रान्तो अतित्यद् ॥ ॥
ङे प्रथमयोरम्॥युष्मदस्मद्भ्यां ङसोऽशित्यतो युष्मदस्मद्भ्यामित्यनुवर्तते।ङे इति पृथक्पदं लुप्तषष्ठीकं।प्रथमयोरिति।द्विवचनबलेन प्रथमाशब्दः प्रथमाद्वि
तीयोभयार्थक इत्याशयेन व्याचष्टे।युष्मदस्मद्भ्यां परस्य ङे इत्यस्येत्यादिना।ङे सुटोरिति पूर्वं च।त्वाहौ सौ।यद्यपि युष्मदस्त्वमावेकवचन इत्येव त्वादे ॥

न्त्वाकारोच्चारणसामर्थ्यं एत्वनिवृत्त्याऽभ्यमइवचरितार्थत्वात्। इह युवावौ द्विवचने त्वमावेकवचने इति सूत्रद्वयेपि द्विवचनैकवचनशब्दावर्थपरौ नतु प्रत्ययपराविति
व्याख्याने तत्फलं दर्शयति। समस्यमानइत्यादिना द्व्येकत्ववाचिनी इति। पंचकं प्रातिपदिकार्थ इति पक्षाभिप्रायेणेदमुक्तं। अस्मिंस्तु पक्षे संख्यापि प्रातिपदिका
र्थत्वात्। त्रिकपक्षे तु द्व्येकार्थवाचिनी इति पाठ्यं। संख्याया विभक्त्यर्थत्वेपि संख्येयस्य प्रातिपदिकार्थत्वानपायात्। अन्यसंख्यश्चेदिति युष्मदस्मदर्थगतसंख्येतरसंख्या
युक्तश्चेदित्यर्थः। स्त इति। अर्थपरत्वाश्रयणसामर्थ्यादेवभूतश्चेत् तेरपि स्वीकारात्। युवावौ त्वमावपि स्तः प्रत्ययपरत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः। एवं च नत्वर्थश्लोकेपि
न युवावौ त्वमौ न चेत्युक्तया प्रत्ययपरत्वेऽतिव्याप्तिर्ध्वनिता। एवं चाव्याप्त्यतिव्याप्तिपरिहारायार्थपरत्वमाश्रितमिति फलितं। तान्न्वेवं सुजसङेङस्स्वपि युष्मदस्मदोर्द्व्यर्थत्वे यु
वावौ स्यातामेकार्थत्वे तु त्वमावित्याशंकायामाह। सुजसङेङस्सु परत इति। केते आदेशा इत्यत आह। त्वाहौ यूयवयौ इत्यादि। अस्त्वेवं त्वाहादिभिर्युवावयोर्बाधस्त्वमौ तु तेभ्यः
परौ कथं तैर्बाध्येतामित्यत आह। त्वमावपीति विप्रतिषेधे परमित्यत्र परशब्दस्येष्टवाचित्वादिति भावः। अतिक्रान्तमतिमाम् इति त्वां मां वा अतिक्रान्तौ इति विग्रहः। अतित्वयाम् अतिव
यमिति। त्वां मां वा अतिक्रान्ता इति विग्रहः। एवमग्रे पूर्वं। अतित्वाकमतिमाकमिति। अत्रान्त्यलोपपक्षे अगन्तत्वपरिभाषया नुडागमो निवार्यः। ह्रस्वनद्याप इत्यत्र ह्रस्वांता
द्विहितस्यामो नुडिति व्याख्यानाद्वा। नन्वेवं भिन्नविषयतया सुट्नुटोर्नुटो बाधकत्वाभावेनावर्णान्तसर्वनामभ्यो विहितस्यामो नुडेव परत्वात् स्यात् न तु सुडागमस्तस्य येषां
केषामित्यादौ सावकाशत्वादिति चेन्। अत्राहुः। त्यदादेरामि सुडिति वक्तव्ये आमि सर्वनाम्नः इति सर्वनामग्रहणसामर्थ्याद्धलि सर्वेषामित्यादिनिर्देशाच्चावर्णान्तस
र्वनामभ्यो य्याम सुडेव भवति न तु नुट्। शस्प्रभृतिष्विति च विषयसप्तमी तेन पदादिष्वप्यामि न नुडिति। एवं च साम इति ससुट्कनिर्देशेन युष्माकमस्माकमित्यत्र सुडा
माभावेपि नुडागमो दुर्वार इत्याशंकायामपि निरवकाश एवेति बोध्यं। यत्तु वदंति। साम आकमित्यत्रापि सुड्ग्रहणं न स्थानिविशेषणं बाधात्। तथा यि उपलक्ष
णं भवति। तेन यस्याम सुडग्रे भावी तस्यैवाम आकमा भवितव्यं न नैतद्द्वौ गात्वे संभवतीत्याकम् प्रवर्तते। तथा च अतित्वयाम् अतिमयामित्येवरूपं न त्वतित्वाकमतिमा
मिति। तदसत्। आकमापहृतस्याम सुडन्वयाभावात्। आकम सुड्भावी चेत्तर्हि तमेवोपलक्षयेत्। आदेशद्वारकेण परंपरासंबंधेन स्थानिनमुपलक्षयति चेदेवं
तर्हि युष्माकमित्यादौ सुट् श्रूयेत। साम इति॥

कामिति। ननु युवावयोः समुदायादेशत्वेपि युवकामित्यादि सिध्यति। ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्। अन्यत्र तु सुबंतस्य टेः प्रागिति युष्मदस्मद्विषये व्यवस्थाया स्त्वय कामयकेत्यादि सिद्धयेवश्यमंगत्वात् किमनेन मपर्यंतस्येत्यधिकारेणेत्यपरितोषादाह। त्वयामयेत्यत्रेति। ननु त्वमादेशयोरपि समुदायादेशत्वे त्वयेत्यादि साधयितुं शक्यत एव। योचीति सूत्रं परित्यज्य अच्ये इति सूत्रे कृते अजादौ विभक्तौ परतोऽन्त्यस्य एकारादेशे सत्यया देशप्रवृत्तेरिति। पुनरपरितोषादाह। युवकाभ्यामित्यादि। अंगकार्यमिति। एतेन अंग वृत्ते पुनर्वृत्तावविधिरिति परिभाषा अर्थतउपनिबद्धा। अंगे अंगाधिकारे वृत्तं वर्तनं यस्य तदंगवृत्तं शास्त्रं तस्मिन् प्रवृत्ते सति पुनरन्यस्यांगवृत्तशास्त्रस्य प्रवृत्तौ प्राप्तायां अविधि रितितत्परिभाषाया अर्थः। एषा च परिभाषा ज्ञाजनोर्जेत्यनेन ज्ञापिता। उपपत्तिस्तु मनोरमातोवगंतव्या। नन्वेवं द्वाभ्यामित्यत्र त्यदाद्यत्वे कृते सुपि चेति दीर्घो न स्यादितिवाच्यं

दस्म

त्वमावेकवचने। ७।२।९७। एकस्योक्तौ युष्मदस्मदोर्म्मपर्य्यन्तस्य त्वमौ स्तो विभक्तौ। द्वितीयायाञ्च। ७।२।८७ युष्मदोरेकारस्या त्। त्वां। मां। युवां। आवां। शसोन। ७।१।२९। नेत्यविभक्तिकं पदं युष्मदस्मद्भ्यांपरस्य शसो नकारस्यादमोऽपवादः। आदेः परस्य। सं योगान्तस्य लोपः। युष्मान्। अस्मान्। योऽचि ७।२।८९। अनयोर्य्यकारादेशस्यादनादेशेऽजादौ परतः। त्वया। मया ॥ ॥

द्वयोरेकस्येत्यादिनिर्देशेन उक्तपरिभाषाया अनित्यत्वज्ञापनादिति दिक्। मकारांतरमित्युपलक्षणं जसः शीत्यत्र जसः स इति सकारं प्रश्लिष्य सांतस्य जस इति व्याख्यानादन्तो मिति सूत्रादम् ग्रहणमनुवर्त्य अम् अमेवेति व्याख्यानाद्वेति बोध्यं। ॥ एकस्योक्ताविति त्वमावेकत्वे इति वक्तव्ये वचनग्रहणादयमर्थो लभ्यत इति भावः। अविभक्तिकमि ति। तथाऽडे प्रथमयोरिति पूर्वसूत्रेण प्राप्तस्यामः प्रतिषेधायमिति भाष्ये शंकितं। न च तथैव किन्न स्यात्। द्वितीयायां चेत्यात्वे पूर्वसवर्णदीर्घे तस्मान्नस इति नत्वे चेष्टसिद्धे रिति वाच्यं। स्त्रीनपुंसकयोर्नत्वाऽप्राप्त्या युष्मान् ब्राह्मणीः युष्मान्कुलानीत्यसिद्धिप्रसंगात्। अलिंगत्वपक्षे तु युष्मान् ब्राह्मणानित्यादेरप्यसिद्धिप्रसंगाच्च। योचि। अचि किं। युवाभ्यां। यदि तु युष्मदस्मदोरनादेश इत्यत्र रायो हलीत्यतो हलीत्यनुवर्त्तेत तदेहाचीति मास्तु परिशेषादेव सिद्धेः ॥ ॥ ॥

तेर्लस्यानुरोधेनस्थानषष्ठ्यपिस्वीक्रियतेज्ञापकसिद्धाअनयवषष्ठीतुनसर्वेत्रस्वीक्रियतेइतिनलोपस्त्वेमनोरमायामेतद्ग्रहणंत्यक्तुंशक्यमित्युक्तंभाष्यादौतुपदस्ये
त्यधिकृतस्यावयवषष्ठ्यंतत्त्वमप्यभ्युपगम्यतेनतुस्थानषष्ठ्यंतत्त्वमेवेतिज्ञापनार्थमेतद्ग्रहणंतेनवृक्षवंतौवृक्षवंतइत्यत्रमाडुपधायाइतिवत्वंसिध्यतिपदावयवस्य
मतुपःसत्त्वात्।अन्यथापदस्येत्यस्यविशेष्यत्वेमतुपान्तदंतविधौमत्वंतंयत्पदंतस्यनयवस्यमतुपोमाडुपधायाःपरस्यमस्यवत्वंभवतीत्यर्थःस्यात्।तथाचवृक्षस्य
नित्यत्रैवस्यात्नतुवृक्षवंतौवृक्षवंतइत्यत्रेतिस्थितं।पदात्।कुत्सनेचसुप्यगोत्रादावित्यतःप्रागयमधिकारःयदितुकुत्सनेचसुपीत्यत्रापिपदादित्यनुवर्तेततदा
वदन्तःपचतिपूतीत्यत्रैवनिघातःस्यान्नतुपचतिपूतीत्यत्र।अनुदात्तंसर्वमपादादौ।इदंपदत्रयमापादपरिसमाप्तेरधिक्रियते।षष्ठीचतुर्थीति।भस्यापत्यंरमिति

श्रीशस्त्वाऽवतुमापीहदत्तात्तेमेपिशर्मसःस्वामीतेमेपिसहरिःपातुवामपिनौविभुः॥१॥सुखंवान्नौददात्वीशःपतिर्वामपिनोहरिःसोव्याद्वो
नःशिवंवोनोदद्यात्सेव्योत्रवःसनः२पदात्परयोःकिं।वाक्यादौमाभूत्।त्वाम्यातुमाम्यातु।अपादादौकिं।वेदैरशेषैःसंवेद्योऽस्मान्कृष्णःसर्व
दावतु।स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेवानेहा।इतियुष्मत्पुत्रोब्रवीति।इत्यस्मत्पुत्रोब्रवीति।समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याः।एक
तिङ्वाक्यंतेनेहन।ओदनंपचतवभविष्यति।इहतुस्यादेव।शालीनांतेओदनंदास्यामीति।एतेवांनावादयआदेशाअनन्वादेशेवावक्तव्याः।
अन्वादेशेतुनित्यंस्युः।धातातेभक्तोस्ति।धातातवभक्तोस्तीतिवा।तस्मैतेनमइत्येवानचवाहाऽहैवयुक्ते।८।१।२४।चादिपञ्चकयोगेनैतेआदेशास्युः
हरिस्त्वांमांचरक्षतु।कथंत्वांमांवानरक्षेदित्यादि।युक्तग्रहणात्साक्षाद्योगेऽयंनिषेधःपरम्परासम्बन्धेतु।आदेशस्यादेवहरोहरिश्चमेस्वामी॥

६ठीत्यस्यपूर्वनिपातःषष्ठ्यादिविशिष्टयोरितिनतुयुष्मदस्मदोरित्युक्तत्वात्तयोरेववांनावादयआदेशाःस्युःनचपदस्येत्यधिकाराद्विभक्त्यंतस्यैवपदत्वात्षष्ठ्यादिवि
शिष्टयोरेवस्युरितिवाच्यं।उक्तरीत्यावस्त्रसादौदोषाभावेपिभ्यामादौपरतोयुष्मदस्मदोःपदत्वात्केवलयोर्वांनावादेशप्रसंगस्यदुर्वारत्वात्।तथाचयुवाभ्यांदत्तम्
इत्तिप्रयोगोनसंगच्छेतनापिद्वितीयास्थयोरितिस्थग्रहणसामर्थ्याद्विभक्तिविशिष्टयोरेवआदेशाभवेयुरितिवाच्यं।स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेवेति
ज्ञापयतात्सामर्थ्यस्योपक्षयात्।मेवं।अनुदात्तंसर्वमितिसर्वग्रहणाधिकारात्सर्वस्यैवविभक्तिविशिष्टस्यआदेशाभवंतीतिआकरेस्पष्टत्वात्।यदितुसर्वस्यदेइत्यतः
तिपदमनुवर्ततेतदासर्वग्रहणमिहत्यक्तुंशक्यमित्याहुःउक्तानादेशान्वचनक्रमेणोदाहरति॥ श्रीशइत्यादिना॥

प्रशान् ४

निर्देशसामर्थ्यान्नस्यूयेतेतिचेन्न। निर्देशस्यगौणाव्यावृत्त्याचरितार्थत्वेनसामर्थ्याभावादित्यन्यत्रविस्तरः। गुणीभूतयोर्युष्मदस्मदोरेकार्थत्वेउदाहरणान्युक्त्वासंप्रतिद्व्यर्थ-
वाचित्वेउदाहरति। युवामावांवा अतिक्रांतइत्यादिना। बह्वर्थयोस्तुउदाहरति। युष्मानस्मान्वेति॥ ॥पदस्य॥ अपदांतस्यमूर्द्धन्यइतिविरोधनिर्देशात्प्राक्पदस्येत्यप्-
मधिकारः। तेनराजाराजभ्यामित्यादौनलोपः प्रातिपदिकांतस्येतिनलोपः सिध्यति। ननुराजाराजानौराजानइत्यत्र। तथागोमान्यवमानित्यादौसंयोगांतलोपो नतुगोमं-
तौयवमन्तावित्यादौ तथामोनोधातोरितिनत्वंप्रशान्भ्यामित्यादौभवति नतुप्रशामौप्रशामइत्यत्र। तथाहरिंवंदेइत्यादौमोनुस्वारःप्रवर्तते नतुगम्यतइत्यादौ नचउक्तिचप-
देइत्यतः पदेइत्यधिकारात्पदेपरतोमस्यानुस्वारःस्यात् नतुगम्यतइत्यत्रेतिकिमिहपदस्येत्यधिकारेणेतिवाच्यं। वंखितिरूपासिद्धिप्रसंगात्। तस्मान्मोनुस्वारइत्यत्र
पदस्येत्यनुवर्तनीयमेव पदेइत्यस्योत्तरसूत्रेष्वुपयोगोनास्तीत्युक्तिचपदेइत्यनावोचाम इहपदस्येतिसंबंधसामान्येषष्ठीसानूत्तरेषुवाक्येषुयथायोगंसंबंधविशेषेभवतिष्ठ

पदस्य। ८।१।१६। पदात्। ८।१।१७। अनुदात्तंसर्वमपादादौ। ८।१।१८। इत्यधिकृत्य युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ। ८।१।२०। पदा-
त्परयोरपादादौस्थितयोरनयोःषष्ठ्यादिविशिष्टयोर्वान्नावित्यादेशौस्तस्तौचानुदात्तौ। बहुवचनस्यवस्नसौ। ८।१।२१। उक्तविधयोरनयोःष-
ष्ठ्यादिबहुवचनान्तयोर्वस्नसौस्तः। वान्नावोरपवादः। तेमयावेकवचनस्य ८।१। उक्तविधयोरनयोःषष्ठीचतुर्थ्येकवचनान्तयोस्तेमेएतौस्तः।
त्वामौद्वितीयायाः। ८।१।२३। द्वितीयैकवचनान्तयोस्त्वामाएतौस्तः॥ ९९ तेक्वचित्स्थानेषष्ठीक्वचित् अवयवषष्ठीति। तत्रसंयोगांतस्यलोपः। मोनोधातोः।

मोनुस्वारः इत्यादौपदस्येतिस्थानषष्ठी। अवयवषष्ठ्यांतूक्तातिप्रसंगात्। माद्युपधायाश्चइत्यादौत्ववयवषष्ठी। अन्यथारुस्वानित्यत्रैवमतुपोमस्यवत्वंस्यान्नतुरुस्वतौद-
रुस्वंतइत्यत्र। एतच्चानुपदमेवोपपादयिष्यते। यद्यपिषष्ठीस्थानेयोगेतिपरिभाषयापदस्येत्यत्रस्थानषष्ठ्येवलभ्यतेनत्ववयवषष्ठीतथापिनलोपःप्रातिपदिकांतस्येतिग्रहणा-
ज्ज्ञापकादवयवषष्ठ्यपिलभ्यते। यदिपदस्येतिस्थानषष्ठ्येवस्यात्तर्हिनांतस्यपदस्यलोपोभवन्नलोंत्यस्यस्यादिति अंतग्रहणमनर्थकंस्यात्। अवयवषष्ठ्यंगीकारेतु
अंतस्येतिग्रहणंसार्थकं। तथाचनलोपसूत्रेप्रातिपदिकांतस्येत्यसमासनिर्देशः। प्रातिपदिकसंज्ञकस्यपदस्यअंतावयवोयोनकारस्तस्यलोपइतिसूत्रार्थइति। ननु
एवमंतस्येतिग्रहणमवयवषष्ठीत्वज्ञापनार्थमितिस्वीकारात्पदस्येत्यत्रकथंनामस्थानषष्ठीलाभः संबंधविशेषस्यनिर्द्धारितत्वेनस्थानषष्ठीपरिभाषायाअनुपस्थितेः

॥
स्वामीते मेपीति। स्वामीश्वराधिपतीति षष्ठीसप्तम्योर्विधानादिह षष्ठी। द्विवचनांतयोरुदाहरणमाह। पातुवामित्यादिना। बहुवचनांतयोस्तु सोव्याद्वोनइत्यादि। सेव्योत्रवः स
नइति ॥ अर्हेकृत्यतृचश्चेतिण्यत्। कृत्यानांकर्तरिवेति षष्ठी। वेदैरशेषैरितियुष्मान्रक्षतुगो विंदइति प्राचःपाठस्तूपेक्षितः। युष्मानित्यस्यपदात्परत्वाभावादेवाप्राप्तेः। अस्मानि
त्यस्यतु पदात्परत्वेपिसमानवाक्यस्थपदात्परत्वाभावात्। ननुयुष्मदस्मदोःषष्ठीचतुर्थीद्वितीयानामितिसूच्यतांविशेषणेनतदंतविधौषष्ठ्याद्यंतयोर्युष्मदस्मदोः पर्यवस्य
ति। नचस्थग्रहणाभावे युष्मदस्मदोःसंबधिनोनांषष्ठीचतुर्थीद्वितीयानामित्यर्थःस्यादितिवाच्यं। सर्वस्यपदस्येत्यनुवर्तनाद्दत्तो व्याचष्टे। स्थग्रहणादिति। तिष्ठतिरिहा
ह्रानेोवर्त्तते। यथा समयेतिष्ठसुग्रीवेतिसमयंमाह्रासीरितिगम्यते। तेनषष्ठ्यादीनविजहतोरेवयुष्मदस्मदोरादेशाइत्यर्थः। इतियुष्मत्पुत्रइति। युवयोःपुत्रोयुष्माकंपुत्रइतिवा
विग्रहः। ननुतवपुत्रइति। तथाहि सतित्वत्पुत्रइत्येवस्यात्। एवमस्मत्पुत्रइत्यत्रापूत्वं। परात्परत्वंसंपादयितुमितिशब्दः। ननुराज्ञोःपुरुषो राज्ञांपुरुषइतिविग्रहेरा
जपुरुषइतिनेष्यतइतिसिद्धांतविरोधाद्युष्मत्पुत्रोऽस्मत्पुत्रइत्यत्रयुवयोर्युष्माकमित्यादिविग्रहोनसंभवतीतिचेत्। अत्राहुः। यत्रवृत्तौसंख्याविशेषबोधकंप्रमाणं
नास्तितत्रैवैकत्वसंख्याश्रीयते यथा राजपुरुषइति नहि राजपुरुषइत्यत्रविभक्तौनिवृत्तायांराजपदार्थेद्वित्वादिप्रत्यायकंकिंचिदस्ति यत्रयुनःसंख्याभेदगमकमर्थ
प्रकरणाद्यस्तिभवतितत्रद्विवचनबहुवचनयोरपिप्रवृत्तिः। प्रवृत्तेत्वेकवचनांतेनविग्रहेप्रत्ययोत्तरपदयोश्चेतित्वमादेशप्रसंगाद्यथाद्विवचनबहुवचनांतेनेतिवि
ग्रहेवृत्तिर्भविष्यतीति। अर्थःसामर्थ्यात्। अर्थाद्यथा। अदंष्ट्रीतोमोद्विकः। नरत्वेकेनमुखेनद्वाभ्यांवाअङ्गाभ्यांक्रयणंसंभवति। प्रकरणाद्यथा। भवद्भिरामवसरप्रदानायव
चांसिनः। भवतोर्गिरामितितत्रत्यर्थः। समानवाक्यइति। देवदत्तअस्त्ययंदंडोदेवदत्तहरानेनेत्यत्रदंडइत्यत्रतत्सर्वंवाक्यस्थमितिसमानवाक्यस्थत्वाभावादामंत्रितनि
घातोनभवति। एकतिङ्। तिङ्। एकंतिङ्तिङ्। तंयत्रेतिबहुव्रीहिः। ननुओदनस्त्वयापक्तव्यस्तवभविष्यतीत्यत्रातिप्रसंगः पक्तव्योस्तीत्यध्याहारेणभिन्नवाक्यतासमर्थ
नेपियश्यमृगोधावतिइत्यादावेकवाक्यत्वव्यवहारोनस्यात्। सत्यांप्रकृतोपयोगित्वेनेदमुक्तं। पश्यमृगइत्यादौत्वर्थैकत्वादेकंवावयंसाकांक्षं चेद्विभागेस्या ॥
॥

इदितस्तु नलोपाभावादग्निमत्। अग्निमथौ। अग्निमथः। यांता॥ ॥ अनिदितां। इह ह्रस्व इकार इत्संज्ञको येषां ते निदितः। न इदितः अनिदितः तेषामनिदितां। एतच्चांगस्य विशेषणं। हल इत्यपि तदाह। हलंतानामनिदितामिति। उपधाया नस्येति। श्नान्नलोप इति सूत्रान्नेति लुप्तषष्ठीकं पदमनुवर्त्तते तच्चोपधाग्रहणेन विशेष्यत इति भावः। अनिदितामिति किं। नंद्यते। हलः किं। नीयते। उपधायाः किं। हन्यते। अचः। अल्लोपोन इत्यतो लोप इत्यनुवर्त्तते। भस्येति चात्। तदाह भस्याकारस्य लोपः स्यादिति। अत्र नव्याः। यद्यत्रांचतेर्भस्येति सामानाधिकरण्येनान्वयः स्वीक्रियेत तर्हि प्रतीचः प्रतीचेत्यादि न सिध्येत्। उपसर्गसहितस्यैव भत्वेन केवलस्यांचतेर्भत्वाभावात्। भस्यावयव॰ वस्यांचतेरिति वैयधिकरण्येनान्वये तु प्रत्यगात्मनेत्यादावंचतेरकारस्य लोपः स्यात्। अंचत्यंतस्य भस्याकारस्य लोप इति व्याख्यायां प्राचः प्राचेति प्रशब्दाकारस्यापि लोपः॥

अनिदितां हल उपधायाः क्ङिति। ६।४।२४। हलंतानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात् किति ङिति च। उगिदचामिति नुम्। संयोगान्तस्य लोपः। नुमो नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः। प्राङ्। अनुस्वारपरसवर्णौ। प्राञ्चौ। प्राञ्चः। प्राञ्चं। प्राञ्चौ। अचः। ६।४।१३८। लुप्तनकारस्यांचतेर्भस्याकारस्य लोपः स्यात्। चौ। ६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात्। प्राचः। प्राचा। प्राग्भ्यामित्यादि। प्रत्यङ्। प्रत्यञ्चौ। प्रत्यञ्चः। प्रत्यञ्चं। प्रत्यञ्चौ। अच इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्त्तते। अकृतव्यूहा इति परिभाषया। प्रतीचः। प्रतीचा। अमुमञ्चतीति विग्रहे। अदस् अञ्च् इति स्थिते॥ ॥

न्। तत्राचः इत्यादिना अंचत्यंतस्य भस्यांचतेरकारस्येति व्याख्यानेऽपि प्रत्यञ्चमंचति प्रत्यगङ्। ततः शसादिषु प्रत्यङ्चः प्रत्यङ्चेत्यादावति प्रसंग एव। तस्मादल्लोपोन इत्यत्रेव अत्रापि अंगावयवोऽसर्वनामस्थानयजादिस्वादिपरो योंऽचतिस्तस्याकारस्य लोपः स्यादिति व्याख्येयं। सुप्राग्पाठाद॰ प्रतीच इति निर्देशश्चेह व्याख्याने लिंगमित्याहुः। चौ। वजारिति निर्देशाच्च वर्गग्रहणं न भवतीत्याह। लुप्ताकारनकारेंचताविति। अत्राकारलोपेन नकारलोपस्यासमत्वान्नत्कथनं व्यर्थमेव किंतु लुप्ताकारेंचतावित्येव सुवचमित्याहुः। ढ्रलोप इति सूत्रादणो दीर्घ इत्यस्य चानुवर्तनादाह। अणो दीर्घः स्यादिति। प्राचः। प्राचेति। प्रच इत्याद्यर्थमवश्यं स्वीकार्ये नलोपे कृतेऽनेन दीर्घो विधीयत इति भावः। प्राग्भ्यामिति। चोः कुरिति कुत्वं न तु क्विन्प्रत्ययस्येत्यनेन तस्यासिद्धत्वात्॥ ॥ ॥

ततोहरिरितिप्रथमांतंततः परस्ययुष्मच्छब्दस्यादेशः। तथात्रायमेइत्यस्मात्परंस इतिप्रथमांतंततः परस्यास्मच्छब्दस्यादेशः॥ ॥ सामन्त्रितं॥ संबोधने चेत्यतः संबोधने इत्यनुवर्तते॥
स इत्यनेन प्रथमा निर्दिश्यते। महासंज्ञाकरणसामर्थ्यात्संज्ञाविधावपितदंतग्रहणं। आमंत्रणमामंत्रितमुपचारात्तत्साधनेवृत्तिः विभक्तंयतेन चामंत्र्यतेनतु केवलपाविभ
क्त्येत्याशयेनाह तदंतमिति। इहेति। अग्नेतवादेवास्मानित्यत्र युष्मदस्मदोर्नभवत्यादेशः। अग्नेनयेत्यत्रातिङ्तिङ इतिनतिङ्निघातः अग्नइंद्रवरुणेत्यत्रत्वामंत्रितस्यचेत्याम
न्त्रितनिघातोनेतिविवेकः। सर्वेषांनिघात इति। अयंच निघातः पदकालेश्रूयतेनतुसंहिताकाले। स्वरितात्संहितायामनुदात्तानामितिसंहितायामेकश्रुतिविधानात्। अग्ने
ऽतेजस्विन्निति। इहपदात्परत्वात्तेजस्विन्नित्यस्यामंत्रितस्यचेत्याष्टमिकनिघातः सर्वानुदात्तः। सुपादिति। शोभनौपादौ यस्येतिबहुव्रीहिः। संख्यासुपूर्वस्येतिपादस्यांतलो

सामन्त्रितं २।३।४८। सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्। आमन्त्रितम्पूर्वमविद्यमानवत् ८।१।७२। स्पष्टं। अग्ने तव देवास्मान्पाहि। अग्ने नय।
अग्न इन्द्र वरुण। इह युष्मदस्मदोरादेशास्तिङन्तनिघात आमन्त्रितनिघातश्च न। सर्वदा रक्ष देव न इत्यत्र तु देवेत्यस्याविद्यमानत्वेपि ततः प्राची व
नं रक्षेत्येतदाश्रित्यादेशः। एवं इमं मे गङ्गे यमुने इति मन्त्रे यमुने इत्यादिभ्यः प्राचीनामन्त्रिताविद्यमानवत्त्वेपि मेशब्दमेवाश्रित्य सर्वेषान्निघातः।
नामन्त्रिते समानाधिकरणे सामान्यवचनं ८।१।७३। विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाऽविद्यमानवत्स्यात्। हरे दयालो नः पा
हि। अग्ने तेजस्विन्। सुपात्। सुपादौ। सुपादः। सुपादं। सुपादौ। पादः पत् ६।४।१३०। पाच्छब्दान्तं यदङ्गम्भन्तदवयवस्य पाच्छब्दस्य पदादेशः
स्यात्। सुपदः। सुपदा। सुपाद्भ्यामित्यादि। अग्निमन्थतीत्यग्निमत्। अग्निमद्। अग्निमथौ। अग्निमथः। अग्निमद्भ्यामित्यादि। ऋत्विगादिसूत्रेण क्विः।
सुप्युपपदे क्विन्॥

पः। पादः पत्तदवयवस्येति। एतच्च निर्दिश्यमानस्यादेशाभवंतीतिपरिभाषयालभ्यते। इयंच परिभाषाषष्ठीस्थानेयोगेत्यनेनज्ञापिता। तथा
हि। अस्तेर्भूरित्याद्यार्धधातुके सामीप्यादिसंबंधप्रसंगेपि लक्ष्यानुरोधेन व्याख्यानादंतरंगत्वात्स्थानिवदादेशइतिज्ञापकाच्चस्थानेयोगत्वासिद्धेप्यारभ्यमाणोन षष्ठीस्थाने
योगेत्यनेन षष्ठ्यंतमुच्चार्यमाणमेव स्थानेनयुज्यते नतु प्रतीयमानमित्यर्थो लभ्यते। तथाच निर्दिश्यमानस्यादेशाभवंतीति सिद्धं। अलोंत्यस्यादेः परस्येतियोगौतुआरंभ
सामर्थ्यान्निर्दिश्यमानपरिभाषायाबाधकौ। तेनपमः स्वप्यमपरेउदः स्थास्तंभोरित्यादौ न दोष इतिदिक्॥ दांताः॥ अग्निमदिति। मथ्नातेर्मथतेश्चक्विपि एतदेवरूपं॥

अन्यत्रेति। अतः कृकमीत्यादौ। तेनेति। अन्यथा नित्यं समास इत्यतोऽनुवृत्तेन समासग्रहणेनोत्तरपदस्याक्षेपात्तत्र कृकमीति कृधातुग्रहणे च आनूत्तरपदक एवापस्य
दित्यादौ सत्वं स्यान्नत्वसतोत्तरपदकेऽयस्कार इत्यत्रेति भावः॥ ॥ ॥ उद ईत्। अच इत्यस्यापवादः। इह अच इत्यनुवर्तते भस्येति च। तदाह। उच्छब्दात्परस्य लुप्तनकार
स्येत्यादि। भस्येति किं। उदञ्चौ। उदञ्चः। उदग्भ्यां। लुप्तनकारस्येति किं। पूजायां उदञ्चः। उदञ्चेति। यथा स्यादिति। समः समि। समीत्यविभक्तिको निर्देशः। एवं तिरसस्तिरि
त्यपि संगतमञ्चतीति सम्यक्। समीच इति। अचोपेत्यावितिदीर्घः। सहअञ्चतीति सध्र्यङ्। भविषयेऽचोपदीर्घौ सध्रीच इत्यादिति रसः नविद्यते लोपो यस्य सः अलोपः

उद ईत्। ६।४।१३९। उच्छब्दात्परस्य लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य ईत्स्यात्। उदीचः। उदीचा। उदग्भ्यामित्यादि। समः समि। ६।३।९३। अप्रत्य
यान्तेऽञ्चतौ परे। सम्यङ्। सम्यञ्चौ। सम्यञ्चः। समीचः। समीचा। सहस्य सध्रिः। ६।३।९५। अप्रत्ययान्तेऽञ्चतौ परे। सध्र्यङ्। तिरसस्तिर्यलोपे। ६।
३।९४। अलुप्ताऽकारेऽञ्चतावप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात्। तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। तिर्यञ्चं। तिर्यञ्चौ। तिरश्चः। तिरश्चा। तिर्यग्भ्या
मित्यादि। नाञ्चेः पूजायां। ६।४।३०। पूजार्थस्याऽञ्चतेरुपधाया नस्य लोपो न स्यात्। अलुप्तनकारत्वान्न नुम्। प्राङ्। प्राञ्चौ। प्राञ्चः। नलोपाऽभावा
दकारलोपो न। प्राञ्चः। प्राञ्चा। प्राङ्भ्यां। प्राङ्क्षु। प्राङ्षु। एवं पूजार्थे प्रत्यङ्ङादयः। क्रुञ्च कौटिल्याल्पीभावयोः। अस्मात् ऋत्विगादिना नलोपाभा
वोऽपि निपात्यते। क्रुङ्। क्रुञ्चौ। क्रुञ्चः। क्रुङ्भ्यामित्यादि। चोः कुः। पयोमुक्। पयोमुग्। पयोमुचौ। पयोमुचः। व्रश्चेति षत्वं। स्कोरिति सलोपः। जश्त्वच
सु त्वे। सुवृट्। सुवृड्। सुवृश्चौ। सुवृश्चः। सुवृड्भ्यां। सुवृट्त्सु। महत्। पूजायां। वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च। एते निपात्यन्ते शतृवच्चैषां कार्यं स्या
त्। उगित्त्वान्नुम्। सान्तमहत इति दीर्घः। मह्यते पूज्यते। महान्। महान्तौ। महान्तः। हे महन्। महतः। महता। महद्भ्यामित्यादि॥ ॥ ॥

इति बहुव्रीहिः। अञ्चताविति अत्र वर्तमानमन्यपदार्थं। अवयवहारकस्य लोपः समुदायेऽउपचर्यत इत्यभिप्रेत्याह। अलुप्ताकार इत्यादि। अकारलोपे सतीति नोक्तं व्याख्या
ता वप्रत्ययान्ते किं। तिरोञ्चनमित्यादौ माभूत्। तिरश्च इति। लुप्ताकारत्वात्तिर्यादेशाभावे सस्य श्चुत्वेन शः। न चाल्लोपस्य स्थानिवत्त्वात् श्चुत्वं न स्यादिति वाच्यं। पूर्व
त्रासिद्धे तदभावात्पदान्तविधित्वाच्च। नाञ्चेः। जमेव सिद्धे प्राञ्चः प्राचेत्यादौ उमोभावेऽपि नकारः श्रवणार्थः। प्राङिति॥

विष्वग्देवयोश्च। चकारेणाद्रिः सर्वनाम्न इत्यतः सर्वनाम्न इति लभ्यत इत्याह। अनयोः सर्वनाम्नश्चेति। अप्रत्ययान्तेऽञ्चताविति। अविद्यमानः प्रत्ययोऽप्रत्ययः क्विन्क्विबादिः।
अंचतौ वप्रत्यय इति पाठे तु वप्रत्ययान्तेऽञ्चताविति व्याख्येयं। विष्वग्देवयोस्तूदाहरणं विष्वगंचतीति विष्वद्र्यङ्। देवानंचतीति देवद्र्यङ्। इति बोध्यं। अदसोऽसेः असेरिति। इ
कार उच्चारणार्थस्तदाह। अदसोऽसांतस्येति। असांतस्येति किं। अमुमात्मन इच्छति अदस्यति। दात्परस्य किं। अमुया। अमुयोरित्यत्रोत्त्वं यकारस्य माभूत्। ह्रस्वव्यंजनयो
रिति। व्यंजनस्य हि ह्रस्व ईषत्सदृशो दीर्घस्तु विसदृश इति भावः। प्रांचस्तु ह्रस्वदीर्घयोः समाहारद्वंद्वमकृत्वैव विधीयमानोऽप्यण् क्वचित्सवर्णान्गृह्णातीति स्वीकृत्य

विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये। ६।३।९२। अनयोस्सर्वनाम्नश्च टेरद्र्यादेशस्स्यादप्रत्ययान्तेऽञ्चतौ परे। अदद्रि अच् इति स्थिते यणि। अदसोऽसे
र्दादु दो मः। ८।२।८०। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च। उ इति ह्रस्वदीर्घयोस्समाहारद्वन्द्वः। आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य
दीर्घः। अमुमुयङ्। अमुमुयञ्चौ। अमुमुयञ्चः। अमुमुयञ्चं। अमुमुयञ्चौ। अमुमुईचः। अमुमुईचा। अमुमुयग्भ्यामित्यादि। मुत्वस्याऽसिद्धत्वान्न य
ण्। अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते। अदमुयङ्। असेः सकारस्य स्थाने यस्य सः असिरिति व्याख्यानात्
त्यदाद्यत्वविषय एव मुत्वं नान्यत्रेति पक्षे अदद्र्यङ्। उक्तञ्च। अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्। केचिदन्त्यसदेशस्य नेत्येकेऽसे
र्हि दृश्यत इति। विष्वग्देवयोः किं। अश्वाची। अञ्चतौ किं। विष्वग्युक्। अप्रत्यये किं विष्वगञ्चनं। अप्रत्ययग्रहणं ज्ञापयति। अन्यत्र धातुग्रहणे तदादि
विधिरिति। तेनाऽयस्कारः। अतः कृकमीति सः। उदङ्। उदञ्चौ। उदञ्चः। शसादावचि॥ ९९ आंतरतम्यात् ह्रस्वव्यंजनयोर्ह्रस्वः दीर्घस्य दीर्घः इति व्याच

ख्याते अंत्यबाध इति। सूत्रे अदस इति नावयवषष्ठी किंतु स्थानेषष्ठी एवं हि अलोऽन्त्यपरिभाषोपतिष्ठते। तथा च अदसो योंऽत्यः सदात्परो न भवति दात्परो यः स अदसोंऽत्यो न
भवतीत्येवमंत्यबाधे त्यसमीपस्य भवतीति तेषामाशयः। उक्तं चेति। वार्तिककारेणेति शेषः। एवं च अमुद्र्यङ् इति केषांचिदुदाहरणमाभाष्यानुक्तत्वादुपेक्ष्यमिति भावः।
लत्ववदिति। चलीक्लृप्यत इत्यत्र कृपो रो ल इत्युभयोर्यथा लत्वं तथेत्यर्थः। नन्वप्रत्ययग्रहणाभावेऽप्युत्तरपदाधिकारस्थत्वाद्विष्वद्र्यङ् देवद्र्यङ् इत्यञ्चत्युत्तरप
दे एवाद्र्यादेशः स्यान्न तु विष्वगंचनमित्यत आह। अप्रत्ययग्रहणं ज्ञापयतीति ॥ ॥ ॥

नाभ्यस्ताच्छतुः व्यवहितोपि नुमेवात्र निषिध्यते। अन्येषामप्रसक्तेरित्यभिप्रेत्याह। नुम्न स्यादिति। ददत्। ददाति इति ददत्। दाञो लटः शत्रादेशः शपः श्लुः श्लाविति द्वित्वं अभ्यासस्य ह्रस्वः श्नाभ्यस्तयोरात इत्यालोपः। जक्षित्यादयः षट्। जक्षितिः पृथक्पदं इति शब्देन जक्षिरेव परामृश्यते इति आदिर्येषामित्यतद्गुणसंविज्ञानबहुव्रीहिः तदेतदाह। षड्धातवोऽन्ये इति। ताताः। गोपायतीति गुप् क्विपि विवक्षिते आयादय आर्धधातुके वेति विकल्पितत्वादिहायप्रत्ययाभावः। आयप्रत्ययपक्षे तु लोपे पलोपे च गोपा इति रूपं बोध्यं। पाता। त्यदादिषु। कञ्चेत्यस्य तु तादृशाय तादृशस्त्या इति चात्र नोक्तं हलोति षड्नुपयोगात्। अनालोचने किं। तं पश्यतीति तद्दर्शः। कर्मण्यण्। तादृ

नाभ्यस्ताच्छतुः ७।१।७८॥ अभ्यस्तात्परस्य शतुर्नुम् न स्यात्। ददत्। ददद्। ददतौ। ददतः। जक्षित्यादयः षट् ६।१।६॥ षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः। जक्षत्। जक्षद्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्। दीधीवेव्योः ङित्वेऽपि छान्दसत्वात् अनन्तरेण परस्मै पदं। दीध्यत्। वेव्यत्। गुप्। गुब्। गुपौ। गुपः। गुब्भ्यामित्यादि॥ त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६०॥ त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेः कञ् स्यात्। चात् क्विन्। आ सर्वनाम्नः ६।३।९१॥ सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु। कुत्वस्यासिद्धत्वाद्व्रश्चेति षः। तस्य जश्त्वेन डः। तस्य कुत्वेन गः। तस्य चर्त्वे न पक्षे कः। तादृक्। तादृग्। तादृशौ। तादृशः। षत्वापवादत्वात् कुत्वेन खकार इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयते। नन्वगः जश्त्वं प्रति कुत्वस्यासिद्धत्वात् दिगादिभ्यो यदिति निर्देशान्नासिद्धत्वमिति बोध्यम्। व्रश्चेति षत्वं। जश्त्वचर्त्वे। विट्। विड्। विशौ। विशः। विशा। नशेर्वा ८।२।६३॥ नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते। नक्। नग्। नट्। नड्। नशौ। नशः। नग्भ्यां नड्भ्यामित्यादि॥ ९९

शादयस्तु रूढिशब्दत्वाद्दृशिरप्यवयवार्थेनानु त्यार्चते। अत एव अज्ञानार्थाद्दृशेरिति संगच्छते। भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता। तमिवेमं पश्यंति जनाः स इवायं पश्यति ज्ञानविषयो भवतीत्यर्थाद्ज्ञानार्थादिति संगच्छते। तत्र दृशेर्ज्ञानविषयत्वापत्तिमात्रवृत्तित्वेपि विषयीकरणाच्चेतित्वात्। अकारांतादेश इति। अकारादेशे सति तु तो गुणः स्यात्। तन्न चाकारोच्चारणसामर्थ्याद्दीर्घः स्यादेवेति वाच्यं अकारस्याविधेयो हल एव श्रवणप्रसंगात्। विडिति। विश प्रवेशने इत्यस्मात् क्विप्। नशेर्वा। केचित्तु इह झलीत्यनुवर्त्य झलि परे तेचेति व्याचक्षते। तन्न नष्टमित्यादावतिप्रसंगात्

प्रकर्षेण। अंचतीति पूजयतीति पूजार्थादंचेः क्विन्। प्राङ् इति। क्रोः कुः कुगिति वा कुत्वं चयोर्द्वितीया इति पक्षे खकारो बोध्यः। एवमिति। शसादिषु प्रत्यंचः। प्रत्यङ्भ्यां अ
मुमुयञ्च्। अमुमुयङ्भ्यां। उदंचः। उदङ्भ्यामित्यादि। तिर्यंचतीति। तिरसः तिर्यलोप इति। सुत्वस्यासिद्धत्वादिति भावः। सुप्तुट् श्वतीति सुपट्। क्विपि ग्रहिज्येति संप्रसारणं। सुट्
ट्स्विति। चत्वस्यासिद्धत्वात्पूर्वं डः सीति वा धुट्। ततश्चर्त्वं। चांताः। निपात्यंत इति। ष्टुञ् सेचने। रुह रुह्। अत्र गुणाभावः। महेः कर्मणि प्रत्ययः। अत एव मत्यते पूज्यते स महानिति
व्याचष्टे। गमेः स्रुजगादेशः। चत्वारोप्यतिप्रत्ययांताः। एतच्च उणादिषु स्फुटीकरिष्यते॥ ॥ अत्वसंतस्य चाधातोः॥ द्वलोपसूत्रात् दीर्घस्यात उपधाया इत्युपधाग्रहणस्य चा
नुवर्तनादाह। उपधाया दीर्घः स्यादिति। इह अधातोरिति योगो विभज्यते तत्सामर्थ्यादनंतरस्यासंतस्यैव प्रतिषेधः नात्वंतस्येति कैयटादयस्तदेतद्दर्शयति। धातुभिन्नासं

अत्वसन्तस्य चाऽधातोः। ६।४।१४। अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नाऽसन्तस्य चाऽसम्बुद्धौ सौ परे परं नित्यत्वान्नुम्। अन्वाचितत्ववचनसाम
र्थ्याद्दीर्घः। ततो नुम्। धीमान्। धीमन्तौ। धीमन्तः। हे धीमन्। शसादौ महद्वत्। धातोरप्यत्वन्तस्य दीर्घः। गोमन्तमिच्छति। गोमानिवाचरति वा क्य
जन्ताद्वाचारक्विबन्ताद्वा कर्तरि क्विप्। उगिदचामिति सूत्रे ऽज्ग्रहणान्नियमार्थ। धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति। तेन स्रत् ध्वत् इत्यादौ नाऽ
धातोरिति तु अधातुभूतपूर्वस्याऽपि नुमर्थं। गोमान्। गोमन्तौ। गोमन्तः। इत्यादि। भातेर्डवतुः। भवान्। भवन्तौ। भवन्तः। शत्रन्तस्य त्वन्तत्वाऽभावान्न
दीर्घः। भवतीति भवन्। उभे अभ्यस्तम्। ६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते ऽभ्यस्तसंज्ञे स्तः॥

१९ तस्य चेति। धात्ववयवभिन्नो योऽ
सन्तस्तदन्तस्येत्यर्थः। तेन उखास्रत् पर्णध्वत् इत्यादि सिद्धं। धातुभिन्नो योऽसन्तस्तस्येति व्याख्याने उखास्रत् पर्णध्वदित्यत्र सिद्धांते दीर्घाभावेप्यत्र तस्यादेवेति दिक्। अत्र सर्व
नामस्थाने चेति सूत्रादसंबुद्धावित्यनुवर्तते सौ चेत्यतः साविति च तदाह। असंबुद्धौ सौ पर इति। अत्वं तत्वाभावादिति। अत्र इत्युकारानुबंधस्यानुकरणाच्छ्नंतस्य न भवती
त्यर्थः। उभे शब्दरूपापेक्षया नपुंसकनिर्देशः। षाष्ठद्वित्वेति। अनंतरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायादिति भावः। द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं समुदायप्रति
पत्त्यर्थमिति व्याचष्टे। उभे समुदिते इति। अन्यथा नेनिजतीत्यत्र अभ्यस्तानामादिरित्याद्युदात्तत्वं प्रत्येकं पर्यायेण स्यात्॥ ॥ ॥

उम्विसर्जनीय। इण्कोरिति पंचमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनं। कुत्वेन पूर्वस्येति। सनः सस्य रुत्वविसर्गयोः कृतयोर्वाशरीति विकल्पात् पक्षे सकारस्तेन शर्व्य
वायेसुपः सस्य षत्वं पूर्वस्य कुत्वं। नत्वादेशप्रत्यययोरिति षः। अपदान्तस्येति निषेधादिति भावः। एवं स्थिते शर्ग्रहणेन न प्रयोजनं किन्तु नुम्विसर्जनीयस्व्यवाये पीत्ये
नुम्विसर्ज्जनीयशर्व्यवायेऽपि। ८।३।५८॥ एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यामुत्तरस्य सस्य मूर्द्धन्यादेशः स्यात्। कुत्वेन पूर्वस्य षत्वम्। पिपठीः षु
पिपठीष्षु प्रत्येकमिति व्याख्यानादनेकव्यवधाने षत्वं न। निंस्स्व। निंस्से। उम्ग्रहणान्नुमः स्थानिकोऽनुस्वारोपलक्षणार्थमिति व्याख्यानात्तेनेह न।
सुहिन्सु। पुंसु। अत एव न शर्ग्रहणेन गतार्थता। रात्सस्येति सलोपे विसर्गः। चिकीः। चिकीर्षौ। चिकीर्षः। रोः सुपीति नियमान्न विसर्गः। चिकीर्षु। दमे
र्डोसु डित्वसामर्थ्याट्टिलोपः। षत्वस्याऽसिद्धत्वाद्रुत्वविसर्गौ। दोः। दोषौ। दोषः। पद्दन्निति वा दोषन्। दोषः। दोष्णः। दोष्णा। दोषा। विष्प्रवेशने। सन्नन्तात्
क्विप्। षत्वस्याऽसिद्धत्वात्संयोगान्तलोपः। व्रश्चेति षः। जश्त्वचर्त्वे। विविट्। विविड्। विविक्षौ। विविक्षः। स्कोरिति कलोपः। तट्। तड्। तक्षौ। तक्षः।
गोरट्। गोरड्। गोरक्षौ। गोरक्षः। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विप्। स्कोरिति न प्रवर्त्तते। णिलोपस्य स्थानिवद्भावात्। पूर्वत्रासिद्धे न स्थानिवदिति
तु द्वहनास्ति। तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषिद्धं॥ तस्मात्संयोगान्तलोप एव। तक्। तग्। गोरक्। गोरग्। स्कोरिति कलोपं प्रति कुत्व
स्याऽसिद्धत्वात्। संयोगान्तलोपः। पिपक्। पिपग्। एवम्विवक्। दिधक्। पिस गतौ। सुष्ठु पेसतीति सुपीः। सुपिसौ। सुपिसः। सुपिसा। सुपीर्भ्यां। सुपीष्षु।
सुपीःषु। एवं सुतूः। तुस खण्डने। विद्वान्। विद्वांसौ। विद्वांसः। हे विद्वन्। विद्वांसं। विद्वांसौ। वसोः सम्प्रसारणं। ६।४।१३१॥ वस्वन्तस्य भस्य सम्प्रसारणं
स्यात्। पूर्वरूपत्वं षत्वम्। विदुषः। विदुषा। वसुस्रंस्विति दत्वम्। विद्वद्भ्यामित्यादि। सेदिवान्। सेदिवांसौ। सेदिवांसः। अन्तरङ्गोपीडागमः सम्प्रसारणवि
षयेन प्रवर्त्तते। अकृतव्यूहा इति परिभाषया। सेदुषः। सेदुषा। सेदिवद्भ्यामित्यादि। सान्तमहत इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते न
तु धातोः। महच्छब्दसाहचर्य्यात्। सुष्ठु हिनस्तीति। सुहिन्। सुहिंसौ। सुहिंसः। सुहिन्भ्यां। सुहिन्सु सुहिन्त्सु। ध्वत्। ध्वद्। ध्वसौ। ध्वसः। ध्वद्भ्यां। एवं स्रत्॥
स्रत्यत्राभित्येके उम्शर्व्यवायेपीत्येवयुक्तं सूत्रेपितु शर्ग्रहणेन विसर्जनीयस्य लाभादित्यन्ये निंस्स्वेति। आद्यसकारस्य प्रत्येकं व्यवधानेऽपि आदे॥ ॥

स्पृशोऽनुदके क्विन्। ककारो गुणाभावार्थः। नकारस्तु क्विन्प्रत्ययस्य कुरिति विशेषणार्थः। वस्तुतस्तु व्यर्थ एव सः। क्विन्प्रत्ययस्य कुरित्युक्तेऽपि तदन्तविधपरिभाषया
क्विबन्तस्य कुत्वाप्रसक्तेः। न चाद्युदात्तत्वं प्रयोजनं क्विनः प्रकृतीनामेकाच्त्वाद्धातुस्वरेणापि तत्सिद्धेः। दधृगित्यत्र त्वन्तोदात्तत्वं निपातनादाद्युदात्तत्वं नापेक्षितमेवे-
ति दिक्। अनुपसर्गेऽपीत्यनुवर्तते कर्मणीति तु निवृत्तमित्याशयेनाह। अनुदके सुप्युपपद इति। घृतस्पृगिति। घृतं स्पृशतेनेवास्य स्पृशतीति विग्रहः। अनुदके किम्। उदकं स्पृशतीति
उदकस्पर्शः। निषेधसामर्थ्यादिह क्विबपि न भवति। तस्मिन् हि सति क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणेन कुत्वस्यावर्जनीयतया अनुदक इति निषेधस्य फ-

स्पृशोऽनुदके क्विन्। ३।२।५८॥ अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात्। घृतस्पृक्। घृतस्पृग्। घृतस्पृशौ। घृतस्पृशः। क्विन्प्रत्ययो यस्मा इति ब-
हुव्रीह्याश्रयणात्। क्विप्यपि कुत्वम्। स्पृक्। स्पृग्। षड्गकाः प्राग्वत्। ञिधृषा प्रागल्भ्ये॥ अस्माद् ऋत्विगादिना क्विन्। द्वित्वमन्तोदात्तत्वं च निपात्यते। कुत्वा-
त्पूर्वं जश्त्वेन डः। गः। कः। धृष्णोतीति। दधृक्। दधृग्। दधृषौ। दधृषः। दधृग्भ्यामित्यादि। रत्नानि मुष्णातीति रत्नमुट्। रत्नमुड्। रत्नमुषौ। रत्नमुषः। ष-
ड्भ्यो लुक्। षट् षड्। षड्भिः। षड्भ्यः २। षट् चतुर्भ्यश्चेति नुट्। अनामिति पर्युदासान्न ष्टुत्वनिषेधः॥ यरोऽनुनासिक इति विकल्पम्बाधित्वा प्रत्य-
ये नित्यमिति नित्यवचनान्नित्यमनुनासिकः। षण्णाम्। षट्सु षट्त्सु। तदन्तविधिः। परमषट्। परमषण्णाम्। गौणत्वे तु प्रियषषः। प्रियषषाम्। रुत्व-
म्प्रति षत्वस्यासिद्धत्वात्ससजुषो रुरिति रुत्वम्॥ र्वोरुपधाया दीर्घ इकः। ८।२।७६। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते। पिपठीः।
पिपठिषौ। पिपठिषः। पिपठीर्भ्याम्। वा शरीति वा विसर्जनीयः॥ ११

लाभावात्। केचित्तु उदकस्पृडिति प्रत्युदाहरन्ति। निषेधसामर्थ्यात्कुत्वं मास्तु क्विप् स्यादे-
वेति तेषामाशयः। षान्ताः। गौणत्वे त्विति। षड्भ्यो लुक् षट् चतुर्भ्यश्चेति बहुवचननिर्देशात्षडर्थप्राधान्य एव लुग्नुटौ भवत इति भावः। पिपठिषतेः क्विप्। अतो लोपे कृते तस्मा-
त्स्वाद्युत्पत्तौ पिपठिष् स् इति स्थिते सोर्हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वात्सस्य रुर्भवति। न च रुत्वे कर्त्तव्ये अल्लोपस्य स्थानिवत्त्वं शंक्यं पूर्वत्रासिद्धे न स्थानिवदिति निषेधात्॥

सोऽसुङ्। इतोत्सर्वनामस्थान इत्यनुवर्तनादाह। सर्वनामस्थान इति। विवक्षित इति। तेन परमपुमानित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भवदसुङ एव अकारस्य भव। परसप्तम्यां तु नैतत्सिध्येत्। सर्वनामस्थाने त्वेतेः प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते संनर्थमेयो हलः स्थाने तद्धर्मेणोदात्तस्यैवादेशस्य प्रसंगात्। नन्वोकारस्य तो पि स्वरो नैत्यत्वान्निवर्तयिष्यते असुङ्श्चान्त्यत्वात्करिष्यत इति वाच्यं। अंतरंगे स्वरे कर्तव्ये बहिरंगस्यासुङोऽसिद्धत्वादिति भावः। वस्तुतस्तु —— अकृतव्यूहपरिभाषाया अंतरंगपरिभाषापवादत्वात्परसप्तमीपक्षोपि सूपपादः। एतच्च मनोरमायां स्पष्टं। पुन्न इति। यद्यप्युणादिषु पातेर्डुम्सुन्निति वक्ष्यति। तथापि पाठांतरमनुसृत्यात्रोक्तमिति बो

पुंसोऽसुङ्। ७।१।८९। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। उकार उच्चारणार्थः। बहुपुंसीत्यत्र उगितश्चेति ङीबर्थं कृतेन श्चोडुमसुन्निति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः। पुमान्। हे पुमन्। पुमांसौ। पुमांसः। पुंसः। पुंसा। पुंभ्यां। पुंभिः। पुंसु। ऋदुशनेत्यनङ्। उशना। उशनसौ। उशनसः। अस्य संबुद्धौ वानङ् नलोपश्च वा वाच्यः। हे उशनन्। हे उशन। हे उशनः। उशनोभ्यामित्यादि। अनेहा। अनेहसौ। अनेहसः। हे अनेहः। अनेहोभ्यामित्यादि। वेधाः। वेधसौ। वेधसः। हे वेधः। वेधोभ्यामित्यादि। अधातोरित्युक्तेर्न दीर्घः। सुष्ठु वस्ते सुवः। सुवसौ। सुवसः। पिण्डं ग्रसते पिण्डग्रः। पिण्डग्लः। ग्रसु ग्लसु अदने। अदस औ सुलोपश्च। ७।२।१०७। अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च। तदोः सः सावितिदस्य सः। असौ। औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च। प्रतिषेधसन्नियोगशिष्टत्वात्तदभावे न प्रवर्तते। असकौ। असुकः। त्यदाद्यत्वं पररूपं वृद्धिः। अदसोसेरिति मत्वोत्वे। अमू। जसः शी। आद्गुणः॥

ध्यां हे पुमन्निति। असंबुद्धावित्युक्तेः सान्तेति न दीर्घः। पुंस्विति। संयोगान्तलोपे मो नुस्वारः। नुमस्थानिकस्यैवानुस्वारस्योपलक्षणान्नुमविसर्जनीयेति न षत्वं। उशनेति। वशेः कनसि ग्रहिज्येति संप्रसारणं। अस्य संबुद्धाविति। एतच्च वार्त्तिकं। हरस्तादस्त्वाहुः। सोऽडिति वाच्ये अनङ् सावितिवचनेनकश्चिन्नङ् एवं श्रवणस्य ज्ञापितत्वादेतत्सिद्धमिति। यद्यपि सोऽडिति डित्वसामर्थ्याट्टिलोपे सर्वनामस्थाने चासंबुद्धाविति दीर्घे उशनेत्यनिष्टरूपं प्रसज्येत तथाप्येवं गवन्नपरिभाषया दीर्घो नेति इत्वाज्ञापकत्वं संगच्छत इति तेषामाशयः। अनेहा वेधा इति। असुन्प्रकरणे नञि हन एह च विधात्रो वेध च इति सुन्प्रत्यये नान्तत्वेन दीर्घः। अनेहा कालः। वेधा विश्वसृट्। अरस

शप्रत्ययाव्यवत्वाभावात्षत्वंनभवति।नचात्रादेशप्रत्यययोरित्यनुवृत्त्यभावान्नुम्विसर्जनीयेत्यनेनधातुसकारस्यषत्वंस्यादितिवाच्यं।तस्यसातंत्र्येणाविधायकत्वान्भीकारात्।अ
पदांतस्यमूर्द्धन्यःइएकोरितिवत्नुम्विसर्जनीयइत्यस्याप्यधिकारसूत्रत्वात्।कर्तुमिच्छतिचिकीर्षतिचिकीर्षतेःक्विप्प्रत्ययः।चिकीः।एकाचउपदेशइतिसनियहगुहोश्चेतिवा
सनइडभावेरःकोझलीतिकित्वाद्गुणाभावेअस्सनगमांसनीतिदीर्घेऋृतइत्तीत्वेरपरत्वंततोद्वित्वंहलादिःशेषः कुहोश्चुः अतोलोपः सोर्हल्ङ्यादिलोपेपदांतत्वात् र्वोरुपधा
याइतिदीर्घःरोरित्रिःदाम्यतीतिदेः।संयोगांतलोपइति।नचास्मिन्कर्तव्येवहिरंगत्वेनातोलोपस्यासिद्धत्वंशंक्यं।वहिर्निमित्तापेक्षपदसंज्ञासापेक्षत्वेनसंयोगां
तलोपस्यैववहिरंगत्वादितिदिक्।विविडिति।विशःसनएकाचइतीण्निषेधेहलंताच्चेतिकित्वात्गुणाभावः।द्वित्वाभ्यासकार्यं।त्तडिति।तक्षत्वक्षूतनूकरणेइत्यस्मात्।
क्विप्।गांरक्षतीतिगोरक्।कर्मण्युपपदेवासरूपन्यायेनक्विप्।कुत्वस्यासिद्धत्वादिति।इतरथास्कोरितिकलोपःस्यादितिभावः।पिपगिति।पक्तुमिच्छतिपिपक्।वक्तुमि
च्छतिविवक्।दादेरितिघः।एकाचोवशइतिभष्भावः।देग्धुमिच्छतिदिधक्।षांताः।सुतूरिति।सुक्तुतोसतीतिसुतूः।वेत्तीतिविद्वान्।विदेःशतुर्वसुः।अदादित्वाच्छपो
लुक्।सार्वधातुकमपिदितिङित्वान्नोपधागुणः।उगित्वान्नुम्।सांतमहतइतिदीर्घः।संयोगांतलोपस्यासिद्धत्वान्नलोपोन।।वसोः।प्रत्ययग्रहणेतदंतग्रहणमित्या
ह।वसंतस्येति।सेदिवानिति।भाषायांसदवसश्रुवइतिलिटःक्वसुः।लिटिधातोरिति द्वित्वंहलादिःशेषः अतएकहल् ——— मध्येइत्येत्वाभ्यासलोपौवस्वेकाजाद्
घसामितीट्नुम्।सांतेतिदीर्घः।सेदुषइति।नचतदनुबंधकग्रहणेनातदनुबंधकस्येति परिभाषयाविदेःशतुर्वसुरित्यस्यैववसोःसंप्रसारणंयुक्तंनतुक्वसोःसत्यं।
वसोरुकारानुबंधकरणंक्वसोःसामान्यग्रहणार्थं।उगित्वस्यानिवर्त्तावेनापिसिद्धेः।इहगमिप्रभृतिभ्यःक्वसुर्नोदाहृतः।छांदसत्वात्।अतएववैदिकप्रक्रियायांत
स्थिवान्जग्मिवान् इत्याद्युदाहर्तव्यंनात्रेत्याहुः।कवयस्तुप्रयुंजते।श्रेयांसिसर्वाण्यधि जग्मुषस्ते।तंतस्थिवांसंनगरोपकंठे इत्यादि।अत्रवदंति।छांदसाअप्येतेप
द्नादयस्त्वक्वचिद्भाषायांभवंति।मासच्छंदसीत्यस्यसामान्यापेक्षज्ञापकत्वाश्रयणात्कथंचित्समाधेयमिति।सुहिनिति।संयोगांतलोपस्यासिद्धत्वान्नोपधादी
र्घः।सुहिन्त्सिति।नश्चेतिसस्यवाधुट्।ध्वंसतइतिध्वत्।स्रंसतइतिस्रत्।स्रंसुध्वंसुअवस्रंसने।ध्वंसुगतौचेत्याभ्यांक्विप्।अनिदितामितिनलोपः।वसुस्रंस्वितिदत्वं।।

न्वेवमपिकृतेनाभावेसुपिचेतिदीर्घः स्यात् दीर्घप्रतिसुत्वस्यासिद्धत्वादतआह। कृतेचेति। एतच्चनेइत्यस्यावृत्त्यालभ्यते। एकत्रविषयसप्तम्यपरत्रतुसत्सप्तमीत्याश्रयणा त्। वस्तुतस्तुकृतेचेतिव्याख्यानंव्यर्थंसन्निपातपरिभाषयासुपिचेतिदीर्घस्यसमाधेयत्वात्। नन्वमुनेतिवदमुनेत्येवोच्यतां किमनेनासिद्धत्वनिषेधेनेतिचेत्त्राहुः नमु नेत्युक्तिर्नेतियोगविभागार्था। तेनरामः रामेभ्यइत्यादिसिद्ध्यति अन्यथाहिरोरसिद्धतयाउकारस्येत्संज्ञालोपौकथं स्याताम्। नचानुनासिकनिर्देशसामर्थ्यादित्संज्ञा लोपौप्रतिरुत्वंनासिद्धमितिवाच्यं। तरुमूलदेवरुहीत्यादौहशिचेत्यस्यव्यावृत्तयेअतोरोरित्यत्रानुनासिकस्यैवनिर्देशेनतत्रैवचरितार्थत्वात्। एवंचस्यानिवत्त्वस्या पिप्रवृत्तौपदत्वाद्विसर्गोलभ्यते। प्रत्ययः परश्चेत्यादिनिर्देशाश्चेहलिंगमितिदिक्। इतिहलंताःपुल्लिंगाः॥ ॐ॥ नहोधः। दइत्येवतुनोक्तं। तथाहिसतिनद्धमित्य त्रदाभ्यामितिनत्वंस्यात्। झषस्तथोरितिचनस्यात्। नहोहस्येति। होढइत्यतोऽनुवृत्तेरलोंत्यस्येत्यनेनवाहस्यैवादेशइतिभावः। झलीझलिपरस्यस्कोः संयोगाद्यो

नहोधः ८।२।३४। नहोहस्यधस्स्याज्झलिपदान्तेच। उपानत्। उपानद्। उपानहौ। उपानहः। उपानद्भ्यां। उपानत्सु। उत्स्वीतस्निहश्चीतावित्यस्मात् त्विगादिनाक्विन्निपातनात्तलोपषत्वे। क्विन्नन्तत्वात्कुत्वेनहस्यघः। जश्त्वचर्त्वे। उष्णिक्। उष्णिग्। उष्णिहौ। उष्णिहः। उष्णिग्भ्याम्। उष्णिक्षु। द्यौः। दिवौ। दिवः। द्युभ्याम्। गीः। गिरौ। गिरः। एवंपूः। चतुरश्चतस्रादेशः। चतस्रः। २। चतसृणां। किमःकादेशेटाप्। का। के। काः। सर्वावत्॥ ॥

न्तेचेत्यतोऽस्सल्पदान्तग्रहणान्यनुवर्ततेतदाह। झलीत्यादि। झलिपरतः पदान्तेवाविद्यमानस्येत्यर्थः। उपानदिति। उपसर्गान्नहेः संपदादित्वात्क्विप्। नहिवृतीतिदीर्घः स्यदीर्घः। सोर्हल्ड्याब्भ्योदिलोपेधत्वं। जश्त्वचर्त्वे। अत्रेदंबोध्यं। सुष्ठुमनड्वाहोयस्यामितिबहुव्रीहौस्वनडुानितिपुंवदेवरूपं। केचित्तुगोरादित्वान्ङीपंकृत्वास्वनडुाहीत्यद्ध हुः। तदसत्। अनुपसर्जनाधिकारविरोधात्। गीरिति। गिरतेर्गॄशब्देइत्यस्माद्वाक्विप्। ऋतइद्धातोरितीत्वेरपरत्वे। र्वोरुपधायादीर्घइतिदीर्घः। पूरिति। पॄपाल नपूरणयोः। उदोष्ठ्यपूर्वस्येत्युत्वं। चतस्रइति। रषाभ्यांनोणःसमानपदे त्रिचतुरोरित्याम्नभवति। परत्वान्नामंबाधित्वाचतसृआदेशेकृतेसकृद्गतिन्यायेनपुनस्तस्याप्रवृत्तेः। चतसृणामिति। नतिसृचतसृइतिनदीर्घः। सर्वावदिति। तेनतुल्यमितिवति। सर्वनाम्नोवृत्तिमात्रेइतिपुंवद्भावः॥ द्यौरितिदिवऔदित्यौत्वं३

वित्यतः सावित्यनुवर्ततेत्तदाह। ओकारांतादेशः स्यात्सौ परइति। नन्वदसइति पंचम्येवास्तु ततः परस्य सोरेवौकारो विधीयतां त्यदाद्यत्वेन असाविति रूपं सिध्यति। किंतु लोपविधानेनानचस्वरभेदः। उदात्तेन सहैकादेशे ओकारस्योदात्तत्वात्। मैवं। असकौ स्त्रीइत्यत्र टापि मत्ययस्यादितीत्वप्रसंगात्। असुकइति। औत्वाभावेत्यदाद्यत्वं साडुत्वं स्त्रियां तु असुका। अमुकइत्यमुकीइति च प्रयोगोऽसाधुरेव। एवमसुकः शर्मेत्यादिरपि। अदकः शर्मेत्यादेरेव न्याय्यत्वात्॥ ॥ एतईद्बहुवचने॥ पारिभाषिकस्य बहुवचनस्य ग्रहणे अमीभिरित्यादि सिद्धावपि जसि अमीइति न सिध्येत्। न ह्यत्र एकारस्य बहुवचनपरतास्ति अतो व्याचष्टे॥ बह्वर्थोक्ताविति। विभक्तिकार्यप्राग् इति। त्यदादीनामत्त्यादिसपादसप्ताध्यायीं प्रत्यदसोसेरिति त्रैपादिकशास्त्रस्यासिद्धत्वाद् कृतेतु विभक्तिकार्ये सांतत्वात् उत्वमत्वयोरप्रवृत्तेश्चेति भावः। यदितु सर्वत्रासिद्धमित्यत्र कार्यासिद्धत्वमिष्येत तर्हि अमूअमुमित्यादि न सिध्येत्। त्यदाद्यत्वे पररूपात्प्रागेव उत्वमत्वयोः कृतयोः पश्चान्मुत्वकार्यस्यासिद्धतया अतो गुणइति पररूपे अमोइत्यादिरूपसिद्धि

एतईद्बहुवचने। ८।२।८१॥ अदसो दात्परस्येत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ। अमी। पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे। अमुम् अमू। अमून्। मुत्वे कृते घिसंज्ञायां नाभावः। नमुने। ८।२।३॥ नाभावे कर्तव्ये कृते च मुभावो नाऽसिद्धः स्यात्। अमुना। अमूभ्यां ३। अमीभिः। अमुष्मै। अमीभ्यः। अमुष्मात्। अमुष्य। अमुयोः २। अमीषां। अमुष्मिन्। अमीषु॥ ॥ इतिहलन्ताः पुल्लिङ्गाः ॥ ॥ ॥ ॥

प्रसंगात्। किंच। चर्मवस्ते चर्मवः। स्रुष्ठु वस्ते स्रुवः। अत्र परत्वात् स्कोरिति सलोपे तस्यासिद्धत्वाद्धलङ्ग्यादिलोपे उक्तरूपं न सिध्यतीति कार्यासिद्धिपक्षो हेयएव। अत्रवदंति। सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद्यां विहितमसिद्धमिति प्रक्रियाग्रयोक्तकार्यासिद्धिपक्षे मनोरथः अमुमित्यादि न सिध्येदिति केचित्। तन्न। प्रक्रियाग्रंथोक्ते हि कार्यं प्रति कार्ये कर्तव्ये असिद्धं स्वमेव नजातमित्यर्थः। शास्त्रासिद्धत्वेप्ययमेव फलितोर्थः। तदुक्तं कैयटेनायं च्छास्त्रमुच्चारितं तस्यासिद्धत्वमशक्यं कर्तुमित्यसिद्धवचनातिदेश आश्रीयत इति। तथा चातिदेशेन कार्यप्रवर्तकत्वरूपोऽसिद्धधर्मः शास्त्रे तिदिश्यमानः कार्यासिद्धत्वएव फलति। एवं च मनोरथ इत्यत्र उत्वे कर्तव्ये रेफलोपस्य स्वमेवाप्रवृत्तौ रोरुत्वस्याप्रतीघातान्मनोरथसिद्धिरप्रत्यूहा। तथा अमुमित्यादिसिद्धिरिति कार्यासिद्धिपक्षे न काप्यनुपपत्तिरिति। नमुने। नेति विषयसप्तमीत्याह नाभावे कर्तव्य इति। अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः ॥

५ कादेशो नेति द्वंद्शब्देभ्यः सावितिच नेति बोध्यं

एतेन सुधियौ सुधिय इत्यत्रांतर्वर्तिसुपा पदत्वात्पक्षे शाकलप्रसंग इत्याशंका परास्ता। उक्तरीत्या प्रत्ययलक्षणप्रतिषेधात्। उत्तरपदत्वे किं। राजपुरुष इत्यादौ नलोपो
यथा स्यात्। पश्यति दधीत्यादावपि दधिशब्दस्य पदत्वे प्रत्ययलक्षणं भवत्येव। उत्तरपदस्य समासानयने रूढत्वात्। दधिसेचावितिसिंचतु इति सेचौ। अन्येभ्यो
पि दृश्यंत इति विच्। दध्नः सेचावितिषष्ठीसमासः। उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात् सेचशब्दस्य पदसंज्ञा नास्तीति पदादित्वं सकारस्य न स्या
त्। नन्वेवमुपपदसमासे षत्वं दुर्वारमिति चेत्। अत्राहुः केप्यद्यः। अनभिधानात्सोपपदाद्विजभावः। दधिसेचावितिप्रयोगाभावात्। वस्तुतस्तु पदात् दिः पदादिरि
ति पक्षे तु उपपदसमासेपि षत्वं सुपरिहरं। अन्वादेशइति। अप्यैवेदं विधीयते नत्वेदशसादिषु फलाभावात्। स्तमोर्न प्रसक्ता नित्यमोजकाजुमन्त्वेपि प्रत्ययलक्षणपि
ह प्रवर्तते वचनसामर्थ्यादित्याहुः। वस्तुतस्तु द्वितीयाटौस्स्वितिसूत्र एव एनत्कर्तव्यः। एनां एनौ। एनानित्यादित्वपदाद्यत्वेन सिद्धं। त्रीवेअमिकाल्कालात्वेपि तका
रोच्चारणसामर्थ्यादेनदादेशः। न चैवमेतत्कृतमित्यत्राप्येनदादेशापत्तिः। द्वितीयाश्रितेति समासे कृते सुपो लुकि द्वितीयादिविभक्तिपरत्वाभावात् न च तकारोच्चा
रणसामर्थ्यादेनदादेश इत्युक्तमिति वाच्यं। एकपदाश्रयत्वेनांतरंगे स्वमोर्लुकि चरितार्थत्वेन बहिरंगे सामासिके लुकि तस्य चरितार्थत्वेन इति मनोरमायां स्थितं ब्रव्यणी
इति। इह विभाषा ङिश्योरित्यल्लोपो न न संयोगाद्वमंतादिति निषेधात्। रोसुपि। अहर्भातीति। अहन्निति रुत्वे कृते तु हशि चेत्युत्वप्रवृत्त्या अहोभातीति स्यादिति भा
वः। नलोपाभावं निपात्येति। अहन्नित्यत्र नकारांतरं प्रश्लिष्य नांतस्य अहन्शब्दस्य रुरिति व्याख्ययापि रुत्वरत्वयोर्नकारस्थानिकत्वं सेत्स्यतीति बोध्यं। तदंतस्या
पीति। पदाधिकारत्वादिति भावः। नचात्र प्रत्ययलक्षणन्यायेन अंतर्वर्तिनीं विभक्तिमाश्रित्य समासैकदेशस्याप्यहन्शब्दस्य पदत्वादुत्वं स्यादेव किमनेन तदंतवि
ध्याश्रयणेनेति शंक्यं। उत्तरपदत्वे चापदादिविधाविति प्रतिषेधेन प्रत्ययलक्षणाप्रवृत्तेः। तस्यासिद्धत्वादिति। अंतरंगपरिभाषया परोपि दीर्घो हल्ङ्यादिलोपात्पूर्वं न स्यात् एवमपि न दी
र्घः परिभाषयेति भावः। संबुद्धौ त्विति। सुपो हल्ङ्यादिलोपादसंबुद्धौ इत्युक्ते दीर्घाभावे रुत्वे हशि चेत्युत्वे गौरुङ्गाः। गौर्भीरीति। रुत्वग्रहणोनर्थकस्यापि ग्रहणात् दीर्घ इति भावः। पदांतेकुत्व
मिति। क्विन्प्रत्ययस्येत्यस्यासिद्धत्वात् चोः कुरिति घत्वे कुत्वमित्यर्थः। घत्वं तु स्वष्टमित्यादौ सावकाशमिति भावः। सृजिदृशोरिति सूत्र इति। एतच्चोपलक्षणं सृजेर्दृशिरिति सूत्रे पितत्प्रयोगात् रज्जुसृ
ड्भ्यामिति। ननु भ्यां प्रत्यययोः झलादिरकित् भवतीति सृजिदृशोरित्यमागमः स्यात्। मैवं। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्। नन्वेवमपि अनुदात्तस्य चर्दुपधस्येति वैकल्पिकः प्राप्नोतीति
द्विधो धातोः स्वरूपेणानुपादानादिति शंक्यं। धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति परिष्कारात्। एवं च प्रसृड्भ्यां प्रसृड्भिरित्यादौ नायं दोषः प्रसज्यते। एतच्च सृजेर्दृशिरिति सूत्रे भाष्ये।

स्य

यःसो।यत्वमिदं स्त्रियामेव परिशेषात्।इदोय्पुंसीति।पुंस्त्वग्रहणात् क्लीवे सोर्लुकालुमत्वाच्चा।एवमिति।सा।ते।ताः।पा।ये।याः।एषा।एते।एताः।इत्यादीत्यर्थः।वागिति।
वचेः क्विप्।चीत्यादिना क्विप्दीर्घोऽसंप्रसारणं च।चोः कुः।अप्शब्द इति।आप्नोतेर्ह्रस्वश्चेति ह्रस्वश्चकारात् क्विप्।अच उपसर्गात्त इत्यतोनुवर्तनादाहातकारः स्यादितिर्
गिति क्विन्नन्तत्वात् कुत्वं।षडगकाः सागर्दूस्याः।अन्यत्रापीति।त्यदाद्युपपदत्वाभावेपीत्यर्थः।त्विडिति।त्विषदीप्तावितस्मात् क्विप्।जश्त्वचर्त्वे।सजूरिति।ज्झषीप्रीति

यस्मै।७।२।११०।इदमोदस्य यस्यात्सौ।इदमो मः।इयं।त्यदाद्यत्वम् टाप्।दश्चेति मः।इमे।इमाः।इमां।इमे।इमाः।अनया।हलि लोपः।आभ्याम्।३।
आभिः।अस्यै।अस्याः।अनयोः २।आसां।अस्यां।आसु।अन्वादेशे तु एनां।एने।एनाः।एनया।एनयोः २।ऋत्विगादिना स्रजेः क्विन्।अमागमश्च।त्रि
पातितः।स्रक्।स्रग्।स्रजौ।स्रजः।स्रग्भ्यां।स्रक्षु।त्यदाद्यत्वम् टाप्।स्या।त्ये।त्याः।एवं तद् य द् एतद्।वाक्।वाग्।वाचौ।वाचः।वाग्भ्याम्।वा
क्षु।अप्शब्दो नित्यं बहुवचनान्तः।अप्तृन्निति दीर्घः।आपः।अपः।अपोभि।७।४।४८।अपस्तकारस्याद्भादौ प्रत्यये परे।अद्भिः।अद्भ्यः २।
अपां।अप्सु।दिक्।दिग्।दिशौ।दिशः।दिग्भ्याम्।दिक्षु।त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वं।दृक्।दृग्।दृशौ।दृशः।त्विट्।त्विड्।त्वि
षौ।त्विषः।त्विड्भ्यां।त्विट्सु।त्विट्त्सु।सह जुषते इति सजूः।सजुषौ।सजुषः।सजूर्भ्यां।सजूःषु।सजूष्षु।षत्वस्यासिद्धत्वाद्रुत्वं।आशीः।आशि
षौ।आशिषः।आशीर्भ्यां।असौ।त्यदाद्यत्वं टाप्।औङः शी।उत्वमत्वे।अमू।अमूः।अमूम्।अमू।अमूः।अमुया।अमूभ्यां।अमूभिः।अमुष्यै।अमू
भ्यां।अमूभ्यः।अमुष्याः २।अमुयोः २।अमूषां।अमुष्यां।अमूषु॥ इति हलन्ताः स्त्रीलिङ्गाः॥ ११ सेवनयोरित्यस्मात् क्विप्।ससजुषोरिति षस्य

आशीष्षु ४

रुत्वं।वोरुपधाया दीर्घ इति दीर्घः।आशिषाविति आङ्शासः क्वाबुपसंख्यानमित्युपधाया इत्वं।शासिवसीति षत्वं।असाविति अदस त्यदाद्यत्वं पररूपत्वं टाप्।एकादेशस्य पूर्वा
न्तत्वेन ग्रहणात्।अदस औ सुलोपश्चेति तदोरिति सत्वमित्येके।अन्ये तु परत्वाद्विशेषविधेश्च उत्वं मोत्वं ततो नान्यत्वं वापावित्याहुः॥ इति हलन्ताः स्त्रीलिङ्गाः॥२६॥

अर्थभेदेनरूपभेदमाश्रित्यतथोक्तमिति।यस्मामाधिक्यंशंक्यमिति।ननुसुमध्येककारस्थानेपाक्षिकखकारप्रवृत्त्यारूपषट्काधिक्यंनशंक्यमित्यर्थः।स्वलेस्यासि
द्धत्वादिति।तथाचशास्त्रदृष्ट्याककारोनास्त्येवकिंतुगकारएवास्तीतिभावः।तस्यासिद्धत्वादिति।ककोअसिद्धत्वादित्यर्थः।चर्द्धतएनेति।एवंचत्रयाणामाधिक्यसं
भवात्सुपिद्वादशरूपाणिभवंतीतिसंकलनयाद्वादशाधिककशतमतो।नतुनवाधिकशतमितिभावः।३।अस्याक्षिभूतानीति।सप्तविंशत्यधिकापंचशतीत्यर्थः।सोनवाना
मंत्यस्यद्वित्वेअष्टादश।ओङि।चतुर्णांमध्येषूजार्थानांत्रयाणांत्रद्वित्वेसप्त।अणोऽप्रगृह्यस्य——इत्यनुनासिकस्तुनास्तिप्रगृह्यत्वात्।जसित्रद्वित्वस्यानुनासिकस्यवि
कल्पात्द्वादश।संकलनयासप्तत्रिंशत्।एवंद्वितीयायामपिविभक्तौसप्तत्रिंशत्।तथाचसंकलनयाचतुःसप्ततिः।टायांचतुर्णांमध्येषूजार्थानांत्रयाणांजद्वित्वेस
प्ततेषांचसप्तानामनुनासिकविकल्पेचतुर्दश।संकलनयाअष्टाशीतिः।भ्यामिषट्सुरूपेषुभात्पूर्वस्यद्वित्वेद्वादशतेषांद्वादशानामपियणोमयइतियद्वित्वेचतुर्विं
शतिः।तेषामपिमकारस्यद्वित्वेऽष्टचत्वारिंशत्।संकलनयाषट्त्रिंशदधिकंशतं।भिसिचतुर्विंशतिः।भात्पूर्वस्यविसर्गस्यचद्वित्वात्।संकलनयाषष्ट्युत्तरशतं।ङेपिचतुर्णां
मध्येषूजार्थानांत्रयाणांत्रद्वित्वेसप्त।अनुनासिकस्तुनास्ति।एकारस्यानण्त्वात्।संकलनयासप्तोत्तरषष्ट्यधिकंशतं।भ्यामिप्राग्वदेवाष्टचत्वारिंशत्।तथैवभ्यसि
भात्पूर्वस्ययविसर्गयोश्चद्वित्वात्।संकलनयात्रिषष्ट्यधिकंशतद्वयं।ङसौचतुर्णांमध्येत्रद्वित्वेसप्ततेषांसप्तानांविसर्गद्वित्वेचतुर्दश।संकलनयासप्तोत्तरस
प्तत्यधिकंशतद्वयं।भ्यांभ्यसोःप्राग्वदेवप्रत्येकमष्टचत्वारिंशत्।संकलनयात्रिसप्तत्यधिकंशतत्रयं।ङसाविवङसओसआमङिओसइत्यत्रापिप्रत्येकंचतुर्दश
चतुर्षुरूपेषुमध्येत्रद्वित्वेसप्तानामप्यंत्यस्यद्वित्वात्।ओसितुसप्तानामप्यंत्यस्याणोप्रगृह्यस्येतिवैकल्पिकानुनासिकप्रवृत्तेः।संकलनयात्रिचत्वारिंशदधिकंशतच
तुष्टयं।सुपिगत्यर्थेत्रयाणांकद्वित्वेषट्।तेषांत्रयःशारइतियद्वित्वेद्वादश।उकारस्यानुनासिकेचतुर्विंशतिः।संकलनयासप्तोत्तरषष्ट्यधिकंशतचतुष्टयं।सूजा
यांतुकुगभावेत्रयाणांङकारद्वित्वेऽनुनासिकेचद्वादश।कुकपक्षेतयोर्द्वितीयादेशेषट्।षण्णांङपयोर्द्वित्वेऽनुनासिकेचअष्टचत्वारिंशत्।संकलनयासप्तविंशत्य
धिकापंचशतीत्यर्थः।तिरश्चीइति।भलाद्वरत्यलोपः।अनोपेइतिवचनात्रियादेशाभावः।ररिति।उच्चिगेप्यंयञ्चत्वारितः।शतेति।अरश्शनेत्यनङ्।शतप्रत्ययरि

दावेवस्यात्।सत्यंवस्तुगत्याधातोरेवोच्यमानंकार्यमियङादिकंनभवति।किंतुअंगस्योच्यमानमितिवैषम्यात्।कुत्वापवादइति।षत्वसूत्रेसृजमृजयजेतिविशिष्यग्रहणा
दितिभावः ११अस्त्रकृशब्दस्त्विति।एतच्चक्षीरस्वामिग्रंथेस्पष्टं।ऋत्विक्प्रत्ययेबोध्यइति।यद्यप्यस्मिन्पक्षेस्वरोभिद्यतेतथापिलोकेस्वरस्यानादराद्धेतुवाहुलकादिष्टस्वरःसिध्यती
तिभावः।बहूर्जीति।इदंअंत्यादितिचवाचनिकं।तथाचवार्तिकं।बहूर्जिप्रतिषेधःअंत्यात्पूर्वंतुममेकेइति।भाष्येतुअचःपरोयोऽस्तितदंतस्यत्वमित्याश्रित्यप्रथमवार्त्तिकंप्रत्या
ख्यातं।एवंचउन्नञ्जिरित्यत्रतुमुड्दुर्लभः।किंच।उर्द्दमानेक्रीडायांच।गार्हेगर्ह्यायामित्यादीनांक्विबंतानांभाष्यमतेतुमानभाव्यमेवेतिबोध्यं।अस्त्रोपस्यस्यानिवृत्तादि
ति।क्वौलुप्तंनस्थानिवदितितुनेहाश्रीयते।तस्यक्वाचित्कत्वात्।क्वौविधिंप्रतिनस्थानिवदित्यस्यैवसार्वत्रिकत्वादितिभावः।जायंतेनवसौतथा।भिन्नवम्यामि
सुप्यसांसंगमेषट्संख्यानिनवैवसुप्यथजसित्रीण्येवतद्वच्छसि।चत्वार्यन्यवच्चस्रुकस्यविविधाःशब्दस्यरूपाणितज्ज्ञानंतुप्रतिभास्तिचेन्निगदितुंषाण्मासि
कोत्रावधिरितिनरपतिसभायांकाचित्केनचित्प्राचीनेनकृतस्याक्षेपस्यप्राचीनैरेवपंडितैःकैश्चिद्गवाक्शब्दस्येत्यादिनाविभावयेत्यंतेनश्लोकद्वयेनसमाधानमु
क्तं।तदेवश्लोकद्वयंप्रकृतोपयोगादाह।गवाक्शब्दस्यरूपाणीति।अंचतेर्गतौनलोपः।पूजायांतुनेत्याशयेनाह।अर्चागतिभेदतइति।आद्यादित्वात्तसिः।पूजार्थग
त्यर्थभेदेनअसंध्यवङादिभिर्नवाधिकशतंरूपाणिबोध्यानीत्यर्थः।उक्तसंख्यामेवव्यवस्थापयति स्वमुपुंवेति।प्रत्येकमिति शेषः।एवमग्रेपिषट्त्रीणिचत्वा
रीत्यत्रापिबोध्यं।रूपाणीति।संकलनयानवाधिकशतंरूपाणीत्यर्थः।इहचयोद्वितीयाइतिवार्तिकमनाश्रित्यनवाधिकशतमित्युक्तमितिबोध्यं।तदाश्रयणेतुर्वी
णिरूपाणिवर्द्धंतइत्यनुपदमेववक्ष्यमाणत्वात्।२ इत्यादीति।आदिशब्देनान्यान्यपिज्ञेयानि।तद्यथा।गवाग्भिः।गोअग्भिः।गोग्भिः।गवाङ्भिः।गोअङ्भिः।गो
ङ्भिः।ङेऽपि।गोचे।गवांचे।गोअंचे।गोंचे।भ्यामिप्राग्वत्।भ्यसि।गवाग्भ्यः।गोअग्भ्यः।गोग्भ्यः।गवाङ्भ्यः।गोअङ्भ्यः।गोङ्भ्यः।ङसौ।गोचः।गवांचः।गोअंचः।गोंचः।
भ्यामिभ्यसिचप्राग्वत्।ङसिंपंचम्येकवचनवत्।ओसि।गोचोः।गवांचोः।गोअंचोः।गोंचोः।आमि।गोचां।गवांचां।गोअंचां।गोंचां।ङौतु।गोचि।गवांचि।गोअंचि।गोंचि।ओ
सिप्राग्वत्।सुपि।गवाङ्क्षु।गवाङ्षु।गोअङ्क्षु।गोअङ्षु।गोङ्क्षु।गोङ्षु।गवाक्षु।गोअक्षु।गोक्षु।ननुभ्यामन्त्रयेभ्यसद्वयेङसिङसोरोसद्वयेचसमानरूपत्वात् ॥

कथमिहनवाधिकशतमित्युक्तमितिचेत्।अत्राहुः ॥

॥

आदिशब्देन सर्पिरर्चिरादयो ग्राह्याः । स्तुत मासीति । पुंसो असुङिति सूत्रे सुटीति व्याचक्षाणास्य प्राचो मतेजसी इस्सिद्धावयि शशिनेतत्सिध्येत् । ओङिचातिप्रसंगः । इतोत्स र्वनामस्थान इत्यतोनुवृत्तिं पर्यालोच्य सर्वनामस्थान इतियथाश्रुतं तु वर्तते । तु सर्वेष्टसिद्धिः ॥ इतिहलंताः नपुंसकलिंगाः ॥ ॥ स्वरादिनिपातमव्ययं । स्वरादयश्च निपा ताश्चेति समाहारद्वंद्वः । ननु चादिष्वेव स्वरादीन् पठित्वा प्रकृतसूत्रे परित्यज्यतद्धितश्चासर्वेत्यादि सूत्र चतुष्टयमपिचादयोऽसत्व इत्यस्मात् तु उर्ध्वंकृता अव्यय प्रदेशेषु नि पातशब्देनैव व्यवह्रियतामितिचेन्न । स्वस्तिवाचयति स्वः पश्यति स्वः पततीत्यादौ कर्मादिकारकयोगेन सत्ववाचकत्वात्तेषां निपातसंज्ञानापत्तेः । चादीनां त्वसत्ववा

स्वरादिनिपातमव्ययं । १।१।३७ । स्वरादयो निपाताश्चाऽव्ययसंज्ञाः स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगप त् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायं । चिरं । मनाक् । ईषत् । जोषं । तूष्णीं । बहिस् । अवस् । समया । निकषा । स्वयं । वृथा । नक्तं । नञ् । हेतौ । इद्धा । अद्धा । सामिव त् । ब्राह्मणवत् । क्षत्रियवत् । सना । सनत् । सनात् । उपधा । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कं । शं । सहसा । विना । नाना । स्वस्ति । स्वधा । अलं । वषट् । श्रौषट् । वौषट् । अन्य त् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकं । प्रवाहिका । आर्यहलं । अभीक्ष्णं । साकं । सार्द्धं । नमस् । हि रुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशान् । प्रतान् । मा । माङ् । आकृतिगणोऽयं । च । वा । ह । अह । एव । एवं । नूनं । शश्वत् । युगपत् । भूयस् । कूपत् । कुवित् । नेत् । चे त् । चण् । कच्चित् । यत्र । नह । हन्त । माकिं । माकीं । नकिं । नकीं । आकीं । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । तुम् । तथाहि । खलु । किल । अथ । सुष्ठु । स्म । आदह । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तं । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अ ङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिरप्याकृतिगणः ॥

९९ विनामेव निपातसंज्ञा न तु सत्ववाचिनां । स्वरादीनां तु सत्ववाचिनामसत्ववाचिनां चाव्य यसंज्ञेष्यत इति व्यवस्थानापत्तेश्च । अथ प्राग्रीश्वरान्निपाताः स्वरादीनि चादयोऽसत्व इति सत्स्यतां । तथाहि सति स्वरादीनां सत्ववचनानामपि निपातसंज्ञा सेत्स्यतीति चेन्नाए वं हि निपात एकाजनाङिति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येतास्तो हि स्वरादिषु किमो त् दक्षिणादाजित्यादा वेकाचौ तद्धितौ कन्न भृतयएकाचः कृत्प्रत्ययाः ॥ ॥

आच्छीनद्योः। नुम्ग्रहणमिह चिंत्यप्रयोजनं नाभ्यस्ताच्छतुर्वा नपुंसकस्येत्यत्र इदितो नुम् धातोरित्यतोऽनुवृत्तेरावश्यकतया तदुत्तरत्रापि तत एवानुवर्तते बाधकाभावा-
त्। शतुरवयव इति। तुदो दः शस्यांतरंगत्वाच्छत्रादेशाकारेण सह एकादेशे कृते अवर्णांतात्परस्य शतुरिति न भवति। उभयत आश्रयणे नांतादिवदिति वक्ष्यमाणत्वादिति
भावः। भादिति। भा दीप्तौ लटः शतर्यदादित्वाच्छपो लुक्। शप्श्यनोर्नित्यं। आरंभसामर्थ्यान्नित्यत्वे सिद्धेऽपि नित्यग्रहणमिह वेत्यधिकारनिवृत्त्यर्थमन्यथा हि आरंभ-
सामर्थ्यादिह नित्यमुत्तरत्र विकल्प इत्याशंक्येत। पचंतीति। कर्तरि शपि। नित्यं नुम्। दीव्यंतीइति। दिवादिभ्यः श्यनि नित्यं नुम्। पचंती दीव्यंतीति। बहुवचने तु नपुंसक

आच्छीनद्योर्नुम्। ७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः। तुदन्ती। तुदती। तुदन्ति। भात्। भा-
न्ती। भाती। भान्ति। पचत्। शप्श्यनोर्नित्यं। ७।१।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम् स्याच्छीनद्योः परतः। पचन्ती। पचन्ति। दीव्यत्। दीव्य-
न्ती। दीव्यन्ति। स्वप्। स्वपी। नित्यात्परादपि नुमः प्राक् अप्तृन्निति दीर्घः प्रतिपदोक्तत्वात्। स्वाम्पि। निरवकाशत्वं प्रतिपदोक्तत्वमिति पक्षे तु अकृते
तद्विरहान्नुमेव। स्वम्पि। स्वपा। अपो भि। स्वद्भ्यां। स्वद्भिः। अर्त्तीत्यादिना धनेरुस्। धनुः। धनुषी। सान्तेति दीर्घः। नुम्विसर्जनीयेति षत्वं। धनूंषि। धनुषा।
धनुर्भ्यां। एवं चक्षुर्हविरादयः। पिपठिषतेः क्विप्। र्वोरिति दीर्घः। पिपठीः। पिपठिषी। अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न। स्वविधौ स्थानिव-
त्त्वाऽभावादजन्तलक्षणोऽपि नुम् न। पिपठिषि। पिपठीर्भ्यामित्यादि। पयः। पयसी। पयांसि। पयसा। पयोभ्यामित्यादि। सुपुम्। सुपुंसी। सुपुमांसि। अदः।
विभक्तिकार्यं। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्॥ ॥ इति हलन्ता नपुंसकलिङ्गाः ॥ ॥

॥ सुप्सुलव इति नुम्बाध्यः। स्वबिति। शोभना आपो यस्मिन् स-
रसीति बहुव्रीहिः। ऋक्पूरबिति समासांते प्राप्ते न पूजनादिति निषेधः। स्वतिरुपसर्गेभ्य इति न भवति। तत्रापि इति ज्ञातसमासांतस्यानुकरणमिति वक्ष्यमाणत्वात्। निरवकाशत्वं प्र-
तिपदोक्तत्वमिति। अयमेव पक्षः प्रबल इति। छदिरुपधिबलेर्ढञ् इति सूत्रे मनोरमायां स्थितं। धनेरुसिति। जनेरुसिरित्यतो उसिरित्यनुवर्तमाने अर्तिपृवपियजितनिधनितपि-
भ्यो नित् इत्यौणादिके नेत्यर्थः। धनुर्भ्यामिति। इह र्वोरुपधाया इत्यादिना दीर्घो न शंक्यः। रेफान्तस्याधातुत्वात्। एवमिति। चक्षेः शिच्चेत्युसिः। चक्षुः। अर्चिशुचिहुसृपीत्यादि-

प्रवाहुकमितिसमानकाले।उर्ध्वार्थे च प्रवाहिकेतिपाठांतरं।आर्यहलमितिवलात्कारे।शाकटायनस्तु।आर्येतिप्रतिबंधे।हलमितिप्रतिषेधविवादयोरित्याह।
आभीक्ष्ण्यमितिपौनःपुन्ये।साकं सार्द्धमेतौ सहार्थे।नमस्नतौ।हिरुक् वर्जने।धिग्निंदाभर्त्सनयोः।इतऊर्ध्वं तसिलादयस्तद्धितएधाच्पर्यंताः।शस्तसीकृत्वसुच्
सुच्आस्थालोच्व्यर्थाश्चेति।प्राचीनगणपाठे स्तोतिबोध्यं।तसिलादीत्यादेरयमर्थः।पंचम्यास्तसिलित्यारभ्य एधाच्चेत्येतदंतैः सूत्रैरुक्ता ये तद्धितास्तदंताः स्वरा
दिषु बोद्धव्याः।तथा च हल्याथीन्कस।प्रतियोगे पंचम्यास्तसिः।तेनैकदिक्।तसिश्चेत्ययमपि तसिः।क्रियाभ्यावृत्तिगणने कृत्वसुच्।द्वित्रिचतुर्भ्यः सुच्।इणआ
सिरित्यणादिसूत्रेण विहित आसिः।प्रत्नपूर्वविश्वेमात्थाल्छंदसि।संपद्यकर्तरि च्विः।विभाषासातिकार्त्स्न्ये।देये त्राचेत्येतदंता अपि ग्राह्या इति।असपोध्येऽस्त्ये
च।आम् अंगीकारे।अमुच्छंदसि।किमेत्तिङव्ययेतिकास्प्रत्ययादिभिश्च विहिता अपि अमामौ गृह्येते।रत्येको।प्रतंनयप्रतरांयथाचतरांकारयामास।प्रताम्ग्ला
नौ।प्रशान्समानार्थे।प्रतान्विस्तारे।मा माङ् एतौ निषेधार्थकयोः।आकृतिगणइति तेनान्येपि ज्ञेयाः।तथाहि।कामं स्वाछंदे प्रकाममित्यतिशये।भूय इति पु
नरर्थे।सांप्रतमिति न्याय्ये।परमिति किंत्वर्थे।साक्षात्प्रत्यक्षे साचीति तिर्यगर्थे।सत्यमित्यर्द्धांगीकारे।मंक्षु आशु एतौ शीघ्रे।संवत् वर्षे।अवश्यं निश्चये।उषेति रा
त्रौ।ओमित्यंगीकारे ब्रह्मणि च।भूरिति पृथिव्यां।भुवरित्यंतरिक्षे।स्वरिति स्वर्गे।इतितरसा एते शीघ्रे।सुष्ठु प्रशंसायां।दुष्ठु निकृष्टे।सुः पूजायां।कुइति कुत्सिते षदर्थे
यो।अंजसेति तत्त्वशीघ्रार्थयोः।मिथुइति द्वावित्यर्थे।अस्तमिति विनाशे।स्थाने इति युक्ते।वरमिति ईषदुत्कर्षे।सुदि शुक्लपक्षे वदि कृष्णपक्षे इत्यादि।चादीनु
दाहरति।चेत्यादिना।चेति समुच्चयान्वाचयेतरेतरयोगसमाहारेषु।वा स्याद्विकल्पोपमयोरिवार्थेपि समुच्चये।हेति प्रसिद्धौ।अहेति पूजायां।एवेत्यवधारणे।
अनवक्लृप्तौ च।एवमित्युक्तपरामर्शे।नूनमिति निश्चये तर्के च।शश्वदिति पौनःपुन्ये नित्ये सहार्थे च।युगपदित्येककाले।भूयस्पुनरर्थे।आधिक्ये च।कूपदिति
प्रश्ने प्रशंसायां च।कुविदिति भूर्य्यर्थे प्रशंसायां च।नेदिति शंकायां प्रतिषेधविचारसमुच्चयेषु च।चेदिति यद्यर्थे।चण।अयं चेदर्थे।णानुबंधस्तु निपातेष्ठयदिदं
नकुविन्नेच्चेच्चणिति विशेषणार्थः।समुच्चयादौ त्वननुबंधकः।कच्चिदितीष्टप्रश्ने।यत्रेति अनवक्लृप्त्यमर्षगर्हास्वर्येषु।नावकल्पयामि न मर्षये गर्हे आश्च
र्यं वा यत्र भवान् वृषलं याजयेत्।नहेति प्रत्यारंभे।हंतेति हर्षविषादे अनुकंपायां वाक्यारंभे च।माकिः माकीं नकिरिति त्रयः ॥ ॥ ॥

शाश्वसंतिः।तसिलादिस्तद्धितएधाच्पर्यंतइतिसूत्रस्य।कृन्मकारसंध्यक्षरांतइतिसूत्रस्यचस्वरादिगणपठितत्वात्।यद्यप्यत्रमूलेस्वरादिषुगणसूत्रद्वयमिदंनपठि
तंतथापिप्राचांपाठेत्वस्तीत्यनुपदमेवस्फुटीकरिष्यते॥स्वरादीनुदाहरतिस्वरित्यादिना।स्वरितिस्वर्गेपरलोकेच।अंतरितिमध्ये।प्रातरितिप्रत्यूषे।पुनरित्यप्रथमे
विशेषेच।सनुतरित्यंतर्द्धानेस्वराद्याःपंचरेफांताः।तेनस्वर्यातिप्रातस्त्रेत्यादावुत्वंनभवति।सांतत्वेहिस्यादेवदोषः।उच्चैसमहति।नीचैसअल्पे।शनैसक्रिया
मांद्ये।ऋधक्सत्येपि।वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये।ऋतेवर्जने।युगपदित्येककाले।आरात्दूरसमीपयोः।पृथक्भिन्ने।ह्यसअतीतेऽन्हि।श्वोऽनाग
तेऽन्हि।दिवादिवसे।रात्राविति निशि।सायमितिनिशामुखे।चिरमितिबहुकाले।मनाक्ईषत्इमावल्पे।जोषंसुखेमौनेच।तूष्णीमितिमौने।बहिसअवससमया
हो।समयेतिसमीपेमध्येच।निकषेत्यंतिके।स्वयमितिआत्मनेत्यर्थे।वृथेतिव्यर्थे।नक्तमितिरात्रौ।नञ्इतिनिषेधे।हेताविति निमित्ते।इद्धेतिप्राकाश्ये।अद्धेतिस्फु
टावधारणयोः।तत्वातिशययोरित्यन्ये।सामीत्यर्द्धजुगुप्सितयोः।वत्तेनतुल्यमित्यादिभिर्विहितोयोवतिप्रत्ययःसइहगृह्यते।तदाह।ब्राह्मणवत्।क्षत्रियवत्
इति।प्रत्ययमात्रस्यसंज्ञाप्रयोजनाभावात्प्रत्ययांतमुदाहृतं।यस्तुउपसर्गाच्छंदसिधात्वर्थेविहितःसइहनगृह्यते।यदुद्वतोनिवतोयासीत्यत्रसत्वधर्मस्यलिंगसं
ख्यान्वयस्यदर्शनात्।अत्रवदंति।तद्धितश्चासर्वविभक्तिरित्यत्रतसिवतीइतिवतिप्रत्ययोपिपरिगण्यते।तच्चनकर्तव्यं।स्वरादिपाठेनैवगतार्थत्वात्।स्वरादिषु
वावदितिनपठनीयमिति।सनासनत्सनात्एतेनित्ये।उपधेतिभेदे।तिरसअंतर्द्धौ।तिर्यगर्थेपरिभवेच।अंतरेतिमध्येविनार्थेच।अंतरेणेतिवर्जने।ज्योगितिका
लभूयस्त्वेप्रश्नेशीघ्रार्थेसंप्रत्यर्थेच।कमितिवारिमूर्द्धनिंदासुखेषु।शमितिसुखे।सहसेत्याकस्मिकाविमर्शयोः।विनेतिवर्जने।नानेत्यनेकविनार्थयोः।स्व
स्तीतिमंगले।स्वधापितृदाने।अलंभूषणपर्याप्तिशक्तिवारणनिषेधेषु।वषट्वौषट्श्रौषट्एतेहविर्दाने।अन्यदित्यन्यार्थे।अस्तीतिसत्तायां।उपांश्वित्यप्रकाशो
च्चारणरहस्ययोः।क्षमेतिक्षांतौ।विहायसेतिवियदर्थे।दोषेतिरात्रौ।मृषामिथ्येत्येतौवितथे।मुधेतिव्यर्थे।इतऊर्ध्वंक्त्वातोसुन्कसुनः।कृन्मकारसंध्यक्षरांतः।अ
व्ययीभावश्चेतिगणसूत्रत्रयंअष्टाध्यायीस्थंत्रिसूत्र्यासमानार्थकमिहनपठितंचेदपिप्राचीनगणपाठेतदस्तीतिबोध्यं।वैयर्थ्यंतुपरिहरिष्यते।पुरेत्यविर
तेचिरातीतेभविष्यदासन्नेच।मिथोमिथसएतौरहःसहार्थयोः।प्रायसितिबाहुल्ये।मुहुरितिपुनरर्थे॥

शंवट् अंतःकरणे। आ अभिमुख्ये च। अव पादहरणे इवार्थे च। दिष्ट्या आनंदे। चटु चाटु प्रिये वाक्ये। अहमिति भर्त्सने। इवेति सादृश्ये। अद्यत्वे इति इदानीमित्यर्थे। इत्यादि। अत्र स्वरादि चादयो गणाकृतिगणत्वाद्विशेषपियेषां निपातत्वं स्वरादिषु त्ववादिषु। अन्ये तु स्वरादिषु स्वरहयभाजस्तु भयत्र बोध्याः॥ ३६॥ तद्धितश्चासर्वविभक्तिः॥ सर्वेति। वचनत्रयात्मिकेत्यर्थः। नोत्पद्यत इति। किं त्वेकवचनमेवोत्पद्यत इति भावः। तद्धितः किं। एकः द्वौ त्रयः। असर्वेत्यादि किं। औपगवः। ननु पंचालाः गोदौ वरणा इत्यादावपि प्रसंगः। न च लुब्योगाप्रख्यानादिति वदतां नेषां तद्धितात्तत्त्वमंगीकृतमिति नातिप्रसंग इति वाच्यं। एवमपि पचतिकल्पं पचतिरूपमित्यादावतिव्याप्तेर्दुर्वारत्वादित्याशंक्याह। परिगणनं कर्तव्यमिति। तसिलादय इति। पंचम्यास्तसिलिति विहितो यस्तसिल् तदादयो याप्ये पाशविति विहितपाशप्प्रत्ययपर्यंता इत्यर्थः। शसप्रभृतय इति। बह्वल्पार्थादिति विहितो यः शस्तदादयः समासांता इति सूत्रपर्यंताः। कृत्वोर्था इति। संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति विहिताः। कृत्वसुजादय

तद्धितश्चासर्वविभक्तिः॥ १।१।३८॥ यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोप्यव्ययं स्यात्। परिगणनं कर्तव्यं। तसिलादयः प्राक्पाशपः। शस्प्रभृतयः प्राक्समासान्तेभ्यः। अम्। आम्। कृत्वोर्थाः। तसिवती। नानाञाविति। तेनेह न। पचतिकल्पम्। पचतिरूपं। कृन्मेजन्तः॥ १।१।३९॥ कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्। स्मारंस्मारं। जीवसे। पिबध्यै। क्त्वातोसुन्कसुनः॥ १।१।४०॥ एतदन्तमव्ययं स्यात्। कृत्वा। उदेतोः। विसृपः ॥

सृपः॥ तसिवती इति। न च तसेः परिगणनं व्यर्थं शस्प्रभृतित्वादेव प्रतियोगे पंचम्यास्तसिरित्यस्य लाभादिति वाच्यं। तेनैकदिक् तसिश्चेत्येतदर्थं तथा तस्यावश्यकत्वात्। तेन तुल्यमिति वतिः। नानाञाविति। विनञ्भ्यां नानाञौ न सहेति विहितौ। पचतिकल्पमिति। अव्ययसंज्ञायां हि सत्यां सुपो लुक् स्यादिति भावः। कृन्मेजन्तः। अत्र मेजंत इत्येतत्कृद्विशेषणं। ननु कृदंतस्यास्तु तस्य। अन्यथा प्रतामौ प्रतामः। लवमाचष्टे णौ क्विपि टिलोपे वस्याठि रूढौ लोः। अत्रापि प्रसज्येतेति भावः। भवति त्येतत्प्रत्ययलक्षणेन कृदंतमजंतं च श्रूयत इति तदाह। कृद्यो मांत एजंत इति। स्मारंस्मारमिति। स्मरतेराभीक्ष्ण्ये णमुल् चेति णमुल्। द्विः। तुमर्थे सेसेनित्यवीसयोरिति द्वित्वं। जीवस इति। तुमर्थे सेसेनित्यसे प्रत्ययः। पिबध्या इति। तुमर्थ इत्यनेनैव शध्यै प्रत्ययः। पाघ्रेति पिबादेशः। येन विधिस्तदंतस्येत्यनेनैव सिद्धे सू

योपि वर्जने। माङ् नञौ स्वरादि सूत्रे। इह पाठस्तु निपातत्वार्थस्तेनाद्युदात्तत्वं फलं सिध्यतीति केचित्। तदसत्। फिट्स्वरेणापीष्टसिद्धेः। अन्ये त्वाहुः सत्ववच

नानामप्यव्ययसंज्ञार्थं स्वरादिपाठ इति। तदप्यसत्। लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः। तस्मादभयत्र पाठश्चिंत्यप्रयोजनः। यावत्तावदेतौ साकल्याव

धिमानावधारणेषु। साकल्ये। यावत्कार्यं तावत्कृतं अवधौ यावद्गंतव्यं तावत्तिष्ठ। माने यावद्दत्तं तावद्भुक्तं। अवधारणे। यावदमत्रं तावद्ब्राह्मणानामंत्रयस्व। त्वै। विशेषवि

तर्कयोः। द्वै वितर्के। न्वै इति पाठांतरं। रै दाने अनादरे च। रैकरोति। रै दात्तीत्यर्थः। त्वं रे किं करिष्यसि। श्रौषट् वौषट् एतौ हविर्दाने। स्वाहा देवताभ्यो दाने। स्वधेति पि

तृभ्यः। ओं षडादीनामनेकाचामुभयत्र पाठः स्वरभेदार्थः। तुमिति तुंकारे। तुरुंतुंकृत्यहुंकृत्य। तथाहीति निदर्शने। खलु इति निषेधवाक्यालंकारनिश्चयेषु। किं

लोति वार्त्तायामलीके च। अथेति मंगलानंतरारंभप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि तेन मंगलवाचकस्य सत्वार्थत्वेप्यव्ययत्वं सिध्यति। १ अत्र हि

अतएव श्रीहर्षः उदस्य कुंभीरथ शातकुंभजाः स्वतुच्छचारुत्विषि वेदिकोदरे। यथाकुलाचारमथावनींद्रजां पुरंध्रिवर्गः स्नपयां बभूव तामिति। आदहेत्यु

अथ स्नपयांबभूवेत्यस्य मंगलं स्नपनं चकारेत्यर्थः। निपातस्तु स्वरूपेणैव मंगलं मृदंगध्वनिवत्। सुसु स्वरभेदार्थे पाठः। स्मेत्यतीते पादपूरणे च। आदहेत्यु

पक्रमहिंसाकुत्सनेषु। आदहस्वधामन्नित्यत्र तु पदकाराः आदिति पृथक्पदं पठंति। अवदत्तमिति। इह अवस्यानुपसर्गत्वात् उपसर्गात्त इति न भवति। अहमिति

सुबंतप्रतिरूपकमहंकारे। एवं गये केन विनीतौ वामिति युवामित्यर्थे। सुबंतप्रतिरूपकमव्ययं। अस्तीति तिङंतप्रतिरूपकं। एवं त्वामस्मि वच्मीत्यत्रास्मी

त्यहमर्थे तिङंतप्रतिरूपकं। आहेत्युवाचेत्यर्थे। आसेति बभूवेत्यर्थे इत्याद्विवो ध्यं। अहंयुरस्ति। अहंशुभमोर्युस् यादित्वात्। होसाविति मपर्यंतस्याहादे

शेषे लोपे च कृते निष्पन्नो यो अहंशब्दस्तस्माद्युस्प्रत्ययः क्रियेत तर्हि सुपो लुकि अस्मद्युरिति स्थिते मदीय इत्येवमपर्यंतस्य मादेशे सति मद्युरिति स्यादिति

भावः। भस्त्रिसीरेति तिङंतत्वे तु बहुव्रीहि समासोयं नोपपद्यत इति भावः। अ इति संबोधने ऽधिक्षेपे निषेधे च। आ इति वाक्यस्मरणयोः। इ संबोधनजुगुप्साविस्म

येषु। ई उ ऊ ए ऐ ओ औ संबोधने। पशु सम्यगर्थे। पशु मन्यमानाः। शुकं शेध्ये। यथा कथा चेत्यनादरे। पाट् प्रभृतयः सप्त संबोधने। घेति हिंसाप्रातिलोम्यपादपूरणेषु विनुनाना

र्थौ एकपदे इत्यकस्मादित्यर्थौ। प्रतत्कुत्सायां। आत इति इतोपीत्यर्थौ। आकृतिगण इति। तच्चथा पत्तदिति हेतौ। आहोस्विद्विकल्पे। सामि सर्वतो भावे। धुकं अतिशये। अनकेवि

नोधीपाभावश्चेति सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति। अत्राहुः। उनर्वचनमनित्यत्वज्ञापनार्थं। तेन प्राग्रन्ताल्लङ् मुखस्वरोपचार इति परिगणने लभ्यते। पुरस्तादस्यो
देवदत्तो राधेयः। उराकूरस्यविस्पीविरप्शमित्यादि सिद्धये नलोकाव्ययेत्यत्राव्ययप्रतिषेधेतोसुन्कसुनोरप्रतिषेध इति वक्ष्यते तदप्यनेनैव लभ्यत इति। अव्ययाद्य
प्सुपः। एयस्त्रियामेति सूत्राच्चुगत्राउवर्तते इत्याह। लुक्स्यादिति। अव्ययमिति महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं। नव्येति विविधं विकारं न गच्छति सत्त्व
धर्मान् लिंगसंख्यादीन्न गृह्णातीति यावत्। तेनात्युच्चैसौ। अत्युच्चैस इत्यादि सिद्धं। अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहादव्ययसंज्ञाया अत्राभावात्। नन्वेवम
प्युच्चैः शब्दस्याव्ययत्वानपायात्सुपो लुक् दुर्वार इत्यत आह। विहितविशेषणादिति। अत्युच्चैसाविति। नन्वत्यादयः क्रान्ताद्यर्थे द्वितीययेति तेन समस्यते। उच्चैः शब्द
स्त्वधिकरणशक्तिप्रधान इति कर्मत्वायोगान्न तस्य द्वितीयान्तता। सत्यं। शक्तिप्रधानान्यपि कानिचिदव्ययानि। वृत्तिविषये शक्तिमत्प्रधानानि कदाचित् भवन्ति। य
था दोषामन्यमहः। दिवामन्या रात्रिरिति। ततश्च प्रक्रियादशायामुच्चैः शब्दस्य द्वितीयान्तत्वं संभवतीति दिक्। ननु स्वरादिषु उच्चैः शब्दः पठ्यते तत्र कथं तदन्तस्य
प्रसंग इति चेन्न। अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात्। अन्यथा उपसर्जने प्रसंगाभावेन तत्र तत्पर्यायपा अन्वर्थसंज्ञाया वैयर्थ्योपत्तेः। तेन परमस्वःपरमो
च्चैरित्यादौ सत्त्वधर्मापरिग्रहादव्ययत्वं सिद्धं तदेतदाह अव्ययसंज्ञायां यद्यपीत्यादि। अव्ययाद्यपो लुग्वचनानर्थक्यं लिंगाभावादिति। नार्तिकमनसि निधाया
ह। आवग्रहणान्यर्थमिति। सूत्रस्योक्तिसंभवस्तु स्त्रियामिति सूत्रे स्त्री समानाधिकरणादिति पक्षं गृहीत्वेति बोध्यः। सचनस्थितः भूतमियन्नाम्नेत्यादावतिव्याप्तेः
यदित्तु आम इति सूत्रानन्तरं सुपो धातुप्रातिपदिकयोः अव्ययादिति सूत्यते तदा सुग्रहणमपि व्यर्थं सुपइत्यनुवृत्तिसंभवादिति नव्याः। अलिंगत्वे आथर्वणप्रणववि
द्यागतश्रुतिविरोधमाशंक्याह। सदृशमिति। एतेषु यन्न व्येति किंतु सदृशं एकप्रकारं तदव्ययमिति योजना। यद्वा यस्मान्न व्येति तदव्ययं। लिंगकारकेति। विभक्तिव
चनशब्दो संख्याकारकपराविति भावः। यद्यप्यव्ययीभावस्य लिंगसंख्याकारकयोगोस्ति। तथापि वचनादव्ययत्वं। अव्ययविशेषकार्यान्तरमाह। वष्टीति। भागुरि
राचार्यः। आपं चैवेति। वष्टीत्यत्र उपज्यते। यथा वाचेति। परिगणनमिदमित्येके। अन्ये तूदाहरणमात्रमित्याहुः। वगाह इति। अपिनासाहचर्यादादिरेवाकारो लुप्यते नो
त्य इति भावः॥ इत्यव्ययानि॥

नोपीपाभावश्चेतिसूत्रद्वयंतुस्वरूपेशौवक्ष्यतइति।अत्राहुः।पुनर्वचनमनित्यत्वज्ञापनार्थं।तेनप्रागुक्तंलुङ्भ्रुक्खरोपचारइतिपरिगणनेलभ्यते।पुरस्सयोस्यो
देवतेराधेयः।उराकूरस्यविसृपीविरपृशमित्यादिसिद्धयेनलोकाव्ययेत्यत्राव्ययप्रतिषेधेतोसुन्कसुनोरप्रतिषेधइतिवक्ष्यतेतदप्यनेनैवलभ्यतेइति।अव्ययादा
सुपः।एयस्त्रियामेतिसूत्राच्चुगत्रानुवर्ततइत्याह।लुक्स्यादिति।अव्ययमितिमहासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं।नव्येतिविविधंविकारंनगच्छतिसत्त्व
धर्मान्लिंगसंख्यादीन्नगृह्णातीतियावत्।तेनात्युच्चैसौ।अत्युच्चैसइत्यादिसिद्धं।अतिक्रांतप्रधानत्वेनसत्त्वधर्मपरिग्रहादव्ययसंज्ञायाअत्राभावात्।नन्वेवम
त्युच्चैःशब्दस्याव्ययत्वानपायात्सुपोलुक्दुर्वारइत्यतआह।विहितविशेषणादिति।अत्युच्चैसाविति।नन्वत्यादयःक्रांताद्यर्थेद्वितीययेतितेनसमस्यते।उच्चैःशब्द
स्त्वधिकरणशक्तिप्रधानइतिकर्मत्वायोगान्नतस्यद्वितीयांतता।सत्यं।शक्तिप्रधानान्यपिकानिचिदव्ययानि।वृत्तिविषयेशक्तिमत्प्रधानानिक्वचित्भवंति।य
थादोषामन्यमहः।दिवामन्यारात्रिरिति।ततश्चप्रक्रियादशायामुच्चैःशब्दस्यद्वितीयांतत्वंसंभवतीतिदिक्।ननुस्वरादिषुउच्चैःशब्दःपठ्यतेतत्रकथंतदंतस्य
प्रसंगइतिचेन्न।अन्वर्थसंज्ञयैवतदंतविधेरभिज्ञापनात्।अन्यथाउपसर्जनेप्रसंगभावेनतन्निवृत्त्यर्थायाअन्वर्थसंज्ञायावैयर्थ्योपत्तेः।तेनपरमस्वःपरमो
च्चैरित्यादौसत्त्वधर्मापरिग्रहादव्ययत्वंसिद्धंतदेतदाहअव्ययसंज्ञायांयद्यपीत्यादि।अव्ययादापोलुग्वचनानर्थक्यंलिंगाभावादितिवार्तिकमनसिनिधाया
हाआवग्रहणाव्यर्थमिति।स्त्रस्योक्तिसंभवस्तुस्त्रियामितिसूत्रेस्त्रीसमानाधिकरणादितिपक्षंगृहीत्वेतिबोध्यः।सचनस्थितःभूतमियंब्राह्मणीत्यादावतिव्याप्तेः।
यदितुआपइतिसूत्रानंतरंसुपोधातुप्रातिपदिकयोःअव्ययादितिसूत्र्येततदासुब्ग्रहणमपिव्यर्थंसुपइत्यनुवृत्तिसंभवादितिनव्याः।अलिंगत्वेआथर्वणप्रणवि
द्यागतश्रुतिविरोधमाशंक्याह।सदृशमिति।एतेषुयन्नव्येतिकिंतुसदृशंएकप्रकारंतदव्ययमितियोजना।यद्वायस्मान्नव्येतितदव्ययं।लिंगकारकेति।विभक्तिव
चनशब्दौसंख्याकारकपराविति भावः।यद्यप्यव्ययीभावस्यलिंगसंख्याकारकयोगोस्ति।तथापिवचनादव्ययत्वं।अव्ययविशेषकार्यांतरमाह।वष्टीति।भागुरि
राचार्यः।आपंचैवेति।वष्टीत्यत्रमज्यते।यथावाचेतिपरिगणनमिदमित्येके।अन्येतूदाहरणमात्रमित्याहुः।वगाहइति।अपिनासाहचर्याद्दिरेवाकारोलुप्यतेनां
त्यइतिभावः॥ इत्यव्ययानि॥

त्रास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः लौकिक स्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे। कथमन्यथा कुमारी कुमार इत्यादयः प्रयोगा व्यवतिष्ठेरन्। करेणुरिभ्यां
स्त्री नभे इत्यमरस्याप्ययमेवार्थः। नन्वेवं पशुनेति पुंस्त्वं विवक्षितमिति मीमांसको द्विषः कथं योज्यः। पारिभाषिकस्याप्यानन्त्येनातयातद्विवक्षाया अकिंचित्करत्वात्।
लौकिकस्य तु लिंगस्य पशुशब्दादप्रतीतेरिति चेत्। अत्राहुः। छागो न मूत्रनर्गादितिवत् त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यः छागशब्दस्य लौकिकपुंस्त्वविशि
ष्टपारिभाषिके शक्तत्वादिति। तच्च जातित्रयमित्येके। उक्तं च हरिणा तिस्रो जातय एवैता केषांचित्समवस्थिताः। अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः। भाष्ये तु
प्रकारांतरमुक्तं संस्त्यानप्रसवौ लिंगमास्थेयौ स्वकृतांततः। संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान्। उभयोरंतरं यच्च तदभावे नपुंसकमिति। अस्यायमर्थः
संस्त्यानं स्त्री सत्वरजस्तमोलक्षणानां गुणानामपचयः। प्रसवो गुणानामुपचयः। सप् पुमान् सूतेर्ड्रौतः सप् सकारस्य पकारादेश इत्यर्थः। औणादिको मसुन् समस्त्य
योर्ह्रस्वश्च वाहुलकादिति कैयटः। सूतेर्डुम्सुन्निति माधवः। तयोरुपचयापचययोरभावे सति यदुभयोरंतरं तद्दृष्टांतं नपुंसकं नभ्राण्नपादिति निपातनादिति भावः।
तथा च स्थितिमात्रं नपुंसकं। अत एव आविर्भावतिरोभावयोरपि स्थितिसामान्यविवक्षासंभवान्नपुंसकं। लिंगं सर्वनामेति सिद्धांतः। स्त्री पुमान्नपुंसकमिति शब्दाश्च
क्तादिशब्दवद्धर्मे धर्मिणि च वर्तंते। स्वकृतांततः इति वैयाकरणसिद्धांतत इत्यर्थः। कृतांतो यमसिद्धांतावित्यमरः। पंचाजीति। पंचानामजानां समाहार इति तद्धितार्थेत्या
दिना द्विगुः। अकारांतोत्तरपद इति स्त्रीत्वे द्विगोरिति ङीप्। न चात्र प्रत्ययनिषेधो तदंतविधिविरहादेव टापो प्रवृत्तौ ङीबेव स्यादिति वाच्यं। अमहत् इत्यग्रहणेन अनुपस
र्जनाधिकारेण च स्त्रीप्रत्यये तदंतविधिज्ञापनात् प्रवृत्तेः सत्वात्। समासार्थसमाहारनिष्ठमिति। ननु जहत्स्वार्थायां वृत्तौ समाहारोऽप्यजार्थ एवेति चेत् मैवं। अंत
र्यापितस्य पदांतरसमभिव्याहारापेक्षया बहिरंगत्वात्। टाबिधेस्त्वंतरंगत्वाच्चरितार्थत्वात्। कथं तर्हि परमाजेति चेत्। प्रागुत्पन्नस्यैव टापस्तत्र श्रवणात्। अत एव जानिर
जेत्यत्र गुणभवं तं प्रत्युक्तस्थावित्यवेहि। न च पंचाजीत्यत्रापि तथास्त्विति वाच्यं। द्विगोरिति ङीपा बाधितत्वात्। चटकेति। न चात्र प्रत्ययस्थात् इतीकारः शंक्यः। चटका
याण् ऐरगिति लिंगादिहैव निपातनाद्वा तदप्रवृत्तेः। एवं च क्षिपकादिषु चटकेति पठनं नातीवावश्यकमिति नव्याः। मूषिकेति। इस्थि रुषोः किकन्नित्यधिकारे मुषेर्दीर्घश्च
ति किकन्निरिकारमध्यो मूषिकाशब्दः। पक्षे मूषलेप इति दीर्घोपधात्संज्ञायां कुनि मूषकशब्दो मा भूदनेनोक्तः तोऽप्ययं टाप्। प्रत्ययस्थादितीत्वं न विशेषः। केचित्तु कुनं

अजाद्यतः। अजशब्दः आदिर्यस्येति बहुव्रीहिः। अच् आदिर्यस्येति तु नार्थः। अच्चीति निर्देशात्। गणपाठसामर्थ्याच्च। अदिति न स्वरूपग्रहणं संख्याया इति लिं
गात् अजादिभिः पृथक्पाठसामर्थ्याच्च रहस्याप्प्रातिपदिकादित्यधिकारे स्त्र्यापोन संबध्येते। इह वा तयोर्विधेयत्वात्। अपितु प्रातिपदिकमेव। तच्चाकारेण वि
शिष्यते विशेषणेन च तदन्तत्वलाभः। तदाह। अजादीनामकारान्तस्य चेति। सूत्रे अत इति षष्ठी तदर्थश्च वाच्यवाचकभावः। स्त्रियामिति तु धर्मप्रधानो निर्देश इत्या
शयेनाह। वाच्यं यत् स्त्रीत्वमिति एतच्च लिंगप्रातिपदिकार्थ इति पक्षाभिप्रायेणोक्तं। कस्माद्भवतीत्याकांक्षायां सन्निधानादजादिभ्योऽकारान्तान्चेति बोध्यं। इस्कोय
णाचीत्यत्र कस्मादचि पर इत्याकांक्षायामिक इति यथा। टाप पः पकारः स्वरार्थः। ओड्‌आपः। आड्‌चापः। याड्‌आपः। इत्यादौ सामान्यग्रहणार्थश्च तदविघातार्थश्च कारः

अजाद्यतष्टाप्। ४।१।४। अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्। अजा। युक्तिर्ङीषो ङीपश्च बाधनाय। अजा। अतः। खट्वा। अजादिभिः
स्त्रीत्वस्य विशेषणान्नेह। पञ्चाजी। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वं। अजा। एडका। अश्वा। चटका। मूषिका। एषु जातिलक्षणो ङीष् प्राप्तः।
बाला। वत्सा। होडा। मन्दा। विलाता। एषु वयसि प्रथम इति ङीप् प्राप्तः। सम्भस्त्राजिनशणपिण्डेभ्यः फलात्। सम्फला। भस्त्रफला। ङ्याः पोरिति ह्रस्वः।
सदच्‌काण्डप्रान्तशतैकेभ्यः पुष्पात्। सत्पुष्पा। प्राक्पुष्पा। प्रत्यक्पुष्पा। शूद्रा चामहत्पूर्वा जातिः। संयोगे तु शूद्री। अमहत्पूर्वा किं। महाशूद्री।
कुञ्चा। उष्णिहा। देवविशा। ज्येष्ठा। कनिष्ठा। मध्यमेति पुंयोगेऽपि। कोकिला जातावपि। मूलान्नञः। अमूला। नन्नेभ्यो ङीप्। कर्त्री दंडिनी।

आवित्सक्ते हि तदन्तविधं परिभाषया ओड्‌आप इत्यादावयमेव शब्देतड्‌आपश्चापोर्ग्रहणं न स्यात्। नन्वत इत्येव सिद्धे अजादिग्रहणं व्यर्थं। न च कुंचा उष्णिहेत्यादिषु ह
लंतत्वादप्राप्ते विध्यर्थं तदिति वाच्यं। तथा सति कुंचेत्यादिरेव शब्देत नन्वजादिरतो व्याचष्टे। अजाद्युक्तिर्ङीषो ङीपश्चेति। खट्वेति। खट्कांक्षायां। अशू प्रुषि लटि खटि
कणि विशिभ्यः क्विन्। न च चेतनानां खट्वादिशब्दानां कथं लिंगव्यवस्थेति चेत्। उच्यते। लोकप्रसिद्धं स्तनाद्यवयवसंस्थानविशेषात्मकं लिंगं न व्याकरणे आश्री
यते स्तनानित्यादौ नत्वाभावप्रसंगात्। तटस्तटी तटमित्यादौ यथायथं लिंगत्रितयनिवंधनकार्याणामसिद्धिप्रसंगाच्च किंतु पारिभाषिकमेव लिंगत्रयं। तच्च केवलान्वयि।
अयमर्थ इयं व्यक्तिरिदं वस्त्विति शब्दानां सर्वत्र प्रतिबद्धप्रसरत्वात्। तत्र कश्चिच्छब्द एकस्मिंल्लिंगे शक्तः कश्चिद्द्वयोः कश्चित्त्रिष्विति लिंगानुशासनतादिभ्यो निर्णी

कं प्रत्ययश्चेति द्विविधं संभवति। आद्ये उगिदंतो भवंतं महांतं चातिक्रांता अतिभवती अतिमहती इत्युदाहरणं। सर्वो दिगणो भवतु इति पाठान्न वच्छव्दस्योगित्वव्यपदेशः महच्छब्दस्य तु शतृवद्भावात्। नन्वेवं व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधात्केवलाभ्यां भवन्महच्छब्दाभ्यां ङीप् न स्यादिति वाच्यं। प्रातिपदिकाप्रातिपदिकसाधारणेन शब्दमात्रमुगित्यनाभिधेयमिति उक्तनिषेधाप्रवृत्तेरित्याशयेनोदाहरति। भवंती इति। द्वितीयमुगिदंतमुदाहरति। पचंती इति। पचेर्लटः शतरि कर्तरि शप्। यद्दिगु सर्वो दिगणो भवतु इति उगित् पठितः सभाते डवतुरिति स्तुत्यायतेतरा भवतीति द्वितीयो गिदंतस्याप्युदाहरणं भवत्येव। शत्रंतात्तु भवतेर्ङीपि शप्श्यनोरिति नित्यो नुम्। भवंती। उखास्रदित्यादि। उखायाः स्रंसते पर्णान्यो ध्वंसते। स्रंसु ध्वंसु अवस्रंसने। वसुस्रंसितिदत्वं॥ ॐ॥ वनोरचावन्निति प्रत्ययेनत्तदंतं प्रातिपदिकं गृह्यते। वन्नं

वनोर च। ४।१।७। वन्नन्तात्तदन्ताच्च प्रातिपदिकात्स्त्रियां ङीप् स्यात्। रश्चाऽन्तादेशः। वन्निति ङ्वनिप्क्वनिप्वनिपां सामान्यग्रहणं। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं। तेन प्रातिपदिकविशेषणात्तदन्ताऽन्तमपि लभ्यते। सुत्वानमतिक्रान्ता अतिसुत्वरी। अतिधीवरी। शर्वरी। वनो न हश इति वक्तव्यं। हशन्ताद्धातोर्विहितो यो वनत्तदंतात्तदन्तान्ताच्च प्रातिपदिकान्ङीप्‌ रश्च नेत्यर्थः। ओण् अपनयने वनिप्। विड्वनोरित्यात्वं। अवावा। ब्राह्मणी राजयुध्वा। बहुव्रीहौ वा। बहुधीवरी। बहुधीवा। पक्षे डाब्वक्ष्यते। पादोऽन्यतरस्यां। ४।१।८। पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकात्ङीब्वा स्यात्। द्विपदी द्विपा ९९

तेन त्वधिकृतप्रातिपदिकविशेषणात्तदंतविधिरित्याशयेनाह। वन्नंतात्तदंताच्चेति। येन विधिस्तदंतस्येत्यत्र स्वं रूपमिति स्वान्तं स्वमिति अनुवर्त्य स्वस्य चेति व्याख्यानादुभयं लभ्यत इति भावः। यदि तु वन्नंतमेव व्यपदेशिवद्भावेन वन्नंतांतमिति उच्यते तर्हि येन विधिरित्यत्र स्वमित्यनुवर्त्य स्वस्य चेति न व्याख्येयं। न च त्वव्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधः शंक्यः। तस्य प्रत्ययमात्रविधिविषयत्वात् वन्नंतस्य वस्तुतः प्रातिपदिकत्वेपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वाभावाच्च। हः सामान्यग्रहणमिति। सूत्रे वन इत्यनुबंधरहितस्य ग्रहणात्तदनुबंधपरिभाषा नोपतिष्ठत इति भावः। वन्ग्रहणे वन्नंते वन्नंतांते च कथं लभ्यत इत्याशंकायामाह। प्रत्ययग्रहणे इत्यादि। तेनेति। वन्नंतेत्यर्थः। तदंतांतमपि लभ्यत इति। स्त्रियामित्यधिकारे ग्रहणवता प्रातिपदिकेनेति निषेधो न प्रवर्तते। असमहत् इत्यादिज्ञापकादिति भावः। अन्ये त्वाहुः।

लक्षणङीष्बाधनार्थत्वात्संज्ञायाश्च जातित्वात्। तथा चादन्तत्वादेव कुल्नं टाप् सिध्यतीत्याहुस्तच्चिन्त्यं। व्याघ्रीत्यादिवत्संज्ञात्वेऽपि जातित्वानपायात्। मल्लिफलेति। मल्ले
लफलानि यस्या इति विग्रहः। ह्याप्योरिति। एतच्च फलनिष्पत्ताविति धातौ माधवग्रन्थे स्थितं। पाकं करोतीत्यत्र भाष्ये तु दीर्घ एव दृश्यते। सद्गच्छतीति सत्यां क्रोडेति पाठो नाद
त्फलानि यस्या इति विग्रहः। ह्याप्योरिति। एतच्च फलनिष्पत्ताविति धातौ माधवग्रन्थे स्थितं। पाककरीत्यनेन प्राप्तस्य ङीषो निषेधार्थः। तेनैव सूत्रे भाष्ये प
त्येव्य इति ध्वनयन्नुदाहरति। प्रत्यक्पुष्पेति। अत्र नव्याः संभस्त्रेत्यादि वचनद्वयं मूलान्नञ इति वक्ष्यमाणं च पाककर्णेत्यनेन प्राप्तस्य ङीषो निषेधार्थं। तेनैव सूत्रे भाष्ये प
ठितमपि फले विशेषाभावादिदैव ग्रन्थकारैः पठितं। न चैतावताऽजाद्यन्तर्गणसूत्राणीति भ्रमः कार्यः तथात्वे मानाभावात् किंतु वार्तिकान्येवैमानीत्याहुः। शूद्रा चेति। शूद्रशब्दश्च
पमुत्पादयति जातिश्चेत्। महत् पूर्वस्तु न जातिश्चेदितीहापि संबध्यते। तेन महती शूद्रा महाशूद्रेति भवत्येव पुंयोगे त्विति। पुंयोगश्च दांपत्यरूप एवेति न नियमः। किंतु जन्यजनकभा
वोऽपि गृह्यते। तथा च स्मृतिः। वैश्यात् शूद्रां तु राजन्यान्माहिष्योग्रौ सुतौ स्मृताविति। महाशूद्रीति। आभीरीत्यमहाशूद्री जातिपुंयोगयोः समेत्यमरः। इह महत् पूर्वेति व्यर्थं। महा

उगितश्च। ४। १। ६। उगिदन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यात्। भवती। पचन्ती। शप्श्यनोरिति नुम्। उगिदचामिति सूत्रेऽच्ग्रहणेन धातोश्चेदुगित्कार्यं
नात्र्यञ्चतेरेवेति नियम्यते। तेनेह न। उखास्रत्। क्विप्। अनिदितामिति नलोपः। पर्णध्वत्। अञ्चतेस्तु स्यादेव। प्राची। प्रतीची॥ ॥ ॥ ॥

शूद्रशब्दो हि समुदित एवाभीरत्वजातौ वर्तते। तत्रावयवस्यानर्थकत्वात् शूद्रशब्दार्थसमवेतस्त्रीत्वाभावेन टापः प्रसक्त्यभावात्। न च तदन्तविधिज्ञापनात्तदिति वाच्यं। अ
नुपसर्जनाधिकारेणैव तदन्तविधिज्ञापनादिति दिक्। अत्र नव्याः शूद्रा चेत्यादिवचनमजाद्यत इति सूत्रस्थं वार्तिकमेव न त्विदं गणसूत्रमित्याहुः। क्रुंचेत्यादि। त्रयोऽमी हलन्ता इत्ये
के। भाष्ये तु क्रुंचा नाऽऽलभेत। उष्णिहककुभावित्यादिप्रयोगमुदाहृत्याऽदन्ता अपि स्वीकृताः। पचाद्यचा इगुपधलक्षणेन कप्रत्ययेन यथासंभवमदन्तत्वात्। पुंयोगेऽपीति यदा ज्ये
ष्ठादयः प्रथमजातादौ वर्तन्ते तदा अदन्तत्वादेव टाप् सिद्धः। यदा तु ज्येष्ठस्य स्त्रीत्यादि विवक्षा तदा पुंयोगलक्षणो ङीष् प्राप्तः सोऽप्यनेन बाध्यत इति सूचयितुमपिशब्दः। मूलान्नञः
नञः किं। शतमूली। अमूलेति ओषधिजातिरियं॥ ॥ उगितश्च। उगिच्छब्देन प्रातिपदिकं विशेष्यते विशेषणेन तदन्तविधिः। न च प्रत्ययविधौ प्रतिषेधः। शंक्यः। अनुपस
र्जनादित्यनेन स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापनादुगिद्वर्णग्रहणवर्जमिति येन विधिरिति सूत्रस्थवार्तिकाच्चेत्याशयेनाह। उगिदन्तादिति। तन्नामित प्रातिपदि ॥
॥

स्यावश्यारभ्यत्वात्। तथा च अनेन ङीपि निषिद्धे तत्संनियोगेन प्राप्तो वनो रश्चेति योऽरेफः सोऽपि दुर्लभ एवेति वनो न हश् इति वार्तिकम् अबहुव्रीह्यर्थमिति फलितं बहुयज्वानौ वि तौ। न संयोगादिति निषेधान्नायमुपधालोपी। तेनात्र अन उपधालोपिन इति वक्ष्यमाणो विकल्पो न प्रवर्तते॥ ❀ ॥ डाबुभाभ्याम्। उभाभ्यां ग्रहणं व्यर्थम् अन्नन्तात्। अत्र तयोरनुवृ त्त्यैव तत्फलसिद्धेरित्येके। उभयोरप्यनुवृत्तिसूचनाय तद्ग्रहणमावश्यकम् अन्यथा सन्निहितस्यान्नन्तस्यैवानुवृत्तिरिति शंका स्यादित्यन्ये। ननु निषेधडापोर्वचनसाम र्थ्यात्पर्यायः सिध्यतीति तत् किमन्यतरस्यां ग्रहणेन। सत्यम् अन्यतरस्यामिति योगो विभज्यते। तत्र मनः इति निवृत्तम्। अनो बहुव्रीहेर्डा वा स्यात्। एवं शोवडापि सिद्धे पुनर्विधा नमिदं ऋन्नेभ्य इति ङीपा सह विकल्पार्थम् अन उपधालोपिन इति सूत्रं तु नियमार्थम्। अनो यो सो विकल्पः स उपधालोपिन एवेति। एवं च बहुधीवर्यौ बहुधीवानौ बहु धीवेत्युक्तरूपत्रयं सिद्धमिति बहुव्रीहौ वेत्यतन्त्रा शर्वंवचनमिति बोध्यम्। उपधालोपिन एवेति नियमात्तु सुपर्वा चारुपर्वा इत्यादावनुपधालोपिनि ङीप् न भवति किंतु

डाबुभाभ्यामन्यतरस्याम्॥ ४।१।१३॥ सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात्। सीमा। सीमे। सीमानौ। दामा। दामानौ। दामे। नञ्सिद्दामेत्यमरः। बहुयज्वा। ब हुयज्वानौ। बहुयज्वे। अन उपधालोपिनोऽन्यतरस्याम्॥ ४।१।२८॥ अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् स्यात्। पक्षे डाप्ङीनिषेधौ। बहुराज्ञी। बहुराज्ञ्यौ। बहुराजे। बहुराजानौ॥ ९९

डाप्निषेधावेव भवतः। अयं च योगविभागोऽवश्यमभ्युपेयः। अन्यथा बहुधीवरीत्यत्र प्रकरणान्तरस्थेन अन उ पधालोपिन इति वक्ष्यमाणेन पाक्षिके ङीपि कृते पिऋन्नेभ्य इति प्राप्तङीपमनूद्य तत्संनियोगेन हि विधीयमानो यो वनो रश्चेति रेफः स न सिध्येत। न तु वनो रश्चेति सूत्र मेव ङीप्रेरौ विधत्तामिति चेन्न उभयविधौ गौरवात्। किं च उभयविधायकत्वेऽप्यनो बहुव्रीहेरित्यनेन ङीपि निषिद्धे सोऽपि दुर्लभः सन्नियोगशिष्टत्वात्। भाष्ये तु अनो ब हुव्रीहेरित्यस्यानन्तरम् उपधालोपिनो वेति सूत्रमस्तु अन उपधेत्यादि प्रदेशान्तरस्थं सूत्रं डाप्सूत्रे अन्यतरस्यांग्रहणं च मास्त्वित्युक्तम्। अन उपधा। बहुव्रीहेरूपसतो ङी वित्येतौ बहुव्रीहियहणं संख्याव्यपादेङीवित्येतौ ङीप् चानुवर्तत इत्याशयेनाह। अन्नन्तादित्यादि। नियमार्थमिदमित्युक्तम्। न चैवं पूर्वेणैव विकल्पसिद्धौ विहान्यत रस्यांग्रहणं व्यर्थमिति वाच्यम्। असति ह्यन्यतरस्यांग्रहणे नित्यार्थो विधिरेवायं स्यान्न तु नियम इति॥ ॥ ॥ ॥

सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वं नास्तीत्युक्तत्वात् ग्रहणवतेति निषेधशंकैव नास्तीति सुत्वानमिति। सुपजो ङ्वनिप्। अत्यादयः क्रान्ताद्यर्थे इति समासः। अतिधीवरी
ति। दधातेरन्येभ्योपि दृश्यन्त इति क्वनिप्। घुमास्थेतीत्वं। भाष्ये तु ध्यायतेः क्वनिपि संप्रसारणमिति स्थितं। नस्य रेफादेशे कृतेप्येकदेशविकृतस्यानन्यत्वाद् ङीब्लोपो न इति प्राप्ते
ति। अनो नकारान्तविशेषणात्तु न भवतीति श्वयुवमघोनामित्यत्रैव व्युत्पादितं। शर्वरीति। शॄ धातोरन्येभ्योपीत्यनेनैव वनिप्। गुणे कृते रपरत्वे ह शं। तात्परत्वे पि ह शं
ता ङ्हितत्वाभावात् ङीब्रयोरत्र निषेधो न। वनो न हश इति अबहुव्रीह्यर्थोयमारंभः। बहुयज्वेत्यादौ तु अनो बहुव्रीहेरिति ङीपि निषिद्धे रेफस्याप्यप्रवृत्तेः। राजयुध्वेति। रा
जानं योधितवती राजनि युधि कृञ इति ङ्वनिप्। बहुव्रीहौ वेति। अन्यतरस्यामिति योगविभागादिदं लभ्यते न तु पूर्ववचनमिति वक्ष्यते। बहुधीवरीति। बहवो धीवानो य
स्यां नगर्यामिति विग्रहः। पक्षे डाविति। डाबुभाभ्यामिति सूत्रेण। तथा च द्विवचने बहुधीवर्यौ बहुधीवानौ बहुधीवे इति रूपत्रयं भवतीति भावः। द्विपादिति। द्वौ पादौ यस्या

टाबृचि। ४।१।९। ऋचि वाच्यायां पादन्ताट्टाप् स्यात्। द्विपदा ऋक्। एकपदा। नषट्स्वस्रादिभ्यः। पञ्च। चतस्रः। पञ्चेत्यत्र नलोपे कृतेऽप्यन्नन्ता
षडिति षट्संज्ञां प्रति नलोपः सुप्स्वरेति नलोपस्याऽसिद्धत्वान्न षट्स्वस्रादिभ्य इति न टाप्। मनः। ४।१।११। मन्नन्तान्न ङीप्। सीमा। सीमानौ।
अनो बहुव्रीहेः। ४।१।१२। अन्नन्ताद् बहुव्रीहेर्न ङीप्। बहुयज्वा। बहुयज्वानौ। ॥ ॥ इति बहुव्रीहौ संख्यासुपूर्वस्येति पादशब्दस्यान्तलोपः ॥

श्च विभक्त्यन्तपादः पत्॥ ॥ टाबृचि। पूर्वेण प्राप्तस्य ङीपोऽपवादः। यद्यपि पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्विति कोशात् पादसमानार्थकः पच्छब्दोऽस्तीति
तेनैव द्विपदा एकपदेति रूपं सिध्यति तथापि ऋचि वाच्यायां द्विपदी द्विपादिति प्रयोगनिवृत्तये सूत्रारंभोऽयमावश्यकः। असिद्धत्वादिति। एतच्चासिद्धत्वोपवर्णनं
कार्यकालपक्ष एवोपयुज्यते न तु यथोद्देशपक्षे सकृत्प्रवृत्तायाः संज्ञायाः सर्वार्थत्वेन तस्याः पुनरपेक्षाभावात् न च पंचन्निति नान्तस्य कृतायामपि संज्ञायां पंचेत्यदंतस्य
न कृतेति शंक्यं। एकदेशविकृतस्यानन्यत्वादित्याहुः। तदसत्। एकदेशविकृतस्योपसंख्यानं हि स्थानिवदादेशोऽनल्विधावित्यत्र पठ्यते तेन चाल्विधौ न प्रवर्तत एवे
ति यथोद्देशपक्षेऽप्यसिद्धत्ववर्णनस्य युक्तत्वात्। न ङीविति। पूर्वसूत्रान्नेत्यनुवर्तत इति भावः॥ ॥ अनो बहुव्रीहेः। ननु राजयुध्वेत्यादिसिद्धये अवश्यवक्तव्येन
वनो न हश इत्यनेनैवेष्टसिद्धेः किमनेन सूत्रेण। मैवं। अन्नन्ताद् बहुव्रीहेर्डाबुभाभ्यामिति डाब्विधानार्थमेतत्सूत्रं॥ ॥

अनूद्यमानविशेषणे परिभाषा नोपतिष्ठत इत्येतदुदीचामात इति सूत्रस्य स्थाने यग्रहणेन ज्ञापयिष्यते। यत्तु पर इति पर्युदासः स्यात्। तर्हि बहुपरिव्राजकेत्यत्रापि स्यादेव उत्तरपदस्य सुबन्तत्वेपि समुदायस्यासुबन्तत्वात् ततः परत्वानिति। तेनात्र प्रसज्यप्रतिषेध इत्याह। सन्नाप् सुपः परो नचेदिति। सुबन्तात्परो न चेदित्यर्थः। सर्विकेति। अव्यय सर्वनाम्नामित्यज्ञातार्थे अकच्। कारिकेति। करोतेर्ण्वुल्। णित्वात् वृद्धिः। नौकेति। नौशब्दात् स्वार्थे कः। ततष्टाप्। शकेति। शक्नोतीति विग्रहः। पचाद्यच्। ततष्टाप्। बहुपरिव्राजकेति। परिपूर्वात् व्रजेर्ण्वुल्। बहवः परिव्राजका यस्यामिति बहुव्रीहौ तदवयवस्य सुपो लुकि कृतेपि प्रत्ययलक्षणेनोत्तरपदस्य सुबन्तत्वात् आपः सुबन्तात् परत्वमस्तीति इत्वमत्र न भवति। नंदनेति। नंदिग्रहेति ल्युः। वस्तुतस्तु सूत्रे प्रत्ययस्थेकी इति सप्तमीनिर्देशमेव कृत्वा सर्वस्येति ग्रहणं सुत्यजमित्याहुः। सर्वस्य किमिति। अर्थादेवेदं लभ्यते। टावेकादेशे कृते परत्र ह्रस्वाकाराभावादिति प्रश्नः। इतरो निर्दिष्टपरिभाषया कात् सर्वस्येति न लभ्यते किं तु टावेकादेशं बाधित्वा कात्परस्यैवाकारस्य

१ उदीचामातः स्थाने यकपूर्वायाः। ७।३।४६। यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे केऽणः इति ह्रस्वः। आर्यका। आर्यिका। चटकका। चटकिका। आतः किं। सांकाश्ये भवा सांकाश्यिका। यकेति किं। अश्विका। स्त्रीप्रत्ययेति किं। शुभं यातीति शुभंयाः। अज्ञाता शुभंयाः। शुभंयिका। यात्वन्त्यकौ तु नित्यं। सुनयिका। सुपाकिका॥ ९९

स्यादित्याशयेनाह। परस्येत्यादि। कटुकेति। कटुरस्त्रवति। अज्ञाता टीकः। टाकेति। कृदाधारार्चिकलिभ्यः कः। बाहुलकादित्संज्ञाभावः। संज्ञापूर्वकविधेरनित्यत्वात् केऽण इति ह्रस्वो न। मामकनरकयोरिति ककारस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनं। मामिकेति। ममेयं मामिका। युष्मदस्मदोरन्यतरस्यां खञ् चेत्यणि तवकममकावेकवचने इति ममकादेशः। आदिवृद्धिः। केवलमामकेत्यादिना संज्ञाछंदसोरेवेति नियमान्न ङीप्। नरिकेति। कै शब्दे। आदेच उपदेशे इत्यात्वं। आतोऽनुपसर्गे कः। आतो लोप इटि चेत्यालोपः। टाप्। इत्वे। त्यक्त्यपोश्च। उपसंख्यानमित्यनुवर्त्तते। उदीचामात इति विकल्पापवादः। दाक्षिणात्यिकेति। दक्षिणस्यामदूरे दक्षिणा। दक्षिणादाच्। दक्षिणाभवेति विग्रहे दक्षिणापश्चात्पुरसस्त्यक्। किति चेत्यादिवृद्धिः। टाप्। ततोऽज्ञातार्थे कः। केऽण इति ह्रस्वः। टाप्। प्रायेणानु दक्षिणस्यां दिशि भवेति विगृहीतं। तच्च मनोरमायां दूषितं। त्यब्व्यय साहचर्यादाजंतस्यैव दक्षिणाशब्दस्य ग्रहणात्। अन्यथा सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पत्नेश्चेति इहत्यिकेति अव्ययात्यप्। नयास्यपोः प्रत्ययस्यादि

प्रत्ययस्थात् कात् पूर्वस्य। का इत्यकार उच्चारणार्थः व्यंजनमात्रं विवक्षितं। अन्यथा एतिकाश्चरंतीत्यादावकचि इत्वं न स्यात्। तत्र हि अकारविशिष्टककारस्य प्रत्ययस्थत्वाभावा
त्। न चाकच्यपि अकारांतककारस्यैव प्रत्ययस्थो भवतु। अतो गुणा इति पररूपे सत्येतिका इत्यादिरूपसिद्धेरिति वाच्यं। पचतकीत्यादिवक्ष्यमाणरूपासिद्धिप्रसंगादित्याशयेना
हा ककारादिति। वर्णनिर्देशे कार प्रत्ययो विहितः। क्वचित्समुदायात् प्रयोगस्तु उच्चैस्तरां वा वषट्कार इत्यादिनिर्देश रूपयत्नसाध्य इति भावः। आपि पर इति एतच्चाकार
विशेषणं। तत्सामर्थ्यात्ककाराकाराभ्यां व्यवायेपि भवति। ननु एवं काम्यारथकस्येत्यादौ निचनुरादिव्यवाये। अत एव सर्विकेत्यादावाद्याकारस्य न भवतीति देतइक्तेम

प्रत्ययस्थात्कात्पूर्वस्यात इदाऽप्यऽसुपः। ७।३।४४॥ प्रत्ययस्थात्ककारात्पूर्वस्याऽकारास्येकारस्स्यादापि परे स चापसुपः परो न चेत्। सर्विका का
रिका। अतः किं नौका। प्रत्ययस्थात्किं। शक्नोतीति शका। असुपः किं बहुपरिव्राजका नगरी। कात्किं। नन्दना। पूर्वस्य किं। परस्य माभूत्। कटुका।
तपरः किं। राका। आपि किं। कारकः। मामकनरकयोरुपसंख्यानं॥ मामिका। नरान्कायतीति नरिका। त्यक्त्यपोश्च। दाक्षिणात्यिका। इहत्यिका।
नयासयोः। ७।३।४५॥ यत्तदोरस्येत्त्वं न स्यात्। यका। सका। यकां तकां। त्यकनश्च निषेधः॥ अधित्यका। उपत्यका। आशिषि वुनश्च न॥ जीवका। भ
वका। उत्तरपदलोपे न॥ देवदत्तिका। देवका॥ क्षिपकादीनां च॥ क्षिपका। ध्रुवका। कन्यका। चटका। तारका ज्योतिषि॥ अन्यत्र तारिका। व
र्णका तान्तवे॥ अन्यत्र वर्णिका। वर्तका शकुनौ प्राचां॥ उदीचां तु वर्तिका। अष्टका पितृदैवत्ये॥ अष्टिकान्या। सूतका पुत्रिका वृन्दारकाणा
मेवेति वक्तव्यं॥ इह वा अ इति छेदः। कात्पूर्वस्य वा ऽकारादेश इत्यर्थः। तेन पुत्रिकाशब्दे ङीन इवर्णस्य पक्षेऽकारः। अन्यत्रेत्त्वबाधनार्थमकारस्यै
व पक्षेऽकारः। सूतिका। सूतकेत्यादि॥ ११ कारस्येकारः स्यादापि परत इति। यदि तु आपीति ककारविशेषणं स्यात्तर्हि रथकट्येत्यादावतिप्रसंगः। व्यव
हितस्यापि परत्वानपायात्। न च निर्दिष्टपरिभाषया निस्तारः। अनुवादे परिभाषाणामनुपस्थितेः। न चापीत्यस्याकारविशेषणत्वेपि तद्दोषतादवस्थ्यमिति वाच्यं।
अनुवादे परिभाषाणामित्यस्यानूद्यमानविशेषणे विषय इत्यर्थाभ्युपगमात्। कात्पूर्वस्यात इदित्यत्र हि अत इत्यनूद्येत्वविधानादनुवाद्यत्वमेवाऽत इत्यस्य। न त्वापोऽनूद्यमा
नविशेषणत्वं। कादित्यस्य त्वनूद्यमानविशेषणत्वं स्पष्टमेवेति न तत्र निर्दिष्टपरिभाषोपतिष्ठत इति वैषम्यात्॥ ॥ ॥ ॥

सु·
सि· कौ· टी· त·
१०२

वर्तयतीति वर्तिका। शकुनावेव वाच्येऽयं विकल्पः। अन्यत्र तु नित्यमेवेत्त्वमिति बोध्यं। अष्टकेति पितरश्चाता देवताश्च पितृदेवताः। तदर्थं कर्म पितृदेवत्यं तदेव
नीतात्ता रथ्येयत् अश्नाति वा ह्नशाय स्यां सा अष्टका। इष्यशिभ्यां तकन्। अष्टिकान्येति। अष्टौ परिमाणमस्याः संख्यायाः अति शदन्तायाः कन्। सूतकेति। सूतशब्दा
त् स्वार्थे कन्। वृंदमस्यास्तीति मत्वर्थे। शृंगवृन्दाभ्यामित्यारकन्। देवताश्चाचि वृंदारकशब्दस्य पुंल्लिंगत्वेपि रूपिमुख्यवाचिनः स्त्रीलिंगत्वं संभवत्येव। अत एव
त्रिषु त्वरे इत्युपक्रम्य वृंदारकौ रूपिमुख्यावित्यमरेणोक्तं। १ उदीचां। यकः पूर्वो यस्याः सा अर्थगते स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति स्त्रीलिंगनिर्देशस्ते
न स्त्रीप्रत्ययो लभ्यत इत्याह। स्त्रीप्रत्ययाकारस्येति। अत्र न यासयोरित्यतो नेति वर्तते। यक पूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योकारस्तस्य कात् पूर्वस्योदीचां
मते इत्वं नेत्यक्षरार्थः। एवं स्थिते फलितमाह। इहास्यादिति। एवमग्रेप्यूह्यं। षष्ठीस्थानेयोगेत्यनेनैव लब्धे सूत्रे स्थानग्रहणमनूद्यमानविशेषणेषु परिभाषा
नोपतिष्ठत इति ज्ञापनार्थं। फलं तु वृद्धसंज्ञायामिक्परिभाषानुपस्थानाच्छालीयादिसिद्धिः। यदि तु तत्रेक्परिभाषोपतिष्ठेत तदा औपगवीय इत्यादावेव वृ
द्धाच्छः स्यात् न तु शालीयो मालीय इत्यादौ। तत्राकारस्य वृद्धेरिक्स्थानिकत्वाभावात्। तथा अतो गुणे इत्यत्रेक्परिभाषोपस्थितौ एधे पचेय जे इत्यादावेव
पररूपं स्यात्। टित आत्मनेपदानामिति इटएत्वे कृते इक्स्थानिकत्वादेकारगुणस्य भवति पचन्तीत्यादौ न स्यात्। तत्रेक्स्थानिकत्वाभावादकारगुणस्ये
त्यपि बोध्यं। न च ग्रामणि वृद्धाच्छं बाधित्वाऽणृगयनादिभ्य इत्यण्प्रत्ययो यथा स्यादित्येतदर्थमृगयनादिगणे व्याकरणशब्दः पठ्यते। यच्चनूद्यमानविशे
षणेषु परिभाषा उपतिष्ठेरन् तर्हि तत्पठनं व्यर्थं स्यात्। आकारवृद्धेरिक्स्थानिकत्वाभावेन वृद्धसंज्ञाया अभावात् छस्याप्रवृत्तेः। तथा च तस्मादेव पाठाद्युक्ता
र्थज्ञापनसंभवे स्थानेग्रहणमिह स्पष्टार्थमित्याहुः। सांकाश्यकेति संकाशेन निर्वृत्तं नगरं सांकाश्यं वुञ्छणादिसूत्रेण संकाशादिभ्यो ण्यः। ततो भवार्थे धन्व
यथाद्वुञ्। अकादेशः। सा च सांकाश्ये भवा स्त्रियमाहेति। तदकारस्यापि वैकल्पिकमित्वं स्यात्। तस्मादात इत्युक्तं। अत्र नन्दति। यथा यमकारेणाकारस्थानिकः ए
वं स्त्रीप्रत्ययस्थानिकोपि नेति अंगविकलमेतत्। अकेति समुदायस्य स्त्रीवाचकत्वात्र स्थानिकत्वे प्यकारमात्रस्यातथात्वात् तस्मादात इति स्पष्टार्थमेवेति। शुभ
या इति अन्येभ्योपि दृश्यत इति विच्। शुभमिति मांतो निपातः। सुनयिकेति। सुष्ठु नयो यस्याः सुनया ततः कः। केणा इति ह्रस्वः। एवं सुकुपाकोय। ॥ ॥

राम·
१०२

प्राप्ते निषेधोयं। याप्तेति यत्तदोरूपलक्षणमित्याशयेनाह। यत्तदोरिति। यकासकेति। यत्तदोरकच्। त्यदाद्यत्वे टाप्। स्वरूपस्याविवक्षायां फलमाह। यक्रीतकामि
ति। यद्यपि नयत्तदोरित्येव सूत्रयितुमुचितं तथापि संनिपातपरिभाषाया अनित्यत्वज्ञापनार्थं नयासयोरित्युक्तमित्याहुः। वस्तुतस्तु नयत्तदोरित्युक्तेप्यनित्यत्वं
सिध्यत्येव। अन्यथा अनयोरकारस्याप्यत्वं दुर्लभमिति किमनेन निषेधेनेति। त्यकनश्च निषेध इति। ननु मृदस्तिकन्निति वत् प्रक्रियालाघवाय त्यकन्निति व
क्तव्ये त्यकन्नित्यकारनिर्देशसामर्थ्यादित्वाभावे सिद्धे किमनेन निषेधवचनेनामैवं। पंचभिरुपत्यकाभिः क्रीतः पंचोपत्यक इत्यादौ तद्धितलुकि स्त्रीप्रत्ययस्यापि लु
कि अकारस्य श्रवणार्थत्वात्तस्य त्यिकन्नित्युक्ते हि पंचोपत्यिक इति स्यात्। इष्यते तु पंचोपत्यक इति। तस्मादावश्यकमेव निषेधवचनं। मृदस्तिकन्नित्यत्रापि इकारोच्चा
रणं तद्धितलुकि श्रवणार्थं। ननु प्रक्रियालाघवार्थं। अन्यथा पंचभिः मृत्तिकाभिः क्रीत इत्यार्हादिति ठकोऽध्यर्द्धेति लुकि कृते लुक् तद्धितलुकीति टापो लुकि नि
मित्ताभावात् प्रत्ययस्थादितीत्त्वं न स्यात् पंचमृत्तिक इत्यत्र। न च लुकः प्रागेव अंतरंगत्वात् प्रत्ययस्थादितीत्त्वं सिध्यत्येवेति वाच्यं। अंतरंगानपि विधीन् वहिरं
गो लुक् बाधत इति अभ्युपगमात्। अत एव सनीस्रंसत इत्यादौ नलोपाभावः सिद्ध्यति। पंचभिः खट्वाभिः क्रीतः पंचखट्व इत्यादौ टापा सह एकादेशोपि न भवति।
अन्यथा एकादेशस्यादिवद्भावात् टाब्ग्रहणे न ग्रहणात् लुक्तद्धितलुकीत्यनुपसर्जनस्त्रीप्रत्ययस्य लुकि कृते अकारस्य श्रवणं न स्यात्। एतच्च भाष्यकैयटयोः स्प
ष्टं। उपत्यकेति। उपाधिभ्यां त्यकन्नासन्नारूढयोः। आशिषीति। आशीरर्थे विहितस्य वुन्प्रत्ययस्यात इत्त्वं न भवतीति वक्तव्यमित्यर्थः। जीवकाभवकेति। जीव
तादित्यर्थे जीवतिभवतिभ्यामाशिषि वुन् तस्याकादेशः कृते टाप्। देवकेति। देवदत्तशब्दात् स्वार्थिकः कः। अनजादौ विभाषा लोपो वक्तव्य इति प्रागिवीयेषु वक्ष्य
माणत्वात् द्वितीयादच ऊर्ध्वस्य दत्तशब्दस्य लोपः। देवदत्तिका शब्दस्योपन्यासस्तु दत्तलोपमभिव्यक्तुं तदभावे इत्त्वनिषेधाभावं च दर्शयितुं। क्षिपकादीनां चे
ति। नेत्यनुषज्यते। क्षिपकेत्यादि। क्षिपेरिगुपधलक्षणः कः। एवं ध्रुव स्थैर्य इत्यस्मादपि कः। यद्वा ध्रुगतिस्थैर्ययोः। पचाद्यच्। कुटादित्वान्ङित्वेन गुणाभावे
उवङ्। चट भेदने। पचाद्यच्। ततष्टाप्। अज्ञातादौ कः। केणः इति ह्रस्वः। पुनष्टाप्। तरतेर्ण्वुल्। अकादेशः। नक्षत्रं नेत्रकनीनिका च ज्योतिः। वर्णकेति। प्रावारवि
शेषः। वर्णी वर्णः क्रियाविस्तारगुणवचनेष्विति चौरादिकात् ण्वुल्। तंतूनां विकारः स्तांतवं। अन्यत्र वर्णिकेति। ग्रंथविशेषस्य व्याख्याः स्तोत्रकर्त्री च। वर्तकेति।

स्यादेवङीविति वक्ष्यते। अन्ये तु ढादय एव प्रत्ययाः ठिदिति तु प्रत्ययाप्रत्ययसाधारणं। तेन टित् यत् प्रातिपदिकं ढाद्यंतं च यत् प्रातिपदिकमित्यर्थः। टित्वं तु प्रातिपदिकस्य क्व
चित्प्रत्ययकृतं क्वचित्स्वतः क्वचित्प्रकृतिकृतं भवत्यवयवधर्मस्य समुदाये उपचारात्। तत्राद्यस्योदाहरणं कुरुचरीति। द्वितीयस्योदाहरणं नदडिति पचादिषु टितो
ऽस्य पाठात् स्वत एव टित्वात्। तृतीयं तु धेटष्टित्वात् स्तनंधयीति। एतदंते उदाहरिष्यतीत्याहुः। कुरुचरीति। कुरुषु चरतीत्यधिकरणोपपदे चरेष्ट इति कर्तरि टः। उपसर्जन
त्वान्नेह इति। बहवः कुरुचरा यस्यां सा बहुकुरुचरेति बहुव्रीहिरन्यपदार्थप्रधानस्तथा च टिदंतस्योपसर्जनत्वान्ङीन्नेत्यर्थः। वक्ष्यमाणेति। लृंजो लृट् लृटः सद्वेति शा
नच्। अनुवीवचिरिति वच्यादेशः। वचपरिभाषणे इत्यस्मात् कर्मणि वा लृटः शानच्। स्यतासी इति स्यः। कुत्वषत्वे आने मुगिति मुक्। टित्वादुगित्वाच्चेति। स्थानिवद्भावेने
त्यर्थः। न चाल्विधित्वात् कथमिह स्थानिवद्भाव इति शंक्यं। नल्यपीति ज्ञापकादनुबंधकार्येषु नाल्विधाविति निषेधस्याप्रवृत्तेः। अत एव वरमायामित्यादौ परत्वात्
ङेराम् कृते स्थानिवद्भावेनामो ङित्वाद्याडापः इति याडागमः सिध्यति। ज्ञापकान्नमयतीति। लिङ्गदेशपरस्मैपदानां स्थानिवद्भावेनैव ङित्वलाभात्तदागमस्य या
सुटो ङित्त्वं व्यर्थं सज्ज्ञापयत्यनुबंधकार्यमादेशानां नेति सामान्यतो ज्ञापयतीति भावः। पिच्च ङिन्नेत्यस्यादिगणे वक्ष्यमाणत्वात्तिबादिषु उपदेशिकेन पित्त्वेनातिदेशि
कङित्त्वं बाध्यत इति यासुटो ङित्त्वस्य वैयर्थ्याभावान्न तज्ज्ञापयतीति शंकमानं प्रत्याह। अं। शानचः शित्त्वेनेत्यादि। सोपर्णेयीति। कद्रूश्च वै सुपर्णी चेति श्रुतिः। सुपर्णीश
ब्दादपत्येऽर्थे स्त्रीभ्यो ढक्। आयनेयीत्यादेशः। नन्वत्र निरनुबंधपरिभाषया शिलाया ढः च ख्यतत्र साधुरित्यधिकारे सभाया यः ढश्छंदसीति विहितस्तयोरेव ढयो
र्ग्रहणेन भवितव्यं न तु ढकः। सत्यं। शिलाया ढस्य स्त्वभावान्नपुंसक एव प्रवृत्तेः स्त्रियामसंभवात्। सभाया ढस्य च सभेयीति स्त्रियां छंदसि प्रयोगदर्शनादन्यस्य हि निरनु
बंधस्यासंभवादगत्या सानुबंधको गृह्यते। ऐंद्रीति। इंद्रो देवता अस्याः साऽस्य देवतेत्यण्। इंद्रस्येयमिति वा विग्रहस्तस्येदमित्यण्। अत्र व्याचक्षते। कृद्ग्रहणे गतिकारकपूर्व
स्येत्यस्य प्रवृत्त्यभावेपिश्रसंतस्य प्रातिपदिकविशेषणात्तदंतांतमपि गृह्यत इति कुंभकारशब्दात् ङीप् स्यादेव। अस्तु वा कारशब्दादेव ङीप्। तथापि कुंभकारीति रूपं सिध्य
त्येव। न च कारशब्दान्ङीपि तदंतात् स्त्रीभ्यो ढगिति ढक्प्रत्यये कौंभकारेयो न सिध्येदिति वाच्यं। अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात्तत्सिद्धेः। नापि नियमाभावे कारीशब्दात्क
दाचित् ढकि कुंभकारेय इति रूपं स्यादिति शंक्यं। समर्थः पदविधिरिति वक्ष्यमाणत्वेनासमर्थात्तद्धितानुत्पत्तेरिति मनोरमायां तु इह सूत्रे अनेकं वाक्यं तत्र अनुपसर्जनमण्यो॥

भस्त्रैषेति वैकल्पिकमित्वमिति केषांचित् व्याख्यानं नादर्त्तव्यमिति भावः। वस्तुतोऽहंसंतनाविति श्लोके स्विकायामिति प्रयोगोऽसाधुरेव। आत्मीयायां स्वशब्दस्य सर्वे
नामतात्स्याडागमप्रवृत्तेरिति नव्याः। प्रत्युदाहरणानि उक्तानि उदाहरणान्याह। निर्भस्त्रिकेत्यादि। निष्क्रांता भस्त्रायाः निर्भस्त्रा निरादयः क्रांताद्यर्थे पंचम्येति स
मासः। उपसर्जनह्रस्वष्टाप्। ततो अत्तातादौकः। केणइति ह्रस्वः। पुनष्टाप्। सूत्रे एषेति विकृतनिर्देशो विवक्षितविषयो नञ्यासयोरितिवदुपलक्षणमित्यभिप्रे

२ भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि। ७।३।४७। स्वेत्यन्तं लुप्तषष्ठीकम्पदं। एषामत इद्वा स्यात्। तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्प
ष्टार्थं। भस्त्राग्रहणमुपसर्ज्जनार्थं। अन्यस्य तूत्तरसूत्रेण सिद्धं। एषाद्वा एतयोस्तु सर्वयोर्नेत्वं। अन्तर्वर्त्तिनीं विभक्तिमाश्रित्याऽसुप इति नि
षेधात्। अनेषका। परमैषका। अद्वके। परमद्वके। स्वशब्दग्रहणं संज्ञोपसर्ज्जनार्थं॥ इह हि आतः स्थाने इत्यनुवृत्तं। स्वशब्दस्यातो विशेषणं न
तु द्वेषयोरसम्भवात्। नाप्यन्येषामव्यभिचारात्। स्वशब्दस्त्वनुपसर्ज्जनमात्मीयवाची अकजर्हः। अर्थान्तरे तु न स्त्री। संज्ञोपसर्ज्जनीभूतस्तु क
प्रत्ययान्तत्वाद्भवत्युदाहरणं। एवञ्चात्मीयायां। स्विका। परमस्विकेति नित्यमेवेत्वं। निर्भस्त्रिका। निर्भस्त्रका। एषका। एषिका। कृतषत्वनि
र्देशान्नेह विकल्पः। एतिकाः। एतिकाः। अजका। अजिका। ज्ञका। ज्ञिका। द्विके। द्वके। निःस्विका। निःस्वका॥ अभाषितपुंस्काच्च। ७।३।४८। एत
स्माद्विहितस्यातः स्थानेऽत इद्वा स्यात्। गङ्गका। गङ्गिका। बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यं। अज्ञाता। अखट्वा। अखट्विका। शेषि
केकपि तु विकल्प एव॥ आदाचार्याणां। ७।३।४९। पूर्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्तपुंस्कात्तु। शुभ्रिका॥ अनुपसर्ज्जनात्। ४।१।१४॥
अधिकारोऽयं। यूनस्तिरित्यभिव्याप्य॥ अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति॥ ९९ त्याहात्कृतषत्वनिर्देशादिति। इह अजाज्ञेति स्त्रीलिंगनिर्देशाद्ज्ञा
दयः स्त्रीलिंगा एव गृह्यंते तेनेह विकल्पो न। शुभ्रोऽज्ञो यस्याः शुभ्राज्ञिका। जानातीति ज्ञः। इगुपधेति कः। प्रियो ज्ञो यस्याः सा प्रियज्ञिकेति। निःस्वकेति। स्वस्याः निष्क्रांतेति वि
ग्रहो न त्विह स्विकस्याः निष्क्रांतेति तथात्वे ह्युपसर्जनेऽपि निःस्विकेत्येकमेव रूपं स्यात्। आतः स्थाने काकारस्य दुर्लभत्वेन प्रकृतसूत्राविषयत्वात्। अभाषित। एतस्मादिति। नि
त्यस्त्रीलिंगादित्यर्थः। विहितविशेषणतया व्याख्यानस्य फलमाह। बहुव्रीहेरिति। ततो विहितस्य नित्यमिति। अविद्यमाना खट्वा यस्याः सा अखट्वेत्यत्र शेषाद्विभाषेति समा

भस्त्रैषेति वैकल्पिकमित्वमिति केषांचित् व्याख्यानं नादर्त्तव्यमिति भावः। वस्तुतोऽहं संत नाविति श्लोके खिकायामिति प्रयोगो ऽसाधुरेव। आत्मीयायां स्वशब्दस्य सर्वे
नामत्वात् स्याडागमप्रवृत्तेरिति न्यासः। प्रत्युदाहरणानि उक्तानि उदाहरणान्याह। निर्भस्त्रिकेत्यादि। निष्क्रान्ता भस्त्राया निर्भस्त्रा निरादयः क्रान्ताद्यर्थे पञ्चम्येति स
मासः। उपसर्जनह्रस्वष्टाप् ततो ऽज्ञातादौ कः। केणः इति ह्रस्वः। पुनष्टाप्। सूत्रे एषेति विकृतनिर्देशो विवक्षितविषयो न त्वयासयोरिति बहुपलक्षणमित्यभिप्रे

२ भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि। ७।३।४७॥ स्वेत्यन्तं लुप्तषष्ठीकम्। एषामत इद्वा स्यात्। तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्प
ष्टार्थं। भस्त्राग्रहणमुपसर्जनार्थं। अन्यस्य तूत्तरसूत्रेण सिद्धं। एषाद्वा एतयोस्तु सपूर्वयोर्नेत्वं। अन्तर्वर्तिनीं विभक्तिमाश्रित्याऽसुप इति नि
षेधात्। अनेषका। परमैषका। अद्वके। परमद्वके। स्वशब्दग्रहणं संज्ञोपसर्जनार्थं। इह हि आतः स्थाने इत्यनुवृत्तेः स्वशब्दस्यातो विशेषणं न
तु द्वैषयोरसम्भवात्। नाप्यन्येषामव्यभिचारात्। स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः। अर्थान्तरे तु न स्त्री। संज्ञोपसर्जनीभूतस्तु क
प्रत्ययान्तत्वाद्भवत्युदाहरणं। एवं चात्मीयायां। स्विका। परमस्विकेति नित्यमेवेत्वं। निर्भस्त्रिका। निर्भस्त्रका। एषका। एषिका। कृतषत्वनि
र्देशान्नेह विकल्पः। एतिकाः। एतकाः। अजका। अजिका। ज्ञका। ज्ञिका। द्विके। द्वके। निःस्विका। निःस्वका॥ अभाषितपुंस्काच्च। ७।३।४८॥ एत
स्माद्विहितस्यातः स्थाने ऽत इद्वा स्यात्। गङ्गका। गङ्गिका। बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यं। अज्ञाता। अखट्वा। अखट्विका। शेषि
के कपि तु विकल्प एव॥ आदाचार्याणां। ७।३।४९॥ पूर्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्तपुंस्कात्तु। शुभ्रिका। अनुपसर्जनात्। ४।१।१४॥
अधिकारोऽयं। यूनस्तिरित्यभिव्याप्य॥ अयमेव स्त्रीप्रत्यये षु तदन्तविधिं ज्ञापयति॥ (( त्याहा कृतषत्वनिर्देशादिति। इह अजाज्ञेति स्त्रीलिंगनिर्देशाज्ज्ञा

दयः स्त्रीलिंगा एव गृह्यन्ते तेनेह विकल्पो न। शुभ्रो ऽज्ञो यस्याः शुभ्राज्ञिका। जानातीति ज्ञः। इगुपधेति कः। प्रियो ज्ञो यस्याः सा प्रियज्ञिकेति। निःस्वकेति। स्वस्याः निष्क्रान्तेति वि
ग्रहे न त्विह स्विकस्याः निष्क्रान्तेति तथात्वे ह्युपसर्जनेऽपि निःस्विकेत्येकमेव रूपं स्यात्। आतः स्थाने काकारस्य दुर्लभत्वेन प्रकृतसूत्राविषयत्वात्। अभाषित। एतस्मादिति। नि
त्यस्त्रीलिंगादित्यर्थः। विहितविशेषणतया व्याख्यानस्य फलमाह। बहुव्रीहेरिति। ततो विहितस्य नित्यमिति। अविद्यमाना खट्वा यस्याः सा अखट्वेत्यत्र शेषाद्विभाषेति स

स्याः स्या २ भस्त्रैषाऽऽजुम्नषस्त्रीकमिति। केचिदिह स्वा इति छित्वा षष्ठ्याः स्थाने सोत्रत्वाद्व्यत्ययेन जसिति व्याचक्षते। प्रत्ययस्थादित्यतो ऽनुवर्तनादाह। अत इद्याप्यादिति॥ ननु॥ नञ्पूर्वाणामपीत्यपिशब्देन केवलानां संग्रहः क्रियते नतु नञ्भिन्नपूर्वाणामपि। तथा च निर्भस्त्रिकेत्यादि न सिध्येदतस्तदंतविधिरावश्यक इत्याशयेनाह। तदंतविधिनैवेत्यादिः आगत्वादिति भावः। एवं च नञ्पूर्वाणामित्यस्य नियमार्थत्वशंका निरस्ता निर्भस्त्रिकेत्यादावव्याप्तिप्रसंगात्। अन्यस्य त्विति। अनुपसर्जनस्य त्वभाषितपुंस्काच्चेत्यनेन सिद्धमित्यर्थः। एतयोस्त्विति। भस्त्राजाज्ञास्वानां तु सपूर्वाणामपि इत्वं भवत्येवा तत्र टापः परत्वेन सुपः परत्वाभावादसुप इति निषेधाप्रवृत्तेरिति भावः। सपूर्वयोरिति। पूर्वावयवसहितयोर्विद्यमानपूर्वपदयोरिति यावत्। अंतवर्तिनीमित्यादि नसु एतदसुप इति स्थिते अकचि कृते अकच् प्रागेवानञ्तत्पुरुषे कृते अंतरंगानपीति न्यायेन तस्य दात्वप्रवृत्तेः प्रागेव सामासिके सुकि विशिष्टात्स्वनः सुपि त्यदाद्यत्वे पररूपे च कृते ततष्टाप् स च असुपः पर इति भावः। अनेषकेति। अज्ञाता एषा एषका न एषका अनेषका। अज्ञाता अनेषा अनेषकेति वा लौकिकविग्रहो ऽत्र बोध्यः। एवमग्रे ऽप्यूह्यं। स्वशब्दस्यातो विशेषणामिति॥ यद्यपि हरदत्तग्रंथे अत्रातः स्थान इत्येतत्स्वशब्दस्य विशेषणामित्युक्तं तथापि तत्र स्वशब्दस्येत्यनंतरमत इति विशेषो बोध्य इति भावः। अर्थांतरे त्विति। आत्मज्ञातिधनेष्वित्यर्थः। नित्यमेवेति। स्विकेत्यादावकचि कृते आतः स्थानिको अकारो दुर्लभ इति प्रकृतसूत्रस्याविषयत्वात्प्रत्ययस्थादिति नित्येत्वप्रवृत्तेः। एवं च हंसं तनोसन्निहितं चरंतं मुनेर्मनोवृत्तिरिवास्विकायामिति श्रीहर्षश्लोके॥ ॥ ॥ ॥

वृत्तिकृता त्वत्र त्यं ल्युन्ग्रहणं सूत्रे प्रक्षिप्य करणल्युनामिति पठितं तच्च भाष्यविरुद्धमित्युत्तरत्र स्फुटीभविष्यति। स्त्रैणः। पौंस्नीति। स्त्रीपुंसाभ्यामिति नञ्स्नञौ। शाक्तीकीति। शक्तिः प्रहरणमस्याः शक्तियष्ट्योरीकक्। आढ्यंकरणीति। अनाढ्य आढ्यः क्रियते अनेनेत्यर्थे आढ्यसुभगेत्यादिना करणे ख्युन्। युवोरित्यनादेशः। अरुर्द्विषदिति मुम्। तरुणीतलुनीति। तरुणतलुनयोर्गौरादिषु पाठान्ङीष्। ङीपङीषोः पर्यायो बोध्यः। स्वरे विशेषः। कृकृदारिभ्य उनन्। नोरश्वलो वेति। तरुणतलुनयोस्तरन्प्रत्ययान्तत्वेन नित्यादायुदात्तता। सेयं ङीपि ङीषि चेत्यन्तोदात्तेति॥ ॥ यञश्च।योगविभाग उत्तरार्थः। प्राचां ष्फ इति इत्यत्र यञ एवानुवृत्तिर्यथा स्यात्। हलस्तद्धितस्य। हल इति पंचमी। यस्येति चेति सूत्रादीतीत्यनुवर्तते। न तु तद्धित इत्यतस्तद्धित इति नानुवर्तते आपत्यस्य चेत्युत्तरसूत्रे पुनस्तद्धितग्रहणात्तदाह। हल उत्तरस्येत्यादि। तद्धित इत्यनुवृत्तौ त्विहापि स्यात्। सांकाश्यकः। कांपिल्यकः। संकाशादिभ्यो ण्यः। ततो धन्वयोपधाद्वुञ्। उपधाभूतस्येति। सूर्यतिष्येत्यत उपधाया इत्यनुवर्तत इति भावः। ननु यस्येति चेति यञो अकारलोपे कृते

यञश्च।४।१।१६। यञन्तात् स्त्रियां ङीप् स्यात्। अकारलोपे कृते। हलस्तद्धितस्य।६।४।१५०। हल उत्तरस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे। गार्गी। अनपत्याधिकारस्थान्न ङीप्। द्वीपे भवा द्वैप्या। अधिकारग्रहणान्नेह देवस्यापत्यं देव्या। देवाद्यञञाविति हि यञ् प्राग्दीव्यतीयो न त्वपत्याधिकारपठितः॥ प्राचां ष्फ तद्धितः।४।१।१७॥ यञन्तात् ष्फो वा स्यात् स्त्रियां स च तद्धितः॥

यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या न च अल्लोपस्य स्थानिवद्भावः। यल्लोपे तन्निषेधात्। अत्राहुः। यल्लोपे कर्तव्ये अल्लोपस्याभीयत्वेनासिद्धत्वादुपधाग्रहणानुवृत्तिरावश्यकीति। अन्ये त्वाहुः। सूत्रारंभसामर्थ्यादल्लोपस्यासिद्धत्वं न भवति। तथा चोपधाग्रहणं विनापि नात्र क्षतिः। एवं च सूर्यतिष्येति सूत्रेऽप्युपधाग्रहणं त्यक्तुं शक्यमुक्तयुक्तेरिति। गार्गीति। गोत्रप्रत्ययान्तस्य जातित्वेऽपि योपधत्वादत्र जातेरिति ङीष् न भवति। तथा चाद्युदात्तमेवेदं पदं। अनपत्याधिकारेति। यद्यपि पत्यग्रहणं कर्तव्यमित्येव वार्तिकं तथापि अपत्याधिकारविहितपरं तत्। तादृशश्च गर्गादियञेव न तु देवाद्यञ् आत स्य अपत्याधिकारात्॥ प्रागेव पाठात्। अत एव भाष्ये। एतच्च मनोरमाग्रंथानुरोधेनोक्तं। नन्वास्तु अधिकारग्रहणमिहान्यथा तु यथाश्रुतवार्तिकेन च द्वीपे भवा द्वैप्येति रूपसिद्धेः। न च देवस्यापत्यं स्त्री देव्येति रूपासिद्धिः। एवं यञयोश्चेति सूत्रे पियकादिभ्यो गोत्रे अपञोश्चेत्यकारः प्रश्लिष्टः। यञश्चेत्यत्र अकारोऽञञश्चेति गर्गादिभ्यो यञित्यत्रान्यञ इति च अकारः प्रश्लिष्टः।

कारस्तदंतादितिव्याख्यानान्नेह। आपिशलमधीते आपिशला ब्राह्मणीति। अत्र हि प्रोक्तार्थयोगाच्छ्रूयमाणस्स उपसर्जनं यस्तु प्रधानोऽध्येत्रणा प्रोक्ताल्लुगिति स लुप्तः।
वर्णप्राधान्यान्न प्रत्ययलक्षणमतष्टाबेव भवतीति स्थितं। नन्वेवमापिशलेति रूपसिध्यर्थे अनुपसर्जनग्रहणस्यावश्यकत्वेन सामर्थ्यापक्षयात् कथमेतस्य तदंतवि
धिज्ञापकत्वमिति चेदत्राहुः। स्वरितत्वप्रतिज्ञया अधिकारोयमित्यधिकारत्वाश्रयणादनुपसर्जनग्रहणस्य ज्ञापकत्वं संभवत्येवेति। औत्सीति। उत्से भवा। उत्सादिभ्योऽ
ञ्। नन्वनेनैव सिद्धे शार्ङ्गरवाद्यञ इत्यत्राञ्ग्रहणं व्यर्थं। अत्रंतस्याद्युदात्तत्वेन ङीनो ङीपो स्वरे विशेषाभावात्। मैवं। उत्सस्यापत्यं स्त्री औत्सीत्यत्र अञन्तलक्षणो ङीपं बा
धित्वा परत्वाज्जातिलक्षणो ङीषि प्राप्ते तद्बाधनार्थं तस्यावश्यकत्वात्। न चैवं शार्ङ्गरवाद्यञ इति ङीना सिद्धमिदं रूपमित्यञ्ग्रहणमिह न कर्तव्यमिति वाच्यं। तत्र जाते
रित्यनुवृत्तेः। अन्यथा शार्ङ्गरवस्य स्त्री शार्ङ्गरवी औत्सस्य स्त्री औत्सीत्यादौ पुंयोगेपि परत्वान्ङीन् स्यान्न तु ङीष्। इष्यते तु पुंयोगे ङीषेव। तस्मात् भवाद्यर्थस्य जातित्वेनाप
रिभाषणाद्भवाद्यर्थे ङीनेवार्थमिहाप्यञ्ग्रहणमावश्यकमेवेति दिक्। ऊरुद्वयसीत्यादि। ऊरू प्रमाणमस्याः सा प्रमाणे द्वयसज्दघ्नञ्मात्रचः। यद्यत्र नलोकेति सूत्रेण न
ञितिवद्द्वयसज्जितिमात्रच अकारेण प्रत्याहारो गृह्यते तदा दघ्नमात्रञ्ग्रहणमिहाकर्तुं शक्यं। पंचतयीति। पंच अवयवा अस्याः संख्याया अवयवे तयप्। आक्षिकी
ति। तेन दीव्यतीति ठक्। लावणिकीति। लवणं पण्यमस्याः। लवणाट्ठञ्। ठक्ठञोर्भेदेनोपादानं ठन्निवृत्यर्थं। तेनेह न। दंडोऽस्त्यस्याः दंडिका। अत इनिठनौ। अ
त एव ञिठणोपि न ङीप्। काशिषु भवा काशिका। काश्यादिभ्यष्ठञ्ञिठौ। यादृशीति। त्यदादिषु दृशोऽनालोचने कञ्च। आ सर्वनाम्न इत्याकारः। इत्वरीति। एति तच्छीला। इण्
नशजिसर्तिभ्यः क्वरप्। ह्रस्वस्य पिति कृति तुक्। क्वरपोन्यतरानुबंधोपादानं स्पष्टार्थं। एकेनैव वरचो व्याहृतिसिद्धेः। विन्यस्तमंगलमहौषधिरीश्वराया इति भार
विः। तत्रस्थेयं शोभासेति वरच्। ईश्वरीति द्वैधा। पुंयोगलक्षणो ङीषंतोदात्तमेकं। ईश्वोपधाया इत्यनुवृत्तौ अश्नोतेराशुकर्मणि वरट् इत्यौणादिके वरटि टित्वान्ङीपि
मध्योदात्तमपरं। ईशेः क्वनिपि वनिपि वा ङीब्रयोराद्युदात्तमन्यत्। ताच्छीलिकेति। अयं भावः। शीलं छत्रादिभ्यो ण इति णस्तस्मिन्नणः कार्यं भवति कार्मस्ताच्छी
ल्य इति ज्ञापकात्। तत्र हि अन्नित्यणो विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते यदि णप्रत्यये अणः कार्यं न स्यात्। तर्हि किं तेन। ताच्छीलिके एव अणः कार्यज्ञापनान्नेह
दंडः प्रहरणमस्यां क्रीडायां दांडा। तदस्यां प्रहरणमिति णः। छत्रादिभ्योऽणित्येव सूत्रमस्तु किमनया कुरुचेष्ट्येति तु बहवः। चौरीति। चुरा शीलमस्याः। नञ्स्नञ् ॥

॥ ॥

घञादिष्वनुवर्तते। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवेति बहुलं ... घञादिष्वणुञ्चजोः कुधिरप्यतोरित्यादिनिर्देशेनदृत्संज्ञा याभाव्यमित्यादेशाभावः। शमेढः। शंढ इत्येवमादीनामेते आदेशा न भवंति। उणादयो बहुलमिति बहुलवचनादिति दिक्। क्रमादिति। फ। आयन्। ढ। एय्। ख। ईन्। छ। ईय्। घ। इय्। इत्यर्थः। स्त्रियामेव ष्फप्रत्ययविधानादत्र ङीषन्न स्यादित्याशंक्याह। षित्वसामर्थ्यादिति। एकमेव स्त्रीत्वमुभाभ्यां उच्यत इति भावः। सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते बाधकबाधनार्थं। तेनाग्न्या चेति वक्ष्यमाणं परमपि चापं बाधित्वा प्राचां मते आवट्यशब्दाद्ष्फ एव भवति। चाविधेस्तु दीचां मते सावकाशत्वात्। आवट्यायनी। एवं चावटाच्चेत्याविषयेपि प्राचां ष्फ एव शार्ङ्गरव्यायणीति यथा। सर्वत्र सर्वेषां मत इत्यर्थस्तदेतत्फलितमाह। नित्यं ष्फः स्यादिति। नन्वारंभसामर्थ्यान्नित्यत्वे सिद्धे सर्वत्रग्रहणं व्यर्थमिति चेदत्राहुः। पूर्वसूत्रे बाधकबाधनोपयुक्तस्य तस्येह स्वरार्थमभ्युपगमान्नैवं व्यर्थमिति यत्र इत्यनुवर्तनादाहापवृत्तेभ्य इति। लोहितादिगर्गांच्यंतर्गणा इति भावः। लोहित्यायनीति। सांशित्यायनी। बाभ्रव्यायणी। इत्यादयोपि ज्ञेयाः। ननु गर्गादौ कतक एव शाकले ति पठ्यते तथा च शाकल्यायनीति रूपं न सिध्येत्। यदि तु लोहितादिकार्यार्थं कतशब्दात्प्रागेव शाकलशब्दः पठ्येत तर्हि शाकल्यस्य छात्राः शाकला इत्यत्र कण्वादिभ्यो गोत्रे इति कण्वादिकार्यं अण् न सिध्येत्। उच्यते कतक एव शाकले ति गणपाठे क एव शब्दात्पूर्वं शाकलशब्दः पठितव्यः। कतंतेभ्य इत्यत्र कतस्यांतः कतन्तः कतो अंतो येषां ते कतंताः। शकंध्वादित्वात्पररूपं। कतंतश्च कतंताश्चेति बहुव्रीहितत्पुरुषयोरेकशेषोऽभ्युपेयस्तथा कण्वादिभ्य इत्यत्रापि क एव स्यादिः क एवादिः क एव आदिर्येषामिति बहुव्रीहितत्पुरुषयोरेकशेषस्तथा च सर्वेष्टसिद्धिरिति। कौरव्या। टाप्। ङीषो रितीति। योपधत्वेन जातेरिति ङीषः प्राप्त्यभावात् कौरव्यशब्दाट्टाप्। मांडूकात्तु ङीषिति भावः। यच्च पीहटाप्ङीषो रिति पाठः प्रायेण दृश्यते। तथापि तत्र ङीषिति लेखकप्रमाद एव। पारिभाषिकस्य पौत्रप्रभृतिगोत्रस्यैव जातित्वान्ङीषः प्राप्तिर्नेति मतांतराभिप्रायेण वा तद्योज्यमिति बोध्यं। कौरव्यसाहचर्यान्मांडूकशब्दोऽप्यपत्यप्रत्ययांत एव गृह्यते। ननु तस्येदमित्यणंतस्तेन परत्वात् सौ रूपं मांडूकि तवेति भट्टिप्रयोगः सिद्धः। तत्र हि मंडूकस्येयं भार्येति विवक्षया तस्येदमित्यण् ॥ ॥

॥ ॥

शंक्या। अयञश्चेति भाष्यकारीयनिष्कर्षो न्न तद्धितः। नहि देवायञ्जना वित्यत्रायञेत्यकारः प्रश्लेष्टुं शक्यते। किंच अधिकाकारग्रहणे अभिजितोऽपत्यं स्त्री त्यणं तातात् स्वार्थे
अभिजि ह्रिदभृदित्यादिना यञि आभिजितीति रूपं न सिध्येत् श्रमदणो यञित्यकारप्रश्लेषेणा भाष्यकारीत्यापी— ङीपः संभवादित्याहुः। स्यादेतत्। अकारं प्रश्लिष्य गर्गा
दिभ्यो यञि कृते गार्ग्य इति रूपं न सिध्येत्। मैवं। वार्त्तिकप्रत्याख्यानाय भाष्यकृता अकारप्रश्लेषे कृते पितस्येतस्तत्कत्वेन लुमत्वादिष्टसिद्धेः। एवं चखारप्रस्युनामिति पाठः चारपो
ऽयञश्चेति भाष्यविरुद्ध इति स्पष्टमेवाप्राचां ष्यास्त द्धितः। तद्धितग्रहणं ष्फप्रत्ययांतस्य प्रातिपदिकसंज्ञार्थं तेन षिद्गौरेति ङीष् सिध्यति। ननु प्रातिपदिकसंज्ञां विनापि षि
त्करणसामर्थ्यादेव ङीष् भविष्यति किमनेन तद्धितग्रहणेन। न च यञन्तेयसेति चेति लोपार्थं तदिति वाच्यं। सवर्णदीर्घेणापि रूपसिद्धेर्लोपस्यानावश्यकत्वात्। एवं तर्हि
तद्धितग्रहणं इअंतादपि क्वचित् ष्फो भवतीति ज्ञापनार्थं तेन आसुरेरुपसंख्यानमिति वक्ष्यमाणं सिध्यति॥ ॥ षः प्रत्ययस्य। आदिर्ञिटुडव इत्यत आदिरित्यनुवर्तते

षः प्रत्ययस्य।१।३।६। प्रत्ययस्यादिः ष इत् स्यात्। आयनेयीनीयियः फढखछघां प्रत्ययादीनां।७।१।२। प्रत्ययादिभूतानां फादीनां क्रमादायन्ना
दय आदेशाः स्युस्तद्धितान्तत्वात् प्रातिपदिकत्वं। षित्त्वसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे षिद्गौरेति वक्ष्यमाणो ङीष्। गार्ग्यायणी। सर्वत्र लोहि—
तादिकतन्तेभ्यः।४।१।१८। लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात्। लौहित्यायनी। कात्यायनी। कौरव्यमाण्डूकाभ्यां च।४।१।१९।
आभ्यां ष्फः स्यात्। क्रमेणाटाप्ङीषोरपवादः। कुर्वादिभ्यो ण्यः। कौरव्यायणी। ढक् च मण्डूकादित्यण्। माण्डूकायनी। आसुरेरुपसंख्यानं। आसुरायणी॰

त्यभिप्रेत्याह प्रत्ययस्यादिरिति। प्रत्ययस्य किं। षोडश षषः उत्वमित्यत्र उपदेशस्थोऽपि षकारः। एतच्च कौस्तुभे स्थितं। आदिः किं। अविषः। महिषः। अविमह्योष्टिषच्। ननु तत्र प्रयो
जनाभावादेव षकारस्येत्संज्ञा न भविष्यति टित्वादेव अविषी महिषीति रूपसिद्धेः। न च पक्षे ङीष्यन्तोदात्तः प्रयोजनमिति वाच्यं। अनुदात्तस्य च यत्रोदात्तलोप इत्युदात्तनिवृत्तिस्वरे
णाचितः परस्य ङीप उदात्तत्वात्। अत्राहुः। विनिगमनाभावेन पक्षे टकारस्यापि अश्रवणं स्यात्। तथा च षित्त्वान्ङीष्यविषीत्यादिरूपसिद्धिः स्यात्। अतः षकारस्यैव अश्रवणं भवतु मा
कदाचित् टकारस्य अश्रवणं भूदित्येतदर्थमादिग्रहणानुवृत्तिरिति। आयने। आयनीनोर्नकारस्य णत्वं। फिनो नित्करणसामर्थ्यात्। फकारात् घकार उच्चारणार्थः। ते
न ढक्फिनादीनामादेशः सिध्यति। आदिग्रहणं किं। ऊरुदघ्नमित्यादौ माभूत्। प्रत्ययेति किं। धातोरादीनां माभूत्। फक्कति। ढौकते। खनति। छादयति। घूर्णते।

गिति चेत्। अत्राहुः। ठकोयोकार इति व्याख्यानात्। ठगंतलक्षणो ङीन्नेति। द्विविस्तेति। सुवर्णो विस्तो हेम्नोक्षे इत्यमरः। आचितो दश भाराः स्युः। द्विकंबल्येति। द्वाभ्यां कं
बलाभ्यां क्रीता। कंबल्यमूर्णापलशतं कंबलाच्च संज्ञायामिति यत्। ततः क्रीतार्थे स ठगो लुक्। आड्याढकीति। द्वावाढकौ पचतीति विग्रहे आढकाचितपात्रात्खोन्यतरस्यां
द्विगोष्ठंश्चेति खठञौ विहितौ। ताभ्यां सन्नियोगशिष्टत्वात्तस्याप्यध्यर्द्धेति लुक्। एतेन द्व्याचिता व्याख्याता। स्यादेतत्। कांडांतादित्युत्तरसूत्रे परितः सर्वतो येन मीयते
तत्परिमाणमाढककुडवादि। नतु परिच्छेदकमात्रमिति मनोरमायां स्थितं। तथा चापरिमाणत्वादेव सिद्धे बिस्तादिग्रहणमिह व्यर्थं स्यात्। अत्राहुः। उन्मानस्य नि
षेधे बिस्तादीनामेवेति नियमार्थं तत्ग्रहणं। तेन द्विकार्षापणी द्व्यक्षीत्यादि सिध्यतीति। कांडांतात्। षोडशहस्तप्रमाणो दंडः कांडः। यद्यपि विशेषणेन तदंतविधि
स्सिद्धस्तथाप्यसत्यंतग्रहणे क्षेत्रे इत्येतच्छ्रुतत्वात् कांडस्यैव विशेषणं स्यान्नतु कांडांतस्य। ततश्च द्वाभ्यां कांडाभ्यां कांडप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकांडी वडवेत्य
त्र निषेधः स्यात्। इह तु निषेधो न स्यात्। द्विकांडा क्षेत्रभक्तिरिति। अत्र हि कांडप्रमाणो वर्त्तते कांडांतस्तु क्षेत्रे अतोंतग्रहणं कृतं। इह द्विगोरित्यनुवर्तते तेन तु तद्धित
लुकीति च तदाह। द्विगुसंज्ञो न ङीबित्यादि। मात्रच इति। द्वयसचो लुगिति प्राचोक्तं नादर्त्तव्यं। प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ ममेति सिद्धांतादिति भावः। द्विकां
डी रज्जुरिति। द्वे कांडे प्रमाणमस्याः पूर्ववत्तद्धितलुक्। द्विगोरिति ङीप्। नन्विह परिमाणांतादिति पूर्वेण निषेधः स्यात्। कांडशब्दस्यायामपरतयाऽपरिमाणा
र्थत्वात्। परितः सर्वतः। आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणं आढककुडवादि। नतु यथाकथंचित् परिच्छेदकमात्रं। यदाहुः। ऊर्ध्वमानं किलोन्मानं
परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः इति। अत एव द्विहस्ता भित्तिरित्यत्र ङीप् न भवतीति चेत्। अत्राहुः। नियमार्थमिदं क्षेत्र एव निषे
धो यथा स्यादिति। तथा च द्विकांडी रज्जुरित्यत्र ङीबेव सूत्रारंभफलमिति। पुरुषात्प्रमाणे। अपरिमाणांतत्वान्निषेधे प्राप्ते विकल्पार्थं वचनं। पुरुषशब्दो यद्यपि
लोके जातिवचनस्तथापि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणशब्दसामानाधिकरण्यात् प्रमाणे वर्त्तत एव। वृत्तौ तु शब्दशक्तिस्वाभाव्यादेव। तथा च शुल्बसूत्रे
पंचारत्निः पुरुष इति। द्विपुरुषीति। अत्र प्रमाणे लो द्विगोर्नित्यमिति द्वयसचो लुगिति न्यासकारः। नन्विह तद्धितलुगस्तु लेभः। पुरुषशब्दस्य प्रमाणवाचित्वाभावेन
प्रमाणे ल इति श्लोकवार्तिकस्याप्रवृत्तेः। यो हि रामादिवत् प्रमाणत्वेन प्रसिद्धस्तत्रैव तत् प्रवर्तते न तु पुरुषशब्देऽपि। अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात्।

वयसि। कालकृता शरीरावस्था वयः। यस्त्वर्थप्रकरणादिकमनपेक्ष्य श्रवणमात्रेण वयः प्रतिपादयति स वयोवाचीत्युच्यते। अन्तरंगत्वात्तेनेह न। उत्तानशया। लोहितपादा। इह प्रकरणादिना वयसः प्रतीतावपि शब्दादप्रतीतेः। अबालापि हि व्याध्यादिवशादुत्तानाशेते अलक्तकेन च रक्तचरणा भवति। प्रथमेति किम्। वृद्धा। कुमारीति। प्रथमवयोवचन एवायं शब्दो न त्वनूढत्वमयुक्तः। पुंस्यपि कुमार इति प्रयोगात्। वृद्धकुमारीति गौणः प्रयोगः। वयस्यचरम इति। यौवनं न प्रथमं वयः किन्तु द्वितीयमिति वार्तिकारम्भः। उपचयापचयलक्षणे द्वे एव वयसी इति पक्षे यौवनस्यापि प्राथम्यात् सूत्रेणैव सिध्यतीति बोध्यम्। वयांसि चत्वारीत्येके। यदाहुः। आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये

वयसि प्रथमे ॥ ४।१।२० ॥ प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात्। कुमारी। वयस्यचरम इति वाच्यम्॥ वधूटी। चिरण्टी। वधूटचिरण्टशब्दौ यौवनवाचिनौ। अतः किम्। शिशुः। कन्यायाः न। कन्यायाः कनीन चेति निर्देशात्। द्विगोः ॥ ४।१।२१ ॥ अदन्ताद्द्विगोर्ङीप् स्यात्। त्रिलोकी। अजादित्वात् त्रिफला। त्र्यनीका सेना। अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ ४।१।२२ ॥ अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीप् न स्यात्तद्धितलुकि सति। पञ्चभिरश्वैः क्रीता पञ्चाश्वा। आर्हीयष्ठक्। अध्यर्द्धेति लुक्। द्वौ बिस्तौ पचति द्विबिस्ता। द्व्याचिता। द्विकम्बल्या। परिमाणात्तु द्व्याढकी। तद्धितलुकि किम्। समाहारे पञ्चाश्वी। काण्डान्तात् क्षेत्रे ॥ ४।१।२३ ॥ क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि। द्वे काण्डे प्रमाणमस्याः द्विकाण्डा क्षेत्रभक्तिः। प्रमाणे द्वयसजिति विहितस्य मात्रचः प्रमाणे लो द्विगोर्नित्यमिति लुक्। क्षेत्रे किम्। द्विकाण्डी रज्जुः। पुरुषात् प्रमाणेऽन्यतरस्याम् ॥ ४।१।२४ ॥ प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्ङीब्वा स्यात्तद्धितलुकि। द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी द्विपुरुषा वा परिखा ॥ १ न तपस्तप्तं चतुर्थे किं करिष्यसीति १

त्रीणीत्यन्ये। यदाहुः। पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हतीति इति १ त्रिलोकीति। त्रयाणां लोकानां समाहार इति तद्धितार्थे द्विगुः। अकारान्तोत्तरपदो द्विगुरिति स्त्रीत्वम्। त्रिफलेति। अत्र द्विगोरिति ङीप् प्राप्नोति। ननु पाककर्णेति ङीष्। तत्र जातेरित्यनुवृत्तेः। त्र्यनीकेति। अनीकमयता। त्रयाणामनीकानां समाहारः। अजादेराकृतिगणत्वाट्टाबिति त्र्यनीकाधिकरणो मीमांसकाः। पंचाम्वेति। ननु च द्विगोरिति ङीप् प्राप्नोति उगितत्वात्तु स्यादेव। न चापरिमाणेति निषेधस्य निरवकाशत्वेति वाच्यम्। पंचानामजानां निमित्तं धनपतिसंयुक्तिः पंचाजा पंचोष्ट्र्यादौ सावकाशत्वात्। तत्र हि गोद्व्यचोसंख्येति यत् प्रत्ययस्याध्यर्द्धपूर्वेत्यादिना लु

त्युपसंख्यानादिति। नन्विहैव लाघवार्थं बहुव्रीहेरूधसोऽनङ् ङीषन्श्चेति सूत्र्यतां। अनङ् चेति वा। समासान्तेषु ऊधसोऽनङिति त्यक्त्वा धनुषोऽनङित्येव पठ्यतामेवं। अनङभावे सावकाशस्यास्य पक्षे कपा बाधा पत्तेः। सिद्धान्ते तु अनङः समासान्ततया शेषत्वमेवेह नास्तीति न कप्। संख्याव्ययादिग्रहणात्पदान्तव्यवधानेपि स्यादेव। द्विविधो द्वीदाम। बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थं। संख्यादेरिति समासनिर्देशेपि स्वरितत्वबलादेकदेश एवानुवर्त्तत इति भाव। अनन्तर्चेति भाष्यकृताऽनवर्जितत्वादिति भावः। एवं चोद्दामेत्यत्र दामहायनान्ताच्चेत्यस्या प्रवृत्त्या पूर्वोक्तेषु डाप्ङीप्निषेधेषु प्राप्तेषु बहुराजीनङ्रूपत्रयं भवत्यतो व्याचष्टे।

नित्यं संज्ञाछन्दसोः। ४। १। २९। अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप्। सुराज्ञी नाम नगरी। अन्यत्र पूर्वेण विकल्प एव। वेदे शतमूर्ध्नी। केवलमामकभागधेयपापाऽपरसमानाऽऽर्यकृतसुमङ्गलभेषजाच्च। ४। १। ३०। एभ्यो नवभ्यो नित्यं ङीप् स्यात्संज्ञाछन्दसोः। अथो त इन्द्रः केवलीर्विशः। भागधेयी। पापी। अपरी। समानी। आर्यकृती। सुमङ्गली। भेषजी। अन्यत्र केवलेत्यादि। मामकग्रहणं नियमार्थं। अणन्तत्वादेव सिद्धेः। तेन लोकेऽसंज्ञायां मामिका। अन्तर्वत्पतिवतोर्नुक्। ४। १। ३२। एतयोः स्त्रियां नुक् स्यात्। ताभ्यां ङीप्। गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागो निपात्यते। तत्राऽन्तरस्त्यस्यां गर्भ इति विग्रहे अन्तःशब्दस्याऽधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याऽभावादप्राप्तो मतुप् निपात्यते। पतिवत्नीत्यत्र तु वत्वं निपात्यते। अन्तर्वत्नी। पतिवत्नी। प्रत्युदाहरणं तु अन्तरस्त्यस्यां शालायां कुड्यः। पतिमती पृथिवी। पत्युर्नो यज्ञसंयोगे। ४। १। ३३। पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे। वसिष्ठस्य पत्नी। तत्कर्तृकयज्ञस्य फलभोक्त्रीत्यर्थः। दम्पत्योः सहाऽधिकारात् ॥

डाप्निषेधावपीति ॥ * ॥ नित्यं संज्ञाछन्दसोः। अन उपधालोपिन इति विकल्पस्यापवादः। आरंभसामर्थ्यात्सिद्धेपि नित्यग्रहणमुत्तरत्र विकल्पानवृत्तिसूचनाय कृतमित्याहुः। शतमूर्ध्नीति। इहैव च दाम्नीति क्वचित्पाठः। स चायुक्तः। दामहायनान्ताच्चेत्यनेनैव सिद्धत्वात्। केवला। छंदसि मामकी तनूः। मित्रावरुणयोर्भागधेयी। तन्वः सन्तु पापीः। उतापरीभ्यः। समानीव आकूतिः। आर्यकृती। सुमंगली। सुमंगलीरियं वधूरित्यत्र तु छंदसीव निपाविति मत्वर्थे ई प्रत्ययो वो ध्यः। शिवा रुद्रस्य भेषजी। अन्यत्र केवलेत्यादीति। मामकनरकयोरुपसंख्यानादित्वं मामिका। भागशब्दात्त्रिलिंगात्स्वार्थे धेयप्रत्ययः। स्वार्थिकाः क्वचित् प्रकृति ॥

नचैवंद्वपसच्वदृश्चावपिनास्मात्स्यातामितिवाच्यं। ऊर्ध्वमानेमत्तोममेतिवचनात्। एवंपुरुषात्प्रमाणेऽइति वैकल्पिकस्यापिङीपः सामर्थ्यादेवप्रवृत्तिः। किंतु तद्धि
तलुगेवदुर्लभइतिचेदत्राहुः। अस्तिहप्रमाणेलइत्यस्याप्रवृत्तिस्तथापिसुलभएवलुकापुरुषात्प्रमाणादितिसूत्रेहिद्विगोस्तद्धितलुकीत्यनुवर्तते तत्सामर्थ्यात्तलुग
प्याक्षिप्यतइतिसुवचत्वादिति। प्रमाणेकिं। द्वाभ्यांपुरुषाभ्यांक्रीताद्विपुरुषागोः। तद्धितलुकीत्येवासमाहारेपंचपुरुषीनन्विहपुरुषशब्दः प्रमाणेनवर्ततेऽगवि
कल्पेतत् इतिचेदत्राहुः प्रमाणार्थवृत्तीनामेवपुरुषाणामत्र। समाहारान्तद्व्यगविकलता। ततश्चतद्धितलुकीत्यनुक्तौ पंचपुरुषशब्दाद्विकल्पः स्यादिष्यते तु द्विगो
रितिनित्यंङीविति ॥ ॐ ॥ ऊधसोनङ्। नादेशेनैवसिद्धेऽनङ्करणंधनुषश्चेत्युत्तरार्थं। अन्यथाशार्ङ्गधन्वेतिनसिध्येत् इत्याहुः। वस्तुतस्तु इहापि अयमप्यावश्यकमेव

ऊधसोऽनङ्। ५।४।१३१। ऊधोन्तस्यबहुव्रीहेरनङादेशस्स्यात्स्त्रियां। इत्यनङि कृतेडाप्ङीप्निषेधेषुप्राप्तेषु॥ बहुव्रीहेरूधसोङीष्।४।१।२५॥
ऊधोन्ताद्बहुव्रीहेर्ङीष्स्यात्स्त्रियां। कुण्डोध्नी। स्त्रियांकिं। कुण्डोधोधैनुकं। इहाऽनङपिनातद्धिधोस्त्रियामित्युपसंख्यानात्। संख्याऽव्ययादेर्ङीप्।
४।१।२६॥ ङीषोऽपवादः। द्व्यूध्नी। अत्यूध्नी। बहुव्रीहेरित्येवऊधोऽतिक्रान्ता अत्यूधाः। दामहायनान्ताच्च।४।१।२७॥ संख्यादेर्बहुव्रीहेर्दामान्ताद्धा
यनान्ताच्चङीप्स्यात्। दामान्तेडाप्प्रतिषेधयोः प्राप्तयोः। हायनान्तेटापिप्राप्तेवचनं। द्विदाम्नी। अव्ययग्रहणाऽननुवृत्तेरुद्दामावडवेत्यत्रडाप्ङी
षेधावपिपक्षेस्तः। द्विहायनीबाला। त्रिचतुर्भ्यांहायनस्यणत्वंवाच्यं॥ वयोवाचकस्यैवहायनस्यङीप्णत्वञ्चेष्यते। त्रिहायणी। चतुर्हायणी।
वयसोऽन्यत्र। द्विहायना। त्रिहायना॥ चतुर्हायनाशाला॥ १ अन्यथाऽनोलाक्षणिकत्वेनअल्लोपाप्रसंगादित्यन्ये। इहबहुव्रीहौसक्थ्यक्ष्णोरित्यतोबहुव्री

हावित्यनुवर्ततेइत्याह। ऊधोन्तस्यबहुव्रीहेरिति। समासांतप्रकरणास्थत्वेप्यनङोनप्रत्ययत्वं। अन्यथाङित्वंवैयर्थ्यापत्तेरितिप्राचः। वस्तुतस्तुअनङइवप्रत्ययत्वेप्यादेशत्व
मविरुद्धं। कुंडोध्नीत्यत्रङीषिकृतेस्वरेपिविशेषाभावादितिबोध्यं स्त्रियामिति। उपसंख्यानाल्लब्धमनत्। डाप्ङीन्निषेधेष्विति। डाबुभाभ्यामितिवैकल्पिकोडाप्। अनउप
धालोपिनोन्यतरस्यामितिविकल्पेनङीप्। अनोबहुव्रीहेरित्यनेनऋन्नेभ्यइतिप्राप्तस्यङीपोनिषेधइतिविवेकः। ङीष्स्यादिति। प्रकृतोङीवेवतुनविहितः। स्वरेविशेषा
त्। कुंडोध्नीति। कुंडमिवऊधोयस्याः सावहुव्रीहिः किं। प्राप्तऊधः प्राप्तोधाः। प्राप्तापन्नेचेतिसमासः धैनुकमितिअचित्तहस्तीतिसमूहार्थेठक्। इसुसुक्तांतात्कः स्त्रियामि

हस्त्रीत्वं। तथा चोक्तं इयेन पुंसकेपि प्रयुज्यते। अन्ये साम्राज्यानामपि पतित्वमावत्विति व्यस्ते कथमिति। प्राचा तु समस्तेष्युपचार इत्युक्तं तद्धथैवेति भावः। नित्यं सप
त्न्यादिषु। आरंभसामर्थ्यादेव सिद्धे नित्यग्रहणं स्पष्टार्थं। निपात्यत इति। इड्गणो। समाना एकवीरस्त्रातृप्रत्ने तिसमानादय एव पठ्यंते ततश्च समानादिषिति वक्त
व्ये सपत्न्यादिष्वित्युक्तिः सभावनिपातनार्थेति भावः। सपत्न्यादिषु वहुव्रीहिराश्रीयत इत्याशयेनाह। समानः पतिर्यस्याः सेति। पूतक्रतोरै च। ऐकार आदेशो नतु
प्रत्ययः। उत्तरसूत्रे उदात्तग्रहणात्नत्विति अन्यथा लघावं त इति मध्योदात्तो। वृषाकपि शब्द उदात्तत्वं प्रयोजयति। अग्न्यादिषु त्रिषु स्थाने तरत्तम इत्येव सिद्धमिति
वृत्त्यादिग्रंथाविरुध्येरन्निति भावः। उदात्त ऐकार इति। मृस्त्रीशिहीत्यादिना मनेरु प्रत्ययविधौ यान्ये निदित्यधिकारान्मनुशब्द आद्युदात्तः। समासनिर्देशेन एतद्द

वर्णादनुदात्तात्तोपधात्तो नः ४।१।३९॥ वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् स्यात्तकारस्य नकारादेश
श्च। एता। एनी। रोहिता। रोहिणी। वर्णानान्तणातिनितान्तानामिति फिट्सूत्रेणाद्युदात्तः। त्र्येण्या शलल्येति सूत्रं। नी एण्येत्तान्यस्या इति वहुव्रीहिः
अनुदात्तात्किं। श्वेता। घृतादीनाञ्चेत्यन्तोदात्तोयं। अत इत्येव। शितिः स्त्री। पिशङ्गादुपसंख्यानं। पिशङ्गी पिशङ्गा। असितपलितयोर्न। असिता।
पलिता। छन्दसि क्नमेके॥ असिक्नी। पलिक्नी। अवदातशब्दस्तु न वर्णवाची किन्तु विशुद्धवाची। तेन अवदाता इत्येव। अन्यतो ङीष् ४।१।
४०॥ तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात्स्त्रियां ङीष् स्यात्। कल्माषी। सारङ्गी। लघावन्ते द्वयोश्च वह्वषो गुरुरिति मध्योदात्ता
वेतौ। अनुदात्तान्तात्किं। कृष्णा। क

शीयति। उदात्त इत्यनुवर्तमानं संवंधानुरोधे रैकारेणैव संवध्यते न त्वोकारेणापीति। ततश्चैकारौकारावनुदात्तौ स्त इति प्राचो
क्तं वृत्तिपदमञ्जर्यादिविरोधादुपेक्ष्यमिति भावः। मनावीति। मध्योदात्तमिदं। उत इत्यद्वयमाद्युदात्तो। एताकर्बुरा॥ ॥ वर्णानामिति एतः। शोणः। शितिः। पृश्निः। प
दिति क्रमेणोदाहरणानि। आद्युदात्त इति। अनुदात्तं पदमेकवर्जमिति शेषनिघातेनानुदात्तान्त एतशब्द इति भावः। त्र्येण्येति। अत्र एतशब्दस्योपसर्जनत्वेपित
देतत्समासस्यानुपसर्जनत्वमिति भावः। पूर्वपदात्संज्ञायामिति णत्वं। सूत्रमिति। ग्रहणग्रहणेनाऽदुपधात्त्वाल्लोपि चूतेरिति क्यप्। त्री एण्येतान्यस्या इति। ननु चित्रं कि
मीरकल्माषशवलैताश्च कर्बुरे इति चित्रपर्याय एत शब्दः तथा च शबल्यां चित्रत्वयाभावादर्थासंगतिरित्याशंक्य केचिदिह व्याचक्षते। एतशब्दोत्र एतावयवपर

तोलिंगवचनान्यतिवर्तंत इति स्त्रीत्वं।भागधेया।अभेदोपचारात्तद्धितिवर्तमानः पापशब्दो विशेष्यनिघ्नः।पापा अपरा।समाना।आर्येणाकृतेति प्राक्सुबुत्पत्तेः।कृदंतेन
समासः।टाप्।आर्यकृताभिषज इयमित्यर्थः।णि।आदिवृद्धेरपवादोऽस्मादेव निपातनादेकारः।संज्ञाकं रसोऽशिति नियमादन्यत्र भेषजा।प्रत्युदाहरणं त्विति।अंतर्वतीप
तीवतीति प्राचोक्तं प्रत्युदाहरणमयुक्तमिति भावः।आद्ये अस्तिसामानाधिकरण्याभावान्मतुपोऽसंभवात्।द्वितीये तु वत्वासंभवादिति भावः॥ ॥विभाषासपूर्वस्य।

विभाषासपूर्वस्य।४।१।३४।पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात्।गृहस्य पतिः।गृहपतिः।गृहपत्नी।अनुपसर्जनस्येतीहोत्तरार्थ
मनुवृत्तमपि न पत्युर्विशेषणं।किन्तु तदन्तस्य।तेन बहुव्रीहावपि।दृढपत्नी।दृढपतिः।वृषलपत्नी।वृषलपतिः।अथ वृषलस्य पत्नीति व्यस्ते क
थमिति चेत्।पत्नीव पत्नीत्युपचारात्।यद्वा।आचारक्विबन्तात्कर्तरि क्विप्।अस्मिंश्च पक्षे।पत्नियौ।पत्नियः।इतीयङ्विषये विशेषः।सपूर्वस्य
किं।गवाम्पतिः स्त्री।नित्यं सपत्न्यादिषु।४।१।३५।पूर्वविकल्पाऽपवादः।समानस्य सभावोऽपि निपात्यते समानः पतिर्यस्याः सा सपत्नी एक
पत्नी।वीरपत्नी।पूतक्रतोरै च।४।१।३६।अस्य स्त्रियामै आदेशो ङीप् च इयं त्रिसूत्री पुंयोग एवेष्यते।पूतक्रतोः स्त्री।पूतक्रतायी।ययातु क्रत
पूत वः पूताः क्रतुरेव सा।वृषाकप्यग्निकुसितकुसिदानामुदात्तः।४।१।३७।एषामुदात्त ऐ आदेशस्स्यात् ङीप् च।वृषाकपेः स्त्री।वृषाकपायी।हरवि
ष्णू वृषाकपी इत्यमरः।वृषाकपायी श्रीगौर्यावितिच।अग्नायी।कुसितायी।कुसिदायी।कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः।मनोरौ वा।
४।१।३८।मनुशब्दस्यौकारादेशस्स्यादुदात्तैकारश्च वा।ताभ्यां सन्नियोगशिष्टो ङीप् च।मनोः स्त्री।मनावी।मनायी।मनुः॥ ११ अप्राप्तविभाषेयं।अय

त्संयोगत्वात्।पूर्वेण सहितः सपूर्वस्तस्य।यस्य समुदायस्य पूर्वावयवो विद्यते तस्येत्यर्थः।स च समुदायः पतिशब्दो न भवतीति पतिशब्देन तदंतविधिरित्याह।पतिशब्दांत
स्येति न तु पत्युरिति प्रातिपदिकविशेषणेन तदंतलाभात्पत्यंतस्येत्येवास्तु किमनेन सपूर्वग्रहणेन।अत्राहुः।केवलपतिशब्दस्यापि व्यपदेशिवद्भावेन पत्यंतत्वादति
प्रसंगः स्यात्तद्वारणाय सपूर्वग्रहणमिति।अत्र पूर्वशब्दः पूर्वावयवपर इतिध्व नयन्प्रत्युदाहरति।गवां पतिः स्त्रीति।पातीति पतिरिति क्रियाशब्दस्य त्रिलिंगत्वादि

सूर्यतिष्या। अत्र भस्येत्यनुवर्त्तमानमपि न संबध्यते। विषयपरिगणनेनैवातिप्रसंगनिवारणात्। मत्स्यस्य ङ्यामिति। नेह मत्स्यस्येदं मात्स्यं। ङे च ङ्यां चेति। सूरीयः। सूरी। आग
स्तीयः। आगस्ती। नेह। सौर्ये च ऊ। आगस्त्यं। नक्षत्राणीति। नक्षत्रसंबंधी योऽण् नक्षत्रेण युक्तः काल इति संधिवेलाद्यृतुनक्षत्रेभ्योऽणिति च विहितस्तस्मिन्नित्यर्थः। तत्र तिष्य
स्य यलोपो नियम्यते। पुष्यस्य तु अप्राप्तो विधीयते। तिष्येण युक्तः कालस्तैषः। पुष्येण युक्तः पौषः। तथा तिष्ये भवस्तैषः। पुष्ये भवः पौषः। नेह। तिष्यस्यायं तैष्यः। मत्सीति

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ६।४।१४९॥ अङ्गस्योपधाया यस्य लोपः स्यात्तद्धिते ईति च। सूर्य्याद्यवयवः। मत्स्यस्य ङ्यां। सूर्य्यागस्त्ययोश्छे च
ङ्यां च। तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्॥ मत्सी॥ मातरि षिच्चेति पित्रादेव सिद्धे गौरादिषु मातामही शब्दपाठादनित्यः षितां ङीषादंष्ट्रा
जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुने
च्छाकेशवेशेषु ४।१।४२॥ एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष् स्यात्॥ जानपदी वृत्तिश्चेत्। अन्या तु जानपदी। उत्सादित्वा
दञ्। अन्तत्वेन टिड्ढेति ङीप्। स उदात्तः। कुण्डी। अमत्रं चेत्। कुण्डाऽन्या। कुडि दाहे। गुरोश्च हल इत्यप्रत्ययः। परस्तु अमृते जारजः कुण्ड इति मनुष्य
जातिवचनस्तु तं जातिलक्षणो ङीष् भवत्येव। अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते। न तु नियम्यते। गोणी। आवपनं चेत्। गोणाऽन्या
स्थली अकृत्रिमा चेत्। स्थलाऽन्या। भाजी श्राणा चेत्। भाजाऽन्या। नागी स्थूला चेत्। नागाऽन्या। गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्र
युक्त उदाहरणं। सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणं। काली वर्णश्चेत्। कालाऽन्या। नीली अनाच्छादनं चेत्। नीलाऽन्या। नील्या
रक्ता शाटीत्यर्थः। नील्या अन्वक्तव्य इत्यन्। अनाच्छादनेऽपि न सर्वत्र — किं तु नीला ओषधौ। नीली। प्राणिनि च। नीली गौः। संज्ञायां वा। नीली
नीला। कुशी अयोविकारश्चेत्। कुशाऽन्या। कामुकी मैथुनेच्छा चेत्। कामुकाऽन्या। कबरी केशानां सन्निवेशविशेषः। कबराऽन्या चित्रेत्यर्थः॥

योपधत्वाज्जातेरस्त्रीविषयादित्यप्राप्ते गौरादिपाठान्ङीष्। मातरि षिच्चेति। पितृव्यमातुलमातामहेति सूत्रस्थमिदं वचनं तच्च पितामहीति रूपसिद्ध्यर्थमवश्यं वक्तव्यमि
ति न वार्तिकस्य वैयर्थ्यं येन पितामहशब्दमपि गौरादिषु पठन्ति तन्मते वचनमिदं स्वरसतो न संगच्छते। यदि तु अनित्यत्वज्ञापन मेवास्य वचनस्य फलमिति ब्रूषे तर्हि

मपिगुणविषयेन पुंसकप्रयोगो न संगच्छते। गुणे शुक्लादयः पुंसि इत्युक्तेरिति वाच्यं। एतानि एतावयवाधिकरणानीति व्याख्ययागुणि लिंगपरत्वादेतशब्दस्य नपुंसकत्वमप्युप पद्यते इति पिशंगादिति। लघावंत इति पिशंगशब्दस्य मध्योदात्तत्वादन्यतो ङीषिति ङीषि प्राप्ते ङी बुपसंख्यायते। लरे विशेषः। ङ्गामेकइति। असितपलितयोस्तकारस्य वर्णादनु दात्तादिति नकारे प्राप्ते तं बाधित्वा तकारस्थाने क्नमादेशं तत्संनियोगेन ङीपं चेच्छंत्येके आचार्या इत्यर्थः। अत्र छंदस्येके इत्यन्वयात भाषायां क्नो भवत्येवा छंदस्येवेकेर छंत्य न्येतु भाषायामपीत्यर्थपर्यवसानात्। अन्यथा एकग्रहणं भाष्यकारो न कुर्यान्न हि छंदसि पलिक्नीरियुवतय इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते। एवं च गतो गणानां सूर्णीम सिक्नीकानामिति प्रयोगो नानुपपन्नः विशुद्धवाचीति। देयशोधन इत्युक्तेः अमरेणानु विशुद्धत्वसाधर्म्यादवदातः सितो गौर इत्युक्तमिति भावः लघावंत इति। अतेनाम एकस्मिन्लघोर्द्वयोश्च लघ्वोः परतः वल्कषो वल्कचकस्य गुणादातः स्यात्। अक्षित्यचः प्राचां संज्ञा। कृषोत्यादि। कृषेश्चेति न प्रत्यये कपेश्चेति सौत्रा द्वातोरौणादिके इलचि चकषाकपिलावंतोदात्तौ॥ ॥ षिद्गौरादिभ्यश्चेति। नृत्‌धातोः शिल्पिनि ष्वुन्। पुनः षित्वमवयवेऽचरितार्थत्वाज्ञ्ञ्त्तदंतस्य प्रातिपदिकस्य विशेषकं। अपवः षित्व

षिद्गौरादिभ्यश्च ॥४।१।४१॥ षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात्। नर्तकी। गौरी। अनडुही। अनड्वाही। पिप्पल्यादयश्च। आकृतिगणोयं ॥ ॥

स्यादिं भो चरितार्थत्वादत्र पेत्यत्र तु न ङीष् मृजेः षित्वमनार्षमिदादौ मृजेति पाठादित्याहुः मृजेः शित्वादेवाङ् भिदादौ मृजेति पाठस्त्वनार्ष इत्यन्ये। गौरीति। गौरशब्दस्य वर्ण वाचित्वेपि प्रातिपदिकस्वरे णांतोदात्तत्वादन्यतो ङीषिति ङीष् न प्राप्नोतीति इह गणे पाठः। अनड्वाही अनडुहीति। अनकारांतत्वाज्जातिलक्षणस्य संयोगलक्षणस्य वा ङीषोऽप्राप्तयागणेऽस्मिन्पठ्यते। प्रत्ययसहितपाठस्तु ङीषि परे आम्विकल्पार्थः गोरमत्स्यमनुष्यं श्रृंगागवयाहयासुकयगौतमा। अनड्वाही अनडुहीत्वणात्लुनाम्न् पिप्पल्यादयश्च। पिप्पली। हरीतकी। कोशातकी। पृथिवी। मातामहीत्यादि। यत्तु प्राचा ङन्नेभ्यो ङीवित्यत्र शुनीत्युदाहृतं तत्तु गौरादिगणे श्वन्‌शब्दपाठादर्शनप्रयुक्तमि त्याहुः। अत्र केचित् नित्यस्त्रीत्वाज्जातेरस्त्रीविषयादित्यप्राप्ते ङीषि पिप्पल्यादयो गौरादिषु पठ्यंते ङीषंत पाठस्तु चिंत्यप्रयोजनः। न च पिप्पलीभार्या यस्य स पिप्पली भार्य इत्यादौ पुंवद्भावं बाधित्वा ङीषः श्रवणं यथा स्यादित्येतदर्थः सइति वाच्यं। भाषितपुंस्कत्वाभावादेव पुंवद्भावनिषेधसिद्धेः। किंच॥ अवांतरगणत्वाभ्युपगमोपि पिप्प ल्यादेर्व्यर्थ एव। न चैवं जाताधिकारे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानमित्यत्र पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीषिति वक्ष्यमाणग्रंथो विरुध्यत इति वाच्यं। गौरादे

पृथग्जातिषु दृश्यत इति। गोत्वं हि द्रव्यत्वावांतरनानाजातिषु न दृश्यते। गुणास्तु दृश्यते। यथा अश्वे दृष्टा नीलता नरणादिष्वपि दृश्यते। एतेन स्त्रीऊर्द्ध्वं नसकलजातेर्व्यव
च्छेदः। एवं तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह। आधेयश्चाक्रियाजश्चेति उत्पाद्योऽनुत्पाद्य इत्यर्थः। उत्पाद्यो यथा घ
टादेः पाकजो रूपादिः। अक्रियाज अनुत्पाद्यः। स यथा आकाशादेर्महत्त्वादिः। क्रियानुसर्वोऽप्युत्पाद्य एव न नित्येति तस्याद्वैविध्याभावाद्गुणत्वाभावः। एवमपि द्रव्य
स्य गुणत्वं प्राप्नोति। अवयविद्रव्यं हि अवयवद्रव्येषु निविशते। असमवायिकारणसंयोगनिवृत्तौ विनाशात्ततोऽपैति भिन्नजातीयेषु च हस्तपादादिषु दृश्यते द्विविधं
च भवति। नित्यानित्यभेदेन निरवयवस्याऽऽत्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह। असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः।
।पतिंवरेति। एवं च पाणिग्रहणोत्कंठाभिधायित्वाद्गुणवचनोऽयमिति भावः। बह्वादिभ्यश्च। बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धेऽप्युत्तरार्थं ग्रहणं नित्यं
छंदसीत्युत्तरसूत्रेण बहुशब्दादपि छंदसि नित्यं यथा स्यादिति। वस्तुतस्तु बहुशब्दो नित्यं छंदसीति सूत्रं च व्यर्थमेव सर्वविकल्पानां छंदसि व्यवस्थितत्वा
त्। गणसूत्रमाह। कृदिकारादिति। सर्वतोऽक्तिन्नर्थादित्यपि गणसूत्रमेव व्यवस्थितविभाषात्वादिह न। सुगंधिः। प्रियपतिर्वेश्या। अजननिरिति। आक्रोशेन
ञ्यनिरिति जनेरनिप्रत्ययः। इह अन्यान्यपि गणसूत्राणि संति। शक्तिः शस्त्रे। शक्तिः। शक्ती शस्त्रे किं शक्तिः सामर्थ्यं। शक्तिशस्त्रीति पाठे तु शब्दद्वयं। शस्त्रिः। श
स्त्री। इतः प्राण्यंगात्। धमनिः। धमनी। चंद्रभागान्नद्यां। चंद्रभागी। चंद्रभागा। अहन्शब्दोऽत्र पठ्यते। सामर्थ्यान्न दंतबहुव्रीहिरुदाहार्यः। अनुपसर्जनाधिका
रवाधश्च। दीर्घान्ङीषाच्च इ। पक्षे डाप्ङीनिषेधाः। बह्वापद्धति। यष्टि। विकटा। विषाल। कल्याण। प्रराणा। चंड। रुपाण। अहन्॥ इत्यादि ॥ ॥

षिद्गौरेतिसूत्रे एवानित्यषितइतिवक्तव्यं किमनेनवक्रमार्गेणेतिदिक्। दृश्यतेऽनेनेतिदंष्ट्रा। दाम्नीशसित्यादिनाकरणेष्ट्रन्। जानपदीति। जानपदेभवा। वृत्तिश्चेदि
ति। वर्ततेऽनयेतिवृत्तिर्जीविका। कुंडीति। अस्त्रीकमंडलुःकुंडीत्यमरः। कुंडाऽन्येति। क्रियाशब्दोऽयं। अतएवाह। कुडिदाहइत्यादि। यस्तुघटपर्यायःकुंडशब्दःसनप्रत्युदा
हरणं। पिठरस्थाल्युखाकुंडमिति। तस्यनपुंसकत्वात्। अग्न्यालयादिपर्यायोपिकुंडशब्दोनपुंसकलिंगेनियतः। कुंडमग्न्यालयेमानभेदेदेवजलाशयेइति मेदिनीको
शात्। आवपनेचेदिति। आङ्पूर्वाद्वपेरधिकरणेल्युट्। आउप्यतेनिक्षिप्यतेधान्यंयस्मिन्। गोणान्येति। यस्यापादृक्तिर्कंनाम। अकृत्रिमेति। यथासैषास्थलीयत्रवि
चित्वतात्वामिति। स्थलान्येति। कृत्रिमापुरुषेणसंस्कृता। आणापक्वा। अयोविकारइति। फालइतिप्रसिद्धा। कुशान्येति। कुंदोगाःस्तोत्रीयाःगणनार्थानौदुंबरान्शंकू
न्कुशाइतिव्यवहरंति। अतःकृकमीतिसूत्रेप्रसिद्धएवायं। कामुकान्येति। मैथुनादन्यत्धनादिकंकामयितुंयस्याःशीलंसेत्यर्थः। लषपतेस्तुकञ्॥ ॥ शोणात्।

शोणात्प्राचां।४।१।४३॥ शोणी। शोणा। वोतोगुणवचनात्।४।१।४४॥ उदन्ताद्गुणवाचिनोवाङीष्स्यात्। मृद्वी। मृदुः। उतः किं। शुचिः। गुणो
ति किं। आखुः। खरुसंयोगोपधान्न। खरुः पतिंवरा कन्या। पाण्डुः। बह्वादिभ्यश्च।४।१।४५॥ एभ्योवाङीष्। बह्वी। बहुः। कृदिकारादक्ति
नः। रात्रिः। रात्री। सर्वतोक्तिन्नर्थादित्येके। शकटी। शकटिः। अक्तिन्नर्थात्किं। अजननिः। क्तिन्नन्तत्वादप्राप्ते विध्यर्थमिदमितिशब्दोगणे
पठ्यते। हिमकाषिहतिषुचेतिपद्धावः॥ १ शोणःकोकनदच्छविरितिकोशाच्छोणशब्दस्यवर्णवाचित्वात् वर्णानांतणोत्यादुदात्ततयाऽन्यतो

ङीषितिसिद्धेपिप्राचामेवङीष्नान्येषामितिनियमार्थमिदं। वोतोगुणवचनात्गुणोनामनेहाऽदेङ्रूपः। उतइतिविशेषणाद्वचनग्रहणाच्चानापिविशेषणमा
त्रमिदंआखुर्द्रव्यमित्यादावतिप्रसंगादितिचेत्। अत्राहुः संज्ञाजातिक्रियाशब्दान्हित्वाअन्येगुणवाचिनः। चकृष्यीशब्दानांप्रवृत्तिरित्याकरग्रंथनिष्कर्षादे
वनिर्णयइति॥ भाष्येतुसत्वेनिविशतेपैतिपृथग्जातिषुदृश्यते। आधेयश्चाक्रियाजश्चसोऽसत्वप्रकृतिर्गुणइतिस्थितं। सत्वंद्रव्यं। सत्वएवनिविशतइतिसावधा
रणंव्याख्येयं। एतेनसत्ताव्यावर्त्यते। साहिनकेवलंद्रव्येवर्ततेकिंतुद्रव्यगुणकर्मसु। ननुद्रव्यएवद्रव्यत्वंवर्ततइति। तत्रातिव्याप्तिरतआह। अपैतीति। अपगच्छ
तीत्यर्थः। अर्थात्सत्वादेव। यथापीततायांजातायांफलादेर्नीलता। अपैति। नैवंद्रव्यत्वंद्रव्यादपैति। एवमपिगोत्वंगोषु वर्ततेअस्मादेश्चापैतितत्रातिव्याप्तिरतआ

नचरितार्थत्वात्।पत्युर्नइतिवदादेशेकर्तव्येआगमलिंगककारोच्चारणसामर्थ्यादेवअल्लोपोनभविष्यतीतिचेन्न।सर्वेशब्देककारस्यचारितार्थ्यात्।नहितत्रलो
पोस्ति।नसंयोगादितिनिषेधात्।तस्मात् ककाराकारयोःसामर्थ्यविरहेपररूपबाधनार्थंदीर्घोच्चारणमावश्यकमिति।केचित्तुकिंकृतेलाक्षणिकत्वादल्लोपो
नइत्यस्याप्रवृत्त्यासवर्णदीर्घएवअनुकिंकृतेभविष्यत्यकारोच्चारणसामर्थ्यात्।एवंसत्यानुगितिदीर्घोच्चारणसामर्थ्यात्।आअनुगितिपदंविभज्यते।तेनेन्द्रा
दीनामनुकैवसिद्धेआकारादेशविधानसामर्थ्यात्क्वचिदन्यतोपिविधानमनुमीयतेतेनब्रह्मणःस्त्रीब्रह्माणीतिसिध्यतीत्याहुः।अत्रनव्याः।अस्तुउक्तरीत्यादी
र्घोच्चारणमन्यतोविधानार्थमेवपरंतुआअनुगितिपदेविभज्यनकारस्याकारादेशेकृतेदीर्घग्रहणसामर्थ्यादनजंतस्याप्यनुकिब्रह्माणीतिसिध्यतीतिनव्या
ख्येयं।उभयविधौवाक्यभेदापत्तेः।किंत्विंद्रमाचक्षाणःइंद्रः तत्करोतितदाचष्टइतिण्यंतात्क्विप्।तस्यइंद्रः स्त्रीइंद्राणीतिसिध्यतीत्येवव्याख्येयं।।दीर्घोच्चारण
सामर्थ्यादतइत्यधिकारोऽनुपसर्जनाधिकारश्चबाध्यतइतिसुवचत्वात्।नचोभयबाधाभ्युपगमापेक्षयाऽतइत्यधिकारबाधमात्राभ्युपगमेनब्रह्मणःस्त्रीब्रह्मा
णीतिरूपसिद्धयेआकारादेशोनुक्चभवतीत्येवव्याख्यायतामितिवाच्यं।वाक्यभेदापेक्षयाउभयबाधनगौरवस्यसुसहत्वात्।एवंचब्रह्माणमानयतिजीवं
तीत्यादिवक्ष्यमाणग्रंथोपिस्वरसतःसंगच्छतइत्याहुः।हिमानीति।।महत्त्वयोगेहिमारण्ययोःस्त्रीत्वं।दुष्टोयवोयवानीति।जात्यंतरमेवानेनाभिधीयते।अयमेव
चास्यदोषोयस्माद्धियवत्वजातेरभावेपितदाकारानुकृतिः।यवनानीतितिस्येदमित्यणोबाधकोङीष्।वाङीष्वाच्यइति।इदंचइडश्चेतिघञ्विधायकसूत्रस्थवा
र्तिकं।वक्ष्यतिचतत्रअपादानेस्त्रियामुपसंख्यानंतदंताच्चवाङीषितिरउपाध्यायीउपाध्यायेति।उपेत्यअस्याअधीयतइतिविग्रहः।स्वार्थइति।यदितुपुंयोगएवा
यंविधिःस्यात्शूद्रापिक्षत्रियस्यभार्याक्षत्रियाणीस्यात्।ब्राह्मणभार्याचक्षत्रियाक्षत्रियाणीनस्यादितिभावः।वैश्यावेत्यर्थइति।अर्यःस्वामिवैश्ययोरित्यर्थद्वये
निपातनादितिभावः।अत्रामरस्यसंग्रहः।आर्याणीस्वयमर्यास्यात्क्षत्रियाक्षत्रियाण्यपि।उपाध्यायाप्युपाध्यायीस्यादाचार्यापिचस्वतः।आचार्यानीतुपुंयोगेस्या
दर्यीक्षत्रियीतथा।उपाध्यायान्युपाध्यायीति।कथमिति।सूत्रेब्रह्मन्शब्दस्याग्रहणादानुगनुपपन्नएवइतिप्रश्नः।उत्तरंतुब्रह्माणमानयतीत्यादिण्यंतादनप्राण
नइत्यस्मात्कर्मण्यणिणेरनिटीतिणिलोपेटिड्ढाणञितिङीपिपूर्वपदात्संज्ञायामितिणत्वेचब्रह्माणीतिरूपसिद्धेरितिभावः ॥ ॥ ॥

पुंयोगादाख्यायां। इह पुमिति लुप्तषष्ठीकं पृथक्पदं। तच्चावर्त्तते। पुंयोगादिति हेतौ पंचमी। आख्यायामिति तु पंचम्यर्थे सप्तमीत्याशयेनाह। यायुमाख्येत्यादि। पुमाख्या पुंवाचकः शब्दः। पुंयोगात् स्त्रियां वर्त्तते इत्यनेन गोणीं इति रूक्ता। यदा तु मुख्यार्थात्तस्येदमित्यण् तदा गोपी त्येव भवति। योगः संबन्धः। स चेह दंपतिभाव एवेति नाग्रहः। किं तु जन्यजनकभावोपि गृह्यते कैकेयी मा नाभावात्। तेन कौसल्यया सा विमुखेन रामः साकं केकयीजो भरतस्ततो भूदिति भट्टिप्रयोगः संगच्छते। केकयस्य दुहिता कैकेयी। जनपदशब्दात् क्षत्रियादञित्यपत्यप्रत्यये तु कैकेयीति स्यात्। नन्विह अतश्चेति तद्राजाकारस्य लुक् शंक्यः। न प्राच्यभर्गादीति प्रतिषेधात्। तथा च का

पुंयोगादाख्यायां। ४। १। ४८। या पुमाख्या पुंयोगात् स्त्रियां वर्त्तते ततो ङीष् स्यात्। गोपस्य स्त्री गोपी। पालकान्तान्न। गोपालिका। अश्वपालिका। सूर्य्याद्देवतायां चाप् वाच्यः। सूर्य्यस्य स्त्री देवता। सूर्य्या। देवतायां किं। सूरी। कुन्ती। मानुषीयं। इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्याणामानुक्। ४। १। ४९। एषामानुगागमः स्यात् ङीष् च। इन्द्रादीनां षणां पुंयोगएवेष्यते। तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते। इतरेषां त्वनुक्तोभयं। इन्द्राणी। हिमारण्ययोर्महत्त्वे। महद्धिमं हिमानी। अरण्यानी। यवाद्दोषे। दुष्टो यवो यवानी। यवनाल्लिप्यां। यवनानां लिपिर्य्यवनानी। मातुलोपाध्याययोरानुग्वा। मातुलानी। मातुली। उपाध्यायानी। उपाध्यायी। या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः। उपाध्यायी। उपाध्याया। आचार्य्यादणत्वञ्च। आचार्य्यस्य स्त्री आचार्य्यानी। पुंयोग इत्येव। आचार्य्या। स्वयं व्याख्यात्री। अर्य्यक्षत्रियाभ्यां वा स्वार्थे। अर्य्याणी। अर्य्या। स्वामिनी वैश्या वेत्यर्थः। क्षत्रियाणी। क्षत्रिया। पुंयोगे तु अर्य्यी। क्षत्रियी। कथं तर्हि ब्राह्मणीति। ब्राह्मणमानयति जीवयतीति कर्म्मण्यण्॥ १ लिदासः कैकेयिकामाः फलितास्तवेति। एतेन देवकी व्याख्याता। पुंयोगात् किं। देवदत्ता। अयं हि संज्ञाशब्दः

स्वभावात् स्त्रियमाह न तु पुंवाचकशब्दयोगात्। आख्यायां किं। प्रसूता। अयं हि जातप्रसवामाह स च प्रसवो गर्भधारणद्वारा पुंयोगनिमित्तक इत्यस्तीह पुंयोगः किं तु नायं पुंसो वाचक इति न ङीष्। सूर्य्याद्देवतायामिति। ङीषोपवादः। सूरीति। सूर्य तिष्येति यलोपः। आनुगिति। ननु ह्रस्वादिरेव लाघवादनुग्वक्तव्यः किमनेन नदीर्घोच्चारणेन। अत्राहुः। अनुकि कृते अतो गुण इति पररूपं स्यात्। न चाकारोच्चारणसामर्थ्याद्दीर्घो भविष्यति। अन्यथा हि नुकमेव कुर्यादिति वाच्यं। अल्लोपो न इत्यस्य बाधे

निष्ठेति पूर्वनिपाते प्राप्ते जातिकालसुखादिभ्यः परा निष्ठा वाच्येति परनिपातः ॥ बहुकृतेति ॥ बहूनि कृतानि यया सा जातं तान्येति ॥ वर्णो दृदुदात्तादिति वत् बहुव्रीहेरुदा
त्तादित्येव सिद्धे अंतग्रहणं नित्यत्वप्रतिपत्त्यर्थं वा जात इति त्वैकल्पिक उदात्तो न तु नित्य इति भावः ॥ पाणिगृहीतीति यस्याः पाणिरग्निसाक्षिकं गृह्यते तस्यां वाच्यायां
पाणिगृहीतशब्दान्ङीष् वक्तव्य इत्यर्थः ॥ अन्येति ॥ कौतुकादिना पाणिर्गृहीतो यस्याः दास्यादेः सा पाणिगृहीता ॥ पूर्वेण नित्ये प्राप्त इति ॥ एतेन विकल्पोप्ययं जाति पूर्वादे
वेति ध्वनितः ॥ कथं तर्हि पत्रहतीत्यत्र अस्वांगपूर्वपदाद्वेति वा ङीषिति केप्यटः ॥ पुत्रशब्दस्याजातिवाचकत्वादन्यथा पुत्रादिनीत्यत्र सुप्यजाताविति णिनिर्न स्यात् ॥
यद्दिलदनमाद्ः सोऽस्यास्तीति आदिनी पुत्राणामादिनीति विग्रहस्य कथंचित् साधितेपि जातिकालसुखादिभ्य इत्यंतोदात्तविधायकसूत्रे जातेः किं पुत्रजात इति वक्ष्य
माणमूलग्रंथो विरुध्यत एवेति चेदुच्यते ॥ प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ॥ असत्वलिंगां बह्वर्थां तां जातिं कवयो विदुः १ इति भाष्ये लक्षणांतरमुक्तं स
त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यामाविर्भावतिरोभावौ या प्राप्नोति या च द्रव्यभाविनीत्यर्थः ॥ गुणैर्युगपद्द्रव्येण संबध्यते बह्वर्था सर्वव्यक्तिव्यापिनीमित्यर्थः
तां जातिमित्यादि कैय्यटेन व्याख्यात ॥ एवं च पुत्रत्वस्य यावद्द्रव्यभावित्वेनोक्तलक्षणलक्षितत्वात् जातिवाचक एव पुत्रशब्द इत्यस्वांगेति वा ङीषिति ग्रंथस्तत्र न
विरुध्यते ॥ आकृतिग्रहणा जातिरित्यादिमुख्यपक्षाश्रयणे तु पुत्रत्वस्याजातित्वाज्जातेः किं पुत्रजात इति ग्रंथोपि संगच्छत इति दिक् ॥ केचिद्वोचीनास्तु पुत्र
हतीपुत्रजग्धीत्यत्र क्ताद्ल्पाख्यायामित्यनेन ङीषमाहुः ॥ सुरापीतीति ॥ पीता सुरा यया सा ॥ जातिकालेति सूत्रवार्तिकाभ्यां निष्ठायाः अंतोदात्तत्वपरनिपातौ ॥
वस्त्रछन्नेति ॥ बहुव्रीहिस्वरेण पूर्वपदप्रकृतिस्वरे शेषनिघाते च कृते अनुदात्तांतोयं स्वांगाच्चेति ॥ इह बहुव्रीहिरिति नानुवर्तत इति ध्वनयन्नुदाहरति ॥ अतिके
शीति ॥ शिखेति ॥ शीडः खो ह्रस्वश्चेति ह्रस्वस्तदंताट्टाप् ॥ अन्यथा टापं बाधित्वा ङीष् स्यादिति भावः ॥ केचित्तु सुशिखेत्यपि प्रत्युदाहरंति ॥ तच्चिंत्यं ॥ टावंतेन स
मासे अनदंतत्वेन ङीषः प्राप्त्यभावात् ॥ न च टापः प्रागेव कृदंतेनैव समासादंतत्वमस्तीति वाच्यं ॥ तथा हि सति शोभना शिखा सुशिखेत्यर्थे स्याल्लाभादिति नव्याः
॥ यच्चात्र स्वमंगं गृह्येत तर्हि सुमुखा शालेत्यत्रापि स्यात् ॥ मुखस्य शालांगत्वात् ॥ सुकेशी रथ्येत्यत्र न स्यात् ॥ केशानां रथ्यांगत्वाभावात् ॥ अतोऽव्याप्त्यतिव्याप्तिप
रिहारार्थमाह ॥ ॥ ॥

क्रीतात्। इह प्रकरणे अत इत्यनुवर्तते प्रातिपदिकादिति च तदाह। अदन्तादिति। प्रातिपदिकादिति शेषः। वस्त्रक्रीतीति। वस्त्रभिस्क्रीत इति स्थिते प्राक्सुबुत्पत्तेः कर्तृकरणेति
समासे अदन्तत्वान्ङीष्। क्वचिन्नेति। कर्तृकरणे कृता बहुलमिति बहुलग्रहणात् गतिकारकोपपदेति वक्ष्यमाणस्य क्वाचित्कप्रवृत्तौ सुबन्तेन समासः। तत्र सुपः प्रागेवान्तरङ्ग
त्वाट्टाप्। ततोऽदन्तत्वाभावान्न ङीषिति भावः। करणपूर्वादिति किम्। गवा क्रीता। अश्वेन क्रीता इत्यादिविग्रहे मा भूत्। पूर्वशब्दोऽत्रावयववचनः। समासप्रातिपदिकं चान्य
पदार्थः। करणं पूर्वं यस्मिन् प्रातिपदिके तदिदं करणपूर्वं तस्मादित्यर्थः। क्तादल्पाख्यायाम्। अत्र व्याचख्युः। अल्पाख्यायामिति समुदायोपाधिः। अल्पैरभ्रैर्लिप्ता
अभ्रलिप्ती। कृतग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति समुदायस्यापि क्तान्तत्वान्ङीष्। यद्यपि पूर्वपदार्थस्य अभ्राणामेव अल्पत्वं गम्यते तथापि तदल्पत्वे सति।

क्रीतात्करणपूर्वात्। ४।१।५०। क्रीतान्तादन्तात्करणादेः स्त्रियां ङीष् स्यात्। वस्त्रक्रीती। क्वचिन्न। धनक्रीता। क्तादल्पाख्यायाम्। ४।१।५१। करणा
देः क्तान्तादन्तात्स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये। अभ्रलिप्ती द्यौः। बहुव्रीहेश्चान्तोदात्तात्। ४।१।५२। बहुव्रीहेः क्तान्तादन्तोदात्तादन्तात्स्त्रियां
ङीष् स्यात्। जातिपूर्वादिति वक्तव्यम्। तेन बहुनञ्सुकालसुखादिपूर्वान्न। ऊरुभिन्नी। नेह बहुक्रीता। जातान्तान्न। दन्तजाता। पाणिगृहीती भार्या
याम्। पाणिगृहीताऽन्या। अस्वाङ्गपूर्वपदाद्वा। ४।१।५३। पूर्वेण नित्ये प्राप्ते विकल्पोऽयम्। सुरापीती। सुरापीता। अन्तोदात्तात्किम्। वस्त्रच्छन्ना। अनाच्छा
दनादित्युदात्तनिषेधः। अत एव पूर्वेणापि न ङीष्। स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। ४।१।५४। असंयोगोपधमुपसर्जनं यत्स्वाङ्गं त
दन्तादन्तात्प्रातिपदिकाद्वा ङीष्। केशानतिक्रान्ता। अतिकेशी। अतिकेशा। चन्द्रमुखी। चन्द्रमुखा। संयोगोपधात्तु सुगुल्फा। उपसर्जनात्किम्
। शिखा। शोभना शिखा। सुशिखा॥ ॥ ९९ तद्विलेपनस्याप्यल्पत्वमवश्यं भवतीति समुदायोपाधित्वमल्पत्वस्य संगच्छत इति। तेन बह्वीति। अयं भा

वः। बहोर्नञ्वदुत्तरपदभूम्नि। नञ्सुभ्याम्। जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्ना इति स्वरतोऽदात्तविधायकानि। तत्र जातिपूर्वादित्युक्ते बह्वादिभ्य
र्वकस्यार्थाद्युदास इति सुखादिपूर्वान्नेति। सुखादिभ्यः कर्तृवेदनायामित्यत्र ये पठिताः सुखदुःखकृच्छ्रादयस्ते गृह्यन्ते। सुखयाता। दुःखयाता। सुखं दुःखं वा यातं प्रा
प्तमनयेति विग्रहः। अस्वाङ्गपूर्वपदाद्वेति विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमाह। ऊरुभिन्नीति। भिन्नौ ऊरू यस्या इति बहुव्रीहौ भिन्नशब्दस्य

णनितिन्यायादित्यर्थः।उरःक्रोडेति।स्त्रीलिंगोयमितिहरदत्तादयः।तत्रोपसर्जनह्रस्वत्वे कृते अदंतत्वान्ङीषःप्राप्तिः।अमरस्तु नानाक्रोडंभुजांतरमित्याहरत्नपतिस्तु पुल्लिंगतामाह।गणेचक्रोडेतिप्रातिपदिकमात्रंपठ्यते नतु टावंतमितिगणरत्नमहोदधिकारः।एवंचाऽविशेषाल्लिंगत्रयेप्युदाहरणं बोध्यं।माधवस्तु नखादिगणे क्रोडं निमज्जनइतिधातौवाह।क्रोडः।घञ्।क्रोडा।अश्वानामुरः।टावंतोयंस्वभावतो विशेषविषयः।क्रोडादिषु टावंतमात्रस्य पाठात्।भुजांतरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौस्वांगलक्षणो ङीषविकल्पो भवत्येव।कल्याणक्रोडा।कल्याणक्रोडी।मयूरीतिकेशैःसहवर्ततइतिसकेशा।अविद्यमानाःकेशाःयस्याःसाअकेशा।शूर्पणखेति।पूर्वपदात्संज्ञायामितिणत्वं।यदातु शूर्पवन्नखानियस्याइतियोगमात्रंविवक्ष्यते नतु संज्ञा ततोऽसंज्ञात्वान्न ङीषनिषेधो नवाणत्वं तेन राक्षस्यपियोगवृत्त्या शूर्पनखी

जातेरस्त्रीविषयादयोपधात्।४।१।६३।।जातिवाचियन्नचस्त्रियांनियतमयोपधन्ततःस्त्रियांङीषस्यात्।आकृतिग्रहणाजातिः।अनुगतसंस्थानव्यंग्येत्यर्थः।तटी।लिङ्गानाञ्चनसर्वभाक्।सकृदाख्यातनिर्ग्राह्या।असर्वलिङ्गत्वेसत्येकस्यांव्यक्तौकथनाद्व्यक्त्यन्तरेकथनंविनापिसुग्रहाजातिरितिलक्षणान्तरं।वृषली।सत्यन्तंकिं।शुक्ला।सकृदित्यादिकिं।देवदत्ता।गोत्रञ्चचरणैःसह।।अपत्यप्रत्ययान्तःशाखाध्येतृवाचीचशब्दोजातिकार्य्यंलभतइत्यर्थः।औपगवी।कठी।बह्वृची।ब्राह्मणीत्यत्रतुशार्ङ्गरवादिपाठान्ङीन्वाध्यते।जातेःकिं।मुण्डा।अस्त्रीविषयात्किं।बलाका।अयोपधात्किं।क्षत्रिया।योपधप्रतिषेधेहयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः।हयी।गवयी।मुकयी।हलस्तद्धितस्येतियलोपः मनुषी।मत्स्यस्यङ्यां।।मत्सी।।

९९ तिभवतीत्याहुः।ङीषोङीवादेशइति।अन्यतोङीषित्यतोङीषित्यनुवर्तते।दिक्पूर्वपदादितिपंचम्याङीतिप्रथमायाःषष्ठीकल्प्यतेइतिभावः।यदितुस्वतंत्रोङीप्स्यात्तर्हिप्रागुक्ताप्राक्त्रोडेत्यत्रापिप्रसज्येत।पूर्वोक्तासंयोगोपधादित्यस्यनिषेधानौचावरत्नौप्रतिपत्तिगौरवमितिभावः।वाहः।ण्विप्रत्ययांतस्यवहेरनुकरणमिदं वहश्चेत्यनेनकर्मण्युपपदएववहेर्ण्विप्रत्ययविधानात्केवलस्यसंभवोनास्तीतिसामर्थ्यात्तदंतविधिरित्यभिप्रेत्याह।वाहंतादिति।नङीविति।अस्वरितत्वादितिभावः।दित्यौहीति।ङीपिसंज्ञायांवाहऊठ्संप्रसारणांचेति।पूर्वैरूपे एत्येधत्यूठ्स्विति वृद्धिः।सख्यशिश्वीतिसखिशब्दादपि शिशुशब्दाच्च ङीष्निपात्यते।नविद्यतेशिशुर्यस्याःसाअशिश्वी।भाषायांकिं।सखा।सप्तपदीभव।।*।।जातेरस्त्री।जात्याख्यवाचकशब्दोत ।।



।।

स्वांगंत्रिधेति। मूर्तिमदिति। स्पर्शवत् द्रव्यपरिमाणं मूर्तिः। प्राणीति। मुखनासिकासंचारी वायुः प्राणः। सुमुखा शालेति। एवं च फलमुखी। कारणमुखी चानवस्थेत्या
दिप्रयोगाः साधवः इति भावः। प्रतिमादिगतस्तनस्य प्राणिन्यदृष्टत्वात्स्वांगत्वेन प्राप्तेरित्तृतीयलक्षणमाह। तेन चेदिति। येनांगेन प्राणिरूपं वस्तु यथायुक्तं

स्वाङ्गं त्रिधा। अद्रवन्मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजं। सुस्वेदा। द्रवत्वात्। सुज्ञाना। अमूर्तत्वात्। सुमुखा शाला। अप्राणिस्थत्वात्। सुशोफा। विका
रजत्वात्। अतत्स्थं तत्र दृष्टं च। सुकेशी। सुकेशा वा रथ्या। अप्राणिस्थस्याऽपि प्राणिनि दृष्टत्वात्। तेन चेत्तत्तथायुतं। सुस्तनी। सुस्तना वा प्रति
मा। प्राणिवत्प्राणिसदृशे स्थितत्वात्। नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च। ४।१।५५॥ एभ्यो वा ङीष् स्यात्। आद्ययोर्बह्वज्लक्षणो निषेधो
बाध्यते परस्तादपवादन्यायात्। ओष्ठादीनामस्वाङ्गानां तु असंयोगोपधादिति पर्युदासे प्राप्ते वचनं मध्येऽपवादन्यायात् सहनञ्लक्षणस्तु प्रतिषे
धः परत्वादस्य बाधकः। तुङ्गनासिकी। तुङ्गनासिका। इत्यादि। नेह। सहनासिका। अनासिका। अत्र वृत्तिः। अङ्गगात्रकण्ठेभ्यो वक्तव्यं। स्वङ्गी। स्वङ्गा इत्यादि।
एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित्। भाष्याद्यनुक्तत्वादप्रमाणमिति प्रामाणिकाः। अत्र वार्त्तिकानि। पुच्छाच्च। सुपुच्छी। सुपुच्छा। कबर
मणिविषशरेभ्यो नित्यं॥ कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरी इत्यादि॥ उपमानात्पक्षाच्च पुच्छाच्च नित्यमित्येव। उलूकपक्षी शाला। उलूकपुच्छी
सेना। न क्रोडादिबह्वचः। ४।१।५६॥ क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। अश्वानामुरः क्रोडा। आकृतिगणोऽयं। सुजघना। सहनञ्विद्य
मानपूर्वाच्च। ४।१।५७॥ सहेत्यादित्रिकपूर्वान्न ङीष्। सकेशा। अकेशा। विद्यमाननासिका। नखमुखात्संज्ञायां। ४।१।५८॥ ङीष् न स्यात्। शूर्पणखा।
गौरमुखा। संज्ञायां किं। ताम्रनखी। कन्या। दिक्पूर्वपदान्ङीप्। ४।१।६०॥ दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात्। प्राङ्
मुखी। आद्युदात्तम्पदं। वाहः। ४।१।६१॥ वाहन्तात्प्रातिपदिकान् ङीष् स्यात्। ङीषेवाऽनुवर्त्तते न ङीप्। दित्यवाट्। च मे। दित्यौही च मे सख्यशिश्वीति भा
षायां। ४।१।६२॥ इति शब्दः प्रकारे भाषायामित्यस्याऽनन्तरं द्रष्टव्यः छन्दस्यपि क्वचित्। सखी। अशिश्वी। आधेनवो धुनयन्तामशिश्वी॥ ॥

तेन तत्सदृशेनांगेन तत् अप्राणिरूपं वस्तु तथा प्राणिवद्युतं यत्तं चेत्तदप्यप्राणिनि दृष्टं स्वांगमित्यर्थः। मध्येऽपवादेति। मध्येऽपवादाः पूर्वान् विधीन् बाधंते नोत्त

यह्वामानामाधिगीष्टतद्दृश्यत्वान्ताच्छब्दं भविष्यति यथाऽनधीयानेपिमाणवको ब्राह्मणीत्यत्रेति। एवंचप्राचोङीषुदाहरणंग्रामादिकमितिभावः। मुंडेति। मुंडगु
णयोगान्मुंडा। बलाकाविसकंटिका। क्षत्रियेति। क्षत्राद्घइत्यपत्येविधानाद्गोत्रलक्षणालिंगानां चनसर्वेत्यादिलक्षणावाजातिः। योपधप्रतिषेधइत्यादि। गौणादिगुग
वयादयइदानींतनैःप्रक्षिप्ताइत्यस्मादेववार्तिकाद्विज्ञायतइतिकैयटादयः॥ ॥ पाककर्णाजातेरित्यनुवृत्तेनेह। बहुपुष्पा। बहुफला शाखा। एवंहिसर्वेणैवसिद्धे
किमनेनसूत्रेणेत्याशंक्याह। स्त्रीविषयादपीति। इतोमनुष्यादितः। किं। विट्दरद्। विट्शब्दात् क्षत्रियाद्ञित्यत्रादरच्छब्दात्वनुव्यञ्मगधेत्यणा तयोरतश्चेतिलुक्।
यस्तुवैश्यपर्यायोविट्शब्दः सोपिप्रत्युदाहरणमित्याहुः। दाक्षीति। अतइञ्। गोत्रलक्षणाजातिः। अदंतत्वाभावादप्राप्तोङीष्विधीयते। योपधादपीति। जातेरित्य

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च। ४।१।६४॥ पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपिङीष्स्यात्। ओदनपाकी। शङ्कुकर्णी।
शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। ओषधिविशेषेरूढा एते। इतोमनुष्यजातेः। ४।१।६५। ङीष्स्यात् दाक्षी। योपधादपि।
उदमेयस्याऽपत्यं। औदमेयी। मनुष्येतिकिं। तित्तिरिः। ऊङुतः। ४।१।६६। उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ्स्यात्। कुरूः।
कुर्वादिभ्योण्यः। तस्यस्त्रियामवन्तीत्यादिनालुक्। अयोपधात्किं। अध्वर्युः। अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानं॥ रज्ज्वादिपर्युदासा
दुवर्णान्तेभ्यएव। अलाबूः। कर्कन्धूः। अनयोर्दीर्घान्तत्वेऽपिनोङ्धात्वोरितिविभक्त्युदात्तत्वप्रतिषेधऊङः फलं। प्राणिजातेस्तु। कृकवाकुः।
रज्ज्वादेस्तु। रज्जुः। हनुः। बाह्वन्तात्संज्ञायां। ४।१।६७॥ स्त्रियामूङ्स्यात्। भद्रबाहूः। संज्ञायांकिं। वृत्तबाहुः॥ ९९ नुवर्तमानेपुनर्जातिग्रहणादि
तिभावः। उदमेयस्येति। उदकंमेयंयस्यउदमेयः। उदकस्योदः संज्ञायामित्युदादेशः। इञ्। उपसंख्यानं। अजात्यर्थं। सोतंगमी। निर्वृत्ताद्यर्थेवुञ्छणादिसूत्रेण
सुतंगमादिभ्यइञ्। नचायमित्रं। ततोजातिः। ऊङुतः। उकारेणोङ्धात्वोरितिविशेषणार्थः। अन्यथायवागूयवाग्वैइत्यत्रापिसनिषेधः स्यात्। दीर्घोच्चारणात्तु
श्वश्रूशब्दार्थमन्यत्रसवर्णदीर्घेणापिसिद्धेः। कुरूरिति। लिंगविशिष्टपरिभाषयास्वादयः। अत्रव्याचक्षते। यद्येकादेशस्यपूर्वान्तत्वेनग्रहणात्स्वादयइतिव्या
ख्यायतेनर्हिकांडेकुड्ये। इत्यादावपिएकवचनमुत्सर्गतइतिसुः प्रवर्तेततद्वारणायअप्रत्ययइतिप्रसज्यप्रतिषेधाभ्युपगमेतुप्रकृतेदोषः। श्वश्रूरित्यत्रएकादेश।

स्यते अर्थेकार्यासंभवात्स्वरूपंतु न गृह्यते। अस्त्रीविषयत्वादित्यादेर्वैयर्थ्यापत्तेरित्याशयेनाह। जातिवाचियदिति। आकृतिग्रहणेति। ग्रहणमितिकरणेल्युट्। सा
मान्येन पुंसकं। आकृतिर्ग्रहणं यस्या इति बहुव्रीहिस्तदेतत्फलितमाह। अनुगतसंस्थानेत्यादि। वृषलेब्राह्मणादिव्याप्तसंस्थानाभावादव्याप्तिरितिलक्षणांतर
माह। लिंगानांचेत्यादि। चकारोभिन्नक्रमः निर्ग्राह्येत्यस्यानंतरंबोध्यः। लिंगानामितिकर्मणिषष्ठी। न सर्वभाक् सर्वाणिलिंगानिनभजतीत्यर्थः। सर्वशब्दस्यलिंगा
पेक्षत्वेपिगमकत्वान्नजो णिवसमासस्यभवत्येवेतिनात्रसामर्थ्याभावः शंक्यः वृषलीति। एकस्यांहिव्यक्तौवृषलत्वेकथितेतदपत्यतत्सहोदरादौकथनंविना
पितस्यसुग्रहत्वादितिभावः देवदत्तेतिनत्वत्रपरिमाणभेदेनद्रव्यभेदाभ्युपगमेस्यादेवातिप्रसंगः। एकस्यांव्यक्तौदेवदत्तत्वेकथितेव्यक्त्यंतरेकथनं विनापित
स्यसुग्रहत्वात्तमेवंपरिमाणभेदेनद्रव्यभेदस्याप्रामाणिकैरनभ्युपगमात्। अभ्युपगमेवासमानकालतया व्यक्त्यंतरस्यविशेषणात्तथाचयस्यांव्यक्तौदेवदत्त
त्वंकथ्यतेतत्समकालमन्यादेवदत्तव्यक्तिरप्रसिद्धेतिनदेवदत्तत्वंजातिः। वृषलत्वादिस्तुभवत्येवतदीयपितृभ्रात्रादिषुतस्यसुग्रहत्वादितिदिक्। उक्तलक्ष
णद्वयाऽनाक्रांततत्वात्तृतीयंलक्षणमाह। गोत्रंचचरणैःसहेति। अपत्याधिकारादन्यत्रलौकिकंगोत्रं। चरणाःशाखाध्येतारः। तदेतत्फलितमाह। अपत्यप्रत्ययां
तइत्यादि। अत्रव्याचख्युः। नाडायनंवह्वृचमिदमितिनपुंसकप्रयोगदर्शनात्सर्वलिंगोगोत्रचरणौ। अतः पृथक्लक्षणंकृतं। तेनात्रलिंगानांचनसर्वभागि
तिद्वितीयलक्षणेनगतार्थतानशंक्येति। औपगवीति। असंततलक्षणंङीपपरत्वादयंबाधते। एवंचापत्याधिकारेऔपगवीतिप्रतीकमुपादायपटिद्धाणञित्या
दिनाङीविति व्याचक्षाणाउपेक्ष्याइतिभावः। केचित्तुअपत्याधिकारादुत्तरत्रैवलौकिकगोत्रंगोत्रशब्देनगृह्यतेनान्यत्रपारिभाषिकगोत्रप्रत्ययांतएवजातिकार्यं
लभतेनत्वपत्यप्रत्ययांतः। गोत्रंचचरणैःसहेतिवचनस्यापत्याधिकारात्पूर्वभावित्वात्। तथाचापत्यार्थेऔपगवीतिङीवंतइतिप्राचामुक्तिःसम्यगेवेत्याहुः।
कठीति। कठेनप्रोक्तमधीयानावाकलापिवैशंपायनांतेवासिभ्यश्चेतिवैशंपायनांतेवासित्वाण्णिनिस्तस्यकठचरकाल्लुगितिलुक्। अध्येत्रणस्तुप्रोक्ताल्लुगित्य
नेनावह्वृचीति। बह्वृचः ऋचोऽध्येतव्यायस्यासेतिबहुव्रीहिः। अन्वचबह्वृचावध्येतर्येवेतिवचनादृक्पूरब्धूरितिअप्रत्ययः समासांतः। यद्यपिस्त्रीणामध्य
यनंप्रतिषिद्धंतथापिपुराकल्पेत्वेतदासीत्। तदाहयमः। पुराकल्पेषुनारीणांमौंजीबंधनमिष्यते। अध्यापनंचवेदानांसावित्रीवचनंतथेति १

पिप्रामाणिकमेवा। शफाविवजभुराणेतिस्तृतेः। शफः खुरे गवादीनां मूले विटपिनामपीति हेमचन्द्रकोशात्। वामोरूरिति। वामौ सुंदरौ ऊरू यस्याः इति विग्र
हः। कथंतर्हि पीवरोरुपिवत्तीववर्हिणा इति कुमारः। ऊङभावे हि पीवरोरोइति स्यात्। ऊङश्चेह विधायकं नास्ति। अत्राहुः। संज्ञापूर्वकविधेरनित्यतया संवुद्धिगुणा
भाव इति स्थितस्य गतिरन्वेया। तिहितेन सहेति। समोवाहिततत्तयोरिति युत्यादितः सहितशब्दस्तु नेह गृह्यते एकदेशविकृततया सन्निहितग्रहणादेवतत्सिद्धेरि
तिभावः। कमंडलुरिति। चतुष्पाज्जातिवाचकोयं। अतएवचतुष्पाड्भ्योढञिति त्यत्रकामंडलेयइत्युदाहरिष्यति। पात्रपर्यायस्तु नप्रत्युदाहरणं तस्य स्त्रीलिंगाभावात्।
अकुंदोर्थमिति। विदेशुकद्रुकमंडल्वोश्छंदसीत्यनेन संज्ञामाम संज्ञायां च ऊङ् सिध्यतीति भावः। अञोऽकार इति। अञा अकारविशेषणं किं। शूरसेनी। जनपदशब्दा
दित्यञः। अतश्चेति तु किं जातिलक्षणो नङीष्॥ ॐ॥ शार्ङ्गरवीति। शृङ्गरु शब्दादपत्येऽण्। आदिवृद्धिर्गुणः। टिड्ढाणञिति ङीपं बाधित्वा परत्वाज्जातेरि

शार्ङ्गरवाद्यञोङीन्॥४।१।७३॥ शार्ङ्गरवादेरञोऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्। शार्ङ्गरवी। वैदी। जातेरित्यनुवृत्तेः पुंयोगे ङीषेव।
नृनरयोर्वृद्धिश्चेति गणसूत्रं। नारी। यङश्चाप्॥४।१।७४॥ यङन्तात् स्त्रियां चाप् स्यात्। ष्यङ् ष्यङोः सामान्यग्रहणं। आम्बष्ठ्या। कारीषगंध्या
।षाच्चत्र चाप् वाच्यः॥ पौतिमाष्या॥ ११ तिङीषि प्राप्ते ङीन् विधीयते॥ शार्ङ्गरवकापटवाब्राह्मणा। गौगगुलवा। गौतमेत्यादि। शृंगरु कपटु ब्रह्मन्
गुगुलु शब्देभ्यः प्राग्दीव्यतोऽण्। गौतमशब्दस्त्वृष्यणंतः। अयं गोत्रादिष्वपि पठित इति पक्षे अत्र ङीषपि भवति। ङीषेवेति। जातेरित्यननुवृत्तौ तु शार्ङ्गरवस्य स्त्री
वदस्य स्त्रीति पुंयोगविवक्षायामपि परत्वान्ङीनेव स्यादिति भावः। नृनरयोरिति। नृशब्दात् ऋन्नेभ्य इति ङीपि नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनं। वृद्धि
विधानार्थं च। ननु नरशब्दे अलोन्त्यस्य वृद्धिः स्यात्। अत्राहुः। वार्णादांगं वलीय इत्यकारस्य यस्येति चेति लोपेनापहारात्। अनंत्यस्यापि अकारस्य वृद्धिर्भवतीति।
यद्वा। नरस्य अः नरः। अनंतवत् पररूपं। नाच नरश्च तयोर्नृनरयोः। परस्य च प्रथम एवाकारो गृह्यते न तु द्वितीयः। प्रश्लेषसामर्थ्यादिति। इह नरस्येत्यर्थवतो
ग्रहणाद्वा नरशब्देनातिप्रसंग इति वाच्यं। यद्यप्यन्यतरोपादानेनापि नारीति रूपं सिध्यति तथाप्यन्यतरस्यानिष्टरूपनिवृत्त्यर्थं द्वयोरुपादानं। कथंतर्हि किं
नरीणां नरीणामित्यादिप्रयोगः॥

भावाल्लिंगविशिष्टपरिभाषाया आवश्यकत्वाच्च। अत एव रमा इत्यत्र एकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादय इति मनोरमादौ न व्याख्यातमिति। अध्वर्युरिति। अध्वर्युशाखाध्येत्री अध्वर्युशाखाध्यायिवंशोद्भवेति वार्थः। चरणलक्षणोयं जातिः। अध्वरं यातीति विग्रहे मृगय्वादयश्चेत्यौणादिकेन अध्वरशब्दस्यान्त्यलोपः। याताः कुप्रत्ययश्च। अपर्युदासादिति। यदि सूत्रादुत इति पृथक्येत नहि अलाबवादा वूङ्‌ संभवो नेति भावः। अलाबवित्यादि प्रथमान्तं द्वितीयान्तं वा नोदाहृतं वक्ष्यमाण प्रयोजनस्य तत्रासंभवात्। नोङ्‌ धात्वोरिति। ऊङ्‌ धात्वोर्यणः परे शसादय उदात्ता न स्युरिति सूत्रार्थः॥ ०॥ पंगोश्च। अजात्यर्थमिदं। पंगुशब्दो हि गुणवाची। श्वशुरस्येति। पुंयोगलक्षणो ङीषि प्राप्ते ऊङ्‌ तत्सन्नियोगेन च विधीयमानो लोपः संनिहितत्वात् अन्तस्यैवाकारस्य न त्वादेः एतच्च वचनेन श्वशुरः श्वश्रूरिति निर्देशासि

पङ्गोश्च। ४। १। ६८॥ पङ्गूः। श्वशुरस्योकाराकारलोपश्च॥ वा० ॥ ऊङ्‌॥ पुंयोगलक्षणस्य ङीषोऽपवादः। लिङ्गविशिष्टपरिभाषया स्वादयः। श्वश्रूः। ऊरूत्तरपदादौपम्ये। ४। १। ६९॥ उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ्‌ स्यात्। करभोरूः॥ संहितशफलक्षणवामादेश्च। ४। १। ७०॥ अनौपम्यार्थं सूत्रं संहितोरूः। सैव शफोरूः। शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात्। लक्षणशब्दादर्शआद्यच् लक्षणोरूः वामोरूः सहितसहाभ्यां चेति वक्तव्य॥ हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः॥ सहेते इति सहौ ऊरू यस्याः सा सहोरूः। यद्वा। विद्यमानवचनस्य सहशब्दस्य उर्वतिशयप्रतिपादनाय प्रयोगः। संज्ञायां। ४। १। ७२॥ कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ्‌ स्यात्। कद्रूः। कमण्डलूः। संज्ञायां किं। कद्रुः। कमण्डलुः। छन्दोर्थमिदं वचनं॥ ११

द्वार्थकथनपरं। अतोपि प्रथमाकारस्य लोपो न शंक्यः। ऊरूत्तरपदा। उपमीयतेऽनयेत्युपमा तस्याः भावः औपम्यं। उत्तरपदेन पूर्वपदमिहाक्षिप्यते— तदेतत्फलितमाह। उपमानवाचि पूर्वपदमिति। करभोरूरिति। मणिबन्धादाकनिष्ठं करस्य करभो बहिस्तद्वदूरू यस्याः सा। धात्रीकराभ्यां करभोपमोरूरित्यत्र तूङ्‌ न। करभशब्दस्योपमानवाचित्वेपि पूर्वपदत्वाभावात्। औपम्ये किं। वृत्तोरूः। उर्वन्तादिति वक्तव्ये उत्तरपदग्रहणं हस्तिस्वाम्यूरूरित्यत्र माभूदित्येवमर्थं। अत्र हि हस्तिन इव स्वाम्यूरू अस्या इति विग्रहः। तया चोर्वन्तत्वेपि ऊरूत्तरपदत्वमिह नास्ति। स्वाम्यूरुशब्दस्यैवोत्तरपदत्वात्। संहित। संहितादिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ्‌ स्यात्। शफाविति। यद्यप्यमरेण शफं क्लीबे खुरः पुमानिति नपुंसकत्वमुक्तं तथापि शफ

यूनस्तिः। अत्रेभ्य इति ङीपोपवादः। युवतिरिति। स्वादिष्विति पदत्वान्नलोपः। कथं तर्हि युवतीकरनिर्मथितं मथितमिति प्रयोगः। अत्र केचित्। सर्वतोक्तिन्नर्थादिति वक्ष्या दिगणसूत्रात् ईकल्पिकोङीष्। न च तिप्रत्ययेनैव स्त्रीत्वस्योक्तत्वान्ङीष् न भविष्यतीति शंक्यं। उक्तेपि भवत्येवेति भाष्यात्। नन्वेवमपि युवतीनां समूहो यौवतमिति न सिध्येत्। किंतु तस्य समूह इत्यणि भस्याढे तद्धित इति पुंवत्भावेन यौवनमित्येव स्यादिति वाच्यं। बाहुलकाद्यौतेरौणादिके कति प्रत्यये सति युवतिशब्दस्तमादायन्त सिद्धेरि ति। इमं क्लेशं परिहरन्नाह। शत्रन्तादिति। यौतिमिश्रीकरोति पत्येति विग्रहे लटः शतृशानचावितिशतरि उगितश्चेति ङीप् एवं हि यौवतमिति प्रयोगोपि सुलभः। त्यंतादणि

यूनस्तिः। ४। १। ७७॥ युवन्शब्दात्तिप्रत्ययः स्यात्स च तद्धितः। लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः। युवतिः। अनुपसर्जनादि त्येव। बहवो युवानो यस्यां सा। बहुयुवा। युवतीति तु यौतेः शत्रन्तान्ङीपि बोध्यं॥ इति स्त्रीप्रत्ययाः॥ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्र थमा। २। ३। ४६॥ नियतोपस्थितिकः प्रातिपदिकार्थः। मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामा त्रे च प्रथमा स्यात्। उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानं। अलिङ्गा नियतलिङ्गाश्च प्रा‾तिपदिकार्थमात्र इत्यस्योदाहरणं। अनियतलिङ्गास्तु लिङ्गमात्राद्या धिक्यस्य। तटः। तटी। तटं। परिमाणमात्रे। द्रोणो व्रीहिः। द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संस र्गेण विशेषणं। प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः। वचनं संख्या। एकः। द्वौ। बहवः। इहोक्तार्थत्वाद्विभक्तेरप्रा प्तौ वचनं॥ सम्बोधने च। २। ३। ४७॥ इह प्रथमा स्यात्। हे राम। कारके। १। ४। २३। इत्यधिकृत्य॥ ९९ तु पुंवद्भावाद्यौवनमित्येव॥ भिक्षादिपाठसामर्थ्यान्न पुं

वदिति चेत्ति कारोक्तिरयुक्तेति भिक्षादिभ्योऽणित्यत्रैवोपपादयिष्यामः॥ इति स्त्रीप्रत्ययाः॥ स्वौजसमौ ङिस्यादिना तावत्स्वादयोऽष्टा प्रातिपदिकाद्दर्शिताः। तेषामर्थविशेषे व्यवस्थां दर्शयितुमारभते। प्रातिपदिकार्थेत्यादिना। प्रथमादयः सप्तम्यंताः प्राचां संज्ञाः। ताभिरिहापि व्यवहारः इति स्वौजसमौ ङिति सूत्रे मूलकृतोक्तं। कौस्तुभे तु इह प्रथमादय शब्दाः सुपां त्रिके त्रिके वर्तंते समंस्यादश्रुतत्वादिति न्यायादित्युक्तं। तथा च न्यायसिद्धत्वादस्मिन् शास्त्रे प्रथमादिसंज्ञानामकरणेपि न क्षतिरिति ज्ञेयं। यदा हि पंचकं प्रातिपदिका र्थ इति पक्षस्तदा ततो लिंगवचनग्रहणमनर्थकं प्रातिपदिकार्थ इत्येव सिद्धेः मात्रग्रहणाच्च कर्मादिव्यवच्छेदो न स्यात् प्रातिपदिकार्थादनतिरिक्तत्वा ॥ ॥

अत्राहुः। नरस्य स्त्री नारी पुंयोगलक्षणो ङीष्। केचित्तु। अनिर्दिष्टस्थानिकत्वादिक्परिभाषोपस्थितौ नृशब्दस्यैव वृद्धेर्नारीति भवति। नरशब्दस्य ग्रहणं तु ङीनर्थमेव तन्ना
निको वृद्ध्यभावान्नरीत्येव भवितव्यमित्याहुः। तदपरे न क्षमंते। यदि ङीनर्थमेव नरशब्दग्रहणं स्यात्तर्हि शार्ङ्गरवादिगणे पृथगेव पठेत्। वृद्धिविधायके तद्ग्रहणं सूत्रे
तत्पाठस्य वैयर्थ्यापत्तेरिति। पुत्रशब्दो न गणे पठ्यते ततः स्त्रियां ङीन्। पुत्री। न च पुत्रशब्दः कन्यायां नास्तीति शंक्यं। आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।
आहुर्दुहितरं सर्वे इत्यमरोक्तेः। तेन पुत्रीव हर्षं हृदयं तनोति। कुर्वंतु देवी पतिपुत्रि सर्वमित्यादिप्रयोगा निर्बाधा एव। यत्त्वत्र हरदत्तेनोक्तं। केवलः पुत्रशब्दः स्त्रियां ना
सीति। तदुपेक्ष्यं। उदाहृतकोशविरोधात्। सूतिकापुत्रिकेत्यत्र स्वग्रंथविरोधाच्च। एवं च सतोयराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वेति कारे सत्यागदस्येति सूत्रस्थवा
र्त्तिकं व्यर्थमिति मनोरमायां स्थितं। यङश्चाप्। पकारोत्र हलङ्याब्भ्य इति सामान्यग्रहणार्थः। चकारस्तद्धितः तेन चरितार्थत्वेपि परत्वाच्चित्स्वरः पित्स्वरं बाधते ॥

आवट्याच्च ॥४।१।७५॥ अस्माच्चाप् स्यात्। यञश्चेति ङीषोऽपवादः। अवटशब्दो गर्गादिः। आवट्या। तद्धिताः ॥४।१।७६॥ आपञ्चमसमाप्तेर
धिकारोऽयं ॥

॥ः॥ आवट्येति। अवटस्यापत्यं स्त्री वृद्धेत्कोसलेति ञ्यङ्। कारीषगंध्येति। करीषस्येव गंधोऽस्य करीषगंधिः। उपमानाच्चेति गंध
स्येदंतादेशः। तस्य गोत्रापत्यं स्त्री अण्। अणिञोरनार्षयोरिति ष्यङादेशः। स च यद्यपि स्त्रियामेव विहितस्तथापि ङित्करणसामर्थ्यात्तदंतादप्यर्थं चाप्। चाप्यञ्
इति। एतच्च आवट्याच्चेति चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यत इत्याहुः। पौतिमाष्येति। पूतिमाषशब्दो गर्गादिः। तद्धिताः। बहुवचनमनुक्तानामपरिसंख्येयानां सं
ग्रहार्थं। महासंज्ञाकरणं तु तेभ्यः प्रयोगेभ्यो हितास्तद्धिताः। इत्यन्वर्थलाभाय। तेन यथाप्रयोगमेव स्युः। ननु टापः प्रागेवायमधिकारोऽस्तु। किं विधौ तद्धितग्रहणं
यस्येति लोपे ङ्ग्रहणं च मास्त्विति चेन्मैवं। पद्वी मृद्वीत्यादावोर्गुणप्रसंगात्। यदि तु यस्येति चेत्यत्र ई ङ्ग्रहणमेव ङीषि तद्धितकार्याभावं ज्ञापयतीति स्वीक्रियेत तर्हि
टापः प्राक् तद्धिताधिकारेऽपि न काप्यदोष इति केचित्तच्चिंत्यं। कुरूरित्यादौ ओर्गुणादिति गणप्रसंगादिति नव्याः॥

त्रिकपक्षेपि लिंगग्रहणमनर्थकमेवेत्याशंक्य विवक्षितं दर्शयति। नियतोपस्थितिक इति। यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः। शक्य इति यावत्। नन्वेवं सिंहो माणवक इत्यादौ प्रथमा न स्यात्। अत्राहुः। शक्यार्थमादाय प्रथमाविभक्तौ उत्पन्नायां पश्चात्पदान्तरसमभिव्याहारेण लक्ष्यार्थबोधेपि क्षत्यभावादिति। मात्रशब्दस्येति। तस्य चात्रावधारणमर्थः। मात्रं कार्त्स्न्येऽवधारणे इत्यमरः। प्रातिपदिकार्थलिंगपरिमाणवचनान्येव प्रातिपदिकार्थलिंगपरिमाणवचनमात्रमित्येवकारेण स्वपदविग्रहः। समासस्तु मयूरव्यंसकादित्वाद्बोध्यः। प्रत्येकमिति। द्वन्द्वान्ते श्रूयमाणत्वादिति भावः। ननु वीरः पुरुष इत्यादौ अभेदसंसर्गस्याधिकस्य भानात्प्रथमा न स्यात्। न च पूर्वापरेत्यादिना वीरशब्दस्य समासविधानं प्रथमोत्पत्तौ लिंगमिति वाच्यं। द्वितीयाद्यन्तानामपि वीरं पुरुषमानयेत्यादौ तद्विधानस्य चरितार्थत्वादिति चेन्न। संसर्गस्य वाक्यार्थत्वेन बहिरंगत्वात् प्रथमं प्रवृत्तसंस्कारबाधानुपपत्तेः पदसंस्कारपक्षस्यैवेहाभ्युपगमात्। मात्रपदेन धर्माद्याधिक्ये प्रथमा न भवेदपि लिंगपरिमाणग्रहणाल्लिंगाधिक्ये परिमाणाधिक्ये च भवेदेवेत्याह लिंगमात्राद्याधिक्य इति। यद्यपि लिंगमात्रे परिमाणमात्रे इत्येवाक्षरार्थस्तथापि प्रातिपदिकार्थं विना लिंगादिप्रतीतेरसंभवादिति तदाधिक्य इत्युक्तं। उच्चैरिति। पदत्वादिह रुत्वविसर्गौ भवतः। किं च। अस्य प्रथमान्तत्वात् ग्राम उच्चैस्तव स्वं ग्राम उच्चैस्ते स्वमिति सपूर्वाया इति सूत्रेण तेमयादेशयोर्विकल्पसिद्धिरपि फलं। कृष्ण इति। यद्यपि नीलद्रव्येऽयमनियतलिंगस्तथापि वासुदेवे भगवति नियतपुल्लिंग इति भावः। ज्ञानमिति। भावे ल्युडन्तः। तटस्तटी तटमिति। त्रिकपक्षे नियतलिंगं न प्रकृत्यर्थः। द्विकपक्षे तु यद्यपि प्रकृत्यर्थस्तथापि तल्लिंगस्य पाक्षिकोपस्थितिकत्वान्न प्रातिपदिकार्थत्वेनेन गतार्थता। द्रोण इति। न चेह प्रातिपदिकार्थमात्र इत्येव प्रथमास्त्विति वाच्यं। तथा सति परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानायोगात्। नामार्थयोरभेदसंसर्गस्य व्युत्पन्नत्वात्। व्रीहिरिति। जातावेकवचनं। व्यक्तिविवक्षायां तु द्रोणो व्रीहय इति भवत्येव। अभेदेनेति। न च प्रकृतिप्रत्ययार्थयोरभेदान्वयो दुर्लभः पचति पावक औपगव इत्यादौ सर्वत्र भेदान्वयस्यैव दृष्टत्वादिति वाच्यं। देवतार्थकतद्धितादावभेदान्वयस्य दृष्टत्वात्। ऐन्द्रं हविरित्यत्र हि इन्द्रदेवताकं हविरिति बोधः सर्वैरेवाभ्युपगम्यत इति नास्ति शंकावसर इति भावः। वचनं संख्येति। वाच्यवाचकयोरभेदाध्यवसायेन तथैव पूर्वाचार्याणां व्यवहारादिति भावः। अप्राप्ते वचनमिति। सूत्रे वचनग्रहणमित्यर्थः। वस्तुतस्तु सूत्रे मात्रग्रहणं व्यर्थं। विशेषविहिते कर्मणि द्वितीये।

तितथाप्यप्रत्ययसाहचर्येणएरचएव तत्रोपादानान्नाल्लिथाथादिस्वरेणात्तत्सिद्धिरित्याहुः। अन्वर्था चेयं संज्ञा करोतीति कारकमिति। तेन ब्राह्मणस्य पुत्रं पन्थानं पृच्छती त्यत्र क्रियाअनन्वयिनो न भवति। ब्राह्मणो ह्यत्र पुत्रविशेषणं न तु क्रियान्वयीति। पयसेति। ननु क्रियां प्रति पयसः प्रकृष्टोपकारकत्वेपि ओदन एवात्र ईप्सिततमः पयस्तु सं स्कारकत्वात्करणं न ह्यसौ केवल पयसः पानेन संतुष्यति। किंतु तत्संस्कृतेनोदनेन। यदा तु पय एव ईप्सिततममस्य भवति तदा कर्मत्वं भवत्येव पयः पिबतीति। कर्मेत्यनुवृ त्तौ विज्ञेः। अधिशीङ्स्थासां कर्मेति सूत्रात्॥ ॥ अनभिहितेति। ननु वकुपडुरित्यादौ वकुच प्रत्ययेनोक्तार्थत्वात्कर्त्यवाद्योः यथा न प्रवर्त्तते तथा क्रियते कट इत्या दावपि तिङादिभिरुक्तार्थत्वाद्द्वितीया न भवति। किंच कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कट इत्यादौ निरवकाशया प्रथमया बाधिष्यते। न च वृक्षः प्लक्ष इत्या दि प्रथमाया अवकाशः तत्रापि प्रतीयमानामस्ति क्रियां प्रति कर्तृत्वेन तृतीयाप्रसंगात्। अथोच्यते। नीलमिदं न तु रक्तमित्यादौ विशेषणांतरनिवृत्तितात्पर्ये वा अ

अनभिहिते।२।३।१।इत्यधिकृत्य। कर्मणि द्वितीया।२।३।२। अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मणि प्रातिपदिकार्थमा त्र इति प्रथमैव। अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्। हरिः सेव्यते। कृत। लक्ष्म्या सेवितः। तद्धितः। शतेन क्रीतः शत्यः शतिकः। स मासः। प्राप्तआनन्दो यं स प्राप्तानन्दः। ः । क्वचिन्निपातेनाभिधानं। यथा विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसांप्रतं। सांप्रतमित्यस्य हि युज्य त इत्यर्थः। तथा युक्तं चानीप्सितं।१।४।५०। इप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। ग्रामं गच्छन् तृणं स्पृशति। ओद

नं भुंजानो विषं भुंक्ते॥

लिक्रियाया अनावश्यकत्वात् प्रथमाया अस्त्येवावकाश इति। तर्हि उभयोः सावकाशत्वे परत्वात् प्रथमैव स्यात्। तथा च अनभिहिता धिकारो व्यर्थ एवेति चेदत्राहुः। संख्याविभक्त्यर्थ इति पक्षे सूत्रारंभ आवश्यकः। तथाहि सूत्रारंभे कर्मणि द्वितीयेत्यस्यानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनं अम् इत्यर्थः। सूत्रानारंभे च कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमभिति हि वाक्यार्थः। तथा च सति कृतः कट इत्यादौ तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्त तया अम् इवी रः स्यात्। न च परत्वात् प्रथमैव स्यादिति वाच्यं कर्तव्यः कट इत्यादौ ततोपि परत्वेन कृद्योगलक्षणा षष्ठीप्रसंगात्। कारकं विभक्त्यर्थ इति पक्षे तु कारकस्य कृत्प्रत्ययादिनैवोक्तत्वात् प्रातिपदिकार्थ प्रवृत्ताया अथ प्रथमाया एकत्वादिबोधन संभवाच्चामादिविभक्तेरप्रवृत्तावनभिहितइति॥ ॥ ॥

त्ययंकर्ताप्रतीयतइतिभेत्तेत्यादावपिकर्त्ताप्रकृत्यर्थएवेतियुज्यतेवक्तुं।अतस्त्रिकमेवप्रातिपदिकार्थः संख्याकर्मादयस्तुविभक्त्यर्थाइतिलिंगंटावादिवाच्यमितिपक्षे
आदितोद्विकमेवेत्यन्ये।तत्रस्वार्थोविशेषणं।द्रव्यंविशेष्यं।लिंगंस्त्रीत्वादिः।संख्याएकत्वादिः।कारकंकर्मादिः।संबोधनेच॥मात्रग्रहणात्तत्प्रत्याख्यानपक्षेपिप्रा
तिपदिकार्थएवप्रथमेतिनियमाद्वासंबोधनाधिक्येऽप्राप्तावस्यारंभः।इहसंबोधनंप्रकृत्यर्थंप्रतिविशेष्यंक्रियांप्रतिविशेषणं।तथाचब्रजानिदेवदत्तेत्यादावेक
तिङ्वाक्यमितिवाक्यत्वेसिद्धेआमंत्रितस्यचेतिनिघातोभवति।क्रियांप्रत्यविशेषणत्वेतुभिन्नवाक्यत्वान्नैतत्सिध्येत्।समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्या
इतिवार्तिकात्।तथाचोक्तं।संबोधनपदंयच्चतत्क्रियायांविशेषणं।ब्रजानिदेवदत्तेतिनिघातोन्यथासतिइति।एवंचराममांपाहीतिवाक्यस्यरामसंबंधिसंबोधनवि
षयोमत्कर्मकंरक्षणमर्थः।ब्रजानिदेवदत्तेत्यत्रतुदेवदत्तसंबंधिसंबोधनविषयोमत्कर्तृकंगमनमर्थः॥इतिप्रथमा॥ ॥ ॥कर्तुरीप्सिततमंकर्म।कर्तुरितिक्तस्य
चवर्तमानइतिकर्तरिषष्ठी।आप्नोतेः सन्।द्वित्वं।आप्ज्ञप्यृधामीत्।अत्रलोपोभ्यासस्येत्यभ्यासलोपः।मतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्तः।मतिरिहेच्छा।नतुबुद्धिः

कर्तुरीप्सिततमंकर्म॥१।४।४९॥ कर्तुः क्रिययाऽऽप्तुमिष्टतमंकारकंकर्मसंज्ञंस्यात्।कर्तुः किं।माषेष्वश्वंबध्नाति।कर्मण ईप्सितामाषानतुक
र्तुः।तमब्ग्रहणंकिं।पयसाओदनंभुङ्क्ते।कर्मेत्यनुवृत्तौकर्मग्रहणमाधारनिवृत्त्यर्थं।अन्यथागेहंप्रविशतीत्यत्रैवस्यात् ॥ ॥ ॥

पुनर्बुद्धिग्रहणात्।ततोऽतिशायनेतमबिष्ठनावित्यतिशयेतमप्।एवंचकर्त्राऽऽप्तुमिष्यमाणतमंकर्मेत्यर्थः।कर्त्ताचधात्पात्तव्यापाराश्रयः। सचकेनाप्तुमिच्छति
इतिकरणाकांक्षायांविशेषणीभूतेनव्यापारेणेत्यर्थाल्लभ्यतेतदेतदाह।क्रिययेति।क्तप्रत्ययेनोपस्थितवर्तमानत्वंचेहनविवक्षितंतेनकटंकृतवान्करिष्यती
त्यादिसिद्धं।कारकमिति।एतच्चकारकेत्यधिकाराल्लभ्यतेतत्रहिव्यत्ययेनप्रथमार्थेसप्तमी।प्रतिसूत्रंवाक्यंभित्वाकारकसंज्ञाऽनेनविधीयते।तद्यथा।अपायेध्रुवं
कारकसंज्ञंस्यात्।ततोऽपादानं।उक्तंकारकमपादानंस्यात्।पुनःकारकशब्दानुवृत्तिसामर्थ्याद्विशेषसंज्ञाभिःसहसमावेशसिद्धिः।तेनस्तंबेरमइत्यत्राधिकरण
त्वात्सप्तमी।कारकत्वाद्गतिकारकोपपदात्कृदितिकृदुत्तरपदप्रकृतिस्वरश्चसिध्यति।अन्यथातत्पुरुषेतुल्यार्थेत्यादिनापूर्वपदप्रकृतिस्वरःस्यात्।नचात्रो
पपदस्वरेणान्यथासिद्धिःशंक्या।स्तंबकर्णयोरितिनिर्देशात्प्रातिपदिकस्योपपदत्वेपिसप्तम्यंतस्यातथात्वात्।यद्यपिइहयाथादिस्वरेणोवांतोदात्तत्वंसिध्य

आनंदकर्तृकप्राप्तिकर्मीभूत इत्यर्थः यदुक्तं प्रायेणेति तस्य फलमाह। क्वचिन्निपातेनेति। विषवृक्ष इति संबद्ध्यते। यत्र छेत्तुमित्यत्र चार्थात् द्विषद्वृक्षमिति गम्यत इति ध्ये
येति व्यज्यत इत्यर्थ इति एतेन निपातानां द्योतकत्वमेवेति नियमो नास्तीति ध्वनितं तथायुक्तं। तथेत्युक्ते कथं युक्तमिति जिज्ञासायामाह। ईप्सिततमवदिति। सूत्रे चश
ब्दोऽपि शब्दार्थे वर्तत इति ध्वनयन्नाह। अनीप्सितमपीति। ईप्सितादन्यदनीप्सितमिति पर्युदासोऽयं। तेन यद्द्वेष्यं यच्च द्वेष्यं तदुभयमपीह गृह्यत इत्याशयेनायमु
दाहरति। ग्रामं गच्छंस्तृणं स्पृशतीति। यथा स्पृश्यमानस्य गंगादेरीप्सितस्य क्रियायोगस्तज्जन्यसंयोगादिफलाधारत्वात् तथैवानीप्सितस्य तृणादेरपीति भावः।
इह हि ग्रामं गच्छतस्तृणस्पर्शनं नांतरीयकं तृणस्यानीप्सितत्वात्। यदा तृणमपीप्सिततमं भवति तदा पूर्वेणैव सिद्धं। उपेक्ष्यत्वं च नोपेक्षा बुद्धिविषयः। नदीकूलं कषती
त्यचेतनेन तदसंभवात्। किं तु यत्र स्नेहद्वेषयोरभावस्तदुपेक्ष्यमिति विवक्षितं। विषमिति। अत्र विषं द्वेष्यमप्योदनवद्भुजिना संबंधात्कर्म। ननु य एव पुरुषो व्याधा
दिनापीड्यमानो मरणमेव श्रेयो मन्यते तस्य विषमपीप्सितमेव। योऽपि भ्रांत्या भुंक्ते तस्यापि गुडादिवद्बुद्ध्याध्यवसीयमानं विषमीप्सितमेव। कथमन्यथा प्रवर्तेत
तस्मादुदाहरणमयुक्तमेवेति चेदत्राहुः यदा कश्चिन्मरणकातरोऽपि वैरिणा निरुध्यमानो विषं भुंक्ते तदेदमुदाहरणमिति। अनीप्सितग्रहणं स्पष्टप्रतिपत्त्यर्थं
तथायुक्तमिष्यत्यारंभादेवेष्टसिद्धेः स्यादेतत्। धातूपस्थाप्यफलाश्रयं कर्मेत्येवास्तु किमनेन कर्तुरीप्सिततममित्यादिसूत्रद्वयकथनेनेति चेत्। अत्राहुः। अ
ग्नेर्माणवकं वारयतीत्यत्र वारणार्थानामीप्सित इति सूत्रेण माणवकस्यापादानत्वं प्राप्तं तद्बाधाय कर्तुरीप्सिततममिति वक्तव्यमेव। एवं च द्वेष्योदासीनयोः संग्र
हार्थं तथायुक्तमित्यपि आवश्यकमेवेति ॥

सूत्रंप्रत्याख्यानमाकरेऽइति।कारकंप्रातिपदिकार्थइतिपक्षेत्वनभिहितइत्यस्याद्योत्यइत्यर्थः।तथाचक्तप्रत्ययादिभिरद्योत्येकर्मणिद्वितीयेत्यादिर्वाक्यार्थः।तत्रापि
एकेनद्योतितेद्योतकांतरंनप्रवर्ततइत्यभ्युपगमेत्वनभिहिताऽधिकारेणनातीवोपयुज्यतइतिदिक्।हरिंभजतीति।भजनक्रिययाहरेःप्रीतेरुत्पादात्प्रीतिविशिष्टत
याक्रियाव्याप्यत्वेनहरिःकर्मतद्विशिष्टंभजनंवाक्यार्थः।हरिनिष्ठप्रीत्यनुकूलएकदेवदत्तादिनिष्ठोवर्तमानोव्यापारइतिनिःकृष्टोर्थः।हरिःसेव्यतइत्यत्राप्ये
वमेवक्रियाप्रधानमाख्यातमितिसिद्धांतात्।धातूपस्थिताक्रियातिङर्थंप्रतिविशेष्यानतुतदर्थंप्रतीवविशेषणमितिहितस्यार्थः।अतएवपाचकोव्रजतीतिव
त्पचतिव्रजतीतिनैकंवाक्यंपाककर्तृकर्तृकंगमनंहिपाचकोव्रजतीत्यस्यार्थः।एककर्तृकापचिक्रियाएककर्तृकागमिक्रियेतिपचतिव्रजत्योःपृथगेवार्थः।
एवंचप्रथमांतविशेष्यकोबोधइतिनैयायिकोद्घोषोभाष्याद्यनुसारिभिर्नादर्तव्यः।तन्मतेहिपाककर्ताव्रजनानुकूलकृतिमानितिपाचकोव्रजतीत्यस्या
र्थः।पचतिव्रजत्योस्तुपाकानुकूलाकृतिर्व्रजत्यर्थएवंरूपेणवाक्यार्थपर्यवसानात्तस्यचभाष्यादिग्रंथविरोधात्।किंचहरिंभजतिदेवदत्तःहरिःसेव्यतेदेव
दत्तेनेत्यत्रचैकरूपएवशाब्दबोधइत्युक्तंनैयायिकानांमतेतुभिद्यतएवहरिनिष्ठप्रीत्यनुकूलकृत्याश्रयोदेवदत्तःदेवदत्तनिष्ठकृतिजन्यप्रीत्याश्रयोह
रिरित्युभयत्रभेदेनवाक्यार्थपर्यवसानात्।तस्मात्प्रथमांतविशेष्यकबोधोभाष्याद्यनुसारिभिर्नादर्तव्यएव।यास्कोप्याहभावप्रधानमाख्यातंसत्वप्रधा
नानिनामानीति।पश्यमृगोधावतीत्यादौतुमृगकर्तृकंगमनंदर्शनक्रियायाःकर्मप्रधानंतुदर्शनक्रियैव।उक्तंच।सुबंतंहियथाऽनेकंतिङंतस्यविशेषणं तथा
तिङंतमप्याहुस्तिङंतस्यविशेषणमिति।नचलौकिकप्रयोगेषुतिङंतस्यतिङंतविशेषणत्वंदुर्लभमितिमंतव्यं।पश्यमवस्कंदनुनोहिनंदनंइतिमाघश्लो
कस्यपर्यवस्कंदननंदनलवनादिरूपाअस्यास्यक्रियेत्यर्थइतिसमुच्चयेन्यतरस्यामितिसूत्रेमूलेस्फुटीभविष्यमाणत्वात्।एवंपचतिभवतीत्यस्यपचि
क्रियाभवतीत्यर्थोभाष्यमतेबोध्यइतिदिक्।अभिहितेत्विति।नन्वेवंपक्वमोदनंभुंक्तइत्यत्रापिद्वितीयानस्यादितिचेत्।मैवं।इहहिपचिभुजिनिरूपितेद्वेक
र्मत्वशक्तीतत्रप्रधानीभूतभुजिक्रियानिरूपितामनभिहितांशक्तिमादायद्वितीयोत्पत्तेः।अतएवआसनेआस्तइत्यत्रसप्तमीसंगच्छते।ल्युटाऽधिकरणस्यो
क्तत्वेपितिङोपस्थाप्यक्रियानिरूपिताधिकरणत्वस्यानुक्तत्वात्।शत्यइतिशताच्चठन्यतावशतेइतियत्।प्रासानंदइति।इहगत्यर्थाकर्मकेतिकर्तरिक्तः।।

कर्मकारकेऽपि तत्र तत्त्वाद्गोस्तु पयसो निमित्ततामात्रेणोपात्तानन्तु वस्तुसत्ताप्यवधिभावेनेत्यपादानसंज्ञाया अप्रवृत्तेरनेन कर्मसंज्ञिका भवति। तदुक्तं हरदत्तेन यद्यपि गोर
वधिभावो विद्यते तथाप्यविवक्षिते तस्मिन्निमित्तमात्रविवक्षायामुदाहरणोपपत्तिरिति एतेनावधिविवक्षायां गोरिति पञ्चम्येवेति सूचम् यदा तु गोरित्येतत्पयसा संबध्यते त
दा गोशब्दात्षष्ठ्येव भवतीत्यपि बोध्यम् यत्तु प्राञ्चा दुह्याच्यर्थैरुधिप्रच्छिचिञ्ब्रूशासुजि कर्मयुक् नीहृकृष्वंथवहं दंडग्रहमुष्यचि कर्मभागिति पठितं तत्र ग्रहः पाठोऽप्रामाणिकः द
तरेषां तु हि कर्मकत्वं यद्यपि प्रामाणिकं तथापि संदर्भशुद्धिः तथाहि दुह्यादीन्यादीनर्थद्वैराश्येन पठित्वा भावकर्मप्रक्रियाशेषे लकृत्पकृत्खलर्थाः किं हि कर्मकेभ्यो मुख्ये कर्म
णि स्युर्गौणे वेत्याशंकायां स्वयमेव पठितत्वाद्योग्यं तन्निष्कर्मगत्यर्थानुमुख्यकर्मणि प्रत्ययं यान्ति इत्यादिर्गौणेऽन्येषु यथा रुचि इति एवं च दंडिमंथिभ्यामपि मुख्ये स्यात् न चे
ष्टापत्तिः गर्गाः शतं दंड्यन्तामिति भाष्यविरोधात् शतस्यात्र प्रधानेन तु गर्गाः अर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषात् दंडिरत्र ग्रहणार्थं न तु निग्रहार्थ इत्युक्तत्वात् अत
एवात्र समुदाये वाक्यपरिसमाप्तिः गुणानुरोधेन प्रधानावृत्तेरसंभवात् तथा मंथेरपि प्रधाने स्यादिष्यते तु गौणे तथा च भारविः येनापविद्धसलिलस्फुटनागसद्मा देवासुरैर
मृतमंबुनिधिर्ममंथे इति अत्र ह्यमृतं मुख्यं उद्देश्यत्वात् अंबुनिधिस्तु गौणः बलिं याचत इति अत्र मार्थनार्थस्य याचेर्वसुधा मुख्यं कर्म तेन युक्तो बलिर्वसुतो वधिरपि तद्वि
वक्षायामनेन कर्म भवति अविनीतमिति अत्र नयार्थस्य पाचेर्विनीतो मुख्यं कर्म अविनीतं विनयायानुनयतीत्यर्थः विनयस्य तादर्थ्याविवक्षायामकथितत्वेनेति कर्मसंज्ञा
तंडुलानिति निर्वर्तनार्थस्य पचेरोदनो मुख्यं कर्म ओदनं निर्वर्तयतीत्यर्थः तंडुलास्तु करणत्वाविवक्षायामकथितं कर्म अन्ये त्वाहुः अर्थः पचिरिति भाष्यपर्यालोचनया
तंडुलानोदनं पचतीत्यस्य तंडुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः इत्यादिषु पक्षे परिगणनमप्रामाणिकं भाष्यकैयटयोरनुक्तत्वादिति गर्गानिति ग्रहणार्थस्य दं
डेः शतं मुख्यं कर्म गर्गास्त्वपादानत्वाविवक्षायामकथितं कर्म व्रजमिति अत्र गौर्मुख्यं कर्म व्रजं त्वधिकरणत्वाविवक्षायामकथितं चेति कर्म भवति एवमग्रेऽपूत्यम् अर्थ
निबन्धनेति नञ्स्वरूपाश्रयात् अहमहमयीदमचोद्यमचोद्ये इति तदा सूत्रभाष्ये शक्तिपर्यायस्य तुदेरपि द्विकर्मकत्वदर्शनादिति भावः अत एव स्याणुं रणोऽस्मे रमुरुत्रोजभार
मरीचिमन्नेवर्चनं महार्थमिति भट्टिः प्रयुक्ते एवं च नायत्यादयो वहो हि कर्मकान्ते यान्स्यादेतन्नयत्यर्थे निबन्धनासंज्ञा तर्हि नीवह्योरन्यतरो न पठनीयः उभयोरप्येकार्थत्वा
दिति चेत् सत्यं भारं वहति भारं नयतीत्यत्र यदि विलक्षणार्थो न भूयते तदा द्वयमपठनीयमेव यदि तु नानुभूयते तत्रैकान्यतरो न पठनीयः उभयथापि लक्ष्यस्य निर्बाधत्वात्
अत्र वदन्तेऽजया हृत्युत रुः शतं मित्युदाहरणमप्ययुक्तमिति मनोरमोक्तम् चिन्त्यमेव संज्ञाया अर्थनिबन्धनत्वाद्दंडेर्ग्रहणार्थत्वाच्चेति बलिं भिक्षत इति भिक्षिर्भिक्षायां लाभे लो

अकथितञ्च।केनाकथितमित्याकांक्षायामाह।अपादानादिविशेषैरिति।अपादानंसंप्रदानमधिकरणंकर्मकरणंकर्ताहेतुरित्येतैर्विशेषैरित्यर्थः।अविवक्षितमिति।
अपादानादिविशेषविवक्षायांतुगोर्दोग्धिपयःबलेर्याचतेवसुधांव्रजेऽवरुणद्धिगामित्येवंपंचम्यादयएवभवंतीतिभावः।एतेनपाणिनाकांस्यपात्र्यांदोग्धीत्यत्र
करणाधिकरणयोरतिप्रसंगः।तयोस्तुदंडेनकरोतिकटेतिष्ठत्यादिरवकाशोदुहादिपरिगणनादित्याक्षेपोनिरस्तः।करणाधिकरणसंज्ञयोरिहविवक्षितत्वात्।य
दितुसूत्रेऽकथितशब्दोअप्रधानपर्यायोनत्वनुक्तपर्यायइत्यभ्युपगम्येततदास्यादेवायमाक्षेपोनत्वन्यथा।कारकमिति।ततश्चब्राह्मणस्यपुत्रंपृच्छतीत्यत्रना
तिप्रसंगः।इत्याजिति।दंडदंडनिपातनेचुरादिः।इहतुदंडिर्ग्रहणार्थोनतुनिग्रहार्थः।प्रच्छीत्यागंतुकेनेकारेणनिर्देशोनत्विकारमहिज्येतिसंप्रसारणप्रसंगात्।

अकथितञ्च।१।४।५१।अपादानादिविशेषैरविवक्षितङ्कारकङ्कर्म्मसंज्ञंस्यात्।दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमन्थ्मुषाङ्कर्म्मयु
क्स्यादकथितन्तथास्यान्नीहृकृष्वहाम्॥१ दुहादीनांद्वादशानान्तथानीप्रभृतीनाञ्चतुर्णाङ्कर्म्मणायद्युज्यतेतदेवाऽकथितङ्कर्म्मेतिपरिगण
नङ्कर्तव्यमित्यर्थः॥गान्दोग्धिपयः।बलिंयाचतेवसुधाम्।अविनीतंविनयंयाचते।तण्डुलानोदनम्पचति।गर्गान्शतन्दण्डयति।व्रजमवरुण
द्धिगाम्।माणवकम्पन्थानम्पृच्छति।वृक्षमवचिनोतिफलानि।माणवकन्धर्म्मम्ब्रूतेशास्तिवा।शतञ्जयतिदेवदत्तम्।सुधांक्षीरनिधिम्मथ्नाति।देवद
त्तंशतम्मुष्णाति।ग्राममजान्नयतिहरतिकर्षतिवहतिवा।अर्थनिबन्धनेयंसंज्ञा।बलिम्भिक्षतेवसुधाम्॥माणवकन्धर्म्मम्भाषते।अभिधत्तेवक्तीत्या
दि।कारकङ्किं।माणवकन्धर्म्मम्भाषते।अभिधत्तेवक्तीत्यादि।कारकङ्किं।माणवकस्यपितरम्पन्थानम्पृच्छति।अकर्म्मकधातुभिर्योगेदेशः
कालोभावोगन्तव्योऽध्वाचकर्म्मसंज्ञकइतिवाच्यम्॥कुरून्स्वपिति।मासमास्ते।गोदोहमास्ते।क्रोशमास्ते॥

९ कर्मयुगिति।कर्मणायुज्यतेकर्मयुक्।अस
त्सूद्विषेत्यादिनाक्विप्।कर्मणायुज्यतइति।मुख्यकर्मणासहक्रिययासंबध्यमानंकारकमेवापादानादिविशेषैरकथितंसत्कर्मसंज्ञकंभवतीत्यर्थः।एतेनदुहादी
नांद्विकर्मकत्वंस्फोरितं।अन्येत्वाहुः।कर्मयुगित्यत्रकर्मशब्देनक्रियोच्यतइति।तेनक्रियान्वयीत्यर्थः।परिगणनमिति।तेननटस्यशृणोतिगाथामित्यादौनातिप्रसंग
इतिभावः।इहहिगाथाकर्मकंनटसंबंधिश्रवणंवाक्यार्थः।तेनक्रियान्वयित्वान्नटस्यकारकत्वमस्त्येव।गांदोग्धीति।पयःकर्मकंगोसंबंधिदोहनमर्थः।पयोऽत्रमुख्यं

त्येवब्रूयात्। अणौयः कर्तेति। अनुत्पन्ने णौ विशुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स एयंतधातुवाच्यां क्रियां प्रतिकर्मसंज्ञः स्यादित्यर्थः। नियमार्थमेतत्सूत्रमिति प्राचः। णि
जर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेव कर्तुरिति। तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये कर्तरि प्रकृत्यर्थप्रतिकर्तृत्वस्यैव निरूपणाद्वैनावस्थानात्ती
यासिध्यति। उक्तं च। गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः। नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयत इति। कर्तुः स्वधर्मेण तृतीययेत्यर्थः। ननु णिजर्थप्रतिकर्म
त्वं बाधित्वा प्रकृत्यर्थप्रतिकर्तृत्वं परत्वादेव सिद्धं। अंतरंगत्वाच्च स्वनारकविशिष्टा हि क्रिया णिजर्थेन संबध्यते हेतुमति णिज्विधानात्। कर्तृप्रयोजकस्य हेतुत्वात्।
अतएव उपजीव्यापि कर्तृसंज्ञा। एवं च परत्वादंतरंगत्वादुपजीव्यतयापि च प्रयोज्यस्य तु कर्तृत्वं गत्यादिविषये तोचिताय चापि निमिपक्षेपि लक्ष्यं निर्बाधमेव तथापि
नियमसूत्रमिदमिति प्राचां ग्रंथो विरुध्यत इति चेत्। अत्राहुः। णिजर्थस्य शाब्दप्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसंज्ञायाः प्राबल्यात् विप्रतिषेध एव नास्ती
ति परत्वात्कर्तृत्वसिद्धिरित्येतन्न संगच्छते। अंतरंगत्वोपजीव्यत्वे पि प्रधानं प्रति न प्राबल्यं प्रयोजयतः ततश्च नियमार्थत्वोक्तिः प्राचां निर्बाधैवेति। गत्यादि एयं
तान्क्रमेणोदाहरति शत्रूनिति। शत्रवः स्वर्गमगच्छन् तान् श्रीहरिः स्वर्गमगमयदिति। गमेरण्यंतावस्थायां शत्रवः कर्तारस्ते एयंतावस्थायां कर्म अभवन् स्वर्गे कर्म
क शत्रुनिष्ठयत्नमनंतदनुकूलोपनिष्ठो व्यापारः स श्रीहरिः मे गतिरिति वाक्यार्थः एवमग्रेपूह्यं। वेदार्थमिति। स्वे स्वकीया वेदार्थमविदुस्तान् श्रीहरिर्वेदार्थमवेद
यत्। तथा देवा अमृतं आश्नन्तानाशयत्। विधिर्वेदमध्यैत तं ब्रह्माणं वेदमध्यापयत्। अपाठयत्। सलिले पृथ्वी आस्ते। तां योहरिरासयत् स्थापयति स्म स हरिर्मे गतिरि
त्यन्वयः। नठ शत्रूणामनेन कर्मत्वे कृते कर्मणा ईप्सिततमः स्वर्गो न तु कर्तुरिति कर्तुरीप्सिततमत्वाभावात् स्वर्गस्य कर्मत्वं न स्यात्। अत्र केचित्। गतिबुद्धीति कर्मत्वस्य बहि
रंगत्वेन ततः सर्वमेव धात्वर्थव्यापारप्रयुक्तं कर्मत्वं स्वर्गस्य निर्बाधमित्यदोष इति। अन्ये तु कर्तुरीप्सिततममित्यत्र कर्तृग्रहणं स्वातंत्र्यस्योपलक्षणं स्वातंत्र्यं च धातूपात्त
पाराश्रयत्वमेव। तच्च प्रयोजकसंनिधानेपि प्रयोज्यस्यास्त्येवेति न काप्यनुपपत्तिः। न च स्वतंत्रे संकेतितस्य कर्तृपदस्य तत्रैव लक्षणा न संगच्छते। एकस्यैकस्मिन्नेवा
शक्तिलक्षणोभयाभ्युपगमस्य शास्त्रकारासंमतत्वादिति वाच्यं। संज्ञांतरानुपहितस्वतंत्रे संकेतितस्य संज्ञांतरोपहिताऽनुपहितसाधारणे स्वतंत्रे लक्षणाभ्युपगमे बाध
। भावात्। अतएव जिधातोर्जये शक्तिः। प्रकर्षजये लक्षणा। शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति। तेन प्रजयतीत्यत्र प्रशब्दो द्योतकः प्रकर्षजयस्तु जिधातोरे।

सांकर्मेत्यस्यनवैयर्थ्यं अथि पूर्वाणामेषामाधारःकर्मेति नियमार्थत्वाभ्युपगमेपिवैकुंठेवर्त्तते इत्यादिष्वति प्रसंगःस्यादेवेत्याशयेन तथैवोदाहरति कुरूनितिगोदो हमिति नचेह कालत्वात्सिद्धिःलोकेकालत्वेनप्रसिद्धस्यमासादेरेवकालशब्देनग्रहणात्तेन घटमास्ते इत्यादिनभवति जन्यमात्रंकालोपाधिरिति घटादेरपिकालत्वा त्यत्तुप्राचात्रकर्मकधातुभिर्योगेदेशकालाध्वभावेभ्योद्वितीयेति केचिदित्युक्तानदीमास्तइत्युदाहृतंतदसंगतम्ग्रामसमूहःकुर्वादिरेवदेशोगृह्यतेनतु प्रदेशमात्रंतेन ग्रामंस्वपितीतिनभवतीत्याकरात् अध्वेतिचन्दनं अध्वानंस्वपितीत्यपिप्रसंगात् अत्तएव आकरेऽध्वागंतव्यत्वेनविशेषितःगंतव्यत्वेनप्रसिद्धोनियतपरिमाणः

गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माऽकर्म्मकाणामणिकर्त्ता सणौ।१।४।५२।।गत्याद्यर्थानांशब्दकर्म्मकाणामकर्म्मकाणाञ्चाणौयःकर्त्तासणौकर्म्मसं ज्ञस्स्यात्।शत्रूनगमयत्स्वर्गम्वेदार्थंस्वानवेदयत्।आशयच्चामृतन्देवान्वेदमध्यापयद्विधिं॥१॥आसयत्सलिलेपृथ्वीयःसमेश्रीहरिर्गतिः॥१॥ गतीत्यादिकिं।पाचयत्योदनन्देवदत्तेनाऽण्यन्तानाङ्किं।गमयतिदेवदत्तोयज्ञदत्तन्तमपरःप्रयुङ्क्ते।गमयतिदेवदत्तेनयज्ञदत्तंविष्णुमित्रः।नीवह्यो न्नेनाययतिवाहयतिवाभारम्भृत्येन।नियन्तृकर्त्तृकस्यवहेरनिषेधःवाहयतिरथम्वाहान्सूतःआदिखाद्योर्न्न।आदयतिखादयतिवाऽन्नम्बटुना भक्षेरहिंसार्थस्यन।भक्षयत्यन्नम्बटुना।अहिंसार्थस्यकिं।भक्षयतिबलीवर्द्दान्सस्यं।जल्पतिप्रभृतीनामुपसंख्यानं।जल्पयतिभाषयतिवाधर्म न्देवदत्तः।दृशेश्च।दर्शयतिहरिम्भक्तान्।सूत्रेज्ञानसामान्यार्थानामेवग्रहणन्नतुतद्विशेषार्थानामित्यनेनज्ञाप्यते।तेनस्मरतिजिघ्रतीत्यादीना न्नास्मारयतिघ्रापयतिदेवदत्तेन।शब्दायतेर्न्न।शब्दापयतिदेवदत्तेन।धात्वर्थसंगृहीतकर्म्मत्वेनाऽकर्म्मकत्वात्प्राप्तिः।येषान्देशकालादिभि न्नकर्म्मनसम्भवतितेऽत्राऽकर्म्मकाःनत्वविवक्षितकर्म्माणोऽपितेनमासमासयतिदेवदत्तमित्यादौकर्म्मत्वम्भवति।देवदत्तेनपाचयतीत्यादौतु

क्रोशादिरितिव्याख्यातंद्वितीयेत्यप्यसंगतंकर्मसंज्ञायाअविहितत्वात्कर्मणिलादयोनस्युरित्यास्यतेमासइत्यादिप्रयोगाभावप्रसंगात्केचिदित्युक्तिस्तन्मतदौर्बल्यसूचनायेतिक थंचिद्व्याख्याय पूर्वोक्तपरिहारेपिनदीमास्तेइत्युदाहरणास्यासंगत्यदोषस्तदवस्थएवेतिध्येयम्॥ ॥गतिबुद्धिप्रत्यवसानेभक्षणंशब्दःकर्मकाणामितिशब्दःकर्मकार कंयेषांतेषा मित्यर्थःकर्मशब्दोनकारकपरः नतुकर्तरिकर्मव्यतिहारेइत्यत्रेवक्रियापरःकृत्रिमकार्यसंप्रत्ययात्कर्मग्रहणसामर्थ्याच्चअन्यथाहिगतिबुद्धिप्रत्यवसान

॥ धात्वर्थसंगृहीतेति। एतेन शब्दाययति से निकेरिपूनिति कर्मप्रयुंजानाः परास्ताः। नत्वविवक्षितकर्मणोपीति। यथालंकर्मणीचेतिसूत्रे अविवक्षितकर्मणो
प्यकर्मका इति गृह्यंते तथैवेहापि यदि शब्दस्यैव तदा ओदनादिकर्मणो विवक्षायां पाचयति देवदत्तमिति स्यात् न तु देवदत्तेन पाचयतीति। एवं गत्यर्थाकर्मकेतिसूत्रे
प्यविवक्षितकर्मणोऽकर्मका इति न गृह्यंते। दत्तवान् पक्कवान् इत्यर्थे दत्तः पक्कः इत्याद्यापत्तेः। यत्तु प्राचा अयमकंदशब्दायक्षेत्रानेत्युक्तं तदयुक्तं। श्रूयते निषेधस्य नि
मूलत्वेन शृणोकर्तुरणौ कर्मत्वस्यानिष्टत्वात्। कंदक्हेत्रोस्तु शब्दक्रियत्वेपि शब्दः कर्मकारकं नेति प्राप्तेरेवाभावाच्चेति स्थितं मनोरमायां। यदपि श्रुग्रहदृशामिति
कर्मत्वमुक्तं तत्र दृशिग्रहणं प्रामाणिकमेव। शृणोतेस्तु शब्दकर्मकत्वात्सिद्धं। ग्राहेर्द्विकर्मकत्वं यच्च प्यजिग्रहत्तं जनको धनुस्तदिति भट्टिप्रयोगस्याश्रयाचितारत
द्विदेवदेवमद्रिः सुतां ग्राहयितुं शशाकेति कालिदासप्रयोगस्य चानुगुणं तथापि बहूनामसंमतमेव। अत एव तं धनुरजिग्रहत्वोधितवान्। सुतां ग्राहयितुमुद्दात्यने
नवोधयितुमित्येवमुक्तप्रयोगं समर्थयांचक्रिरे। न च तु ध्यर्थत्वं विनापि यथाश्रुतार्थ एव ग्राहेर्द्विकर्मकत्वमस्त्विति वाच्यं। तथा हि सति जाया प्रतिग्राहितगंधमा
ल्यामित्यत्र क्तप्रत्ययेनाभिधानं प्रयोज्यकर्मीभूतधेनोः स्यात्। न तु गंधमाल्यकर्मणः। एवं तेकर्तुश्च कर्म इत्युक्तेः। जाया प्रेरिता हि धेनुर्गंधमाल्यं प्रतिगृह्णातीति
भवत्येव। धेनुः प्रयोज्यकर्म ततश्च जायया गंधमाल्यं प्रतिग्राहितामिति स्यात्। प्रत्ययानभिहितत्वेन गंधमाल्यकर्मणि द्वितीयायाः प्रवृत्तेः सिद्धांते तु जायया प्रति
ग्राहिते गंधमाल्ये ययेति विग्रहः। द्विकर्मकत्वाभावेन गंधमाल्यस्यैव क्तप्रत्ययेनाभिहितत्वात्। ययेति तृतीयांत णिजर्थं प्रतिजायायाः कर्तृत्वेपि णिच्प्रकृत्य
र्थप्रतिग्रहं प्रतिधेनोः कर्तृत्वादुपपद्यते। एवं चेह जाया निष्ठप्रेरणाविषयीभूतं गंधमाल्यकर्मकं यत् प्रतिग्रहणं तत्कर्त्रीमिति त्वर्थः। यद्यपि धेनुकर्तृकं जा
यानिष्ठप्रेरणाविषयीभूतं यत् प्रतिग्रहणं तत्कर्मीभूते गंधमाल्ये इति विग्रहार्थस्तथाप्यन्यपदार्थांतर्भावेणोव विशेषणविशेष्यभावे वैपरीत्येन एकार्थीभावः
कल्प्यत इति नात्यंतानुपपत्तिरिति दिक्॥ ॥

वअर्थइतिनैय्यायिकोक्तिः संगच्छते।नापिकर्तृपरसूत्रस्वतंत्रलक्षणायांप्रमाणाभावः शंक्यः।प्रधानकर्मण्याख्येयेलादीनाऽहुर्द्विकर्मणांअप्रधानेदुहादीनामित्युक्त्वाण्यंते
कर्तुश्चकर्मणइतिवदतोभाष्यकारस्यैवप्रमाणत्वात्।नहिलक्षणांविनाणिजंतानांद्विकर्मकतालभ्यतेयेनण्यंतेकर्तुरितिवचनंसावकाशंस्या दित्याहुः।नीवह्यो
रिति।।यद्यप्यनयोःप्रापणमर्थोनगतिस्तथापिगतिरपिविशेषणीभूयप्रापणमध्येप्रविष्टेत्येतावन्मात्रेणप्राप्तिमत्वाप्रतिषेधउक्तः।नियंत्रिति।नियंतापशुप्रेरकः
।नतुसारथिरेवेतितेनवाहयतिवलीवर्दान्यवानितिसिध्यति।अस्मादेवभाष्योदाहरणात्रूढियोगमपहरतीतिन्यायोत्रनस्वीक्रियते।अनिषेधइति।प्रयोज्यः
कर्मेतिवक्तव्यमितिफलितोर्थः।येतुप्रापणंगतिशब्देनगृह्यतेयैर्वानगृह्यतेउभयेषामपीदंवचनंआवश्यकं।नीवह्योर्नेतिवचनंतुयैः प्रापणंगतिशब्देन
नगृह्यतेतेषामनावश्यकमितिवोध्यं।सूतइतिनियंताप्राजितायंतासूतः क्षत्ताचसारथिरित्यमरः।प्रत्यवसानार्थत्वात्कर्मत्वेप्राप्तेनिषेधमाह।आदिखाद्योरि
ति।अदभक्षणे।।खादृभक्षणे।।प्राचात्तुआदीतिपठ्यतेतत्तुएयंत्तानुकरणमितिवोध्यं।आदयतीति।इहनिगरणचलनार्थेभ्यश्चेतिपरस्मैपदनियमोनप्रवर्ततेअ
त्ते।प्रतिषेधइतितस्यनिषिद्धत्वात्।तेनाकर्त्रभिप्रायेक्रियाफलेशेषात्कर्तरीतिपरस्मैपदं।कर्त्रभिप्रायेतुणिचश्चेत्यात्मनेपदंभवत्येवेतिवोध्यं।भक्षेरिति।ननुग
तिवुद्धीतिसूत्रेणाणौकर्तुर्णौकर्मत्वंविधीयतेनतुणौकर्तुरितिप्राप्तेरेवाभावान्निषेधोयंव्यर्थइतिचेत्।अत्राहुः।हेतुमणिणिजंतेविधिरितिनिषेधोप्यणावित्ययं
सन्निधानाद्धेतुमण्णिज्विषयएवतेनचुरादिणिजंतेपिभक्षयतोप्राप्तिमत्वात्तन्निषेधउपसंख्यातइति।भक्षयतीति।वलीवर्दाःसस्यंभक्षंतितान्भक्षयतीत्यर्थः।
क्षेत्रस्थानांयवानांभक्षमाणानांहिंसाज्ञेयातस्यामवस्थायांतेषांचेतनत्वात्।जल्पतिप्रभृतीनामितिजपजल्पव्यक्तायांवाचि।पुत्रोधर्मंजल्पतितंदेवदत्तोज
ल्पयतीत्यण्यंतावस्थायांपुत्रः कर्ता।ण्यंतावस्थायांकर्मअभवत्।तथापुत्रोधर्मंभाषतेतंभाषयतिदेवदत्तः।नचजल्पतिभाषत्योःशब्दक्रियत्वेनगतिवुद्धी
तिसूत्रेणैवसिद्धेरुपसंख्यानमिदंव्यर्थमितिभ्रमितव्यं।शब्दकर्मणामित्यस्यशब्दःकर्मकारकंयेषामित्यर्थात्।अन्यथावेदमध्यापयद्विधिमित्यादेरसिद्धिप्र
संगात्।एवंपुत्रोयत्किंचिद्विलपतितंविलापयतीत्याद्यप्यूह्यं।स्मारयतीति।आध्यानार्थकस्यैवस्मरतेर्घटादयोमितइतिमित्वंनचिंतार्थकस्येतिभावः।देवद
त्तेनेति।स्मरयत्येनंवनगुल्मइत्यत्रतुरोरणावितिसूत्रेभाष्यप्रयोगादेवकर्मत्वंवोध्यं।शब्दाययतीति।शब्दंकरोतीत्यर्थेशब्दवैरेत्यादिनाक्यङ्।ततोहेतुमण्णि

वनेउपवसतीति।कथंतर्हिगत्यर्थाकर्मकेतिसूत्रेहरिदिनमुपोषितइत्युदाहरणंसंगच्छतइतिचेदत्राहुः।वसेरत्रस्थितिरर्थःभोजननिवृत्तिस्त्वार्थिकीतिनदोषइति।उपपदवि भक्तिमाह।उभसर्वतसोरित्यादिना।उभसर्वयोस्तसौउभसर्वतसौतद्वतयोर्योगेद्वितीयाकार्येत्यर्थः।प्रकृतिद्वित्वेनतसोरितिद्वित्वनिर्देशः।अत्रउभशब्दाद्वचनकृतः।अनु करणशब्दत्वेनअसंख्यावाचित्वात्।तथाचउभशब्देनउभयशब्दोलभ्यतेकेवलात्परत्रतसिलोऽसंभवादित्येके।वस्तुतस्तुवृत्तिविषयेअयच्प्रवृत्तावपिउभशब्दाद्विहितो यस्तसतदंतमस्यैवेतियथाश्रुतंसाध्विति।उमनोरमायांस्थितं।धिगिति।धिक्शब्दयोगेपिद्वितीयाकार्येत्यर्थः।अत्रप्राचः।धिगित्यविभक्तिकोनिर्देशोगविल्ययमाहेतिव त इत्याहुस्तन्न।तथासत्यपदांततयाहल्ङ्यादिलोपःशाकल्यस्येनदार्थ्यतिकेजस्सायप्रवृत्तिप्रसंगात्।नचायंगकारांतएवास्त्वितिशंक्यं।कस्यचदइतिसूत्रेधिगिदित्युदा हरणस्यासंगतिप्रसंगात्।कस्यचदइत्यनेनहिकांताव्ययस्यअकच्सन्नियोगेनदत्वंविधीयते।तस्माद्धिगितिविभक्त्यंतमेवपरंत्वनुप्रकृतिवदनुकरणमित्यतिदेशेनाव्य

वनेउपवसति।उभसर्वतसोः कार्य्याधिगुपर्य्यादिषुत्रिषु।।द्वितीयाम्रेडितान्तेषुततोऽन्यत्रापिदृश्यते १ उभयतःकृष्णंगोपाः।सर्वतःकृष्णं।धिक्कृ ष्णाऽभक्तं।उपर्युपरिलोकंहरिः।अध्यधिलोकं।अधोऽधोलोकं।अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि।अभितःकृष्णं।परितःकृष्णं।ग्रा मंसमया।निकषा।हाकृष्णाऽभक्तं।तस्यशोच्यतइत्यर्थः।बुभुक्षितंनप्रतिभातिकिंचित्।अन्तराऽन्तरेणयुक्ते।२।३।४। आभ्यांयोगेद्वितीयास्या त्।अन्तरात्वांमांहरिः।अन्तरेणहरिंनसुखं॥ ११ यत्नात्सुपोलुक्यदितुधिगित्यविभक्तिकोनिर्देशइत्येतावानेवग्रन्थस्तदासम्यगेव।अव्ययत्वा

त्सुपोलुकिअविभक्तिकोनिर्देशइतिवक्तुंशक्यत्वात्।उभयतःकृष्णमिति।कृष्णस्यपार्श्वद्वयेपीत्यर्थः।आद्यादित्वात्तसिःषष्ठ्यर्थेद्वितीया।एवमुपपदविभक्तौसर्वत्रबो ध्यं।अत्रव्याचक्षते।उभसर्वतसोरित्यत्रउभसर्वयोर्गणोपरस्परसाहचर्यात्तसिलेवगृह्यतेनत्वाद्यादिभ्यस्तसिस्तथाचोभयतइत्यादौतसेश्चेत्यनेनतसिलादेशोऽ वगंतव्यस्तेनयत्रसंज्ञायांतसेस्तसिलादेशाभावस्तत्रनद्वितीयाकिंतुषष्ठ्येवतसिलभावस्तुतसेश्चेत्यत्रकिंसर्वनामबहुभ्यइत्यनुवर्तनादिति।धिक्कृष्णाभक्तमिति। तस्यनिंदातइत्यर्थः।षष्ठ्यर्थेद्वितीयासनिंद्यइत्यर्थः।प्रथमार्थेद्वितीयेत्येके।कथंधिङ्मूर्खेति।संबोधनपदस्यक्रियान्वयइतिप्रागेवोक्ततयाधिक्शब्दयोगाभा वात्द्वितीयानप्रवर्ततइतिसंबोधनेचेतिप्रथमैवभवतीति।क्रियापदंचक्वचिच्छ्रुतंक्वचिदाक्षिप्तं।तथाचधिङ्मूर्खेनिषिद्धाचरणमित्येतदिहकल्प्यं। ॥

हृक्रो। हाच का च हृकारौ तयोरिति विग्रहः। हृ अकुञ्हृक्रोरिति वा प्रथमांतेन परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धांतात्। गतिबुद्धीत्यादीह नानुवर्त्तते तेन उभ
यत्र विभाषेयं। अभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वात् विकारार्थस्य करोतेश्चाकर्मकत्वात् गतिबुद्धीत्यादिना अणौ कर्त्तुर्णौ कर्मत्वे प्राप्ते अर्थात् तस्यानयोः सकर्मकत्वा
दप्राप्ते अस्यारंभात् अप्राप्तावुदाहरणमाह। हारयतीति। हरति करोति वा कटं भृत्य इत्यण्यंतावस्थायां भृत्यः कर्ता स एव ण्यंतावस्थायां कर्माऽभूत्। प्राप्ते तूदाहरण
नृणामभ्यवहारयति सैंधवान् तृणाम् अभ्यवहारयति सैंधवैः विकारयति सैंधवान् वा विकारयति सैंधवैरिति बोध्यं। ननु यद्गतिबुद्धीत्यादिरिह नानुवर्त्तते तर्हि देवस्य
त। तत्रैवमानेन पश्या म इत्ति चेन्मैवं। न वेति विभाषेति सूत्रे उभयत्रविभाषासु भाष्यकृताऽस्यापि सूत्रस्य गणितत्वेनोक्तशंकाया अनवतारात् अभिवादी तिवद्सं दे

हृक्रोरन्यतरस्याम्। १।४।५३। हृक्रोरणौ यः कर्त्ता स णौ वा कर्मसंज्ञः स्यात्। हारयति कारयति वा भृत्यम् भृत्येन वा कटं। अभिवादिदृशोरात्मनेपदे
वेति वाच्यम्। अभिवादयते दर्शयते देवम् भक्तं भक्तेन वा। अधिशीङ्स्थासां कर्म। १।४।४६। अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते अ
धितिष्ठति। अध्यास्ते वा वैकुण्ठं हरिः। अभिनिविशश्च। १।४।४७। अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात्। अभिनिविशते सन्मा
र्गं। परिक्रयणे सम्प्रदानमिति सूत्रादिह मण्डूकप्लुत्याऽन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्न। पापेऽभिनिवेशः। उपा
न्वध्याङ्वसः। १।४।४८। उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति। अनुवसति। अधिवसति। आवसति वा वैकुण्ठं हरिः। अभुक्त्यर्थस्य न॥

शवचने तु रादिराथ्वीयः अभिपूर्वत्वान्नमस्कारार्थता अभिवादयतेरप्राप्तौ दृशेस्तु प्राप्तावयं विकल्पः अभिवदति देवं भक्तस्तं प्रेरयत्यन्यः अभिवादयते। णिच
श्चेत्यात्मनेपदं परस्मैपदे तु अभिवादयति देवं भक्तेनेत्येव। तथा पश्यति देवो भक्तं दर्शयते देवं भक्तः इत्यादि। अभिनिविन इत्याचतरत्वेन पूर्वनिपाते कर्तव्ये विपरी
तोच्चारणमीदृशसंघातविवक्षार्थमित्याह। संघातपूर्वस्येति। तेनेह न। निविशते यदि स्रूकशिखापद इति। क्वचिन्न। एषार्थेऽभिनिविष्टानामिति समर्थसूत्रस्थभाष्यप्र
योगोऽत्र मानमिति भावः। उपान्वाङ्ग्विकरणाल्लुग्विकरणो वलीय इति। वस निवास इति भौवादिक एव गृह्यते न तु वस आच्छादन इत्यादादिक इति अभिप्रेत्य शपानि
र्दिशमाह। उपादिपूर्वस्य वसतेरिति। वसेरश्यर्थस्य प्रतिषेध इति वार्तिकमर्थतो व्याचष्टे। अभुक्त्यर्थस्य नेति। वार्त्तिके अर्थशब्दो निवृत्तिवचनः भोजननिवृत्तिवाचकस्य

कर्मप्रवचनीया इत्यधिकृत्येति। ईश्वरात्प्रागिति बोध्यं। गुरुसंज्ञाकरणं अन्वर्थत्वाय। कर्मक्रियां प्रोक्तवंतः कर्मप्रवचनीयाः। बाहुलकात् भूते कर्त्तर्यनीयर्। तेन संप्रति क्रि यां न द्योतयंतीति लभ्यते। तथा च हरिः क्रियाया द्योतको नायं संबंधस्य न वाचकः। नापि क्रियापदाक्षेपी संबंधस्य तु भेदक इति। तथा हि। जपमनु प्रावर्षत् इत्यत्र अनुना न क्रियाविशेषो द्योत्यते। अनुभूयते सुखमित्यादौ यथा। नापि षष्ठीव संबंध उच्यते द्वितीययैव तस्योक्तत्वात् नापि प्रादेशं विपरिलिखति विभाज्य परिलिखतीत्यत्र विशब्देन मानक्रियेव क्रियांतरमाक्षिप्यते। कारकविभक्तिप्रसंगात्। किंतु जपसंबंधिवर्षणमिति द्वितीयया वगतः संबंधो लक्ष्यलक्षणभाव एवेति अवगमात्। संबंध एवानुना विशेषेव स्थाप्यते। क्वचित्तु क्रियागतविशेषद्योतकोपि इयं संज्ञा वचनात् प्रवर्त्तते। सुः पूजायामतिरतिक्रमणे चेति यथा। उक्तसंज्ञ इति। कर्मप्रवचनीय इत्यर्थः। गत्युपसर्ग संज्ञापवाद इति। ननु जपमनु प्रावर्षदित्यत्र वृष्टिं प्रत्यनोर्योगाभावेन क्रियायोगाभावादेतयोः संज्ञयोः प्राप्त्यभावात् कथं तदपवादत्वं अस्याः संज्ञाया इति चेत् अत्राहुः। गम्यमा

कर्म्मप्रवचनीयाः। १।४।८३॥ इत्यधिकृत्य। अनुर्लक्षणे। १।४।८४॥ लक्षणे द्योत्येऽनुरुक्तसंज्ञस्स्यात्। गत्युपसर्गसंज्ञाऽपवादः। कर्म्मप्रवचनीययु क्ते द्वितीया। २।३।८॥ एतेन योगे द्वितीया स्यात्। जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितम्वर्षणमित्यर्थः। परापि हेतौ तृतीयाऽनेन बाध्यते। लक्षणेत्य म्भूतेत्यादिना सिद्धे पुनस्संज्ञाविधानसामर्थ्यात्। तृतीयार्थे। १।४।८५॥ अस्मिन् द्योत्येऽनुरुक्तसंज्ञस्स्यात्। नदीमन्ववसिता सेना। नद्या सह सम्बद्धे त्यर्थः। षिञ् बन्धने क्तः॥

९ ननि शमनक्रियामपेक्ष्य तयोः प्राप्तिरस्तीति संभावनामात्रेण मूलस्य निर्बाधत्वात् न चैवं कर्मत्वादेव द्वितीयासिद्धौ किमनया संज्ञयेति वाच्यं पस्य निशमनप्रयुक्तहेतुत्वाख्यसंबंधविवक्षायां कर्मत्वाभावेन तृतीयायां प्राप्तायां तदारंभात्। न चैवमपि जपमनु निशम्य देवः प्रावर्षत् इत्यर्थावगमात् ल्यब्लोपे पंचम्यप वादार्थं वेयं संज्ञास्त्विति वाच्यं ल्यब्लोपे हि कर्मणि अधिकरणे च पंचमी जपस्य तु कर्मत्वादिना विवक्षाभावादिति। परापि हेतौ तृतीयेत्यादि। अयं भावः। लक्षणे कर्मप्रव चनीयसंज्ञाया अवकाशः। यो न हेतुः वृक्षमनु विद्योतते विद्युदिति। हेतुतृतीयाया अवकाशः धनेन कुलमित्यादि। जपमनु प्रावर्षदित्यत्र तु हेतुभूते लक्षणे परत्वात्तृतीया स्या त्तां बाधित्वा अनुर्लक्षण इति पुनः संज्ञाविधानसामर्थ्यात् द्वितीयैव भवतीति। न च तृतीयार्थ इति सूत्रेण हगतार्थता शंक्या तस्य पुरस्तादपवादन्यायेन सहयुक्तेऽप्रधान इत्येतावन्त्र बाधकत्वात्। सामर्थ्यादिति। अत एव हेतुत्वपर्यंतमपि शाब्दबोधे विषय इति सूच्यते इति भावः। नदीमन्वेति। द्वितीयायाः संबंधोऽर्थः। षष्ठ्यपवादत्वादेतत् द्वितीयायाः स चेह सं

मूर्खसंबोध्यकनिषिद्धाचरणास्यनिंद्यतइतितुवाक्यार्थः। प्रथमार्थेधिग्योगे द्वितीयेतिवादिनांतुमूर्खसंबोध्यकनिषिद्धाचरणंनिंद्यमितिवाक्यार्थः। यत्तुउपपदविभ
क्तेःकारकविभक्तिर्बलीयसीतिसंबोधनेप्रथमैवभवतिसंबोधनपदस्यकर्तृकारकवाचित्वादित्याहुः। तच्चिंत्यं। संबोधनस्यकर्तृकारकत्वेउक्तिसंभवाभावात्। नचदे
वप्रसीदेत्यादौवस्तुगत्यादेवएवकर्तेत्यस्त्येवउक्तिसंभवइतिवाच्यं। वास्तवकर्तृत्वेपिकारकविभक्तित्वस्यअलाभात्। किंच। देवत्वांभजेत्वांभजंतिभक्ताइत्यादौसं
बोध्यस्यदेवस्यवास्तवमपिकर्तृत्वंनास्तीतिआस्तांतावत्। उपर्युपरीति। कथंतर्हि उपर्युपरिबुद्धीनांचरंतीश्वरबुद्धयइति। अत्राहुः। उपरिबुद्धीनांउत्तानबुद्धीनांउपरि
चरंतीत्यर्थः। तेनाऽऽम्रेडितत्वाभावान्नद्वितीया। यद्वाप्रतिपदोक्तस्योपर्यध्यधसः सामीप्यइतिकृतद्वित्वस्यवार्तिकेग्रहणादिहचवीप्साद्विर्वचनत्वान्नास्तिद्विती
याप्रसक्तिरिति। अभितः परितइति। एतच्चान्यत्रापिदृश्यतइतिपूर्वोक्तस्यैवप्रपंचभूतमितिव्याचख्युः। अभितः कृष्णामिति। पर्यभिभ्यांचेतितसिल्। समयानिक
षाशब्दौसामीप्यवचनावव्ययौ। विलंघ्यलंकांनिकषाहनिष्यतिइतिमाघः। हेतिखेदेतद्देतद्दाहतस्यशोच्यतेइति। बुभुक्षितमिति। बुभुक्षितस्येत्यर्थः। एषप्रतिश
ब्दःक्रियाविशेषकत्वादुपसर्गः। नतुकर्मप्रवचनीयः। तेनात्रकर्मप्रवचनीययुक्तेत्यनेनगतार्थतानशंक्या। अंतरा ‾ तरेणप्रतिपदोक्तत्वान्निपातयोरेवग्रहणं
नतुटावंततृतीयांतयोः परस्परसाहचर्याच्चात यथागुरुभार्गवावित्युक्तेग्रहयोरेवप्रतीतिर्नत्वाचार्यपरशुरामयोः। तेनकिमनयोरंतरेणगतेनेतिसिद्धं। किमनयोर्वि
शेषणज्ञानेनेत्यर्थः। अंतरात्वांमामिति। तवममचमध्येइत्यर्थः। हरिशब्दात्तुद्वितीयानभवति। अंतरंगतयाप्रथमायाएवोत्पत्तेः। अंतरेणहरिमिति। हरिंविनेत्य
र्थः। मध्येइत्यर्थेप्यंतरेणशब्दोवर्तते। मृणालसूत्रामलमंतरेणस्थितश्चलच्चामरयोर्द्वयंसइति। चलच्चामरयोर्द्वयस्यमध्येइत्यर्थः। युक्तग्रहणान्नेह। अंतरा
त्वांमांकृष्णास्यमूर्तिः। इहकृष्णान्नद्वितीया। अंतराशब्दप्रयोगेपिअंतरेत्यनेनानन्वयात् ॥ ॥ ॥ ॥ ॥

अतिरतिक्रमणे च। चकारेण पूजायामित्यनुकृष्यत इत्याह। पूजायां चेति। अतिक्रमणमुचितादधिकस्यानुष्ठानं। अर्थद्वयेप्येकमेवोदाहरति। अतिदेवान् कृष्ण इति। अन्ये तू दाहरंति। अतिसिक्तमतिस्तुतमिति बहुतरं समीचीनं वा सिक्तं स्तुतं चेत्यर्थः। बहुतरार्थे अतिक्रमणं समीचीने पूजेति विवेकः। अपिः पदार्थे। सर्पिषोपि स्यादिति। सर्पिषो बिंदुः स्यादित्यर्थः। अपेः कर्मप्रवचनीयत्वे फलमाह। अनुपसर्गत्वान्न ष इति उपसर्गसंज्ञाभावादुपसर्गप्रादुर्भ्यामस्तिरिति षत्वं न प्रवर्तत इति भावः। संभावनायामिति। संभाव्यत इति संभावना। णयास श्रेथो युच्। भवनक्रियासंभावनायां भवनस्य विषयत्वादाह। तस्या एवेति। संभावनाया एवेत्यर्थः। कर्तृदौर्लभ्येत्यादि कर्तृदौर्लभ्याद्भवनक्रियाया दौर्लभ्यं तद्दौर्लभ्यं द्योतयन्नपिशब्दो भवनक्रियावाचिना स्यादित्यनेन न संबध्यत इत्यर्थः। अवयवावयवि भाव इति सर्पिरवयवी बिंदुरवयवः इयमेवेति बिंदुदौर्लभ्यप्रयुक्तदौर्ले

अतिरतिक्रमणे च। १।४।९५॥ अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात्। अतिदेवान् कृष्णः। अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु। १।४।९६। एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात्। सर्पिषोऽपि स्यात्। अनुपसर्गत्वान्न षः सम्भावनायां लिङ्। तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते। सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसम्बन्धे इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम। द्वितीया तु नेह प्रवर्तते। सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात्। अपि स्तुयाद्विष्णुम्। सम्भावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः। अपि स्तुहि। अन्ववसर्गः कामचारानुज्ञा। धिग्देवदत्तमपि स्तुयाद्वृषलं गर्हा। अपि सिञ्च अपि स्तुहि समुच्चये ॥ ॥

भ्यद्योतकता वेत्यर्थः द्वितीयेति। कर्मप्रवचनीययुक्ते त्यनेन विहिता न त्वपिनेति। न च बिंदुना योगे तद्द्योतकापिशब्देनापि योगो जात एवार्थद्वारा शब्दानां योगस्याभ्युपगमादिति शंक्यं। अपिशब्दस्य बिंदुद्योतकत्वाभावात्। कथं तर्हि बिंदुप्रतीतिरिति चेत्। शृणु। अपिना द्योत्यं भवनदौर्लभ्यमेव कर्तृदौर्लभ्यमाक्षिपति कर्ता त्विह बिंदुरेवेति संप्रतीयते। अत एवापिशब्दबलेन गम्यमानस्येत्युक्तं न त्वपिना गम्यमानस्येति। उक्तत्वादिति। उक्तप्रायत्वादित्यर्थः। अपिशब्दः स्यादित्यनेन संबध्यत इत्युक्ते स्यादित्यस्यापिना योगो न तु सर्पिष इत्यस्येत्यर्थपर्यवसानात्। अपि स्तुयादिति अवाङ्मनसगोचरं विष्णुमपि स्तूयादिति अधिकोक्तिः। एतादृशस्यान्यदीयस्तवने सामर्थ्यमस्तीत्यत्र किं वक्तव्यमिति भावः। इह संभावनाद्योतकोपिशब्दः इहैव तु संभावनाविषयदौर्लभ्यद्योतक इति महान् भेदः। उपसर्गात्सुनोतीत्यादिना षत्वं न भवति ॥ ॥ ॥ ॥

हीने। उत्कृष्टादेव द्वितीयानत्वपकृष्टाच्छ्रुतिस्वभावादित्याशयेनोदाहरति। अनुहरिमिति। उपोऽधिके च। चकारेण हीने इत्यनुकृष्यते तदाह। अधिके हीने चेति। अधिके संज्ञाविधानेन द्वितीयार्थमित्याह। सप्तमीवक्ष्यत इति। यस्मादधिकमित्यनेनेति भावः। तस्मिन्नपि सूत्रे कर्मप्रवचनीया इत्यनुवृत्तेरधिके संज्ञाविधानमावश्यकमेवेति ज्ञेयं। उपहरिमिति। पूर्ववदुत्कृष्टादेव द्वितीया। लक्षणेत्थं। वृक्षं प्रतीति। वृक्षसंबंधिद्योतनमर्थः। संबंधश्चलक्ष्यलक्षणभावइति प्रत्यादयो द्योतयंति भक्तो विष्णुं प्रतीति। विष्णोर्भक्तो अविषयविषयिभावः प्रत्यादिद्योत्यः। भक्तः कंचित्प्रकारं प्राप्त इत्यर्थः। लक्ष्मीर्हरिं प्रतीति। लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः। वृक्षं वृक्षमिति द्वित्वं वीप्सा द्विर्वच नेनैव द्योत्यते। प्रत्यादिशब्दस्तु क्रियया संबध्यते। कर्मण्येव द्वितीया कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न एतदर्थमेव लक्षणादयो विषयतया पात्ता इति

हीने। २। ३। २३। हीने द्योत्ये ऽनुः प्राग्वत्। अनुहरिं सुराः। हरेर्हीना इत्यर्थः। उपोऽधिके च। १। ४। ८७। अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात्। अधिके सप्तमी वक्ष्यते। हीने उपहरिं सुराः। लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः। १। ४। ९०। एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः। लक्षणे। वृक्षं प्रति पर्यनु वा विद्योतते विद्युत्। इत्थंभूताख्याने। भक्तो विष्णुं प्रति पर्यनु वा। भागे। लक्ष्मीर्हरिं प्रति पर्यनु वा। हरेर्भाग इत्यर्थः। वीप्सायां। वृक्षं वृक्षं प्रति पर्यनु वा सिंचति। अत्रोपसर्गत्वाभावान्न षत्वम्। एषु किं। परिषिंचति। अभिरभागे। १। ४। ९१। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात्। हरिमभिवर्तते। भक्तो हरिमभि। देवं देवमभिसिंचति। अभागे किं। यदत्र ममाभिष्यात्तद्दीयतां। अधिपरी अनर्थकौ। १। ४। ९३। उक्तसंज्ञौ स्तः। कुतोऽध्यागच्छति। कुतः पर्यागच्छति। गतिसंज्ञाबाधात् गतिर्गताविति निघातो न। सुः पूजायां। १। ४। ९४। सुसिक्तं। सुस्तुतं। अनुपसर्गत्वान्न षः। पूजायां किं। सुसिक्तं किं तवात्र। क्षेपोऽयं॥

॥ व्याख्यातमाकरेषु पंचम्यपाङ्परिभिरितित्व न भवति। वर्जनार्थेनापेत्यनेन साहचर्यात् परिषिंचतीति। सर्वतः सिंचतीत्यर्थः। उपसर्गत्वे तु नेति षत्वं। ममाभिष्यादिति। मम भागः स्यादित्यर्थः। प्रांचस्तु मामभिष्यादिति प्रत्युदाहरंति तत्र मां प्राप्नुयादित्यर्थः। उपसर्गवशेनास्तेः सकर्मकत्वान्मामिति द्वितीया। अत्र च मम भाग इत्यर्थतः पर्यवसानादभागे इति कर्मप्रवचनीयत्वे निषिद्धे उपसर्गप्रादुर्भ्यामिति षत्वं। कुतोऽध्यागच्छतीति। इह प्रजयति पराभवतीत्यत्र च संप्रतिविद्योतत इत्यत्र प्रादेर्विशेषद्योतकत्ववदधिपर्योरिह विशेषद्योतकत्वाभावादानर्थक्यं धात्वर्थमात्रद्योतकत्वेन तदर्थवत्तास्त्येवेति बोध्यं॥ गतिर्गताविति। अत्र परादित्यधिकृत्य पदात् परस्य

मधिकरणत्वमस्तीति सूचितं। आह चानस्तु तत्तदनिर्देश्यं न हि वस्तु व्यवस्थितं। स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यत इति। अयं भावः। कारकत्वे तद्व्याप्यकर्तृत्वादिषट्कं च वस्तु विशेषे विशेषणविशेष्यभाववन्न नियतं। किंतु वैवक्षिकं न हि गोः सर्वं प्रति गोरेव न तु कं चित् प्रत्यगोरिति वद्विशेषणं सर्वं प्रति विशेषणमेवेति वक्तुं शक्यं। तथा च कया धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने प्रकृतधातुव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्त्ता व्यापारव्यधिकरणफलाश्रयः कर्म। कर्तृकर्मद्वारकसंबंधेन व्यापारस्य फलस्य वा आश्रयोऽधिकरणमिति स्थितं। पच्यर्थो व्यापारश्चानेकधा। एवं च पचेरधिश्रयणतंडुलावयवेनाधोयकर्मणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्त्ता। ज्वलनतात्पर्यकत्वे एधाः कर्त्तारः। तंडुलधारणादिपरत्वे स्थाली कर्त्री। अवयवावैविभावादिपरत्वे तंडुलाः कर्त्तारः। स्थाल्या पचतीत्यत्र तृतीयोपात्तव्यापाराश्रयोऽपि स्थालीकरणमेव न तु कर्त्री देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात् तथा च आदिखादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्त्ता तस्मिन्नेवार्थे भक्षयतिनोपात्ते प्रयोज्यः कर्म अधिश्वैः पीडनादिभिरुपात्तेऽर्थे आधारः कर्म केवले रूपात्ते अधिकरणमित्यादि ज्ञेयं। एतेन ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोध इति केषांचिदुक्तिः परास्ता। यद्धातूपात्तक्रियायां पदार्थस्य स्वातंत्र्यं विवक्ष्यते तदा तत्क्रियायां स कर्त्ता यद्धातूपात्तया कर्तुः क्रियया परा

नुमिष्टतमत्वेन यद्विवक्ष्यते तदा तत्कारकं तत्क्रियायां कर्मेत्येवं शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्यक्षे उक्तिसंभवाभावात् यत्तु केचित्परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वं चेत् वृक्षात्पर्णं पततीत्यादौ स्वसमवेतक्रियाजन्यविभागादिफलशालिनि कर्तर्येतिव्याप्तिः भावेप्यपादानेऽतिव्याप्तिः स्यादेव ततश्च धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्येवाभ्युपगंतव्यं। एवं च सति ग्रामं गच्छतीत्यादि सकर्मके गमनजन्यसंयोगादाविष्टानुरोधेन धात्वर्थतावच्छेदकत्वेऽभ्युपगतेऽपि वृक्षात्पर्णं पततीत्याद्यकर्मकेषु पतनादिजन्यविभागादौ तदवच्छेदकत्वाकल्पनान्नापादानेतिव्याप्तिर्न वा ग्रामं गच्छतीत्यादौ कर्तर्येतिव्याप्तिः संयोगादिफलजनकीभूतधात्वर्थस्य परसमवेतत्वविशेषणात् कर्मत्वेनाभिमतं यत्तद्भिन्नस्य परशब्देनात्र विवक्षितत्वादित्याहुस्तदप्येतेन प्रत्युक्तं ग्रामं गमयति देवदत्तमित्यादौ गंतर्यव्याप्तेः णिजर्थप्रेरणाजन्यप्रयोज्यव्यापारे गमनादौ धात्वर्थतावच्छेदकत्वाभावात् तत्वाभ्युपगमे तु देवदत्तेन पाचयतीत्यादौ प्रयोज्यकर्तर्येतिव्याप्तेः गतिबुद्धीत्यादिशास्त्राभ्युपगमं विना क्वचित् प्रयोज्यकर्तरि कर्मत्वं क्वचित्तु कर्तृत्वमिति निर्द्धारयितुमशक्यत्वात् हृक्रोरन्यतरस्यामिति शास्त्रमते हारयति कारयति वा

त्वा

सुहि इति। सिंच स्तुहि चेत्यर्थः ॥ ॥ कालाध्वनोः। अत्र विराममतिक्रान्तोऽत्यन्तः स चासौ
कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात्। एवमुत्तरत्रापि बोध्यम्। अपि सिंच अपि स्तुहि इति। सिंच स्तुहि चेत्यर्थः
संयोगश्चात्यन्तसंयोगः निरंतरसन्निकर्ष इत्यर्थः। केनेत्याकांक्षायां गुणक्रियाद्रव्यैरित्यौचित्यात् बोध्यम्। द्वितीयास्यादिति। सुतरां कालाध्ववृत्तिभ्यामेव। स्वरूपग्रहणं त्विह न भ
वति। कालाः अत्यंतसंयोगे चेति समासविधायके काला इति बहुवचननिर्देशेन द्वितीयाविधौ स्वरूपविधिर्नेति ज्ञापनात्। अत एव मासप्रमितः मुहूर्तसुखमिति द्वितीया
समासविधावुदाहरिष्यति। मासं कल्याणीत्यादि। अकर्मकधातुभिर्योगे एव देशकालादीनां कर्मसंज्ञाविधानात्। नेह कर्मणि द्वितीयेति द्वितीयाप्राप्तेरितीति भावः।
मासस्य द्विरिति। कृत्वोऽर्थप्रयोगे काले ऽधिकरणे इत्यनेन षष्ठीति प्राचः। तत्र शेषग्रहणानुवृत्त्या द्विरह्नो भोजनमिति यदं तेन सह समासवृत्तेरेव फलत्वात् तस्माद्दि

कालाऽध्वनोरत्यन्तसंयोगे। २।३।५। इह द्वितीया स्यात्। मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्। मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः॥ स्वतन्त्रः कर्त्ता। १।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात्॥ साधकतमं करणम्। १।४।४२। क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्। तमब्ग्रहणात्किं। गङ्गायां घोषः। कर्तृकरणयोस्तृतीया। २।३।१८। अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली॥ प्रकृत्यादिभ्य उपसंख्यानं॥ प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेनैति। विषमेणैति। द्विद्रोणेन धान्यं क्रीणाति। सुखेन दुःखेन यातीत्यादि॥ दिवः कर्म्म च। १।४।४३। दिवः साधकतमं कारकं कर्मसंज्ञं स्यात् चात्करण संज्ञं। अक्षैरक्षान्वा दीव्यति॥ अपवर्गे तृतीया। २।३।६। अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। अह्ना क्रोशेन वाऽनुवाकोऽधीतः। फलप्राप्तिः किं। मासमधीतो नायातः॥ ९९

इह षष्ठी शेष इति सूत्रेणैव षष्ठी भवत्यन्तरङ्गत्वादित्याहुः। अन्यार्थमारब्धस्यापि कृत्वोऽर्थ
प्रयोग इति सूत्रस्य द्विरह्नो भुक्त इत्यत्र विशेषविहितत्वात्प्रवृत्तौ बाधकं नास्तीति केचित् इति द्वितीया॥ स्वतंत्रः कर्ता। प्रधानीभूतधात्वर्थाश्रयत्वं स्वातंत्र्यं। आह च। धातु
नोक्तक्रिये नित्यं कारके कर्तृतेष्यत इति। स्थाल्यादीनां वस्तुतः स्वातंत्र्याभावेऽपि स्थाली पचति काष्ठानि पचंतीत्यादिप्रयोगोऽपि साधुरेवेति ध्वनयति। विवक्षितोऽर्थ इति। साध
कतमं करणं। प्रकृष्टेति। यद्व्यापारानंतरं फलनिष्पत्तिस्तत्प्रकृष्टं। उक्तं च। क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनंतरं विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतं विवक्ष्यत इत्यनेन

कर्मकृत्समभिव्याहारेतुव्युत्पत्त्यासोऽस्येवेतिउक्तत्वात्। हरिंभजतिदेवदत्तइत्यादौतुव्यापारस्यप्राधान्यमस्त्येवाप्रकृतिप्रत्ययार्थयोर्द्वयोराधारयोर्देवदत्तनिष्ठव्यापार
योश्चाभेदइहसंसर्गः। तथाचहर्याधारिकायाप्रीतिस्तदनुकूलएवदेवदत्ताधारकोवर्तमानोयोव्यापारइतिवाक्यार्थः। नचाधारत्वेववाच्येतिमंतव्यं। तन्निष्ठधर्मत्व
स्याधारत्वस्यवाच्यतावच्छेदकत्वापत्त्याऽतिगौरवात्। कर्मणिद्वितीयेत्यादिसूत्रस्वरसभंगापत्तेश्च। अतएवभाष्यकारोप्याह। सुपांकर्मादयोप्यर्थाःसंख्याचैव
तथातिङामिति। अनभिहितेकिं। हरिःकरोति। पाचकः। कर्तरिण्वुल्। शाब्दिकः। शब्दंदर्दुरंकरोतीतिठक्। कृतःकृतेविश्वंयेनकृतविश्वः। विश्वकर्मेत्याश्रयइत्यर्थः
जीवत्यनेनजीवनं। करणोल्युट्। प्रकृत्यादिभ्यइति। आकृतिगणोयं। तेननाम्नासुतीक्ष्णश्चारितेनदांतइत्यादिसिद्धं। चारुरिति। अभिरूपइत्यर्थः। क्रियापात्र
अवणात्। कर्तृकरणयोरभावात्षष्ठीहप्राप्ता। एतच्चगम्यमानकरोतिक्रियाकरणत्वात्सिद्धं। करणांतरव्युदासायहिप्रकृतेरेवकरणत्वंविवक्षितंस्वभावे
नायमभिरूपःकृतोनत्वलंकारादिनेत्यर्थात्॥ प्रायेणयाज्ञिकइति। एतदपिगम्यमानज्ञानक्रियांप्रतिकरणत्वात्सिद्धं। आधारादिवाहुल्येनयाज्ञिकोयमि
तिज्ञनेज्ञायतइत्यर्थात्। गोत्रेणगार्ग्यइति। गार्ग्योऽस्यगोत्रमित्यर्थः। प्रथममात्रप्राप्तागोत्रेणाहंज्ञायेइत्यर्थात् इहापितृतीयासिद्धा। समेनेत्यादिसममेती
त्याद्यर्थेसमविषमाभ्यांकर्मणिद्वितीयाप्राप्ता। इहापितृतीयासिद्धा। पयोपिगमनेकरणत्वाभ्युपगमात्। द्विद्रोणेनेति। द्वयोर्द्रोणयोःसमाहारोद्विद्रोणं।
पात्रादित्वात्स्त्रीत्वाभावः। द्रोणद्वयसंबंधिधान्यमित्यर्थः। इहषष्ठीप्राप्ता। द्विद्रोणपरिमितधान्यार्थमूल्येद्विद्रोणशब्दस्तस्यचक्रयंप्रतिकरणत्वमि
तीहापितृतीयासिद्धेतिदिक्। चादिति। करणशब्दाज्जइत्यापरिक्रयणेसंप्रदानमन्यतरस्यामित्यत्रसूत्रस्यान्यतरस्यांग्रहणापकर्षेणनवासंज्ञयोःपर्या
यत्वेलब्धेचग्रहणंसमुच्चयार्थं। तेनमनसादीव्यतीतिमनसादेवइत्यत्रकर्मण्यणकरणेतृतीयाचोभयंयुगपत्सिध्यतिमनसःसंज्ञायामित्यलुक्। किंचास्य
क्षैर्देवयतेदेवदत्तोयज्ञदत्तेनेत्यत्रसकर्मकत्वात् अणिकर्तरणौगतिबुद्धीत्यनेनकर्मत्वंन। अणावकर्मकादितिपरस्मैपदमपिनभवति। ननुकर्मकरणसं
ज्ञासमावेशस्यमनसादेवइत्यत्रकृतार्थत्वादस्यान्दीव्यतीत्यत्रपरत्वात्तृतीयेवस्यान्नतुद्वितीयेतिचेदत्राहुः। कार्यकालपक्षेकर्मणिद्वितीयेत्यत्रपद
स्योपस्थानंतस्यानवकाशत्वात्द्वितीयेति। स्यादेतत्। दीव्यतेअक्षाइत्यत्राभिहितेपिकर्मणिकरणत्वस्यानभिधाना          त्तृतीयास्यात्।

एतादृशेषुवैय्याकरणोक्तैर्नैवनिर्वाहइतिचेत्तर्हिआकडारादेकासंज्ञायापराऽनवकाशाचेत्युक्तत्वान्निरवकाशयाअपादानसंज्ञयासावकाशायाःकर्मसंज्ञायाबाधा
न्नोक्तातिव्याप्तिरितिकिमनेनधात्वर्थतावच्छेदकेत्यादिपरिश्रमेण।स्यादेतत्।आत्मानमात्मनावेत्सिसृजस्यात्मानमात्मनेत्यादिप्रयोगःकथंसंगच्छतेएकस्यैवव
स्तुनायुगपदेकक्रियानिरूपितकर्तृत्वकर्मत्वादेरसंभवात्परयाकर्तृसंज्ञयाकर्मकरणादिसंज्ञायाबाधात्नैषदोषः।अहंकाराद्युपाधिभेदेनात्मनोपिभेदमाश्रि
त्यात्मानमात्माहंतीत्यादिप्रयोगस्याकरेसमर्थितत्वात्।ननुसाधकंकरणमित्येवास्तुकारकाधिकारादिहकारकमितिवर्ततेसाधकंकारकंहिपर्यायस्तथाचोभयोपा
दानेनप्रकर्षोलभ्यतइत्याशयेनपृच्छति।तमप्ग्रहणंकिमिति।इतरस्तुकारकप्रकरणेगौणमुख्यन्यायएतत्सूत्रादन्यत्रनप्रवर्ततइतिज्ञापनार्थंतमप्ग्रहणमि
त्याशयेनज्ञापनफलमुदाहरति।गंगायांघोषइति।उक्तज्ञापनानंगीकारेत्विहाधिकरणसंज्ञानस्यात्।तिलेषुतैलंदधिनिसर्पिरित्यादौमुख्याधारेतस्याश्चरिता
र्थत्वादितिभावः।अत्रव्याचख्युः।यदाचतीरधर्मआधारत्वंसामीप्यात्प्रवाहेउपचर्यतेतदेदंप्रयोजनंयदातुगंगाशब्दएवतीरेवर्ततेतदातुनप्रयोजनंतीर
स्यमुख्याधारत्वात्।तत्राद्यपक्षेविभक्तिलोपणीकीद्वितीयेतुप्रकृतिलोपणीकीत्यादि।रामेणेति।यद्यपिविभक्त्युपस्थितानांकारकाणांक्रियांप्रतिविशेषणा
नैवतथापिकृदुपस्थितानांविशेष्यतैव।सत्त्वप्रधानानिनामानीत्युक्तेः।धातूपस्थाप्ययोःफलव्यापारयोर्हन्यतइत्यादिकर्माख्यातसमभिव्याहारेविशेषणवि
शेष्यभावव्यत्यासाभावेपिहतइत्यादिकर्मकृत्समभिव्याहारेव्यत्यासोस्त्येव।तथाचरामनिष्ठोयोव्यापारोधनुराकर्षणादिस्तद्विषयीभूतोयोबाणव्यापारःशरी
रभेदनादिस्तत्साध्यप्राणवियोगाश्रयोवालीतिवाक्यार्थः।वालिनंहंतिवालीहन्यतइत्यादौतुवालिनिष्ठःप्राणवियोगानुकूलोयःशरीरभेदनादिर्बाणव्यापारः
स्तद्विषयकोरामनिष्ठधनुराकर्षणादिव्यापारइत्यर्थोबोध्यः।अत्रेदमवधेयं।फलव्यापारयोर्धातुराश्रयेतुतिङःस्मृतः।फलेप्रधानंव्यापारस्तिङर्थस्तुविशेष
णं।इहधातुःस्मृतइत्यन्वयः।वाचकत्वेनेतिशेषः।आश्रयेतुतिङइतिविभक्तिविपरिणामेनस्मृताइतिसंबध्यते।वाचकत्वेनेतिपूर्ववत्।तिङइत्युपलक्षणं
द्वितीयातृतीयादीनामपिआश्रयमात्रार्थकत्वात्।तान्त्वेवमाधारार्थकत्वेद्वितीयातृतीयासप्तमीनांसांकर्यंस्यात् मेवं।निरूपकभेदेनाधारभेदात्फलनिरूपित
आधारभेदोद्वितीयार्थः।व्यापारनिरूपितस्तुतृतीयार्थः।स्वाश्रयद्वाराव्यापारनिरूपितःफलनिरूपितश्चसप्तम्यर्थइतिह्यभ्युपगम्यतेफलेप्रधानमिति।एतच्चप्रापि

प्रादुर्भाव इति तस्याकर्मकत्वात्॥ ३॥ सं॰ प्राग्भागस्य तत्र त्यस्याल्लोपो न इत्यल्लोपेन निष्पन्नतया लाक्षणिकत्वाच्चेत्याशयेनाह। जानातेरिति। संजानीत इति। संमति
भ्यामनाध्यान इति तङ्॥ कृद्योगे परत्वात् कर्तृकर्मणोरिति षष्ठ्येव पितुः संजाता। आध्याने तु पित्रा पितरं वा संजानाति। हरदत्तस्त्वाह। आध्याने परत्वादधीगर्थेति षष्ठी
मातुः संजानातीति तन्न तत्र शेषाधिकारा॑दिति मनोरमायां स्थितं॥ हेतौ॥ हेतुरिह लौकिकः फलसाधनीभूतो गृह्यते। न तु तत्प्रयोजको हेतुश्चेति चात्रिमः। तस्य च कारेण
कर्तृसंज्ञाविधानात् कर्तृत्वादेव तृतीयासिद्धेरत आह। हेत्वर्थ इत्यादि। ननु लौकिकहेतोरपि करणत्वादेव तृतीयासिद्धेः किमनेनेत्याशंक्य हेतुत्वकरणत्वयोर्भेदमाह।
द्रव्यादीति। आदिशब्देन गुणक्रिययोर्ग्रहः। द्रव्यगुणक्रियानिरूपितं निर्व्यापारसव्यापारवृत्ति च यत्तद्धेतुत्वमित्यर्थः। करणत्वं त्विति। क्रियामात्रनिरूपितं व्यापारवद्वृ
त्ति च यत्तत्करणत्वमित्यर्थः। एवं च हेतुकरणयोर्भेदादन्यतरेणान्यस्यान्यथासिद्धिर्न शंक्येति भावः। उक्तं त्वा। द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्। अनाश्रितं तु व्यापारं
निमित्तं हेतुरिष्यत इति। द्रव्यविषये हेतुत्वमुदाहरति। दंडेन घट इति। दंडहेतुको घट इत्यर्थः। अत्र हि व्यापारो गुणानामुत्पत्तिसाक्षात्क्रियान्वयित्वाभावात् करणत्वं नास्ती
ति भावः। क्रियाविषये उदाहरणमाह। पुण्येन दृष्ट इति। पुण्यशब्देन ह परमात्मोच्यते। तस्य च हरिदर्शनरूपक्रियान्वयित्वसंभवेपि व्यापारवत्त्वाभावान्न करणत्वमि
ति भावः। यदा यागादिकमेव पुण्यशब्देन विवक्ष्यते तदा तस्य व्यापारवत्त्वमस्त्येवेति कर्तृकरणयोरित्यनेनैव तृतीयासिद्धा। गुणविषये तु पुण्येन गौरवर्ण इत्याद्युदा
हार्यं। जटाभिस्तापस इत्यादौ तु लक्ष्यलक्षणभावविवक्षायां हेतुत्वाविवक्षणादनेनाप्राप्ता तृतीयेतीत्थंभूतलक्षण इत्यारभ्यमित्याहुः। अत्र केचिदुत्प्रेक्षंते। द्रव्यादिसा
धारणत्वाद्धेतुत्वस्य हेतावित्यनेनैव नाशो न हन्त इत्यादिप्रयोगसिद्धेः कर्तृकरणयोरिति सूत्रे करणग्रहणं त्यक्तुं शक्यं। करणसंज्ञा तु आवश्यकी करणाधिकरणयोश्चे
त्याद्यर्थमिति। अन्ये तु। क्रियासाधकतमं यत्तद्व्यापारवत्त्वेन विवक्षितं नेत्करणं। नो चेद्धेतुः। अन्यसाधकतमस्य दंडादेस्तु व्यापारवत्त्वेपि हेतुत्वमेवा। एवं च रामेण बाणे
न हत इत्यादौ हनने बाणादिर्निमित्तमित्येतावदेव यदा विवक्ष्यते तदा हेतावित्यनेनैव तृतीया। न तु व्यापारसाध्यप्राणवियोगाश्रयत्वे व्यापारविशिष्टत्वेन विवक्षा
यां तु हेतुत्वाविवक्षणात् कर्तृकरणयोरिति करणे तृतीया आरभ्येत्याहुः। फलमपीति। एतच्च प्रत्यय इति सूत्रे कैयटे स्पष्टं। अध्ययनेनेति। तादर्थ्यविवक्षायां तु चतुर्थ्य
पि भवतीति चतुर्थी सहेयं तृतीया विकल्प्यते। अध्यापनाय वसति। अत्र केचित्परिष्कुर्वंति। अध्ययनेन वसतीत्यत्र दंडहेतुको घट इतिवदध्ययनहेतुको निवास

तथा देवनाश्रक्षा इत्यत्र । ल्युडादिकरणत्वस्याभिधानेपि कर्मणोनभिधानात् द्वितीयास्यात् मैवं ॥ एकैवल्युट्शक्तिः संज्ञाद्वययोगिनी तथा चैकस्यां शक्तावभिहिता
यामन्यस्याप्यभिधानादुभयत्राप्यभिधानमेव नत्वनभिहितत्वं ॥ ॥ सहयुक्ते ॥ सहेनाप्रधानइत्येववाच्ये युक्तग्रहणादर्थग्रहणमित्याह । सहार्थेनेति स
हार्थकशब्देन सह साकं सार्धमित्यादिनेत्यर्थः । पुत्रेणेति । पितुरेवागमनक्रियासंबंधः शाब्दः पुत्रस्य त्वार्थ इत्येतावतैव तस्याप्राधान्यमुच्यते । अप्रधानग्रहणं त्य
क्तुं शक्यं न चैवं पितुरपि तृतीयापत्तिः तत्र प्रातिपदिकार्थमात्रे अंतरंगत्वात् प्रथमोपपत्तेः । न च यत्र प्रथमा न प्राप्नोति पुत्रेण सह पितुरागमनमित्यादौ तत्र प्रथ

सहयुक्तेऽप्रधाने । २ । ३ । १९ सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता । एवं साकं सार्धं समं योगेऽपि । विनापि तद्योगं तृतीया । वृद्धो यूनेत्यादिनिर्देशात् ॥ येनाङ्गविकारः । २ । ३ । २० येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा काणः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । अङ्गविकारः किं । अक्षि काणमस्य । इत्थम्भूतलक्षणे । २ । ३ । २१ कञ्चित्प्रकारम्प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः । संज्ञोऽन्यतरस्यां कर्मणि । २ । ३ । २२ सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा संजानीते । हेतौ । २ । ३ । २३ हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वं । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः । पुण्येन दृष्टो हरिः । फलमपीह हेतुः । अध्ययनेन वसति । गम्यमानापि क्रिया विभक्तौ प्रयोजिका । अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः । इह साधनक्रियाम्प्रति श्रमः करणम् । शतेन शतेन वत्सान्पाययति पयः । शतेन परिच्छिद्येत्यर्थः । अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ॥ ॥ १९ नात पितुरपि तृतीया स्यात् अतस्तद्वारणाय अप्रधानग्रहणमावश्यकमिति वाच्यं । कारकविभक्तेर्बली

यस्त्वात् कर्तृकर्मणोः कृतीति षष्ठ्या एव तत्र प्रवृत्तेरिति दिक् ॥ येनांग ॥ येनेति सर्वनाम्ना प्रकृत्यर्थभूतोवयव एव गृह्यते संनिधानात् । स्वार्थो द्विकृत एवानत्ववि
कृतेनावयवेन शरीरस्य विकारः संभवतीति तदेतदाह ॥ येनांगेन विकृतेनेति । अंगिन इति । सूत्रे अंगशब्दोऽर्शआद्यजंत इति भावः । जटानामित्थंभूतलक्षणत्वमुप
पादयति । जटाज्ञाप्येति । जटाभिर्ज्ञाप्यतापसत्वतद्विशिष्ट इत्यर्थः । संज्ञो ॥ ज्ञा अवबोधने इत्ययमेव गृह्यते न तु जनी ॥

सकृतामभ्युपेत्य स्वमोर्नपुंसकादिति लुकि कृतेपि ह्रस्वो नपुंसक इति ह्रस्वः स्यात्। यत्प्रकुर्वीरन्नित्यत्र तु नलोपः स्यात्तस्मादुक्तवार्तिकस्य छंदोविषयत्वं युक्तमेव दानीय इति बाहुलकात्संप्रदाने अनीयर्। क्रियये ति। क्रियायाः कृत्रिमकर्मत्वाभावात्तया अभिप्रेयमाणस्य सूत्रेण संज्ञा न प्राप्नोतीति वचनं। एतच्च क्रियार्थोपपदस्य च कर्मणि स्थानिन इत्यनेन सिद्धं। पत्ये शेते इत्यादौ पतिमनुकूलयितुं शेते इत्याद्यर्थाभ्युपगमे बाधकाभावात्। भाष्यकारमते तु कर्मणा यमभिप्रैतीति सूत्रेणैव सिद्धं। संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात्क्रियापि कृत्रिमं कर्मेति तैरुक्तत्वात्। नचैवमर्थं ददातीति कर्मत्वात् क्रियया यमभिप्रैतीत्येतद्वचनं कर्तव्यमेवेति वाच्यं। भाष्ये अन्वर्थसंज्ञात्वास्वीकारात्। नन्वेवं कटं करोति ओदनं पचतीत्यादावपि संप्रदानत्वप्रसंगस्तथा च वचनद्वयबलात् कर्मसंप्रदानयोः पर्यायत्वे कटाय करोतीत्याद्यनिष्टप्रयोगोपि स्यादिति चेदत्राहुः। पत्ये शेते इत्यकर्मकस्थले सावकाशायाः संप्रदानसंज्ञायाः निरवकाशया कर्मसंज्ञया बाधितत्वान्नैवानिष्टप्रसक्तिः। नचैवं गत्यर्थकर्मणि द्वितीयाचतुर्थ्याविति सूत्रमावश्यकमेवेति तत्प्रत्याख्यानं भाष्यस्थं न संगच्छत इति वाच्यं। भाष्ये तत्प्रत्याख्यानस्य प्रौढिवादमात्रत्वादिति स्यादेतत् दानस्य तदर्थत्वात्तादर्थ्ये चतुर्थी सिद्धैव किमनया संप्रदानसंज्ञयेति मैवं दानक्रियार्थे हि संप्रदानं न तु दानक्रियातदर्थौ कारकाणां क्रियार्थे

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः १।४।३४। एषां प्रयोगे बोधयितुमिष्टः संप्रदानं स्यात्। गोपीस्मरात् कृष्णाय श्लाघते। ह्नुते तिष्ठते। शपते वा। ज्ञीप्स्यमानः किं। देवदत्ताय श्लाघते पथि॥ ९९

त्वात्। कर्मणः करणसंज्ञेत्यादिच्छंदस्येव तत्। अत एव सुव्यत्ययेन सिद्धत्वादिति प्रत्याख्यायते। रुच्यर्थानां रुचिरर्थो येषां ते रुच्यर्थास्तेषां। प्रीयमाण इति। प्रीञ् तर्पणे अस्मात् कर्मणि लट्। हरये रोचत इति। हरिं प्रीणयतीत्यर्थः। कर्मसंज्ञायां प्राप्तायां वचनं। यद्यपि रुचिर्दीप्तावपि पठ्यते तथापीह दीप्तिर्न विवक्षितेत्याह। अन्यकर्तृकोऽभिलाष इति। अत एवादित्यो रोचते दिक्षु इत्यत्र दीप्त्यर्थे संज्ञा न भवति हरिनिष्ठप्रीतेरिति एतेनान्यकर्तृकत्वमिह प्रीत्याश्रयान्यकर्तृकत्वमित्युक्तं भवति। मोदकः पथीति। देवदत्तस्यैव प्रीयमाणत्वं न तु पथ इति न तस्य संप्रदानत्वं प्रीयमाणपदाभावे तु पथोपि स्यादिति भावः॥ ९९॥ श्लाघह्नुङ्। श्लाघ कत्थने। ह्नुङ् अपनयने। ष्ठा गतिनिवृत्तौ। शप उपालंभे। कृष्णाय श्लाघत इति। कृष्णं स्तौतीत्यर्थः। कर्मत्वे प्राप्ते वचनमिदं। अन्ये त्वाहुः। कृष्णाय आत्मानं परं वा श्लाघ्यं कथयतीत्यर्थ इति। अस्मिंस्तु पक्षे शेषषष्ठ्यां प्राप्तायां वचनं। ह्नुत इति। सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थे कृष्णं बोधयतीत्यर्थः। यस्य कस्य चित्तुष्टिं बोधयतीति वा। तिष्ठत इति स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः। प्रकाशनस्थेयाख्ययोश्चेति तङ्। शपत इति उपा

इत्यर्थस्वीकारेप्ययंविशेषः।अध्ययनस्यफलेनसहाभेदःसंसर्गः उपकारकत्वेनसहनिरूपकता।ततश्चफलाभिन्नाध्ययननिरूपितोपकारकत्वाश्रयनिवसना
नुकूलोव्यापारइत्यर्थः।दंडेनघटइत्यत्रतुदंडनिष्ठोपकारकत्वनिरूपितोपकार्यत्वाश्रयोघटइत्यर्थः।उपकार्यंहिसाध्यंफलमपितदेवेति।गम्यमानापीति।अपिश
ब्देनश्रूयमाणाक्रियासमुच्चीयते।नकेवलंश्रूयमाणैवक्रियाविभक्तौप्रयोजिका किंतुगम्यमानापीतिभावः।साधनेति।साध्यमित्यत्रप्रकृतिभूतोयोधातुस्तदर्थप्रती
तिभावः।अशिष्टेति।एतच्चदाणश्चसाचेच्चतुर्थ्यर्थइत्यनेनज्ञाप्यतइतिमनोरमायांस्थितं।केचित्विहपरिसुर्वंति।अशिष्टव्यवहारइत्यंशोवाचनिकएवान्यो
शस्तुज्ञापकसिद्धइति।दास्यास्तंयच्छतेइति।दाणश्चसाचेदितितङ्।पाघ्राध्मेतियच्छादेशः।कामुकइति।लषपतपदेत्यादिनाकमेरुकञ्।इतितृतीया॥ ॥क
र्मणा।महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थं।सम्यक्प्रदीयतेस्मैतत्संप्रदानमिति।अतएवाह।दानस्येति।दानक्रियाकर्मणाकर्तायमभिप्रैतिसंबध्नातिईप्सतिवा

कर्मणायमभिप्रैतिससम्प्रदानं।१।४।३२।दानस्यकर्मणायमभिप्रैतिससम्प्रदानसंज्ञःस्यात्।।चतुर्थीसम्प्रदाने।२।३।१३।।विप्रायगांददाति।
अनभिहितइत्येव।दानीयोविप्रः।क्रियययायमभिप्रैतिसोऽपिसम्प्रदानं।।पत्येशेते।कर्मणःकरणसंज्ञासम्प्रदानस्यचकर्मसंज्ञापशुनारुद्रं
यजते।पशुंरुद्रायददातीत्यर्थः रुच्यर्थानांप्रीयमाणः।१।४।३३।रुच्यर्थानांधातूनांप्रयोगेप्रीयमाणोऽर्थःसम्प्रदानंस्यात्।हरयेरोचते
भक्तिः अन्यकर्तृकोऽभिलाषोरुचिः हरिनिष्ठप्रीतेर्भक्तिःकर्त्री।प्रीयमाणःकिं।देवदत्तायरोचतेमोदकःपथि॥ ॥ ९९ तत्कारकंसंप्रदानसंज्ञ

कमित्यर्थः।तेनअजांनयतिग्रामंहस्तंनिदधातिवृक्षेइत्यादौनातिप्रसंगः।दानंचापुनर्ग्रहणायस्वस्वत्वनिवृत्तिपूर्वकंपरस्वत्वापादनं।अतएवरजकस्यवस्त्रंददाती
त्यादौनभवति।तत्रहिददातिर्भाक्तः।एतच्चवृत्तिमतं।भाष्यमतेतुनान्वर्थतायामाग्रहः।खंडिकोपाध्यायःशिष्यायचपेटांददातीत्यादिप्रयोगात् रजकस्यददाती
तिप्रयोगस्तुशेषत्वविवक्षायांभविष्यति।नन्वेवमजांनयतिग्राममित्यादावतिप्रसंगःशंक्यः।अजांप्रतिग्रामस्यशेषित्वाभावात्।यमभिप्रैतीत्युक्त्याहियमितिनिर्दि
ष्टस्यशेषित्वंकर्मणश्चशेषत्वंलभ्यते।गांप्रतितुविप्रस्यशेषित्वमस्तीतिभवतितस्यसंप्रदानसंज्ञा।अत्रअभिप्रैतीत्येतत्पदद्वयंनतुसमासः।उदात्तवतागतिमताच
तिङागतेःसमासोवक्तव्यइतिवार्तिकस्यछंदोविषयत्वादितिहरदत्तः।भाषाविषयत्वेतुयाप्रकुरुतेइत्यादौसमासत्वात्सोरुत्पत्तिःस्यात्।लिंगसर्वनामनपुं ॥

धारेरुत्तमर्णः।धृङ् अवस्थाने।हेतुमण्यंतः।उत्तमर्णो धनस्वामी।अर्तेः क्तः।ऋणमाधमर्ण्ये इत्यत्र व्यवहारविशेषोपलक्षणार्थमाधमर्ण्यग्रहणमिति व्याख्यानादुत्तमर्णे पि निष्ठानत्वं भवति।अस्मादेव निपातनादत्र बहुव्रीहौ निष्ठांतस्य परनिपातो वोध्यः।भक्तायेत्यादि।इह भक्त उत्तमर्णो हरिरधमर्णः।धृङोकर्मकत्वादणौ कर्तुर्णौ कर्मत्वं शतं धारयति ग्राम इति।परत्वादिहाधिकरणसंज्ञा भविष्यतीति चेदुत्तमर्णो पि तर्हि हेतुसंज्ञा स्यादिति हरदत्तः ततश्चोत्तमर्णग्रहणाभावे हेतुसंज्ञायाः ख्याधिकरणसंज्ञाया अप्ययमपवादः स्यात्तद्वारणाय उत्तमर्णग्रहणमिति भावः।एवं च कृते प्युत्तमर्णग्रहणे तत्प्रयोजको हेतुश्चेति हेतुसंज्ञायां प्राप्तायां तद्बाधनार्थमिदं संप्रदानसंज्ञावचनमिति निष्कर्षमाहुः।मनोरमायां तु षष्ठ्यां प्राप्तायामिदं वचनमिति स्थितं स्पृहेरीप्सितः।स्पृह ईप्सायां चुरादावदंतः तेन स्पृहयतीत्यत्र लघूपधगु

धारेरुत्तमर्णः।१।४।३५।धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात्।भक्ताय धारयति मोक्षं हरिः उत्तमर्णः किं देवदत्ताय शतं धारयति ग्रामे।स्पृहेरीप्सितः।१।४।३६।स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात्।पुष्पेभ्यः स्पृहयति ईप्सितः किं पुष्पेभ्यो वने स्पृहयति।ईप्सितमात्रे इयं संज्ञा।प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा।पुष्पाणि स्पृहयति।क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रति कोपः।१।४।३७।क्रुधाद्यर्थानां प्रयोगे यम्प्रति कोपः स उक्तसंज्ञः स्यात्।हरये क्रुध्यति।द्रुह्यति।ईर्ष्यति।असूयति।यम्प्रति कोपः किं भार्यामीर्ष्यति मैनामन्यो द्राक्षीदिति।क्रोधोऽमर्षः।द्रोहोऽपकारः।ईर्ष्याऽक्षमा।असूया गुणेषु दोषाविष्करणं।द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्तेऽतो विशेषणं सामान्येन यम्प्रति कोप इति ॥

णो न परत्वादिति।तेन परस्परेण स्पृहणीयशोभं।स्पृहणीयगुणैर्महात्मभिरित्यादौ कर्मण्यनीयर् सिध्यति।शेषत्वविवक्षायां तु कुमार्य इव कान्तस्य त्रस्यंति स्पृहयंति चेत्यत्र षष्ठ्यपि सिध्यतीति हरदत्तादयः।वाक्यपदीये हेलाराजीये ग्रंथयोस्तु स्पृहयतियोगे कर्मसंज्ञायाः शेषषष्ठ्याश्च बाधिके यं संप्रदानसंज्ञेति स्थितं।युक्तं चैतत्।क्रियायमभिप्रैतीत्यनेनैवेष्टसिद्धेः।स्पृहेरीप्सित इत्येतत्सूत्रस्य हरदत्तादिमते वैयर्थ्यप्रसंगात् तस्माद्वाक्यपदीयादिग्रंथानुरोधेन परस्परेण स्पृहणीयशोभमित्यादौ सनीयो विप्र इतिवत्बाहुलकात्संप्रदाने नीयर् इति व्याख्येयं।कुमार्य इव कान्तस्येत्यत्र तु त्रस्यंतीत्येतदर्थे तत्पाठतार्थस्य कान्तस्येति षष्ठ्यंतस्य विभक्तिविपरिणामेन कान्ताय स्पृ

क्रियार्थोपपदा क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था सा क्रियार्था क्रिया उपपदं यस्य। यद्यपि क्रियाया उपपदत्वं न संभवति तथापीह तद्वाचकशब्दद्वारा तादर्थ्यं क्रि
याफलकक्रियावाचकमित्यर्थः क्रियावाचकस्यापि धातोरूपोच्चारितपदरूपोपपदत्वं यद्यपि न संभवति सुप्तिङन्तस्यैव पदत्वात् तथापीह क्रियावाचकप्रकृतिकनित्य
र्थो विवक्षितः। तादृशमुपपदं यस्य तुमुन्नन्तस्य तस्य कर्मणि चतुर्थी भवतीति निष्कृष्टोऽर्थः। तुमुन्ण्वुलौ क्रिया॰यां क्रियायामिति सूत्रमहिम्ना क्रियार्थकमुपपदं क्रि



क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।२।३।१४। क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात्। फ
लेभ्यो याति। फलान्याहर्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय। नृसिंहमनुकूलयितुमित्यर्थः। एवं स्वयम्भुवे नमस्कृत्येत्यादावपि। तुमर्थाच्च भाव
वचनात् ।२।३।१५। भाववचनाश्चेति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात्। यागाय याति। यष्टुं यातीत्यर्थः। नमःस्वस्तिस्वाहास्वधाऽलंवषड्यो
गाच्च ।२।३।१६। एभिर्योगे चतुर्थी स्यात्। हरये नमः। उपपदविभक्तेः कारकविभक्तिर्बलीयसी। नमस्करोति देवान्। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा।
पितृभ्यः स्वधा। अलमिति पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि। प्रभ्वादियोगे षष्ठ्यपि साधुः। तस्मै प्रभवति। स ए
षामग्रणीरिति निर्देशात्। तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम्। वषडिन्द्राय। चकारः पुनर्विधानार्थः। तेनाशीर्विवक्षायां परामपि चतु
र्थीं चाशिषीति षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्। मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।२।३।१७। प्राणिवर्जे मन्यतेः कर्म
णि चतुर्थी वा स्यात् तिरस्कारे। न त्वां तृणं मन्ये तृणाय वा। श्यना निर्देशात्तानादिकयोगे न। न त्वां तृणं मन्ये। अप्राणिष्वित्यपनीय नौकाका
ऽन्नशुकशृगालवर्ज्येष्विति वाच्यम्। तेन न त्वां नावं अन्नं मन्ये इत्यत्राप्राणित्वेऽपि चतुर्थी न। न त्वां शुने श्वानं वा मन्ये इत्यत्र प्राणित्वेऽपि भवत्येव॥

यावाच्येव फलतीत्याशयेनाह। क्रियार्था क्रियेति। स्थानिन इत्यस्यैवार्थकथनमप्रयुज्यमानस्येति तुमुन इति। ण्वुलोऽप्युपलक्षणम्। फलेभ्यो यातीत्यस्य फलान्याह
रक इति विवरणं वा बाधकाभावात्। कर्मणीति। तथा च द्वितीयापवादोऽयमिति भावः। यत्तु प्रसादकृता व्याख्यातं। अप्रयुज्यमानस्यैव कर्मणि यथा स्यात् प्रयुज्यमा
नस्य कर्मणि मा भूदिति नियमार्थं सूत्रमिति। तदसत्। अप्राप्तस्य नियमायोगात्। न चेह तादर्थ्य इति प्राप्तिः शक्या। यानक्रियायाः फलार्थत्वाभावात्।

॥

भ्यामिति पूर्वसूत्रे द्विवचननिर्द्देशात् प्रत्येकमेवधातुसंबंधइतिनिर्द्धारिततत्साहचर्यादिहापिप्रत्येकमेवधातुसंबंधइतिस्वयन्नाह।आभ्यांयणोतेरिति।होत्रेइति।क
मेत्वेप्राप्तेवचनं।परिक्रयणोऽद्रव्यदानेनात्यंतस्वीकारः।क्रयः।तस्यसमीपंपरिशब्दश्चात्र्येष्टे।अनियतकालात्क्रयणात्परिक्रयणस्यन्यूनकालत्वादित्याशयेनाह।नियमिति।
तेति।भृत्यावेतनादिना।तादर्थ्यइति।तस्मैकार्यायेदंतदर्थंकारणं।तस्यभावस्तादर्थ्यं।ब्राह्मणादित्वात्ष्यञ्।कृत्तद्धितसमासेभ्यःसंबंधाभिधानंभावप्रत्ययेनेतिसिद्धांतात्ष्यञा।संबंधोऽ
भिधीयतेसचसंबंधोऽनेकविधोनतुकार्यकारणभावएवतेनब्राह्मणायदधीत्याद्यपिसिद्धं।ब्राह्मणस्यदध्यजन्यत्वेपितत्संस्कार्यतासंबंधात्तादर्थ्यं।एवंयूपायदारु इत्यत्रदारुशब्दादपि
ता।नचैवंदधिशब्दादपिचतुर्थीस्यादितिशंक्यंसंबंधस्याद्विनिष्ठत्वेपिषष्ठीवद्विशेषणादेवभवतीत्याकरेऽभ्युपगमात्।एवंयूपायदारुइत्यत्रदारुशब्दादपि
नभवतिहेतावितितृतीयापिषष्ठीविषयएवभवतीतिसापीहनभवति।किंतुप्रातिपदिकार्थेप्रथमैवानचैतद्वार्तिकस्यावश्यकत्वेचतुर्थीसंप्रदानेइतिसूत्रेव्यर्थंसंपदादित
मितिभ्रमितव्यं।हरयेरोचतेइत्याद्यर्थंतस्याप्यावश्यकत्वात्।विप्रायगामित्यत्रापितादर्थ्येचतुर्थ्याःप्राप्तिर्नास्तीतिप्रागेवोक्तत्वाच्चेतिदिक्।क्लृपीति।संपद्यतेप्रादुर्भवतीतिद
ज्ञावेक्षिपितदंतात्सप्तमीसंपत्तिरिहाभूतप्रादुर्भावःक्लृप्त्यर्थकधातुप्रयोगेयःसंपद्यतेतत्रचतुर्थीविकारवाचकाच्चतुर्थीत्यर्थः।सहिसंपद्यतेप्रादुर्भवतीतिद
दाहरति।भक्तिर्ज्ञानायेति।ज्ञानात्मनापरिणमतइत्यर्थः।प्रकृतिविकृत्योर्भेदविवक्षायांविकृतिवाचकाच्चतुर्थी।अभेदविवक्षायांतुपरत्वात्प्रथमैवभक्तिर्ज्ञा
नंकल्पतइति।यदातुजनिकर्तुरितिभक्तेरपादानत्वंविवक्ष्यतेतदापिज्ञानस्याभिहितकर्तृत्वात्प्रथमैवभक्तेर्ज्ञानंकल्पते।क्लृपीत्यर्थग्रहणमित्याशयेनाह।सं
पद्यतइत्यादि।मद्यपितादर्थ्येचतुर्थ्येवभक्तिर्ज्ञानायेत्यादिप्रयोगाःसिध्यंतितथापिपरिणामत्वप्रकारकबोधार्थमिदंवचनमित्याहुः।प्राणिनांशुभाशुभसूच
कोभूतविकारउत्पातःतेनज्ञापितेर्थेवर्तमानाच्चतुर्थीवाच्येत्यर्थः।वातायेति।वातस्यज्ञापिकेत्यर्थः।हितेति।चतुर्थीसमासविधानाज्ज्ञापकादेतद्व्यमि
तिभावः।एवंसुखयोगेपिचतुर्थीबोध्या॥

॥

अनभिहित इत्यधिकारात्। न हि यकायोगे अनभिहितं कर्म संभवति। श्यनपि दैवादिकधातूपलक्षणमात्रं न तु स्वयं विवक्षितः। तेन तृणाय मत्वा रघुनंदनोऽपि बाणेन रक्षः
प्रथनान्निरास्थदिति भट्टिप्रयोगः संगच्छते। नौकाकान्नेति। व्यवस्थितविभाषाविज्ञानाद्व्येति भावः॥ ॥ गत्यर्थकर्मणि। गत्यर्थेति किं। ओदनं पचति। कर्मणीति
किं। अश्वेन व्रजति। अनध्वनीत्यत्राध्वनीति न स्वरूपग्रहणं। तथा हि सत्यनध्वन इत्येवावक्ष्यत्। किंत्वर्थग्रहणं सप्तमीनिर्देशात् कर्मणीत्यनेन सामानाधिकरण्यात्।
अर्थस्यैव हि कर्मत्वं संभवति न शब्दस्वरूपस्य। तेनाध्ववाचिनां सर्वेषामेव निषेधस्तथा च वार्तिकमध्वन्यर्थग्रहणमिति। गंत्राधिष्ठित एवेति। आस्थितप्रतिषेधो वक्त
व्य इति वार्तिकादिति भावः। आस्थितः संप्राप्तः अध्वानं गच्छतीत्यत्र हि पंथाः प्राप्त एवेति न पक्षे चतुर्थी पदात्वप्राप्तत्वेन विवक्षा तदा पक्षे भवत्येवसा। इह अनध्वनी

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। २।३।१२। अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायां। ग्रामं ग्रामाय वा गच्छति। चेष्टा
यां किं। मनसा हरिं व्रजति। अनध्वनीति किं। पन्थानं गच्छति। गन्त्राधिष्ठिते अध्वन्येवायं निषेधः। यदा तूत्पथात्पन्थानमेवाक्रमितुमिष्य
ते तदा चतुर्थी भवत्येव। उत्पथेन पथे गच्छति॥ ध्रुवमपायेऽपादानं। १।४।२४। अपायो विश्लेषस्तस्मिन्साध्ये यद्ध्रुवमवधिभूतं कारकं तदपा
दानं स्यात्। अपादाने पञ्चमी। २।३।२८। ग्रामादायाति। धावतोऽश्वात्पतति। कारकं किं। वृक्षस्य पर्णं पतति। जुगुप्साविरामप्रमादार्थानामु
पसंख्यानं। पापाज्जुगुप्सते विरमति। धर्मात्प्रमाद्यति। भीत्रार्थानां भयहेतुः। १।४।२५। भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात्।
चौराद्बिभेति। चौरात्त्रायते। भयहेतुः किं। अरण्ये बिभेति त्रायते वा॥ १९ त्यपनीयासंप्राप्त इति पूर्यते तेनास्त्रियं गच्छतीत्यत्र स्त्रीप्राप्तावपि न चतुर्थी। अत्र व्याचक्ष
ते। अजां नयति ग्राममित्यत्र तु भवत्येव चतुर्थी। अगत्यर्थत्वात्। आक्षेपाद्धि नात्यत्र प्रतीयते गतिर्न त्वसौ नयतेरर्थः। प्रापणं वा चित्त्वादिति। गत्यर्थकर्मणि चतुर्थी वेति व
क्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीया यथा स्यादित्येतदर्थं। तेन ग्रामं गंतेत्यत्र कृद्योगलक्षणा षष्ठी न भवतीति वृत्तिकृतोक्तं। इति चतुर्थी। ध्रुवमपाये। ध्रु
गतिस्थैर्ययोः। अस्मात्पचाद्यच्। कुटादित्वात् ङित्त्वे उवङ्। ध्रुव स्थैर्ये इति केचित् पठंति। तत्र इगुपधेति कः। ध्रुवं स्थिरं। अपायशब्देन विवक्षितमाह। विश्लेष इति।
एवं च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयो ध्रुवमिति फलितं। तच्चार्थादवधिरेवेत्याह अवधिभूतमिति। धावत इति। इह धावनक्रिया।॥

आहरणार्थो हि पानं नैव । आहरणं तु फलं कर्मकमित्यन्यदेतत् । क्रियार्थोपपदस्य किं । प्रविश पिंडीं गृहं प्रवेशने यद्यपि भक्षणार्थे तथापि भक्षिं प्रति कृत्रिमोपपदत्वं
नास्ति । न च तु मुनः कर्मणीत्युक्तत्वात् भक्षिकर्मणि चतुर्थ्याः प्रसक्तिरेव नास्तीति प्रत्युदाहरणमिदं न संगच्छते इति वाच्यं । सति तु क्रियार्थोपपदस्येति पदे तुमुनो
ण्वुलौ क्रियायामित्येतद्विषयकमेवेदं सूत्रमिति तुमुन् इति लभ्यते नान्यथेति प्रत्युदाहरणस्यासंगतत्वाभावात् । तुमर्थात् । अव्ययकृतो भावे इति तुमुनो भावे ए
व विधानात् तदर्थस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहार्थमित्याह । भाववचनाश्चेति । न च तादर्थ्ये इत्येव गतार्थं ताशंक्या क्रिया
र्थोपपदे केन भाववचनाश्चेति घञादयस्तेन तादर्थ्यस्य द्योतितत्वात् प्रातिपदिकार्थमात्रे प्रथमाप्राप्तावेतत्सूत्रारंभात् । यत्तु प्रसादकृतोक्तं भाववचनादेव यथास्या
त् । पाचको व्रजतीति ण्वुलं तान्मा भूदिति नियमार्थमिदं सूत्रमिति । तन्न । ण्वुलः कर्तृवाचकतया तुमर्थकत्वाभावेन नियमार्थत्वायोगात् । एवं लते कर्तुः प्राधान्यात्
कर्तारं प्रति च तादर्थ्याभावात् । गुणीभूतत्यापाकं प्रति तादर्थ्यसंभवेपि पाकवाचकधातोश्चतुर्थ्ययोगाच्च । तुमर्थात् किं । पचनं वर्तते । भाववचनात् किं । पाकः त्यागः
। अत्र वदंति । क्रियार्थोपपदस्येत्यनुवर्त्य पंचम्या विपरिणामप्यव्याख्याने बाधकाभावात् भाववचनादितित्यक्तुं शक्यं । नचैवं तुमर्थादित्येव त्यक्तव्यमिति वाच्यं । वर्ण
लाघवसंभवे गौरवाश्रयणायोगादिति । बलीयसीति । हरये नम इत्यत्र तूद्देशनक्रियाद्वारा हरिनमस्कारयोः संबंधः हर्युद्देश्यको नमस्कार इति । एवं चोद्देशनक्रिया
वगतौ विलंब इति कारकविभक्तेर्बलीयस्त्वमित्येके । अन्ये तूपपदविभक्त्या संबंधसामान्यमवगम्यते तद्विशेषावगमस्त्वर्थप्रकरणादिपर्यालोचनाधीनः । कार
कविभक्त्या तु कर्मत्वादिसंबंधविशेषोस्तीत्येवावगम्यते इति तस्या बलीयस्त्वमित्याहुः । षष्ठ्यपीति । ननु प्रभ्वादियोगे षष्ठ्येवास्तु अलंशब्दस्तु पर्याप्तीतरार्थक एव
गृह्यतामित्याशंक्याह । तस्मै प्रभवतीति । न त्वां तृणमित्यादि । न त्वा तृणादिवत् युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यमेवं । अनादर इत्यस्य कर्मविशेषणत्वेन अ
नादरद्योतकं यत्कर्म तत्र चतुर्थीति व्याख्यानात् । तृणं त्वां चानादरद्योतकं न तु युष्मदर्थः । स्यादेतत् । त्वां तृणं मन्ये तृणाय वेत्युदाहियतां किमनेन नञः प्रयोगेण । अत्रा
हुः । प्रकृष्यकुत्सितग्रहणं कर्तव्यमिति वार्तिकमस्ति तेन यद्यपि न अत्र चतुर्थी विधीयते ततो निकृष्टत्वेन यदि कुत्सा प्रतिपाद्यते तदा चतुर्थी भवति न तु साम्यविवक्षा
यां । तादृशी च कुत्सा प्रतीतिर्नञः प्रयोगे दृष्टेत्येवं भवतीति न त्वामित्युक्तमिति । श्वन्नानिर्देशादिति । न च मन्य इति यका निर्देशः किन्न स्यादिति वाच्यं ॥ ॥

धिनो ग्लानिरित्यर्थः। कारकशेषत्वेन षष्ठ्यां प्राप्तायामिदं पराजयत इति। विपराभ्यां जेरिति तङ्। असोढ इति। तार्थीभूतकालेन विवक्षितस्तेनाध्ययनात् पराजेष्य त इत्यादि सिद्धं। न च सोढग्रहणं व्यर्थं। शत्रून् पराजयत इत्यत्र परत्वात् कर्मसंज्ञासिद्धेः। अत्रापि वदंति। कर्मत्वाविवक्षायां शेषषष्ठीं बाधित्वा पंचमी स्यात् सा मा भूदि ति कर्तव्यमेवासोढग्रहणं। वारणार्थानां। यवेभ्य इति। यवसंयोगात् प्रागेव गां निवारयतीति ध्रुवमपाय इत्यनेनासिद्धा वयमारंभः। बुद्धिपरिकल्पितापायमंगीकुर्वं तो भाष्यकारस्य मतेतु वैयर्थ्यमेतस्य स्फुटमेव। गां वारयतीति। वृञ् वरणे चुरादिः। गामित्यत्र ईप्सितत्वप्रयुक्तापादानसंज्ञा न भवति। ईप्सिततमत्वविवक्षायां परत्वा त् कर्मसंज्ञाप्रवृत्तेः। नन्वेवमीप्सितग्रहणमेव व्यर्थं। क्षेत्रे वारयतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेः। सत्यं। अधिकरणस्य शेषत्वविवक्षायामिदं प्रत्युदाहरणमि

पराजेरसोढः ।१।४।२६। पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात्। अध्ययनात् पराजयते। ग्लायतीत्यर्थः। असोढः किं। शत्रून् पराजयते। अभिभव तीत्यर्थः। वारणार्थानामीप्सितः ।१।४।२७। प्रवृत्तिविघातो वारणम्। वारणार्थानां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात्। यवेभ्यो गां वारयति। ईप्सि तः किं। यवेभ्यो गां वारयति क्षेत्रे। अन्तर्धौ येनादर्शनमिच्छति ।१।४।२८। व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात्। मातुर्निलीयते कृष्णः। अन्तर्धौ किं। चौरान्न दिदृक्षते। इच्छतिग्रहणं किं। अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्। आख्यातोपयोगे ।१ ।४।२९। नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते। उपयोगे किं। नटस्य गाथां शृणोति। ११ तित्पूर्वोक्तरीत्या पदप्रयोज

नस्येहापि कल्पयितुं शक्यतात्। अन्तर्धौ। येनेति कर्तरि तृतीया। न च कृद्योगषष्ठीप्रसंगः उभयप्राप्तौ कर्मण्येवेति नियमात्। अत्रात्मन इति गम्यमानत्वाद्द्वयोः प्रा प्तिः। निलीयत इति लीङ् श्लेषणे दैवादिकः। नन्वन्तर्धाविति व्यर्थं न दिदृक्षते चौरानित्यत्र परत्वात् कर्मसंज्ञासिद्धेः। अत्राहुः चौरः आत्मानमद्राक्षुरिति बुध्या चौरा न्न दिदृक्षत इत्ययमर्थोऽत्र विवक्षितस्तत्र कर्मणः शेषत्वविवक्षायामिदं पूर्ववत् प्रत्युदाहरणमिति शब्दकौस्तुभे त्वन्तर्धावित्येतच्चिंत्यप्रयोजनमिति स्थितं। आख्या तोपा। नियमपूर्वकेति। तत्रैवोपयोगशब्दो रूढ इति भावः। आख्यातेत्येतत् तृजंतमित्याह। वक्तेति। उपाध्यायादिति उपेत्य अस्मादधीयत इति उपाध्यायः इङ श्चेति घञ्। अध्ययनं गुरूच्चारणानूच्चारणं नियमपूर्वकं नटस्येति। गाथाकर्मकं नटसंबंधि श्रवणमित्यर्थः नटस्य गाथान्वयेन कारकत्वाभावादेवाप्राप्तेरुपयोगग्रह

विशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते परस्परस्मान्मेषावपसरत इत्यत्र तु स्वधातुनागतिद्वयस्याप्यपादानादेकनिष्ठां गतिं प्रति इतरस्या
प्यपादानत्वं न विरुध्यते। उक्तं च हरिणा। अपाये यदुदासीनं चलं वा यदि वाऽचलं। ध्रुवमेवातदावेशात्तदपादानमुच्यते १ पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते २ मेषांतरक्रियापेक्षमवधित्वं पृथक् पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् इति ३। पर्वतात् पततोऽश्वा
त्पततीत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं देवदत्तादिनिष्ठं पतनमर्थः। पंचम्यर्थश्चावधेरभेदेन संसर्गेण प्रकृत्यर्थः पर्वतादिर्विशेषणं प्र
त्ययार्थस्तु पतनक्रियायां। स चावधिरूपो धर्मी न तु धर्ममात्रं। उद्धृतौदनास्थालीत्यत्रौदनकर्मकोद्धरणावधिभूतास्थालीति सामानाधिकरण्यदर्शनादेतच्च मनोर
मायां स्थितं। नन्विह ध्रुवग्रहणं किमर्थं न च ग्रामादागच्छति शकटेनेत्यत्र शकटे तिव्याप्तिवारणाय तदिति वाच्यं। परत्वात्तत्र करणसंज्ञाप्रवृत्तेः। न च संज्ञिनि
र्देशार्थं ध्रुवग्रहणं कारकाधिकारात्कारकमिति लभ्यत इति ध्रुवग्रहणं चित्यप्रयोजनमिति चेत्। अत्र वदंति कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साध
कतमत्वेन विवक्षाभाववशायां करणसंज्ञाऽप्रसंगेन शकटस्यापादानत्वं स्यात्तन्माभूदित्येतदर्थं ध्रुवग्रहणमिति। जुगुप्सेति। जुगुप्सा निंदा विरामो विरतिः। प्रमा
दोऽनवधानता एतदर्थकानां धातूनां कारकमपादानसंज्ञं स्यादित्यर्थः। संयोगपूर्वको विश्लेषो विभागः स चेह नास्ति बुद्धिकृतस्तु गौणत्वान्नेह गृह्यत इति सू
त्रेणाप्राप्ते वार्त्तिकारंभः। भाष्यकारस्तु कारकप्रकरणे गौणमुख्यन्यायो नाश्रीयत इति तमप्यग्रहणेन ज्ञापितत्वात्। जुगुप्सादीनां तत्पूर्वकनिवृत्तिवाचित्वमा
श्रित्येदं वार्तिकं भीत्रार्थानामित्यादि च सूत्राणि प्रत्याचख्यौ। पूर्वं हि बुद्ध्यापायं संप्राप्य ततो दोषदर्शनान्निवर्तत इत्यस्येवात्र बुद्धिकृतोपायः। भीत्रा॥ कस्यचि
भ्यंतिदेवाश्च जातरोषस्य संयुगे इति। रामायणोत्तकस्येत्यस्य संयुगेनान्वयान्नास्ति भयहेतुत्वमिति षष्ठीप्रयोगः संगच्छत एव न चैवं संयुगस्यापादानत्वापत्तिरि
ति वाच्यं। परया अधिकरणसंज्ञया अपादानसंज्ञाया बाधात्। अधिकरणत्वाविवक्षायां तु इष्टापत्तेः। भीत्रार्थेति किं। व्याघ्रं पश्यति। ननु कर्मत्वेन बाधः शंक्यः कर्म
त्वाविवक्षायां शेषषष्ठीं बाधित्वा पंचमी प्रसंगादित्याहुः। भयहेतुग्रहणं चिंत्यप्रयोजनं अरण्ये बिभेतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेरिति चेत्। अत्र वदंति
भयहेतुग्रहणाभावे कारकशेषविवक्षायामतिप्रसंगः स्यात् तथा च अरण्यस्य चोरात् बिभेतीति प्रयोगो न स्यादिति पराजेः। अध्ययनादिति। अध्ययनसं

न्ययथा कथंचिद्युक्तप्रयोगाणां समर्थनेपिमुख्यार्थपरस्कारेणाषष्ठीप्रयोगोदुर्वारः। नटस्यशृणोतीतिवत्। नत्युपाध्यायनटयोः क्रियानुकूलव्यापारांशेविशेषोवक्तुंश क्यः अनभिधानंत्वास्त्वमाश्रित्यप्रत्याख्यानंतुनातीवमनोरमं। एवंजुगुप्साविराममित्यादिवार्त्तिकमवश्यारंभणीयं। तथाचसूत्रवार्त्तिकमतमेवेहप्रबलं। तथाभवं भयहेतुरसौढइत्यादिसंज्ञिनिर्देशोपिसार्थकः। परत्वात्तत्संज्ञाप्राप्तावपिशेषत्वविवक्षायांनमाषाणामश्नीयादित्यादाविवषष्ठ्याःइष्टत्वात्तत्रापादानसंज्ञायावार णीयत्वात्। एतच्चशब्दकौस्तुभेस्पष्टं। ल्यब्लोपइति। ल्यबंतस्यगम्यमानार्थत्वादप्रयोगइत्यर्थः। ल्यब्ग्रहणमिहल्यबर्थपरंतेनक्त्वोपिलोपेसिध्यति आसनेस्थि त्वाप्रेक्षते। आसनात्प्रेक्षतइति। यतश्चेति। यदवधित्वेनाश्रित्याध्वनः कालस्यवानिर्माणंपरिच्छेदः प्रतिपाद्यतेततः पंचमीइत्यर्थः। तेनपंचम्यंतार्थेनार्थद्वारायु

अन्यारादितरर्त्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते। २।३।२९। एतैर्योगेपञ्चमीस्यात्। अन्यइत्यर्थग्रहणं। इतरग्रहणम्प्रपञ्चार्थं। अन्योभिन्न इतरोवाकृष्णात्। आराद्वनात्। ऋतेकृष्णात्। पूर्वोग्रामात्। दिशिदृष्टशब्दोदिग्छब्दः। तेनसम्प्रतिदेशकालवृत्तिनायोगेऽपिभवति। चैत्रात्पूर्वः फाल्गुनः। अवयववाचियोगेतुनातस्यपरमाम्रेडितमितिनिर्देशात्। पूर्वंकायस्य। अञ्चूत्तरपदस्यतुदिक्छब्दत्वेऽपिषष्ठ्यतसर्थेतिषष्ठीबाधि तुम्पृथग्ग्रहणं। प्राक्प्रत्यग्वाग्रामात्। आच्दक्षिणाग्रामात्। आहिदक्षिणाहिग्रामात् अपादानेपञ्चमीतिसूत्रेकार्त्तिक्याःप्रभृतीतिभाष्य प्रयोगात् प्रभृतियोगेपञ्चमी॥ भवात्प्रभृतिआरभ्यवासेव्योहरिः॥ अपपरिवहिरितिसमासविधानाज्ज्ञापकाद्बहिर्योगेपञ्चमी। ग्रामाद्बहिः

क्ताल्लिमीपमाणाध्ववाचिनः प्रथमासप्तम्योस्तः कालादिति। इहापितद्युक्तादित्यपेक्षते। आग्रहायणीति। अग्रेहायनमस्याःसाप्रज्ञादेराकृतिगणत्वात्स्वार्थिको ण। पूर्वपदात्संज्ञायामितिणत्वं। अन्यारात् अर्थग्रहणमिति। व्याख्यानादितिभावः। प्रपंचार्थमिति। नचइतरस्त्वन्यनीचयोरित्यमरोक्तनीचार्थस्येदंग्रहणमस्तीति वाच्यं। अस्मान्नारोमंद्रोवेतिवत्पंचमीविभक्तइत्यनेनैवसिद्धत्वात् अन्योभिन्नइतरोवेति। नचैवंघटः पटोनेत्यत्रातिप्रसंगः। नञोपिभेदशक्तत्वादितिवाच्यं। निपा तानांद्योतकत्वमेवनतुवाचकत्वमित्यभ्युपगमात्। आराद्वनादिति इहदूरांतिकार्थैः षष्ठ्यन्यतरस्यामितिप्राप्तांषष्ठींतेरुणद्धि। कथंतर्हिफलतिपुरुषाराधनमृ तेइतिप्रयोगइतिचेत्। प्रमादोयमितिहरदत्तः। अन्येतुततोन्यत्रापिदृश्यतइतिदृशिग्रहणाच्चैत्रयावच्छीतमित्यादाविवऋतेयोगेद्वितीयापिसाधुरित्याहुः। अस्मिन्व्याख्याने

जनिकर्तुः। जननं जनिरुत्पत्तिः। इणजादिभ्य इति जनेर्भावे इण्। जनिवध्योश्चेति वृद्धिप्रतिषेधः। तस्याः कर्तेति शेषषष्ठ्या समासो न तु कारकषष्ठ्या। तृजकाभ्यामिति निषे-
धात्। एवं चोत्पत्त्याश्रयस्य यो हेतुस्तदपादानमित्यर्थो लब्धः। तत्र योगेऽप्यपादानत्वं भवत्येव। श्रृंगाद्गात्संभवतीति यत्तदेतदाह। जायमानस्येति। एतेन इक्श्तिपौ धातुनि-
र्देश इति इका निर्देशोऽयं जनिरित्याश्रित्य गमहनेत्युपधालोपप्रसक्त्या संगतिः समासानुपपत्तिश्चोद्भाव्य व्याकरणाधिकरणे गजेयं ततो मीमांसकाः समाहिता इति भावः। इह प्रकृ-
तिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतं पुत्रात्प्रमोदो जायत इत्युदाहरणात्। उपादानमात्रपरमिति तु भाष्यकैयटमतं तदुभयसाधारणमुदाहरणमाह ब्रह्मण इति।
ब्रह्मा हिरण्यगर्भः। स च हेतुरेव न तूपादानं। किं च मायोपहितं चैतन्यं ब्रह्म तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः॥ भुवः॥ भवनं भूरिति। संपदादित्वाद्भावे क्विप्
। पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते स्वरितत्वादित्याह। भूकर्तुरिति। प्रभवत्यस्मादिति प्रभवः। अकर्तरि च कारक इत्यधिकारादपादानार्थेऽप्

जनिकर्तुः प्रकृतिः। १।४।३०। जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते। भुवः प्रभवः। १।४।३१। भवनं भूः। भूकर्तुः प्रभवस्तथा।
हिमवतो गङ्गा प्रभवति। तत्र प्रकाशत इत्यर्थः। ल्यब्लोपे कर्मण्यधिकरणे च। प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। प्रासादमारुह्य आसने उपवि-
श्य प्रेक्षत इत्यर्थः। श्वशुराज्जिह्रेति। श्वशुरं वीक्ष्येत्यर्थः। गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्तमित्युक्तं। कस्मात्त्वं नद्याः। यतश्चा-
ध्वकालनिर्माणं तत्र पञ्चमी। तद्युक्तादध्वनः प्रथमासप्तम्यौ। कालात्सप्तमी च वक्तव्या। वनाद्ग्रामो योजनं योजने वा। कार्तिक्या आग्रहा-
यणीमासे।

स्य। जनिकर्तुरित्येव सिद्धे निरर्थकमिदमित्याशंकां परिहरन्नाह। तत्र प्रकाशत इति। प्रथमं दृश्यत इत्यर्थः। एवं चार्थो धातूनामनेकार्थत्वाल्लभ्य-
ते। तथा चाभूतप्रादुर्भावो जनिः। अन्यतः सिद्धस्य प्रथममुपलम्भः प्रभव इत्यर्थभेदोऽस्तीति भावः। भीत्रार्थानामित्यारभ्य पंचसूत्री भाष्ये प्रत्याख्याता। तत्रेत्थमुपपत्ति
संभवः। चौरेभ्यो बिभेति भयान्निवर्तत इत्यर्थः। त्रायते रक्षणेन चौरेभ्यो निवर्तयतीत्यर्थः। पराजयते ग्लान्या निवर्तत इत्यर्थः। वारयति। प्रवृत्तिप्रतिबन्धं निवर्तयती-
त्यर्थः। निलीयते निलयनेन निवर्तत इत्यर्थः। अधीते। उपाध्यायान्निःसरन्तं शब्दं गृह्णातीत्यर्थः। ब्रह्मणः प्रपंचो जायत इत्यत्रापि ततोऽपक्रामति निर्गच्छतीत्यर्थः।
प्रभवतीत्यत्रापि भवनपूर्वकं निःसरणमर्थस्तथा च अचमपाय इत्यनेनैवेष्टरूपसिद्धिरिति। वस्तुतस्तु निवृत्तिनिःसरणादिधात्वर्थविशेषे स्वार्थे वृत्तिमाश्रि-

ख्यस्याभावे सति तत्सदृशः उपादीयते स प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानं। अकर्तरि। हेतुभूतमिति। हेतावित्यनुवर्तते इति भावः। पंचमी स्यादिति। तृतीयापवा
यं। शतेनेति। शतमिह उत्तमर्णाय धार्यमाणत्वादृणं। तत्प्रयोजको हेतुश्चेति चकारात्कर्तृसंज्ञेच। वधितइति। एवं ते प्रयोजककर्तुः शतस्य हेतुसंज्ञाप्यस्तीति पंचम्यत्र
स्यादेवातोत्राकर्तरीत्युक्तमिति भावः। योगविभागादिति। एतच्च हेतुमनुष्येभ्य इति सूत्रे पदमंजर्यां स्पष्टं। स्त्रियां चेति। बाहुलकं प्रकृतेस्तद्वदृष्टेरिति वार्तिकनिर्देशोपीह
ज्ञापकः॥ ॥ पृथग्विना॥ ननु तृतीयाभावपक्षे एनपा द्वितीयेति प्रवृत्ता द्वितीयैव स्यात्। यदि तु द्वितीया विकल्पेन न भवेत्। तदा पंचम्यपि स्यात्। सा तु नित्यैवत्तस्मा
द्विभक्तित्रयसमावेशो दुरुपपाद इत्यत आह। अन्यतरस्यांग्रहणं समुच्चयार्थमिति। निपातानामनेकार्थत्वादिति भावः। पंचमीति। तत्र मंडूकप्लुत्या पंचमीद्वितीया
तु संनिहितैवा इह पृथगर्थैरिति सूत्रयितव्ये पर्यायत्रयोपादानं पर्यायांतरनिवृत्त्यर्थं तेन हिरुग्देवदत्तस्येत्यत्र नेत्याहुः। एथद्: नानाञ्भिस्तृतीयान्यतरस्यामि

पृथग्विनानानाभिस्तृतीयाऽन्यतरस्यां। २। ३। ३२। एभिर्योगे तृतीया स्यात्पंचमीद्वितीये च। अन्यतरस्यांग्रहणं समुच्चयार्थम्। पंचमीद्वितीये चा
नुवर्तते। पृथग्रामेण। रामात्। रामं वा। एवं विनानाना। करणे च स्तोकाऽल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य। २। ३। ३३। एभ्योऽद्रव्यवचने
भ्यः करणे तृतीयापंचम्यौ स्तः। स्तोकेन स्तोकाद्वा मुक्तः। द्रव्ये तु स्तोकेन विषेण हतः। दूरान्तिकार्थेभ्यो द्वितीया च। २। ३। ३५। एभ्यो द्वितीया स्या
च्चात्पंचमीतृतीये स्तः। प्रातिपदिकार्थमात्रे विधिरयं। ग्रामस्य दूरं दूरात् दूरेण वा। अन्तिकं। अन्तिकात्। अन्तिकेन वा। असत्त्ववचनस्येत्यनु
वृत्तेर्नेह दूरः पन्थाः॥

तिसुवचं। नानान्निति प्रत्ययग्रहणात्तु दन्तयोर्विनानानाशब्दयोर्लाभात्। नानेति। हिरुङ्नाना च वर्जने इत्यमरः। नानानारी
निष्फला लोकयात्रेति प्रयोगः। करणे च। अन्यतरस्यामिति वर्तते पंचमीति च तेन करणे तृतीयायां प्राप्तायां पक्षे पंचमी विधीयते तया मुक्ते करणत्वादेव तृतीयासि
द्धेत्याशयेनाह। तृतीयापंचम्यौ स्त इति। स्तोकेनेति। अनायासेन मुक्त इत्यर्थः। दूरं दूराद्दूरेणवेति। इह सप्तम्यपि वक्ष्यते। किंच दूरान्तिकार्थेभ्य इति सूत्रस्य सप्तम्यधि
करणे चेत्युत्तरसूत्रेप्यनुवर्तनादधिकरणेप्येभ्यो विभक्तित्रयं बोध्यं। तथा च प्रयुज्यते। दूरादावसथान्मूत्रं दूरात्पादावसेचनमिति। आवसथस्य दूरे इत्यर्थः।
असत्त्ववचनस्येति। सत्त्ववचनत्वमिह सत्त्वविशेषकत्वं। एवं च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते तदाह दूरः पंथा इति। एतेन॥ ॥

यान्वेति चांद्रसूत्रमनुकूलं। दिशि दृष्टइति। रूढ्येति शेषः। तेनैंद्र्यादयो नात्र गृह्यंते। नन्वेवं ककुभादिग्रहणप्रसंगइति चेत्। अत्राहुः। अन्यतरसाहचर्यात् व्याख्यानाद्वा दि
गभिन्नेर्थे योन दृष्टः सोत्र गृह्यतइति। दिक्शब्दत्वेपीति। यद्यपि दिक्शब्दोयं चूत्तरपदमस्ति स अङित्यादिस्तथापि दिक्शब्दसाहचर्यादंचूत्तरपदेन प्रागित्यादिदिक्श
ब्दएव गृह्यते। तेन सध्र्यङ् देवदत्तेनेत्यत्र नातिप्रसंगइति भावः। दक्षिणाग्रामादिति। दिक्शब्दत्वेनैव सिद्धे आजाहि ग्रहणं चित्यप्रयोजनमित्याहुः। प्रभृतियोगे तिप्रभृत्य
र्थयोगइत्यर्थः। तथा च कार्त्तिक्याः प्रभृतीति भाष्यं विवृण्वता कैयटेन ततआरभ्यइत्यर्थइति प्रयुक्तं। ग्रामाद्बहिरिति। ज्ञापकसिद्धं न सर्वत्रेतेन करस्य करभो बहिरिति सिद्धं।
॥ ॥ अपपरीति। वर्जने किं। परिषिंचति सर्वत इत्यर्थः। अत्रोपसर्गत्वात्षत्वं। वचनग्रहणादिति। विनातेनेति मर्यादा सहतेनेत्यभिविधिरित्यत्र यउपात्तो विशेषो विश

अपपरी वर्ज्जने। १।४।८८। एतौ वर्ज्जने कर्म्मप्रवचनीयौ स्तः॥ आङ् मर्य्यादावचने। १।४।८९। आङ् मर्य्यादायामुक्तसंज्ञः स्यात्। वचनग्रहणादभिवि
धावपि। पञ्चम्यपाङ्परिभिः। एतैः कर्म्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अपहरेः। परिहरेः संसारः। परिरत्र वर्ज्जने। लक्षणादौ तु हरिम्परि। आमुक्तेः
संसारः। आसकलाद्ब्रह्म। प्रतिः प्रतिनिधिप्रतिदानयोः। १।४।९२। एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात्। प्रतिनिधिप्रतिदाने च यस्मात्। २।३।११। अ
त्र कर्म्मप्रवचनीयैर्योगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात्प्रति। तिलेभ्यः प्रतियच्छति माषान्। अकर्त्तर्य्यृणे पञ्चमी। २।३।२४। कर्त्तृवर्ज्जितं यदृणं हे
तुभूतं ततः पञ्चमी स्यात्। शताद्बद्धः। अकर्त्तरि किं। शतेन बन्धितः। विभाषा गुणेऽस्त्रियां। २।३।२५। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्या
ज्जाड्येन वा बद्धः। गुणे किं। धनेन कुलं। अस्त्रियां किं। बुद्ध्या मुक्तः। विभाषेति योगविभागादगुणे स्त्रियां च क्वचित्। धूमादग्निमान्। नास्ति घटो
ऽनुपलब्धेः॥

षणीशरूपः सोत्र न गृह्यते वचनग्रहणसामर्थ्यात् किं त्ववधिमात्रं विवक्ष्यतइत्यर्थद्वयसंग्रहः। यद्वा मर्यादाशब्दोयस्मिन्नुच्यते तन्मर्यादा
वचनं। तद्धि आङ् मर्यादाभिविध्योरिति सूत्रं तत्र य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः। परिहरेरिति। हरिं वर्जयित्वेत्यर्थः। परेर्वर्जने वावचनमिति वार्त्तिकात्पक्षे द्विर्वच
नाभावः। परिरत्रेति। अत्र पंचमीविधौ वर्जनार्थेनापेन साहचर्यादिति भावः। आमुक्तेरिति। मुक्तिं मर्यादीकृत्येत्यर्थः। आसकलादिति। सकलमभिव्याप्येत्यर्थः। प्र
तिनिधिप्रतिदाने। अस्मादेव निर्देशाल्लिंगाद्दाभ्यां योगे पंचमी। ज्ञापकसिद्धं न सर्वत्रेति कृष्णस्य प्रतिनिधिरित्यपि सिद्धमित्याहुः॥ ६ ॥ ६ ॥

एम

संबंधमात्रविवक्षा कर्तुं न शक्यत इति षष्ठीह न भवति। किं तु प्रातिपदिकार्थमात्रे प्रथमैवेत्याहुः। सर्पिषो जानीत इति। वस्तुतः करणस्य संबंधमात्रविवक्षया षष्ठी सर्पिः संबंधि प्रवर्तनमित्यर्थः। अकर्मकाच्चेत्यनुपसर्गादित्यनेन वा जानातेस्तङ्। अन्ये तु व्याचख्युः कर्मणः शेषत्वविवक्षया षष्ठी। सर्पिः संबंधि ज्ञानमित्यर्थ इति। एधोदकस्येति। एधाश्च उदकं च तेषां समाहारः एधोदकं। जातिरप्राणिनामित्येकवद्भावः यद्वा एधांसि च उदकं चेति विग्रहे द्वंद्ववदेकवद्भावः। उदकपर्यायोदकशब्दोऽप्यस्ति। तथा च हलायुधः। भुवनममृतं जीवनीयं दकं चेति। उपस्कुरुत इति। गंधनादिसूत्रेणात्मनेपदं उपात्प्रतियत्नेति सुट्। ज्ञानं चैवं ज्ञोविदर्थस्य करणे। अधीगर्थदयेशां कर्मणि। कृञः प्रतियत्ने। रुजार्थानां भाववचनानामज्वरेः। आशिषि नाथः। जासिनिप्रहणनाटक्राथपिषां हिंसायां। व्यवहृपणोः समर्थयोः। कृत्वोऽर्थप्रयोगे कालेऽधिकरणे इति शेषषष्ठीविधानार्थमष्टसूत्री निष्फला स्यादिति वाच्यं। सर्पिषो ज्ञानमित्यादौ तस्याः समासनिवृत्तिफलकत्वात् तथा हि। ज्ञोविदर्थस्येत्यादौ शेष इत्यनुवर्तते। शेषत्वे विवक्षिते तु करणादौ षष्ठी सिद्धैव तदयमर्थः। इह षष्ठ्येव न तु तच्छुक्ता। तथा च लुकः प्रयोजकीभूतस्समास एव न भवतीति। न चाष्टसूत्र्या उक्तमात्रनिवृत्तिफलकत्वमेवास्तु समासस्तु स्वीक्रियतामिति वाच्यं। इष्टानुरोधेन समास एव न भवतीति व्याख्यानस्योचितत्वात्। तथा च वार्तिकं प्रतिपदविधाना षष्ठी न समस्यत इति। हरिश्चाह। कारके व्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये इति। एवं च शेषत्वविवक्षायां सर्पिषो ज्ञानं मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि। हरिस्मरणमित्यादीनि तु शेषत्वाविवक्षायां शेषयोगषष्ठ्या समासे बोध्यानि तत्र च कारकसर्वकत्वात् गतिकारकेत्यादिना कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वं भवति। शेषषष्ठ्या समासे तु अंतोदात्तत्वं स्यात्तच्चानिष्टं तथा च स्वरार्थमयमष्टसूत्रीति निष्कर्षः। किं च मातुः स्मृतमित्यादौ समासाभावोऽपि फलं। नहि तत्र कारकषष्ठी लभ्यते न लोकेति निषेधात्। आहत्य निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते। शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यत इति। एतच्च मनोरमायां स्थितं। षष्ठीहेतु। अत्र हेताविव्यनुवर्तते तदाह हेतौ द्योत्य इति। अन्नस्येति। हेताविति तृतीयायां प्राप्तायामनेन षष्ठी। हेतुप्रयोगे किं। अन्नेन वसति। हेतौ द्योत्ये किं। अन्नशब्दात् षष्ठी यथा स्यादित्ये-को। अन्नस्य हेतोस्तुभ्यं नमस्त्यत्र युष्मद्शब्दान्माभूदित्यन्ये। सर्वनाम्नस्तृतीया च। इह सर्वनाम्न इति प्रयोगापेक्षया षष्ठी। पंचम्यां तु हेतुशब्दात् षष्ठी तृतीये न स्यातामित्याशयेनाह। सर्वनाम्नो हेतुशब्दस्य चेति।

करणेच स्तोकेति सूत्रे करणे किं। क्रियाविशेषणे कर्मणि माभूत्। स्तोकं पचति। क्रियानद्रव्यमिति प्राचां ग्रंथोपि व्याख्यातः। नच क्रियाया विशेष्यत्वेन द्रव्यत्वावश्यंभावा
त्तन्नैतत्प्रत्युदाहरणं युक्तमिति वाच्यं। धातुवाच्यायाः क्रियायाः असत्त्वरूपत्वस्याकरे प्रसिद्धत्वात्। नच विशेष्यत्वे तदनुपपत्तिः। कर्तृकर्मेतरकारकलिंगानन्वयित्व
मात्रेणासत्त्वरूपत्वोपपत्तेः। उक्तंच। क्रियानयुज्यते लिंगं क्रियानाधारकारकैः। असत्त्वरूपता तस्मादियमेवावधार्यतामिति। फलं व्यापारश्च क्रिया। फलाधारकारकं क
र्म। व्यापाराधारकारकं कर्त्रीति विवेकः॥ इति पंचमी॥ ॥ षष्ठी शेषे। उपयुक्तादन्यः शेषः कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उपयुक्तास्तत्र द्वितीयादीनां विधानाद
तो व्याचष्टे। कारकप्रातिपदिकार्थव्यतिरिक्त इति। राज्ञः पुरुष इति। प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यात् प्रधानादेव षष्ठी। प्रत्ययार्थ स्विह पुरुषविशेषण। राज

षष्ठी शेषे। २।३।५०। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषस्तत्र षष्ठी स्यात्। राज्ञः पुरुषः। कर्मादीनामपि सम्बन्ध
मात्रविवक्षायां षष्ठ्येव। सतां गतं। सर्पिषो जानीते। मातुः स्मरति। एधोदकस्योपस्कुरुते। भज शम्भोश्चरणयोः। फलानां तृप्तः। षष्ठी हेतुप्रयोगे।
२।३।२६। हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात्। अन्नस्य हेतोर्वसति। सर्वनाम्नस्तृतीया च। २।३।२७। सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया
स्यात् षष्ठी च। केन हेतुना वसति। कस्य हेतोः। निमित्तपर्यायप्रयोगे सर्वासां प्रायोदर्शनं। किन्निमित्तं वसति। केन निमित्तेन। कस्मै निमित्ताय इत्या
दि। एवं किं कारणं। को हेतुः। किम्प्रयोजनमित्यादि। प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः॥ ॥ ज्ञानेन निमित्तेन हरिस्सेव्यः ज्ञानाय
निमित्तायेत्यादि॥

निरूपितसेवकत्वसंबंधवान् पुरुष इत्यर्थविवक्षायां प्रधानात् पुरुषशब्दान्न षष्ठी। उक्तन्यायविरोधात्। शेषत्वाभावाच्च। राज्ञः पुरुष
स्तिष्ठतीत्यादौ पुरुषशब्दो हि प्रातिपदिकार्थमात्रवृत्तिः। राज्ञः पुरुषेणाहृतमित्यादौ कारकार्थकः। यदा तु पुरुषनिरूपितसेव्यत्वसंबंधवान् राजेत्यर्थविवक्षा त
दा पुरुषशब्दादपि षष्ठी भवत्येव पुरुषस्य राजेति। यत्तु अप्रधानं शेष इति केश्चिदुक्तं तन्न। प्रातिपदिकार्थमात्रे शुक्लो पटः श्यामो घट इत्यादौ विशेषणे षष्ठी
प्रसंगात्। नच प्रथमया बाधः तस्याः प्रधाने चरितार्थत्वात्। कर्मादीनामपीति। यथा विशेषाविवक्षायां रूपवानिति प्रयुज्यते विशेषविवक्षायां तु नीलः पीत
इत्यादि तथा इदमपि न्यायसिद्धमिति भावः। सतां गतमिति। सत्पुरुषसंबंधि गमनमित्यर्थः। संतो गच्छंतीत्यत्र त्वाख्यातेन कर्तृत्वसंबंधस्योक्तत्वात्॥

षष्ठ्यां प्राप्तायां पक्षे पंचम्यर्थं वचनं इहान्यतरस्यांग्रहणं समुच्चयार्थं तेन विप्रकृष्टापि पंचमी समुच्चीयते व्याख्यानात् ननु संन्निहितो ऽपि द्वितीयातृतीये तदेतद्दा ह। पंचमी चेति। सर्पिषो ज्ञानमिति। वस्तुतः करणीभूतं यत्सर्पिः तत्संबंधिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा। अधीगर्थ। अधिशब्दोच्चारणा मिङ्ःकावध्युपसर्गेण व्यभिचरत इति ज्ञापनार्थं अन्यथा स्मृत्यर्थदयेशामित्येव ब्रूयात् इगर्थेति वा इङःशेनेदं ज्ञापकमिति चेत्तर्हि तदंशेरोरध्ययने वृत्तइत्यत्रा धिशब्दोच्चारणं ज्ञापकमस्तु। अत्र व्याचख्युः। कर्मणि किं। करणे शेषत्वविवक्षायामाभूत्। मातुर्गुणाः स्मरणं अत्र माता कर्म गुणास्तु करणं उभयत्र शेषत्वविवक्षा

रुजार्थानाम्भाववचनानामज्वरेः। २।३।५४। भावकर्तृकाणां ज्वरिवर्ज्जितानां रुजार्थानां कर्म्मणि शेषे षष्ठी स्यात्। चौरस्य रोगस्य रुजा। अज्व रिसन्ताप्योरिति वाच्यं। रोगस्य चौरज्वरः। चौरसन्तापो वा। रोगकर्तृकं चौरसम्बन्धि ज्वरादिकमित्यर्थः। आशिषि नाथः। २।३।५५। आशिरर्थस्य ना थते श्शेषे कर्म्मणि षष्ठी स्यात्। सर्पिषो नाथनं। आशिषीति किं। माणवकनाथनं। तत्सम्बन्धिनी याच्ञेत्यर्थः। जासिनिप्रहणनाटक्राथपिषां हिंसायां। २।३।५६। हिंसार्थानामेषां शेषे कर्म्मणि षष्ठी स्यात्। चौरस्योज्जासनं। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनं। प्रणिहन नं। निहननं। प्रहणनम्वा। नट अवस्यन्दने चुरादिः। चौरस्योन्नाटनं चौरस्य क्राथनं वृषलस्य पेषणं। हिंसायां किं। धानापेषणं। व्यवहृपणोः समर्थयोः। २।३।५७। शेषे कर्म्मणि षष्ठी स्यात्। द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता। शतस्य व्यवहरणं। पणनम्वा। समर्थयोः किं। शलाका व्यवहारः। गणनेत्यर्थः। ब्राह्मणपणनं स्तुतिरित्यर्थः॥ ९९ यामपि मातृशब्दादेवानेन सूत्रेण षष्ठी गुणशब्दात्तु षष्ठी शेष इत्यनेनातो न गुणास्मरणमि

तिसमासो भवतीति॥ ॐ ॥ रुजार्थानां। रुजो भंगे भिदादिपाठादत एव निपातनाद्वा अङ्टाप्। रुजा व्याधिरर्थो येषां तेषां रुजार्थानां धातूनां भाववाचक भेचाणत्। भावशब्देनात्र घञादिवाच्यः सिद्धरूपो भाव उच्यते। वक्तीति वचनः बाहुलकात्कर्तरि ल्युट्। प्रकृत्यर्थस्तु न विवक्षितः। नहि भावोवक्ता संभवति तस्मात्प्र यस्य साधुत्वनिर्वाहायैव वचिरिति बोध्यस्तथा चायमर्थः। भावो वचनः कर्ता येषां तेषां भाववचनानामिति तदेतद्व्याचष्टे। भावकर्तृकाणामिति। रुजार्थानां भा वकर्तृकाणामित्येव सूत्रयितुं युक्तं। चौरस्येति। चुराशीलमस्य चौरः। अत्र कर्मणि शेषत्वविवक्षायां अनेन षष्ठी। रोगस्येति। पदरुजे॰ ॥ ६ ॥

कस्मात् भवतीत्यपेक्षायां अर्थात् सर्वनाम्नः हेतुभ्यामिति संबध्यते। अत्र व्याचख्युः। यद्यपि सर्वनाम्न इति पदस्य पंचम्यंतत्वेपि हेतुशब्दस्य विशेषणत्वे सामानाधिक रण्यादनुपपद्यत इति न स्पातिस्तथापि विशेष्यत्वे तृतीयाविधिर्न स्यादिति बोध्यमिति। निमित्तपर्यायेति। पर्यायग्रहणस्य फलमाह। एवमित्यादिना। एतद्वार्त्तिकेन ष ष्ठीहेतुप्रयोगे सर्वनाम्नस्तृतीया चेति सूत्रद्वयं गतार्थमिति बोध्यं॥ ॥ षष्ठ्यतसादक्षिणोत्तराभ्यामतसुजिति अस्य योऽर्थो दिग्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः अस्तातिप्रभृतिरपि च तदंतेन योगे इत्यर्थः। अतसुचोऽस्तात्यनंतरत्वेपि लाघवानुरोधेन अस्तात्यर्थे तिनोक्तमित्याहुः। पंचम्या अपवाद इति। त तः पश्चात्स्नस्यतेर्ध्वंस्यते चेति भाष्यप्रयोगात्पश्चाच्छब्दयोगे तु पंचम्यपि साधु। अस्मादेव भाष्यप्रयोगात् पश्चाच्छब्देनाव्ययीभावो न भवतीति वक्ष्यते। प्रत्यय

षष्ठ्यतसर्थप्रत्ययेन। २।३।३०। एतद्योगे षष्ठी स्यात्। दिक्शब्देति पञ्चम्याऽपवादः। ग्रामस्य दक्षिणातः। पुरः पुरस्तात्। उपरि उपरिष्टात्॥ एन पा द्वितीया। २।३।३१। एनबन्तेन योगे द्वितीया स्यात्। एनपेति योगविभागात् षष्ठ्यपि। दक्षिणेन ग्रामं ग्रामस्य वा। एवमुत्तरेण॥ दूरान्तिकार्थैः ष ष्ठ्यन्यतरस्यां। २।३।३४। एतैर्योगे षष्ठी स्यात् पञ्चमी च। दूरं निकटं ग्रामस्य ग्रामाद्वा॥ ज्ञोऽविदर्थस्य करणे। २।३।५१। जानातेरज्ञानार्थस्य करणे शे षत्वेन विवक्षिते षष्ठी स्यात्। सर्पिषो ज्ञानं॥ अधीगर्थदयेशां कर्म्मणि। २।३।५२। एषां कर्म्मणि शेषे षष्ठी स्यात्। मातुः स्मरणं। सर्पिषो दयनं ईशनम्वा॥ कृञः प्रतियत्ने। २।३।५३। कृञः कर्म्मणि शेषे षष्ठी गुणाधाने। एधोदकस्योपस्करणं॥ ९९ ग्रहणं किं। इह माभूत् प्राक् ग्रामात् प्रत्य

ग्ग्रामात्। कृतेपि प्रत्ययग्रहणे कुतो नेति चेत् अत्राहुः। केऽप्यटादयः प्रत्ययग्रहणे अधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति तु मे अस्तातौ षष्ठ्य भावः। अन्याराद् इत्यत्रोत्तरपदस्यापीदं प्रयोजनमुक्तं। तत्रान्यतरच्छक्यमवक्तुमेकप्रयोजनत्वादिति। प्रत्ययग्रहणं चिंत्यप्रयोजनमिति तु मनोरमायां स्थितं। पुर इति। पूर्वाधरावराणामित्यसिप्रत्यये पुरादेशः। पुरस्तादिति। दिक्शब्देभ्य इत्यादिना अस्तातिः। अस्ताति चेति पूर्वस्य पुरादेशः। एनपा कथं तर्हि तत्रा गारं धनपतिगृहादुत्तरेणास्मदीयमिति। उत्तरेणोत्येतत्। दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेनेति तोरणसमानाधिकरणं तृतीयांतेन नत्वेनबंतमित्याहुः। धनपतिगृहादुत्तरेणेति केचित् पठन्ति तत्रादूरसम्यग्वादक्षिणेनेति। दक्षिणस्यामदूर इत्यर्थे एनबन्यतरस्यामित्यादिना एनप्। दूरान्तिकार्थैः॥

संकोचेमानाभावेनफलद्वयस्यापिसुवचत्वादितिशेषइत्यस्यासंबंधादि हविस्सूत्रांतिङंतमुदाहरति।शतस्यदीव्यतीति।प्रेष्यब्रुवोः इष्यतेदैवादिकस्यलोटेमध्य
मपुरुषेकवचने।प्रेष्येति।तत्साहचर्याद्ब्रुविरपितथाभूतएवगृह्यते।अतएवेहशेषग्रहणंनसंबध्यतेतिङंतेनसहसमासस्याप्रसक्तत्वात्।प्रेष्यब्रुवोःकिं।अग्नये
छागस्यहविर्वपांमेदोजुहुधि।हविषःकिं।अग्नयेगोमयानिप्रेष्यदेवतासंप्रदानेकिं।माणवकायपुरोडाशान्प्रेष्य।हविषः प्रस्थितत्वेनविशेषणप्रतिषेधोवक्त
व्यः।इंद्राग्निभ्यांछागस्यहविर्वपांमेदःप्रस्थितंप्रेष्य॥ ॥ कृत्वोर्थाःकृत्वसुचोर्थइवार्थोयेषांप्रत्ययानांतेकृत्वोर्थाः।शेषइति।इहदिवस्तदर्थस्येत्यादिसूत्रष
ट्केविच्छिन्नमपिशेषग्रहणमनुवर्ततेव्याख्यानात्।पंचकृत्वइति।संख्यायाःक्रियेत्यादिनाकृत्वसुच्।द्विरिति।द्वित्रिचतुर्भ्यः सुच्।कर्तृकर्मणोःकृति।शेषइ

कृत्वोर्थप्रयोगेकालेऽधिकरणे।२।३।६४।कृत्वोर्थानांप्रयोगेकालवाचिन्यधिकरणेशेषेषष्ठीस्यात्।पञ्चकृत्वोऽह्नोभोजनं।द्विरह्नोभोजनं
शेषेकिं।द्विरहन्यध्ययनं।कर्तृकर्मणोःकृति।२।३।६५।कृद्योगेकर्तरिकर्मणिचषष्ठीस्यात्।कृष्णस्यकृतिः।जगतःकर्ताकृष्णः।गुणकर्मणिवेष्य
ते।नेताऽश्वस्यस्रुघ्नंस्रुघ्नस्यवा।कृतिकिं।तद्धितेमाभूत्।कृतपूर्वीकटं।उभयप्राप्तौकर्मणि।२।३।६६।उभयोःप्राप्तिर्यस्मिन्कृतितत्रकर्मण्येव
षष्ठीस्यात्।आश्चर्योगवांदोहोऽगोपेन।स्त्रीप्रत्यययोरकाकारयोर्नायंनियमः।भेदिकाबिभित्सावारुद्रस्यजगतः।शेषेविभाषा।स्त्रीप्रत्ययइ
त्येके।विचित्राजगतःकृतिर्हरेर्हरिणावा।केचिदविशेषेणविभाषामिच्छन्ति।शब्दानामनुशासनमाचार्येणाचार्यस्यवा।क्तस्यचवर्तमा
ने।२।३।६७।वर्तमानार्थस्यक्तस्ययोगेषष्ठीस्यात्।नलोकस्येतिनिषेधस्याऽपवादः।राज्ञांमतोबुद्धःपूजितोवा॥ ११ तिनिवृत्तंकर्तरिचकृती

तिसूत्रेकृतेचकारेणअधीगर्थेतिसूत्राच्चतुर्थ्यर्थेबहुलंछंदसीतिपर्यंतमनुवर्तमानस्यकर्मणीत्यस्यानुकर्षणसंभवेपिपुनरत्रकर्मग्रहणादित्याहुःतन्मंद
संन्निहितस्याधिकरणस्यानुकर्षणप्रसंगेनतन्निवृत्तयेकर्मग्रहणसंभवात्तस्मात्व्याख्यानमेवात्रशरणमित्यपरे।कर्तृकर्मणोःकिं।शस्त्रेणभेत्ता।कृत्तिरिति
करणेक्तिः।स्त्रियांक्तिन्।कृष्णोत्रकर्ता।कर्मण्युदाहरतिजगतइति।कृष्णस्यतत्त्वाभिहितत्वात्ततःषष्ठीनभवति।कृतिकिं।मिति।नन्विहकर्तृकर्मभ्यांक्रियाआ
क्षिप्यतेतद्वाचीतुधातुरेव।धातोश्चद्वयेप्रत्ययाःकृतस्तिङश्च।तत्रतिङ्प्रयोगेनकटंकरोतीत्यादौनलोकेतिप्रतिषेधेनभाव्यंततश्चपरिशेषात्कृद्योगेएवषष्ठी

ति घञा रोगो भावोऽभिधीयते स च रुजायां कर्त्ता। कर्तृकर्मणोरिति रोगशब्दात् षष्ठी। भावकर्तृकाणां किं। श्लेष्मणा श्चौररुजा। पायुः पित्तकफश्लेष्मेत्यमरः। चौरज्वर इति इह ति घञा रोगो... चौरशब्दात् रुजार्थानामिति षष्ठ्या अप्रवृत्तौ षष्ठी शेष इत्यनेन षष्ठी षष्ठीति समासो भवत्येवेति भावः। सर्पिषो नाथनमिति। सर्पिर्मे भूयादित्याशासनमित्यर्थः। मा णावकनाथनमिति। यद्यपि कर्मत्वविवक्षायां कर्तृकर्मणोरिति यदा षष्ठी तदा आशिष्यपि समासोऽस्त्येव तथापि तत्र गतिकारकोपपदात् कृदिति कृदुत्तरपदप्रकृतिस्वरः समासान्तोदात्तत्वं नु याज्ञादावेव नत्वाशिषीति निष्कर्ष इति कौस्तुभे स्थितं। जासि। जसु ताडने जसु हिंसायामिति च चुरादिस्तस्येदं ग्रहणं न तु दैवादिकस्य जसु मोक्षण इ त्यस्य जासीति निर्देशात् हिंसायामिति वचनाच्च। निप्रहणनमिति हन्तेरत्पूर्वस्येति णत्वं। प्रणीति। नेर्गदेति णत्वं। चुरादिरिति। नटन्त्तावितिनु न गृह्यते दीर्घनिर्देशादि तिभावः। क्राथनमिति। क्रथ हिंसायामिति घटादौ पठ्यते तस्य मित्त्वेऽपि इह निपातनाद्वृद्धिः मित्त्वफलं तु निपातनात्त्वरत्वाच्चिण्णमुलोरिति दीर्घं चारितार्थमिति घटा

दिवस्तदर्थस्य ।२।३।५८। द्यूतार्थक्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्म्मणि षष्ठी स्यात्। शतस्य दीव्यति। तदर्थस्य किं। ब्राह्मणं दीव्यति स्तौतीत्यर्थः। विभाषोपसर्गे ।२।३।५९। पूर्वयोगापवादः। शतस्य शतं वा प्रतिदीव्यति। प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ।२।३।६१। देवतासम्प्रदानकेऽर्थे वर्त्तमानयोः प्रेष्यब्रुवोः कर्म्मणो हविर्विशेषस्य वाचकाच्छब्दात् षष्ठी स्यात्। अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा॥

दौ वक्ष्यति। यत्तु हरदत्तेनोक्तं। घटादिपाठो घटादयः षित इत्यातिदेशिकत्वेऽप्यङ् यथा स्यादित्येतदर्थ इति। तन्मन्दं। घटादयः षित इति हि मध्ये सूत्रितं तेन पूर्वेषां त्वर त्यन्तानामेव षित्त्वं न तु ज्वरादीनां परेषामिति। अत एव त्वरस्त्यन्तास्त्रयोदशानुदात्तेतः षितश्चेति घटादौ वक्ष्यति। पणनमिति। स्तुतावेवेति वक्ष्यमाणत्वादायस्या भावः। ब्राह्मणपणनमिति। आयादय आर्द्धधातुके वेत्यायस्य विकल्पः॥ ॥ दिवस्तदात्ककृत्वेन। व्यवहृपणोः समर्थयोरिति तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्या र्थौ पूर्वसूत्रे गृहीतावित्याशयेनाह। द्यूतेति। पूर्वसूत्र एव विदः पाठे तदर्थस्येति न कर्तव्यमिति यद्यपि लाघवं तथापि योगविभाग उत्तरार्थः। कर्मणीति। इह शेष इति न संबध्यते उत्तरसूत्रे विकल्पारंभसामर्थ्यात्। अन्यथा षष्ठ्यां विकल्पितायां तया मुक्ते शेषे विभक्त्यन्तरस्याप्राप्त्या तदर्थ एव विकल्पारंभः स्यादिति भावः। अन्ये त्वा हुः। लाघवात् पूर्वसूत्रे एव दिवो ग्रहणे कर्तव्ये पृथग्योगकरणसामर्थ्यादत्र शेष इति न संबध्यते॥ न चोत्तरार्थत्वात्पृथग्योगस्य नोक्तार्थज्ञापकत्वमिति वाच्यं।

योः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरीति यो नियम उक्तः स न प्रवर्तते किं तु कर्तर्यपि षष्ठी प्रवर्तत इति फलितोऽर्थः । कथं तर्हि सुहृत्वित्थोरिति सूत्रे सुया सीस्तुटो वा धोनेति
वृत्तिः । अत्राहुः । कर्तुः करणत्वविवक्षायां तृतीया बोध्येति । भेदिकेति ॥ भेदनं भेदिका । पर्याया र्हर्णोत्पत्तिषु ण्वुच् धात्वर्थनिर्देशे ण्वुल् वक्तव्य इत्यनेन ण्वुलित्ये
के । युवोरनाकौ स्त्रियामपि प्रत्ययस्थादिति इत्वं । विभित्सेति । भेत्तुमिच्छा । भिदेः सनि हलन्ताच्चेति कित्वाद्गुणाभावः । अप्रत्ययादित्यकारप्रत्यये टाप् । शेषे इति ।
अकाऽकाराभ्यामन्यस्मिन् क्तिनादावित्यर्थः । कर्तरि षष्ठीनिषेधफलकस्योभयप्राप्ताविति सूत्रस्यतत्रैव कर्तरि षष्ठीसंपादनफलकस्य स्त्रीप्रत्यययोरकाकारयो
रिति वचनस्य च प्राक् स्थितत्वात् कर्तर्येव विभाषा अनेन शेषवचनेन क्रियते न तु कर्मणीत्याशयेनोदाहरति । जगतः कृतिर्हरेर्हरिणा वेति । अविशेषेणेति । अ

अधिकरणवाचिनश्च । २ । ३ । ६८ । क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं । न लोकाव्ययनिष्ठाखलर्थतृनां । २ । ३ । ६९ । एषां प्रयोगे षष्ठी न स्यात् ।
लादेशाः । कुर्वन् कुर्वाणः सृष्टिं हरिः । उ । हरिं दिदृक्षुः अलङ्करिष्णुर्वा । उक । दैत्यान्घातुको हरिः । कमेरनिषेधः । लक्ष्म्याः कामुको हरिः । अव्यय । जगत्
सृष्ट्वा । सुखं कर्तुम् । निष्ठा । विष्णुना हता दैत्याः । दैत्यान् हतवान् विष्णुः । खलर्थः । ईषत्करः प्रपञ्चो हरिणा । तृन्निति प्रत्याहारः । शतृशानचा
विति तृ शब्दादारभ्य तृनो नकारात् । शानन् । सोमं पवमानः । चानश् । आत्मानं मण्डयमानः । शतृ । वेदमधीयन् । तृन् । कर्ता लोकान् । द्विषः श
तुर्वा । मुरस्य मुरं वा द्विषन् । सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः । शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ॥ ९९ ॥

काकारभिन्ने कृन्मात्रे इत्यर्थः । अनुशासनमिति । अनुशिष्यन्ते असाधुशब्देभ्यः प्रविभज्य बोध्यन्ते येनेति करणे ल्युट् सत्ताज्ञां मत इत्यादि मतिबुद्धिपूजार्थे
भ्यश्चेति वर्तमाने क्तः । पूजितो यः सुरासुरैरित्यादौ तु भूते क्तो न तु वर्तमाने तेन तृतीयात्रोपपद्यते । न च मतिबुद्धीति सूत्रेणावाधः शंक्यः तेनेत्यधिकारे उपज्ञा
त इति लिंगेनाबाधज्ञापनात् ॥ * ॥ अधिकरण । अयमपि निषेधापवादः । आसितमिति । आस्यते अस्मिन्नित्यासितं क्तोऽधिकरणे चेत्यधिकरणे क्तः । इदमे
षामिति । कर्तरि षष्ठी यासकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयो रपि षष्ठी अनभिहितत्वाविशेषात् । इदमेषां भुक्तमोदनस्य । उभयप्राप्तौ कर्मणी
त्ययं नियमस्तु नेह प्रवर्तते कर्तृकर्मणोः कृतीत्यनन्तरस्यैव षष्ठ्यास्तन्नियमाभ्युपगमात् । एतच्च कौमुदस्य स्पष्टं । न लोका ॥ ॥ ॥

भविष्यति तस्मात्किं कृतग्रहणेनेति प्रश्नः। कृतपूर्वी कटमिति। अत्र करोतिक्रियापेक्षमनभिहितं कर्मत्वं कटस्यास्त्येवेति षष्ठी स्यात्तद्धिताधिक्ये तु सा मा भूदित्येतद
र्थं कृतग्रहणमिति भावः। ननु कृतः कटः पूर्वमनेनेत्यस्मिन्विग्रहे क्तस्य कर्मणि विधानात्तेनैवाभिहितं कर्मेति नैव द्वितीया प्राप्नोतीति नापि तदपवादभूता षष्ठी इ
हाप्यनभिहिताधिकारात्। किंचाकृतशब्दस्य कटसापेक्षत्वात्समासो दुर्लभ एव तद्धितोऽपीति चेदत्राहुः। पूर्वं कृतमनेनेति विग्रहेऽविवक्षितकर्मतया भावे क्तः प्र
त्यये कृते कृतशब्दस्य कटसापेक्षत्वाभावात्समासतद्धितौ भवत एव तथा च कृतपूर्वीत्ययं पूर्वं कृतवानित्यनेन समानार्थः संपद्यते गुणभूतयापि क्रियया का
रकाणां संबंधस्य कटं कृतवानित्यादौ दर्शनादत्रापि करोतिक्रियापेक्षं कर्मत्वं कटस्याभ्युपगम्यते तच्च कर्मत्वं न केनाप्यभिहितं भावे क्तस्य कर्तरि इनिप्रत्ययस्य
च विधानात्। अतोऽसति कृद्ग्रहणे षष्ठी स्यादेवेति। एवं चौदनस्य याचकतम इत्यत्र षष्ठ्या असाधुत्वे इष्टापत्तिरेव शरणं। कृतपूर्वीत्यत्र समासतद्धितौ भवत ए
वेत्युक्तं। तत्र समासः सुप्सुपेति बोध्यः। तद्धितस्तु पूर्वादिनिः सपूर्वाच्चेति कर्तरि इनिः। तद्विधौ श्राद्धमनेनेति सूत्रादनेनेत्यनुवृत्तेः। स्यादेतत्। भिदेरण्येतात्पर्यायाहे
रोत्पत्ति छिति एतु चिभेदिका यज्ञदत्तस्य देवदत्तस्य काष्ठानामित्युभाभ्यामप्यनेन कृद्योगषष्ठी जायते। तत्र मुख्यामुख्यसन्निधौ मुख्यस्यैव कार्यसंप्रत्ययात्
प्रयोजककर्तृवाचकादेव स्यादन्यथा पाचयत्योदनं देवदत्तेन यज्ञदत्त इत्यत्र प्रयोज्यप्रयोजकयोरुभयोरपि लकारवाच्यत्वे उभाभ्यामपि कर्तृवाचकाभ्यां प्र
थमा स्यात्। मैवं। प्रयोज्यप्रयोजकवाचकाभ्यां भेदेन षष्ठी जायते न त्वेकैवेति नेह मुख्यामुख्यन्यायप्रवृत्तिः। तत्र तु लकारस्यैकत्वात्कर्तुस्तद्वाच्यत्वकल्पनाया
मुक्तन्यायः प्रवर्तत इति वैषम्यात्। एवं चौदनः पाच्यते देवदत्तेन यज्ञदत्तेनेत्यादावुभाभ्यामपि तृतीया स्यादेवेति बोध्यं। अत्र व्याचक्षते। तदर्हमिति निर्देशात्
कर्तृकर्मणोः कृतीत्येतदनित्यं तथा च धर्म्येण मोदमुत्तममिति भट्टिप्रयोगः संगच्छत इति। उभयप्राप्तौ कृतीत्यनुवर्तते। तेनान्यपदार्थलाभाद्बहुव्रीहिरित्या
ह। उभयोः प्राप्तिर्यस्मिन्निति। उभयशब्देन कर्तृकर्मणी परामृश्येते। तेनैकस्मिन्कृति कर्तृकर्मणोः प्राप्तिरिति लाभादाश्चर्यमिदमोदनस्य पाको ब्राह्मणानां च प्रा
दुर्भाव इत्यत्र नायं नियमः प्रवर्तते तत्पुरुषेण स्यादेवात्रातिप्रसंग इति भावः। पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमिति ध्वनयति। कर्मण्येवेति। एवं च कर्तरि षष्ठी
प्रतिषेधोऽस्य सूत्रस्य फलं न तु कर्मणि षष्ठीविधानमिति स्थितं। स्त्रीप्रत्यययोरिति। स्त्रियां क्तिन्नित्यधिकारे विहितयोरित्यर्थः॥ नायं नियम इति। अकाऽकार

सतइतिशत्रे तयस्तुकालसामान्येण्वुल्तृचावितिण्वुलुक्तस्तत्रननिषेधः।ओदनस्यपाचकः पुत्रपौत्राणांदर्शकइतीतिभावः।व्रजंगामीति।आवश्यकाधमर्ण्ययो र्णिनिरित्यावश्यकेणिनिः।यद्यप्ययंकालसामान्येविहितस्तथापिभविष्यतिगम्यादयइत्युक्तेर्भविष्यदर्थकः।गम्यादयःकेचिदुणादयःकेचिदष्टाध्यायीगताइति हरदत्तः।ननुगत्यर्थकर्मणिचतुर्थीवेत्येवसिद्धेर्द्वितीयाग्रहणमपवादविषयेपिद्वितीयाप्रवृत्त्यर्थमितिव्रजंगामीतिसिध्यत्येवेतिचेदत्राहुः इहैवसूत्रेग्रामंगामी तिभाष्योदाहरणात्तत्सूत्रंनारीक्रियतेतेनग्रामस्यगंतेतिषष्ठ्येवसाध्वी।नतुग्रामंगंतेतिद्वितीयेति।शतंदायीतिआवश्यकेत्याधमर्ण्येणिनिः।भविष्यदाधमर्ण्या र्थेनश्चयोगइत्युक्तत्वान्नेहनिषेधः।अवश्यंकरोत्यवश्यंकारीकटस्यागम्यादित्वाभावाद्वर्त्तमानेप्ययंकृत्यानां।कर्तृकर्मणोरितिनित्येप्राप्तेविभाषेयं।सेव्यइतिषे

तुल्यार्थैरतुलोपमाभ्यान्तृतीयाऽन्यतरस्यां।२।३।७२।तुल्यार्थैर्योगेतृतीयावास्यात्पक्षेषष्ठी।तुल्यस्सदृशस्समोवाकृष्णस्य।कृष्णेनवा।अतु लोपमाभ्यांकिं।तुलाउपमावाकृष्णस्यनास्ति।चतुर्थीचाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः।२।३।७३।एतदर्थैर्योगेचतुर्थीवास्यात्पक्षेष ष्ठीआशिषि।आयुष्यंचिरञ्जीवितंकृष्णाय।कृष्णस्यवाभूयात्।एवम्मद्रम्भद्रंकुशलंनिरामयंसुखंशंअर्थःप्रयोजनंहितम्पथ्यम्भूयात्। आशिषिकिं।देवदत्तस्यायुष्यमस्ति।व्याख्यानात्सर्वत्रार्थग्रहणंमद्रभद्रयोःपर्यायत्वादन्यतरोनपठनीयः ॥ इसेवायां।कृहलोरितिक

र्मणिण्यत्।योगोविभज्यतइति।भाष्यकारैरितिशेषः।उभयप्राप्तावित्यनेनकर्तरिनिषेधेसिद्धेकर्मणिनिषेधार्थमिदं।गुणकर्मणिवेष्यतइतिनूभयप्राप्तिरहितस्थ लेनेताश्वस्येत्यादौचरितार्थमितिदिक्॥ ॥तुल्यार्थैः।शेषषष्ठ्यांप्राप्तायांविकल्पेनतृतीयाऽनेनविधीयतेतयामुक्तेषष्ठ्येवभवेत्तदाहापक्षेषष्ठीति।बहुवच ननिर्देशादेवपर्यायग्रहणेसिद्धेतुल्यार्थैरित्यर्थग्रहणंपदांतरेणैवस्येणापितुल्यार्थास्तेषांग्रहणार्थंतेनगौरिवगवयइत्यादौनेत्याहुः।कथंतर्हितुलायसदृशेहति दंतवासस्सेतिकालिदासः।स्फुटोपमंभूतिसितेनशंभुनेतिमाघश्च।उच्यते।सहयुक्तेप्रधानइतितृतीयानचात्रसहशब्दयोगोनेतिशंक्यंविनापितद्योगंतृतीयेत्यभ्यु पगमात्।वृत्तिवर्तमानेअन्यतरस्यांग्रहणमुत्तरसूत्रेचकारेणास्यानुकर्षणार्थं।अन्यथाहितृतीयैवानुकृष्येतसन्निहितत्वात्।तुल्यइति।तुलयासंमितस्तुल्यः। नौवयोधर्मेत्यादिनायत्।तुलाउपमावेति।तोलनंतुला।अस्मिन्नेवसूत्रेणितुगडौनिपात्यत्नात्साधुरितिमाधवःउपमिति——

जिघृक्षितरूपविनाशप्रसंगात्तन्नामित्यत्रणत्वं न कृतं। उश्च उकश्च उ꣡कौ लश्च उ꣡कौ चेति विग्रहः लइति लडादीनां सामान्यग्रहणं तेषां च साक्षात्प्रयोगो न संभवतीति तदादेशा गृह्यंत इत्याह। लादेशा इति। उदाहृियंत इति शेषः कटं कारयांचकार इत्यत्र कृत्संज्ञकलिडंतामंते न योगेपि कटस्य कर्तृकर्मणोः कृतीति षष्ठी न भवति आमइति ञ्कोपि लादेशत्वादित्याहुः। नन्वेवमपि बभ्रिर्वज्रं पपिः सोमं ददिर्गा उत्पन्न न लोकेति निषेधाप्रवृत्तेः षष्ठी दुर्वारैव। न हि किकिनौ लकारेणापि तदादेशौ नैष दोषः किकिनौ लिट् चेत्यनेन लिट्कार्यातिदेशः क्रियते न तु लिट्संज्ञा तथा च विशेषातिदेशे च सामान्यमप्यतिदिश्यत इति नानुपपत्तिः। दिद्दक्षुरिति। सनाशंसभिक्ष उः। उकारेण कृतो विशेषणात्तदंतमपि लभ्यत इत्याशयेनाह। अलंकरिष्णुरिति। अलंकृञ्निराकृञ्नित्यादिना इष्णुच्। घातुक इति। लषपतेत्यादिना उकञ्। ईषत्कर इति। ईषद्दुःसुष्वित्यादिना खल्। अर्थग्रहणादीषत्पानः सोमो भवतेत्यप्युदाहार्यं। अव्याप्तिं परिहर्तुमाह। प्रत्याहार इति। पचमान इति पूङ्यजोः शानन्। मंड्य

अकेनोर्भविष्यदाधमर्ण्ययोः।२।३।७०। भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति। व्रजङ्गामी शतन्दायी। कृत्यानां कर्त्तरि वा।२।३।७१। षष्ठी वा स्यात्। मया मम वा सेव्यो हरिः। कर्त्तरीति किं। गेयो माणवकः साम्नां। भव्यगेयेति कर्त्तरि यद्विधानादनभिहितं कर्म। अत्र योगो विभज्यते। कृत्यानां उभयप्राप्ताविति नेति चानुवर्त्तते। तेन नेतव्या व्रजं गावः कृष्णेन। ततः कर्त्तरि वा उक्तोऽर्थः॥ ॥

मान इति। मडि भूषायामिदित्वान्नुम्। ताच्छील्यवयोवचनेति चानश्। अधीयन्निति। इङ्धार्योरिति शतृ। शानन्नादिषु लट इत्यननुवृत्त्या लादेश इत्यसिद्धेः प्रत्याहारग्रहणमाश्रीयत इति भावः। तृन्निति। तृन्शीलादिषु तृन्निति विहितस्तृन्प्रत्ययः। तृन्निति प्रत्याहारग्रहणान्नित्यं निषेधप्राप्ते विकल्पमाह। द्विष इति। द्विषः शतुर्वेत्यस्मात् द्विषोऽमित्र इति विहितो यः शतृप्रत्ययः स्तत्प्रयोगे वा षष्ठीनिषेध इत्यर्थः। सर्वोयमिति। अनंतरस्येति न्यायादिति शेषः। शेषषष्ठीति शाब्दबोधे वैलक्षण्यमस्तीति भावः एवं चास्य योगवा दोहोऽगोपेनेत्यत्र शेषत्वविवक्षायां कर्त्तर्यपि षष्ठी भवत्येवेति बोध्यं॥ ॥ अकेनोः। आधमर्ण्ये अकस्यासंभवादाह। भविष्यत्यकस्येति। इनस्तु उभयोः संभवादाह। भविष्यदाधमर्ण्यार्थेनश्च योग इति यथासंख्यं तु न भवति। भाष्ये अकस्य भविष्यतीइन आधमर्ण्ये चेति योगं विभज्य व्याख्यानात्। इह भविष्यादित्तिखर्येतेत्तेन भविष्यति गम्यादय इत्यधिकारे विहितस्तुमुन्ण्वुलाविति ण्वुलेव गृह्यत इत्याशयेनोदाहरति सतः पालक इति॥

त्स्यानुरोधेनद्वितीयाविधानेव्यक्तिपक्षाश्रयणात्।साध्वसाधुप्रयोगेचं।यत्रार्चानविवक्षिता।किंतुतत्त्वकथनमात्रंतत्रापिसप्तम्यर्थंवार्तिकेस्मिन्साधुग्रहणं।साधुर्भृत्ये राज्ञ।इत्यादिर्यथासाधुनिपुणाभ्यामितिसूत्रेसाधुग्रहणंत्वर्चायांविवक्षितायांप्रतियोगेसप्तमीनिवृत्त्यर्थमितिविवेकः।निमित्तमिह फलमिति।यदित्तु कारणमित्युच्येतत र्हिजाड्येनबद्धइत्यादावतिप्रसंगःस्यादितिभावः।चर्मणीति।चर्मद्वीप्यादीनांसमवायःसंबंधः।हेतुत्वतीयेति।ज्ञादर्थ्येचतुर्थ्यपिवोध्यं।सीमांडकोशइति।तथाच मेदिनीकारः।सीमाघाटस्थितिक्षेत्रेष्वंडकोशेतुचस्त्रियामिति।अथपुष्कलकोगंधमृगेक्षणकीलयोरितिचाहरदत्तस्तुपुष्कलकःशंकुः।सीम्निसीमज्ञानार्थंहतोनि हतःनिखातइत्याह।अस्मिंस्तुपक्षेसीमपुष्कलकयोःसंयोगसंबंधः॥ ॥ यस्यच।निर्ज्ञातकालाहिक्रियाअनिर्ज्ञातकालायाःक्रियायाःकालपरिच्छेदकत्वाल्ल क्षणंतत्रप्रसिद्धक्रियाश्रययोःकर्तृकर्मणोर्वाचकात्।ब्राह्मणादिशब्दात्तस्यलक्षणभावसंबंधेषष्ठ्यांप्राप्तायामियंसप्तमी।लक्षकत्वेक्रियायाःसाक्षादाश्रयस्यतु

यस्यचभावेनभावलक्षणं॥२।३।३७॥यस्यक्रियपाक्रियान्तरंलक्ष्यतेततस्सप्तमीस्यात्।गोषुदुह्यमानासुगतः।अर्हाणांकर्तृत्वेऽनर्हाणामक र्तृत्वेतद्वैपरीत्येच॥सत्सुतरत्सुअसन्तआसते।असत्सुतिष्ठत्सुसन्तस्तरन्ति।सत्सुतिष्ठत्सुअसन्तस्तरन्ति।असत्सुतरत्सुसन्तस्तिष्ठन्ति।षष्ठी चानादरे॥२।३।३८॥अनादराधिकेभावलक्षणेषष्ठीसप्तम्यौस्तः।रुदतिरुदतोवाप्राव्राजीत्।रुदन्तंपुत्रादिकमनादृत्यसन्न्यस्तवानित्य र्थः॥

आस्यणादेःक्रियाद्वारेणेतिबोध्यं।ब्राह्मणेष्वधीयानेषुगतइतिकर्तुरुदाहरणं।कर्मण्याह।गोष्विति।अर्हाणामित्यादि।यस्यांक्रियायांयेउचितास्तेअ र्हाः।तेषांकर्तृत्वेविवक्षितेसतितत्रसप्तमीवाच्या।तथायस्यांक्रियायांयेषांकर्तृत्वमनुचितंतेषामकर्तृत्वेविवक्षितेचसप्तमीवाच्या।तथातद्वैपरीत्येयेषांकर्तृत्वमु चितंतेषामकर्तृत्वेयेषांत्वनौचित्यंतेषांकर्तृत्वेचसप्तमीवाच्येत्यर्थः।आद्यमुदाहरति॥सत्सुतरत्स्विति।संतोहितरणक्रियार्हाःकर्तारश्च द्वितीयमुदाहरति।असत्सुतिष्ठत्स्विति।अत्रतरणक्रियायांअसतामनर्हत्वमकर्तृत्वंचतिष्ठत्स्वित्यनेनप्रतीयतेतद्वैपरीत्येप्रथममुदाहरति।सत्सुतिष्ठत्स्विति।सतांहितरणमुचितंतेषांचाक र्तृत्वंतिष्ठत्स्वित्यनेनबोध्यते।द्वितीयमुदाहरति।असत्सुतरत्स्विति।असतांहितरणमनुचितंतेषांकर्तृत्वंतरत्स्वित्यनेनगम्यते।यद्यपीदंयस्यचभावेनेत्येवसिद्धंतथा पिलक्ष्यलक्षणभावाविवक्षायांसप्तम्यर्थमिदमितिकैयटादयः।तत्त्वतस्त्वर्थमेवेति ॥ ॥ ॥

रुपम। आतश्चोपसर्ग इत्यङ्। हितमिति। हितयोगे चेत्यनाशिषि चरितार्थमित्याशिष्ययं विकल्प इति भावः। व्याख्यानादिति। सूत्रे अर्थशब्दो पृथङ्निमित्तं तथा च द्वंद्व
एवायं न त्वर्थशब्देन बहुव्रीहिरिति भावः। इति षष्ठी॥ ॥ आधारः। आध्रियतेऽस्मिन्नित्याधारः। अध्यायन्यायेति सूत्रे अवहाराधारेत्युपसंख्यानादधिकरणे घञ्। स
चाधारः कस्येत्याकांक्षायां कारकाधिकारात् क्रियाया इति लभ्यते। इयं च संज्ञा साक्षात् क्रियाधारयोर्न संभवति पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वात्। अतो व्याचष्टे
कर्तृकर्मद्वारेति। एवं च भूतले घट इत्यादौ अस्तीति क्रियाध्याहारो बोध्यः। त्रिधेति। एतच्च संहितायामिति सूत्रे भाष्ये स्पष्टं। नद्यामास्ते इत्याद्यर्थं सामीपिकमधिकरणं च
तुर्थमपि केचिदिच्छंति। कटे आस्त इति। कर्तृद्वारा क्रियाधारस्योदाहरणमिदं। कर्मद्वारा क्रियाधारस्य तु स्थाल्यां पचतीति। वैषयिकाधारमुदाहरति मोक्षे इच्छास्तीति। अभि

आधारोऽधिकरणम्।१।४।४५॥ कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात्। सप्तम्यधिकरणे च।२।३।३६। अधिकरणे स
प्तमी स्यात्। चकाराद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्वस्मि
न्नात्मास्ति। वनस्य दूरे अन्तिके वा। दूरान्तिकार्थेभ्य इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः। क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्। अ
धीती व्याकरणे। अधीतमनेनेति विग्रहे इष्टादिभ्यश्चेति कर्तरीनिः। साध्वसाधुप्रयोगे च। साधुः कृष्णो मातरि। असाधुर्मातुले। निमित्तात्कर्म
योगे। निमित्तमिह फलं योगः संयोगसमवायात्मकः। चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥१॥
हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थं। सीमा अण्डकोशः। पुष्कलको गन्धमृगः। योगविशेषे किं। वेतनेन धान्यं लुनाति॥ व्यापकस्य तु सर्वस्मिन्निति। ति

लेषु तैलमित्यादावभिव्यापकस्योदाहरणमाहुः। चतस्र इति। प्रातिपदिकार्थमात्रे इत्यर्थः। दूरान्तिकार्थेभ्य इत्यस्येहानुवर्तनादधिकरणेऽप्येते बोध्याः। क्तस्येन्विष
यस्येति। इनन्तः शब्दो विषयो वर्तनं भूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। अन्ये त्वाहुः। इनो विषय इति षष्ठीसमासः। विषयशब्देन प्रकृतिरुच्यते क्तान्तस्येनः प्रकृतत्वादि
ति। अधीती व्याकरणे इति। भावे क्तप्रत्यये तत इष्टादिभ्यश्चेति कर्तरीनौ कृते पश्चाद्गुणीभूतक्रियया संबध्यमानं व्याकरणमनभिहितं कर्मेति तत्र पूर्वोक्तमिति वद्द्वि
तीयात्र प्राप्ता। मासमधीती व्याकरणे इत्यादौ तु कर्मकर्तृयोगनिमित्तकस्य कालकर्मणोर्बहिरंगत्वादिहाग्रहणमिति सप्तम्यभावः। न चैवं तत्र द्वितीयापि न स्यादिति वाच्यं

समर्थः पदविधिः॥ सामर्थ्यं च द्विविधं व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति। तत्र स्वार्थपर्यवसायिनां पदानामाकांक्षादिवशाद्यः परस्परसंबंधः सा व्यपेक्षा सैव वा
क्ये राज्ञः पुरुष इत्यादौ तत्र व्यपेक्षायां सत्यां योग्यः संनिहितो योग्यश्च तेन तेन संबंधोऽभ्युपेयते यथा राज्ञः पुरुषोऽश्वश्च राज्ञो देवदत्तस्य च पुरुष इति एकार्थीभावस्तु राजपुरुष
इत्यादिवृत्ताविव। स च प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः। अत एव राजपुरुष इत्यत्र राज्ञि ऋद्धस्येति विशेषणं नान्वेति पदार्थैकदेशत्वा
त्। न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः। तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणाऽन्वयादिति वाच्यं देवदत्तस्य प्रधानभूतकुलेनैवान्वयात्। संबंधस्वरूपस्थि
तगुरुद्वारक एवमक्षयर्थीनत्तनदित्तरः उक्तं च। समुदायेन संबंधो येषां गुरुकुलादिना। संसृष्टावयवास्ते तु युज्यन्ते तद्वता सहेति। यदा सस्संबंधिकपदार्थस्यैकदेश
त्वेऽपि भवत्येव विशेषणान्वयः उक्तं च। संबंधिशब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयत इति। नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वादे

समर्थः पदविधिः।२।१।१। पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः। प्राक्कडारात्समासः।२।१।३। कडाराः कर्मधारय इत्यतः प्राक् समास इ
त्यधिक्रियते। सह सुपा।२।१।४। सहेति योगो विभज्यते। सुबन्तं समर्थेन सह समस्यते। योगविभागस्येष्टसिद्ध्यर्थत्वात्क्वचित्तिङन्तोत्तरपदोऽयं स
मासः स च छन्दस्येव। पर्यभूषत्। अनुव्यचलत्। सुपा।२।१।४। सुप् सुपा सह समस्यते। समासत्वात्प्रातिपदिकत्वात्। सुपो धातुप्रातिपदिकयोः।
।२।४।७१। एतयोरवयवस्य सुपो लुक् स्यात्। भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः। पूर्वं भूतः। भूतपूर्वः। इवेन सह समासो विभक्त्यलोपश्च
जीमूतस्येव। अव्ययीभावः।२।१।५। अधिकारोऽयं॥

((कदेशत्वेऽपि ऋद्धस्येति विशेषणेनान्वयोऽस्तु मैवं। राज्ञ ईशितुरीशितान्यं प्रति साकांक्षत्वेऽपि ऋ
द्धस्य नाकांक्षत्वात्। ननु वाक्ये क्लृप्तयैवावयवशक्त्योपपत्तौ विशिष्टार्थविषयकशक्त्यंतरमेव माऽस्तु सत्त्यां बहूनां वृत्तिधर्माणां वचनैरेव साधने॥ स्यान्महद्गौरवं तस्मादेका
र्थीभाव आस्थितः। चकारादिनिषेधोऽथ बहुव्युत्पत्तिभंजनं कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितं तथाहि। धवखदिरौ छिनत्तीत्येव क्रोडीकृतार्थत्वाच्चाकारो न प्रयुज्यते
तथा चित्रगवादेयत्स्यदः। त्वया तु वचनं कर्तव्यं निरूढलक्षणा तु शक्तितो नातीव भिद्यते किं च मात्रमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणवत्समस्तेऽपि उदक
विशेषणप्रयोगः प्राप्तः स च वृत्तस्य विशेषणायोगो नेति वचनेनैव वारणीयः नामार्थयोरभेदान्वयः प्रत्ययार्थः प्रधानमिति व्युत्पत्तित्यागश्च। प्राप्तोदक इत्यादौ उद

रमित्यन्ये। षष्ठी चानादरे। अनादर इति। यस्य च भावेनेत्यनेन सप्तमी। अनादरे सति यो भावे लक्ष्यते इति तदेतत्फलितमाह। अनादराधिक्य इति। केवलभावलक्षणे सप्तम्ये
व अनादराधिक्ये तु षष्ठीसप्तम्याविति निष्कर्षः॥ ॥ स्वामीश्वरः स्वाम्यर्थ इति वक्तव्ये स्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थं। विरूपाणामपि समानार्थानामित्येकशेषो
त्र न भवति स्वरूपपरत्वेन समानार्थकत्वाभावात्। दायमादत्ते इति दायादः। सोपसर्गादप्याद्दातात् अतएव निपातनात्कः॥ गवां गोषु वा दायाद इत्यत्र यद्यपि गवामित्ये
तत्समुदायस्य विशेषणं तथापि दीयतेऽसौ दाय इति व्युत्पत्त्या अवयवार्थभूतमंशस्थ शत्त्वेव तथा चात्र गवात्मकस्यांशस्यादातेति फलितोऽर्थः पचमी विभक्ते। भेद एवे

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च।२।३।३९। एतैस्समभिव्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनं। ग
वां गोषु वा स्वामी। गवां गोषु वा प्रसूतः। गा एवानुभवितुं जात इत्यर्थः। आयुक्तकुशलाभ्यां चासेवायां।२।३।४०। आभ्यां योगे षष्ठीसप्तम्यौ स्त
स्तात्पर्य्येर्थे। आयुक्तो व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायां किं। आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः। यतश्च
निर्द्धारणं।२।३।४१। जातिगुणक्रियासंज्ञाभिस्समुदायादेकदेशस्य पृथक्करणं यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां
गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः। पञ्चमी विभक्ते।२।३।४२। विभागो विभक्तं
निर्द्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः।२।३।४३।
आभ्यां योगे सप्तमी स्यादर्चायां न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा। अर्चायां किं। निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्य्यं। अप्रत्या
दिभिरिति वक्तव्यं। साधुर्निपुणो वा मातरं प्रति पर्यनु वा॥ ९९

ति। न तु शब्दान्तरोपात्तसामान्याक्रान्तेति भावः। तत्र पंचमी स्यादिति। नन्वेवं माथुरा इ
त्यत्रापि पंचमी स्यात्। मैवं। पूर्वसूत्रमिहानुवर्त्तते तेन यतो निर्धार्यते तत एवेत्यर्थात् निर्धारणावधेरेव पंचमीप्रवृत्तेः। अनभिहिताधिकारान्माथुरा इत्यत्र नातिप्र
संग इत्यन्ये। माथुरा इति। नह्यत्र निर्द्धारणावधेर्निर्धार्यमाणस्य च गवां कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति। किंतु शब्दोपात्तयोर्धर्मयोर्विरोध एव। इदं च सू
त्रे बुद्धिपरिकल्पितापायमाश्रित्यापादानप्रकरणे भाष्ये प्रत्याख्यातं। साधुनिपुणाभ्यामर्चायांपुराकर्मराशुभे अस्माल्लिपूर्वादिशपभलक्षणाः कः।

भवत्येवा उपसर्जनेतदंतस्याव्ययत्वादितिबोध्यं अव्ययंविभक्ति। विभक्तिरिहकारकशक्तिः। विभज्यते अनयाप्रातिपदिकार्थइतिव्युत्पत्तेः। अतएववक्ष्यतिविभक्त्यर्थे भवत्येवा उपसर्जनेतदंतस्याव्ययत्वादिति ... समासपदंतद्व्याख्याने ... अन्यथाचिकीर्षितेसमासेयत्प्रथमांतमितिव्याख्यानप्रसक्त्याकृष्णश्रितइत्यादौश्रि दिषुविद्यमानमव्ययमिति। प्रथमानिर्दिष्टं अत्रसमासपदंतद्विधायकेलाक्षणिकं अन्यथाचिकीर्षितेसमासेयत्प्रथमांतमितिव्याख्यानप्रसक्त्याकृष्णश्रितइत्यादौश्रि तादिष्वतिप्रसंगइत्याशयेनाह। समासशास्त्रइतिविग्रहइति। अनुवर्तमानेनसमासग्रहणेनविग्रहोलक्ष्यतइतिभावः। नञ्तत्स्येति। अनंतरस्येतिन्यायात्पूर्वसूत्रेणविहि तस्यपूर्वनिपातत्वेननिषिध्यते। तेनकुमारिश्रितइत्यादौनदोषः। गोस्त्रियोः उपसर्जनस्येतिगोस्त्रियोर्विशेषणमेकवचनंतुप्रत्येकाभिप्रायेण। गोस्त्रीभ्यांतुप्रातिपदिकं

अव्ययंविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु।

म २।१।६। अव्ययमितियोगोविभज्यते। अव्ययंसमर्थेनसहसमस्यतेसोऽव्ययीभावः। प्रथमानिर्दिष्टंसमासउपसर्जनं। १।२।४३। समासशास्त्रेप्रथमा निर्दिष्टंउपसर्जनसंज्ञंस्यात्। उपसर्जनम्पूर्वं। २।२।३०। समासेउपसर्जनम्प्राक्प्रयोज्यं। एकविभक्तिचापूर्वनिपाते। १।२।४४। विग्रहेयन्नियत विभक्तिकन्तदुपसर्जनसंज्ञंस्यात्। नतुतस्यपूर्वनिपातः। गोस्त्रियोरुपसर्जनस्य। १।२।४८। उपसर्जनंयोगोशब्दः स्त्रीप्रत्ययान्तञ्चतदन्त स्यप्रातिपदिकस्यह्रस्वस्स्यात् ॥ अव्ययीभावश्चेत्यव्ययत्वं। नाव्ययीभावादतोऽम्त्वपञ्चम्याः। २।४।८३। अदन्तादव्ययीभावात्सुपोनलुकतस्य तुपञ्चमीम्बिना अमादेशः। दिशयोर्मध्यमपदिशं। क्लीबाव्ययंत्वपदिशंदिशोर्मध्यम्विदिक्स्त्रियामित्यमरः। तृतीयासप्तम्योर्बहुलं। २।४। ८४। अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावस्स्यात् ॥ ९९

विशेष्यते। विशेषणेनतदंतविधिरित्याशयेनाह उपसर्जनंपरइति उपसर्जनमिह शास्त्रीयंगृह्यतेनत्वप्रधानलक्षणं। तेनकुमारीवाचरन्ब्राह्मणः कुमारीत्यत्रनदोष इत्युक्तं। स्त्रीप्रत्ययांतमिति। स्त्र्यधिकारोक्तटाबाद्यंतमित्यर्थस्तेना तिलक्ष्मीरित्यादौनातिप्रसंगः। नन्वेवमपिराजकुमारीपुत्रइत्यादावतिप्रसंगइतिचेदत्राहुः। उपसर्जनस्यसस्वंधिकतयायस्यप्रातिपदिकस्यह्रस्वोविधीय तेतदर्थंप्रतिपद्युजरपरभूतयोर्गोस्त्रियोर्गुणीभावस्तदेवह्रस्वत्वमितिभाष्यादावुक्तत्वान्नदोषः भाष्यादावपितुजरपरभूतयोरित्यर्थलाभस्तुतत्राक्लिष्टोत्यत्र समासपदानुवर्तनाद्बोध्यमिति। नाव्ययी। अत्रापंचम्याइतिप्रतिषे ॥

एकार्थीभावे तु लाघवमिति दिक्। पदग्रहणं किं। वर्णविधौ समर्थपरिभाषा मा भूत्। तिष्ठतु दध्यानय तक्रं रहस्यादेव परा। विधिग्रहणाच्च पदस्य विधिः पदयोर्विधिः पदानां
विधिरित्यनेकविभक्त्यन्तसमासलाभार्थं। पदस्येत्युक्तौ तु उपपदमतिङित्यादावेवास्योपस्थितिः स्यादित्याहुः। सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह। समर्थाश्रित
इति समर्थेति किं। पश्यति कृष्णं श्रितो देवदत्त इत्यादौ कृष्णश्रित इत्यादिसमासो मा भूत्। तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र तस्यापत्यमित्युपगुशब्दादण्मा भूदिति।
कश्चित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद्वृत्तिरङ्गीक्रियते। तद्यथा। किमोदनं शालीनां। केषां शालीनामोदनमित्यर्थः। सक्त्वाढकमापणीयानां। आपणीयानां सक्तूनामाढ
कमित्यर्थः। कुतो भवान्पाटलिपुत्रकः। हे पाटलिपुत्रे। तत्र कस्मात्पाटलिपुत्राद्वानागत इत्यर्थः। शेषपक्षे तु प्राचामिति वुञ्। प्राक्कडारात्समासः। प्राग्ग्रहणमावर्त्तते तेन
पूर्वं समाससंज्ञा ततः संज्ञान्तरमपीति लभ्यते तेनाव्ययीभावादिभिः समावेशः सिध्यति अन्यथा पर्यायः स्यात्। समसनं समासः। भावे घञ्। अनेकस्य पदस्यैकपदीभवनमित्य
र्थ इत्येके। वस्तुतस्तु अकर्त्तरि च कारक इति कर्मणि घञ्। अन्यथा सुबन्तं समस्यत इत्युत्तरग्रंथो न संगच्छेत। नन्वन्वर्थत्वात्समाससंज्ञायाः प्रत्येकमप्रसंगात्सहग्रहणं व्यर्थमि
त्याशंक्याह। योगो विभज्यत इति। सुबामन्त्रित इत्यतः सुबित्यनुवर्त्तते तदाह। सुबन्तमिति। समस्यत इति। संपूर्वादस्यतेः कर्मणि लट्। आचार्यरीतिशेषः। समर्थेनेति तु स
हयोगे तृतीया समसनक्रियां प्रति सुबन्तं कर्म न तु कर्तृ यद्यपि सुबन्तस्य कर्तृत्वाभ्युपगमेऽप्युपसर्गादस्यत्यूह्योरिति वार्त्तिकेन समस्यत इत्यत्रात्मनेपदं लभ्यते तथा
पि समास इति व्याख्येयग्रंथे कर्तरि घञ् दुर्लभः बाहुलकं तु अगतिकगतिरिति कर्मत्वाभ्युपगम एव न्याय्यो नास्त्येवेति। एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते छंद
स्येवेति। यदि लोकेऽपि स्यात्तर्हि यत्नमकुरुत इत्यादौ साध्युत्पत्तिः स्यात्। लिंगसर्वनामतामभ्युपेत्य स्वमोर्नपुंसकादिति लुकि कृतेऽपि ह्रस्वो नपुंसक इति ह्रस्वः स्यादित्यादिदूषणं
कर्मणामनभिप्रेतमिति सूत्रेऽस्माभिरुद्भावितं। अनुवृत्य च लदिति सुबित्येकत्वस्य विवक्षितत्वात्पर्यायेण समासो बोध्यः। समासान्तोदात्तत्वे शेषनिघात इति कुगतीति सूत्रे कैयटः।
सुपो धातु। सुप इति प्रत्याहारस्य ग्रहणं पंचम्याः स्तोकादिभ्य इत्यादावलुक्समासविधानात् ज्ञापकात्। निर्देशादिति। अन्यथा हि प्रथमानिर्दिष्टत्वाविशेषेऽपि उपसर्जनसं
ज्ञाया अन्वर्थत्वेन इवशब्दस्यैव इवे निपातः स्यादिति भावः। इवेनेति। अयमपि समासः पूर्ववत्। काचित्क एव तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः उ
द्बाहुरिव वामन इत्यादौ व्यस्तप्रयोगश्च संगच्छत इति मनोरमायां स्थितं विभक्त्यलोपश्चेति। समासावयवस्य सुपोऽलोपविधानेऽपि समासादुत्पन्नस्य सोरव्ययादिति लुक्।

त्यवोधिस इत्यादौ नातिप्रसंग इति शब्दस्य सर्वनामवत्प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात्। एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति। अत एव परिशिष्टे अधिकरणे इत्येव सूत्रितं। पाणिनिस्तु मात्रालाघवमभिप्रेत्य विभक्तिशब्दं प्रायुंक्तेति। अन्ये तु लाघवात् ङि·समीपसमृद्धीति वक्तव्ये विभक्तिग्रहणाद्विभक्तिशब्देन सप्तम्यां पर्यवस्यति ततश्च कर्मत्वमात्रद्योतकत्वार्थमिति नाऽदमिति समासो भवत्येवेत्याहुः। नपुंसकस्यादिति एतच्च सनपुंसकमित्यतो लभ्यते। समीप इति। अव्ययीभाव इत्यन्वर्थसंज्ञाश्रयणात्समीपरूपाव्ययार्थप्राधान्य एवायं समासः समीपवर्तिप्राधान्ये तु संख्ययाव्ययासन्नेति बहुव्रीहिं वक्ष्यत्सु पदशा इति ॥ ॥ विधानसामर्थ्यादिति। ननु समयाग्राममित्यादौ द्वितीयाविधानसामर्थ्यान्मास्त्वव्ययीभावः। आराद्वनादित्यत्र तु भवेदेव। अन्यारादिति पंचमीविधानस्य दूरार्थकारादिद्व्योगे

सुमद्रं। यवनानां व्यृद्धिः दुर्यवनं। विगतानृद्धिः व्यृद्धिः। मक्षिकाणामभावो निर्मक्षिकं हिमस्यात्ययोऽतिहिमं अत्ययो ध्वंसः। निद्रा संप्रति न युज्यते इत्यतिनिद्रं। हरिशब्दस्य प्रकाश इति हरि। विष्णोः पश्चादनुविष्णु। पश्चाच्छब्दस्य तु नायं समासः ततः पश्चात्स्रंस्यत इति भाष्यप्रयोगात्। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। अनुरूपं रूपस्य योग्यमित्यर्थः। अर्थमर्थं प्रति प्रत्यर्थं। प्रतिशब्दस्य वीप्सायाः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे द्वितीयागर्भवाक्यमपि। शक्तिमनतिक्रम्य यथाशक्ति। हरेः सादृश्यं सहरि। वक्ष्यमाणेन सहस्य सः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठं॥ चक्रेण युगपदिति विग्रहे। अव्ययीभावे चाकाले। ६।३।८१। सहस्य सः स्यादव्ययीभावे न तु काले। सचक्रं। कालेत ॥

सावकाशत्वादिति चेदत्र केचिदुत्प्रेक्ष्यंति। दूरांतिकार्थैः षष्ठ्यन्यतरस्यामिति षष्ठीपंचम्योः प्राप्तयोस्तदपवादतया पंचम्येवात्र न विधीयते। तथा चांतिकार्थकाराद्व्योगे षष्ठ्यपवादतया पंचमीविधानं निरवकाशमेवेति तत्सामर्थ्यादव्ययीभावो नेत्युक्तिः सम्यगेवेति तदपरे न क्षमंते। अंतिकार्थारादिद्व्योगे विशिष्य पंचमीविधानाद्वन्यारादिति सूत्रस्य त्वन्यत्र कृतार्थत्वाच्च सामीप्ये आराद्वनमित्यव्ययीभावो दुर्वार एवेति एवं हि प्याकुर्वतां पदस्येत्यपकर्षाभावे भ्रंशार्थे सावकाशो यथ इत्यौनः न्ये परेण द्विर्वचनेन वाध्येतेति नित्यवीप्सयोरिति सूत्रस्थमनोरमाग्रंथोऽनुकूल इति दिक्॥ ॥ सुमद्रमिति॥ उत्तरपदार्थप्राधान्ये तु कुगतीति तत्पुरुषः। समृद्धा मद्राः सुमद्राः। दुर्यवनमिति। न चार्थाभावेनेह सिद्धिः। येन समस्यते तदीयार्थाभावे ह्यत्र समासस्वीकारात्। न चेह यवनानामभावो येनार्थाभावे समासः स्यात्। किं तु तदीयायाऋद्धेरभाव

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रति-
शब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥

धो अनंतरत्वादम एवं न तु व्यवहितस्यालुकोपि। अमुमेवार्थं द्योतयितुं सूत्रे तु शब्दः। तस्य पंचमीं विनेति। एवं चादंतादव्ययीभावात्परस्य पंचमीभिन्नसुपोऽम् नपं
चम्यास्तु लुगमादेशाबुभावपि न भवत इति स्थितं। अतः किं अधिहरि। दिशयोरिति। दिशोरिति हलंते न विग्रहेपि एतदेव रूपं। दिशशब्दस्य शरदादिषु पाठात् टच्॥ ॥
अपदिशमिति पंचमीव्यतिरिक्तविभक्तौ नामुदाहरणमिदं। पंचम्यास्तु अपदिशादित्युदाहार्यं विभक्तौ तावदिति तावच्छब्दः क्रमार्थः लौकिकविग्रहवाक्यं प्रदर्शयति
हराविति प्राचा तु हरौ अधिकृत्येति विगृहीतं तदसत्। अधिहरीत्यत्र अधिकृत्येत्यर्थस्याप्रतीतेः। हरिङीति। अलौकिके ङिशब्दस्यैव प्रवेश उचितः अंतरंगानपीति न्या
यात् अन्यथा ङेरौत्वे कृते अधिहरीति समासे हरिशब्दे कारो दुर्लभः स्यादिति भावः। इह हरावधीति स्थिते इति प्राचोक्तमुपेक्षितं। नित्यसमासेषु अस्वपदविग्रहस्यैवोचि
तत्वात्। अभिहितेपीत्यर्थः वचनसामर्थ्यादिति। सुपेत्यनुवर्त्य सुबंतेन समासविधानसामर्थ्यात्सप्तमी स्यादेवेति भावः। नन्वभिहिते धिकरणे प्रातिपदिकार्थमा

अपदिशं। अपदिशेन। अपदिशे। बहुलग्रहणात् सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः। विभक्तीत्यादेरयमर्थः। विभक्त्यर्थादिषु वर्त्त
मानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः। विभक्तौ तावत्। हरौ इत्यधिहरि। सप्तम्यर्थस्यैवात्र द्योतकोऽधिः। हरिङि अधि इत्यलौकिकं वि
ग्रहवाक्यं। अत्र निपातेनाभिहितेप्यधिकरणे वचनसामर्थ्यात्सप्तमी। अव्ययीभावश्च। अयं नपुंसकं स्यात्। ह्रस्वो नपुंसके प्रातिपदिकस्य। गोपा
यतीति गाः पातीति वा गोपाः। तस्मिन्नित्यधिगोपं। समीपे। कृष्णस्य समीपमुपकृष्णं। समया ग्रामं। निकषा लङ्कां। आराद्वनादित्यत्र तु नाव्य
यीभावः। अभितः परितः अन्याराादिति द्वितीयापञ्चम्योर्विधानसामर्थ्यात् मद्राणां समृद्धिः॥ ११ त्र इति प्रथममेव स्यान्न तु सप्तमीति वेदत्राहुः

अधीत्यस्य सुबंतेन समासस्यावश्यकत्वे अधिशब्दद्योत्याधिकरणार्थवाचकविभक्तेरेवेह स्वीकर्तुमुचितत्वादिति। यत्तु प्रसादकृता व्याख्यातं तितिङ् कृत द्वित समा
सेरिति परिगणनादभिधानाभिहितेपि सप्तमी स्यादेवेति। तत्र परिगणनस्याकरे प्रत्याख्यातत्वात्। कर्मणि द्वितीयेति सूत्रे स्वयमपि तथैवोक्तत्वात्। क्रमादमुं नारद इत्यबो
धि स इति प्रयोगविरोधाच्च। अत्र व्याचक्षते वचनग्रहणं विभक्त्यादिभिः प्रत्येकं संबध्यते। साकल्यांतेष्वित्येव वक्तव्ये वचनग्रहणात्। एवं च तत्सामर्थ्याद्विभक्त्यर्थमा
त्रवृत्तेरव्ययस्येह ग्रहणं तेन वृक्षस्योपरि वृक्षस्य पुर इत्यत्र समासो न भवति। उपर्यादयो हि दिग्देशकालेष्वपि वर्त्तंते न तु विभक्त्यर्थमात्रे अत एव क्रमादमुं नारद इ

तत्रैवसाद्व्ययार्थप्राधान्यस्याव्ययीभावेऽस्त्वौत्सर्गिकत्वादितिभावः। अन्तरिति। इदानीमेतावान्प्रदेशोऽध्येतव्य इतियावतोग्रन्थप्रदेशस्यपरिग्रहः कृतस्तदेपक्षासमाप्तिरिहान्त शब्देनविवक्षिता। सावांसकलेप्यध्ययनेभवतीतिसाकल्यात्स्थग्रह्यते। साग्नीति। अग्निशब्दस्तत्प्रतिपादकग्रन्थेवर्तते। सूत्र तृतीयांतोनित्यंसमस्यते। नचैवमग्निनासहेतिप्रयो गोदुर्लभ इतिवाच्यं। साहित्यमात्रविवक्षायांतत्प्रयोगस्योपपत्तेः अतत्त्वविवक्षायांतुसमासस्यनित्यत्वादग्निग्रन्थपर्यंतमित्यस्वपदविग्रहोदर्शितः। यत्तुकेचिदग्निरंतोस्ये तिप्रथमांतेनअग्रेरंतत्वमितिषष्ठ्यंतेनवाविग्रहः समासोविप्रथमांतेनषष्ठ्यंतेनवेत्याहुस्तन्नसहशब्दस्यांतवाचकत्वाभावादंतत्वेसत्यपितृतीयान्तत्वाभावात्सहयुक्तेतृतीयाया न्याप्यत्वाच्च। सतृणमत्तीत्यत्रसाकल्यस्येवसाग्नीत्यत्रांतत्वस्यापिसंहितत्वयोत्यतयातत्रतृतीयांतेनसमासंस्वीकृत्यश्रूहत्त्वस्यरित्यागस्यनिष्प्रमाणत्वाच्च। अत्रेदंबोध्यं —
—ज्जदधीतइत्यध्येतृप्रत्ययस्यवैकल्पिकत्वात्साग्नीत्यत्राणनोक्तः कृतेप्यध्येत्रणासर्वादेस्सादेशत्तुवक्तव्य इतिवक्ष्यमाणत्वात्साग्नीत्येवरूपमिति। यथासा। निःसंदे हायसादृश्येपथेत्येवंवक्तव्येविपरीतोच्चारणेनन्नः अन्वेभलाभार्थमितिन्याचष्टे अत्रसादृश्यइतियावतइति। मत्यरिमाणामेषांते। यत्रदेतेभ्यइतिवत्तुपापावत्स्त्रोकमि

सुप्प्रतिनामात्रार्थे। २।१।९। शाकस्यलेशः शाकप्रति। मात्रार्थेकिं। वृक्षम्प्रतिविद्योततेविद्युत्। अक्षशलाकासंख्याःपरिणा। २।१।१०। द्यूतव्यव हारेपराजयेएवायंसमासः। अक्षेणविपरीतंवृत्तं। अक्षपरि। शलाकापरि। एकपरि॥ ९९

तिः। यावदित्यव्ययंसमस्यते। विग्रहस्तुतद्धितांतेनेत्यत्रप दविग्रहत्वमस्येव अवधारणेकिं। यावद्दत्तंतावद्भुक्तं। किंयद्भुक्तंवानावधारयतीत्यर्थः। ॥ ः ॥ सुप्प्रतिना। सुवित्यनुवर्तमानेपुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमितिध्व नयन्नुदाहरति। शाकप्रतीति। नन्वारंभसामर्थ्यादव्ययभिन्नमेवसुप्समस्यत इतिचेदत्राहुः। पुनः सुब्ग्रहणाभावेदोषामन्यमहर्दिवामन्यारात्रिरितिवृत्तिविषयेसत्त्वप्रधा नतादर्शनान्नादृशाव्ययान्येवमात्रार्थप्रतिनासमस्येरन्। तथाचदिवसस्यलेशः दिवाप्रतिदोषाप्रतीत्यादीनामेवोदाहरणत्वंसंभाव्येतेति। वृक्षंप्रतीति। ननुलक्षणादौप्रतेःकर्म प्रवचनीयसंज्ञाविधानसामर्थ्यात् द्वितीयागर्भवाक्यमेवस्यात्नतुसमासस्तस्यलेशार्थसाकल्याशलादितिचेन्मैवं। वृक्षंप्रतिसिंचतीत्यादौषत्वनिवारकत्वेनकर्मप्रवचनीयसं ज्ञाविधानस्यचरितार्थत्वान्मात्रार्थग्रहणाभावेलक्षणादावप्यनेनसमासप्रसंगात्। वीप्सायामव्ययीभावेतुप्रत्यादेःएवंनिपातत्वेप्रत्यर्थेसिंचतीत्यादौषत्वाप्रसक्त्याकर्मप्रवच नीयविधानस्याचरितार्थतयातत्सामर्थ्याद्द्वितीयागर्भवाक्यमपीत्युक्तंमूलकृताव्ययविभक्तीतिसूत्रे। अत्रनव्याः। प्रत्यर्थमित्यव्ययीभावेवीप्सायाद्योतकत्वेनविद्यमानमव्ययं समस्यते॥ वीप्साद्योतकस्यपदिकर्मप्रवचनीयसंज्ञाविधिःसीक्षिपतेतदापिप्रतिस्तवनंप्रतिस्थानमित्यादौषत्वनिवारणायप्रतीत्यस्यकर्मप्रवचनीयसंज्ञाचरितार्थैवन

ग्रहणासामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात्। अन्योन्याभावस्य तु प्रतियोगितावच्छेदके नैव विरोधात्तस्य च प्रकारत्वेऽप्यविशेष्यत्वात्
ये तु वदन्ति घटः पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः। आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति तेषामपि मतेऽर्थग्रहणासामर्थ्यादेवास्मिन् धर्म्यभावेऽयं समासो न
तु धर्म्यभाव इति न दोषः। अत्यय इति। स्पष्टार्थमेतत्। अर्थाभावेन गतार्थत्वात्। अर्थाभावेन संसर्गाभावो विवक्षितो न त्वन्योन्याभावः। घटः पटो नेत्यत्रातिप्रसङ्गादिति निष्कर्षो
न संप्रतिनेति। संप्रतीत्यव्ययमिदानीमित्यर्थो। एतर्हि संप्रतीदानीमित्यमरोक्तेः तच्चाधिकरणशक्तिप्रधानत्वात् क्रियापदेनैवान्वयार्हं। निषेधोऽपि क्रियाया एवोचितः। तदेतत्स
ह्रोऽस्वज्यत इति। असंप्रतीति सोऽनप्रयोगे तु युजिक्रियां तद्भावेन नञ्समास इति बोध्यं। पत्तुप्रसादकृतोक्तं असंप्रति संप्रत्यभाव इत्यर्थः। अनेन उपभोग्यवस्तुनो यो वर्तमानकालः स
निषिध्यत इति। तन्न। अधिकरणशक्तिप्रधानस्य क्रिययैवान्वयार्हस्य निषेधप्रतियोगित्वेनान्वयस्यायुक्तत्वात्॥ नहि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत इति कश्चिदस्यु

सहपूर्वोक्तं सदृशः सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम्। सत्राणां सम्पत्तिः ससत्रं।
ऋद्धेराधिक्यं समृद्धिः। अनुरूप आत्मभावः सम्पत्तिरिति भेदः। तृणमप्यपरित्यज्य सतृणमत्ति। साकल्येनेत्यर्थः। अन्ते अग्निग्रन्थपर्यन्तमधीते साग्नि। यथाऽसादृश्ये। २।१।७। असादृश्य एव यथाशब्दः समस्यते। तेनेह न। यथा हरिस्तथा हरः। हरेरुपमानत्वं यथाशब्दो द्योतयति। तेन सादृश्ये इ
ति वा यथार्थ इति वा प्राप्तं निषिध्यते। यावदवधारणे। २।१।८। यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकं॥

येति। येनात्र वर्तमानकालनिषे
धोऽप्रकृतः इति। स्यात् इति हरीति। स्वरूपपरेण षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः। ततः पश्चादिति। सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादि
ति भावः। भाष्यप्रयोगादिति। अनेकमन्यपदार्थ इति सूत्रे सर्वपश्चादिति भाष्यप्रयोगाच्चेत्यपि बोध्यमित्यर्थमिति। वृत्तौ वीप्सायां तद्भावान्न द्विर्वचनम्। प्रतिशब्दस्येति। यत्त्वाहुः
मस्वरक्षेत्रं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमिति। तन्न। नित्यसमासेषु सविशेषणानां वृत्तिर्नेत्यस्याप्रवृत्तेः। आनुपूर्व्येणेति। अनुपूर्वस्या
भावः आनुपूर्व्यं ब्राह्मणादित्वात् ष्यञ् चक्रेण युगपदिति। अन्ये तु युगपच्चक्रमिति समासेनैव भवितव्यं युगपच्छब्दस्याप्यव्ययत्वात्। किं तु चक्रेण एककाले इत्यादि
विग्रहे तु युक्तमित्याहुः॥ ॥ सहपूर्वोक्तमिति। साकल्येऽव्ययीभावः। गुणभूतेऽपीति। यदि सादृश्य इति नोच्येत तर्हि यत्र सादृश्यं प्रधानमवगम्यते॥ ९॥

लक्षणेन। चिन्हं लक्ष्म च लक्षणमित्यमरस्तदाह। चिन्हवाचिनेति। इहाभिप्रतीलक्ष्यलक्षणभावं आभिमुख्यं चेत्युभयं द्योतयत इति फलितं। अग्निमभि। अग्निं प्रतीति। अभिर लक्षणेन। चिन्हं लक्ष्म च लक्षणमित्यमरस्तदाह... 

लक्षणेन। चिन्हं लक्ष्म च लक्षणमित्यमरस्तदाह। चिन्हवाचिनेति। इहाभिप्रतीलक्ष्यलक्षणभावं आभिमुख्यं चेत्युभयं द्योतयत इति फलितं। अग्निमभि। अग्निं प्रतीति। अभिर भागे। लक्षणेत्थंभूतेत्यनेन च अभिप्रत्योः कर्मप्रवचनीयत्वात् द्वितीया। लक्षणेनेति किं। स्रुघ्नं प्रतिगतः स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः। अत्र हि स्रुघ्नः कर्म न तु लक्ष णं। अभिप्रती किं। येनाग्निस्तेन गतः। येन यथा अग्निर्गतस्तेन गत इति प्रतीतेर्भवति गमनस्याग्निर्लक्षणं आभिमुख्यमप्यस्तीति येन तेन शब्दयोरग्निशब्देन समासः स्यात्। आ भिमुख्ये किं। अभ्यंका गावः। प्रत्यंकाः। अभिनवः प्रतिनवः अंकाभ्यासामिति बहुव्रीहिः। अंको ह्यत्र भवति गवां लक्षणमाभिमुख्यं तु नास्ति। ननूत्सर्गत अव्ययार्थप्राधान्ये ऽव्ययीभावस्वीकारात्कथमिह प्रसंगः। अत्राहुः। इह प्रकरणे बहुव्रीहिविषये अव्ययीभावो भवतीति ज्ञापनार्थमिदं तेन संख्यावंश्येन द्विमुनिव्याकरणमित्यादि सिद्धमिति। अव्ययं त्वर्थेत्त॥ यदित्तिसमयायोगे द्वितीयेति ध्वनयति। यं पदार्थमिति। यस्य पदार्थस्य समीपमित्यर्थः। लक्षणेनेत्यनुवर्त्तत इत्याह। लक्षणभूतेनेति। चिन्हवाचिनेत्यर्थः। अव्ययं

लक्षणेनाभिप्रती आभिमुख्ये॥२।१।१४॥ आभिमुख्यद्योतकावभिप्रती चिन्हवाचिना सह प्राग्वत्। अभ्यग्नि शलभाः पतन्ति। अग्निमभिप्रत्यग्नि। अग्नि म्प्रति। अनुर्यत्समया॥२।१।१५॥ यं पदार्थं समया द्योत्यते तेन लक्षणभूतेनानुः समस्यते सोऽव्ययीभावः। अनुवनमशनिर्गतः। वनस्य समी पङ्गत इत्यर्थः॥

भक्तीत्यनेन सिद्धे विभाषार्थं सूत्रं तेन पक्षे वनस्यानु इत्युदाहार्यमिति मनोरमायां स्थितं। अत्र वदंति। वनस्येति षष्ठी हेतुर्लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव इति प्रसक्ते अस्य विध्यर्थत्वात्। न चायमनुः सामीप्यमात्रद्योतको न लक्ष्यलक्षणभावस्येति वा च्यं। लक्षणेनेत्यनुवृत्तिवैयर्थ्यान्न चैवमपि लक्षणमात्रद्योतकत्वं नास्तीति वाच्यं। लक्षणेत्थमित्यत्र मात्रपदाभावादग्निमभि अग्निं प्रतीति पूर्वसूत्रस्योदाहरणप्र हरणविरोधाच्चातोऽत्र पक्षे वनमनु इत्युदाहार्यं। वनस्य समीपं गत इति मूलस्थं विवरणवाक्यं तु लक्षणभूतस्य वनस्य समीपं गत इति व्याख्येयमिति। अन्विति किं। ग्रामं समया। यत्समयेति किं। वृक्षमनु विद्योतते विद्युत्। लक्षणेन किं। अनुवनं। उपवृक्षमिति वदत्र नित्यमव्ययीभावः॥

स्तुतस्तु वीप्सायां विषयभूतायां प्रत्यादेः कर्मप्रवचनीयसंज्ञा न तु वीप्साद्योतकस्यैव। अन्यथा वृक्षं वृक्षं प्रति सिंचतीत्यत्र द्विर्वचनेनैव वीप्सा द्योत्यते प्रतिशब्दस्तु क्रियया संबध्यते। कर्मणि द्वितीया। कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया वाधात् षत्वं नेत्यादि मनोरमाग्रंथस्य लक्षणेत्थंभूतेति सूत्रस्थस्य रत्तजलांजलिः स्यात्। ततश्च संज्ञाविधानसामर्थ्यस्योपक्षीणत्वात्। अर्थमर्थं प्रतीत्यादिभाष्यप्रयोगाद्वेव द्वितीया गर्भवाक्यमपि भवतीत्येवं व्याख्येयमित्याहुः। पराजयं द्योतयितुमाह। विपरीतवृत्तमिति। इवैं जपेयथा वृत्तं तथा न वृत्तमित्यर्थः। एकपरीणा एकेन विपरीतं वृत्तमित्यर्थः। एवं द्विपरीत्यादि। विभाषा पपरिवहिरिति योगविभज्य व्याचष्टे॥ ॥ विभाषेति ॥ इतः प्राचीनानां समासानां टिघुभादिसंज्ञानामिव न ग्रहणाभावान्नित्यत्वे न्याये तत एव सिद्धं तच्चाद्विंगेनापि द्रढयति। एतदिति। नन्वेवं सुप्सुपेत्यपि नित्यं स्यादित्यापत्तौ तु इवैंभूतो भूतइवैः सुप्सुपेति समास इति वृत्तिग्रंथो विरुध्येत तथा शाकलसूत्रे सन्नित्यसमासयोः शाकलप्रतिषेध इत्यत्र नित्यग्रहणेन नार्थः। इदमपि सिद्धं भवति वाप्याम् अश्वो वाप्यश्व इति भाष्येके

विभाषा।२।१।११। अधिकारोऽयम्। एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वं सुप्सुपेति तु न नित्यसमासः। अव्ययमित्यादि समासविधानात् ज्ञापकात्। अपपरिवहिरञ्चवः पञ्चम्या।२।१।१२। अपविष्णु संसारः। अपविष्णोः। परिविष्णु। परिविष्णोः। वहिर्वनं। वहिर्वनात्। प्राग्वनं। प्राग्वनात्। आङ्मर्यादाऽभिविध्योः।२।१।१३। एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः। आमुक्ति संसारः। आमुक्तेः। आबालं हरिभक्तिः। आबालेभ्यः॥

यदो व्याख्यत। वाप्यश्व इति सुप्सुपेति समासः संज्ञायामिति सप्तमीसमासस्य तु नित्यत्वात्सिद्धः प्रतिषेध इति। सोपि ग्रंथो विरुध्येतेत्याशंकायामाह। सुप्सुपेति त्विति। नन्वत्र किं प्रमाणमित्यत आह। अव्ययमित्यादीति। सुप्सुपेत्यनेनैव सिद्धे समासे अव्ययमित्यादिसूत्रैः पुनः समासविधानं प्राचीनस्य क्वाचित्कतां ज्ञापयतीत्यर्थः। एवं च इवेन समासस्यापि क्वाचित्कत्वादुद्वाहुरिव वामन इत्यादि सिद्धं। इवेनेति वार्त्तिकं तु पच्यपि कुगतीत्यत्र पठ्यते तथापि सुप्सुपेत्यत्र त्यमेव नित्याधिकारे स्मारितमिति केयटः। एवं स्थिते इव वामन इत्यादि लोकप्रयोगसिद्धये इवेन समासस्य छंदो विषयत्वं कल्पयंतः प्रत्युक्ताः। छंदस्यपि तत्समासस्य नित्यत्वानभ्युपगमात्। जीमूतस्येवेत्यत्र हि वहृचैः समासाभ्युपगमेपि तैत्तिरीयैर्व्यस्तस्यैव पाठात्। एतच्च मनोरमायां स्थितं। अपपरिवहि। अपपरियोगे पंचम्यपाङ् परिभिरिति। पंचमी विहिता अंचूत्तरपदयोगे अन्यारादित्यादिना विहितैव तेनात्र पंचम्येति ग्रहणं वहिर्योगे पंचमी भवतीति ज्ञापनार्थं। ज्ञापकासिद्धं न सर्वत्रेति करस्य करभो वहिरित्यपि सिद्धं। आबालमिति। आ परमाणोश्च भूगोलकमिति किरणावलीप्रयोगस्तु प्रामादिकः। समासमध्ये च शब्दप्रयोगासंभवात् आ च भूगोलकादिति पाठः सूचितः॥ ॥ ॥ ॥

संख्यावंश्येन। वंशः संतानस्तत्र भवो वंश्यः। दिगादित्वाद्यत्। द्विमुनीति। पाणिनिकात्यायनौ। त्रिमुनीति। तौ द्वौ पतंजलिश्चेति त्रयो वंश्याः व्याकरणस्येति संबंधे षष्ठी। स्वपदार्थ प्राधान्य एवायं समासः। यदा त्वन्यपदार्थप्राधान्यविवक्षा त्रयो मुनयो वंश्या यस्येति तदा बहुव्रीहिरेवेत्याहुः। त्रिमुनि व्याकरणमिति। यद्यप्येतद्बहुव्रीहिणाप्युपपन्नं तथापि वि भक्त्यंतरे रूपे विशेषोऽस्त्येवेति भावः। वस्तुतस्तु लक्षणेनाभिप्रतीतिसूत्रे आभिमुख्यग्रहणाद्बहुव्रीहिविषयेऽप्यव्ययीभावो भवतीति द्विमुनि व्याकरणमित्यादि सिद्धमित्यवो चामाजन्मनोदाहरति। एकविंशतिभारद्वाजमिति। एकविंशतिभारद्वाजवंश्या इति विग्रहः। न तु भरद्वाजादिदाद्यञोऽयञश्चेति लुक्प्रसंगेति। न च वर्तिपदानां स्वार्थोपसर्जने नैकत्वविशिष्टार्थान्तरोपसंक्रमाल्लुगभाव इति कैयटोक्तमादर्तव्यं वृत्तिप्रवेशात्प्रागेव प्रवृत्तोऽन्तरंगत्वाल्लुको दुर्वारत्वात्। अन्यथा गर्गाणां कुलं गर्गकुलमित्यपि न स्या ता। अत्राहुः। भाष्यकारप्रयोगादेवलुगभावोऽत्र बोध्य इति। एतच्च तृतीयासप्तम्योरिति सूत्रे शब्दकौस्तुभे स्पष्टं। नदीभिश्च। स्वरूपस्य संज्ञानयाश्चेह ग्रहणं बहुवचननिर्देशा

संख्यावंश्येन। २।१।१९। वंशो द्विधा विद्यया जन्मना च तत्र भवो वंश्यः तद्वाचिना सह संख्या वा समस्यते। द्वौ मुनी वंश्यौ द्विमुनि। व्याकरणस्य त्रिमुनि। विद्यात द्वतामभेदविवक्षया। त्रिमुनि व्याकरणं। एकविंशतिभारद्वाजं। नदीभिश्च। २।१।२०। नदीभिः संख्या प्राग्वत्। समाहारे चायमिष्यते। सप्तगङ्गं। द्वियमुनं। अन्यपदार्थे च संज्ञायां। २।१।२१। अन्यपदार्थे विद्यमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायां। विभाषाऽधिकारेऽपि वाक्येन सं ज्ञाऽनवगमादिह नित्यसमासः। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गं। समासान्ताः। ५।४।६८॥ इत्यधिकृत्य॥ ८८

न किं त्वर्थस्यानवतस्य समासः सं भवति। अतस्तद्वाचिनामयं समासस्ते च न केवलं विशेषशब्दा एव किं तु सामान्यशब्दोऽपि तेन पंचनदं सप्तगोदावरमिति सिद्धं। गोदावर्याश्च नद्याश्चेति वक्ष्यमाणेन स मासांतो वा। चकारेण संख्येत्यनुकृष्यत इत्याह। संख्येति। स्यादेतत्। पुरस्तादपवादन्यायेन पूर्वकालैकेत्यस्यैवेदं बाधकं स्यात्तत्त्वैकनदीत्यत्राव्ययीभावे तन्निबंधन स्य नदीपौर्णमास्येति टचः प्रसंगः समाहारे तु परत्वाद्द्विगुरेव स्यादित्यत आह। समाहारे चायमिति। एवकारार्थश्चकारः एवं च द्विगोरपवादोऽयमव्ययीभाव इति फलि तं। अन्यपदार्थे च। संख्येति निवृत्तं नदीग्रहणमनुवर्तते तदाह। सुबंतं नदीभिः सहेति। अन्यपदार्थे इति किं। कृष्णवेणी संज्ञानवगमादिति। सम्यक् ज्ञायत इति संज्ञा। आतश्चोपसर्ग इति कर्मण्यङ्। संज्ञिनो देशविशेषस्यानवगमादित्यर्थः। अन्यपदार्थानवगमादिति तु नोक्तं। पस्येत्यादिपदांतरसमभिव्याहारेणान्यपदार्थप्रती

यस्य चायाम इत्यनुवर्त्य आवृत्ये कंतत्तीयांतत्वेनवि—— परिणामप्य व्याचष्टे। अनुनेति। लक्षणभूतेनेति लक्षणेनेत्यनुवर्त्तत इति भावः। अनुगंगमिति। इहायामो लक्षणत्वं चानुना द्योत्य ते। लक्ष्यं तु समासार्थः। अत एव वाराणस्याः सामानाधिकरण्यं। एवं स्थिते फलितमाह। गंगादैर्घ्येति। वाराणसीति। वरं च तदनश्च वरानः श्रेष्ठो दकं। अनः स्त्री वंज लेशो के मात्वसंस्ने यो ह्रस्वो रिति रूढस्य भसो। तस्या दूरे भवा। —— अदूरभवश्चेत्यण्। आदिवृद्धिः। ह्रस्वपदात्संज्ञायामिति णत्वं। गंगाया अन्विति। समासाभावपक्षे प्रागुक्तरीत्या गंगामन्वित्युदा हार्यमित्याहुः। तिष्ठद्गुप्रभृतीनि च। चकार इव कारार्थे। तेनैषां वृत्त्यंतरं न भवति। परमतिष्ठद्गु इत्यादि न भवतीत्यर्थः। तिष्ठद्गु इति। गोस्त्रियोरिति ह्रस्वः। प्रथमासमानाधिकरणे शत्रादेशस्यासंभवादाह। इह शत्रादेश इति। इत्यादीनि। आदिशब्देन खलेयवं खलेबुसं। सप्तम्या अलुक्। लूनयवं। लूयमानयवमित्यादिग्रहणं। पारेमध्ये। निपात्येते इति। पत्र सप्तम्यर्थो न संभवतीति तदर्थमेकारांतत्वनिपातनं। सप्तम्यर्थसंभवे तु तत्पुरुषे कृति बहुलमिति। बहुलग्रहणादलुकापि सिद्धेरतोत्र सप्तम्यर्थाभावसूचनाय पंचम्यंतमुदाहरति।

यस्य चायामः।२।१।१६। यस्य दैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेनाऽनुः समस्यते। अनुगङ्गं वाराणसी। गङ्गाया अनु। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः। तिष्ठद्गुप्रभृतीनि च।२।१।१७। एतानि निपात्यन्ते। तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः। आयतीगवं। इह शत्रादेशः पुंवद्भावविरहः समासान्तश्च निपात्यते। पारे मध्ये षष्ठ्या वा।२।१।१८। पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते। एदन्तत्वं चानयोर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। पारेगङ्गादानय। गङ्गापारात्। मध्येगङ्गात्। गङ्गामध्यात्। महाविकल्पेन वाक्यमपि। गङ्गायाः पारात्। गङ्गाया मध्यात्॥

पारेगंगादिति। महाविभाषयेति। नन्वपवादेऽव्ययीभावे महाविभाषया विकल्पिते पक्षे तदुत्सर्गः षष्ठीतत्पुरुषः प्रवर्त्तते तस्यापि विभाषाधिकारस्थत्वेन वैकल्पिकत्वात्पक्षे वाक्यमपि सिध्यतीति सूत्रे वाग्रहणं व्यर्थमेवेति चेत्। अत्राहुः। महाविभाषया एकार्थीभावस्य पाक्षिकत्वे विवक्षिते यदा एकार्थीभावस्तदा षष्ठीसमासं बाधित्वा नित्यमव्ययीभावे प्राप्ते पक्षे षष्ठीसमाससमावेशार्थमिह वाग्रहणं। व्यपेक्षासामर्थ्यमेके इति पक्षे तु वृत्तावपि व्यपेक्षालक्षणमेव सामर्थ्यमिति वाक्यस्य नित्यं बाधे प्रसक्ते तया वृत्तिर्विकल्प्यते। तथा चाव्ययीभावे विकल्पिते पूर्वोक्तरीत्या पक्षे तत्पुरुषस्तस्यापि वैकल्पिकत्वाद्वाक्यमपि सिध्यत्येव तथापि यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते पुनरुत्सर्गो न प्रवर्त्तते इति ज्ञापनायेदं तेन पूर्वं कायस्येत्येकदेशिसमासेन मुक्ते षष्ठीसमासो न भवतीति दक्षसा

नपुंसकादन्या नपुंसकग्रहणमन्तं तस्य विशेषणं नाव्ययीभावस्य अव्यभिचारादित्याह। अन्नन्तं यत्क्लीबमिति। अन्नन्तेन चाव्ययीभावविशेषणात्तदन्तविधिरित्याहत्तदन्तादि
ति। उपचर्ममिति। टचि लोपोऽन्तत्वाद्नभावश्च। नदीपौर्ण। ह्रस्वरूपस्यैव ग्रहणं न संज्ञा गः। पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात्। उपनदीति। टज्भावेन नपुंसकह्रस्वः।
अत्र व्याचक्षते। वृत्तिग्रन्थमनुरुध्येदं विकल्पकथनं। परमार्थतस्तु नेहान्यतरस्यामित्यनुवर्त्तते बहुगणोतिसूत्र स्थभाष्यविरोधात्। तत्र हि नदीशब्देन नदीविशे
षाणां गंगायमुनादीनां ग्रहणमाशंक्य शरत्प्रभृतिषु विपाट्शब्दपाठान्नेति समाहितं। न चेदं भाष्यं नदीपौर्णमासीत्यत्र टचः पाक्षिकत्वे संगच्छते नित्यार्थं तया तत्पा
ठस्योपपत्तेः। अत एव सेनकग्रहणमुत्तरत्रार्थवत्। केचित्तु व्यवस्थितविभाषामाश्रित्य वृत्तिग्रन्थं कथंचित्समर्थितवानिति। पूजार्थमिति। अन्यतरस्यामित्यनुवृत्त्या

नपुंसकादन्यतरस्यां। ५।४।१०९। अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात्। उपचर्मं। उपचर्म। नदीपौर्णमास्याग्रहायणीभ्यः। ५।४।११०
।वा टच् स्यात्। उपनदं। उपनदि। उपपौर्णमासं। उपपौर्णमासि। उपाग्रहायणं। उपाग्रहायणि। झयः। ५।४।१११। झयन्तादव्ययीभावाट्टज्वा स्यात्।
उपसमिधं। उपसमित्। गिरेश्च सेनकस्य। ५।४।११२। गिर्यन्तादव्ययीभावाट्टज्वा स्यात्। सेनकग्रहणं पूजार्थं। उपगिरं। उपगिरि। इत्यव्ययीभावः।
तत्पुरुषः। २।१।२२। अधिकारोऽयं। प्राग्बहुव्रीहेः। द्विगुश्च। २।१।२३। द्विगुरपि तत्पुरुषसंज्ञः स्यात्। इदं सूत्रं त्यक्तुं शक्यं। संख्यापूर्वो द्विगुश्चेति
पठित्वा चकारबलेन संज्ञाद्वयसमावेशस्य सुवचत्वात्॥ समासान्तः प्रयोजनं। पञ्चराजं॥ \\ विकल्पस्य सिद्धेरिति भावः। इत्यव्ययीभावः। चकारबलेन
संज्ञाद्वयसमावेशस्येति। न चैवं द्विगुतत्पुरुषयोः पर्यायता स्यादिति शंक्यं योगं विभज्य संख्यापूर्वस्य तत्पुरुषसंज्ञां विधाय पश्चाद्द्विगुसंज्ञाविधानेन चकारपठनमंतरेणापि प
र्यायत्वसिद्धेः। नापि दोषः अन्योपसर्जनमित्यत्रातिप्रसंगः शंक्यः। तद्धितार्थोत्तरपदइति सूत्रमनुवर्त्य तद्धितार्थेत्यत्र उक्तस्त्रिविधः संख्यापूर्व इति व्याख्यानात्। द्विगोस्त
त्पुरुषत्वे फलमाह। समासांत इति। टजचाविरुपर्थः। अचितुराहरणं तत्पुरुषस्यांगुले रित्यविर्द्धग्रत्वमिति बोध्यं। पंचराजमिति। समाहारद्विगोराजाहस्सखिभ्य इ
ति टच् समासस्यैवायमंतावयव इति उत्तरपदस्यानकारांतत्वात् क्लीबत्वाभावः। समासार्थोत्तरपदांताः समासांता इति पक्षे तु अकारांतोत्तरपदत्वे पि पात्रादित्वात्॥

अतएवबहुव्रीहिर्ननित्यसमासइतिभावः। संज्ञायांकिं। शीघ्रगंगोदेशः। अथाव्ययीभावेऽसाधारणान्समासांतानाह॥ ॐ ॥ अव्ययी। शरदादिभ्यइतिवक्तव्येपर्यायेषु लाघवचिंतानाद्रियतइतिप्रभृतिग्रहणाकृतं। टच्स्यादिति। राजाहःसखिभ्यइत्यतष्टजनुवर्ततइतिभावः। समासांतइति। समासस्यसमासार्थोत्तरपदस्यवाचरमावयवइत्यर्थः। तेनोपशरदमित्यत्रनाव्ययीभावादित्यमसिद्धंत्वव्ययीभावस्यादंतत्वात्द्विगुरीत्यादौतुनकृ। ऋक्पूरब्धूरित्यप्रत्ययउत्तरपदस्यावयवइत्यकारांतोत्तरपदोद्विगुःस्त्रियामितिस्त्रीत्वेद्विगोरितिङीप्सिध्यतीतिबोध्यं। प्रतिविपाशमिति। लक्षणेनाभिप्रतीतिसमासः। विपाशातुविपाट्स्त्रियामित्यमरः। गणेपठतिशरदित्यादिना। अत्रयेझयंतास्तेषांझयइतिविकल्पेप्राप्तेनित्यार्थंपाठः। इहजरायाजरस्प्रतिपरेतिचद्वयंगणसूत्रं। उपजरसमिति। जरायाःसमीपमित्यर्थः। यस्येतिचे

अव्ययीभावेशरत्प्रभृतिभ्यः।५।४।१०७। शरदादिभ्यष्टच्स्यात्समासान्तोऽव्ययीभावे। शरदःसमीपमुपशरदं। प्रतिविपाशं। शरद्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। विश्। चेतस्। चतुर्। त्यद्। तद्। यद्। कियत्। जरायाजरस्च। उपजरसं। प्रतिपरसमनुभ्योऽक्ष्णः। यस्येतिच। प्रत्यक्षं। अक्ष्णःपरमितिविग्रहेसमासान्तविधानसामर्थ्यादव्ययीभावः। परोक्षेलिडितिनिपातनात्परस्योकारादेशः। परोक्षं। परोक्षाक्रियेत्यादितुअर्शआद्यचिसमक्षं। अन्वक्षं। अनश्च।५।४।१०८। अन्नन्तादव्ययीभावाट्टच्स्यात्। नस्तद्धिते।६।४।१४४। नान्तस्यभस्यटेर्लोपस्तद्धिते। उपराजं। अध्यात्मं॥ ९

ति। टचस्तद्धितत्वात्तस्मिन्परेइकारलोपइतिभावः। प्रत्यक्षमिति। वीप्सायांयथार्थत्वेनसमासः। अक्ष्णोराभिमुख्यमित्यर्थेलक्षणेनाभिप्रतीतिवासमासः। अक्ष्णःपरमिति। अविषयइत्यर्थः। वृत्तिविषयेअक्षिशब्दइंद्रियमात्रपरः। अव्ययाघटितसमुदायस्यकथमिहाव्ययीभावोविधायकसूत्राभावादित्याशंक्याहविधानसामर्थ्यादिति। समक्षमिति। अक्ष्णोयोग्यं। अन्वक्षमिति। अक्ष्णःपश्चादित्यर्थेअव्ययीभावः। नस्तद्धिते। नइत्यनेनभस्येत्यधिकृतंविशेष्यते। विशेषणेनतदंतविधिरत्तआह। नांतस्यभस्येति। ननुपराजमित्यत्रनस्तद्धितइतिव्यर्थं। अव्ययानांभमात्रइतिटिलोपेनैवसिद्धेः। नचाव्ययत्वंटज्विशिष्टेपर्याप्तमितिवाच्यं। अव्ययीभावसंज्ञायाउपजीव्यत्वेनटचःपूर्वभागस्याप्यव्ययत्वानपायात्। अत्राहुः। भाष्येलुङ्मुखस्वरोपचारेषुत्रिष्वेवकार्येषुअव्ययीभावस्याव्ययसंज्ञाविधानान्नदोषइति। युक्तंचैतत्। अन्यथाउपशरदमित्यादौटिलोपःप्रसज्येत। अध्यात्ममिति। आत्मनिअध्यात्मंविभक्त्यर्थेऽव्ययीभावः॥

प्रथमानिर्दिष्टमुपसर्जनमेकविभक्ति चापूर्वनिपात इति पठित्वा समासाधिकारे प्रथमानिर्दिष्टमिति व्याख्यायामुपसर्जनसंज्ञा सिध्यत्येव विभक्त्यर्थादिषु विग्रहमा
नमव्ययं पूर्वं तेन चेत्समस्यते स समासोऽव्ययीभावः स्याद्द्वितीयांतं चेत्स समासस्तत्पुरुष इत्येव व्याख्यानादव्ययीभावतत्पुरुषादिसंज्ञापि सिध्यतीति पुनः समासवि
धानं व्यर्थं सत् ज्ञापयति ॥ नन्वव्ययं विभक्तीत्यादीनां समासविधायकत्वे सिद्धे भवदुक्तमेतत्स्यात्तत्तु नैव मानं न पश्याम इति चेदत्र केचित् । उक्तरीत्यैवोपसर्जनसं
ज्ञायां सिद्धायां प्रथमानिर्दिष्टमिति सूत्रे समासग्रहणं व्यर्थं सत्समासविधायके प्रथमानिर्दिष्टमित्यर्थलाभार्थं तेनामीषां समासविधायकत्वं सिध्यतीति । अथवा
सुप्सुपेति समासस्यानित्यत्वे आकरग्रंथ एव प्रमाणं । अन्यथा सिन्नित्यसमासयोरिति वार्तिके नित्यग्रहणेनानर्थः । इदमपि सिद्धं भवति वाप्याम श्वो वाप्यश्व इत्या
दि प्रागुक्तभाष्यकैयटग्रंथस्यासामंजस्यापत्तेरिति दिक् । ननु कृष्णश्रित इत्यस्य कृष्णकर्मकमाश्रयणकर्तेत्यर्थः । स च कृष्णः श्रितो येनेति कर्मणि क्तांतेन बहुव्रीहि
णापि सुलभ इति किमनेन समासारंभेणेति चेत् । बहुव्रीहौ । श्रितकृष्ण इति निष्ठांतस्य पूर्वनिपातप्रसंगात् शेषाद्विभाषेति समासांतः कप्प्रसज्येतेति दिक् । दुःखा
तीतः इति । अतिपूर्वकादिणः कर्तरि क्तः । अवशिष्टान्यप्युदाहरणानि सूत्राणि । कूपपतितः यद्यपि तन्निपतितृदरिद्राति भ्य इति विकल्पितेट्त्वात्पतस्य विभाषेति
इण्णिषेधेन भाव्यं । तथाप्यत एव निपातनादिडित्याहुः । वस्तुतस्तु उणादाविह दंतेषु पठितस्य पतगतावित्यस्याश्रयणेन पतितः सिध्यति पतस्य विभाषेत्यत्रैका
च इत्यनुवृत्तेस्सर्वसंमतत्वात् । ग्रामगतः । तुहिनात्यस्तः । अत्यासो व्यतिक्रमः सोऽपि गतिविशेष एवेति कर्तरि क्तः । आदिकर्मणि क्तो वा । आत्युपेयः । सुखप्राप्तः । दुःखाप
न्नः । गम्यादीनामिति । गम्यादयश्च प्रयोगतो ज्ञेयाः । ग्राममगमीति । गमेरिनिरित्यौणादिक इनिः स च भविष्यति गम्यादय इति भविष्यत्काले । अकेनोरिति षष्ठीनि
षेधात्कर्मणि द्वितीया । अयोग्यत्वादिति स्वपमित्यस्यात्मनेत्यर्थकस्य कर्त्रर्थे तया द्वितीयांतत्वानुपपत्तेरिति भावः स्वायंकृतिरिति । असति समासे कार्तिरि
ति स्यादिति भावः । खट्वारूढ इति । जाल्मोऽसमीक्ष्यकारी स्यादित्यमरः । वेदव्रतानि च समाप्य समावर्त्तेन हि खट्वारोढव्या । ब्रह्मचर्य एव भूमिशयनार्होपियः
खट्वामारोहति स जाल्मः । रूढश्चायं तेन खट्वामारोहणमात्रानिषिद्धानुष्ठानपरः सर्वोपि खट्वारूढ इत्युच्यते । अत एवाह । नित्येति । सामि । सामीत्येतद
व्ययमर्धशब्दपर्यायः ॥

न्नेतिबोध्यं।काशिकायांतुपंचराजीत्युदाहृतं।सकाचित्कोपपाठइतिहरदत्तः।अत्रकेचित्।पात्रादित्वकल्पनेमानाभावात्त्वंचराजीतिकाशिकोक्तोदाहरणमपिसम्य
गेवेत्याहुः॥ॐ॥ द्वितीयाश्रितातीत।श्र्यादीनांगतिविशेषवाचित्वात्गत्यर्थाकर्मकेतिकर्त्तरिक्तः।प्रत्ययग्रहणोत्तरंतदग्रहणमित्याशयेनाह।द्वितीयान्तमिति।श्रितास्वि
हतिकेरिति।यद्यपिसंबोधनेसुबंतत्वंसंभवतितथान्यत्रापिसमासस्येष्टत्वात्।श्रितादयस्तुइतिसमुदायेलाक्षणिकाइहगृह्यंतइतिभावः।एवंखट्वाक्षेपेगम्यादिभ्यो
पत्तित्यादावप्यूह्यं।नहिखट्वेत्यस्यद्वितीयान्तत्वंगम्यादीनांषष्ठ्यंतत्वंवासंभवति।स्यादेतत्।द्वितीयान्तस्यश्रितप्रकृतिकसुबंतेनसमासेकाष्ठश्रितेयोनसिध्येत्।श्रितशब्दाद्वा
पितः सुपिकाष्ठश्रिताकाष्ठश्रितेतिसमासेश्रिताशब्दस्यैवटाबंतत्वात्ततःस्त्रीभ्योढगितिढकिकाष्ठश्रैतेयइतिस्यात्।गतिकारकोपपदानामितिसुबुत्पत्तेःप्राक्कृदंतेन
समासेतुश्रितान्तस्यटाबंतत्वादिष्टंसिध्यतीतिचेन्मैवं।प्रधानस्त्रीप्रत्ययेतदादिनियमाभावेनकाष्ठश्रितेयस्यनिर्बाधत्वात्।नचकदाचित्श्रिताशब्दादपिढक्स्यादितिभा

द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः।२।१।२४।द्वितीयान्तंश्रितादिप्रकृतिकैःसुबन्तैःसहसमस्यतेवा।तत्पुरुषः।कृष्णंश्रितः।कृष्णश्रितः।दुः
खमतीतः।दुःखातीतः।गम्यादीनामुपसंख्यानं।ग्रामंगमी।ग्रामगमी।अन्नंबुभुक्षुः।अन्नबुभुक्षुः।स्वयंक्तेन।२।१।२५।द्वितीयेतिनसम्बध्यतेऽयोग्य
त्वात्।स्वयंकृतः।तस्याऽपत्यं।स्वायंकृतिः।खट्वाक्षेपे।२।१।२६।खट्वाप्रकृतिकंद्वितीयान्तंक्तान्तप्रकृतिकेनसुबन्तेनसमस्यतेनिन्दायां।खट्वारूढो
जाल्मः।नित्यसमासोऽयं।नहिवाक्येननिन्दागम्यते।सामि।२।१।२७।सामिकृतं॥

(( चं जहत्स्वार्थायांवृत्तौश्रिताशब्दस्यानर्थकत्वेनापत्ययोगा
संभवात्।अजहत्स्वार्थायामपिनदोषः।समुदायावयवसंनिधौसमुदायस्यैवकार्यप्रयोजकत्वात्।अन्यथासुंदरदुहितुरपत्यंसुंदरदौहित्रइत्यापत्तेरितिदिक्।कृष्णंश्रि
तइति।नलोकेतिषष्ठीनिषेधः।कृष्णश्रितइति।प्रथमानिर्दिष्टमितिद्वितीयान्तस्यपूर्वनिपातः।यद्यपीहश्रितशब्दोऽपिप्रथमानिर्दिष्टस्तथापिसमासविधायकेप्रथमा
निर्दिष्टमुपसर्जनमित्युक्तमितिनास्त्यतिप्रसंगः।नन्वेवमव्ययादीनामुपसर्जनसंज्ञार्थमव्ययंविभक्तीत्यादिनासमासविधानस्यावश्यकत्वात्सहसुपेतिसमासस्या
नित्यत्वेप्रागुक्तज्ञापकंनसंभवत्येव।तथाचाव्ययीभावतत्पुरुषादिसमासाभावपक्षेसहसुपेतिसमासप्रवृत्त्याअपविष्णोःपरिविष्णोःकृष्णंश्रितःराज्ञःपुरुषइत्या
दिविग्रहवाक्यानिनसिध्येरन्नितिचेदत्राहुः।पुनःसमासविधानंनकेवलमुपसर्जनसंज्ञार्थंतस्याःप्रकारान्तरेणापिसिद्धेः।तथाहि।प्राक्कडारात्समासइत्यनंतर

नख्यश्च्णाकाणात्वं कृतं किंतु कर्मादिनैवेति भावः। तृतीयात्विहयेनांगविकार इत्यनेन काणइति करणनिमीलनस्य स्माद्वत्त्र। गुणवचनत्वं तु क्षरीत्या खंडशब्दस्येवास्या पिवोध्यं। गुणवचनेनेति किं। गोभिर्वपावान्। गोसंबंधिदध्यादिभोजनेन देवदत्तस्य वपावत्त्वमित्यस्ति तत्कृतत्वं न त्वसौ गुणवचनः। पूर्वसदृश। इह समसदृशाभ्यां योगे तुल्यार्थैरिति तृतीया। अन्येयोगेत्वत एव वचनाद्वेतावितिवा तृतीया। इह सदृशग्रहणं व्यर्थं षष्ठीसमासेन गतार्थत्वात्। न च तत्पुरुषे तुल्यार्थेत्तृतीयेति पूर्वपदप्रकृतिस्वरार्थमिदमिति वाच्यं। सदृशप्रतिरूपयोः सादृश्य इति सूत्रेणात्तत्सिद्धेरिति मनोरमायां स्थितं। विद्यया सदृशो विद्यासदृश इत्यादौ हेतुत्वप्रकारकबोधार्थं तृतीयासमासोप्यावश्यक इति त्वन्ये। पूर्वसूत्रेणैव तत्कृतत्वात् तृतीयासमासोपि सिध्यतीत्यपरे। ऊनार्थेति। पूर्वसूत्रेऽर्थशब्देन समासस्योक्तत्वादिहार्थग्रहणमभिधेयपरं। तच्चोनशब्देनैव संबध्यते न तु पूर्वादिभिः समसदृशयोः पृथगुपादानादिति भावः। मिश्रं चेति पणावंधेनैकार्थ्यसंधिस्तत्राप्रयुज्यमानो मिश्रशब्द उपसर्ग

कर्तृकरणे कृता बहुलं। २।१।३२। कर्त्तरि करणे च तृतीया कृदन्तेन बहुलम्प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणं। नखनिर्भिन्नः। कर्तृकरणे इति किं। भिक्षाभिरुषितः। हेतावेषा तृतीया। बहुलग्रहणं सर्वोपाधिव्यभिचारार्थं तेन दात्रेण लूनवानित्यादौ न। कृता किं। काष्ठैः पचतितरां॥ ११

हितोंतोदात्त इति सूत्रार्थः। अवरस्येति। अत्र व्याचक्षते। ऊनार्थेत्येव सिद्धत्वादिदं सूत्रं त्यजमेव। चावरशब्दस्योनार्थवत्त्वमप्रसिद्धमिति वाच्यं। सप्तदशावराः सत्रमासीरन्निति श्रुतौ अव्यक्तानुकरणाद्द्व्यजवरार्धादिति सूत्रे च तत्प्रसिद्धेरिति कर्तृकरणे। समाहारद्वंद्वात्सप्तमीत्याशयेनाह कर्त्तरि करणे चेति अत्र केचित्॥ ः ॥कर्तृकरणे इति॥ प्रथमाद्विवचनं तृतीयया विशेष्यते। विशेषणे न च तदंतविधिस्तेन तृतीयांते कर्तृकरणे कृदंतेन समस्येते इति व्याख्यांतरमित्याहुः। सर्वोपाधीति। कर्त्तरि करणे च या तृतीया तदंतमपि बहुलग्रहणात् क्वचिन्न समस्यते क्वचित्तु विभक्त्यंतरमपि समस्यते बहुलग्रहणादेवेत्यर्थः। समासाभावं प्रदर्शयति। दात्रेण लूनवानित्यादाविति। आदिशब्देन दात्रेण छिन्नवान् हस्तेन कुर्वत इत्यादि ग्राह्यं। विभक्त्यंतरमपि समस्यत इत्यस्योदाहरणं तु पादहारकः। गलेचोपकः। ह्रियत इति हारकः। बाहुलकात्कर्मणि ण्वुल्। पादाभ्यामित्यपादाने पंचम्यंतस्य समासः। चुप मंदायां गतौ हेतुमति ण्यंतात्कर्मणि ण्वुल्। अमूर्द्धमस्तकादित्यलुक्। कर्तृत्वकरणत्वयोः क्रियानिरूपितत्वेन क्रियासमर्पकक्कदंतेनैव भवेत्समासः॥ सुपेत्यधिकारात्तिङ् तेन तु नाति

कालाः बहुवचननिर्देशः स्वरूपनिरासार्थः। कालवाचिनो द्वितीयान्ताः क्तान्तेन सह वा समस्यन्त इति सूत्रार्थः। ननु कालाश्च अत्यन्तसंयोगे इत्येवास्तु क्तेनेति निवृत्तं नार्थो यो
गविभागेनेत्यत आह अनत्यन्तेति। मासप्रमित इति। माङ् माने आदिकर्मणि क्तः कर्तरि। इह प्रतिपच्चन्द्रेण नास्त्यत्यन्तसंयोगः। मुहूर्तमिति। मुहूर्तं व्याप्येत्यर्थः। काला
ध्वनोरत्यन्तसंयोगे इति द्वितीया। तृतीया तत्कृत लुप्तेति। सौत्रत्वादिति भावः। तच्छब्देन तृतीयान्तपरामर्शनात्तदर्थो लक्ष्यते। तदर्थकृतत्वं च गुणवाचकस्यार्थद्वा
राविशेषणं। तृतीयान्तार्थकृतो यो गुणस्तद्वचनेनेति। तदेतद्ध्वनयन्नाह तृतीयान्तार्थेत्यादिना अर्थशब्देन चेति। सोपि स्वतन्त्रे निमित्तमिति भावः। नन्वर्थेन समासासंभवा
त्तद्वाचीशब्दो ग्रहीष्यते किमत्र वचनग्रहणेनात्राह। गुणमुक्तवान् गुणवचनः। कृत्यल्युटो बहुलमिति भूते कर्तरि ल्युट्। गुणमुक्तवान् योऽद्रव्यमुक्तवान् स गुणवच

कालाः। २।१।२८। क्तेनेत्येव। अनत्यन्तसंयोगार्थमिदं वचनं। मासप्रमितः प्रतिपच्चन्द्रः। मासम्परिच्छेत्तुमारब्धवानित्यर्थः। अत्यन्तसंयोगे च। २।१।२९।
। कालाइत्येव। अक्तान्तार्थं वचनं। मुहूर्तं सुखं मुहूर्तसुखं। तृतीया तत्कृतार्थेन गुणवचनेन। २।१।३०। तत्कृतेति लुप्ततृतीयाकं। तृतीयान्तं तृतीया
न्तार्थकृतगुणवचनेनार्थशब्देन च सह प्राग्वत्। शंकुलया खण्डः शंकुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किं। अक्ष्णा काणः।
पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः। २।१।३१। तृतीयान्तमेतैः प्राग्वत्। मासपूर्वः। मातृसदृशः। पितृसमः। ऊनार्थे माषोनं कार्षापणं।
माषविकलं वा। कलहः। आचारनिपुणः। गुडमिश्रः। आचारश्लक्ष्णः। मिश्रग्रहणे सोपसर्गस्यापि ग्रहणं। मिश्रश्चानुपसर्गमसन्धावित्यत्रा
नुपसर्गग्रहणात्। गुडसंमिश्रा धानाः। अवरस्योपसंख्यानं। मासेनावरो मासावरः॥ ११ नखेन घृतेन पाटवमिति गुणमात्रनिष्ठेन समासो न भवति गु
णश्चात्र सत्वे निविशतेपैतीत्यादिलक्षणलक्षितो गृह्यते न तु प्रवृत्तिनिमित्तं घटत्वादि सत्कृतत्वासंभवादिति। शंकुलया खंड इति। करणे तृतीया। खडि भेदने इत्यस्माद्भावे
घञ्। निःखुत्यादितः खंडशब्दः क्रियारूपापन्ने गुणे वर्तित्वा पश्चान्मत्वर्थलक्षणया तद्वति द्रव्ये वर्तत इति गुणवचनो भवति। धान्येनेति। करणे तृतीया अर्थ्यत इत्यर्थः। प्रयो
जनं। कर्मणि घञ्। अर्थनमर्थः अभिलाषो वा भावे घञ्। अर्थशब्दस्य रूढत्वे तु धान्येनेति हेतौ तृतीया कार्तृकरणे कृतेत्यनेन गतार्थत्वशंकेवात्र नेति रूढत्वाभ्युप
गमपक्ष एव श्रेयान्। तत्कृतेति किमिति। कर्तृकरणे कृतेति सिद्धमिति प्रश्नः। इतरो गुणवचनेन चेत्तत्कृतेनैवेति नियमार्थ मिदमित्याशयेन प्रत्युदाहरति। अक्ष्णेति।

साचातादर्थ्ये चतुर्थी हितयोगे चेति वार्त्तिकाच्चतुर्थी तदर्थैस्यादिना हितसुखश। ब्दाभ्यां समासनिधानात्ज्ञापनाद्वा संभवतीति हितसुखग्रहणं नज्ञापकमिति तु सम्यगे वेत्याहुः यूपायेति तादर्थ्ये चतुर्थी। एवमग्रेपि यथासंभवमूह्यं। अश्वघासादय इति। एतच्च भाष्यकृतोक्तं। नन्वेवं रन्धनाय स्थालीत्यत्रापि षष्ठीसमासः स्यादेवेति प्रकृतिविकृतिभाव एवेति नियमो निष्फल एव न च स्वरे विशेषः। चतुर्थी तदर्थेति पूर्वपदप्रकृतिस्वरस्यापि प्रकृतिभाव एवेष्यमाणत्वात्। अत्राहुः। संबंधत्वतादर्थ्यत्वकृतवैलक्षण्येनोक्तनियमसाफल्यान्न दोषः। अत्र च मानमेतदेव भाष्यं नमाषाणामश्नीयात्। दाशरथाय मैथिलीत्यादिप्रयोगा अपि इत्थमेव विवक्षाभेदेन निर्वाह्याः। एवं च पूर्वसदृशेति सूत्रे सदृशग्रहणं व्यर्थमिति कैयटहरदत्तादीनामुक्तिः प्रामादिकीत्यवधेयं। शाब्दबोधकृतवैलक्षण्यस्य तत्रापि सत्त्वादिति। अर्थेन नित्येति। अन्यथा विभाषाधिकारात्पक्षे द्विजायार्थ इति प्रयोगः स्यादिति भावः। विशेष्यलिंगता चेति वचनाभावे त्वर्थशब्दस्य नित्यपुंस्त्वात्परवल्लिंगमिति सर्वत्र पुल्लिंगप्रयोग एव स्यादि

पञ्चमी भयेन।२।१।३७। चोराद्भयं चौरभयं भयभीतभीतिभीभिरिति वाच्यं। वृकभीतः॥ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः।२।१।३८। एतैस्सहाऽल्पम्पञ्चम्यन्तं समस्यते स तत्पुरुषः। सुखापेतः। कल्पनापोढः। चक्रमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। अल्पशः किं। प्रासादात्पतितः॥ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन।२।१।३९। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्यासादागतः। दूरादागतः। कृच्छ्रादागतः॥ पञ्चम्याः स्तोकादिभ्य इत्यलुक्॥ षष्ठी।२।२।८। राज्ञः पुरुषः। राजपुरुषः॥

नेतिभावः॥ ःः॥ पंचमी भयेन। भयेति स्वरूपग्रहणं नार्थस्य प्रमाणाभावाद्भयभीतेति वार्त्तिकारंभाच्च। तेन वृकात्त्रास इत्यादौ समासो न कथं तर्हि भोगोपरतो ग्रामनिर्गत इत्यादिप्रयोगाः। अत्राहुः। बहुलग्रहणात्क्वचिद्विभक्त्यंतरमपि कृता समस्यत इति प्रागेवोक्तत्वात्सुप्सुपेत्यनेन वा तदुपपत्तिरिति। अपेतापोढ। पंचमीति वर्त्तते प्रत्ययग्रहणात्तदंतग्रहणं। अल्पशस्त्वन्त बह्वल्पार्थाच्छस्कारकादिति शस्यच पिवह्वल्पार्थान्मंगलामंगलवचनमिति वक्ष्यति तथाप्यत एव निपातनाच्छसिति बोध्यं। कारकत्वं तु समसनक्रियांप्रति पंचम्यंतस्य कर्मत्वात्तदभिधायित्वाच्चाल्पशब्दस्य तदेतदाह। अल्पं पंचम्यंतमिति। स्तोकान्मुक्त इत्यादि। करणे च स्तोकाल्पेति पंचमी। दूरादागत इत्यादौ तु दूरांतिकार्थेभ्य इत्यनेन। राजपुरुष इति राजन् अस्य पुरुषसु इत्यलौकिकविग्रहे समासे कृते सुपो लुक्यंतर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः॥

इति काष्ठैरिति॥ ॥ कृत्यैरधि। प्र
प्रसंगरत्याशयेन कृति। कृता किमिति। इतरस्तु तिङंतप्रकृतिकतद्धितांतप्रकृतिकसुबंतेनासमासस्तत्फलमित्याशयेनप्रत्युदाहरति काष्ठैरिति॥ ॥ कृत्यैरधि। प्र
वं सूत्रस्यैव प्रपंचोयं न तु नियमार्थमित्याहुः। काकपेयेति। शकि लिङ्चेति शक्यार्थे कृत्यः। स्पर्शितो यत्वात्तटस्थैः काकैरपि पातुं शक्येति स्तुतिः॥ अत्यंतोयत्वेन निंदा वा
।वातच्छेद्यमिति। पूर्ववत्कृत्यः। कोमलत्वाद्वातेनापि छेत्तुं शक्यत इति स्तुतिः। वातेनापि छेत्तुं शक्यते निर्बलत्वान्निंदा वा॥ अन्नेन। भिस्सा स्त्री भक्तमंधोन्नमोदनोस्त्री त्य
मरः। व्याख्यानान्नेह स्वरूपग्रहणं तदाह संस्कारकेत्यादि। भक्ष्येण। खरविशदमभ्यवहार्यं भक्ष्यं खरं कठिनं विशदं विविक्तावयवं खाद्यं भक्ष्यमित्यर्थः। यत्तु प्रत्यपात
स्य सरजं तस्य च भक्षयतेस्तत्रैव प्रयोगात्। अब्भक्ष इत्यादिप्रयोगस्तु भाक्तः। गुडधाना इति। ननु धानानां प्रत्येकं विभक्तावयवत्वाभावात्कथमेतदुदाहरणं संगच्छत इति

कृत्यैरधिकार्थवचने।२।१।३३। स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनं तत्र कर्तृकरणे तृतीयान्तं कृत्यैः सह प्राग्वत्। वातच्छेद्यं तृणम्॥
काकपेया नदी। अन्नेन व्यञ्जनं।२।१।३४। संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन प्राग्वत्। दध्ना ओदनो दध्योदनः। इहान्तर्भूतोपसेकक्रियाद्वारा
सामर्थ्यं भक्ष्येण मिश्रीकरणं।२।१।३५। गुडेन धानाः। गुडधानाः। मिश्रणक्रियाद्वारा सामर्थ्यं। चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः।२।१।३६। चतु
र्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। तदर्थेन प्रकृतिविकृतिभाव एव बलिरक्षितग्रहणाज्ज्ञापकात्। यूपाय दारु यूपदा
रु। नेह। रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासाः। अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यं। द्विजायायं द्विजार्थः सूपः। द्विजार्था
यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितं। गोसुखं गोरक्षितं॥ ९९ चेताभेदाभ्रष्टयवसमुदायस्य धानात्वात्समुदायं प्रति समुदायिनामवयवत्वाच्च तदु
पपत्तेः। चतुर्थी तदर्थ। तच्छब्देन प्रकृता चतुर्थी परामृश्यते प्रत्ययग्रहणान्तदंतग्रहणं चतुर्थ्यन्तेन सामर्थ्यात्तदर्थो लक्ष्यत इत्याशयेनाह। चतुर्थ्यन्तार्थाय यदिति।
चतुर्थ्यन्तवाच्याय यूपादये यद्दार्वादि तद्वाचिना चतुर्थ्यन्तं समस्यत इत्यर्थः। बलिरक्षितग्रहणादिति हितसुखग्रहणं तु न ज्ञापकं तद्योगे चतुर्थी चाशिषीति श्रुता
दर्थेपि चतुर्थीसंभवादिति भावः। ननु चतुर्थी चाशिषीति विहिता या चतुर्थी तदन्तस्य समासो न भवति समासादाशिषोऽनवगमादिति केचिदाहुः इति केयटेनोक्तं॥
ततश्च तत्पक्षे हितसुखग्रहणमपि बलिरक्षितग्रहणवत्तज्ज्ञापकमेवेति चेदत्र नव्याः। ब्राह्मणाय हितं ब्राह्मणहितम्। गोहितं गोसुखमित्यतादर्थ्ये चतुर्थ्यन्तेनापि समा

तथाच लुकः प्रयोजकीभूतः समास एव नेति फलितोऽर्थः। तत्रश्च प्रतिपदविधानेति वचनेन कर्त्तव्यो। एवं स्थिते कृद्योगा षष्ठीति वचनमपि मास्तु। कर्तृकर्मणोः कृतीत्यत्र विशेष इति निवृत्तेस्तथा चाप्राप्तषष्ठीविधानार्थमेव तदिति समासनिवृत्तिप्रसंगाभावात् षष्ठीत्यनेनैव समाससिद्धेः। सर्पिषो ज्ञानमिति। वस्तुतः करणस्य संबंधमात्रविवक्षया ज्ञोऽविदर्थस्येति षष्ठी। सर्पिःसंबंधि प्रवर्त्तनमित्यर्थः॥ ॥ पूरणगुण। अर्थशब्दस्त्रिषु संबध्यत इत्याह पूरणाद्यर्थैरिति। अत्र प्राचोक्तं यत इत्यर्थैः षष्ठी न समस्यत इति। तन्न्यून्यं। तथा हि सतिसुहितार्थानामेव ग्रहणं स्यात् ज्ञानतामेवार्थशब्देन समस्तत्वादिति ध्वनयन्नाह। सदादिभिश्चेति। षष्ठ इति। षण्णां पूरणः षष्ठः। तस्य

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन।२।२।११। पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते। पूरणे सतां षष्ठः। गुणे काकस्य कार्ष्ण्यं ब्राह्मणस्य शुक्लाः। यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणं। अनित्योऽयं गुणेन निषेधः। तदशिष्यं संज्ञाप्रमाणत्वादित्यादिनिर्देशात्। तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धं। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। तृतीयासमासस्तु स्यादेव स्वरे विशेषः। सत। द्विजस्य। कुर्वन्। कुर्वाणो वा किङ्कर इत्यर्थः। अव्ययं। ब्राह्मणस्य कृत्वा। पूर्वोत्तरसाहचर्यात् कृदव्ययमेव गृह्यते। तेन तदुपरीत्यादि सिद्धमिति रक्षितः। तव्या। ब्राह्मणस्य कर्त्तव्यं। तव्यता तु भवत्येव। स्वकर्त्तव्यं स्वरे भेदः। समानाधिकरणे। तक्षकस्य सर्पस्य। विशेषणसमासस्त्विह बहुलग्रहणान्न। गोर्धेनोरित्यादिषु पोटायुवतीत्यादीनां विभक्त्यन्तरे चरितार्थानामपरत्वाद्बाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन वार्य्यते। क्तेन च पूजायां।२।२॥ १२। मतिबुद्धीति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। राज्ञां मतो बुद्धः पूजितो वा। राजपूजित इत्यादौ तु भूतेक्तान्तेन सह तृतीयान्तस्य समासः। अधिकरणवाचिना च।२।२।१३। क्तेन षष्ठी न समस्यते। इदमेषामासितं गतं भुक्तं वा॥ ॥ पूरणोऽत्राषड्ढतिकतिपयचतुरां थुक्। कथं तर्हि तात्स्युक्षष्ठांकितसैकतानीति। प्रमाद एवायमित्येके। उं षष्ठः पुषष्ठः उंकारात्मकः षष्ठ इति वा व्याख्येयमिति मनोरमायां स्थितं। गुणेति। सत्त्वे निविशते पैतीत्यादिलक्षणलक्षितो गुणोऽत्र गृह्यते। न त्वदेङ् गुणः। अर्थग्रहणात्। नापि संख्या। कोशशतयोर्न न शतयोरिति वार्त्तिके निर्देशात्। काकस्य कार्ष्ण्यं ब्राह्मणस्य शुक्ला इति। व्याप्तिन्यायात् केवलगुणवाचीगुणोपसर्जनद्रव्यवाची च गुणशब्देन गृह्यत इति भावः। न तु ब्राह्मणस्य शुक्ला इत्यत्र समासप्रसंग एव नास्ति ब्राह्मणशब्दस्य दन्तैरेवान्वयात् ब्राह्मणस्य पदं तान्

याजकादिभिश्च। याजक। पूजक। परिचारक। परिषेचक। स्नातक। अध्यापक। उत्सादक। होतृ। पोतृ। भर्तृ। रथगणक। पतिगणक। इत। गुणात्तरेणेति। एतच्च वार्तिकं सर्वेषु
णाकार्त्स्न्ये इत्यत्र पठितं। कृद्योगा षष्ठीति। कर्तृकर्मणोः कृतीति। कृत्संनियोगेन कृतेत्यर्थः। यद्यपि प्रतिपदविधानेत्यादि निषेधवचनमारभ्यते तदेदं तद्व्याख्यनाया रभ्यं।
तस्यैवानारभ्यत्वमनुपदं वक्ष्यामः। इध्मव्रश्चन इति। वृश्च्यते छिद्यते ऽनेनेति व्रश्चनः कुठारादिः करणे ल्युट् इध्मानामिति कर्मषष्ठ्यं तस्यानेन समासः। नृणामिति। यत
श्च निर्धारणमिति षष्ठी द्विजशब्देनात्र समासप्रसंगस्तदपेक्षा हि षष्ठी। श्रेष्ठत्वं द्विजेतरमनुष्येभ्यः। तेषां सामान्यशब्देनोपस्थितत्वात् तान्विहायानुपस्थितकल्पनायाश्च
न्याय्यत्वात्। अथ कथं पुरुषोत्तम इति यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतुः एतत्त्रितयसन्निधाने सत्येवायं निषेध इति द्विवचनविभज्येति सू-
त्रे कैय्यटः। अन्ये तु पुरुषेषूत्तम इति निर्धारणसप्तम्याः संज्ञायामिति समासः न चैवं न निर्धारण इति व्यर्थः स्वरे भेदात् सप्तमीसमासे हि तत्पुरुषे तुल्यार्थेत्यादिना पूर्व-

याजकादिभिश्च।२।२।९। एभिः षष्ठ्यन्तं समस्यते। तृजकाभ्यां कर्तरीत्यस्य प्रतिप्रसवोऽयं। ब्राह्मणयाजकः। देवपूजकः। गुणात्तरेण तरलोप
श्चेति वक्तव्यं। तरबन्तं यद्गुणवाचि तेन समासस्तरलोपश्च न निर्धारण इति पूरणगुणेति च निषेधस्य प्रतिप्रसवोयं। सर्वेषां श्वेततरः। सर्वश्वेतः।
सर्वेषां महत्तरः। सर्वमहान्। कृद्योगा च षष्ठी समस्यत इति वाच्यं। इध्मनो व्रश्चनः। इध्मव्रश्चनः। न निर्धारणे।२।२।१०। निर्धारणे या षष्ठी सा न
समस्यते। नृणां द्विजः श्रेष्ठः। प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यं। सर्पिषो ज्ञानं॥ ११ पदप्रकृतिस्वरः षष्ठीसमासे तु समासस्येत्यन्तोदात्तत्वं स्या

न्त्वानिष्टमित्याहुस्तन्मन्दं संज्ञायामिति समासस्यानित्यत्वेन स्वपदविग्रहासंगतिप्रसंगात्तस्मात्कैयटोक्तसमाधानमेव समीचीनमिति नव्याः। प्रतिपदविधानेति पदं पदं प्रति वि
हिता प्रतिपदविधाना। षष्ठी शेष इति विहायान्येन ज्ञोऽविदर्थस्येत्यादिना विहिता सर्वैव षष्ठीत्यर्थः। धातुकारकविशेषं गृहीत्वैव ज्ञोऽविदर्थस्येत्यादिना षष्ठी विधीयत इति
भवति तस्याः प्रतिपदविधानत्वं। नन्वनेनैव गतार्थत्वात् न निर्धारण इति व्यर्थमिति चेदत्राहुः। यतश्च निर्धारणमिति सूत्रेण षष्ठीं विधत्ते किंतु सप्तमीमेव षष्ठी तु तया मा
बाधीति प्रतिप्रसूयत इत्यन्यदेतत्। एवं स्वामीश्वराधिपतीत्यादिसूत्रपितेन गृहस्वामी सर्वेश्वरः। निषादाधिपतिमित्यादि सिद्धमिति। वस्तुतस्तु ज्ञोऽविदर्थस्येत्यादिचतु
र्दशसूत्रीमध्ये दिवस्तदर्थस्येत्यादिषट्सूत्रीं विहायावशिष्टायामष्टसूत्र्यां शेष इति वर्तते। तथा च नमाषाणामश्नीयादित्यादावपि षष्ठी शेष इत्येव सिद्धे नियमार्थमक्त

उपज्ञातइतिनिर्देशेनभूतकालस्याबाधज्ञापनात्। उपज्ञातइत्यत्र हि भूते क्तो नतु वर्त्तमाने। अन्यथा क्तस्य च वर्त्तमाने इति षष्ठीविधानादुपज्ञातशब्दस्य तेनेति तृतीयायोगो न स्यात्। न चैवमपि ज्ञानार्थेष्वेव ज्ञापकत्वमस्त्विति वाच्यम्। पूजितो यस्सुरासुरैरिति प्रयोगानुरोधेन सामान्यविषयकज्ञापकत्वस्यैव न्याय्यत्वात्। अन्ये तु क्तार्थकषष्ठ्या एव समासनिषेधोऽयं शेषषष्ठ्या तु समासः स्यादेवेत्याहुः। एतेन कलहं सरामम हितः कृतवानिति भट्टिप्रयोगो व्याख्यातः। राममहितः सं कलहं कृतवानित्यन्वयः। अधिकरणवाचिना चावा विग्रहणं चिन्त्यप्रयोजनमिति हरदत्तादयः। इदमेषामिति। क्तोऽधिकरणे चेति क्तः। अधिकरणवाचिनश्चेति कर्त्तरि षष्ठी। अधिकरणे चेत्येव सिद्धे सूत्रद्वयेऽपि वा चिग्रहणं स्पष्टार्थमित्याहुः। ननु किं वृत्तं यद्वृत्तमित्यत्र न कर्मणि क्तः वृत्तेरकर्मकत्वात्। तथा चाधिकरणक्तः तेन कथमिह समास इति चेन्नैवं। नायमधिकरणक्तः किं तु गत्यर्थाकर्मकेति कर्त्तरि। किमा वृत्तं निष्पन्नमित्यर्थः॥ ॐ॥ कर्मणि च। क्तेनेति नानुवर्त्तते क्तेन च पूजायामिति निषेधवैयर्थ्यप्रसंगात्। षष्ठीत्यनुवर्त्तते किं तु सापि माकाचित्कर्मणि षष्ठीन गृह्यते। अपां स्रष्टेत्यादावनेनैव सिद्धौ तृजकाभ्यां कर्त्तरीति निषेधवैयर्थ्यापत्तेः। किं च इध्मव्रश्चन इत्यादौ समाससिद्धये

कर्मणि च। २।२।१४। उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते। आश्चर्यो गवां दोहोऽगोपेन॥ ६॥

वचनं कर्त्तव्यं स्यात्। न च कृद्योगलक्षणा षष्ठी समस्यत इति वार्त्तिकमस्त्येवेति वाच्यम्। तस्य सिद्धान्ते प्रत्याख्यानात्। ततश्च निपातानामनेकार्थत्वादितीत्यर्थे वशब्दोऽयं तदाह कर्मणीति या षष्ठीति। सप्तम्येकवचनात् पदमुच्चार्य या षष्ठी विहिता परिशेषितावेत्यर्थः। नियमसूत्राणां विधिरूपेण निषेधरूपेण वेति द्वेधा प्रवृत्तेः स्वीकृतत्वात्। गवां दोह इति। अगोपेनेत्युपन्यासस्त्विह उभयप्राप्तिप्रदर्शनार्थः॥ अथ कथं शब्दानुशासनमिति। अत्र व्याचख्युः शब्दानामिति या षष्ठी कर्तृकर्मणोरिति विहिता नतूभयप्राप्ताविति अनेन आचार्यस्य कर्त्तुः वस्तुतस्सत्त्वेऽपि रहानुपादानात्। कृत्तोऽर्थप्रयोग इत्यतः प्रयोग इत्यनुवर्त्तनात् कर्तृकर्मणोरुभयोरुपादानएवायं नियम इति स्वीकारात्। आश्चर्यो गवां दोह इत्यत्र हि आश्चर्यं प्रतिपाद्यते च यया शिक्षितो दोग्धा दुदोह गावश्च दोग्ध्र्यालं देवनिर्वहतिन तत्वन्यथा। अतः कर्तृकर्मणोर्विशिष्योपादानादत्रोभयप्राप्तिः। इह तु शब्दानामिदमनुशासनं नत्वर्थानामित्यर्थ निवृत्तिपरत्वात् कंचन तु कर्तृविशेषनिवृत्तिपरमतो नास्त्युभयप्राप्तिः। अस्तु चायथा कं यं चिदुभयप्राप्तिस्तथापि न क्षतिः॥ उभयप्राप्ताविति सूत्रे अविशेषेणाभिधायेति पक्षस्यापि विद्यमानतया नियमाप्रवृत्तिपक्षे आचार्यस्य श

शुक्लशब्द एवेह विशेष्यसमर्पक इति भावः। चंदनगंधः घटरूपमित्यादावनेन निषेधे प्राप्ते तत्स्थैश्च गुणैः समासो वक्तव्य इति वार्त्तिकेन समासः प्रतिप्रसूयते। गंधत्वेन प्रती
यमानो गंधो न कदापि गुणसमानाधिकरणः किंतु स्वप्रधानः। इदमेव हि तात्स्थ्यं नाम। न तु पिनष्टि गंधानिति प्रयोगदर्शनात् शुक्लशब्दादितुल्य एव गंधशब्दो न तत्स्थगुण
वचन इति चेन्न। पिनष्टीति प्रयोगे हि गंधानिति न गुणशब्दः मालतीकुसुमादिषु गंधशब्दप्रयोगादर्शनात्। किंतु चंदनत्वादिजातिनिमित्तकोऽन्य एव सः। तस्माच्चंदनगं
ध इत्यादौ तत्स्थत्वं तुल्यमेव। एवं घटरूपमित्यादावपि। नन्वेवमपि बलाकायाः शौक्ल्यं केशस्य नैल्यमित्यादावतिप्रसंग इति चेत्तत्राहुः। गुणवचनादित्यन्तस्य तु शु
क्लादिगुणस्यैवाभिधानात्तद्वाचकपदानां गुणिसामानाधिकरण्यसत्त्वान्न दोषः। तथा च प्राधान्येनाप्राधान्येन वा द्रव्याप्रतिपादकत्वे सति गुणप्रतिपादकत्वं तस्य
गुणवाचित्वमित्यर्थ इति। फलानामिति। करणस्य शेषत्वविवक्षायां षष्ठी। स्वरे विशेष इति। तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरं बाधित्वा थाथादिसूत्रेणांतोदा
त्तत्वे प्राप्ते तदपवादेन तृतीया कर्मणीत्यनेन पूर्वपदप्रकृतिस्वरे सत्याद्युदात्त इष्टः षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्तच्च नेष्यत इति भावः। तृपिश्च सकर्मकोप्यस्ति।
पितॄन्नतार्प्सीत्समममंस्त बंधूनिति भट्टिप्रयोगात्तेनास्मात्कर्मणि क्तो नास्तीति न शंकनीयम्। द्विजस्य कुर्वन्कुर्वाण इति। नेयं घटाद्यपेक्षया षष्ठी द्विजस्य घटं कुर्व
न्निति। तथा हि सत्यसामर्थ्यादेव समासाप्रसक्तौ निषेधोयं व्यर्थः स्यादतो व्याचष्टे किंकर इत्यर्थ इति। ब्राह्मणस्य कृत्वेति तादर्थ्यरूपसंबंधस्य सामान्यरूपेणाविव
क्षायां षष्ठी। ब्राह्मणसंबंधिनी या क्रिया तदनंतरमित्यर्थः। कृदव्ययमेवेति। अनेकमन्यपदार्थ इति सूत्रे सर्वेपश्चादिति भाष्यप्रयोगादिति भावः इत्याशीति। तथा च भ
ट्टिः प्रायुंक्त यत्कृते शीर्ष्णि शल्लीमः। आदेयाः किं कृते भोगाः कुंभकर्ण त्वया विनेति रक्षित इति कैयटहरदत्तौ तु अव्ययप्रतिषेधे तृजकस्योपरि तूदाहरंतोऽमरश्चाव्ययेनापि नि
षेधं मन्येते तौ च प्राचां भाष्यप्रयोगविरोधादुपेक्ष्याविति भावः। तव्यता भवत्येवेति। सूत्रे निरनुबंधग्रहणादिति भावः॥ स्वकर्तव्यमिति। कर्तृषष्ठ्याः समासः स्वरे
भेद इति। कृदुत्तरपदप्रकृतिस्वरेणांतस्वरस्यावस्थानादंतस्वरित इष्टः। तव्येन तु समासे मध्योदात्तत्वं स्यात्तच्च नेष्यत इति भावः। सोप्यनेनेति। षष्ठीसमासेन पोटा
युवतीति समासो वारितः। सोपि षष्ठीसमासः पूरणगुणेत्यनेन वार्यत इत्यर्थः। क्तेन च पूजायां। सूत्रे उपलक्षणं पूजाग्रहणं व्याख्यानादित्याह। मतिबुद्धीति। राज्ञामि
ति क्तस्य च वर्तमान इति कर्तरि षष्ठी। भूत इति। न च तत्र कौंडिन्यन्यायेन मत्यादिभ्यः क्तस्य वर्तमानकालो भूतकालतां बाधत इति वाच्यं। तेनैकदिगित्यतः तेनेत्यधिकारे

सु॰ सि॰ कौ॰ श॰ त॰ १५६

पूर्वापराः एकदेशशब्दो वयवे रूढः अत एव तस्य कर्मधारयत्वेपि ततो मत्वर्थीयः । कृष्णसर्पवत् नित्यत्वेवन कर्मधारयान्मत्वर्थीय इति निषेधस्य रूढेष्वप्रवृत्तेः । यच्च योह एकगो पूर्वादिति ठञ्प्राप्तः सोप्यत एव निर्देशादिति तदेतदाह अवयविनेति । नन्विदं सूत्रं व्यर्थं । पूर्वकाय इत्यादिप्रयोगाणां कर्मधारयेणैव सिद्धेः ऊर्ध्वकाय इतिवत् समुदायेहि वृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्त इति न्यायादत आह । षष्ठीसमासापवाद इति । तथा च कायपूर्व इत्याद्यनिष्टप्रयोगनिवृत्तये सूत्रमिति भावः । पूर्व

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।२।२।१। अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकदेशिना किं । पूर्वं नाभेः कायस्य । एकाधिकरणे किं । पूर्वश्छात्राणां । सर्वोप्येकदेशोह्ना समस्यते संख्याविसायेति ज्ञापकात् । मध्याह्नः । सायाह्नः । केचित्तु सर्व एकदेशः कालेन समस्यते न त्वह्नैव ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः उपारताः पश्चिमरात्रगोचरा इत्यादि सिद्धमित्याहुः । अर्द्धं नपुंसकं ।२।२।२। समांशवाच्यर्द्धशब्दो नित्यं क्लीबे प्राग्वत् । एकविभक्तावषष्ठ्यन्तवचनं एकदेशिसमासविषयकोयमुपसर्जनसंज्ञानिषेधः । तेन पञ्चखट्वी इत्यादि सिध्यति । अर्द्धं पिप्पल्याः । अर्द्धपिप्पली । क्लीबे किं । ग्रामार्द्धः । द्रव्यैक्य एव । अर्द्धं पिप्पलीनां । द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।२।२।३। एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयं भिक्षाया द्वितीयभिक्षा । एकदेशिना किं । द्वितीयं भिक्षाया भिक्षुकस्य । अन्यतरस्यांग्रहणसामर्थ्यात् पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयं । प्राप्तापन्ने च द्वितीयया ।२।२।४। पक्षे द्वितीया श्रितेति समासः । प्राप्तो जीविकाम् । प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः । इह सूत्रे द्वितीयया अ इति छित्त्वा अकारोपि विधीयते । तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका । आपन्नजीविका ॥ ९९

कायस्येति । यद्यप्यन्यारादिति सूत्रे दिशि दृष्टः शब्दो दिक्छब्द इति व्याख्यानेन संप्रत्यदिग्वृत्तीनामपि योगे पंचमी स्यात् कृतेति षष्ठी दुर्लभा तथापि तस्य परमाम्रेडितमिति लिंगादवयववाचिदिक्छब्दयोगे पंचमी नेत्युक्तत्वात् षष्ठ्येव भवतीति भावः । पूर्वं नाभेरिति । नाभेर्यः पूर्वो भागः स कायस्यावयव इत्यर्थः । नाभेरिति दिग्योगलक्षणा पंचमी तेनात्र पूर्वस्य भागस्य नाभिरवधिर्न त्वेकदेशिनीति नाभ्या समासो नेत्यर्थः । कायेन तु स्यादेव पूर्वकायो नाभेरिति । पूर्वशब्दस्य नित्यसापेक्षत्वात् प्रधानत्वाच्च । पूर्वश्छा ॥ ॥

राम॰ १५

त्वानुशासनमितिप्रयोगसंभवात्। यद्विशेषलक्षणा षष्ठीतिव्याख्यायते तदा तु समासनिषेधशंकैवात्र नास्तीति॥ ॥ तृजकाभ्यां। इह कर्तृषष्ठ्या तृजकाभ्यामिति वृत्तिकारव्याख्यानमयुक्तमिति ध्वनयन्नाह कर्त्रर्थे तृजकाभ्यामिति। कर्तृग्रहणं तृजकयोरेव विशेषणमिति युक्तं तयोः श्रुतत्वात् न तु षष्ठ्या इति भावः। यद्यपि कर्तरीति तृचो न विशेषणमव्यभिचारात्तथाप्यकस्य विशेषणत्वेन तदावश्यकमित्याह। इक्षुभक्षिकेति। पर्यायार्हणेति भावे ण्वुच् कर्मणि षष्ठ्याः समासः। ननु वज्रस्य भर्तेत्युदाहरणमयुक्तं। भर्तृशब्दस्य याजकादित्वेन समासावश्यंभावादित्याशंक्याह। पत्यर्थभर्तृशब्दस्येति। यद्यपि याजकादिष्वर्थविशेषविशिष्टतया भर्तृशब्दो न पठितस्तथापि रूढेर्बलीयस्त्वात्पतिपर्यायस्यैव तत्र ग्रहणं न तु यौगिकस्येति भावः। शेषषष्ठ्येति। न्यासकारस्तु नृन्नंतमेतत्। न लोकेति निषेधस्त्वनित्यः। त्व

तृजकाभ्यां कर्तरि। २।२।१५। कर्त्रर्थे तृजकाभ्यां षष्ठ्या न समासः। अपां स्रष्टा वज्रस्य भर्ता। ओदनस्य पाचकः। कर्तरि किं। इक्षूणां भक्षणमिक्षुभक्षिका। पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः। भूभर्ता। कथं तर्हि घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह इति। शेषषष्ठ्या समास इति कैयटः॥ कर्तरि च। २।२।१६। कर्तृषष्ठ्या अकेन न समासः। भवतः शायिका। नेह तृजनुवर्तते। तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात्। नित्यं क्रीडाजीविकयोः। २।२।१७। एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्य संज्ञा। संज्ञायामिति भावे ण्वुल्। जीविकायां दन्तलेखकः। तत्र क्रीडायां विकल्पे जीविकायां तृजकाभ्यां कर्तरीति निषेधे प्राप्ते वचनं॥

काभ्यामिति वक्तव्ये तृचः सानुबंधग्रहणात् ज्ञापकादित्याह। केचित्तु जनिकर्तुः प्रकृतिरिति योजकोहेतुश्चेति निर्देशादनित्योयं समासनिषेध इत्याहुस्तन्मंदं। शेषषष्ठीसमासेनोक्तनिर्देशोपपत्तेः। नेह तृजिति। न चोत्तरार्थत्वं शंक्यं तृच् क्रीडाजीविकयोर्नास्तीति जयादित्येनोक्तत्वादिति भावः। वामनस्तु अके जीविकार्थ इत्यत्राकरणेति किं रमणीयकर्तेति प्रत्युदाहरन् जीविकायां तृचमिच्छति। भावे ण्वुलिति। भंजनं भंजिका। पुष्पाणामिति कर्मणि षष्ठी। भाव इत्युपलक्षणं अधिकरणे ण्वुल्यपि बाधकाभावादिति मत्वा संज्ञायामिति सूत्रे हरदत्ते मनोरमायामुक्तं उद्दालकः श्लेष्मातकस्तस्य पुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्दालकपुष्पभंजिकेति॥ ॥

त्स्त्रियोरित्युपसर्जनह्रस्वः द्विगुप्राप्तापन्नेति वक्ष्यमाणेन परवल्लिङ्गनिषेधः। न चैवं बहुव्रीहिणा ग-
तार्थमिति शङ्क्यं स्वरे विशेषात्। प्राप्तसुखः इत्यादौ निष्ठान्तस्य जातिकालसुखादिभ्य इति परनिपाताप-
नात् प्राप्तापन्ने समस्येते अच अत्वं च तयोः स्यादिति भाष्ये स्थितं। तत्र चकारात् पूर्वमेवाकारश्लिष्टः सौत्रत्वात्प्रवृत्तिभावो नेति प्राचः। इमं क्लेशं परिहरन्नाह द्वितीययाश्च
इति। प्राप्तस्त्रीति। एकादेशस्य पूर्वान्तत्वेन ग्रहणाल्लिङ्गविशिष्टपरिभाषया वा टाबन्तयोरपि प्राप्तापन्नयोः समासः॥ ॥ कालाः परिमाणिना। परिमीयते परिच्छिद्यते
येन तत्परिमाणं परिच्छेदकं तद्वान्परिमाणी तदाह। परिच्छेद्यवाचिनेति। कालाः इति। कालविशेषवाचका इत्यर्थः। सूत्रे बहुवचननिर्देशात्कालसामान्यस्यापरिच्छेदकत्वा-
न्मासो जातस्येति। षष्ठीसमासप्राप्ते वचनं। ननु जातः पुरुषस्तस्य गृहस्त वित्तस्यादिकं परिच्छेदकं न तु कालस्तस्य क्रियामात्रपरिच्छेदकत्वादिति चेदत्राह। सासा

कालाः परिमाणिना। २।२।५। परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते। मासो जातस्य यस्य स मासजातः। द्व्यहजातः। द्वयोरह्नोः समाहारो द्व्य-
हः द्व्यहो जातस्य यस्येति विग्रहे। उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्। द्वे अहनी जातस्य यस्य स द्व्यहजातः। अह्नो
ऽह्न इति वक्ष्यमाणो ह्नादेशः। पूर्वत्र तु न संख्यादेः समाहार इति तन्निषेधः॥ ११ क्रियां परिच्छिन्दन्नपि कालस्तद्वारा देवदत्तं परिच्छिनत्ति यस्य हि जन-

नादूर्ध्वं मासो गतः स मासजात इति व्यवह्रियते। तत्र व्यवहारे कालजननक्षणयोरन्तरालभावी मासो जननद्वारा जातमपि परिच्छिनत्त्येवेति। इह विग्रहे षष्ठी निर्दिष्टसा-
वृत्तौ प्राधान्यं द्योतयितुं यस्य स इत्युक्तं। अलौकिके तु प्रक्रियावाक्ये नास्य प्रवेशः एवं बहुव्रीहावपीति बोध्यं। ननु जातस्य मास इति विग्रहे षष्ठी मासशब्दस्य पूर्वनिपातार्थ-
मेतत्सूत्रारंभस्यावश्यकत्वेपि मासविशेष्यकबोध एवात्रोचित इति किमनेन जातस्य यस्य स इति कथनेनेति चेदत्राह। मासजातो मृत इत्यादिप्रयोगानुरोधेन विग्रहे यस्य
स इति स्वीक्रियत इति। मासजात इति। यद्यपि मासो जातो यस्येति बहुव्रीहिणापीदं सिध्यति जातिकालसुखादिभ्यः परा निष्ठा वाच्येति वचनात्। न च स्वरे विशेषः वा जाते इ-
त्यतोदात्तत्वस्यापि सिद्धेस्तथापि षष्ठीसमासापवादार्थमिदमारंभणीयमेव। किंच मासो जातवतो यस्य स मासजातवानित्येतदर्थमपीदमवश्यारंभणीयमिति दिक्।
उत्तरपदेनेति। परिमाणपुत्तरपदहेतुकद्विगुसिद्धये त्रिपदतत्पुरुषो वक्तव्य इत्यर्थः। सुप्सुपेत्येकत्वस्याविवक्षितत्वादप्राप्ते वचनं अस्मादेव वार्त्तिकारंभात्सुप्सुपेत्येक-

त्राणामिति। नासौ निर्द्धारणे षष्ठी किंतु समुदायसमुदायिसंबंधे। बहुवचनं तद्भूतावयवभेदसमुदायविवक्षया। ततश्छात्राणामेकदेशित्वे सत्यप्येकत्वे वैशिष्ट्याभा
वान्न समासः। सर्वोपीति। पूर्वादिभिन्नोपीत्यर्थः। ज्ञापकादिति। अन्यथाह्नस्य सायपूर्वत्वं न स्यादिति भावः। मध्याह्न इति। राजाहस्सखिभ्य इति टच्। अह्नोह्न
इत्यह्नादेशः। अयं चादेशः मध्याह्नशब्दयोरुत्तरकायवत्कर्मधारयेणान निर्वहति। तस्यैकदेशिसमासप्रयुक्तत्वादतोत्र ज्ञापकाश्रयणं युक्तमेवेति बोध्यं। इत्याहुरि
ति। नचैवं दिनमध्यो रात्रिमध्य इत्यादिनसिद्धेरिति वाच्यं। ज्ञापकसिद्धस्यासार्वत्रिकत्वात्। अर्द्धं नपुंसकं। खंडवाच्यर्धशब्दो न नित्यनपुंसकः। ग्रामार्धे नगरार्ध इति
यथा समांशवाची तु नित्यनपुंसकस्स एवेह गृह्यते। पूर्वापरेति पूर्वसूत्र एवार्द्धशब्दे पठनीये अर्धमिति योगविभागेन निर्देशान्नपुंसकत्वे लब्धे पुनर्नपुंसकग्र
हणादित्याशयेन व्याचष्टे नित्यं क्लीबे स इति। यो नित्यनपुंसकलिंगस्स इत्यर्थः। प्राग्वदिति। एकत्वविशिष्टेनावयविना समस्यत इत्यर्थः। अन्ये तु व्याचख्युरर्धमिति नि
र्देशादेव नपुंसकत्वे सिद्धे नपुंसकग्रहणात्सूत्रे पुलिंगनिर्देशो न विवक्षित इति ज्ञापयितुं तेन नतस्येदमित्यादिलिंगत्रयेपि भवतीति। अर्धपिप्पलीत्यत्र एकविभक्तिचा
पूर्वनिपात इत्युपसर्जनसंज्ञायां गोस्त्रियोरिति ह्रस्वः स्यादित्याशंक्य समाधत्ते। अषष्ठ्यंतवचनमिति। तेन पिप्पलीशब्दस्यानुपसर्जनत्वान्न दोष इति भावः। नन्वेवं पं
चानां खट्वानां समाहारः पंचखट्वीति न सिद्ध्येदुपसर्जनसंज्ञानिषेधेन खट्वेत्याकारे ह्रस्वाप्रवृत्तेरिदं तल्लाभे द्विगोरिति ङीपोप्रवृत्तेरत आह। एकदेशिसमासविषय
कोयमिति पंचखट्वी इति भाष्योदाहरणमेव अषष्ठ्यंतेत्यस्य संकोचे लिंगमिति भावः। अर्धपिप्पलीति। परवल्लिंगत्वात्स्त्रीत्वं। अर्धं पिप्पलीनामिति। समासे अर्द्ध
पिप्पल्येव स्यात्। विशेष्यत्वात्। परवल्लिंगमिति लिंगातिदेशेपि वचनातिदेशाभावाच्चेति भावः। अर्धपिप्पल्य इति प्रयोगस्तु अर्धानि पिप्पलीनामिति विग्रहे
असाधुरेवेति। अपि खंडसमुच्चये साधुरेव अर्धं पिप्पल्याः अर्धपिप्पली। अर्धपिप्पली च अर्धपिप्पली चेत्यादिविग्रहात्। एकदेशिना किं। अर्द्धं पशोर्देवदत्तस्य। अ
त्र देवदत्तः स्वामी न त्ववयवीति न तेन समासः। इदं सूत्रे परवल्लिंगमित्यत्र भाष्ये प्रत्याख्यातं। तद्यथा। अर्धपिप्पलीति हि कर्मधारयेण सिद्धं। समुदाये दृष्टाः
शब्दाः अवयवेवर्त्तत इति न्यायात्। समप्रविभागादन्यत्र तु वाप्येषैव गतिः। अर्धाहारः अर्धोक्तमर्धे विलोकितमित्यादिप्रयोगदर्शनात्। न च समप्रविभागे
षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यं। षष्ठीसमासस्यापीष्टत्वादत एव कालिदासः प्रायुंक्त। प्रेम्णा शरीरार्धहरां हरस्येति। द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ षष्ठीसमासापवादो

त्प्रत्ययांतेनैव समास इष्यते। अल्पशब्दस्य तु वृत्तेः। बहुवचनं तु प्रकृतिभेदाभिप्रायं। तथैवोदाहरति। मासेदेयमिति। तत्पुरुषे कृतीत्यलुक्। नेह मासे दातव्यं नियोगो पलक्षणार्थमिति। नियोगो निर्द्धारणं। आवश्यको पलक्षणार्थमित्यर्थः। नित्यसमासोयमिति। अत एव पूर्वसूत्र इति स्वपदविग्रहोऽसंगत इत्यवोचाम। अवतप्तइ ति। नकुले न स्थितं नकुलस्थितं। कर्त्तृकरणेकृतेति समासः। कृद्ग्रहणपरिभाषया नकुलस्थितशब्दोपि क्तांत इति तेन सह समर्थं तस्य समासस्तत्पुरुषे कृतीति सप्तम्या अलुक्। अव्यवस्थितत्वप्रतिपत्त्या च निंदावगम्यते॥ ॥ पात्रेसमितादयश्च। सेपूर्वो दिशाः। क्ताः। गेहेनर्दीति। नर्दीशब्द इत्यस्मात्सुप्यजातौ विति णिनिः। घटकतया प्रवेशो नेति। परमाः पात्रेसमिता इति वाक्यमेव भवति। न तु सन्महदित्यादिना समासांतरमिति भावः। एतच्च शब्दकौस्तुभे स्थितं। अन्ये तु केवलाः पात्रेसमिता

पात्रेसमितादयश्च। २। १। ४८। एते निपात्यन्ते क्षेपे। पात्रेसमिताः भोजनसमय एव सङ्गताः। न तु कार्ये। गेहेशूरः। गेहेनर्दी। आकृतिगणोऽयं। चकारोऽवधारणार्थः। तेनैषां समासान्तरे घटकतया प्रवेशो न। परमाः पात्रेसमिताः। पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन। २। १। ४९। विशेषणं विशेष्येणेति सिद्धे पूर्वनिपातनियमार्थं सूत्रं। एकशब्दस्य दिक्संख्ये संज्ञायामिति नियमबाधनार्थं च। पूर्वं स्नातः पश्चादनुलिप्तः। स्नातानुलिप्तः। एकनाथः। सर्वयाज्ञिकाः। जरन्नैयायिकाः। पुराणमीमांसकाः। नवपाठकाः। केवलवैयाकरणाः॥ ॥ ॥

इति वाक्यमेव। न तु पूर्वकालेकेत्यादिना समासांतरमित्याहुः। पूर्वकाले कः पूर्वकाल इत्यर्थनिर्देशः। इतरेषां तु स्वरूपग्रहणं। पूर्वत्वस्य संबंधिकत्वात्पूर्वकालो परकालेन समस्यते। तथैवोदाहरति। स्नातानुलिप्त इति। अत्र क्रियाशब्दत्वात्पाचकपाठकवत्पर्यायः प्राप्तः। याज्ञिका इत्यादि। यज्ञमधीयते विदंति वा याज्ञिकाः। क्रतूक्थादीति ठक्। एवं नैयायिकाः। जीर्यते स्म जरन्निति भूते शतृ। जरंतश्च ते नैयायिकाश्च। जीर्णनैयायिका इत्यर्थः। मीमांसां मीमांसकाः। क्रमादिभ्यो वुन्। नवपाठका इति। पठंतीति पाठकाः। ण्वुल्तृचाविति ण्वुल्। संख्यावाची नवशब्दोत्र न गृह्यते। दिक्संख्ये संज्ञायामिति नियमात्। समानाधिकरणेनेति किं। एकस्याः शौक्ल्यं षष्ठीसमासोपि इह न भवति। पूरणगुणेति निषेधात्॥

पूर्वत्रेति। अहज्जातइत्यत्रेत्यर्थः॥ ॥ सप्तमीशौं

त्वं विवक्षितमिति ज्ञायते। अन्हादेशइति। त्रिपदतत्पुरुषे सत्युत्तरपदे परतस्ताद्धितार्थेत्यत्र तद्धितार्थे सतीति भावः। सप्तमीशौं

ड़ैः। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्च आद्यर्थावगतिरित्यभिप्रेत्याह शौंडादिभिरिति। अक्षशौंडइति। शौंडः प्रवीणः। इह आसक्तिरूपा क्रिया वृत्तावंतर्भवती

ति तद्द्वारकं च सामर्थ्यं यथा दध्योदनः गुडधाना दौ उपसेचनमिश्रीकरणादिद्वारा सामर्थ्यं। तेन कारकाणां क्रिययैव संबंध इति नियमस्य न व्यभिचारः। अधिशब्द इति।

आधेयप्रधानइति शेषः। अधिकरणप्रधानस्त्वव्ययीभाव एव। अधिहरीति यथा। स्वइति नित्यमिति शेषः। विभाषा चेरिति विभाषाग्रहणसामर्थ्यादिति वक्ष्यमाण

सप्तमी शौंडैः। २।१।४०। सप्तम्यन्तं शौंडादिभिः प्राग्वद्वा। अक्षेषु शौंडः। अक्षशौंडः। अधिशब्दोऽत्र पठ्यते। अध्युत्तरपदादिति खः। ईश्वरा

धीनः। सिद्धशुष्कपक्वबन्धैश्च। २।१।४१। एते सप्तम्यन्तं प्राग्वत्। सांकाश्यसिद्धः। आतपशुष्कः। स्थालीपक्वः। चक्रबन्धः। ध्वांक्षेण क्षेपे। २।१।४२।

ध्वांक्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायां। तीर्थे ध्वांक्षइव। तीर्थध्वांक्षः। तीर्थकाकः। कृत्यैर्ऋणे। २।१।४३। सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह

प्राग्वत् आवश्यके। मासेदेयमृणं। ऋणग्रहणान्नियोगोपलक्षणार्थं। पूर्वाह्णे गेयं साम। संज्ञायां। २।१।४४। सप्तम्यन्तं सुपा प्राग्वत् संज्ञायां। वाक्येन

संज्ञानवगमान्नित्यसमासोऽयं। अरण्येतिलकाः। वनेकसेरुकाः। हलदन्तात्सप्तम्याइत्यलुक्। क्तेनाहोरात्रावयवाः। २।१।४५। अन्होरात्रेश्चावयवाः

सप्तम्यन्ताः क्तान्तेन सह प्राग्वत्। पूर्वाह्णकृतं। अपररात्रकृतं। अवयवग्रहणं किं। अन्हि दृष्टं। तत्र। २।१।४६। तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्व

त्। तत्रभुक्तं। क्षेपे। २।१।४७। सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायां। अवतप्तेनकुलस्थितं तएतत्॥ ९ त्वात्। अंतःशब्दोऽत्र पठ्यते स चाधिकरणप्रधानः

मध्यइत्यर्थात्। तद्योगे अवयविनः आधारत्वविवक्षायां सप्तमी यथा वृक्षेशाखेति। वनेअंतर्वनांतर्वसति। यस्त्वधिकरणत्वमात्रवृत्तिरंतःशब्दस्तस्य तु विभक्त्यर्थ

इति नित्यमव्ययीभावः। प्रनिरंतः शरेति णत्वं वनेइति अंतर्वणं। यत्तु तत्पुरुषस्य वैकल्पिकत्वात्पक्षे अव्ययीभावइति हरदत्तेनोक्तं तच्चिंत्यं। तत्पुरुषस्य वैकल्पिक

त्वेपि अव्ययीभावस्य नित्यत्वाद्वनेअंतरिति तदुक्तस्वपदविग्रहस्यायोगात्। किंच विभक्त्यर्थमात्रवृत्तेरव्ययीभावः वचनग्रहणसामर्थ्यादन्यथा वृक्षस्योपरीत्यादा

वतिप्रसंगात् ततश्च मध्यवाचिनः प्रसंगएव नास्तीति दिक्। शौंड। धूर्त। कितव। व्याड। प्रवीण। संवीत। अंतर। अधि। पटु। पंडित। कुशल। चपल। निपुण। इत्युक्तेः।

पिस्यादिति भावः। मनोरमायां तु विकल्पे प्राप्ते नित्यसमासार्थं द्वन्द्वतत्पुरुषयोरित्येतद्वचनमिति प्राचां ग्रंथमनुसृत्योक्तं वस्तुतस्तु त्रयाणां समासे कृते अन्यपदार्थोपसंक्रमेणापरस्परसंबंधाभावात् द्वंद्वतत्पुरुषयोरप्राप्तौ सत्यां वचनमिदमित्यादि स्थितं। द्वंद्वस्योदाहरणं तु वाक्च दृषच्च प्रिये अस्य वाग्दृषद्प्रियः। छत्रोपानहप्रियः। इह त्रिपदे बहुव्रीहौ कृते पूर्वयोर्नित्यं द्वंद्वः सोऽन्यद्वन्द्वाच्चुदषहान्तादिति समासांतष्टच् न पिनित्य एव॥ ॥ गोरतद्धिततत्पुरुषस्येत्यनुवर्त्तते टच्चातदाह गोन्तादित्यादिना तु ग्रहणवता प्रातिपदिकेन तदंतविधेरभावात्तत्पुरुषस्यावयवो यो गोशब्दस्तस्माट्टजित्यर्थः स्यात्तथा च गोमूत्रमित्यादावतिप्रसंगः स्यादत आह। समासांत इति। अयं भावः। समासांता इत्यधिकाराद्द्वा समासांतेन भवितव्यं गोरिति पंचमी श्रवणात्ततः परेणापि नन्वेतत्तदंतविधिमंतरेणोपपद्यत इति सामर्थ्यात्तदंतविधिलाभस्तत्स्तत्पुरुषस्येति षष्ठ्यंतं पंचम्यंतेन विपरिणम्यत इति। न तु तद्धितलुकीति। लुग्विषय इत्यर्थो न तु तद्धितलुकि सतीति समासांतानामंतरंगत्वात्। अतद्धितलुकीति किं। पंचभिर्गोभिः क्रीतः पंचगुः। अत्र तद्धितस्य ठकोऽध्यर्धपूर्वेति लुक्। संख्यापूर्वो द्विगुः। अत्रोक्तम् इति। अयं भावः। पूर्वसूत्रविषय एवेयं संज्ञा। अनंतरस्येवेतिन्या

गोरतद्धितलुकि।५।४।९२। गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि। पञ्चगवधनः। पञ्चानां गवां समाहारः। संख्यापूर्वो द्विगुः।२।१।५२। तद्धितार्थेत्यत्रोक्तः संख्यापूर्वो द्विगुः स्यात्। द्विगुरेकवचनम्।२।४।१। द्विग्वर्थः समाहार एकवत्स्यात्। स नपुंसकमिति नपुंसकत्वं। पञ्चगवम्

यात्। एतदर्थमेव हि सूत्रद्वयं कृतमन्यथा दिक्संख्ये संज्ञायां तद्धितार्थोत्तरपदसमाहारे चेत्यत्रैव ब्रूयात्। नैनसप्तर्षय इत्यत्रैव गतकालकपालेत्यादिना पूर्वपदप्रकृतिस्वरो न भवति किंतु समासांतोदात्त एव। तथा च लक्ष्यं सप्तऋषयस्तपसे येमिरे इति सप्तऋषीणां सुकृतां पत्रलोक इत्यादि त्रिविधः संख्यापूर्व इति। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे वाच्ये संख्यापूर्वोऽपि समासः स इत्यर्थः। तद्धितार्थे यथा। पंचकपालः संस्कृतं भक्षा इत्यणः द्विगोर्लुगनपत्य इति लुक्। उत्तरपदे यथा। पंचनावप्रियः। नावो द्विगोरिति समासांतष्टच्। समाहारे पंचपूली। द्विगोरिति ङीप्। द्विगुरेकवचनं। बाहुलकात्कर्तरि ल्युट्। सामान्ये नपुंसकं। द्विगुस्समास एकार्थप्रतिपादको भवतीत्यर्थः। न च वक्तृतोऽनेकार्थस्यैकार्थ्यं कथं विदुपपद्यत इति सामर्थ्यादतिदेशः संपद्यत इत्याह। एकवत्स्यादिति। समाहार इति तु पूर्वसंख्यानाल्लभ्यते। समाहारे यो द्विगुस्तदर्थ एकवदित्यन्वयः। समाहारे किं। तद्धितार्थे मा भूत्। पंचसु कपालेषु संस्कृताः पंचकपालाः। पंचभिर्गोभिः क्रीताः पंचगवः। पराः पंचगवे पंचगवा

दिक्संख्ये संज्ञायां। नियमार्थमिति। तत्पुरुषे संज्ञायामेव दिक्संख्ये समस्येते इति नियमशरीरं तेन पञ्चगवीत्यादि सिध्यति। कथं तर्हि त्रिलोकनाथः पितृसद्मगोचर इति कालिदा-
सः। त्रिलोकशब्दस्यासंज्ञात्वात्। न च समाहारे द्विगुर्हि द्विगोरिति ङीप्प्रसंगात् न च पात्रादित्वं कल्प्यं यदि त्रिलोकीगणनापरा स्यादित्यादिप्रयोगाणामसंगत्यापत्तेः। न च उत्त-
रपदे इति समासः त्रिपदतत्पुरुषस्येह दुर्लभत्वात्। अत्राहुः लोकशब्दोऽत्र लोकसमुदायपरः। त्र्यवयवो लोकस्त्रिलोकः। शाकपार्थिवादित्वादुत्तरपदलोप इति पञ्चब्राह्म-
णा इति। यद्यप्यत्र वृत्तेऽपि समासे रूपे विशेषो नास्ति तथापि विभक्त्यन्तरे पञ्चभिर्ब्राह्मणैरित्यादौ विशेषो बोध्यः। तद्धितार्थो। अत्र संज्ञार्थवचनादेकापि सप्तमी विषयभेदाद्भि-
न्यत इत्याशयेनाह तद्धितार्थे विषये इत्यादि। यदि तु तद्धितार्थे वाच्ये इति व्याख्यायेत तर्हि पौर्वशाल इत्यादौ तद्धितो न स्यात्। तदर्थस्य समासेनैवोक्तत्वात्। द्विगोर्लुगनपत्य

दिक्संख्ये संज्ञायां।२।१।५०। समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः। संज्ञायामेवेति नियमार्थं सूत्रं। पूर्वेषुकामशमी। सप्तर्षयः। नेह उत्तरा वृक्षाः
। पञ्च ब्राह्मणाः॥ तद्धितार्थोत्तरपदसमाहारे च।२।१।५१। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भ-
वः। पौर्वशालः। समासे कृते। दिक्पूर्वपदादसंज्ञायां ञ इति ञः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। आपरशालः। पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्री-
हौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः। तेन शालाशब्दे आकार उदात्तः। पूर्वशालाप्रियः। दिक्षु समाहारो नास्त्यनभिधानात्॥ संख्यायास्तद्धिता-
र्थे। षण्णां मातॄणामपत्यं षाण्मातुरः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहाववान्तरतत्पुरुषस्य विकल्पे प्राप्ते द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य-
समासवचनं॥

इति ज्ञापकादुक्तेऽपि तद्धितार्थे तद्धितो भवतीति कल्पनायां प्रतिपत्तिगौरवमिति भावः। तद्धिते परे इति तु न व्याख्येयमेव। तद्धिते परतः॥ समासः
समासे कृते दिक्पूर्वपदादित्यादिना तद्धित इत्यन्योन्याश्रयप्रसंगात् समाहारे वाच्ये इति तेन पञ्चगवमित्यादौ समासेनैव समाहारस्योक्तत्वात्समूहार्थप्रत्ययो नोत्पद्यते।
अन्यथा अत्र गोरतद्धितलुकीति टच् स्यात् सामूहिकप्रत्ययस्य द्विगोर्लुगनपत्य इति लुक्प्रवृत्तेरिति भावः। सर्वनाम्न इति। एतच्च पूर्वापरोदाहरणान्वयि यद्यपि स्त्रियाः
पुंवदित्यनेनापि प्रकृतरूपसिद्धिस्तथाप्युत्तरपूर्वेत्याद्यर्थं सर्वनाम्न इति वचनमावश्यकं प्रतिपदोक्तत्वादिहापि तदुपन्यासो न्याय्य इति भावः। वृत्तिमात्रे इति। तद्धित-
वृत्तौ समासवृत्तौ चेति कैयटः। आकार उदात्त इति। असति त्वचान्तरे तत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमेव स्यादिति भावः। षाण्मातुर इति। मातुरुत्सं-
ख्यासंभद्रपूर्वाया इत्युदादेशः। अनपत्य इत्युक्तेर्द्विगोर्लुगिति लुङ् न। विकल्पे प्राप्त इति। महाविभाषयेति शेषः। ततश्च तत्पुरुषप्रयुक्तटजभावे पञ्चगोधन इत्य-

त्ययः। बहुलमन्यत्रापीति रोर्लुक्। रलयोरेकत्वस्मरणाल्लत्वस्वरः। विशेष्यस्य पूर्वनिपातनियमार्थं सूत्रे शब्दप्रवृत्तिनिमित्तकुत्सायामेवायं संनिधानात्तेनेह न नैयायिकोदुराचारः पापाणकेः। एतौ कुत्साभिधायिनौ। कुत्सितावयस्वेटगर्लौ णकाः समारत्यमरः। ततश्चानयोः पूर्वसूत्रेण समासे परनिपातः स्यात्तस्मात्पूर्वनिपातनियमार्थमिदं सूत्रमित्याशयेनाह पूर्वसूत्रापवाद इति। उपमानानि। उपमीयते येन तदुपमानं। उपपूर्वान्माङः करणे ल्युट्। प्रादिसमासः। उपपूर्वको माङ् सादृश्यहेतुके परिच्छेदे रूढः। येन वस्त्वंतरं सादृश्येन परिच्छिद्यते तदुपमानमित्यर्थः॥ यथा गौरिव गवयः। इह हि गोः करणं सादृश्यं हेतुः पुरुषः परिच्छेत्ता स हि गोसादृश्येन गवयं परिच्छिनत्ति सामान्यवचनैरिति। समानो धर्मः सामान्यं चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। उपमानोपमेयसाधारणो यो धर्मस्तद्विशिष्टवचनैरित्यर्थः। न तु साधारणधर्ममात्रवचनैरिति। एतच्च वचनग्रहणाल्लभ्यते। सामान्यमुक्तवंतस्सामान्यवचनाः। बाहुलकात्कर्तरि भूते ल्युट्। यत्पूर्वं सामान्यमुक्त्वा तद्वृत्तिद्रव्ये पर्यवस्यंतीति तथोक्ताः। तच्च सामान्यविशिष्टं उपमानशब्दस्य संबंधिशब्दत्वादाक्षिप्तमुपमेयमेव विज्ञायते। लाक्षणिकमिति। अत एव सामानाधिकरण्यान्मृगीव चपला मृगचपलेत्यादौ पुंवद्भावः। उत्तरपदोपस्थितश्यामत्वचपलत्वादिद्वारकमेवेह सादृश्यं गृह्यते संनिधानात्। कथं तर्हि उपमानपरतेति चेत्। भूतपूर्वगत्याशक्यार्थमादायत त्परतेत्यवेहि। पूर्वनिपातेति। अन्यथाऽनियमः स्यात्खंजकुब्जवदिति भावः। किं च तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययेति सूत्रे प्रतिपदोक्तस्यास्यैवोपमानग्रहणेन ग्रहणार्थमपीदं सूत्रं अत एव मयूरव्यंसकादित्वात्समासे उपमानस्वरेण प्रवर्त्तत इति सिद्धांतः। उपमितं। उपमेयमुपमितं। भूतकालोऽत्र न विवक्षितः तच्च संबंधिशब्दत्वादुपमानमाक्षिपति। तथा चोपमानभूतैर्व्याघ्रादिभिरित्यर्थः। पुरुषो व्याघ्र इव शूर इति। तत्र हि शूरसापेक्षस्यापि पुरुषस्य प्रधानत्वाद्राजपुरुषः सुंदर इतिवदत्रापि समासः स्यात्स माभूदिति सामान्याप्रयोग इत्युक्तमिति भावः। कथं तर्हि भाष्याब्धिः क्वातिगंभीर इति कैयटः। सामान्यप्रयोगसत्त्वेनास्याप्राप्तेः अत्र केचित्प्रमाद एवायमित्याहुः। इह गांभीर्येण सादृश्यं न विवक्षितं किं तु विततत्वादिरेवगाहत्वादिना। तस्य हि विततत्वादेरप्रयोगोऽस्त्येवेति निर्बाधः समास इति मनोरमायां स्थितं ॥ ६ ॥

नीत्यत्र प्रथमं द्विगवर्थस्यैकवद्भावे कृते योयमेकशेषे कृते द्विगवर्थसमुदायस्तस्माद्विगवर्थत्वाद्बहिरंगत्वाच्चैकवद्भावो न भवतीति स्थितमाकरे। यदा तद्धितार्थेति सूत्रे समाहार इति कर्मसाधनस्तदा समाहृतप्रधानो द्विगुरिति बहुत्वे प्राप्ते अनेन एकवद्भावः क्रियते। यदा तु भावसाधन एव समाहारस्तदा समूहप्रधानत्वाद्द्विगोः समूहस्यैकत्वात् सिद्धमेकत्वमिति नास्य प्रयोजनं। न च स नपुंसकमिति नपुंसकत्वार्थमेकत्वविधानमिति वाच्यं। समुदायवाचकेषु सामान्ये नपुंसकमित्यभ्युपगमे बाधकाभावादित्याहुः। वस्तुतस्तु तद्धितार्थेति सूत्रे समाहार इति भावे घञ् न तु कर्मणि। पंचगवमित्यत्र पंच गावः समाहृता इत्यर्थाभ्युपगमे समाह्रियमाणानां बहुत्वेन एकवचनानुपपत्तेः। न च द्विगुरेकवचनमिति सूत्रान्नैवमिति वाच्यं। पंचखट्वीत्यसिद्धेः। तत्र हि पंच खट्वाः समाहृताः पंचसु खट्वासु समाहृतासु इत्येवं विग्रहसंभवेन नियतविभक्तित्वा

कुत्सितानि कुत्सनैः। २।१।५३। कुत्स्यमानानि कुत्सनैः सह प्राग्वत्। वैयाकरणखसूचिः। मीमांसकदुर्दुरूढः। पापाणके कुत्सितैः। २।१।५४। पूर्वसूत्रापवादः। पापनापितः। अणककुलालः। उपमानानि सामान्यवचनैः। २।१।५५। घन इव श्यामः। घनश्यामः। इह पूर्वं पदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते। पूर्वनिपातनियमार्थं सूत्रं। उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे। २।१।५६। उपमेयं व्याघ्रादिभिः सह प्राग्वत्साधारणधर्मस्याऽप्रयोगे सति। विशेष्यस्य पूर्वनिपातार्थं सूत्रं। पुरुषव्याघ्रः। नृसोमः। व्याघ्रादिराकृतिगणः। सामान्याऽप्रयोगे किं। पुरुषो व्याघ्र इव शूरः॥ ११. भावादेकविभक्तित्वात् पूर्वनिपात इत्यप्रवृत्तेरुपसर्जनत्वाज्ञो स्त्रियो रिति ह्रस्वो न स्यात्। ततश्चावंतो वेति ङीप्पक्षे द्विगोरित्यदंतलक्षणो ङीन्न स्यात्। भावसाधनत्वे त्वेकविभक्तित्वादुपसर्जनत्वमव्याहतमेव समाहारापेक्षया नियमेन वर्जिपदानां षष्ठ्यंतत्वात्तथा च पंचखट्वीत्यादिरूपं निर्बाधमेवेति दिक्॥ स नपुंसकमिति। एतस्यार्थो मूल एव स्फुटीभविष्यति॥ ॥ कुत्सितानि। कुत्सा अवक्षेपः शोक कर्मणि णिजः। स च मतिबुद्धीति सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने विहित इत्याशयेनाह कुत्स्यमानानीति। तत्प्रतिपादकानीत्यर्थः। उभयत्र बहुवचननिर्देशः स्वरूपविधिनिरासार्थः। वैयाकरणखसूचिरिति। सूचयते रचइः। यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयत्यभ्यासवैयर्थ्यात्स एवमुच्यते न तु वस्तुतो व्याकरणं तदध्ययनं वा कुत्सितं वेदांगत्वेन तस्य प्रशस्तत्वात्। तथापि प्रतिभानाभावेन निष्फलत्वात्कुत्स्यते। दुर्दुरूढ इति। इलगत्स्ये पेड पूर्वः। औणादिकः। कूठप्र ॥ ॥

श्रेणिः च्व्यन्तानां तु कृगती तिनित्यसमासः परत्वात् श्रेणीकृतं इह तु च्वौ चेति दीर्घः क्तेन विशिष्टशब्दो ऽवधारणार्थः नञ्मात्राधिकेन नञ्रहितं समस्यत इति सूत्रार्थस्ते नेह न। सिद्धं चाभुक्तं च। तुडिडधिकेनापीति वाच्यम्। अशितं चानशितं च अशितानशितं। क्लिष्टाक्लिशितं। क्लिशः क्त्वा निष्ठयोरिति वेट्। कृताकृतमिति। एकदेशाकरणात् कृतं। एकदेशांतरस्याकरणात्तदेवाकृतं। शाकपार्थिव इति। पृथिव्या ईश्वरः पार्थिवः तस्येश्वर इत्यण् शाकप्रिय इति बहुव्रीहिः तस्य पार्थिवशब्देन समासे कृते द्वंद्वसमासे

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥२।१।६१॥ सद्वैद्यः। वक्ष्यमाणेन महत आकारः। महावैयाकरणः। पूज्यमानैः किं। उत्कृष्टो गौः। पङ्कादुद्धृत इत्य र्थः। वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥२।१।६२॥ गोवृन्दारकः। व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनं। कतरकतमौ जातिपरि प्रश्ने ॥२।१।६३॥ कतरकठः। कतमकालापः। गोत्रं च चरणैः सहेति जातित्वं। किंक्षेपे ॥२।१।६४॥ कुत्सितो राजा किंराजा यो न रक्षति। पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥२।१।६५॥ तत्पुरुषः समानाधिकरणः कर्मधारयः ॥१।२।४२॥ पुंवत्कर्मधा रयजातीयदेशीयेषु ॥६।३।४२॥ कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्परऊङ् भावो यस्मिंस्तथाभूतं पूर्वं पुंवत्। पूरणीप्रियादि ष्वप्राप्तः पुंवद्भावो विधीयते। महानवमी। कृष्णचतुर्दशी। महाप्रिया। तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते। पाचकस्त्री। दत्तभार्या। पञ्चमभार्या। सौघ्नभार्या। सुकेशभार्या। ———— ब्राह्मणभार्या। एवं पाचकजातीया पाचकदेशीयेत्यादि। इभपोटा। पोटा स्त्रीपुंसलक्षणा। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयं। गृष्टिः सकृत्प्रसूता। गोगृष्टिः। धेनुर्नवप्रसूतिका। गोधेनुः। वशावं ध्या। गोवशा। वेहद्गर्भघातिनी। गोवेहत्। बष्कयणी तरुणवत्सा। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः ॥ ॥

यदुत्तरपदं प्रिय इति तस्य लोपः। तथा देवब्राह्मण इत्यत्र देवस्य पूजको देवपूजक इति पूर्वस्मिन् षष्ठीसमासे यदुत्तरपदं पूजक इति तस्य लोपो ज्ञेयः ॥ ॥ सन्महत्। गुणक्रियाशब्दैः सह समासे सदादीनां पूर्वनिपात नियमार्थं सूत्रं। कतरकतमौ। जातिपरिप्रश्ने किं। कतरो देवदत्तः गवाव हूनां जातिपरिप्रश्न इत मजितिव्युत्पादि तकतमशब्दसाहचर्यात्ताद्दशस्यैव कतरशब्दस्यापि ग्रहणे सिद्धे जातिपरिप्रश्नग्रहणं ज्ञापयति कतमशब्दोऽन्यत्रापि साधुरिति॥ तथा च प्रत्युदाहृतं प्राचीनैर्दतिष

विशेषणं॥ विशिष्यते येन तद्विशेषणं कर्त्तुः करणत्वविवक्षायां ल्युट् तदाह भेदकमिति। व्यावर्तकमित्यर्थः। विशेषणविशेष्ययोस्संबंधिकतया अन्यतरोपादानमात्रेणेतराक्षेपसं
भवे उभयोपादानं स्पष्टार्थमिति कैयटः। एतच्च कुत्सितानि कुत्सनैरित्यत्रापि तुल्यं। हरदत्तस्त्वाह समस्यमानपदद्वयजन्यबोधप्रकारयोर्विशेषणविशेष्यधर्मयोर्यत्र परस्परं व्यभिचा
रस्तत्रैव समासो यथा स्यात् नान्यत्रेत्येतदर्थमुभयोपादानं। तथा च नीलोत्पलादौ समासो भवति न तु तक्षकः सर्प इत्यादौ। न हि तक्षकत्वं सर्पत्वं व्यभिचरतीति तन्मंदं कैलासादि
र्मेरुरद्रिः भावपदार्थस्तर्कविद्या व्याकरणशास्त्रं भोजराज इत्यादिप्रयोगाणामसंगत्यापत्तेः। ननु विशेषणविशेष्यभावे कामचारात्पाचकपाठकादाविव नीलोत्पलादा
वप्यव्यवस्थितः पूर्वनिपातः स्यादिति चेदत्राहुः। जातिशब्दस्य गुणक्रियाशब्दसमभिव्याहारे विशेष्यसमर्पकत्वेव। तेन नीलोत्पलं पाचकब्राह्मण इति व्यवस्थित एव प्रयो

विशेषणं विशेष्येण बहुलं।२।१।५७। भेदकं समानाधिकरणेन भेद्येन बहुलम्प्राग्वत्। नीलमुत्पलं नीलोत्पलं। बहुलग्रहणात्क्वचिन्नित्यं। कृष्ण
सर्पः। क्वचिन्न। रामो जामदग्न्यः। पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च।२।१।५८। पूर्वनिपातनियमार्थमिदं। पूर्ववैयाकरणः।
अपराध्यापकः। अपरस्याऽर्द्धे पश्चभावो वक्तव्यः। अपरश्चासावर्द्धश्च। पश्चार्द्धः। कथमेकवीर इति। पूर्वकालैकेति बाधित्वा परत्वादनेन समासे
वीरैक इति हि स्यात् बहुलग्रहणाद्भविष्यति। श्रेण्यादयः कृतादिभिः।२।१।५९। श्रेण्यादिषु च्व्यर्थवचनं कर्त्तव्यं। अश्रेणयः श्रेणयः कृताः। श्रेणि
कृताः। क्तेन नञ्विशिष्टेनानञ्।२।१।६०। नञ्विशिष्टेन क्तान्तेनानञ् क्तान्तं समस्यते। कृतं च तदकृतं च कृताकृतं। शाकपार्थिवादीनां सिद्धये
उत्तरपदलोपस्योपसंख्यानं। शाकप्रियः पार्थिवः। शाकपार्थिवः। देवब्राह्मणः॥ ९९ —गः। गुणशब्दयोः क्रियाशब्दयोः गुणक्रियाशब्दयोश्चानियम एव

खंजकुब्जः कुब्जखंजः पाचकपाठकः। पाठकपाचकः खंजपाचकः पाचकखंज इति। अत्र मूलमुपसर्जनमिति महासंज्ञा। अप्रधानं ह्युपसर्जनं। गुणक्रिययोश्च द्रव्यप्र
त्यप्राधान्यं स्पष्टमेवेति। अपरस्यार्द्ध इति। एतच्च पश्चादिति सूत्रे भाष्ये स्थितं बाहुलकादिति। एके च मुख्येषु वीरपते पराक्रमत इति वा बोध्यं॥ श्रेण्या। आद्यत्रादिशब्दो
व्यवस्थावाची द्वितीयस्तु प्रकारवाची। श्रेण्यादयः पठ्यंते कृतादिराकृतिगण इति भाष्यात्। एक। पूग। कुंद। राशि। विशिख। निचय। निधन। आदि श्रेण्यादिः। कृत। मित। भूत।
दिः। कृतादिः। यदा तु सिद्धा एव श्रेणयः संस्कृताः तदा समासो नेष्यत इत्याशयेनाह अश्रेणयः श्रेणय इति॥ एकेन शिल्पेन पण्येन वा ये जीवंति तेषां समूहः

युवाखलतीति। कृदिकारादक्तिन इति ङीष्। पुंवत्कर्मधारयेति युवतिशब्दस्य पुंवद्भावः। जरतीति। जीर्यतेरतृन्। उगितश्चेति ङीप्। एवं युवपलितः युववलिन इत्युदाहार्यं वलिनश
ब्दः पामादित्वात् तुल्याख्यानामित्यत्र तुल्यमहान्सदृशमहानित्यादौ परत्वादनेन सन्महदितिवाध्यते। तस्य सत्कृत्यशालिन इति भन्त्रिप्रयोगेन सत्कृतं सत्कृत्यमिति षष्ठीसमासो बोध्यः। ए
वं परमपूज्य इत्यादिष्वपि। वर्णो। समानाधिकरणेन वर्णेन वा विना वर्णेनापि समस्यत इत्यर्थः विशेषणं विशेष्येणेत्यनेनैव सिद्धे पृथग्विधानं वर्णो वर्णेष्वनेत इति पूर्वपद
प्रकृतिस्वरे विधीयमाने प्रतिपदोक्तत्वादेतत्समासस्यैव पूर्वपदस्यैव भवत्वनान्यस्येत्यर्थं कृष्णसारंग इति। सारंगश्चित्रपर्यायस्तच्च गुणोपसर्जनं द्रव्यपरं कृष्णशब्दोपि

युवाखलतिपलितवलिनजरतीभिः। २।१।६७। पूर्वनिपातनियमार्थं सूत्रं लिङ्गविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते। युवाखलतिः। युवख
लतिः युवतिः खलती। युवखलती। युवजरती। युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यं। कृत्यतुल्याख्या अजात्या। २।१।६८।
भोज्योष्णं। तुल्यश्वेतः। सदृशश्वेतः। अजात्या किं। भोज्य ओदनः। प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न। वर्णो वर्णेन। २।१।६९। समानाधिक
रणेन सह प्राग्वत्। कृष्णसारङ्गः। कडाराः कर्मधारये। २।२।३८। कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः। कु
मारः श्रमणादिभिः। २।१।७०। कुमारी श्रमणा। कुमारश्रमणा। इह गणे श्रमणा प्रव्रजिता गर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते। लिङ्गविशिष्टपरिभा
षाया एतदेव ज्ञापकमबोध्यं। चतुष्पादो गर्भिण्या। २।१।७१। चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत्। गोगर्भिणी। ॥ ‍ ॥ चतुष्पाज्जाति
रिति वक्तव्यम्। नेह। स्वस्तिमती गर्भिणी ॥ ‍ ॥ कृष्णावयवके भाक्तः। एवं च गौणो सामानाधिकरण्ये विशेषणं विशेष्येणेत्यप्रवृत्तौ समासार्थमपीदमारब्ध
व्यमित्याहुः न तु तत्रापि तत्र तेत्यनेनैवायं समासः सिध्यति। सारंगत्वस्य कृष्णादिकृतत्वात्। नापि स्वरे भेदः। तत्पुरुषे तुल्यार्थतृतीयेत्यनेनैव पूर्वपदप्रकृतिस्वरसि
द्धेरिति चेदत्राहुः। कृष्णशुक्लो हरितशुक्ल इत्याद्यर्थं समासोऽनेनावश्यं विधेयः। न हीह तत्कृतत्वमस्ति। यद्यपीह विशेषणं विशेष्येणेत्यनेन समासः सिद्ध्यति तथापि पू
र्वेणेन सिध्यति। न च प्रतिपदोक्तसमासोऽकिंचित्करः व्यावर्त्याभावादिति वाच्यं। कृष्णशुक्लो इत्यादेर्व्यावर्त्यस्य संभवादिति। कडारादय इति। बहुवचननिर्देशादिति
भावः। आदिशब्देन गडुलखण्डिल्यः खण्डिल्यगडुल इत्यादि। एतच्च भाष्ये स्पष्टं ॥ ॥ ॥

कतरो भवतोर्देवदत्तः। कतमो भवतां देवदत्त इति किंक्षेपे। किंराजेति। किमः क्षेप इति समासान्तनिषेधः। क्षेपे किं। को राजा पाटलिपुत्रे एवं किं सखा यो द्रुह्यति किंगौः यो न वहतीत्यप्युदाहरणं बोध्यं। तत्पुरुषः समानाधिकरण शब्द अर्श आद्यजन्तः समानाधिकरणपदक इत्यर्थः। भाषितपुंस्कादित्यादि एतच्च स्त्रियाः पुंवदिति सूत्रे स्फुटी करिष्यते। ननु तेनैव कर्मधारयेपि सिद्धं जातीयदेशीययोस्तु तसिलादिष्विति सिद्धं तत्किमनेन सूत्रेणेत्यत आह। पूरणी प्रियादिष्विति। तथेति च। महानवमीति। नवानां पूरणी तस्य पूरणे डट्। नान्तात् संख्यादेर्मट्। टित्त्वान्ङीप्। महती चासौ नवमी चेति विग्रहः। पुंवद्भावे कृते वक्ष्यमाणेन महत आकारः। कोपधाया इति। न कोपधायाः संज्ञापूरण्योश्च वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे स्त्रियाः पुंवत् जातेश्चेति पंचसूत्र्या प्रतिषिद्ध इत्यर्थः। क्रमेणोदाहरति पाचकस्त्रीति। जातीयदेशीययोरपि प्रतिप्रसवमुदाहरति एवमिति। पाचिका प्रकारवती पाचकजातीया प्रकारवचने जातीयर् पाचकदेशीयेति। ईषदसमाप्ताविति देशीयर्। उभयत्र तसिलादिष्वि

प्रशंसावचनैश्च ॥ २।१।६६॥ एतैः सह जातिः प्राग्वत्। गोमतल्लिका। गोमचर्चिका। गोप्रकाण्डं। गवोद्घः। गोतल्लजः। प्रशस्ता गौरित्यर्थः। मतल्लिकादयो नियतलिङ्गाः न तु विशेष्यनिघ्नाः। जातिः किं। कुमारीमतल्लिका ॥ ११

ति पुंवद्भावस्य न कोपधाया इति निषेधः प्राप्तः। पट्वजातीया पटुदेशीमेत्यादौ तस्य चरितार्थत्वात्। इत्यादीति। आदिपदात् दत्तजातीया पंचमजातीया स्त्रीघ्नजातीया सुकेशजातीया ब्राह्मणजातीया ———— या। एवं दत्तदेशीये त्याद्युदाहार्यं। स्त्रीपुंसलक्षणेति। स्तनश्मश्र्वादिमत्तास्त्रीत्यर्थः। उदश्विदिति। तक्रं ह्युदश्विन्मथितं पादांबुर्ध्वंबुनिर्जलमित्यमरः कठधूर्त इति। नात्र कठत्वं कुत्स्यते। अतः कुत्सितानि कुत्सनैरिति गतार्थतानशंक्या प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेः। जनयति कुसुदभ्रांतिं धूर्तवको बालमत्स्यानामित्यत्र धूर्तवक इत्यसाधुरेव ॥ ॥ ६६ ॥ प्रशंसावचनैश्च। वचनग्रहणं रूढिशब्दपरिग्रहार्थं। तेन यौगिकाः प्रशस्त शोभन रमणीयादयः ये च विशेषवचनाः शुचिमृद्वादयः ये तु गौरश्वादयस्त्वा प्रशंसां गमयंतिसिंहो माणवक इत्यादयस्ते सर्वे व्युदस्यंते। गवोद्घ इति। अवङ् स्फोटायनस्येत्यवङि आद्गुणः। मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ प्रशस्तवाचका न्यमूनीत्यमरः। प्रशंसावचनयोराग्रवतीत्येकयोगसंभवे पृथग्योगकरणं चिंत्यफलं ॥ ६६ ॥ ॥ ॥ ॥

कारिकेति। भावे पर्यायार्हेणोति ण्वुच् तदाह क्रियेति। क्रियायोग इत्यनेन कारिकाशब्दस्य विशेषणात् श्लोकवाची कारिकाशब्दो नेह गृह्यत इति भावः क्रियाशब्दस्यात्र
यत्नः स्थितिरर्थः यत्न इत्यन्ये। अनुकरणं चानितिपरमित्यस्य संज्ञानियमपक्षे ऽनितीतिव्यर्थमिति मत्वाह कृत्यनितिपरे किमिति। इत इत्तु प्रयोगनियमपक्षे खा
डित्यनुकरणस्येति शब्दे परे गतिसंज्ञाया निवारणाया नितिपरमित्यावश्यकमिति प्रत्युदाहरति खाडिति कृत्वेति। सत्यां संज्ञायां एव प्रयोगो नैव स्यात्किं त्विति खाडुत्येत्येव
स्यादिति भावः नव्वेति खाडित्यत्येति न भवति तेः परस्यानुकरणस्य गतिसंज्ञा निषेधादिति नाच्यो। अनिति परमित्यत्र इतिः परोपस्थानाद्धिति परं न इति परमनिति परमितिव

कारिकाशब्दस्योपसंख्यानम्। कारिकाक्रिया। कारिका कृत्य। अनुकरणं चानितिपरं। १।४।६२। खाट्कृत्य। अनितिपरं किं। खाडिति कृत्वा निरष्ठी
वत्। आदरानादरयोः सदसती। १।४।६३। सत्कृत्य। असत्कृत्य। भूषणेऽलं। १।४।६४। अलंकृत्य। भूषणे किं। अलं कृत्वौदनं गतः पर्याप्तमित्यर्थः
अनुकरणमित्यादित्रिसूत्री स्वभावात् कृञ्विषया। अन्तरपरिग्रहे। १।४।६५। अन्तर्हत्य। मध्ये हत्वेत्यर्थः। अपरिग्रहे किं। अन्तर्हत्वा गतः हतं परि
गृह्य गत इत्यर्थः। कणेमनसी श्रद्धाप्रतीघाते। १।४।६६। कणेहत्य पयः पिबति। मनोहत्य। कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये
तीतो मनश्शब्दोऽप्यत्रैव। पुरोऽव्ययं। १।४।६७। पुरस्कृत्य। अस्तं च। १।४।६८। अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात्। अस्तङ्गत्य। अच्छ गत्यर्थवदे
षु। १।४।६९। अव्ययमित्येव। अच्छगत्य। अच्छोद्य। अभिमुखं गत्वा। उक्त्वा चेत्यर्थः। अन्ययं किं। जलमच्छं गच्छति। अदोऽनुपदेशे। १।४।७०। अ
दः कृत्य। अदः कृतं। परप्रत्युपदेशे प्रत्युदाहरणं। अदः कृत्वा। तिरोऽन्तर्द्धौ। १।४।७१। तिरोभूय ॥

नुकरणस्येति शब्दपरत्वे क्रियायोगाभावाद्गतिसंज्ञा नास्तीति खाडिति कृत्वेति रूपं निर्बाधं किमनेनानितिपरग्रहणेनेति चेत्स्वाहुः इति कृत्वेति। समुदाय एवं कृते
त्यर्थे वर्त्तते। तथा चेतिशब्दः क्रियाविशेषक इति तद्घटितसमुदायस्य क्रियावाचकत्वाद्स्येव क्रियायोग इति। हतं परिगृह्येति। हत्वा गमने द्विधा हतं त्यक्त्वा परिगृह्य
चेति। आद्यमुदाहरणं द्वितीयं तु प्रत्युदाहरणं। अपरिग्रहे इति च प्रयोगोपाधिर्न तु वाच्यकोटिनिविष्टमिति भावः। कणेहत्येति अत्यन्तमभिलष्य तन्निरृत्ति पर्यं
तं पिबतीत्यर्थः। तथा च श्रद्धाया अपगमात्तत्प्रतिघातो गम्यते। प्रत्युदाहरणं तु कणेहत ॥ ६ ॥ ६ ॥ ६ ॥

एतदेवेति। एवकारः स्फुटसिद्धत्वद्योतनार्थो नत्ववधारणार्थः। युवा खलतीति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वसंभवात्। नहि युवन्शब्दस्य पुंस्त्वे जरतीसामानाधिकर
ण्यं संगच्छते। चतुष्पादो गर्भिण्येत्यत्र जातिरित्यनुवर्त्ततइत्याह जातिवाचीति। जातिः किं। कालाक्षी गर्भिणी। चतुष्पात्किं। ब्राह्मणी गर्भिणी। प्रत्युदाहरणे विशेषण
मिति समासः स्यादेव गर्भिकालाक्षीत्यादि पूर्वनिपाते विशेषः॥ ॥ मयूर०। चकारोत्रावधारणार्थस्तेन परममयूरव्यंसको मयूरव्यंसकइत्यादि समासांतरं न भवति।
धूर्तइति एवं च गुणवचनत्वात्पूर्वनिपाते प्राप्ते इदं वचनमारब्धमिति भावः अन्ये तु मयूरइव व्यंसको मयूरव्यंसक इत्यादावुपमानानि सामान्यवचनैरिति समास
स्यापवादोयं। तेन समासस्येत्यंतोदात्तत्वमिह सिध्यति तत्पुरुषे तुल्यार्थ इत्युपमानं पूर्वपदप्रकृतिस्वरस्योपमानं शब्दार्थेन विहिते प्रतिपदोक्तसमासे चरितार्थत्वादि

मयूरव्यंसकादयश्च।२।१।७२। एते निपात्यन्ते। मयूरो व्यंसकः। मयूरव्यंसकः। व्यंसको धूर्त्तः। उदक्चावाक् च। उच्चावचं। निश्चितं च प्रचितं च। निश्चप्र
चं। नास्ति किञ्चन यस्य सः। अकिञ्चनः। नास्ति कुतो भयं यस्य। अकुतोभयः। अन्यो राजा। राजान्तरं। चिदेव। चिन्मात्रं। आख्यातमाख्यातेन क्रियासात
त्ये। अश्नीत पिवतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिवता। पचतभृज्जता। खादतमोदता। एहीडादयोऽन्यपदार्थे। एहीडइति यस्मिन्कर्म्मणि तदेहीडं। एहियवं। उद्धरकोष्ठात् उत्सृज देहीति यस्यां क्रियायां सा उद्धरोत्सृजा। उद्धमविधमा। असातत्यार्थमिह पाठः। जहि कर्म्मणा बहु
लमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति। जहीत्येतत्कर्म्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत्कर्त्ताऽभिधीयत इत्यर्थः। जहिजोडः। ज
हिस्तम्बः। ईषदकृता।२।२।७। ईषदिति लिङ्गः। ईषद्गुणवचनेनेति वाच्यं। ईषद्रक्तं॥ ११

त्याहुः। अश्नीत पिवतेति। इह क्रियारूपस्यान्यपदार्थस्य प्राधान्यात्
स्त्रीत्वात्टाप्। एवमग्रेपि राजान्तरमिति। अन्तरशब्दोत्र भिन्नवाची। चिन्मात्रमिति। मात्रं कार्त्स्न्येवधारणइत्यमरः। अन्तरमात्रशब्दाभ्यां सह नित्यसमास इत्युभयत्र अस्वपद
विग्रहो दर्शितः। नित्यसमासत्वं तु अवधारणार्थकचकारेण लब्धमित्याहुः। उद्धरकोष्ठादित्यादि। उद्धर उत्सृज इत्येतावानेव विग्रहः। उत्सृजेत्यस्य विवरणं देहीति
कोष्ठादिति तु उद्धरेत्यस्याकांक्षापूरणार्थमुक्तं। समासेन चेत्कर्त्तेति। जहिजोडमिति। आभीक्ष्ण्येन यश्चाह सः जहिजोडः। एवं जहिस्तम्बमिति यश्चाह स जहिस्तम्बः॥
॥

निपात्यते नन्वगतिसंज्ञासंनियोगेन आनत्याधाने किं पदे कृत्वा शिरो नमति। वाचं नियम्येति। निवचने हि वचनाभावः। अर्थाभावेऽव्ययीभावः॥ ॥ नित्यं हस्ते। उपयमनस्व
पार्थ एवैतयोरिदं तत्त्वमोदंतत्वं च निपात्यते हस्ते कृत्य परिणीयेत्यर्थः। उपयमने किं। हस्ते कृत्वा कार्षापणं गतः। स्वीकारमात्रमिति पक्षे तु नालमिति बुध्यापराद्ध्यत्वदाना
र्थं गत इति योज्यं। एवं तावद्गतिसमासानुदाहृत्य प्रादिसमासान्वक्तुमारभते प्रादिग्रहणमिति। सुप्सुपेति क्रियायोगाभावाद्गतित्वाभावः। अव्ययस्य यः समासप्रसक्तौ
व्यवस्थार्थं वचनानि पठ्यन्ते। प्रादय इति। आदिशब्द उभयत्र प्रकारे। तेन दुराचारः पुरुषो दुष्पुरुष इत्यादि सिद्धं। प्रगत आचार्य इति। अनेन गताद्यर्थे वृत्तिं अस्वपदविग्र
हां नित्यसमासतां च दर्शयति। एवं प्रगतः पितामहः प्रपितामहः। प्रमातामह इत्यादि। अत्यादय इति। आदिपदादभिगतो मुखमभिमुखः। उद्गतो वेलामुद्वेलः। प्र

नित्यं हस्ते पाणावुपयमने। १।४।७७। कृञि। उपयमनं विवाहः। स्वीकारमात्रमित्यन्ये। हस्ते कृत्य। पाणौ कृत्य। प्राध्वं बन्धने। १।४।७८। प्राध्वं कृ
त्य बन्धनेनानुकूलं कृत्वेत्यर्थः। प्रार्थनादिनानुकूल्यकरणे। प्राध्वं कृत्वा। जीविकोपनिषदावौपम्ये। १।४।७९। जीविकामिव कृत्वा। जीवि
काकृत्य। उपनिषदमिव कृत्वा। उपनिषत्कृत्य। औपम्ये किं। जीविकां कृत्वा। प्रादिग्रहणमगत्यर्थं। सुप्सुपेति। अत्र वार्त्तिकानि। प्रादयो गताद्यर्थे प्र
थमया। प्रगत आचार्यः प्राचार्यः। अत्यादयः क्रान्ताद्यर्थे द्वितीयया। अतिक्रान्तो मालामतिमालः। अवादयः क्रुष्टाद्यर्थे तृतीयया। अवक्रुष्टः को
किलया अवकोकिलः। पर्यादयो ग्लानाद्यर्थे चतुर्थ्या। परिम्लानोऽध्ययनाय पर्यध्ययनः। निरादयः क्रान्ताद्यर्थे पञ्चम्या। निष्क्रान्तः कौशाम्ब्या
निष्कौशाम्बिः। कर्मप्रवचनीयानां प्रतिषेधः। वृक्षं प्रति॥ १९ तिगतो वृक्षं प्रत्यक्ष इत्यादि सिद्धं। अतिमाल इति। गोस्त्रियोरिति ह्रस्वः। अवादय इति। आ
दिपदात्परिणद्धो वीरुधा परिवीरुत्। संनद्धो वर्मणा संवर्मेति। पर्यादय इति। आदिपदादुद्युक्तः संग्रामाय उत्संग्रामः। अध्ययनायेति तादर्थ्ये चतुर्थी। गुरुकुलवासा
दिना परिग्लानोऽध्ययनार्थमित्यर्थः। निरादय इति। आदिपदादुत्क्रान्तः कुलादुत्कुलः। निर्गतमङ्गुलिभ्यो निरङ्गुलं। प्रतिषेध इति। कुगतिप्रादय इति प्रसक्तसमासस्य
वक्तव्यः प्रतिषेधः स च सुराजा अतिस्वेति भाष्यादिप्रयोगात्स्वतिभिन्नानामेव कर्मप्रवचनीयानामित्यर्थः। वृक्षं प्रतीति। लक्षणेत्थंभूतेति कर्मप्रवचनीयत्व
विधिसामर्थ्यादिह समासो नेति चेत्तर्हि अपि सुतमित्युदाहार्यं अपि सुयाद्विसुमित्यादावपि पदार्थसंभावनेत्यस्य सावकाशत्वात्स्वरे विशेषसत्त्वाच्चेत्याहुः॥

त्वागतः। सूक्ष्मस्तंडुलावयवः कणस्तस्मिन् हत्वेत्यर्थः। पुरस्कृत्येति। पूर्वाधरावराणामित्यसिप्रत्ययांतोयमव्ययं। नमस्पुरसोर्गत्योरिति विसर्गस्य सः। अपुरः पश्यसीत्यत्र। स्थितमित्यध्याहारेणादर्शितं प्रत्यगतित्वात् तत्त्वाभावः। अव्यये किं। पुरं पुरीं पुरः कृत्वा गतः। अस्तं च। अव्ययमिति किं। अस्तं कृत्वा कांडं गतः क्षिप्तमित्यर्थः। अच्छमिति। अत्यो। हि गतिसंज्ञायां निपातसंज्ञावत्त्वेनाव्ययत्वात् ल्युकृत्स्यादिति भावः। अदः कृत्येति। यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणं। अदः कृतमिति। गतिरनंतर इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्रत्युदाहरणमिति। अदः कृत्वा अदः कुर्वित्यादीत्यर्थः। तिरोंतर्द्धौ। अंतर्द्धौ किं। तिरोभूत्वा स्थितः पार्श्वतो भूत्वेत्यर्थः॥ ॥ विभाषा कृञि। तिरः कृत्वेति। गतित्वाभावपक्षे तिरसोन्यतरस्यामिति सत्वमपि न भवति। तद्धि योगे गतिग्रहणानुवृत्तेः। माधवस्तु पराभवे तिरस्कार इति प्रयोगदर्शनात् सत्वविधौ गति

विभाषा कृञि। १।४।७२। तिरः कृत्य। तिरस्कृत्य। तिरः कृत्वा॥ उपाजेऽन्वाजे। १।४।७३। एतौ कृञि वा गतिसंज्ञौ स्तः। उपाजेकृत्य। उपाजे कृत्वा। अन्वाजेकृत्य। अन्वाजे कृत्वा। दुर्बलस्य बलमाधायेत्यर्थः॥ साक्षात्प्रभृतीनि च। १।४।७४। कृञि वा गतिसंज्ञानि स्युः। च्व्यर्थ इति वाच्यं। साक्षात्कृत्य। साक्षात् कृत्वा। लवणंकृत्य। लवणं कृत्वा। मान्तत्वं निपातनात्॥ अनत्याधान उरसिमनसी। १।४।७५। उरसिकृत्य। उरसि कृत्वा। अभ्युपगम्येत्यर्थः॥ मनसिकृत्य। मनसि कृत्वा। निश्चित्येत्यर्थः। अत्याधानमुपश्लेषणं तत्र न। उरसि कृत्वा पाणिं शेते॥ मध्ये पदे निवचने च। १।४।७६। एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने। मध्येकृत्य। मध्ये कृत्वा। पदेकृत्य। पदे कृत्वा। निवचनेकृत्य। निवचने कृत्वा। वाचं नियम्येत्यर्थः॥ १९ ग्रहणानुवृ

त्तिं केचिन्नेच्छंतीत्याह। उपाजेन्वाजे। एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्त्तेते। तदाह दुर्बलस्येति। साक्षात्प्रभृ। साक्षात्। मिथ्या। आम्। अद्धा। लवणम्। उष्णम्। शीतम्। उदकम्। आर्द्रम्। गतिसंज्ञासन्नियोगेन लवणादीनां पंचानाम् मकारांतत्वं निपात्यते। प्रादुस्। नमस्। आविस् इत्यादि। आकृतिगणोयं। साक्षात्कृत्ये ति। असाक्षाद्भूतं यथा साक्षाद्भवति तथा कृत्वेत्यर्थः। च्व्यंतेषु तु पूर्वविप्रतिषेधादूर्यादिच्विडाचश्चेति नित्यैव संज्ञा। तेन लवणीकृत्येत्यत्र मांतत्वं न भवति। तद्धि पाक्षिक गतिसंज्ञासंन्नियोगेन इह गणे निपातनात्। भाष्यकृता लवणशब्दस्य लवणीशब्दस्य वा विकल्पेन लवणशब्दस्यादिश्यते तस्य च संज्ञाविकल्प इत्युक्तं। उभयथापि नै रूप्यं निर्बाधं अनत्या। उरसिमनसी विभक्तिप्रतिरूपकौ। मध्ये पदे। विभाषा कृञीति वर्त्तते चकारादनत्याधान इति च। एषामनत्याधानरूपार्थविशेषे एदंतत्वमविशेषेण।

समस्यत इति व्याख्येयमित्यर्थः। तथा चेति। यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभस्तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्य
त इति भावः। कारकांशे तु कर्तृकरणे कृतेति सूत्रस्थबहुलग्रहणमुक्तार्थे साधकमित्यपि मनोरमायां स्थितं। प्रागिति। कृदन्तान्चरमपदात् सुबुत्पत्तेः पूर्वं समास इ
त्यर्थः। प्रथमान्तसुब्ग्रहणं त्विहानुवर्त्तत एव। तेन राजदर्शीत्यादौ पूर्वपदे नलोपादिकार्यं सिध्यति। परिभाषाफलं दर्शयन् गतिमुदाहरति व्याघ्रीति। व्याजि
घ्रतीति व्याघ्री आतश्चोपसर्गे इति कः। पाघ्राध्मा धेडिति शः तु संज्ञायां न भवति व्याघ्रादिभिरिति निर्देशादिति वक्ष्यते। व्याङ्प्रशब्देन गतिसमासः। सयद्यघ्र
शब्दस्य सुबन्ततामपेक्षते तर्हि सुबुत्पत्तये संख्याद्यपेक्षतः प्रागेव लिंगयोग इति लिंगनिमित्तप्रत्यये नटापाभाव्यं नतु ङीषा घ्रशब्दमात्रस्य जातिवाचित्वाभा
वात्। ततो घ्राशब्देन समास इत्यदन्तत्वाभावाज्जातिलक्षणो ङीप् न स्यादिति भावः। यद्यप्युपपदत्वेनाप्येतत्सिद्धं तथापि गतिग्रहणमाङ्घ्रशब्देन समासे पश्चा
दाघ्रशब्देन विशब्दस्य समासार्थमावश्यकमेव। आङ्पूर्वाद्धातोः कप्रत्ययविधानादाङ्युपपदसंज्ञाभ्युपगमेपि विशब्दे तदनभ्युपगमादिति बोध्यं कारकमु
दाहरति। अश्वक्रीतीति। अश्वेन क्रीता कर्तृकरणे कृतेति समासः क्रीतात्करणपूर्वादिति ङीष् सुबन्तेन समासे तु टापाभाव्यमित्यदन्तत्वाभावात् क्रीतात्करणेत्ययं
दाहरति ... ङीष् न स्यादिति ज्ञेयं। उपपदमुदाहरति। कच्छपीति। कच्छेन पिवतीति कच्छपी। सुपीति योगविभागात् कः। इहापि समासस्य सुबन्तत्वापेक्षायां टाबेव स्यान्न ङीषिति
दित्या ... प्राचा तूपपदमतिङन्तं समस्यत इत्युक्तं। तदसत्। तथा सति प्रथमान्तसुब्ग्रहणानिवृत्त्या पत्या राजदर्शी चर्मकार इत्यादौ नलोपो न स्यादय
दन्तत्वात्। प्रादित्यादावतो गुण इति पररूपं च स्यात्। ग्यादेतत्। कच्छेन साधनेन पिवतीत्यर्थाभ्युपगमे कच्छस्य कारकत्वेन कच्छपीति रूपसिद्धौ नेदमुपपदस्यास
रणोदाहरणमिति चेदेवं तर्हि मृषावापि रीत्युदाहर्तव्यं। सुप्यजाताविति णिनौ कृते मृषोपपदस्य कृदन्तेन समासे प्रातिपदिकान्तेत्यादिना पूर्वपदस्थान्निमित्तात्य
रस्य समासप्रातिपदिकान्तनकारस्य णत्वं सिध्यति सुबन्तेन समासे त्वन्तरंगत्वान्नान्तलक्षणो ङीप् स्याद्धापिनी शब्देन समासे गर्गभगिनीत्यत्रेव णत्वं न स्यादित्येको अ
न्ये तु कच्छेन हेतुना पिवतीत्यर्थविवक्षायां कच्छस्याकारकत्वात् कच्छपीत्युपपदस्योदाहरणं सम्यगेवेत्याहुः। अमैवाव्ययेन। पूर्वेणा सिद्धे नियमार्थमिदं। तुल्यवि
नमिति। एतच्चाध्याहारेणालभ्यं तदेवेति। यस्मिन्नुपपदे येन वाक्येन अमेव विहितस्तदेवोपपदममव्ययेन समस्यते नान्यदित्यर्थः। नियमबललभ्योयमेवका
रो न तु सूत्रस्थः। स्वादुंकारमिति। स्वादुमिणमुल्। अव्ययेनेति किं ॥

॥ तत्रोपपदं। सप्तमीस्थमित्येतद्व्याचष्टे सप्तम्यन्त इत्यादिना। तद्वाचकं पदमिति। एतच्चोपपदमित्यन्वर्थसंज्ञाबलाल्लभ्यते। अत एव संज्ञाविधावपि सप्तमीग्रहणेन स
प्तम्यन्तं गृह्यते। धातोरिति पृथगधिकारबलात्सन्निहिते धात्वधिकार इति लभ्यते। तेन ञिष्विदा इत्यस्य लुङि तेऽस्विदत् इत्यादावुपपदे धातोः ञ्विरित्ययोगो न भवति। तत्र
ग्रहणं व्याचष्टे तस्मिन्सत्येवेति। उपपदे सत्येवेत्यर्थः। तत्र ग्रहणाभावे तु धः कर्मणि ष्ट्रन् इत्यादाविव कर्मण्यण् इत्यादावपि कर्मण्यभिधेये अण् इत्याद्यर्थः स्यात्। तथा
च कर्तर्यण् प्रत्ययो न स्यात्। किं च सप्तम्यन्तनिर्देशस्योपपदसंज्ञार्थतया चरितार्थत्वात्तद्बलादपि धातोः कर्तर्यण् प्रत्ययः संभाव्येत। सति तु तत्रग्रहणे कुंभादावुप
पदे सप्रत्ययोत्पत्तौ निमित्तत्वप्रतीत्या केवलादण्प्रत्ययशङ्कैव नास्ति। एवं स्थिते धः कर्मणि इत्यादौ क्वचिदर्थग्रहणं व्याख्यानादित्याहुः। अन्ये तु तत्रोपपदमित्यस्य

तत्रोपपदं सप्तमीस्थं। ३।१।९२। सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्। तस्मिंश्च सत्येव वक्ष्यमा
णः प्रत्ययः स्यात्। उपपदमतिङ्। २।२।१९। उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङ्न्तश्चाऽयं समासः। कुम्भं करोतीति कुम्भकारः। इह
कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यं। अतिङ् किं। मा भवान्भूत्। माङि लुङि इति सप्तमीनिर्देशान्माङुपपदं। अतिङ्ग्रहणं ज्ञापयति। सु
पेत्येतन्नेहाऽनुवर्त्तत इति। पूर्वसूत्रेऽपि गतिग्रहणं पृथक् कृत्वा अतिङ्ग्रहणं तत्रापकृष्यते सुपेति च निवृत्तं। तथा च गतिकारकोपपदानां कृद्भिः स
ह समासवचनं प्राक् सुबुत्पत्तेरिति सिद्धं। व्याघ्री। अश्वक्रीती। कच्छपी। अमैवाऽव्ययेन। २।२।२०। अमैव तुल्यविधानं यदुपपदं तदेवाऽव्यये
न सह समस्यते। स्वादुङ्कारं। नेह। कालसमयवेलासु तुमुन्। कालः समयो वेला वा भोक्तुम्। अमैवेति किं। अग्रे भोजं। अग्रे भुक्त्वा। विभाषाग्रेप्रथम
पूर्वेषु इति क्त्वाणमुलौ। अमा चान्येन च तुल्यविधानमेतत्॥ ११ कर्मण्यणित्यादेश्चैकवाक्यतया प्रवृत्ताउपपदसंज्ञाया निर्विषयत्वापत्तेस्तत्रग्रहणं वि
नापीष्टं सिध्यत्येवेत्याहुः। समर्थेनेति। तेन महान्तं कुंभं करोतीत्यादौ नातिप्रसंगः। अतिङ्। तश्चेति। सुविति तु अनुवर्त्तत एवेति। अतिङ्। तमिति नोक्तमिति भावः। कुंभ
अस् इति। अमिति तु नोक्तं कृद्योगषष्ठीविधानात्। अतिङ् किमिति। सुपेत्यधिकारात्किमनेनेति प्रश्नः। उत्तरोवक्ष्यमाणं ज्ञापकं मनसि निधाय प्रत्युदाहरति मा भवा
निति। समासाभावसूचनाय भवानिति मध्ये प्रयुक्तं। पूर्वसूत्र इति। कुगतिप्रादयः। गतिः इति योगं विभज्य कुप्रादयः सुबन्तास्सुबन्तेन समस्यन्ते गतिस्तु सुबन्तोऽतिङन्तेन

दालोपः। तिरश्चोऽदि स्यंदेरिति वदितिह रदत्तः। तत्रस्त्र चोदीर्घे णापि न्दतीयांतत्वोपपत्तेः। अलंकृत्वेति। अलंखल्वोः प्रतिषेध्योरिति सूत्रस्योपदं शस्तनीपायामित्यस्मा
त्पूर्वत्वान्नेह समासः तत्पुरुषे असाधारणान् समासांतानाहात्तत्पुरुषस्येति। अलोंत्यविधिं बाधित्वा प्रत्ययः परश्चेति परत्वात्तत्पुरुषात्परस्त्वाच्च प्रत्ययो भवति। यथा गा
योऽष्टकः किलेपिगापाभ्यां पर एव टज्भवति न त्वेतावयवः। अमत्तु अनुबंधकरणसामर्थ्यात्परविधिर्बाध्यते। एवं च लाघवात्तत्पुरुषादंगुलेरिति वक्तव्ये तत्पुरुषस्यांगु
लेरिति तु समासांतापेक्षया अवयवषष्ठीत्याहुः। द्व्यंगुलमिति। तद्धितार्थेति समासः। द्विगोर्नित्यमिति मात्रचो लोप इति दृत्तिकृत्। मनोरमायां तु द्व्यसचो लुगिति।
स्थिते। द्व्यह्नार्थमिति। अन्होरात्रिमिति षष्ठीतत्पुरुषस्यासंभवादिति भावः। ननु अहः शब्दस्याहस्तुल्यतायां रात्रिशब्दस्य रात्रितुल्यतायां गौणत्वसंभवादहश्च रात्रिश्चे
ति कर्मधारयोऽस्त्विति चेन्न मुख्यसंभवे गौणग्रहणायोगात्। हेमंतशिशिरावहोरात्रे चेत्यत्र द्वंद्वे समासांतदर्शनाच्च अहोरात्र इति। जातिरप्राणिनामित्येकवद्भावः। स नपुंस
कमित्येतद्बाधित्वा परत्वाद्रात्राह्नाहाः पुंसीति पुंस्त्वं। एतेनैकवद्भावात्। क्लीवतेति माचो ग्रंथः परास्तः। मासेन स्यादहोरात्र इत्यादिग्रंथविरोधाच्च। सर्वरात्र इति। पूर्वकालैके
ति समासः। पूर्वरात्र इति। पूर्वापराधरोत्तरमित्येकदेशिसमासः। यदा तु रात्रिशब्दस्यैकदेशे लक्षणा स्वीकृत्य कर्मधारयोऽभ्युपगम्यते तदा पूर्वरात्रिरित्येव भवति। द्विरा
त्रमिति। संख्यापूर्वं रात्रं क्लीबमिति। वक्ष्यते अन्हष्टखोरेव न स्त्रद्धित इत्येव सिद्धे नियमार्थमिदं स एवकारस्त्वन्ह एव टखोरिति विपरीतनियमशंकानिरासार्थः। आ
त्माध्वानौ ख इति प्रकृतिभावविधानेन तन्निरासे प्रतिपत्तिगौरवं स्यादिति भावः। टखोरेवेति किं। अन्हा निर्वृत्तमान्हिकं। कालादित्यधिकारे तेन निर्वृत्तमिति ठञ्। टिलो
पाभावादल्लोपो न इत्यकारलोपः। उत्तमाह इति। सर्वैकदेशसंख्यातेत्यत उत्तमशब्दस्यापाठादन्हादेशो न। व्यहीन इति। समासांतविधेरनित्यत्वान्न टच्। सति तु
तस्मिन्नन्हादेशः प्रसज्येत। न च नांतस्य खे परे टिलोपविधिसामर्थ्यान्न टजिति वाच्यं। अहीन इत्यत्र तस्य सावकाशत्वात्। अनित्यत्वादिति। अत्र च लिंगं शक्तिलां
गलांकुशेत्यत्र घटीग्रहणं। मद्रराज्ञीति। यदि चात्र टच् स्यात्तदा भस्याढ इति पुंवद्भावे टिलोपे च मद्रराजीत्यनिष्टरूपं स्यादिति भावः॥ ९ ॥ ॥

अथपूर्वसूत्रवैयर्थ्य
कुंभकारः। असतित्व्यव्ययग्रहणे अमैवपत्तुल्यविधाने तदेवकेनचित्समर्थेनसमस्येत। तथासतिस्याद् उंकारमित्यत्रैवसमासः स्यान्नतुकुंभकारइत्यत्र
भीत्या अव्ययविषयकनियमइतिचेत्तर्हि अमंतविषयकएवकिन्नस्यात् अमंतेनयः समासः सोमैवतुल्यविधानस्येति। तथाचाग्रेभोजमित्यत्रसमासोमाभूत् अग्रेभुक्त्वाका
लोभोक्तुमित्यत्रतुस्यादेवेतिभावः। तदेवेति किं। कालोभोक्तुं। समयोभोक्तुं। अमैवेत्येवकारेणामाचान्येनतुल्यविधानस्योपपदस्यसमासनिवारणेपितुमुनातुल्यविधानस्य
स्यादेवातस्तन्निवारणायतदेवेत्युक्तं॥ ७३॥ तृतीयाप्रभृतीन्यन्यतरस्यां। उभयत्रविभाषेयं। अमैवतुल्यविधानस्यप्राप्ते अमाचान्येनतुल्यविधानस्याप्राप्ते चारंभः

तृतीयाप्रभृतीन्यन्यतरस्यां। २।२।२१। उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाऽव्ययेनसहवासमस्यन्ते। मूलकेनोपदंशम्भुङ्क्ते। मूल
कोपदंशं॥ क्त्वाच। २।२।२२। तृतीयाप्रभृतीन्युपपदानि क्त्वानेनसहवासमस्यन्ते। उच्चैःकृत्य। उच्चैःकृत्वा। अव्ययेयथाभिप्रेतेतिक्त्वा। तृतीयाप्रभृती
नीतिकिं। अलंकृत्वा। खलुकृत्वा। तत्पुरुषस्याङ्गुलेःसंख्याव्ययादेः। ५।४।८६। संख्याव्ययादेरङ्गुल्यन्तस्यतत्पुरुषस्यसमासांतोऽच्स्यात्। द्वेअङ्गु
लीप्रमाणमस्यद्व्यङ्गुलन्दारु। निर्गतमङ्गुलिभ्योनिरङ्गुलम्। अहःसर्वैकदेशसंख्यातपुण्याच्चरात्रेः। ५।४।८७। एभ्योरात्रेरच्स्याच्चात्संख्याव्ययादेः
अहर्ग्रहणंद्वंद्वार्थं। अहश्चरात्रिश्चाऽहोरात्रः। सर्वरात्रिः। सर्वरात्रः। पूर्वरात्रे। पूर्वरात्रः। संख्यातरात्रः। पुण्यरात्रः। द्वयोरात्र्योस्समाहारः। द्विरात्रम्।
अतिक्रान्तोरात्रिं। अतिरात्रः। राजाहस्सखिभ्यष्टच्। ५।४।९१। एतदन्तात्तत्पुरुषादच्स्यात्। परमराजः। अतिराजौ। कृष्णसखः। अन्हष्टखोरेवा। ६।
४।१४५। टिलोपस्यान्नान्यत्र। उत्तमाहः। द्वेअहनीभृतोद्व्यहीनःक्रतुः। तद्धितार्थेद्विगुः। तमधीष्टइत्यधिकारेद्विगोर्वेत्यनुवृत्तौ। रात्र्यहःसम्वत्सराच्चे
तिखः। लिङ्गविशिष्टपरिभाषायाअनित्यत्वान्नेह। मद्राणांराज्ञी। मद्रराज्ञी॥ ७९ ना प्राप्तेयथा। उपदंशस्तृतीयायांमूलकेनोपदंशं मूलकोपदंशं अमा
न्येयथा। अव्ययेयथाभिप्रेताख्यानइति क्त्वाणमुलौ। उच्चैःकारं इहसमासपक्षेगइदत्तरपदप्रकृतिस्वरः आदिर्णमुल्यन्यतरस्यामित्याद्युदात्तता। असमासेतुउच्चैरि
त्यंतोदात्तत्वं। उदिचैर्डैसिरितिव्युत्पत्तिपक्षेप्रत्ययस्वरस्याव्युत्पत्तिपक्षेतुफिषइत्यस्यचप्रवृत्तेरित्याहुः। मनोरमायांतुउच्चैरित्यंतोदात्तस्वरादित्युक्तंथायाठादितिस्थितं
अमेत्यनुवर्त्ततइत्याह। अमंतेनेतितेनेहना। पर्याप्तोभोक्तुं। पर्याप्तिवचनेष्वितितुमुन्। क्त्वाच। क्त्वेतितृतीयांता। आतइतियोगविभागः॥ ९ ॥

पिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतं भाष्ये। द्विगोरिति ङीप् पुनः शब्दत्वाच्च एव। अपरिमाणे निषेधात्। अत एवावेवानत्वात्तस्य येवोदाहरति द्व्यन्हेति। अन्होन्ह इति सूत्रे अन्हादेशं प्रत्याख्याय च प्रत्यन्तवेत्यतोऽन्वमनुवर्त्य टजपनादेऽजिति व्याचक्षाणस्य भाष्यकारस्य मते तु निर्विवाद एवात्र टाप्। कथं तर्हि कालनिर्णयदीपिकायां त्र्यन्हीति प्रयोग इति चेदत्राहुः त्र्यहनीयस्यां तिथाविति बहुव्रीहो नांतलक्षणो ङीप् बोध्यः। द्व्योरन्होर्भव इति व्याख्यानग्रंथस्तु फलितार्थकथनपरतया नेय इति। संख्यादि भिन्नस्य तत्पुरुषस्य समाहारे वृत्त्यसंभवादाह स्पष्टार्थमिति। पुण्याहमिति। पुण्यसुदिनाभ्यामिति क्लीबत्वं वक्ष्यति। उपांत्यस्यापीति। यथाप्रथमयोरिति प्रथमाद्वितीययोर्ग्रहणं द्विवचन

अग्राख्यायामुरसः ५।४।९३ टच् स्यात्। अश्वानामुर इवाश्वोरसम्। मुख्योऽश्व इत्यर्थः। अनोऽश्मायस्सरसां जातिसंज्ञयोः ५।४।९४ टच् स्यात् जातौ संज्ञायां च। उपानसम्। अमृताश्मः। कालायसम्। मण्डूकसरसमिति जातिः। महानसम्। पिण्डाश्मः। लोहितायसम्। जलसरसमिति संज्ञा। ग्रामकौटाभ्यां च तक्ष्णः ५।४।९५ ग्रामस्य तक्षा ग्रामतक्षः। साधारण इत्यर्थः। कुट्यां भवः कौटः। स्वतन्त्रः। स चासौ तक्षा च कौटतक्षः। अतेः शुनः ५।४।९६ अतिश्वो वराहः। अतिश्वी सेवा। उपमानादप्राणिषु ५।४।९७ अप्राणिविषयकोपमानवाचिनः शुनष्टच् स्यात्। आकर्षः श्वेव आकर्षश्वः। अप्राणिषु किं। वानरः श्वेव वानरश्वा। उत्तरमृगपूर्वाच्च सक्थ्नः ५।४।९८ चादुपमानात्। उत्तरसक्थं। मृगसक्थं। पूर्वसक्थं। फलकमिव सक्थि फलकसक्थं। नावो द्विगोः ५।४।९९ नौशब्दान्ताद् द्विगोष्टच् स्यान्न तु तद्धितलुकि। द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः। द्विगोर्लुगनपत्य इत्यत्र अचीत्यपकर्षणाल्लुक्। पञ्चनावप्रियः। द्विनावं। त्रिनावं। अतद्धितलुकीति किं। पञ्चभिर्नौभिः क्रीतः पञ्चनौः। अर्धाच्च ५।४।१०० अर्धान्नावष्टच् स्यात्। नावोऽर्धं अर्धनावं। क्लीबत्वं लोकात्। खार्याः प्राचाम् ५।४।१०१ द्विगोरर्धाच्च खार्याष्टज्वा स्यात्। द्विखारं। द्विखारि। अर्धखारं॥ ९

निर्देशात्तथेत्याहुः। उत्तमग्रहणसामर्थ्यादंतयोर्द्वयोर्ग्रहणं। उत्तमो चैकश्चेति विग्रहे सोत्र द्विवचनमिति तेषामाशयः॥ ॥ अग्राख्यायां। पंचम्यर्थे सप्तमी। अर्थप्रधानो अग्रवाचीय उरःशब्दस्तदंतात्तत्पुरुषाट्टच् स्यात्। अग्राख्यायां किं। देवदत्तस्योरो देवदत्तोरः। ग्रामकौटा। जातिसंज्ञयोरिति नानुवर्तते। ग्रामेति किं। राजतक्षा राजतक्षा। अतिश्व इति। श्वानमतिक्रांतो जवेनेत्यर्थः। अतिश्वीति। नीचेत्यर्थः।

विशेषितमितितत्रदंतविधिर्लभ्यतेग्रहणवत्तेतिनिषेधस्तुप्रत्ययविधिविषयइत्युक्तत्वात्तेनमहानबाहुर्वरतिमहाबाहुरितिप्रयोगोभवतिपरममहत्परिमाणमित्य
त्रपरममहतोद्रव्यस्यपरिमाणमितिषष्ठीतत्पुरुषोभ्युपगम्यतइतिनतत्रात्वप्रसक्तिरितिवृद्धाः।यत्तुवर्द्धमानेनोक्तंइष्टकेषीकामालानामित्यत्रत्तदंतविध्युपसंख्या
नसामर्थ्यादुत्तरपदाधिकारेतदंतविधिर्नास्तितेनपरममहतश्चात्वंनेतितद्भाष्यकैयटविरुद्धंतथाहि।येनविधिरितिसूत्रेपदाधिकारेप्रयोजनमिष्टकचितं
पक्वेष्टकचितमितिभाष्येउदाहृतंकैयटेनचपदशब्देनउत्तरपदंगृह्यतइतिव्याख्यातंएतदेवार्थतःकाशिकायामुपनिबद्धंनतुइष्टकेषीत्यत्रकात्यायनोक्तं

अष्टनःकपालेहविषि।अष्टाकपालः।गविचयुक्ते।गोशब्देपरेयुक्तइत्यर्थेगम्येऽष्टनआत्वंस्यात्।अष्टागवंशकटं।अचप्रत्यन्ववेत्यच्।ऽजितिपो
गविभागाद्बहुव्रीहावप्यच्।अष्टानांगवांसमाहारः।अष्टगवं।तत्रयुक्तत्वाच्छकटमप्यष्टागवमितिवा।द्व्यष्टनःसंख्यायामबहुव्रीह्यशीत्योः
।६।३।४७।आत्स्यात्।द्वौचदशचाद्वादशाद्व्यधिकादशेतिवा।द्वाविंशतिः।अष्टादश।अष्टाविंशतिः।अबहुव्रीह्यशीत्योःकिं।द्वित्राः।द्व्य
शीतिः।प्राक्शतादित्युक्तेर्नेहद्विशतं।द्विसहस्रं।त्रेस्त्रयः।६।३।४८।त्रिशब्दस्यत्रयस्यात्पूर्वविषये।त्रयोदश।त्रयोविंशतिः।बहुव्रीहौतु।त्रिदश।

सुपसंख्यानमस्ति।नतुप्रतिपदोक्तसमासेयदुत्तरपदंतस्मिन्नेवपरेआत्वंस्यान्नान्यत्रेतिकिमनेनसमानाधिकरणग्रहणेनेत्यतआहमहाबाहुरिति।बहुव्रीहिर
यंसचसामान्यशास्त्रनिर्वर्त्तत्वाल्लाक्षणिकइतिभावः॥ ॥ अष्टनःकपालइति।कपालेउत्तरपदेहविषिवाच्येअष्टनआत्वंवक्तव्यमित्यर्थः।अष्टाकपाल
इति।संस्कृतंभक्षाइत्यणः।द्विगोर्लुगनपत्यइतिलुक्।अध्यर्धपूर्वेत्यणोलुगितिकेषांचिद्व्याख्यानंतुमासादिकंसंस्कृतमित्यणोऽनार्हीयत्वात्त्रेस्त्रयः।स
धिवेलादिषुत्रयोदशीतिपाठात्संज्ञायमादेशइतिध्वनयन्नाह।त्रयस्स्यादिति॥

ज्ञापकादसामान्यवचनेनाप्युपमानस्य समास इति माधवः। द्विनावरूप्यम् इति। हेतुमनुष्येभ्य इति रूप्यः। पञ्चनोरिति। आर्हीयष्ठक्। अध्यर्धपूर्वेति लुक्। खार्याः। द्विगोरिति॥
खारीशब्दान्ताद्द्विगोरित्यर्थः॥ ॐ॥ अर्द्धखारीति। परवल्लिङ्गमिति स्त्रीत्वे। अर्धखारमिति। अर्धनावमिवक्लीबत्वं लोकात्। टज्वास्या द्विगाविति। द्विगाविति किं।
द्वयोरञ्जलिः। अञ्जलिः। अञ्जलमिति। समाहारे द्विगुः। अतद्धितलुकीत्येवेति। एतच्च पूर्वसूत्रेऽपि बोध्यं। अञ्जलिभ्यां क्रीत इति। नाञ्जलिः पाणिद्वयं तस्य मूल्यत्वासं

अर्द्धखारि। द्वित्रिभ्यामञ्जलेः। ५।४।१०२। टज्वास्याद्द्विगोः। अञ्जलेरञ्जलि। अतद्धितलुकीत्येव द्वाभ्यामञ्जलिभ्यां क्रीतः। द्व्यञ्जलिः। ब्रह्मणो जान
पदाख्यायां। ५।४।१०४। ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदत्वमाख्यायते चेत्। सुराष्ट्रे ब्रह्मा। सुराष्ट्रब्रह्मा। सुराष्ट्रब्रह्मः। कुमहद्भ्यामन्यतर
स्यां। ५।४।१०५। आभ्यां ब्रह्मणो वा टच् स्यात्तत्पुरुषे। कुत्सितो ब्रह्मा। कुब्रह्मः। कुब्रह्मा। आन्महतः समानाधिकरणजातीययोः। ६।३।४६। महत आ
कारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाब्रह्मः। महाब्रह्मा। महादेवः। महाजातीयः। समानाधिकरणे किं। महतः सेवा मह
त्सेवा। लाक्षणिकस्य विहाय प्रतिपदोक्तस्य सन्महदिति समासो ग्रहीष्यत इति चेत्। महाबाहुर्न स्यात्। तस्माल्लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येति प
रिभाषा नेह प्रवर्तते समानाधिकरणग्रहणसामर्थ्यात्। आदिति योगविभागादात्वं प्रागेकादशभ्य इति निर्देशाद्वा। एकादश। महतीशब्दस्य पुम्व
त्कर्मधारयेति पुम्वद्भावे कृते आत्वं। महाजातीया। महदात्वे घासकरविशिष्टेषूपसंख्यानं पुम्वद्भावश्च। असामानाधिकरण्यार्थमिदं। महतो
महत्या वा घासः। महाघासः। महाकरः। महाविशिष्टः॥

१ भवान्किंतु अञ्जलिपरिमितो व्रीह्यादिर्विवक्षितस्तस्य परिमाणत्वात् अञ्जलिरित्यत्र ठञ्, त
स्यत्वध्यर्धपूर्वेति लुक्। ब्रह्मणः॥ जनपदे भवो जानपदः। अनेकयोरिति बहुवचनप्रधानो निर्देशस्तस्याख्यायां सत्यां सत्यासमासेनेत्येतल्लभ्यते तदाह समासेन जानप
दत्वमिति। कस्येत्याकाङ्क्षायां सन्निधानाद्ब्रह्मण इति लभ्यते। सुराष्ट्रे ब्रह्म इति। सप्तमीति योगविभागात्समासः। जानपदेति किं। देवब्रह्मा नारदः। कुब्रह्म इति। ब्राह्म
णपर्यायो ब्रह्मन् शब्दः। आन्महतः। तकारस्योच्चारणार्थो न तु सर्वादेशार्थ इत्याह। आकारोऽन्तादेशः स्यादिति इहोत्तरपदाधिकारे पूर्वपदमाक्षिप्यते तच्च महता

त्यद्येतत्किंतु षष्ठी द्विवचनमित्याशयेनाह। एतयोरिति। द्वंद्वतत्पुरुषार्थयोरित्यर्थः। एवं चानुप्रयोगेपि तद्वल्लिंगं सिद्धं। उपमेयेप्यभ्युपगमाद्वृत्तिरपि षष्ठ्यंता
देवेत्याशयेनाह परपदस्येवेति। भाष्ये तु लिंगमशिष्यं लोकाश्रयत्वाल्लिंगस्येति प्रत्याख्यातमिदं सूत्रं। अस्मिंश्च प्रत्याख्याते तुल्यन्यायत्वाल्लिंगानुशासनं सर्वमेव
प्रत्याख्यातं तथापि तत्सौढिवादमात्रं अन्यथा व्याकरणस्यैव वैयर्थ्यप्रसंगात्। गतिसमासेष्विति। गतिग्रहणं प्रादीनामुपलक्षणं मुख्यस्य गतेरसंभवादित्याशये
नोदाहरति निष्कौशांबिरिति। अतंत्रमिति। अत्र च लिंगं पूर्ववद्ग्रहणं अन्यथा निपातनादेव सिद्धे किं तेनेति भावः। इह समासार्थस्य वा पूर्ववल्लिंगातिदेशः। उत्त
रपदार्थस्य वा। उभयथाप्यश्ववडवौ शोभनावित्यनुप्रयोगेपि पुंस्त्वं सिध्यति। ननु समासार्थस्य पुंस्त्वेपि स्त्रीप्रत्ययस्त्रीत्वस्य निवर्त्तनाट्टापः अवणप्रसंगः न चाति
देशवैयर्थ्यं। शासिनत्व प्रवृत्त्या अनुप्रयोगे पुल्लिंगत्व लाभेन च तत्सार्थक्यादिति चेन्न। अहः। इहैव निपातनाद्दश्ववडव पूर्वापराधरोत्तराणामित्यत्र निपातनाद्वा
टायो निवृत्तिरिति। अहोरात्र इति। प्राचा तु अहोरात्रमित्युदाहृतं तन्नेति। प्रागेवोक्तं। अत्र वदंति। रात्राह्नेत्यनेन रात्रादीनामेव पुंस्त्वं विधीयते तदंतस्य तु परवल्लिं

॥अपथं नपुंसकं।२।४।३०। तत्पुरुष इत्येव। अन्यत्र तु। अपथो देशः। कृतसमासान्तनिर्देशान्नेह। अपन्थाः ॥

गमित्येव सिध्यति। अत एव भिन्नविषयत्वाद्विप्रतिषेधे परं कार्यमिति न प्रवर्त्तते। एवं च रात्राह्नेति पुंस्त्वाप्रवृत्त्या समाहारे स नपुंसकमित्येव भवति परवल्लिं
गापवादत्वादिति। तन्न। उक्तरीत्या द्व्यहत्र्यहादावपि नपुंसकत्वप्रसंगात्। न चेष्टापत्तिः। द्व्यहस्त्र्यह इति प्राचा उदाहृतत्वेन स्वमूलग्रंथेन सह विरोधापत्तेः तेन
त्रैशब्द्ये होरात्र इत्यादिकोशविरोधाच्च। तस्माद्रात्रायं तस्यैवायं पुंस्त्वविधिर्द्वंद्वतत्पुरुषयोरिति प्रकरणात्तथा च भिन्नविषयत्वाभावाद्रात्राह्नेति पुंस्त्वं समाहारन
पुंसकत्वं परत्वेन बाधत एव। संख्यापूर्वमिति। अत्र चापथपुण्याहो नपुंसको संख्यापूर्वा रात्रिरिति लिंगानुशासनसूत्रं मूलं। संख्याग्रहणं उक्तनिमात्रनिमन्या
योन प्रवर्त्तते ह्यष्टनः संख्यायामिति सूत्रेणाशीतिपर्युदासादित्याशयेनोदाहरति। द्विरात्रं गणरात्रमिति। गणानां बहूनां रात्रीणां समाहार इति विग्रहः ॥ ॥
अपथं नपुंसकं। तत्पुरुषस्त्वेवेति। द्वंद्वग्रहणं तु नानुवर्त्तते अयोग्यत्वादिति भावः। अपंथा इति। पथो विभाषेति समासांतविकल्पः। इदं सूत्रं शक्यमकर्त्तुं पथः सं
ख्याव्ययादेरिति वक्ष्यमाणवार्त्तिकेन गतार्थत्वात् प्रसंगादाह ॥

सुजर्थे बहुव्रीहिरिति। संख्यया व्ययेत्यादिनेति शेषः। एकादिरिति। अदुगिति छेदः। पररूपं तु ककारोच्चारणसामर्थ्यान्न भवति। षाष्ठे वेति। संख्याया विधार्थे ध्वादिना वि
हितस्य धाप्रत्ययस्यैवेह ग्रहणं। प्रत्ययाप्रत्यययोरिति परिभाषया। तेनेह न। षड् दधातीति षड्धा। आतोऽनुपसर्गे कः। या पृषोदरादिनीति षड्दन्ता अस्य षोडन्। वयसि दन्त

सुजर्थे बहुव्रीहिः। अशीतेर्गुण्यशीतिः। प्राक्शतादित्येव। त्रिशतं। त्रिसहस्रं। विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्। ६।३।४९। द्व्यष्टनोस्त्रेश्च प्रागुक्तम्वा
स्याच्चत्वारिंशदादौ परे। द्विचत्वारिंशत्। द्वाचत्वारिंशत्। अष्टचत्वारिंशत्। अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्। त्रयश्चत्वारिंशत्। एवम्पञ्चाशत्
षष्टिसप्ततिनवतिषु। एकादिश्चैकस्य चादुक्। ६।३।७६। एकादिर्नञ्प्रकृत्या स्यादेकस्य चादुगागमश्चानञो विंशत्या समासे कृते एकशब्दे
न सह वृत्तीयेति योगविभागात्समासः। अनुनासिकविकल्पः। एकेनन्विंशतिः। एकान्नविंशतिः। एकादूनविंशतिः। एकोनविंशतिरित्यर्थः।
षष उत्वन्दतृदशधासूत्तरपदादेः ष्टुत्वञ्च धासु वेति वाच्यं। षोडन्। षोडश। षोढा। षड्धा। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः। २।४।२६। एतयोः परप
दस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्द्धं पिप्पल्याः अर्द्धपिप्पली। द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः। पञ्चसु क
पालेषु संस्कृतः पञ्चकपालः। पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्य्यै। अलङ्कुमारिः। अत एव ज्ञापकात्स
मासः। निष्कौशाम्बिः। पूर्ववदश्ववडवौ। २।४।२७। द्विवचनमतन्त्रम्। अश्ववडवौ। अश्ववडवान्। अश्ववडवैः। रात्राह्नाहाः पुंसि। २।४।२९।
एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययम्परत्वात्समाहारनपुंसकतां बाधते। अहोरात्रः। रात्रेः पूर्वभागः पू
र्वरात्रः। पूर्वाह्णः। द्व्यहः। संख्यापूर्वं रात्रं क्लीबं। द्विरात्रं। त्रिरात्रं। गणरात्रं॥ ॥ स्येति द्वन्द्वादेशः। परवल्लिङ्गादितरेतरयोगे द्वन्द्वोऽत्र गृह्यते न समाहारे द्वन्द्वः
स नपुंसकमित्यपवादस्य वक्ष्यमाणत्वात्। तच्चेद्द्वन्द्वतत्पुरुषयोरिति न सप्तमी द्विवचनं। तथात्वे द्वन्द्वे तत्पुरुषे च यदुत्तरपदं तद्वल्लिङ्गं पूर्वपदस्यातिदिश्येत। पर।
परस्य संबन्धिशब्दत्वेन पूर्वपदाक्षेपकत्वात्। ततश्च मयूरीकुक्कुटावित्यत्र पूर्वपदे इकारनिवृत्तिप्रसंगः। कुक्कुटमयूर्यौ अर्द्धपिप्पलीत्यादौ तु पूर्वपदे स्त्रीप्रत्यय

टित्वान्ङीप्। द्वित्वइतिफल्गुन्योर्माणविकेइति। फल्गुनीशब्दान्नक्षत्रेणयुक्तःकालइत्यण्। तस्यलुबविशेषइतिलुप्। ततोजातार्थेफल्गुन्यषाढाभ्यांटनावितिटः टित्वान्ङीप्। नचायंगौणः यौगिकत्वात्। तथाचगौणमुख्यन्यायाप्रवृत्त्यानक्षत्रग्रहणमावश्यकमितिभावः। तिष्यपुनर्वस्वोः। विशाखानुराधाइति। विशाखेचानुराधाश्चेतिविग्रहः।तिष्यपुनर्वसवइति। तिष्यपुनर्वसुशब्दाभ्यांपूर्ववन्नक्षत्रेणयुक्तःकालइत्यण्लुबविशेषइतिचलुप्। ततोजातार्थेसंधिवेलादिसूत्रेणअण्। तस्यतुश्रविष्ठाफल्गुन्यनुराधेत्यादिनालुक्। नक्षत्रइत्यनुवर्त्तमानेपुनर्नक्षत्रग्रहणंपर्यायाणामपियथास्यादित्येतदर्थमित्याकरः। एवंचसिध्यपुनर्वसूइत्यपिसिध्यतीतिदिक्। वहुवचनस्यकिं। इदंतिष्यपुनर्वसु। चार्थेद्वंद्वइतिसमाहारद्वंद्वोयंसनपुंसकः। अनंतरस्येतिन्यायोत्रनाश्रीयतेतथात्वेद्विगुसंग्रहोनस्यादित्याशयेनाह। द्विगुर्द्वंद्वश्चेति अत्रव्याचक्षते। प्रकरणादेवानुवाच्यलाभेसंग्रहणमेतत्प्रकरणानुपातस्यापिसमाहारद्वंद्वस्यसंग्रहार्थंतेनसंज्ञापरिभाषमितिसिद्धमिति। पंचगवमिति। तद्धितार्थेत्यादिनासमाहारेद्विगुः। दंतोष्ठमिति। द्वंद्वश्चप्राणीत्यादिनासमाहारेद्वंद्वः। पंचखट्वमिति। नपुंसकह्रस्वः। पंचखट्वीति। उपसर्जनह्रस्वत्वेसत्यदंताद्द्विगोरितिस्त्रीत्वपक्षेङीप्। अत्र नोनलोपश्चेति। उत्तरपदत्वेचापदादिविधावितिप्रत्ययलक्षणप्रतिषेधादप्राप्तोनलोपइतिभावः। इहवाशब्दःस्त्रियामित्यनेनसंबध्यतेनतुद्वंद्वेन। तेननित्योनलोपइत्याह। पंचतक्षमित्यादि। पात्राद्यंतस्येति। स्त्रीत्वमितिशेषः। आकृतिगणोयंसुदिनाहमिति। प्रशस्तपर्यायःसुदिनशब्दः सुदिनासुसमासुकार्यमेतत्प्रतिचिन्वीतविशेषतः स्वयंचेत्यादिप्रयोगात्। पथःसंख्याव्ययेति। संख्याव्ययरूपोयआदिस्तस्मादित्यर्थः। त्रिपथंविपथमिति। ऋक्पूरब्धूरित्यप्रत्ययः सुपथाअतिपंथाइति। नपूजनादितिसमासांतनिषेधः। कथंतर्हिव्यध्वोदुरध्वोविपथःकदध्वाकापथस्समाइत्यमरइतिचेत्प्रमादएवायमितिवहवः। मनोरमायांतुपथेगतावित्यस्मात्पचाद्यचिपथतिव्याप्नोतीतिव्युत्पादितःपथशब्दोस्ति। तथाचत्रिकांडशेषः वाटःपथश्चमार्गःस्यादिति तेनपथशब्देनसमासेपुंस्त्वमुपपन्नंनचैवंविपथसिद्धावपिकापथोनस्यात्कादेशस्यदुर्लभत्वादितिवाच्यं। ईषदर्थेचेतितत्संभवात्कुत्सायामर्थेतुपर्यवसानादितिस्थितं। केचित्तुपथःसंख्येतिवार्त्तिकेकृतसमासांतस्यैवग्रहणंनतुपचाद्यजंतस्यतत्रवीजाभावाद्विपथःकापथइतिप्रयोगोदुरुपपादएवेत्याहुः। अत्रमाधवःपरवल्लिंगापवादत्वात्तत्पुरुषएवेदंप्रवर्त्ततेनान्यत्रविपथानगरीवहुव्रीहिरयंपंथानमतिक्रांताअतिपथाइहापिनद्विगुः ॥ ६ ॥ ॥

अर्थवाचीइति। इहकेषांचिदर्थभेदेनव्यवस्थिष्यते। साचव्यवस्थामद्यमकरंदमाक्षिकाणांवाचीमधुशब्दोद्विलिंगःचैत्रादिवाचीतुपुल्लिंगः। भूतः पिशाचेद्विलिंगः क्लिपा
वचनस्तुविशेष्यलिंगइत्येवंयथायथंज्ञेया ॥ अर्धर्चाःपुंसिचसनपुंसकमित्यनयोर्मध्येजात्याख्यायामितिचतुःसूत्र्याःसंगतिरिहचिंत्या। वहूनांवचनंप्रति

अर्द्धर्चाः पुंसिच। २। ४। ३१। अर्द्धर्चादयश्शब्दाः पुंसिक्लीवेचस्युः। अर्द्धर्चः। अर्द्धर्चं। ध्वजः। ध्वजं। एवन्तीर्थशरीरमण्डपीयूषदेह अङ्कुशकलश
इत्यादि। जात्याख्यायामेकस्मिन्वहुवचनमन्यतरस्यां। १। २। ५८। एकोप्यर्थोवावहुवद्भवति। ब्राह्मणाः पूज्याः। ब्राह्मणः पूज्यः। अस्मदोद्वयोश्च।
१। २। ५९। एकत्वेद्वित्वेचविवक्षितेऽस्मदोवहुवचनम्वास्यात्। वयंब्रूमः। पक्षेऽहंब्रवीमि। आवांब्रूवइतिवा। सविशेषणस्यप्रतिषेधः। पटुरहंब्रवीमि। फल्गु
नीप्रोष्ठपदानाञ्चनक्षत्रे। १। २। ६०। द्वित्वेवहुत्वप्रयुक्तङ्कार्य्यंवास्यात्। पूर्वेफल्गुन्यौ। पूर्वाः फल्गुन्यः। पूर्वेप्रोष्ठपदे। पूर्वाःप्रोष्ठपदाः। नक्षत्रेकिं। पू
र्वेफल्गुन्यौमाणविके। तिष्यपुनर्वस्वोर्नक्षत्रद्वंद्वेवहुवचनस्यद्विवचनन्नित्यं। १। २। ६३। वहुत्वंद्वित्ववद्भवति। तिष्यश्चपुनर्वसूच। तिष्यपुनर्व
सूतिष्यइतिकिं। विशाखाऽनुराधाः। नक्षत्रेकिं। तिष्यपुनर्वसवोमाणवकाः। सनपुंसकं। २। ४। १७। समाहारेद्विगुर्द्वंद्वश्चनपुंसकंस्यात्। परवल्लि
ङ्गाऽपवादः। पञ्चगवं। दन्तोष्ठं। अकारान्तोत्तरपदोद्विगुःस्त्रियामिष्टः। पञ्चमूली। आवन्तोवा। पञ्चखट्वी। पञ्चखट्वं। अनोनलोपश्चवाद्विगुः
स्त्रियाम्। पञ्चतक्षी। पञ्चतक्षं। पात्राद्यन्तस्यन। पञ्चपात्रम्। त्रिभुवनं। चतुर्युगं। पुण्यसुदिनाभ्यामन्हःक्लीवतेष्टा। पुण्याहं। सुदिनाहं। पथः सं
ख्याव्ययादेः। संख्याव्ययादेःपरःकृतसमासान्तःपथशब्दःक्लीवमित्यर्थः। त्रयाणाम्पन्थास्त्रिपथं। विरूपः पन्थाः। विपथं। कृतसमासान्तनि
र्देशान्नेह। सुपन्थाः। अतिपन्थाः। सामान्येनपुंसकम्। मृदुपचति। प्रातःकमनीयं ॥ ९९ पादनमितिव्याख्यानात्फलितोत्रातिदेशइत्याशयेनाहएको
प्यर्थोवावहुवदिति। एवंचविशेषणादपिसिद्धमिति ध्वनयन्नुदाहरतिब्राह्मणाः पूज्याइतिजात्याख्यायांकिं देवदत्तोयज्ञदत्तः। एकस्मिन्किं। व्रीहियवौ। अस्मदो
द्वयोश्चात्चादेकस्मिन्वहुवचनमन्यतरस्यामितिचवर्त्तते तदेतदाह एकत्वेद्वित्वेचविवक्षितइत्यादि फल्गुनीप्रोष्ठपदानांच ॥ चकारेणाद्वयोरनुकर्षणादाह।

सु॥

सि.कौ. टी.त. १७:

स्यानुवर्त्तमानस्य तत्पुरुषस्य विशेषणं। तच्छब्देन उपज्ञोपक्रमौ परामृश्येते तदेतत्सकालमभिप्रेत्याह उपज्ञात इत्यादि। आख्यातुमिच्छा आचिख्यासेति कासना
इह विवक्षैव शब्दप्रवृत्तौ नियामिका न तु वस्तुस्थितिरिति ज्ञापयितुं तेन त्वदुपक्रमं सोजन्यमित्याद्यपि सिध्यति। पाणिनेरिति। कर्त्तरि षष्ठी नंदोपक्रममिति। नंदस्योपक्र-
ममिति विग्रहः। छायाबाहुल्ये। बाहुल्ये सति या छाया तद्वाचीय छायांतस्तत्पुरुष इत्यर्थः। इह कस्य बाहुल्य इत्यपेक्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्य
इति गम्यते तच्चावरकं पूर्वपदार्थभूतमेवेत्याशयेनाह पूर्वपदार्थबाहुल्य इति। बाहुल्ये किं। कुड्यस्य छाया कुड्यछाया। प्रश्लेषो वो ध्य इति केचित्तु इक्षुच्छायनिषादिन्य इ-
त्यैव पठंति। सभा। इन सभमित्यादि। इन शब्दोत्र राजपर्यायः ईश्वरशब्दश्च। ननु स्वरूपमिति वचनाद्राजशब्दस्यैव ग्रहणं युक्तं न पर्यायस्येत्यत आह पर्यायस्यैवेष्य-
त इति। एवं करिणा स्वरूपस्य विशेषाणां च निरासः। कथं तर्हि इनपतिसभामगमन्त वेपमान इति कीचकवधे। अत्र केचित्। ना पतिर्यस्यां सभायामिति बहुव्रीहौ कृते प-
श्चात्कर्मधारयः। अनन्त्कर्मधारय इत्युक्तेर्नेह क्लीबत्वमित्याहुः। रक्षितस्त्वाह। गजपतिवन्नृपतिरपि राजविशेषस्तेनात्र नानुपपत्तिरिति। अशाला च शाला वा
चोसंघातवाची च सभाशब्दस्तत्र राजामनुष्यपूर्वत्वे शालावाचिनः क्लीबत्वमुक्तमनेन तु संघातवाचिनो विधीयत इत्याह संघातार्थेति। विभाषा सेना। प्रथमार्थे
षष्ठीति सेनादिभिस्तत्पुरुषो विशेष्यते। विशेषणेन तदंतविधिस्तदाह। एतदंत इति। श्वनिशमिति। कृष्णचतुर्दशी तस्यां किल केचिच्छ्वान उपवसंति। एतच्च शा-
स्त्रभाष्ये तिर्यगधिकरणोऽस्पष्टं। तत्पुरुष इत्याद्यधिकारसूत्रस्यानैव प्रयोजनं। ननु संज्ञायां कंथोशीनरेष्वित्यादि पंचसूत्र्यां तत्पुरुषस्य नञ्समासस्य कर्म-
धारयस्य च तत्रासंभवादित्याकरे स्थितं तथैव प्रत्युदाहरति दृढसेन इत्यादि। ननु बहुव्रीहौ विशेष्यनिघ्नतान्याय्येवेति किमनेन तत्पुरुषग्रहणेन। मैवं न्या-
यापेक्षया वचनस्य बलीयस्त्वात्। किं चासति तद्ग्रहणे द्वंद्वेन पुंसकता स्यात्परवल्लिंगापवादत्वादस्य प्रकरणस्येति दिक्॥ ॥ इति तत्पुरुषः॥

राम. १५२

प्रश्नेत्यादिनापरवल्लिंगतायाः प्रतिषेधादिति। सामान्येन नपुंसकमिति। अनियतलिंगविषयकमिदं तेनादिपचति प्रातरादिरितिपुंस्त्वमेव। मृदु पचतीति। क्रिया विशे
षणत्वाद्द्वितीयान्तं। धातूपात्तभावनाप्रतिहि फलांशः कर्मीभूतः। तथाच फलसामानाधिकरण्येद्वितीया। अतएव सकृत्वा वित्यादौ कारकपूर्वैकत्वाघण्[illegible]

तत्पुरुषोऽनञ्कर्म्मधारयः। २। ४। १९। अधिकारोऽयं। संज्ञायाङ्कन्थोशीनरेषु। २। ४। २०। कन्थान्तस्तत्पुरुषः क्लीबं स्यात् सा चेदुशीनरदेशोत्पन्ना
याः कन्थायाः संज्ञा। सुशमस्याऽपत्यानि सौशमयः। तेषाङ्कन्था सौशमिकन्थं। संज्ञायां किं। वीरणकन्था। उशीनरेषु किं। दाक्षिकन्था। उपज्ञोपक्रम
न्तदाद्याचिख्यासायां। २। ४। २१। उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमि
ष्यते। पाणिनेरुपज्ञा। पाणिन्युपज्ञं ग्रन्थः। नन्दोपक्रमं द्रोणः। छाया बाहुल्ये। २। ४। २२। छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थस्य बाहुल्ये
। इक्षूणां छाया इक्षुच्छायं। विभाषा सेनेति विकल्पस्याऽयमपवादः। इक्षुच्छाया निषादिन्य इति तु आसमन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः
सभा राजाऽमनुष्यपूर्वा। २। ४। २३। राजपर्य्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात्। इनसभं। ईश्वरसभं। पर्य्यायस्यैवेष्यते। ने
ह राजसभा। चन्द्रगुप्तसभा। अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह। रक्षःसभं। पिशाचसभं। अशाला च। २। ४। २४। सङ्घातार्था या सभा तदन्त
स्तत्पुरुषः क्लीबं स्यात्। स्त्रीसभं। स्त्रीसङ्घात इत्यर्थः। अशाला किं। धर्म्मसभा। धर्म्मशालेत्यर्थः। विभाषा सेनासुराच्छायाशालानिशानां। २। ४।
२५। एतदन्तस्तत्पुरुषः क्लीबं वा स्यात्। ब्राह्मणसेनं। ब्राह्मणसेना। यवसुरं। यवसुरा। कुड्यच्छायं। कुड्यच्छाया। गोशालं। गोशाला। श्वनिशं।
श्वनिशा। तत्पुरुषोनञ्कर्म्मधारय इत्यनुवृत्तेर्नेह। दृढसेनो राजा। असेना। परमसेना। इति तत्पुरुषः॥ ११ भावनां प्रतिकरणत्वाद्धात्वर्थविशेषान्वेऽद्य

तत्तद्विशेषणानां तृतीयान्तत्वं ज्योतिष्टोमेन यजेतेति यथा। एतच्च करणे यज इति सूत्रे वृत्ति पदमञ्जर्योः स्पष्टं॥ ॥ नञ्समासकर्मधारयभिन्नस्तत्पुरुषो वस्यमा
णकार्यभाग्भवतीति सूत्रार्थः। उपज्ञा। उपज्ञायत इत्युपज्ञा आतश्चोपसर्ग इति कर्मण्यङ् उपक्रम्यत इत्युपक्रमः। कर्मणि घञ्। नोदात्तोपदेशस्येति वृद्धिप्रतिषेधः। उप

संपरत्वादन्यपदार्थे बहुव्रीहिर्विधीयते असतित्वन्यग्रहणे कंठेकाल इत्यादौ व्यधिकरणपदे बहूनां समुदाये च सावकाशं बहुव्रीहिं स्वपदार्थे द्वन्द्वान्यपदार्थेपिनी
लोत्पलं सरइत्यादौ समानाधिकरणे तत्पुरुषो बाधेत पदग्रहणं किं वाक्यार्थे माभूत् प्राहवतीनदीद्रुहमास्त्रासीरिति वाक्यार्थो गम्यते अर्थग्रहणं किं यावता प
दैनपदांतरस्य वृत्त्यसंभवादेव पदार्थे भविष्यति अत्राहुः प्रकृत्यर्थे विशिष्ट प्रत्ययार्थाभिधाने यथा स्यादन्यथा प्राधान्यात्प्रत्ययार्थमात्रवृत्त्यैतत्स्यात् तौ तु वि
त्रगुरित्येतत् षष्ठ्यर्थसंबंधमात्रपरं स्यात्तथा च देवदत्तादिभिः सामानाधिकरण्यं न स्यादिति अत्रेदमवधेयं सुपेत्येतन्नानुवर्त्ततेते नात्रानेकं प्रथमांतं मिथस्त
मस्यात्तइति पर्यवसन्नोर्थः एवंच द्विपदबहुव्रीहिरवाप एव येतु सुपेत्यनुवर्त्त्य अनेकं सुवंतं सुपा सहेति व्याचक्षते तेषां तु द्विपदबहुव्रीहिरुक्ते भ एवेति
द्वितीयादिविभक्त्यर्थक्रमेणोदाहरति प्राप्तमित्यादि यानकर्मकप्राप्तिकर्तृ उदकं विग्रहार्थः उदककर्तृकप्राप्तिकर्मेति समासार्थः विग्रहवाक्यस्य इति प्रयोगे
तत्स्याप्ययमेवार्थः अनडुत्कर्तृको वहनकर्मीभूतो रथः रथकर्मको वहनकर्ता तु समासार्थः रुद्रसंप्रदानको पहरणकर्म पशुः पशुकर्मको पहरणसंप्रदा
नं समासार्थः स्थाल्यवधिकोद्धरणकर्म ओदनः ओदनकर्मकोद्धरणावधिः स्थाली समासार्थ इत्यादि इह कर्मादीनां समासेनाभिहितत्वात्प्रथमान्तवाक्ये
धात्वर्थे प्रतिक्तप्रत्ययार्थस्य कर्तुः कर्मणो वा विशेष्यत्वात् द्वन्द्वान्वपि तत्र्ये वो विजेति प्राप्तोदकोढरथादौ उदककर्तृकप्राप्तीत्यादि वर्णनं तु युज्यते इति चेदु
च्यते एकार्थीभावादिभिर्वृत्तौ विशिष्टार्थविषयक शक्त्यन्तरमेव स्वीक्रियते न त्ववयवशक्तिः इति नानुपपत्तिः व्यपेक्षावादिभिस्त्वगत्याभिन्नैव व्युत्पत्तिः स्वी
कार्या किंच कर्तृविशिष्टप्राप्तेः पदार्थत्वे तस्यैव नामार्थत्वादुदकस्य तदभेदो वाच्यः स च बाधितः न हि कर्तृविशिष्टा प्राप्तिरुदकमिति संभवति अत एव सूत्र
नां वृत्तिधर्माणां वचनैरेव साधने स्यान्महत्तो रवमित्यादिना समर्थसूत्रे एकार्थीभावपक्ष एव प्रबल इत्युक्तं वाचाम प्रथमार्थे तु नेति शेषपदेन वा अन्यपदा
र्थ इत्यनेन वा अतिप्रसंगवारणात् प्रथमाविभक्त्यर्थ इति वचनं न कर्तव्यमिति भावः पञ्चान्यसमासो नोक्तः स शेष इति वृत्तिकारादीनां मते तु प्रथमांतानामे
व बहुव्रीहिरित्यलाभात् कर्तव्यमेवेदं वचनमिति बोध्यं प्रादिभ्य इति प्रादिभ्यः परस्य धातुजं तदंतस्य पदांतरेण बहुव्रीहिर्वा वक्तव्य इति सूत्रसिद्धांतपादः वा
चेति ॥ इदं तु वाचनिकं सर्वपदांतर्गतस्योत्तरपदस्य धातुजस्य लोपो वाच्य इत्यर्थः एतच्च प्रादीनामेव वृत्तौ विशिष्टार्थवृत्तितामाश्रित्य सूत्रजं न तोत्स्व
व्यधिकरणानामित्यादि इह शेषपदेनैव वारितौ अतिप्रसंग इति समानाधिकरणानां बहुव्रीहिरित्यपि न कर्तव्यमिति भावः ॥ ज्ञ३

शेषो बहुव्रीहिः। शिषश्च सर्वोपयोगे कर्मणि घञ्। अनुवृत्तिकृतयत्रान्यसमासो नोक्तः स शेष इत्याह। येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिसंज्ञकः समासो न विहितः स शेष इत्यर्थः। इति हरदत्तो व्याख्यत्। एतच्च प्राक्कडारात्परं कार्यमिति पाठाभिप्रायेण बोध्यम्। अस्मिंस्तु पक्षे शेषग्रहणाभावे उन्मत्तगङ्गमित्यत्र परत्वाद्बहुव्रीहिः स्यान्निरवकाशत्वाच्चाव्ययीभाव इत्युन्मत्तगङ्ग इत्याद्यनिष्टं पक्षे प्रसज्येत। आकडारादेकेति पाठाभ्युपगमपक्षे त्वेकसंज्ञाधिकारेणैवोन्मत्तगङ्गमित्यादिसिद्धेः शेषग्रहणं व्यर्थं निरवकाशयाऽव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधादतस्तत्रापि प्रयोजनमाह। द्वितीयाश्रितेत्यादिनेति शिषाधिकारस्थबहुव्रीहेरेव शेषाद्विभाषेति कप्रत्ययो नान्यस्माद्बहुव्रीहेरित्येतल्लाभार्थमपि शेषग्रहणमावश्यकमिति बोध्यम्। यस्त्रिकस्येति। यद्यपि प्रादयो गताद्यर्थे प्रथमयेत्युक्तं तथापि द्वितीयाश्रितादिभिरि

शेषो बहुव्रीहिः। २। २। २३। अधिकारोऽयं। द्वितीयाश्रितेत्यादिना यस्त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्त इत्यर्थः। अनेकमन्यपदार्थे। २। २। २४। अनेकं प्रथमान्तमन्यपदार्थे वर्तमानं वा समस्यते स बहुव्रीहिः। अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितं। प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषो ग्रामः। प्रथमार्थे तु न। वृष्टे देवे गतः। व्यधिकरणानामपि न। पञ्च भिर्भुक्तमस्य॥ प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः। प्रपतितपर्णः प्रपर्णः। नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः। अविद्यमानः पुत्रः। अपुत्रः। अस्तीति विभक्तिप्रतिरूपकमव्ययं। अस्ति क्षीरा गौः॥ ९० ॥

तिवत्प्रथमाकेनचित्सह समस्यत इति नोक्तमित्यर्थः। वार्तिककृता प्रथमयेत्युक्तावपि सूत्रकृता नोक्तमिति वा। प्रथमान्तमिति। कण्ठेकाल इत्यादिबहुव्रीहिस्तु सप्तम्यन्तपूर्वपदः ...कस्य इति भावः। अन्यस्य पदस्यार्थ इति। समस्यमानपदातिरिक्तस्य पदस्यार्थे इत्यर्थः। पदेन हि प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः कर्मकर्त्रादिरभिधीयते प्रथमान्तेन तु प्रातिपदिकार्थमात्रं। यद्यपि त्रिकपक्षे संख्या प्रत्ययार्थस्तथापि तस्याः प्रकृत्यर्थं प्रति विशेषणत्वान्न प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः प्रथमान्तस्यास्ति। एवं च द्वितीयाद्यर्थ इति फलितं। तदाह। अप्रथमाविभक्त्यर्थ इति समानेति। एतच्च शेषग्रहणाल्लब्धं। अनेकं किं बहूनामपि यथा स्यादेतच्च मूल एव स्फुटीभविष्यति। अनिर्ज्ञिघो केवलग्रहणं त्वापकीरहत्यानेकग्रहणमिह सुत्यजमित्याहुः। अन्यग्रहणं किं। बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत स्वपदार्थे हि सावकाशं तत्पुरु

एवंच सूत्रे केषांचिदनूङः समानाधिकरण इति षष्ठ्यंतपाठोऽसांप्रदायिक इति भावः। तुल्ये इत्यादि। भाषितपुंस्कमानूङ् यस्मिन्नित्यादिव्याख्यानादयमर्थो लभ्यते इति तृतीयादिषु भाषितपुंस्कमित्यत्रोपपादितोयं यत्र भाषितः पुमान्येन तद्भाषितपुंस्कमित्युच्यते तर्हि कुटीभार्यः द्रोणीभार्य इत्यादावतिप्रसंगः स्यात् भवति हि कुटशब्दो घटेषु पुल्लिंगो गेहेतु स्त्रीलिंगः द्रोणशब्दस्तु परिमाणविशेषे पुल्लिंगो गवादन्यां तु स्त्रीलिंग इति। ऊङभावो यत्रेति। यदि तु ऊङोन्यो नूङिति पर्युदासः स्यात्तर्हि टाबाद्यंतमेव गृह्येत ततः किमिति चेत् दरदो यत्यं दारदः द्व्यञ्मगधेत्यण् तस्य स्त्रियामतश्चेति लुक् दरत् सा चासौ वृंदारिका च दरद्वृंदारिकेत्यादि न सिध्येत्। नन्वत्र दर्शनीयाभार्यो यस्य दर्शनीयभार्य इत्यादाविव स्त्रीप्रत्ययः कश्चिदस्तीति भावः। न तु को पधायाः ऊङ इत्येव सूत्र्यतामिति चेन्न। बाधकबाधनार्थेन पुंवत्कर्म धारय इत्यनेन वामोरुभार्य इति कर्मधारये पुंवद्भावापत्तेः। रथयत्र प्रतिषेधसामर्थ्यात्सिद्धं तेन न दोषः। स्त्रिया इत्यस्य स्त्रीप्रत्ययपरतां वा रयति स्त्रीवाचकस्येति स्त्रीप्रत्ययस्य पुंवद्भाव इत्युक्ते तु स्त्रीप्रत्ययलोप इत्येवार्थः पर्यवस्यतीति दारदवृंदारिकेति न सिध्येत्। किंच पटुभार्य इत्यत्र उत्तरपदनिमित्ताया ङीषो निवृत्तेरच परस्मिन्निति स्थानिवद्भावाच्च ण स्यात्। अपि चावंतेरपत्यं स्त्री वतंती वतंदा चेति यत्नाल्लुक् स्त्रियामिति तस्य लुक्। शार्ङ्गरवादित्वान्ङीन् वतंती चासौ वृंदारिका च वातंड्यवृंदारिका। अत्र पुंवद्भावेन ङीनो निवृत्तावपि श्रयंगतस्य स्त्रीत्वस्यानिवृत्तत्वाल्लुक् स्त्रियामिति यञो लुक् प्रसज्येतेति भावः। ह्रस्व इति। अनेकमिति प्रथमानिर्दिष्टत्वात् प्रथमानिर्दिष्टमित्येकविभक्ति चेति वा गोशब्दस्योपसर्जनत्वादिति भावः। चित्रा अपि इति। अंतरंगानपीति न्यायादिह पूर्वं सवर्णदीर्घो न प्रवर्त्तते अन्यथा एकादेशस्य परादित्वेन सुपो लुकि चित्रगुरित्यत्र अकारेण न लभ्येतेति भावः। नेहेति। अत्रैव सूत्रे पङ्गीशब्दो भार्यम्रस्यति द्वंद्वगर्भबहुव्रीहौ पङ्गीमृदुभार्य इति भाष्योदाहरणादिति भावः। आनङिति तथा च समर्थसूत्रे भाष्ये होतृपोतृनेष्टोद्गातार इत्यत्र चतुर्णां द्वंद्वे तृतीयस्यानङ् उदाहृतः पूर्वपदासंभवेन सिध्येत् नन्वत्र नेष्टा पूर्वपदं होतुरेव पूर्वपदत्वादिति भावः। अत एवेति। पूर्वपदानां संपादे एवेत्यर्थः। चित्राजरदिति। द्वंद्वांतर्गतजरच्छब्दस्योत्तरपदत्वेप्यसामानाधिकरण्यान्न टापो निवृत्तिः। नन्वेवमपि द्वंद्वात्मकस्य पूर्वपदस्य समानाधिकरणोत्तरपदपरत्वात्पुंवद्भावे टापो निवृत्तिर्दुर्वारेति वाच्यं द्वंद्वांतर्गतचित्राजरच्छब्दयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वेपि द्वंद्वात् ॥

र्थानामितिनञः परेषामस्त्यर्थवाचिनांपदांतरेणबहुव्रीहिर्वाच्योपः अस्त्यर्थवाचिनांतुनालोपइत्यर्थः अस्त्यर्थोनांकिं अनुपनीतपुत्रकः नञः किं निर्विद्यमान
पुत्रः नन्विहसुपेत्यनउवृत्तावपिसुवित्येतदनुवर्त्ततेतथाचास्तिक्षीरेतिप्रयोगोदुर्लभइत्याशंक्यतंसाधयति। विभक्तिप्रतिरूपकमिति ॥ ॥ स्त्रियाःपुंव

स्त्रियाःपुंवद्भाषितपुंस्कादनूङ्समानाधिकरणेस्त्रियामपूरणीप्रियादिषु। ६।३।३४। भाषितपुंस्कादनूङ्ऊङोभावोऽस्यामितिबहुव्रीहिर्निपात
नात्पञ्चम्याअलुक्षष्ठ्याश्चलुक्। तुल्येप्रवृत्तिनिमित्तेयदुक्तपुंस्कंतस्मात्परऊङोभावोयत्रतथाभूतस्यस्त्रीवाचकस्यशब्दस्यपुंवाचकस्येवरू
पंस्यात्समानाधिकरणेस्त्रीलिङ्गेउत्तरपदेनतुपूरण्यांप्रियादौचपरतः। गोस्त्रियोरितिह्रस्वः। चित्रागावोयस्येतिलौकिकविग्रहे। चित्राअस्गोअस
इत्यलौकिकविग्रहे। चित्रगुः। रूपवद्भार्यः। चित्राजरतीगौर्यस्येतिविग्रहे। अनेकोक्तेर्बहूनामपिबहुव्रीहिः। अत्रकेचित्। चित्राजरतीगुः जरती
चित्रागुर्वा। एकन्दीर्घातन्वीजङ्घः। तन्वीदीर्घाजङ्घः। त्रिपदेबहुव्रीहौप्रथमन्नपुंवत्। उत्तरपदस्यमध्यमेनव्यवधानात्। द्वितीयमपिनपुंवत्पूर्व
पदत्वाऽभावात्। उत्तरपदशब्दोहिसमासस्यचरमाऽवयवेरूढः। पूर्वपदशब्दस्तुप्रथमावयवइतिवदन्ति। वस्तुतस्तुनेहपूर्वपदमाक्षिप्यते। आ
नङ्क्रतइत्यत्रयथा। तेनोपान्त्यस्यपुंवदेव। चित्राजरद्गुरित्यादि। अतएवचित्राजरत्योगावोयस्येतिद्वन्द्वगर्भेऽपिचित्राजरद्गुरितिभाष्यं। कर्म
धारयेपूर्वपदेतुद्वयोरपिपुंवत्। जरच्चित्रगुः। कर्मधारयोत्तरपदेतुचित्रजरद्गवीकः। स्त्रियाःकिं। ग्रामणिकुलंतद्दृष्टिरस्यग्रामणिदृष्टिः। भाषि
तपुंस्कात्किं। गङ्गाभार्यः। अनूङ्किं। वामोरूभार्यः। समानाधिकरणेकिं। कल्याण्याःमाता। कल्याणीमाता। स्त्रियांकिं। कल्याणीप्रधानंयस्यस
कल्याणीप्रधानः। पूरण्यांतु। अप्पूरणीप्रमाण्योः। ५।४।११६। पूरणार्थप्रत्ययान्तंयत्स्त्रीलिङ्गंतदन्तात्प्रमाण्यन्ताच्चबहुव्रीहेरप्स्यात्। कल्या
णीपञ्चमीयासांरात्रीणान्ताःकल्याणीपञ्चमारात्रयः। स्त्रीप्रमाणीयस्यसस्त्रीप्रमाणः। पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्चप्रधानपूरण्यामेव। रात्रिःपूर

णानिपातनादिति। एतच्चपूर्वत्रापियोज्य   मन्यथाव्यधिकरणानांबहुव्रीहिःस्वरसतोनसिध्येत्। लुगिति। अनूङितिप्रथमान्तं। षष्ठ्यर्थेप्रथमेतिहरदत्तः ॥

क्तिरित्यादि सिद्धयेप्रियादिषु भक्तिशब्दपाठः। तसिलादिष्वकृत्वसुजंतेष्विति। पंचम्यास्तसिलित्यारभ्य संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजित्येतत्पर्यंतेष्वित्यर्थः।
अव्याप्त्यतिव्याप्तिवारणायेति। एकतिरजथ्यावह्वाशइत्यत्राव्याप्तिः तसिलादिकृत्वसुजन्तपर्यंतेषु तिल्थ्यन्शसां पाठाभावात् पट्वी देश्या अभ्रा रूप्यइत्यत्रातिव्याप्तिः
।ईषदसमाप्ताविति देश्यस्य षष्ठ्या रूप्यस्य चेति रूप्यस्य च तत्र पाठादतस्तन्निवारणाय परिगणनमित्यर्थः परिगणितान्तसादीन् क्रमेणोदाहरति वह्वीष्विति।

वहुथा। प्रशस्ता। एकी। एकतिः। अजाभ्यो हित्ता। अजथ्या। शसि वह्वल्पार्थस्य पुम्वद्भावो वक्तव्यः। वह्वीभ्यो देहि। वहुशः। अल्पाभ्यो देहि अल्पशः।
त्वतलोर्गुणवचनस्य शुक्लाया भावः शुक्लत्वं। शुक्लता। गुणवचनस्य किं कर्त्र्या भावः कर्त्रीत्वं। शरदः शतार्थेतेत्यादेस्तु सामान्येन दुंसकं। भस्या
ऽढे तद्धिते। हस्तिनीनां समूहो हास्तिकं। अढे किं। रोहिणेयः। स्त्रीभ्यो ढगिति ढोऽत्र गृह्यते। अग्नेर्ढगिति ढकि तु पुम्वदेव। आग्नायी देवताऽस्य स्था
लीपाकस्याग्नेयः। सपत्नीशब्दस्त्रिधा। शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादित्वान्ङीन्येकः। समानः पतिर्यस्याइति विग्रहे विवाहनिबन्ध
नम्पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः। स्वामिपर्यायपतिशब्देन भाषितपुंस्कस्तृतीयः। आद्ययोः शिवाद्यण्। सपत्न्याऽपत्यं साप
त्नः। तृतीयात्तु लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणो ण्य एव न त्वण्। शिवादौ रूढयोरेव ग्रहणात् सापत्यः। ठक्छसोश्च। भवत्याश्छात्रा
भावत्काः। भवदीयाः। एतद्वार्तिकमेकतद्धिते चेति सूत्रञ्च न कर्तव्यं। सर्वनाम्नो वृत्तिमात्रे इति भाष्यकारेष्टयागतार्थत्वात्। सर्वमयः। सर्वकाम्य
ति। सर्विका भार्या यस्य। सर्वकभार्यः। सर्वप्रियइत्यादि। सर्वस्येव दं भस्त्रेषादेति लिङ्गात् तेनाकचि एकशेषवृत्तौ च न। सर्विकाः सर्वाः। कुक्कुट्यादी
नामण्डादिषु। कुक्कुट्या अण्डं। कुक्कुटाण्डं। मृग्याः पदं। मृगपदं। मृगक्षीरं। काकशावः॥ ११ यद्यपिवह्वादिषु ङीषो वैकल्पिकत्वात्तदभावे वहुत्रेत्यादि
सिध्यति तथापि पक्षे वह्वीत्रेत्याद्यनिष्टवारणायेदं। ततस्त्रेति प्राचेत्युदाहरणमत्रोपेक्षितं सर्वनाम्नो वृत्तिमात्रइत्यनेन गतार्थत्वादिति मनोरमायां स्थितापद्धितरे
ति। प्राचात्रपटुतरेत्युदाहृतं तत्त्वामादिकमिति भावः। पट्वचरीति भूतपूर्वे चरट्। पटुजातीयेति। प्रकारवचने जातीयर्। दर्शनीयरूपेत्यादि। प्रशंसायां रूपप्। याप्ये पाश
प्॥ ॐ॥ वहुथेति। प्रकारवचने थाल् तत्र हि किंसर्वनामवहुभ्यइत्यधिकृतं। एकतिरिति। एकाज्येष्ठाभ्यां तिल् तातिलौ चवृंदसीति तिल्। अजथ्येति। अजाविभ्यां थ्यन्।

द्वात्मकस्य पूर्वपदस्य तथात्वात्। द्वयोरपीति। पूर्वपदांतर्गतमुत्तरपदमाश्रित्य प्रथमस्यापि पुंवद्भाव इति भावः। जरच्चित्रेति। पूर्वकालैकेति समासः। लिंगविशिष्टपरिभा
षया जरद्ग्रहणेन जरतीशब्दस्यापि ग्रहणात्। चित्रजरद्गवीक इति। जरती चासौ गौश्च जरद्गवी गोरतद्धित इति टच् टित्वान्ङीप्। चित्रा जरद्गवी यस्येति बहुव्रीहेर्नद्यृत
श्चेति वक्ष्यमाणः कप् वामोरूभार्य्य इति संहितशफलक्षणवामादेश्चेत्यूङ्। प्रधानमिति। भावे ल्युडंतं नित्यनपुंसकं। पंचमीति। तस्य पूरण इति डट् नांतादसंख्यादे
रिति डटो मडागमः षिड्गौरादिभ्यश्चेति ङीष्। प्रमाणीति। करणे ल्युडंतं तस्य विशेष्यनिघ्नत्वात् स्त्रियां ङीप्। कथं तर्हि प्रमाणायां स्मृताविति शावरभाष्यमिति चेत्। अत्र भाट्टाः प्रमा

नद्यृतश्च।५।४।१५३। नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् स्यात् पुंवद्भावः। केऽणः।७।४।१३। के परेऽणो ह्रस्वः स्यात्। इति प्राप्ते न कपि।७।४।
१४। कपि परे ह्रस्वो न स्यात्। कल्याणपञ्चमीकः पक्षः। अत्र तिरोहितावयवभेदस्य पक्षस्याऽन्यपदार्थतया रात्रिरप्रधानं। बहुकर्तृकः। अप्रिया। अबला। त
द्विषु किं कल्याणी प्रियः। प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्तिः। सचिवा। स्वसा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। अबला। त
नया। सामान्ये नपुंसकं। दृढम्भक्तिर्य्यस्य स दृढभक्तिः। स्त्रीत्वविवक्षायान्तु दृढाभक्तिः। तसिलादिष्वाऽऽकृत्वसुचः।६।३।३५। तसिलादिषु कृ
त्वसुजन्तेषु परेषु स्त्रियाः पुंवत् स्यात्। परिगणनं कर्तव्यं। अव्याप्त्यतिव्याप्तिपरिहाराय। त्रतसौ। तरप्तमपौ। चरट्जातीयरौ। कल्पप्देशीयरौ
रूपप्पाशपौ। थाल्। तिल्थ्यनौ। बह्वीषु। बहुत्र। बहुतः। दर्शनीयतरा। दर्शनीयतमा। घरूपेति वक्ष्यमाणो ह्रस्वः परत्वात्पुंवद्भावम्बाधते। पट्वित
रा। पट्वितमा। पटुचरी। पटुजातीया। दर्शनीयकल्पा। दर्शनीयदेशीया। दर्शनीयरूपा। दर्शनीयपाशा॥ ९९ णामयते यातिमूलभूतां श्रुतिं यतः किंवं

ता द्यते तस्मात्प्रमाणा स्मृतिरुच्यत इत्याहुः। तत्रायं तेः क्विपि ह्रस्वस्य पिति कृति तुगिति तुकि टाप्। दुर्लभः तथाप्यागमशास्त्रस्यानित्यत्वात्तुडेति बोध्यं। क्विं वा चरति क्विप्
विजित्यर्थ इति वा व्याख्येयं अन्ये तु प्रमाणो वेदस्तद्वदाचरतीत्याचारक्विबंतात्प्रमाणशब्दात्यचाद्यचि टाबित्याहुः। प्रधानपूरण्यामेवेति। प्रधाने कार्यसंप्रत्ययान्न्याय
सिद्धमिदं॥ ःः॥ नद्यृतः। तपरत्वं स्पष्टार्थं नद्युत्तरपदादिति। नद्यंतादिति नोक्तं कप्रत्ययेन सह समासे कृते बहुव्रीहेरनद्यंतत्वात् उत्तरपदं तु नद्यंतं भवत्येव समासेऽत्र
तस्समासांत इति पक्षाश्रयणादिति बोध्यं॥ दृढमिति॥ अराढ्ये निरन्तिमात्रपरत्वेनात्र दृढशब्दप्रयोगान्न लिंगविशेषविवक्षेति भावः लिंगविशेषविवक्षायां तु दृढाभ

तार्थतानकोपधायाइतिनिषेधात्।नचास्यापितेननिषेधः शंक्यः।स्त्रियाः पुंवदित्यादिप्रकरणोक्तस्यैवतेननिषेधात्। अस्याइष्टेस्तुतास्मिन्प्रकरणेऽसमाविष्टत्वा
त्।नचवृत्त्यंतर्गतस्यसर्वनामत्त्वाभावात्पुंवद्भावोनभवेदितिवाच्यं।वचनारंभसामर्थ्यात्मात्रग्रहणाद्वाक्वचित्सर्वनामत्वेनदृष्टानांसंप्रतिसंज्ञाभावेपिपुंवद्भावा
भ्युपगमात्।अतएवोत्तरपूर्वायेइत्यत्रसंज्ञाभावेपिपुंवद्भावः।सर्वानामकाचित्तस्याःपुत्रःसर्वापुत्रइत्यत्रतुनातिप्रसंगः संज्ञोपसर्जनयोः सर्वादिगणाद्बहिर्भूतत्वेन
वृत्तेःपूर्वमप्यसर्वनामत्वात्।सर्वप्रियइति।स्त्रियाःपुंवदित्यत्रप्रियादिपर्युदासोरूपवतीप्रियइत्यादावुपयुज्यतइतिभावः।तदितएतदन्येत्यादावुत्तरपदेतिप्रसंग
माशंक्याह।पूर्वस्यैवेति।वृत्तिघटकानेकभागमध्येकिंचिदपेक्षयापूर्वस्येत्यर्थः।लिंगादिति।अन्यथाएषाद्वारातयोःकात्पूर्वस्याऽपिविधीयमानमित्त्वंनिर्विषयंस्यादि
तिभावः।दक्षिणापूर्वादिगितिभाष्योदाहरणमपीहलिंगमितिबोध्यं।यत्तुप्राचासर्वनाम्नःसमासेपूर्वंपुंवदित्युक्तं।यच्चव्याचख्युःवार्त्तिकार्थमनुवदतिसर्वनाम्न

क्यङ्मानिनोश्च।६।३।३६।एतयोः परतःपुम्वत्।एनीवाचरतिएतायते।श्येनीवाचरति।श्येतायते।स्वभिन्नाङ्क्षा त्विद्दर्शनीयांमन्यते।दर्शनी
यमानिनी।दर्शनीयांस्त्रियंमन्यतेदर्शनीयमानीचैत्रः।नकोपधायाः।६।३।३७।कोपधायाःस्त्रियाःनपुम्वत्।पाचिकाभार्य्यः।रसिकाभार्य्यः॥

इत्यादिनेतितत्राभादिकं।वृत्तिमात्रेइतिपाठस्यैवभाष्यारूढत्वात्सर्वमयःसर्वकाम्यतीत्युक्तोदाहरणासिद्धिप्रसंगाच्चवार्तिकार्थमित्याद्यपिप्रामादिकमेव।
वार्त्तिकार्थेएतदभावात्।नचसर्वनाम्नोवृत्तिमात्रइत्येतद्वार्त्तिकमेवनतुभाष्यकारेष्टिरितिशंक्यं।ठक्छसोश्चेतिवार्तिकस्यनिरालंबनतापत्तेः।भाष्यकारेष्टित्वेतुवा
र्त्तिकस्योक्तिसंभवउक्तएवप्राक्॥ ॥क्यङ्मा॥एतायतइत्यादिकर्त्तुःक्यङ्सलोपश्चेतिक्यङि पुंवद्भावेकृतेएतश्येतयोरन्त्यस्यावितिदीर्घः।मानिन्ग्रहणमसमाना
धिकरणार्थमस्त्यर्थंचेत्याशयेनयथाक्रममुदाहरतिस्वभिन्नामित्यादिना।दर्शनीयमानिनीति।मनइतिणिनिः।नांतत्वान्ङीप्।यात्त्वात्मानमेवदर्शनीयांमन्य
तेतत्रस्त्रियाःपुंवदित्येवसिद्धं।एकस्याअपिईप्सिततमत्वव्यापाराश्रयत्वविवक्षाभेदेनकर्मत्वकर्तृत्वयोःसत्त्वेपिवास्तवाभेदेनसामानाधिकरण्याविघातादि
तिभावः।पाचिकाभार्यइति।पचतीतिपाचिका।ण्वुल्।युवोरित्यकादेशेटापिप्रत्ययस्थादितीत्वं।रसिकाभार्यइति। रसोस्त्यस्याइतिरसिका।अतइनिठनाविति८
॥ ॥

दिगुज्ञातव्य इत्यर्थः। अतसादिषु परिगणनं कर्तव्यमिति यावत्। तत्तलोर्गुणवचनस्य गुणस्येति वक्तव्ये वचनग्रहणं प्रसिद्धगुणपरिग्रहार्थं अत एव तथैवोदाहरति शुक्ला
त्वं शुक्लातेति। नन्विह जातिसंज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति यत्प्राचीनैरुक्तं तत्स्वीकर्तव्यमन्यथा निरोष्ठ्यमेनेश रदः कृतार्थता। सा सुमोचरति द्रुः खशीलतामित्यादिषु पुं
वद्भावाप्रवृत्त्या दीर्घश्रवणं स्यादित्यत आह। सामान्येन नपुंसकमिति। एवं च नेष्टं पुरो ह्यारवतीत्वमासीदित्यादिप्रयोगो निर्बाध इति भावः। हास्तिकमिति। अचित्तहस्तिधे
नोरिति ठक्। न चात्र यस्येति लोपेन निर्वाहः तस्यासिद्धवदत्रेत्यसिद्धत्वात्। द्वः परस्मिन्निति स्थानिवद्भावाच्च नस्तद्धित इति टिलोपानापत्तेः न च ठक्छसोश्चेत्यनेनैवात्र
पुंवद्भावसिद्धिः शंक्या। छसा साहचर्यात् द्भवतष्ठक्छसाविति यस्यैव ठकस्तत्र ग्रहणात्। नापि जातेश्चेति पुंवद्भावनिषेधः शंक्यः। अस्मादेव भाष्योदाहरणात् सौत्रस्यैव निषे
धो न त्वौपसंख्यानिकस्येति ज्ञापनात्। रोहिणेय इति। रोहितशब्दाद्वर्णादनुदात्तादिति ङीप् नकारो ऽसति तु पुंवद्भावे तयोर्निवृत्तौ रोहितेय इति स्यादिति भावः। शुत्यत इ
ति व्याख्यानादिति शेषः। अग्नायीति। अग्निशब्दात् वृषाकप्यग्नीति स्त्रियां ङीब् ऐकारादेशो आग्नेय इति। पुंवद्भावाभावे तु आग्नायेय इति स्यादिति भावः। शत्रुपर्याया
दिति। अत्र च व्यन् सपत्न इति निर्देशो लिंगं। रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद इत्यमरः। विवाहनिबंधनमिति। तज्जन्यसंस्कारविशेषविशिष्टे रूढमित्यर्थः। साप
त्न इति। अभाषितपुंस्कत्वात् द्वितीयस्य पुंवद्भावो न भवति। सति च पुंवद्भावे नकारादेशाभावात्सापत इति स्यादाद्यस्य तु पुंवद्भावे ऽपि सापत्न इत्येव भवतीति भावः। रू
ढयोरेवेति। आद्यश्शब्दो रूढः द्वितीयस्तु योगरूढस्तेन समानः पतिर्यस्या इति विग्रहो न विरुध्यत इति दिक्। ठक्छसोश्च। अभत्वार्थ आरंभः। भावत्का इति भवतष्ठक्छ
सौ ऽठावस्थायामेव पुंवद्भावे कृते ठस्येक इति इकादेशं बाधित्वात् तल्लक्षणः कादेशः। नन्विकादेशे भत्वात् भस्याढ इति पुंवद्भावे सति कादेशाप्रवृत्त्या रूपसिद्धौ किमत्र ठ
ग्रहणेन। मैवं। मथितं पण्यमस्य माथितिक इत्यत्रेवाल्विधित्वेन स्थानिवद्भावायोगात् सन्निपातपरिभाषया कादेशप्रवृत्तेर्दुर्लभत्वात्। ठक्छसोरिति ठग्रहणं वार्त्ति
व्यमेव। भवदीया इति। छसः सित्करणात् सितिचेति पदसंज्ञा तेनात्र जश्त्वं भवति। एवं च पदसंज्ञया भसंज्ञाया बाधात् भस्याढ इत्यस्याप्रवृत्त्या वार्त्तिके छसग्रहणं क
र्तव्यमेव। भाष्यकारेष्टेति। अनेन सूत्रवार्त्तिकयोरुक्तिसंभवो ध्वनितः। उत्तरं दृष्ट्वा पूर्वस्याप्रवृत्तत्वात्। निष्कर्षेण त्वयमेवेत्याह। गतार्थत्वादिति इष्टेरुदाहरणान्याह ॥
सर्वमय इत्यादिना। तत आगत इत्यर्थे मयट्चेति मयट्। तसिलादिषु मयडादेरपरिगणितत्वात्तेनेदं न सिध्यतीति भावः। सर्वैकभार्य इति। न च स्त्रियाः पुंवदिति सूत्रेणा

दवस्थ्यादिति॥सुकेशीति॥स्वांगाच्चोपसर्जनादिति ङीष्।अकेशेति।सहनञ्विद्यमानेति निषेधान्ङीषभावः॥जातेश्च। यद्यत्र जातेरित्येव विहित इति व्याख्यायेत तर्हि हास्तिकमित्युदाहरणे ऽयसंख्यानिकस्य नायं निषेध इति भाष्योक्तिर्न संगच्छेत। हस्तिन्शब्दाज्जातेरिति ङीष् न विहितः अदन्तत्वाभावात् किंतु ऋन्नेभ्य इति ङीविहित इति पुंवद्भावनिषेधस्याप्रसक्तेरत आह॥जातेः परइति। एवं च हस्तिनीभार्यः शुनीभार्य इत्यादावपि निषेधः सिध्यतीति भावः यः प्रत्यय इति। टाबादिः प्राचां तु ङीषेवोपात्त स्तदयुक्तमिति ध्वनयन्नुदाहरति॥शूद्राभार्य इति।ब्राह्मणीति।शार्ङ्गरवादित्वान्ङीन्।प्राचां तु ङीष् पुंवदिति व्याख्याय ब्राह्मणीभार्य इत्युदाहृतं तद्भ्रमात्।सोत्रस्येवेति।व्याख्यानादिति भावः।नकोपधाया इति निषेधस्तु भस्याढ इति प्राप्तस्यापि भवत्येव।तेन वैलेपिका याः धर्म्यं वैलेपिकमिति सिद्धं॥यद्यपि महिष्यादिभ्य इत्य

जातेश्च।६।३।४१।जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत्।शूद्राभार्यः।ब्राह्मणीभार्यः।सौत्रस्यैवायं निषेधः।तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढ इति तु भवत्येव।संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये।२।२।२५।संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः दशानां समीपे ये सन्ति ते।उपदशाः।नव एकादश वेत्यर्थः।बहुव्रीहौ संख्येये इति वक्ष्यमाणो डच्।ति विंशतेर्डिति।६।४।१४२।विंशतेर्भस्य तिशब्दस्य लोपः स्यात् डिति।आसन्नविंशाः।विंशतेरासन्ना इत्यर्थः। अदूरत्रिंशाः। अधिकचत्वारिंशाः। द्वौ वा त्रयो वा द्वित्राः। द्विरावृत्ता दश द्विदशाः। विंशतिरित्यर्थः।दिङ्नामान्यन्तराले।२।२।२६।दिशां नामान्यन्तराले वाच्ये प्राग्वत्।दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा।नामग्रहणाद्यौगिकानां न।ऐन्द्र्याश्च कौबेर्याश्चान्तरालं दिक्।॥पुंवद्भावः॥ नहि कारेण न श्रूयेत। ।एतच्च न कोपधाया इति सूत्रे भाष्ये स्पष्टं।प्रासंगिकं समाप्य प्रकृतमनुसरति॥संख्ययेति।सामानाधिकरण्यस्यान्यपदार्थे च तेश्च विरहात् पूर्वेणाप्राप्तौ वचनं।दशानामिति।उपगता दश येषामिति न विग्रहीतं पूर्वेणैव सिद्धेः उपदशा इति।उपशब्दः समीपे समीपिनि च वर्त्तते।आद्ये त्वव्ययीभावः द्वितीये तु बहुव्रीहिरिति विवेकः।न च एकादश वेत्यर्थ इति।संख्याद्वारकसंबंधस्यांतरंगत्वादिति भावः।तेन दशानां रक्षादीनां समीपे ये संति गवादयस्ते उपदशा इति न प्रयुज्यंते।सूत्रे।तीति लुप्तषष्ठीकमित्याशयेनाह॥तिशब्दस्येति।विंशा इति।इह तिलोपे तत्र मनोज्ञणा इति पररूपमेव न तु टिलोपः तिलोपस्याभीयत्वेनासिद्धत्वात्।न चात्र पररूपमपि न स्यात् तिलोपस्य स्थानिवत्त्वादिति शंक्यं।अजलादेशो ऽजादेशो न भवतीत्यचः परस्मिन्नित्यस्याप्रव

मद्रिकायत इति। कप्ग्रामिनो श्रेति वुञ्वत्प्राप्तिः। मद्रेषु भवा मद्रिका। मद्रवृज्योः कन्। सति तु वुञि वृद्धावेरत्वं न श्रूयेत। तेति भावः। तद्धितवुग्रहणमिति। दृष्टान्ते श्रूयमाणस्यैकस्य
वध्यं तत्तद्धितग्रहणं वुग्ग्रहणं चेत्यर्थः। पाकाभार्येति। अर्भकपृथुकपाका वयसीति कप्रत्ययान्तो यमुणादिषु निपातितः नचायं तद्धितस्य ककारो नापि वोः वयसि प्रथम इति ङीब्बाधि
त्वाभ्जाद्वित्वाद्वाप् संज्ञापूरण्योश्चायतुदत्ताय ते इति कपड् तमपि वृत्त्यादिपूदाहृतं तत्तु विशेषाभावादिहोपेक्षितं। पञ्चमी पाशेति पाप्ये पाशप्। तसिलादिष्विति प्राप्तिः। वृद्धिनिमि
त्तस्यास्तो घ्नी ती। स्रुघ्ने भवा। तत्र भव इत्यणि टिड्ढाणञिति ङीप्। माथुरीयत इति। मथुरायां भवा माथुरी। सेवाचरतीत्यर्थे कर्तुः क्यङ् इति क्यङ्। मध्यमेति। मध्ये भवा मध्यमा। मध्यान्म इति
मः। काण्डलावेति। काण्डं लुनातीति काण्डलावी कर्मण्यण्। हृदयं तावदिति। तत्परिमाणमस्याः तावती। यत्तदेतेभ्य इति वतुप्। सर्वनाम्न इत्याकारो न वृद्धिशब्देन विहित इति भावः।

मद्रिकायते। मद्रिकामानिनी। कोपधप्रतिषेधे तद्धितवुग्रहणं। नेह। पाकाभार्य्या यस्य स पाकभार्य्यः। संज्ञापूरण्योश्च। ६।३।३८। अनयोर्न पुंवत्। दत्ताभा
र्य्यः। दत्तामानिनी। दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोयमिति भाषितपुंस्कत्वमस्ति। पञ्चमीभार्य्यः। पञ्चमी पाशा। वृद्धिनिमित्तस्य च तद्धितस्या
रक्तविकारे। ६।३।३९। वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत्। स्रौघ्नीभार्य्यः। माथुरीयते। माथुरीमानिनी।
वृद्धिनिमित्तस्य किं। मध्यमभार्य्यः। तद्धितस्य किं। काण्डलावभार्य्यः। वृद्धिशब्देन किं। तावद्भार्य्यः। रक्ते तु काषायी कन्था यस्य स काषायकन्थः। विकारे तु
हैमी मुद्रिका यस्येति हैममुद्रिकः। वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत्। वैयाकरणभार्य्यः। सौवश्वभार्य्यः। स्वाङ्गाच्चेतः। ६।३।४०। स्वा
ङ्गाच्च ईकारस्तदन्ता स्त्री न पुंवत्। सुकेशीभार्य्यः। स्वाङ्गात् किं। पटुभार्य्यः। ईतः किं। अकेशभार्य्यः। अमानिनीति वक्तव्यं। सुकेशमानिनी० ॥ ॥

काषायीति। कषायेण रक्तेत्यर्थे तेन रक्तं रागादित्यणि ङीप्। हैमीति। हेम्नो विकार इत्यर्थे अनुदात्तादेश्चेत्यञ्। फलोपधानेति॥ निमित्तशब्दः फलोपहितपरः स्वरूपयोग्यपर
त्वे तु वैयाकरणभार्य इत्यत्र पुंवद्भावो न सिद्ध्येदिति भावः। व्याकरणमधीते वेद वा वैयाकरणी। तदधीते तद्वेदेत्यण्। स्वश्वस्यापत्यं स्त्री सौवश्वी तस्यापत्यमित्यण्। उभयत्राणि
त्वात्। प्राप्ता वृद्धिर्न य्वाभ्यामित्यनेन प्रतिषिध्यत इति नायं वृद्धिं प्रति फलोपहितः। किन्तु स्वरूपयोग्यः। यद्यप्येजागमनिमित्तत्वाद्वृद्धिं प्रति फलोपहितोपि भवत्ययं तद्धित
स्तथापि वृद्धिशब्देन विहितां वृद्धिं प्रति न भवतीति भावः। अत्र व्याचक्षते॥ सूत्रे निमित्तशब्दः फलोपहितपरः। अन्यथा निमित्तग्रहणमनर्थकं स्यात्। इह वृद्धिस्तद्धितस्येत्युक्तेपि
निमित्तत्वमेव संबन्धः इति वृद्धिनिमित्तं यस्तद्धित इत्यर्थलाभात्। तेन वृद्धिशब्देन विहिता वृद्धिरित्ययमर्थो लभ्यते। अन्यथा फलोपहितपरत्वलाभो निष्फलः स्याददत्तदोषत्वा

अन्येषामपि दृश्यते। अत्र प्राचा दृशिग्रहणात्कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वमात्वं वा नवीत्युक्तं तत्र आत्वं वेत्यपाणिनीयमत एव मुष्टामुष्टीत्युदाहरणाम
न्येषामपि दृश्यते। अत्र प्राचा दृशिग्रहणात्कर्मव्यतिहारे बहुव्रीहौ पूर्वपदस्य दीर्घत्वमुक्तं ... शब्दमस्यैवातथापि वि
प्प्रामाणिकमेव एतच्च मनोरमायां स्पष्टं। ओर्गुणः तद्धिते किं पद्वी। वाप्वी॥ गुणोक्तिरिति। यद्यप्योरेदित्ति सूत्रितेऽपि भस्यतद्धित इत्येवं रूपं संज्ञापूर्वकत्वमस्यैवातथापि वि
धेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरिति भावः। यद्यपि ओदिति तपरस्तत्कालस्य संज्ञकं तथापि रहत्तकारस्योच्चारणार्थस्त परत्वे फलाभावात्। ओ
रोरित्येव वास्तु स्वं रूपं शब्दस्येति प्रत्याख्यातमिति भावः। स्यादेतत्। तपरस्तत्कालस्य संज्ञा भवतीति गुरोरनृत इति प्लुतनिषेधस्यापि संज्ञापूर्वकत्वेनानित्यत्वात् कृप्त
शिखेत्यत्र प्लुतसिद्धेः ऋलृक्त्वे ऋकारात्पृथक् लृकारोपदेशो व्यर्थः। सावर्ण्यसत्त्व एवृत्तरीत्या लृकारस्य प्लुतसिद्धेरनित्यत्वज्ञापनस्य निष्फलत्वान्नैवमपि क्ऌदि
तां लृदित्वार्यं लृदितामृदित्कार्यं च वारयितुमनित्यत्वज्ञापनमावश्यकमिति वाच्यं। राजृ भ्राजृ गम्लृ शकॢ इति पृथगनुबन्धकरणसामर्थ्यान्नाग्लोपिशास्वृदितामिति प
रस्मिपदेष्विति पृथगनुवादसामर्थ्याच्च तत्कार्याणामसांकर्यसिद्धेरिति चेदत्राहुः। गुरोरनृत इत्यनेन ऋकारस्य गुरोः प्लुतविधानादनृत इत्येतदनूद्यमानगुरुविशेषणं ते
नानुवादरूपमेव न तु विधेयसमर्पकं संज्ञारूपं पदमिति तस्यानित्यत्वासिद्धेः क्लृप्तशिखेत्यत्र प्लुतो न सिध्यति ततश्च तत्सिध्यर्थमुक्तज्ञापनायो
भयोपदेश आवश्यक इति। अन्ये तु ऋकारात्पृथक् लृकार उपदेष्टव्य एव। ऋकारोपदेशेन लृकारस्यालाभात्। न च ऋलृवर्णयोर्मिथः सावर्ण्यमिति वचनात्तल्लाभः शं
क्यः। वार्त्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेरित्याहुः। तेन सहेति तुल्ययोगे। तुल्ययोगे किं। सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। इह सहशब्दो न तुल्ययोगवचनः। भारस्य कर्मकवहनक्रि
यायां तु पुत्राणामनन्वयात्। किंतु विद्यमानवचनः। दशसु पुत्रेषु विद्यमानेष्वित्यर्थः। एतच्च सहशब्दस्य विद्यमानार्थत्वमप्यस्तीति वक्तुमुक्तं। प्रत्युदाहरणां शरीरं तु स
हपुत्रैरित्येवेति बोध्यं। तृतीया तु सहयुक्त इत्यनेनैव। वोपसर्जनस्य। उपसर्जनस्येति न सहस्य विशेषणं। अव्यभिचारात्। किंतूत्तरपदेन सन्निधापितस्य समासस्य। त
च्चावयवद्वारकं। उपसर्जनसर्वावयवकस्य समासस्येत्यर्थः। तदेतत्फलितमाह। बहुव्रीहेरिति। तेनेह न सहयुध्वा सहकृत्वा। राजनि युधि कृञः स्हेति क्वनिपि
उपपदसमासोऽयं। सहस्य सः संज्ञायामित्यतोऽनुवर्त्तनादाह सहस्य सः स्यादिति। प्रायिकमिति। विभाषा सपूर्वस्येत्यादिनिर्देशादिति भावः। सकर्मक इति। विद्यमान
कर्मक इत्यर्थः। प्रकृत्याशिषि। कथं तर्हि यजमानस्य सपुत्रस्य सभ्रातृकस्य सपरिवारस्य पुरा राज्ये श्रियोऽभिवृद्धिरस्त्वित्यादि प्रयोगाः संगच्छन्त इति चेदुच्यते॥ ॥

विघातार्थमिति सिद्धान्तात्। विंशतेरिति। इहापि आसन्ना विंशतिर्येषामिति न विगृहीतमुक्तयुक्तेः। अदूरेत्यादि। अदूरास्त्रिंशतः। अधिकाश्चत्वारिंशत इति विग्रहे बोध्यौ।
द्वित्रा इति। वार्थेयं बहुव्रीहिः स च वार्थो न विकल्पः। पक्षे द्विवचनस्याप्यापत्तेः किंतु संशयः। स चानियतसंख्यावमर्शी। तत्र च त्रयोपि सर्वे दाभासंत इति तदपेक्षं बहुवचन
मेव। आनयनादिक्रियान्वयस्तु द्वयोस्त्रयाणां वेत्यनियत एवेत्याहुः। द्वित्रा इति। सुजर्थे बहुव्रीहिरित्यर्थः। वृत्तौ तु सुजर्थान्तर्भावेणैवैकार्थीभावाश्रयणात्सुचोऽप्रयो
गः। संख्ययेति किं। चत्वारो ब्राह्मणाः। अव्ययेत्यादि किं। ब्राह्मणाः पंच। संख्येयेति किं। अधिका विंशतिर्गवां। संख्यार्थे यः संख्येति न समासः। आदशतः संख्याः संख्येये वर्तन्ते

तत्र तेनेदमिति सरूपे। २।२।२७। सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये स
बहुव्रीहिः। इति शब्दादयं विषयविशेषो लभ्यते। अन्येषामपि दृश्यते। दीर्घ इत्यनुवर्तते। इच् कर्मव्यतिहारे बहुव्रीहौ। पूर्वपदान्तस्य दीर्घः। इच् समासा
न्तो वक्ष्यते। तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च। केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं। केशाकेशि। दण्डैश्च दण्डैश्च प्रह
त्येदं युद्धं प्रवृत्तं। दण्डादण्डि। मुष्टीमुष्टि। ओर्गुणः। ६।४।१४६। उवर्णान्तस्य भस्य गुणस्तद्धिते। अवादेशः। बाहूबाहवि। ओरोदिति वक्तव्ये
गुणोक्तिः। संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुं तेन स्वायम्भुवमित्यादि सिद्धं। सरूपेति किं। हलेन मुशलेन। तेन सहेति तुल्ययोगे। २।२।२८। तुल्य
योगे वर्तमानं सहेत्येतत् तृतीयान्तेन प्राग्वत्। वोपसर्जनस्य। ६।३।८२। बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा। पुत्रेण सह आगतः सपुत्रः सहपुत्रो वा
आगतः। तुल्ययोगवचनं प्रायिकं। सकर्मकः। सलोमकः। प्रकृत्याऽऽशिषि। ६।३।८३। सहशब्दः प्रकृत्या स्यादाशिषि। स्वस्ति राज्ञे सहपुत्राय सहामा
त्याय। अगोवत्सहलेष्विति वाच्यं॥ सगवे। सवत्साय। सहलाय॥ ११

ननु संख्यायां। विंशत्याद्याः संख्याः संख्येयसंख्ययोर्वर्तन्ते। यदा तु संख्येये विंशतिशब्दस्तदा
भवत्येव समासः। अधिकविंशा इति॥ ॐ॥ तत्र तेनेदं। ग्रहणविषय इति। गृह्यत इति ग्रहणं केशादि। द्विष - यो वाच्योपयोस्तु सरूपेम ह्रियतेऽनेनेति प्रहरणं दण्डादि।
तद्विषयो वाच्योपयय इति प्राग्वत्कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च। ननु ग्रहणविषये सप्तम्यन्ते समस्येते प्रहरणविषये तृतीयान्ते चेत्यादि विषयविशेषः
सूत्राक्षरैः कथं लभ्यते इत्यत आह इति शब्दादिति। सहितो किंवो विवक्षां दर्शयति। लोके केशाकेशीत्यादिप्रयोगे यावानर्थः प्रतीयते तावत्यर्थे बहुव्रीहिर्भवतीत्यर्थः॥

गंधस्य सुसौरभेन त्येगंधके गवे लेशयोः। स्त्र एव द्रव्यवचनो वहुत्वे पुंसि च स्मृत इति कोशाच्चाकेचित्तु गंधस्येत्त्व इति वार्त्तिके तदेकांतग्रहणेन स्वाभाविकत्वं विवक्षितं तेन नागंतु कस्यनेत्याहुः। तथा च भट्टिः। आघ्राधिवान् गंधवहः सुगंध इति व्याख्यातं तच्च जयमंगलायां। गंधस्येत्यादिना इकारः समासांतो न गंधस्येत्त्वे तदेकांतग्रहणमिति वचनात् ॥ ॥ अल्पाख्यायां। अल्पवाचिनो गंधस्येकारांतादेशः त्सुगंधश्र आपणिक इति यथेति। अत एव भग्नवालसहकारसुगंधादित्यादीनां प्रामादिकत्वं वदन्ति इति। अल्पाख्यायां। अल्पवाचिनो गंधस्येकारांतादेशः स्यात् वहुव्रीहौ। सूपस्य गंध इति। अत एव ज्ञापकाद्व्यधिकरणपदो वहुव्रीहिः। यद्वा फलितार्थकथनमेतत् सूपो गंधो यस्मिन्नित्येव विग्रहः। गंधशब्दस्य विशेषणत्वात्।

अल्पाख्यायां। ५।४।१३६। सूपस्य गन्धो लेशो यस्मिन् तत् सूपगन्धि भोजनं। घृतगन्धि। गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरिति विश्वः।

उपमानाच्च। ५।४।१३७। पद्मस्येव गन्धोऽस्य पद्मगन्धिः। पादस्य लोपोऽहस्त्यादिभ्यः। ५।४।१३८। हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ। स्थानिद्वारेणाऽयं समासान्तः। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्यः किं। हस्तिपादः। कुसूलपादः। कुम्भपदीषु च। ५।४।१३९। कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियां। पादः पत्। कुम्भपदी॥ स्त्रियां किं। कुम्भपादः। संख्यासुपूर्वस्य। ५।४।१४०। पादस्य लोपः स्यात् समासान्तो बहुव्रीहौ। द्विपात्। सुपात्। वयसि दन्तस्य दतृ। ५।४।१४१। संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि। द्विदन्। चतुर्दन्। षड्दन्। अस्य षोडन्। सुदन्। सुदती। वयसि किं। द्विदन्तः करी। सुदन्तो नरः। स्त्रियां संज्ञायां। ५।४।१४३। दन्तस्य दतृ स्यात् समासान्तो बहुव्रीहौ। अयोदती। फालदती। संज्ञायां किं। समदन्ती॥ विभाषा श्यावारोकाभ्याम्। ५।४।१४४। दन्तस्य दतृ वा बहुव्रीहौ। श्यावदन्। श्यावदन्तः। अरोकदन्। अरोकदन्तः॥



त्विष्यस्मादेव ज्ञापकात्परनिपातः। पादस्यायं चयं लोपः समासांतो न स्यादादेः परस्येत्यादेः स्यान् शैषिकः कप्प्रसज्येत। शेषाद्विभा। विप्यत्र समासांतापेक्षस्य शेषस्याश्रयणादत आह समासांत इति कथं पुनरभावो भावस्यावयवः स्यादत आह स्थानिद्वारेणेति वचनवलादोपचारिकमवयवत्वं स्य। तइतिभावः। कुंभपदीषु च। वहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिरित्यभिप्रेत्याह कुंभपद्यादिष्विति। इह गणे कुंभपदी एकपदी जालपदीत्येवं समुदायाः

द्विदंडीति। समुदायनिपातनं स्वविषयविशेषपरिग्रहार्थत्वात् द्विदंडा शालेत्यत्र त्विच् न भवतीति। उभाहस्तीत्यादाविह निपातनादेवायच्ः पाक्षिकत्वं। प्रसंभ्यां जानुश
ब्दस्यैवं तेषूपपदनिबंधनं द्वित्वमाश्रित्य जानुनोरिति द्विवचननिर्देशस्तत्फलं तु स्थानषष्ठीत्वस्फुटीकरणं। जानुन इत्युक्ते तु किमियं पंचमी प्रत्ययाधिकारात् उत षष्ठीति प्र
त्यय इत्येवं संदेहः स्यात्तन्निवृत्तये इदं ध्वनयन्नाह। जानुशब्दयोर्ज्ञुरादेश इति। शार्ङ्गधन्वेति। कथं तर्हि खलावण्या शंसा धृतधनुषमन्हायतश वदिति उष्यदंतप्रयोग इति चेद
त्राहुः। समासांतविधेरनित्यत्वान्नात्रानुपपत्तिरनित्यत्वे प्रमाणं त्वं श्वादिगणो राजन्शब्दपाठः। सहि प्रतेरंश्वादयस्तत्पुरुषे इत्यंतोदात्तार्थः। राजाहःसखीति ट

द्विदण्डादिभ्यश्च।५।४।१२८। तादर्थ्ये चतुर्थ्येषा। एषां सिद्ध्यर्थमिच्प्रत्ययः स्यात्। द्वौ दण्डौ यस्मिन्प्रहरणे तत्। द्विदण्डिप्रहरणं। द्विमुशलि। उ
भाहस्ति। उभयाहस्ति। प्रसंभ्यां जानुनोर्ज्ञुः।५।४।१२९। आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ। प्रगते जानुनी यस्य प्रज्ञुः। संज्ञुः। ऊर्ध्वा
द्विभाषा।५।४।१३०। ऊर्ध्वज्ञुः। ऊर्ध्वजानुः। धनुषश्च।५।४।१३२। धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात्। शार्ङ्गधन्वा। वा संज्ञायां।५।४।१३३। शतध
न्वा। शतधनुः। जायाया निङ्।५।४।१३४। जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्। लोपो व्योर्वलि।६।१।६६। वकारयकारयोर्लोपः स्याद्वलि। पुंव
द्भावः। युवतिर्जायाऽस्य युवजानिः। गन्धस्येदुत्पूतिसुसुरभिभ्यः।५।४।१३५। एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात्। उद्गन्धिः। पूतिगन्धिः। सु
गन्धिः। सुरभिगन्धिः। गन्धस्येत्त्वे तदेकान्तग्रहणं। एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः। सुगन्धि पुष्पं सलिलं च। सुगन्धिर्वा
युः। इह शोभना गन्धा द्रव्याण्यस्य। सुगन्ध आपणिकः॥

११ चेन्नित्यत्वे तु किं तेनेति। लोपो व्योर्वलीति। व्योर्लोप इति वक्तव्ये वलिग्रहणं लोपाद्धलि लोपः। इ
वं विप्रतिषेधेनेति ज्ञापयितुमादौ विधेयनिर्देशः कृतस्तेन सुखीयतेः क्विपि सुखीरिति सिद्धं। गंधस्येतात्कार उच्चारणार्थ इत्याशयेनाह। इकारोऽन्तादेश इति। आदेः प
रस्येति। इह न भवति समासांत इत्यधिकारात्। अत्र केचिदाहुः। इकारस्य प्रत्ययत्वेऽपि न क्षतिर्यस्येति चेति लोपेनोद्गन्धिरित्यादिरूपसिद्धेः। न च तत्र स्वरितमित्यंतस्वरि
तत्वापत्तिर्न शंक्या तकारस्योच्चारणार्थत्वाभ्युपगमात्। नापि षष्ठीनिर्देशादादेशत्वमेव न प्रत्ययत्वमिति वाच्यं। गापोष्टगित्यादिप्रत्ययविधिष्वपि षष्ठीदर्शनादि
ति। अविभागेनेति। एवं च गुणवाचिन एव ग्रहणं न तु द्रव्यवाचिन इति फलितोऽर्थः। द्रव्याणीति। अस्ति च गंधशब्दो द्रव्यवचनः। वहति जलमियं पिनष्टि गंधानिति प्रयो

बहुशब्दस्यैकवचनांतत्वाभावात्प्रकृतेनियमेनवारितत्वात्।वह्वी अधिकालक्ष्मीर्यस्येतिविग्रहेवैपुल्यवाचिनएकवचनांतत्वसंभवेपिविशेषविधेर्वलीयस्त्वेनउरःप्र भृतिभ्यः कविति पवकुप्रचितत्वात्।पदातुनियमशास्त्राणांनिषेधमुखेनप्रवृत्तिरित्याश्रीयतेतदाप्राचोक्तमपिसम्यगेवेतिज्ञेयं।अर्थान्नञःगणसूत्रमिदं।अनर्थकेना पीति।कथंतर्हिसुपथीनगरीतिहलंतेषूक्तंकपोत्रइर्वोरत्वात्।नचनपूजनादित्यनेननञःकपूरब्धूरित्यप्रत्ययस्येवकपोपिनिषेधःशक्यःवचःप्राचीनानामेवसनिषे धइतिवक्ष्यमाणत्वात्कप्रत्ययस्यचउत्तरत्वात्।सत्यासमासांतविधेरनित्यत्वात्साधुरितिसमाधेयंग्रुवीरनाकावितिसूत्रेसुपथीतिभाष्याच्चेत्युक्तंवहुवाग्मिके ति।वाचोग्मिनिः॥ ॐ॥ शेषाद्विभाषायचत्रप्रागुक्तकपमात्रापेक्षःशेषःस्यात्तर्हिव्याघ्रपात्सुगंधिरित्यादावपिस्यादतःसमासांतापेक्षःशेषइहगृह्यतइत्याह।अनुक्तस मासांतादिति।व्याघ्रपादिति।स्थानिद्वारालोपोपिसमासांतइत्युक्तं।सुगंधीति।गंधस्येत्यादिनाइत्समासांतःप्रियपथइति।ऋक्पूरित्यप्रत्ययस्समासांतःउपवह

शेषाद्विभाषा।५।४।१५४।अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कप्वास्यात्।महायशस्कः।महायशाः।अनुक्तेत्यादि किं।व्याघ्रपात्।सुग न्धिः।प्रियपथः।शेषाधिकारस्थात्किं।उपबहवः।उत्तरपूर्वा।सपुत्रः।तन्त्रादिनाशेषशब्दोऽर्थद्वयपरः।आपोऽन्यतरस्यां।७।४।१५।कप्यावन्तस्य ह्रस्वोवास्यात्।बहुमालाकः।बहुमालकः।कबभावेबहुमालः।नसंज्ञायां।५।४।१५५।शेषादितिप्राप्तःकप्नस्यात्संज्ञायां।विश्वेदेवाअस्य।विश्व देवः॥

बहुत्ति।संख्ययाव्ययेत्यादिनासमासः।उत्तरपूर्वेति।दिङ्नामेत्यादिनासमासः।सपुत्रइति।तेनसहेतीत्यादिनासमासः॥अयंभावः।शेषोबहुव्रीहि रित्यतःशेषंपदमनेकमन्यपदार्थइत्येतस्मिन्नेवसूत्रेऽनुवर्ततेसंख्ययाव्ययासन्नेत्यादिषुचनिवर्तते।तथाचशेषाधिकारस्थत्वाभावादुपबहवइत्यादिषुकप्प्र त्ययोनेति।एवंचानेकमन्यपदार्थइतिसूत्रात्पृथक्संख्ययाव्ययासन्नेत्यादीनामारंभःकबभावार्थमप्यावश्यकइतिस्थितं।ननुसकृदुच्चरितस्यशेषशब्दस्यानुक्त समासांतपरत्वंशेषाधिकारस्थपरत्वंचकथमित्यतआह।तंत्रादिनेति।अर्थभेदेनशब्दभेदःसत्यप्यर्थभेदेशब्दस्याभेदइतिमतद्वयं।आद्येआवृत्तिः।द्वितीयेतंत्र मितिविवेकः।यच्चवदतिप्रतिपदोक्तास्समासांताःस्वविषयेबाधकाभवंतितत्किमनुक्तसमासांतपरेणशेषग्रहणेनेतितन्न।ऋक्पूरित्यादीनांसमासांतरेचरितार्थ तयाप्रियपथइत्यादौपरेणकपावाधापत्तेः॥

वपठ्यंते तस्य च प्रयोजनं विषयविशेषपरिग्रह इत्याशयेनाह स्त्रियामिति। यच्चेहोपमानपूर्वे संख्यापूर्वे च पठ्यते तत्स्यासिद्धे लोपे नित्यं ङीवर्थं वचनं तेन पादोन्यतर
स्यामिति विकल्पो न भवति। द्विदन्निति। द्वौ दंतौ वयसा जातौ। शिशुत्वावस्था त्विह गम्यते। उगिद्वामिति नुम् संयोगांतलोपस्यासिद्धत्वान्नलोपो न। षोडन्निति। षष उ
त्वं दन्नदशेत्यनेनोत्वष्टुत्वे। सुदतीति। उगितश्चेति ङीप्। समदतीति। नासिकोदरेत्यादिना ङीप्। श्यावदन्निति। श्यावः स्यात्कपिशस्त्यमरः। अरोकदन्निति। अरो
काश्छिद्रा दंता अस्य सः॥ ॐ॥ अयांत। इहा उक्तसमुच्चयार्थश्चकारस्तेन मूषिकदन्निति सिध्यतीत्याहुः। अजातेति। अजातं ककुदमस्येति विग्रहः। इह हि बाल्या

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च। ५।४।१४५। एभ्यो दन्तस्य दतृ वा। कुड्मलाग्रदन्। कुड्मलाग्रदन्तः। ककुदस्याऽवस्थायां लोपः। ५।४।१४६। अ
जातककुत्। पूर्णककुत्॥ त्रिककुत्पर्वते। ५।४।१४७। त्रीणि ककुदान्यस्य। त्रिककुत्। संज्ञैषा पर्वतविशेषस्य। त्रिककुदोऽन्यः। उद्विभ्यां काकु
दस्य। ५।४।१४८। लोपः स्यात्। उत्काकुत्। विकाकुत्। काकुदं तालु। पूर्णाद्विभाषा। ५।४।१४९। पूर्णकाकुत्। पूर्णकाकुदः। सुहृद्दुर्हृदौ मित्राऽमित्र
योः। ५।४।१५०। सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रं दुर्हृदमित्रः। अन्यत्र सुहृदयः। दुर्हृदयः। उरःप्रभृतिभ्यः कप्। ५।४।१५१। व्यूढो
रस्कः। प्रियसर्पिष्कः। इह पुमान्। अनड्वान्। पयः। नौः। लक्ष्मीरिति एकवचनान्ता निपठ्यन्ते। द्विवचनबहुवचनान्तेभ्यस्तु शेषाद्विभाषेति वि
कल्पेन कप्। द्विपुमान्। द्विपुंस्कः। अर्थान्नञः। अनर्थकं। नञः किं। अपार्थं। अपार्थकः। इनः स्त्रियां। ५।४।१५२। बहुदण्डिका नगरी। अनि
नस्मिन्ग्रहणान्यर्थवता चानर्थकेनाऽपि तदन्तविधिं प्रयोजयन्ति। बहुवाग्मिका॥ स्त्रियां किं। बहुदण्डी। बहुदण्डिको ग्रामः॥ ६॥

वस्था गम्यते। उरःप्रभृतिभ्यः कप्। उरःप्रभृत्यंताद्बहुव्रीहेः कप्स्यात्। समासार्थोत्तरपदांताः समासांता इति पक्षे तु बहुव्रीहेरवयवेभ्यः उरःप्रभृतिभ्यः कविति
व्याख्येयं। तद्धितत्वात्तस्य नेत्त्वं। व्यूढोरस्क इति। व्यूढविशालमुरो यस्य सः। सोपदादाविति विसर्जनीयस्य सः। प्रियसर्पिष्क इति। इणः ष इति विसर्गस्य षत्वं। एकवच
नांतानीति। नद्यृतश्चेति सिद्धे लक्ष्मीशब्दपाठस्त्विह एकवचनांतलक्ष्मीशब्दावयवकबहुव्रीहेरेव नित्यं कप् अन्यत्र शेषाद्विभाषेति विकल्प एवेति। नियमार्थस्तेनाकृशल
कृशलक्ष्मीश्चेत्संशांसितेस इति भारविप्रयोगः सिद्धः। अकृशा लक्ष्मीर्यस्येति विग्रहः। यत्तु प्राचोक्तं नद्यृतश्चेति वा प् बहुलक्ष्मीक इति तदयुक्तं। संख्याना वि

एवंतरपोविधानात्। ततश्च धवखदिरपलाशा इत्यादौ बहुषु नियमो न स्यात्। ऋतुनक्षत्राणामिति। ऋतूनामानुपूर्व्येण प्रादुर्भावकृतं नक्षत्राणां तूदयकृतं। अभ्यर्हि-
तं चावासुदेवार्जुनाभ्यां वुन्निति निर्देशेनेदं ज्ञाप्यत इति चतुर्थभाष्ये। अल्पाच्तरमजाद्यदन्तमिति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति सर्वतो
भ्यर्हितं पूर्वमिति। तत्रैव सूत्रे वक्ष्यते। युधिष्ठिरार्जुनाविति। इंद्रपुत्रत्वाद्विष्णोरंशत्वाच्छूरत्वाद्वा अभ्यर्हितत्वमर्जुनेप्यस्तीति न तेन नियमः सिध्यतीति भावः॥
द्वंद्वश्च प्राणि। प्राणितूर्यसेनानामंगानीति बहुवचनांतेनांगशब्देन षष्ठीसमासः। अंगशब्दस्य प्रत्येकमन्वेतीति तेन प्राण्यंगानां प्राण्यंगैरेव तूर्यांगानां तूर्यांगै-
रेव सेनांगानां सेनांगैरेव यो द्वंद्वः स एकवद्भवति न तु व्यतिकरेण तेनेह न। मार्दंगिकाश्वारोहौ। अत्र प्राणिसेनयोरंगं नामावयवः तूर्यस्य त्वंगं नामोपकारकं वो-

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्।२।४।२। एषां द्वंद्व एकवत्स्यात्। पाणिपादं। मार्दङ्गिकपाणविकं। रथिकाश्वारोहं। समाहारस्यैकत्वादेकत्वे सिद्धे
नियमार्थम्प्रकरणं। प्राण्यङ्गादीनां समाहार एव यथा स्यात्। अनुवादे चरणानाम्।२।४।३। चरणानां द्वंद्व एकवत्स्यात् सिद्धस्योपन्यासे स्थेणो
र्लुङीति वक्तव्यं। उदगात्कठकालापं। प्रत्यष्ठात्कठकौथुमं। अध्वर्युक्रतुरनपुंसकम्।२।४।४। यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसक
लिङ्गानां द्वंद्व एकवत्स्यात्। अर्काश्वमेधं। अध्वर्युक्रतुः किं। इषुवज्रौ। सामवेदे विहितौ। अनपुंसकं किं। राजसूयवाजपेये। अर्द्धर्चादी। अध्ययन
तोऽविप्रकृष्टाख्यानाम्।२।४।५। अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्। पदककमकं॥ ९९ ध्यं एषां द्वंद्व इति। प्राण्यंगानां द्वंद्व सू-

र्यांगानां द्वंद्वः सेनांगानां द्वंद्व इत्यर्थः। द्विगुरेकवचनमित्यत एकवचनं वर्तते। तत्रैकवतीति व्युत्पत्त्या एकत्वविशिष्टः समाहाररूपो योर्थस्तत्प्रतिपादकः स्यादित्य-
र्थमन्वानः फलितमाह। एकवत्स्यादिति। पाणिपादमिति। यद्यप्यत्र जातिरप्राणिनामित्येव सिद्धं तथापि द्रव्यप्राधान्येपि भवत्विति प्राणिग्रहणमित्येके॥ पाणिप-
णवाविति व्यतिकरे मा भूदिति नियमार्थं वचनमित्यन्ये। मार्दंगिकेति। मृदंगवादनं शिल्पमस्येत्यर्थे शिल्पमिति ठक्। एवं पाणविक इत्यपि। रथिकाश्वारोहमिति रथे-
न चरंतीति रथिकाः पर्पादिभ्यः ष्ठन्निति ष्ठन्। ते चाश्वारोहाश्च तेषां समाहारः। ननु चार्थे द्वंद्व इत्यनेन समाहारद्वंद्वसिद्धस्तस्य चैकत्वादेकवचनमपि सिद्धमिति
किमनेनेत्याशंक्याह नियमार्थमिति। समाहार एवेति। समाहारे प्राण्यंगादीनामेवेति विपरीतनियमोऽत्र न भवतीति तिष्यपुनर्वस्वोरिति सूत्रे बहुवचनग्रहणात्तद्धि-

ईयसश्च नित्योवैकल्पिकश्च कप् सर्वोपि निषिध्यते। वहुश्रेयानिति। अतिशयेन प्रशस्यः श्रेयान्। द्विवचनविभज्येतीयसुन्। प्रशस्यस्य श्रः। शेषाद्विभाषेति कप्प्राप्तः। व
हुश्रेयसीति नद्युतश्चेति नित्यं प्राप्तः कप् लिंगविशिष्टपरिभाषया ईयसश्चेति प्रतिषिध्यते। वहुनाडिरिति। उपसर्जनह्रस्वः स्त्रीप्रत्ययान्तत्वाभावादिति। अविद्यस्त्वते
त्रिप्प इतीप्रत्ययस्य स्त्रियामित्यधिकारेऽविहितत्वादिति भावः। सप्तमी विशेषणे यदा कण्ठे किंचिदस्तीति ज्ञाते तस्य विशेषणं काल इति तदेदं सप्तमीग्रहणमन्यदा तु ते
न विनापि विशेषणत्वादेव सिद्धं चित्रगुरिति। न चोपसर्जनं पूर्वमित्येवेदं सिध्यतीति वाच्यं। वहुव्रीहौ सप्तमीत्युक्तं तत्र कौण्डिन्यन्यायेनोपसर्जनं पूर्वं तस्य वाधा

ईयसश्च ५।४।१५६। ईयसन्तोत्तरपदान्न कप्। वहवः श्रेयांसोऽस्य वहुश्रेयान्। गोस्त्रियोरिति ह्रस्वत्वे प्राप्ते। ईयसो वहुव्रीहेर्नेति वाच्यं। वह्व्यः श्रे
यस्योऽस्य वहुश्रेयसी। वहुव्रीहेः किं। अतिश्रेयसिः। वन्दिते भ्रातुः ५।४।१५७। पूजितेर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात्। प्रशस्तो भ्राता
यस्य। प्रशस्तभ्राता सुभ्राता। न पूजनादिति निषेधस्तु वहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवेति वक्ष्यते। वन्दिते किं। मूर्खभ्रातृकः। नाडीतन्त्र्योः
स्वाङ्गे। ५।४।१५९। स्वाङ्गे यो नाडी तन्त्रीशब्दौ तदन्तात्कप् न स्यात्। वहुनाडिः कायः। वहुतन्त्रीर्ग्रीवा तन्त्री धमनी। स्त्रीप्रत्ययान्तत्वाभावाद्ध्र
स्वो न। स्वाङ्गे किं। वहुनाडीकः स्तम्भः। वहुतन्त्रीका वीणा। निष्प्रवाणिश्च ५।४।१६०। कवभावोऽत्र निपात्यते। प्रपूर्वाद्वयतेर्ल्युट् प्रवाणी तन्तुवायश
लाका। निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः। समाप्तवानो नव इत्यर्थः। सप्तमी विशेषणे वहुव्रीहौ। २।२।३५। सप्तम्यन्तं विशेषणं च वहुव्रीहौ पू
र्वं प्रयोज्यं। कण्ठेकालः। अत एव ज्ञापकाद्व्यधिकरणपदो वहुव्रीहिः। चित्रगुः। सर्वनामसंख्ययोरुपसंख्यानं सर्वश्वेतः। द्विशुक्लः। मिथोनयोः स
मासे संख्या पूर्वं शब्दपरं विप्रतिषेधात्। द्व्यन्यः। संख्यायाः॥ ९९ ॥ यत्नेऽतो विशेषणग्रहणं कृतं सर्वनामेति। कथं तर्हि तः परो यस्मात्तत्परइति। कथं च जहत्स्वार्था
वृत्तिरिति। इह हि जहत्स्वं पदं यं स जहत्स्वः सोर्थो यस्या मिति वहुव्रीहिगर्भो वहुव्रीहिस्तथा च स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातेन भाव्यमिति चेदत्राहुः सूत्रभाष्यप्रयो
गात्स्वपरशब्दयोर्न पूर्वनिपातः राजदन्तादित्वाद्वा सिद्धमिति। द्विशुक्ल इति। यद्यपि सर्वनामत्वेनैव द्विशब्दस्य पूर्वनिपातत्वं सिध्यति तथापि त्रिशुक्ल इत्यादिसिद्धये वा
र्तिके संख्याग्रहणं कृतं। न च संख्याया अल्पाच्तरत्वेन संख्या सर्वनाम्नोरिति वाच्ये विपरीतोच्चारणमयुक्तमित्याशंक्याह मिथोनयोरिति। विपरीतोच्चारणमेवात्र लिंगमिति

एतच्च जातिग्रहणाल्लब्धमन्यथा पर्युदासेनैव जात्युपसर्जनद्रव्यवाचिनोपि ग्रहणोपपत्तौ किं तेनेति भावः। द्रव्यविशेषेति। नन्वेवं रंजितास्तु विविधास्तरुशैला इति भार
वेः प्रयोगः संगच्छत एवेति किमिति तरुसहिताः शैला इति मनोरमायां समर्थितमिति चेदत्राहुः। सकलतरुशैलरंजनं तत्र विवक्षितं न तु केषांचित्तरुशैलविशेषाणामि
जातिप्राधान्यादेकवद्भावमाशंक्य तथोक्तमिति। वदरामलकानीति। फले लुगिति लुक्। लुक्तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुकि फलत्वजात्युपसर्जनद्रव्यवच
नावेतौ विभाषा वृक्षमृगेति सूत्रेण वदराणि चामलकानि च वदरामलकं जातिरप्राणिनामित्येकवद्भाव इति वक्ष्यति तत्तु नानेनग्रंथेन विरुध्यते। फलत्वजातिवाचि
नां बहुवचनांतानामेव द्वंद्व एकवद्भवति न त्वेकवचनांतानां द्वंद्व इति फलसेनावनस्पतीति वार्त्तिकोक्तनियमस्तु पेत्यत्र तत्त्वं। विशिष्टलिंगो सूत्रे चत्वारोपिश
ब्दा अवयवधर्मेणावयविनिर्द्देवर्त्तत इत्याशयेनाह। ग्रामेत्यादि। इह नदीवाचिनां द्वंद्वः देशवाचिनां द्वंद्व इति वाक्यभेदेन व्याख्येयं तेन गंगाकुरुक्षेत्रे इत्यत्र न
भवति। देशशब्देनात्र प्रसिद्ध एव जनपदो गृह्यते। नद्याः पृथग्ग्रहणात्तेन पर्वतानां न कैलासश्च गंधमादनं च कैलासगंधमादने। नदीदेश इति किं। कुक्कुटमयू
र्यौ। विशिष्टपदस्यार्थमाह भिन्नलिंगानामिति विशब्दो हि शिषिर्भेदार्थः। अत एव विशेषणं विशेष्येणेति सूत्रे भेदकं भेद्येनेति व्याख्यातं समाहारे द्वंद्वः स्यादिति
निष्कर्षाभिप्रायेणायमुक्तिः यथाश्रुताभिप्रायेण तु द्वंद्व एकवत्स्यादिति केषुचित्सूत्रेषु व्याख्यायत इति ज्ञेयं। उद्ध्यश्चेरावती चेति। उद्ध्यो नदः। सोपि नदीविशेषत्वान्न
दीशब्देन गृहीतः। एवं शोणोपि। अग्रामा इत्यत्र नगरप्रतिषेधो वक्तव्यस्तेन मथुरापाटलिपुत्रं इत्यत्र निषेधो न भवति उभयोरपि नगरत्वात्। क्षुद्र अपचितपरि
माणत्वं क्षुद्रत्वं। तच्चापेक्षिकत्वादनवस्थितं। यच्च स्मर्यते। क्षुद्रजंतुरनस्थिः स्याद्⁻थवा क्षुद्र एव यः शतं वा प्रसृतौ येषां केचिदानकुलादपीति। तत्र सर्व
पक्षसाधारण्येनोदाहरति। यूकालिक्षमिति। आनकुलादिति। नकुलपर्यंता इत्यर्थः। येषां च विरोधः। विरोधो वैरं न तु सहानवस्थानं। तेनेह न। छायातपौ श
श्वदित्यव्ययं त्रैकाल्ये वर्त्तते तत्र भवः शाश्वतिकः कालाट्ठञ्। अत एव निपातनाद्विसुसुक्तांतादिति कादेशो अव्ययानां भमात्र इति टिलोपश्च न। शाश्वतिकः किं।
देवासुरैरमृतमंबुनिधिर्ममंथे तेषां त्वमृतादिप्रयुक्तः। कादाचित्को विरोधो न तु नित्यः। मंथनप्रवृत्तिकाले तद्विरहात्। परत्वादिति। पशुशकुनिद्वंद्वस्यावका
शो गोमहिषं गोमहिषाः हंसचक्रवाकं हंसचक्रवाकाः। येषां चेत्यस्यावकाशः मार्जारमूषकं श्रमणब्राह्मणमित्यादौ ज्ञेयः चकारेणाबाध्यत इति। चकारः ५

रेकवचनस्य द्विवचनं माभूदिति कृतमन्यथा तिष्यपुनर्वसुरिति न स्यादिति। एवं च द्वन्द्वश्च प्राणितूर्येति प्रकरणबहिर्भूतानामपि समाहारद्वन्द्वो भवत्येव तेन सर्वो द्वन्द्वो विभाषैक। वद्भवतीति पठ्यमानेनाप्येकवचनमिति ज्ञेयं। चरणानामिति। शाखाध्येतृवाचिनामित्यर्थः। स्थेणोरिति। ष्ठा गतिनिवृत्तौ। इण् गतौ। स्थाप्रकृतिक इण्प्रकृतिकलुङन्ते उपप देसतीत्यर्थः। स्थेणोः किं। अभूवन् कठकालापाः। लुङि किं। तिष्ठन्ति कठकालापाः। उदगादिति। इह यदा कठेषु च प्रतिष्ठितेषु उदितेषु च ताभ्यां पत्रगतत्वमिति संकेतयित्वा तत्संकेतं विस्मृत्यासीनं प्रतीदमुच्यते। कठेन प्रोक्तमधीयते कठाः। वैशंपायनान्तेवासित्वाण्णिनिः। तस्य कठचरकाद्लुगिति लुक्। अध्येतृणामुपपन्ना त्वगिति लुक्। कला

जातिरप्राणिनाम्। २।४।६। प्राणिवर्ज्जजातिवाचिनां द्वन्द्व एकवत्। धानाशष्कुलि। प्राणिनां तु। विट्शूद्राः। द्रव्यजातीनामेवेनेह। रूपरसौ। गमनाकुञ्चने। जातिप्राधान्य एवायमेकवद्भावः। द्रव्यविशेषविवक्षायां तु। बदरामलकानि। विशिष्टलिङ्गो नदी देशोऽग्रामाः। २।४।७। ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्वः स्यात्। उद्ध्यश्चेरावती च। उद्ध्येरावति। गङ्गा च शोणश्च गङ्गाशोणं। कुरवश्च कुरुक्षेत्रं च। कुरुकुरुक्षेत्रं। भिन्नलिङ्गानां किं। गङ्गायमुने। मद्रकेकयाः। अग्रामाः किं। जाम्बवं नगरं। शालूकिनी ग्रामः। जाम्बवशालूकिन्यौ। क्षुद्रजन्तवः। २।४।८। एषां समाहारे द्वन्द्वः स्यात्। यूकालिक्षं। आनकुलात् क्षुद्रजन्तवः। येषां च विरोधः शाश्वतिकः। २।४।९। एषामप्येकवत्। अहिनकुलं। गोव्याघ्रं। काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षमृगेति प्राप्तं चकारेण बाध्यते। शूद्राणामनिरवसितानाम्। २।४।१०। अबहिष्कृतानां शूद्राणामेकवत्। तक्षायस्कारं। पात्राद्बहिष्कृतानां तु। चाण्डालमृतपाः॥ ९ पिनोपा। सब्रह्मचारीत्यादावुपसंख्यानाद्विलोपः प्रजुरिति सूत्रेऽध्वर्युशब्दो यजुर्वेदलक्षक इति भावः। पदकेति। पदान्यधीते पदकः। क्रमादिभ्यो वुन्। एवं क्रमकोऽपि। पदान्यधीत्य क्रमोऽध्येतव्य इति स्पष्टा प्रत्यासत्तिः। अध्ययनेनतः किं। पितापुत्रौ। अविप्रकृष्टेति किं। याज्ञिकनैयायिकौ॥ ॐ॥ जातिः। जातिवाच्यवयवकद्वन्द्वोऽपि जातिरित्युपचर्यत इत्याशयेनाह। जातिवाचिनामिति। विट्शूद्रा इति। जातिप्राधान्येऽपि बहुवचनमुपपद्यते। जात्याख्यायामेकस्मिन्निति विधानात्तेनात्र न्यंग्विकल्पेनेति भावः। द्रव्यजातीनामेवेति। अप्राणिनामिति पर्युदासान्नञिवयुक्तन्यायेन द्रव्यजातीयानामेकवद्भावो न तु गुणक्रियाजातीयानामिति भावः। जातिः किं। नन्दकपाञ्चजन्यौ। संज्ञाशब्दावेतौ। जातिप्राधान्य एवेति॥ ९॥

कंबहुवचनं। बदरामलकेइति। जातिप्राधान्येप्येकवचनं। तयोर्द्वंद्वइतिनास्त्येकवद्भावइतिभावः। पशुग्रहणमिति। विकल्पार्थमित्यनुषज्यते। चार्थेद्वंद्वइत्य
नेनैवसिद्धेमृगशकुनिग्रहणंप्रतिपदविधानार्थं। तेनाश्ववडवमित्येकवद्भावपक्षेपूर्ववदश्ववडवावित्येतद्बाधित्वा सनपुंसकमित्येतदेवभवति सइतितच्छ
ब्देनत्वेकवद्भावभाजंपरामृश्यविधीयमानेननपुंसकत्वं ——— एकवद्भाववदेवप्रतिपदविहितंभवति तथाचप्रतिपदोक्तस्यबलीयस्त्वान्नपुंसकत्वंसिध्य
तीति॥ ॥ विप्रतिषिद्धं॥ अधिकरणमिहद्रव्यं। चकारोविभाषानुकर्षणार्थस्तदेतद्व्याचष्टे विरुद्धार्थानामित्यादिउदाहरणंतुशीतोष्णंशीतोष्णेसुखदुःखंसु
खदुःखेइत्यादिविरोधोत्रसहानवस्थानलक्षणःभवत्येवेति। विप्रतिषिद्धग्रहणाभावेतुसनस्यात्। अद्रव्यवाचिनामेवेतिनियमादितिभावः। अनधिकरणवा

विप्रतिषिद्धंचानधिकरणवाचि। २।४।१३। विरुद्धार्थानामद्रव्यवाचिनांद्वंद्वएकवद्वास्यात्। शीतोष्णं। शीतोष्णे। वैकल्पिकस्समाहारद्वंद्वस्त्वा
र्थेइतिसूत्रेणप्राप्तः। सविरुद्धार्थानांयदिभवतितर्हिअद्रव्यवाचिनामेवेतिनियमार्थमिदं। तेनद्रव्यवाचिनामितरेतरयोगएव। शीतोष्णेउद
केस्तः। विप्रतिषिद्धं किं। नन्दकपाञ्चजन्यं। नन्दकपाञ्चजन्यौ। इहपाक्षिकःसमाहारद्वंद्वोभवत्येव। नदधिपयआदीनि। २।४।१४। एतानिनैकव
त्स्युः। दधिपयसी। इध्माबर्हिषी। निपातनाद्दीर्घः। ऋक्सामे। वाङ्मनसे। अधिकरणैतावत्त्वेच। २।४।१५। द्रव्यसंख्यावगमेएकवदेवेतिनिय
मोनस्यात्। दशदन्तोष्ठाः। विभाषासमीपे। २।४।१६। अधिकरणैतावत्त्वस्यसामीप्येनपरिच्छेदेसमाहारएवेत्येवंरूपोनियमोवास्यात्। उप

चीतिकिं। शीतोष्णेउदकेस्तः इहपाक्षिकःसमाहारद्वंद्वोपिस्यादितिदिक्। नदधिपयआदीनि। दधिपयसीइति। व्यंजनत्वाद्विक ॥ दशंदन्तोष्ठं। उपदशाःदन्तोष्ठाः॥
ल्पः प्राप्तः। एवंमधुसर्पिषी। सर्पिर्मधुनी इत्यत्रापिबोध्यः इहब्रह्मप्रजापती शिववैश्रवणावित्यादौसमाहारद्वंद्वनिषेधमुखेनेतरेतरयोगद्वंद्वोऽनेनव्यवस्थाप्य
तेतत्साहचर्याद्दधिपयसीइत्यादावपितथैव। तेनतत्रव्यंजनत्वप्रयुक्तविकल्पेनिषिद्धेपिजातिलक्षणोनित्यमेकवद्भावोस्त्वितिनशंकनीयं किंचनेहलक्ष
णाविशेषेआग्रहः। एतानिनैकवत्स्युरित्येकवद्भावमात्रस्यनिषेधात्। यथानषट्स्वस्रादिभ्यइत्यत्रङीपटापोरुभयोरपिनिषेधसिद्धयेस्त्रियांयदुक्तंतन्नेतिसामा
न्यतोनिषिध्यतइतिदिक्। ऋक्सामेवाङ्मनसइति। अचतुरित्यादिनाऽत्रसमासांतोचनिपात्यते। अधिकरणे। समासार्थस्याश्रयोऽधिकरणंवर्त्तिपदार्थस्तस्यैताव

पुनर्विधायक इति भावः। शूद्राणां। त्रैवर्णिकेतरमनुष्यपरः। शूद्रशब्दो न तु शूद्रत्वजातिपरः। अनिरवसितानामिति निषेधात् पात्राद् इति। यैर्भुक्ते भस्मना शुध्यते कांस्य
मित्यादिस्मृत्युक्तसंस्कारेणापि पात्रं न शुध्यति तेषामित्यर्थः॥ ॥गवाश्व॥ यथोच्चारितानीति। गणपाठे पाणिनिना यथा पठितानि तथैव साधूनीत्यर्थस्तेनावडःपा
क्षिकत्वाद्यदा नावड् तदा उत्तरसूत्रेण विकल्पो न भवति गोऽश्वम्। अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गोऽश्वाः। गवाश्वमिति। इह पशुद्वन्द्वविभाषा प्राप्ता। दासी
दासमिति। अत्र पुमान्स्त्रियेत्येकशेषो बाध्यते विभाषा। विशेषाणामेवेति। अयंभावः। वृक्षादिशब्दैः प्रत्येकं द्वन्द्वो विशेष्यते न चैको वृक्षशब्दो द्वन्द्वः। नच

गवाऽश्वप्रभृतीनि च।२।४।११। यथोच्चारितानि साधूनि स्युः। गवाश्वम्। दासीदासमित्यादि। विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्वव
डवपूर्वापराऽधरोत्तराणाम्।२।४।१२। वृक्षादीनां समानां द्वन्द्वः। अश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वत्। वृक्षादौ विशेषाणामेव ग्रहणं। प्लक्षन्य
ग्रोधं। प्लक्षन्यग्रोधाः। रुरुपृषतं। रुरुपृषताः। कुशकाशं। कुशकाशाः। व्रीहियवं। व्रीहियवाः। दधिघृतं। दधिघृते। गोमहिषं। गोमहिषाः। शु
कबकं। शुकबकाः। अश्ववडवं। अश्ववडवौ। पूर्वाऽपरं। पूर्वाऽपरे। अधरोत्तरं। अधरोत्तरे। फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधा
न्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यं। बदराणि चाऽऽमलकानि च। बदरामलकं। जातिरप्राणिनामित्येकवद्भावो नेह। बदराम
लके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। इत्यादि। विभाषा वृक्षेति सूत्रे येऽप्राणिनस्तेषां ग्रहणम्। जातिरप्राणिनामिति नित्ये प्राप्ते विकल्पार्थं।
पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते। मृगाणां मृगैरेव शकुनीनां शकुनिभिरेवोभयत्र द्वन्द्वः। अन्येषु तु सहेतरेतरयोग एवेति नियमार्थं
मृगशकुनिग्रहणं। एवं पूर्वापरमधरोत्तरमित्यपि। अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थं। अन्यथा परत्वात् पूर्ववदश्ववडवाविति स्यात्॥

द्वयोः सह प्रयोगः। सरूपाणामित्येकशेषात्। नापि पर्यायाणां विरूपाणामपि समानार्थानामित्येकशेषात्। नापि वृक्षधवश्वेत्यादि सामान्यविशेषयोः अनभिधानात्
त्र द्वन्द्वस्यैवाभावादिति। सर्वप्रकरणशेषतया नियममाह। फलसेनेत्यादि। फलसेनादीनां द्वन्द्वो विभाषा वृक्षमृगेत्यनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृति
रेव एकवद्भवतीत्यर्थः। बहवो वर्त्तिपदार्थाः बहुवचनान्ता वा प्रकृतिः कारणं। यस्य स बहुप्रकृतिः। बदराणि चामलकानि चेति। जात्याख्यायामेकस्मिन्निति वैकल्पि

पुंवदित्यर्थातिदेशस्य फलमनेन दर्शितमन्यथा स्त्रीत्वस्यानिवर्त्तनात्सुद्रूः स्यात् गर्गीन्यस्येत्यत्र नत्वं च सिद्धं रूपातिदेशे तु नेत्थं सिध्येत् सामान्यातिदेशे विशेषानतिदेशादित्या
हुः वृद्धो यूनेत्याद्यनुवर्त्तनान्नेह। गार्गीवत्स्यायनौ च॥ ५ ॥ पुमांस्त्रिया। वृद्धो यूनेति निवृत्तौ सरूपाणामिति त्वनुवर्त्तते भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्यतो न हंसश्च वरटा चेत्यत्र
न भवत्यन्यथा स्यादेवातिप्रसंगः हंसत्वजातिसाम्येन शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वात् स्यादेतत् गौरियं गौश्चायं तयोः सहोक्तौ एतौ गावाविति नियमतो न स्यात्
स्त्रीलक्षणविशेषाभावात् किन्तु स्त्रीवाचकस्य पुंवाचकस्य वा सरूपाणामित्येकशेषोऽनियमेन स्यात् अत्राहुः तदितरकृतविशेषाभावे तात्पर्यान्न दोषः इति इदं च एषा वित्यादौ
त्वेकशेषो भवति स्त्रीत्वपुंस्त्वेतरसंयोगकृतविशेषस्य सद्भावात् स्यादेतत् एतौ गावाविति नियमतो न स्यादिति मनोरमायां मद्वक्तां तत्कथं संगच्छतां त्यदादितः शेषे पुंन
पुंसकत इति नियमप्रवृत्त्या स्त्रीवाचिगोशब्दस्य शेषेपि एतौ गावाविति नियमतः प्रयोगः सिध्यत्येवेति चेदत्र केचित् दिक्प्रदर्शनमात्रमिदानीन्तनो गावौ वृद्धरेगावाविति नि

पुमान्स्त्रिया॥ १।२।६७॥ स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ। भ्रातृपुत्रौ स्वसृदुहितृभ्याम्॥ १।२।६८॥ भ्राता
च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्॥ १।२।६९॥ अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा
एकवत्स्यात्तल्लक्षण एव विशेषश्चेत्। शुक्लः पटः शुक्ला पटी शुक्लं वस्त्रं तदिदं शुक्लं तानीमानि शुक्लानि॥ ९॥ यमतो न स्यादित्युदाहृत्यैव मयवाए

तशब्दो नादंतः कर्बुरवाची। एताश्च एताश्च एतौ गावौ कर्बुरौ गावौ सरूपाणामित्यनेन स्त्रीलिंगशेषे तु एते गावावित्यपि स्यादिति यथाश्रुतमेव समर्थनीयमित्याहुः तदपरे न क्ष
मंते त्यदादितः शेष इति नियमाऽप्रवृत्तावपि पुमान्स्त्रियेति नियमप्रवृत्त्या नीलो गावौ वैतौ गावाविति नियमतः सिध्यत्येवेति। अत्र वदंति अदृष्टत्वस्य विशेषणानामित्येत
न्न्यायसिद्धमेव वचने विशेष्ये यल्लिंगं तदेव विशेषणेष्वपीति सर्वसंमतत्वात् एवं च दृष्टत्वस्य विशेषणेष्विवैकशेषविशेषणेष्वपि तत्र त्यदादितः शेष इत्यादिनि
यमाऽप्रवृत्त्या विशेष्यगतमेव लिंगं भवतीति स्त्रीवाची गोशब्दस्य शेषे एते इति स्यादेवेत्येतौ गावाविति नियमतो न स्यादित्याक्षेपः संगच्छत एवेति दिक्। नपुंसकमना अन्यतरस्यां
ग्रहणमेकवच्चेत्यनेनैवानंतर्यात्संबध्यते न त्वेकशेषेणेत्याशयेनाह क्लीबं शिष्यते तच्च वा एकवदिति। अनपुंसकेनेति किं शुक्लं च शुक्लं च शुक्ले। अनेकवच्चेति न भवति।
स्यग्रहणमस्यैवैकशेषस्य एकवद्भावोपयाविज्ञापयेते त्येवमर्थमन्यथा उत्तरत्राप्येकवदित्यस्यानुवृत्तिः शंक्येत। शुक्लः पट इत्यादि शुक्लः शुक्ला शुक्लमित्येव विग्रहः पर:

रानियमस्तस्मिन्नाम्यमाने इति व्याचष्टे। द्रव्यसंख्यावगमे इति नियमो न स्यादिति न चेह प्राप्त्यंगत्वात्प्राप्तस्यैकवद्भावेति नियमस्य प्रतिषेधेऽपि चार्थे द्वन्द्व इति समाहारे द्वन्द्वः स्या
दिति वाच्यं। सविशेषणानां वृत्तिर्नेत्यभ्युपगमेन समाहारद्वन्द्वस्य प्राप्त्यभावात्। न चोक्तन्यायेनेतरेतरयोगद्वन्द्वोऽपि न स्यादिति वाच्यं। सामान्याप्रयोग इति लिंगात्प्रधान
स्य सापेक्षत्वेऽपि तदभ्युपगमात्। तदुक्तं हि भाष्ये। भवति वै प्रधानस्य सापेक्षस्यापि वृत्तिरिति। स्यादेतत्। समाहारद्वन्द्वस्यानभ्यासभावे द्वन्द्वश्च प्राणितूर्येति नियमाप्रवृत्त्या इत
रेतरयोगद्वन्द्वो निर्बाध एवेति सूत्रमिदमकिंचित्करमिति चेदत्राहुः। नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे द्वन्द्वश्च प्राणितूर्येति सूत्रे केवलमितरेतरयोगद्वन्द्वनिषेधप
रं। तथा चेतरेतरयोगनिषेधस्य निषेधद्वारा इतरेतरयोगद्वन्द्वप्रापणार्थमिदमिति। एवं च निषेधमुखप्रवृत्तिपक्षस्य ज्ञापनायेदमिति फलितमिति दिक्। विभाषासमीपेय
च पीह समाहारद्वन्द्वो वेति व्याख्यानेऽपि न क्षतिः तथापि पूर्वसूत्रे नियमनिषेधस्योक्तत्वात्तदनुरोधेनाह। नियमो वा स्यादिति। उपदशं दंतोष्ठमिति। एकवद्भावपक्षे अव्ययी
भावस्यैवात्र प्रयोगः। यदि तु बहुव्रीहेस्तदा उपदशस्य दंतोष्ठस्येति षष्ठी स्यात् उपदशं दंतोष्ठस्येत्येवेष्यत इत्याकरः। दंतोष्ठस्य दर्शनमित्यभिप्रायेण षष्ठ्यां शतायामपि उप

आनङ् ऋतो द्वन्द्वे। ६।३।२५। विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः। माता
पितरौ। पुत्रेऽन्यतरस्यामित्यतो मण्डूकप्लुत्या पुत्र इत्यनुवर्तते॥ ९९८॥ शब्दे षष्ठी नेष्यते अतो बहुव्रीहेर्नानुप्रयोगः किं त्वव्ययीभावस्यैवेति तदाशयः॥

॥ ॐ ॥ आनङ् ऋत इति षष्ठ्यन्तं तेनात्रैकवचनं। ऋतो विद्यायोनिसंबंधेभ्य इति त्वत्र वर्तते तच्चात्र षष्ठ्या विपरिणम्यते तदाह विद्यायोनिसंबंधवाचिनामिति॥ ननु ऋ
त इत्यनुवर्तनादेव सिद्धे किमनेन ऋतो ग्रहणेन। अत्राहुः। ऋत इति श्रूयमाणं द्वन्द्वविशेषणं। अनुवृत्तं तूत्तरपदे परतो यत्पूर्वं तस्य विशेषणं उत्तरशब्दे परस्थानङ् विधास्य
ते तत्र कार्यिनिर्देशार्थम् [illegible] स्यादिति। उत्तरपदे इति। एतच्चालुगुत्तरपदे इत्यधिकाराल्लभ्यते। उत्तरपदे परतः पूर्वं यद्दंतं तस्यानङित्यर्थः। होता
पोताराविति। आनङो ङित्त्वात्सर्वांत्यस्य ऋकारस्यादेशः सति न लोपः। न चाकारमात्रमेव विधीयतामिति वाच्यं। उरण् रपर इति रपरत्वप्रसंगात्। ननु होतृपदेन पूर्वपदं ना
क्षिप्यते। अन्यथा होतृपोतृनेष्टोद्गातार इत्यत्र मध्यमस्यानङ् स्यात् तत्र विशेष्यासंनिधानात्। ऋत एव स्थाने आदेशेन भवितव्यं न त्वृदंतपदस्य स्थाने इति किमनेनान
ङो ङित्करणेन सत्यं ङित्करणाभावे मित्रावरुणावित्यादौ देवताद्वन्द्वे चेत्युत्तरपदे परे विधीयमानो यमादेशः पूर्वस्यासरस्य पदस्य वा स्यात् पूर्वस्यानङ् सर्वस्येत्यत्र नियामकाभा

ग्राम्या। ग्रामे भवा ग्राम्याः। ग्रामाद्यखञाविति यः लिंगद्वये पि गाव इति रूपस्य समानत्वात्। स्त्रीलिंगशेषस्य फलमाह इमा इति। एवं च इमे च इमाश्च इमा इति स्त्रीलिंगशेष एव भवति न त्वत्र त्यदादितः शेषे पुंनपुंसकतो लिंगवचनानीति पुल्लिंगशेषः। गाव इमा इति भाष्योदाहरणादित्येके। अन्ये तु ग्राम्यपशुसंघविषयत्वाद्विशेषाज्ञा व इति

ग्राम्यपशुसंघेष्वतरुणेषु स्त्री। १।२।७३। एषु सहविवक्षायां स्त्री शिष्यते। पुमान् स्त्रियेत्यस्यापवादः। गाव इमाः। ग्राम्येति किं। रुरव इमे। पशुग्रहणं किं। ब्राह्मणा इमे। संघेषु किं। एतौ गावौ। अतरुणेषु किं। वत्सा इमे। अनेकशफेष्विति वाच्यं। अश्वा इमे। इह सर्वत्र एकशेषे कृते तेनैकसुबन्तानाम्। वा द्वन्द्वो नातेन शिरसी शिरांसीत्यादौ समासस्येत्पन्तौ। रात्रः। एवं द्वन्द्वत्वादेकवद्भावश्च न पन्थानौ। पन्था न इत्यादौ समासान्तो ना इत्येकशेषः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। परार्थाभिधानं वृत्तिः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विधा लौकिकोऽलौकिकश्च परिनिष्ठितत्वात्साधुर्लौकिकः। प्रयोगानर्हो ऽसाधुरलौकिकः। यथा। राज्ञः पुरुषः। राजन् अस् पुरुष सु इत्यविग्रहो नित्यसमासः। अस्वपदविग्रहो वा। समासश्चतुर्विधः इति प्रायोवादः। अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि सह सुपेति विधानात्। पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वन्द्वः। इत्यपि प्राचां प्रवादः प्रायोभिप्रायः। सूपप्रति। उन्मत्तगङ्गमित्याद्यव्ययीभावे। अतिमालादौ तत्पुरुषे। द्वित्रा इत्यादि बहुव्रीहौ। दन्तोष्ठमित्यादि द्वन्द्वे चाभावात्। तत्पुरुषविशेषः कर्मधारयः। तद्विशेषो द्विगुः। अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव तत्पुरुषस्य क्वचिदेवेत्युक्तं। किं च। सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा। सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः। १ सुपां सुपा। राजपुरुषः। तिङा। पर्य्यभूषत्। नाम्ना। कुम्भकारः। धातुना। कटप्रूः। अजस्रं। तिङां तिङापि वत्त खादता। खादत मोदता। तिङां सुपा। कृन्तविचक्षणा इति यस्यां क्रियायां सा कृन्तविचक्षणा। एहीडादयोऽन्यपदार्थे। इति मयूरव्यंसकादौ पाठात्समासः॥ इति सर्वसमासशेषः॥९८॥ ॥

वत् इमा इति च स्त्रीलिंगशेष एव स्यादिति। नास्ति शंकावकाश इत्याहुः एतौ गावाविति। एकशेषस्यानेकविषयत्वादेवानेकपरिग्रहे सिद्धे संघग्रहणसामर्थ्याद्बहूनां समुदायो न गृह्यत इति भावः। एकशेषे कृते इति। विभक्तिं प्रत्यनपेक्षत्वेनान्तरंगत्वादिति भावः। नन्वेवं विषयभेदात् द्वन्द्वापवाद एकशेष इत्युक्तौ सः कथं प्रवर्तत इति चेदत्राहुः ॥

पितामात्रा। श्वशुरः श्वश्र्वा न्वेतत्सूत्रद्वयं व्यर्थं पितृशब्देन मातापित्रोः श्वशुरशब्देन च श्वश्रूश्वशुरयोर्लक्षणया बोधसंभवात्। न च सरूपाणामित्यादिसूत्रस्थ सूत्रवदिदमपि
सूत्रद्वयं द्वन्द्वनिवृत्त्यर्थमावश्यकमिति वाच्यं। पक्षे तस्यापि इष्टत्वादिति चेदत्राहुः। पितृश्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोः केवलयोरुक्तविषये प्रयोगवारणाय मारंभ
णीयमेव सूत्रद्वयम् अनभिधानमाश्रित्य प्रत्याख्यानस्यानुचितत्वादिति। मातापितराविति। पितुर्दशगुणं माता गौरवेणातिरिच्यत इति स्मृतेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः। आन
ङृतत इत्यानङ्। श्वश्रूश्वशुराविति। श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता इति स्मृतेः। श्वश्र्वा अभ्यर्हितत्वात्पूर्वनिपातः। त्यदादीनि सर्वैः। सर्वैः किं। त्यदादिभि
न्नैरपि सहोक्तौ यथा स्यात्। प्रत्यासत्त्या त्यदादिभिरेव सहोक्ताविति अर्थो मा भूत्। यत्परमिति। शब्दपरविप्रतिषेधादिति भावः। त्यदादितः इति। आद्यादित्वात्तसिः। त्यदादी

पितामात्रा।१।२।७०। मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ। मातापितरौ वा। श्वशुरः श्वश्र्वा।१।२।७१। श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते। तथैव
श्वश्रूश्च श्वशुरश्च श्वशुरौ। श्वश्रूश्वशुरौ वा। त्यदादीनि सर्वैर्नित्यम्।१।२।७२। सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च तौ। त्य
दादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते। स च यश्च यौ। क्वचित्पूर्वशेषोऽपि दृश्यते इति भाष्यं। स च यश्च तौ। त्यदादितः शेषे पुन्नपुंसकतो लि
ङ्गवचनानि। सा च देवदत्तश्च तौ। तच्च देवदत्ता च यज्ञदत्ता च तानि। पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते। तच्च देवदत्तश्च ते। अद्वन्द्वत
त्पुरुषविशेषणानामिति वक्तव्यं। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तच्च सा च अर्द्धपिप्पल्यौ ते॥ ९ नांशेषे सहविवक्षिते इयं यः अमानय चन

पुंसकं तद्वशेन लिङ्गप्रातिपदिकानि भवन्तीति वाच्यमित्यर्थः। कानीत्यादि। आद्यामर्थो त्यदादीन्येव। अस्यापवादमाह अद्वन्द्वेति। द्वन्द्वादि विशेषणानां शेषे तं ना। किं
तु विशेष्यनिघ्नतेत्यर्थः। नन्वेवं कुक्कुटमयूर्याविति द्वन्द्वस्य उभयपदार्थप्रधानत्वेन उभयोरपि विशेष्यत्वात् विशेष्यनिघ्नतायामपि कुक्कुटमयूर्याविमे इति नियम
तो न स्यादिति चेदत्र नव्याः। परवल्लिङ्गमित्यनेन द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गवत्त्वाद् उत्तरपदलिङ्गस्यैव द्वन्द्वतत्पुरुषप्रतिपाद्यत्वेन तल्लिङ्गाधीनत्वेनानुप्रयोगस्ये
ति न कदाचिद्व्यभिचरतीति। मयूरीकुक्कुटाविमाविति। प्रकृतानुपयुक्तमप्येतत्प्रसंगादुक्तं। तच्चेति। पिप्पल्यर्द्धं। सा चेति अर्द्धपिप्पली॥ तत्पुरुषविशेषणमुदा
हरति अर्द्धपिप्पल्यौ ते इति। यद्यपि स्त्रीनपुंसकसाधारणास्ते इति प्रयोगस्तथापि तच्च सा च अर्द्धपिप्पल्यस्ता इत्याद्युदाहरणमूह्यं॥ ॥ ॥

विष्णुउरमिति। यद्यपि विपुरशब्देन समासेप्येतत्सिध्यति तथापि विष्णुपूरित्यनिष्टवारणाय सूत्रे पूर्ग्रहणं। कृतसमासांतस्येति। येन विधिरिति सूत्रे आपत्तिष्ठंति स्वायत्तिष्ठं तीति भाष्यादिति भावः। अंतरीपमित्यादि। अंतर्गताः प्रतिकूलाः संगता आपो अस्मिन्निति विग्रहः। उपसर्गग्रहणं प्रादेरुपलक्षणार्थं समाप इति। अनुपसर्गत्वान्नेत्वमिति भावः भाष्ये तु समाप ईत्वप्रतिषेधो वक्तव्य इत्युक्तं स च देवयजनरूपविशेषार्थपरः समीपसमुद्री तिनिर्देशात् समीपमिति भाष्योदाहरणाच्चेति ज्ञेयं। देवयजनमिति देवा इज्यंते अस्मिन्निति व्युत्पत्त्या यज्ञभूमिः। स्वविति। नञ्जनादिति समासांता। भावः। अवर्णांताद्वेति। ऋतरिति सूत्रे ईत्वमनवर्णादिति वक्तव्यं इह मा भूत्॥

विष्णुउरं। क्लीवत्वं लोकात्। विमलापं सरः। द्व्यन्तरुपसर्गेभ्योऽप ईत्। ६।३।९७। अप इति कृतसमान्तस्यानुकरणं षष्ठ्यर्थे प्रथमा एभ्योऽपस्य ई स्यात्। द्विर्गता आपो यस्मिन्निति। द्वीपं। अन्तरीपं। प्रतीपं। समीपं। समापो देवयजनमिति तु समा आपो यस्मिन्निति बोध्यं। कृतसमासान्तग्रहणा न्नेह। स्वप् स्वपी। अवर्णान्ताद्वा॥ प्रेपं। परेपं। प्रापं। परापं। ऊदनोर्देशे। ६।३।९८। अनोः परस्याप्स्य ऊत्स्याद्देशे। अनूपो देशः। राजधुरा। अक्षे त्वक्ष धूः। दृढधूरक्षः। सखिपथोः रम्यपथो देशः। अच्प्रत्यन्ववपूर्वात्सामलोम्नः। ५।४।७५। एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात्। प्रतिसामं। अनुसामं। अवसामं। प्रतिलोमं। अनुलोमं। कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः त्रिभूमः प्रासादः। संख्यायानदीगोदावरीभ्यां च। पञ्चनदं। सप्तगोदावरं। अजिति योगविभागादन्यत्रापि। पद्मनाभः॥ ९९

प्रापं परापमिति भाष्योक्तेः। गतिश्चे ति सूत्रे प्रेपं परेपमिति भाष्योक्तेश्चेति भावः। ऊदनोः। दीर्घोच्चारणं वा विज्ञायामवग्रहार्थं। न कृत्वा सु अनूपे गोमान् गोभिरित्यत्रानूपशब्देनावगृह्णंति। अनूप इति। अनुगता आपोऽस्मिन्निति अनूपो देशः। जलप्रायमनूपं स्यादित्यमरः। प्रतिसाममिति। अव्ययीभावः प्रादिसमासो बहुव्रीहिर्वा। एवमनुसामादावप्यूह्यं। कृष्णोदगिति। अजिति योगविभागेन गतार्थमिदं। एवमुत्तरवार्त्तिकमपि कृष्णभूम इत्यादयो बहुव्रीहयः। पद्मनाभ इति। पद्मं नाभावस्येति विग्रहः। गड्वादित्वात्सप्तम्यंतस्य परनिपातः पद्माकारा नाभिरस्येति वा। एवमूर्णनाभोऽपि ज्ञेयः। तत्र तु अ्यापोः संज्ञाछन्दसोरिति ह्रस्वो विशेषः॥ २॥ ॥ ॥ ॥

यद्येकशेषो न स्यात्तर्हि विभक्तावुत्पद्यमानायां द्वंद्वः स्यात्कृते त्वेकशेषे स न भवतीति ता किं कीं प्राप्तिमादाय पवादो ह्योष इति। द्वंद्वो नेति। एतेन कृतद्वंद्वानामेकशेष इतिभ्रमो निरस्तः न च तथैवास्तु फले विशेषाभावादिति वाच्यमित्याह तेनेति। पंथानाविति। न चात्रेत्तोत्सर्वनामस्थान इति लिंगात्समासांतस्सु परिहरः इतो दित्युक्ते पि साविति अनुवृत्त्या पंथा इति सिद्धेरिति वाच्यं पथो विभाषेति समासांताभावे अपंथानावित्यादौ इतोदिति सूत्रस्य सावकाशत्वात् इत्येकशेषः प्रसंगादाह। कृत ह्वितेत्यादि पंचवृत्तय इति। पंचानां वृत्तिरिति पूर्वाचार्यसंज्ञा इहाप्याश्रीयत इति भावः। तल्लक्षणमाह। परार्थेति। प्रत्ययार्थं तिर्भावेण परपदार्थोतर्भावेण वा यो विशिष्टोर्थस्स परार्थस्स चाभिधीयते येन तत्परार्थाभिधानं। अत एव तिङंते वृत्तिर्न भवति। तत्रैकार्थीभावानभ्युपगमादन्यथामृदुपचतीत्यादौ फलेमृदुत्वान्वयो न स्यात्सविशेषणानां वृत्तिर्न भवति वृत्तस्य च विशेषणयोगो नेत्यभ्युपगमादित्येके। समर्थसूत्रे कैयटस्त्वाह परस्य शब्दस्य योर्थस्तस्याभिधानं शब्दांतरेण यत्र सा वृत्तिरित्यर्थः यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायां अनुक्तः पुरुषार्थो भिधीयत इति। अविग्रह इति। लौकिकविग्रहरहित इत्यर्थः। अस्वपदेति। समस्यमानपदावयवघटित इत्यर्थः द्वंद्वतत्पुरुषबहुव्रीहौ

ऋक्पूरब्धूःपथामानक्षे। ५।४।७४। अ अनक्ष इति छेदः। ऋगाद्यन्तस्य समासस्य अ प्रत्ययोऽन्तावयवस्स्यात्। अक्षे या धूः तदन्तस्य तु न। अर्द्धर्चः। अनृचबह्वृचावध्येतर्य्येवनेह अनृक्साम बह्वृक्सूक्तं। विष्णोः पूः॥ ८८ रेवेति। अनेकग्रहणात् द्वन्द्ववृत्तिभ्यां तद्विधानाद्द्वंद्वपदसमासत्वं तयोरेव संभवतीति भावः। क्वचिदेवेति। द्वान्द्वजात इत्यादौ। नाग्नेति। प्रातिपदिकेनेत्यर्थः। कुंभकार इति। अत्र हि सुब्बुत्पत्तेः प्रागेवोपपदसमासः कटप्रूरजस्त्रमिति। क्विप् च चिप्रक्षीति वार्त्तिकेन मिकंपीति सूत्रे च कटप्रुः अजस्रं इति निपातनाद्वा उत्तरात्समासः। पिबत खादतेति आख्यातमाख्यातेनेति मयूरव्यंसकादौ पाठात्समासः। इति सर्वसमासशेषः॥ ॥ ऋक्पूर अ इति प्रथमैकवचनांतं समासांता इत्यधिक्रियते तदाह। समासस्याप्रत्ययोंतावयव इति अनक्ष इत्येतत्सामान्यतः श्रुतमपि धुरेव संबध्यते सामर्थ्यान्नान्यैरित्याशयेन व्याचष्टे। अक्षे या धूरिति। तदंतस्य तु नेति। सूत्रे संबंधिनोधिकरणत्वविवक्षया सप्तमी। तेनाक्षसंबंधिनी या धूस्तदंतस्य नेत्यर्थः यद्यत्राक्षे पूर्वपदेनेति व्याख्यायेत तर्हि दृढधूरक्ष इत्यत्र निषेधो न स्यात्। यद्यक्षे समासार्थेनेति व्याख्यायेत तदा अक्षधूरित्यत्र न स्यात्तस्मादुभयसंग्रहार्थमुक्तं व्याख्यानमेव ज्यायः। अर्द्धर्च इति। अर्धं नपुंसकमिति समासः। अर्द्धर्चाः पुंसि चेति पुंस्त्वं। अनृगित्यादि। अत्र तु समासांतत्वाच्छेषाद्विभाषेति कप्रत्ययेऽनृचं बह्वृचमित्यपि बोध्यं॥

विरूपाणामपीत्येकशेषं वाधित्वेति शेषः सरज समिति। अव्ययीभावे चाकाले इति सहस्य सभावः सरजः पंकजमिति सरजसमकरंद निर्भरा स्विति माघप्रयोगस्तु चिंत्य इति भावः निःश्रेयानिति निश्चितं श्रेयो येनेति विग्रहः निश्रेयस्क इति केषांचित्तत्पुदाहरणमसुद्धं ईयसश्चेति कपो निषेधात् गोष्ठश्वेति एतेन सप्तमीतत्पुरुष एवे ति नियमो दर्शितस्तेन षष्ठीतत्पुरुषे गोष्ठस्येत्येव ब्रह्मवर्चसमिति षष्ठीतत्पुरुषः एवं हस्तिवर्चसमपि पल्येति पलं मांसमर्हतीति पल्यो मांसभोजी तदीयं वर्चः पल्यवर्चसं अवत

श्वसो वसीयश्रेयसः।५।४।८०। वसुशब्दः प्रशस्तवाची। ततः ईयसुनि वसीयः श्वसशब्द उत्तरपदार्थ प्रशंसामाशीर्विषयतामाहामयूरव्यंसकादित्वात्समासः श्वोवसीयसं श्वःश्रेयसं ते भूयात्। अन्ववतप्ताद्रहसः।५।४।८१। अनुरहसं अवरहसं तप्तरहसं। प्रतेरुरसः सप्तमीस्थात्।५।४।८२। उरसि प्रति। प्रत्युरसं। विभक्त्यर्थेऽव्ययीभावः। अनुगवमायामे।५।४।८३। एतन्निपात्यते दीर्घत्वे। अनुगवं यानं। यस्य चायाम इति समासः। द्विस्तावा त्रिस्तावा वेदिः।५।४।८४। अच्प्रत्ययष्टिलोपः समासश्च निपात्यते। यावती प्रकृतौ वेदिः ततो द्विगुणा त्रिगुणा वाश्वमेधादौ तत्रेदं निपातनं। वेदिरिति किं द्विस्तावती। त्रिस्तावती रज्जुः। उपसर्गादध्वनः।५।४।८५। प्रगतोऽध्वानं। प्राध्वो रथः। न पूजनात्।५।४।६९। पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा अतिराजा। स्वतिभ्यामेवानेह। परमराजः। बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवायं निषेधः नेह सुसक्थं। स्वक्षः किमः क्षेपे।५।४।७०। क्षेपे यः किम्शब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः। कुत्सितो राजा। किंराजा। किंसखा। किंगौः। क्षेपे किं। किंराजः। किंसखः। किंगवः। नञस्तत्पुरुषात्।५।४।७१। समासान्तो न। अराजा। असखा। तत्पुरुषात् किं। अधुरं शकटं। पथो विभाषा।५।४।७२। नञ्पूर्वात्पथो वा समासान्तः। अपथम्। अपन्थाः। तत्पुरुषादित्येव। अपथो देशः। अपथं वर्त्तते॥ इति समासान्ताः॥

१९ पसमित्यादि अवहीनं संततं च तम इति विग्रहः अंधपतीति अंधदृष्ट्युपघाते चुरादिः अंधमिति गाढमित्यर्थः॥ ॥ श्वसो वसुशब्दात्प्रशस्तवचनादीयसुनित्याकरविरुद्धं व्याचक्षाणा उपेक्ष्या इति ध्वनयति वसुशब्द इति वसीय इति यः कामयेत वसीयान्स्यामिति श्रौतप्रयोगोऽप्यत्रानुकूल इति भावः श्वसशब्द इति। कालवाच्यप्ययं प्रकृते त्वर्थविशेषपरः शक्तिस्वभावात्तमेवाह॥ ॥

अक्ष्णः। दृश्यतेऽनेनेति दर्शनं चक्षुस्तद्भिन्नोऽक्षिशब्दस्य पर्युदासादमुख्यस्य ग्रहणमित्याशयेनाह अचक्षुःपर्यायादिति गवाक्ष इति गावः किरणाः अक्षिशब्दो रन्ध्रवाची षष्ठीसमासः अचतुरनिपात्यन्त इति निपातनफलं तु समासविशेषनियमः टिलोपादिकं च तदाह। आद्या इति बहुव्रीहय इति बहुव्रीहय एवेत्यर्थः तेन तत्पुरुषे अचत्वा

अक्ष्णोऽदर्शनात्।५।४।७६। अचक्षुःपर्य्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षः। अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः।५।४।७७। एते पञ्चविंशतिरजन्ता निपात्यन्ते। आद्यास्त्रयो बहुव्रीहयः। अविद्यमानानि चत्वार्य्यस्य। अचतुरः। विचतुरः। सुचतुरः। त्र्युपाभ्यां चतुरोऽजिष्यते। त्रिचतुराः। चतुर्णां समीपे। उपचतुराः। तत एकादश द्वन्द्वाः। स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च। अक्षिभ्रुवं। दाराश्च गावश्च। दारगवं। ऊरू च अष्ठीवन्तौ च। ऊर्वष्ठीवं। निपातनाट्टिलोपः। पदष्ठीवं। निपातनात्पादशब्दस्य पद्भावः। नक्तञ्च दिवा च। नक्तन्दिवं। रात्रौ च दिवा च। रात्रिंदिवं। रात्रेर्मान्तत्वं निपात्यते। अहनि च दिवा च। अहर्दिवं। वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। सरजसमिति साकल्येऽव्ययीभावः। बहुव्रीहौ तु। सरजः पङ्कजं। निश्चितं श्रेयः। निःश्रेयसं। तत्पुरुष एवेनेह। निःश्रेयान्पुरुषः। पुरुषस्यायुः पुरुषायुषं। ततो द्विगू। द्व्यायुषं। त्र्यायुषं। ततो द्वन्द्वः। ऋग्यजुषं। ततस्त्रयः कर्म्मधारयाः। जातोक्षः। महोक्षः। वृद्धोक्षः। शुनः समीपं। उपशुनं। टिलोपाभावः सम्प्रसारणञ्च निपात्यते। गोष्ठश्वाः। गोष्ठश्वः। ब्रह्महस्तिभ्यां वर्च्चसः।५।४।७८। अच् स्यात्। ब्रह्मवर्च्चसं। हस्तिवर्च्चसं। पल्यराजभ्यां चेति वक्तव्यं। पल्यवर्च्चसं। राजवर्च्चसं। अवसमन्धेभ्यस्तमसः।५।४।७९। अवतमसं। सन्तमसं। अन्धयतीत्यन्धः। पचाद्यच्। अन्धन्तमः। अन्धतमसं॥ ६॥

१ रो विचत्वार इत्येवम्भवतीति भावः एवञ्च नारत्नाप्यवधारणमूह्यं त्रिचतुरा इति त्रयश्चत्वारो वेति विग्रहः संख्ययाऽव्ययासन्नेति बहुव्रीहिः बहुव्रीहौ संख्येय इति डचोऽपवादोऽच्। अक्षिभ्रुवमिति प्राण्यङ्गत्वादेकवत्। ऊरू चाष्ठीवन्तौ चेति सक्थि क्लीबे पुमानूरुरित्यमरः जानूरुपर्वाष्ठीवदस्त्रियामिति च ऊर्वष्ठीवपदष्ठीवमिति प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वो निपात्यत इति॥

ओजस्स ओजसाकृतमिति कार्तिकारणोक्ततेतिसमासः कथंतर्हि सतत नैशतमोकृतमन्यतइतिभारविः अत्राहुः कृतवर्तने इत्यस्माद्ण्यन्तर्थकविधानमितिमावेकप्रत्यये तद्देतेनषष्ठीसमासाश्रयणान्न दोषइतिपत्तुकेवलपदाधिकारएवतदंतविधिर्नत्तूत्तरपदाधिकारेतथाचनैशतमसेतितृतीयाया अलुङ्भवतीति दुर्घटवृत्त्यादावुक्तं तत्रपदांगाधिकारइत्यत्र इष्टकचितंपच्चेष्टकचितमितिभाष्योदाहरणादुत्तरपदाधिकारेपितदंतविधिप्रवृत्तेः जनुषेतिजनुर्जननजन्मानीत्य मरः आत्मनापंचम इतितृतीयेतियोगविभागात्समासः इहप्रकृत्यादित्वात्तथमार्थेतृतीयेत्येके आत्मनाकृतः पंचमइतिकरोतिक्रियापेक्षासेत्यन्ये वहुव्रीहिर्वोध्यइति एकसाप्योपाधि

ओजस्सहोऽम्भस्तमसस्तृतीयायाः। ६।३।३। ओजसाकृतमित्यादि। अञ्जस उपसंख्यानं। अञ्जसाकृतं। आर्जवेनकृतमित्यर्थः। पुंसानुजोऽजनुषान्धइतिचायस्याग्रजः पुमान् स पुंसानुजः। जनुषान्धोजात्यन्धः। मनसस्संज्ञायाम्। ६।३।४। मनसागुप्ता। आज्ञायिनिच। ६।३।५। मनसइत्येव॥ मनसाज्ञातुंशीलमस्यामनसाज्ञायी। आत्मनश्च। ६।३।६। आत्मनस्तृतीयाया अलुक्स्यात् पूरणइतिवक्तव्यं। पूरणप्रत्ययान्तेउत्तरपदेइत्यर्थः। आत्मनापञ्चमः। जनार्दनस्त्वात्मचतुर्थएवेतिवहुव्रीहिर्वोध्यः। पूरणे किं। आत्मकृतं। वैयाकरणाख्यायांचतुर्थ्याः। ६।३।७। आत्मनइत्येव। आत्मनेपदं। आत्मनेभाषा। तादर्थ्ये चतुर्थी। चतुर्थीतियोगविभागात्समासः। परस्यच। ६।३।८। परस्मैपदं। परस्मैभाषा। हलदन्तात्सप्तम्यास्संज्ञायाम्। ६।३।९। हलन्तादन्ताच्चसप्तम्या अलुक्संज्ञायां। त्वचिसारः॥ ११

कभेदंपरिकल्प्य वर्त्तिपदार्थत्वमन्यपदार्थत्वंचविवक्ष णीयमितिभावः। वैयाकरणा। व्याकरणेभवावैयाकरणाः अपाकरणयनादिभ्यइत्यण् सा चासावाख्याचेतिकर्मधारयः आत्मनइत्येवेति इहात्मनइत्यननुवर्त्त्य वैयाकरणाख्यायांचतुर्थ्या अलुगितिव्याख्यानेतुपरस्यचेत्युत्तरसूत्रंत्यक्तुंशक्यमित्याहुः आत्मनेभाषाइतियद्यपीयमाख्या अष्टाध्याय्यांनास्तितथापिधातुपा ठेऽस्तीतिभावः प्रकृतिविकृतिभावविरहाद्रंधनायस्थालीतिवत्समासाभावमाशंक्याहयोगविभागादिति इहलुग्विधिसामर्थ्यादपिसमासस्सुवचः परस्यचपरश व्दस्यचयाचतुर्थीतस्याः अलुक्स्याद्वैयाकरणाख्यायां ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उत्तरपदार्थप्रशंसामिति उत्तरपदार्थभूतांप्रशंसामित्यर्थः आशीर्विषयमिति षष्ठीसमासः विषयशब्दस्याजहल्लिंगत्वात्पुल्लिंगनिर्देशः उत्तरपदार्थप्रशंसायाआ
शीर्विषयतामाहेति पाठांतरं क्वचिदस्ति उभयथापि विषयतायाद्योतकोयमिति फलितोर्थः अन्ववरहहरहइत्यप्रकाशप्युच्यते अनुगतमवहीनंचरहइति प्रादिसमासः अनु
गतंरहोस्मिन्नित्यादिर्वहुव्रीहिर्वा तप्तंरहस्मिन्निति तप्तंचतद्रहश्चेति विग्रहः परेणानधिगम्यमित्यर्थः इत्यतः प्रागिति प्राग्वहुव्रीहिग्रहणंकर्त्तव्यमिति वार्तिकोक्तेरिति
भावः किम इत्येपिसेपग्रहणमिह शक्यमवक्तुंप्रतिपदोक्तपरिभाषया किंक्षेपइति विहितसमासस्यैवग्रहणात् किंराजइत्यादि किमत्रप्रश्नेषष्ठीसमासः कर्मधारयोवानञ्तत्पु
रुषात् नञ इति षष्ठी नञः संबंधीयस्तत्पुरुषः नञवयवकस्तस्मादित्यर्थः अपथमिति नस्तद्धितइति टिलोपः अपथंनपुंसकमिति क्लीवत्वं अपथंवर्ततइति अर्था
भावेऽव्ययीभावः॥ इतिसकलसमाससाधारणाःसमासांताः॥ अलुक्स्यादिति॥ प्रसज्यप्रतिषेधोयंसुपोधातुरित्यादिनाप्राप्तोलुङ्भवतीत्यर्थः स्तोकान्मुक्तइति

अलुगुत्तरपदे। ६।३।१। अलुगधिकारः प्रागानङः। उत्तरपदाधिकारस्त्वापादसमाप्तेः। पञ्चम्याः स्तोकादिभ्यः। ६।३।२। एभ्यः पञ्चम्या अलुक् स्या
दुत्तरपदे। स्तोकान्मुक्तः। एवमन्तिकदूरार्थकृच्छ्रेभ्यः। उत्तरपदे किम्। निःस्तोकः। ब्राह्मणाच्छंसिन उपसंख्यानम्। ब्राह्मणे विहितानि
शस्त्राणि उपचारात् ब्राह्मणानि तानि शंसतीति। ब्राह्मणाच्छंसी ऋत्विग्विशेषः। द्वितीयार्थे पञ्चम्युपसंख्यानादेव॥ ॥

समासप्रयोजनमेकपद्यमेक
स्वर्यविशेषणयोगाभावश्च किंच स्तोकान्मुक्तस्यापत्यं स्तोकान्मुक्तिः स्तोकान्मुक्ताया स्तोकान्मुक्तेयइति समुदायात्तद्धितोत्पत्तिरपिप्रयोजनंच प्राथमिकसामासिकलुको निषेधेन
चरितार्थत्वाद्वास्यतद्धितनिमित्तोलुग्दुर्वार इतिशंक्यंसुपोधात्विति शास्त्रस्यैकत्वादविशेषेणलुग्द्वयस्यापिनिषेधाभ्युपगमात् इह स्तोकांतिकेतिसमासशास्त्रपठिताएव
स्तोकादयोगृह्यंते नतु करणेच स्तोकाल्पकृच्छ्रेति सूत्रपठितास्समासेसुपोलुकिप्रसक्ते विधीयमानेनालुक्शास्त्रेणसमासशास्त्रपठितानामविलंवेनोपस्थितेर्न्याय
न्यायाच्च स्तोकांतिकेत्यत्रत्यर्थग्रहणादन्यान्यपि वहूनिगृह्यंते तेन देशान्मनसिनिधायाह एवमिति द्विवचनवहुवचनांतानांतु समासोनेष्यते अनभिधानात्तेन स्तोका
भ्यांमुक्त इत्यादौवाक्यमेव शस्त्राणीति प्रगीतमंत्रसाध्यगुणिनिष्ठगुणाभिधानंस्तोत्रं अप्रगीतमंत्रसाध्यगुणिनिष्ठगुणाभिधानंशस्त्रमिति याज्ञिकानांव्यवहारः ॥

अप्सुजः अप्सुचर इति भाष्ये वचनान्तरदर्शनाच्च केचित्तु अप्सुज इत्यतोदाहरणद्वयेपि हलदन्तादित्यलुकमाहुः ॥ ॥ अप्सुमन्तावितिकारीर्यामस्त्वग्ने सधिष्ठवाप्सुमे सोमो अत्रवीदित्याज्यभागमन्त्रोस्तः तत्रत्यप्सुशब्दोस्तीति तद्वाराज्यभागयोरप्यप्सुमत्वं प्राचा त्वनुमतिश्चिति पठित्वा अप्सु अतिरित्युदाहृतं अत्र केचित् अप्स्विस्त्येतदनुकरणं तच्च सप्तम्यंतो वा आद्ये सप्तम्यंतात्प्रथमाया अभावेन मतुब्नेव दुर्लभः अंत्ये तु लुकः प्राप्तिरेव नास्ति संबन्ध्यभावात्तथा च मतिश्चिति प्राचोक्तः पाठ एव युक्तः न च स पाठो भाष्ये नैनदृष्टइति वाच्यं मतिश्चिति पाठस्याप्सुमतिरित्युदाहरणस्य च भाष्यवृत्त्यादिपुस्तकेषु दृश्यमानत्वेन मतुश्चिति पाठस्यैव क्वाप्यदर्शनात् व्यर्थत्वाच्च अस्य वामीयं कथा

अमुष्यापत्ये ३

अप्सुमन्तावाऽऽज्यभागौ। नेन्सिद्धबध्नातिषु च। ६।३।१९। इन्नन्तादिषु सप्तम्या अलुक् स्थण्डिलशायी। सांकाश्यसिद्धः। चक्रबन्धः। स्थे च भाषायाम्। ६।३।२० सप्तम्या अलुक् समस्थः। भाषायां किं। कृष्णोऽस्याखरेष्ठः। षष्ठ्या आक्रोशे। ६।३।२१। चौरस्य कुलं। आक्रोशे किं। ब्राह्मणकुलं। वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः। आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च। आमुष्यायणः। नडादित्वात् फक्। अमुष्यपुत्रस्य भावः। आमुष्यपुत्रिका। मनोज्ञादित्वाद्वुञ्। एवमामुष्यकुलिका। देवानांप्रिय इति च मूर्खे। अन्यत्र देवप्रियः। शेपपुच्छलाङ्गूलेषु शुनः। शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः। दिवश्च दासे। दिवोदासः। पुत्रेऽन्यतरस्याम्। ६।३।२२। षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायां। दास्याःपुत्रः। दासीपुत्रः। निन्दायां किं। ब्राह्मणीपुत्रः। ऋतो विद्यायोनिसम्बन्धेभ्यः। ६।३।२३। विद्यासम्बन्धयोनिसम्बन्धवाचिन ऋदन्तात्षष्ठ्या अलुक्। होतुरन्तेवासी। पितुःपुत्रः। विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणं। नेह। होतृधनं। पितृगृहं। विभाषा स्वसृपत्योः। ६।३।२४। ऋदन्तात्षष्ठ्या अलुग्वा स्वसृपत्योः परयोः ॥ ॥

अभीपमित्यादावित्यलुकि कर्तव्ये प्रकृतिवदनुकरणमित्यतिदेशप्रवृत्तेर्वेष्टसिद्धेरित्याहुः नेन्सिद्ध चक्रबंध इति तत्पुरुष इत्यनुवृत्तेस्तत्पुरुष एवायं निषेधः ब हुव्रीहौ वंधे च विभाषेति विकल्प एव पश्यतोहर इति पश्यंतमनादृत्य हरतीत्यर्थः। षष्ठी चानादर इति षष्ठी देवानामिति मूर्खो हि देवानां प्रीतिं जनयन्नीति देवपशुत्वादिति मनोरमा अयं भावः ब्रह्मज्ञानरहितत्वात्संसारिणो मूर्खास्ते तु यागादिकर्माण्यनुतिष्ठतः पुरोडाशादिप्रदानद्वारा देवानामत्यंतप्रीतिं जनयंति ब्रह्मज्ञानिनस्तु न तथा ते

गविशुधि। स्थिरशब्दोयमजिरशिशिरेत्यौणादिकः किरच्प्रत्ययांतस्तिष्ठतेर्निष्पन्नः सात्यदाद्योरितिनिषेधेप्राप्ते वचनारंभः गवीतिवचनादेवेतिनचलुकं बाधितापस्त्वा
दित्तरंगत्वाच्चावादेशेहलदंतात्सप्तम्या इत्येवालुक् सिध्यतीतिवाच्यं अंतरंगानपिविधीन्बहिरंगोलुग्बाधत इतिलुकोबलीयस्त्वादितिभावः हृदिस्थगितिहृदयंदिवंचस्पृश
तीतिविग्रहः। अलुग्विधिसामर्थ्यात्कर्मणि सप्तमीकर्मणोधिकरणत्वविवक्षया वा अविकटोरणाइतिसंघातेकटजितिकटच्प्रत्ययांतः उरणोमेषः वंधेचविभा

गविशुधिभ्यांस्थिरः। ६।३।९५। आभ्यांस्थिरस्यसस्यषस्स्यात्। गविष्ठिरः। अत्रगवीतिवचनादेवाऽलुक् युधिष्ठिरः। अरण्येतिलकः। अत्रसंज्ञायामितिस
प्तमीसमासः हृद्द्युभ्यांङ्वा हृदिस्पृक्। दिविस्पृक्। कारनाम्निचप्राचांहलादौ। ६।३।१०। प्राचान्देशेयत्कारनामतत्रहलादावुत्तरपदेहलदन्तात्सप्तम्याअ
लुक्। मुकुटेकार्षापणं दृषदिमाषकः। पूर्वेणसिद्धेनियमार्थं। कारनाम्न्येवप्राचामेवाहलादावेवेति। कारनाम्निकिं अभ्याहितपशुः। कारादन्यस्यैतद्देयस्य
नाम। प्राचांकिं यूथपशुः। हलादौकिं। अविकटोरणः। हलदन्तात्किं। नद्यान्दोहः। नदीदोहः। मध्याद्गुरौ। ६।३।११। मध्येगुरुः। अन्ताच्च। अन्तेगुरुः। अमूर्द्धम
स्तकात्स्वाङ्गादऽकामे। ६।३।१२। कण्ठेकालः। उरसिलोमा। अमूर्द्धमस्तकात्किं। मूर्द्धशिखः। मस्तकशिखः। अकामेकिं। मुखेकामोऽस्यामुखकामः। बन्धे
चविभाषा। ६।३।१३। हलदन्तात्सप्तम्याअलुक्। हस्तेबन्धः। हस्तबन्धः। हलदन्तेतिकिं। गुप्तिबन्धः। तत्पुरुषेकृतिबहुलम्। ६।३।१४। स्तम्बेरमः। स्तम्बरमः। करी
जपः। कर्णेजपः। क्वचिन्न। कुरुचरः। प्रावृट्शरत्कालदिवाञ्जे। ६।३।१५। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यायमपवादः। विभाषावर्षक्षरशरव
रात्। ६।३।१६। सप्तम्याअलुक् जे। वर्षेजः। वर्षजः। क्षरेजः। क्षरजः। शरेजः। शरजः। वरेजः। वरजः। घकालतनेषुकालनाम्नः। ६।३।१७। सप्तम्या
विभाषालुक् स्यात्। पूर्वाह्णेतरे। पूर्वाह्णतरे। पूर्वाह्णेतमे। पूर्वाह्णतमे। कालपूर्वाह्णेकाले। पूर्वाह्णकाले। तन। पूर्वाह्णेतने। पूर्वाह्णतने। शयवासवासिष्व
ऽकालात्। ६।३।१८। खेशयः। खशयः। ग्रामेवासः। ग्रामवासः। ग्रामेवासी। ग्रामवासी। हलदन्तादित्येवा नेहभूमिशयः। अपोयोनियन्मतुषु। अप्सुयोनि
रुत्पत्तिर्यस्यासोऽप्सुयोनिः। अप्सुभवोऽप्सव्यः॥
षावंधइतिघञन्तः हस्तेबंधः इतिबहुव्रीहिर्यत्तत्पुरुषेकृतिबहुलेनेन्सिद्धवभातिस्थितिवष्यमाणेननिषेधएवेत्याहुः अप्सव्यइतिदिक्॥

दिलायतिश्रीशैलीतादेशः प्राच्यात्मयतः स्यानेजपदि
लाश्चपुनरत्वराहतेतराकरविहङ्कजेवरेवचनतव्यम् ॥

त्तसिलादिष्विति नपुंवद्भावः चेलीति पचादौ चेलडिति पाठात्ठिड्ढेतिङीप् आमलकीति आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिंगौ नद्याः उकारन्यः शेषः स चाह्रिषेत्या
ह अत्रौतेति उपलक्षणमेतत् भाषितपुंस्केत्यपि नेह संबध्यते इत्याशयेनाह स्त्रीतरेति उगितः परायानदीति इदूतोः केवलयोरपि नदीसंज्ञेत्याश्रित्येदमुक्तं विद्रुषि न
रे ति उगितश्चेति ङीपि वसोः संप्रसारणं इत्यादिष्विति प्रक्रियातन्त्राख्यानानि चादिशब्दग्राह्याणि अत्र संतग्रहणमिति अपप्रत्ययसाहचर्याच्चे स्वशब्दोऽसंतएवनि
र्दिष्ट इति भावः नन्वेवं लेखग्रहणमेव व्यर्थं स्यादग्रहणेनैव सिद्धेरत आह ज्ञापकमिति अतएव घरूपकल्पेषु तदंतग्रहणं नेति व्याख्यातं ॥ः॥ सौहृर्यमिति आह

सौहार्द्यं सौहृदय्यं हृद्रोगः हृदयरोगः हृदयशब्दपर्यायो हृच्छब्दोप्यस्ति तेन सिद्धेऽप पञ्चार्थमिदं पादस्य पदाऽज्यातिगोपहतेषु ६।३।५२
सषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात् पादाभ्यामजतीति पदाजिः पदातिः अत्यतिभ्यामाम्यादेवेतीण्प्रत्ययः अनेव्ये भावो निपातनात् प
दगः पदोपहतः पद्यत्यतदर्थे ६।३।५३ पादस्य पत्स्याददतदर्थे यति परे पादौ विध्यन्ति पद्याः शर्कराः अतदर्थे किं पादार्थमुदकं पाद्यं ॥ पादार्घा
भ्यां चेति पत्तावप्रकेचरतावुपसंख्यानं पादाभ्यां चरति पदिकः पर्प्यादित्वात्ष्ठन् हिमकाषिहतिषु च ६।३।५४ पद्धिमं पत्काषी पद्धतिः ऋचः शे
६।३।५५ ऋचः पादस्य पत्स्याच्छे परे गायत्रीं पच्छः शंसति पादंपादमित्यर्थः ऋचः किं पादशः कार्षापणं ददाति वा घोषमिश्रशब्देषु ६।३।५६
पादस्य पत् पद्घोषः पादघोषः पन्मिश्रः पादमिश्रः पच्छब्दः पादशब्दः निष्के चेति वाच्यं पन्निष्कः पादनिष्कः ॥ ११

गादित्वात्ष्यञ् हेडगासिंध्वं
तरत्युभयपदवृद्धिः पादस्य पद उत्तरस्येव पद्ग्रहणात्पदेत्यपमदंतः सौत्रो विभक्तिलुक् कृतः सह अरंतादेश इति तेन पदग इत्यादिसिद्धं पद्या इति विध्यत्यधनुषेति यत् पाद्य
मिति पादार्घाभ्यां चेति यत् पूर्वसूत्रे आज्यात्यादिषु प्राण्यंगस्यैव करणात्तत्संभावादिहापि तद्वचनं एव पादशब्दोऽत्येति तेन परिमाणवचनः तेन द्वाभ्यां पादाभ्यां क्रीतं
द्विपाद्यं त्रिपाद्यमित्यत्र पणपादमाषेति यति पदादेशो न भवति एतच्च वृत्तिहरदत्तग्रंथयोः स्पष्टं पत्काषीति सुप्यजातौ णिनिस्ताच्छील्ये इति कर्मणि णिनिः पद्धतिरिति कर्मणि क्तिन् ऋ
चः शे इति शस्यत्यस्य दमनुकरणं लोमादिषु पादशब्दस्य पाठाभावान्मत्वर्थे शो न संभवतीति भावः पच्छ इति संख्यैकवचनाच्च वीप्सायामिति शस उदस्मे घ इति

[illegible]

स्थानापन्नत्वान्मूर्द्धा एव देवपशव इति शेपपुच्छे इति शुनः इव शेपमस्य शुनःशेपः यद्यपि शेपसशब्दः सकारान्तः गोर्लिंगं चिन्हशेपसोरित्यमरप्रयोगात्तथापि शीङो निं
पादित्वादौणादिके यप्रत्यये अकारान्तोऽप्यस्त्येव तथाच मंत्रः यस्यामुशन्तः प्रहराम शेपमिति। चिन्हशेफसोरिति पाठे तु शेपशब्दस्य सकारान्तत्वशंकैव नास्तीति बोध्यं शु
नःपुच्छ इत्यादावपि बहुव्रीहिः त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः॥ ॥ मातुःपितृभ्यामिति सूत्रे समासे इत्यलुक्संग इत्यतः समास इत्यनुवर्तितं तत्फलं दर्शयति अ

मातुःपितृभ्यामन्यतरस्याम्।८।३।८५। आभ्यां स्वसुः सस्य षो वा स्यात् समासे। मातुःष्वसा। मातुःस्वसा। पितुःष्वसा। पितुःस्वसा। लुक्पक्षे तु। मातृपितृभ्यां स्व
सा।८।३।८४। आभ्यां परस्य स्वसुः सस्य षः स्यात् समासे। मातृष्वसा। पितृष्वसा। असमासे तु। मातुः स्वसा। पितुः स्वसा। इत्यलुक्समासः। घरूपकल्पचेल
ड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः।६।३।४३। भाषितपुंस्काद्यो ङी तदन्तस्याऽनेकाचो ह्रस्वः स्यात् घरूपकल्पप्रत्ययेषु चेलडादिषु चोत्तरपदेषु। ब्रा
ह्मणितरा। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रेत्यादि। ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावो
पि निपात्यते। चेलडादीनि वृत्तिविषये कुत्सनवाचीनि। तैः कुत्सितानि कुत्सनैरिति समासः। ङ्यः किं। दत्तातरा। भाषितपुंस्कात् किं। आमलकीतरा। कुवली
तमा नद्याः शेषस्याऽन्यतरस्याम्।६।३।४४। अङ्यन्तनद्याः ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात्। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरा। स्त्रीतरा। स्त्रितरा। कृन्न
द्यान लक्ष्मीतरा। उगितश्च।६।३।४५। उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वाभावपक्षे तु सिलादिष्विति पुंवत्। विद्वत्तरा।
वृत्त्यादिषु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलं। हृदयस्य हृल्लेखयदण्लासेषु।६।३।५०। हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यं। हृदयस्येदं हा
र्दं। हृल्लासः। लेखेत्यणन्तस्य ग्रहणं। घञि तु। हृदयलेखः। लेखग्रहणमेव ज्ञापकं। उत्तरपदाधिकारे तदन्तविधिर्नास्तीति। वा शोकष्यञ्रोगेषु।६।३।५१। हृ
च्छोकः। हृदयशोकः॥

समासे त्विति वाक्ये वैकल्पिकमपि षत्वं नेत्यर्थः॥ इत्यलुक्समासः ॥ घरूपकल्प तरप्तमपौ घः प्रशंसायां रूपप् चिलवसने चेलडिति
पचादेष्टित्युच्यते तेन ङीवर्थप्रत्यये ष्विति लेखग्रहणेनोत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति ज्ञापयिष्यत इति भावः॥ ब्राह्मणितरेति जातेश्चेति निषेधा

कौमुदगंध्याया इति। कुमुदगंधेरपत्यं स्त्री कौमुदगंध्या तस्यापत्यमित्यणि कृते ऽणिञोरिति ष्यङादेशः यङश्चाप् ननु कौमुदगंधीपुत्र इत्यादाविकोह्रस्वोऽङ्योगालवस्येति ह्रस्वेन भाव्यं दीर्घविधानं तु पक्षे सावकाशमित्यत आह व्यवस्थितविभाषयेति नेह। इति। संप्रसारणमिह नेत्यर्थः। अतिकारीषेति कारीषगंध्यामतिक्रान्तोऽतिकारीषगं ध्यस्तस्य पुत्रः इष्टकचितमिति कर्तृकरणे कृतेति तृतीयासमासः पक्वेष्टकचितमिति पदाधिकारात्तदंतविधिः प्रवर्तत इति भावः मालभारीति मालां बिभर्तीत्यर्थः सुप्य

कौमुदगंध्यायाः पुत्रः। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। व्यवस्थितविभाषया ह्रस्वो न। स्त्रीप्रत्यये चानुपसर्जने नेति तदादिनियमप्रतिषेधात्। परमकारीषगन्धीपुत्रः। उपसर्जने तु तदादिनियमान्नेह। अतिकारीषगंध्यापुत्रः। बन्धुनि बहुव्रीहौ। ६।१।१४। बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसार णं स्याद्बहुव्रीहौ। कारीषगंध्या बन्धुरस्येति। कारीषगन्धीबन्धुः। बहुव्रीहाविति किं। कारीषगंध्याया बन्धुः कारीषगंध्याबन्धुः। क्लीबनिर्देशाच्छ ब्दस्वरूपापेक्षया। मातच्मातृकमातृषु वा। कारीषगन्धीमातः। कारीषगंध्यामातः। कारीषगन्धीमातृकः कारीषगंध्यामातृकः। कारीषगन्धी माता। कारीषगंध्यामाता। अस्मादेव निपातनान्मातृशब्दस्य मातजादेशो न तु तत्रैवेति कश्चित्कल्पश्च बहुव्रीहावेवेदम्। नेह। कारीषगंध्याया मा ता। कारीषगंध्यामाता। चित्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरम्बाधते। इष्टकेषीकामालानाञ्चिततूलभारिषु। ६।३।६५। इष्टकादीनामन्तदन्तानां च पूर्वपदानाञ्चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात्। इष्टकचितं। पक्वेष्टकचितं। इषीकतूलं मुञ्जेषीकतूलं मालभारी। उत्पलमालभारी। कारे स त्यागदस्य। ६।३।७०। मुम् स्यात्। सत्यङ्कारः। अगदङ्कारः। अस्तोश्चेति वक्तव्यम्। अस्तुङ्कारः। धेनोर्भव्यायाम्। धेनुम्भव्या। लोकस्य पृणे ॥ ॥

जाताविति णिनिः हारिष्विति पाठांतरं कारे सत्या। अस्तुर्द्विषदित्यतो नुवर्तनादाह मुम् स्यादिति सत्यंकारः शपथकरणं। अशपथेपि सत्यादशपथ इति डाचं बाधि त्वा परत्वान्मुमेव अगदंकारो वैद्यः अस्तुङ्कारो ऽभ्युपगमः अस्तीति तिङंतप्रतिरूपकमव्ययं धेनुं भव्येति भविष्यती धेनुरित्यर्थः भव्यगेयेति निपातनात्कर्तरि कृत्यः धेनु श्चासौ भव्या चेति विग्रहः गोतमस्त्वेतोत्र अधेनुभव्येत्यत्रार्षत्वान्मुम्नेति बोध्यं ॥ ६ ॥ ॥

उदकेनमं थःउदमंथइतिद्रवद्रव्यसंस्कृताःसक्तवोमंथः उदकेनम

उदपेषमिति।स्नेहनेपिषइतिणमुल् उदधिरिति उदकंधीयतेऽस्मिन्निति विग्रहःकर्मण्यधिकरणेचेति किप्रत्ययः उदमंथइतिद्रवद्रव्यसंस्कृताःसक्तवोमंथः उदकेनमं

थइतिविग्रहेतृतीयेतियोगविभागात्समासइतिहरदत्तःअुक्तीभावइतिऊर्योदिच्विडाचश्चेति च्वंतत्वान्निपातत्वेऽव्ययत्वंभ्रुकुंसइत्यादिभ्रुकुंसश्चभ्रुकुंसश्चभृकुंसश्चे

तिनर्त्तकइत्यमरःतंद्रीप्रमीलाभ्रुकुटिर्भ्रुकुटिर्भृकुटिःस्त्रियामितिच एकतद्धितेचेकेतिलुप्तषष्ठीकंतदाहएकशब्दस्येतिह्रस्वविधानमस्यदावंतएवोपयुज्यतेनतुकेवलेस्व

उदकस्योदःसंज्ञायाम्।६।३।५७।उदमेघः।उत्तरपदस्यचेतिवक्तव्यम्।क्षीरोदः।पेषंवासवाहनधिषुच।६।३।५८।उदपेषम्पिनष्टि।उदवासः।उद

वाहनः।उदधिर्घटः।समुद्रेतुपूर्वेणसिद्धं।एकहलादौपूरयितव्येऽन्यतरस्याम्।६।३।५९।उदकुम्भः।उदककुम्भः।एकेतिकिं।उदकस्थाली।पू

रयितव्येतिकिं।उदकपर्वतः।मन्थौदनसक्तुबिन्दुवज्रभारवीवधगाहेषुच।६।३।६०।उदमन्थः।उदकमन्थः।उदौदनः।उदकौदनः।इकोह्र

स्वोऽङ्यो गालवस्य।६।३।६१।इगन्तस्याङ्यन्तस्यह्रस्वोवास्यादुत्तरपदे।ग्रामणीपुत्रः।ग्रामणिपुत्रः।इकःकिं।रमापतिः।अङ्य इति किं।गौ

रीपतिः गालवग्रहणंपूजार्थं।अन्यतरस्यामित्यनुवृत्तेः।इयङुवङ्भाविनामव्ययानाञ्चनेतिवाच्यं।श्रीमदः।भ्रूमङ्गः।शुक्लीभावः।भ्रुकुंसा

दीनामितिवक्तव्यं।भ्रुकुंसः।भ्रुकुटिः।भ्रूकुंसः।भृकुटिः।अकारोऽनेनविधीयतइतिव्याख्यानान्तरं।भ्रुकुंसः।भ्रुकुटिः।भ्रुवाकुंसोभाषणंशोभायस्या

स्त्रीवेषधारीनर्त्तकः।भ्रुवःकुटिः।कौटिल्यं।एकतद्धितेच।६।३।६२।एकशब्दस्यह्रस्वःस्यात्तद्धितेउत्तरपदे।एकस्याआगतं।एकरूप्यं एकक्षीरं।ङ्या

पोःसंज्ञाछन्दसोर्बहुलं।६।३।६३।रेवतिपुत्रः।अजक्षीरं।त्वेच।६।३।६४।त्वप्रत्ययेङ्यापोर्वाह्रस्वः।अजत्वं।अजात्वं।रोहिणित्वं।रोहिणीत्वं

।ष्यङःसम्प्रसारणम्पुत्रपत्योस्तत्पुरुषे।६।१।१३।ष्यङन्तस्यपूर्वपदस्यसम्प्रसारणंस्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे।सम्प्रसारणस्य।६।३।

।१३९॥सम्प्रसारणस्यदीर्घःस्यादुत्त रपदे॥ ९९ भावतएवह्रस्वत्वादत्तोव्याचष्टेएकस्याआगतमित्यादिष्यङः।इहतत्पुरुषपदेनपूर्वपदमुत्तरपदंचाक्षिप्यतेत

त्रष्यङन्तपूर्वपदस्यविशेषणात्तदंतं गृह्यतइत्याहष्यङन्तस्येति।पुत्रपत्योरुत्तरपदयोरितिपुत्रपत्यंतयोरितिव्याख्यानेतुकारीषगंध्यापरमपुत्रइत्यादावतिप्रसंगः स्या

दितिभावःसंप्रसारणस्यउत्तरपदइत्यधिक्रियतेढ्रलोपइत्यतोदीर्घइत्यनुवर्ततेतदाहदीर्घःस्यादुत्तरपदइति हलइतिदीर्घोऽत्रनप्रवर्ततेप्रत्ययस्यलुप्तत्वेनांगसंज्ञा

सहस्य सभावः प्राप्नोतीति भावः॥ ॥ सज्योतिरिति समानं ज्योतिरस्येति बहुव्रीहिः यस्मिन् ज्योतिषि आदित्ये नक्षत्रे वा संज्ञातं तदहरात्र पर्यन्तमनुवर्त्तमानमाशौचं सज्योतिरित्युच्यते। अहः समानमध्यमध्यमवीराश्चेति प्रतिपदोक्त एव समासो न गृह्यते सरूपाणामेकशेष इति लिंगात् किन्तु बहुव्रीहिरपि इतिहरदत्तः ब्रह्मचारीति ब्रतं ब्रह्मचारिणश्च समानत्वं ब्रह्मणः समानत्वात् ततश्च समाने ब्रह्मणि व्रतचारीति फलितोऽर्थः तीर्थे ये इत्यत्र यकारेण इति णिनिः सब्रह्मचारीति समानो ब्रह्मचारीत्यर्थः

सजातीय इत्यादि सिद्धमिति काशिका। अथवा सह शब्दस्सदृशवचनोऽस्ति। सदृशस्सख्या ससखीति यथा तेनायमस्वपदविग्रहो बहुव्रीहिः। समानः पक्षोयस्येत्यादि। ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु। ६।३।८५। एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात्। सज्योतिः। सजनपद इत्यादि। चरणे ब्रह्मचारिणि। ६।३।८६। ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने। चरणः शाखा ब्रह्म वेदः। तदध्ययनार्थं व्रतमपि ब्रह्म। तच्चरतीति ब्रह्मचारी। समानस्य सः। सब्रह्मचारी। तीर्थे ये। ६।३।८७। तीर्थ उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात्। सतीर्थ्यः। एकगुरुकः। समानतीर्थे वासीति यत्प्रत्ययः। विभाषोदरे। ६।३।८८। यादौ प्रत्यये विवक्षिते इत्येव। समानोदर्यः। सोदर्यः। दृग्दृशवतुषु। ६।३।८९। सदृक्। सदृशः। दृक्षे चेति वक्तव्यं। सदृक्षः वतुरुत्तरार्थः। इदङ्किमोरीश्की। ६।३।९०। दृग्दृशवतुषु इदमः ईश् किमः की स्यात्। ईदृक्। ईदृशः। कीदृक्। कीदृशः। वतूदाहरणं वक्ष्यते। दृक्षे चेति वक्तव्यम्। ईदृक्षः। कीदृक्षः। आ सर्वनाम्नः। दृक्षे च। तादृक्। तादृशः। तावान्। तादृक्षः। दीर्घः मत्वोत्वे। अमूदृशः। अमूदृक्। अमूदृक्षः। समासे ऽङ्गुलेस्सङ्गः। ८।३।८०। अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्द्धन्यः स्यात् समासे। अङ्गुलिषङ्गः॥ समासे किं। अङ्गुलेस्सङ्गः॥ ९

विवक्षितः प्रत्यय इति निशेषं तु व्याख्यानाल्लभ्यते तेन यस्मिन्विधिरिति तदादिविधिरित्याह यादाविति प्रत्यय इति विवक्षित इति। उत्तरपदमात्रनिमित्तः सभावोऽन्तरङ्गः समासप्रकृतिकस्तु यत् तद्धितप्रत्ययः अतस्तस्य परत्वं न संभवतीत्याशयेनेदमुक्तं सोदर्य इति समानोदरे शयित इत्यर्थे प्रत्ययात्प्राक् समानस्य सभावे कृते सोदराद्य इति यः सभावाभावपक्षे तु समानोदरे शयित ओ चोदात्त इति यति समानोदर्यः सदृक् सदृश इति॥ १ ॥

लोकंपृणइति पृणधातुः प्रीणनार्थः पृणतिः पूरणकर्मेति हरदत्तः । अनभ्यासमित्यइति अभ्यासं समीपं तद्भिन्नमनभ्यासं एति स्तु शास्त्रद्गुम इति इणः क्यप् भ्राष्ट्रमिंध
इति कर्मण्यणि उपपदसमासः एवमग्निमिंधोपि गिले गिलस्य गिलशब्दे उत्तरपदे अगिलस्य मुमित्यर्थः तिमिंगिल इति मत्स्यविशेषः गिरतेर्मूलविभुजादित्वात्कः अ
चि विभाषेति लत्वं गिलगिले चेति गिलं गिलतीति गिलगिलः तिमीनां गिलगिल इति विग्रहे इदमारब्धं रात्रेः कृ उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाभावेपि रा
त्रिशब्दात्परत्र कृतोऽसम्भवात् कृदन्त उत्तरपदे अयं विधिरित्याशयेनोदाहरति रात्रिंचर इति यद्यप्याचारक्विवंतात् ण्वुलादिः संभवति तथापि विलंवितोपस्थितिक

लोकम्पृणः । पृण इति मूलविभुजादित्वात्कः । इत्येऽनभ्यासस्य । अनभ्यासमित्यः । दूरतः परिहर्तव्य इत्यर्थः । भ्राष्ट्राग्न्योरिन्धे । भ्राष्ट्रमिन्धः । अग्निमिन्धः ।
। गिलेऽगिलस्य । तिमिङ्गिलः । अगिलस्य किं । गिलगिलः । गिलगिले च । तिमिङ्गिलगिलः । उष्णभद्रयोः करणे । उष्णङ्करणं । भद्रङ्करणं । रात्रेः कृति वि
भाषा । ६।३।७२ । रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । अखिदर्थमिदं सूत्रं । खिति तु अरुर्द्विषदिति नित्यमेव वक्ष्यते । रात्रिंमन्यः । सहस्य सः सं
ज्ञायाम् । ६।३।७८ । उत्तरपदे । सपलाशं । संज्ञायां किं । सहयुध्वा । ग्रन्थान्ताऽधिके च । ६।३।७९ । अनयोः परयोः सहस्य सः स्यादुत्तरपदे । समुहू
र्त्तं ज्योतिषमधीते । सद्रोणा खारी । द्वितीये चाऽनुपाख्ये । ६।३।८० । अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्य
माना निशयाऽनुमीयते । समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु । ६।३।८४ । समानस्य सः स्यादुत्तरपदे न तु मूर्द्धादिषु । अनुभ्राता सगर्भ्यः । अनुस
खा सयूथ्यः । यो नः सनुत्यः । तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यत् । अमूर्द्धादिषु किं । समानमूर्द्धा । समानप्रभृतयः । समानोदर्काः । समानस्ये
ति योगो विभज्यते । तेन सपक्षः । साधर्म्यं ॥

९९ त्वात्सन गृह्यत इति भावः नित्यमेवेति । पूर्वविप्रतिषेधेनेति भावः रात्रिंमन्य इति आत्ममाने खश्चेति खश्
सार्वधातुकत्वात्तस्मिन्परे श्यन् सहयुध्वेति सहे चेति क्वनिप् स्त्रियामपि वनो न हश इति निषेधात् ङीब्नेन समूहूर्त्तमिति अंतवचनेऽव्ययीभावः अव्ययीभावे चाका
लेइत्यत्र कालपर्युदासात् अप्राप्ते सभावे ग्रंथांतग्रहणं द्वितीये अप्रधानो यः स द्वितीयः इति लोकप्रसिद्धं उपाख्यं प्रत्यक्षं तद्भिन्नमनुमेयं तदाह । अनुमेये इति सराक्ष
सीकेति नद्यृतश्चेति कप् योगो विभज्यत इति एतदर्थमेव छंदसमपि समानस्य छंदसीति सूत्रमिहोपन्यस्तमिति भावः बहुव्रीहिरिति तेन वोपसर्जनस्येति एतदर्थं

ईषदर्थे इत्यस्यानुवृत्तेरितिभावः। पृषोदरप्रकाराणीति। आदिशब्दो हि न व्यवस्थावचनः। यथोपदिष्टपदानर्थक्यादिति भावः। शिष्टैरिति। अध्याहारलभ्यमिदं यथोपदि
ष्टमित्यत्र यथार्थेऽव्ययीभावः उपदिशिश्चोच्चारणक्रियः। यानियानि शिष्टैरुपदिष्टानीत्यर्थः। एवं स्थिते फलितमाह यथोच्चारितानि तथैवेति समासपदविषयकमिदं उत्त
रपदाधिकारात् निरुक्तादिशास्त्रसिद्धानामसमासपदानामुणादयो बहुलमित्येव सिद्धेश्चय यथपि समासविषयकमेवेति नियमो न युज्यते हंससिंहशब्दयोरपि भाष्ये
कारिकायामुदाहृतत्वात्तथापि तत्कारिकायां यथाशब्दाध्याहारेण दृष्टान्तप्रदर्शनार्थं तयोरुपन्यासः कृतो न तु प्रकृतसूत्रोदाहरणत्वेनेति नियमोक्तिरसम्यगेवेत्या

ईषदर्थे। ६।३।१०५। ईषज्जलं। काजलं॥ अनादावपि परत्वात्कादेशः। कामधुरं। विभाषा पुरुषे। ६।३।१०६। कापुरुषः। कुपुरुषः। अप्राप्तविभाषेयं। ई
षदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव। ईषत्पुरुषः। कापुरुषः। कवंचोष्णे। उष्णशब्दे उत्तरपदे कवं का च वा स्यात्। कवोष्णं। कोष्णं। कदुष्णं। पृषोदरा
दीनि यथोपदिष्टम्। ६।३।१०९। पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः। पृषत् उदरं। पृषोदरं। तलोपः। वारिवाहकः। बला
हकः। पूर्वपदस्य बः उत्तरपदादेश्च लत्वम्। भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्। गूढात्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्॥ १ दिक्शब्दे
भ्यः तीरस्य तारभावो वा। दक्षिणतारं। दक्षिणतीरं। उत्तरतारं। उत्तरतीरं। दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेष्टुत्वञ्च। दुःखेन दाश्यते। दूडाशः
। दुःखेन नाश्यते। दूणाशः। दुःखेन दभ्यते। दूडभः। खलर्थे। दभेर्न लोपो निपात्यते। दुःखं ध्यायतीति दूढ्यः। आतश्चेति कः। स्तुवन्तो स्यां सीद
न्तीति। वृषी। व्रुवत्च्छब्दस्य व्रु आदेशः। सदेरधिकरणे ड्ट्। आकृतिगणोयं। संहितायाम्। ६।३।११४॥ ११ हुः वर्णागमादिति हंतेः पचाद्यच्विसर्गागमः

विपर्ययादिति हिंसेरुपचाद्यच् हकारसकारयोः स्थानव्यत्ययः। दिक्छब्देभ्य इति वार्त्तिकमिदं दुरो नाशेत्यप्येवं खलन्तेभ्य इति दाशनाशदभेतित्रयोपि ईषद्दुस्सुषि
ति खलन्तप्रत्ययान्ता इत्यर्थः। वृषीति मुनीनामासनं वृषी आकृतिगणोयमिति तेन लुंपेदवश्यमः कृत्ये तुंकाममनसोरपि समो वा हिततततयोर्मांसस्य पचियुड्घञोरित्यपि
संगृहीतं कृत्यांते उत्तरपदे अवश्यमः अंतपुमान्लुंपेत् अवश्यगंतव्यः अवश्यसेव्यः तथा तुम काममनसोः परतः अंतं लुंपेत् गंतुकामः गंतुमनाः समो हिततततयोः॥

दीर्घइति अदसश्चात्वे कृते सवर्णदीर्घइत्यर्थः एतच्च पूर्वोत्तरोदाहरणान्वयि ॥ ॥ भीरोः स्थानमिति विसर्जनीयस्य
समानान्ययोश्चेति वक्तव्यमिति दृशेः क्विन्कञौ । दीर्घइति अदसश्चात्वे कृते सवर्णदीर्घइत्यर्थः एतच्च पूर्वोत्तरोदाहरणान्वयि
वधानात्षत्वप्राप्तिरस्तिज्योतिषः स्तोमइति इह ज्योतिःस्तोमोयमिति प्रत्युदाहर्त्तुमुचितं एतिसंज्ञायामिति सुषामादिगणे सूत्रमेतत् एवं नक्षत्राद्वेत्यपि विष्वक्सेनइति

भीरोः स्थानम् । ८।३।८१। भिरुशब्दात्स्थानस्य सस्य मूर्द्धन्यः स्यात्समासे । भीरुष्ठानं । असमासे तु । भीरोस्स्थानं । ज्योतिरायुषस्तोमः । ८।३।८३। आभ्यां
स्तोमस्य सस्य मूर्द्धन्यः स्समासे । ज्योतिष्टोमः । आयुष्टोमः । समासे किं । ज्योतिषः स्तोमः । सुषामादिषु च । ८।३।९८। सस्य मूर्द्धन्यः । शोभनं साम यस्य
सुषामा । सुषन्धिः । एतिसंज्ञायामगात् । ८।३।९९। सस्य मूर्द्धन्यः । हरिषेणः । एति किं । हरिसक्थं । संज्ञायां किं । पृथुसेनः । अगकारात्किं । विष्वक्सेनः
। इण्कोरित्येव । सर्वसेनः । नक्षत्राद्वा । ८।३।१००। एतिसंज्ञायामगकारान्मूर्द्धन्यो वा । रोहिणीषेणः । रोहिणीसेनः । अगकारात्किं शतभिषक्से
नः आकृतिगणोयं । अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । ६।३।९९। अन्यशब्दस्य दुगागमस्स्या
दाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अषष्ठीत्यादि किं । अन्यस्याऽ
न्येन वाशीः अन्याशीः । कारके छे च नायन्निषेधः । अन्यस्य कारकः । अन्यत्कारकः । अन्यस्यायं । अन्यदीयः । गहादेराकृतिगणत्वाच्छः । अ
र्थे विभाषा । ६।३।१००। अन्यदर्थः । अन्यार्थः । कोः कत्तत्पुरुषेऽचि । ६।३।१०१। अजादावुत्तरपदे । कुत्सितोऽश्वः । कदश्वः । कत्त्रेन तत्पुरुषे किं । कू
ष्ट्रो राजा । त्रौ च । कुत्सितास्त्रयः । कत्त्रयः । रथवदयोश्च । ६।३।१०२। कद्रथः । कद्वदः । तृणे च जातौ । ६।३।१०३। कत्तृणं । का पथ्यक्षयोः ॥ ६।३।
१०४। कापथः । काक्षः । अक्षशब्देन तत्पुरुषः । अक्षिशब्देन बहुव्रीहिर्वा ॥

चर्त्वस्यासिद्धत्वाज्जकारेणाव्यवधानमस्तीति भावः । अषष्ठ्या अन्यदाशी
रित्यादयः कर्म्मधारयाः नायं निषेधइति । एतच्चाषष्ठीतृतीयास्थस्येत्येव सिद्धे निषेधानित्यत्वज्ञापनार्थात् तद्धि नञ उपादानाल्लभ्यत इत्याहुः त्रौ चेति अनजाद्यर्थमिदं
वार्त्तिकं कन्यादिभ्यो ढकञिति निर्देशेनैव सिद्धं कापथमिति कुत्सितः पन्थाः ऋक्पूरब्धूरिति समासान्तः पथः संख्याव्ययादेरिति ॥ ॥ सकत्वं अप्राप्तविभाषेयं ॥

ईशो नियमार्थ एवेति विध्यर्थ इति। असंज्ञात्त्वेन पूर्वपदात्संज्ञायामित्यस्याप्रवृत्तेरिति भावः। न च पुरगाग्रहणमपि विध्यर्थमेव गकारव्यवधानेन पूर्वपदात्संज्ञायामित्यस्याप्राप्तभावादिति वाच्यं अग इत्यस्य पंचम्यंतत्वं स्वीकृत्य गांतात्पूर्वपदात्परस्य णत्वं नेति व्याख्यानात् पुरगाशब्दस्य त्वाकारांतत्वादग इति निषेध

पुरगावणं। मिश्रकावणं। सिध्रकावणं। सारिकावणं। कोटरावणं। एभ्य एवेति किं। असिपत्रवनं। वनस्याग्रे। अग्रेवणं। राजदन्तादिषु निपातनात्स
प्तम्या अलुक् प्रातिपदिकार्थमात्रे प्रथमा। किं शुलुकागिरिः। वले। ६।३।११८। वलप्रत्यये परे दीर्घः स्यात्संज्ञायां। कृषीवलः। मतौ वह्वचोऽनजिरादीनाम्
। ६।३।११९। अमरावती। अनजिरादीनां किं। अजिरवती। वह्वचः किं। व्रीहिमती। संज्ञायामित्येव। नेह। वलयवती। शरादीनां च। ६।३।१२०। शरावती।
इको वहेऽपीलोः। ६।३।१२१। इगन्तस्य दीर्घः स्याद्वहे। ऋषीवहं। कपीवहं। इकः किं। पिण्डवहं। अपीलोः किं। पीलुवहं। अपील्वादीनामिति वाच्यं। दा
रुवहं। उपसर्गस्य घञ्यमनुष्ये बहुलम्। ६।३।१२२। उपसर्गस्य बहुलं दीर्घः स्याद् घञन्ते परे न तु मनुष्ये। परीपाकः। परिपाकः। अमनुष्ये किं। निषादः
। इकः काशे। ६।३।१२३। इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे। वीकाशः। नीकाशः। इकः किं। प्रकाशः। अष्टनः संज्ञायाम्। ६।३।१२५। उत्तरपदे दीर्घः।
अष्टापदं संज्ञायाङ्किं। अष्टपुत्रः। चितेः कपि। ६।३।१२७। एकचितीकः। नरे संज्ञायाम्। ६।३।१२९। विश्वानरः। मित्रे चर्षौ। ६।३।१३०। विश्वामित्रः। ऋषौ
किं। विश्वमित्रो माणवकः। शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः। श्वादन्तः इत्यादि। प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षा
भ्योऽसंज्ञायामपि। ८।४।५। एभ्यो वनस्य णत्वं स्यात्। प्रवणं। कार्ष्यवणं। इह यात्परत्वात् णत्वे। विभाषौषधिवनस्पतिभ्यः। ८।४।६। एभ्यो वनस्य ण
त्वं वा स्यात्। दूर्वावणं। दूर्वावनं। शिरीषवनं। शिरीषवणं॥ ९९ स्याप्रवृत्तेः अत एव अग इत्यस्य ऋगयनमित्येकमेवोदाहरणमित्यपठगयनादिभ्य इति निर्दे



शाश्रयेणातत्प्रत्याख्यातमाकरे॥ ॥ पुरगावणमित्यादि नरकविशेषस्य संज्ञा असिपत्रवनमिति एभ्यो वनस्येवेति विपरीतनियमे तु णत्वमत्र दुर्वारमिति भावः। सप्त
म्यर्थस्य प्रातिपदिकार्थेऽन्तर्भावादाह प्रथमेति किं शुलुकादीनामुदाहरणमाह। किं शुलुकागिरिरिति आदिशब्दग्राह्यास्त्वंजनागिरिरित्यादयः किंशुलुकेति किंश

सं

अर्तवाल्लुपेत् सहितः संहितः सततं ततः पुष्टं घृएतत्पयोषः पचधातुः तस्मिन्परे मांसस्यांतं लुपेत्। मांस्पचनी मांस्पाकः इह संयोगांतलोपोपि शिष्टोच्चारणान्नेति बोध्यं संहितायामिति तेन द्व्यगुणाकर्णः इत्यादौ अवग्रहे दीर्घो न भवतीति सूत्राशयमुत्प्रेक्षयंति॥ ॥ अधिकारोयमिति तेन विघ्नाहित्वेत्यादौ पदकाले ह्रस्वोत स्तिङ इति दीर्घो नेत्यादिमूयोजनान्नूत्स्यानीति न हि वृत्तिःगाहवंधने वृत्तुवर्तने वृषु सेचने व्यधताडने रुचदीप्तौ षह मर्षणे तनुविस्तारे विवंते ब्विति उत्तरपदे ब्विति शेषः तेन द्विवसेषुरुगित्यादौ नातिप्रसंगः उपानदिति संपदादित्वात् कर्मणि क्विप् निवर्त्तते इति नीवृत् प्रवर्षतीति प्रावृट् मर्माणि विध्यतीति मर्मावित् व्यधेग्रहिज्येति संप्रसारणं निरोचत इति नीरुक् रुचि

अधिकारोयं। कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य। ६।३।११५। कर्णशब्दे परे लक्षणवाचकस्य दीर्घः द्व्यगुणाकर्णः लक्षणस्य किं। शोभनकर्णः अविष्टादीनां किं। विष्टकर्णः अष्टकर्णः पञ्चकर्णः मणिकर्णः भिन्नकर्णः। छिन्नकर्णः छिद्रकर्णः स्रुवकर्णः स्वस्तिककर्णः नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ। ६।३।११६। क्विबन्तेषु परेषु पूर्वपदस्य दीर्घः उपानत् नीवृत् प्रावृट् मर्मावित् नीरुक्। अभीरुक्। ऋतीषट्। परीतत्। क्वाविति किं। परिणहनं। विभाषा पुरुष इत्यतो मण्डूकप्लुत्या विभाषानुवर्तते। सा च व्यवस्थिता। तेन गतिकारकयोरेवनेह। पटुरुक्। तिग्मरुक्। वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्। ६।३।११७। कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे दीर्घः स्यात् संज्ञायां। वनस्पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः। ८।४।४। वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः। इह कोटरान्तानां पञ्चदीर्घविधौ कोटरादयो बोध्याः। तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः। अग्रेशब्दस्य तु विध्यर्थः॥ ९९ सह्नेर्ऋतीषट् पूर्वपदादिति षत्वमिति ह रह्नः सहेः पृतनर्त्ताभ्यां चेत्यत्र सहेरिति योगविभागाच्चकारस्यानुक्तसमुच्चयार्थत्वान्येषामादेराकृतिगणत्वादित्यपरे परितनोतीति परीतत् गमः क्वाविस्यत्र गमादीनामिति वाच्यमित्युक्तेर्नलोपः वनं पुरगा। व्यत्ययेन षष्ठ्यर्थे प्रथमेत्याह वनशब्दस्येति एभ्य एवेति कृतदीर्घेभ्यः पुरगादिभ्य एव परस्य णत्वमित्यर्थः। एभ्यो वनस्यैव णत्वं नान्येषामिति विपरीतनियमशंका तु न भवति वनादन्यस्मिन्नुत्तरपदे पुरगादीनां दीर्घोत्पत्त्यसंभवात् नियमार्थ इति अयं भावः पुरगामिश्रकेति दीर्घनिर्देशादसंज्ञायां दीर्घाभावेन संज्ञायामेव णत्वमिति फलितं एवं च पूर्वपदात् संज्ञायामित्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपंचकस्य णत्वविधौ नि

गिरिनद्यादीनांचेतिवक्तव्यमितिशेषः संज्ञायांप्राप्तेऽसंज्ञायामप्राप्तेउभयत्रविभाषेत्याहुः माषवापिणाविति बहुलमाभीक्ष्ण्ये इति णिनिः व्रीहिवापाणीति कर्मण्य
णुउत्तरपदेयदिति इष्टानुरोधेनतथाव्याख्यायत इतिभावः गर्गभगिनीति इह भगिनीशब्दउत्तरपदं नतुभगिन्शब्दः अत्रव्याख्यानेनुम्ग्रहणमेवज्ञापकमिति
प्राचांमतमाह अतएवेति तदुक्तंज्ञापकंविघटयति किंचेति परिपक्वानीति कुमतिचेति नित्यंणत्वंप्राप्तं एकाजुत्तरप्राग्व्याख्यातमपिप्रकरणानुरोधेनस्मार्यते वृत्र
हणाविति वृत्रेहतवंतौब्रह्मभ्रूणेतिक्विप् हरिमाणीति मनेर्ण्यंतात् क्विप्चेति क्विपृगतिकारकोपपदानामित्यादिना सुबुत्पत्तेः प्राक्तमासान्नकारांतमुत्तरपदंनांतत्वा
न्ङीप् क्षीरपाणीति पिबतेः कर्मण्युपपदे आतोनुपसर्गे इतिकः आतोलोपइटिचेत्यालोपः रम्यविणेति रम्यश्चासौविश्चेतिविग्रहस्ततआङोनास्त्रियामिति नुम्भंतवेति

गिरिनद्यादीनांवा॥ गिरिनदी। गिरिणदी। चक्रनितम्बा। चक्रणितम्बा। प्रातिपदिकान्तनुम्विभक्तिषुच। ८।४।११। पूर्वपदस्थान्निमित्तात्परस्य
एषुस्थितस्यनस्यणोवास्यात्। प्रातिपदिकान्तः। माषवापिणौ। नुमि। व्रीहिवापाणि। विभक्तौ। माषवापेण। पक्षेमाषवापिनावित्यादि उत्तरपदेय
त्प्रातिपदिकान्तंतत्स्यैवणत्वं। नेह। गर्गाणाम्भगिनी। गर्गभगिनी। अतएवनुम्ग्रहणंकृतं। अङ्गस्यनुम्विधानात्तद्भक्तौ हिनुम्नतूत्तरपदस्य।
किं च व्रीहिवापाणि। अत्रहिएवन्नित्यादौ हिवेर्नुमोणत्वार्थमपिनुम्ग्रहणं। प्रेन्वनमित्यादौतुक्षुभ्रादित्वान्न। युवादेर्न। रम्यपूनापरिपक्वानि। एकाजुत्तरपदे
णः। नित्यमित्युक्तं। वृत्रहणौ। हरिम्मानयतीति। हरिमाणी। नुमि क्षीरपाणि। विभक्तौ। क्षीरपेण। रम्यविणा। कुमतिच। ८।४।१३। कवर्गवत्युत्तरपदे
प्राग्वत्। हरिकामिणौ। हरिकामाणि। हरिकामेण। पदव्यवायेपि। ८।४।३८। पदेनव्यवधानेपिणत्वंनस्यात्। माषकुम्भवापेन॥ ॥ ॥

नौविभक्तिमाश्रित्यविशब्दस्यपदत्वात्पदव्यवायेपीतिणत्वनिषेधः स्यान्मैवंउत्तरपदत्वेचापदादिविधावितिप्रत्ययलक्षणप्रतिषेधेनविशब्दस्यपदत्वाभावात् स्वा
दिष्वित्यनेनतुरम्यविशब्दस्यैवपदत्वंनतुविशब्दस्यपस्मात्स्वादिविधिस्तस्यैवपदत्वाभ्युपगमात् एवंचपुनर्भ्रूणामित्यत्रणत्वंनिर्बाधमेवनामिपरतः भूशब्दस्यपद
त्वाभावात्। कुमतिच अनेकाजुत्तरपदार्थआरंभः क्वावित्येवतुनसूत्रितंयस्मिन्विधिरितितदादिविधौकवर्गाद्युत्तरपदएवहरिकामिणामित्यादावयंविधिःस्यान्न
तुवस्त्रयुगेणेत्यादौतथाचमत्वर्थनिर्देशआवश्यकइत्याह कवर्गवतीति पदेनव्यवधानइतिनिमित्तनि॥

ष्लगिरिः रामगिरिः कृषीवल इति रजः कृष्यादिभ्यो वलजित्यादिना मत्वर्थे वलच् अमरावतीति मादुपधायाश्चेति संज्ञायामिति वा मतोर्मस्य वः घञ्मात्रस्योत्तरपदत्वासंभवादाह। घ
ञन्त इति निषाद इति पुलिंदो मनुष्यजातिः निषीदत्यस्मिन्पापमिति निषादः हलश्चेत्यधिकरणे घञ् कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेदत्राहुः प्रतिहारो द्वा
रं तत्र भवः प्रतीहारः दीर्घोन्त्यः पठ्यते केचित्तु ह्रस्वान्तं पठित्वाऽस्मादंश्चा इति वह्वृचो ह्रीहो दीर्घमाहुर्नेत्तत्पुरुषे इह
रतास्थ्यातान्कुन्चमिति एकचितीक इति शेषाद्विभाषेति कप् द्व्यचो इति वार्त्तिके दीर्घोन्तः पठ्यते केचित्तु ह्रस्वान्तं पठित्वास्मादन्त्राइति वह्वृचोहे दीर्घमाहुर्नेत्तत्पुरुषे इह
षादिति कार्ये तितालव्यपाठस्त्वनार्ष इति भावः वनस्पतिभ्यो वनस्यणत्वमुदाहरति शिरीषवणमिति ननु वानस्पत्यः फलैः पुष्पात्तेः पुष्पाद्वनस्पतिरित्यमरकोशा
शाद्यस्य पुष्पं विनैव फलप्रादुर्भावस्स वनस्पतिस्तचोदुंवरादिः शिरीषस्तु न तथा तस्य पुष्पफलोभयसत्वात्तत्रोणत्वमिह कथमिति चेदत्राहुः। वनस्पतिशब्देनात्र

द्व्यच्त्र्यच्भ्यामेव। नेह। देवदारुवनं। इरिकादिभ्यः प्रतिषेधो वक्तव्यः। इरिकावनं। मिरिकावनं। वाहनमाहितात्। ८।४।८। आरोप्यत इत्याहितात्
द्व्यच्त्र्यच्भ्यामेव। नेह। देवदारुवनं। इरिकादिभ्यः प्रतिषेधो वक्तव्यः। इरिकावनं। मिरिकावनं। वाहनमाहितात्। ८।४।८। आहितवाचिनः पूर्वपदस्थान्निमित्तात्परस्य वाहनस्य नकारस्य णत्वं स्यात्। इक्षुवाहणं। आहितात्किं। इन्द्रवाहनं। इन्द्रस्वामिकं वाहनमित्यर्थः। वहतेर्ल्युट्। द्व्य
द्वाविस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात्। इक्षुवाहणं। आहितात्किं। इन्द्रवाहनं। इन्द्रस्वामिकं वाहनमित्यर्थः। वहतेर्ल्युट्
ड्विरिहैव सूत्रे निपातनात्। पानं देशे। ८।४।९। पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशगम्ये। क्षीरं पानं येषां ते क्षीरपाणाः
उशीनराः सुरापाणाः प्राच्याः। पीयत इति पानं। कर्मणि ल्युट्। वा भावकरणयोः। ८।४।१०। पानस्येत्येव। क्षीरपानं। क्षीरपाणं ॥ ९ ॥ ॥

वृक्षमात्रमुपलक्ष्यते अत्र लुपि युक्तवदिति सूत्रस्थभाष्यलिंगं तत्र हि व्यक्तिवचने किं शिरीषाणामदूरभवो ग्रामः शिरीषस्तस्य वनं शिरीषवनमित्यत्र णत्वं कर्त्तव्यं वन
स्पतित्वमप्यतिदिश्येतेत्युक्तं। तच्च शिरीषाणां वनस्पतित्वे संगच्छते नान्यथेति दिक्॥ ॥ द्व्यच्त्र्यच्भ्यामेवेति। व्यवस्थितविभाषाश्रयणादिति भावः। औषधित्वात्
न्नेप्रतिषेधमाह इरिकादिभ्य इति एतदपि व्यवस्थितविभाषाविज्ञानादेव सिद्धं उशीनरा इति। इह उशीनरशब्दस्तद्देशवासिषु भाक्तः कर्मणि ल्युडिति कृत्यल्युटो
बहुलमित्यनेन वा भाव आदेशार्थं आरंभ इत्यप्राप्तविभाषा क्षीरपाणमिति पीतिः पानं ल्युट् चेति नपुंसके भावे ल्युट् पीयतेऽनेनेति पानं करणे ल्युट् क्षीरस्य पानं

आश्चर्यमिति आङः परस्य चरेः सुट् चरेराङि चागुराविति यत्॥ विष्किरः॥ वा विष्कौ थे इत्यस्मादिगुपधेत्यादिना कप्रत्यये सुडागमश्चानेन निपात्यते षत्वं तु परिनि विभ्य इत्यनेन विकिरग्रहणमिति विष्किरः शकुनौ विकिरो वेति वृत्तिग्रन्थपाठः सूत्रपाठे तु विकिरग्रहणं नास्त्येवेति बोध्यं तस्यापीति विकिरशब्दस्यापीत्यर्थः

आश्चर्यमनित्ये। ६।१।१४७। अद्भुते सुट्। आश्चर्यं यदि स भुञ्जीत। अनित्ये किं। आचर्यं कर्म शोभनं। वर्चस्केऽवस्करः। ६।१।१४८। कुत्सितं वर्चः। वर्चस्कमन्नमलं तस्मिन् सुट्। अवकीर्यत इति। अवस्करः। वर्चस्के किम्। अवकरः। अपस्करो रथाङ्गम्। ६।१।१४९। अपकरोऽन्यः। विष्किरः शकुनौ विकिरो वा। ६।१।१५०। पक्षे विकिरः। वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो माभूदिति वृत्तिस्तन्त्रभाष्यविरोधात्। प्रतिष्कशश्च कशेः। ६।१।१५२। कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वञ्च सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते। कशेः किं। प्रतिगतः कशां प्रतिकशोऽश्वः। यद्यपि कशेरेव कशा तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थं। तेन धात्वन्तरोपसर्गान्न। प्रस्कण्वहरिश्चन्द्रावृषी। ६।१।१५३। हरिश्चन्द्रग्रहणममन्त्रार्थम्। ऋषी इति किं। प्रकण्वो देशः। हरिचन्द्रो माणवकः। मस्करमस्करिणौ वेणुपरिव्राजकयोः। ६।१।१५४। मकरशब्दोऽव्युत्पन्नः तस्य सुडिनिश्च निपात्यते। वेणाविति किं। मकरो ग्राहः। मकरी समुद्रः। कास्तीराजस्तुन्दे नगरे। ६।१।१५५। ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरं। अजस्येव तुन्दमस्येति। अजस्तुन्दं नाम नगरम्। नगरे किं। कातीरं। अजतुन्दम्। कारस्करो वृक्षः। ६।१।१५६। कारं करोतीति कारस्करो वृक्षः अन्यत्र कारकरः। केचित्तु कस्कादिषु इदं पठन्ति न सूत्रेषु। पारस्करप्रभृतीनि च संज्ञायाम्। ६।१।१५७। एतानि ससुट्कानि निपात्यन्ते नाम्नि। पारस्करः। किष्किन्धा॥ ॥ ॥ ॥

कशेरेव कशेति कशधातोरेव कशाशब्दो निष्पन्न इत्यर्थः॥ धात्वन्तरेति प्रतिकश इत्यत्र प्रतिर्गमेरुपसर्गो न तु कशेः यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवेति न्यायादिति भावः अमन्त्रार्थ इति मन्त्रे तु ह्रस्वाच्चन्द्रोत्तरपदे मन्त्र इत्यनेनैव सिध्यतीति भावः मस्कर मस्करशब्दादि ॥ ॥ ६ ॥ ॥

मिति नोर्मध्ये पदे सति णत्वं नेत्यर्थः माषकुंभवापेनेति माषकुंभं वपतीति कर्मण्यण् उपपदसमासः ॥ ॐ ॥ चतुरंगयोगेनेति चत्वार्यंगान्यस्येति न योग इति मनोरमा
यां विगृहीतं तदयुक्तं उत्तरपदत्वे चापदादि विधाविति प्रत्ययलक्षणप्रतिषेधादंगशब्दस्यापदत्वात् तस्मादंगानां योगो अंगयोगश्चतुर्णामंगयोग इत्येव विगृहीत
व्यं न च चतुरंगेन योग इति विग्रहे प्यंगशब्द उत्तरपदे नेति प्रत्ययलक्षणप्रतिषेधान्न प्रवर्ततेति शंक्यं तस्य पूर्वसमासस्योत्तरपदत्वात् उत्तरपदत्वे चेति प्रतिषेध व
चनस्याप्युत्तरस्य समासचरमावयवस्य पदत्वे कर्त्तव्ये पदादिविधिभिन्ने प्रत्ययलक्षणं न प्रवर्त्ततेत्यर्थाभ्युपगमाच्च शाकपार्थिवादीनामुत्तरपदलोपः प्रादिभ्यो
धातुजस्येत्यादौ तूत्तरपदशब्देन समासचरमावयवमात्रं गृह्यत इति प्रत्ययलक्षणप्रवृत्त्यभावे पि न क्षतिः इह तु पदत्वलाभाय प्रत्ययलक्षणप्रवृत्तिरपेक्षिता एवं च मा



चतुरङ्गयोगेन। अतद्धित इति वाच्यम्। आर्द्रगोमयेण। शुष्कगोमयेण॥ कुस्तुम्बुरूणि जातिः ६।१।१४३॥ अत्र सुण्निपात्यते। कुस्तुम्बुरु धान्या
कं। स्त्रीवत्वमतन्त्रं। जातिः किं। कुतुम्बुरूणि। कुत्सितानि तिन्दुकीफलानीत्यर्थः॥ अपरस्पराः क्रियासातत्ये ६।१।१४४॥ सुण्निपात्यते। अपरस्परा
स्सार्था गच्छन्ति। सततमविच्छेदेन गच्छन्तीत्यर्थः। क्रियेति किम्। अपरपरा गच्छन्ति। अपरे च परे च सकृदेव गच्छन्तीत्यर्थः॥ गोष्पदं सेवितासे
वितप्रमाणेषु ६।१।१४५॥ सुट् सस्य षत्वञ्च निपात्यते। गावः पद्यन्तेस्मिन्देशे। स गोभिः सेवितो गोष्पदः। असेविते। अगोष्पदान्यरण्यानि। प्रमा
णे। गोष्पदमात्रं क्षेत्रं। सेवितेत्यादि किं। गोः पदं गोपदम्॥ आस्पदं प्रतिष्ठायां। आत्मयापनाय॥ स्थाने सुट् निपात्यते। आस्पदं। प्रेति किं। आपदा

षकुंभवापेनेत्यत्रापि कुंभस्य वापः कुंभवापः कुंभशब्दः कुंभपरिमितधान्ये भाक्तः॥ माषाणां कुंभवाप इति विगृहीतव्यमिति नव्याः केचित्तु अपदादिविधावित्यत्र पदांतवि
धावित्यर्थं परिकल्प्य पदव्यवायेपीत्यस्य पदांतविधित्वाभावान्नास्त्यत्र प्रत्ययलक्षणनिषेध इत्याहुः तदपरे न क्षमंते तथा हि सति लाघवात्पदांतविधावित्येव ब्रू
यान्न त्वपदादिविधाविति दिक्॥ अतद्धित इति व्यवधायकपदस्य तद्धितश्चेत्परे न भवति तदा निषेध इत्यर्थः। आर्द्रगोमयेणेति। इह गोशब्दः पदं उत्तरपदत्वे चेति नि
षेधोत्र न शंक्यः गोमयशब्दस्योत्तरपदत्वात् गोशब्दस्य च स्वादिष्विति पदत्वात्। गोष्पदं असेविते गोष्पदशब्दस्य वृत्त्यसंभवान्नञ्पूर्वकमुदाहरति अगोष्पदानी
ति। गवां संचारो यत्र नैव संभवति तत्रापि रूढ्यागमार्थमसेवितग्रहणमित्याहुः॥ आत्मयापनायेति कालक्षेपाय शरीररक्षणाय वेत्यर्थः॥ ॐ ॥ ॥

श्रीगणेशायनमः॥ अपवादसंगत्यातद्धितान्विवक्षुस्तदीयमधिकारसूत्रमाह समर्थानामिति अन्यतरस्यांग्रहणानुवृत्तेः समासोपीतिवक्ष्यमाणमूलग्रंथेन
समासापवादत्वंसूचितं विधेयानिर्देशादत्तरत्रप्रकृतिविशेषाकांक्षासत्त्वाच्चनायंस्वतंत्रो विधिरित्याह अधिक्रियतइति यदत्रयमित्यनेनप्रत्येकंस्वरितत्वप्रति
ज्ञासूचिता तत्प्रयोजनंतुकस्यचिन्निवृत्तावप्यपरस्यानिवृत्तिस्तथाच प्राग्दिशइतिसूत्रे समर्थानांप्रथमादितिनिवृत्तंवेतित्वनुवर्ततएवेतिवक्ष्यमाणमूलग्रं
थः संगच्छते प्राग्दिशइतीति ततउत्तरेषांप्रत्ययानांस्वार्थिकत्वेनप्रथमेतिपदयोः प्रयोजनंनेतिभावः ननुसमर्थः पदविधिरितिपरिभाषयागतार्थत्वात्समर्था
नामित्येतदपार्थंतच्चपदविधित्वंशंक्यं। घकालतनेष्वित्यलुग्विधानात्तुवृत्तान्तद्धितोत्पत्तिरितिसिद्धांतस्यसकलसंमतत्वात् इतआह सामर्थ्यमिति कृतसंधि
समर्थानां

श्रीगणेशायनमः समर्थानांप्रथमाद्वा ॥४।१।८२॥ इदंपदत्रयमधिक्रियते प्राग्दिशइतियावत् सामर्थ्यंपरिनिष्ठितत्वम् कृतसन्धिका
र्यत्वमितियावत् प्राग्दीव्यतोऽण् ४।१।८३ तेनदीव्यतीत्यतः प्रागणाधिक्रियते अश्वपत्यादिभ्यश्च ४।१।८४ एभ्योऽण्स्यात्प्राग्दीव्य
तीयेष्वर्थेषु वक्ष्यमाणस्यण्यस्यापवादः॥

कार्यत्वमिति अस्यफलंतुतस्यापत्यमितिसूत्रेमूलएवस्फुटीभविष्यति इहसमर्थात्प्रथमाद्वेतिवक्तुंयुक्तं महो
त्सर्गानाह प्राग्दीव्यतइत्यादिना सूत्रेदीव्यदित्येकदेशोनर्थकोप्यवधित्वेनोपात्तः माघीश्वरादितिवदित्येके अन्येत्वाहु दीव्यदिति शत्रंतं तेन देवनकर्ताऽर्थएवावधिरि
ति प्राग्दीव्यतीयेष्विति दीव्यतः प्राक्प्राग्दीव्यत् अपपरिवहिरंचवः पंचम्येत्यव्ययीभावइति प्राञ्चः प्राग्दीव्यतमितितूचितं मयइतिटच्प्रत्ययइतिकेचित्तन्न मयइति
टचः पाक्षिकत्वात् अन्यथाउपसमिधमुपसमिदितितत्सूत्रस्यमूलोदाहरणस्यासंगत्यापत्तेः नचात्रटचोभावे अव्ययानांभमात्रेइतिटिलोपे प्राग्दीव्यतीयइति रू
पंनस्यादितिशंक्यं अव्ययीभावस्याव्ययत्वेप्रयोजनंलुङ्मुखस्वरोपचारइतिपरिगणनात् प्राग्दीव्यतिभवः प्राग्दीव्यतीयः वृद्धाच्छः त्यमुनशंकनीयएव अ
मेहक्वतसित्रेभ्यएवेतिपरिगणनात् लुङ्मुखस्वरेत्यादिपरिगणनयाअनव्ययत्वाच्च वक्ष्यमाणस्येति पत्युत्तरपदाण्ण्यइति वक्ष्यमाणस्य ॥

॥

निनाभत्वर्थीयेनेश्च सिद्धो मस्करिग्रहणं परिव्राजक एवायं प्रयोगो यथास्यादित्येवमर्थमित्याहुः कास्तीरमिति ईषदर्थे इति कोः कादेशः पारस्कर इति पारं करोतीति
विग्रहः कृञो हेतुताच्छील्य इति टः किंकिं चेति किमपि चत्ते इति विग्रहे आतोऽनुपसर्गे कः टाब् निपातनात् किमो द्वित्वं पूर्वस्य मलोपः सुट् षत्वं च किंविंदधातीति वि
गृह्णतामृतेन वीप्सायां द्वित्वे सिद्धं अन्यत्र तु निपातनादेव वस्तुतस्तु रूढिशब्दा एते कथंचिद्व्युत्पाद्यंत इत्यवयवार्थे नाग्रहः कार्यः॥ ॥ तद्बृहतोरिति गणसू

तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च। तात्पूर्वे चर्त्वेन दकारो बोध्यः। तद्बृहतोरीकारतकारौ लुप्येते। करपत्योः सु
सुट्। चोरदेवतयोरिति समुदायोपाधिः। तस्करः। बृहस्पतिः। प्रायस्य चित्तिचित्तयोः। प्रायश्चित्तिः। प्रायश्चित्तम्। वनस्पति
रित्यादि। आकृतिगणोऽयं॥ ॥ इति समासाश्रयविधयः ॥ ॥

त्रमेतत्तादिति तलोपश्चेत्यत्रेति शेषः प्रायस्येति गणसूत्रमेतदपि प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनमिति स्मृतिः। आकृतिगणोऽयमिति तेन शतात्यराणि परश्श
तानि कार्याणीत्यादि सिद्धम् सह सुपेति वा पंचमीति योगविभागाद्वा समासः राजदंतादित्वाच्छतशब्दस्य परनिपातः पारस्करादित्वात्सुट्। इति समासाश्रयविषयः स
मासाः ॥

असंतात् स्वार्थिकेनाप्यत्राप्रयोगस्सूपपादः। स्त्रियांङीवन्नभवतिषितांङीषोऽनित्यत्वात्। त्रात्रोः फलभेदज्ञापनाय स्त्रीलिंगमुदाहरति पार्थिवापार्थिवीति बहिषष्टिलोप
वचनमव्ययानांभमात्रेइत्यस्यानित्यतांज्ञापयितेनआरातीयइतिसिद्धं अश्वत्थामइतिभाष्योदाहरणात्तदंतविधिः नचवलवाचिनः स्थामन्शब्दस्यापत्येनयोगासं
भवात् वचनारंभसामर्थ्यात्तदंतविधिः स्यादितिवाच्यं। जाताद्यर्थेतत्संभवेनसामर्थ्योपक्षयात् अश्वस्येवस्थामयस्येतिबहुव्रीहिः। उडुलोमा इति उडूनिनक्षत्राणीवलो
मान्यस्येतिविग्रहः। केवलस्यापत्येनयोगासंभवात्तदंतविधिस्ततोऽकारष्टिलोपः॥ ॥ गोरिति। नकेवलमपत्यएवायं किंतुप्राग्दीव्यतीयेषुसर्वेष्वर्थेष्विति ज्ञेयं। ग
व्यमिति गविभवंगव्यंगोर्देवतायस्यगोरिदमित्यादिरर्थः केचित्तुभाष्येसर्वत्रग्रहणात्प्राग्दीव्यतीयेभ्योन्यस्मिन्नर्थेऽयंयत्। तेनगवाचरतिगव्यइत्या
द्यपिभवतीत्याहुः गोरूप्यमित्यादि हेतुमनुष्येभ्योन्यतरस्यांरूप्यः मयड्चेतिरूप्यमयटौ उत्सादिभ्योञ् अणस्तदपवादानामिञादीनांचायमपवादः इहवष्कयासेइति

गोरजादिप्रसंगेयत् गव्यम् अजादिप्रसंगेकिम् गोभ्योहेतुभ्यः आगतंगोरूप्यम् गोमयम् उत्सादिभ्योञ्।४।१।८६। औत्सः अग्निकलिभ्यां
ढग्वक्तव्यः अग्नेरपत्यादि आग्नेयम् कालेयम् इत्यपत्यादिविकारान्तार्थाः साधारणाः प्रत्ययाः ॥ ॥ ॥ ॥

गणसूत्रं असेअसमासे इत्याचार्यसंज्ञेयंवष्कस्यापत्यादिवाष्कयः। असे किं। गोवष्कयिः। असइतिनिषेधाल्लिंगादिहतदंतविधिस्तेनधेनुशब्दस्येहपाठाद्धे
नूनांसमूहआधेनवमितिसिद्धं। नन्वेवंधेनुकंगोधेनुकमित्यत्रात्प्रवर्तेत अचित्तहस्तिधेनोरितिसूत्रेधेनुशब्दग्रहणाद्धैनुकमितिसिद्धावपिगोधेनुकंनसिध्ये
दितिचेन्नधेनुरनञ्इकमुत्पादयतीतिविशेषवचनस्यभाष्येस्थितत्वात् इकंठकमित्यर्थः अग्निकलिभ्यामिति अयंभावः। सास्यदेवतेत्यधिकारे अग्नेढगितिसूत्रं
दृष्टंसामेत्यधिकारेकलेढगितिवार्तिकंचापनीयप्राग्दीव्यतीयेष्विदमेवपठनीयं तेनाग्नेरपत्यंअग्निनादृष्टंसामअग्नेरिदमग्नेर्भवंअग्नेरागतमाग्नेयमितिसिध्यति
तथाकलेरपत्यमित्याद्यर्थेकालेयमपिसिध्यतीति एतेनपदकालेयतत्कालेपस्यकालेयत्वमितिश्रुतावर्थात्तरेपिठकोदर्शनात्कलेढगितिसूत्रमपार्थकमि
तिमीमांसकोक्तिः परास्ता। वार्तिकेसूत्रत्वोक्तिरप्यवैयाकरणमीमांसकप्रतारणार्थेतिदिक् इत्यपत्यादिविकारांतार्थसाधारणाः प्रत्ययाः ॥ ॥ ॥ ॥

तद्धितेष्वचामध्ये आदिरजेवेत्यचोञ्णितीतिसूत्रादचइत्यनुवर्त्ततइत्याशयेनव्याचष्टे अचइति वृद्धिःस्यादिति मृजेर्वृद्धिरित्यतोऽनुवर्त्ततइतिभावः। किति च वाहीकइ
त्याद्यर्थमपीदंसुगमव्याख्यानायान्वेवोपन्यस्तं अचामादेरितिनिर्दिष्टस्थानिकत्वादिकपरिभाषात्रनोपतिष्ठतइत्याशयेनोदाहरति आश्वपतमित्यादि।प्रामादिकमेवेति
एतच्चहरदत्तग्रंथेस्थितं यदित्तु देवतार्थकारणताचातुर्वर्ण्यादेराकृतिगणत्वात्ष्यञितिव्याख्यायतेतदानिर्दुष्टएवायंप्रयोगः अश्वपतिगणपति। राष्ट्रपतिकुलपतिगृह
पतिपशुपतिक्षेत्रपतीत्यश्वपत्यादिदित्यदित्या पतिशब्दस्योत्तरपदशब्देनबहुव्रीहिंकृत्वापश्चाद्द्वंद्वः कार्योनतुद्वंद्वोत्तरंबहुव्रीहिरित्याहयत्युत्तरपदाच्चेतिपत्ये
तादित्युच्यमानेबहुच्पूर्वादपिस्यादित्युत्तरपदग्रहणंकृतं दैत्यइति ननुदितेर्देवताद्यर्थएपसावकाशः इतश्चानिञइत्यपत्येढक्दैते यइत्यादौसावकाशस्तथाच

तद्धितेष्वचामादेः। ७।२।११७। ञितिणितिच तद्धिते परेऽचामादेरचोवृद्धिःस्यात्। कितिच। ७।२।११८। किति तद्धिते च तथा अश्वपतेरपत्यादि
आश्वपतगाणपतम् गाणपत्योमन्त्रइतितुप्रामादिकमेव। दित्यदित्यादित्यऽपत्युत्तरपदाण्ण्यः। ४।१।८५। दित्यादिभ्यः पत्युत्तरपदाच्चप्राग्दी
व्यतीयेष्वर्थेषुण्यः स्यादणोपवादः दैत्यः अदितेरादित्यस्यवा आदित्यः प्राजापत्यः। यमाच्चेतिकाशिकायांयाम्यः पृथिव्याञाञौ। पार्थिवा पा
र्थिवी दैवाद्यञञौ। दैव्यम् दैवम् वहिषष्टिलोपोयञ्च। वाह्यः। ईकक्च। वाहीकः। स्थाम्नोऽकारः पृषोदरादित्वात्सस्यतः। अश्वत्थामः भवार्थे
तुलुग्वाच्यः अश्वत्थामा लोम्नोपत्येषुबहुष्वकारः बाह्वादीञोपवादः उडुलोमाः उडुलोमान् बहुषुकिम् औडुलोमिः ॥ ॥ ॥

दितेरपत्यमित्यत्रोभयप्रसंगेपरत्वाड्ढक्स्यान्नैवंण्यादयोर्थविशेषलक्षणादणापवादात्पूर्वविप्रतिषेधाश्रयणात् अर्थविशेषइति किं औष्ट्रपतौउष्ट्रपतिर्नाम्प
त्रे तस्येदंपात्राघ्यञ्ञपरिषदश्वेत्यत्रइहपूर्वविप्रतिषेधेनतस्येदमित्यर्थेण्योनभवति। इदमित्यस्यसामान्यार्थत्वात् कथंतर्हि दैतेयइति। अत्राहुः कृदिकारादितिङी
षंतात्स्त्रीभ्योढक्। ण्यस्तुनभवति। लिंगविशिष्टपरिभाषायाअनित्यत्वात् नचातादिवच्चतिपूर्वस्यातवङ्गावेन स्यादेवण्यइतिभ्रमितव्यंदितिशब्दात्ङीषिकृते
यस्येतिचेतिलोपेनसवर्णदीर्घाभावादिति आदित्यशब्दात्ण्यप्रत्ययेयस्येतिलोपे हलोयमामितिपाक्षिकोयलोयः। नचाल्लोपस्यस्थानिवत्त्वंयलोपेनपदांतेतिन
निषेधात्पूर्वत्रासिद्धेनस्थानिवदित्युक्तेश्चकाशिकायामिति भाष्येतुनदृष्टमितिभावः ॥ ० ॥

अजादिप्राग्दीव्यतीये विवक्षितेऽनेनालुङ्भवतीति वृद्धत्वाच्छोनेतिभावः विवक्षित इति अचीति विषयसप्तमी ——— परसप्तमी त्वेतु अवृद्धत्वाच्छस्याप्राप्तौ अणो वक्तव्यादि तिभावः॥ ९॥ गर्गाणामिति अपत्यबहुत्वविवक्षायां यञञोश्चेति लुक् सचाजादिप्रत्यये चिकीर्षिते अनेन प्रतिषिद्ध इति गार्ग्यशब्दाच्छे कृते तस्य ईयादेशः यस्येति चेत्य कारलोपे यलोपार्थमाह। आपत्यस्य चेति ढे लोपे कृते इत्यतो लोप इत्यनुवर्त्तते सूर्येति ष्येत्यतो य इति हल स्तद्धितस्येत्यतो हल इति चतदाह हलः परस्येत्यादि। आभीयत्वे प्यल्लोपो नासिद्धः आरंभसामर्थ्यात् इत एवोपधाया इति नानुवर्तितमिति व्याचष्टे यकारस्येति। आपत्यस्येति किं। सांकाश्यकः। कांपिल्यकः सांकाशादिभ्यो ण्य ततो वुञ्च यो पधादिति वुञ् तद्धित इति किं। गार्ग्यौ गार्ग्ययोः अनातीति किं। गार्ग्यायणः। गर्गीयमिति। तस्मै हितमिति छः। यूनि लुक् प्राग्दीव्यतीय इति वर्त्तते अचीति च प्रत्ययाधिकारा

गर्गाणां छात्राः॥ वृद्धाच्छः आपत्यस्य च तद्धितेनाति ६।४।१५१ हलः परस्यापत्ययकारस्य लोपः स्यात् तद्धिते नत्वाकारे। गार्गीयाः प्राग्दीव्यतीये किम् गर्गेभ्यो हितं गर्गीयम्। अचि किं गर्गेभ्य आगतं गर्गरूप्यम्। यूनि लुक् ४।१।९० प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात्। ग्लुचुकायनिः वक्ष्यमाणः फिन् ततो यून्यण्। ग्लौचुकायनः तस्य छात्रोपि ग्लौचुकायनः। अणो लुकि वृद्धत्वाभावाच्छो न। पैलादि भ्यश्च। २।४।५९ एभ्यो युवप्रत्ययस्य लुक् पीलाया वेत्यण् तस्मादणो द्व्यचइति फिञ् तस्य लुक्॥ ११

य इति प्रत्ययस्य लुगिति संज्ञाकरणाल्लब्धो यः प्रत्ययः स यूनीत्यनेन विशिष्यते तथा च यूनि यः प्रत्यय इति लभ्यते तदाह प्राग्दीव्यतीयेऽजादौ प्रत्य ये युवप्रत्ययस्य लुगित्यर्थस्तदाह। युवप्रत्ययस्येति। वक्ष्यमाण इति प्राचामवृद्धात् फिन् बहुलमिति वक्ष्यमाणः अजादौ किं ग्लौचुकायनरूप्यं प्राग्दीव्यतीये किं। ग्लौचुकायनीया। तस्मै हितमिति छः। इह द्विगोर्लुगनपत्ये चिकृति गोत्रेनेत्येन सूत्रापितव्यं तथा च लुगग्र हणं शक्यमकर्तुमिति मनोरमायां स्थितं। तत्र फक्फिञोरिति सूत्रे यूनीत्यस्य मेदुकानुवृत्तिराश्रयणीयेति केशो पलाघवात्तरो पेनसो ढव्य इति भावः। पैलादिभ्यश्च। एतच्छास्त्रि यार्थेत्यतो यूनि लुगिति वर्त्तते तदाह युवप्रत्ययस्य लुगिति। पीलाया वेत्यादि। अपत्ये प्यणि विहिते गोत्रापत्ये प्यणो न एको गोत्र इति वक्ष्यमाणत्वात्। ततोऽणन्तात् पैलशब्दा दपत्ये विवक्षीयमानः फिञ् युवापत्ये पर्यवस्यति। तस्य च फिञोऽनेन लुगित्यर्थः एवं च पीलाया अपत्यं गोत्रापत्यं युवापत्यं चाविरूप्येण पैलशब्दः प्रयुज्यत इत्याह॥

स्त्रीपुंसाभ्याम्। प्रागित्यनुवर्त्तते तदाह प्रागर्थेष्विति। पौंस्न इति इहस्वादिष्विति पदत्वात् संयोगान्तलोपेन पुंसः सस्य निवृत्तावपि प्रत्ययसकारः श्रूयत एव अत एवोभाभ्यां परतो नञेव न विहितः पौंस्न इति रूपासिद्धिः प्रसंगात् स्यादेतत् उभाभ्यामपि प्रकृतोऽञेवास्तु नञ्सन्नियोगेन ——— स्त्रीपुंसयोर्वृद्धिरित्युगेव विधीयतां नचैवं स्त्रैणः पौंस्न इत्यत्र यञञोश्चेति लुक्प्रसंगः स्त्रैणानां संघ इत्यादौ संघांकलक्षणेष्वित्यण्प्रसंगश्च स्यादिति वाच्यं उभयत्रापि गोत्र इत्यनुवृत्तेः प्रवराध्यायप्रसिद्धं हि तत्र गोत्रं अन्यथा पौत्रादौ हि त्रा इत्यत्रोप्यञो लुक् स्यात् एवं च नञ्स्नञीकक्ख्युनिति वार्त्तिके नञ्स्नञ्ग्रहणं विनाप्यञन्तत्वादेव ङीप् सिध्यतीत्यपरमप्यनुकूलमिति चेद् अत्राहुः उगि कृते त्वाद्धिते ईति टिलोपः स्यात् न चैवं नुगानर्थक्यं टिलोपप्रवृत्त्यैव नुकः सार्थकत्वात् यद्यपि स्त्रीशब्दे तस्य सार्थक्यम् नास्ति यस्येति चेत्यनेनापीकारलोपसंभवात् तथापि स्त्रीदेवतास्य स्त्रीयेह विरित्यत्रैव लोपात् परत्वाद्वृद्धिः स्यात् नतु किंतु टिलोपः प्रवर्त्तत इति स्त्रीशब्देपि नुकः सार्थक्यमस्तु तस्मान्नञ्स्नञाविति यथान्यासमेवास्वीकर्त्तव्यमिति अन्ये

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्।४।१।८७। धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः। स्त्रैणः। पौंस्नः वत्यर्थे न। स्त्रीवत् पुंवच्चेति ज्ञापकात् स्त्रीवत् पुंवत्। द्विगोर्लुगनपत्ये।४।१।८८। द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् पंचसु कपालेषु संस्कृतः पुरोडाशः पंचकपालः द्विगोर्निमित्तस्येति किम् पंचकपालस्येदं खण्डम् पांचकपालम् अजादिः किम्। पंचगर्गरूप्यम्। अनपत्ये किम्। द्वयोर्मित्रयोरपत्यं द्वैमित्रिः। गोत्रेऽलुगचि।४।१।८९। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात्॥ ११ नुस्त्रीपुंसयोर्नुक् चेत्यस्तु नुगागमे अकारो विवक्षितत्वस्य

च यस्येति चेति लोपे कृतेपि स्थानिवत्त्वाट्टिलोपो न भविष्यति एवं च टिड्ढाणञिति सूत्रे गो वङीप् सिद्धो न नञ्स्नञोरुपसंख्यानं मास्त्विति महदेव लाघवमित्याहुः। वत्यर्थ इति। स्त्रीपुंसाभ्यां नञ्स्नञौ वत्यर्थे न प्रवर्त्तेते इति सामान्यापेक्षं ज्ञापकमिति भावः अत एवोदाहरति स्त्रीवदिति। आ वत्त्वादिति चकारेण नञ्स्नञ् पौंत्वतलोः समावेशार्थ इति वक्ष्यति तेन स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्तेति सिद्धं द्विगोर्लुगनपत्ये। द्विगोरिति षष्ठी तदर्थं च हेतुत्वं तच्च भाविनोप्युपपद्यते बुद्ध्याध्यवसायादित्याशयेनाह द्विगोर्निमित्तमिति अजादिरिति एतच्चोत्तरसूत्रादचीत्यपकर्षाल्लभ्यते वाग्रहणमनुवर्त्यव्यवस्थितविभाषाश्रयणेन वा। प्राग्दीव्यतीयः किं। पंचभ्यः कपालेभ्यो हितं पंचकपालीयं गोनैत्र लुगचि। गोत्रे किं। गोत्रार्थकप्रत्ययस्यैवालुग्यथा स्यात् नेह कुवलस्येदं कौवलं वदरस्येदं वादरं। कुवलीवदरीशब्दौ हि गौरादिङीषन्तौ। ताभ्यां फलरूपे विकारेऽनुदात्तादेश्च

वृद्धिभ्यां पौष्करसादेः सिद्धत्वात्तेषु पाठोऽनर्थकः स्यात्। न च पुष्करसता चरतीत्यर्थे ठकि पौष्करसादिकः इत्येतदर्थमनुशतिकादिषु पाठ आवश्यकः। निति णित्येव उपधा। वृद्धेः स्वीकारान्ननु कितीति वाच्यं॥ अनभिधानान्ठगत्र न भवतीत्यादि समाधानस्यैकै पटेऽस्थितत्वात् एतेन भिन्नविषये बाध्यबाधकभावो नोपपद्यत इति शंका निरस्ता उक्त वृद्धेरसा ज्ञापकेन सत्यपि संभवे बाधनं भवतीत्यवश्याश्रयणीयत्वात् नन्वेवमपि जायत इत्यादावुपधा वृद्धिर्बाध्यतां औपगव इत्यत्र त्वादिवृद्धि प्रवृत्तिवेलायामुपधा वृद्धेरसा त्वात् कथं तद्बाधः स्यादिति चेदत्राहुः जायत इत्यादावुपधा वृद्धेर्बाध्यत्वे निर्णीते क्वचित्कालान्तरप्राप्ताया अपि तस्या बाध्यत्वौचित्यादिति। स्यादेतत्। यत्रादिवृद्धिर्न जाता तत्रान्त्योपधालक्षणा वृद्धिः कस्मान्न भवति। व्यसो भीवो वेयसवमिंगताच्चेत्यण्। व्यापदि भवं वैयापदं तत्र भव इत्यण्। अत्र केयट: तत्राप्येचौ परत्वात्तद्बाधकावि ति सर्वेष्टसिद्धिरिति। शाब्दबोधे वैलक्षण्यसत्त्वेऽपि तदनादरेणाक्षिपतितस्येदमित्यपत्येऽपीति। इदमर्थे अपत्यसमूहविकारादीनामन्तर्भावादपत्येऽपि तस्येदमित्यण्।

उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् योगविभागस्तु भानोरपत्यं भानवः। कृतसंधेः किम् सौत्थितिः अकृतव्यूह परिभाषया सावुत्थितिर्मा भूत् समर्थपरिभा षया नेह वस्त्रमुपगोरपत्यं चैत्रस्य प्रथमात् किं अपत्यवाचकात् षष्ठ्यर्थे मा भूत् वाग्रहणाद्वाक्यमपि देवयज्ञीति सूत्रादन्यतरस्यांग्रहणानुवृत्तेः स मासोऽपि उपगवपत्यम् जातित्वान्ङीप् औपगवी। आश्वपतः दैत्यः औत्सः स्त्रैणः पौंस्नः॥ ९ प्रवर्तन्त इति किमनेन तस्यापत्यमिति सूत्रेणेत्यर्थः। पच्यप्पत

इत्रित्याद्यर्थे तस्यापत्यमित्येतद्वक्तव्यं तथापि योगविभागः किमर्थ इत्याक्षेपोऽत्र बोध्यः। समाधत्ते बाधनार्थमिति। तस्येदमित्यस्य यद्बाधकं वृद्धाच्छस्तद्बाधनार्थं श कृत्संज्ञा तं भवेदित्यर्थः। ननु तस्येदमित्यणस्तदपवादस्य वृद्धाच्छस्य च शैषिकत्वादपत्यार्थे प्रसक्तिरेव नास्ति अपत्यादिचतुरर्थीपर्यन्तेभ्योऽन्योऽर्थः शेष इत्य भ्युपगमादत आह॥ ॥ उत्सर्गः शेष एवासाविति। असौ अपत्यार्थः। अयं भावः। असति योगविभागे अरदत्तवाह्वादि प्रकृतिसंबद्धस्येवापत्यार्थस्योपयोगाद उप ग्वादिप्रकृतिसंबद्धोऽपत्यार्थः शेष एव स्यात्तथा चाणो वाधित्वा भान्वादिभ्यो वृद्धाच्छः प्रसज्येत योगविभागे तु कृते प्रकृतिसामान्यसंबंधस्याप्यपत्यार्थस्योपयोगाच्छे षत्वाभावेन छस्य प्राप्तिरेव नास्तीति। ननूपग्वादेरवृद्धत्वेन छस्य प्रसक्त्यभावान्निष्फलो योगविभाग इत्यत आह वृद्धानीति। प्रातिपदिकानीति शेषः। कृतसंधेः किं मिति। अन्तरंगत्वात्संधौ कृतायां तदुत्तरमेव प्रत्ययो भविष्यतीत्यधिकारसूत्रस्थसमर्थपदग्रहणं किमर्थमिति प्रश्नः। अकृतेति। इयं च परिभाषा समर्थग्रहणेन

पैलः पिता पुत्रश्चेति। पैलादिषु पैलशालङ्किसात्यकिसात्यंकामि श्रौदमेयि पैङ्गलिप्रभृतयस्तेभ्य इञः प्राचामिति लुकि सिद्धे अप्राचामर्थः पाठ इति ज्ञेयं। तद्राजाच्चाणः। गणसूत्रमिदं त
द्राजसंज्ञकात्परस्य युवप्रत्ययस्य लुगित्यर्थः। तच्चेद् इञ प्राचामिति। इह प्राचां ग्रहणं गोत्रविशेषणं न तु प्राचामवृद्धादित्यादिवद्विकल्पार्थमित्यत्र व्याख्यानं शरणं। दाक्षिः
पिता दक्षस्यापत्यं गोत्रापत्यं च पुमान् दाक्षिः युवापत्यं तु दाक्षायण इति भावः। नतौल्वलिभ्यः बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिरित्यभिप्रेत्याह तौल्वल्या
दिभ्य इति। दैवमित्रिः दैवयज्ञिः श्वाफल्किः आसुरिः नैमिषिः पौष्करसादिः वैकर्णिः इत्यादितौल्वल्यादिः। कात्यायनस्येति। कतस्य गोत्रापत्यं कात्यः गर्गादित्वाद्यञ्। ततो यू

पैलः पिता पुत्रश्च॥ तद्राजाच्चाणः। तद्राजसञ्ज्ञकोयोऽणस्तदन्ताद्युवप्रत्ययस्य लुक्। आङ्गमागधेत्यणन्तादङ्गशब्दादणो युव इति फिञो लुक् आङ्गः
पिता पुत्रश्च। इञः प्राचाम् २।४।६०। गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात् तच्चेदिञ् प्राचां भवति। पन्नागारस्यापत्यमत इञ् यञिञोश्चेति फ
क् पान्नागारिः पिता पुत्रश्च। प्राचां किं दाक्षिः पिता दाक्षायणः पुत्रः। न तौल्वलिभ्यः २।४।६१ तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात्। पू
र्वेणाप्राप्तः तुल्वलः तत इञ् फक् तौल्वलिः पिता तौल्वलायनः पुत्रः फक्फिञोरन्यतरस्याम् ४।१।९१ यूनीत्येवा यूनि लुगिति नित्ये लुकि प्राप्ते वि
कल्पार्थं सूत्रम् कात्यायनस्य छात्राः कातीयाः कात्यायनीयाः। यस्कस्यापत्यं यास्कः शिवाद्यण् तस्यापत्यं युवा यास्कायनिः अणो द्व्यच इति फिञ्
तस्य छात्राः यास्कीयाः यास्कायनीयाः। तस्यापत्यम् ४।१।९२ षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः। उपगोरपत्य
मौपगवः। आदिवृद्धिरन्त्योपधावृद्धी वाधेते। तस्येदमित्यपत्येपि बाधनार्थं कृतं भवेत्॥ यञिञोश्चेति फक्। कातीया इति। आपत्यस्येति यलोपः।

तस्यापत्यं। तस्येति न स्वरूपग्रहणं किंतु षष्ठ्यन्तमात्रोपलक्षणमित्याशयेनाह। षष्ठ्यन्तादिति। पञ्चम्यर्थोध्याहारलभ्यः अनुकरणात्वं च स्याः सो नो लुग्वा उक्ता इति। अण
एयादयः उक्ताः वक्ष्यमाणा इति। इञादयः। ननूपगु अ इति स्थिते ओर्गुणात्परत्वादचो ञ्णितीति वृद्ध्याभाव्यं। गुणस्तु पिच व्यादेः सावकाशः दाते च गुणो अवादेशे चात उप
धाया इति वृद्ध्याभाव्यमत आह आदिवृद्धिरिति। परत्वादिति भावः अन्त्योपधावृद्ध्योरवकाशः गौः पाचकः। आदिवृद्धेस्तु सुस्रुत्सोस्रुतः त्वाष्ट्रः जागत इत्यादौ तूभय
प्रसंगे परत्वादादिवृद्धिरेव भवति। लक्ष्यानुरोधेनात्र सकृद्गतिन्यायस्यैवाश्रयणात्। अनुशतिकादिषु पुष्करसच्छब्दपाठोप्यत्र लिंगं। अन्यथा आद्युपधा॥ ॥

शीनामेवतत्त्वेनविवक्षायांसंज्ञामाभूत् अपत्यत्वेनविवक्षायामेवयथास्यादित्येवमर्थंतत् तेनऔपगवइत्यादावप्यर्थस्यगोत्रसंज्ञासिध्यति।नत्वणःयौत्रत्वादिर्कंशक्य
तावच्छेदकंकिंत्वपत्यत्वमेवा न्यथागोत्राधिकारस्यायजाद्यर्थस्यैवगोत्रसंज्ञास्यादिति।नन्वपत्याधिकारेगोत्रयुवसंज्ञाकरणसामर्थ्यादपत्यमितिलभ्यतएवेतितेनैवो
क्तप्रयोजनसिद्धौकिमनेनापत्यग्रहणेनेतिचेदत्राहुः।तेतद्राजाइत्यत्रतच्छब्देनजनपदशब्दात्क्षत्रियादञ्इत्यादिनाविहितायेऽञादयस्तएवगृह्यंतेनतुततःप्रा
क्तनप्रत्ययाःगोत्रयुवसंज्ञाकांडेनविच्छिन्नत्वादितिवक्ष्यते तथाचापत्याधिकारपठनसामर्थ्यस्योपक्षयादपत्यस्यासंबंध शंकानिराकरणायपुनरपत्यग्रहणमिहकृतमि
ति।पौत्रप्रभृतीतिकिं।अनंतरापत्येमाभूत।कौंजिः।गार्गिः।नचैवमप्यंगिरसःपौत्रेगर्गस्यानंतरेऽतिप्रसंगइतिवाच्यंयस्यपौत्रादितेप्रत्येवगोत्रसंज्ञेतिसौकारात् एवंच
गार्गीप्रत्यनंतरापत्यत्वेनविवक्षायामपिगर्गप्रतिगोत्रत्वंनिष्प्रत्यूहमितिस्यादेवगार्ग्यायणिरितिदिक्॥ ॥जीवतितुवंश्ये।पितृपितामहादुत्पादकप्रबंधोवंशस्तत्रभवो
वंश्यः।दिगादित्वाद्यत्।पौत्रप्रभृतीत्यनुवृत्तवष्ठीविपरिणम्यतेव्याख्यानात्।त्राचून्यस्त्रियामितिलिंगाच्चेत्याह।पौत्रादेरिति।तुशब्दोभिन्नक्रमःयुवेत्यस्मात्परोबो

जीवतितुवंश्येयुवा।४।१।१६३ वंश्येपित्रादौजीवतिपौत्रादेर्यदपत्यंचतुर्थादितद्युवसंज्ञमेवस्यान्नगोत्रसंज्ञम् भ्रातरिचज्यायसि।४।१।१६४।
ज्येष्ठभ्रातरिजीवतिकनीयान् चतुर्थादिर्युवास्यात्॥ ९ ध्यः।सचएवकारार्थइतिव्याचष्टेयुवसंज्ञमेवेतितेनएकसंज्ञाधिकारबहिर्भूतयोरपि
युवसंज्ञयोर्नसमावेशइतिभावः।नन्वस्तुसंज्ञाद्वयस्यसमावेशःकोदोषइतिचेन्नैवं शालंकाःपैलीयाइत्यसिद्धिप्रसंगात्।तथाहि।शालंकोरपत्यंशालंकिःपै
दिषुपाठादिञ्शालंकादेशो शालंकेरपत्यंशालंकोयुवापत्यंयञिञोश्चेतिफक्तस्यपैलादिभ्यश्चेतिलुक्।ततःशालंकेरिंनश्छात्राइत्यर्थेविवक्षायामिञश्चेत्यणि
लंकाइतिभवति।तथापीलायाअपत्यंगोत्रापत्यंचापीलायावेत्यणिपैलस्तस्यापत्यंयुवाअणोद्व्यचइतिफिञ् तस्यपैलादिभ्यश्चेतिलुक्।ततःपैलस्यछात्राःपै
याइतिभवति तत्रगोत्रयूनोस्समावेशेतुगोत्रेलुगचीतिफक्फिञोरलुक्प्रसज्येत नचपरत्वाद्यूनिलुग्भविष्यतीतिसिद्धमिष्टमितिवाच्यं ततोपिपरत्वात्फक्फिञो
न्यतरस्यामितिविकल्पापत्तेः।नचसिद्धांतेपिविकल्पःशंक्यःफक्फिञोरित्ययंहियूनिलुकएवापवादोनतुपैलादिभ्यश्चेत्यस्याऽनंतरस्येतिन्यायात् यद्यपियूनिलुगप
वादोपिफक्फिञोरितिविकल्पःपरत्वात्पैलादिभ्यश्चेतिलुकमपिबाधेतेतिवक्तुंशक्यंतथापिपरादप्यंतरंगस्यबलीयस्त्वात्पैलादिभ्यश्चेतिनित्यएवलुगित्याहुः।भ्रात
रिचज्यायस्याप्येयमारंभः।भ्रातात्रनवंश्यः।उत्पादकप्रबंधोवंशः॥

पितेति हरदत्तादयः। लोकतस्सिद्धेत्यन्ये। साधुत्यितिमाभूदिति। अंतरंगपरिभाषाया अपवादभूतया अकृतेत्यनया अकृतसंधेरेव प्रत्ययः स्यात्तन्निवारणाय समर्थग्र
हणमधिकारसूत्रस्थमावश्यकमिति भावः। यद्यपि तत्र सामर्थ्यपरिनिष्ठितत्वमित्यविशेषेणोक्तं तथापि ङ्याप्प्रातिपदिकांश एव परिनिष्ठितत्वं न तु तद्विशिष्ट इत्यव
धेयं तेन औपगवः दंडिमानित्यादि सिद्धं अन्यथा औपगवदंडीमानित्यादि स्यात् अश्विमानणिति निर्देशश्चेह लिंगं। यदि तु पामादिगणे विषानित्युत्तरपदलोप
श्चेत्यत्राकृतसंधिग्रहणेन परिनिष्ठितात्तद्धितोत्पत्तिरित्यभ्युपगम्यते तर्हि व्यर्थमेव समर्थग्रहणमित्याहुः प्रथमात्किमिति तस्यापत्यमित्यत्र निर्दिष्टपदद्वयमध्ये
प्राथमिकमेव प्रकृतिसमर्थं न त्वपत्यं तथा च प्रकृत्याकांक्षायां तदेव ग्रहीष्यत इति किं तेन प्रथमादित्यनेनेति प्रश्नः अपत्यवाचकादिति तस्यापत्यमित्यादिना विहितः
प्रत्ययो यथा षष्ठ्यंतोपग्वादिशब्दादभ्युपगम्यते तथा अपत्यवाचकदेवदत्तादिशब्दात्प्रत्ययो भवेदिति शंका स्यात् तद्वारणार्थं प्रथमाद्ग्रहणमावश्यकमिति भावः। न
नूपगोरपत्यमिति विग्रहवाक्ये पत्यवाचकस्याप्राथम्येप्यपत्यमुपगोरिति वाक्ये प्राथम्यात्स्यादेवापत्यवाचकात्प्रत्यय इति चेन्नैवं। लक्षणापेक्षं प्राथम्यं नियतत्वाद्दत्ता

॥अपत्यं पौत्रप्रभृति गोत्रम् ४।१।१६२ अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्॥

श्रौपतेन न तु विग्रहापेक्षमनियतं अन्यथा प्रथमादित्येतन्निरर्थकं स्यादिति षष्ठ्यर्थे माभूदिति अयमर्थः। यथा इंद्रो देवता अस्य हविष इति ऐन्द्रं हविरिति प्रथमांतात्प्रत्य
यो भवति तथा उपगुरपत्यमस्य देवदत्तस्य औपगवो देवदत्तः देवदत्तोऽपत्यमस्योपगोर्देवदत्तिरुपगुरिति माभूदिति एतच्च कैयटस्वरसं। नन्वपवादत्वात्तद्धितस्समासं नित्यं
बाधेत न च तद्धितस्य वैकल्पिकत्वात्पक्षे सोऽपि भविष्यतीति वाच्यं यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन विनिर्मुक्ते उत्सर्गो न प्रवर्तत इति पारेमध्ये इत्य
त्र वाग्रहणेन ज्ञापितत्वादित्याशंक्याह अन्यतरस्यां ग्रहणानुवृत्तेरिति। जातित्वादिति। गोत्रं च चरणैः सहेत्यनेनेति शेषः। प्राचा त्वसंततत्त्वान्ङीवित्युक्तं तच्चास्यान्नृभि
श्वादिङ्ग्राणि नित्यनेनेत्युक्तं तदुभयमपि गोत्राद्यून्यस्त्रियामिति सूत्रस्थभाष्यानुरोधेन गोत्रं च चरणैरित्यत्र कृत्रिमं गोत्रमेव गृह्यते न त्वपत्यमात्रमित्याशयेन प्रवृत्तमिति
बोध्यमित्याहुः। सूत्रस्थान्महोत्सर्गान्क्रमेणोदाहरति आश्वपत इत्यादि। औत्स इति। उत्सः प्रस्रवणं नाडिप्रवाहो निर्झरो झर इत्यमरः। तस्य चापत्येन योगस्तु गांगेयो भीष्म
इतिवत्॥ ❀॥ अपत्यं पौत्र। नन्वपत्यग्रहणं व्यर्थं पौत्रादेरपत्यत्वाव्यभिचारादित्यत आह अपत्यत्वेन विवक्षितमिति। विवक्षितमिति किं वस्तुतः पौत्रप्रभृत्येव यदा शेष

एकोगोत्रे गोत्रइतिजात्यपेक्षया एकवचनं एकशब्दःसंख्यावाचीगोत्रेऽभिधित्सिते अपत्यत्वबोधकप्रत्यय एक एव स्यादित्यर्थः। गोत्रापत्ये प्रथम एव शब्दः प्रत्य
यंलभतेनान्यः। यदित्वनंतरापत्यप्रत्ययांतादपिप्रत्ययः तर्हिगोत्रापत्ये एक एव प्रत्ययो न स्यात् स्यात्इत्यर्थं च अपत्यप्रत्ययांतात्प्रतिषेधोवाच्य इतिवार्त्तिकार्थोप्यनेन
गृहीतइत्याशयेनव्याचष्टे गोत्रे एक एवेति अपत्यंप्रत्ययइति। एतच्चाधिकाराल्लब्धं। अन्येतु एकशब्दः प्रथमपर्यायः प्रथमश्चापत्यप्रत्ययशून्यस्तथाच प्रथमात्प्रकृ
तिर्गोत्रे अपत्यप्रत्ययंलभतइति। सूत्रार्थं व्याचक्षते तत्क्लिष्टं। अस्मात्पक्षे एकमानयेत्युक्ते प्रथममानयेतिप्राथम्यार्थस्याप्रतीतेः। वस्तुतस्तु प्रथमादित्यधिकाराद्गो
त्रे प्रथमादेवप्रातिपदिकादपत्यप्रत्ययइति व्याख्यायैकग्रहणमिह स्पष्टार्थमित्याहुः। औपगवइति। उपगुशब्दएव प्रत्ययंलभतेनत्वौपगवशब्दइतिगोत्रापत्ये

एकोगोत्रे ४।१।९३ गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यमौपगवः। गार्ग्यः। नाडायनः। गोत्रेस्वैकोनसंख्यानांप्रत्ययानांपरंपरायद्
स्वद्यूनसंख्येभ्योऽनिष्टोत्पत्तिःप्रसज्यते अपत्यंपितुरेवस्यात्ततःप्राचामपीतिचामतभेदेनतद्द्वान्येसूत्रमेतत्तथोत्तरम् पितुरेवापत्यमितिप
क्षेहि। उपगोस्तृतीयेवाच्ये औपगवादिञ्स्यात् चतुर्थेत्वजीवज्ज्येष्ठेमृतवंश्ये औपगवेः फक् इत्येकमिञोः परंपरायांमूलाच्छततमेगोत्रेएको
नशतंप्रत्ययाःस्युःपितामहादीनामपीति मुख्यपक्षेतुतृतीयेवाच्ये उपगोरणाद्यर्थसिद्धेपि अणन्तादिञपिस्यात् चतुर्थेफगितिततःफगिञोःप
रंपरायांशततमे गोत्रेष्टनवतिरनिष्टप्रत्ययाःस्युः अतोनियमार्थमिदंसूत्रम् एवमुत्तरसूत्रेप्यूह्यम्॥ ९९

प्यनंतरापत्यइवाणोवभवतिनत्विञ्।
र्ग्यइति। गोत्रापत्येगर्गादिभ्योयञितिविशिष्यविधानादनंतरापत्यइवात्र अतइञ्नभवतिकिंतुयञेव। सचगार्ग्यस्यापत्येपिभवतिनत्वत्रयञन्तात्फक् एकोगोत्रइ
तिनियमात् नाडायनइति नडादिभ्यःफगितिगोत्रापत्येविधानादत्राप्यतइञ्नभवतिकिंतुफगेव। सचनाडायनस्यापत्येपिभवति। ननुफगन्तादिञ् उक्तनियमात्न
त्वेकस्मिन्गोत्रेयुगपदनेकप्रत्ययाप्रसक्तेर्व्यर्थमिदंसूत्रमित्याशंक्य सूत्रारंभफलंमतभेदेनव्यवस्थापयतिगोत्रेस्वैकोनेति। स्वंगोत्रंतदपेक्षया एकोनसंख्यानां
तृतीयेद्वयोः परंपराचतुर्थेत्रयाणांपंचमेतुचतुर्णामित्यादिपरंपराप्रसज्यतइत्यर्थः। तथाहि। उपगोस्तृतीये अणिञोः परंपराचतुर्थेत्वणिञ्फकाम्॥ ॥ ॥

त्यभ्युपगमात् अपत्यं पौत्रप्रभृतीत्यनुवर्त्य पौत्रप्रभृतेरिति षष्ठ्या विपरिणाम्य व्याख्यानात्फलितमाह। चतुर्थ्यादीति। अत्रायमर्थः। गार्ग्यादिषु मृतेष्वपि जीवत्यत्र जेऽत्र
तु जो युवसंज्ञक इति॥ ॥ वान्यस्मिन् इहत्यजीवतिपदे तिङन्तं न तु सप्तम्यन्तमिति व्याचष्टे जीवदेवेति यो जीवति स युवसंज्ञको मृतस्तु स्थविरतरे जीवत्यपि गार्ग्य
एव भवतीति न तु गार्ग्यायण इति भावः। एकमिति। इहत्यमित्यर्थः द्वितीयमिति। अनुवर्त्तमानं सप्तम्यन्तमित्यर्थः। यदुक्तमुभयोरिति तद्दर्शयति। विवृणोति स्थानेन वयसा चेति।

वान्यस्मिन्सपिण्डे स्थविरतरे जीवति। ४।१।१६५ भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यात् । एकं जी ए
वति ग्रहणमपत्यस्य विशेषणं द्वितीयं सपिण्डस्य तरपा निर्देश उभयोरुत्कर्षार्थः स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे भ्रातरि वा जीवति
गार्ग्यस्यापत्यं गार्ग्यायणः। गार्ग्यो वा स्थविरेति किम् स्थानवयोन्यूने गार्ग्य एव जीवतीति किम् जेऽमृतो वा गार्ग्य एव। वृद्धस्य च पूजायामिति वाच्य
म्। गोत्रस्यैव वृद्धसंज्ञा प्राचाम् गोत्रस्य युवसंज्ञा पूजायां गम्यमानायाम् तत्रभवान् गार्ग्यायणः पूजेति किम् गार्ग्यः। यूनश्च कुत्सायां गोत्रसं
ज्ञेति वाच्यम् गार्ग्यो जाल्मः कुत्सेति किम् गार्ग्यायणः ॥

मातामहे भ्रातरि चेति। सन्निहितत्वात् भ्रातरीत्यस्य मातामह भ्रातरीत्यर्थ इत्येके पितृव्य इत्यन्ये। इतो तु पितृव्ये पितामहभ्रातरि चेति पाठः। जीवति किमिति।
जीवति द्वयं किमर्थमिति प्रश्नः। अत एव मृते मृतो वेत्युत्तरं संगच्छते। अन्यस्मिन् किं भ्रातरि जीवति जीवतो विकल्पो मा भूत् पूर्वसूत्रं तु भ्रातरि जीवति मृतस्य
कनीयसो युवसंज्ञार्थमिति सावकाशं वृद्धस्य चेति। वार्त्तिकमिदं। तथा पूनश्चेत्यग्रिममपि ॥ ६ ॥ ६ ॥

जीवद्दृश्येवायुवसंज्ञायांसत्यांगोत्रसंज्ञानेतिभावः। इष्टेसिध्येपीति अस्मिंश्चपक्षे औपगवस्य यदपत्यंतदुपगोरप्यपत्यमितिउपगोर्यञ्प्रत्ययस्तदा
औपगवइतीष्टंपद्यपिसिध्यतीतितथाप्यौपगविरित्यनिष्टंप्राप्नोतीत्यर्थः। तत्तइति। इञंतादित्यर्थः। फिञोरिति। फगंतादिञ इञंतात्फक्न दत्तान्पु
नरिञ्इत्यादिपरंपरायांसत्यामित्यर्थः। नियमार्थमिति। नन्वाद्यपक्षेतत्पितृवाचकादेवप्रत्ययोनतुमूलभूतात्स्यात्। अनंतरापत्येमुख्यसंबंधे
चरितार्थस्याणादेर्गौणसंबंधेपिप्रवृत्तेरन्याय्यत्वात्तथाचौपगवापत्येन उपगोर्मुख्यसंबंधाभावादत्रप्राप्तेर्विध्यर्थमेवेदंसूत्रंनतुनियमार्थमि
त्यौपगवशब्दादपिप्रत्ययोदुर्वारइतिचेदत्राहुः। गोत्रबोधनायक्रमेणानेकप्रत्ययप्रसंगेएकएवापत्यप्रत्ययः स्यादितिसूत्रार्थेकृते औपगव शब्द
स्यापत्यप्रत्ययांतत्वात्पुनरपत्यप्रत्ययस्ततोनोपपद्यतइत्यगत्यापरंपरासंबंधाभ्युपगमेनउपगोरेवतदुत्पत्तिर्नत्वौपगवशब्दादितिसिद्धमिष्टमिति।
अत्रकेचित्व्याचक्षते। आद्यपक्षेप्रत्ययपरंपरायांप्राप्तायामेकोगोत्रइत्यनेनैकः प्रत्ययोविधीयते। तथाचैकोनामैकजातीयइत्यर्थपर्यवसाना
त्मूलप्रकृतेर्योपत्यप्रत्ययोणादिस्तज्जातीयएवगोत्रेबोधनीयेततत्पितृवाचकाद्भवत्यणंतादणस्तत्रादि ॥ ॥ ॥

कां। पंचमे त्व शि न्क गि त्रां। पद घ्य न्त य स्ये ति चे ति लोपेनां शा देरसत्वाद् शिजादीनां परंपरेत्युक्तिर्न संगच्छते तथा प्यशांतादिनुत्पद्यते इन्नंतात्फगित्युत्पत्ति
मात्राभिप्रायेण प्रत्ययपरंपराभिधानं बोध्यं। स्वद्यूनसंख्येभ्य इ ञि। स्वं गोत्रं तदपेक्षया द्यूनसंख्येभ्यः प्राति   पदिकेभ्यः तृतीये एकस्मादनिष्टोत्पत्तिश्चतुर्थे
ह्राभ्यां पंचमे त्रिभ्य इत्यादीत्यर्थः। अपत्यं पितुरेवेति। तथा चामरः। आत्मजस्तनयः सूनुस्सुतः पुत्रस्त्रियां त्वमी। आहुर्दुहितरं सर्वेपत्यं तोकं तयोः समे इति।
मुख्यमतमाह। ततः प्राचामिति। पित्र पेक्षयाये प्राचः पितामहप्रपितामहादयस्तेषामपीत्यर्थः। अत्रायमाशयः। अपत्यशब्दः क्रियानिमित्तो न त्वात्मजपर्या
यः। न पतंत्यनेनेत्यपत्यमिति व्युत्पत्तिं पक्षि विंशतीति सूत्रे भाष्यकृता दर्शितत्वात्। बाहुलकात्करणे प्रत्ययः। यन्निमित्तं यस्यापतनं तत्तस्यापत्यमिति फ
लितोर्थस्तथा च पौत्रादिरपि पितामहादीनामपतने हेतुरिति तेषामपत्यं भवति। प्रसिद्धं च व्यवहितोपि पितामहादीनामुद्धर्तेति जरत्कार्वाद्युपाख्या
नेषु। अपत्यं पौत्रप्रभृतीति सूत्रमप्यत्रानुगुणं। आद्यपक्षे हि अपत्यमिवापत्यमिति गौणी वृत्ति   राश्रयणीया स्यात् मरसूत्रभाष्यादिविरोधादुपेक्ष्य इ
ति। तद्राज्ये इति   आद्यपक्षे प्रत्ययमालानिवृत्तये अत्येनु स्वद्यूनसंख्येभ्यो निष्टोत्पत्तिनिवृत्तये इत्यर्थः ७ औपगवादिरूस्या   दिति। तृतीयस्य उपगु
प्रत्यनपत्यत्वादिति भावः। एवं चासति सूत्रे स्मिन्पक्षे औपगविरित्यनिष्टमेव स्यादौपगवरतीष्टं तु न सिध्यतीति बोध्यं। अजीवज्येष्ठ इति जीवज्ज्येष्ठे

अतइञ्।।घकालतनेष्विति ज्ञापकात्सुवंतादेवतद्धितोत्पत्तिरित्यभ्युपगमेप्यभिरुक्तप्रातिपदिकस्यनवैय्यर्थ्यंकिंतुप्रयोजनमस्तीतिध्वनयति अदंतंयत्प्रातिपदिकमि
ति।अतइत्यस्यसुवंतविशेषणात्वेतुदक्षयोरपत्यमित्यादिविवक्षायांदाक्षिरित्यादिनसिद्ध्येदितिभावः।तपरः किं।विश्वपः अपत्यंवैश्वपः।प्रदीपतादाशरथ्यायेत्यत्र
गुतस्येदमित्यण्।अपत्यत्वविवक्षायांत्विञेवा।बाह्वादिभ्यश्च।बाधलोडनइतिधातोकेवलस्यबाहोरपत्ययोगासंभवात्सामर्थ्यात्तदंतविधोसौबाहविरितिमाषवोक्तविंत्य
मितिध्वनयन्नाह।बाहविरितिजानेतिबाहविगार्ग्यगोतमइत्याश्वलायनसूत्रप्रयोगाड्डाष्प्रत्ययादाहरणाच्चबाहुशब्दः संज्ञारूपोस्तीतिभावः।औडुलोमिरिति यद्यपि
गणेबाहुरुस्मयुधिष्ठिर अर्जुनप्रद्युम्नेत्यादिषुकेचलोलोमनशब्दःपठितस्तथापिसामर्थ्यात्तदंतग्रहणंतारकाण्युडुवास्त्रियामित्यमरोत्यानक्षत्रवाच्युडुशब्दः।उडूनीव
लोमानियस्यतस्यापत्यमौडुलोमिः।शारइवलोमानियस्यतस्यापत्यंशारलोमिः।वहुत्वेतुइञपवादोऽकारः।आगेवाजंतेषूक्तः।उडुलोमाः।शरलोमाः।इहप्रतिपदविधानेत

अतइञ् ४।१।९५ अदन्तंयत्प्रातिपदिकंतत्प्रकृतिकात् षष्ठ्यन्तादिञ्स्यादपत्यार्थे।दाक्षिः।बाह्वादिभ्यश्च ४।१।९६।बाहविः।औडुलोमिः।आकृतिग
णोयम्।सुधातुरकङ्च ४।१।९७ चादिञ्।सुधातुरपत्यं।सौधातकिः।।व्यासवरुडनिषादचांडालबिम्बानांचेति वक्तव्यम्।न्य्वाभ्यांपदान्ताभ्यांपूर्वौ
तुताभ्यामैच् ७।३।पदान्ताभ्यांयकारवकाराभ्यांपरस्यनवृद्धिः किंतुताभ्यांपूर्वौक्रमादैचावागमौस्तः।वैयासकिः।वारुडकिः।इत्यादिगोत्रेकुञ्जा

धुराणसिद्धाःसंज्ञाशब्दाएवगृह्यंतेपीप्रोपस्थितिकत्वात्तेनइदानींतनोयोबाहुस्तस्यापत्येबाहवइत्यणेवा।नत्विञ्।उक्तंचहरिणा।।अ ९९ दिभ्यश्च्फञ् ४।१।९८।
भिव्यतपदार्थायेस्वतंत्रालोकविश्रुताः शास्त्रार्थस्तेषुकर्तव्यःशब्देषुनतदुक्तिषु।अनर्थकंसंदिग्धार्थकमप्रयुक्तंचक्रमेणविशेषणत्रयंव्यावर्त्यंतदुक्तिषुतत्सदृशेष्वि
त्यर्थः।अतएवसंज्ञाश्वशुरस्यापत्यंश्वाशुरिरित्यत्रराजश्वशुराद्यदितियन्ना।मिमीतेमाता।तस्याःस्वसामातृस्वसाइहमातृपितृभ्यांस्वसेतिषत्वंनान्नेवंबाहवःश्वाशुरि
रितिसूत्रोक्तोनसिध्यतइतिचेन्नैवं।अणिञोर्विधोशब्दविशेषानुपादानादप्रतिसिद्धेष्वपितत्प्रवृत्तेः।व्यासेति।विदान्व्यसतीतिवेदव्यासः कर्मण्यण्।भीमोभीमसेन
इतिवदेकदेशग्रहणंन्य्वाभ्यां।।य्वाभ्यां किं।नअर्थोयस्यनार्थः तस्यापत्यंनार्थिः पदांताभ्यां किं।याज्ञिकः।ऐचौविषयप्रदर्शनायनेतिनिषेधोक्तिः तेनेहनादोध्यश्विर्मा
ध्वश्विः।नत्वत्रय्वाभ्यांपरस्यवृद्धिप्रसक्तिरस्ति।कश्चित्तुवृद्धिप्रसक्तिसत्त्वेपिनेष्यते।द्व्यशीतिभृतोभूतोभावीवाद्व्यशीतिकः।वारुडकिरिति।वरुडादयोजातिविशेषाः

त्पन्ने तायञिति। नचैवमणिञोः परंपरायां निवर्तितायामप्यौपगव इत्यत्राणप्रत्ययपरं पराः स्यात् तथा गार्ग्यायण इत्यादौ फञादि परंपरेति वाच्यं। सत्यामपि तस्यामनिष्टाभावादिति। तच्चिंत्यं। फगंतात् फकिनाडायन इत्यादावनिष्टप्रसंगादिति दिक्। अस्त्यमिति अपत्यं पितुरेवेति पक्षे। चतुर्थापत्य रूपे यूनि विवक्षिते गोत्राद्यूनीति नियमसूत्रे सत्यसति च गोत्रप्रत्ययांतादेव युवप्रत्यय इति द्वयोः परंपरा साचेष्टत्वान्न नियमेन व्यावर्त्यते। पंचमे तु यूनि नियमाभावेन यां परंपरा प्रसज्यते। षष्ठे तु चतुर्णामित्यादि। ततः प्राचामपीति द्वितीयपक्षे तु गार्ग्याच्चतुर्थे यूनि मूलप्रकृत्यनंतराभ्यामनिष्टोत्पत्तिः प्रसज्यते पंचमे तु मूलप्रकृत्यनंतरयुवभ्यः। तथा नडाच्चतुर्थे यूनि इञ्वद्भ्यामनिष्टोत्पत्तिः पंचमे तु त्रिभ्यः। उपगोश्चतुर्थे वाच्येतु मूलप्रकृतेरेकस्मादेवानिष्टोत्पत्तिः। नत्वनंतरापत्यवाचकात् ततो जा ते प्यत इञिरूपानिष्टाभावादित्यादि यथासंभवं तत्रोत्थमित्यर्थः॥ ॥ गोत्राद्यूनि॥ असत्यस्मिन् सूत्रे मुख्यमते पंचमादौ यूनि विवक्षिते गोत्रप्रत्ययांतात् युवप्रत्ययोत्पत्तावपि सिद्धेपि मूलप्रकृत्यनंतरयुवभ्योपि स्यादिति पाक्षिका निष्टप्राप्ते नियमार्थमिदमित्याशयेनाह गोत्रप्रत्ययांतादेवेति। नतु मूलप्रकृत्यनंतरयुवभ्य इत्यर्थः। मनोरमायां तु न तु युवप्रत्ययांतादिति प्रथमपक्षेर्थ इत्यपि स्थितं। अत्र वदंति। पंच

गोत्राद्यून्यस्त्रियाम्।४।१।९४। यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् स्त्रियां तु न युवसंज्ञा गार्गस्य युवापत्यं गार्ग्यायणः। स्त्रियां गोत्रत्वादेक एव प्रत्ययः॥

मादौ यूनि विवक्षिते तस्य इन स्त इतीयं प्रत्ययनपत्यत्वादप्राप्तौ विध्यर्थमेवेदं स्यान्न तु नियमार्थमिति। युवप्रत्ययांतात् प्रत्ययोद्वीरः स्यात् तस्मादिह पितुरेवापत्यमिति पक्षो नाश्रयणीय इति। अन्ये त्वाहुराद्यपक्षे गोत्राद्यूनीत्यावर्त्य एकेनाप्राप्तप्रत्ययं विधाय द्वितीयेन नियम्यते यूनि गोत्रादेवेति एवं च ततः प्राचामपीति पक्षेणा सहास्यैकरूपता भवतीति गोत्राच्चेद्यून्येवेति विपरीतनियमस्त्विह न कृतः। व्यावर्त्यालाभात्। न च शैषिकाश्छादयो व्यावर्त्या इति वाच्यं। गोत्रे अलुगचीति लिंगात्। स्त्रियां त्विति। यद्यत्रास्त्रियामित्यस्यैकवाक्यता स्यात् स्त्रीभिन्ने यूनि गोत्रादेवेत्यर्थः क्रियते तर्हि स्त्रीयुवसंज्ञाया अनिषेधात् युवतिप्रत्ययानां परंपरा प्रसज्येत॥ न चैकोगोत्र इत्यनेन निस्तरः युवसंज्ञाया गोत्रसंज्ञाया बाधात्। अथ स्त्रियां न युवप्रत्यय इति वाक्यभेदेनार्थः क्रियते तदा गोत्रप्रत्ययेन युवतिर्नाभिधीयेत किंतु वाक्यमेव स्यात् ततश्च गार्ग्यस्यापत्यं स्त्री गार्गीति न स्यादतो युवसंज्ञानिषेधपरमेवेदमित्याशयेन व्याचष्टे न युवसंज्ञेति। अत्रायमाशयः अस्त्रियामिति योगो विभज्यते। यूनीति शब्दस्वरूपमनुवर्तते। परिभाषा चेयं यत्र युवसंज्ञाविधानं तत्रास्त्रियामित्युपतिष्ठत इति सिद्धस्य गतिरियं जीवति तु वंश्ये युवा। अस्त्रियामित्येव सूत्रयितुं युक्तं॥ ॥ ॥ ॥

व्याख्यानात्तदेतदाह गोत्रेयाविति। गोत्रे किं। द्वीपाद्नुसमुद्रं यञ् द्वीपे भवो द्वैप्यः। सुतंगमादिभ्यश्चातुरर्थिक इञ् सौतंगमिः तदपत्ये फक् माभूत् फक् स्यादिति। सामर्थ्यात् पूर्वस्य श
रद्वच्छुनका। भृगुः शारद्वतोपत्यं न भवति इष्टं भावित्वात् एवं शुनकस्यापत्यं न भवति वत्स। अत्तोत्र भार्गवश्च वात्स्यश्चाग्रायणश्चेति इन्द्वे अत्रिभृग्विति यञित्रोश्चेति च यथासंभवं लुक्
बोध्यः यत्र च बहुत्वाभावाद् अत्रिभृग्वित्यादिना लुग्दुर्लभस्तथापि पुगपदधिकरणवचनतायां वर्त्तिपदानां बह्वर्थत्वात्सौत्रत्वाद्वा स्यादेव लुक्। अतो व्याचष्टे भार्गवश्चेति
वात्स्यश्चेदिति च। अनादिरिति॥ अश्वत्थाम्नः पिता यो महाभारते प्रसिद्धस्तदपेक्षयाऽन्य एवायं द्रोण इत्यर्थः। अश्वत्थाम्नोत्पादि। द्रोणाचार्यस्यानंतरापत्ये अश्वत्थाम्नि द्रौ

अनृष्यानन्तर्ये विदादिभ्योऽञ् ४।१।१०४। एभ्योऽञ् गोत्रे ये त्वत्रानृषयस्तेभ्य आनन्तर्ये स्वार्थे अञ् विदस्य गोत्रं अपत्यं वैदः अनन्तरो वैदिः वाह्ना
देराकृतिगणत्वादिञ् पुत्रस्यापत्यं पौत्रः दौहित्रः। गर्गादिभ्यो यञ् ४।१।१०५। गोत्र इत्येव। गार्ग्यः। वात्स्यः। यञञोश्च २।४।६४ गोत्रे यद्यञन्तमञ
न्तं च तदवयवयोरेतयोर्लुक् स्यात् तत्कृते च बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः। विदाः। उर्वाः। तत्कृते इति किम् प्रियगार्ग्याः। स्त्रियां तु गार्ग्यः स्त्रियः। गोत्रे किम्
द्वैप्याः औत्साः। प्रवराध्यायप्रसिद्धमिह गोत्रम् तेनेह न पौत्राः। दौहित्राः। मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ४।१।१०६। गोत्रे यञ्। माधव्यो ब्राह्मणः।
माधवोऽन्यः। बाभ्रव्यः। कौशिकः। बाभ्रवोऽन्यः। बभ्रुशब्दस्य गर्गादिपाठात्सिद्धे नियमार्थमिदम् गर्गादिपाठफलं तु लोहितादिकार्यार्थम् बाभ्र
व्यायणी कपिबोधादाङ्गिरसे ४। १।१०७। गोत्रे यञ् स्यात् काप्यः। बौध्यः। आङ्गिरसे किम्। कापेयः। बौधिः॥ ११ णायन इति प्रयोगो भाष्योक्त इत्यर्थः॥ ॥

अनृष्या। अनृषीति पंचम्याः सौत्रो लुक्। अनृषिभ्य इत्यर्थः। स्वत्रे इति। आनंतर्य इत्यत्रेत्यर्थः। स्वार्थ इति। चातुर्वर्ण्यादेराकृतिगणत्वादिति भावः। वैदिरित्यत्र अष्यणमा
शंक्याह वाह्वादेरिति। विद। उर्व। कश्यप। कुशिक। भारद्वाज। उपमन्यु। विश्वानर। परस्त्री। परस्तु चेत्यादि। गर्गादिभ्यो। गर्ग। वत्स। व्याघ्रपाद। पुलस्ति। बभ्रु। मंडु। वतंड। कपि। कत। श
कल क एव अगस्ति। कुंडिनी। याज्ञवल्क्य। पराशर। जमदग्नीत्यादि। कथं तर्हि रामो जामदग्न्य इति अनंतरापत्ये स्त्रयोः सत्या अनंतरेऽपि गोत्रत्वारोपाद्बोध्यः। यञञोश्च। एव
पक्षः॥ त्रियार्थे त्यत्तो लुगिति तद्राजस्येति सूत्राद्बहुषु तेनैवास्त्रियामिति चानुवर्त्तते। यस्कादिभ्यो गोत्र इति च। तदाह गोत्रे यद्यञन्तमित्यादि। प्रवराध्यायप्रसिद्धं गोत्रं वावि

स्यापदं तत्वान्नप्वाभ्यामित्येञ्नः इत्यादौ ति। नैषादकिः चाण्डालकिः। वैदकिः। गोत्रे कुञ्जा॥ इतः प्रागेको गोत्र इत्यादि सूत्रद्वयं चेत्यध्वेतेतत्स्त्रं तत्रं गोत्रग्रहणं त्यकुंशकप्रमि
त्याहुः च्फञो ञकारो वृद्ध्यर्थः। कौञ्जायन्यः। चकारस्तु व्रातच्फञोरित्यत्र विशेषणार्थः तेनाश्वादिभ्यः फञ् आश्वायन इत्यत्र न्योन भवति। अत्रेदमवधेयं कौञ्जायन्यस्त्पादावेक
वचने द्विवचने च न्यस्य ञित्त्वादाद्युदात्तत्वमेव। बहुत्वे तु तस्य लुकि च्फञ्श्चकारञकारयोस्तुल्यबलयोर्विरोधे सति परत्वाञ्ञित्स्वरेणाद्युदात्तत्वप्राप्ते भाष्यादौ तद्धितस्य किं
त इत्यत्र योगविभज्य चितः इत्यनुवर्त्य तद्धितस्य चितो तोदात्तत्वमिति व्याख्यानात्कौञ्जायना इत्यन्तोदात्तं तैव भवति। न चैवं हि फगे वानाकुकिमने नग इति निर्देशेनेति वाच्यम्।

व्रातच्फञोरस्त्रियाम् ४।३।११३ व्रातवाचिभ्यः च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम्। कौञ्जायन्यः। बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते व्राशायन्यः। स्त्रियां
कौञ्जायनी। गोत्रत्वेन जातित्वान्ङीष्। अनन्तरापत्ये कौञ्जिः। नडादिभ्यः फक् ४।१।९९ गोत्र इत्येव नाडायनः। चारायणः। अनन्तरो नाडिः। हरितादि
भ्योऽञः ४।१।१०० एभ्योऽञन्तेभ्यो यूनि फक्। हारितायनः। इह गोत्राधिकारेऽपि सामर्थ्याद् यून्ययम्। नहि गोत्रादपरो गोत्रप्रत्ययः। विदाद्यन्तर्गणो हरि
तादिः। यञिञोश्च ४।१।१०१ गोत्रे यौ यञिञौ तदन्तात्फक् स्यात्। अनातीत्युक्ते रापत्यस्येति यलोपो न। गार्ग्यायणः। दाक्षायणः। शरद्वच्छुनकदर्भाद्भृ
गुवत्साग्रायणेषु ४।१।१०२ गोत्रे फक्। अञिञोरपवादः। आद्यौ विदादी। शारद्वतायनो भार्गवश्चेत्। शारद्वतोऽन्यः। शौनकायनो वात्स्यश्चेत्। शौनकोऽन्यः।
दार्भायणः। आग्रायणश्चेत्। दार्भिरन्यः। द्रोणपर्वतजीवन्तादन्यतरस्याम् ४।१।१०३ एभ्यो गोत्रे फग्वा। द्रौणायनः। द्रौणिः। पार्वतायनः। पार्वतिः। जैव
न्तायनः। जैवन्तिः। अनादिरिह द्रोणः। अश्वत्थाम्न्यनन्तरेऽनूपचारात्॥ १९

तथाहि सति व्रातच्फञोरस्त्रियामिति सूत्रप्रणापनापत्यानाडायनादिभ्यो पि
दिति। कुंजा व्रध्न शंख। शकटेत्यादि॥ ॥ व्रातच्फञो। पूगाञ्ञ्योऽग्रामणीपूर्वादित्यतोऽनुवर्तनादाह ञ्यः स्यादिति। व्रातवाचिभ्यः कापोतपाक्य इत्युदाहरिष्यति। अस्त्रियां किं। कपो
तपाकी स्त्री। तद्राजत्वादिति। ञ्यादयस्तद्राजा इति सूत्रे रोति शेषः। लुग्वक्ष्यत इति। तद्राजस्य बहुष्वित्यनेनेति शेषः। कौञ्जायनीति। इह सति ञ्यप्रत्यये योपधत्वात् जातेरिति ङी
षभावे टापि रूपे स्वरे च विशेषो बोध्य इत्याहुः। यञिञोश्च। अधिकारप्राप्तं गोत्रग्रहणं यञिञोर्विशेषणं न तु विधेयस्य फकः॥ ॥ ॥

शिवादिभ्योऽण् ननु विशेषविहितान् इञादीन् बाधित्वा अणो वारंभसामर्थ्याद्भविष्यति किमनेनाण्ग्रहणेन अत्राहुः। ऋषिषेणशब्दोऽत्र गणे पठ्यते ततः प्राप्तमिञं बाधित्वा परत्वात्सेनान्तलक्षणो ढक्प्राप्ते इह पाठसामर्थ्याद्यथाप्राप्तप्रत्यय इञेव स्यान्न त्वण् तथा चात्राणग्रहणमावश्यकमित्येके। अणधिकारादणेव स्यान्नान्य इत्यण्ग्रहणं स्पष्टप्रतिपत्त्यर्थमित्यन्ये। शिव। ककुत्स्थ। वितंड। जरत्कारु। विपाट्। तक्षन्। विश्रवण। रवण। ऋषिषेण। विरूपाक्ष इत्यादि। गोत्र इति निवृत्तमिति। एतच्च वृत्तौ कैयटे च स्थितं। यद्यपि गोत्रसंज्ञा सूत्रपर्यंतं गोत्राधिकार इति यूनि लुगिति सूत्रस्य भाष्यकैयटाभ्यां लभ्यते तथापि तन्मतांतरमिति भावः। एवं चेत्ततः प्रभृत्यपत्यसामान्ये प्रत्यया भवंतीति स्थि

शिवादिभ्योऽण्। ४।१।११२। गोत्र इति निवृत्तम्। शिवस्यापत्यं शैवः गाङ्गः पक्षे तिकादित्वात् फिञ् गाङ्गायनिः शुभ्रादित्वाड्ढक् गाङ्गेयः ऋष्यन्धकवृष्णि... अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ४।१।११३। अवृद्धेभ्यो नदीमानुषीनामभ्योऽण् स्यात् ढकोऽपवादः। यामुनः। नार्मदः। चिन्तितायाः अपत्यं चैन्तितः। अवृद्धाभ्यः किम्। वासवदत्तेयः। नदीत्यादि किम्। वैनतेयः। तन्नामिकाभ्यः किम्। शोभनाया अपत्यं शौभनेयः। ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४। ऋषयोऽमन्त्रद्रष्टारः। वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः श्वाफल्कः। वृष्णिभ्यः वासुदेवः। आनिरुद्धः। शौरिरिति बाह्वादित्वादिञ्। कुरुभ्यः नाकुलः। साहदेवः। इञ एवायमपवादो मध्येऽपवादन्यायात्। अत्रिशब्दात्तु परत्वाड्ढक्। आत्रेयः। मातुरुत्संख्यासंभद्रपूर्वायाः ४।१।११५। संख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण्प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः। आदेशार्थं वचनम्। प्रत्ययस्तूत्सर्गेण सिद्धः। स्त्रीलिङ्गनिर्देशोऽर्थापेक्षस्तेन धान्यमातुर्न। संख्येति किम्। सौमात्रः। शुभ्रादित्वाड्ढक्। वैमात्रेयः॥

" णः। शुभ्रादित्वान्नित्यं ढकि प्राप्ते जरत्कारुशब्दोऽत्राणर्थं पठ्यते। जारत्कारवः। ढकि तु ढेलोपेऽकद्र्वा इत्युल्लोपः। जारत्कारेयः। कुंजादित्वाद्गोत्रे कुंजादिभ्य इति नित्यं च्फञि प्राप्ते विपाट्छब्दोऽत्राणर्थं पठ्यते। वैपाशः। वैपाशायन्यः। सेनान्तलक्षणेति ण्यप्रत्यये उदीचामितीञि च प्राप्ते तक्षन्शब्दोऽत्राणर्थं पठ्यते ण्यप्रत्ययेन समावेशो नेष्यते नत्विञा। ताक्ष्णः। ताक्षण्यः। विश्रवण रवणशब्दावत्र पठ्येते तौ च विश्रवःशब्दस्यादेशौ विश्रवसोऽपत्यं वैश्रवणः। रावणः। अवृद्धाभ्यः। अवृद्धेभ्यो नदीमानुषीनामभ्य इत्येव सूत्रमपि तु युक्तमित्याशयेन व्याचष्टे अवृद्धेभ्य इत्यादिना। द्वैमातुर इति॥ तद्धितार्थेत्यादि

नोकेवलोयञञौ नभवतंगोत्रइत्यनेनतदंतंविशेषितं।तद्वयवयोरितिनिर्दिश्यमानस्यादेशाभवंतीतिभावः।प्रवराध्यायेति।एतच्चस्त्रीपुंसाभ्यामितिसूत्रेलौकिकस्यगोत्रस्य
ग्रहणमितिभाष्यप्रयोदायकैयटेनोक्तमितिभावः।तेनेहनेति।यद्यत्रलौकिकंगोत्रमपत्यमात्रंगृह्येततदास्यादेवातिप्रसंगइतिभावः।लोहितादीति सर्वत्रलोहितादी त्यादि
नाष्फः।ष्फेरणोक्तेपिस्त्रीत्वेषित्वसामर्थ्यात् ङीषित्याशयेनाहबाभ्रव्यायणीति।गर्गादिगणएववभ्रुःकौशिकेइतिपाठ्यएवंहिद्विर्वभ्रुग्रहणंनकर्तव्यंभवतीतिहरदत्तादयः
।काप्येयइति।इतश्चानिञइतिढक्।कप्यंगर्गादिगणेपाठोलोहितादिकार्यार्थस्तेनकाप्यायनीतिसिध्यति।बोधिरिति।अनृषित्वादिञ्।वाह्वादित्वाद्वा॥ ॐ ॥वतंडाच्चयञणोः
प्राप्तयोरांगिरसेयञेवेतिनियमार्थसूत्रं।लुक्स्त्रियां।विहितस्येति।परिशेषितस्यवेतिवोध्यं।एतच्चांगिरसइत्यनुवृत्त्यालभ्यते।यद्यपिवतंडाच्चलुक्स्त्रियामित्येकसूत्रकरणे

वतण्डाच्च ४।१।१०८ आङ्गिरसइत्येव।वातण्ड्यः।अनाङ्गिरसेतुगर्गादेशिवादेश्चपाठादञणौ।वातण्डः वातण्डः।लुक्स्त्रियाम् ४।१।१०९ वतण्डाच्चेतिवि
हितस्यलुक्स्यात्स्त्रियाम्। शार्ङ्गरवादित्वान्ङीन्।वतण्डी।अनाङ्गिरसेतुवातण्ड्यायनी।लोहितादित्वात्ष्फः।अणितुवातण्डी।अषित्वाद्दृश्यमाणः
ष्यङ्न।अश्वादिभ्यःफञ् ४।१।११० गोत्रे।आश्वायनः।पुंसिजाते पुंसीतिप्रकृतिविशेषणम्।जातस्तोत्रापत्यंजातायनः।पुंसीतिकिम्।जातायाअप
त्यंजातेयः।भर्गात्त्रैगर्ते ४।१।१११ गोत्रेफञ्।भार्गायणस्त्रैगर्तः।भार्गिरन्यः॥ ११

यांगिरसइत्यनुवृत्त्याअनांगिरसेयञणोर्लुगभावात्स्त्रियामिष्टंसिध्यति
तथापिपुंस्यांगिरसेयञणोरुभयोःप्राप्तिरनिष्टेतितद्वारणायपृथक्सूत्रंकृतं।अनृषित्वादिति।नचैवंअप्यंधकेत्यणिसिद्धेशिवादिगणेवतंडपाठोव्यर्थइतिशंक्यंगर्गादि
पाठेनयञावाधान्निवृत्तयेतत्पाठस्यावश्यकत्वात्।ष्यङ्इति।अणिञोरनार्षयोरितिसूत्रेणेतिभावः।अश्वादिभ्यः।गोत्रइति।इहगणेचेल्यआनडुह्यआत्रेयइतिगोत्रश
त्ययांताःस्त्रयःपठ्यंतेतेभ्यस्तुस्त्रन्येवा।एकोगोत्रेगोत्राद्यूनीतिवचनात्तत्र वलिनोमराजर्षिस्ततोयइन्त्रोसलेतिष्यङ्।आनडुहशब्दोगर्गादियञंतः।आत्रेयशब्दोढगंतइ
तिज्ञेयः।पुंसिजातइति।गणसूत्रमिदं।जातशब्दे पुंसिविद्यमानेफञ्इत्यर्थः।कस्मादित्याकांक्षायामर्थाज्जातशब्दादितिलभ्यते।जातायाइतिलिंगविशिष्टपरिभाषा
याएकादेशस्यपूर्वांतत्वेनग्रहणाद्वाप्राप्तिः ॥ ॐ ॥ ॥ ॥ ॥

मिति शिवादित्वादण् स एवाणित्यन्ये इतश्च इतः किम् दाक्षिः अनिनः किम् दाक्षायणाः ह्राचः किं उदधेरपत्यमौदधः काशिकायां मरीचेर्मारीच इत्युदाहृतं तत्र दक्षत्वाह्वा दित्वेगान्न अन्तेः न चास्य बाह्वादित्वे विवदितव्यं मरीचिशब्दो बाह्वादिषु पठ्यत इति मिदं चोत्पात इति सूत्रे भाष्ये स्थितत्वात् आत्रेय इति परत्वादयम्भण्य(?)णां वाधत इति भावः शुभ्रादिभ्यश्च ॥ चकारस्त्वाकृतिगणत्वद्योतनार्थ इत्याहुः मृकण्डशब्दोत्र पठ्यते मार्कण्डेयः शुभ्र मृकण्ड अम्ब विमातृ विधवा गोधा प्रवाहण इत्यादि आकृतिगणोयम् तेन पाण्डवेय इति सिद्धम् इहादन्तेषु आद्यः विधवाशब्दात् शुद्रालक्षणोद्धक् चतुष्पाज्जातिवाचिषु ढञ् गोधाशब्दाद्ढ्रग्वचनात्सोपि भवति कचिदेत्सर्गिकोपण्यात्

इतश्चानिञः ॥ ४।१।१२२ ॥ इकारान्ताद्द्व्यचोऽपत्ये ढक् स्यान्न तु इञन्तात् । दैलेयः । नैधेयः ॥ शुभ्रादिभ्यश्च ॥ ४।१।१२३ ॥ ढक् स्यात् । शुभ्रस्यापत्यम् शौभ्रेयः ॥ विकर्णकुषीतकात्काश्यपे ॥ ४।१।१२४ ॥ अपत्ये ढक् । वैकर्णेयः । कौषीतकेयः । अन्यो वैकर्णिः । कौषीतकिः ॥ भ्रुवो वुक् च ॥ ४।१।१२५ ॥ चात् ढक् । भ्रौवेयः ॥ प्रवाहणस्य ढे ॥ ७।३।२८ ॥ प्रवाहणशब्दस्योत्तरपदस्याचामादेर्वृद्धिः पूर्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यम् प्रावाहणेयः । प्रवाहणेयः ॥ तत्प्रत्ययस्य च ॥ ७।३।२९ ॥ ढान्तस्य प्रवाहणशब्दस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यम् । प्रावाहणेयिः । प्रवाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिः ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ॥ कल्याण्यादीनामिनङ् ॥ ४।१।१२६ ॥ एषामिनङादेशः स्यात् ढक् च । काल्याणिनेयः । बान्धकिनेयः ॥ २९

इति बोध्यम् प्रवाहणस्य ढे उत्तरपदस्येत्यधिक्रियते अर्थात् परिणामेनत्तः पूर्वस्य तु वेति अनुवर्तते तदाह उत्तर पदस्याचामादेरित्यादि नित्यमुत्तरपदवृद्धेः फलं तु प्रवाहणेयी भार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः तत्प्रत्ययस्य च प्रवाहणस्येति वर्तते तच्छब्देन प्रत्ययः परामृश्यते तदाह ढान्तस्येत्यादि बाह्यतद्धितनिमित्तेति ढक्प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्तेत्यर्थः कल्याण्यादीनाम् इह परस्त्रीशब्दः पठ्यते परस्य स्त्री इति षष्ठी समासः पारस्त्रैणेयः परभार्यायामुत्पन्न इत्यर्थः अनुशतिकादित्वा । ॥ ॥ ॥

नासमासः। अत्र द्व्योर्मात्रोरपत्यमिति। विग्रहो न तु द्विमात्रोरपत्यमिति। दिक्संख्ये संज्ञायामिति नियमेनासंज्ञायां समासासंभवात्। धान्यमातुर्नेति। अभिव्यक्तपदार्था इत्यनेन
जननीवाचिन एव ग्रहणे सिद्धे पितृस्वस्त्रप्रतिपत्त्यर्थं स्त्रीलिंगनिर्देश इति भावः। अभिव्यक्तेत्यस्यानित्यताया ज्ञापनार्थ इति त्वन्ये॥ ॐ॥ कन्यायाः। ननु कन्यात्वक्षतयो
निस्तस्या अपत्यसंभव एव नास्तीत्याशंक्याह। अनूढाया इति अविवाहिताया इत्यर्थः। विकर्णः। वात्स्यादीनामपत्यप्रत्ययान्तानां द्वंद्वे यञञोश्च अत्रिभृगुकुत्सेति सूत्राभ्यामप
त्यप्रत्ययस्य लुक्। न चात्र वत्सादीनामेव द्वंद्वोऽस्त्विति शंक्यं। मूलभूतानां तेषां विकर्णादीन्प्रत्यपत्यत्वाभावात् तैर्व्याचष्टे वात्स्यश्चेत्यादि। युगपदधिकरणवचनतया बहुत्व

कन्यायाः कनीन च ४।१।११६। ढकोपवादोऽण्। तत्संनियोगेन कनीनादेशश्च कानीनो व्यासः कर्णश्च अनूढाया एवापत्यमित्यर्थः। विकर्णशुङ्गच्छगला
द्वत्सभरद्वाजात्रिषु ४।१।११७। अपत्येऽण्। वैकर्णो वात्स्यः। वैकर्णिरन्यः। शौङ्गो भारद्वाजः। शौङ्गिरन्यः। छागलः आत्रेयः। छागलिरन्यः। केचित्तु
द्वेत्यावन्तं पठन्ति तेषां ढक्प्रत्युदाहरणम् शौङ्गेयः पीलाया वा ४।१।११८। तन्नामिकाणां बाधित्वाद्भ्य चेति ढकि प्राप्ते पक्षेऽण् विधीयते पीलाया अपत्यं
पैलः। पैलेयः। ढक् च मण्डूकात् ४।१।११९। चादण् पक्षे इञ् माण्डूकेयः। माण्डूकः माण्डूकिः। स्त्रीभ्यो ढक् ४।१।१२० स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात्। वैनतेयः। वाह्वादित्वात्सौमित्रिः शिवादित्वात् सापत्नः। द्व्यचः ४।१।१२१। द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् स्यात्। तन्नामिकाणोऽपवादः। दात्तेयः। पार्थेर
त्यत्र तु तस्येदमित्यण् ॥ ६ ॥

मस्तीति शरद्वच्छुनक स्त्र एवोक्तं। पक्षेऽञिति। पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः। स्त्रीभ्यो ढक्। बहुवचननिर्देशान्न स्वरूपस्य ग्रहणं नाप्यर्थस्य। ढगर्थतया शुभ्रा
दिषु विमातृशब्दपाठात्। किंतु स्त्र्यधिकारोक्तटाबादेर्ग्रहणं न तु विप्रकृष्टक्तिन्नादेरित्याशयेनाह स्त्रीप्रत्ययान्तेभ्य इति। तेन दरदोपत्यं दारद इत्यत्र ढक् न भवति॥ स्व्यर्थ
ग्रहणे तु स्यादेवात्र ढक्। दरच्छब्दो हि जनपदक्षत्रियवाचीति ततोऽपत्यार्थे द्व्यञ्मगधेत्यणि तस्य स्त्रियामतश्चेति लुकि दरच्छब्दस्य स्त्र्यर्थवाचित्वात् ढक् चेति वर्त्तमानेषु
नारिह ढग्ग्रहणमणः संबद्धस्य ठकोनिवृत्त्यर्थम् यद्यपि चानुकृष्टं नोत्तरेति परिभाषया अणो हन प्रवर्त्तते तथापि तस्या अनित्यत्वज्ञापनाय ढग्ग्रहणमित्याहुः तस्येद

चेत्याकारलोपे गोधेरइत्यनिष्टप्रसंगात् अन्यतइति अनाकारांतात्स्यानुरोधेनकृतश्चिदित्यर्थः पंडस्येति पंडोनपुंसकस्तस्यापत्यंतत्कृत्रिमादिति॥ ॥क्षुद्राभ्यः अर्थ गतंस्त्रीत्वंशब्दे आरोप्यस्त्रीलिंगनिर्देशः गृष्ट्यादिभ्यश्च गृष्टि हृष्टि हलि बलि विश्रि कुद्रि अगस्ति मित्रयुः अण् ढकोरपवादइति इहांत्ययोर्द्वयोः र्षित्वादणप्राप्तः अन्येभ्यस्तु इतश्चानि ञइति विवेकः गार्ष्टेयइति सकृत्प्रसूता सर्वापि गृष्टिर्नतुगौरेव अतोत्र नचतुष्पाद्भ्यइत्यनेनढञ्सिद्धिः केकय केकयस्यापत्यंस्त्री कैकेयी जनपदशब्दात्क्षत्रियादञ् मैत्रे यिकयाश्लाघ्यते मित्रयूनांभावेनेत्यर्थः गोत्रचरणाच्छ्लाघात्याकारेतिवुञ् तत्रहिलौकिकंगोत्रंगृह्यते लोकेचऋषिशब्दोगोत्रमितिप्रसिद्धइतिकाशिकाएतच्चयेदा

क्षुद्राभ्योवा ४।१।१३१ अङ्गहीनाः शीलहीनाश्चक्षुद्रास्ताभ्योवाढ्रक् पक्षेढ्रक्चइति ढक्। काणेरः। काणेयः। दासेरः। दासेयः। पितृष्वसुश्छण् ४।१ ॥१३२ अणोपवादः पैतृष्वस्रीयः। ढकि लोपः ४।१।१३३। पितृष्वसुरन्त्यलोपः स्यात्। ढकि अतएवज्ञापकात् ढक्। पैतृष्वसेयः। मातृष्वसुश्च ४।१॥ १३४ पितृष्वसुर्यदुक्तंतदस्यापिस्यात्। मातृष्वस्रीयः। मातृष्वसेयः। चतुष्पाद्भ्योढञ् ४।१।१३५। ढेलोपोकद्र्वाः ६।४।१४७ कद्रुभिन्नस्योवर्णान्तस्य लोपः स्यात् ढेपरे। कामण्डलेयः। कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे। गृष्ट्यादिभ्यश्च ४।१।१३६। एभ्योढञ्स्यात् अणढकोरपवादः। गार्ष्टेयः। मित्र योरपत्यंकृष्यणिप्राप्तेढञ्॥ केकयमित्रयुप्रलयानांयादेरियः ७।३।२ एषांयकारादेरियादेशः स्यात्ञिति णिति किति च तद्धिते परे इति इयादेशे प्राप्ते॥ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ४।४।१७४ एतानिनि पात्यन्तेइतियलोपः मैत्रेयः। मैत्रेयी॥

११ मित्रयुशब्दः अभेदोपचारात्तदपत्यसंतानेवर्त्ततेतदावोध्यमन्यथामित्रयूनामितिबहुवचनांतेनविग्रहोनस्यात् प्र लयादागतम् प्रालेयम् इयादेशोवृद्धिंनबाधते अचामादेरचोवृद्धिर्यादेरियादेशइतिभिन्नविषयत्वात् अंगत्वमुभयोर्विशेषणंनतुकार्यीतिहरदत्तः आदिवृद्धेरपीदमेव सूत्रंविधायकमस्तुकिमनेनविषयभेदविचारेणेत्यन्येदांडिनायन निपात्यंतइति दंडिनहस्तिनशब्दाभ्यांनडादित्वात्फक्निपातनाट्टिलोपाभावः वसंतादिष्वथर्वन्निति पठ्य ते अथर्वणाप्रोक्तोग्रंथउपचारादथर्वातमधीते आथर्वणिकः शुभ्रादिषुजिह्माशिन्निति पठ्यते तस्यापत्यंजैह्माशिनेयः वाशिनोऽपत्यं वाशिनायनिः उदीचांवृद्धादितिफि

उभयपदवृद्धिः विदादिगणे तु परस्त्री परशु चेति पठ्यते। प्राप्नोतीति शेषः। तत्र पराचासौ स्त्री चेति कर्मधारयः। परस्त्रिया अपत्यं पारशवः। ब्राह्मणाच्छूद्रायां तेनैवोढायामु
त्पन्नः। सा च जात्यंतरयोगात्परस्त्री। न च परश्वादेशस्य स्थानिवद्भावात्पारशवेप्यनुशतिकादीनां चेत्युभयपदवृद्धिः स्यादिति वाच्यं। सत्यादेशे पूर्वोत्तरपदसंभ्रमो हा
तव्यः। स्त्रीप्रत्ययांतानां ढकः सिद्धत्वादिनङर्थग्रहणं अन्येषां तूभयार्थं। कल्याणी। सुभगा। दुर्भगा। बंधकी। परस्त्रीत्यादि॥ ॥ कुलटाया वा। शकंध्वादि
त्वात्पररूपमत एव निपातनाद्वा। सती भिक्षुकयत्रेति॥ अत्र इनङ्‌धौ। तथा चोक्तममरेण। अथ वा बंधकिनेयः स्याद्बंधुलश्चासतीसुतः। कौलटेरः कौलटेयो भिक्षुकीतु

कुलटाया वा ४।१।१२७। इनङ्‌मात्रं विकल्प्यते ढक् तु नित्यः पूर्वेणैव कौलटिनेयः कौलटेयः सती भिक्षुकयत्र कुलटायास्तु व्यभिचारार्थं कुलान्यटति
तस्याः क्षुद्राभ्यो वेति पक्षे द्रक्। कौलटेरः। हृद्भगसिंध्वन्ते पूर्वपदस्य च ७।३।१९ हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञ्णिति किति च सु
हृदोपत्यं सौहार्दः सुभगाया अपत्यं सौभागिनेयः सक्तुप्रधानाः सिंधवः सक्तुसिंधवः तेषु भवः साक्तुसैंधवः चटकाया ऐरक् ४।१।१२८। चटकस्य
तिवाच्यम् लिंगविशिष्टपरिभाषया स्त्रिया अपि। चटकस्य चटकायाश्चापत्यं चाटकैरः स्त्रियामपत्ये लुग्वक्तव्यः। तयोरेवापत्यं चटका। गो
धाया ढ्रक् ४।१।१२९। गौधेरः शुभ्रादित्वात्पक्षे ढक्। गौधेयः। आरगुदीचाम् ४।१।१३०। गौधारः रक्तासिद्धे आकारोच्चारणमन्यतो विधानार्थम्। जड
स्यापत्यं जाडारः। पण्डस्यापत्यं पाण्डारः॥ ॥ सतीपदातद्यौलटिनेयोस्यात्कौलटेयोपि चात्मज इति केचित्तु क्षुद्राया अपि इनङ्‌ मतौ तीयं रूपं कौलटिनेय इती
च्छंति। पक्षे द्रगिति। ढगपि पक्षे भवत्येवेति भावः। हृद्भग। पूर्वपदस्य चेति चकारेणोत्तरपदस्येत्यनुकृष्यते तदाह पूर्वोत्तरपदयोरिति महत्ते सौभगायेत्यत्र हृद्भगादित्वाद्रि
छांदसत्वान्नोत्तरपदवृद्धिरित्याहुः। चटकाया इति। स्त्रीलिंगनिर्देशात्पुंसि न स्यादित्याशंक्याह चटकस्येति वाच्यमिति। एवं च चटकादेरगित्येव सांप्रदायिकः पाठ इति न्या
सकृदुक्तिर्वार्तिकविरोधादुपेक्ष्यातयोरेवेति। तत्र यावंतात्तद्धितलुक्लुक्तद्धितलुकीति टापो लुकि जातिलक्षणङीषं बाधित्वा अजादिलक्षणष्टाबिति भावः। गोधेर इति ढ
स्य एयादेशे कृते लोपो व्योरिति यलोपः। आरगुदीचाम्। वचनादेव द्रग्ढगोरर्थपर्याये सिद्ध उदीचां ग्रहणं पूजार्थम् आरगिति सूत्रितम् यस्येति ॥ ॥ ॥

त्तरपदेष्वपि अतस्तिककितवादिभ्य इत्युक्तम् तिककितवा इति अन्ये त्वत्रोदाहर्तव्याः औपकायनाश्च लामकायनाश्च नडादिभ्यः फक् तस्य लुक् उपकलमकाः भ्राष्टककपिष्ठका पिष्ठलयश्च । तद्वृत्तस्य लुक् भ्राष्टककपिष्ठलाः कार्ष्णाजिनपश्च कार्ष्णसुन्दरयश्च अतद्वृत्तस्य लुक् कृष्णाजिनकृष्णसुन्दरा इत्यादि ॥ ॥ उपकादिभ्यो । अद्वन्द्वे ग्रहणं द्वन्द्व इत्येतन्नाधिक्रियत इति स्फुटीकरणार्थं उपकादीनां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते उपकलमका इत्यादयस्तेषां पूर्वेणानित्यमेव लुक् अद्वन्द्वे त्वनेन विकल्प इति तेषां भाष्ये भ्राष्टकिकापिष्ठलय इत्युदाहरणात् तिककितवादिषु तस्य पाठो अनार्ष इति कैयटस्तेनात्र द्वन्द्वेऽपि विकल्प एवोचित इत्याशयेनोदाहरति भ्राष्टककपिष्ठला इत्यादि तिककितवादिषु पठितानामनेन द्वन्द्वे एवं विकल्प इत्याशयेनोदाहरति लमकाः लामकायना इति एवमन्येष्वप्युदाहर्तव्याः उपकाः औपकायनाः भ्राष्टकाः भ्राष्टकायना इ

उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ २।४।६९ ॥ एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्यात् द्वन्द्वे चाद्वन्द्वे च । औपकायनाश्च लामकायनाश्च नडादिभ्यः फक् तस्य लुक् उपकलमकाः । औपकायनलामकायनाः भ्राष्टककपिष्ठलाः भ्राष्टकिकापिष्ठलयः । लमकाः लामकायनाः । आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ २।४।७० ॥ एतयोरवयवस्य गोत्रप्रत्ययस्याणो यञश्च बहुत्वे लुक् स्यात् अवशिष्टस्य प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनचावादेशौ स्तः अगस्तयः कुण्डिनाः ॥

॥ आगस्त्य । अगस्त्यशब्दादृष्यण् कुण्डिनशब्दाद्गर्गादियञ् ननु कुण्डिनीशब्दस्य पत्निभसादृश्य इति पुंवद्भावेन कुण्डिन इति टिलोपः प्राप्नोति न च संयोगादिलोपश्चेति प्रकृतिभावः शंक्यः अपीति तत्रानुवर्तनात् मैवम् अस्मादेव निपातनात् तस्य प्रवृत्तेः कौण्डिन्यः सिध्यति चकारस्त्वन्तोदात्तार्थः मध्योदात्तो कुण्डिनीशब्दः कुण्डमस्यास्तीति मत्वर्थीयस्येनेरुदात्तत्वादादेशस्यापि कुण्डिनशब्दस्यान्तरतम्यान्मध्योदात्तत्वात् अवशिष्टस्य प्रकृतिभागस्येति ॥ न च प्रत्ययशिष्टस्यादेशमात्रं विधीयतां किं लुग्विधानेनेति वाच्यं अगस्तीयाश्छात्रा इत्यनापत्तेः । लुकि हि सति गोत्रे लुगचीति लुकि प्रतिषिद्धे वृद्धत्वात् छः सिध्यति । प्रत्ययविशिष्टस्यादेशविधौ तु वृद्धत्वोपगमे शैषिकोऽणेव स्यात् ॥ कौण्डिनाश्छात्रा इति तूभयथापि सिध्यत्येव । छापवादस्य कण्वादिभ्यो गोत्र इत्यण्प्रत्ययस्य प्रवृत्त्या तत्र विशेषाभावात् ॥

वन् अनयोरप्यजितकारेंजादेशो निपात्यते भ्रूणघ्नोभावोघ्नो णहत्यम् धैवत्त्यं हनस्तोऽचिण्णलोरित्यनेनैव हन्तेस्तत्वे सिद्धे तकारनिपातनं ज्ञापयति धातोः स्वरूपग्रहणे तत्प्रत्यये
कार्यविज्ञानमिति तेन वार्त्रघ्नमित्यत्र तत्वं न नत्वेवं प्रस्कन्द्भ्यामित्यादौ अनुदात्तस्य चर्दुपधस्यान्यतरस्यामिति विधौ धातोः स्वरूपग्रहणाभावात् अत्राहुः मृजेर्वृद्धिरिति सूत्रस्थभाष्यपर्यालो
चनया धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति ज्ञापनार्थं तकारनिपातनमिति व्याख्येयं तेन न कोपि दोष इति सरयू इत्यस्याणि परे यादेर्वा निपात्यते सरय्वां भवं सारवमुद
कं इक्ष्वाकोरपत्यं ऐक्ष्वाकः जनपदशब्दात्क्षत्रियादञ् उलोपो निपातनात् इक्ष्वाकुषु जनपदेषु भवः कोपधादण् ऐक्ष्वाकः अत्राप्युलोपो निपातनादेव अजरां जयो हि यो
रप्येकस्मिन्नपत्यापाठात् बहुत्वे त्वञ स्तद्राजत्वाल्लुक् अणस्तु नेति शेषः तथा च रघुः इक्ष्वाकूणां दुरापेर्थे इति मुरारिस्त्वाह ऐक्ष्वाकेषु च मैथिलेषु च फलमिति हिरण्यस्य विका

यस्कादिभ्यो गोत्रे। २।४। ६३। एभ्योऽपत्यप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् मित्रयवः। अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च २।४। ६५
एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे अत्रयः भृगवः कुत्साः वसिष्ठाः। गोतमाः। अङ्गिरसः। बह्वच इञः प्राच्यभरतेषु २।४। ६६। बह्वचः परो य इ
ञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक् स्यात् पन्नागाराः युधिष्ठिराः। न गोपवनादिभ्यः। २।४। ६७। एभ्यो गोत्रप्रत्ययस्य न लुक् स्यात् बिदाद्यन्त
र्गणोयम्। गौपवनाः शैग्रवाः। तिककितवादिभ्यो द्वन्द्वे। २।४। ६८। एभ्यो गोत्रप्रत्ययस्य बहुषु लुक् स्याद् द्वन्द्वे तैकायनयश्च कैतवायनयश्च तिकादिभ्यः
फिञ् तस्य लुक् तिककितवाः ॥ ९ रोहिरण्मयः मयटि यादेर्लोपोऽत्र निपात्यते॥ ॥ यस्कादिभ्यो अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्याशयेनाह अपत्यप्रत्य
यस्येति एयक्षत्रियार्षेत्यतो लुगित्यनुवर्तते तद्राजस्येति सूत्राद् बहुष्वित्येनेवास्त्रियामिति च तदाह लुक् स्यादित्यादि तत्कृत इति किम् प्रिययास्काः बहुत्वे किम् यास्कः शिवाद्यण् यस्क
लस्य दुह्यक गोटकवस्तिकुञ्जिमित्रयु इत्यादि अत्रिगोत्रप्रत्ययस्येति अत्रिशब्दादितश्चानिञ इति ढक् इतरेभ्यस्तु ऋष्यणिति बोध्यम् भरतगोत्रे उदाहरति युधिष्ठिरा इति बहु
ष्वेव लुङ् न ह्येयो धिष्ठिरिः कुरुलक्षणण्यं बाधित्वा बाह्वादित्वादिञ् बिदाद्यन्तर्गणोयमिति अपत्यं गोत्रं इति लुग् अत्र प्राप्नोतीति भावः तिककितवादिभ्यो यद्यपि द्वन्द्वरूपाण्येव गणे यम्
तीति कादीनि पूर्वपदानि कितवादीन्युत्तरपदानि तथापि तिकादिभ्य इत्युक्ते पूर्वपदेष्वेव लुगाशङ्क्येत इष्यते ॥ ॥ ॥ ॥

कुलात्त्वः केवलात्कुलशब्दादपूर्वपदादित्यादिना विशेषविहिताभ्यामपियड्ढञ्भ्यां खो न बाध्यते तद्धि यावन्यतरस्यांग्रहणादित्याशयेनाह कुलीन इति। लिंगादिति अन्यथा ग्रहणावर्त्तेतितरत्तविधिप्रतिषेधादपूर्वपदग्रहणं व्यर्थं स्यादिति भावः आढ्यकुलीन इति आढ्यश्चासौ कुलीनश्चेति कुलीनविशेषणात्वे कुलस्य आढ्यत्वं न प्रतीयते। विंन्वईकार उदात्त इति स्वरे विशेषोस्तीति भावः। बहुकुल्य इति विभाषासुप इति बहुच्प्रत्ययो नापरमिति अपूर्वपदत्वात्प्रत्ययत्रयं भवत्येवेति भावः व्यन्सादिति भ्रातुरपत्यं यदि शत्रुस्तदा भ्रातृशब्दात्व्यनेव स्यान्न तु

कुलात्खः ४।१।१३९। कुलीनः। तदन्तादपि उत्तरसूत्रेऽपूर्वपदादिति लिङ्गात् आढ्यकुलीनः अपूर्वपदादन्यतरस्यां यड्ढकञौ ४।१।१४०। कुलादित्येव पक्षे खः कुल्यः कौलेयकः। कुलीनः। पदग्रहणं किम्। बहुकुल्यः। बाहुकुलेयकः। बहुकुलीनः। महाकुलादञ्खञौ ४।१।१४१। अन्यतरस्यामित्यनुवर्त्तते पक्षे खः माहाकुलः माहाकुलीनः। महाकुलीनः दुष्कुलाड्ढक् ४।१।१४२। पूर्ववत्पक्षे खः दौष्कुलेयः दुष्कुलीनः स्वसुश्छः ४।१।१४३। स्वस्रीयः भ्रातुर्व्यच्च ४।१।१४४। चाच्छः भ्रातृव्यः भ्रात्रीयः व्यन्सपत्ने ४।१।१४५ भ्रातुर्व्यन्स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये भ्रातृव्यः। शत्रुः पाप्मना भ्रातृव्येणेति तूपचारात् रेवत्यादिभ्यष्ठक् ४।१।१४६ ठस्येकः ।७।३।५०। अङ्गात्परस्य ठस्येकादेशः स्यात् रैवतिकः। गोत्रस्त्रियाः कुत्सने ण च ४।१।१४७। गोत्रं या स्त्री तद्वाचकाच्छब्दात्स ढकौ स्तः कुत्सायाम् सामर्थ्याद्यूनि। गार्ग्या अपत्यं गार्गो गार्गिको वा जाल्मः भस्याढे तद्धिते इति पुंवद्भावाद्गार्ग्यशब्दात्स ढकौ। यस्येति लोपः आपत्यस्येति च लोपः। वृद्धाट्ठक् सौवीरेषु बहुलम् ४।१।१४८ सुवीरदेशोद्भवाः सौवीराः वृद्धात्सौवीरगोत्रात् यूनि बहुलं ठक् स्यात् कुत्सायाम्। भागवित्तेर्भागवित्तिकः पक्षे फक् भागवित्तायनः फेश्छ च ४।१।१४९। फेञन्तात्सौवीरगोत्रादपत्ये छः ठक् च कुत्सने गम्ये यमुन्दस्यापत्यं यामुन्दायनिः तिकादित्वात्फिञ् तस्यापत्यं यामुन्दः यामुन्दायनीयः यामुन्दायनिकः कुत्सने किम् यामुन्दायनिः औत्सर्गिकस्याणो ण्यक्षत्रियेति लुक् सौवीरेषु किम् तैकायनिः॥ ॥ ॥

यत्तच्छौरित्यर्थः समुदायेनेति। नतु घटितप्रत्ययेन शत्रुरूपेपत्ये वाच्य इत्यर्थः। यत्तु रक्षितस्तु तोऽत्रमपत्यार्थो त्र नास्त्येवेति तदुपेक्ष्यं भाष्यविरोधादिति मनसि निधायाह पाप्मनेति। श्रुतिगं भ्रातृव्यशब्दस्य गतिं वदन्नुपचारादिति। अस्त्री पंकं पुमान्पाप्मा पापं किल्बिषकल्मषमित्यमरः। नहि पापं भ्रातुरपत्यं भवतीत्यतो भाक्त एवायं प्रयोग इति भावः। रेवत्या रेवती

राजश्वशुराद्यत्। अमेणाणोऽपवादः॥ जातावेवेति॥ प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः। प्रत्ययस्त्वपत्य एव। एवं च गन्धपंकजादिवद्योगरूढ इति फलितोऽर्थः॥ रा
लोपो नेति। नस्तद्धित इति प्राप्तष्टिलोपो नेत्यर्थः। ब्राह्मो जातौ। योगविभागोऽत्रेति। एकयोगत्वे त्वारंभसामर्थ्यादनपत्ये जातौ ब्राह्मीत्यत्र प्राप्तटिलोपसिद्धावपि ब्राह्मण इति न सि
ध्येत्। अन्निति प्रकृतिभावस्य नमपूर्वोऽपत्य इति निषेधाट्टिलोपस्य दुर्वारत्वात्। किं च जातौ ब्राह्ममित्यादि न सिध्येदन्निति प्रकृतिभावस्य दुर्वारत्वादिति भावः। ब्राह्म इति इहापत्ये

राजश्वशुराद्यत्। ४।१।१३७ राज्ञो जातावेवेति वाच्यम्। ये चाभावकर्मणोः ६।४।१६८। यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः। श्व
शुर्यः। जातिग्रहणाच्छूद्रादावुत्पन्नो राजनः। अन्। ६।४।१६७। अणि अन् प्रकृत्या स्यादिति टिलोपो न। अभावकर्मणोः किं। राज्ञः कर्म भावो वा राज्यम्। सं
योगादिश्च ६।४।१६६। इन् प्रकृत्याऽणि परे। चक्रिणोऽपत्यं चाक्रिणः। न मपूर्वोऽपत्येऽवर्मणः ६।४।१७०। मपूर्वोऽन् प्रकृत्या न स्यादपत्येऽणि भा द्रसा
मः। मपूर्वः किं। सौत्वनः। अपत्ये किम्। चार्मणः परिवृतस्त्वर्मणो रथः। अवर्मणः किं। चाक्रवर्मणोऽपत्यं चाक्रवर्मणः। वा हितनाम्न इति वाच्यम्। हितनाम्नोऽपत्यं
हैतनामनः। हैतनामः। ब्राह्मोऽजातौ ६।४।१७१ योगविभागोऽत्र कर्तव्यः। ब्राह्म इति निपात्यतेऽनपत्येऽणि। ब्राह्मं हविः। ततोऽजातौ। अपत्ये जातौ अणि ब्रह्म
णष्टिलोपो न स्यात्। ब्रह्मणोऽपत्यं ब्राह्मणः। अपत्ये किम्। ब्राह्मी ओषधिः॥ औक्षमनपत्ये ६।४।१७३ अणि टिलोपो निपात्यते। औक्षं पदम्। अनपत्ये कि
म्। औक्ष्णोऽपत्यमौक्ष्णः। षपूर्वहन्धृतराज्ञामणि ६।४।१३५ षपूर्वो योऽन् तस्य हनादेश्च भस्यातो लोपोऽणि। तास्णः। भ्रौणघ्नः। धार्तराज्ञः। ४। धार्तरा
ज्ञः। पूर्वेति किम्। सामनः। अणि किम्। तास्यय। सत्राह्नः। ४।१।१३८। क्षत्रियः। जाताविरत्येव क्षात्रिरन्यः॥ ११ इति न संबध्यते अन्यथा निपातनमिदं व्यर्थं स्यान्न

मपूर्व इति प्रकृतिभावनिषेधाट्टिलोपसिद्धेरित्याशयेनाह अनपत्येऽणीति। ब्राह्ममिति। ब्राह्मो मुहूर्तो ब्राह्मः स्थालीपाक इत्याद्युदाहरणम्। नन्वेवमपि ब्राह्मणो न सिध्यति न मपूर्व इ
ति प्रकृतिभावनिषेधादपत्येऽणि नस्तद्धित इति टिलोपप्रवृत्तेरत आह जाताविति। इह मंडूकप्लुत्याऽपत्य इत्यनुवर्तते नेति च तद्देतदाह अपत्ये जातावित्यादि। अयमत्रार्थः। अप
त्ये जातौ ब्राह्मणशब्दे टिलोपो न भवतीति। केचिदिह अजाताविति छित्त्वा जातौ न भवतीति व्याचक्षते तत्स्विंस व्याख्यानेनेति नानुवर्तनीयं। जातौ किं। ब्राह्मो नारदः। तक्ष्णा इति;

शब्दपाठोऽनार्षइतिगम्यते। वृत्तिकारस्तुतक्षन्शब्दंशिवादिषुपठित्वाकारिलक्षणाङ्गुदीचामिञमयमण्वाधते एयस्तुवाधोनेष्यत इत्याहतदनुरोधेनास्माभिरपितत्तथैव
व्याख्यातंफलेविशेषाभावात्॥ ॥ कौशल्यापरमप्रकृतेरेवायमितीयदितुवृद्धेत्कोसलेतिञ्यङंतात्कौशलशब्दात्कारिलक्षणएयंतात्कर्मारशब्दाच्चायंविधिःस्यात्तदा
न्येचप्रसज्येतेतिभावः॥ छागेति॥ दश्शब्दस्याप्युपलक्षणमेतत्फिञ्प्रकरणेदश्कोसलकर्मारछागवृषाणांयुड्वादिष्टस्येतिवार्त्तिकात् आदिष्टस्यआपन्नादेशस्येत्यर्थः॥
अन्यथाप्रतिपदोक्तेयुटिकृतेप्रत्ययादित्वाभावात्कौशल्यायनिरित्यादौफस्यायन्नादेशोनस्यात्युकिकृतेतुदागव्यायनिरित्यत्रओर्गुणोअन्यत्रात्लोपश्चनस्यादितिभाव
कार्त्रीयणिरिति। कर्त्तुरपत्यंकात्रेस्तस्यापत्यंयुवाकार्त्रीयणिः अत्रव्याचक्षतेकर्त्तृशब्दःकुर्वादिषुपठ्यतेतथाचकार्त्र्यइत्येववर्द्धमानेनोदाहृतं॥ तस्माद्दिहभर्तृहर्त्रीत्युदाहार्यमि

कौशल्यकार्मार्याभ्यांच ४।१।१५५। अपत्येफिञ् इञोपवादः परमप्रकृतेरेवायमिष्यते प्रत्ययसंनियोगेनप्रकृतिरूपंनिपात्यते कुशलस्यापत्यंकौश
ल्यायनिः कर्मारस्यापत्यंकार्मार्यायणिः। छागवृषयोरपि। छाग्यायनिः वार्ष्यायणिः। अणोद्व्यचः ४।१।१५६। अपत्येफिञ् इञोपवादः कार्त्रीयणिः
अणइतिकिम् दाक्षायणः। द्व्यचः किम्। औपगविः त्यदादीनांवाफिञ्वाच्यः। त्यादायनिः त्यादः। उदीचांवृद्धादगोत्रात् ४।१।१५७ आम्रगुप्तायनिः प्रा
च्यास्तु। आम्रगुप्तिः। वृद्धात्किम्। दाक्षिः अगोत्रात्किम्। औपगविः। वाकिनादीनांकुक्च ४।१।१५८। अपत्येफिञ्वा वाकिनस्यापत्यंवाकिनकायनिः। वा

ति। दाक्षिरिति। वानामधेयस्येतिवृद्धसंज्ञाभावपक्षे प्रत्युदाहरणमिदं पक्षांतरेतुफिञ्भवत्येवदाक्षायण्योश्विनीत्यादित्ताराइत्यमरः। वाकिनादीनां। यदिहवृद्धमगोत्रं
शब्दरूपंतत्रागमार्थमेवेदंवचनमन्येषांतूभयार्थं। उदीचामित्यनुवर्त्तनाद्विकल्पः फलितइत्याह फिञ्वास्यादिति॥ वाकिनकायनिरिति। वचनंवाकः सोस्यास्तीतिवाकिनः।
अतएवनिपातनादिनन्। गारेधतइतिगारेधः पृषोदरादित्वाद्दिलोपः शकंध्वादित्वात्पररूपं। गारेधकायनिः। चर्मिवर्म्मादौतूभयार्थं। चर्मवर्मशब्दाभ्यांव्रीह्यादित्वादिनिः
। चर्मिवर्मिणोर्नलोपश्चेतिगणसूत्रं। चार्मिकायणिः वार्मिकायणिः। कुकिकृतेनकारस्यानंत्यत्वान्नलोपाप्राप्तौवचनं नचकुक्परादिरस्त्विति वाच्यं। फस्यानादित्वादायनादे
शाभावप्रसंगात्। वाकिनिरिति। अतइञ्। फिञभावेतत्संनियोगशिष्टःकुगत्रनभवति। एवंगारेधिः चार्मिणइत्याद्यूह्यम् ॥ ॥ ॥ ॥

अम्बपालीमणिपाली।द्वारपालीत्यादि॥ठस्येकः।अंगस्येत्यनुवर्तनादाह। अंगात्परस्येति। अंगादिति ठकारविशेषणाद् ठ्च्वष्ठकारस्य न भवति कमेठः। गोत्रस्त्रियाः।णित्वं तु गलु
नुकायन्याः अपत्यं ग्लौचुकायनो जाल्म इत्यत्र फिञन्तात् गोत्रद्व्यर्थमिति बोध्यं। सामर्थ्याद्यूनीति। गोत्रादपरो गोत्रप्रत्ययो नेत्युक्तत्वादिति भावः। गार्ग्या अपत्यमिति। पितुरसंनिज्ञा
निमात्राव्यपदेशात् कुत्सा। गोत्रेति किं। कारिकेयो जाल्मः। स्त्रियाः किं। औपगवस्यापत्यं औपगविर्जाल्मः। कुत्सनेति किं। गार्गेयो माणवकः।१८॥ फाण्टाहृति। कुत्सन इति निवृत्तं। वृत्तिम
ति णिलस्य फलमस्तीति ध्वनयन्नुदाहरति मैमतिरिति॥ न च भाष्यमतेपि फाण्टाहृता भार्ये इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावनिवृत्तिर्णित्वफलमस्तीति वाच्यं। अस्त्रियामिति पुंवत्संज्ञानि
ये भाज्ञेत्रसंज्ञासद्भावादेको गोत्र इति नियमाद्विज्ञातात्फाण्टाहृतिशब्दादन्यस्यापत्यप्रत्ययस्याभावात्फाण्टाहृता शब्दस्यैवासत्त्वादिति भावः। कुर्वादिभ्यो। सौवीरेष्वित्यपि निवृत्तं। कौर

फाण्टाहृतिमिमताभ्यां णफिञौ ४।१।१५०सौवीरेष्वनेह यथासंख्यं अल्पाच्तरस्य परनिपातालिङ्गात् इति वृत्तिकारः भाष्ये तु यथासंख्यमेवेति स्थितम्। फा
ण्टाहृतः। फाण्टाहृतायनिः मैमतः मैमतायनिः। कुर्वादिभ्यो ण्यः।४।१।१५१। अपत्ये कौरव्याः ब्राह्मणाः वावदूक्याः। सम्राजः क्षत्रिये। साम्राज्यः साम्रा
जोन्यः। सेनान्तलक्षणकारिभ्यश्च।४।१।१५२। एभ्यो ण्यः स्यात् इञ्सञ्ज्ञयोरपवादः। हारिषेण्यः। लाक्षण्यः। कारिः शिल्पी तस्मात् तान्तुवाय्यः कौम्भका
र्यः नापित्यः॥ उदीचामिञ्।४।१।१५३। हारिषेणिः लाक्षणिः तान्तुवायिः। कौम्भकारिः नापितात् परत्वात् फिञेव नापितायनिः॥ तक्ष्णोऽण उपसंख्यान
मृष पूर्वेत्यनो कारलोपः। ताक्ष्णः पक्षे ताक्ष्ण्यः। तिकादिभ्यः फिञ्।४।१।१५४। तैकायनिः॥ ९९

व्याब्राह्मणा इति। यत्तु कुरुनादिभ्यो ण्य इति वक्ष्यति तस्यात द्रा
जत्वाद् ह्रस्व लुकि कुरवः। क्षत्रिया इति भवति न तु कौरव्या इति भावः। वावदूक्य इति वदेर्यङ्। ताद् ऊकप्रत्ययः स चात्रैव गणे निपातनादित्याहुः। कुरु गर्ग वावदूक सम्राजः क्षत्रिये सम्रा
द् शब्दात् ण्य इत्यर्थः। वामरथस्य कण्वादिस्वरवर्जं यञन्तस्य कार्यं एव शब्दस्य यत् कार्यं तत् ण्य प्रत्ययान्तस्य वामरथ्य शब्दस्यातिदिष्टं विनेत्यर्थः। बहुत्वे यञञोश्चेति लुक्। वामरथा
श्छात्राः कण्वादिभ्यो गोत्र इति अणपवादोऽण्। वामरथी। वामरथ्यायनी स्त्री यञश्चेति प्राचां ष्फ तद्धित इति ङीष् ष्फो। वामरथानि संघांकलक्षणानि। संघांकलक्षणेष्विति अणपवादो ण
सत्यकार वल्लभीकार तुण्डिकारेत्यादि॥ हारिषेण्य इति। रात्रिसंज्ञायामिति षत्वस्यासिद्धत्वात्सेनान्तो यं। ताक्ष्ण इति। उदीचामिञोपवादः। अस्मादुपसंख्यानाच्छिवादिषु तक्षन्

वृद्धेत॥ तपरकरणं किं कौमारः। कुमारीशब्दो जनपदक्षत्रियवचनः। कुरुनादिभ्यो ण्यः। ४।१।१७२। कुरुनादिभ्यो ण्यः। कुरुशब्दाद्यञ्लक्षणोऽण् प्राप्तेना दिभ्यस्तु अणि प्राप्ते ण्य वचनं। उदुंबरा दयइति। उदुंबरास्तिलखलामद्रकारायुगंधराः भुलिंगाः शरदंडाश्च साल्वावयवसंज्ञिकाइति वृत्तिः। औदुंबरिरिति। तैलखलिः॥ माद्रकारिः योगंधरिरित्यादीन्युदाहर्त्तव्यानि। तेतद्राजाः॥ अजादयइति॥ ततः प्राचीनास्तु तच्छब्देन परामृश्यंते। गोत्रयुवसंज्ञाकांडेन विच्छेदादेतदर्थमेव हि तत्कांडमध्ये कृतमाचार्येणेत्याहुः। वस्तुतस्तु तद्राज इत्यधिकृत्य जनपदशब्दात्क्षत्रियादञित्यादिसूत्राणामारंभे गोत्रयुवसंज्ञाकांडस्यामध्येपाठाभावेपि न क्षतिरित्यन्ये तद्राजस्य तदर्थेति। तद्राजप्रत्ययार्थेन कृते इत्यर्थः तेनैवेति प्रिय

वृद्धेत्कोशलाजादाञ्ञ्यङ्। ४।१।१७१। वृद्धात् आम्बष्ठ्यः सौवीर्यः इत्‌आ वन्त्यः। कौशल्यः अजादस्यापत्यमाजाद्यः। कुरुनादिभ्यो ण्यः। ४।१।१७२। कौरव्यः नैषध्यः स नैषधस्यार्थपतेरित्यादौ तु शैषिकोऽण्। शाल्वावयवप्रत्ययग्रथकलकूटाश्मकादिञ् ४।१।१७३ शाल्वो जनपदस्तदवयवाउदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्चइञ्स्यादञोपवादः औदुम्बरिः प्रात्यग्रथिः कालकूटिः आश्मकिः राजन्यप्येवं ते तद्राजाः ४।१।१७४ अजादय एतत्संज्ञाः स्युः तद्राजस्य बहुषु तेनैवास्त्रियाम् २।४।६२। बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृते बहुत्वे न तु स्त्रियाम्। इ— स्वाकवः पञ्चालाइत्यादि कथं तर्हि कौरव्याः पशवः तस्यामेव रघोः पाण्ड्याइति कौरव्ये पाण्ड्ये च साधवइति समाधेयम् रघूणामन्वयं वक्ष्ये निरुध्यमानायदुभिः कथंचिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया॥ कम्बोजाल्लुक्। ४।१।१७५। अस्मात्तद्राजस्य लुक् कम्बोजः कम्बोजौ कम्बोजादिभ्य इति वक्तव्यम् चोलः शकः द्व्यज्लक्षणस्याणो लुक् केरलः यवनः अञो लुक् कम्बोजाः समरे इति पाठः सुगमः दीर्घादिपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः॥ ११

पंचालाः साधवइतीति तथा च तत्र साधुरिति यत्प्रत्ययस्य तद्राजत्वाभावान्न लुङ्गिति भावः॥ रघुयदुशब्दयोर्जनपदवाचित्वाभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्रवृत्त्या राघवाणां यादवैरित्येव भवितव्यमित्याशंक्याह रघुयदुशब्दयोरिति। लक्षणयेति। ततश्चोक्तार्थत्वादपत्यप्रत्ययो नात्रोत्पन्न इति भावः कम्बोजाल्लुक्॥ तद्राजस्य बहुष्विति प्रकरणादेवेदं न कृतं द्व्येकार्थवाचकस्याणो लुगभावप्रसंगात्॥ यद्यपि लुगविकारेण नञ्लुग्विधानसामर्थ्यात् द्व्येकयोरप्ययं लुग्भविष्यत्येवेति चकुंशक्यं। तथाप्यतद्राजस्यापि लुक्प्रसंगशंकापत्तेर्ल।

पुत्रांतात्। उदीचां वृद्धादित्यनुवर्त्तत इत्याशयेनाह वा फिञ् सिद्ध इति। तेनैव सूत्रेण फिञि सिद्धे अनेन कुगेव वा विधीयत इति भावः। प्राचामवृद्धात्। प्राचां ग्रहणं पूजार्थं। अवृद्धादिति किं। राजदंतिः। बहुलग्रहणान्नेह दाक्षिः। मानुषः मनुष्य इति जातिशब्दावेतौ। अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्द्धन्यस्तेन सिध्यति माणवः। णत्वविधानार्थमिदमणः सिद्धत्वात्। अनधीतवेदत्वान्मूढत्वं विहितानुष्ठानाच्च कुत्सितत्वं इदं च वचनं ब्राह्मणमाणवेति णत्वनिपातनाल्लभ्यमित्याहुः। जनपदजनपदक्षत्रियेति जनपदवाची सन् यः क्षत्रियवाचीत्यर्थः यद्यपि पंचालादयो जनपदे बहुवचनांताः क्षत्रिये त्वेकवचनांतास्तथापि प्रातिपदिकस्योभयवाच्यत्वमक्षतमेवेति बोध्यं॥ जनपदशब्दात्किं द्रुह्योरपत्यं द्रौह्यवः केवलक्षत्रियवाच्ययं क्षत्रियादिति किं। ब्राह्मणस्य पंचालस्यापत्यं पांचालिरिति वृत्तिकारादयः। बाह्वादिष्वस्य पाठादिदं प्रत्युदाहर

पुत्रान्तादन्यतरस्याम् ४।१।१५९। अस्माद्वा फिञ् सिद्धः तस्मिन्परे पुत्रान्तस्य वा कुक् विधीयते। गार्गीपुत्रकायणिः। गार्गीपुत्रायणिः। गार्गीपुत्रिः। प्राचामवृद्धात्फिन्बहुलम् ४।१।१६०। ग्लुचुकायनिः॥ मनोर्जातावञ्यतौ षुक् च। ४।१।१६१। समुदायार्थो जातिः। मानुषः मनुष्यः। जनपदशब्दात्क्षत्रियादञ्। ४।१।१६८। जनपदक्षत्रियोर्वाचकादञ् स्यादपत्ये॥ दाण्डिनायनेति सूत्रे निपातनाट्टिलोपः। ऐक्ष्वाकः। ऐक्ष्वाकौ॥ क्षत्रियसमानशब्दाज्जनपदात् राजन्यपत्यवत्। तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात्। पंचालानां राजा पांचालः। पुरोरण् वक्तव्यः। पौरवः। पाण्डोर्ड्यण्। पाण्ड्यः। साल्वेयगान्धारिभ्यां च ४।१।१६९। आभ्यामपत्येऽञ् वृद्धेदिति ञ्यङोऽपवादः। साल्वेयः। गान्धारः। तस्य राजन्यप्येवम्॥ द्व्यञ्मगधकलिङ्गसूरमसादण्। ४।१।१७०। अञोऽपवादः। द्व्यच् आङ्गः। वाङ्गः। सौह्मः। मागधः। कालिङ्गः। सौरमसः। तस्य राजन्यप्येवम्॥

णं चिन्त्यमित्यन्ये। क्षत्रियसमानशब्दादिति॥ समानः शब्दो यस्य जनपदस्य सोऽयं समानशब्दो जनपदः। क्षत्रियेण समानशब्दः क्षत्रियसमानशब्दस्तस्मात्तस्येति षष्ठीसमर्थाद्राजनि वाच्ये अपत्यवत्प्रत्ययो भवतीत्यर्थः पञ्चालानां राजेति। इह वृद्धादपि बहुवचनविषयादिति प्राप्तो वुञ् बाध्यते॥ पुरोरिति। पुरुशब्देन जनपदवाचीति प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनं। जनपदवाचित्वे तु द्व्यञ्मगधेत्येव सिद्धं। पांडोर्ड्यण्। णित्करणं तु पंड्या भार्येत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधार्थं। युधिष्ठिरपितृवाचिनो गणवाचिनश्च पांडोर्नेह ग्रहणं जनपदशब्दादित्युक्तो तदधिपतिवाचिन एवोपस्थानात्॥

तथाहि पर्शुः क्षत्रियो जनपदेन समानशब्दस्तस्यापत्यं स्त्री द्व्यञ्मगधेत्यण् तस्यातश्चेति लुक् । पुनः पार्श्वादिलक्षणः स्वार्थिकोऽण् तस्यापि लुक्यूङ् ततः पर्शूः । एवं रक्षसः क्षत्रियस्या
पत्यं स्त्री रक्षाः । पूर्ववदण्द्वयस्यापि लुक्यत्वसंतस्येति दीर्घः । उक्तं च वार्त्तिककृता पर्श्वादिभ्यो लुग्वक्तव्यः । यौधादिप्रतिषेधो वाज्ञापकः पार्श्वादिलुक इति । यौधेयीत्यादि । तथा
याः शुक्राया अपत्यं स्त्रीति विग्रहः ॥ ॥ अणिञोः ॥ उत्तममिति ॥ अव्युत्पन्नं प्रातिपदिकमिदं नतूक्तवदात्तमप् । तेन किमेतिङ व्ययघादित्याम न शङ्क्यः । गोत्रे यावितिः अपत्या
धिकारादन्यत्र लौकिकं गोत्रमिति नेह शास्त्रीयं गृह्यते । तथा चानार्षयोरिति पर्युदासादेव सिद्धे गोत्रग्रहणमिह त्यक्तुं शक्यं । न चात्र गोत्रग्रहणसामर्थ्यात् शास्त्रीयमेव गोत्रं गृ
ह्यत इति वाच्यं । देवदत्तामाङ्कं त्येत्यादि नामन न रायत्ते पीष्यमाणत्वादतरा चानुपदं वक्ष्यति कुमुदगंधेरपत्यं स्त्री कौमुदगंध्येति । इदं च कौस्तुभानुसारि व्याख्यानमत्र त्यमूलानु

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ४।१।७८ । त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम् । गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तम
योः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात् निर्दिश्यमानस्यादेशा भवन्तीत्यणिञोरेव षङ वितौ यङश्चाप् कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या
वाराह्या अनार्षयोः किम् वासिष्ठी वैश्वामित्री गुरूपोत्तमयोः किम् औपगवी जातिलक्षणो ङीष् गोत्रे किम् अहिच्छत्रे जाता आहिच्छत्री ॥

ग्रहणमपि देवयज्ञि सूत्रस्थेनागोत्रार्थमिदमित्यादि मूलग्रंथेन सह विरुध्यत इति तत्रैव स्फुटी भविष्यति । यद्यपि स्त्रीप्रत्ययाः प्रकृतास्तथापि पत्युर्नो यज्ञसंयोग इति नकारस्येव
ष्यङ आदेशत्वमेवोचितं ॥ अणिञोरिति षष्ठी स्वरसादित्यभिप्रेत्याह ष्यङादेशः स्यादिति । ष्यङः प्रत्ययत्वेपि लक्ष्यसिद्धिरप्रत्यूहेति मनोरमायां स्थितं । नन्वयं ङिच्चेत्तर्हि ङि तादे
शं बाधित्वा परत्वात्सर्वादेशः स्यात् ङिच्चेत्यस्यानन्यार्थो ङित्वेष्यनङादिषु चरितार्थत्वात् । ष्यङो नवं धस्ययङश्चाविति विशेषणार्थतया सप्रयोजनत्वादित्याशंक्याह निर्दि
श्यमानस्येति ष्यङावितावितिः ॥ अनवंधद्व्यकरणं त्वङ्ःङ्ष्यङोपियङश्चा वित्यत्र सामान्यग्रहणार्थं । न च ष्यङः संप्रसारणमित्यत्र विशेषणार्थे सरूपयोगास्यन्यथा
पाश्यापुत्रः पाश्यामतिरित्यत्र याशादिभ्यो यङ इति प्रत्ययेपि संप्रसारणं ॥ ॥

यद्वाभावाच्च तत्प्रकरणेन कृतमित्याहुः नन्वत्रापत्येलक्षणायैव कंबोजः कंबोजावित्यादिरूपसिद्धौ किमनेन सूत्रेणेति शंक्यं॥ कंबोज इत्यादि पाक्षिका निष्टवार
णाय सूत्रस्यावश्यकत्वात्॥ ॥सिन्धुतक्षेति॥ कंबोजशब्दस्य सिंध्वादित्वादण् तस्य तद्राजत्वाभावाल्लुगेति भावः। अवंती कुंतीति। वृद्धेदिति ञ्यङो लुकी तो मनुष्यजाते
रिति ङीष् कुरुरिति। एयस्य लुक् ऊङ् तु न ऊङ्। अतश्च। इह तद्राजेन अकारो विशेष्यते न त्वकारेण तद्राजः॥ विशेषणेन तदंतविधौ ञ्यङ् णयादीनामप्यदंततद्राजत्वादनेनैव
लुकि सिद्धे अवंति कुंति कुरुभ्यो लुग्विधायकस्य स्त्रियामवंतीति सूत्रस्य वैयर्थ्यापत्तेः॥ नन्वेष्टापत्तिः। कौसल्येति रूपासिद्धिप्रसंगादतो व्याचष्टे तद्राजस्याकारस्येति सूत्रेणैतप
रकरणं विस्पष्टार्थमिति भावः। शूरसेनीति। अनो लुकि जातेरिति ङीष् नत्वजंतलक्षणो ङीन्। अनोयोऽकारस्तदंतादिति व्याख्यानात्। कारूशीति। वृत्तउः कारुस्तवष्टिकरूशः।

सिन्धुतक्षशिलादिभ्योऽणञावित्यण्। स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ४।१।१७६। तद्राजस्य लुक् स्यात् अवन्ती कुन्ती कुरूः। अतश्च ४।१।१७७ तद्राज
स्याकारस्य स्त्रियां लुक् स्यात् शूरसेनी मद्री कथं माद्री सुतावितिह्रस्व एव पाठः इति हरदत्तः भर्गादित्वं वा कल्प्यमानं प्राच्यभर्गादियौधेयादिभ्यः ४।१।
१७८ एभ्यस्तद्राजस्य न लुक् पाञ्चाली वैदर्भी आङ्गी वाङ्गी मागधी एते प्राच्याः भार्गी कारूशी कैकेयी केकयोत्यत्र जन्यजनकभाव लक्षणे पुंयोगे ङीष्
यथा शुक्राश्राभ्यां छ च इति ढक् ततः स्वार्थे पर्श्वादियौधेयादिभ्यामणञावित्यञ् शार्ङ्गरवाद्यञ इति ङीन्। अतश्चेति लुकि तु ढगन्तत्वान्ङीप्युदात्त
निवृत्तिस्वरः स्यात्। यौधेयी। शौक्रेयी॥ ९९ वशकान्तो मूलविभुजादित्वात्कः॥ ग्रहिज्येति संप्रसारणं तस्यापत्यं राजा वा कारूशः। स्त्रियां कारूशी। एतेन मू

द्गन्यो क्षोपधः पाठो निरस्तः। यौधेयादिभ्यो लुक्प्रतिषेधसुदा हृत्या ह यथा शुक्रेत्यादि॥ अतश्चेति लुकि त्विति न्यादयस्तद्राजा इति वक्ष्यमाणत्वादञोस्य तद्राजत्वम
स्तीति भावः। योपधत्वात् ङीषः प्राप्तिर्नत्याशयेनाह ङीपीति। उदात्तनिवृत्तिस्वर इति। अनुदात्तस्य च यत्रोदात्तलोप इत्यनेन ङीबुदात्तः स्यादित्यर्थः सिद्धांते त्वञो लुगभावा
त् ङीन्याद्युदात्तत्वमिति ज्ञेयं। स्यादेतत्। अतश्चेति सूत्रेण विधीयमानो लुक् चातुरर्थिकानामेव तद्राजानां भवतु सन्निधानात् नत्वञादयस्तद्राजा इति पांचमिकानामपि तद्राजा
नामिति किमनेन यौधेयादिग्रहणेन। सत्यं। व्याप्तिन्यायेन पांचमिकस्यापीह ग्रहणमिति ज्ञापयितुं यौधेयादिग्रहणं तेन पार्श्वी च राणा स्त्रियां लुकि सिध्यति॥ ॥ ॥

सूत्रे यदिशाखीयं गोत्रं गृह्यते तदा अगोत्रार्थमिदमित्यादि ग्रन्थः स्वरसतः संगच्छते यदि तु लौकिकं गोत्रमेवात्र गृह्यते तदा अणिञोरिति नित्ये प्राप्ते विकल्पार्थमिदमित्ये
वव्याख्यातुमुचितमिति॥ ॥ इत्यपत्याधिकारः॥ ॥ तेन रक्तं रागात्। तृतीयान्तात्समर्थाद्यथाविहितं प्रत्ययाः स्युः रज्यते अनेनेति बाहुलकात्करणे घञ् राग इति रंजकद्रव्य
मित्यर्थः शुक्लस्य वर्णान्तरापादनमिह रंजेरर्थः लाक्षारोचनात् वृत्तिकृता तु वार्त्तिकस्थौ शकलकर्दमौ सूत्रे प्रक्षिप्तौ शकलं त्वचि खण्डे च रागवस्तु निवल्कले इति वि
श्वः वृत्तिकार इति भाष्ये तु नैतद्दृष्टमिति भावः नील्या इति नीली ओषधिविशेषः अणपवादोयं नक्षत्रेण नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्र
त्ययं लभन्ते पुष्येणेति पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः एवं च पौषमहरित्यादिव्यवहारः संगच्छते सर्वेषामप्यन्हां पुष्ययोगसत्त्वेपि तत्समीपस्थचन्द्रमसो योगस्यासार्वत्रिक

तेन रक्तं रागात्। ४।२।१॥ रज्यतेऽनेनेति रागः कषायेण रक्तं वस्त्रं। काषायं। माञ्जिष्ठं। रागात्किं। देवदत्तेन रक्तं वस्त्रं। लाक्षारोचनाट्ठक्। ४।२।२॥ लाक्षि
कः। रौचनिकः। शकलकर्दमाभ्यामुपसंख्यानम्॥ शाकलिकः। कार्दमिकः। आभ्यामणपीति वृत्तिकारः। शाकलः। कार्दमः। नील्या अन्। नील्या र
क्तं। नीलम्। पीतात्कन्। पीतकं। हरिद्रामहारजनाभ्यामञ्॥ हारिद्रं। माहारजनं। नक्षत्रेण युक्तः कालः। ४।२।३॥ पुष्येण युक्तम्। पौषमहः। पौषी रा
त्रिः। लुबविशेषे। ४।२।४॥ पूर्वेण विहितस्य लुप्स्यात्। षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः। कथं तर्हि पुष्ययुक्ता
पौर्णमासी पौषीति। विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति निर्देशेन पौर्णमास्यामयं लुब्नेति ज्ञापितत्वात्। श्रवणशब्दात्तु अत एव लुप्। युक्त
वद्भावाभावश्च अबाधकान्यपि निपातनानि। श्रावणी। संज्ञायां श्रवणाश्वत्थाभ्याम्। ४।२।५॥ विशेषार्थोयमारम्भः। श्रवणा रात्रिः। अश्वत्थो मुहूर्त्तः। सं
ज्ञायां किं। श्रावणी। आश्वत्थी॥

त्वात् नक्षत्रेणेति किम् चंद्रेण युक्ता रात्रिः कालः किं पुष्येण युक्तश्चन्द्रः लुबवि पूर्वसूत्रस्यानुवर्त्तनादिह नक्षत्रेण युक्तस्य कालस्याविशेष
इत्यर्थो लभ्यते तदाह षष्टिदण्डेति अद्य पुष्य इत्यत्यानल्योनस्व इति विशेषे गम्यमानेपि अहोरात्रात्मककालस्यावांतरविशेषानवगमाल्लुब्भवत्येवेति भावः अविशेष इत्यत्र
प्रसज्यप्रतिषेधाश्रयणात्पौषो अहोरात्र इत्यत्र लुब्न भवति षष्टिदण्डसमुदायरूपकालस्य प्रतीतावप्यवयवद्व्यात्मकस्य विशेषस्य प्रतीतेरित्याशयेनाह विशेषश्चेन्नेति अद्य पुष्य

प्रसंग इति वाच्यं ष्यङः संप्रसारणमित्येकानुबंधेनापि तद्वारणात् लोलूपापतिरित्यत्र त्वकारप्रत्ययेन व्यवधानात्संप्रसारणाभावः कौमुदगंधीपुत्र इत्यत्र त्वेकादेशस्य पूर्वान्तत्वे
न ग्रहणान्नास्ति व्यवधानमिति संप्रसारणं सिद्धमिति कौमुदगंध्येति आणः ष्यङ् वाराह्येति इञः ष्यङ् आणिञोः किमृतभागस्यापत्यमार्त्तभागी विदादित्वादञ् शार्ङ्गरवाद्यञ
इति ङीन् टिड्ढेत्यादिना ङीबिति वृत्तिकारः आणिञोरित्यत्र लौकिकं गोत्रं गृह्यते गोत्रं च चरणैरित्यत्र तु पारिभाषिकमेव गृह्यते तेन जातित्वाभावान्ङीनः प्राप्तिर्नास्तीति स्थितस्य
गतिमाहुः ॥ ॥ गोत्रावयवात् अवयवशब्दोऽप्रधानवाची अवयवश्चासौ गोत्रं चेति कर्मधारयः निपातनाद्गोत्रशब्दस्य पूर्वनिपातः। गोत्राभिमता इति गोत्रमित्येवमभिमताः
गोत्रवाचित्वेन देशविशेषे प्रसिद्धाः न तु प्रवराध्याये पठिता इत्यर्थः प्रवराध्यायेऽपाठाच्चाप्राधान्यं कुलाख्या इति कुलमाख्यायते यैरिति कुलाख्याः पुणिक भुणिक मुखर प्रभृ
तयः नैर्हि कुलमाख्यायते पुणिकावयं गोत्रेण भुणिकावयं गोत्रेणेति तत इति गोत्रावयवादित्यर्थः क्रौड्यादिभ्यश्च पंचमीनिर्देशात्प्रत्ययत्वमेवेहाश्रीयत इत्याह ष्यङ् प्रत्यय

गोत्रावयवात् ४।१।७९॥ गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात् गुरूपोत्तमार्थ आरम्भः। पौणिक्या।
भौणिक्या॥ क्रौड्यादिभ्यश्च ४।१।८०॥ स्त्रियां ष्यङ् प्रत्ययः स्यात्। अगुरूपोत्तमार्थोऽनणिञर्थश्चारम्भः। क्रौड्या। व्याड्या। सूत युवत्याम्। सूत्या। भो
जक्षत्रिये। भोज्या॥ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ४।१।८१। एभ्यश्चतुर्भ्यः ष्यङ् वा। गोत्रार्थमिदं। गोत्रेपि परत्वात्प्रव
र्त्तते। पक्षे इतो मनुष्य इति ङीष्। दैवयज्ञ्या। दैवयज्ञी॥ इत्यपत्याधिकारः ॥

८ इति क्रौड्यादि आपिशलि गौकक्ष्य इत्यादि गौकक्ष्यशब्दो गर्गादि ष्यञन्त
तदर्थमाह अनणिञर्थश्चेति सूत इति गणसूत्रं सूतशब्दात् ष्यङ् स्यात्तेन एवं युवत्यां वाच्यायामित्यर्थः सूत्येति ष्यङि यङश्चापः अन्यत्र तु क्रियाशब्दाट्टाप् सूता जातिवाचिनस्तु ङीष्
सूती भोजेति इदमपि गणसूत्रं जातिलक्षणङीषोपवादः ष्यङ् क्रियाशब्दात्तु टाबेव भोजयतीति भोजा दैवयज्ञि चतुर्भ्य इति इञन्तेभ्य इति शेषः देवा यज्ञाय स्तुत्या यस्य
स देवयज्ञः शुचिर्वृक्षोपस्य शुचिवृक्षः सत्यमुग्रं यस्य सत्यमुग्रः निपातनाद्विशेष्यस्य पूर्वनिपातः मुमागमश्च कांडेन विद्धः काण्डेविद्धः कर्तृकरणे कृतेति समासः नि
पातनात्कांडशब्दस्य एकारः पाठांतरे कंठे विद्धस्य कंठेवा विद्धः कंठेविद्धः अमूर्द्धमस्तकादित्यलुक् एभ्यः सर्वेभ्यो अपत्ये अत इञ् गोत्रेपि परत्वादिति तथा चोभयत्र वि
भाषेति भावः अन्ये दमवधेयं अणिञोरिति ॥

स्यात्तु अङ्ग्रहणोच्च ङोऽग्रहणं स्यपतेरः अङि परे इति शेषः अस्मात्त्वङि परेत्तन अग्निस्त्रियत् परिवृत्तो रत्तो यांतात्परिवृत्त इत्यर्थेऽणादयः सूर्यः परिवृत्तः स्वेन्द्र्योभवति इत्था च्छादनार्थेय इस्त्रेकंवलादिकंतत्त एव सर्वे वेष्टनं भवति न तु छात्रादिभ्य इत्याशयेनाह समन्ताद्वेष्टित इति परिः सर्वतोभावे वर्तत इति भावः ॥ ॥ कौमारा तेनेति निवृत्तं अ पूर्वेत्तिभावप्रधानो निर्देश इत्याह अपूर्वत्वे इति अपूर्वत्वं तु स्त्रिया एवेष्यते सुरुषस्तु अपूर्वभार्योऽस्तु वा मा वेत्यनाग्रहः अपूर्वं पतिमिति न पूर्वं पतिर्यस्या इति बहुव्रीहिः कौ मारः पतिरिति द्वितीयांतात्कुमारी शब्दादुपयंतरि प्रत्ययः कौमारीति इह कुमारीशब्दात्प्रथमांतात्स्वार्थे प्रत्ययः टिड्ढाणेति ङीप् तत्रोद्धृतं सास्मिन्योर्णमासीति सूत्रात्साक्तत्रे

कौमारापूर्ववचने। ४।२।१३। कौमारेत्यविभक्तिको निर्देशः। अपूर्वत्वे निपातनमिदं। अपूर्वं पतिं कुमारीमुपपन्नः। कौमारः पतिः। यद्वा अपूर्वं प तिं कुमारी पतिमुपपन्ना। कौमारी भार्या। तत्रोद्धृतममत्रेभ्यः। ४।२।१४। शरावे उद्धृतः। शाराव ओदनः। उद्धृत इति रिहोद्धरणपूर्वके निधाने वर्त्त ते तेन सप्तमी उद्धृत्य निहित इत्यर्थः। स्थण्डिलाच्छयितरि व्रते। ४।२।१५। तत्रेत्येव समुदायेन चेद्व्रतं गम्यते स्थण्डिले शयितुं नियमो स्य स्थाण्डिलो भिक्षुः। संस्कृतं भक्षाः। ४।२।१६। सप्तम्यन्तादण् स्यात् संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रे संस्कृताः भ्राष्ट्राः। अष्टसु कपालेषु संस्कृ तः अष्टाकपालः। पुरोडाशः। शूलोखाद्यत्। ४।२।१७। अणोपवादः। शूले संस्कृतं शूल्यं मांसं। उखा पात्रविशेषः। तस्यां संस्कृतं उख्यम्। दध्न ष्ठ क्। ४।२।१८। दध्नि संस्कृतं। दाधिकं। उदश्वितोऽन्यतरस्याम्। ४।२।१९। ठक् स्यात्पक्षेऽण्॥

\\ त्यधिकारः पात्र वाचिभ्यः सप्तम्यन्तेभ्य उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः शाराव इति भुक्तोच्छिष्ट इत्यर्थ इति वृत्तिकृत् अवशिष्ट इति तदर्थः उच्छिन्नष्टिन सर्वं जुहोतीति कल्पसूत्र व्यवहारात् सप्तमीति निधानक्रियापे क्षया अधिकरणत्वादिति भावः स्थण्डिलात् व्रतं शास्त्रेण विहितो नियमः तस्मिन्समुदायेन गम्ये सप्तम्यन्ताद्यथाविहितः प्रत्ययो भवति शयितर्यर्थे अष्टाकपाल इति ॥ द्विगोर्लुगनपत्य इत्यणो लुक् शूलोखा संस्कृतं भक्षा इत्यनुवर्तते कथमुख्योऽग्निरिति न ह्यसौ भक्ष इति चेदत्राहुः दिगादित्वाद्भवार्थे यदिति दध्नष्ठक् दध्नीति संस्का र इह लवणादिना दधित्वधिकरणमात्रं यस्तु प्राग्वहतेरित्यत्र संस्कृतमिति ठग्वक्ष्यते स तृतीयांताद्बोध्यस्तेन दध्ना संस्कृतमपि दाधिकमेव ॥ ॥ ॥

मूलेनावाहयेद्देवीं श्रवणेनेत्यपुदाहरणं बोध्यम्॥ ॥ द्वन्द्वाच्छः विशेषे उदाहरणमाह तिष्येत्यादि अविशेषे तूदाहर्तव्यम् यथा राधानुराधीयमिति न चात्र लुब् विशेष
इति अण एव लुक् स्यात् पिलुप्स्यादिति वाच्यं मध्येऽपवादन्यायरीत्या पूर्वोपस्थितस्याण एव तत्र वृत्तेः यत्तु लुपं परत्वाद्बाधत इति वृत्तिकृतोक्तं तन्न द्वयोर्युगपत्प्राप्त्यभावात् दृष्टं
सामतृतीयान्तादृष्टमित्यर्थेऽणादयः स्युर्यद्दृष्टं तच्चेत्साम अस्मिन्नर्थे इति तथा च श्लोकवार्त्तिकं दृष्टे सामनि जाते वाप्यण् डिद्द्विर्वा विधीयते तीयादीकक् न विद्याया गोत्रादंकव
सामतृतीयान्तादृष्टमित्यर्थेऽणादयः स्युर्यद्दृष्टं तच्चेत्साम अस्मिन्नर्थे इति तथा च श्लोकवार्त्तिकं दृष्टे सामनि जाते वाप्यण् डिद्द्विर्वा विधीयते तीयादीकक् न विद्याया गोत्रादंकव
दिष्यत इति जातेऽर्थे यो द्विरण् स च वा डिदित्यन्वयः शातभिषजि जातः शातभिषः शातभिषजः इह हि प्राग्दीव्यत इति प्राप्तोऽण् कालाट्ठञा बाधितः स च संधिवेलादिसूत्रेण प्रति
प्रसूयत इत्ययं द्विरुक्तोऽण् तीयादिति तीयादीकक् स्वार्थे भवतीत्यर्थः द्वैतीयीकः तार्तीयीकः न विद्याया इति विद्यावाचकात्तीयान्तादीकक् न भवतीत्यर्थः द्वितीया विद्या गोत्रा

द्वन्द्वाच्छः॥४।२।६॥ नक्षत्रद्वन्द्वाद्युक्ते काले छः स्यात् विशेषे सत्यसति च। तिष्यपुनर्वसवीयमहः। राधानुराधीया रात्रिः। दृष्टं साम॥४।२।७॥ तेने
त्येव वसिष्ठेन दृष्टं वासिष्ठं साम। अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः॥ उशनसा दृष्टं औशनसं। औशनं। कलेर्ढक्॥४।२।८॥ कलिना दृष्टं कालेयं साम। वाम
देवाड्ड्यड्ड्यौ॥४।२।९॥ वामदेवेन दृष्टं साम ——————— वामदेव्यं सिद्धे यस्येति लोपेन किमर्थं यपतो डितो ग्रहणं मा तदर्थे भूद्वामदेव्यस्य
नञ्स्वरे १ परिवृतो रथः॥४।२।१०॥ वस्त्रैः परिवृतो वास्त्रो रथः। रथः किं वस्त्रेण परिवृतः कायः। समन्ताद्वेष्टितः परिवृत उच्यते। तेनेह न। छात्रैः परिवृ
तो रथः। पाण्डुकम्बलादिनिः॥४।२।११॥ पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली। पाण्डुकम्बलशब्दो राजास्तरणपाण्डुवर्णकम्बलस्य वाचकः। म
त्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम्। द्वैपवैयाघ्रादञ्॥४।२।१२॥ द्वीपिनो विकारः द्वैपम्। तेन परिवृतः द्वैपो रथः। एवं वैयाघ्रः॥ ॥ ॥

दंकवदिति गोत्रप्रत्ययान्तादंकेयः प्रत्ययः स इष्टे सामन्यपि भवति औपगवेन दृष्टमौपगवकम् इह गोत्रचरणाद्वुञिति वुञ् वामदेवात् ग्रहणं मा तदर्थे इत्यादि अतदर्थे यय
तोऽश्वातदर्थे इति विहितेन ञ्स्वरेण आश्रितस्वरे ड्यड्यतोर्ग्रहणं मा भूदित्यर्थः ययतोश्चेति सूत्रेण विधीयमानेन नञः परस्य यत्यदन्तस्योत्तरपदस्यान्तोदात्तत्वं वामदेव्यशब्दे मा भू
त्किं त्वव्ययपूर्वपदस्वर एव यथा स्यादित्येतदर्थे डित्करणमिति फलितोऽर्थः न च कृतेऽपि डित्त्वे ययतोरित्यस्य प्रवृत्तिः कुतो नेति शंक्यं निरनुबंधकग्रहणे न सानुबंधकस्येति तद
नुबंधकग्रहणे नातदनुबंधकस्येति परिभाषयोः सत्त्वात् इमे च परि -भाषे इह हे वडित्वेन ज्ञाप्येते तत्राद्यायाः प्रयोजनं इरणग्रणेतिसूत्रेत व्यग्रहणे तव्यतोऽग्रहणं द्वितीय

साऽस्यासेतिप्रकृतेसंज्ञासंबद्धमितिपुनःसाग्रहणंकृतमित्याहुः इहैवसूत्रेनिपातनाद्देवशब्दात्स्वार्थेतल् मंत्रस्तुत्येतिमंत्रेणस्तुत्या एतिस्तुशास्वित्यादिनाक्यपितुक् आग्नेयोवैब्रा
ह्मणइति इहाग्न्युद्देशेनब्राह्मणोनत्यज्यतइतिकथमयंप्रयोगइतिनशंक्यंइतिभावः परत्वादादिवृद्धिरिति इदंचसमाधानंन्याय्यमित्यत्रावश्यकमितितेनैवपरिहारसं
भवादित्वविधानसामर्थ्यमिहनाश्रितंउक्तरूपमितिनपादित्यस्यनमइति रूपमित्यर्थः शतरुद्रइतिशतशब्दोऽनंतवचनः सोमीतिहलस्तद्धितस्येतियलोपः।ईदूतः

साऽस्यदेवता।४।२।२४ इन्द्रोदेवताऽस्येतिऐन्द्रंहविः।पाशुपतं।बार्हस्पत्यं।त्यज्यमानद्रव्येउद्देश्यविशेषोदेवता।मन्त्रस्तुत्याच।ऐन्द्रोमन्त्रः।आग्ने
योवैब्राह्मणोदेवतयेति।शेषविकेऽर्थेसर्वनाम्नीतिढक्।कस्येत्।४।२।२५।कशब्दस्यइकारादेशःस्यात्प्रत्ययसन्नियोगेनायस्येतिलोपात्परत्वा
दादिवृद्धिः।कोब्रह्मादेवताऽस्याकायंहविः।श्रीर्देवताऽस्याश्रायं।शुक्राद्घन्।४।२।२६।शुक्रियं।अपोनप्त्रपान्नप्तृभ्यांघः।४।२।२७।अपोनप्त्रि
यम्।अपान्नप्त्रियं।अपोनपात् अपान्नपादेवदेवताप्रत्ययसन्नियोगेनतूक्तरूपन्निपात्यतेअतएवापोनपात्तोअपान्नपातेत्रूहीतिप्रैषः।छ
च।४।२।२८।योगविभागोयथासंख्यनिवृत्त्यर्थः।अपोनप्त्रीयं।अपान्नप्त्रीयं।शतरुद्राद्घश्च।च।छः।शतंरुद्रादेवताऽस्यशतरुद्रियंशतरुद्रीयंच
ञ्।४।२।२९।योगविभागोयथासंख्यनिवृत्त्यर्थः।महेन्द्राद्घाणौच।४।२।२९।चाच्छः।महेन्द्रियंहविः।माहेन्द्रं महेन्द्रीयं।सोमाट्ट्यण्।४।२।
३० सौम्यं।टित्वान्ङीप्।सौमी।ऋक्।वाय्वृतुपित्रुषसोयत्।४।२।३१।वायव्यं।ऋतव्यं।रीङृतः।७।४।२७।अकृद्यकारेऽसार्वधातुकेयकारेच्वौचपरे
ऋदन्ताङ्गस्यरीङादेशःस्यात्।यस्येतिच।पित्र्यं।उषस्यं।द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छच।४।२।३२।चाद्यत्।
द्यावापृथिवीयं।द्यावापृथिव्यं।शुनासीरीयं।शुनासीर्यं।अग्नेर्ढक्।४।२।३३।आग्नेयः॥ ११ अंगवृत्तपरिभाषयाऽकृतत्सार्वेतिदीर्घोनप्रवर्ततइतिदीर्घग्र
हणमित्याहुः यस्येतिचेति।पित्रीयतीत्यत्ररीङ्विधिः सावकाशइतिभावः उषस्यमिति उषस्शब्दःस्त्रीलिंगोदिवोदुहितरंदेवतांब्रवीति।द्यावापृथ्व्यणण्ययोरपवादः।शुनासी
रीयमितिशुनश्चसीरश्चेतिद्वन्द्वेदेवताद्वन्द्वेचेत्यानङ् शुनोवायुःसीरआदित्यइतिनिरुक्त।हरदत्तस्तुशुनासीरशब्दइन्द्रस्यगणवाचीत्यन्येमन्यंतइत्याहतथाचमंत्रःइंद्रवयंशुनासी

इसुसुक्तान्तात् तादित्युक्तेप्यंगविशेषणेनैव तांतादिति लब्धे अतग्रहणं प्रत्ययोपदेशकाले पस्तांतस्तस्मात्परस्य ठस्य कादेशो यथा स्यादित्येवमर्थं तेन माथितिक इत्य
त्र ठस्य इकादेशः यस्येति लोपे च कृते तांतत्वेपि इकस्य कादेशो न भवतीति ठस्येक इति सूत्रे कैयटः सन्निपातपरिभाषयैव इकस्य कादेशो न स्यादित्यंतग्रहणं त्यक्तुं शक्य
मित्यन्ये उदश्वित् इति श्वयतेः क्विपि उदकस्योद इत्युदादेशः इहैव निपातनात्संप्रसारणाभावः सास्मिन् सेति प्रथमांतादस्मिन्निति सप्तम्यंतार्थे प्रत्ययः स्याच्चः प्र

इसुसुक्तान्तात्कः ७।३।५१ इस उस उक त एतदन्तादङ्गात्परस्य ठस्य कस्यात्। उदकेन श्वयति वर्द्धते इत्युदश्वित् तत्र संस्कृतः औदश्वित्कः
। औदश्वितः इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह। आशिषा चरति। आशिषिकः। उषा चरति औषिकः। दोष उपसंख्यानम्॥ दोर्भ्यां चरति॥
दौष्कः क्षीराड्ढञ् ४।२।२०। अत्र संस्कृतमित्येव सम्बध्यते न तु भक्षा इति। तेन यवाग्वामपि भवति। क्षैरेयी। सास्मिन्पौर्णमासीति ४।२।२१ इति
शब्दात्संज्ञायामिति लभ्यते। पौषी पौर्णमासी अस्मिन्। पौषो मासः। आग्रहायण्यश्वत्थाट्ठक् ४।२।२२ अग्रे हायनमस्या इति। आग्रहायणी।
प्रज्ञादेराकृतिगणत्वादण्। पूर्वपदात्संज्ञायामिति णत्वं। आग्रहायणी पौर्णमासी अस्मिन् आग्रहायणिको मासः॥ अश्वत्थेन युक्ता पौर्णमा
सी। अश्वत्थः निपातनात्पौर्णमास्यामपि लुप्। आश्वत्थिकः। विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ४।२।२३ एभ्यष्ठग्वा पक्षेऽण्। फा
ल्गुनिकः। फाल्गुनो मासः। श्रावणिकः। श्रावणः। कार्त्तिकिकः। कार्त्तिकः। चैत्रिकः। चैत्रः॥

थमांतार्थे स्यात् चेत्पौर्णमासी भवति इतिशब्दादिति सहिलोकिकीं विवक्षामनुसारयति वृत्तिकृता तु सूत्रे एव संज्ञायामिति प्रक्षिप्तं पौर्णमासीति पूर्णो मासोऽस्यां तिथा
विति बहुव्रीहौ प्रज्ञादित्वात्स्वार्थिकोऽण् इति हरदत्तादयः तदस्मिन्वर्त्तत इत्यधिकारे पूर्णमासादण्वक्तव्य इति वार्तिकं न कर्त्तव्यमिति तदाशयः॥

र्केका कवचकच्छकशब्दाः प्राणिनां कुरवीणामिति फिट्सूत्रेणाद्युदात्ताः प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे तेषामुदात्तः स्यादिति सूत्रार्थः अथादिः प्राक्शकटेरित्यधि
कारात्पञ्चवृत्तिन्यासयोः शौकमित्युदाहृतं तदुपेक्ष्यं खण्डिकादिषु शुकशब्दस्य पाठात्तत्राञ्ञा भाव्यमिति हरदत्तादयः ॥ ॥ भिक्षादिभ्योण् भैक्षमिति अचित्तत्वाट्ठका प्रः
गार्भिणमिति अनुदात्तादित्वादञ्ञा प्राप्तः सति हि तस्मिन्नाद्युदात्तत्वाट्टिलोपो न स्यात् न च भस्याढे इति पुंवाचकरूपातिदेशान्न टिलोपः स्यादिति वाच्यं हस्तिनीनां समूहो हास्तिकमि
त्यत्रापि टिलोपानापत्तेः तस्मात् स्त्रीप्रत्ययनिवृत्तिमात्रपरं न तु नरूपातिदेशकमिति बोध्यं यौवनमिति युवतिशब्दस्यानुदात्तादित्वादञ्ञि प्राप्तेऽणर्थमिह पाठः पुंवद्भावा
त्तिप्रत्ययनिवृत्तिः अन्निति प्रकृतिभावः ननु भस्याढ इत्यत्र ढे तद्धिते विवक्षिते पुंवद्भाव इत्यभ्युपगमात्तद्धितोत्पत्तेः प्रागेव तिप्रत्ययनिवृत्तौ सत्यां कनिन्युवृषीति कनिनं

भिक्षादिभ्योऽण्। ४।२।३८। भिक्षाणां समूहो भैक्षं। गर्भिणीनां समूहः। गार्भिणं। इह भस्याढ इति पुंवद्भावे कृते इनण्यनपत्ये। ६।४।१६४। अनप
त्यार्थेऽणि परे इन् प्रकृत्या स्यात्। तेन नस्तद्धित इति टिलोपो न। युवतीनां समूहः। यौवनं। शत्रन्तादनुदात्तादेरञ्। यौवतं। गोत्रोक्षोष्ट्रोरभ्रराजराजन्यरा
जपुत्रवत्समनुष्याजाद्वुञ्। ४।२।३९। एभ्यः समूहे वुञ् स्यात्। लौकिकमिह गोत्रं तच्चापत्यमात्रं। युवोरनाकौ। ७।१।१। युवु एतयोरनुनासिकयोः क्र
मादन अक एतावादेशौ स्तः। ग्लुचुकायनीनां समूहः। ग्लौचुकायनकं। औक्षकमित्यादि। आपत्यस्येति यलोपे प्राप्ते। प्रकृत्याके राजन्यमनुष्य
युवानः। राजन्यकं। मानुष्यकं। वृद्धाच्चेति वक्तव्यम्॥ वार्द्धकं। केदाराद्यञ्च। ४।२।४०। चाद्वुञ्। कैदार्यं। कैदारकं। गणिकायाश्चेति वक्तव्यम्॥ गा
णिक्यं। ठञ् कवचिनश्च। ४।२।४१। चात्केदारादपि। कवचिनां समूहः। कावचिकं। कैदारिकं॥ ९९ ॥

ततयाऽऽद्युदात्तत्वादण् सिद्ध एवेति चेन् सत्यं अत एव भा
ष्ये भिक्षादिषु युवतिशब्दपाठः प्रत्याख्यातः इह युवतिशब्दपाठसामर्थ्यात्पुंवद्भावो नेति वृत्तिकारोक्तिरप्यत एव निरस्ता ननु एवं गार्भिणं यौवतं गणेष्वित्यादिप्रयोगा भाष्यमतेन
संगच्छेरन्नित्याशंक्याह शत्रन्तादिति युवोः समाहारद्वन्द्वे सौत्रं पुंस्त्वं उकार उच्चारणार्थः नेत्संज्ञकः तेन नन्दनः कारकः नन्दना कारिका इत्यत्र गित्त्वप्रसक्तौ तु मङ्ङीपौ न स्तः
अनुनासिकयोरिति किं ऊर्णायुः प्रकृत्याक इति इह राजन्यमनुष्यग्रहणं व्यर्थं रूढिशब्दत्वेन आपत्यस्य चेति यलोपस्य प्राप्त्यभावात् अत एव गोत्रोक्षेत्यत्र तयोर्ग्रह
णं सार्थकम् अन्यथा गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहणं न कुर्यात् ॥ ॥ ॥ ॥

वामहइतिमरुतोस्यसंतीतिमरुत्वानिंद्रः मरुत्त्वतीयंमरुत्वत्यं अग्नीषोमीयं अग्नीषोम्यं ईदग्नेस्सोमवरुणयोः वास्तुनःपतिः वास्तोष्पतिः इहैवसूत्रे निपातनात्साधुः वेश्मभूर्वा सुरस्त्रियांवास्तोष्पतीयंवास्तोष्पत्यं गृहमेधीयंगृहमेध्यं गृहमेधशब्दोऽकारान्तस्तथाच आश्वलायनः मरुद्भ्योगृहमेधेभ्यइति॥ ॥ कालेभ्योकालवाचिभ्योयेप्रत्ययाभवा र्थेवक्ष्यन्तेतेसास्यदेवतेत्यस्मिन्नर्थेऽनेनातिदिश्यन्तेवत्करणंसर्वसादृश्यार्थंतेनयस्माद्योविहितस्ततस्सएवभवतिनान्यः तथैवोदाहरतिमासिकंप्रावृषेण्यमितिका लाट्ठञ् प्रावृषएण्यः डामहजितिएतच्चवृत्त्यापज्ञुरोधेनोक्तंभाष्येतुआनङादेशोमहच्प्रत्ययश्चनिपात्येतेतेनावग्रहः सिध्यतीत्युक्तंसकारपाठेति अन्यथाप्रक्रियालाघवाय

कालेभ्योभववत्।४।२।३४। मासिकं।प्रावृषेण्यं।महाराजप्रोष्ठपदाट्ठञ्।४।२।३५। माहाराजिकं।प्रौष्ठपदिकं।देवताद्वन्द्वेच।७।३।२१। अत्रपूर्वोत्तरपद योरादयचोर्वृद्धिस्यात्।ञितिणितिकितिचपरे। आग्निमारुतं।नेन्द्रस्यपरस्य।७।३।२२।परस्येन्द्रस्यवृद्धिर्नस्यात्।सोमेन्द्रः।परस्यकिं।ऐन्द्राग्नः।दीर्घा च्चवरुणस्य।७।३।२३।दीर्घात्परस्यवरुणस्यनवृद्धिः। ऐन्द्रावरुणं।दीर्घात्किं। आग्निवारुणीमनड्वाहीमालभेत।तदस्मिन्वर्त्ततइतिनवयज्ञादिभ्यउ पसंख्यानं।नावयज्ञिकःकालः।पाकयज्ञिकः।पूर्णमासादण्वक्तव्यः।पूर्णःमासोऽस्यांवर्त्ततेइति।पौर्णमासीतिथिः।पितृव्यमातुलमातामहपितामहाः ४।२।३६। एतेनिपात्यन्ते।पितुर्भ्रातरिव्यत्।पितुर्भ्राता।पितृव्यः।मातुर्डुलच्।मातुर्भ्राता।मातुलः।मातृपितृभ्यांपितरिडामहच्॥मातुःपिता।माता महः।पितुःपिता।पितामहः।मातरिषिच्च मातामही।पितामही।अवेर्दुग्धेसोढदूसमरीसचोवक्तव्याः।सकारपाठसामर्थ्यान्नषः।अविसोढं।अवि दूसं।अविमरीसं।तिलान्निष्फलात्पिञ्जपेजौ।तिलपिञ्जः।तिलपेजः।वंध्यस्तिलइत्यर्थः।पिञ्जश्छन्दसिडिच्च।तित्पिञ्जः।तस्यसमूहः ४।२।३७।

काकानांसमूहः।काकम्।वाकं

षकारमेवपठेदितिभावः एतच्चमनोरमायांस्थितं अन्येतूक्तरीत्याअविसोढमित्यत्रषत्वनिवारणेऽप्यविदूसमित्यादौस्यादेवषत्वंतत्रहिएयंतात्क्विप्यविदूरित्यादिरूपसिद्धयेसकारपाठसामर्थ्यस्योपक्षीणत्वात् तस्मादविसोढमित्यादिभाष्यस्थोदाहरणेषुसकारपाठसामर्थ्यादितिव्याख्येयमि त्याहुः तस्यसमूहः इहाचित्ताट्ठकमनुदात्तादेरञंगोत्रान्ताद्वुञंकेदाराद्यञ्चेत्यादिनाप्रतिपदंयगादींश्चवक्ष्यतितथाचचित्तवदानुदात्तमगोत्रान्तंप्रतिपदोक्तप्रत्ययर हितमिहोदाहरणमित्याशयेनोदाहरतिकाकंवाकमितिएवंवा॥

तौ आगुपिकं शाकुलिकमित्यादौ परत्वादचित्तहस्तिधेनोरिति ठगेवेत्याशयेनेह सूत्रे चित्तवतमुदाहरन्ति कापोतमिति लघावन्ते द्वयोरिति सूत्रेण कपोतमयूरशब्दौ मध्योदात्तौ नच शाकुनीनां चलत्वं सर्वमित्याद्युदात्ता विमाविति शंक्यं अत्यात्पूर्वंलघूदात्तमिति तत्र व्याख्यानादित्याहुः खण्डिका आद्युदात्तार्थमचित्ताट्ठको बाधनार्थं च वचनं चरणेभ्यः यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते सतस्याः प्रकृतेस्समूहेपि स्यादित्यर्थः छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य इति तु चरणाद्धर्माम्नाययोरिति वार्तिकं तदप्यनेनैव अत्यादयो हि चरणेभ्यो वक्ष्यंते तेन चरणाद्धर्माम्नाययोरिति तु वार्तिकं तदप्यनेनैव वातिदेशसूत्रेण ज्ञाप्यते काठकमित्यादि गोत्रचरणाद्वुञ् कृदौगोक्थिकेतिभ्यः यञ्ञाविति यथासंख्यं तः ठगणाविति केशशब्दादचित्तत्वे न ठक् विषयो देशे तस्येत्यनुवर्तत इत्याह षष्ठ्यन्तादिति विषयशब्दार्थमाह अत्यंतेति भौरिका आभ्यां गणाभ्यां यथासंख्यमेतौ प्रत्ययौ स्तः भौरिकिविधमित्यादि क्लीबत्वं लोकात्॥ ॥ सोस्या

सोऽस्यादिरिति छन्दसः प्रगाथेषु।४।२।५५॥ अण् पङ्क्तिरादिरस्येति। पाङ्क्तः प्रगाथः। स्वार्थ उपसंख्यानम्॥ त्रिष्टुबेव त्रैष्टुभः। संग्रामे प्रयोजनयोद्धृभ्यः।४।२।५६। सोस्येत्यनुवर्तते। सुभद्रा प्रयोजनमस्य संग्रामस्येति। सौभद्रः। भरता योद्धारोऽस्य संग्रामस्य। भारतः तदस्यां प्रहरणमिति क्रीडायां णः।४।२।५७। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। मौष्टा। घञः सास्यां क्रियेति ञः।४।२।५८। घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययस्स्यात्। घञ् इति कृद्ग्रहणं इति कारकसर्वस्यापि ग्रहणं। श्येनतिलस्य पाते ञे।६।३।७१। श्येनतिलयोर्मुमागमस्स्यात् ञ प्रत्यये पातशब्दे उत्तरपदे। श्येनपातोऽस्यां वर्तते श्येनम्पाता मृगया। तिलपातोऽस्यां वर्तते तैलम्पाता स्वधा। श्येनतिलस्य किम्। दण्डपातोऽस्यां वर्तते दाण्डपाता तिथिः।

दिरिति छन्दो नामाक्षरेयत्ता निबंधनं पंक्त्यादिरिह विवक्षितः तद्वाचकात्प्रथमान्तादस्येत्यादिमतिप्रत्ययः स्याच्च आदिमान्सः प्र गाथश्चेत् प्रग्रथ्यत इति प्रगाथः ग्रंथ संदर्भे इत्यस्मादकर्तरि च कारक इति कर्मणि घञ् पृषोदरादित्वान्नेफनकारयोर्लोपः अन्ये तु प्रगीयत इति प्रगाथः गेश्छन्द इत्यतः उषिकुषिगार्तिभ्यस्थनित्याहुः यत्र द्वे ऋचावावृत्त्या तिस्रः क्रियंते स प्रगाथः त्रैष्टुभमिति स्वार्थिकाः प्रत्ययाः प्रकृतितो लिंगवचनान्यतिवर्तंत इति न्यायेन क्लीबतेति भावः संग्रामे न तु प्रथमादित्यधिकारात्प्रथमोच्चारितसंग्रामवाचिन एव प्रत्ययः प्राप्नोति न प्रयोजनयोद्धृभ्य इत्यत आह सोस्येतीति एवं च प्रथमांतविशेषणद्वारा प्रयोजनादीनां प्रकृतित्वमस्येति प्रत्ययार्थविशेषणद्वारा संग्रामस्य प्रत्ययार्थत्वं च सुशकमिति भावः तथा चाय॥

दित्याहुः मूनोभावो यौवनिका मनोज्ञादित्वाद्वुञ् वार्द्धकमिति यदि द्वन्द्वे पि वार्द्धकमिति प्रयोगोस्ति तर्हि मनोज्ञादित्वं कल्पनीयमित्याहुः ॥ ॐ ॥ ब्राह्मणमाणवनगुत्रयो
यमी वृद्धास्तेभ्यः प्रकृतोयत्रेवास्तु वृद्धाचनियमित्वारूपे विशेषाभावात् नापि स्वरे विशेषः उभयथाप्याद्युदात्तत्वात् स्त्रियां विशेषस्तु न शक्य एव नपुंसकत्वात् यत्रश्चेत्यत्रा

ब्राह्मणमाणववाडवाद्यन् ।४।२।४२ ब्राह्मण्यं माणव्यं वाडव्यं पृष्ठादुपसंख्यानम् । पृष्ठ्यम् । ग्रामजनबन्धुभ्यस्तल् ।४।२।४३ ग्रामता । जनता । ब
न्धुता । गजसहायाभ्यां चेति वक्तव्यम् ॥ गजता । सहायता । अह्नः खः क्रतौ । अहीनः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतौ किं आह्नं इह ख
ण्डिकादित्वादञ् । अह्नष्टखोरेवेति नियमाट्टिलोपो न । पर्श्वा णस् वक्तव्यः । सिति च ।१।४।१६। सिति परे पूर्वं पदसंज्ञं स्यात् अभत्वाट्टेर्गुणो न
। पर्श्वूनां समूहः पार्श्वं । अनुदात्तादेरञ् ।४।२।४४ कापोतं मायूरं । खण्डिकादिभ्यश्च ।४।२।४५ अञ् स्यात् । खण्डिकानां समूहः खाण्डिकं चरणे
भ्यो धर्मवत् ।४।२।४६ काठकं । छान्दोग्यं । अचित्तहस्तिधेनोष्ठक् ।४।२।४७ साक्तुकं हास्तिकं धैनुकं । केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।४।२।४८ ।
पक्षे ठक् गणो । कैश्यं कैशिकं । अश्वीयं । आश्वं । पाशादिभ्यो यः ।४।२।४९ पाश्या तृण्या धूम्या ॥ वन्या । वात्या । खलगोरथात् ।४।२।५० खल्या गव्या ।
रथ्या ॥ इनित्रकट्यचश्च ।४।२।५१ ॥ खलादिभ्यः क्रमात्स्युः खलिनी । गोत्रा । रथकट्या खलादिभ्य इनिर्वक्तव्यः । डाकिनी । कुटुम्बिनी ॥ आ इति ग
णोयं । विषयो देशे ।४।२।५२ षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः । शिबीनां विषयो देशः शैबः । देशे किं । देवदत्तस्य विषयोऽ
नुवाकः । राजन्यादिभ्यो वुञ् ।४।२।५३ राजन्यकः । भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ।४।२।५४ भौरिकीणां विषयो देशः । भौरिकिविधं ।
भौलिकिविधम् । ऐषुकारिभक्तं । सारसायनभक्तम् ॥ ९९

प्रत्ययग्रहणाच्च ठञ्नुनानुवर्तिष्यते अस्वरितत्वादिति चेत् सत्यं अवृद्धादपि कृतस्त्रिद्विधानार्थं
यत्नवचनं तास्मिन्द्वार्थानुवादकं वार्तिकमाह पृष्ठादिति पृष्ठं स्तोत्रविशेषः पृष्ठ्य इति पृष्ठानां समूहः पृष्ठ्यः षडह इति जमत्वर्थलक्षणया बोध्यः ग्रामजनरत्तिरुतात्तु वार्ति
कस्थसहायशब्दोपि सूत्रे प्रक्षिप्तः । अनुदात्तादेरञ् ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्प्रतिपादकप्रातिशाख्यमित्यर्थः नेष्यते इति अनभिधानादिति भावः त्रिविद्येति त्रिस्रो विद्या अधीत इति विग्रहे तु तद्धितार्थे द्विगौ त्रिविद्य इत्येव स्यात् द्विगोर्लुगनपत्य इति लुक् प्रवृत्तेरिति भावः आख्यायिकेति गद्यपद्यरूपोऽयं ग्रन्थविशेष इत्यर्थः सर्वादेरिति सादेरित्येव सिद्धे सर्वादिग्रहणमर्थवत्परिभाषाज्ञापनार्थं॥ ॥सवार्तिक इति वा र्त्तिकां तमधीत इत्यर्थः अन्तवचने अव्ययीभावः अव्ययीभावे चाकाल इति सहस्य सभावः इकन्निति पदशब्द उत्तरपदं यस्य तस्मादिकन् शतशब्दात् षष्टिशब्दाच्च परो यः पथि न् शब्दस्तदन्तात् तु षिकन्वाच्य इत्यर्थः। शतपथिक इति वृत्तिकृता तु वार्त्तिके बहुलमिति पूरयित्वा शातपथ इत्यणंतमप्युदाहृतं तत्तु भाष्ये न दृष्टं वित्त्वफलं दर्शयति श

सवार्तिकः। द्विगोर्लुक् इति लुक्। द्वितन्त्रः। इकन्पदोत्तरपदात्॥ शतषष्टेः षिकन्पथः। पूर्वपदिकः। उत्तरपदिकः। शतपथिकः। शतपथिकी। षष्टि पथिकः। षष्टिपथिकी। क्रमादिभ्यो वुन्। ४। २। ६१। क्रमकः। क्रमपद शिक्षामीमांसा क्रमादिः। अनुब्राह्मणादिनिः। ४। २। ६२। तदधीते तद्वेदेत्यर्थे। ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणम् तदधीते अनुब्राह्मणी मत्वर्थीयेनैव सिद्धे अणबाधनार्थमिदम्। वसन्तादिभ्यष्ठक्। ४। २। ६३। वासन्तिकः। अथर्वाणमधीते आथर्वणिकः। दाण्डिनायनसूत्रे निपातनाट्टिलोपो न। प्रोक्ताल्लुक्। ४। २। ६४। प्रोक्तार्थकप्रत्ययात्परस्याऽध्येतृवेदितृप्रत्ययस्य लुक् स्यात्। पाणिनम्। पाणिनः घञर्थे कविधानमिति कः। सोऽस्यास्तीति पाणी तस्य गोत्रापत्यं पाणिनः। गाथिविदथिकेशिगणिपणिनश्च। ६। ४। १६५। एते ऽणि प्रकृत्या स्युः। इति टिलोपो न। ततो यूनि इञ्। पाणिनिः। ण्यक्षत्रियार्षञितो यूनि लुगणिञोः। २। ४। ५८। ण्यप्रत्ययान्तात्क्षत्रियगो त्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्तात् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात्। कौरव्यः पिता। कौरव्यः पुत्रः॥ \\ न पथिकीति अण

बाधनार्थमिति भाष्ये तु प्रत्याख्यातमेवेदं सूत्रं तद्धीत्यात्वणिष्यत इत्यनभिधानान्नेति वा वोध्यं वसन्तादिष्वेव वसन्तादीन् पठित्वा वसन्तादिषु वा उक्थादीन् पठित्वा अ न्यतरच्छक्यमवक्तुं अथर्वाणमिति अथर्वणा प्रोक्त उपपादयथर्वा तेन प्रोक्तमित्यधिकारे ऋषिभ्यो लुग्वक्तव्यः वशिष्ठः विश्वामित्रोऽनुवाक इत्युदाहृत्य अथर्वणो वाऽथ र्वा आथर्वणा इति भाष्योक्तः साधुः गाथिविदथि इन एयन पत्य इति सिद्धे अपत्येष्वणि प्रकृतिभावार्थमयमारंभः गाथिनः वैदथिनः कैशिनः गाणिनः पाणिनः एयक्षत्रि यार्षे कौरव्य इति कुर्वादिभ्यो ण्यः ततरञो लुक् कौरव्यः पुनः न त्रतिकादिषु कौरव्यशब्दः पठ्यते तथा च कौरव्यायणिरिति फिञा भाव्यं ॥ ॥ ॥

ऽण्
मिह सूत्रार्थः प्रयोजनवाचिभ्यो योद्धा चिभ्यश्च प्रथमांतेभ्योऽस्येति षष्ठ्यंतार्थे णस्यात् स च षष्ठ्यंतार्थः संग्रामश्चेदिति तदस्यां प्रथमांतात् प्रहरणोपाधिकात् सप्तम्यंतार्थे ऽण्
स्यात् स चेत् सप्तम्यंतार्थः क्रीडा भवति प्रहरणं किं माला भूषणमस्यां क्रीडायां किं खङ्ग प्रहरणमस्यां सेनायां घञः कृद्ग्रहणादिति तेन श्येनं पातेत्यत्र ञातीत्यग स्वविधौ यमा
नावृद्धिः सिद्धा श्येनपातस्यापि घञंतत्वादिति भावः घञः किं श्येन पतनमस्यां वर्त्तते क्रिया किं प्राकारोऽस्यां वर्त्तते तदस्यामिति प्रवृत्तेः पुनः सास्यामित्युक्तिः क्रीडायामि

तदधीते तद्वेद ।४।२।५९। व्याकरणमधीते वेद वा वैयाकरणः क्रतूक्थादिसूत्रान्ताट्ठक् ।४।२।६०। क्रतुविशेषवाचिनामेवेह ग्रहणं मुख्या
र्थेभ्यो वेदितरि तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः । वाजपेयिकः । उक्थ सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषो लक्षणया उक्थ
म् । तदधीते वेद वा औक्थिकः । मुख्यार्थात्तूक्थशब्दादुगणे नेष्यते । न्यायं नैयायिकः । वृत्तिं वार्त्तिकः । लोकायतं लौकायतिकः इत्यादि । सूत्रा
न्तात्वकल्पादेरेवेष्यते सांग्रहसूत्रिकः । अकल्पादेः किम् । काल्पसूत्रः । विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् । वायसविद्यिकः । गोलक्षणिकः ।
आश्वलक्षणिकः । पाराशरकल्पिकः । अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम् । आङ्गविद्यः क्षात्रविद्यः धार्मविद्यः त्रैविद्यः त्रिविद्या
तामधीते वेद वा त्रैविद्यः । आख्यानाख्यायिकेतिहासपुराणेभ्यश्चाय वक्तीतमधिकृत्य कृतमाख्यानमुपचारात् यावक्रीतं तदधीते वेत्ति वा यावक्री
तिकः । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता अधिकृते ग्रन्थे इत्यर्थे वृद्धाच्छः । तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप् । ततोऽनेन
ठक् । वासवदत्तिकः । ऐतिहासिकः । पौराणिकः । सर्वादेः सादेश्च लुग्वक्तव्यः । सर्ववेदानधीते सर्ववेदः । सर्वतन्त्रः ॥ ९९ त्यस्य निवृत्तिर्यथा स्यादिति ञ

तएवाह दंडयातोऽस्यांति यावितिः ॥ ॐ ॥ तदधीते द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात् द्वित्वग्रहणमधीयाने विदुषि च प्रत्येकं विधानार्थं तेनोत्तरत्र क्रतुवसंताद्य
प्रत्याह्तत्प्रतिपादकग्रंथे गौणत्वादधीयानेऽपि प्रत्ययं प्राप्नुवंत्यन्यथा तेषामध्ययनासंभवेन वेदितर्येव प्रत्ययः स्यादिति भावः क्रतूक्थादि क्रतुविशेषेति स्वरूपस्य तु न ग्रह
णं तथा त्वे सत्युक्थादिष्वेव क्रतुशब्दः पठ्यते नापि क्रतुपर्यायाणामुक्थादिगणे यज्ञशब्दपाठादिति भावः अध्येतरीति अध्येतर्यपीत्यर्थः आग्निष्टोमिक इति संस्या विशेषवा
च कस्याप्यग्निष्टोमशब्दस्य तत्संस्थाके क्रतौ निरूढप्रयोगः तल्लक्षणेत्यादि ॥ ॥ ॥ ॥

इहमं डूकस्तुत्यानुवृत्तं प्रोक्तादिति पञ्चम्यंतं जसंतत्वे न विपरिणम्यते छन्दोब्राह्मणानीत्यनेन सामानाधिकरण्यात् प्रोक्तशब्दश्च प्रोक्तार्थके प्रत्यये लाक्षणिक इत्याशयेना
ह प्रोक्तप्रत्ययांतानीति तद्विषयाणीति तच्छब्देन अध्येतृवेदितृप्रत्ययः परामृश्यते विषयशब्दस्त्विहानन्यभाववाची न तु देशवाचीत्यभिप्रेत्याह प्रत्ययं विना न प्रयोज्या
नीत्यर्थ इति पाणिनीयं पाणिनीया इति वद नियमेन प्रयोगे प्राप्ते नियमार्थमेतदिति भावः छंदो ग्रहणादेव सिद्धे ब्राह्मणग्रहणं चिरंतनप्रोक्तब्राह्मणानामेव तद्विषयत्वा

तदस्मिन्नस्तीति देशे तन्नाम्नि।४।२।६७। उदुम्बराः सन्त्यस्मिन् देशे औदुम्बरः। तेन निर्वृत्तम्।४।२।६८। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। तस्य निवा
सः।४।२।६९। शिवीनां निवासो देशः शैवः। अदूरभवश्च।४।२।७०। विदिशाया अदूरभवं नगरं वैदिशं। चकारेण प्रागुक्तास्त्रयोऽर्थाः सन्निधाप्यन्ते तेन व
क्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति। ओरञ्।४।२।७१। अणोऽपवादः। कक्षतु। काक्षतवं। नद्यां तु परत्वान्मतुप्। इक्षुमती। मतोश्च बह्वजङ्गात्।
४।२।७२। बह्वच् अङ्गं यस्य मतुपस्तदन्तात् अञ् स्यात्। सैध्रकावतं। बह्वजिति किं। आहिमतम्। अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तवि
शेषणं मा भूत्। बह्वचः कूपेषु।४।२।७३। अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः। उदक् च विपाशः।४।२।७४। विपाश उत्तरकूले ये कूपास्तेष्व
ञ्। अबह्वजर्थ आरम्भः। दत्तेन निर्वृत्तः कूपो दात्तः। उदक् किम्। दक्षिणतः कूपेष्वणेव। सङ्कलादिभ्यश्च।४।२।७५। कूपेष्विति निवृत्तं। सङ्कलेन नि
र्वृत्तं साङ्कलम्। पौष्कलं। स्त्रीषु सौवीरसाल्वप्राक्षु।४।२।७६। स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ्। सौवीरे दत्तामित्रेण निर्वृता दात्तामित्री नगरी। साल्वे
। वैधूमाग्री। प्राचि। माकन्दी। सुवास्त्वादिभ्योऽण्।४।२।७७। अञोऽपवादः। सुवास्तोरदूरभवं सौवास्तवम्। वर्णु। वार्णवम्। अणग्रहणं घाम्मतुपो
बाधनार्थं। सौवास्तवी॥ ११ ॥ थैतेनेह न याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि यज्ञेतात्कण्वादिभ्यो गोत्र इत्यण् आपत्यस्य चेति यलोपः याज्ञवल्क्या

दयो हि पाणिन्यपेक्षया नूतना इति वृत्तिरुक्तो व्यवहारः चकारोऽनुक्तसमुच्चयार्थः तेन काश्यपिनः कौशिकिन इत्यत्र कल्पे पि तद्विषयत्वं सिद्धं काश्यपकौशिकाभ्यामृषि
भ्यामिति प्रोक्ते णिनिः अध्येत्रणो लुक् छंदो ब्राह्मणानीति किं पाणिनीयं व्याकरणं अथ चातुरर्थिकाः॥ ॐ ॥ तदस्मिन् अस्तीत्युपाधिकात्प्रथमांतादस्मिन्निति सप्त
म्यंतार्थे यथाविहितं प्रत्ययः स्यात् प्रत्ययांतनाम देशश्चेत्॥ प्रत्ययांतं नाम यस्येति॥ बहुव्रीहिः मतुपोऽपवादः इति शब्दस्तु सकललोकप्रसिद्धे देशे यथा स्यान्नत्वाधुनि

नत्विञेति चेत्सत्यं कुरुनादिभ्यो ण्य इति क्षत्रियगोत्रे विहितो यो ण्यस्तदंतं तत्र पठ्यते प्रकृते न ब्राह्मणगोत्रप्रत्ययांतमित्यवधेयं॥ ॥ श्वाफल्क इति ऋष्यन्धकेत्यण् तत इञो लु-
क् श्वाफल्कः पुत्रः वासिष्ठ इति ऋष्यण् तत इञो लुक् वासिष्ठः पुत्रः तैकायनिरिति तिकादिभ्यः फिञ् ततो णो लुक् तैकायनिः पुत्रः वामरथ्य इति कुर्वादित्वात् ण्यस्ततो शूद्राच्छं
बाधित्वा कण्वादिभ्यो गोत्र इति शैषिको ण् इतीति ण्यः क्षत्रियार्षे त्युदाहृतसूत्रेणेत्यर्थः ऋष्यपाय वेति पाणिनशब्देन औत्सर्गिक एवाणिति भावः नन्विदं वान्यस्मिन्नपि ए-
इति सूत्रस्य भाष्यकैयटाभ्यां विरुध्यते अत्रेयं वापत्यानि तु मांसो अत्रयः इतश्चानिञ इति ढक् तदंताच्चून्यतइञ् तस्य ण्यक्षत्रिये ति लुक् अत्रिभृगुकुत्सेति ढको पि लुगित्युक्त-
त्वात् ऋष्यंधकेत्यण एव ग्रहणेन ढको अग्रहणात्ततः परस्येञो लुङ् स्यादित्याहुः वस्तुतस्तु वाक्षिपुत्रस्य पाणिनेरिति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयं इञश्चेतीति यूनि

श्वाफल्कः पिता। श्वाफल्कः पुत्रः। वासिष्ठः पिता। वासिष्ठः पुत्रः। तैकायनिः पिता। तैकायनिः पुत्रः। एभ्यः किं। शिवाद्यण् कौहडः पिता। ततइञ्
कौहडिः पुत्रः। यूनि किम्। वामरथ्यस्य छात्राः वामरथ्याः इति अणो लुक् तु न भवति। आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात्। पाणिनिना प्रो-
क्तम् पाणिनीयं वृद्धाच्छः इञश्चेत्यण् तु न गोत्रे य इञ् तदन्तादिति वक्ष्यमाणत्वात्। ततो ध्येतृवेदित्रणो लुक् स्यात्। स्वरे स्त्रियां च विशेषः। पाणिनीयः
। पाणिनीया। सूत्राच्च कोपधात्।४।२।६५। सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात्। प्रोक्तार्थप्रारम्भः। अष्टावध्यायाः परि-
माणमस्य अष्टकम्। पाणिनेः सूत्रम् तदधीयते विदन्ति वा अष्टकाः॥ छन्दोब्राह्मणानि च तद्विषयाणि।४।२।६६। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्य-
यान्तानि तद्विषयाणि स्युः। अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः। कठेन प्रोक्तमधीयते कठाः। वैशम्पायनान्तेवासित्वाणिनिः तस्य कठचर-
कादिति लुक्। ततोऽण् तस्य प्रोक्ताल्लुक्॥ ९९ लुगिति लुक्यपि प्रत्ययलक्षणेन इञ्जंतमस्तीति भावः गोत्रे य इञिति गोत्रमिह शास्त्रीयं न तु लौकिकमिति तत्र वक्ष्य-
त इति भावः स्वरे इति लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप् स्यात्। लुकि सति तु ईकार उदात्तः टाप् च सिध्यतीति भावः अष्टकमिति संख्यायाः संज्ञासंघसूत्राध्यय-
नेष्विति संख्यायाः अतिशदंतायाः कन् संख्याप्रकृतिकादिति संख्याप्रकृतिकप्रत्ययांतादित्यर्थः कालापक इति कलापिन्शब्दात् प्रोक्तार्थेण् सब्रह्मचारीत्युपसंख्यानादि-
लोपः ततो अध्येतर्यण् तस्य प्रोक्ताल्लुगिति लुक् कालापानामाम्नाय इत्यर्थे गोत्रचरणाद्वुञ् ततोऽध्येतृवेदित्रणो न लुक् स्वरे स्त्रियां च विशेषः छन्दोब्राह्मणानि॥ ॥

जनपदे लुप् तन्नाम्नीत्येव नेह उदुम्बराः सन्त्यस्मिन्नौदुम्बरो जनपदः न त्वत्र लुबन्तं नामधेयं जनपदस्यैकत्वादेकवचने प्राप्ते बहुवचनादिफलकमतिदेशमाह लुपि युक्तव
दिति व्यक्तिवचने किम् शिरीषाणामदूरभवो ग्रामः शिरीषाः वरणादिभ्यश्चेति लुप् तस्य वनं शिरीषवनं इह वनस्येति त्वमतिदिश्येत ततश्च विभाषौषधिवनस्पतिभ्य इ
ति णत्वं स्यात् न त्वत्र शिरीषाणामिति षष्ठी बहुवचनं कुतो नातिदिश्यत इति चेदत्राहुः वचनमिह संख्यानं त्वेकवचनद्विवचनादिनं चैवमपि संख्याबोधकत्वेन श्रुते
वषष्ठी परिगृह्यतामिति वाच्यं षष्ठ्यर्थस्य तद्धितवृत्त्यन्तर्गतत्वादुक्तार्थं प्रथमाया एव युक्तत्वादिति पञ्चाला इत्यादिय च युक्ताभिधेयलिंगवत्वे पीष्टसिद्धिस्तथापि क
टुवदर्यो अदूरभवो ग्रामः कटुवदरीत्यादिसिद्धये प्रकृतिलिंगातिदेश इति भावः पूर्वाचार्यानुरोधेन कृतं सूत्रं संप्रति प्रत्याचष्टे तदशिष्यमिति पञ्चालाः अंगाः वं

जनपदे लुप् ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात् । लुपि युक्तवद्व्यक्तिवचने ।१।२।५१। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चाला
नान्निवासो जनपदः पञ्चालाः कुरवः । अङ्गाः । वङ्गाः कलिङ्गाः । तदशिष्यं संज्ञाप्रमाणत्वात् ।१।२।५३। युक्तवद्वचनं न कर्तव्यं संज्ञानां प्रमाणत्वा
त् । लुब्योगाऽप्रख्यानात् ।१।२।५४। लुबपि न कर्तव्योऽवयवार्थस्येहाप्रतीतेः । योगप्रमाणे च तदभावेऽदर्शनं स्यात् ।१।२।५५। यदि हि योगस्याव
यवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत । प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।१।२।५६। प्रत्ययार्थः प्रधानमित्येवंरूप
म्वचनमप्यशिष्यं कुत अर्थस्य लोकत एव सिद्धेः । कालोपसर्जने च तुल्यम् ।१।२।५७। अतीतायां रात्रेः पश्चार्द्धेनागामिन्याः पूर्वार्द्धेन च स
हितो दिवसोऽद्यतनः । विशेषणमुपसर्जनमित्यादि पूर्वाचार्यैः परिभाषितं तत्राप्यशिष्यत्वं समानं लोकप्रसिद्धेः ॥९ गान्कलिंगा इत्यादयो जनप

दस्य यथायथं बहुवचनाद्यन्ता एव संज्ञाः न लत्रयत्नेन लिंगसंख्ये प्रतिपादनीये आपो दारा इत्यादिषु यथा न हि तत्र शास्त्रेण लिंगसंख्ये प्रतिपाद्येते इति भावः उपजीव
कं प्रत्याख्याप यजीव्यं प्रत्याचष्टे लुब्योगेति जनपदे लुप् वरणादिभ्यश्चेति द्विसूत्री लुप् शब्देन विवक्षिता अशिष्यमिति संबध्यत एवं तदाह लुबपीति प्रकृतिप्रत्ययार्
थयोः संबन्धो योग इत्याशयेन फलितमाह अवयवार्थस्येति अप्रख्यानादिति व्याचष्टे अप्रतीतेरिति पञ्चालादयः शब्दाः क्षत्रियेषु यथा रूढास्तथा जनपदेष्वपीति
तस्य निवासः अदूरभवश्चेति तद्धितो नैवोत्पद्यते किमनेन लुपो विधानेनेत्यर्थः न दृश्येतेति विना पि क्षत्रियसंबन्धं पञ्चालादिशब्दो जनपदेषु प्रयुज्यत इति नार्थः

कसंकेतितेपीत्येतदर्थः उत्तरसूत्रत्रयेपि देशे तन्नाम्नीत्यनुवर्तते तेन निर्वृत्तं अंतर्भावितण्यर्थस्तोः कर्मणि क्तः अदूर अदूरभवं तत्रभवतीत्यदूरभवः निपातनात्स
प्तमीसमासः चातुरर्थिकत्वमिति चतुर्णामर्थानां समाहारश्चतुरर्थी तत्रभवाश्चातुरर्थिकाः अध्यात्मादित्वाट्ठञ् चतुर्ष्वर्थेषु भवा इति तद्धितार्थे द्विगोर्तद्विगोर्लुगन
पत्य इति ठञो लुक् स्यात् मतोश्च ननु मतौ बह्वच इत्येवास्तु बह्वचो विहितो यो मतुप् तदन्तादिति वैयधिकरण्येन व्याख्यानादिष्टं सिध्यति किमंगग्रहणेनेत्याशंक्यानि
वारयत्यंगग्रहणमिति मत्वंतविशेषणमिति संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादंगग्रहणाभावे मत्वंतविशेषणं स्यादेव ततश्चाहिमतमित्यादौ

रोण्याः ।४।२।७८। रोणीशब्दात्तदन्ताच्च अण् । कूपाञोपवादः । रौणः । आजकरौणः । कोपधाच्च ।४।२।७९। अण् । अञोपवादः । कार्णच्छिद्रकः कूपः
। कार्कवाकवः । त्रैशङ्कवः । वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्का
शबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ।४।२।८०। सप्तदशभ्यः सप्तदश क्रमात्स्युः चातुरर्थ्याम् । अरीहणादिभ्यो वुञ् । अरीहणेनानि
र्वृत्तं । आरीहणकं । कृशाश्वादिभ्यश्छण् । कार्शाश्वीयम् । ऋश्यादिभ्यः कः । ऋश्यकं । कुमुदादिभ्यष्ठच् । कुमुदिकं । काशादिभ्य इलः । काशिलः । तृणा
दिभ्यस्सः । तृणसं । प्रेक्षादिभ्य इनिः । प्रेक्षी । अश्मादिभ्यो रः । अश्मरः । सख्यादिभ्यो ढञ् । साखेयः । सङ्काशादिभ्यो ण्यः । साङ्काश्यं । बलादिभ्यो यः । बल्यं ।
पक्षादिभ्यः फक् । पाक्षायणः । पथः पन्थ च । पान्थायनः । कर्णादिभ्यः फिञ् । कार्णायनिः । सुतङ्गमादिभ्य इञ् । सौतङ्गमिः । प्रगद्यादिभ्यो ञ्यः । प्राग
द्यः । वराहादिभ्यः कक् । वाराहकः । कुमुदादिभ्यष्ठक् । कौमुदिकः ॥ ११

वृत्तिप्रसंगः स्यादिति भावः ॥ ःः ॥ रोणी रोणीशब्दः प्रत्ययमुत्पादयतीत्यर्थ
स्तथा च फलितमाह रोणीशब्दादिति पंचम्यास्सौत्रो लुगित्यन्ये तदन्तादिति येन विधिरिति सूत्रे भाष्यस्थविशेषवचनाद्धि विशेषणविशेष्ययोः कामचारमाश्रित्य
समासप्रत्ययविधौ प्रतिषेध इत्यस्य प्रत्याख्यानाज्ज्ञातं तदन्तविधिरिति भावः वुञ्छण्ठक इत्येतमेकं समस्तपदं अरीहणादि परं तत्र प्रथमतः कुमुदान्तानां चतुर्णां द्व
न्द्वं विधाय द्वितीयेन काशादिकुमुदान्तद्वंद्वेन सह पुनर्द्वन्द्वो बोध्यः तेन कुमुदशब्दस्य द्विः पाठेपि नैकशेषः आदिशब्दः प्रत्येकं संबध्यत इत्याह अरीहणादिभ्य इति
पक्षाद्यन्तर्गणसूत्रमाह पथ इति ॥ १ ॥

लाज्जनपदस्सुभिक्षः संपन्नपानीयइतिप्रयोगइति चेत्जनपदविशेषणत्वादित्यवेहि पंचालविशेषणत्वाभ्युपगमेतुतद्द्लिंगवचनेस एव पंचालाः सुभिक्षाःसंप
न्नपानीयाइतिहरीतक्यइति हरीतक्यादिभ्यश्चेत्यरोऽप्युक्तत्र हिलुप्चेत्यतोलुबनुवर्त्ततेखलतिकमितिवरणादिभ्यश्चेतिलुप् चंचेति संज्ञायामितिकनोलुम्मनुष्य
इतिलुप् चंचात्तृणमयःपुमान्वरणादिचकारोऽनुक्तसमुच्चयार्थस्तेनास्याकृतिगणत्वंसिद्धं वरणाइति एवंकटुवदरीशिरीषाः गोदोखलतिकमित्यादीन्युदाहर्त्तव्यानिव
त्वस्यासिद्धत्वात्तस्मिन्कर्त्तव्येटिलोपोनस्थानिवदित्याशयेनाहयइतिनञ्चानित्यत्वापिपरत्वात्मयइत्यनेनैववकारेणनउमाडुपधायाइत्यनेनेतिभावः नचासिद्धत्वान्माडु
पधायाइत्येवतत्रन्याय्यमितिवाच्यम्प्रकरणेप्रकरणमसिद्धंनतयोगेयोगइति उपसर्गादसमासेपीत्यत्रभाष्येनिर्णीतत्वात्ननुवेतस्वानित्यत्रवेतसशब्दस्यसुवन्त
त्वेनपदत्वात्उमतुपोडित्त्वसामर्थ्याट्टिलोपेएकदेशविकृतन्यायेनपदत्वात्तस्यरुत्वं स्यात् नचस्थानिवत्त्वेननिर्वाहः पूर्वत्रासिद्धेतन्निषेधादितिचेन्नैवंअन्तरंगरु
त्वंप्रतिबहिरंगस्यटिलोपस्यासिद्धत्वात् नचषाष्ठीबहिरंगपरिभाषात्रैपादिकंनजानातीतिवाच्यंकार्यकालपक्षाभ्युपगमात् नन्वेवमपिस्वादिष्विति सान्तस्यपद
त्वेतदाश्रयरुत्वस्यांतरंगत्वाभावाद्बहिरंगपरिभाषानप्रवर्त्ततेइतिरुत्वंदुर्वारमेवनचनद्यांमतुबितिचतुरर्थ्यांमतुपोविधानाच्चातुरर्थिकोऽयंमतुपमत्वर्थीयइतितस्ये
मत्वर्थइत्यनेनभत्वंशंक्यंटिलोपस्यस्थानिवत्त्वात् नचपदत्वेप्येवंतस्यरुत्वविधिनासहकार्यकालतयापूर्वत्रासिद्धेनेतिनिषेधादिति चेदत्राहुः पदसंज्ञायांय
थोद्देशपक्षाश्रयणात्पूर्वत्रासिद्धेनेतिनिषेधाप्रवर्तनात्स्थानिवत्त्वप्रवृत्त्यासांतस्यापदत्वादिति एतेनघटीश्रामलकीत्यत्रस्वादिष्वितिपदत्वाज्जश्त्वंसादेतीत्यत्र
संयोगांतलोपः स्यादितिशंकापिपरास्तेतिदिक् नउप्रक्रियालाघवायड्मतुबेवविधीयतामथवाकुमुदनडवेतसेभ्योड्मितिप्रकृतस्यमतुपोडित्त्वमतिदिश्यतांकिमनेन
ड्मतुब्विधानेनसत्यं अन्यतोविधानार्थंतत्तत्सिद्धार्थकथनपरत्वात्तिकमाह महिषाच्चेति शिखायानिर्वृत्तादयर्थेदेशेतन्नाम्न्यणोबाधनार्थंचेदंदंतशिखात्संज्ञाया
मितिपंचमेवक्ष्यमाणत्वदेशेपिशिखावलइतिरूपसिद्ध्यर्थंनडादीनांनउ प्लक्षबिल्ववेणुवेत्रवेतसादयोनडादयःनडादयन्तर्गणसूत्रमाह कुंचेति। एवंतक्षन्नित्य
पिउभयत्रापिपक्ष्याः सौत्रोडुक् ———— ढेलोपइत्यतोलोपेऽइत्यनुवर्तमानेऽग्नहणंव्यर्थमित्याशंक्याह सर्वत्रोपार्थमिति यमात्रस्येतिन
चादेःपरस्येतीकारस्यभाव्यमितिवाच्यं सूर्यतिष्येत्यतोयकारसंबद्धस्यैवलोपस्यानुवर्तनादितिभावः ॥ ❀ ॥ ९ ॥ इतिचातुरर्थिकाः ॥ ६ ॥

प्रसंगात्सूत्रोपात्तं परिभाषितमन्यदपि प्रत्ययार्थप्रधानेत्यादिना ॥ ॥ विशेषणानां यद्यपि सूत्रपाठे लुपियुक्तवदिति सूत्रादनंतरमेतत्सूत्रं पठ्यते तदशिष्यमित्या

विशेषणानां चाऽजातेः ।१।२।५२। लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा। पञ्चाला रमणीयाः। गोदौ रमणीयौ। अजातेः किम्। पञ्चाला जनपदः। गोदौ ग्रामः। हरीतक्यादिषु व्यक्तिः ।१।२।५१। हरीतक्याः फलानि हरीतक्यः। खलतिकादिषु वचनम्। खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि। मनुष्यलुपि प्रतिषेधः। मनुष्यलुपो लुबर्थविशेषणानां न लुबन्तस्य तु भवतीत्यर्थः। चञ्चा अभिरूपः। वरणादिभ्यश्च ।४।२।८२। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः ॥ शर्कराया वा ।४।२।८३। अस्माच्चातुरर्थिकस्य वा लुप् स्यात्। ठक्छौ च ।४।२।८४। शर्कराया एतौ स्तः। कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्कौ। वा ग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण्। तस्य लुब्विकल्पः। षट् रूपाणि। शर्करा। शार्करं। शार्करिकं। शर्करीयं। शर्करिकम्। शार्करकं। नद्यां मतुप् ।४।२।८५। चातुरर्थिकः। इक्षुमती। मध्वादिभ्यश्च ।४।२।८६। मतुप् स्याच्चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्। कुमुदनडवेतसेभ्यो ड्मतुप् ।४।२।८७। कुमुद्वान्। नड्वान्। वेतस्वान्। झयो ऽय इति। अन्त्यमादुपधाया इति वक्ष्यमाणेन वः। महिषाच्चेति वक्तव्यम्। महिष्मान्नाम देशः। नडशादाड्ड्वलच् ।४।२।८८। नड्वलः। शादो जम्बालघासयोः। शाद्वलः। शिखाया वलच् ।४।२।८९। शिखावलम्। उत्करादिभ्यश्छः ।४।२।९०। उत्करीयः॥ नडादीनां कुक् च ।४।२।९१। नडकीयं। कुञ्चा ह्रस्वत्वञ्च। कुञ्चकीयः। तक्षन्नलोपश्च। तक्षकीयः। विल्वकादिभ्यश्छस्य लुक् ।६।४।१५३। नडाद्यन्तर्गता विल्वकादयस्तेभ्यश्छस्य लुक् तद्धिते परे। विल्वा यस्यां सन्ति सा विल्वकीया तस्यां भवा वैल्वकाः। वेत्रकीयाः। वैत्रकाः। छस्य किम्। छमात्रस्य लुग्यथा स्यात्कुको निवृत्तिर्माभूत्॥ अन्यथा सन्नियोगशिष्टानामिति कुगपि निवर्तेत। लुग्ग्रहणं सर्वलोपार्थं अन्यथा लोपो यिमात्रस्य स्यात्। इति चातुरर्थिकाः ॥

रूढत्वात्तत्रैवेदं व्याख्यातुमुचितं तथापि जातेः प्रतिषेधमात्रपरमिदं न तु युक्तवद्भावपरमित्याशयेन तत्र नोक्तमित्याहुः पंचाला रमणीया इति। कथं तर्हि पंचा

वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकारस्तावदावश्यकः शैषिकत्वप्रयुक्तकार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकार एव शैषिकान्मतुवर्थीयादित्यादि स्त्रीकं ज्ञाप
यति एव च स्त्रो॥ कः सन्निधौ मतुविधौ च भाष्ये पठित इह तु सूत्रे ते पठित इति तत्रैव व्याख्यास्यते अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमप्यधिकारस्त्वावश्यकः न चोक्तज्ञापके
नैव तात्सिद्धिरिति वाच्यं ज्ञापकस्य विशेषापेक्षत्वे दोषतादवस्थ्यात् आर्द्रकादिभ्योपदिकः स्यात्तर्हि चतुरर्थ्यामेवेति नियमस्यापि संभवाच्च एवं स्थिते चाक्षुषमित्यादि
गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमपि तस्य सुवचमिति दिक् विगृहीतादपीत्यादिवचनमेवेदं सूत्रे यथासंख्यप्रवृत्त्यर्थं विशिष्टोच्चारणात् कुत्सि
ताख्यपर इति इह बहुव्रीहिरपि सुवचः इहैव निपातनात् कोः कद्भावः कद्भावे त्रावुपसंख्यानमिति तु प्रत्याख्येयं कुल्याया यलोपश्चेति गणसूत्रं कुल्यायां जातः कौले
यकः कत्रिदं भिकुडिनमाहिष्मतीत्यादि दक्षिणा पश्चात् अव्ययमिति साहचर्यादिति भावः एवं च दाक्षिणात्य इत्यत्र सर्वनाम्नो वृत्तिमात्र इति पुंवद्भावशङ्कैव नासौ
तिवोध्यं पाश्चात्त्य इति कथं तर्हि पश्चात्तनैः कस्वनवचमान इति न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वा
च्यं अग्रादिपश्चादिति डिमचाऽस्य ट्युट्युलोर्बाधस्य दुर्वारत्वात् सत्यं पश्चात्तनेति पश्चात्तना इति कथंचित्समाधेयं कापिश्याः ष्फक् कापिशीशब्दात् ष्फक् स्यात्त्वा
न्नीषु तदाह कापिशायनीति रंकोरमनुष्ये रंकुर्जनपदस्ततः प्राग्दीव्यतोऽणित्यण्प्राप्तः तद्बाधकत्वेनावृद्धादपीति वुञ्प्राप्तस्तमपि बाधित्वा ओर्देशे ठञ्प्राप्तस्
स्यत्तु कोपधादण् बाधकस्ततोऽपि परत्वात् कच्छाद्यणि प्राप्तेऽनेन ष्फगणौ निधीयेते कोपधत्वादेवाणि सिद्धे कच्छादिषु रंकुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधा
नार्थ इति कैयटः अत एवाह रांकवको मनुष्य इति क्वचित्तु रांकव इति पठ्यते स तु लेखकप्रमादः स्यादेतत् अमनुष्यग्रहणमिह व्यर्थं अपवादेन वुञा तत्र ष्फगणो
र्बाधे नामनुष्य एव पर्यवसानात् अणग्रहणमपि व्यर्थमेव कच्छादित्वादेव तत्सिद्धेः अत्राह काशिकाकृत् नायं प्रसज्यप्रतिषेधः किंतु पर्युदासस्तेन मनुष्यभिन्ने
णिन्येव ष्फग्विधीयत इति रांकवः केवल इत्यत्र न ष्फक् विशेषविहितेन ष्फका अणो बाधा मा भूदित्यण्ग्रहणं च क्रियत इति भाष्ये तु अप्राणिन्यपि ष्फकमंगी
कृत्येदं द्वयमपि प्रत्याख्यातं ॥

शेषलक्षणंचेतिग्रहणंघुखादिष्वर्थेषूत्तरसूत्रानुपात्तेष्वेवअणोविधायकमित्यर्थः ननुलक्षणंतावद्व्यर्थं तस्येदमित्यनेनचाक्षुषादीनांसंस्कृतंभक्षा इत्यनेनदार्षदा
दीनांसिद्धेः तथाधिकारोपिव्यर्थः तथाहि अधिकारस्यापत्यादिचतुरर्थपर्यन्तेष्वर्थेषु घादिष्वसुक्तानांनिवृत्तिर्जातादावर्थसाकल्यंवाप्रयोजनंतत्रनिवृत्तिस्तावन्नप्रयो
जनं आर्द्रिकाशालादीनामुत्करादिपाठेन इतः प्राचीनेष्वर्थेषु घादयोनप्रवर्तन्तइतिज्ञापनात् अन्यथावृद्धाच्छ इत्येवसिद्धेतत्पाठस्यवैयर्थ्यप्रसंगात् नाप्यर्थसाकल्यं

शेषे।४।२।९२।अपत्यादिचतुरर्थ्यन्तादन्योऽर्थःशेषस्तत्राऽणादयःस्युः।चक्षुषागृह्यतेचाक्षुषंरूपम्।श्रावणःशब्दः।औपनिषदःपुरुषः।दृष
दिपिष्टादार्षदाःसक्तवः।उलूखलेक्षुण्णःऔलूखलोयावकः।अश्वैरुह्यतेआश्वोरथः।चतुर्भिरुह्यतेचातुरंशकटं।चतुर्दश्यांदृश्यतेचातुर्दशं
रक्षः।शेषइतिलक्षणंचाधिकारश्च।तस्यविकारइत्यतःप्राक्शेषाधिकारः।राष्ट्राऽवारपाराद्घखौ।४।२।९३।आभ्यांक्रमाद्घखौस्तःशेषे।राष्ट्रि
यः।अवारपारीणः।अवारपाराद्विगृहीतादपिविपरीताच्चेतिवक्तव्यम्।अवारीणः।पारीणः।पारावारीणः।इहप्रकृतिविशेषाद्घादयष्टयुट्युल
न्ताःप्रत्ययाउच्यन्ते।तेषांजातादयोऽर्थविशेषाःसमर्थविभक्तयश्चवक्ष्यन्ते।ग्रामाद्यखञौ।४।२।९४।ग्राम्यः।ग्रामीणः।कत्त्र्यादिभ्योढकञ्।४।२।
९५।कुत्सितास्त्रयःकत्त्रयः।तत्रजातादिःकात्त्रेयकः।नागरेयकः।ग्रामादित्यनुवर्तते।ग्रामेयकः।कुलकुक्षिग्रीवाभ्यःश्वास्यलङ्कारेषु।४।२।९६।कौ
लेयकःश्वा।कौलोऽन्यः।कौक्षेयकोऽसिः।कौक्षोऽन्यः।ग्रैवेयकोऽलङ्कारः।ग्रैवोऽन्यः।नद्यादिभ्योढक्।४।२।९७।नादेयम्।माहेयम्।वाराणसेयं।दक्षि
णापश्चात्पुरसस्त्यक्।४।२।९८।दाक्षिणात्यः।पाश्चात्यः।पौरस्त्यः।कापिश्याःष्फक्।४।२।९९।कापिश्यांजातादिका
पिशायनंमधु।कापिशायनीद्राक्षा।रङ्कोरमनुष्येऽण्च।४।२।१००।चात्ष्फक्।राङ्कवोगौः।राङ्कवायणः।अमनुष्येतिकिं।राङ्कवकोमनुष्यः॥ ॥

प्रयोजनंजाताधिकारात्प्राक्पाठसामर्थ्यादेवतल्लाभात् यदि संनिहितेजातार्थएवघादयस्स्युस्तदुत्तरेषुभवाद्यर्थेषुप्राग्दीव्यतइतिविशिष्टावधिपरिच्छिन्नेष्वर्थेषुविधी
यमानाऽणादयएवस्युस्तदाजाताधिकारानंतरमेवप्राग्घतोविन्यादिभिस्सहराष्ट्रावारपारेत्यादयोपिपठ्येरन्तस्माद्व्यर्थमिदंसूत्रमितिचेदत्रोच्यते शैषिकात्सरूपःशैषि

श्रमेहेति परिगणनेन ल्यपोऽभावात्तदाश्रौत्तराहशब्दोंतोदात्तः। स्त्रियां ङीष्विशेषः वक्ष्यमाणाविति सायंचिरमित्यादिनेति शेषः वक्ष्यत इति ष्वसस्तु इचेत्यत्र दिक्पूर्वे
श्रसंज्ञायामित्यत्र सोऽत्रत्वात् त्यं च मध्यर्थे सप्तमीत्याशयेनाह संज्ञाभूतायामिति॥ ॥मद्रेभ्योऽञ् बहुवचननिर्देशाज्जनपदवाची गृह्यते न तु भद्रपर्यायः दिशोऽमद्राणामि
ति दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याचामादेर्वृद्धिः स्यात् ञिति णिति किति च तद्धिते इति सूत्रार्थः पौर्वमद्र इति मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्

मद्रेभ्योऽञ् ।४।२।१०८। दिक्पूर्वपदादित्येव दिशोऽमद्राणामिति मद्रपर्युदासादादिवृद्धिः। पौर्वमद्रः। आपरमद्रः। उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्
४।२।१०९। अञ् स्यात्। शैवपुरम्। प्रस्थोत्तरपदपलद्यादिकोपधादण् ।४।२।११०। माहकिप्रस्थः। पालदः। नैलीनकः। कण्वादिभ्यो गोत्रे ।४।२।१११।
एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात्। कण्वो गर्गादिः। काण्व्यस्य छात्राः काण्वाः। इञश्च ।४।२।११२। गोत्रे य इञ् तदन्तादण् स्यात्। दाक्षाः। गोत्रे किं।
सौतङ्गमेरिदं सौतङ्गमीयं। गोत्रमिह शास्त्रीयं न तु लौकिकं तेनेह न। पाणिनीयं। न द्व्यचः प्राच्यभरतेषु ।४।२।११३। इञश्चेत्यणोऽपवादः। प्रौष्ठीयाः।
काशीयाः। भरतानां प्राच्यत्वेऽपि पृथग्ग्रहणं पादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम्॥ वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।१।१।७३। यस्य स
मुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्। त्यदादीनि च ।१।१।७४। वृद्धसंज्ञानि स्युः। वृद्धाच्छः ।४।२।११४। शालीयः। मालीयः। तदीयः। ए
ङ् प्राचां देशे ।१।१।७५। एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने। एणीपचनीयः। गोनर्दीयः। भोजकटीयः। पक्षे अण्। ऐणीपचनः।
गौनर्दः। भौजकटः। एङ् किं। आहिच्छत्रः। कान्यकुब्जः। वा नामधेयस्य वृद्धसंज्ञा वक्तव्या॥ देवदत्तः। दैवदत्तीयः। भवतष्ठक्छसौ ।४।२।११५। वृद्धाद्भ
वत एतौ स्तः। भावत्कः। भवदीयः। वृद्धादित्यनुवृत्तेः शत्रन्तादणेव भावतः॥

शब्देन सामानाधिकरण्यात्तद्धितार्थेति समासः। उदीच्यग्रहणं
निवृत्तं उदीच्यग्रामात् किम् माथुरः। बह्वचः किम् ध्वाजः। पिप्पल्यादि ङीषन्तो ध्वजीशब्दः। अन्तोदात्तात् किम् शार्कराधानः। शार्कराधानशब्दे धाशब्दाकार उदात्तः। दाद्युत्तर
पदप्रकृतिस्वरेणात्स्वरस्यावस्थानात्। शैवपुरमिति प्रस्थपुरवहान्ताच्चेति वुञ् न भवति वृद्धादिति तत्रानुवृत्तेः। प्रस्थोत्तरउदीच्यग्रामलक्षणस्याञोऽपवादः। पालद
इति पलदीति इकारान्त इत्येके। नान्त इत्यन्ये। न लोपे सति यणादेशात् संहितायां तुल्यैव। वाहीकशब्दः कोपधोऽपि पलद्यादिषु॥ ॥ ॥

द्युप्रागपागुदिति प्रागपागुदक्प्रतीचो यदित्येतस्मादित्यर्थः। ध्रुवाभिप्रायेणेदं द्युप्रागपागित्यादि। दिव्यमिति सूत्रे दिव उदित्त्वेन निर्देश इति भावः अपाचीदक्षिणा दिक् द्वितीयो वर्णो यकारो न तु ईजोक्तः यदिदं प्रागपागुदगित्यादौ तथा दर्शनादिति स्थि
तम् मनोरमायां केचित्तु प्राच्यपाचीप्रतीच्यस्तार इत्यमरकोशे अवाचीति ईतोक्तपाठं काचित्कं पुरस्कृत्य सूत्रे प्पवागिति पठित्वा अवाच्यमित्युदाहरंति प्रागपागिति
वेदे तु व्यत्ययेन वकारस्य पकार इति तेषामाशयः प्रागादयोस्त्यंताश्च व्ययास्तद्भिन्नास्त्वनव्ययाः उभयेषामपीह ग्रहणमविशेषात् कथं तर्हि संस्काराः प्राक्त

द्युप्रागपागुदक्प्रतीचो यत्।४।२।१०१। दिव्यं प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। कन्थायाष्ठक्।४।२।१०२। कान्थिकः। वर्णौ वुक्।४।२।१०३
वर्णुनदस्तस्य समीपदेशो वर्णुः तद्विषयार्थे वाचि कन्थाशब्दाद्वुक् स्यात्। यथा हि जातं हिमवत्सु कान्थकम्॥ अव्ययात्त्यप्।४।२।१०४। अमेहक्व
तसित्रेभ्य एव। अमान्तिकसहार्थयोः। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। परिगणनं किम्। उपरिष्टाद्भव औपरिष्टः। अव्ययानां भमात्रे
टिलोपः। अनित्योयं बहिषष्टिलोपविधानात्। तेनेह न आरातीयः। त्यब्नेर्ध्रुव इति वक्तव्यम्। नित्यः। निसो गते। ह्रस्वात्तादौ तद्धिते।८।३।१०१। ह्रस्वा
दिणः परस्य सस्य षः स्यात्तादौ तद्धिते। निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः। अरण्याण्णः। आरण्याः सुमनसः। दूरादेत्यः। दूरेत्यः। उत्तराद
हञ्। औत्तराहः। ऐषमोह्यःश्वसोऽन्यतरस्याम्।४।२।१०५। एभ्यस्त्यब्वा पक्षे वक्ष्यमाणौ ट्युट्युलौ। ऐषमस्त्यम्। ऐषमस्तनम्। ह्यस्त्यम्। ह्यस्तनम्। श्वस्त्यम्
श्वस्तनम्। पक्षे शौवस्तिकं वक्ष्यते। तीररूप्योत्तरपदादञ्ञौ।४।२।१०६। यथासंख्येन। काकतीरम्। पाल्वलतीरम्। शैवरूप्यम्। तीररूप्यान्तादिति नोक्तं व
हुच्पूर्वान्माभूत् वाहरूप्यम्। दिक्पूर्वपदादसंज्ञायां ञः।४।२।१०७। अणोपवादः। पौर्वशालः। असंज्ञायां किम्। संज्ञाभूतायाः प्रकृतेर्माभूत्। पूर्वेषु
कामशम्यां भवः पूर्वेषुकामशमः। प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः॥ ९ नाद्वेति अत्राहुः कालवाचिनः प्राक्कृदाद्यन्तं वाधित्वा परत्वाट्ट्युट्युलौ वा
ध्याविति वर्णौ वुक् वर्णुरिति। अहरभवश्चेत्यर्थे सुवास्त्वादित्वाद्गणि जनपदे लुबिति लुप् अमात्य इति अमाशब्दः समीपवाची स्वरादिः अमा समीपे भव इत्यर्थः। ह्र
स्वात्तादौ पदांतत्वात्स्यासप्राप्तावयमारंभः आदि ग्रहणं तु व्यर्थं यस्मिन्विधिरित्येव सिद्धेः ह्रस्वात्किं गीस्तरा धूस्तरा॥ तादौ किं सर्पिः साद्भवति तद्धिते किं सर्पिस्त
रति तिङः तस्य प्रतिषेधो वाच्यः भिद्युस्तरां ह्र रेत्य इति ह्र्रादागत इत्यादिरर्थः औत्तराह इति इहापि उदात्तत्वं स्त्रियां टाप् बोध्यः यदा तूत्तराच्चेत्याहि प्रत्यये ततोऽण् क्रियते

सूत्रमिदंवृद्धादेवेतिवृद्धाच्चेत्याचामेवेतिविपरीतनियमस्तुनभवति अप्राग्देशवाचिनोवृद्धस्यउवर्णान्तस्याभावात्॥धन्वयो॥ धन्वेतिनस्वरूपपर्याययोर्ग्रहणंवृ
त्त्वासंभवादित्याशयेनाह धन्वविशेषेति ऐरावतंधन्वेतिपद्यपिसमानौमरुधन्वानावित्यमरेणपुंस्त्वमुक्तंतथाप्याष्टकंनामधन्वेतिभाष्येहृस्वपाठान्नपुंसको
पिधन्वशब्दोस्त्येवेतिबोध्यंउत्तरेणेतिरोपधत्वादितिभावः॥ ॥जनपदश्चासौअवधिश्चेतिकर्मधारयाज्जनपदरूपएवावधिर्लभ्यतेनचजनपदत्वादेव

जनपदतदवध्योश्च॥४।२।१२४॥जनपदवाचिनस्तदवधिवाचिनश्चवृद्धाद्वुञ्स्यात्।आदर्शकः।त्रैगर्तकः।अवृद्धादपिबहुवचनविषयात्
४।२।१२५।अवृद्धाद्वृद्धाच्चजनपदतदवधिवाचिनोबहुवचनविषयात्प्रातिपदिकाद्वुञ्स्याद्वृद्धादणोवृद्धाच्छस्यापवादः।अवृद्धाज्जनप
दात्।आङ्गकः।अवृद्धाज्जनपदावधेः।आजमीढकः।वृद्धाज्जनपदात्।दार्वकः।वृद्धाज्जनपदावधेः।कालञ्जरकः।विषयग्रहणंकिं।एकशेषे
णबहुत्वेमाभूत्।वर्तनीच२ वर्तन्यः।तासुभवोवार्तनः।कच्छाग्निवक्त्रवर्त्तोत्तरपदात्।४।२।१२६।देशवाचिनोवृद्धादवृद्धाच्चवुञ्स्यात्।दारुक
च्छकः।कौण्डाग्नकः।सैन्धुवक्त्रकः।बाहुवर्त्तकः।धूमादिभ्यश्च।४।२।१२७।देशवाचिभ्योवुञ्।धौमकः।तैर्थकः।नगरात्कुत्सनप्रावीण्ययोः।
४।२।१२८।नगरशब्दाद्वुञ्स्यात्कुत्सनेप्रावीण्येचगम्ये।नागरकः।चौरःशिल्पीवा।कुत्सेतिकिं।नागराःब्राह्मणाः।अरण्यान्मनुष्ये।४।२
२९।वुञ्।अरण्याण्णइत्यस्यापवादः।पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्।आरण्यकःपन्थाः।वागोमयेषु।आरण्यकाःआर
ण्याःगोमयाः।विभाषाकुरुयुगन्धराभ्यां॥४।२।१३०॥वुञ्॥ ॥ सिद्धेश्चवधिग्रहणंव्यर्थंवुञेवयथास्यान्नान्यदित्येतदर्थंतस्यावश्यकत्वात्अतएवज
नपदावधिवाचिनस्त्रिगर्तशब्दाद्वर्त्तोत्तरपदादितिछोनभवतिकिंतुअवृद्धादपिबहुवचनविषयादित्युत्तरसूत्रेणवुञेवभवतीत्याशयेनोदाहरतित्रैगर्तकइति।
जनपदतदवध्योरितिसूत्रेजनपदावधिवाचिनउदाहरणंतुश्यामायनकइत्यादिबोध्यंनागरणब्राह्मणाइतिकच्छादिषुमाहिष्मतीतिसंज्ञाशब्दसाहचर्यात्संज्ञाभूत
नगरशब्दस्यैवढकञ्नागरेयकइतिभाव्यमितिभावःविभाषाकुरुकुरुशब्दःकच्छादिषुपठ्यते तत्सामर्थ्यात्पक्षेऽणसिद्धइतिपरिशेषाद्विभाषाग्रहणंयुगं॥ ॥

पठ्यते परं ठञं बाधितुं अन्यथा अणं बाधित्वा परत्वाच्छ एव स्यात् कोपधप्रयुक्तो णस्त्वदे सावकाश इति पक्षलोमनि भवो पाक्षलोमः अन्निति प्रकृतिभावस्तु नगणोऽस्मिन्नलो
पनिपातनादिति हरदत्तादयः सैतंगमेरिति शुतंगमादिभ्य आतरर्थिक इञ् शास्त्रीयमिति नन्वपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इति चेदत्राहुः पूर्वसूत्रे गोत्रमहणे
न पौत्रप्रभृति गोत्रं गृह्यते क एवादिभ्यो गोत्रे यः प्रत्ययो विहितः तदेतेभ्य इति गोत्रप्रत्ययानुवादेन तत्राविधानात् कएवादयश्च गर्गाद्यन्तर्गताः गर्गादिभ्यो यञ् नित्यन्न तु गो

काश्यादिभ्यष्ठञ्ञिठौ।४।२।११६। इकार उच्चारणार्थः। काशिकी। काशिका। वैदिकी। वैदिका। आपदादिपूर्वपदात्कालान्तात्। आपदादिराकृतिगणः
आपत्कालिकी। आपत्कालिका। वाहीकग्रामेभ्यश्च।४।२।११७। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः। छस्यापवादः। कास्तीरं नाम वाहीकग्रामः
। कास्तीरिकी। कास्तीरिका। विभाषोशीनरेषु।४।२।११८। एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः। सौदर्शनिकी। सौदर्शनिका। सौदर्शनीया॥
ओर्देशे ठञ्।४।२।११९। उवर्णान्ताद्देशवाचिनष्ठञ्। निषादकर्षूः। नैषादकर्षुकः। केण इति ह्रस्वः। देशे किम्। पटोश्छात्राः पाटवाः। ञिठं व्यावर्तयितुं ठ
ञ्ग्रहणं। वृद्धाच्छं परत्वादयं बाधते। दाक्षिकर्षुकः। वृद्धात्प्राचाम्।४।२।१२०। प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम्। आढकजम्बुकः। शाक
जम्बुकः। नेह माल्लवास्तवः। धन्वयोपधाद्वुञ्।४।२।१२१। धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात्। ऐरावतं धन्व
ऐरावतकः। साङ्काश्यकः। पिल्यशब्दो वुञ्छणादिसूत्रेणण्यान्तो। साङ्काश्यकः। काम्पिल्यकः। प्रस्थपुरवहान्ताच्च।४।२।१२२। एतदन्ताद्वृद्धाद्देशवा
चिनो वुञ् स्यात्। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। पैलुवहकः। पुरान्तग्रहणमप्रागर्थं प्राग्देशे तूत्तरेण सिद्धं। रोपधेतोः प्राचाम्।४।२।१२३।
रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् स्यात्। पाटलिपुत्रकः। ईतः। काकन्दकः॥ ११ नैकुंजादिभ्य इत्यतो गोत्र इत्यनुवर्त्तते न तु शास्त्रीयगोत्रमेव गृ
ह्यते अपत्याधिकारस्थत्वात् तदेव ह्रीञश्चेति सूत्रेऽनुवर्तत इति न ह्यत्र च अपवाद इति प्रतिषेध इत्यर्थः भरतानामग्रहणस्येति तेन इञः प्राचामिति भरतेभ्यो युवप्रत्य
यस्य लुङ् भवति औद्दालकिः पिता औद्दालकायनः पुत्र इति आहीदगोपच्छेति सूत्रे कैयटः भवतः ठञादिरयं प्रत्ययो न तु शादिः पदसंज्ञार्थं सित्करणादित्याशयेनाह
ञ्ञ्ञाविति॥ ॥ काश्यादिभ्यः इकार उच्चारणार्थ इति उभयत्र ञकार एवानुबन्धस्तस्य च्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थः इति भावः आपदादीति गण

ख्यानमितिन्यासकारोक्तिः संगच्छते केवलात्त्वशब्दादरोव सौवैद्यारादीनां चेत्यैचस्त्रीयमित्यत्रतुप्राकीतान्छः अंतरशब्दात्तु गहादित्वाच्छे नदन्तेन नशब्दस्य समासे स्वार्थेकनि चूनांतरीयकमितिभवति अविनाभूतमित्यर्थः दृद्धादकेकोतत्रा स्वराकीयइतिकोपधादराित्यराप्राप्तः ॥ ॥ आयोमुखीयमितिवाहोकग्रामलक्षणो गञ्जिठादेरिति आदिशब्देनरोपधेतोरित्यादिनाप्राप्तस्य वुञः पर्वतीयइति तत्रयोरं रपोञ्जन्यं पार्वतीयेर्गरोरभूदित्यत्रतु पर्वतायनस्य राज्ञ इमेइत्यर्थे छोतादण् कराः भारद्वाजशब्दोत्रदेशवचनः सचनप्रत्ययार्थः किंतुप्रकृतिविशेषणमित्याह भारद्वाजदेशेत्यादिना युष्मदस्मदोः त्यदादीनि चेतिवृद्धत्वान्नित्ये छे प्राप्ते खे ।

अयोमुखीयं। कन्थापलदनगरग्रामह्रदोत्तरपदात्॥४।२।१४२॥ कन्थादिपञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात्। ठञ्ञिठादेरपवादः। दाक्षिकन्थीयं। दाक्षिपलदीयं दाक्षिनगरीयं। दाक्षिग्रामीयं। दाक्षिह्रदीयं। पर्वताच्च॥४।२।१४३॥ पर्वतीयः। विभाषाऽमनुष्ये। ४।२।१४४। मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात्। पक्षेऽण्। पर्वतीयानि पार्वतानि वा फलानि। अमनुष्ये किं। पर्वतीयो मनुष्यः। कृकणपर्णाद्भारद्वाजे। ४।२।१४५। भारद्वाजदेशवाचिभ्यामाभ्यां छः। कृकणीयं। पर्णीयं। भारद्वाजे किं। काकणमं। पार्णं। युष्मदस्मदोरन्यतरस्यां खञ्च।४।३।१। चाच्छः पक्षेऽण्। युवयोर्युष्माकं वा अयं युष्मदीयः। अस्मदीयः। तस्मिन्नणि च युष्माकास्माकौ।४।३।२। युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च। यौष्माकीनः ॥ आस्माकीनः। यौष्माकः। आस्माकः।

ञ्रणो रपिविधानार्थमिदं पक्षे अणीति अन्यतरस्यां ग्रहणादितिभावः तथा चेते त्रयः प्रत्यया इति वैषम्यात् यथासंख्यं न भवतीति केचित् मनोरमायां तु यथासंख्य निवारणाय योगविभागः कृतः तथाहि युष्मदस्मदोरन्यतरस्यां आभ्यां छो वा स्यात् त्यदादीनि चेति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोयं ततः खञ्च एवमुत्तरसूत्रेपि योगविभागो बोध्यः तेन आदेशयोः खञणभ्यां यथासंख्येनेत्यादि युवयोरित्यादि एकवचनेतवकममकादेशविधानादेकवचनांतेन विग्रहो न कृतः तस्मिन्नणि च तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते नतु चानुकृष्टः। निमित्तयोरादेशौ प्रतियथासंख्यं तु न भवति खञणोरितिवक्तव्ये एकवचनविभक्तिनिर्देश

सापद्यते स्थान्यादेशयोरुक्तप्रवत्तत्॥

धरार्थमेव अवृद्धादपीति नित्यमासोऽयं तेन न विकल्प्यते मनुष्यतत्स्थयोर्वुञ्परत्वान्नित्य एव वुञ् ॥ ॥ कौरवको मनुष्यः कौरवकमस्य हसितं एतदर्थमेवास्य कच्छादौ पा
ठः अन्यथा अनयैव विभाषया वुञणोः सिद्धौ किं तेनेति भावः सैंधवा इति ओर्देश इति ठञ्प्राप्तेः वुञि सिद्धे इति मनुष्यतत्स्थयोरित्यनेन गहादिभ्यश्च एभ्यो देशवाचि

कौरवकाः। कौरवः। यौगन्धरकाः। यौगन्धरः। मद्रवृज्योः कन् ४।२।१३१। जनपदवुञोऽपवादः। मद्रेषु जातो मद्रकः। वृजिकः। कोपधादण् ४।२।१३२।
माहिषिकः। कच्छादिभ्यश्च ४।२।१३३। देशवाचिभ्योऽण् वुञादेरपवादः। काच्छः। सैन्धवः। मनुष्यतत्स्थयोर्वुञ् ४।२।१३४। कच्छादिभ्य अणो
पवादः। कच्छे जातादिः। काच्छको मनुष्यः। काच्छकं हसितम्। मनुष्येति किम्। काच्छो गौः। अपदातौ साल्वात् ४।२।१३५। साल्वशब्दस्य कच्छादि
त्वाद्वुञि सिद्धे नियमार्थमिदं। अपदातावेवेति साल्वको ब्राह्मणः। अपदातौ किं। साल्वः पदातिर्व्रजति। गोयवाग्वोश्च ४।२।१३६। साल्वाद्वुञ्। क
च्छाद्यणोऽपवादः। साल्विका यवागूः। साल्वको गौः। साल्वमन्यत्। गर्तोत्तरपदाच्छः ४।२।१३७। देशे। अणोऽपवादः। वृकगर्तीयं। उत्तरपदग्र
हणं बहुच्पूर्वनिरासार्थं। गहादिभ्यश्च ४।२।१३८। छः स्यात्। गहीयः। मुखपार्श्वतसोर्लोपश्च। मुखतीयं। पार्श्वतीयं। अव्ययानां भमात्रे टि
लोपस्यानित्यतां ज्ञापयितुमिदं। कुक् जनस्य परस्य च। जनकीयं। परकीयं। देवस्य च। देवकीयं। स्वस्य च। स्वकीयं। वेणुकादिभ्यः छण् वाच्यः। वै
णुकीयं। वैत्रकीयं। उत्तरपदकीयं। प्राचां कटादेः ४।२।१३९। प्राग्देशवाचिनः कटादेः छः स्यात्। अणोऽपवादः। काटनगरीयं। काटघोषीयं। काटप
ल्वलीयं। राज्ञः क च ४।२।१४०। वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते। राजकीयं। वृद्धादकेकान्तखोपधात् ४।२।१४१। अक
इक एतदन्तात् खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात्। ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनस्तत्र जातो ब्राह्मणकीयः। शा
ल्मलिकीयः ॥

भ्यश्छः स्यात् पूर्वपक्षादिशब्देभ्यस्तु देशवाचित्वाभावेऽपि पाठसामर्थ्याच्छः मुखपार्श्वतसोरिति गणसूत्रमिदं सप्तम्यंताभ्यामाद्यादि
त्वात्तसिः मुखतीयमिति मुखे जातमित्याद्यर्थे तसंताच्छः अलोऽन्त्यस्येति तसस्सकारस्य लोपे यस्येति चेत्यकारलोपः कुग्जनस्येति इदमपि गणसूत्रं स्वकीयमिति
स्वार्थिककान्तत्वात् स्वशब्दाद्गहादेराकृतिगणत्वाच्छः देशवाचित्वाभावेऽपि पूर्वपक्षादिवद्बोध्यः अत एव तु व्योगात्स्थानादिति सूत्रेण हि स्वकीयस्यैव मत्या

सू.त. सि.कौ. टी.त. २३०

अ नाह समुद्रसमीपे यो द्वीप इति कच्छादि गणे मनुष्यवुञः स्थापवादोयं अन समुद्रं किं द्वैपमन्यत् कच्छादि गण द्वैपकः म नुष्यः तस्थ योरिति वुञ् द्वैप्य इति पञ्चश्चेति ङीप् भवति ॥ अ

पत्याधिकारस्थादेव पञ्चाङीविति प्रागेवोक्तत्वात् कालाहुञ् स्वरूपस्यैव न ग्रहणं संधिवेलादि सूत्रेण संधिवेला त्रयोदशी चतुर्दशी प्रभृतिभ्योऽण् रहेभ्योपि ठञ् बाधनार्थम

एविधानात् किं तु सर्वेषामपि कालवाचिनां ग्रहणमित्याशयेनाह कालवाचिभ्य इति यत्तु स्वरूपस्य पर्यायाणां च न ग्रहणमिति पदमंजर्यादिषु स्थितं तदसत् कालिकः संबंधः

कालिकी व्याप्तिरित्यादि प्रयोगानापत्तेः न च । विशेषाणामेव ग्रहणे संधिवेलादिभ्यो एविधानं ज्ञापकमिति वाच्यं तस्य स्वरूपमात्र ग्रहणनिरासकत्वेनापि साफल्यात् ॥ गौ

णमुख्य न्यायस्त्विह नाश्रीयते तेन कदंबपुष्प साहचर्यात् कदंबपुष्यः कालः व्रीहिपलाल साहचर्यात् व्रीहिपलालः कालः तत्र भवं कादंबपुष्पिकं व्रैहिपलालिकमित्या

करः अत्र हि प्रमाणं संधिवेलादि सूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणामेवेत्याहुः न च पुष्यादि शब्दानां कालो मुख्य एवार्थः लवविशेष इति व्युत्पादनात् तथा च

स्वसस्तुट् । ४।३।१५। श्वस शब्दात् ठञ् स्यात् तस्य तुडागमश्च । द्वारादीनां च । ७।३।४ द्वारस्वरव्यक्तिशस्वस्तिस्फ्य कृत्वादुशृदु श्वसस्वन स्वरपान्तेव

ङ्किरैजागमश्च । सौवस्तिकः । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । ४।३।१६ । सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् सन्धिवेलायां

भवं सान्धिवेलं । ग्रैष्मं । तैषं सन्धिवेला संध्या अमावस्या त्रयोदशी चतुर्दशी पौर्णमासी प्रतिपत् । सम्वत्सरात् फलपर्वणोः । साम्वत्सरं फलं । पर्व वा । सा

म्वत्सरिकमन्यत् ॥

कालविशेषणमुक्तार्थेन प्रमाणमिति वाच्यं पुष्यादि समीपस्थ चन्द्रमसा युक्ते काले पुष्यादि शब्दानां गौणत्वात् लवविशेष इति श

स्वमपि गौणवृत्तित्वान्वाख्यापकमेवेति दिक् एवं स्थिते कालवाचिभ्य इति मूलस्य कालप्रतिपादकेभ्य इति फलितोर्थः श्वाद्धमिति भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः प्र

ज्ञाश्रद्धार्चाभ्यो ण इति मत्वर्थीयेन व्युत्पादितः श्रद्धा चान्यरूपस्तु न गृह्यते अनभिधानात् ॥ ॥ स्वसस्तुड् विभाषेत्यत्र वर्तनाद्दाह ठञ् वा स्यादिति एषमोत्य इत्या

दिनात्यवपि विकल्पेन विहितः श्वाभ्यां प्रतो स्तुट् तु लावपि तत एव सौवस्तिकमिति न च नन्तरंगत्वात् तुट् ठस्य प्रत्ययादित्वाभावात् कर्मठ इवेकादेशो न स्यात् न चेप

दिकादेशे तस्य तुडिति वाच्यं आदेशात् आगमोन्तरंगत्वात् तुटः प्रसक्तेः इकादेशस्य लागत्वेन वहिरंगत्वात् सूत्रभंगे नतु किं हि क्रियमाणे त्विसुसुक्तान्तात् कादिति कादेशप्रसंग इ ते

चेत्सत्यं वुञ् छणादिषु ठ चाश्रित्वे नेकादेशांतरेभ्यो वलवानिति ज्ञापितत्वात् अन्यथा प्रत्ययाद्युदा ॥ ॥ ॥ ॥

राम २३०

तवक इहपूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासंख्यं न भवति किन्तु स्थान्यादेशयोरेवेत्याशयेनोदाहरति तावकीनः मामकीन इति। परावरपराधमोत्तमेभ्य इत्येव वक्तव्ये पूर्वग्रहणं पूर्वविप्रतिषेधसूचनार्थं तेन दिक्शब्दयोः परावरयोरर्धशब्देन समासे उत्तरसूत्रेण प्राप्तावपि ठञ्यतौ बाधित्वा यदेव भवति दिक्पूर्वपदग्रहणं च बहुवचनरूपविधिनिरासार्थमित्याहुः। असांप्रतिके संप्रतीत्यव्ययं न्याय्यवर्तते अनाप्रत्वतूराव्रोतिरिक्तः षड्रात्रः स वा एष संप्रतिपज्ञो यत्संचरात्र इत्यत्र तथा दर्शनात्‌ तन्नूनो

तवकममकावेकवचने ४।३।३। एकार्थवाचिनो युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु प्रत्ययोत्तरपदयोश्च। ७।२।९८ मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः। अर्धाद्यत् ४।३।४। अर्ध्यम्। परावराधमोत्तमपूर्वाच्च ४।३।५। परार्ध्यम्। अवरार्ध्यम्। अधमार्ध्यम्। उत्तमार्ध्यम्। दिक्पूर्वपदाट्ठञ्च ४।३।६। चाद्यत्। पौर्वार्धिकम्। पूर्वार्ध्यम्। ग्रामजनपदैकदेशादञ्ठञौ ४।३।७। ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः। इमे अस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः। पौर्वार्धिकाः। मध्यान्मः ४।३।८। मध्यमः। अ साम्प्रतिके ४।३।९। मध्यशब्दादकारप्रत्ययः स्यात् साम्प्रतिकेऽर्थे। उत्कर्षापकर्षहीनो मध्यो वैयाकरणः। मध्यन्दारु नातिह्रस्वं नातिदीर्घमित्यर्थः। द्वीपादनुसमुद्रं यञ् ४।३।१०। समुद्रस्य समीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ् स्यात्। द्वैप्यम्। द्वैप्याः। कालाट्ठञ् ४।३।११। कालवाचिभ्यष्ठञ् स्यात्। मासिकम्। सांवत्सरिकम्। सायम्प्रातिकम्। पौनःपुनिकम्। कथं तर्हि शार्वरस्य तमसो निषिद्धये इति कालिदासः। अवदितो घसरागः इति भारविः। समानकालीनम्। प्राक्कालीनमित्यादि च। अपभ्रंश एवेति प्रामाणिकाः। तत्र जात इति यावत्कालाधिकारः। श्राद्धे शरदः ४।३।१२। ठञ् स्यात्। ऋत्वणोऽपवादः। शारदिकं श्राद्धम्। विभाषा रोगातपयोः ४।३।१३। शारदिकः। शारदो वा रोगः। आतपो वा। एनयोः किम्। शारदं दधि। निशाप्रदोषाभ्यां च ४।३।१४। वा ठञ् स्यात्। नैशिकम्॥

नातिरिक्तोऽसंभ इत्यर्थः इदानीमित्यर्थे तु प्रसिद्धमेव एतर्हि संप्रतीदानीमित्यमरः ततः प्रज्ञादित्वात्स्वार्थेऽण् विनयादित्वात्स्वार्थे ठग् यद्वा तेन संप्रते सांप्रतिकमिति पर्यायो उत्कर्षैत्यादिन्याय्ये विद्यमान एव संप्रतिशब्दोऽत्र वर्तत इति भावः। द्वीपादनुसमुद्रं समया अनुसमुद्रं अनुर्यत्समया इत्यव्ययीभावः सप्तम्यन्तं चेदं विद्यमानक्रियाद्वाराद्

सु॰त॰ सि॰कौ॰ टी॰त॰ २३१

तस्य कालवाचित्वाभावादनभिधानादित्याहुः ॥ ॥ चिरंतनमिति चिरशब्दस्यापि प्रत्ययसन्नियोगेन मान्तता निपात्यत इति भावः अत्र वदंति खरादेराकृतिगणत्वादेव सिद्धे सूत्रे चिरमित्येतद्व्यर्थं न चादन्ताच्चिरशब्दात् ट्युस्यादिति वाच्यं तेन बाधादिति एवं तत्त्वमिति प्राह्णः सोढोऽस्य प्राह्णेतन इत्याद्यर्थे तत्र हि सप्तमी नास्ति जातार्थे घ कालतनेष्वित्यलुकापि सिद्धं चिरत्नमिति सूत्रे चिरशब्दस्योपादानाट्ट्युट्युलावपि स्तः न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानेन संभवतीति वाच्यं मान्ताव्ययादेव ट्युट्युलि धौ तत्संभवात् परुत् पूर्वस्मिन्वत्सरे परारि पूर्वतरे अग्रादिपश्चाड्डिमच् डित्वं स्वस्थार्थे तत्र जातः ननु शैषिकत्वस्य लक्षणत्वेनेत्याशुक्तं रूपमाह शब्दइत्यादि विवजाता

चिरन्तनं प्राह्णप्रगयोरेदन्तत्वं निपात्यते प्राह्णेतनं प्रगेतनं दोषातनं दिवातनं । चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । चिरत्नं परुत्नं परारित्नं । अग्रादिपश्चाड्डिमच् ॥ अग्रिमं आदिमं पश्चिमं । अन्ताच्च । अन्तिमं । विभाषा पूर्वाह्णापराह्णाभ्याम् ।४।३।२४। आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च पक्षे ठञ् पूर्वाह्णेतनं अपराह्णेतनं घकालतनेष्वित्यलुक् पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनं अपराह्णतनं पौर्वाह्णिकं । आपराह्णिकं । तत्र जातः ।४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः स्रुघ्ने जातः स्रौघ्नः औत्सः राष्ट्रियः अवारपारीण इत्यादि । प्रावृषष्ठप् ।४।३।२६। एण्यस्यापवादः प्रावृषि जातः प्रावृषिकः । संज्ञायां शरदो वुञ् ।४।३।२७। ऋत्वणोऽपवादः । शारदका दर्भविशेषा मुद्गविशेषाश्च । उत्तरपदस्य ।७।३।१०। अधिकारोऽयं हनस्तोऽचिण्णलोरित्यस्मात्प्राक् । अवयवादृतोः ।७।३।११। अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे पूर्ववार्षिकः । अपरहैमनः । अवयवात् किं । पूर्वासु वर्षासु भवः पौर्ववर्षिकः ॥

११ दिग्पूर्वपदाद्यः सिद्धाः अधिकारान्न घादयोऽपि न त्वजातादिष्विवा णादय इति नियमार्थं जाताद्यर्थनिर्देशः अन्यथा अन्यथा तत्रासेत तत्र शेते इत्याद्यर्थेपि प्रत्ययः स्यादिति वाच्यं चाक्षुषमित्याद्यसिद्ध्यापत्तेः स्रुघ्ने आस्ते स्रुघ्ने शेते इत्यादौ त्वनभिधानादेव तद्धितो न भविष्यति अङ्गुल्या खनति वृक्षमूलादागत इत्यादौ यथा समर्थविभक्तिपरत्वात्केवलस्यैव चाक्षुषमित्यत्र तृतीयायथा तस्मा त्तत्र जात इत्याद्यर्थनिर्देशो व्यर्थ इति चेन्नैवं प्रावृषष्ठबित्याद्यपवादार्थं तदावश्यकत्वात् ये तु निरपवादा अर्थनिर्देशाः कृतलब्धक्रीतकुशला इत्यादयस्ते तु व्यर्था एवेति दिक् संज्ञायां ॥ शरदः समुदायेन चेत्संज्ञा गम्यत इत्यर्थः संज्ञायां किं शारदं सस्यं संज्ञायामित्येतत्कृतलभ्येत्येतदर्थं तत्केचिदनुवर्तयंतीति वृत्तिकृत् ॥

४

एम॰ २३१

तत्वे कृते इकादेशः स्यादिति किं ठञ् ञित्वेन कृते त्विकादेशे प्रत्ययस्वरबाधनाय चित्वं प्रयुज्यते इति मनोरमायां स्थितं संधिवेलाद्यण्ग्रहणं तु ञ्बाधनार्थं अन्यथा संधिवेला-
दिभ्यो यथाविहितप्रत्ययाः स्युरित्युक्ते पौर्णमासीशब्दाद् वृद्धाच्छः स्यात् वचनं तु ठञो बाधनाय स्यादिति भावः तैषमिति तिष्याद्वा दावण् जातार्थे तस्य विशाफल्गुनीति लुक्
स्यात् सूर्यतिष्येत्यत्र तिष्यपुष्ययोर्नक्षत्राणीति वचनाद्युलोपः ॥ ❀ ॥ प्रावृष एण्यः ऋत्वणोऽपवादः प्रवर्षतीति प्रावृट् इन् हिरती तिदीर्घः तत्र भवः जाते तु ठञ् वक्ष्यति रषा-
भ्यामिति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणमित्याहुः किंच प्रावृषेण्यमाचक्षाणः प्रावृषेणीत्यत्र णकारश्रवणार्थमपि तत् एवं तान्त्विपिटिलोपणिलोपयलोपाः
सर्वत्राण् च हेमन्तादिति एतच्च हेमन्ताच्चेत्यतोऽनुवृत्तमिति भावः ———— हैमनमिति अकारविशिष्टस्य तशब्दस्य लोपे अन्निति प्रकृतिभावान्न स्तद्धित इति टिलो-
पो न तकारस्यैव लोप इति पक्षे तु यस्येति चेत्यल्लोपस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपो नेति बोध्यम् हैमन्तमिति ऋत्वणि तकारलोपो न भवति तस्य सर्वत्रे-

प्रावृष एण्यः ।४।३।१७। प्रावृषेण्यः । वर्षाभ्यष्ठक् ।४।३।१८। वर्षासु साधु वार्षिकम् वासः । कालात्साधुपुष्प्यत्पच्यमानेष्विति साध्वर्थे । सर्वत्राण् च तलोपश्च ।४।३।२२। हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात्यक्षे ऋत्वण् । हैमनं हैमन्तं । सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।४।३।२३। सायमित्यादिभ्यश्चतुर्भ्यो व्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च तुटः प्रागनादेशः । अनद्यतन इत्यादिनिर्देशात् । सायन्तनं ।

तिप्रतिपदोक्ते नञ्त्वासन्नियोगशिष्टत्वात् एतच्च प्रत्याख्यातं भाष्ये तथा हि हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति हेमन्तागनीगंतिकर्णाविन्यादिप्रयोगात् ततश्च हेमन् ————
———— हेमन्तशब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धं छन्दसि तु हेमन्ताच्चेति ठञा हैमन्तिकमिति तृतीयमपि रूपं सिध्यति न च विशेषविहितेन ठञाऽणो बाधः
शंक्यः छन्दसि सर्वविधीनां वैकल्पिकत्वात् वृत्तिकारास्तु हेमन्ताच्चेति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिकमिति सौत्रकृता सायं चिरं ॥ नन्वेतरं गत्वान्त्यमनुटित्यु-
रित्यादाविव त्युशब्दस्य प्रत्ययतया अंगसंज्ञानिमित्तं योऽयं तस्य विधीयमानोऽनादेशो न स्यात् न चैवं तु गे वक्षिपतामितिवाच्यं तस्य पूर्वो तत्वेन विसर्गाभावात्मात
सनमित्यत्र सत्वाभावप्रसंगात् अत आह तुटः प्रागिति इत्यादीति आदिशब्देन घकालतनेष्विति ग्रास्तसायंतनमिति स्वतेर्घनिसायशब्दोऽकारान्तो दिवसावसाने रू-
ढस्तस्य प्रत्ययसन्नियोगेन मान्तत्वं निपात्यत इति वार्तिककृन्मतं भाष्यकृता तु मांतोऽप्ययमित्याश्रित्य सायं गृहे गांप्रत्या व्यांतनस्यैवं साय शब्दात्कालाट्ठञित्यनिष्ट

श्च अमावास्याशब्दादकारप्रत्ययः स्यात् अयमपि पूर्ववद्भाभ्यां वोध्यं अमना स्य इति हस्वमध्यात् अमावस्यः अराबैव यथासंख्यार्थो योगविभागः अविष्ठा इह सूत्रे
स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः माधवस्तु दीर्घान्त इत्यन्तसातत्यगमन इति धातावाह एवं चात्र स्वातीति ष्येति ङीषंतग्रहणाद् ङीषं तस्य सोवात इति रूपं भवार्थ
स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः माधवस्तु दीर्घान्त इत्यन्तसातत्यगमन इति धातावाह एवं चात्र स्वातीति ष्येति ङीषंतग्रहणाद् ङीषं तस्य सोवात इति रूपं भवार्थ
इव जातार्थेपि माधवमते सिद्ध्यत्येवं कैयटादिमते तु जातार्थे न सिद्ध्यति ज्ञपि विधायके स्मिन् ङीषंतग्रहणेपि लिंगविशिष्टपरिभाषया ङीषंतादपि अणो लुकः प्रवृत्तेः

अच्च ।४।३।३१। अमावास्यः । सिंध्वपकराभ्यां कन् ।४।३।३२। सिन्धुकः । कच्छादिषु पाठात् सिन्धु मनुष्ये वुञ् इति प्राप्ते । अपकरकः । औत्सर्गिके अणि प्राप्ते अणा
ञौ च ।४।३।३३। क्रमात् स्तः । सैन्धवः । आपकरः । अविष्ठा फल्गुन्य नुराधा स्वाति तिष्य पुनर्वसु हस्त विशाखाषाढा बहुलाल्लुक् ।४।३।३४। एभ्यो न
क्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् । लुक् तद्धितलुकि ।१।२।४९। तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात् अविष्ठासु जा
तः अविष्ठः । फल्गुन इत्यादि । चित्रा रेवती रोहिणीभ्यः स्त्रियामुपसंख्यानम् । चित्रायां जाता चित्रा । रेवती रोहिणी आभ्यां लुक् तद्धितलुकीति लु
कि कृते पिप्पल्यादेराकृतिगणत्वात् पुनर्ङीष् । फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । स्त्रियामित्येव । फल्गुनी । अषाढा । श्रविष्ठाषाढाभ्यां छण् एव
क्तव्यः । अस्त्रियामपि । श्राविष्ठीयः । आषाढीयः । जे प्रोष्ठपदानाम् ।७।३।१८। प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः स्याज्जातार्थे ञिति
णिति किति च प्रोष्ठपदासु जातः प्रौष्ठपदो माणवकः । जे इति किं प्रोष्ठपदासु भवः प्रोष्ठपदः । बहुवचननिर्देशात् पर्यायोपि गृह्यते भद्रपादः ।
स्थानान्त गोशाल खरशालाच्च ।४।३।३५। एभ्यो जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थानः । गोशालः । खरशालः । विभाषा सेनेति नपुंसकत्वे ह्रस्व
त्वम् । वत्सशालाभिजिदश्वयुक्शतभिषजो वा ।४।३।३६। एभ्यो जातार्थस्य लुग्वा स्यात् ॥ ११

पसर्जनेति अप्रधानमिहोपसर्जनं गृह्यते न शास्त्री
यमसंभवात् ननु गोस्त्रियोरिति सूत्रेप्यप्रधानलक्षणमेवोपसर्जनं गृह्यतां एकविभक्ति चेति शास्त्रीयं न गृह्यतां मैवं हरीतक्याः फलानि हरीतक इत्यत्र ह्रस्वप्रस
ङ्गात् उपसर्जनस्य किं अवन्ती कुन्ती कुरूः अविष्ठा स्विति अविष्ठा धनिष्ठाः इत्यादीति आदिशब्दादनुराधः स्वातिः तिष्यः पुनर्वसुः हस्तः ॥ ॥ ॥

पूर्ववार्षिक इत्यादि वर्षाणां पूर्वः हेमन्तस्यापर इति विग्रहे पूर्वापराधरोत्तरमित्येकदेशिसमासः पूर्वासु वर्षासु इति तद्धितार्थे समासः ॥ ॥ ऋतोर्वृद्धिमद्विधाविति ऋतुवाचिनः शब्दाद्वृद्धिनिमित्तकप्रत्ययविधाने तदन्तविधिर्वाच्यः स चेदृतुवाचिशब्दोऽवयवेभ्यः पर इत्यर्थः पूर्ववैति पूर्ववार्षिकः अपरहैमन इत्यत्र तथा च वर्षाभ्यष्ठक् सर्वत्राण् च तल्लोपश्चेत्याभ्यां क्रमेण ठगणौ भवतः वृद्धिमद्विधौ किं पूर्वप्रावृषं प्रावृष एण्य इत्यत्र तदन्तविध्यभावादिह ऋत्वणो वरह इति पौर्ववार्षिक इत्यत्र तथा चेह कालाट्ठ ञिति ठञेवेति भावः अवयवत्वाभावादिति अन्यथा पूर्वासु वर्षास्विति सामानाधिकरण्यं न संगच्छेतेति भावः जनपदतदवध्योरितीति तस्मिन्ननुवर्तमाने अवृद्धादपि बहुवचनविषयादित्यनेनेत्यर्थः पौर्वमद्र इति मद्रेभ्योऽञित्यत्र पूर्वाह्णक इति विभाषा पूर्वाह्णापराह्णाभ्यामित्यस्यापवादः आर्द्रको मूलक इति नक्षत्राणोपवा

ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधिः पूर्वत्र इह तु नावयवत्वाभावात् ॥ सुसर्वार्धाज्जनपदस्य ॥ ७।३।१२ ॥ उत्तरपदस्य वृद्धिः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । जनपदतदवध्योरिति वुञ् ॥ सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः ॥ दिशोऽमद्राणाम् ॥ ७।३।१३ ॥ दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । दिशः किम् । पूर्वपञ्चालानामयं पौर्वपञ्चालः । अमद्राणां किम् । पौर्वमद्रः । योगविभाग उत्तरार्थः ॥ प्राचां ग्रामनगराणाम् ॥ ७।३।१४ ॥ दिशः परेषां ग्रामवाचिनां नगरवाचिनां चाङ्गानालवपूर्वस्याचो वृद्धिः । पूर्वेषुकामशम्यां भवः । पूर्वैषुकामशमः । नगरे । पूर्वपाटलिपुत्रकः ॥ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ॥ ४।३।२८ ॥ पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ॥ पथः पन्थ च ॥ ४।३।२९ ॥ पथि जातः पन्थकः ॥ अमावास्याया वा ॥ ४।३।३० ॥ अमावास्यकः । आमावास्यः ॥

॥ प्रदोषक इति निशाप्रदोषाभ्यां चेत्यस्यापवादः अवस्करक इति । औत्सर्गिकस्याणोऽपवादः येतसंज्ञायामित्येतत्सूत्रलब्धे त्येतत्पर्यन्तमनुवर्तयति तन्मते असंज्ञायामयमपवादः अणादयो यादयश्च बोध्याः अमावास्यायां वा संधिवेलाद्यणोऽपवादः अमावस्यदन्यतरस्यामिति सूत्रेणामा पूर्वाद्वसेर्ण्यति वृद्धौ यस्य ह्रस्वत्वं निपात्यत इति ह्रस्वमध्यस्याप्यमावास्याशब्दस्येह ग्रहणं प्रकृतिग्रहणे विकृतेरपि ग्रहणात् अमावस्यकः आमावस्यः पेति ह सूत्रे संधिवेलादिषु च ह्रस्वोपधं पठन्ति तेषां तु दीर्घोपधस्य न स्याद्विकृतिग्रहणेन प्रकृतेरग्रहणादिति हरदत्तादयः वस्तुतस्तु वृद्धिप्रकृतिभूतस्याकारणमिदमित्याश्रित्य ह्रस्वोपधपाठोऽपि समर्थयितुं शक्यत इत्यन्ये ॥ ॥ ॥

विशालः श्रषाढः बहुलः कृत्तिका वा चीबहुला शब्दश्चाबन्तस्तस्य समाहारद्वंद्वेन ह्रस्वनिर्देशः सूत्रे उपसंख्यानमिति लुक इति शेषः चित्रेति लुक्ताद्धिते तिलुकि पुनष्टाप् यानाविति विधानसामर्थ्यादेतयोर्नलुक् स्थानात गोशालेत्यत्र विभाषा सेनेति नपुंसकत्वे ह्रस्वत्वं तत्साहचर्यात्खरशालेऽप्येवमेव नन्वेवं स्त्रीत्वपक्षे लुङ् स्यादिति शं कायां लिंगविशिष्टपरिभाषया तत्रापि लुक् सिद्ध इत्याहुः यद्यपि टाबन्तयोः पाठेप्येकदेशविकृतन्यायेन स्त्रीत्वे पोषं सिद्ध्यति तथापि लाघवार्थं ह्रस्वपाठः नपुंसकत्वे ह्रस्वत्व मिति सूत्रे इति शेषः ॥ ॥ वत्सशाले जात इति वत्सशालायामित्यपि बोध्यं इत्यादीति आदिशब्दादभिजित् आभिजितः अश्वयुक् आश्वयुजः प्रतिप्रसूत इति का लाट्ठञादिनि वर्तमाने यश्चौत्सर्गिकोण् संधिवेलादिसूत्रेणाउनरप्यनुज्ञात इत्यर्थः कृतलब्धनवक्रीतत्वे जातलक्षत्व योर्व्याप्ये इति किमनयोर्ग्रहणेन सत्यं कृत

वत्सशाले जातः वत्सशालः वात्सशालः इत्यादि जातार्थे प्रसूतोऽण्वाडिकच्छ्यः ॥ शतभिषजः शतभिषक् न क्षत्रेभ्यो बहुलम् ।४।३।३७। जातार्थे प्रत्ययस्य बहुलं लुक् स्यात् । रोहिणः रोहिणः । कृतलब्धक्रीतकुशलाः ।४।३।३८। तत्रेत्येव स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौ घ्नः । प्रायभवः ।४।३।३९। तत्रेत्येव स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः उपजानूपकर्णोपनीवेष्ठक् ।४।३।४०। औपजानुकः औपकर्णिकः औपनीविकः । सम्भूते ।४।३।४१। स्रुघ्ने सम्भवति स्रौघ्नः । कोशाड्ढञ् ।४।३।४२। कौशेयं वस्त्रं कालात्साधुपुष्प्यत्पच्यमानेषु ।४।३।४३। हेम न्ते साधुः हैमन्तः प्राकारः वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः । शरदि पच्यन्ते शारदाः शालयः । उप्ते च ।४।३।४४। हेमन्ते उप्यन्ते हैमन्ता यवाः ॥

त्वक्रीतत्व प्रकारकबोधे पि प्रत्ययार्थतद्ग्रहणं अत एव जाते लुग्भाजामपि कृतेन लुक् प्रायकादाचित्कभवनाश्रयः प्रायभवस्तेन तत्र भव इत्यनेन न गतार्थतेत्या हुः भाष्ये तु प्रत्याख्यातमेतत् प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वादिति उपजान्वित्यत्र अव्ययीभावाः तेषां समाहारद्वंद्वे सौत्रं पुंस्त्वं संभूते इह तत्रा दिना संभावना आधारपरिमाणादाधेयस्यानतिरेकश्चेति द्वयमप्याश्रीयते स्रौघ्न इति स्रुघ्ने संभाव्यते तत्परिमाणानतिरिक्तो वा सेनादिरित्यर्थः कोशात् कौशेयमि ति वस्त्रविशेषे योगरूढोऽयं कोशे सम्भवत्सत्त्वायेवादाभिप्रायेण मतान्तरे तु विकारप्रकरण एण्याढञित्यस्यानन्तरं कोशाच्चेति पठितव्यं तथा च वार्त्तिकं वि कारे कोशाड्ढञ् संभूते त्वयोग्यानुपपत्तिरिति कालात् पुष्प्यदिति देवादिकः शत्रन्तस्तदाह पुष्प्यन्तीति उप्ते च कालादित्येव योगविभाग उत्तरार्थः उप्यन्त इति सूत्रे भूतका

अध्यात्ममिति अनश्चेति टच् कर्णललाटात्कन् तोपवादः अलंकारे किं कर्णपललाटं तत्स्य व्याख्यान इतिच व्याख्यायते येन स व्याख्यानः करणे ल्युट् इति शब्दो वाक्यार्थपरामृशति तत्समीपे श्रूयमाणस्य कारस्तत्र भव इति वाक्यार्थमाक्षिपति नाम प्रतिपादकं तत्त्व शत्पालक्षणया वेत्यत्र नाग्रहः तथा च वक्ष्यति तद्व्याख्यानकरणार्थे

अध्यात्मादेष्ठञिष्यते॥ अध्यात्मे भवमाध्यात्मिकं॥ अनुशतिकादीनाञ्च॥७।३।२०॥ एषामुभयपदवृद्धिः स्यात्॥ ञिति णिति किति च॥ आधिदैविकम्॥ आधिभौतिकं॥ ऐहलौकिकं॥ पारलौकिकं॥ अध्यात्मादिराकृतिगणः॥ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्॥७।३।१॥ एषां पञ्चानां वृद्धिप्राप्तावादेरच आत् ञिति णिति किति च॥ दाविकं॥ देविकाकूले भवा दाविका कूलाः शालयः॥ शिंशपाया विकारः शांशपश्चमसः पलाशादिभ्यो वेत्यञ्॥ दित्यौहं दंदात्यौहं॥ दीर्घसत्रे भवं दार्घसत्रं॥ श्रेयसि भवं श्रायसं॥ ग्रामात्पर्यनुपूर्वात्॥४।३।६१॥ ठञ् स्यात्॥ अव्ययीभावादित्येव॥ पारिग्रामिकः॥ आनुग्रामिकः॥ जिह्वामूलाङ्गुलेश्छः॥४।३।६२॥ जिह्वामूलीयं॥ अङ्गुलीयं॥ वर्गान्ताच्च॥४।३।६३॥ कवर्गीयं॥ अशब्दे यत्खावन्यतरस्याम्॥४।३।६४॥ पक्षे पूर्वेण छः॥ मद्वर्ग्यः॥ मद्वर्गीणः॥ मद्वर्गीयः॥ अशब्दे किं॥ कवर्गीयो वर्णः॥ कर्णललाटात्कनलंकारे॥४।३।६५॥ कर्णिका ललाटिका॥ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः॥४।३।६६॥ सुपां व्याख्यानः सौपो ग्रन्थः॥ तैङः॥ कार्तः॥ सुप्सु भवं सौपं॥ बह्वचोऽन्तोदात्ताट्ठञ्॥४।३।६७॥ षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वं तस्य व्याख्यानस्तत्र भवो वा षात्वणात्विकः॥ क्रतुयज्ञेभ्यश्च॥४।३।६८॥ सोमसाध्येषु यागेषु तौ प्रसिद्धौ तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते॥ अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः॥ वाजपेयिकः॥ पाकयज्ञिकः॥ नावयज्ञिकः॥ बहुवचनं स्वरूपविधिनिरासार्थं अनन्तोदात्तार्थ आरम्भः॥ ७०॥

सप्तम्यन्तात्तु भवार्थे व्याख्यातव्यस्य ग्रन्थस्य प्रतिपादकात्प्रत्ययाः स्युरिति सूत्रार्थः आख्यातव्यनाम्नः किं पाटलीपुत्रस्य व्याख्यानी सुकोसला पाटलीपुत्रं हि तया व्याख्यायते ईदृक्तन्निवेशविशिष्टमिति नत्विदं व्याख्यातव्यस्य नाम ग्रन्थे वेदे च व्याख्येयत्वस्य सुप्रसिद्धत्वान्नामग्रहणं हि प्रसिद्धुपसंग्रहार्थमेव सूत्रे कृतं बह्वचो॥ अणोपवादः॥ ॥ ॥ ॥

नच पूर्वसूत्रस्थस्य तदित्यस्य व्यावृत्तये तत्र ग्रहणमस्त्विति वाच्यं तदस्येति सूत्रस्येत उत्तरत्रापि स्वपठत्वात् यद्यपि भूधातुरुत्पत्तावपि वर्त्तते तथापीह सत्तार्थ एव वर्त्तते
तत्र जात इति पृथग्ग्रहणादिति बोध्यं दिगादिभ्यो दिश वर्ग पूग पक्ष रहस उखा साक्षिन् । आदिअन्त मुख जघन मेघ यूथ उदकात्संज्ञायां न्याय वंश काले त्यादिर्दिगादिः
मुखजघनयोः पाठोत्र । शरीरावयवार्थः सेनायामुखे जघने च भवं मुख्यं जघन्यं प्राचां नगरान्ते सप्तमीनिर्देशादंगस्येत्यधिकृतमपि सप्तम्यंतेन विपरिणम्यते तदाह
नगरांतेंगे इति दृतिकुक्षिदृतिश्चर्मविकारः शरीरावयवविशेषस्य कुक्षिशब्दो धूमादिस्तु तो धूमादिभ्यश्चेति वुञ् प्राप्तेस्य अनन्तरन्ढञ्कलशिर्मन्यपात्रं कलशिमुदधिम्
वीवत्त्वबालोडयतीति माघः चस्तिर्नाभेरधो द्वयोरित्यमरः तत्र भवं वास्तेयं अस्तीति तिङंतप्रतिरूपको निपातः स च तिङंतेन समानार्थो भिन्नार्थश्च आद्यो यथा अ
स्तिक्षीरा गौः द्वितीयो यथा अस्तिमान् धनमानित्यर्थः तदिहाविशेषादुभयोरपि ग्रहणमास्तेयमिति हरदत्तः अहो भवमाहेयं त्रिष्वाहेयं विषास्थ्यादीत्यमरः ॥ ॐ ॥
ग्रीवाभ्य एव च शरीरावयवाच्चेति यतोपवादः ग्रीवाशब्दो धमनीसंघाते वर्तते तत्र उद्भूतावयवसंघातविवक्षया सूत्रे बहुवचनं तिरोहितावयवसंघातविवक्षायां त्वेक

ग्रीवाभ्योऽण् च ।४।३।५७। चात् ढञ् । ग्रैवेयं । ग्रैवं । गम्भीराञ्ञ्यः ।४।३।५८। गम्भीरे भवं गाम्भीर्यं । अव्ययीभावाच्च ।४।३।५९। परिमुखम्भवं पारिमुख्यं
। परिमुखादिभ्य एवेष्यते नेह । औपकूलः । अन्तःपूर्वपदाट्ठञ् ।४।३।६०। अव्ययीभावादित्येव । वेश्मनि अन्तः अन्तर्वेश्मं तत्र भवं आन्तर्वेश्मि
कम् । आन्तर्गेहिकं ॥

वचनान्तादप्यण्ढञौस्त एव ग्रैवेयमित्यादि ग्रीवासु भवं ग्रीवायामितिवा विग्रहः गंभीराञ्ञ्यः पंचजनादुपसंख्यानं पांचजन्यं परिमुखमिति
यदि परिशब्दादिह वर्जनं गम्यते तदा अपपरिबहिरंचवः पंचम्येत्यव्ययीभावः यदि सर्वतोभावस्तदा तस्मादेव निपातनादव्ययीभाव इत्याहुः परिमुखादिभ्य एवेति अयं
भावः दिगादिगणानंतरं परिमुख परिहनु पर्योष्ठ पर्युलूखल इत्यादि परिमुखादिगणः पठ्यते तत्सामर्थ्यादिह सूत्रे अव्ययीभावशब्देन परिमुखादिरेव गृह्यते तेन गण
स्य कार्यांतराभावादिति नन्वेवं परिमुखादेरिति सूत्रं विशिष्यैव क्रियतां किमनेन प्रयासेन उत्तरत्र अव्ययीभावादित्यस्यापेक्षायामपि तत्रैव तत्करणोचित्यादिति चे
दत्राहुः हरदत्तः परिमुखादेरित्युच्यमाने बहुव्रीहितत्पुरुषेभ्योपि ञ्यः स्यात् अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवतीति परिमुखादिगणे प्रतिशाखशब्दोपि बोध्यः त
स्याञ्च शाखव्याप्ताविति धातोः प्रतिशाखंभवं प्रातिशाख्यं अव्ययीभावाच्चेति ञ्य इति माधवः अंतर्वेश्ममिति नपुंसकादन्यतरस्यामिति समासांतष्टच् ॥ ॥

गृहीतग्रहणमाख्यातार्थमिति ज्ञेयं नामिकः आख्यातिकः नामाख्यातिकः ऋगयनादिभ्योऽण् ऋगयनादिभ्यो भवव्याख्यानयोरण् स्यात् ठञादेरिति आदिशब्दाट्ठक्छयोः आर्ग
यन इति अयनशब्दो भावसाधनस्तेन समासे अनो भावकर्मवचन इत्यंतोदात्तः अभेदोपचाराद्भाववचनोपि ग्रंथे वर्त्तते इहवह्वचोंतोदात्तादिति ठञ्प्राप्तः औपनिषद
इत्यत्राप्येवं विद्यान्यायशिक्षाशब्देभ्यो ह्यच्छ्रद्धाह्यणेति वक् प्राप्तः व्याकरणशब्दात्तु वृद्धाच्छः ॥ ॥ ठगायस्थानेभ्यः स्वामी स्वामिनमयमेतीति वाऽऽयः स्वामिग्राह्यो भागः स
यस्मिन्नुत्पद्यते तदायस्थानम् बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः वृद्धाच्छं परत्वादयं बाधते आपणिकः आकरिकः छादीनां चेति कार्कणइत्यत्र छकणपर्णा
द्भारद्वाजइति छः प्रत्ययः प्राप्तः तीर्थशब्दात्तु धूमादित्वाद्वुञ् प्राप्तः उदपानशब्दस्योत्सादित्वादञ् प्राप्त इत्यर्थः । विद्यायोनि विद्यायोनिकृतः संबंधो येषां तेभ्यो वुञ्स्याद

ठगायस्थानेभ्यः।४।३।७५।शुल्कशालाया आगतः शौल्कशालिकः। शुण्डिकादिभ्योऽण्।४।३।७६। आयस्थानठकश्छादीनाञ्चापवादः। शुण्डिका
दागतः शौण्डिकः। कार्कणः। तैर्थः। विद्यायोनिसम्बन्धेभ्यो वुञ्।४।३।७७। औपाध्यायकः। पैतामहकः। ऋतष्ठञ्।४।३।७८। वुञोपवादः। हौतृकः। भ्रा
तृकः। पितुर्यच्च।४।३।७९। चाट्ठञ्। रीङृतः। यस्येति लोपः। पित्र्यं। पैतृकं। गोत्रादङ्कवत्।४।३।८०। विदेभ्य आगतं वैदं। गार्गं। दाक्षं। औपगवकं। नञः शु
चीश्वरक्षेत्रज्ञकुशलनिपुणानाम्।७।३।३०। नञः परेषां शुच्यादिषण्णामचोः वृद्धिः पूर्वपदस्य तु वा स्यादादौ परे। आशौचं अशौचं। आनैश्वर्यं
अनैश्वर्यं। आक्षेत्रज्ञ्यं। अक्षैत्रज्ञ्यं। आकौशलं। अकौशलं। आनैपुणं। अनैपुणं ॥ ॥
णापवादः छंतपरत्वाद्बाधते आचार्यकः मातामहकः मातुलकः
ऋतष्ठञ् विद्यायोनिसंबंधेभ्य इति वर्त्तते तदाह वुञोपवाद इति उक्त त्रितिवक्तव्ये तपरकरणं ठञ्ग्रहणं च विंत्यप्रयोजनमिति प्रांचः पैतृकी विद्येत्यत्र ङीवर्थं ठञ्ग्रह
णमिति तु तत्त्वं न चटिड्ढेति सूत्रे कञ्ग्रहणात् ङीप्सिद्धतीति वाच्यं यादृशीत्यायसिद्धेः तदनुबंधकग्रहणेनातदनुबंधकस्याग्रहणात् त्यदादिषु दृश इति कञोऽनु
बंधकत्वात् तपरकरणं विहाय उष्ठुञित्येव सुवचमित्याहुः गोत्रादंकवत् अपत्याधिकारादन्यत्र लौकिकं गोत्रमित्युक्ते अपत्यप्रत्ययांतात् तत आगत इत्यस्मिन्नर्थे
अंकवत्प्रत्ययाः स्युः अंके दृष्टस्य सर्वस्यायं तिदेशो न तु साक्षाद्विहितस्यैवेत्याग्रहः तेन गोत्रचरणाद्वुञिति वुञपि लभ्यते संहितस्येदमिति सामान्येन विधीयमानोपि स
न्यत्रितंतादन्यत्र अंकेपि दृष्टः वेदमित्यादि संघांकेत्यादिनाऽंकार्थेऽण् विहित इतीहाप्यन्यत्रितंतादण् औपगवकमिति गोत्रचरणादिति वुञ् अंके दृष्ट इतीष्यसंताद्वु

म

वह्वृचः किं ह्यचस्तु कं वक्ष्यतीत्येकाच्प्रत्युदाहार्यः सोपपदे तु अन्तोदात्तात् किं संहितायाः संहिते गतिरनन्तर इत्याद्युदात्तोयं अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थं उदात्तादित्युक्ते पि भवति
ग्रहणोत्तं दन्तग्रहणात् वर्णो ह्युदात्त इत्यत्र यथा क्रतुयज्ञेभ्यश्च अग्निष्टोमस्य व्याख्यान इति अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्त्तमाना अग्निष्टोमादिशब्दा इहोदाहरणं यथा नामेव्याख्येयत्ता या उक्तत्वादित्याहुः स्तुतिसोमः अग्रे स्तोमोऽस्मिन्निति बहुव्रीहिः पराद्दिश्च परान्तश्चेत्यतो दात्तोयं पीयतेऽस्मिन्निति पेयः कृत्यल्युटो बहुलम्
मित्यधिकरणे यत् वाजो नाम यवागूभेदस्तत्सपेयो वाजपेयः अयं हि कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः पेयशब्दस्य यतो नावइत्युदात्तत्वात् राज्ञा क्षत्रियेण सूयते राजा सोमस्सूयते [illegible] त्रेति वा राजसूयः राजसूयेति क्यप् तत्तु एव निपातनात् समासः षष्ठी समासो वा अयमप्युत्तरपदप्रकृतिस्वरेण मध्योदात्त एव धातुस्वरेण सूयशब्दस्याद्युदात्तत्वात् असोमकेभ्य उदाहरति पाकेति अल्पपर्यायः पाकशब्दः पाकश्चासौ यज्ञश्चेति कर्मधारयस्तस्य च समासस्वरेणान्तोदात्तः नवैर्व्रीहिभिर्यजनं नवयज्ञः आग्रय

अध्यायेष्वेवर्षेः ॥४।३।६९॥ ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात् वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोध्यायः अध्यायेषु किं वासिष्ठी ऋक् पौरोडाशपुरोडाशात्ष्ठन् ॥४।३।७०॥ पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः तत्र ष्ठन् पौरोडाशिकः छन्दसो यदणौ ॥४।३।७१॥ छन्दस्यः छान्दसः द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताठ्ठक् ॥४।३।७२॥ द्व्यचः ऐष्टिकः पाशुकः ऋतः हौत्रिकः ब्राह्मणिकः आर्चिक इत्यादि अणृगयनादिभ्यः ॥४।३।७३॥ ठञादेरपवादः आर्गायनः औपनिषदः वैयाकरणः तत आगतः ॥४।३।७४॥ स्त्रुघ्नादागतः स्रौघ्नः

णापञ्जपाचविच्छेतिनङ्कर्त्तृकरणे कृत इति समासः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः अन्तोदात्तार्थ इति वाजपेयराज सूयार्थं तपाग्निस्मिन्नारब्धे सत्यन्तोदात्तादपि यज्ञाभिधायिनः परत्वाट्ठञैव भाव्यमित्याग्निष्टोमिक इत्याद्युदाहृतमिति भावः ॥ ॥ अध्यायेष्वेवर्षेः एवकारः स्पष्ट प्रतिपत्त्यर्थः वासिष्ठीति भवार्थेण पौरोडाशषित्वान्ङीष् पौरोडाशिकी पुरोडाशिकी पुरोदाश्यते इति पुरोडाशः दाशृ दाने कर्मणि घञ् इहैव निपातनाद्दस्य डत्वं छन्दसो द्यशब्दाद् व्याख्यानयोरर्थयोर्यदणौ स्तः अञ्जलेस्तस्य ठकोपवादः छन्दस्य इत्यादि इहार्थयोर्यदणभ्यां यथासंख्यं न भवत्यस्वरितत्वादिति बोध्यं ऋगयनाद्यगणोपवादः चातुर्होत्रक इति पृथिवी होता चौरध्वर्युरित्यादि मन्त्रस्य चातुर्होत्रेति नामधेयं इत्यादीति आदिशब्दात् प्राथमिकः आध्वरिकः पौरश्चरणिकः नामाख्यातग्रहणं संघातविगृही

तोग्रंथः शारीरकीयः चतुर्लक्षणी सूत्रसंदर्भः वृद्धाच्छः अत्रवार्त्तिकं तु वाख्यायिकाभ्यो बहुलमिति तादर्थ्ये एषा चतुर्थी आख्यायिकानामगद्यरूपो ग्रंथविशेष
अत एवाख्यानाख्यायिकयोस्तत्र तत्र भेदेनोपादानं आख्यायिकामिधानाययः प्रत्यय उत्पन्नस्तस्य बहुलं लुगित्यर्थः वासवदत्तामधिकृत्य कृता आख्यायिका वा
सवदत्ता सुमनोत्तरा कचिन्न भैमरथी अभेदोपचारेणागतार्थत्वान्नेदं वार्त्तिकमावश्यकमिति मूले नोक्तं ॥ ॥ शिशुक्रंदेत्यत्र वार्त्तिकं द्वंद्वे देवासुरादिभ्यः प्रतिषेधं
दैवासुरं राक्षोसुरं निपातनादिति सभाराजेति सूत्रे अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहेत्युक्तत्वात्तेन सूत्रेण क्लीवत्वं न सिद्ध्यतीति भावः सोस्य निवासः स
ति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितः प्रत्ययः स्यात् प्रथमान्तार्थः स निवासश्चेत् स्रुघ्नो निवास इति निवासाधिकरणमित्यर्थः नन्वस्येति शेषयोगे कर्त्तरि षष्ठीतथा

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।४।३।८८। शिशूनां क्रन्दनं शिशुक्रन्दः तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः यमस्य सभा यमसभं
क्लीवत्वं निपातनात् । यमसभीयः । किरातार्जुनीयं । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयं । विरुद्धभोजनीयं । सोऽस्य निवासः ।४।३।८९। स्रुघ्नो नि
वासोऽस्य स्रौघ्नः । अभिजनश्च ।४।३।९०। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । यत्र स्वयं वसति स निवासः । यत्र पूर्वैरुषितं सोऽभिजन इति विवेकः । आयुधजीविभ्य
श्छः पर्वते ।४।३।९१। पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात् । हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते हृद्गोलीयाः । आयु
धेति किम् । ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदाः द्विजाः । शण्डिकादिभ्यो ञ्यः ।४।३।९२। शण्डिकोऽभिजनोऽस्य शाण्डिक्यः ॥ ॥ ॥

च विशेषणविशेष्यभावव्यत्यासात् स्रुघ्नाधिकरणावासकर्त्तेह इत्यर्थस्तथा च तत्र भव इत्येव सिद्धं किमनेनेति चेन्नाहुः वासस्य चेतनमात्रकर्त्तृकतया प्रसिद्ध
त्वात् कारकतो भेदोस्तीति नास्ति वैयर्थ्यं वसंति हि प्रेम्णा गुणानवस्तुनीत्यादौ तूपचारो बोध्यः अभिजनश्च योगविभाग उत्तरार्थः अभिजनाः पूर्वबांधवा इति वृ
त्तिः अभिजायंते येभ्य इति व्युत्पत्तेरिति भावः पूर्वबांधवाः पित्रादयः बंधुशब्दः प्रज्ञादिः पूर्वसूत्रादिह निवास इत्यनुवृत्तेस्तत्सामानाधिकरण्यादभिजनशब्द
स्य तत्संबंधिनि लक्षणा एवं स्थिते फलितमाह यत्र पूर्वैरिति आयुधजीविभ्यः तादर्थ्ये एषा चतुर्थी आयुधजीविभ्यः आयुधजीव्यर्थं आयुधजीविनोऽभिधातुं प्रत्य
यः स्यादित्यर्थः सोस्याभिजन इत्यनुवर्त्तते पर्वत इति प्रकृतिविशेषणं तदाह पर्वतवाचिन इत्यादि पर्वत इति किं सांकाश्यका ६ ॥ ० ॥

हेतुमनुष्येभ्यो मनुष्यग्रहणमहेत्वर्थं बहुवचनं स्वरूपविधिनिरासार्थं समरूप्यमिति विभाषागुणोत्यत्र विभाषेति योगविभागाद्गुणवचनादपि पंचमी योगविभागे
नुवाहुलकं प्रकृतेस्तनुदृष्टरिति लिंगमयड्वयोगविभागो यथासंख्यनिरासार्थः टोडीचर्थः हैमवती हिमवतः प्रकाशते तत्र प्रथमं दृश्यत इत्यर्थः उत्पत्तिवचनस्तु प्रभ
वतिर्न गृह्यते तत्र जात इत्यतो भेदेन निर्देशात् वैदूर्य इति देत्यमध्योयं शाद्वलवन्नगुनद्वलवन्मूर्द्धन्यमध्यः नन्वत्रार्थासंगतिः वालवायपर्वतादसौ प्रभवति विदूर
नगरे तु संस्क्रियते सत्यं अत एव समाहितं भाष्ये वालवायो विदूरं च प्रकृत्यंतरमेव वा नवैतत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेदिति अस्यार्थः वालवायशब्दः प्रत्ययेन
भते विदूरादेशं च सूत्रे पठितेनादेशेनानुरूपः स्थानी वालवायशब्द आक्षिप्यते यथा शिवादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यामनुरूपः स्थानी विश्रवस्शब्द आ
क्षिप्यते यथा वा पदन्नदत्यादौ पदाद्यादेशानुरूपस्थानी पादादंतादिराक्षिप्यते तद्वत् प्रकृत्यंतरमेवेति विदूरशब्दो नगरस्येव पर्वतस्यापि वाचको स्तीत्यर्थः एवं चा

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः। ४।३।८१। समादागतं समरूप्यं। विषमरूप्यं। पक्षे गहादित्वाच्छः। समीयं। विषमीयं। देवदत्तरूप्यं। देवदत्तं। मयट्च।
४।३।८२। सममयं। विषममयं देवदत्तमयं। प्रभवति। ४।३।८३। ततइत्येव। हिमवतः प्रभवति हैमवती गङ्गा। विदूराञ्ञ्यः। ४।३।८४। विदूरात्प्रभ
वति वैदूर्यो मणिः। तद्गच्छति पथिदूतयोः। ४।३।८५। स्रुघ्नं गच्छति स्रौघ्नः। पन्था दूतो वा। अभिनिष्क्रामति द्वारम्। ४।३।८६। तदित्येव। स्रुघ्न
मभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारं। अधिकृत्य कृते ग्रन्थे। ४।३।८७। तदित्येव। शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः। शारीरकं भाष्यमि
तित्त्वभेदोपचारात्॥

स्मिन्पक्षे वालवायात्प्रभवतीति विग्रहे विदूरशब्दात्प्रत्यय इति व्याख्यानक्लेशो नेति भावः नवा इति वै शब्दोऽक्षमां द्योतयति तत्र पर्वं
ते विदूरशब्दोऽप्रसिद्ध इति चेद्ब्रूयाज्जित्वरीवद्व्यवहरेत् नियतपुरुषापेक्षो हि व्यवहारो दृश्यते यथा वणिज एव वाराणसीं जित्वरीति व्यवहरंति एवं वैयाकरणा एवाऽ
द्रिं विदूर इति तद्गच्छति द्वितीयांतात्तद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गंता पंथा दूतो वेत्यर्थः तत्र साध्वसिच्छिन्नतिकाष्ठानि पचंतीत्यादाविव करणस्य स्वातंत्र्यविवक्षया पं
थाः कर्ता अभिनिष्क्रामति द्वितीयांतात्प्रत्ययः स्याद्यन्निष्क्रामति तच्चेद्द्वारमित्यर्थः स्रौघ्नं कान्यकुब्जद्वारमिति स्रुघ्नाभिमुखनिष्क्रमणोकरणीभूतमिति फलितोर्थः
पूर्ववत्करणस्य कर्तृत्वं तदित्येवेति अधिकृत्येत्येतदपेक्षया च द्वितीया शारीरकीय इति कुत्सितं शरीरं शरीरकं तत्संबंधी शारीरको जीवात्मा तमधिकृत्य प्रस्तुत्य कृ

दशाकल्पएभ्यः पुराणप्रोक्तेष्विति णिनेरपवादोण् कपालिनो द्विजकलाप्यन्तेवासित्वात्याग्नस्य णिनेरपवादः पाराशर्य मराड्कस्तुत्या णिनिरिहसंवरध्यतइत्याह
णिनिः स्यादिति तद्विषयतात्रेष्यते तदर्थं छंदो ग्रहणमनुवर्त्यसूत्रयोश्छंदस्त्वं तु गोणपावृत्त्यावोध्ये भिक्षुसूत्रमिति चतुर्लक्षणीरूपं पाराशरिणइति पाराशर्यो व्या
सः अनंतरापत्येपि गोत्रत्वेनोपचाराद्गर्गादिभ्यइतियञ् आपत्यस्यचेतियलोपः अध्येत्रणस्तुप्रोक्तादितिलुक् भिक्षुनटसूत्रयोः किम् पाराशरं शैलालीकमेरइहा
छंदोनुवृत्त्यादिसाग्वत् भिक्षुनटसूत्रयोः किम् कार्ममेदं कार्शाश्वं ॥ तेनैकदिक्‌तृतीयांतादेकदिगित्यर्थेअणादयः स्युः एकदिक्‌समानादिगित्यर्थः सुनस्तेने

तेनैकदिक्।४।३।११२। सुदाम्ना अद्रिणा एकादिक्। सौदामनी। तसिश्च।४।३।११३। स्वरादिपाठादव्ययत्त्वं। पीलुमूलेन एकादिक् पीलुमूलतः। उरसो यच्च
४।३।११४। चात्तसिः। अणोपवादः। उरसा एकदिक् उरस्यः। उरस्तः। उपज्ञाते।४।३।११५। तेनेत्येव। पाणिनिना उपज्ञातं पाणिनीयम्। कृते ग्रन्थे।४
।३।११६। वररुचिना कृतो वाररुचो ग्रन्थः। संज्ञायाम्।४।३।११७। तेनेत्येव। अग्रन्थार्थमिदं। मक्षिकाभिः कृतं माक्षिकं मधु। कुलालादिभ्यो वुञ्।४।३।
११८। तेन कृते संज्ञायां। कुलालेन कृतं कौलालकं। वारुडकं। क्षुद्राभ्रमरवटरपादपाद‌ञ्।४।३।११९। तेन कृते संज्ञायां। क्षुद्राभिः कृतं क्षौद्रं। भ्रामरं
। वाटरं। पादपं। तस्येदम्।४।३।१२०। उपगोरिदं औपगवं। वहेस्तुरणिट्‌च। संवोढुः स्वं सांवहित्रं। आग्नीधः शरणं रण्‌भम्‌च। अग्निमिन्धे अग्नी
त्। तस्य स्थानम् आग्नीध्रं। ताच्छ्यात्सोपि आग्नीध्रः। समिधामाधाने षेण्यण्। सामिधेन्यो मन्त्रः। सामिधेनी ऋक् ॥ ९ त्युक्तिः छंदोधिकारनिवृत्त्यर्था॥

सौदामनीति अन्निति प्रकृतिभावान्नटिलोपः तडित्सौदामनी विद्युदित्यमरः तसिश्च पूर्वोक्तविषयेउपज्ञातेविनोपदेशं ज्ञातमुपज्ञातं कुलालादिभ्यो कुलालवरुडश्व
लनिषादकुंभकारश्वपाकादयः कुलालादयः क्षुद्राभ्रमरपादपशब्दाच्छे सा भेऽन्येभ्यो अणि अञ्विधीयते तस्येदं अणादयः पंचमहोत्सर्गाः घादयश्च वक्ष्यंता रामः
त्संवंधिनिस्युः अनंतरादिष्वनभिधानान्न देवदत्तस्यानंतरमिति वहेस्तुरइत्यर्थमिदमुपसंख्यानं अणा तु सिद्धएवानूद्यते तुरितिनृनतृचोस्सामान्यग्रहणाढत्वा ३ष
दीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये श्रवेमिट् ततो निमित्ताभावान्नढत्वादीत्याशयेनोदाहरति सांवहित्रमिति आग्नीदिति क्विप् ऋत्विग्विशेषोयं त्वमग्निद् ॥

आयुधजीविनः यौधेयादिति तत्र शंडिकादिभ्योञ्यः शंडिकाः सर्वसेन शकेत्यादि॥ ॥ सिंधुतक्ष सिंधुवर्णकगंधारकं वोजादयः सिंध्वादयस्तेत्तु प्रायेणाकच्छादिष्वपि पठ्यं
ते तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं वचनं तक्षशिलावत्सोद्धरणावर्वरेत्यादयस्तक्षशिलादयः वासुदेवार्जुनाभ्यां वुन् छाणोरपवादः अजाद्यदन्तमल्पाच्त
रमिति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याकरणं सर्वतोऽभ्यर्हितं पूर्वं निपततीति ज्ञापनार्थं ननु वसुदेवस्यापत्यमित्यर्थे ऋष्यंधकेत्यणि वासुदेवशब्दो निष्पन्नस्त
या च तत्र गोत्रक्षत्रियाख्येभ्य इत्युत्तरसूत्रेण वुञ्‌ वास्तु किमनेन वुनानस्य कश्चिद्विशेषः प्रागेव वृद्धत्वात् न च वृद्धिनिमित्तस्येति पुंवद्भावनिषेधोऽस्य स्यादिति वाच्यं वुन्य

सिन्धुतक्षशिलादिभ्योऽणञौ॥४।३।९३॥ सिंध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थे सैन्धवः तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः॥ तूदीश
लातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः॥४।३।९४॥ तूदी अभिजनोऽस्य तौदेयः शालातुरीयः वार्म्मतेयः कौचवार्य्यः॥ भक्तिः॥४।३।९५॥ सोऽस्येत्यनुव
र्त्तते भज्यते सेव्यत इति भक्तिः स्रुघ्नो भक्तिरस्य स्रौघ्नः॥ अचित्ताद्देशकालाट्ठक्॥४।३।९६॥ अपूपा भक्तिरस्य आपूपिकः पायसिकः अचित्तात्किं देवद
त्तः अदेशात्किं स्रौघ्नः अकालात्किं ग्रैष्मः॥ महाराजाट्ठञ्॥४।३।९७॥ माहाराजिकः॥ वासुदेवार्ज्जुनाभ्यां वुन्॥४।३।९८॥ वासुदेवकः अर्ज्जुनकः॥ गोत्रक्ष
त्रियाख्येभ्यो बहुलं वुञ्॥४।३।९९॥ अणोऽपवादः परत्वाट्ढञ्छौ बाधते ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः नाकुलकः बहुलग्रहणान्नेह पाणि
नो भक्तिरस्य पाणिनीयः॥ जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने॥४।३।१००॥ पिनकोपधायाइति निषेधस्य प्रमाणत्वात् न वा स्वरे

विशेषः ञ्निन्नित्यादिर्नित्यमिति तुल्यस्वरत्वात् नाप्यभ्यर्हितं पूर्वमिति ज्ञापनमेव तत्फलमिति वाच्यं तथात्वे हि पूर्वनिपातप्रकरणे अभ्यर्हितमित्येव लाघवात्कुर्यादिति चेदत्र
भाष्यसंक्षेपो भगवत इति अयं भावः सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयत इति स्मृतेः परमात्मेह वासुदेवः सर्वत्रासौ वसति सर्वमत्र
वसतीति वा व्युत्पत्त्या वासुः बाहुलकादुण् वासुश्चासौ देवश्चेति विग्रहः तथा च नेयं गोत्राख्या नापि क्षत्रियाख्येति पृथक् एव वुन्विधिः अभ्यर्हितं पूर्वमिति तु प्रसंगाज्ज्ञा
पितं तदप्यनित्यं श्वयुवमघोनामित्यादि लिंगादित्यवधेयं द्वन्द्वाच्छं बाधत इति औपगवो भक्तिरस्य औपगवकः॥ जनपदिनां स्वस्वामिभावसंबंधे मत्वर्थीयं दर्शय

तालादिभ्योण् अञ्मयटोरिति तालश्यामाकशब्दाभ्यां वृद्धत्वान्मयट् प्राप्तः बर्हिणां विकारो बार्हिणं प्राणिरजतादिभ्योञ् ततोञितश्चतत्प्रत्ययादित्यञ् प्राप्तः शेषेभ्य स्त्वनुदात्तादित्वादञ् प्राप्तः तथाहि विशिदृशिभ्यामिंद्रशब्दउपपदेमूलविभुजादित्वात्कः अन्येषामपीति दीर्घः इंद्राविशः इंद्रादृशः चापसांत्वनेपचाद्यच् चाप यिमूस्त्राशब्दो लघावंत इतिमध्योदात्तः फिषइत्यधिकाराद्वाप प्रागेवस्वरप्रवृत्तेः इंद्रायुधशब्दः समासस्वरेणांतोदात्तः अणग्रहणं बाधकबाधनार्थं यथाविहि तप्रत्ययविधौ हि बार्हिणशब्दाद्वृद्धलक्षणो मयट् स्यात् ञितश्चतत्प्रत्ययादित्यञो बाधनेनवचनस्य चरितार्थत्वादित्याहुः तालाद्धनुषीति गणसूत्रमिदं हाटकइति

तालादिभ्योऽण्।४।३।१५२। अञ्मयटोरपवादः। तालाद्धनुषि। तालं धनुः। अन्यत्तालमयं। ऐन्द्रायुधं। जातरूपेभ्यः परिमाणे।४।३।१५३। अण् बहुवच नात्पर्यायग्रहणं। हाटकः। तापनीयः। सौवर्णो वा निष्कः। परिमाणे किं। हाटकमयी यष्टिः। प्राणिरजतादिभ्योऽञ्।४।३।१५४। शौकं। बाकं। राजतं। ञि तश्चतत्प्रत्ययात्।४।३।१५५। ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवार्थयोः। मयटोपवादः। शामीलस्य शामीलं। दाधित्थं। कापित्थम्। ञितः किं। बैल्वमयं। क्रीतवत्परिमाणात्।४।३।१५६। प्राग्वतेष्ठञित्यारभ्य क्रीतार्थे ये प्रत्यया ये नोपाधिना परिमाणाद्विहितास्ते तथैव विकारे तिदि श्यन्ते। अणादीनामपवादः। निष्केण क्रीतं नैष्किकं। एवं निष्कस्य विकारोपि नैष्किकः। शतस्य विकारः शत्यः। शतिकः। उष्ट्राद्वुञ्।४।३।१५७। प्राण्य ञोपवादः। औष्ट्रकः। उमोर्णयोर्वा।४।३।१५८। औमं। औमकं। और्णं। और्णकं। वुञभावे यथाक्रमममणञौ। एण्या ढञ्।४।३।१५९। ऐणेयं। एणस्य तु ऐणं। गोपयसोर्यत्।४।३।१६०। गव्यं। पयस्यं। द्रोश्च।४।३।१६१। द्रुर्वृक्षस्तस्य विकारोऽवयवो वा द्रव्यम्॥ १ इहवृद्धलक्षणो मयट् प्राप्तः तपनीयादेरनुदात्तादेश्चे

त्यञ् प्राप्तः प्राणि अनुदात्तादेरञः सिद्धत्वात्परिशिष्टमिहोदाहरणं तदाह शौकं बाकमिति शुकबकशब्दौ प्राणिनां कुरुवर्णाणामित्याद्युदात्तौ राजतमिति रजतः शी स लोह उदुंबर कंटकारित्यादयो रजतादयस्तेषु अनुदात्तादीनां पुनः पाठो मयड्बाधनाय अन्यथा हि परत्वान्मयट् स्यादेव शामीलमिति शामीलशब्दः शम्याः ष्ल ञिति सूत्रेण ञितः दधित्थादनुदात्तादेश्चेत्यञ् दाधित्थस्य दाधित्थं बैल्वमयमिति बिल्वशब्दो असंतः नैष्किकमिति तेन क्रीतमिति ठञ् शत्यः शतिक इति शताच्च ठ न्यतौ अशत इति उमाशब्दस्तृणधान्यानां चेत्याद्युदात्तः ऊर्णाशब्दस्तु प्रातिपदिकस्वरेणांतोदात्त इति भावः एण्या ढञ् प्राण्यञोपवादः स्त्रीलिंगनिर्देशादिहं

तापरत्यत्र तु छांदसं ह्रस्वत्वं आग्नीध्रमिति भत्वविधानाद्ध्स्यजस्त्वं नेतिभावः सोपीति अग्नीदपीत्यर्थः ननु पिबाग्नीध्रात्तवेत्यादावाद्युदात्तं प्रयुज्यते वार्त्तिके तु रणीति पा
ठादयमंतोदात्त इति चेदत्राहुः आग्नीध्रसाधारणादञिति वार्त्तिकेन विहितो यः स्वार्थेऽञ् तत्पक्षे तत्राद्युदात्तत्वं बोध्यमिति समिधां कर्मणि षष्ठीयं आधानमिति करणे
ल्युट् कर्मणि षष्ठ्यंतादाधानकरणे षेण्यण् स्यात् सामिधेन्य इति यया अग्निः समिध्यते सा समित् संपदादित्वात्करणे क्विप् तस्या आधान इति विग्रहः सामिधेनीति
षित्वान्ङीष् हलस्तद्धितस्येति यलोपः यया ऋचा समिदाधीयते सा सामिधेनीत्यर्थः प्रवो वाजा अभिद्यव इत्याद्याः आजुहोता दुवस्यतेत्यंताः सामिधेन्य इति व्यवह्रि
यंते॥ ❀॥ रथाद्यत् अणोपवादः रथाद्रथांगे इति वार्त्तिकमभिप्रेत्याह रथ्यं चक्रमिति रथसीताहलेभ्यो यद्विधाविति तदंतविधिरुपसंख्यायते परमरथ्यं उत्तम

रथाद्यत्॥४।३।१२१॥ रथ्यं चक्रं। पत्त्रपूर्वादञ्॥४।३।१२२॥ पत्त्रं वाहनं। आश्वरथस्येदं। आश्वरथं। पत्राध्वर्युपरिषदश्च॥४।३।१२३॥ अञ्। पत्राद्वाह्ये। अश्वस्येदं वहनीयमाश्वं। आध्वर्यवं। पारिषदं। हलसीराट्ठक्॥४।३।१२४॥ हालिकं। सैरिकं। द्वन्द्वाद्वुन्वैरमैथुनिकयोः॥४।३।१२५॥ काकोलूकिका। कुत्सकुशिकिका। द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः। दैवासुरं। गोत्रचरणाद्वुञ्॥४।३।१२६॥ औपगवकं। चरणाद्धर्माम्नाययोरिति वक्तव्यं। काठकं। सङ्घाङ्कलक्षणेष्वञ्यञिञामण्॥४।३।१२७॥ घोषग्रहणमपि कर्त्तव्यं। अञ्। बैदः सङ्घोऽङ्को घोषो वा बैदं लक्षणं। यञ्। गार्गः। गार्गी। इञ्। दाक्षः। दाक्षी। परम्परासम्बन्धोऽङ्कः। साक्षात्तु लक्षणं। शाकलाद्वा॥४।३।१२८॥ अण् एवोक्तेऽर्थे पक्षे चरणत्वाद्वुञ्। शकलेन प्रोक्तमधीयते शाकलास्तेषां सङ्घोऽङ्को घोषो वा शाकलः। शाकलकः। लक्षणे क्लीबता॥

रथ्यं द्वयो रथयोरंगं द्विरथं इह द्विगोर्लुगनपत्य इति यतो लुक् ननु यत्प्रत्ययोऽत्र रथांग एव यदिष्यते कथं त
र्हि रथस्य वोढा रथ्य इति तद्वहतीत्यनेनेति चेदेवं तर्हि अयमेव यद्रथांग इव वोढर्यपीष्यतां तद्वहति रथयुगप्रासंगमित्यत्र रथग्रहणं त्यज्यतामिति चेन्मैवं द्वौ र
थौ वहति द्विरथ्य इत्यत्र द्विगोर्लुगनपत्य इति प्राग्दीव्यतीयलुक्प्रसंगात् तद्वहतीति यत्प्रत्ययस्य तु प्राग्दीव्यतीयत्वाभावान्न लुगिति द्विरथ्य इति सिद्ध्यति ननु द्विगो
र्लुगनपत्य इत्यत्राचीत्यपकर्षणात्कथमत्र यतो लुक्प्रसक्तिरिति चेदत्राहुः तद्वहतीत्यत्र रथग्रहणमेव ज्ञापकमेतस्य यतो हलादेरपि लुग्भवतीति अन्यथा तत्र र
थग्रहणं व्यर्थमेव स्यात् यथा च द्वयो रथयोरंगमिति विग्रहे द्विरथ्यमिति प्रयोगः सुस्थ इति पत्त्रपूर्वादञ् सर्वस्यायमपवादः पत्त्रमिति पतत्यनेनेति विग्रहे दान्नीत्या

हरीतक्यादिभ्यश्च इह द्राक्षाप्रभृतिभ्यो नित्यं वृद्धेति प्राप्तस्य मयटो लुप् अनुदात्तादिभ्योऽञः इतरेभ्यस्त्वण लिंगमेवेति वचनं तु विशेषाभावेऽपि हरीतक्यादिषु व्यक्तिरित्युक्तत्वा दिति भावः कंसीयमिति प्राक्क्रीताच्छ इत्यधिकारे तस्मै हितमिति छः तस्यैव छस्यापवादस्तपाउगवादिभ्यो यत् परशव्यमिति परशुशब्दस्योगवादित्वादन्न सिद्धे तत्संनियोगेन यतोऽलुगर्थं वचनं नचयस्येति लोपे कृते हलस्तद्धितस्येति यलोपेन सिद्धमिष्टमिति भ्रमितव्यम् ईतीत्यनुवृत्तेः॥ प्राग्दीव्यतीयाः समाप्ताः ॥ तदाहेतीति वाक्याद्यं प्रत्ययविधिः शब्दो मा कारीति यो निषेधति स माशब्दिक इत्युच्यते तथा नित्यः शब्द इति यश्चाह स नैत्यशब्दिकः कार्यशब्दिकः इह वाक्याद्वितीयान संभवत्यप्राति पदिकत्वा

हरीतक्यादिभ्यश्च॥४।३।१६७॥ एभ्यः फलप्रत्ययस्य लुप्स्यात्। हरीतक्यादीनां लिङ्गमेव प्रकृतिवत्। हरीतक्याः फलानि हरीतक्यः॥ कंसीयपरशव्ययो
र्यञञौ लुक् च॥४।३।१६८॥ कंसीयपरशव्यशब्दाभ्यां यञञौ स्तः छयतोश्च लुक्। कंसाय हितं कंसीयं। तस्य विकारः कांस्यम्। परशवे हितं परशव्यं तस्य
विकारः पारशवः॥ प्राग्दीव्यतीयाः समाप्ताः॥ प्राग्वहतेष्ठक्॥४।४।१॥ तद्वहतीत्यतः प्राक् ठगधिक्रियते। तदाहेति माशब्दादिभ्य उपसंख्यानम्। माश
ब्दः कारी इति यश्चाह स माशब्दिकः। स्वागतादीनां च॥७।३।७॥ ऐच् न स्यात्। स्वागतमित्याह स्वागतिकः। स्वाध्वरिकः। स्वङ्गस्याऽपत्यं स्वाङ्गिः। व्य
ङ्गस्याऽपत्यं व्याङ्गिः। व्यडस्यापत्यं व्याडिः। व्यवहारेण चरति व्यावहारिकः। स्वपतौ साधु स्वापतेयं। आहो प्रभूतादिभ्यः। प्रभूतमाह प्राभूतिकः। पा
र्योप्तिकः। पृच्छतौ सुस्नातादिभ्यः। सुस्नातं पृच्छति सौस्नातिकः। सौखशायनिकः। आनुशतिकादिः। गच्छतौ परदारादिभ्यः। पारदारिकः। गौरुतल्पि
कः। तेन दीव्यति खनति जयति जितम्॥४।४।२॥ अक्षैर्दीव्यति आक्षिकः। अभ्र्या खनति आभ्रिकः। अक्षैर्जयति आक्षिकः। अक्षैर्जितमाक्षिकं॥

तेन तच्छब्देन कर्ममात्रं निर्दिश्यते तच्च वाक्यार्थरूपमित्याहुः ऐच् न स्यादिति न य्वाभ्यामिति प्राप्त ऐजागमोऽनेन निषिध्यते न कर्मेत्यतो नञनुवर्तनादिति भावः स्वा
पतेयमिति पथ्यतिथिवसतिस्वपतेर्ढञ् स्वशब्दस्य द्वारादित्वादैजागमस्य प्राप्तिः द्वारादिष्वस्य स्वस्येदं सौवमिति ज्ञेयं आहाविति उपसंख्यानमित्यनुवर्त्यते आहेति पदै
कदेशस्य प्रकृतिभागस्यागन्तुकेनेकारेण आहाविति अनुकरणं प्राभूतिक इति क्रियाविशेषणाट्ठक् प्रत्ययः तेन दीव्यति इह कालपुरुषसंख्यानविवक्षितास्तेनाक्षैरदे
वीत् देविष्यति वा आक्षिक इति भवति एवमक्षैर्देविष्यासि देविष्यामि वा आक्षिकः दीव्यति दीव्यथ दीव्यामो वा आक्षिकाः कारकं तु विवक्षि तमेव जयति जितमिति कर्तृकर्म

एगास्त्विति गोपयसोः यच्चापि सर्वत्र गोरजादिप्रसंगे यदुक्तं तथापि मयट्‌द्वैतयोरिति पक्षे प्राप्तं मयट्‌ं बाधितुं पुनरयं यद्विधिः द्रोश्च ओरञः एकाचो नित्यमिति मयट्‌ स्त्रापवा
दोयं द्रव्यमिति ओर्गुणः वान्तो यि प्रत्यये द्रव्यगुणाकर्मेत्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणोद्रूयते आश्रीयते इति द्रुधातोरचो यदिति यत्प्रत्ययान्तः ॥ःः॥ मानेवयः
पतोपवादः द्रुवयमिति द्रोर्विकारभूतं मस्यादियरिमाणमित्यर्थः फले लुक् विकारावयवेति फलितस्य वृक्षस्य फलमवयवो विकारश्चेतेनान्यतरस्मिन्प्रत्ययः आ
मलकमिति मयटो लुक् लुक् तद्धितलुकीति ङीषो लुक् न चात्र स्थानिवद्भावेन यस्येति चेति लोपः शंक्यः लुका लुप्ते न स्थानिवदित्यभ्युपगमात् अत एव पंचभिः द्वीभिः
क्रीतः पंचपटुरित्यत्राध्यर्द्ध पूर्वेति ठञो लुकि कृते लुक् तद्धिते तिङी पो लुका लुप्तत्वेन स्थानिवत्त्वाभावाडुकारस्य यणादेशो न भवति प्लक्षादिभ्योण् अञोपवादः शिग्रुकर्के

मानेवयः ।४।३।१६२। द्रोरित्येव । द्रुवयं । यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयं । फले लुक् ।४।३।१६३। विकारावयवप्रत्ययस्य लुक् स्यात् फले । आ
मलक्याः फलं । आमलकं । प्लक्षादिभ्योऽण् ।४।३।१६४। विधानसामर्थ्यान्न लुक् । प्लाक्षं । न्यग्रोधस्य च केवलस्य ।७।३।५। अस्य न वृद्धिरैजागमश्चाने
यग्रोधं । जंब्वा वा ।४।३।१६५। जम्बूशब्दात् फलेऽण् वा स्यात् । जाम्बवं । पक्षे ओरञ् । तस्य लुक् । जम्बु । लुप् च ।४।३।१६६। जंब्वाः फलप्रत्ययस्य लुप् वा
स्यात् । लुपि युक्तवत् । जंब्वाः फलं जम्बूः । फलपाकशुषामुपसंख्यानं । व्रीहयः । मुद्गाः । पुष्पमूलेषु बहुलम् । मल्लिकायाः पुष्पं मल्लिका । जात्याः पुष्पं जा
ती । विदार्य्या मूलं विदारी । बहुलग्रहणान्नेह । पाटलानि पुष्पाणि । साल्वानि मूलानि । बाहुलकात् क्वचित् लुक् । अशोकं । करवीरं ॥ ॥

धुशब्दाभ्यामोरञित्यन्येभ्यस्त्वनुदात्तादित्वादञ् प्राप्तिः प्लक्षः न्यग्रोधः अश्वत्थः इंगुदी शिग्रुः कर्कंधुः बृहतीत्यत्र प्लक्षशब्दः फिषस्त्वन्तोदात्तः न्यग्रोधशब्दो लघावंत इति
मध्योदात्तः अश्वत्थशब्दस्तु घृतादित्वादन्तोदात्तः इंगुदी बृहतीशब्दौ गौरादिङीषन्तौ आश्वत्थे वेणावप्लाक्षे नैयग्रोधे इंगुदं फल इत्यमरः न्यग्रोधस्य च केवलस्येति किं न्य
ग्रोधमूले भवाः न्याग्रोधमूलाः शालयः न्यक्‌रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम् अव्युत्पत्तिपक्षे तु विध्यर्थः जंब्विति नपुंसकह्रस्वः फले जंब्वा जम्बूः स्त्री जंबु जांब
वमित्यमरः फलपाकेति फलपाकेन शुष्यन्तीति फलपाकशुषः व्रीहयो मुद्गा इति विल्वादयो लुप् मल्लिकेति अनुदात्तलक्षणस्याञो लुप् मादीनां चेति फिट्सूत्रान्मल्लि
काशब्दे द्वितीयमुदात्तं जाती विदारीशब्दौ गौरादिङीषन्तौ पाटलानीति विल्वादित्वादण् साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥ ॥

दोर्धः धातुष्कइति वेतनादिगणेधनुर्दण्डेति पठ्यते तच्च संघातविगृहीतार्थं तथा च धानुर्दण्डिकः दाण्डिक इत्यप्युदाहार्यं॥ ॥ आयुधाच्छ च आयुध्यंते अनेनेति आयुधं प्रहरणं
त्रैकविधानमिति कः हरत्युत्संगादिभ्यः एभ्यस्तृतीयांतेभ्यष्ठक्स्यादुपादत्ते नयति वेत्यर्थः उत्संगः उडुप उत्पुत पिठक पिठाक भस्त्रादिभ्यः ष्ठन् भस्त्रा चर्मविकारः। शीर्षे
भारशब्दो न पठ्यते निपातनाच्छीर्षभारः सप्तमीसमासश्चतत्पुरुषे कृतीति वा अलुक् पक्षे शीर्षभारः एकदेशविकृतस्येति वीवधाच्चेति वक्तव्यमिति वार्त्तिकं न्यायसि
द्धार्थकथनपरमिति भावः वृत्तिकृत्तु सूत्रे वीवधशब्दं प्रक्षिप्य विभाषा विवधवीवधादिति पपाठ त्रेर्मम्नित्यं नित्यग्रहणं स्वातंत्र्येण प्रयोगं वारयितुं अतएव लौकिके

आयुधाच्छ च।४।४।१४। चात् ठन्। आयुधेन जीवति आयुधीयः। आयुधिकः। हरत्युत्संगादिभ्यः।४।४।१५। उत्संगेन हरति औत्सङ्गिकः। भस्त्रादिभ्यः ष्ठन्।
४।४।१६। भस्त्रया हरति भस्त्रिकः। षित्वान् ङीष्। भस्त्रिकी। विभाषा विवधवीवधात्।४।४।१७। विवधेन हरति विवधिकः। पक्षे ठक्। वैवधिकः। एकदेशवि
कृतस्याऽनन्यत्वात् वीवधादपि ष्ठन्॥ वीवधिकः। वीवधिकी। विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते। अण् कुटिलिकायाः
।४।४।१८। कुटिलिका व्याधानां गतिविशेषः कर्मारोपकरणभूतं लोहं च। कुटिलया हरति मृगान् अङ्गारान्वा। कौटिलिको व्याधः कर्मारश्च। निर्वृत्तेऽक्ष
द्यूतादिभ्यः।४।४।१९। अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरं। त्रेर्मम्नित्यम्।४।४।२०। त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप् स्यान्नित्यं। कृत्या
निर्वृत्तं कृत्रिमं। भावप्रत्ययान्तादिमप्वक्तव्यः। पाकेन निर्वृत्तं पाकिमं। त्यागिमं। अपमित्ययाचिताभ्यां कक्कनौ।४।४।२१। अपमित्येति ल्यबन्तम्।
अपमित्य निर्वृत्तं आपमित्यकम्। याचितेन निर्वृत्तं याचितकं। संसृष्टे।४।४।२२। दध्ना संसृष्टं दाधिकं। चूर्णादिनिः।४।४।२३। चूर्णैः संसृष्टाः चूर्णिनोऽ
पूपाः। लवणाल्लुक्।४।४।२४। लवणेन संसृष्टो लवणः सूपः॥ लवणं शाकं। मुद्गादण्।४।४।२५। मौद्ग ओदनः॥ १९ विग्रहवाक्ये क्तिन्नादीनां प्रयोगेन तु त्रे
तदाह कृत्या निर्वृत्तमिति एवमग्रेऽपि पाकेन निर्वृत्तमिति विग्रहो बोध्यः संख्यावाची त्रिशब्दो नेह गृह्यते प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणात् निर्जांत्रयाणामिति लिंग
च्च न तु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां मपं विना त्रिप्रत्ययांतस्य प्रयोगनिवारणे पि तद्विवक्षायामन्यस्य स्वातंत्र्येण प्रयोगोऽस्त्वीरइति चेन्न नित्यमिति योगं विभज्यत
त्सामर्थ्यादर्थविशेषानादरेणैव स्वातंत्र्यवारणात्॥ इमविति एवं च मपन कर्तव्यः तथाहि भावप्रत्ययांतादिमप् ततः त्रेः पूर्वेण सिद्धे नियमार्थमिदं त्रिप्रत्ययांत इम

तेनाक्षैर्द्युतं अक्षैः खात इति कर्माद्यर्थे आक्षिक इति न भवति अभ्रोति अभ्रिः स्त्री काष्ठकुद्दाल इत्यमरः ॥ ❀ ॥ संस्कृतं योगविभाग उत्तरार्थः बाहुकेति सूत्रे षकारः संहितको न
त्वत्र वंश इति नङीष् तथा च आकर्षात्पूर्वादेरित्यादि श्लोकवार्त्तिकं षित्त्वविवेचनाय प्रकरणान्ते पठिष्यति निकषोपल इति सुवर्णपरीक्षार्थः पाठान्तरमिति एतच्च भाष्यादौ कषवले षे
न्यादिदंडके आकषात्कुलिति माधवेनोपन्यस्तं किं त्वाकर्षात्पर्वादेरिति वार्त्तिकस्यानुगुणं तत्र हि नीरेफ पाठे दृष्ट्वा संगतिप्रसंगात् पर्पइति पर्पगतौ हलश्चेति करणे घञ् इ
हांतर्गणसूत्रे पादः पच्चेति पादाभ्यां चरति पदिकः यत्तु वार्त्तिकं पद्भाव इके चरतावुपसंख्यानमिति सोऽस्यैव प्रपंचः पर्पश्च अश्व अश्वत्थ रथ जाल न्यास व्याल पादः पत्त श्वगण
संस्कृतम् ।४।४।३॥ दध्ना संस्कृतं दाधिकं मारिचिकं कुलत्थकोपधादण् ।४।४।४। ठकोपवादः । कुलत्थैः संस्कृतं कौलत्थं । तैत्तिडीकं तरति ।४।४।५।।उ
डुपेन तरति औडुपिकः । गोपुच्छाट्ठञ् ।४।४।६। गौपुच्छिकः । नौद्व्यचष्ठन् ।४।४।७। नाविकः । घटिकः । बाहुभ्यां तरति बाहुकः स्त्री । चरति ।४।४।८। तृती
यान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । शाकटिकः । दध्ना चरति दाधिकः । आकर्षात्ष्ठल् ।४।४।९। आकर्षो निकषोपलः ।
आकषादिति पाठान्तरं तेन चरति आकर्षिकः । षित्त्वान्ङीष् । आकर्षिकी । पर्पादिभ्यः ष्ठन् ।४।४।१०। पर्पेण चरति पर्पिकः । पर्पिकी । येन पीठेन पङ्
गवश्चरन्ति स पर्पः । अश्विकः । रथिकः । श्वगणाट्ठञ्च ।४।४।११। चात्ष्ठन् । श्वादेरिञि ।७।३।८। ऐच् न । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः तदादिविधौ
चेदमेव ज्ञापकं । इकारादाविति वाच्यं । श्वगणेन चरति । श्वागणिकः । श्वागणिकी । श्वगणिकः । श्वगणिकी । पदान्तस्यान्यतरस्याम् ।७।३।९। श्वादेरङ्ग
स्य पदशब्दान्तस्यैज्वा । श्वापदस्येदं श्वापदं । शौवापदं । वेतनादिभ्यो जीवति ।४।४।१२। वेतनेन जीवति वैतनिकः । धानुष्कः । वस्नक्रयविक्रयाट्ठन् ।४ ।
।४।१३। वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं संघातविगृहीतार्थं । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ॥ ६ ॥ ६ ॥

णाट्ठञ्च ठकोपवादः एतदेव ज्ञापकमिति द्वारादिगणे श्वन् शब्दः पठ्यते न तु श्वभस्त्र श्वदंष्ट्र इत्यादि तथा च श्वादेरिञीति निषेधसूत्रमेव व्यर्थं स्यात् द्वारादिष्वन्तदादिविधिं ज्ञापय
तीत्यर्थः फले तु द्वारपालस्यायं दौवारपाल इत्यादौ वैजागमस्य सम्प्रवृत्तिः इकारादाविति सूत्रे इञीत्यपनीय इकारादाविति पठनीयमित्यर्थः अन्ये तु इञीति स्थाने इतीति पठन्ती
यम् तथा चागाक्षिप्तप्रत्ययस्य विशेष्यत्वात् यस्मिन् विधिस्तदादावित्यनेन इकारादिर्लभ्यते इत्याह श्वागणिकीति ष्ठनः षित्त्वान्ङीष् श्वापदस्येति अन्येषां मतेन इति ।

तिविग्रहः अथ कथं दण्डाजीवश्च वाडूविरित्यमरः उक्तनियोगेनैव व्युत्पत्तिभावस्वीकारात् अत्राहुः निरङ्कुशाः कवय इति गत्यं मिति किं द्विगुणं त्रिगुणं वा वृद्धिं प्रयच्छ त्येव मर्णा इत्यर्थे द्वैगुणिक इत्यादि मा भूत् निपात्यत इति अत एव व्याख्यानात् प्रयोगोप्युपपद्यत इत्याशयेनोदाहरति दशैकादशानिति संख्यायाः अल्पीयस्या इति पूर्वनिपातः उत्तमर्ण एवेति दशरत्नाएकादशगृह्णातीतितस्यैव गर्ह्यत्वादिति भावः ॥ ॐ ॥ उञ्छति भूमौ पतितं स्यैकैकस्योपादानमुञ्छः सामाजिक इति समजे ति अस्मिन्निति समाजः समूहः शब्दं करोतीति प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः अभिधानस्वाभाव्याद्व्युत्पादन एवायं प्रत्ययः नेह शब्दं करोति वर्वरः खरो वा दार्दुरिक इति कुलालः नाय

उञ्छति ।४।४।३२। बदराण्युञ्छति बादरिकः । रक्षति ।४।४।३३। समाजं रक्षति सामाजिकः । शब्ददर्दुरं करोति ।४।४।३४। शब्दं करोति शाब्दिकः । दार्दुरिकः । पक्षिमत्स्यमृगान्हन्ति ।४।४।३५। स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणं मत्स्यपर्यायेषु मीनस्यैव पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः । परिपन्थं च तिष्ठति ।४।४।३६। अस्माद्द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक्स्यात् पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चौरः । परिपन्थं हन्ति पारिपन्थिकः । माथोत्तरपदपदव्यनुपदं धावति ।४।४।३७। दण्डाकारो माथः पन्थाः । दण्डमाथः । दण्डमाथं धावति दाण्डमाथिकः । पादविकः । आनुपदिकः । आक्रन्दाट्ठञ्च ।४।४।३८। अस्माट्ठञ् स्यात् चाट्ठक् आक्रन्दः शिनां रोदनस्थानं धावति आक्रन्दिकः । पदोत्तरपदं गृह्णाति ।४।४।३९। पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः । प्रतिकण्ठार्थललामं च ।४।४।४०। एभ्यो गृह्णात्यर्थे ठक्स्यात् । प्रतिकण्ठं गृह्णाति । प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥ ११ भांडवाची हृद्दरशब्दः मात्स्यिक

इति मत्स्यस्य ङ्यामिति परिगणनात्सूर्यतिष्येति यलोपाभावः हारिणिक इति न त्विदं पर्यायस्योदाहरणं न भवति हरिणस्य मृगविशेषत्वात्तथा चात्र पर्यायस्योदाहरणं कि मिति न प्रदर्शितमिति चेदत्राहुः आरण्यकचतुष्पात्सु हरिणे च मृगशब्दो वर्त्तते यदा हरिणवाची मृगशब्दस्तदा मृगपर्यायस्योदाहरणं भवत्येवेति परिपन्थं च परिपन्थ एव वदयमव्ययीभावस्तत्पुरुषो वा क्रियाविशेषणत्वात्तिष्ठतेरकर्मकत्वे पि परिपन्थस्य कर्मत्वमस्त्येवेत्याह द्वितीयान्तादिति चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोतीत्या तिष्ठति हन्ति चेति माथ इति मथ्यत्ते गन्तृभिरिति माथः मथे विलोडने कर्मणि घञ् पदोत्तरपदं पदशब्द उत्तरपदं यस्य तत्पदोत्तरपदं पदान्तमित्युक्तौ तु बहुच्पूर्वान्मा भू



ति

द्विषय एवेति तेन त्रिप्रयोगो निवर्त्तते ततः नित्यं अनेन निर्वृत्तार्थो विवक्षायामपि त्र्यं तस्य स्वातंत्र्यं वार्यते एवञ्च संख्यावाचि त्रिशब्दस्य ग्रहणाशंकैव नास्ति भावप्रत्ययांताद्दित्य
नुवृत्तेः स्वरेपि विशेषो नास्ति उदात्तनिवृत्तिस्वरेणाइमपइकारस्योदात्तत्वात् अपमित्येति उदीचां माङ इति क्त्वा सत्यपे अपेत्यनेन सह गतिसमासः क्त्वो ल्यप् न यते रिदन्य
तरस्यामिति इत्वं ह्रस्वस्येति तुक् ल्यवंतादस्मात्तृतीयांतात्प्रत्ययो न भवति किंतु वचनात्प्रथमांतादेवेति बोध्यम् ॥ ॥ व्यंजनैरुप व्यज्यते अनेन ओदनादिरस इति व्यं
जनं तद्वाचिभ्यः उपसिक्त इत्यर्थे ठक्स्यात् तत्रेत्यनुवृत्तेरकर्मकत्वात्कथं तस्य द्वितीयांतेन प्रतीपमित्यादिना संबंध इत्याशंकायामाह क्रियाविशेषणत्वादिति प्रतीपमि
ति प्रतिगता आपोस्मिन्निति बहुव्रीहिः ऋक्पूरित्यकारः समासांतः द्व्यन्तरुपसर्गेभ्य इति ईत्वं व्युत्पत्तिमात्रमिदं प्रतिकूलानुकूलपर्यायाहीमे रूढिशब्दाः आन्वीपिक

व्यंजनैरुपसिक्ते ॥४।४।२६॥ ठक् स्यात् ॥ दाध्ना उपसिक्तं दाधिकम् ॥ ओजस्सहोऽम्भसा वर्त्तते ॥४।४।२७॥ ओजसा वर्त्तते औजसिकः शूरः । साहसिकश्चोरः । आम्भ
सिको मत्स्यः । तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥४।४।२८॥ द्वितीयान्तादस्माद्वर्त्तत इत्यस्मिन्नर्थे ठक्स्यात् क्रियाविशेषणत्वाद्द्वितीया । प्रतीपम्वर्त्तते
प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । परिमुखञ्च ॥४।४।२९॥ परिमुखम्वर्त्तते पारिमुखिकः । चात्पारिपार्श्विकः ।
प्रयच्छति गर्ह्यम् ॥४।४।३०॥ द्विगुणार्थं द्विगुणं तत्प्रयच्छति द्वैगुणिकः । त्रैगुणिकः ———— । वृद्धेर्वृधुषिभावो वक्तव्यः ॥ वार्धुषिकः । कुसीददशैका
दशात् ष्ठन्ष्ठचौ ॥४।४।३१॥ गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे । कुसीदम्वृद्धिस्तदर्थं द्रव्यं कुसीदं तत्प्रयच्छतीति कुसीदिकः । कुसीदिकी ।
एकादशार्थत्वादेकादश ते च ते वस्तुतो दश चेति विग्रहेऽकारः समासान्त इहैव सूत्रे निपात्यते । दशैकादशिकः । दशैकादशिकी । दशैकादशान्प्रयच्छ
तिरित्युत्तमर्ण एवेहापि तद्धि

इति आन्वीपमित्यत्र ऊदनोर्देश इत्यूत्त्वं तु न भवत्यदेशत्वात् । परिमुखमिति अपपरी वर्जने इति परेः कर्मप्रवचनीयसंज्ञायां पंच
म्यपाङ्परिभिरिति पंचमी अपपरिबहिरंचवः पंचम्येत्यव्ययीभावः ततष्ठक् स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः यदा तु सर्वतोभावे परिशब्दः
प्रादिसमासस्तदा यतो यतः स्वामिनो मुखं ततस्ततो यो वर्त्तते स एवमुच्यते एवं पारिपार्श्विकोप्यर्थद्वये बोध्यः प्रयच्छति द्वितीयांतात्प्रयच्छत्यर्थे ठक्स्यात् यत्प्रयच्छति
गर्ह्यं चेत्तत् द्विगुणार्थे द्विगुणमिति तादर्थ्यात्ताच्छब्द्यमिति भावः वहुदञ्जुदेष्यकदानकर्म तया स्यद्रव्यस्य गर्ह्यत्वं वार्धुषिक इति दृद्धर्थं दृद्धिं तां प्रयच्छती ।

न्यायादनपेतइतियत् अवक्रयः अवक्रीयतेऽनेनेतिकरणेऽरच् पण्यमितिपणितव्येऽर्थेऽवद्यपण्येतियत्ततोनिपातितः॥६॥ शलालुकइति इसुसुक्तान्तात्कः ठक्स्येत्यादिवृद्धिःशालालुकः मार्दङ्गिकइतिमृदङ्गशब्देनमृदङ्गनादेनलक्ष्यतेमुख्यार्थेनुप्रयोगोनभवत्यनभिधानादितिभावःशिल्पंकौशलंतच्चमृदङ्गवादनविषयकंतेनमृदङ्गवादनविषयकेमृदङ्गशब्दस्यलक्षणेतिनिष्कर्षःप्रहरणंप्रह्रियतेऽनेनेतिप्रहरणं मापुधंभातुष्कइति इसुसुक्तान्तात्कः इणःषइतिविसर्गस्यषः परश्वधात्वाट्ठञ्चहयोःकुठारःस्वधितिःपरशुश्चपरश्वधःपरलोकइति एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते आस्तिकइति अस्तिनास्तिशब्दोनिपातौयद्वावच

शलालुनोऽन्यतरस्याम्।४।४।५४।ष्ठन्स्यात्पक्षेठक्।शलालुकः।शलालुकी।शालालुकः।शालालुकी।शलालुःसुगन्धिद्रव्यविशेषः।शिल्पम्।४।४।५५।मृदङ्गवादनंशिल्पमस्यमार्दङ्गिकः।मड्डुकझर्झरादणन्यतरस्याम्।४।४।५६।मड्डुकवादनंशिल्पमस्यमाड्डुकिकः।माड्डुकः।झार्झरिकःझार्झरः।प्रहरणम्।४।४।५७।तदस्येत्येव।असिःप्रहरणमस्यआसिकः।धानुष्कः।परश्वधाट्ठञ्च।४।४।५८।पारश्वधिकः।शक्तियष्ट्योरीकक्।४।४।५९।शाक्तीकः।याष्टीकः।अस्तिनास्तिदिष्टंमतिः।४।४।६०।तदस्येत्येव।अस्तिपरलोकइत्येवंमतिर्यस्यसआस्तिकः।नास्तीतिमतिर्यस्यसनास्तिकः।दिष्टमितिमतिर्यस्यसदैष्टिकः।शीलम्।४।४।६१।अपूपभक्षणंशीलमस्यआपूपिकः।छत्रादिभ्योणः।४।४।६२।गुरोर्दोषाणामावरणंछत्रंतच्छीलमस्यछात्रः।कार्मस्ताच्छील्ये।६।४।१७२।कार्मइतिताच्छील्येणेटिलोपोनिपात्यते।कर्मशीलः।कार्मः।नस्तद्धितइत्येवसिद्धेअण्कार्येन्ताच्छीलिकेणोपि।तेनचौरीतापसीत्यादिसिद्धं।ताच्छील्येकिं।कार्मणः॥ १ नसामर्थ्यादस्तीत्याख्यातान्नास्तीतिनिपातात्त्याख्यातसमुदायात्प्रत्ययःदिष्टमितिदैवंदिष्टंभागधेयमित्यमरःनालंवतेदैष्टिकतामितिमाघःप्रमाणानुगामतिरिष्टेतिप्राचोक्तिस्तूपेक्ष्यादिष्टशब्दस्यस्त्रीत्वेप्रमाणानुगमतिवाचकत्वोक्तकोशविरोधादितिदिक्छत्रादिभ्योणःछत्रादिभ्योणइत्येवसुवचमितिकार्मस्ताच्छील्यइतिसूत्रैकेयदःताच्छील्येणइति कर्मन्शब्दस्यछत्रादित्वादितिभावःचौरीत्यादिचुराशीलमस्याःतपःशीलमस्याइति विग्रहेणप्रत्ययेसति तस्तान्ङीप्सिद्ध्यतीत्यर्थः ॥

प्रतिकंठमिति कंठं कंठं प्रतीति यथार्थेऽव्ययीभावः लक्षणेनाभिप्रती आभिमुख्ये इत्यनेन वा यस्तु प्रतिगतः कंठं प्रतिकंठ इति प्रादिसमासस्तस्येह न ग्रहणं व्याख्यानादित्याहुः
॥ ॥ धर्मं चरति चरतिरिहासेवायां न त्वनुष्ठानमात्रे तेन दैववशाद्धर्मे प्रवृत्तो दुर्वृत्तो धार्मिक इति नोच्यते आसेवा हि स्वारसिकी प्रवृत्तिः एवं दैववशादधर्मे प्रवृत्तो यः स
वृत्तः अधार्मिक इति नोच्यते प्रति पथमिति वीप्सायामाभिमुख्ये वा अव्ययीभावः ऋक्पूरिति समासांतः समवायान् समूहवाचिभ्यो द्वितीयांतेभ्यष्ठक् स्यात् समवैतीत्य
र्थे इह समवपूर्वस्येणोऽर्थः प्रविश्यैकदेशीभवनं तत्र गुणभूतप्रवेशापेक्षया समवायानिति द्वितीयानिर्देशः विशेष्यापेक्षया तु लोके सप्तमी प्रायेण प्रयुज्यते कुरुक्षेत्रे स

धर्म्मं चरति।४।४।४१। धार्म्मिकः। अधर्म्माच्चेति वक्तव्यम्। आधर्म्मिकः। प्रतिपथमेति ठंश्च।४।४।४२। प्रतिपथमेति प्रातिपथिकः। समवायान्समवैति।
४।४।४३। सामवायिकः। सामूहिकः। परिषदो ण्यः।४।४।४४। परिषदं समवैति पारिषद्यः। सेनाया वा।४।४।४५। ण्यः स्यात्पक्षे ठक्। सैन्याः। सैनिकाः। सं
ज्ञायां ललाटकुक्कुट्यौ पश्यति।४।४।४६। ललाटं पश्यति लालाटिकः सेवकः। कुक्कुटीशब्देन तत्पाताहः स्वल्पदेशो लक्ष्यते। कौक्कुटिको भिक्षुः। तस्य
धर्म्यम्।४।४।४७। आपणस्य धर्म्यमापणिकम्। अण् महिष्यादिभ्यः।४।४।४८। महिष्या धर्म्यं माहिषं। याजमानं। ऋतोऽञ्।४।४।४९। यातुर्धर्म्यं यात्रं
नराच्चेति वक्तव्यं। नरस्य धर्म्या नारी। विशसितुरिड्लोपश्चाञ्च वक्तव्यः। विशसितुर्धर्म्यं वैशस्त्रं। विभाजयितुर्णिलोपश्चाञ्च वाच्यः। विभाजयितुर्ध
र्म्यं वैभाजित्रं। अवक्रयः।४।४।५०। षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे। आपणस्यावक्रय आपणिकः। राजग्राह्यं द्रव्यमवक्रयः। तदस्य पण्यम्।४।४।५१।
अपूपाः पण्यमस्य आपूपिकः। लवणाट्ठञ्।४।४।५२। लावणिकः। किसरादिभ्यः ष्ठन्।४।४।५३। किसरं पण्यमस्य किसरिकः। षित्वान्ङीष्। किसरिकी
। किसर उशीर नलद इत्यादि किसरादयः। सर्वे सुगन्धिद्रव्यविशेषवाचिनः॥ ९९ मवेतार इति यथा एत्येधतीति वृद्धिरिह न भवत्येजादित्वाभावात् सैन्याः सैनिका इ

ति द्वितीयांतात्साठकौ यत्तु सेनायां समवेता ये सैन्यास्ते सैनिकाश्चेति इति निघंटुसूक्तं तत्पालितार्थकथनपरं बोध्यं संज्ञायां ललाटकुक्कुटीशब्दाभ्यां द्वितीयांताभ्यां पश्यतीत्य
र्थे ठक् स्यात् सम्यग्ज्ञानं संज्ञा प्रसिद्धिस्तस्यां प्रसिद्धिविषयभूतेऽर्थे इत्यर्थः लालाटिक इति दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः लालाटिकः प्रभो
र्भालदर्शी कार्याक्षमश्च यः कौक्कुटिको भिक्षुरिति संन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छतीति भावः धर्म्यमिति धर्मादनपेतं धर्म्यं धर्मपथ्यर्थ

आकरिक इति खनिः स्त्रियामाकरः स्यादित्यमरः अध्यायिन्य  अदेशकालात् किं कास्याममधीते शूद्रो द्वे अधीते कठिनां त प्रस्तार संस्थान शब्दौ संनिवेशपर्यायाविति वह् वः प्रस्तारे पञ्चः अस्त्रो यज्ञ इति घञ् संस्थाने संनिवेश इत्येके नैकटिको भिक्षुरिति संन्यासी हि ग्रामस्य निकटे वसन् भिक्षार्थमेव ग्रामे प्रविशति न तु तत्र वसतीति भावः आ वसथात् ष्ठल् कारः स्वार्थे आवसत्यस्मिन्नित्यावसथः उपसर्गे वसेरित्यथ प्रत्ययः कुसीद सूत्रादिति कुसीद दशैकादशादिति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः इह नोऽष्ठ च ष्ठन्नित्यत्रेव ये षां षकारः सोहिति क इति भाव्यते तेषामेव गणे न ष्ठलादेः षित्त्वमनार्षमिति भ्रमः स्यादत आह श्लोकवार्तिककारः षित्प्रत्ययान्सर्वानपि पर्यजीगणन् ठको वधिः समाप्तः ॥ ॥ युग्य इति युगं रथाङ्गं वहतीत्यर्थः प्रासङ्ग इति प्रासज्यते असाविति कर्मणि घञ् धुरो धुरो ढक्चेत्येव सुवचं न भ उपधायां चेति दीर्घे

प्राग्घिताद्यत् ॥ ४।४।७५ ॥ तस्मै हितमित्यतः प्राक् यदधिक्रियते ॥ तद्वहति रथयुगप्रासङ्गम् ॥ ४।४।७६ ॥ रथं वहति रथ्यः ॥ युग्यः ॥ वत्सानां दमनकाले स्कन्धे काष्ठमासज्यते स प्रासङ्गः ॥ तं वहति प्रासङ्ग्यः ॥ धुरो यड्ढकौ ॥ ४।४।७७ ॥ हलि चेति दीर्घे प्राप्ते ॥ न भकुर्छुराम् ॥ ८।२।७९ ॥ भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् ॥ धुर्यः ॥ धौरेयः ॥ खः सर्वधुरात् ॥ ४।४।७८ ॥ सर्वधुरं वहतीति सर्वधुरीणः ॥ एकधुराल्लुक् च ॥ ४।४।७९ ॥ एकधुरं वहति ॥ एकधुरीणः एकधुरः ॥ शकटादण् ॥ ४।४।८० ॥ शकटं वहति शाकटो गौः ॥ हलसीराट्ठक् ॥ ४।४।८१ ॥ हलं वहतीति हालिकः ॥ सैरिकः ॥ ॥ सूत्रादेतल्लभ्यत इति भावः उपधायाः किं प्रतिदीव्नः इह नांतस्य भत्वे यीकारस्योपधात्वान्निषेधो न प्रवर्तते खः सर्वधुरात् सर्वधुराया इति वक्तव्ये नपुंसकनिर्देशः शब्दस्वरूपापेक्षया वंधनिवहुव्रीहाविति वत् सर्वधुराणमिति पूर्वकालैकेति समासः ऋक्पूरब्धूरिति समासांतः प्रत्यये टाप् एकधुराल्लुक् चात् खः एवं च प्राकरणिकस्य यतो लुक् खस्य तु विधानसामर्थ्याल्लुक् न खाणमिति फलितं तदाह एकधुरीण इत्यादि शाकटो गौरिति न तु तस्येदमित्यणा सिद्धे यो हि शाकटं वहति शाकटस्यासौ भवति अत्राहुः आरंभसामर्थ्यादत्र तदंतविधिस्तेन द्वैशकटे वहति द्वैशकट इत्यत्र द्विगोर्लुगनपत्य इति प्राग्दीव्यतीयो लुङ् भवति तस्येदमित्यणि तु स्यादेव लुगिति हलसीरात् न तु तस्येदमिदमित्युपक्रमे हलसीराट्ठगिति पठितं तथा च तेनैव शेषिके णाहालिकः सैरिक इति सिद्धौ किमनेनेति चेन् सत्यं आरंभसामर्थ्यादत्रापि तदंतविधिस्तेन द्वैहलिको द्वैसीरिक इति भवति ॥

कर्माध्ययनेतदस्येत्यनुवर्त्ततेठगिहाधिक्रीयतएवतदाह प्रथमांतादित्यादिऐकान्यिकइतिएकमन्यदितिविग्रहत्यन्तद्धितार्थेतिसमासस्ततष्ठक्एवंद्वैयन्यिकःत्रैयन्यिकइ
त्युदाहार्यंइहज्वरद्विवाधित्वानम्वाभ्यामित्येच्हितंभक्षाःअस्येतिप्रकृतमपीहहितयोगाच्चतुर्थ्याविपरिणाम्यतेतदस्मात्स्यास्यापकर्षोवेत्याशयेनाहअपूपभक्षणांहित

कर्म्मोऽध्ययनेवृत्तम्।४।४।६३।प्रथमान्तात्सप्तम्यर्थेठक्स्यादध्ययनेवृत्ताया क्रियासाचेत्प्रथमान्तस्यार्थःऐकान्यिकः।यस्याध्ययनेप्रवृत्तस्यपरीक्षाका
लेविपरीतोच्चारणरूपंस्खलितमेकञ्जातंसः।वह्वच्पूर्वपदाट्ठच्।४।४।६४।प्राग्विषये।द्वादशान्यानिकर्म्माण्यध्ययनेवृत्तान्यस्यद्वादशान्यिकः
द्वादशाऽपपाठाअस्यजाताइत्यर्थः।हितम्भक्षाः।४।४।६५।अपूपभक्षणांहितमस्मैआपूपिकः।तदस्मैदीयतेनियुक्तम्।४।४।६६।अग्रभोजनन्नि
यतन्दीयतेअस्मैआग्रभोजनिकः।श्राणामांसौदनाट्टिठन्।४।४।६७।श्राणानियुक्तन्दीयतेऽस्मैश्राणिकः।श्राणिकी।मांसौदनग्रहणंसङ्घातविगृ
हीतार्थं।मांसौदनिकः।मांसिकः।औदनिकः।भक्तादणन्यतरस्याम्।४।४।६८।पक्षेठक्।भक्तमस्मैनियुक्तन्दीयतेभाक्तः।भाक्तिकः।तत्रनियुक्तः।४।
४।६९।आकारेनियुक्तः।आकारिकः।अगारान्ताट्ठन्।४।४।७०।देवागारेनियुक्तोदैवागारिकः।अध्यायिन्यदेशकालात्।४।४।७१।निषिद्धदेशकाल
वाचकाट्ठक्स्यात्।अध्येतरि।श्मशानेऽधीतेश्माशानिकः।चतुर्दश्यामधीतेचातुर्दशिकः।कठिनान्तप्रस्तारसंस्थानेषुव्यवहरति।४।४।७२।तत्रेत्येव।
वंशकठिनेव्यवहरतिवांशकठिनिकः।वंशाःवेणवःकठिनायस्मिन्देशेसवंशकठिनःतस्मिन्देशेयाक्रियायथाऽनुष्ठेयातान्तथैवानुतिष्ठतीत्यर्थः।प्रा
स्तारिकः।सांस्थानिकः।निकटेवसति।४।४।७३।नैकटिकोभिक्षुः।आवसथात्ष्ठल्।४।४।७४।आवसथेवसति।आवसथिकः।षित्वान्ङीष्।आव
सथिकी।आकर्षात्पर्प्पादेःभस्त्रादिभ्यःकुसीदसूत्राच्च।आवसथात्किसरादेःषितःषडेतेठगधिकारे।षडितिसूत्रषट्केनविहिताइत्यर्थः।प्रत्ययाल्लु
सप्त॥ठकोऽवधिस्समाप्तः॥ ॥

मस्माइति अपूपशब्दस्तण्डुलगोलाक्षणिकइतिभावःश्राणायवागूःपवागूरुस्मिकाश्राणाविलेपीतरलाचसेत्यमरःटिठनितिइकार
उच्चारणार्थःटोडीवर्थःसंघातविगृहीतार्थमिति औदनिकइत्यत्रहिवृद्धिनिवारणायटिठनारब्धोऽन्यथालाघवाट्ठञमेवब्रूयादितिभावः ॥ ९ ॥ ॥

स्मात् एवं च व्याख्यानरूपसाध्यावश्यकत्वे लस्यानुरोधेन क्वचित् किंचिदाक्षेपमिति तत्त्वं समानतीर्थे वासी निपातनात् सिद्धं निर्ग्रहादेराकृतिगणत्वान्नन्दिग्रहीत्यनेनवा सतीर्थ्य इति तीर्थे ये इति समानस्य सभावः तत्रेत्यनेनेति तीर्थं तत्र इति तस्य कृतीर्थं शास्त्रं स्वरस्तेत्रो पापो पाध्याय मंत्रिगुणो नो जलावतारे चेति विश्वः इरुत्तवध्यापकवाचिनए नग्रहणान्नान्यस्य संज्ञाधिकारात् शयितः स्थित इति शीधातुः स्थित्यर्थे वर्तते जलाशयः कुशेशयमिति प्रयोगादिति भावः समानमुदरमिति पूर्वापरप्रथमेत्यादिना तत्पुरु षः ततो यत् तितस्वरापवाद ओकारस्योदात्तः सोदराद्यः ओ चोदात्त इति नानुवर्तते विभाषोदरइति समानस्य सभावः तत्र तीर्थे य इत्यतो ऽनुवृत्ते ये इत्येतद्विषयसप्तमीतेन सोदर इत्यस्मात् यः प्रत्ययस्वरः प्राग्वदिति समानोदरे शयित इत्येवार्थे इत्यर्थः कथं तर्हि त्वपंथा नन्तु गर्भं तं सोदरो ऽपि विमुंचतीति भारविरिति चेत् अत्राहुः सह समानमुदरं यस्य सोदरः चोपसर्जनस्येति सहस्य सभावः तस्य वैकल्पिकत्वात् च भ्राता सहोदर इत्यपि सिद्धमिति॥ ॥ इति प्राग्घितीयाः समासान्ताः तद्धितार्थिकाः॥ ॥ अथ पांचमिका

प्राक्क्रीताच्छः।५।१।१। तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते॥ उगवादिभ्यो यत्।५।१।२। प्राक्क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत् स्यात् छस्या पवादः। शङ्कव्यं दारु। नाभि नभं च। नभ्योऽक्षः। नभ्यमञ्जनम्। रथनाभावेवेदं। शुनः संप्रसारणं वा च दीर्घत्वम्॥ शुन्यं शून्यं ऊधसो नेङ् च। ऊधन्यः॥ कम्बलाच्च संज्ञायाम्।५।१।३। यत् स्यात्। कम्बल्यमूर्णापलशतं। संज्ञायां किं। कम्बलीया ऊर्णा॥ ११ प्राक्क्रीताच्छ इत्यतः प्रागिति इहार्थोनधित्वेन गृह्यते न तु प्रत्ययः प्रकृतिर्वा तेनार्था एवावधिमन्त इति प्राक्क्रीताच्छेऽर्था हितादयस्तेभ्यः सोपस्थाने अवधिसजातीयो ह्यवधिमान्भवति यथा मासात्पर इति काल प्रतीयते मामा त्पूर्व इति देशः श्लोक्यात्पूर्व इत्यत्र एवं च समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः कृत्स्नं तत्र सावकाशं रुंतत्र छो ऽन्यन्यायेन बाधते अन्यथा रुस्य यदादेश्च संनिपा ताविशेषात्तत्तत्स्थानीयरामिव पर्यायः स्यात् अतो ऽनार्थो न विशेषेण गृह्यते न तु पदादिविषये छो न भविष्यति विभाषा हविरपूपादिभ्य इति विभाषाग्रहणाच्चिंगात् तथा च प्रत्य यस्य प्रकृतेर्वा अवधित्व स्वीकारे न क्षतिः उक्तज्ञापकेनागवादि प्रभृतिभ्य छस्याति प्रसंग निरासादिति चेत् अत्राहुः एवं सति छ इत्येवाधिकारो ऽस्तु नार्थो ऽवधि निर्देशेन प्राग्वतेष्ठञित्या दिके तु प्रकरणे नास्याधिकारः अधिकारान्तरेणोपरुद्धत्वात् स्पष्टप्रतिपत्त्यर्थमनपि निर्देशोऽन्यथा प्रतिपत्तिगौरवं स्यादिति चेत् तर्हि विभाषा हविरित्यादि ज्ञापकाश्रयणे प्रति पत्तिगौरवात्र्य एवावधित्वेन निर्दिष्ट इति उगवादिभ्यो उवर्णादेर्गशब्दादेर्वशब्दादेश्च यत्स्यादित्यर्थो न भवति गवादिगणपाठात् गवा यन्तगेण सूत्रपाह ना

भिनभंचेति नाभिशब्दो यतं लभते नभादेशं चेत्यर्थः नभ्योऽक्ष इति॥ ॥

खलयवश्चत्र वृषशब्दोऽकारान्तो गृह्यते न तु नकारान्तः अन्यथाल्वसंदेहार्थं नलोपमकृत्वैव निर्दिशेत् आत्मन् विश्वजनेति वत् वृषायहितं वृष्यं तैलं तथा च ब्रवीति तु वृषण्यमिति स्या
न्त्रब्रह्मण्यमिति ब्रह्मन् शब्दो ब्राह्मणपर्यायः प्रकृतिभावस्तु ये चेत्यनेन पूर्ववत् ब्रह्मन् शब्दाद्ब्राह्मणशब्दाच्च यतः प्राप्तिरेव नास्ति कोऽप्यनभिधानान्नेत्याकरः तेन ब्रह्मणे हितं
ब्राह्मणेभ्यो हितमिति वाक्यमेव चाद्रथ्येति गवादिषु रथ शब्दो न पठितः हितार्थ एव रथ्येति यथा स्यात् अर्थान्तरे मा भूदिति अजाविभ्यां अजशब्द इह उत्लिंग उपात्तः अत
एव द्वन्द्वे घीत्यविशब्दस्य पूर्वनिपातं बाधित्वा अजाद्यदन्तमिति अजशब्दस्य पूर्वनिपातः कृतः प्रातिपदिकग्रहणे लिंगविशिष्टस्यापीति स्त्रीलिंगादपि थ्यन् तसिलादिषु थ्य
नः परिगणनात्पुंवद्भावे रूपं तुल्यं अजथ्येति अजेभ्यो अजाभ्यो वा हितेति विग्रहः॥ कर्मधारयादेवेति ॥ व्याख्यानादिति भावः विश्वजनीयमिति विश्वस्य जनः स

खलयवमाषतिलवृषब्रह्मणश्च।५।१।७। खलाय हितं खल्यं। यव्यं। माष्यं। तिल्यं। वृष्यं। ब्रह्मण्यं। चाद्रथ्या। अजाविभ्यां थ्यन्।५।१।८। अजथ्या यूथिः
अविथ्या। आत्मन्विश्वजनभोगोत्तरपदात्खः।५।१।९। आत्माध्वानौ खे।६।४।१६९। एतौ खे प्रकृत्या स्तः। आत्मने हितमात्मनीनं। विश्वजनीनं। क
र्मधारयादेवेष्यते। षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव। विश्वजनीयं। पञ्चजनादुपसंख्यानम्। पञ्चजनीनम्। सर्वजनाट्ठञ् खश्च। सार्वजनिकः।
सर्वजनीनः। महाजनाट्ठञ्। माहाजनिकः। मातृभोगीणः। पितृभोगीणः। राजभोगीनः। आचार्यादणत्वञ्च। आचार्यभोगीनः॥ १९ वैसा भारणोवे

ष्यादिः विश्वो जनोऽस्येति बहुव्रीहावपि स एवान्यपदार्थस्तस्मै हितमिति विग्रहः पंचजनीनमिति। पंचकारवः पंचमाश्चत्वारो वर्णाः पंचजनास्तेभ्यो हितं दिक्संख्ये संज्ञायामि
ति समासः पंचजनादित्येतत्प्रभृति वार्तिकत्रयमपि कर्मधारयविषयमेव तेन षष्ठीसमासाद्बहुव्रीहेश्च छ एव पंचजनीयः सर्वजनीन इति सर्वो जनः सर्वजनः पूर्वकालै
के ति तत्पुरुषः तस्मै हितमिति विग्रहः साध्वर्थे तु प्रतिजनादिभ्यः खञिति खञि सार्वजनीनं वैश्वजनीनशब्दौ व्युत्पादितौ मातृभोगीण इति उदाहरणेषु पदत्वाभावेप्य
ट्कुप्वाङित्यनेन यथा णत्वं भवति तथा प्रागेवोपपादितं मातुर्भोगः शरीरं तस्मै हित इति विग्रहः यद्यपि भोगस्तु सुखं स्यादित्यतानहेःस्वपणकायपोरित्यमरेणाहे रिन्तु
कं तथापि प्रयोगबाहुल्याभिप्रायं तत् शक्तिस्तु शरीरमात्रे इत्याकरः मातृपितृशब्दाभ्यामौत्सर्गिकः छ एव मात्रीयः पित्रीयः राजाचार्याभ्यां त्वौत्सर्गिकः छोऽपि न भवत्यनभि
धानात् किं तु राज्ञे हितमाचार्याय हितमिति वाक्यमेवेत्याकरः ॥

रथाङ्गं सच्छिद्रं नाभिस्तदनुप्रविष्टः काष्ठविशेषोऽक्षः स च तदनुगुणत्वात्तस्मै हितः । अञ्जनं तैलाभ्यङ्गस्तदपि स्नेहनत्वान्नाभये हितं रथनाभावेवेति शरीरावयवे तु नाभ्यमित्ये
वपरेण शरीरावयवाद्यदित्यनेनास्य बाधादिति भावः । शून्यमिति चकारस्यानुक्तसमुच्चयार्थत्वान्न तद्धित इति टिलोपो न भवति ये चाभावकर्मणोरिति प्रकृतिभावस्तु दुर्लभः संप्रसारणे
पररूपे च कृते अन्त्वाभावात् दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपाभावः सुपरिहरः नङ् चेति चाद्यत्नस्थ इति शुवच्चमिति मनोरमा अन्ये त्वाहुः ऊधन्यशब्दात्तत्करोति
तदाचष्ट इति णिचि णाविष्ठवदिति टिलोपे णिजन्तात्कर्तरि क्विपि णिलोपयलोपयोः कृतयोरन्तेनासिकेस्य क्वीति दीर्घे ततः क्विवेतादावार क्विपि ऊधायते रत्यादावात्मनेपदार्थं नङो
ङित्करणमावश्यकमिति ऊधन्य इति ये चेति प्रकृतिभावः कुवलाच्च संज्ञायां प्राक्क्रीतीयेष्वर्थेषु यत्स्यात् छस्यापवादः ॥ ॥ विभाषा हविरपूपादिभ्यः गवादिष्वह विशब्दस्य पाठा
दिह हविर्विशेषाणां ग्रहणं न च गवादिष्वेव हविर्विशेषाणां ग्रहणं किं न स्यादिति वाच्यं असंजातविरोधित्वेन तत्र स्वरूपग्रहणस्य न्याय्यत्वात् अपूप्यमिति अपूपेभ्यो हितं चूर्णा

विभाषा हविरपूपादिभ्यः । ५।१।४। आमिक्ष्यं दधि । आमिक्षीयं । पुरोडाश्यास्तण्डुलाः । पुरोडाशीयाः । अपूप्यं । अपूपीयं । तस्मै हितम् । ५।१।५। वत्सेभ्यो
हितो वत्सीयो गोधुक् । शङ्कव्यं दारु । गव्यम् । हविष्यं । शरीरावयवाद्यत् । ५।१।६। दन्त्यं । कण्ठ्यं । नसिकायाः यत्तस्क्षुद्रेषु नस्यं । नाभ्यं । ये च तद्धि
ते । ६।१।६१। यादौ तद्धिते परे शिरश्शब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । तद्धिते किं । शिरस्यति । शिरस्यति । वा केशेषु । शीर्षण्याः । शिरस्याः
केशाः । अचि शीर्ष इति वाच्यम् ॥ अजादौ तद्धिते शिरसः शीर्षादेशः । स्थूलशिरसः इदं स्थौलशीर्षं ॥ मित्यर्थः अपूपतण्डुलपृथुकमुसलकर्णवेष्टके

त्याद्यपूपादिगणे अन्नविकारेभ्यश्चेति पठ्यते अन्नविकारा अन्नप्रकारा अदनीयविशेषास्तेभ्यो यद्वा स्यादिति तदर्थः ओदन्या ओदनीयास्तण्डुलाः एवं चानेनैव गणसूत्रेण सिद्धेऽपू
पादीनां केषांचिद्गणे पाठः प्रपञ्चार्थः हविरपूपादिभ्यो विभाषाया उगवादिभ्यो यत्पूर्वविप्रतिषेधेन सक्तव्या धानाः चरव्यास्तण्डुलाः चरुर्नाम हविरिति काशिका स्थालीवचनस्य च
रुशब्दस्य तत्र त्वेह हविषि उपचाराद्वृत्तिरिति कैयटादयः नस्यमिति नासिकायै हितं नासिकायां भवमिति विग्रहे तु शरीरावयवाच्चेति यत् । नस्यं तत्सुदाहरणं नस्यं अपादाने
चाहीयरुहोरिति तसिः क्षुद्रेषु नासिकापाक्षुद्रो नः क्षुद्रः सुप्सुपेति समासः नाभ्यमिति नाभिनभं चेति नभादेशो रथनाभावेव प्रवर्तते तस्य गवादियता संनियोगशिष्टत्वा
दिति भावः शीर्षश्छन्दसीत्यतोऽनुवर्तनादाह शीर्षन्नादेश इति शीर्षण्य इति ये चाभावेति प्रकृतिभावः शिरस्यतीति नः क्ये इति नियमेन पदत्वाभावाद्रुत्वाभावः ॥ ० ॥

प्राप्नोति पूर्वविप्रतिषेधेन तु ढञेवेष्यते त्वग्दिषेयं चर्म आह च यञ्याबञः पूर्वविप्रतिषिद्धं ढञ् चेति पत्त उदाहरणं स्तनं गव्यं स्तनेशु स्वमेविकारस्त दर्थं चर्म उगवादिभ्य इति य
त्स्यस्योदाहरणमौपानत्य शिति अनुपदं स्तस्य तिवालेयाइति करोपहारयोः संसिवलिः प्राण्यंगजे स्त्रियामित्यमरः उपधिरिति उपसर्गे घोः किरतो लोप इटि चेत्यालोपः विप्र
तिषेधेनेति यञ्याबञ इत्यादिवार्तिकेनेत्यर्थः ननु ढञ्विधौ कृदिरित्यस्यान्यविधो उपानहश्च विशिष्यग्रहणेन प्रतिपदोक्तत्वलीय इति सिद्धे किमनेन पूर्वविप्रतिषेधेन अ
त्राहुः निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकं न तु सावकाशत्वे इत्यनेन ज्ञानिवचनेनानुमीयते तेन स्वपित डाकानीत्येवयुक्तं परत्वान्नुमप्रवृत्तेः प्रतिपदोक्तत्वा
दीर्घमाश्रित्य स्वापित डाकानीति मतं दुर्बलं अत्स्थानिति दीर्घस्य आपत्तिः संतीत्युदाहरणे सावकाशतया प्रतिपदोक्तत्वस्याबलीयस्त्वादिति ॥ ॥ चर्मणोऽञ् तदर्थमित्यादि
पूर्वोक्तार्थे अञ् स्यात् ढञ् स्यापवादः चर्मण इति षष्ठी न तु पंचमी पंचम्यां तु चर्मशब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्याच्चर्मणो द्वीपीत्यादौ न चेष्यते चार्मणो द्वीपीति तदाह चर्म

चर्म्मणोऽञ् ।५।१।१५। चर्म्मणो या विकृतिस्तद्वाचकादञ् स्यात् । वर्ध्रं दंवा र्द्धं चर्म्म । वारत्रं चर्म्म । तदस्य तस्मिन् स्यादिति ।५।१।१६। प्राकार आसामि
ष्टकानां स्यात् प्राकारीया इष्टकाः । प्रासादीयं दारु । प्राकारोऽस्मिन् स्यात् प्राकारीयो देशः । इति शब्दो लौकिकीं विवक्षामनुसारयति । तेनेह न । प्रा
सादो देवदत्तस्य स्यादिति । परिखाया ढञ् ।५।१।१७। पारिखेयी भूमिः । छयतो: पूर्णोऽवधिः । प्राग्वतेष्ठञ् ।५।१।१८। तेन तुल्यमिति वतिमभिव्याप्य तिततः

ठञ् अधिक्रियते ॥ ॥

णो या विकृतिरिति वार्धे इति वधि चर विभ्यामिति रन् प्रत्यये वर्धं शब्दस्याद्युदात्तश्चर्मवाची तस्य विकार इत्यण् टिड्ढेति ङीप् वार्ध्री
रज्जुस्तस्यैव वर्धे रोणादिके ष्ट्रन् इति तु वर्ध्रीति भवति ततो ञितित्वादर्भनभौवभीवरत्रा स्यादित्यमरः चेत् चा: पश्य पवर्धिका: पश्येति भाष्ये तदस्य प्रथमासमर्थात्प्राति पदिका
त्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययाः स्यादिति संभावनेऽलमिति चेदित्यादिना संभावने लिङ् इष्टकानां बहुत्वेन प्राकार आसां स्यादित्येतत्संभाव्यते देशस्य हि
गुणेन प्राकारोऽस्मिन् स्यादिति संभाव्यते ———————— इहमस्तीति विकारभावस्तादर्थ्यं च न विवक्षितं किंतु योग्यतामात्रं तेनशे
र्वस्यायमविषयः द्विसन्च्छन्दग्रहणस्य प्रति पत्त्यर्थं तदस्यास्त्यस्मिन् इति वत्सकृत्तन्स्व ग्रहणेनैव सिद्धे ॥ छयतोः पूर्णोऽवधिः ॥ प्राग्वतेष्ठञ् ठञित्येव
वक्तव्ये प्राग्वतेरिति वचनमध्येयो ॥

सर्वपुरुषाभ्यां आभ्यां शब्दाभ्यां यथासंख्यं णढञौ स्तः तस्मै हितमित्यर्थे प्राक्क्रीतेति छस्यापवादाविति सूत्रार्थः सर्वादिति अनुकरणत्वात्सर्वनामकार्याभावः पुरुषाद्वधविकारे
तियोग्यतावशादिह षष्ठीसमर्थविभक्तिर्लभ्यते तेन कृते त्वत्र तु उपात्तैव तृतीया तदाह पुरुषस्य वध इति समूहेप्यणोति तस्य समूह इत्यनेन ग्रन्थेऽणीति कृते ग्रन्थे इत्यनेन अप्राप्ते
इति पौरुषेयः प्रासादः इत्यादौ न कस्याप्यपवादोऽयं ढञिति भावः माणवचरकाभ्यां खञ् निमित्तकारणं च ज्ञार्थे स्वार्थे च यद्यपि माणवेन वृद्धिः स्वतः सिद्धैव तथापि माणवीनो भार्य इत्यत्र च
वृद्धिनिमित्तस्य चेति पुम्वद्भाव प्रतिषेधार्थमिति ज्ञेयं माणवायेति मनोः कुत्सितमपत्यं माणवः अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः नकारस्य च मूर्धन्यस्तेन सिध्यति मा

सर्वपुरुषाभ्यां णढञौ ५।१।१०। सर्वाण्णो वेति वक्तव्यम्। सर्वस्मै हितं सार्वं। सर्वीयं। पुरुषाद्वधविकारसमूहतेनकृतेषु। भाष्यकारप्रयोगात्तेनेत्यस्य ह
न्द्वमध्ये निवेशः। पुरुषस्य वधः पौरुषेयः। तस्येदमित्यणि प्राप्ते। पुरुषस्य विकारः पौरुषेयः। प्राणिरजतादिभ्योऽञित्यञि प्राप्ते। समूहेऽप्यणि प्राप्ते। एका
किनोपि परितः पौरुषेयः कृतारवेति माघः। तेन कृते तु ग्रन्थेऽणि प्राप्ते। अग्रन्थे तु प्रासादादावप्राप्त एवेति विवेकः। माणवचरकाभ्यां खञ् ५।१।११।
माणवाय हितं माणवीनं। चारकीणं। तदर्थं विकृतेः प्रकृतौ ५।१।१२। विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां प्रत्ययः स्यात्। अङ्गारे
भ्य एतानि अङ्गारीयाणि काष्ठानि। प्राकारीया इष्टकाः। शङ्कव्यं दारु। छदिरुपधिबलेर्ढञ् ५।१।१३। छादिषेयाणि तृणानि। बालेयास्तण्डुलाः। उप
धिशब्दात्स्वार्थे ष्यञ्। उपधीयत इत्युपधिः रथाङ्गं तदेव औपधेयं। ऋषभोपानहोर्ञ्यः ५।१।१४। छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। च
र्मण्यण्यपमेवापूर्वविप्रतिषेधेन। औपानहं चर्म॥ ९ णावित्यपत्याधिकारस्थवार्तिकास्तत्वं तच्च वार्तिकमेतत्सूत्रस्थं निर्देशसिद्धार्थकथनपरमित्या

हुः चारकीणमिति चरतीति चरः पचाद्यच् चरिचलिपतिवदीनामिति द्विर्वचनं विकल्पितत्वादिह न भवति ततः संज्ञायां कनि चरकः तदर्थं विकृतेः तस्मै हितमित्यतस्त
स्मा इत्यनुवर्तते तदाह चतुर्थ्यन्तादिति तदर्थमिति सामान्येन उपसर्जनत्वयेन सप्तमीस्थाने प्रथमेत्याशयेनाह तदर्थायामिति विकृत्यर्थायामित्यर्थः तदिति सर्व
नाम्ना हि विकृतिः परामृश्यते एवं च विकृतिरेव प्रथमानिर्दिष्टेति समर्थानां प्रथमादित्यधिकारोऽप्यत्र निर्बाध एव शंकव्यमिति उगवादिभ्य इति यत् छदिः पधिसमाहारद्व
न्द्वे सौत्रं पुंस्त्वं छादिषेयाणीति छाद्यतेऽनेनेति छदिः अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः इस्मन्त्रन्क्विषु चेति ह्रस्वत्वं यदा तु चर्मविकारः छदिस्तदा परत्वाच्चर्मणोऽञित्यञ्

तमिति बोध्यं असमासे निष्कादिभ्यः निष्कपणपादमाषवाहद्रोणषष्टिरिति सप्तनिष्कादयः त
इह संख्यापरिमाणयोरेव प्रकृतत्वे पुन्मानप्रमाणयोर्विवेचनं प्रसंगात् कृतमिति बोध्यं असमासे निष्कादिभ्यः निष्कपणपादमाषवाहद्रोणषष्टिरिति सप्तनिष्कादयः
द्रोणशब्दः परिमाणवाची षष्टिशब्दः संख्यावाची ताभ्यां ठञि प्राप्ते वचनं इत्तरेषां तु पंचानामुन्मानवाचित्वेन पूर्वसूत्रेणोत्ठ कि सिद्धे समासप्रतिषेधार्थं वचनमित्येके अ
न्ये त्वाहुः पूर्वसूत्रे परिच्छेदकमात्रे संख्याभिन्नं परिमाणशब्देन गृह्यते तेन सर्वेभ्यष्ठञि प्राप्ते ठग्विधानार्थं वचनम् न चैवं परिमाणांतु सर्वत्र इति भेदेन व्युत्पादनं व्य
र्थमिति वाच्यं प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये इत्यादावस्योपयोगादिति पक्षद्वयमप्येतत् तदं भाष्ये स्पष्टं अथ किमर्थं असमास इत्युच्यते प्रातिपदिकग्रहणे त
दं तग्रहणाभावादेवेष्टसिद्धेरत आह असमासग्रहणमिति सुगव्यमिति उगवादिभ्यो यत् यवाहूप्यमिति विभाषा हविरपूपादिभ्य इति यत् अन्नविकारत्वादेव सिद्धे अपूपा
दीनां प्रतिपदपाठसामर्थ्यात्तदंतविधिर्नेति न्यासग्रंथस्तूपेक्ष्यः तत्रादिग्रंथविरोधादिति भावः अत एव तत्सूत्रे अपूपादीनां केषांचित् पाठः प्रपंचार्थ इत्यवोचाम इतऊर्ध्वं

शताच्च ठन्यतावशते ५।१।२१ शतेन क्रीतं शतिकं शत्यं अशते किं शतम्परिमाणमस्य शतकं स्तोत्रं इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थान्नभिद्यते तेन ठ
न्यतौ न किं तु कनेव असमास इत्येव द्विशतेन क्रीतं द्विशतकं संख्याया अतिशदन्तायाः कन् ५।१।२२ संख्यायाः कन्स्यादार्हीयेर्थे न तु त्यन्तश
दन्तायाः पञ्चभिः क्रीतः पञ्चकः बहुकः त्यन्तायास्तु साप्ततिकः शदन्तायाः चात्वारिंशत्कः ॥ ९ मितिज्ञापकेन तदंतविधौ लब्धेपि विशेषणस्यव

स्यार्थमिदं संख्यापूर्वपदानामिति किम् इह माभूत् परमपारायणं वर्तयति द्विशूर्पमिति तद्धितार्थे द्विगुरयं एषा हि प्रकृतिर्लुगंता न भवति इति संख्यापूर्वपदादध्यस्मात् श
दन्यतरस्यामिति प्राप्तस्यात्र ठञो वा अध्यर्द्धपूर्वेति लुक् द्विशौर्पिकमिति परिमाणांतस्येत्युत्तरपदवृद्धिः ठञो द्विगुप्रतिनिमित्तत्वाभावाल्लुगभावः यद्यप्यध्यर्द्धेति
द्विगोः परस्यार्हीयस्य लुगित्येवं मूले व्याख्यास्यते तथापि द्विगोर्निमित्तस्येति व्याख्येयमेव अन्यथा अत्रैव ठञो लुक्स्यादेतच्चाध्यर्द्धेति सूत्रे स्फुटीकरिष्यते तपरः किं
मि॰ दीर्घोकारस्य च ह्रस्वकृतायामपि रूपे विशेषो नास्तीति प्रश्नः निषेधो न स्यादिति तथा च वृद्धिनिषेधाभावापत्तः प्रकरणमावश्यकमिति भावः इदं च पुंवद्भावनिषेधाभा
पादनं पूर्वपदस्य वृद्ध्यभावपक्षे क्रियते यदा तु पूर्वपदस्य पाक्षिकी वृद्धिः क्रियते तदा फलोपधानवृद्धिनिमित्तं तद्धितस्तस्योत्तरपदाकारस्य वृद्धिनिषेधेपि स्यादेव पुं
वद्भावनिषेध इति बोध्यं ॥ ॐ ॥ शताच्च अशते अभिधेये चार्हीयेष्वर्थेषु ठन्यतौ स्तः उत्तरसूत्रेण प्राप्तस्य कनोपवादः ॥ चकारोऽसमास इत्यस्यानुकर्षणार्थः द्विशत

अधिकारत्वान्न पर्वाद्यः ॥ सर्वभूमिपृथिवीभ्यामणञौ शीर्षच्छेदाच्चेत्येवमादिस्तेन विच्छेदेऽपि पारायणतुरायणेत्यादौ ठञेव यथा स्यादित्येवमर्थं नन्वेवं पारायणादिसूत्रे एवकारः
न निर्दिश्यतामिति वाच्यं उत्तरसूत्रे यो ऽयं पर्युदासः क्रियते गोपुच्छादीनां तेभ्यस्तत् प्रकृतसूत्रे विना ऽलाभात् तथा च गोपुच्छिकः सामातिकस्त्यादौ ठञर्थमिदं सूत्रमत्र प्रदेशे
आरब्धमिति बोध्यं ॥ ॥ आर्हादगोपुच्छ तदर्हतीति रहतदर्हमिति सूत्रान्तर्गतमच्च प्रत्ययान्तेनानुक्रियते किन्तु तिङन्तस्यैकदेशः शावन्त एव व्याख्यानादिति भावः अभि
व्याप्येति तेनाश्वेतच्छत्रिकरत्यत्रार्हेत्यर्थे ठक् भवतीति भावः ननु परिमाणात्पृथक् संख्याग्रहणं व्यर्थं परिमीयते परिच्छिद्यते येन तत्परिमाणं संख्यापि च परिच्छिद्य

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ५।१।१९। तदर्हतीत्येतदभिव्याप्य ठञधिकारमध्ये ठकोपवादः ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा असमासे
निष्कादिभ्यः ५।१।२०। आर्हादित्यतस्तेन क्रीतमिति यावत्सप्तदशसूत्र्यामनुवर्तते निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु नैष्किकं समासे तु
ठञ् ॥ परिमाणान्तस्यासंज्ञाशाणयोः ७।३।१७। उत्तरपदवृद्धिः स्यात् ञिदादौ परमनैष्किकः। असमासग्रहणं ज्ञापकं भवति तदन्तविधिरिति ते
न सुगव्यम् यवपूप्यमित्यादि। एतदर्थं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि सति पारायणिकः द्वैपारायणिकः अलुकीति
किं। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं। द्विशूर्पेण क्रीते शूर्पादञ् मा भूत्। किन्तु ठञ्। द्विशौर्पिकं। अर्द्धात्परिमाणस्य पूर्वस्य तु वा ७।३।२६। अर्द्धात्प
रिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च। अर्द्धद्रोणेन क्रीतं। अर्द्धद्रौणिकं। आर्द्धद्रौणिकं। नातः परस्य ७।३।
२७। अर्द्धात्परस्य परिमाणाकारस्य वृद्धिर्न पूर्वपदस्य तु वा ञिदादौ। अर्द्धप्रस्थिकं। आर्द्धप्रस्थिकं। अतः किं। आर्द्धकौडविकं। तपरः किं। अर्द्धखा
र्य्याम्भवा अर्द्धखारी। अर्द्धखारीभार्य्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो न स्यात् ॥ ९९ तदिति सापि परिमाणमेवेति चेत् अत्र श्लोकवार्तिकं ऊर्ध्वमा
नं किलोन्मानं परिमाणं तु सर्वतः आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः अस्यार्थः तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणा
दिना सुवर्णादेर्गुरुत्वमुन्मीयते तदुन्मानं आरोह उच्छ्रायः परिणाहो विस्तारः ताभ्यामारोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन प्रस्थादिः परिमीयते तत्परि
माणं प्रस्थादि परिः सर्वतोभावे आयामो दैर्घ्यं स येन मीयते तत्प्रमाणं तच्च हस्तवितस्तिमेवावस्थितस्यैव वस्तुनो भवति यथा वस्त्रादेर्हस्तादिः क्वचिदूर्ध्वाधोभावावस्थि
तस्य भवति यथाहालिनमुदकं उरुद्वयसमुदकमिति संख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिप्रस्थादिहस्तादिभ्यस्त्रिभ्यो बहिर्भूता एकत्वद्वित्वादिरिति।

सु.त.
सि.कौ.
टी.त.
२५२

रिमाणांततष्ठन्प्राप्तः विंशत्या क्रीतं विंशतिकं संज्ञाशब्दोयं असंज्ञायां हि विंशतित्रिंशद्भ्यामिति ड्वुन् स्यात् संज्ञा च यदि परिमाणात् सत्ता ठञ् प्राप्तः अर्थान्तरस्य चेत्तर्हि ठक् प्रा
प्तः वसनशब्दात् ठगेव सहस्रशब्दस्य संख्यावाचित्वात्ततः संख्यायाः अतिशदन्तायाः कन् इत्यत्र इति विवेकः अध्यर्द्धशूर्पं अध्यारूढम् अर्द्धं यस्मिन् तत् अध्यर्द्धं प्रादिभ्यो धातु
जस्येत्युत्तरपदलोपः अध्यर्द्धशब्दः शूर्पो यस्मिन्निति बहुव्रीहिगर्भबहुव्रीहौ कृते अध्यर्द्धशूर्पं च द्विगुश्चेति द्वन्द्वः सौत्रं पुंस्त्वं द्विगोरिति पंचमी न तु षष्ठीत्याशयेन व्याचष्टे
अध्यर्द्धशूर्पाद्दित्यादि एतच्च वृत्तिकाररीत्या व्याख्यातं अत्र वार्त्तिकं द्विगोर्लुगिति तन्निमित्तग्रहणं द्विगोर्निमित्तं यस्तद्धितस्तस्य लुगिति वक्तव्यं द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशू
र्पेण क्रीतं द्विशौर्पिकमिति स्वर्वोक्तोदाहरणे ठञो लुङ्माभूदिति नन्वेवं द्वयोः शूर्पयोः समाहारो द्विशूर्पी तया क्रीतमिति विग्रहे द्विशूर्पमिति रूपं न स्यात्तद्धितस्यात्र द्विगोर
निमित्ततया अध्यर्द्धेति लुकोऽप्रवृत्तेः द्विगोः परस्येति व्याख्यायां तु सिद्धमिष्टमिति चेत् मैवं अर्थविशेषासंप्रत्यये अतन्निमित्तादपीति वचनोत्तरस्य वार्त्तिककृतैवो
क्तत्वात् यत्र तद्धितार्थे द्विगुना सह अर्थो नाभिधीयते तत्र स तद्धितोऽस्य निमित्तं न भवति तस्मादपि द्विगोः परस्य लुगिति वक्तव्यमिति तस्यार्थः एवं च द्विशूर्पमिति न द्वि
तार्थे द्विगुना सह द्विशूर्प्या क्रीतमित्यस्यार्थो नाभिधीयते इति समाहारद्विगोः परस्य तद्धितस्य लुग्भवत्येवेति न काप्यनुपपत्तिः वस्तुतस्तु सूत्रे द्विगोरिति षष्ठीमाश्रित्य
द्विगोर्निमित्तं यस्तद्धित इति व्याख्याय प्रथमं वार्त्तिकं प्रत्याख्यातुं शक्यं द्विशूर्प्या क्रीतमिति विग्रहे तु द्विशूर्पीशब्दात्प्रत्ययो भवत्यव्यभिचारान्न तु द्विशूर्पीशब्दादितोऽपि

द्वितीयमपि प्रत्याख्यातुं शक्यं नन्वध्यर्द्धशब्दः संख्यावाच्येव तथा च लोके गण्यते एकोऽध्यर्द्धो द्वाविति अत एव अध्यर्द्धकमिति कन् अध्यर्द्धकंसमिति तद्धितार्थे द्वि
गुः अध्यर्द्धसांवत्सरिकमित्यादौ संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिश्च भवति तत्किमध्यर्द्धपूर्वग्रहणेनेति चेत् अत्राहुः संख्याकार्यमेतस्य किंचिन्नेति ज्ञाप
नार्थमिदं तेन कन्द्विगुसमासवृत्तिभ्योऽन्यत्र भवति तथा अध्यर्द्धं करोतीति नेह कृत्वसुच् यः सकृत्कृतां क्रियामभिनिवर्त्त्य पुनस्तामेव कुर्वन्नमध्ये निवर्त्तते स एव मन्य
ते इति पाञ्चकलापिकमिति पंचकलापाः परिमाणमस्येति विग्रहे तद्धितार्थे इति समासः तदस्य परिमाणमिति ठञ् एवं पाञ्चलोहितिकमपि बोध्यम् पंच लोहिन्यो गुञ्जाः प
रिमाणमस्येति विग्रहे पूर्ववत्समासतद्धितौ भस्याढे तद्धिते इति पुंवद्भावाल्लोहिनीशब्दस्य कारयोरभावः । परिमाणानि शेषस्य नामधेये ये एते असंज्ञाग्रहणं प्रत्ययान्तस्य वि
शेषणं न तु द्विगोः एतच्च वृत्तिकृताशयमनुरुध्य वर्णितमिति द्रष्टव्यं यतो नोक्तं भाष्यवार्त्तिकयोस्त्वसं॥ ज्ञाग्रहणं प्रत्याख्यातं तथाहि द्विगुविशेषणमसंज्ञाग्रह

राम.
२५२

मिति द्वे च शते च तेषां समाहारो द्विशतं ततः कन् प्राप्नोति । संख्यापूर्वपदानां तदन्तग्रहणमलुकीत्यनयाऽऽरब्धात् समासादपि प्राप्नोतीत्यसमास इत्येतस्यानयनमुचित
मिति भावः । त्यन्तशब्दे तायाइत्ति त्यन्तसहिता शब्दान्तेत्युत्तरपदलोपी समासः । पञ्चक इति लौकिक्याः संख्याया उदाहरणं बहुक इति पारिभाषिक्याः । साप्ततिक इति ठञो निता
दादिवृद्धिः । ठस्येकादेशे यस्येति चेतीकारलोपः । अर्थवत्तत्तिशब्दस्य ग्रहणात् उत्पन्नावयवस्य तिशब्दस्य पर्युदासो न भवतीति कतिकः । चात्वारिंशत्कः । इसुसुक्तान्तात्कः ॥
॥ वतोरिड्वा वतोरिति पञ्चमी सा च कनिति प्रथमायाः षष्ठीं कल्पयतीत्याह वत्वन्तात्कन इति तावतिक इति यत्तदेतेभ्य इति वतुप् आ सर्वनाम्न इत्यात्वं कर्तव्य इति शे

वतोरिड्वा ॥ ५।१।२३ ॥ वत्वन्तात्कन इड्वा स्यात् । तावतिकम् । तावत्कम् । विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् ॥ ५।१।२४ ॥ योगविभागः कर्तव्यः । आभ्यां ड्वुन् स्या
त् । असंज्ञायां तु ड्वुन् स्यात् कनोऽपवादः । विंशकः । त्रिंशकः । संज्ञायां तु विंशतिकः । त्रिंशत्कः । कंसाट्टिठन् ॥ ५।१।२५ ॥ टोऽपि ङीबर्थः । इकार उच्चारणार्थः ।
कंसिकः । कंसिकी । अर्द्धाच्चेति वक्तव्यम् ॥ अर्द्धिकः । अर्द्धिकी । कार्षापणाट्टिठन्वक्तव्यः । प्रतिरादेशश्च वा । कार्षापणिकः । कार्षापणिकी । प्रतिकः । प्रतिकी
। शूर्पादञन्यतरस्याम् ॥ ५।१।२६ ॥ शौर्पम् । शौर्पिकम् । शतमानविंशतिकसहस्रवसनादण् ॥ ५।१।२७ ॥ एभ्योऽण् स्यात् । ठञ्ठकोरपवादः । शतमानेन
क्रीतं शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् । अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ ५।१।२८ ॥ अध्यर्द्धपूर्वाद् द्विगोश्चापरस्यार्हीयस्य लुक् स्यात् । अध्यर्द्धकं
सम् । द्विकंसम् । संज्ञायां तु पाञ्चकलापिकम् । विभाषा कार्षापणसहस्राभ्याम् ॥ ५।१।२९ ॥ लुग्वा स्यात् । अध्यर्द्धकार्षापणम् । अध्यर्द्धकार्षापणिकम् । द्विकार्षाप
णम् । द्विकार्षापणिकम् । औपसंख्यानिकस्य टिठनो लुक् । पक्षे अध्यर्द्धप्रतिकम् । द्विप्रतिकम् । अध्यर्द्धसहस्रम् । अध्यर्द्धसाहस्रम् । द्विसहस्रम् । द्विसाहस्रम् । द्वित्रि
पूर्वान्निष्कात् ॥ ५।१।३० ॥ लुग्वा स्यात् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । बहुपूर्वाच्चेति वक्तव्यम् । बहुनिष्कम् । बहुनैष्किकम् ॥ ६ ॥

न्यथा त्यन्तशब्दं तयोः पर्युदासाद्विंशतित्रिंशद्भ्यां कन्दुर्लभ इति भावः । विंशक इति ति विंशतेर्डित्तीति तिशब्दलोपः । अर्द्धक इति अर्द्धशब्दस्य कार्षापणार्द्धे रूढत्वाद्
गवद्ये स्याऽऽसामर्थ्यं न शङ्क्यं प्रकरणादिवशेन भागविशेषे विज्ञाते सति नास्य स्यासामर्थ्यमिति वा बोध्यम् एतेनार्द्धशब्दस्य सापेक्षत्वात् तदन्तादेव टिठन् द्रोणा
र्द्धिकः प्रस्थार्द्धिक इति केषांचिदुक्तिः परास्ता । शूर्पात् शूर्पशब्दस्य परिमाणवाचित्वादञि प्राप्ते तदपवादत्वेनाञ् पक्षे विधीयते । ठञ्ठकोरिति शतमानेन प

र्होदिति सूत्रे परिमाणग्रहणेन परिमीयते परिच्छिद्यतेऽनेनेति योगवृत्त्या परिच्छेदकमात्रं गृह्यत इति वादिनां मते अध्या विपर्य्युदासाद्वाभावे ठञिति भावः मुख्यमते
तु ठगेवबोध्यः शाणाद्वेति सूत्रे शताच्चेति वक्तव्यं पूर्व्वेणानित्ये प्राप्ते विकल्पार्थ एवं च पूर्व्वसूत्रे शतग्रहणमकृत्वा शतशाणाभ्यां वेत्येव न कृतं      युक्तमित्याहुः अध्य
र्द्धशत्यमध्यर्द्धशतं पंचशत्यं पंचशतं यदभावे संख्यालक्षणास्य कनो लुक् शताच्चठन्यताविति तु न प्रवर्त्तते तत्रासमासग्रहणस्यानुवर्त्तनात्॥ ॥ द्वित्रिपूर्व्वाद

द्वित्रिपूर्व्वादण्च। ५।१।३६। शाणादित्येवाचाचात्। तेन त्रैरूप्यं। परिमाणान्तस्यासंज्ञाशाणयोरिति पर्य्युदासाद्वादिवृद्धिरेव द्वैशाणं। द्विशाण्यं। द्विशा
णं। इह ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषां समर्थविभक्तयोऽर्थाश्चाकांक्षिताः ते इदानीमुच्यन्ते। तेन क्रीतम्। ५।१।३७। ठञादयोऽत्र क्रीतमित्यर्थे स्युः।
क्रिकं। साप्ततिकं। प्रास्थिकं ठक् नैष्किकं। इञोऽणाः। १।३।५०। गोण्या इत्यात्तद्धितलुकि तु कोऽपवादः। पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः। त
स्य निमित्तं संयोगोत्पातौ। ५।१।३८। संयोगः सम्बन्धः। उत्पातः शुभाशुभसूचकः। शतिकः। शत्यो धनपतिसंयोगः। शत्यं। शतिकं। दक्षिणाक्षिस्पन्दनं श
तस्य निमित्तमित्यर्थः। वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानं। वातस्य शमनं कोपनम्वा वातिकं। पैत्तिकं। श्लैष्मिकं। सन्निपाताच्चेति वक्तव्यं।
सान्निपातिकं। गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्। ५।१।३९। गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्व्यचः। धन्यः। यशस्यः। स्वर्ग्यः। गोद्व्यचः किं। विज
यस्य वैजयिकः। असंख्येत्यादि किं। पञ्चानां पञ्चकं। सप्तकं। प्रास्थिकं। खारीकं। अश्वादि आश्विकं। आश्मिकं। ब्रह्मवर्चसादुपसंख्यानं। ब्रह्मवर्च
स्यं। पुत्राच्छ च। ५।१।४०। चाद्यत्। पुत्रीयः। पुत्र्यः। सर्व्वभूमिपृथिवीभ्यामणञौ। ५।१।४१। सर्व्वभूमेर्निमित्तं संयोग उत्पातो वा सार्व्वभौमः पार्थिवः
सर्व्वभूमिशब्दोऽनुशतिकादिषु पठ्यते॥ ९

एव वार्त्तिकमिदं वृत्तिकृता सूत्रे प्रक्षिप्तं भाष्यादिप्रामाण्यात्त्वतग्रहणमिह संबध्यत इत्याशयेनाह शाणा
दित्येवेति न्यासकृतात्त्वणि धायके नार्त्तिके सूत्रत्वभ्रमेण व्याख्यातं शतशाणाभ्यां वेति सूत्रयितव्ये परणापादेति पूर्व्वसूत्रे शतग्रहणं क्रियते तस्येदं फलं शतशब्दः

णां पंचकलापमंच लोहितशब्दोच द्विगूलात्तद्धितलुकावेवसंज्ञेयस्तुताभ्याप्रत्यये तेठञ्सञ्ज्ञूयत एव द्विगोरनिमित्तत्वेनतस्यलुगभावादिति विभाषाटिठनो लुगितिप्रत्या
देशपक्षे तु लुङ्‍भवति प्रत्यादेशस्य प्रत्ययसंनियोगशिष्टत्वादिति वा ध्यं अध्यर्द्धसहस्रमिति शतमानविंशतिकेति विहितस्याणो लुक् तद्भावपक्षे तु संख्यायाः संवत्सर
संख्यस्य चेत्युत्तरपदवृद्धिः अध्यर्द्धशब्दः संख्यावाचीत्यधुनैवोक्तत्वात् द्वित्रिपूर्वात् अध्यर्द्धग्रहणमुत्तरार्थमनुवृत्तमपीह न संबध्यते द्विगोरिति न संबध्यत एव षष्ठी स
मासंख्या वर्त्तयितुं अत्र च व्याख्यानमेव शरणं द्वित्रिभ्यां निष्कादित्येव सिद्धे पूर्वग्रहणं चित्त्वप्रयोजनमिति हरदत्तः द्विनैष्किकमिति प्राग्वतेष्ठञ् मतांतरे तु ठगिति मनो
रमायां निष्कादिभ्यस्समासे ठगभावात्परिच्छेदकमात्रं गृह्यत इति मतांतरे पिठञेव भवति तन्मते उन्मानस्यापि परिमाणत्वाद्गोपुच्छेत्यादिना पठेद्रसत्वाठ्ठगभावे नि

विस्ताच्च ५।१।३१ द्वित्रिपूर्वाद्विस्तान्तार्हीयस्य लुग्वा स्यात् । द्विविस्तं द्वैविस्तिकमित्यादि । विंशतिकात्खः ५।१।३२ अध्यर्द्धपूर्वाद्द्विगोरित्येव । अध्यर्द्धवि
शतिकीनं । द्विविंशतिकीनं खार्य्या ईकन् ५।१।३३ अध्यर्द्धखारीकं । द्विखारीकं । केवलायाश्चेति वक्तव्यं । खारीकं । पणपादमाषशताद्यत् ५।१।३४ ।
अध्यर्द्धपण्यम् । द्विपण्यं । द्विपाद्यं । अध्यर्द्धपाद्यं । इह पादः पदिति न पद्यत्येति लोपस्यासिद्धत्वात् पद्यत्यतदर्थे इत्यपि न । माण्यं ज्ञाऽर्थस्यैव
तन्त्रग्रहणात् । शाणाद्वा ५।१।३५ । यत्स्यात्पक्षे ठञ् । तस्य लुक् । अध्यर्द्धशाण्यं । अध्यर्द्धशाणं ॥ ११ ष्कादिभ्यष्ठञिप्राप्ते अ समासे ठञ्विधानेपि समासे ठ

ञ एव प्राप्तत्वादित्यन्ये परिमाणांतस्येत्युत्तरपदवृद्धिः द्विगोरिति संबंधान्नेह लुक् द्वयोर्निष्कयोः द्विनिष्कस्तेन क्रीतं द्वैनैष्किकं अध्यर्द्धपूर्वेत्यसंबंधादध्यर्द्धनैष्किकमि
त्यत्राप्यनेन लुङ्‍भवति ॥ ❀ ॥ विस्ताच्च चकारेण द्वित्रिपूर्वादित्यनुकृष्यते तत्फलं तु चानुकृष्टं नोत्तरत्रेत्युत्तरत्रानुवृत्त्यभावः विंशतिकात्खः शतमानविंशतिकेत्यणि
प्राप्ते तस्य च लुकि प्राप्ते खोऽत्र विधीयते खार्याः तदस्य परिमाणमिति ठञि प्राप्ते तस्य च लुकि प्राप्ते ईकन् विधीयते कन्विधौ केऽण इति ह्रस्वः स्यादिकन्विधावपि यस्येति
चेति लोपादिष्टं न सिद्ध्यतीति भावः माण्यं गार्थस्यैवेति अयं भावः पादस्य पदाज्यातिगोपहतेष्विति यत्र माण्यं गस्यैव हि पादस्य ग्रहणं तस्यैवाज्यादिभिर्गतिवच्चने
स्संबंधसंभवात् तथा च पद्यतो त्यादावपि तस्यैवानुवृत्तिरिह तु पणमाषाभ्यां साहचर्यात्परिमाणवाचिनो ग्रहणमिति पक्षे ठञिति । यद्यपि शाण उन्मानं तथाप्या

तस्येश्वरः तस्य निमित्तमित्यतोऽनुवृत्त्यैव सिद्धे पुनस्तस्येति निर्देशो निमित्तरूपप्रत्ययार्थस्य निवृत्तये अन्यथा हि संयोगोत्पातौ विवेश्वरोऽपि प्रत्ययार्थस्य विशेषणं संभाव्येत तत्र विदि तइति च योगविभाग उत्तरार्थो यथासंख्यनिवृत्त्यर्थश्च तस्य वापः तस्येति वापापेक्षया कर्मणि षष्ठी त्वाह प्रस्थस्येति कर्तरि वस्तुतो देवदत्तस्य वा

तस्येश्वरः ५।१।४२ तत्र विदित इति च ५।१।४३ सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः पार्थिवः लोकसर्वलोकाट्ठञ् ५।१।४४ तत्र विदित इत्यर्थे लौकिकः अनुशतिकादित्वादुभयपदवृद्धिः सार्वलौकिकः तस्य वापः ५।१।४५ उप्यतेऽस्मिन्निति वापः क्षेत्रं प्रस्थस्य वापः प्रास्थिकं द्रौणिकं खारीकं पात्रात्ष्ठन् ५।१।४६ पात्रस्य वापः क्षेत्रम् पात्रिकं पात्रिकी क्षेत्रभक्तिः तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ५।१।४७ वृद्धिर्दीयत इत्यादिक्रमेण प्रत्येकं सम्बन्धादेकवचनं पञ्चास्मिन् वृद्धिरायो लाभः शुल्कमुपदा वा दीयते पञ्चकः शातिकः शात्यः साहस्रः उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः ग्रामादिषु स्वामिग्राह्यो भाग आयः विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः रक्षानिर्वेशो राजभागः शुल्कः उत्कोच उपदा चतुर्थ्यर्थे उपसंख्यानं पञ्चास्मै वृद्ध्यादिर्दीयते पञ्चको देवदत्तः सम्प्रदानत्वेऽप्यधिकरणविवक्षा वा पूरणार्द्धाट्ठन् ५।१।४८ यथाक्रमं पूरणाद्ठक् इठनोरपवादः द्वितीयो वृद्ध्यादिरस्मिन्दीयते द्वितीयिकः तृतीयिकः अर्द्धिकः अर्द्धशब्दो रूपकस्यार्द्धे रूढः भागाद्यच्च ५।१।४९ चाट्ठन् भागशब्दोऽपि रूपकस्यार्द्धे रूढः भागो वृद्ध्यादिरस्मिन् भाग्यं भागिकं शतं भाग्या भागिका विंशतिः तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ५।१।५० वंशादिभ्यः परो यो भारशब्दस्तदन्तेभ्यः प्रातिपदिकेभ्यस्तस्मै इति कान्निहितीयान्तादित्यर्थः वंशभारं हरति वहत्यावहति वा वांशभारिकः ऐक्षुभारिकः भाराद्वंशादिभ्य इत्यस्य व्याख्यानान्तरं भारभूतेभ्यो वंशादिभ्य इति भारभूतान्वंशान्हरति वांशिकः ऐक्षुकः वस्नद्रव्याभ्यां ठन्कनौ ५।१।५१ यथासंख्यं वस्नं हरति वहत्यावहति वा वस्निकः द्रव्यकः ॥ ६ ॥

१ पः क्षेत्रमित्यादौ स्यादिति भावः खारीकमिति खार्या ईकन् तदस्मिन् प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति शुल्कग्रहणं प्रपञ्चार्थं तस्याप्यायविशेषत्वात् तथा च ठगा ॥ ६ ॥

॥

स्वरितत्वेनानुवर्तमानोपिशाणाद्वेत्यत्रैवसंबध्यतेतदुत्तरसूत्रेद्वित्रिपूर्वादएवेत्यत्रतुनसंबध्यतेतेनशतशब्दादण्नेतितदिदंसामर्थ्यंवर्णानमएवविधायकंयदि
सूत्रंस्यात्तदासंगच्छेतेनान्यथेत्यास्तांतावत्त्रैरूप्यमितितदेतद्दर्शयतिद्वैशाणमित्यादिनाअत्र ऐयकंठञोलुकिद्वितीयंयतितृतीयंठञादयस्त्रयोदशेति ननुएकाद
शैवप्रत्ययाः प्रकृताः सूत्रभेदेनविहितत्वाद्यत्प्रत्ययस्यद्विगणनेतुद्वादशेतित्रयोदशेत्येतदुरूपपादमेवनचपूर्वोदन्यतरस्यामित्यन्यतरस्याग्रहणालभ्यठञ
मादायत्रयोदशत्वंसूपपादमितिवाच्यम् तुल्यन्यायेनशाणाद्वेतिसूत्रलभ्ययतठञोग्रहणेनपंचदशत्वप्रसंगात् नापिसूत्रोपात्तौद्वौदशभिःसहद्वित्रिपूर्वादएवे
तिवार्तिकोपात्ताणप्रत्ययस्यगणनेननिर्वाहःउक्तरीत्याकंसाट्टिठनितिसूत्रेअर्द्धाच्चेतिवक्तव्यंकार्षापणाट्टिठन्वक्तव्यइत्यादिवार्तिकोक्तटिठन्प्रत्ययस्यापि
ग्रहणप्रसंगादितिचेत् अत्राहुः कंसाट्टिठन्इतिसूत्रस्थएवटिठन् अर्द्धकार्षापणशब्दाभ्यांपरामृष्टइतिसनभिद्यतेद्वित्रिपूर्वादएवेतिवार्तिकस्थाणस्तुभिद्यतेश
त्तमानविंशतिकेत्यणोद्वस्थत्वेनपरामर्ष्टुमशक्यत्वादितितेनक्रीतंतेनेतितृतीयांतात्क्रीतार्थेयथाविहितंप्रत्ययाःस्युःठञितिआर्हादितिसूत्रेअगोपुच्छेत्यादि
पर्युदासाद्गुभावेगोपुच्छसमतिप्रस्थेभ्यष्ठञ्भवतीत्यर्थः ननुदेवदत्तेनक्रीतंपाणिनाक्रीतंतोषेणक्रीतमित्यादावतिप्रसंगइतिचेत् अत्राहुःकरणेतृतीये
वेहसमर्थविभक्तिःसापिमूल्यद्रव्यसमर्थकाच्छ्वादुत्पन्नानतन्यापि अन्यत्रत्वनभिधानान्नप्रत्ययः एतच्चतद्धिताइतिमहासंज्ञाकरणाल्लभ्यतेतेभ्यःप्र
योगेभ्योहितास्तद्धिताइतिव्याख्यानादितिलुकोपवादइतिलुक्ताद्धितलुकीतिप्राप्तस्यस्त्रीप्रत्ययस्यलुकोऽपवादइत्यर्थः पंचकमिति संख्यालक्षणःकन् आश्मिक
मिति अश्मनोनिमित्तमित्यर्थेठक्नस्तद्धितइतिटिलोपःउत्वाच्छचगोद्यचइतिनित्यंयतिप्राप्तेवचनंकथंपत्नीयःऋतुरितिनहिक्रतुसंयोगोनाणुत्पातइतिचे
त् अत्राहहरदत्तः संयुज्यतेऽनेनेतिव्युत्पत्त्याक्रतुरपिसंयोगएवयागकरणेनहिपुरुषःफलेनसंयुज्यतेअतोयागादिरपिसंयोगोनकेवलंसंबंधएवेत्याग्रह
इतिसर्वभूमिआभ्यांयथासंख्यमणञौस्तः ॥

॥ १६ ॥

।लात्।स्वरूपग्रहणमिह नभवतितमधीष्टो भृतो भूतो भावी त्यत्यंतसंयोगे द्वितीया निर्देशात्।मासाद्वयसीत्यादौ मासादीनां कालेविशेषणाच्च।तेन निर्वृत्तं नृतीयांतात्का
लवाचिनःठञ्स्यात्।तेनेतिकरणोत्तृतीयाचतुर्थ्यंतगंतते ननिर्वृत्तमित्यत्रकृतेरिति तृतीयेति विशेषः।उभयत्राप्यंतर्भावितण्यर्थाद्वृत्तेः कर्मणि क्तः।आह्निकमिति।
अन्हष्टखोरेवेतिनियमान्नलत्तद्धितइतिटिलोपोनमासाद्वयसि॥खञ्जोऽन्तिकरणात्वरार्थं वङ्गावश्रतिमेधार्थंचमासीनाभार्या।अधीष्टादीनां चतुर्णामधिकारेपिसामर्थ्या
त्भूतइत्येतदत्रसंबध्यते।नहिमासमधीष्टो भृतोवेत्याद्युक्तौकाचित्कालकृताशरीरावस्थागम्यतइत्याशयेनाह।मासंभूतइति।एतच्चवृत्तिपदमंजर्योः स्पष्टं।मासीनइति।
वालकः।द्विगोर्यप्।आम्वत्तेः संख्यापूर्वपदानां तदंतविधेरभ्युपगमात्पूर्वेणायत्खञ्जोः प्राप्तयोर्यप्विधीयते पित्वादनुदात्तः।तेनद्विमास्य इत्यादावित्तकालेत्यादिना
वेपदप्रकृतिस्वरेणैवतिष्ठते।यइत्युक्तेऽत्र प्रत्ययस्याद्युदात्तत्वादंतोदात्तोद्विमास्यः स्यात्सतिशिष्टस्वरबलीयस्त्वादितिभावः।यद्यप्यनुवर्ततइति।व्याख्यानमेवात्रशरणं स

द्विगोर्वा॥५।१।८६॥समायाःखइत्येवातेन परिजय्येत्यतःप्राक्वृत्तादिषुपञ्चस्वर्थेषुप्रत्ययाः।द्विसमीनः।द्वैसमीकः।रात्र्यहःसम्वत्सराच्च॥५।१।८७॥
।द्विगोरित्येव।द्विरात्रीणः।द्वैरात्रिकः।द्व्यहीनः।द्वैयह्निकः।समासान्तविधेरनित्यत्वान्नटच्।द्विसम्वत्सरीणः।संख्यायाः सम्वत्सरसंख्यस्यच।
।७।३।१५।संख्यायाउत्तरपदस्यवृद्धिस्यात्।ञिदादौ।द्विसाम्वत्सरिकः।द्वेषष्टीभृतो द्विषाष्टिकः।संख्यायाः परिमाणान्तस्येत्येवसिद्धे सम्वत्सरग्रहणं
म्परिमाणग्रहणेकालपरिमाणस्याऽग्रहणार्थं।तेनद्वैसमीक इत्युत्तरपदवृद्धिर्न।वर्षाल्लुक्च॥५।१।८८॥वर्षशब्दान्ताद्विगोर्वाखः।पक्षेठञ्वा

मायाःख।हायनोवाशरत्समाइत्यमरः।समामधीष्टइत्यादिष्वधीष्टादयश्चत्वारोऽर्था अत्राप्यनुवर्त्ततइतिभावः॥ ॥द्विगोर्वा॥संख्यापूर्वपदानां चतुर्णांरूपाणि
तदंतग्रहणमस्तीत्यभ्युपगमात्पूर्वेणानित्येप्राप्तेविकल्पः।द्वैसमीकइति।खेनमुक्तेपक्षेठञितिभावः।द्वैयन्हिकइति।टखोरेवेतिनियमादिहटिलोपोन।अह्नोपोनः।नयथा
भ्यामित्येवनतद्धितार्थेति द्विगुसमासान्तंतरात्र्यहस्संवत्सराच्चेत्यनेनाधित्वापरत्वाद्वचाभाव्यंनचमहाविभाषयाटचोविकल्पइतिवाच्यं।द्विहतोजात्यंताःसमासांता
इतिनित्येषुपरिगणनादजश्चाह।समासांतविधेरितियच्चपिटचिकृतेप्यह्नादेशेनद्वैयह्निकइतिरूपंसिध्यतितथापिद्व्यहीनइतिरूपंनसिध्यतिटचिसत्यन्हादेशेतस्याश्रा
नित्वाद्रात्राह्नाहइतिसमासांतस्याहः।शब्दांतसमासग्रहणेनग्रहणाच्चरात्र्यहःसंवत्सराच्चेतिखप्रत्ययेकृतेपिद्व्यहीनइतिरूपमसंगादित्याहुः।उत्तरपदवृद्धिर्नेति।एतच्चोप

यस्थानेभ्य इति ठञ् भवति शौल्कशालिक इति हरदत्तः उपदादीयत इति जसस्सप्तत्वे यत्वे च यलोपः साहस्र इति शतमानेत्यादिना अण् रक्षानिर्वेश इति निर्वेशो भृतिः रक्षानिमित्त
को निर्वेशः संबंधषष्ठ्या समासः स्यमित्यादि एवं च संप्रदानस्यैवाधिकरणत्वविवक्षयेष्टसिद्धौ उपसंख्यानेनादर्तव्यमिति भावः शूरणाद्दीहून् इष्यतेऽनेनेति शरणो र्थस्तद्वाचिनोऽर्द्धे
शब्दाच्चठन् स्यात् अर्द्धिक इति अर्द्धाच्चेति वक्तव्यमिति ठिठन् प्राप्तः सति च तस्मिन् स्त्रियां ङीप् स्यात् इष्यते तु टाप् रूपकस्येति रूपकं कार्षापणं रूढ इति तथा च भागरूप्य
शब्दाच्च ठन् स्यात् ... सापेक्षत्वेनासामर्थ्यमिह नोद्भावनीयमिति भावः भारभूतेभ्यो वंशादिभ्य इति नञ् वंशादयश्शब्दास्तेकथं भारभूता इत्यत आह भारभूतानिति भारशब्दो र्थद्वारा वंशादीनां वि

सम्भवत्यवहरतिपचति । ५।१।५२। तत्र स्थं सम्भवति प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन् समावेशयतीत्यर्थः । प्रास्थिकी ब्राह्मणी । प्रस्थमुपसंहरति पच
तीत्यर्थः । तत्पचतीति द्रोणादण्च । वा० । द्रौणी । द्रोणं पचतीति द्रौणी । द्रौणिकी । आढकाचितपात्रात्खोऽन्यतरस्याम् । ५।१।५३। पक्षे ठञ् । आढकं सम्भ
वति अवहरति पचति वा आढकीना आढकिकी । आचितीना आचितिकी । पात्रीणा पात्रिकी । द्विगोः ष्ठंश्च । ५।१।५४। आढकाचितपात्रादित्येव आढ
कात् ... द्विगोः सम्भवत्यादिष्वर्थेषु ष्ठन् खो वा स्तः । पक्षे ठञ् । तस्याध्यर्द्धेति लुक् । षित्वान्ङीष् । द्व्याढकिकी । द्व्याढकीना । द्विगोरिति ङीप् । द्व्याढकी ।
द्व्याचितिकी । द्व्याचितीना । अपरिमाणेति ङीप् निषेधात् द्व्याचिता । द्विपात्रिकी । द्विपात्रीणा । द्विपात्री । कुलिजाल्लुक्खौ च । ५।१।५५। कुलिजान्ता
द्विगोः सम्भवत्यादिष्वर्थेषु लुक् खो वा स्तः । चात् ष्ठन् । लुगभावे ठञ् । स्ववर्णः । द्विकुलिजी । द्वैकुलिजिकी । द्विकुलिजीना । द्विकुलिजिकी । सोऽस्यांशवस्न
भृतयः । ५।१।५६। अंशो भागः । वस्नं मूल्यम् । भृतिर्वेतनम् । पञ्च अंशो वस्नो भृतिर्वास्य पञ्चकः ॥ ११ शेषणमिति भावः भारेभ्य इति वक्तव्यमत्यकं संबंधविवक्षयास्
त्रैमासादिति निर्देशः वस्निक इति वस्नं मूल्यम् ॥ ॥ संभवत्यवहरति आधारप्रमाणाद्याधेयप्रमाणस्य यदनाधिक्यं तदुपसर्जनं धारणं संभवतेरर्थस्तेन सकर्मकत्वात्तदि
ति द्वितीयांता वृत्तिर्न विरुध्यते तदाह प्रस्थं स्वस्मिन्निति प्रास्थिकीति ठञन्तत्वान्ङीप् अवहरतीत्येतद्व्याचष्टे उपसंहरतीति तत्पचतीति वार्तिकेऽस्मिन्पचति ग्रहणं संभव
त्यवहरतिनिवृत्त्यर्थं द्रोणपरिमिते व्रीह्यादौ द्रोणशब्दो लाक्षणिकः पक्षे ठञिति आढकादीनां परिमाणत्वाद्द्वन्द्वेति भावः द्विगोः ष्ठंश्च ष्ठनिति च्छेदः तदाह षित्वादि
ति द्व्याढकिकीति न प्राभ्यामित्येजागमो न यः कथं द्विनिषेधसन्नियोगेन तद्विधानात् द्वन्द्वेऽस्य साम्याभावात् अपरिमाणेति आचितस्य परिमाणत्वेऽपि तस्मिन् सूत्रे विशि

मासशब्दस्य कालवाचित्वात्कालाधिकारे वार्तिकारंभः। नच विशिष्टस्य कालवाचित्वाभावादिह संगतिरीदृग्निरूपेति शंक्यं। प्राग्वतस्संख्यापूर्वपदानां तदंतग्रहणमित्यभ्युपगमादस्त्येव संगतिरिति। अणसंज्ञायामिति। तत्रभवइत्यनेनैव सिद्धे पुनरण्विधिर्द्विगोर्लुगनपत्य इति लुङ्मा भूदित्येतदर्थं मिदमत्रारब्धं एवं चास्मिन्वार्तिके चतुर्मास्यादित्यस्यानुवृत्तये पूर्ववार्तिकमत्रैवारब्धमित्यपि ज्ञेयं। चातुर्मासीतिकस्ससंज्ञेत्याकांक्षायामाह। आषाढीति। आषाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः। तस्य दक्षिणा यज्ञाख्येभ्यो दक्षिणेत्यस्मिन्नर्थे ठञ्स्यात्। कालाधिकारादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं व्यर्थमित्याशंकां परिहरति। आख्याग्रहणादिति। तत्र चाकालवा

तस्य दक्षिणा यज्ञाख्येभ्यः।५।१।९५। द्वादशाहस्य दक्षिणा द्वादशाहिकी। आख्याग्रहणादकालादपि। आग्निष्टोमिकी। वाजपेयिकी। तत्र च दीयते कार्यम्भववत्।५।१।९६। प्रावृषि दीयते कार्यम्वा प्रावृषेण्यं। शारदं। कालाधिकारस्य सम्पूर्णोवधिः। व्युष्टादिभ्योऽण्।५।१।९७। व्युष्टे दीयते कार्यम्वा वैयुष्टं। व्युष्टतीर्थसं ग्रामप्रवासइत्यादि। तेन यथाकथाच हस्ताभ्यां णयतौ।५।१।९८। यथाकथाचेत्यव्ययसंघातात्तृतीयान्ताद्धस्ताद्धस्तशब्दाच्च यथासंख्यं णयतौ स्तः। अर्थाभ्यां नु यथासंख्यं नेष्यते। यथाकथाच दीयते कार्यम्वा याथाकथाचं। अनादरेण देयं कार्यम्वेत्यर्थः। हस्तेन दीयते कार्यम्वा हस्त्यं। सम्पादिनि।५।१।९९। तेनेत्येव। कर्णवेष्टकाभ्यां सम्पादिकार्णवेष्टकिकं मुखं। कर्णालङ्काराभ्यां अवश्यं शोभत इत्यर्थः। कर्म्मवेषाद्यत्।५।१।१००। कर्म्मणा सम्पादि कर्म्मण्यं। शौर्यं। वेषेण सम्पादि वेष्यो नटः। वेषः कृत्रिम आकारः। तस्मै प्रभवति सन्तापादिभ्यः।५।१।१०१। सन्तापाय प्रभवति सान्तापिकः। सांग्रामिकः। योगाद्यच्च।५।१।१०२। चाट्ठञ्। योगाय प्रभवति योग्यः। यौगिकः। कर्म्मण उकञ्।५।१।१०३। कर्म्मणे प्रभवति कार्म्मुकं। समयस्तदस्य प्राप्तम्।५।१।१०४। समयः प्राप्तोऽस्य सामयिकं। ऋतोरण्।५।१।१०५। ऋतुः प्राप्तोऽस्य आर्तवं। कालाद्यत्।५।१।१०६। कालः प्राप्तोऽस्य का

विनः सप्तम्यंताद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात्। प्रावृषेण्यमिति। प्रावृषएण्य इति भवार्थे विहितस्स इहाप्यतिदिश्यत इति भावः। शारदमिति। संधिवेलाद्यृतुनक्षत्रेभ्योऽण् कालाधिकारस्य पूर्णोवधिः। व्युष्टादिभ्योऽण्। व्युष्टशब्दः कालवाची दिवसमुखे वर्तते। संपादिनि। गुणोत्कर्षः संपत्तिः। आवश्यके णिनिरिति वृत्तिरुक्ता। एवं वस्त्रयुगेन संपादि वास्त्रयुगिकं शरीरमित्यप्युदाहार्यं। वस्त्रयुगेन अवश्यं शोभत इत्यर्थः। तस्मै प्रभवति। समर्थः शक्तः प्रभवतीत्युच्यते। आर्तवमिति। उष्यमित्या

पर्युदासेन पर्युदासाभावाद परिमाणविस्ताचितेतीह निषेधप्रवृत्तेः द्विवर्षे भृतेत्तमधीष्ट इति ठञ् वर्षाल्लुक्चेति लुक् । चित्तवति नित्यमिति नित्यं लुको वक्ष्यमाणत्वाद् चित्त
वानिह प्रत्ययार्थ इत्युदाहरति ॥ ॥ द्विवर्षो रोग्व्याधिरिति । द्वैवार्षिको मनुष्य इति । अत्र वदंति । मनुष्ये चित्तवतीति नित्यं लुक्प्रसंगान्मनुष्यो मनुष्यसदृशः प्रतिमादि

द्विवर्षो रोग्व्याधिः । द्विवर्षः । वर्षस्याऽभविष्यति । ७।३।१६। उत्तरपदस्य वृद्धिः स्यात् । द्विवार्षिकः । भविष्यति तु द्वैवर्षिकः । अधीष्टभृतयोरभविष्य
तीति प्रतिषेधो न । गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म्म करिष्यतीति द्विवार्षिको मनुष्यः । परिमाणान्तस्याऽसंज्ञाशाणयोः
। ७।३।१७। द्वौ कुडवौ परिमाणमस्य द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । द्विनैष्किकम् । असंज्ञेति किम् । पञ्चकलापाः परिमाणम
स्य पाञ्चकलापिकम् । तद्धितान्ता संज्ञैषा देशानाम् । कुलिजशब्दमपि केचित्पठन्ति । द्वैकुलिजिकी । चित्तवति नित्यम् । ५।१।८९। वर्षशब्दान्ता
द्विगोः प्रत्ययस्य नित्यं लुक् स्यात् । चेतने प्रत्ययार्थे । द्विवर्षो दारकः । षष्टिकाः षष्टिरात्रेण पच्यन्ते । ५।१।९०। बहुवचनमतन्त्रम् । षष्टिको धान्यविशेषः
। तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते । तेन परिजय्यलभ्यकार्य्यसुकरम् । ५।१।९३। मासेन परिजय्यो जेतुं शक्यो मासिको व्याधिः । मासेन लभ्य
ङ्कार्य्यं सुकरं वा मासिकम् । तदस्य ब्रह्मचर्य्यम् । ५।१।९४। द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात् । अत्यन्तसंयोगे द्वितीया । मासं ब्रह्मच
र्य्यमस्य मासिको ब्रह्मचारी । आर्द्धमासिकः । यद्वा । प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति मासिकं ब्रह्मचर्य्यम् । महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्या
नम् । महानाम्नी नाम विदामघवन्नित्यादयो ऋचः । तासां ब्रह्मचर्य्यमस्य माहानाम्निकः । हरदत्तस्तु भस्याढ इति पुम्वद्भावान्माहानामिक इत्याह । चातु
र्म्मास्यानां यज्ञे तत्र भव इत्यर्थे । चतुर्षु मासेषु भवन्ति चातुर्म्मास्यानि यज्ञाः अण्संज्ञायां चतुर्षु मासेषु भवति चातुर्म्मासी । असन्तत्वान्ङीप् । पौर्णमा

इति व्याख्यापस्थितस्य गतिः समर्थनीयेति । दारक इति । बालकः । परिजय्येत्यस्य विवरणं जेतुं शाक्य इति । क्षय्यजय्यौ शक्यार्थ इत्ययादेशः । महानाम्न्यो नामेति तथा
चाभावितपुंस्कत्वात्पुंवद्भावो नेति भावः । हरदत्तस्त्विति । योगिकोऽयं न तु रूढ इति मन्यते । महानामिक इति पुंवद्भावे कृते तेन स तद्धित इति टिलोपः । चातुर्म्मास्यादिति ॥

ब्राह्मणशब्दस्तत्कर्तृकाध्ययने लक्षणया वर्त्तते ब्राह्मणकर्तृकाध्ययनतुल्याध्ययने वाक्यार्थ इति न कोऽपि दोष इति गुणतुल्य इति। उपलक्षणमिदं। अक्रियातुल्य इत्यर्थः। एवं च ब्राह्मणेन सदृशः क्षत्रिय इत्यर्थे ब्राह्मणवत् क्षत्रिय इति प्रयोगो साधुरेव। अत एव पर्वतो वह्निमान् महानसवदिति वाक्ये महानससदृशः पर्वत इत्यर्थे वतेरसाधुत्वं मत्वा तस्य वतेः साधुत्वस्मरणार्थं पर्वतो वह्निमान् भवितुमर्हतीत्यादिक्रियापदं प्रयुञ्जते वृद्धाः॥ ॥ तत्र तस्येव। सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे प्रत्ययः। क्रिया चेदिति नानुवर्त्तते इति द्रव्यादितुल्य प्रत्ययो भवति। मथुरावत् स्रुघ्ने इति। मथुरायामिव स्रुघ्ने प्राकारः। तेन तुल्यः प्राकारः स्रुघ्ने इत्यर्थः। तदर्हं। अर्हतीत्यर्हं पचा

तत्र तस्येव। ५।१।११६। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवन्मैत्रस्य गावः। तदर्हम्। ५।१।११७। विधिमर्हतीति विधिवत्पूज्यते। क्रियाग्रहणं मण्डूकप्लुत्यानुवर्त्तते। तेनेह न। राजानमर्हति छत्रं। तस्य भावस्त्वतलौ। ५।१।११९। प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावः गोत्वं। गोता। त्वान्तं क्लीबन्तं तलन्तं स्त्रियां। आ च त्वात्। ५।१।१२०। ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते। अपवादैः सह समावेशार्थं। गुणवचनादिभ्यः कर्मणि विधानार्थं च्चेदं। चकारो नञ्स्नञ्भ्यामपि समावेशार्थं। स्त्रिया भावः स्त्रैणं। स्त्रीत्वं। स्त्रीता। पौंस्नं। पुंस्त्वं। पुंस्ता। न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः। ५।१।१२१। इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युः चतुरादीन्वर्ज्जयित्वा। अपतित्वं। अपटुत्वं। नञ्पूर्वात्किं। वाहस्पत्यं। तत्पुरुषात्किं। नास्य पटवः सन्तीत्यपटुस्तस्य भावः आपटवं। अचतुरेति किं। आचतुर्य्यं। आसङ्गत्यं। आलवण्यं। आवट्यं। आयुध्यं। आकत्यं। आरस्यं। आलस्यं ॥ ॥

द्यच् पचपि कृद्योगे कर्मणि षष्ठ्या भवितव्यं तथापि त्र. त्रसोत्रे विभक्तिव्यत्यय इत्येके। कर्तृकर्मणोरिति षष्ठ्या अनित्यत्वज्ञापक मिदं। तेन च ध यैर्गामोद्भुत्तममिति भट्टिप्रयोगः संगच्छत इति। कारकेष्वेवोचामद्वितीयां तादेव प्रत्यय इति सुधाकर इति ङ नेन विरुद्ध्यते। विधिमर्हतीति। कथं तर्हि तत्तो यथावद्विहिताध्वरायेति असत्वार्थकस्य कर्मत्वासंभवेन द्वितीयां तत्त्वाभावादिति चेदत्राहुः। यथाशब्दो वृत्तिविषये सत्वार्थकस्तथा त्वमित्यादिवत्तलादिदर्शनात्। अन्यथा षष्ठ्यापि नासीतित्वतलौ न स्यातां। तथा च द्वितीयां ता यथाशब्दादिहार्थे वतिः योग्यतामर्हतीति विधानमित्यर्थो क्रियायोगोऽपि सुलभ इति। तस्य भावस्त्वतलौ। प्रकृतीति। ननु यः कश्चिद्धर्मः। घटत्वमित्यत्र द्रव्यत्वपृथिवीत्वादेर्भानात्। गोर्भाव इति इह गोशब्दोऽर्थपरः शब्दस्वरूपपरो वेति पक्षद्वयं। पदार्थपरस्तदा धर्मविशे

प्रत्यूषोहर्मुखंकल्यमित्यमरस्तत्रप्रातःकालेकल्यशब्दस्यव्युत्पत्त्यंतरंमृग्यं॥ ॥ प्रकृष्टेठञ्॥ प्रकृष्यतेऽयमिति प्रकृष्टः कर्मणिक्तः तेनचप्रकर्षेणकालोविशेष्यतेइत्याह
दीर्घःकालइति॥ ठञ्ग्रहणंविस्पष्टार्थं। अन्यथाऽनंतरस्ययतोऽनुवृत्तिःशंकयेत॥ इन्द्रमहइति॥ महउत्सवः। वैशाखोमंथः। आषाढोदंडइति॥ वैशाखाषाढशब्दौरूपेणामं
थदंडयोर्वर्तेते॥ तयोस्तुयथाकथंचिद्व्युत्पत्तिः। क्षिपतइतिहरदत्तः। विलोडनदंडस्यैवाधारभूतःकाष्ठविशेषोमंथइत्युच्यते। अनुप्रवचनंनामब्रह्मोदनमुच्यते। सपूर्वपदादिति
विद्यमानपूर्वपदादित्यर्थः। ऐकागारिकट्। टोङीबर्थः। ऐकागारिकी किमर्थमिदमुच्यते यावताप्रयोजनमित्येवठञिसिद्धम् सत्यं। चौरेनियमार्थमावश्यकमिदंसूत्रमन्यथा

प्रकृष्टेठञ्।५।१।१०८। कालादित्येव। तदस्येतिच। प्रकृष्टोदीर्घःकालोस्येति कालिकंवैरम्। प्रयोजनम्।५।१।१०९। तदस्येत्येव। इन्द्रमहःप्रयोजनमस्यऐ
न्द्रमाहिकं। प्रयोजनंफलंकारणंच। विशाखाषाढादण्मन्थदण्डयोः।५।१।११०। आभ्यांमणस्यात्प्रयोजनमित्यर्थेक्रमान्मन्थदण्डयोरर्थयोः। विशा
खाप्रयोजनमस्यवैशाखोमन्थः। आषाढोदण्डः। चूडादिभ्यउपसंख्यानम्। चूडा। चौडं। श्रद्धा। श्राद्धम्॥ अनुप्रवचनादिभ्यश्छः।५।१।१११। अनुप्रवच
नंप्रयोजनमस्यअनुप्रवचनीयं। समापनात्सपूर्वपदात्।५।१।११२। व्याकरणसमापनंप्रयोजनमस्यव्याकरणसमापनीयः। ऐकागारिकट्चौरे।५।
१।११३। एकमसहायमगारंप्रयोजनमस्यमुमुषिषोः सऐकागारिकश्चौरः। आकालिकडाद्यन्तवचने।५।१।११४। समानकालावाद्यन्तौयस्येत्याकालि
कः॥ समानकालस्याकालआदेशः। आशुविनाशीत्यर्थः। पूर्वेद्युर्मध्याह्नादारभ्यपरदिनान्तरेतत्रैवनष्टंइतिवा॥ आकालाट्ठंश्च॥ आकालिकावि
द्युत्। ठञः पूर्णोवधिः। तेनतुल्यंक्रियाचेद्वतिः।५।१।११५। ब्राह्मणेनतुल्यंब्राह्मणवदधीते। क्रियाचेदितिकिं॥ गुणतुल्येमाभूत्। पुत्रेणतुल्यःस्थूलः॥ ॥

एकमगारंप्रयोजनंयस्यभिक्षोरित्यत्रापिस्यात्। नन्वेवमप्येकागारात्चौरेइतिठञेवनियम्यतां किमैकागारिकइतिनिपातनेन टित्करणेनचप्रयोजनमितिचेदत्राहुः ट
कारःकार्यावधारणार्थः ङीबेवभवतिनञित्स्वरइतिच टित्तु निपातनाद्भवत्येवेति। आकालस्याऽदेशइति॥ निपात्यतइतिशेषः। आद्यन्तौयस्येत्यादि। अस्येत्यधिका
रात्षष्ठ्यर्थेइकट्प्रत्ययोनिपात्यतइतिभावः। आकालाट्ठंश्चवार्तिकमिदं। ठञः पूर्णोवधिः। तेनतुल्यंक्रियाचेद्वतिः॥ तुल्यमितिसामान्येनपुंसकं। तृतीयांतात्तुल्यमित्यर्थे
वतिःस्यात्। यत्तुल्यंक्रियाचेत्सा। ब्राह्मणेनतुल्यमिति। नन्वत्रब्राह्मणोयथावर्ततेतथाऽसत्क्रियादिकर्तृका ध्ययनेवर्ततइतिवाक्यार्थोनसंगतइतिचेदत्राहुः। ।

गुणवचन इत्यनुवर्त्तते। कर्म क्रिया कार्यं च। शरीरायासमात्रसाध्यं शौचादि क्रिया। शास्त्रेण विहितो यागादिः कार्यमिति तयोर्भेदमाह। अर्हत इति। अर्हः प्रशंसायामिति शत्रन्तो
ऽर्हत्शब्दः पूजार्थाभिधायीति कैयटः। आकृतिगण इति केचित्त्वात् ठक्षु कार्योत्तरणात् तथाहि अर्हतो नुम्चेति नुमर्थः पाठः एकभावः त्रिभावः अन्यभावः एषां पाठः स्वा
र्थे विधानार्थः। तथा च प्रत्याहाराह्निके वार्त्तिके प्रयोगः आन्यभाव्यं तु कालशब्दव्यवायादिति। अन्यभाव एव आन्यभाव्यं अन्यत्वमित्यर्थः। यत्तु व्याकरणाधिकरणे भट्ट

गुणवचनब्राह्मणादिभ्यः कर्मणि च।५।१।१२४। चाड्भावे। जडस्य कर्म भावो वा जाड्यं। मूढस्य भावः कर्म वा मौढ्यं। ब्राह्मण्यं। अर्हतो नुम् च। अर्हतो भा
वः कर्म वा आर्हन्त्यं। आर्हन्ती। ब्राह्मणादिराकृतिगणः। यथातथयथापुरयोः पर्यायेण।७।३।३१। नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणादेर
चो वृद्धिर्ञ्णिदादौ। अयथातथाभावः। आयथातथ्यं। अयाथातथ्यं। आयथापुर्य्यं। अयाथापुर्य्यं। आपादसमाप्तेर्भावकर्म्माधिकारः। चतुर्वर्णादी
नां स्वार्थ उपसंख्यानम्। चत्वारो वर्णाः चातुर्वर्ण्यं। चातुराश्रम्यं। त्रैस्वर्य्यं। षाड्गुण्यं। सैन्यं। सान्निध्यं। सामीप्यं। औपम्यं। त्रैलोक्यमित्यादि। सर्ववेदाः
। सर्ववेदास्तानधीते सर्ववेदः। सर्वादेरिति लुक्। स एव सार्ववैद्यः। चतुर्वेदस्योभयपदवृद्धिश्च। चतुरो वेदानधीते चतुर्वेदः। स एव चातुर्वैद्यः। च
तुर्विद्यस्येति पाठान्तरं। चतुर्विद्य एव चातुर्वैद्यः। स्तेनाद्यन्नलोपश्च।५।१।१२५। नेति संघातग्रहणं। स्तेन चौर्ये पचाद्यच्। स्तेनस्य भावः कर्म वा स्ते
यम्। स्तेनादिति योगं विभज्य। स्तेन्यमिति यञन्तमपि केचिदिच्छन्ति। सख्युर्यः।५।१।१२६। सख्युर्भावः कर्म वा सख्यं। दूतवणिग्भ्यां च।
दूतस्य भावः कर्म वा दूत्यं। वाणिज्यमिति काशिका। माधवस्तु वाणिज्याशब्दः स्वभावात् स्त्रीलिङ्गः। भाव एवात्र प्रत्ययो न तु कर्म्मणि स्यात्। भाष्ये

दैस्तत्त्वमान्यभाव्यमपप्रयोग इति। तत्त्वे व्याकरणमीमांसकसंतोषार्थमित्यवधेयं। सर्व ९ उ दूतवणिग्भ्यां चेति नास्त्येव। ब्राह्मणादित्वाद्वाणिज्यमपि ॥
वेदा इति। पूर्वकालैकेति समासः। चतुर्वेद इति तद्धितार्थे द्विगुः। द्विगोर्लुगनपत्ये इत्यणो लुक्। चतुर्विध इति। विघालसपतां स्त्रन्तादिति ठञन्तस्य लुक्। संघातग्रह
णमिति। वर्णग्रहणे तु यस्येति चेत्यकारलोपे सति इन न सिध्यति। अचः परस्मिन्नित्यलोपस्य स्थानिवद्भावाद्यादेशप्रसंगादिति भावः। ननु संघातग्रहणेऽप्यलोऽन्त्य
स्येत्यकारस्यैव लोपः स्यान्न तु संघातस्येति चेन्मैवं। आरंभसामर्थ्यान्नानर्थकेऽलोऽन्त्यविधिरिति निषेधाद्वा तत्सिद्धं॥ ९॥

प्रत्ययार्थः । स च धर्मत्वेनैवभासते । प्रकृतिजन्येत्यादि तु प्रयोगोपाधिः । यदा तु शब्दपरस्तदा तज्जन्यबोधप्रकारः प्रत्ययार्थः स च धर्मविशेष एव । याचकत्वमित्यत्र तु क र्तृत्वरूपसंबंधः प्रकारः । पच्यमानत्वमित्यत्र तु कर्मत्वरूपसंबंधः । तथा औपगवत्वमित्यत्र जन्यत्वरूपसंबंधः प्रकारः । राजपुरुषत्वमित्यत्र तु स्वस्वरूपस्संबंध इत्यादू ह्यम् । एवं स्थिते हरदीकायां यदुक्तं कृत्तद्धितसमासेभ्यः संबंधाभिधानं भावप्रत्ययेनेति तत्र नापूर्वशक्त्यन्तरं कल्प्यम् । उक्तरीत्यैव तत्राप्युपपत्तेरिति संक्षेपः । अपवादैस्सह गि ॥ ❀ ॥ पृथ्वादिभ्य इमनिज्वेत्यादिभिः चकार इति । अन्यथा त्वतलौ स्त्रीपुंसाभ्यां नञ्स्नञौ तामन्यत्र तयोस्सावकाशत्वादिति भावः । पौंस्नं पुंस्त्वमिति । संयोगान्तलोपे पुमः खय्यीति रुत्वं । पांस्निका वनुनासिकानुस्वारौ । विसर्गे कृते सत्वं । अपतित्वमिति । इह पत्यन्तेति यक् न भवति । अपटुत्वमिति । इह त्विगन्ताच्च लघुपूर्वादित्यण् न भवति आचतुर्यमित्यादि । ब्राह्मणादित्वात् ष्यञ् । पृथ्वादिभ्यः । अणादीति । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वणस्समावेशः । दृढादिषु गुणवचनेन ष्यञः । बालवत्सा

**पृथ्वादिभ्य इमनिज्वा । ५।१।१२२ ।** वावचनमणादिसमावेशार्थम् । **र ऋतो हलादेर्लघोः । ६।४।१६१ ।** हलादेर्लघोः ऋकारस्य रः स्यादिष्ठेमेयस्सु । **टेः ।** भस्य टेर्लोपः स्यादिष्ठेमेयस्सु । पृथोर्भावः प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् । **वर्णदृढादिभ्यः ष्यञ्च । ५।१।१२३ ।** चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । पृथु मृदु भृश कृश दृढ परिवृढानामेव रत्वं । द्रढिमा । बोढावयः । औचिती । याथाकामी ॥ १९ द्विगुवयोवचनलक्षणास्सान्तरतिबोध्यात्वत

लोपुर्वस्सत्रेणोपलब्धौ । र ऋतो हलादेः । किं । ऋजिष्ठः ऋजीयान् । लघोः किं । कृष्णिष्ठः । पृथुमृदुभृशेति परिगणनेन तु हलादेर्लघोरिति त्यक्तुं शक्यम् । वर्णदृढादिभ्यः गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम् । पृथुमृदुभृशेति परिगणनादिह रभावो न भवति । शतमाच रेष्टेतनयतिरा विश्वबङ्घ्रः । औचितीति ब्राह्मणादेराकृतिगण त्वात् ष्यञ् । हलस्तद्धितस्येति यलोपः । एवं याथाकामी । दृढ दृढ परिवृढ भृश कृश वक्र इत्यादि । अन्तर्गणसूत्रेणैव पातलाभमतिमनः शारदानाम् । विशब्दादुत्तरेषां पातादयः पंच तदन्तानां समासानाम् अनन्तरं ष्यञ् भवतीत्यर्थः । विपातत्वं विपातता । विपातिमा । वैपात्यं । विलाभिमा । वैलाभ्यं । विमतिमा । वैमत्यं । इगन्तत्वादणपि । वैमतम् । विमनिमा । वैमनस्यं । विशारदिमा । वैशारद्यं । त्वतलोस्समावेशेन विलाभत्वं । विलाभतेत्यादीन्यप्यूह्यानि । समो मतिमनसोः । समः परे ये मतिमनसी तदन्तयोस्समासयोरनन्तरं ष्यञ् भवतीत्यर्थः । संमतित्वं संमतिता । संमतिमा । सांमत्यं । इगन्तत्वादणपि । सांमतम् । संमनस्त्वं संमनस्ता । संमतिमा । सांमनस्यम् ॥ ॥ ॥ ॥

यथामुखंदर्शनइति। अव्ययीभावस्यापियथामुखशब्दस्योन्मत्तगंगादिवत्तत्तवचनत्वात्कर्मशक्तियोगेसतिकृद्योगलक्षणाषष्ठीतस्याः नाव्ययीभावादित्यमादेशः। सर्वे स्यमुखस्येति। संमुखस्येतिनोक्तं। प्रत्ययसंनियोगेनैवसमशब्दस्यांत्यलोपनिपातनात्। संशब्दस्तुसमशब्दार्थेनदृश्यतेसंमुखोभवेत्यत्राभिमुखइत्यर्थंप्रतीतेस्तत्रचखप्रत्ययस्यानिष्यमाणत्वात्। कथंतर्हिसंमुगेसंमुखीनंतमुत्कदंप्रसहेतकइतिभट्टिः। अभिमुखावस्थानात्सामर्थ्याद्भविष्यतीतिहरदत्तः॥ ॥ तत्सर्वादेः। तदितिद्वितीयासमर्थविभक्तिः। व्याप्नोतीतिप्रत्ययार्थः परिशिष्टंप्रकृतिविशेषणं। तत्रकेवलानांपथ्यादीनांसर्वादित्वासंभवात्प्रातिपदिकेरपितेतदंतविधिः। तदाहपथ्याद्यंतादिति। पथ्यंगकर्मपत्रपात्रांतात्प्रातिपदिकादित्यर्थः। सर्वपथीनइति। एकवाक्येकेतिसमासः। आकृ रितिसमासांतस्यपथ्यंतसमासग्रहणेनग्रहणाद्भवतिखप्रत्ययः। अनुपदसर्वान्नायानयंब
तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रंव्याप्नोति। ५।२।७। सर्वादेः पथ्याद्यन्ताद्द्वितीयान्तात्खस्यात्। सर्वपथान्व्याप्नोतिसर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्रीणः। सर्वपात्रीणः। आप्रपदम्प्राप्नोति। ५।२।८। पादस्याग्रम्प्रपदन्तन्मर्यादीकृत्य। आप्रपदं। आप्रपदीनः पटः। अनुपदसर्वान्नायानयंबद्धाभक्षयतिनेयेषु। ५।२।९। अनुरायामेसादृश्येवा। अनुपदम्बद्धा। अनुपदीनाउपानत्। सर्वान्नानिभक्षयतिसर्वान्नीनोभिक्षुः। अयानयः स्यत्तु विशेषः। तन्नेयः। अयानयीनश्शारः। परोवरपरम्परपुत्रपौत्रमनुभवति। ५।२।१०। परांश्चावरांश्चानुभवतीतिपरोवरीणः। अवरस्योत्त्वन्निपात्यते। परांश्चपरतरांश्चानुभवतिपरम्परीणः। प्रकृतेः परम्परभावोनिपात्यते। पुत्रपौत्राननुभवतिपुत्रपौत्रीणः। परम्पराशब्दस्तुअव्युत्पन्नंशब्दान्तरंस्त्रीलिङ्गन्तस्मादेवस्वार्थेष्यञ्निपारम्पर्य्यं। कथम्पारोवर्य्यवदिति असाधुरेवायंखप्रत्ययसन्नियोगेनैवपरोवरेतिनिपातनात्॥ ८

द्भाभक्षयतीत्यत्रनिपातनात्तिङंतेनसहद्वंद्वः। द्वितीयांतेभ्योऽनुपदादिभ्योयथासंख्यंबद्धादिष्वर्थेषुखः स्यात्। अनुरायामइत्यादि। पस्यचायामइतियथार्थेयदव्ययमितिवाअव्ययीभावइत्यर्थः। सर्वान्नीनइतिप्रकारान्तर्येसर्वशब्दः। यान्यन्नानिलभ्यंतेउष्णानिशीतलानिसरसानिनीरसानिवासर्वाणिभक्षयतीत्यर्थः। अयः प्रदक्षिणगमनं। अनयः प्रसव्यगमनं। प्रदक्षिणप्रसव्यगामिनांशाराणांयस्मिन्परैरसमावेशः सोयमयानयइतिकाशिका। तन्नेयइति। नयतेर्हिद्विकर्मकत्वादप्रधानेकर्मणिद्वितीया। अयानयीनः शारइति। फलकाशिरसिस्थितइत्यर्थइतिकाशिका। अवरस्येति। आदेरितिशेषः। उत्वेकृते। आद्गुणः। केचित्तुओत्वंपरशब्दस्यनिपात्यतेतस्मात्परस्मात्पएङः पदान्तादतीतिपूर्वरूपादेशइतिपक्षांतरमाहुः ॥ ० ॥

कपिज्ञात्योः। इह कपिज्ञाती द्वौ भावकर्मणोरर्थावपि द्वौ तयोर्यथासंख्यं न भवत्यस्वरितत्वप्रतिज्ञानात्। एवं पत्यंतपुरोहितादि- भ्यः द्वन्द्वमनोज्ञादिभ्य इत्यत्रापि वो-
ध्यं। ब्राह्मणादित्वादिति। यद्यपि ब्राह्मणादिषु राजन्शब्दः केवलः पठितस्तथाप्ययमेवासे इति प्रतिषेधो ज्ञापयति। अस्यत्र प्रकरणे राजन्शब्देन तदंतविधिरिति। एवं च ब्रा-
ह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति। अन्ये तु ब्राह्मणादेराकृतिगणत्वादेव तदंतात् कथंचित् ष्यञ् सिद्धे राजन्शब्दस्य तत्र पाठो पका सह
समावेशार्थ इति। तथा चावेक्ष्यधिकरणे शावरभाष्ये उक्तं। राज्ञः कर्म राज्यं ब्राह्मणादित्वात् ष्यञिति। पुरोहित। संग्रामिक। पथिक। सारथिकेत्यादयः पुरोहितादयः। प्राणभृ-
ज्जातिमुखनाासां स्वरादीनां प्राणाः। प्राणिजातीत्येव सुवचं। प्राणभृदिति किं। नृणात्वं। नृणाता। जातीति किं। देवदत्तत्वं। औद्गात्रमिति। उद्गात्रादिषु पठ्यत इति वचनात्तेभ्यो
होत्राभ्यः छ इति छे प्राप्ते अञ् विधीयते। गुण्ठुइस्तुह्राभ्यां गणलक्षणो ष्यञि प्राप्ते वभूशब्दादिगंतलक्षणो ऽणि शेषेभ्यस्त्वतलौ प्राप्तयोः। इह तु सुभगं मंत्रे पठ्यते। सुभगमित्येतच्छ

कपिज्ञात्योर्ढक्। ५।१।१२७। कापेयं। ज्ञातेयं। पत्यन्तपुरोहितादिभ्यो यक्। ५।१।१२८। सेनापत्यं। पौरोहित्यं। राजा ऽसे। राजशब्दो ऽसमासे यकं लभत इत्य-
र्थः। राज्ञो भावः कर्म वा राज्यं। समासे तु ब्राह्मणादित्वात् ष्यञ्। आधिराज्यं। प्राणभृज्जातिवयोवचनोद्गात्रादिभ्यो ऽञ्। ५।१।१२९। प्राणभृज्जातिः। आश्वं
। औष्ट्रं। वयोवचनं। कौमारं। कैशोरं। औद्गात्रं। औन्नेत्रं। सौष्ठवं। दौष्ठवं। हायनान्तयुवादिभ्यो ऽण्। ५।१।१३०। द्वैहायनं। त्रैहायनं। यौवनं। स्थाविरं। स्त्रो-
त्रियस्य यलोपश्च। श्रौत्रं। कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञाः। युवादिषु च ब्राह्मणादिषु च पठ्यन्ते। कौशल्यं। कौशलमित्यादि ॥ ॥

द्रूपं मंत्रविषये प्रयोगे अनुत्पादयतीत्यर्थः। महते सौभगाय सर्वविधीनां छंदसि विकल्पितत्वादिह ह्रस्वा सिंध्वंत इत्यत्र पदवृद्धिर्न भवति। अत एव मंत्रे पि क्वचिदञ् न भवति
सौभाग्यमस्यै दत्त्वाय। इह ष्यञ्। हायनांत। आस्मात्वतलौ प्राप्तयोरणिवधानं। युवस्थविरशब्दाभ्यां वयोवचनलक्षणो ऽञि प्राप्ते। यौवनमिति। अणि परतः अन्निति प्रकृति
भावः। मनोज्ञादिपाठाद्वुञ् वा। यौवनकं। प्रकृत्या के राजन्यमनुष्ययुवान इति प्रकृतिभावः। श्रोत्रियस्येति। श्रोत्रियं श्छंदोधीत इत्यत्र छंदसः श्रोत्रभावः घश्च प्रत्यय इति पदाव्या
ख्यानं तदेह यलोप इति यथाश्रुतं यदा तु वाक्यार्थे पदवचनमिति पक्षस्तदा घशब्देन इय इति रूपं लक्ष्यते। क्वचित्तु यलोपश्चेति पाठस्तत्र येति संघातग्रहणं व्याख्येयं। अवर्णग्रह
णे त्विकारस्य यणादेशः स्यान्न तु यस्येति चेति लोपः। अकारलोपस्य स्थानिवत्वेन इकारांतस्य भत्वाभावात्। एतच्च हरदत्तग्रंथे स्पष्टं। मूलपुस्तके तु यलोप इत्यपपाठ एव

अनुगवा ख इत्यनुवर्त्तते। अनुगुशब्दादलंगामीत्यस्मिन्नर्थे खः स्यात्। गोः पश्चादिति।। पश्चादर्थेऽव्ययीभावः। पर्याप्तमिति क्रियाविशेषणं। अत्र हरदत्तः। अनुगवित्त-
क्रियाविशेषणत्वात् द्वितीयांतादिह प्रत्ययः। न चालंगामीत्यस्य सुप्यजातावितिणिनिप्रत्ययांततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यं। क्रियाविशेषणात्तदप्रवृत्तेः
शोभनं पाचक इत्यादौ तथा दर्शनादित्याह। अत्र केचित् धातूपात्तव्यापारजन्यफलाश्रयत्वं यत्र तन्मुख्यं कर्म यत्तु व्यापारजन्यत्वमात्रं तदौपचारिकं। ततश्च तंडुलानां
पाचक इत्यत्र मुख्यकर्मणि कृद्योगलक्षणा षष्ठी भवति। मृदु पाचकः शोभनं पाचक इत्यत्र तु सा न भवति। फलव्यापारयोः क्रियाकर्मभावव्यवहारे सत्यपि फल-
स्यौपचारिककर्मत्वात्तद्विशेषणत्वाच्च मृद्वादेरिति तस्याशय इत्याहुः अन्ये त्वेवं तर्हि तुल्यन्यायेन क्रियाविशेषणात् द्वितीयाया अप्यप्रवृत्तिः स्यात्तस्मात्तद्दीमितिनि-

अनुग्वलङ्गामी।५।२।१५। अनुगु गोः पश्चात् पर्याप्तं यथा गच्छति स अनुगवीनो गोपालः। अध्वनो यत्खौ।५।२।१६। अध्वानमलंगच्छति अध्वन्यः। अध्व-
नीनः। येचाभावकर्मणोः। आत्माध्वानौ खे इति प्रकृतिभावः। अभ्यमित्राच्छ च।५।२।१७। चाद्यत्खौ। अभ्यमित्रीयः। अभ्यमित्र्यः। अभ्यमित्रीणः। अ-
मित्रानभिमुखं सुष्ठु गच्छतीत्यर्थः। गोष्ठात्खञ्भूतपूर्वे।५।२।१८। गोष्ठो भूतपूर्वः गौष्ठीनो देशः। अश्वस्यैकाहगमः।५।२।१९। एकाहेन गम्यत इत्येकाह-
गमः। आश्वीनोऽध्वा।। ११

र्देशादनित्या कृद्योगषष्ठीति क्रियाविशेषणात्सा न खो क्रियत इति हरदत्ताशयः कथं विद्दर्शनीय इत्याहुः। वस्तुतस्तु पश्चादर्थेऽव्ययी-
भावोपमिति निर्विवादं। पश्चादिति चास्मात्पर्थे निपातितं। तच्च यद्यपि विभक्तित्रयसाधारणं तथापीह योग्यताबलात्सप्तम्यर्थवृत्तिरतस्तस्य कर्मत्वायोगात्प्रथमांतादेवेह
प्रत्यय इति वक्तुमुचितं। कृद्योगलक्षणा षष्ठी शंक्याप्यत एव नेति बोध्यं। अभ्यमित्रात्। अभ्यमित्रशब्दो लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः। क्रियाविशेष-
त्वाद्द्वितीया समर्थविभक्तिः। गोष्ठात्खञ्। गावस्तिष्ठंत्यस्मिन्निति गोष्ठः। घञर्थे कविधानमित्यधिकरणे कः। अंबांबगोभूमीति षत्वं। पूर्वं भूतो भूतपूर्वः। सुप्सुपेति स-
मासः। अश्वस्य कर्तरि षष्ठीयं।। निर्देशादेव समर्थविभक्तिः। एकाहगम इति। कर्तृकरणे कृतेति समासः। नन्विह ग्रहवृदृनिश्चिगमश्चेत्यपं बाधित्वा परिमाणाख्या-
यां सर्वेभ्य इति घञ्प्राप्नोति अस्ति चात्र परिमाणाख्या। एकाहेन गम्यत इति परिच्छेदावगमात्।। अत्राहुः।। अस्मादेव निपातनादपघञ्व्यय इति ।। ९ ।।

अवारपारंगामीति। गमेरिति। आङि णिश्चेति बहुलवचनात्केवलादपि णिनिः। भविष्यति गम्यादय इति भविष्यत्कालता। न्यासकारस्तु आवश्यके णिनिः सोऽपि भविष्यत्येवेत्याह। अ-
वारपारमिति। अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधः। केचित्तु गत्यर्थकर्मणीति सूत्रे द्वितीयाग्रहणमपवादविषये विधानार्थं तेन कृद्योगषष्ठी न भवतीत्यामनन्ते। ति-
ष्वदिति व्याचख्युस्तदसत्। अकेनोरिति प्रतिषेधे षष्ठीप्रसंगस्यैवाभावात्। अवारीण इत्यादि। विगृहीताद्विपरीतादपीष्यत इति भावः। अत्यंतमिति। क्रियाविशेषणं। अनुकाम-
मिति कामइच्छा तस्य सदृशमनुकामं कामानुरूपमित्यर्थः। अव्ययं विभक्तीति यथार्थेऽव्ययीभावः। समांसमां। यलोप इति। समायामित्यत्र यकारलोप इत्यर्थः। पूर्वपदे निपात्य-
त इति। अन्यथा तद्धिते उत्पन्ने पश्चादुत्तरपदे सुपो लुग्भवति सुपो धातुप्रातिपदिकयोरिति। तथा पूर्वपदेऽपि स्यादिति भावः। समांसमीनेति वीप्सायां द्विर्वचनं। सुबंतसमुदाय अ

अवारपाराऽत्यन्तानुकामङ्गामी। ५।२।११। अवारपारङ्गामी। अवारपारीणः। अवारीणः। पारीणः। पारावारीणः। अत्यन्तङ्गामी। अत्यन्तीनः। भृशङ्गन्ते-
त्यर्थः। अनुकामङ्गामी। अनुकामीनः। यथेष्टङ्गन्ता। समांसमां विजायते। ५।२।१२। यलोपोऽवशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते। समांसमीना गौः।
समांसमीना सा या प्रतिवर्षं प्रसूयते। खप्रत्ययोत्पत्तौ यलोपो वा वक्तव्यः। समांसमां विजायते। समायांसमायाम्वा। अद्यश्वीनावष्टब्धे। ५।२।१३। अ-
द्यश्वो वा विजायते अद्यश्वीना वडवा। आसन्नप्रसवेत्यर्थः। केचित्तु विजायत इति नानुवर्त्तयन्ति। अद्यश्वीनं मरणं आसन्नमित्यर्थः। आगवीनः। ५।२।
१४। आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते। गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीनः॥

११ इति। विजायत इत्येतद्व्याचष्टे। प्रसूयत इति। वि-
पूर्वको जनिर्गर्भविमोचने वर्तत इति भावः। गर्भविमोचने कृत्स्नायाः समाया व्याप्त्यभावादत्यंतसंयोगे चेति द्वितीया न भवतीत्याशयेनाह। समायामित्यादि। खप्रत्ययोत्-
त्पत्ताविति वार्त्तिकेन समांसमामिति सौत्रप्रयोगस्तूपपन्न इति भावः। अद्यश्वीना अविभक्तिको निर्देशः। ननु स्त्रीलिंगनिर्देशोऽयं अद्यश्वीनो गो समूहः। अद्यश्वीनं गो-
मंडलमित्यादावपीष्टत्वात्। अद्यश्वो वेति। निपातनात्वार्थे समासोऽयमिति भावः। अवाच्चालंबनेति सूत्रेणाविदूर्ये स्तंभेः षत्वविधानादवष्टब्धशब्द आसन्नपरः।
विजायत इति हि वर्त्तते स च गर्भविमोचनार्थकस्तदाह। आसन्नप्रसवेत्यर्थ इति। कर्मकर इति। यस्तु प्रातः गां गृहीत्वा गच्छति गोपालस्तस्मिन्नित्यर्थः। प्रत्यर्पणमर्यादासि-
ति। गोशब्दलक्षणायां गोः प्रतिदाने वर्तत इति भावः। आगवीन इति। ॥० आङ्मर्यादाभिविध्योरित्यव्ययीभावे गोस्त्रियोरिति ह्रस्वे कृते खप्रत्ययः। ओर्गुणः॥ ॥

तेनविंत्तः। विंत्तः प्रतीतः। विंत्तो भोगप्रत्ययोरिति निपातनाद्दाभ्यां निष्ठातो न इति नत्त्वं न। लुप्तनिर्दिष्ट इति। खुङुञः प्रत्ययस्येति वक्तव्ये पृथग्योगकरणात्तु इह त्वेत दनित्यमिति समाधानान्तरमप्याहुः। नानाञौ विति। नाञोन्नकारो ऽध्यर्थः स्वार्थ स्थान सहेति प्रकृति विशेषणं न प्रत्ययार्थ इत्याशयेनाह। असहार्थ इत्यादि। यदि प्रत्ययार्थः स्यात्तर्हि तन्नो ऽद्वो प्रतिषेधो प्रकृतमर्थं गमयत इति सहार्थो गम्येत न सह अपि तु सहे वेति। तस्मात्प्रकृति विशेषणमेतच्च व्याख्यानाल्लभ्यते यद्येवं सहेत्येव प्रत्ययार्थोस्तु विनञोः प्रतिषेधार्थत्वादिष्टसिद्धेर्विगार्दभरथकइत्यादौ विशब्दस्यापि प्रतिषेधवृत्तिर्दृष्टैवेति। सत्यं। क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत। विगतेन

तेनवित्तश्चुञ्चुप्चणपौ।५।२।२६॥ यकारः प्रत्ययोरादौ लुप्तनिर्दिष्टः तेन च स्यने त्संज्ञा। विद्यया वित्तो विद्याचुञ्चुः। विद्याचणः। विनञ्भ्यां नानाञौ न सहा।५।२।२७॥ असहार्थे पृथग्भावे वर्त्तमानाभ्यां स्वार्थे प्रत्ययौ। विना। नाना। वेः शालच्छङ्कटचौ।५।२।२८॥ क्रियाविशिष्टसाधनवाचकात्स्वार्थे विस्तृते। विशालं विशङ्कटं। सम्प्रोदश्च कटच्।५।२।२९॥ सङ्कटं प्रकटं उत्कटं। चाद्विकटं। अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानं। अलाबूनां रजः। अलाबूकटं। गोष्ठजादयः स्थानादिषु पशुनामभ्यः। गवां स्थानं गोगोष्ठं। सङ्घाते कटच्। अवीनां सङ्घातः अविकटः। विस्तारे पटच्। अविपटः। द्वित्वे गोयुगच्। द्वौ उष्ट्रौ उष्ट्रगोयुगं। षड्त्वे षड्गवच्। अश्वषड्गवं। स्नेहे तैलच्। तिलतैलं। सर्षपतैलं। भवने क्षेत्रे शाकटशाकिनौ। इक्षुशाकटम्। इक्षुशाकिनं। अवात्कुटारच्च।५।२।३०॥ चात्कटच्। अवाचीनः। अवकुटारः। अवकटः। नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः।५।२।३१॥ अवादित्येव। नतं नमनं नासिकायाः। नतं अवटीटं। अवनाटं। अवभ्रटम्। तद्योगान्नासिका अवटीटा। पुरुषो ऽवटीटः॥ सहविकृतेन सहेति। तस्माद्यथोक्तमेव

न्याय्यमेतच्च हरदत्तग्रन्थे स्पष्टं। स्वार्थ इति। अनिर्दिष्टार्थत्वादिति भावः। संप्रोदश्च। क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः। संकटं संहतं संबाध इत्यर्थः। प्रकटं प्रज्ञातं प्रकाशत इत्यर्थः। उत्कटं उद्भूतं विकटं। विकृतं। रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते। अलाबूतिलेत्यादि। एभ्यः पञ्चभ्यः रजस्यभिधेये कटच्प्रत्ययो भवति। रजसो विकारत्वाद्विकारे प्रत्ययानामपवादोयं। अलाबूकटमिति। ओरञ्मयड्वैतयोरिति मयड्वा इह प्राप्तः। तिलकटमिति। असंज्ञायां तिलयवाभ्यामिति मयट् प्राप्तः। उमाशब्दात्घृतादित्वादन्तोदात्तादनुदात्तादेश्चेत्यञ्। उमोर्णयोर्वेति वुञ्च प्राप्तः। भङ्गाशब्दात्तु धान्यानां च भवने क्षेत्रे खञ् यवाभिन्यादद्युदात्तत्वादणमयड्वा प्राप्त इत्येवं यथासंभवं प्रत्ययप्रा

शालीनकौपीने। इमौ खञ्प्रत्ययान्तत्वेन निपात्येते। रूढिशब्दावेतौ कथं व्युत्पाद्याविति नात्रावयवार्थेऽभिनिवेशः कार्यः। शालाप्रवेशमिति। अप्रागल्भ्यादन्यत्र गन्तुमश
क्तः। शालामेव प्रवेष्टुमर्हतीत्यर्थः। कूपपतनमिति। परकार्ये तत्प्रकादनीयतया कूपावतरणमर्हतीत्यर्थः। तदाच्छादनमिति। वासः खण्ड इत्यर्थः। अन्ये त्वाहुः। अकार्यं शब्देयः
करोति सत्क्रियासामान्यवचनस्तेन लज्जाहेतुत्वेन अद्रष्टव्यत्वात् पुरुषलिंगं कौपीनम्। अस्य स्पृश्यत्वात्तदाच्छादनमिति। शरीरायासेनेति। भारवहनादिनेत्यर्थः। यद्यपि व्रात
शब्दो लोके संघातवचनस्तथाप्यत्र त्वभाष्यादिग्रन्थपर्यालोचनया अयमेवार्थ इह उचित इति भावः। साप्तपदीनम्। योग्यतया समर्थविभक्तिस्तृतीयेति दर्शयति। सप्तभिः पदै
रिति। पदमिह संभाषणं पादविक्षेपो वा। तद्धितार्थे द्विगुः। अवाप्यत इत्यर्थे खञ्। हैयंगवीनम्। त्योगोदोहस्येति। गोर्दोहो गोदोहः षष्ठीसमासः। तेन सह त्यस्य शब्दस्य सु

शालीनकौपीने अधृष्टाकार्ययोः। ५।२।२०। शालाप्रवेशमर्हति शालीनः। अधृष्टः। कूपपतनमर्हतिकौपीनं पापं। तत्साधनत्वात्तद्योग्यत्वाद्वा पुरुषलि
ङ्गमपि तत्सम्बन्धात्तदाच्छादनमपि। व्रातेन जीवति। ५।२।२१। व्रातेन शरीरायासेन जीवति नत्तुबुद्धिवैभवेन स व्रातीनः। साप्तपदीनं सख्यं। ५।२।२२। स
प्तभिः पदैरवाप्यते साप्तपदीनं। हैयंगवीनं संज्ञायाम्। ५।२।२३। त्योगोदोहस्य हियंगुरादेशः। विकारार्थे खञ् च निपात्यते। ह्यस्तन इति दोहः क्षीरं
ह्योगोदोहस्य विकारः हैयंगवीनं नवनीतं। तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ। ५।२।२४। पीलूनां पाकः पीलुकुणः। कर्णस्य मू
लं कर्णजाहं। पक्षात्तिः। ५।२।२५। मूलग्रहणमात्र मनुवर्त्तते। पक्षस्य मूलं पक्षतिः॥ ११ पेतिसमासः। ततो विकारे अनुदात्तलक्षणस्यात्रोपवादः खञ्

अनत्यसच्छब्देन कालप्रत्यासत्तिर्विवक्षिता। नवनीतमिति। यद्यपि वृत्तौ घृतमित्युक्तं तथैव चामरेणापि तज्जु हैयंगवीनं यत्त्योगोदोहोद्भवं घृतं इत्युक्तं तथापि घृ
तशब्देन नवनीतमेव विवक्षितमिति हरदत्तग्रन्थानुरोधेनेदमुक्तं। तस्य पाक पाकः परिणामः। मूलमुपक्रमः। तस्येदमित्यण्। आदिषु प्राप्तेष्वयमारम्भः। जाहचोज
रस्य प्रयोजनाभावान्नेत्त्वम्। पीलुकर्कन्धु। शमी। करीर। कुवल। बदर। अश्वत्थ। खदिर। पील्वादिः। कर्ण। अक्षि। नख। मुख। केश। पाद। गुल्फ। भ्रू। शृंग। दंत। ओष्ठ
पृष्ठ। कर्णादिः। मूलग्रहणमात्रमिति। एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः। पक्षतिरिति। प्रतिपत्। पक्षिणां पक्षमूलं च ॥ ॥ ९ ॥

संज्ञाधिकारादिह नियतविषयमासन्नारूढं गृह्यत इत्याशयेनाह । पर्वतस्येति । आसन्नं समीपम् आरूढमुच्चस्थानम् उपत्यकेति । प्रत्ययस्थादिति त्वं न भवति त्यकनश्च निषेध इत्युक्तत्वात् ॥ ॐ ॥ कर्मणि घटोऽठच् । समर्थानात्कर्मन्शब्दात् घटत इत्यर्थे ठच् स्यात् । कर्मठ इति । ठस्येक इतीह न भवति । अठच् ठच् ष्ठप्रत्ययत्वेनाङ्गसंज्ञानिमित्तत्वाभावात् तारकितमिति । एवं पुष्पितं फलितं पल्लवितं रोमाञ्चितमित्याद्युदाहार्यम् । प्रमाणे द्वयसच् । प्रमाणे विद्यमानात्प्रथमान्ताद् अस्येति निर्दिष्टप्रमेयेऽर्थे यः प्रत्ययाः स्युः प्रमाणमिह परिच्छेदकमात्रम् तत्र मात्रच् द्वयसच् दघ्नचौ तूर्ध्वमान एव भवतः । प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम इति भाष्यात् । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम् ऊर्वादि । तेन तिर्यङ्मानादौ दण्डद्वयसं क्षेत्रमित्यादि न प्रयुज्यते । यथोक्तं मुनीनां प्रामाण्यात् । अत एव द्विकाण्डा क्षेत्रभक्तिरित्यत्र द्वयसचो लुगिति प्राचोक्तं नादर्त्तव्यमिति पवो

कर्म्मणि घटोऽठच् । ५ । २ । ३५ । घटत इति घटः । पचाद्यच् । कर्म्मणि घटते कर्म्मठः पुरुषः । तदस्य सञ्जातन्तारकादिभ्य इतच् । ५ । २ । ३६ । तारकाः सञ्जाता अस्य तारकितन्नभः । आकृतिगणोऽयं । प्रमाणे द्वयसज्दघ्नञ्मात्रचः । ५ । २ । ३७ । तदस्येत्यनुवर्त्तते । ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रं । प्रमाणे लः । समः । दिष्टिः । वितस्तिः । द्विगोर्न्नित्यम् ॥ द्वौ शमौ प्रमाणमस्य द्विशमम् । प्रमाणपरिमाणाभ्यां संख्यायाश्च संशये मात्रज्वक्तव्यः । शममात्रम् । प्रस्थमात्रम् । पञ्च मात्राः । वत्त्वन्तात्स्वार्थे द्वयसज्मात्रचौ । तावदेव तावद्द्वयसम् । तावन्मात्रम् ॥ १ ॥ १ ॥

चाम । प्रमाणे ल इति लुकः एषा पूर्वाचार्यसंज्ञा प्रमाणत्वेन ये प्रसिद्धास्ततः परस्यैवायं लुगित्युदाहरति । शमो दिष्टिर्वितस्तिरिति । शमः प्रमाणमस्येत्यादि विग्रहः । एषु मात्रचो लुक् इतरयोरसंभवात् शमादीनामनूर्ध्वमानत्वात् । द्विगोर्नित्यमिति द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तो लुग्विधीयते । ननु विकल्पस्याप्रकृतत्वान्नित्यग्रहणमिह निरर्थकमिति चेदत्राहुः अनुपदं संशये वक्ष्यमाणो मात्रच् शममात्रमित्यादौ यथा न लुप्यते प्रमाणे ल इत्यस्य प्रमाणे द्वयसजिति यः पूर्वविधिस्तद्विषयत्वात् एवं द्विगोरपि न लुप्येत इष्यते च लुक् । द्वौ शमौ स्यातां न वा द्विशम इति । तथा चाधिकसंग्रहार्थं नित्यग्रहणमिति । अन्ये तु द्विगोर्ल इत्युक्तेऽपि पुनर्लग्रहणं नित्यार्थमधिकसंग्रहार्थमिति व्याख्यातुं शक्यत इति वैचित्र्यार्थं नित्यग्रहणमित्याहुः । शममात्रमित्यादि । शमः स्यान्न वेत्यादिविग्रहः ॥ २ ॥

शब्दस्य घृतादित्वादंतोदात्तत्वमंगीकृत्य ततोऽनुदात्तादेश्चेत्यञ्। असंज्ञायां तिलयवाभ्यामिति मयड्प्राप्त इत्याह तत्रेति तिलशब्दस्य घृतादित्वकल्पने बीजं चिंत्यं। तृणधान्यानां च द्व्यषामिति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वात्। तिलाश्च मे इत्यत्र तथैव वेदे पाठाच्च। गोष्ठजादयः इति संघाते कटजित्यादीन्यस्यैव प्रपंचः। इहो भयत्रादिशब्दः प्रकारे पशुनामभ्य इति। पशुनामादिभ्य इति भाष्ये प्रत्तुरः पाठः। गवां स्थानमिति। तस्येदमित्यत्रार्थे सर्वत्र गोरजादिप्रसंग इति प्रतिप्राप्ते गोष्ठच्। संघात इति। अप्रस्तावयवः समूहः संघातः प्रस्तावयवस्तु विस्तारः। कटच्प्रत्ययौ द्वावपि सामूहिकानामपवादौ। द्वित्वे इति। प्रकृत्यर्थस्य द्वित्वे द्योत्ये इत्यर्थः। उष्ट्रगोयुगमिति। रूपं युगमित्यादिवत् अवयवसंघातप्राधान्यादेकवचनं। एवमग्रेऽपि। नतमिति नमुसके भावे क्तः। नमनमिति। नीचैस्त्वमित्यर्थः। अवटीटमिति। नासिकासाधनकेन मनेन वर्त्तमाना टवशब्दात्स्वार्थे प्रत्ययः। कथं तर्हि नासिकायां पुरुषे चावटीटशब्दस्य प्रयोग इत्यत आह। तद्योगादिति। ॥ ॥ नेर्बिडच्बानतेनासिकायाः संज्ञायामिति वर्त्तते नि शब्दान्नासिका

नेर्बिडज्बिरीसचौ। ५।२।३२। निबिडं। निबिरीसम्। इनच्पिटच्चिकचि च। ५।२।३३। नेरित्येव। नासिकाया नतेऽभिधेये इनच् पिटच् प्रत्ययौ प्रकृते श्चिकचिरित्यादेशौ च। कप्रत्यय चिकादेशौ च वक्तव्यौ। चिकिनं। चिपिटं। चिक्कं। क्लिन्नस्य चिल्पिल् लश्चास्य चक्षुषी। क्लिन्ने चक्षुषी अस्य चिल्लः। पिल्लः। चुल् च। चुल्लः। उपाधिभ्यां त्यकन्नासन्नारूढयोः। ५।२।३४। संज्ञायामित्यनुवर्त्तते। पर्वतस्यासन्नं स्थलमुपत्यका। आरूढं स्थलमधित्यका॥

यानतेऽभिधेये बिडज्बिरीसचौ स्तः। निबिडमिति। तद्योगान्निबिडा नासिका निबिरीसा। कथं तर्हि निबिडाः केशाः निबिडं वस्त्रमिति। उपमानाद्भविष्यति। एतच्च काशिकायां स्पष्टं। केचित्तु उक्तप्रयोगानुरोधेन इह सूत्रे नते नासिकाया इति नानुवर्त्तत इति व्याचक्षते प्रकृतेरिति। निशब्दस्येत्यर्थः। आदेशौ चेति। प्रत्यययोस्तत्सन्नियोगेन यथासंख्यमिमावादेशौ च स्त इत्यर्थः। चिकिनमिति। इनच्प्रत्ययसन्नियोगेन चिकादेशः। चिपिटमिति। पिटच्प्रत्ययसन्नियोगेन चिरित्यादेशः। क्लिन्नस्येति। चिल्पिलित्येतावादेशौ भवतः। लश्च प्रत्ययः। अस्य चक्षुषी इत्येतस्मिन्नर्थे चुल् चेति। चाल्लप्रत्ययः। चुल्ल इति। क्लिन्ने अस्य चक्षुषी इति रवींक्त एव विग्रहः। कथं तर्हि स्युः क्लिन्नाक्षे चिल्लचुल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी त्यमर इति चेदत्राहुः। पुरुषे वृत्त्यादितानां तद्वयवे लक्षणा बोध्येति अन्ये त्वाहुः अस्य चक्षुषी इत्यत्र अस्येति न वक्तव्यं। क्लिन्ने चक्षुषी चिल्ले पिल्ले पुरुषे तु मत्वर्थे च। अर्शआदिषु स्वांगाद्धीनादिति सत्रितत्वादिति। उपाधिभ्याम् ॥

तौरिति पंचम्यंतं। अर्थभेदे सति वत्त्वे तावन्मात्रजादीनामुत्पत्तिः सिध्यति। तत्परिमाणमस्य तावद्धान्यं राशीकृतं। तावत्प्रमाणमस्य कुड्यादेः तावन्मात्रं। यावद्धान्यराशीकृतस्य धान्यादेर्दैर्घ्यं तावद्कुड्यादेरपीत्यर्थः एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वाद्वतुवं तावन्मात्रजादयो न स्युः। यस्य हिं तावत्प्रमाणं तस्य तदपि प्रमाणं जानु प्रमाणकं जलादि यस्य प्रमाणं तदपि जानुप्रमाणकमिति वक्तुं शक्यत्वात्। एवं च तावतु शब्द एव प्रयुज्येत न तु तावन्मात्रमित्यादि। अन्यथा तत्प्रमाणमस्य तन्मात्रं तन्मात्रप्रमाणमस्य तन्मात्रमात्रमित्येवं मात्रजादिभ्यो प्रत्ययमाला प्रसंगात्। किमिदंभ्यां वतु स्यादिति। वकारस्य घविधिसामर्थ्याद्वतुपमनुवर्त्य सोप्यत्र विधीयत इति भावः। आदेः परस्येत्येव सिद्धे व इति वचनमादेशप्रतिपत्त्यर्थमितरथा घंप्रत्ययांतरं विज्ञायेत। कियान्। इयान्। इदंकिमोरीश्की। यस्येति चेति लोपः इयान्। ईशादेशस्य यस्येति लोपे प्रत्ययमात्रमवशिष्यते पठंति च। उदित वति परस्मिन् प्रत्यये शास्त्रयोनो गतत्वति विलपं च सा कृते पि प्रपंचोऽस पदि पद मुदीतं केवलः

संख्याया अवयवे तयप् ५।२।४२। पञ्चावयवा अस्य पञ्चतयं द्वारं। द्वित्रिभ्यां तयस्यायज्वा। ५।२।४३ द्वयं। द्वितयं। त्रयम्। त्रितयम्॥ ॥

प्रत्ययोपत तद्वियदितिमिमीते को हदापंडितोपि वैयाकरणानां मोपनिषदानां च प्रक्रियामाश्रित्य प्रवृत्तो ह्यर्थीयश्लोकः। किमः संख्यातदस्येत्यनुवर्तते एवा संख्यायाः परिमाणपरिच्छेदस्तस्मिन् कर्तव्ये यः प्रश्नस्तस्मिन्वर्तमानात्किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे इतिः स्यात्। संख्यापरिमाणो। कति। क्षेयमाभूत् का संख्येयमेषां दशानां। अत्रतानां मंत्राणां जातिमात्रोपजीविनां। सहस्रशः समेतानां परिषत्त्वं न विद्यत इत्येवं संख्येय द्वारेणात्र संख्यायाः कुत्सा बोध्या॥ ॥ संख्याया अवयवे अवयवे वर्तमानाया संख्यातह्वाचिनः प्रथमांतात्षष्ठ्यर्थे तयप् स्यात्। यं प्रत्यवयवः सोऽवयवी प्रत्ययार्थः अस्येत्यधिकारात्। यथा द्वयसजादिषु प्रमाणे मत्कृत्यर्थे प्रमेयं प्रत्ययार्थस्तद्वत्। त्रयमिति। ननु त्रयोऽवयवाः तत्तवोयस्य त्रयं सूत्रमिति प्रयोगे संभवत्यपि ग्रनित्रयमिति प्रयोगो न संगच्छते। अन्यपदार्थस्यावयविनोऽभावादिति चेदत्राहुः। अवयवीत्वत्र समुदाय एव स चातिरिक्तो वाऽनतिरिक्तो वेति विचारांतरं एवं च समुदायस्यातिरिक्तत्वपक्षेपि समुदाये घटत्वेन मुनीनां प्रत्यभिज्ञानान्मुनित्रयं न मस्कारस्य विघ्नविघातकत्वमस्येति॥ ६ ॥

पुरुषहस्तिभ्यामण् च इनण्यनपत्ये इति प्रकृतिभावः। हस्ती प्रमाणमस्य हास्तिनं। अत्र काशिकायामुक्तं द्विगोर्नित्यं लुक् द्विपुरुषमुदकमित्यादि व्याख्यातं च हरदत्तेन यद्यपि प्रमाणे लो द्विगोर्नित्यमित्यस्यनायमनुवादः पुरुषहस्तिनोः शमादिवत्प्रमाणत्वेनाप्रसिद्धत्वादत एव हि पुरुषद्वयसमित्यादौ प्रमाणे ल इति लुङ् न भवति तथाप्यपूर्वोऽत्र लुग्विधीयत इति। एतच्चासंगतं द्विगोर्नित्यं लुगित्यपूर्ववचनस्यानुनिर्यावन्तत्वात् वस्तुतस्तु विधीयत इत्यस्यानुमीयत इत्यर्थः। अयं भावः द्विगोस्तद्धितलुकीत्यनुवर्त्तमाने पुरुषात्प्रमाणेऽन्यतरस्यामिति ङीब्विकल्पेन तद्वल्लुकमनुमापयतीति। यत्तदेतेभ्यः। यावानित्यादि। आ सर्वनाम्न इत्यात्वे उगिदचामिति नुम्। अत्वसन्तस्य चेति दीर्घः। हल्ङ्यादिसंयोगान्तलोपौ। प्रमाण इत्यनुवर्त्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्स्पष्टं। तथा च वार्त्तिकं डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते। मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोरिति। अस्यार्थः। इह शास्त्रे वतुपं विधाय तस्मिन् परे आत्त्वं विहितं पूर्वाचार्यैस्तु डावतुं विदधिरे तद्रीत्या निर्देशो यं डावतावितिः। विशेष्यत इ

पुरुषहस्तिभ्यामण् च। ५।२।३८। पुरुषप्रमाणमस्य पौरुषम्। पुरुषद्वयसम्। हास्तिनं। । हस्तिद्वयसं। यत्तदेतेभ्यः परिमाणे वतुप्। ५।२।३९। यत्परिमाणमस्य यावान्। तावान्। एतावान्। किमिदंभ्यां वो घः। ५।२।४०। आभ्यां वतुप् स्याद्वस्य च घः। कियान्। इयान्। किमः संख्यापरिमाणे डति च। ५।२।४१। चाद्वतुप्। तस्य च वस्य घः स्यात्। का संख्या येषान्ते कति। कियन्तः॥ ति विशेषस्तस्य भावो वैशेष्यं तस्मात्। अर्थभेदादित्यर्थः। अर्थभेदस्तु परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यादिति प्रागेवोक्त इति भावः। नन्वनयोरर्थभेदे सति यावानश्वा यावती रज्जुरित्यादि न सिध्येदत्र त्वायाममानं गम्यते। यत्तु पमानाङ्क्तिप्यतीति ब्रूषे तर्हि प्रमाणग्रहणमेवानुवर्त्यतां यावानश्वेत्यादिप्रयोगास्त्वमुख्याः संतु येतु परिमाणे प्रयोगाः यावान् धान्यराशिरित्यादयस्त एवोपमानाङ्क्तं तत्राह मात्रादीति। यत्तदेतेभ्य इति विशेषविहितो हि वतुप् सामान्यविहितान्मात्रजादीन्बाधेत तेन तन्मात्रमित्यादि न स्यात्। परिमाणग्रहणे सति तु भिन्नोपाधिकत्वात्वतुपः प्रमाणे विहितमात्रजादिभिः सह बाध्यबाधकभावो नेति भावः। नन्वेवमपि बाधः स्यादेव प्रमाणे द्वयसजित्यत्र प्रस्य मात्रमित्यादि सिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्यातत्वेन वतुपो यत्तदेतेभ्यो विहितत्वेन विशेषविहितत्वानपायात् आह च यत्तदेतेभ्यो वतुप् चेत्येव सूत्र्य तामास्तु परिमाणग्रहणमस्तु च प्रमाणे इत्यर्थोऽधिकारस्तेन यावती रज्जुर्यावान् धान्यराशिरित्यादिप्रयोगास्सर्वे मुख्या एव निर्वहेतीत्यं परमनुकूलमत आह। भावः सिद्धश्चेति। डाव

व्यस्तोच्चारणादेकत्वं गणस्येत्यत्र विवक्षितं। तेनेह न भवति। यवानां द्वौ भागौ निमानमेषामुदश्वित्त इत्यादौ यवानां भागानामिति। भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते इ
ह न भवति। एको भागो निमानमस्येति। भूयस इति च प्रत्ययार्थादाधिक्यमात्रं प्रकृत्यर्थस्य विवक्षितं न तु बहुत्वं तेन द्विशब्दादपि भवत्येव॥ ॥ तस्य पूरणे। तस्येति
षष्ठ्यंतानुकरणमेकत्वं त्वविवक्षितं। एकस्य पूरणासंभवात्। पूर्यतेऽनेनेति पूरणः। एपंतात्करणे ल्युट् एकादशानामिति। उद्भूतावयवभेदः समुदायः प्रकृत्यर्थः। अवयवः
प्रत्ययार्थः इह यस्मात्संख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्ययः। यथाऽतिशायने घायेइत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिकं त
त्वात्ते श्रेतरंगत्वात्तथेहापि। तेन एकादशानां घटानां पूरणो जलादिरित्यत्र नातिप्रसंग इति कालेशोपीति भावः। ननु यदि प्रवृत्तिनिमित्तस्य पूरणे प्रत्ययस्तर्हि त्र एकादश
त्वस्य पूरण इति विग्रहो वक्तुमुचित इति चेदत्राहुः वैयाकरणपाश इत्यत्र यथा याप्यो वैयाकरण इति विग्रहः। न तु याप्यं वैयाकरणत्वमिति तथेहापि बोध्यमिति। एवं च

तस्य पूरणे डट्। ५।२।४८। एकादशानां पूरण एकादशः। नान्तादसंख्यादेर्मट्। ५।२।४९। डटो मडागमः स्यात्। पञ्चानां पूरणः पञ्चमः। नान्तात्किं वि
शः। असंख्यादेः किं। एकादशः। षट्कतिकतिपयचतुरां थुक्। ५।२।५१। एषां थुगागमः स्याड्डटि। षण्णां पूरणः षष्ठः। कतिथः। कतिपयशब्दस्या
संख्यात्वेप्यत एव ज्ञापकाड्डट्। कतिपयथः। चतुर्थः। चतुरश्छयतावाद्यक्षरलोपश्च। तुरीयः। तुर्यः। बहुपूगगणसङ्घस्य तिथुक्। ५।२।५२। डटीत्येव
। पूगसङ्घयोरसंख्यात्वेप्यत एव डट्। बहुतिथः इत्यादि। वतोरिथुक्। ५।२।५३। डटीत्येव। यावतिथः॥ ९९ व्युत्क्रमेणाध्याये त्वगम्यमाने त्विह द्विरादेर्जि

त्यध्यायोपदाचरमं गणयते तदासौ षष्ठो भवत्येवान्नांतादसंख्यादेडट इति। ड इति प्रथमांतस्यानुवृत्तस्य नांतादिति पंचम्या षष्ठी कल्प्यत इति भावः। यद्यपीह मट
प्रत्ययत्वेपि न क्षतिस्तथाप्युत्तरत्र मट आगमत्वमेवाभ्युपगंतव्यं। अन्यदा तु तातयथास्यात् प्रत्ययत्वे स्यादाद्युदात्तः स्यात्तथा चैकस्यैरौ व संदर्भव्याख्यानं प्रवितानं अन्ये
प्याहुर्मटः प्रत्ययत्वे अकारसहितो मकारो विधेयः आगमत्वे तु मकारमात्रमिति लाघवमस्तीति। विंश इति। विंशतेः पूरणः। तिविंशतेर्डितीति लोपः। षट्कतिरिह षष्ठी निर्दे
शबलात् षडानामागमित्वं स्यष्ठमिति तदानुकृत्येनानुवृत्तोऽडट् सप्तम्या विपरिणाम्यते तदाह डटीति। डट एव तु इत्युन कृतः। षष्ठे षकारस्य जश्त्वप्रसंगात्। चतुर्थे रेफस्य
विसर्गप्रसंगाच्च। न चैवं नांतादिति सूत्रे पि डटि परे मुगेव विधीयतामिति वाच्यं। पंचमः सप्तम इत्यादौ नलोपाभावापत्तेः। चतुरश्छयतावितिि। विशेषविहिताभ्यामपि छ
यङ्भ्यां डट् प्रत्ययो न बाध्यते युग्विधानसामर्थ्यात्तेन चतुर्थ इति सिद्धं॥

उभादुदात्तो नित्यं। इह चित्त इत्यनेनैवांतोदात्तत्वं सिद्धं। सर्वोदात्तत्वं तु अनुदात्तं पदमेकवर्जमिति वचनाद्बाधितं नच उभये इति संबुध्यंते आमंत्रिताद्युदात्तत्वं बाधितुं वचनमिति शंक्यं पुरस्तादपवादन्यायेन चित्स्वरस्यैव बाध्यतानत्वामंत्रिताद्युदात्तत्वस्येति सुवचत्वात्। तस्मादुदात्तवचनसामर्थ्यादादेरेवायं प्रयुज्यते। तथा उभयश्रा वद्धन इति। तदेतत्सकलमभिप्रेत्याह स चेति। तदस्मिन्। पुनस्तद्ग्रहणमस्येति षष्ठ्यंतसंबद्धतद्ग्रहणनिरासार्थं। प्रत्ययविधौ तदंतविध्यभावादाह दशांतादिति। अंतग्रहणं किं। दशाधि का अस्मिन् शते। नचेह व्यपदेशिवद्भावेन दशांतत्वमस्तीति वाच्यं। व्यपदेशिवद्भावो प्रातिपदिकेनेत्यभ्युपगमात्। शदंत प्रत्ययग्रहणपरिभाषया तदंतविधौ सति यस्मात्प्रत्ययविधिस्तदादेस्तदंतस्येति परिभाषया तदादिनियमः स्यात्। तं वारयितुमंतग्रहणं। तेन एकत्रिंशतं एकचत्वारिंशमित्यादि सिद्धं। नचैवं गोत्रिंशदधिका अस्मिन् गोशते इ

उभादुदात्तो नित्यम्। ५। २। ४४। उभशब्दात्तयपोऽयच् स्यात्। स चाद्युदात्तः। उभयम्। तदस्मिन्नधिकमिति दशान्ताड्डः। ५। २। ४५। एकादश अधिका अस्मिन्नित्येकादशम्। शतसहस्रयोरेवेष्यते। नेह। एकादश अधिका अस्यां विंशतौ। प्रकृतिप्रत्ययार्थयोः समानजातीयत्वमेवेष्यते। नेह। एकादश माषा अधिका अस्मिन् सुवर्णशते। शदन्तविंशतेश्च। ५। २। ४६। डः स्यादुक्तेऽर्थे त्रिंशदधिका अस्मिन् त्रिंशं शतम्। विंशं। संख्याया गुणस्य निमाने मयट्। ५। २। ४७। भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः षष्ठ्यर्थे मयट् स्यात्। यवानां द्वौ भागौ निमानमस्योदश्वित्भागस्य द्विमयमुदश्वित् यवानां। गुणस्येति किं। द्वौ व्रीहियवौ निमानमस्योदश्वितः। निमाने किम्। द्वौ गुणौ क्षीरस्य एकस्तैलस्य द्विगुणं क्षीरं पच्यते तैलेन॥ ९ त्याद्यावतिप्रसंगः शंक्यः सं

ख्यायाः अवयवे तयवित्यतः संख्याग्रहणानुवृत्तेः। अंतग्रहणमिह विंशतिशब्दानंतरं कर्तव्यं। शद्विंशत्यंताच्चेति। तेन एकविंशं शतमित्यादि सिध्यत्यन्यथा ग्रहणवतेति तदंतविधिप्रतिषेधादिह न स्यात्। संख्याया गुणस्य। गुणो भागः निमीयते क्रीयते अनेनेति निमानं मूल्यं मिङ्प्रणिदाने इत्यस्मान्निष्ठलोत्करणे ल्युट्। तदाह भागस्य मूल्ये इति षष्ठ्यर्थे इति। यद्यपि तदस्मिन्नधिकमित्यतस्तदित्यनुवृत्तौ प्रथमांतादित्ययमेवार्थो लभ्यते तथापि मंडूकप्लुत्या तदस्य संजातमित्यतस्तदस्येत्यनुवर्तनात् षष्ठ्यर्थ इत्येतदपि लभ्यत इति भावः। द्विमयमिति। द्विशब्दस्य संबंधिशब्दत्वेन नित्यसापेक्षत्वाद्यवानामिति पदे सत्यपि तद्धितोत्पत्तिरिह। भिन्नहेतिज्ञेयं। नन्वेवमपि प्रत्ययांतस्योदश्वित् द्वे भागे प्रत्ययो विहितो नोदश्वितीति। अत्राहुः। भागेपि विधीयमानः प्रत्ययः अभिधानस्वाभाव्यात् भागवंतमाचष्टे। तेन सामानाधिकरण्यं दुर्लभं यद्यवतोदश्वित् भागे प्रत्ययो विहितो नोदश्वितीति। अत्राहुः। भागेपि

मतोर्छः। मत्वर्थ इति। मतोर्विषय इत्यर्थः। तेन तद्वितिप्रथमासमर्थविभक्तिरस्यास्मिन्निति प्रत्ययार्थश्चेह लभ्यते। विधानसामर्थ्यादिति। मतुप्प्रकरणे एवास्मिन्सूत्रे कर्तव्ये दन्यत्र विधानं तस्याक्षिकं लुकमप्यापयतीति भावः। तत्र कुशलः। सप्तमीसमर्थात्पथिन्शब्दात्कुशल इत्यर्थे वुन् स्यात्। आकर्षादिभ्यः कन्। वुना सिद्धे कन्ग्रहणाद्

मतौ छः सूक्तसाम्नोः। ५।२।५९। मत्वर्थे छः स्यात्। अच्छावाकशब्दो ऽस्मिन्नस्ति अच्छावाकीयं सूक्तम्। वारवन्तीयं साम। अध्यायानुवाकयोर्लुक्। ५।२।६०। मत्वर्थस्य छस्य अत एव ज्ञापकात्तत्र छः। विधानसामर्थ्याच्च विकल्पेन लुक्। गर्दभाण्डः। गर्दभाण्डीयः। विमुक्तादिभ्यो ऽण्। ५।२।६१। मत्वर्थे ऽण् स्यादध्यायानुवाकयोः। विमुक्तशब्दो ऽस्मिन्नस्ति वैमुक्तः। देवासुरः। गोषदादिभ्यो वुन्। ५।२।६२। मत्वर्थे ऽध्यायानुवाकयोः। गोषदकः। इषे त्वकः। तत्र कुशलः पथः। ५।२।६३। वुन् स्यात्। पथिकुशलः पथिकः। आकर्षादिभ्यः कन्। ५।२।६४। आकर्षे कुशल आकर्षकः। आकषादिभ्य इति रेफरहितो मुख्यः पाठः। आकषो निकषः। धनहिरण्यात्कामे। ५।२।६५। कामः इच्छा। धने कामो धनको देवदत्तस्य। हिरण्यकः। स्वाङ्गेभ्यः प्रसिते। ५।२।६६। केशेषु प्रसितः केशकः। तद्रचनायां तत्पर इत्यर्थः। उदराट्ठगाद्यूने। ५।२।६७। अविजिगीषौ ठक् स्यात्। तेनोपवादः। बुभुक्षयात्यन्तपीडित उदरे प्रसित औदरिकः। आद्यूने किम्। उदरकः। उदरपरिमार्जने नादौ प्रसक्त इत्यर्थः। सस्येन परिजातः। ५।२।६८। कन् स्यात्। सस्येनेति तु उक्तः। सस्यशब्दो गुणवाची न तु धान्यवाची शस्येनेति पाठान्तरं। सस्येन गुणेन परिजातः सम्बद्धः सस्यकः साधुः। अंशं हारी। ५।२।६९। हारीत्यावश्यके णिनिः। अत एव तद्योगे षष्ठी न। अंशको दायादः। तन्त्रादचिरापहृते। ५।२।७०। तन्त्रकः पटः। प्रत्यग्र इत्यर्थः। ब्राह्मणको ऽस्त्रिके संज्ञायाम्। ५।२।७१। आयुधजीविनो ब्राह्मणा यस्मिन्देशे स ब्राह्मणकः। अल्पमन्नं यस्यां सा उष्णिका यवागूः। अन्नशब्दस्य उष्णादेशो निपात्यते॥ ॥ ॥

ईतार्थं प्रशानिकः शाकुनिकः त्सरुकः मुख्यः पाठ इति। आकषत्यस्मिन्सुवर्णादिकमित्याकषः। पुंसि संज्ञायां घ इति व्याख्यायेवाकर्षादिभ्य इति सरेफं पठन्ति ते षामाकर्ष इति॥ घञिरूपमिति हरदत्तेनोक्तत्वादिति भावः॥ धने काम इति॥ तत्रेत्यनुवर्तनात्सप्तम्यन्तात्प्रत्यय इति भावः॥ ॥ ॥

त्राचक्षरेति। अच्सहितं व्यंजनमक्षरशब्देनोच्यते। अचसहितस्यादेर्व्यंजनस्येत्यर्थः। व्यंजनसहितस्यादेस्त्व इति व्याख्याने तु द्विर्वचनन्यायेन तकारस्यापि लोपः स्यादिति हरद
त्तः। आदेर्व्यंजनस्येति व्याख्याने प्रमाणं तु द्वितीयतृतीयेति सूत्रे तुर्याणीति निर्देशो बोध्यः॥ ॐ॥ द्वेस्तीयः। ड्योपवाद इति। डट आदेशस्तु न भवति डिति टि द्वेति ङीपः प्रसक्ता द्वि
तीयाश्रितेति निर्देशानुपपत्तेः। अत एव निर्देशाद् द्विशब्दस्याप्यादेशो न भवति। तृतीय इति। रेफस्य ऋकारः संप्रसारणं। हल इति दीर्घस्तु न भवति ढ्रलोप इति सूत्रादण्
त्यनुवृत्तेः। त्रेश्चेति नोक्तं प्रत्ययो मा विज्ञायीति। विंशत्यादिभ्यः। इह प्रत्यासत्त्या पंक्त्यादिसूत्रे निपातिता विंशत्यादयो गृह्यन्ते तेन लोकप्रसिद्धाः विप्रकृष्टत्वादिति भाष्यमते।
वृत्तिकृता तु विंशत्यादयो लौकिका एव संख्याशब्दा गृह्यन्ते तेन पंक्त्यादिसूत्रनिर्दिष्टानां ग्रहणे त्वेकविंशतिप्रभृतिभ्यो न स्यात्। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्र
तिषेधात्। एवं च सति षष्ठ्यादेश्चासंख्यादेरिति पर्युदासो युज्यत एवेत्युक्तं। एकविंशतितम इति। यद्यपि भाष्यमते तदन्तविधिर्दुर्लभस्तथापि षष्ठ्यादेश्चेति सूत्रे संख्यादि

द्वेस्तीयः। ५।२।५४। ड्योपवादः। द्वयोः पूरणो द्वितीयः। त्रेः सम्प्रसारणं च। ५।२।५५। तृतीयः। विंशत्यादिभ्यस्तमडन्यतरस्याम्। ५।२।५६। एभ्यो डट
स्तमडागमो वा स्यात्। विंशतितमः। विंशः। एकविंशतितमः। एकविंशः। नित्यं शतादिमासार्द्धमाससंवत्सराच्च। ५।२।५७। शतस्य पूरणः शततमः
। एकशततमः। मासादेस्तु एव डट्। मासतमः। षष्ठ्यादेश्चासंख्यादेः। ५।२।५८। षष्टितमः। संख्यादेस्तु विंशत्यादिभ्य इति विकल्प एव। एकष
ष्टः एकषष्टितमः॥

पर्युदासो ज्ञापयति इह प्रकरणे तदन्तानामपि ग्रहणमिति एवं च सति एकान्नविंशतेः पूरणः एकान्नविंशतितम इत्यपि सिध्यति लौकि
कानां ग्रहणमिति वृत्तिमते तु नैतत्सिध्येत् विंशतिसंख्यातः प्राग्भावित्वादस्याः संख्यायाः एतच्च कैयटहरदत्तग्रंथयोः स्पष्टं नन्वनारंभो वा प्रातिपदिकविज्ञानाद्यथा
सहस्रादिष्विति तद्वत् कात्यायनेन पंक्त्यादिसूत्रस्य प्रत्याख्यातत्वात्तत्सूत्रे निपातिताः विंशत्यादयो गृह्यन्त इति भाष्यमतमयुक्तमिति चेदत्राहुः। यद्यपि प्रत्याख्यातं तथा
पीहार्थमावश्यकं तत्। अत एव तत्र भाष्यकृता नायुक्ता कर्तव्या यत्रागमः क्रियत इत्युक्तम्। अतः कात्यायनोक्तप्रत्याख्यानं नादर्तव्यमिति। शततम इति। यद्यपीदं षष्ठ्यादेश्चे
त्युत्तरसूत्रेणैव सिध्यति तथापि संख्याद्यर्थं नित्यं शतादौ त्यावश्यकमिति ध्वनयन्नुदाहरति एकशततम इति। मासादेरिति। संख्यावाचित्वाभावेपीति भावः। षष्ठ्या
देश्चेति। विंशत्यादिभ्य इति विकल्पे प्राप्ते नित्यार्थोयमारंभः। संख्यादेस्त्विति एतच्च प्राक् शतादिति ध्वनितं नित्यं शतादीत्युक्तत्वात्॥ ॥ ० ॥

तावतिथंग्रहणमितिलुग्वा। तावतां पूरणं तावतिथं। वतोरिथुक्। यथा तस्यापत्यमित्यत्र तस्येति षष्ठ्यंतानां सामान्यनिर्देशस्तथात्र तावतिथमिति पूरणप्रत्ययांतानां सामान्यनिर्देशः। अनंतरावयिठक्ठञो नानुवर्त्तेते अस्वरितत्वादित्यभिप्रेत्याह। कन्स्यादिति। पूरणप्रत्ययस्येति। ननु कनः लुग्वा ग्रहणमनर्थकम् संगात् पंचमं पंचमकमित्या दिरूपं हि तेन साध्यं तच्च महाविभाषाधिकाराद्विकल्पेन कन उत्पत्त्या सिद्धमेव तस्मात्पूरणप्रत्ययस्येव लुक् सूत्रकारस्याभिमतमिति व्याचष्टे। द्विकमिति। वार्त्तिककारस्तु कन एव लुगिति व्याख्यामभिप्रेत्य तावतिथंग्रहणमितिलुग्वावचनानर्थकं विभाषाग्रहणादित्याह। तन्मते द्वितीयकं द्वितीयमित्येव रूपं न तु द्विकमिति बोध्यं। ता

तावतिथंग्रहणमितिलुग्वा। ५।२।७७। कन्स्यात्पूरणप्रत्ययस्य च लुग्वा। द्वितीयकम् द्विकम्वा ग्रहणं देवदत्तस्य द्वितीयेन रूपेण ग्रहणमित्यर्थः। ताव तिथेन गृह्णातीति कन् वक्तव्यो नित्यञ्च लुक्। षष्ठेन रूपेण गृह्णाति षट्को देवदत्तः। पञ्चकः। स एषां ग्रामणीः। ५।२।७८। देवदत्तो मुख्यो येषां ते देवदत्त काः। त्वत्काः। मत्काः। शृङ्खलमस्य बन्धनं करभे। ५।२।७९। शृङ्खलकः करभः। उत्क उन्मनाः। ५।२।८०। उद्गतमनस्को वृत्तेरन्यत्रास्वार्थे कन्। उत्कः। उत्क ण्ठितः॥ कालप्रयोजनाद्रोगे। ५।२।८१। कालवचनात्प्रयोजनवचनाच्च कन्स्याद्रोगे। द्वितीयेऽहनि भवो द्वितीयको ज्वरः। प्रयोजनं कारणं रोगस्य फलम्वा (विषपुष्पैर्जनितो विषपुष्पकः। उष्णं कार्यमस्य उष्णकः। रोगे किम्। द्वितीयो दिवसोऽस्य। तदस्मिन्नन्नं प्राये संज्ञायाम्। ५।२।८२। प्रथमान्तात्सप्तम्य र्थे कन् स्यात् यत्प्रथमान्तमन्नं चेत्प्रायविषयं नान्। गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी। वटकेभ्य इनिर्वाच्यः। वटकिनी। कुल्माषादञ् ।५।२।८३। कुल्माषाः प्रायेणान्नमस्यां कौल्माषी॥ श्रोत्रियंश्छन्दोऽधीते। ५।२।८४। श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः। श्राद्धमनेन भुक्तमिनिठनौ। ५।२।८५। श्राद्धी। श्राद्धिकः॥

चतिथेनेति। पूरणप्रत्ययांताद् ग्रहणोपाधिकात्स्वार्थे विधीयमानो ग्रहीतरि न प्राप्नोतीति वचनमिति कैयटः। स एषां ग्रामणीः। ग्रामणीर्नीपितेर्ऽसिश्रे ॥ श्रेष्ठग्रामाधिपे त्रिष्वित्यमरः। करभ इति। उष्ट्रबालकः। द्वितीयेऽहनीति। यद्यपि द्वितीयशब्दः कालवाची न भवति तथाप्यर्थप्रकरणादिना वृत्तिविषये काले वर्त्तत इति भावः। न तु मासमासा लवाचिभ्यो माषादिभ्यो न भवति द्वितीयादिभ्यस्तु भवतीत्यत्र किं मानमिति चेदत्राहुः। उत्तरसूत्रस्य संज्ञापकर्षणाच्छब्दस्वभावाद्वा तद्बोध्यमिति। वटकेभ्य इति। कनिप्राप्ते वच नान्न तु संज्ञाग्रहणात्कन्न भविष्यतीति चेत्किं ततः। इनेरप्राप्तत्वात्तदर्थं वचनमंगीकार्यमेव। अत इनिठनावित्येव कथंचिदिनिः सिध्यतीत्याशयेन कार्यासम्म्यां वचनतोऽस्य

उदरात्। आद्यूनशब्दार्थमाह अविजीगीषाविति। द्विवो विजिगीषायामिति तत्रैव निष्ठानत्वविधानात्। सस्येनाकर्त्तरि क्तः। तीमेयं। परितो जातः परिजातः फलितमाह।
संवद्ध इति अत एवेति। अकेनोरिति निषेधादिति भावः। तत्रातात्। तन्यते तंतवोऽस्मिन्निति व्युत्पत्त्या तंत्रं तंतुवायशलाका। अचिरं कालोऽपहृतस्येत्यचिरापहृतः तस्मिन्। कालः
परिमाणिनेति समासः। प्रत्यग्र इति। नूतन इत्यर्थः। ब्राह्मणकोष्णिके। ब्राह्मणशब्दादायुधजीवित्वोपाधिकात् प्रथमांतात् सप्तम्यर्थे कन्प्रत्ययो निपात्यते। अन्नशब्दा
तु अन्नत्वोपाधिकात्। तदाह आयुधेत्यादि। ॥ शीतोष्णाभ्यां शीतमिव शीतं मंदमित्यर्थः। शीते सति कार्यकरणपाटवाभावात्। उष्णमिवोष्णं शीघ्रमित्यर्थः। क्रियाविशे
षणाभ्यां द्वितीयांताभ्यां प्रत्ययः। कृञ्योगलक्षणा षष्ठी तु क्रियाविशेषणान्नेत्युक्तं। मुख्यार्थवृत्तिभ्यां तु प्रत्ययो न भवत्यनभिधानात्। अधिको अध्यारूढशब्दादिति। गत्य

शीतोष्णाभ्यां कारिणि। ५।२।७२। शीतं करोतीति शीतकः अलसः। उष्णं करोतीति उष्णकः शीघ्रकारी। अधिकम्। ५।२।७३। अध्यारूढशब्दात्क
न् उत्तरपदलोपश्च अनुकाभिकाभीकः कमिता। ५।२।७४। अन्वभिभ्यां कन्। अभेः पाक्षिको दीर्घश्च। अनुकामयते अनुकः। अभिकामयते अभि
कः अभीकः। पार्श्वेनान्विच्छति। ५।२।७५। अनृजुरुपायः पार्श्वं तेनान्विच्छति पार्श्वकः। अयःशूलदण्डाजिनाभ्यां ठक्ठञौ। ५।२।७६। तीक्ष्ण उपा
योऽयःशूलं तेनान्विच्छति आयःशूलिकः साहसिकः। दण्डाजिनं दम्भः तेनान्विच्छति दाण्डाजिनिकः॥ ९ र्था कर्मकेत्यादिना रुहेः कर्त्तरि कर्मणि वा

क्तो विहितः। आद्येन प्रत्ययेन कर्मणोऽनभिहितत्वात् अध्यारूढशब्दयोगे द्वितीया। अध्यारूढो द्रोणः खारीमिति। ग्रामं गत इतिवत्। तथा अधिकशब्देनापि योगे द्विती
यायां प्राप्तायां यस्मादधिकं तदस्मिन्नधिकमिति च निर्देशद्वयात् पंचमीसप्तम्यौ भवतः। अधिको द्रोणः खार्याः अधिको द्रोणः खार्यामिति। द्वितीये तु क्तेन कर्मणोऽभि
हितत्वात् प्रथमा। अधिका खारी द्रोणेन कर्मणोऽभिहितत्वादेव पंचमीसप्तम्यौ विहन्य शंकनीये। अनुका। समाहारद्वंद्वे सौत्रं पुंस्त्वं। सूत्रत्वाल्लिंगव्यत्यय इति फलितोऽर्थः
। अन्वभिभ्यां कनिति। क्रियाविशिष्टसाधनवाचिभ्यां स्वार्थे निपात्यते इत्यर्थः। पार्श्वेनान्विच्छति। आकर्षादिभ्यः कन्नित्यतः कन् अनुवर्तते। अनृजुरिति। तिर्यगवस्था
नात् पार्श्वमनृजु तत्साधर्म्यादुपायोऽपि इह शीतोष्णपार्श्वायःशूलदण्डाजिनशब्दाः गौणा एव गृह्यंते मुख्यार्थेभ्यस्तु प्रत्ययो न भवत्यनभिधानात्॥ ९ ॥

देशादिह सूत्रे पंचम्या लुक् उदस्यास्तं भोः अवाच्चालं वनेत्यादौ तु प्रकृतिवदित्यतिदेशस्य वैकल्पिकत्वेनाव्ययत्वाभावात् पंचम्या लुङ् न भवतीति बोध्यं। सासीति। अव्यया नोभमात्रे इति टिलोपः। यद्यपि साक्षाद्द्रष्टा रस्त्रयो भवंति दातायहीता उपद्रष्टा च तथापीह संज्ञायहणात् साक्षिशब्देनोपद्रष्टैवोच्यत इत्याहुः। क्षेत्रियच्। परक्षेत्र शब्दात्स्त म्यंताद्घच् परशब्दस्य लोपश्च निपात्यत इति मनोरमा। अन्ये तु परक्षेत्रे चिकित्स्य इत्यर्थे क्षेत्रियजिति निपात्यते वाक्यार्थे पदवचनं औ निपवदित्यप्याहुः। एवमन्यत्रापि ह्यं। क्षेत्रियो व्याधिरिति। किं च क्षेत्रियं विषं। परत्र शरीरे संक्रमय्य चिकित्स्यते। अपि च क्षेत्रियाणि तृणानि। यानि सस्यानि सस्यार्थ क्षेत्रे जातानि चिकित्स्यानि विनाशयित व्यानि। किं च क्षेत्रियः पारदारिकः परदारा परक्षेत्रं तत्र चिकित्स्यो निग्रहीतव्यः। सर्वेप्येते पक्षा आकरे स्थिताः॥ ॥ इंद्रियमिंद्र। इंद्रशब्दाद्घच्। इंद्रेण दृष्टं ज्ञातमप्य

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा। ५। २। ९३। इन्द्र आत्मा तस्य लिङ्गं करणेन कर्त्तुरनुमानात्। इति करणाः प्रकारा र्थाः। इन्द्रेणादुर्ज्ञेयमिन्द्रियम्। तदस्यास्त्यस्मिन्निति मतुप्। ५। २। ९४। गावोऽस्यास्मिन्वा सन्ति गोमान्। भूमनिन्दाप्रशंसासु नित्ययोगे तिशायने। सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः। १। रसादिभ्यश्च। ५। २। ९५। मतुप्। रसवान्। रूपवान्। अन्यमत्वर्थीयनिवृत्त्यर्थं वचनम्। रसरूप वर्णगन्धस्पर्शशब्दस्नेहगुणात् एकाचः। रसवान्। गुणग्रहणं रसादीनां विशेषणम्। तसौ मत्वर्थे। १। ४। १९। तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्र त्यये परे। वसोः सम्प्रसारणं विदुष्मान्। गुणवचनेभ्यो मतुपो लुगिष्टः। शुक्लो गुणोऽस्यास्ति शुक्लः पटः। कृष्णः॥ ९९ सुरमन्त्रो त्रमित्यादिक्रमेणास्

यमदृष्टं द्वारा जुष्टं प्रीणितं सेवितं वा दत्तं पयाप्यर्थं विषयेभ्यः रूढिशब्दोयं कथं चित् व्युत्पादितः। तदस्यास्त्यस्मिन्निति मतुप्। तदिति प्रथमासमर्थात्प्रत्ययः। अस्तीति पुरुषवचने अविवक्षिते कालस्तु विवक्षितः। धनेगते भाविनि वा धनवानयमिति प्रतीत्यभावात्। इति शब्दो विषयविशेषलाभार्थस्तथा हि। भूमनिंदाप्रशंसा सु नित्ययोगे तिशायने। संसर्गेस्ति विवक्षायां भवंति मतुबादयः। अस्ति विवक्षायां ये मतुबादयो विधीयंते ते भूमादिष्वेव विषयेषु भवंतीति वार्तिकार्थः। भूमा बहुत्वं तच्चापेक्षि यस्य हि या बहुचिंतेताव देव बहुत्व बोधक बहुशब्देनापि प्रतीयते। यथा पंचषाभिरपि गोभिर्देवदत्तस्य बह्वो गाव इति व्यवहारः। राजस्तु सहस्रगोरपि गावोऽल्पा इति व्यवहारः। गोमान्। यवमान्यस्य खार्यादिभिः परिच्छिन्ना यवाः संति स एव मुच्यते। ननु सहस्रेणापि यवैर्यवमानिति। कथ्येत तर्हि यवमती मिर॥ ॥ ॥

यः छंदोधीते सः श्रोत्रियो भवति। अत्र भाष्ये छंदोधीत इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यत इति वाक्यार्थे पदवचन पक्षः छंदसो वा श्रोत्रभावो निपात्यते तदधीत
इत्येतस्मिन्नर्थे घश्च प्रत्यय इति पक्षांतरं च स्थितं। व्याख्यातं च कैयटेन वाक्यार्थस्य संबंधरूपस्य क्रियारूपस्य वा असत्वरूपत्वात्। श्रोत्रियशब्दस्य च सत्वरूपार्थाभिधायि
त्वाद्वाक्यार्थग्रहणे न तदा अयम्छंदोध्यायी अभिधीयत इति एकां शाखामधीत्य श्रोत्रियो भवतीति धर्मशास्त्रवित्यनुवृत्तेरिति। तावतिथं ग्रहणमिति लुग्वेत्यतः आद्यम
नेन। अद्यास्मिन्नस्तीति आद्यं। प्रज्ञाश्रद्धार्चाभ्यो णः। यद्यपि पित्र्यं कर्म श्राद्धशब्देनोच्यते। तथापीह तत्साधनद्रव्यमुच्यते मुख्यश्राद्धस्य भोक्तुमशक्यत्वात्। आद्धी आ
द्धिक इति। अद्यतन एवेष्यते अद्यभुक्तेष्वः आद्धिक इति मा भूत्॥ ॥ पूर्वादिनिः। पूर्वमिति क्रियाविशेषणात् द्वितीयांतात्प्रत्ययः। अनेनेति कर्तृवाचकमनुवर्त्तते
न च क्रियामंतरेण कर्त्ता संभवतीति कांचित् क्रियामध्याहृत्य प्रत्ययो विधेयस्तदाह पूर्वं कृतमनेनेति। सपूर्वाच्च। अनेनेति पूर्वसूत्रमनुवर्त्तते। विद्यमान पूर्वकात्पूर्वशब्दा

पूर्वादिनिः ५।२।८६। पूर्वं कृतमनेन पूर्वी। सपूर्वाच्च ५।२।८७। कृतपूर्वी। इष्टादिभ्यश्च ५।२।८८। इष्टमनेन इष्टी। अधीती। छन्दसि परिपन्थि
परिपरिणौ पर्य्यवस्थातरि ५।२।८९। लोके तु परिपन्थशब्दो न न्याय्यः। अनुपद्यन्वेष्टा ५।२।९०। अनुपदमन्वेष्टा। अनुपदी। साक्षाद्द्रष्टरि संज्ञा
याम् ५।२।९१। साक्षाद्द्रष्टा साक्षी। क्षेत्रियच् परक्षेत्रे चिकित्स्यः ५।२।९२। क्षेत्रियो व्याधिः शरीरान्तरे चिकित्स्यः। अप्रतीकार्य इत्यर्थः ॥० ॥

दनेनेत्यस्मिन्नर्थे इनिः स्यात्। पूर्वी तावच्चेत्येतत्फलितम्। कृतपूर्वीति। कृतपूर्वशब्दयोः सुप्सुपेति समासः इह प्रातिपदिकाधिकारात्पूर्वादिनिरित्यनेनैव पूर्वशब्दांतप्राति
पदिकात्कृतपूर्वशब्दादिनौ सिद्धे सपूर्वाच्चेत्येतत् ग्रहणवता प्रातिपदिकेन तदंतविधिर्नेति परिभाषां ज्ञापयति। कृतपूर्वीत्येतत्सिद्धये पूर्वात्तावेति खो कृतेत् नैव व्यपदे
शिवद्भावेन पूर्वीत्यपि रूपे सिद्धे पूर्वादिनिरित्येतत् व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषां ज्ञापयति। छंदसि पर्यवस्थातृ शब्दाच्छत्रु पर्यायात्स्वार्थे इनिप्रत्य
यः अवस्थातृ शब्दस्य च पंथ परपणवादेशो निपात्येते। अपत्यं परिपंथिनं मात्वापरिपरी विदत्। उभयत्रापि परिशब्दे अवग्रहः। लोके त्विति। अनुपस्थितपरिपंथि
भिः पार्थिवैरित्यादौ अनुपद्यन्वेष्टा। अन्वेष्टरि इनिप्रत्ययो निपात्यते। अनुपदमिति। पदस्य पश्चात्। पश्चादर्थेऽव्ययीभावः। अनुपदी गवामिति। पदापेक्ष्याप
ष्ठी। गोपदात्पश्चादन्वेषणं गवामेवातेन हिरण्यादावन्वेष्येन भवतीति हरदत्तः। साक्षाद्द्रष्टरि। द्रष्टर्यर्थे इनिः स्यात्। साक्षाच्छब्दोऽव्ययं तेन प्रकृतिवद्नुकरणमि

न्यायेनोत्पालव्यवहितेपि भवति। एवमक्षरार्थेस्थितेफलितमाह। मवर्णावर्णोपधादिति। इदमपि मतुवाक्षिप्तस्य प्रातिपदिकस्य विशेषणं। तदाह। रूपंतादिति विद्युत्वा
निति। एतेनवन्हिमद्वानिति नैयायिकप्रयोगो निरस्तः। उक्तरीत्याजस्त्वस्याप्रवृत्तेः। मत्वेतान्मतुपो निषेधाच्चानतु गोधुग्वान्मधुलिण्मानित्यत्र हस घत्वे ढत्वे च
कृते झयइतिवत्वप्रवृत्त्याऽनुनासिकपरत्वाभावात्प्रत्यये भाषायां नित्यमित्यनेन घकारढकारयोरनुनासिकाप्रवृत्तेर्गोधुग्वान्। मधुलिड्वा नित्यनिष्टं प्रसज्येत। मैवं।
घत्वढत्वयोरसिद्धत्वेन झयइतिवत्वाप्रवृत्तेः॥ ॥ प्राणिस्थात्। शिखावान्दीपइति। प्रत्युदाहरणादिशिपंदर्शिता। शिखाशब्दस्य श्रीत्यादिपाठेन लचोप्रसंगात्। चू
डावान्वृक्षइति। प्रत्युदाहार्यमिति हरदत्तः। नचवृक्षस्य प्राणित्वमस्तीति शंक्यं। मुखनासासंचारी वायुः प्राणस्तद्वानेवप्राणीति तदाशयात्। प्राण्यंगादेवेति। एतच्चेति
करणानुवृत्त्यालभ्यते। चूडालोसीति। असीत्यस्य तिङ्ङतिङः इति निघातः। चूडालशब्दात्सोरुत्वे तस्यातोरोरप्लुतादित्युकारे कृते हशिचेत्युत्वं। असनधर्मत्वात्तस्यानिकउकारेण

प्राणिस्थादातोलजन्यतरस्याम्। ५।२।९६। चूडालः। चूडावान्। प्राणिस्थात्किं। शिखावान्दीपः। आतः किं। हस्तवान्। प्राण्यङ्गादेवेह। मेधावान्।
प्रत्ययस्वरेणैवसिद्धे अन्तोदात्तत्वे चूडालोसीत्यादौ स्वरितो वाऽनुदात्ते पदादाविति स्वरितबाधनार्थश्चकारः। सिध्मादिभ्यश्च। ५।२।९७। लज्वा स्या
त्। सिध्मलः। सिध्मवान्। अन्यतरस्यांग्रहणमनु समुच्चयार्थं न तु प्रत्ययविकल्पार्थं। तेनाकारान्तेभ्य इनिठनौ न। वातदन्तबललललाटानामूङ् च। वा

दान्तः। सुपस्यानिकस्यापि सुपात्सु दात्तौ सुप्पितावित्यनुदात्तस्त्वन्योः पूर्वेण सह आद्गुणः सत्येकादेश उदात्तेनोदात्त इत्योकार उदात्तः। एतत्तु एङः पदा ॥ मूलं॥
तादतीति पूर्वरूपमेकादेशः तस्य स्वरितो वानुदात्ते इत्यादिना स्वरिते प्राप्ते तद्बाधनाय चकार इत्यर्थः। सिध्मादिभ्यश्च। सिध्म। गडु। मणि। विजय। निष्पाव पांसु हनुपाद
इयः। सिध्मादयः। समुच्चयार्थमिति। निपातानामनेकार्थत्वादिति भावः। नचइनिठनावप्यन्यतरस्यांग्रहणेन समुच्चीयेतामिति शंक्यम्। तयोरप्रकृतत्वात्। मतुप्प्र
यस्तु समुच्चीयते। तस्य प्रकृतत्वादस्ति चेह लिंगं केशाद्व इत्यत्रान्यतरस्यांग्रहणं। तद्धि इनिठनोः प्राप्त्यर्थं क्रियते। प्रकृतस्यान्यतरस्यांग्रहणस्य विकल्पार्थत्वे तदनु 
वृत्त्यैव सिद्धे किं तेन क्रियमाणेन पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चयार्थत्वं ज्ञापयत्येव तथा च वार्त्तिकं लजन्यतरस्यामिति समुच्चयइत्ति अयंभावः प्राणिस्थादि
सूत्रेण लचि विकल्पिते पक्षे मतुविति चूडालश्चूडावानिति रूपद्वयमप्यसिद्ध्यति तथापि सिध्मादिषु पेऽदेतास्तेषु इनिठनोः प्रसक्त्या दोषः समुच्चयार्थत्वेन॥ ॥

निदायां ककुदावर्तिनी
।इयं पंचशोच्छ्रतीति। अत्राहुः। जातिमात्रसंबंधस्य विवक्षितत्वान् भूमाभावेप्यत्र मतुप्। भूमादिग्रहणं तु प्रायेण भूमादयः प्रतीयंत इत्येवं परमिति। निंदायां ककुदावर्तिनी। इह
कन्या। प्रशंसायां रूपवान्। नित्ययोगे क्षीरिणो वृक्षाः। अतिशायने। उदरिणी कन्या। संसर्गे दंडी। संसर्गः संयोगः। तेन संयुक्तदंड एवोच्यते। न तु गृहावस्थितदंडोपि। इह
दंडपुरुषयोः संयोगे सत्यपि दंडी पुरुष इत्यादिवत् पुरुषी दंडः पुरुषवान् दंड इति न प्रयुज्यते। वृत्तिनियामकस्य विलक्षणसंबंधस्याभावात् संयोगे समानेपि प्रतीति
वलाद्वैलक्षण्यं कल्प्यत इत्याहुः। एवं च यवसंयोगमात्रेण यववमत्यः। आपो न भवंति किंतु यववमञ्जलवद्यपात्रमेवेत्याशयेन कथं यववमतीभिरद्भिरित्याक्षेपः।
माडुपधायाश्च मतोर्वोऽयवादिभ्यः। ८।२।९। मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्ज्जात्परस्य मतोर्मस्य वः स्यात्। किंवान्। ज्ञानवान्। वि
द्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। यवादेस्तु यववमान्। भूमिमान्। झयः। ८।२।१०। झयन्तान्मतोर्मस्य वः स्यात्। अपदान्तत्वान्न जश्त्वं। विद्यु
त्वान्। संज्ञायां। ८।२।११। मतोर्मस्य वः स्यात्। अहीवती। मुनीवती। शरादीनां चेति दीर्घः। आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती
। ८।२।१२। एते षट् संज्ञायां निपात्यन्ते। आसन्नशब्दस्यासन्दीभावः। आसन्दीवान् ग्रामः। अन्यत्रासन्नवान्। अस्थिशब्दस्याष्ठीभावः। अष्ठीवान्।
अस्थिमानन्यत्र। चक्रशब्दस्य चक्रीभावः। चक्रीवान्नाम राजा। चक्रवानन्यत्र। कक्ष्यायाः संप्रसारणं च कक्षीवान्नाम ऋषिः। कक्ष्यावानन्यत्र। उद
लवणशब्दस्य रुमणभावः। रुमण्वान्नाम पर्वतः। लवणवानन्यत्र। चर्मणो नलोपाभावो णत्वं च। चर्मण्वती नाम नदी। चर्मवत्यन्यत्र। ॥३॥
न्वानुदधौ च। ८।२।१३। उदकस्य उदन्भावो मतौ। उदधौ संज्ञायां च। उदन्वान् समुद्रः। ऋषिश्च। राजन्वान् सौराज्ये। ८।२।१४। राजन्वती भूः। राजवान
भूमादिग्रहणं प्रायिकमित्याद्युत्तरं च संगच्छत एव। अन्यमत्वर्थीयेति। कथं तर्हि रूपिणी कन्या रसिको नट इति। अत्राहुः। रसादिभ्यश्चेति पठ्यते। तेन गुणवाचि
भ्य एवान्यमत्वर्थीयस्य निषेधः। रूपिणीत्यत्र तु रूपशब्देन सौंदर्यं गृह्यते तच्च न गुणः। रसिक इत्यत्र तु रसशब्देन भावो गृह्यते न तु रसनाग्राह्यो गुण इति। गुणाव
चनेभ्य इति। गुणोक्तदूतिच प्रसिद्धा ये शुक्लादयस्त एव गृह्यंते न तु रूपादयोपि तेन रूपं चक्षुरित्यादिप्रयोगो न भवति॥ ॥ माडुपधायाः। मं च अं च म्अं समाहारे द्वंद्वः
तेन मतुप्प्रत्ययाक्षिप्तं प्रातिपदिकं विशेष्यते तदाह। मवर्णावर्णान्तादिति। उपधायाश्चेति वाक्यांतरं। उपधाभूतान्मात्परस्य मतोरित्यर्थः। येन नाव्यवधाने

धिकभावस्यतन्मूलत्वात्। अयंभावः। विषुवति दिनानांसमतायांजातायामग्रेन्यूनान्यधिकानिचदिनानिभवेयुरितिनानागतदिनवत्त्वंयद्यपिविषुवतिनास्तितथा
पिनानागतदिनमूलभूतदिनानांसत्वात्तथोच्यतइति। तथानानागमनवत्त्वान्मृत्युर्वायुरव्यवस्थितचित्तश्चविषुणशब्देनोच्यते॥ ॥ प्रज्ञाश्रद्धाप्राज्ञोव्याकर
णमिति। गुणभूतयाक्रियपाकर्मत्वेनसंबंधः। कृद्ग्रहणात्तद्धितमयोगेषष्ठीन। कृतपूर्वीकटमितिवत्। नञ्प्रकर्षेणजानातीतिप्रज्ञः। सएवप्रज्ञावान्। तथाचप्रज्ञएवप्राज्ञ
इत्यणिकृतेसिद्धमिदं। किमत्रप्रज्ञाग्रहणेनेत्याशंकांनिराकुर्वन्नाहप्राज्ञेति। स्त्रियांयाप्। प्रज्ञादिभ्यश्चेत्यणितुङीप्स्यादितिभावः। वृत्तेश्चेति। वार्तिकमिदंकाशिका
कृतात्रवृत्तिशब्दः सूत्रेप्रक्षिप्तः। विच्छिन्नस्यप्रतिविधानंवृत्तिः। तपस्वीसहस्रीति। असंतत्वाददंतत्वाच्चसिद्धेपुनर्वचनमणावाधामाभूदिति। सहस्रात्तुठनोपि

प्रज्ञाश्रद्धार्चाभ्योणः। ५।२।१०१। प्राज्ञोव्याकरणम्। प्रज्ञा। श्राद्धः। आर्चः। वृत्तेश्चवार्तः। तपस्सहस्राभ्यांविनीनी। ५।२।१०२। विनीन्योरिकारोन
कारपरित्राणार्थः। तपस्वी। सहस्री। असन्तत्वाददन्तत्वाच्चसिद्धेपुनर्वचनमणावाधामाभूदिति। सहस्रात्तुठनापिवाधनार्थमण्चा। ५।२।
१०३। योगविभागउत्तरार्थः। तापसः। साहस्रः। ज्योत्स्नादिभ्यउपसंख्यानम्। ज्योत्स्नः। तामिस्रः। सिकताशर्कराभ्यांच। ५।२।१०४। सैकतोघटः। शा
र्करः। देशेलुबिलचौच। ५।२।१०५। चादण्मतुप्च। सिकताःसन्त्यस्मिन्देशेसिकता। सिकतिलः। सैकतः। सिकतावान्। एवंशर्करेत्यादिद
न्तउन्नतउरच्। ५।२।१०६। उन्नतादन्ताःसन्त्यस्यदन्तुरः॥ ११ वाधनार्थः। एतच्चसमाधानंमूलपुस्तकेष्वपिक्वचिद्दृश्यते। उत्तरार्थइति। विनीन्योर्यथासंख्य

प्रवृत्त्यर्थश्चेत्यपिवोध्यं। ज्योत्स्नइति। शुक्लपक्षः। तामिस्रइति। कृष्णपक्षः। नरकविशेषश्च। तमःसमूहस्तमिस्रं। ज्योत्स्नातमिस्रेतिनिपातनान्मत्वर्थीयोरस्तत्रत्स्यवयवभूता
नितमांसिविद्यंतेतदस्मिन्नस्तीतिविग्रहे। रांतादण्। तमिस्रातामसीरात्रिर्ज्योत्स्नीचंद्रिकयान्वितेत्यमरोक्तौतुतमिस्रेत्येतदांतंनत्वसांतमितिनविरोधः। एवंचतमि
स्राणत्रयोऽस्मिन्संतितामिस्रः पक्षइत्यपिव्याख्यातुंशक्यं। सिकताशर्करे। देशविशेषस्यवक्ष्यमाणत्वादाह। घटइति। मतुश्चेति। अन्यतरस्यांग्रहणेनसर्वत्रमतुपः
समुच्चयादितिभावः। सिकताइति। लुपियुक्तवद्भावः। अत्रसूत्रद्वयस्योदाहरणान्यमरःसंजग्राह। स्त्रीशार्करशर्करिलःशार्करःशर्करावति। देशएवादिमावेवमु
न्नेपास्सिकतावतीति। दंतउन्नतः। उन्नतइतिकिं। दंतवान्॥

दोषइति एवं चलज्वास्यादिति। वृत्तौ वाशब्दः समुच्चये बोध्यः। वास्याङ्किकल्पोपमयोरेवार्थेपि समुच्चयइत्यमरः। वातदंतेत्यादि सिध्मादेरंतर्गणसूत्रं। ऊङ् चेति। ङित्वादंतादे
शः। ऊकारमात्रोक्तावंतादेशात्वसिद्धावपि प्रत्ययत्वशंकानिवारणाय ङानुबंधः कृतः। नच षष्ठ्यंतादिहितस्य प्रत्ययत्वं नेति शंक्यं। अहंशुभमोर्युस् गोयय सोर्येदित्यादे
प्रत्ययत्वाभ्युपगमात्। वातूलइति। अंतोदात्तमिदं। प्राचां तु वलादूलः वाताच्चेति पठित्वा वातूलइत्युक्तं तदुपेक्ष्यं। प्रत्ययस्वरेणामध्योदात्तत्वप्रसंगात्। गणसूत्रबलेनांतोदा
त्तमेवेष्यत इत्याहुः। पार्ष्णिधमन्योर्दीर्घश्च। क्षुद्रजंतूपतापाच्चेत्यपि गणे पठ्यते। पार्ष्णीलः धमनीलः। क्षुद्रजंतुः। यूकालः मक्षीकालः उपतापोरोगः विपादिकालः॥ ।
॥ ॐ ॥ वत्सांसाभ्यां। कामवतीति। कामवलशब्दोत्र नैःअर्शआद्यजंतावितिभावः। वत्सलइति। स्नेहवानित्यर्थः। ननु वत्सांसशब्दौ वयोविशेषप्राण्यंगविशेषे च रूढौ न
कामवलयोः। तत्कथं ताभ्यां लजंताभ्यां कामवान्बलवांश्चोच्यत इति चेदत्राहुः। वृत्तिविषये वत्सांसशब्दौ स्नेहबलयोर्वर्तेते इति अस्मिन्प्रकरणे सर्वत्र समर्थानां प्रथमादिति

वत्सांसाभ्यां कामबले। ५।२।९८। आभ्यां लच्स्याद्यथासंख्यं कामवति बलवति चार्थे। वत्सलः। अंसलः। फेनादिलच्च। ५।२।९९। चाद्दिलच्। अ
न्यतरस्यां ग्रहणमनुक्तसमुच्चयार्थमनुवर्त्तते। फेनिलः फेनलः। फेनवान्। लोमादिपामादिपिच्छादिभ्यः शनेलचः। ५।२।१००। लोमादिभ्य
शः। लोमशः। लोमवान्। रोमशः। रोमवान्। पामादिभ्यो नः। पामनः। अंगात्कल्याणे। अंगना। लक्ष्म्या अच्च। लक्ष्मणः। विष्वगित्युत्तरपद
लोपश्चाकृतसन्धेः। विषुणः। पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्। उरसिलः। उरस्वान्॥ ९९ पिमनु विहन्येष्यते। मनुवंतेनोक्तार्थस्याप्रतीतेः।

किंत्वर्थांतरमेवतेन प्रतीयते। वत्सवतीगौः। अंसवानादुर्वलइति। लोमादिरहनेद्यिहिपचादिभ्य इतिवल्लोमपामपिच्छादिभ्य इति तु पठे। अंगकल्याणइति ग
णसूत्रमर्थतः पठति। अंगादिति। शाकीपलालीदद्रूणांह्रस्वत्वंच। चान्नप्रत्ययः। महच्छाकं शाकीतहत्शाकिनो। महत्पलालं पलालीतद्वत्पलालिनं दरिद्रातेर्यालो
पश्चेत्युणादिसूत्रेण इकाराकारयोर्लोपश्चाद्रूप्रत्ययः दद्रूस्त्वग्रोगविशेषः। तद्वान्दद्रुणः। विष्वगिति समर्थानामित्यस्यापवादोयं। अकृतसंधेरकृतयणादेशस्यापि च
तेर्लोपश्च कारान्नप्रत्ययइत्यर्थः। यदितु कृतेयणादेशे उत्तरपदलोपः स्यात्तदा वलिलोपे सति विष्ण इति स्यात्। विषुणइति। विषुनाना अंचतीति मिवं चितान्यस्पर्स
तिविषुणः विषुवदाख्यः कालः। तस्मिन्हिनानागतानि दिनानि संति दिनांतराणां न्यूना ॥ ॥

॥भद्दिस्त्वाह।पर्यङ्कात्महानह्येरात्रैनैकटिकाश्रमानिति।पर्वदेशादर्शावरेतिमनुः॥ॐ॥भ्रातृवलइतिवलेरस्त्यत्राणग्रहणानुवृत्तेर्नेहदीर्घः।पुत्रवलादौतस्यान्त्राहसंज्ञायामित्यनुवृत्तेरिति।वनगिर्योरितिसूत्रादितिभावः।ज्योत्स्नाचंद्रप्रभा।तत्रावयवीभूतंज्योतिरस्तीतिमत्वर्थोयोपपत्तिः।एतेनतमस्समूहेतमिस्राशब्दोव्याख्यातः।निघंटुस्तुतमःपर्यायस्तमिस्रशब्दःपठितस्तत्रसमूहसमूहिनोरभेदोपचारइतिहरदत्तः।स्त्रीत्वमतंत्रमितिव्याख्यानमत्रशरणम्।ऊर्जस्विनोमिन्नित्यत्रनो

भ्रातृवलः।पुत्रवलः।शत्रुवलः।वलइत्यत्रसंज्ञायामित्यनुवृत्तेर्नेहदीर्घः।दन्तशिखात्संज्ञायाम्।५।२।११३।दन्तावलोहस्ती।शिखावलः।केकी।ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः।५।२।११४।मत्वर्थेनिपात्यन्ते।ज्योतिषउपधालोपोनश्चप्रत्ययः।ज्योत्स्ना।तमसउपधायाइत्वंरश्च।तमिस्रा।स्त्रीत्वमतन्त्रम्।तमिस्रं।शृङ्गादिनच्।शृङ्गिणः।ऊर्जसोवलच्।तेनवाधामाभूदितिविनिरपि।ऊर्जस्वी।ऊर्जस्वलः।ऊर्जोऽसुगागमइतिवृत्तिस्तुचिन्त्या।ऊर्जस्वतीतिवदसुन्नन्तेनैवोपपत्तेः।गोशब्दान्मिनिः।गोमी।मलशब्दादिनच्।मलिनः।ईमसच्।मलीमसः।अतइनिठनौ।५।२।११५।दण्डी।दण्डिकः।व्रीह्यादिभ्यश्च।५।२।११६।व्रीही।व्रीहिकः।नचसर्वेभ्योव्रीह्यादिभ्यइनिठनाविष्येते किन्तर्हिशिखामालासंज्ञादिभ्य इनिः।यवखदादिभ्यठकः।अन्येभ्यउभयम्।तुन्दादिभ्यइलच्च।५।२।११७।चादिनिठनौमतुप्च।तुन्दिलः।तुन्दी।तुन्दिकः।तुन्दवान्।उदरपिचण्डयवव्रीहि स्वाङ्गाद्विवृद्धौ।विवृद्ध्युपाधिकात्स्वाङ्गाच्चायिनइलजादयःस्युः।विवृद्धौकर्णौयस्यसकर्णिलः।कर्णी।कर्णिकः।कर्णवान्।एकगोपूर्वाट्ठञ्नित्यम्।५।२।११८।एकशतमस्यास्तिऐकशतिकः।ऐकसहस्रिकः।गौशतिकः।गौसहस्रिकः।शतसहस्रान्ताच्चनिष्कात्।५।२।११९।निष्कात्परौयौशतसहस्रशब्दौतदन्तात्प्रातिपदिकाट्ठञ्स्यान्मत्वर्थे।नैष्कशतिकः नैष्कसहस्रिकः॥ ॥

तत्वाभिव्यक्तयेनलोपोनकृतः।अतइनिठनौ।तपरकरणंकिं।खट्वावान्।एकाक्षरात्कृतोजातेःसप्तम्यांचनतौस्मृतौ।स्ववान्कृतः।कारकवान्।जातेः।व्याघ्रवान्सप्तम्यां।दंडाःअस्यांसंतिदंडवतीशाला।तदस्यास्तीतिसूत्रस्थेतिकरणोविषयनियमार्थःसर्वत्रापिसंबध्यतइति॥क्वचित्कृतोपिभवतिकार्यीकार्यिकः।क्वचिज्जातेरपि।तंडुली।तंडुलिकः।एतच्चकाशिकादौस्पष्टं।तुंदादिभ्यइलच्च।अन्यतरस्यामित्यनुवर्तनादाहमतुप्चेति॥अत्रस्वांगात्विवृद्धावितियद्यपिविवृद्ध्युपाधि

ऊषसुषि। समाहारद्वंद्वे सौत्रं पुंस्त्वं। स्यादूषः क्षारमृत्तिका। ऊषवानूषर इत्यमरः। सुषिश्छिद्रं। खरइति। महत्कंठविवरं खं तद्वानित्यर्थः। गर्दभेरूढोयं मुखरो वाचालइ
तिहरदत्तः। नगरमिति। नगाः वृक्षाः पर्वताश्च। जातिशब्दोयं। तथा च नगरीत्यत्र ङीष् भवति। नगशब्दोयमश्मादिषु पठ्यते इति वृन्कृणादिसूत्रेणास्य सिद्धत्वादस्मा
द्भोयं न वक्तव्य इति हरदत्तः। पांडुर इति। पांडुः शुक्लो वर्णस्तद्वान्। अव्युत्पन्न एवेति। गुणमात्रे गुणिनि च वर्तते। हरिणः पांडुरः पांडुरित्यमरः। गुणे शुक्लादयः पुंसि गु
णिलिंगास्तु तद्वतीति च। कच्छ्वाः। कच्छूस्त्वक्स्रोगविशेषः। द्युद्रुभ्यां द्युम इति। द्योरस्यास्तीति दिव उदित्युत्वाद्द्युः। द्रुः वृक्षः सोस्यास्तीति जनकतयेति द्रुमोपि वृक्ष एव। पलाशीद्रु

ऊषसुषिमुष्कमधोरः। ५। २। १०७। ऊषरः। सुषिरः। मुष्को राडः। मुष्करः। मधु माधुर्यम्। मधुरः। रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्। खरः। मु
खरः। कुञ्जो हस्तिहनुः। कुञ्जरः। नगपांसुपाण्डुभ्यश्च। नगरं। पांसुरः। पांडुरः। पाण्डुरशब्दस्तु अव्युत्पन्न एव। कच्छ्वा ह्रस्वत्वं च। कच्छुरः। द्युद्रुभ्यां
मः। ५। २। १०८। द्युमः। द्रुमः। केशाद्वोऽन्यतरस्याम्। ५। २। १०९। प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थं। केशवः।
। केशी। केशिकः। केशवान्। अन्येभ्योपि दृश्यते। मणिवो नागविशेषः। हिरण्यवो निधिविशेषः। अर्णसो लोपश्च। अर्णवः। गाण्ड्यजगात्संज्ञा
याम्। ५। २। ११०। ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः। गाण्डिवं। गाण्डीवं। अर्ज्जुनस्य धनुः। अजगवं पिनाकः। काण्डाण्डादीरन्नीरचौ। ५। २। १११।
काण्डीरः। आण्डीरः। रजःकृष्यासुतिपरिषदो वलच्। ५। २। ११२। रजस्वला स्त्री। कृषीवलः। वल इति दीर्घः। आसुतीवलः शौण्डिकः। परिषद्वलः। प
र्षदिति पाठान्तरम्। पर्षद्वलः। अन्येभ्योपि दृश्यते॥ ९९ द्रुमागमा इत्यमरः॥ इह सर्वत्र समुच्चीयमानोपि मतुप् रूढशब्देषु नेष्यते। तदर्थस्य मतुपाप्यभिधातुम
शक्यत्वात्। दृश्यत इति। वइत्यनुवर्तते। अर्णव इति अर्त्तेरसुन् उदकं अर्णः जलं तद्वान्। संज्ञायामिति। तदस्यास्तीत्यस्य सूत्रस्येति शब्दस्यैवायं प्रपंचः। यशोत्तिरित्यादि ति
वक्तव्यतया पाणिनेः शास्त्रकरणं न भवति। लक्ष्येषु गुणोभावात्किंतु सूत्रे संहितिकोयं यणीति भावः। प्रयुज्यते चोभयथा। अधिरोहति गांडिवं महेषो गांडीवी कनकशिलानि
भंभुजाभ्यामिति च। आसुतीवल इति। षुञ् अभिषवे क्तिन्। आसुतिरभिषवः। परिषद्वल इति। परितः सीदंतीति परिषत्। सत्सूद्विषेत्यादिना क्विप् सदिस्सतेरिति षत्वं।
पाठांतरमिति। स्वृ इति प्रवसादिरित्यदिप्रत्ययो बाहुलकात् पृषेरपि भवति। तथा च भाष्यं पार्षदकृतिरेषा तत्रभवतां सर्ववेदपार्षदं हीदं शास्त्रमिति च॥ ॥

च्चिन्नंतत्वादिति। हृदयाच्चालुरन्यतरस्यां। अन्यतरस्यां ग्रहणात् इनिठनोः प्राप्तयर्थमनुप्रसर्वेत्रसमुच्चीयते एवाचकारस्य तु दूरात्तीतं संज्ञा। तेन हृदयालुशब्दोंतोदात्त
इत्याहुः। शीतोष्णेति। रहचान्तुरनुवर्तते। परोडाश इति नत्व प्राउरूप्य च समिति मंत्रस्य भाष्ये तथा व्याख्यातत्वादिति भावः। माधव इति। सुवृधातु वृत्तौ स्थितमिदं। हि
मा चेलुरिति। एकारादिस्य प्रत्यय इति माधवः। वलादिति। सिध्मादिषु वलूलवातूलशब्दो मत्वर्थे प्रकारांतरेणान्युत्पादितो तत्प्रवेमरुङ्ज्ञा। पित्वमनुदात्तत्वार्थं।
काशिकायांतु पर्वमरुज्ज्ञा तन्वत्तव्य इति स्थितं। हरदत्तेन तु तन्निति प्रतीकमुपादाय आद्युदात्तत्वार्थो नकार इत्युक्तं। तच्च मनोरमायां महता प्रबंधेन दीक्षितैर्निरस्तं।

वाचो ग्मिनिः।५।२।१२४। वाग्मी। आलजाटचौ बहुभाषिणि।५।२।१२५। कुत्सित इति वक्तव्यं। कुत्सितं बहु भाषते वाचालः। वाचाटः। यस्तु सम्यग्बहु भाषते स वाग्मीत्येव। स्वामिन्नैश्वर्ये।५।२।१२६। ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच्। स्वामी॥ ६ ॥ ॥

कृतं तत एव तत्त्वधार्यं। परत्वमिति। तेन यस्येति चेति लोपो न प्रवर्तत इति भावः। अनुवर्तयंतीति। बहुलं छंदसीत्यतः॥ ॥ वाचो ग्मिनिः। इकारो नकारपरित्राणार्थः।
चकारस्य कुत्वे जश्त्वे च वाग्मी वाग्मिनावित्यादौ द्वयोर्गकारयोः श्रवणं भवति। द्वित्वे तु नपाणिनिरित्युक्ते तु द्वित्वे सति द्वयोर्गकारयोः श्रवणं द्वित्वाभावे त्वेकस्यैव
श्रवणं स्यात्। किं च यरोनुनासिके प्रत्यये भाषायां नित्यमिति वाङ्मयमित्यत्रेव नित्यमनुनासिकः प्राप्नोति। तच्चानिष्टमिति ग्मिनिः कृतः। स्वामिन्नैश्वर्ये। ऐश्वर्यवाच
कादिति। स्वशब्दस्यैश्वर्यवाचित्वमेतद्वृत्तिविषयकमेवेति बोध्यं। ईशिता हि ईश्वरः स तु स्वामीत्युच्यते। यथा वागीश एव वाचस्पतिर्बाचः स्वामीति। ऐश्वर्ये किं। स्ववा

कान्तांगनास्विन इत्यादयः स्युर्विवृद्धोकर्णोवस्य कर्णिलः कर्णीकर्णिकः कर्णवान्। एकगोपूर्वात्। ऐकशतिक इति। एकं च तच्छतं चेति पूर्वकालेत्यादिना कर्मधार यः षष्ठीतत्पुरुषाद्बहुव्रीहेर्द्वंद्वाच्च न भवत्यनभिधानादिति हरदत्तादयः अतएवेह। एकविंशतिरस्यास्तीति। नित्यग्रहणं मतुपो बाधनार्थं। अन्यथा ऽन्य इति ठञो बाधेऽपि तेऽप्यन्यतरस्यांग्रहणानुवृत्त्या मतुप्स्यादेवेत्याहुः कथमेकद्रव्यवानिति। असाधुरेवायं एकेन द्रव्यवानिति वा विग्रहीतव्यम्। कथमेकदंडीति। एक देशिनैकाधिकरणाइति निर्देशो ज्ञापयति इनि रयिक्वचिद्भवतीति॥ ॥ रूपादाहत। आह तप्रशंसाविशिष्टेऽर्थे वर्त्तमानाद्रूपशब्दान्मत्वर्थे यप्स्यात्। आहत

रूपादाहतप्रशंसयोर्यप्॥५।२।१२०॥ आहतं रूपमस्यास्तीति रूप्यः कार्षापणः। प्रशस्तं रूपमस्यास्ति रूप्यो गौः। आहतेति किम्। रूपवान्। अन्येभ्यो ऽपि दृश्यते। हिम्याः पर्वताः। गुण्याः ब्राह्मणाः। अस्मायामेधास्रजो विनिः॥५।२।१२१॥ यशस्वी। यशस्वान्। मायावी। व्रीह्यादिपाठादिनिठनौ। मायी। मायिकः। विन्नन्तात्त्वालुः। स्रग्वी। आमयस्योपसंख्यानं दीर्घश्च। आमयावी। शृङ्गवृन्दाभ्यामारकन्। शृङ्गारकः। वृन्दारकः। फलबर्हाभ्यामि नच्। फलिनः बर्हिणः। हृदयाच्चालुरन्यतरस्याम्। इन्ठनौ मतुप् च। हृदयालुः। हृदयिकः। हृदयवान्। शीतोष्णतृप्रेभ्यस्तदसहने। शीतं न सहते शी तालुः। उष्णालुः। स्नापितंचेति रक्तृप्रं पुरोडाशः तन्न सहते तृप्रालुः। तृप्रं दुःखमिति माधवः। हिमाच्चेलुः। हिमं न सहते हिमेलुः। बलाद्दूलः। ब लं न सहते बलूलः। वातात्समूहे च। वातं न सहते वातस्य समूहो वा वातूलः। तप्पर्वमरुद्भ्याम्। पर्वतः। मरुत्तः। ऊर्णाया युस्॥५।२।१२३॥ सित्त्वात्प दत्वम्। ऊर्णायुः। अत्र छन्दसीति केचिदनुवर्त्तयन्ति। युक्तं चैतत्। अन्यथा हि। अहंशुभमोरित्यत्रैवोर्णाग्रहणं कुर्यात्॥ ९ ॥ ॥

मिति। आहननमाहतं ताडनमित्यर्थः। ततो निष्पन्नेऽपत्कार्षापणादिरूपं तदपि कार्ये कारणोपचारादाहतमित्युच्यते इत्याहतरूपयोः सामानाधिकरण्यमुपपद्यते। हिम्या इति। भूम्नि यप्। पर्वता इति। हिमवान्तत्पर्यन्तवर्तिनश्च। गुण्या इति। बहुग्रहणादिनिरपि। तथा च माघः। गुणगणगुण्य इति न व्यजीगणत्। गुणी अगुण्य इ ति पदच्छेदः। अस्मायामेधा। यशस्वीति। तसौ मत्वर्थ इति भत्वात्पदत्वं न। यशस्वानिति। नित्यग्रहणात्सर्वत्रासंबद्धमप्यन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमिह संबध्य त एव। तसौ मत्वर्थ इति सूत्रे यशस्वी यशस्वानिति भाष्योदाहरणादिति भावः। चोः कुरित्यनेन न सिद्धं स्रग्व्यादिषत्वमाशंक्याह ॥ ० ॥ ० ॥

कंशंभ्यां।पदत्वार्थ इति।अन्यथा कंम्भुः इति स्यादिति भावः वकारयकारपरस्येति।बहुव्रीहिरयं।अनुनासिको वा यावित्ति।एतेन प्रथमप्रत्ययः इत्योक्तादिर्न तु पकारो
तृतीय इति ध्वनितं।माधव इति।तुण्डितो इन इति धातौ तेनोक्तं।वृद्धानाभिस्तुण्डिः इत्न।तुण्डिरस्यास्तीति तुण्डिलः।तुन्दादिभ्य इलच्चेत्यत्र सांगाहि वृद्धाविति गणसूत्रेणाइस
चा।तुण्डिल एव तुण्डिभः।तुण्डिवलिवटेर्भ इति मत्वर्थीयो भ इति।वटिभ इति।वट वेष्टने इन् वटिशब्दः पामादिषु पठ्यते तेन वटिन इत्यपि भवति।अहंयुः शुभंयुरिति।इर्वव
कंशंभ्यां बभयुस्तितुतयसः।५।२।१३८।कंशमिति मान्तौ कमित्युदकसुखयोः शमिति सुखे।आभ्यां सप्तप्रत्ययाः स्युः।युसयसोः सकारः पदत्वार्थः।
कम्वः।कम्भः।कंयुः।कन्तिः।कन्तुः।कन्तः।कंयः।शम्वः।शम्भः।शंयुः।शन्तिः।शन्तुः।शन्तः।शंयः।अनुस्वारस्य वैकल्पिकः परसवर्णः।वकारयकारपरस्यानुनासिको वयोः।तुन्दिवलिवटेर्भः।५।२।१३९।वृद्धानाभिस्तुन्दिः।मूर्द्धन्योपधोयमिति माधवः।तुन्दिभः।वलिभः।वटिभः।पामादित्वाद्वलिनो पि।अहंशुभमोर्युस्।५।२।१४०।अहमिति मान्तमव्ययमहङ्कारे शुभमिति शुभे।अहंयुः।अहङ्कारवान्।शुभंयुः।शुभान्वितः॥
॥ इति मत्वर्थीयाः॥ ॥प्राग्दिशो विभक्तिः।५।३।१।दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः।अयं स्वार्थिकाः प्रत्ययाः॥
समर्थानामिति प्रथमादिति च निवृत्तम्।वेति त्वनुवर्तत एव।किंसर्वनामबहुभ्योऽद्व्यादिभ्यः।५।३।२।किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽ
धिक्रियते।इदम इश्।५।३।३।प्राग्दिशीये परे।एतेतौ रथोः।५।३।४।इदम्शब्दस्य एत इत इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे।इशोऽपवा
दः।एतदोऽन्।५।३।५।योगविभागः कर्तव्यः।एतदः।एतेतौ स्तो रथोः।अन्।एतद इत्येव।अनेकाल्त्वात्सर्वादेशः।नलोपः प्रातिपदिकान्तस्येति न। स
र्वस्य सोऽन्यतरस्यां दि।५।३।६।प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात्।पञ्चम्यास्तसिल्।५।३।७।पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल्
इत्यनुस्वारपरसवर्णौ।इति मत्वर्थीयाः।किंसर्वनामाद्व्यादिपर्युदासात्किमः पृथग्ग्रहणं।द्व्यादिषु किम्शब्दपाठे प्रयोजनं तु अकच्चकौ।अहं ((स्याद्दा॥
चकच्कौ इत्यत्र किमः शेषः।त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यत इत्युक्तत्वात्।एतदोऽन्।भाष्यारूढो यं पाठः॥इति कारस्तु एतदोऽशिति पठित्वा शकारः
सर्वादेशार्थ इत्याह।अनिति।प्राग्दिशीये परे अन्स्यात्।अनेकाल्त्वादिति।नित्करणस्य प्रयोजनं नालि प्रत्यय नित्स्वरस्य चरितार्थत्वादिति भावः॥ ॥

अर्शआदिभ्योऽच्। रहस्रांगाद्धीनादिति गणोय क्यते। खंजः पादोऽस्यास्तीति खंजः। काणं चक्षुरस्यास्तीति काणः। प्रथिमिनीति। इथ्यादिभ्य इमनि विशेरिति टिलोपः। रश्च।

नरति भावः। अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयंतीति मन्नन्तादिनौ कृतेन लद्धितइति टिलोपेनातत्वान्ङीप्। दामिनीति दाधातोर्मनिन्।

अर्शआदिभ्योऽच्। ५।२।१२७। अर्शांस्यस्य विद्यन्ते अर्शसः। आकृतिगणोयम्। द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः। ५।२।१२८। द्वन्द्वात् कटकव

लयिनी। शङ्खनूपुरिणी। उपतापो रोगः। कुष्ठी। किलासी। गर्ह्यं निन्द्यम्। ककुदावर्ती। काकतालुकी। प्राणिस्थात् किं। पुष्पफलवान् घटः। प्रा

ण्यङ्गान्न। पाणिपादवती। अतइत्येव। चित्रकललाटिकावती। सिद्धप्रत्ययेऽपुनर्वचनं ठनादिबाधनार्थम्। वातातीसाराभ्यां कुक्च। ५।२।१२९।

चादिनिः। वातकी। अतीसारकी। रोगे चायमिष्यते। नेह। वातवती गुहा। पिशाचाच्च। पिशाचकी। वयसि पूरणात्। ५।२।१३०। पूरणप्रत्ययान्तान्म

त्वर्थीय इनिः स्याद्वयसि द्योत्ये। मासः संवत्सरो वा पञ्चमोस्यास्तीति पञ्चमी उष्ट्रः। ठन्बाधनार्थमिदं। वयसि किम्। पञ्चमवान् ग्रामः। सुखादिभ्य

श्च। ५।२।१३१। इनिर्मत्वर्थे। सुखी। दुःखी। मालाक्षेपे माली। धर्मशीलवर्णान्ताच्च। ५।२।१३२। धर्म्मीद्यन्तादिनिर्मत्वर्थे। ब्राह्मणधर्म्मी। ब्राह्म

णशीली। ब्राह्मणवर्णी। हस्ताज्जातौ। ५।२।१३३। हस्ती। जातौ किम्। हस्तवान् पुरुषः। वर्णाद्ब्रह्मचारिणि। ५।२।१३४। वर्णी। पुष्करादिभ्यो दे

शे। ५।२।१३५। पुष्करिणी। पद्मिनी। देशे किम्। पुष्करवान् करी। बाहूरुपूर्वपदाद्बलात्। बाहुबली। ऊरुबली। सर्वादेश्च। सर्वधनी। सर्वबीजी।

अर्थाच्चासन्निहिते। अर्थी। सन्निहिते तु अर्थवान्। तदन्ताच्च। धान्यार्थी। हिरण्यार्थी। बलादिभ्यो मतुबन्यतरस्याम्। ५।२।१३६। बलवान्।

बली। उत्साहवान्। उत्साही। संज्ञायां मन्माभ्याम्। ५।२।१३७। मन्नन्तान्मान्ताच्चेनिर्मत्वर्थे। प्रथिमिनी। दामिनी। होमिनी। सोमिनी। संज्ञाया

ङ्किम्। सोमवान्॥ ॥

होमिनी। सोमिनीति। अर्तिस्तुसुहुसृधृक्षीत्यादिना मनिन्नित्त्वाद्धोमसोमशब्दौ मन्प्रत्ययान्तौ॥०॥ ॥ ० ॥

गाव्यं हेतुस्तेनेह न भवति परिषिंचति। अभिषिंचति। उपर्यर्थे परिरभिस्त्वाभिमुख्ये। न चोदनं परिषिंचतीत्यत्र सर्वतोभावे परिरिति तसिल्भावः कथमिति चेन्मैवं। वाबच
नात्तद्वृत्त्यात तसिद्धेः सप्तम्याः त्रल्। इह। अत्र। तसिलौ स्वतंत्रौ प्रत्ययौ न तु सप्तमीपंचम्योरादेशौ। तेन कुत्र बहुत्र कुतः बहुतः इत्यादौ अच्छ घेर्घे ङितीत्यादिकं नेत्याहुः। कि
मोत्। न विभक्तौ तुस्मा इति निषेधो न प्रवर्तते। यमो ऽकारेण मकारपरित्राणार्थेन अनित्यता ज्ञापनात्। वाग्रहणमिति। किमो ऽदिति सूत्रं पठित्वा ह च छंदसीति सूत्रयितुं
युक्तं। कुत्रेति। यद्यपि भागवृत्तिकारैर्भाषायां त्रल्नेष्यते तथापि बहुप्रयोगदर्शनादिह सौत्रं तथा च श्रीहर्षः। नान्यत्र कुत्रापि च साभिलाषा। अमरस्त्वाह साहचर्यी
च कुत्र चिदिति। वा ह च छंदसि इर्वोक्तस्य वाग्रहणापकर्षणस्य स्फुटीकरणार्थमिदमुपन्यस्तं। अत इति। एतस्मात् त्राणादित्यर्थः। तत्र भवंतमिति। ततो भवत्तात्तत्र

अधुना। ५।३।१७। इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थे ऽधुनाप्रत्ययस्स्यात्। इस्मा। यस्येति लोपः। अधुना। दानीं च। ५।३।१८। इदानीम्। तदो दा च।
५।३।१९। तदा। तदानीं। तदो दावचनमनर्थकं विहितत्वात्। अनद्यतने र्हिलन्यतरस्याम्। ५।३।२१। कर्हि। कदा। यर्हि। यदा। तर्हि। तदा। एतस्मिन्का
ले एतर्हि। सद्यः परुत्परार्य्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः। ५।३।२२। एते निपात्यन्ते। स
मानस्य सभावो द्यस् चाहनि॥ समाने ऽहनि सद्यः। पूर्वे पूर्वतरयोः परः उदारीन सम्वत्सरे॥ पूर्वस्मिन्वत्सरे परुत्। पूर्वतरे वत्सरे परारि। इद
म इश् समसण् प्रत्ययश्च सम्वत्सरे। अस्मिन्सम्वत्सरे ऐषमः। परस्मादेद्यव्यहनि॥ परस्मिन्नहनि परेद्यवि। इदमो ऽश् द्यस्च। अस्मिन्नहनि अ
द्य। पूर्वादिभ्योष्टभ्यो ऽहन्येद्युस्। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। उभयोरह्नोरुभयेद्युः। द्युश्चोभयाद्वक्तव्यः। उभयद्युः॥

भवत्॥ ततो भवते। तत्र भवते इत्यादि। एवमिति। ततो दीर्घायुस्तत्र दीर्घायुरित्यादयुक्तमित्यर्थः। सदेति। सर्वस्य सोन्यतरस्यां दीति सभावः। कदेति। किमः कः। एतर्हि
ति। एतेतौ रथोरित्येतादेशः॥ ॐ॥ अधुना प्रत्यय इति। निपातनान्मध्योदात्तोयं। भाष्यमते त्वेदाद्यत्तिकारस्त्वाह। इदमो ऽश्भावः। धुना च प्रत्यय इति। तत्र अ
डिदमित्यादिना विभक्तिस्वरः स चादेः परस्येत्यादेर्भवतीति। हरदत्तः। दा वचनमिति। तदश्चेत्येव सूत्रे पठनीयमिति भावः। एतस्मिन्काले एतर्हीति। एतदिति यो
गविभागाद्रेफादावेतादेशः। सद्यः परुत्॥ निपातनाद्विषयविशेषो लभ्यत इत्याह॥ अहनीति। सप्तम्यंतस्याहन्शब्दस्यार्थ इत्यर्थं स दर्शयति। समाने ऽह्नीति। पर

कुतिहोः। तकारादिकार उच्चारणार्थः। वेत्यनुवृत्तेः फलं दर्शयति। कस्मादिति। यतस्तत इति। तद्धितेति प्रातिपदिकत्वात्सुपो लुकि त्यदाद्यत्वं। पक्षे यस्मात् तस्मात्। इतश्च इति। इदम इश्। पक्षे अस्मात्। अत इति। एतदोऽन्वादेशे। अमुत इति। अदसो सेरिति मुत्वम्। पक्षे अमुष्मात्। बहुत इति। पक्षे बहुभ्यः। द्वाभ्यामिति। सर्वनामत्वात्प्राप्तोपि तसिल् अद्व्यादिभ्य इति पर्युदासान्न। तसेरिति। प्रतियोगे पंचम्यास्तसिः अपादाने चाहीयरुहोरिति विहितस्य तसेस्तसिलादेश इत्यर्थः। विभक्त्यर्थे चेति। अन्यथा पर

कुतिहोः। ७।२।१०४। किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। कुतः। कस्मात्। यतः। ततः। अतः। इतः। अमुतः। बहुतः। द्व्यादेस्तु द्वाभ्यां। तसेश्च। ५।३।८। किंसर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात्। स्वरार्थं विभक्त्यर्थं च वचनं। पर्यभिभ्यां च। ५।३।९। आभ्यां तसिल् स्यात्। सर्वोभयार्थाभ्यामेव। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः। सप्तम्यास्त्रल्। ५।३।१०। कुत्र। यत्र। तत्र। बहुत्र। इदमो हः। ५।३।११। त्रलोऽपवादः। इशादेशः। इह। किमोऽत्। ५।३।१२। वाग्रहणमपकृष्यते। सप्तम्यन्तात्किमोऽद्वा स्यात्। पक्षे त्रल्। क्वाति। ७।२।१०५। किमः क्वादेशः स्यादति। क्व। कुत्र। वा ह च च्छन्दसि। कुहस्थः। कुहजम्भसुः। एतदस्त्रतसोस्त्रतसौ चानुदात्तौ। २।४।३३। अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतस्तौ चानुदात्तौ। एतस्मिन्ग्रामे सुखं वसामः। अथो अत्राधीमहे। अतो न गन्तास्मः। इतराभ्योऽपि दृश्यन्ते। ५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद्भवदादियोग एव। स भवान्। ततो भवान्। तत्र भवान्। तं भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। एवं दीर्घायुः। देवानांप्रियः। आयुष्मान्। सर्वैकान्यकिंयत्तदः काले दा। ५।३।१५। सप्तम्यन्तेभ्य एभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्। सर्वस्मिन्काले सदा। सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काले किं। सर्वत्र देशे। इदमो र्हिल्। ५।३।१६। सप्तम्यन्तात्काल इत्येव। हस्यापवादः। अस्मिन्काले एतर्हि। काले किं। इह देशे। ॥१६॥

त्वात्तसो कृते तस्य प्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वाभावे यतोऽवगकुतो इत्यादि न सिध्येदिति भावः। नन्वत्र तसेर्ग्रहणं मतः इत्यादौ चरितार्थत्वात् किमादिभ्यस्तसिलो बाध्यत्वेन तसिर्न भवेत्तस्य निरवकाशत्वात्तथा च तसेश्चेति विधानं व्यर्थमिति वाच्यं। कुतो बहीयते कुतो वरोहतीत्यादौ तसिलस्सावकाशत्वात्। सर्वोभयार्थाभ्यामे

दिग्देशकालेष्विति। यथासंख्यमत्र नेष्यते। अस्वरितत्वात्। पुरः पुरस्तादिति। कथं तर्हि पश्यामि तावदस्य पश्चादिति भवभूतिः। स्यात् पुरः पुरतोऽग्रत इत्य-
मरः। पुरतः प्रथमे चाग्रे इति विश्वश्च। समानकालीनं पूर्वकालीनमित्यादिवत्साभादिकमेवेति बहवः। केचित्तु दक्षिणोत्तराभ्यामतसुच् विधिनैव पुरसिद्धोऽत-
सुजित्यकारोच्चारणमन्यतोऽपि विधानार्थं तेन पुरत इति सिध्यति। पुरस्त्र्यगमनेऽप्यवर्णोरिति दीर्घस्तु न भवति भत्वात्। न चातसुच्यपि श्वित्वेऽप्यकारोच्चार-
णपक्षे आद्युदात्तत्वार्थमिति वाच्यं। बहूनां प्रयोगानुरोधेनान्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वादित्याहुः। यथासंख्यत्वानाश्रयणात् पुरस्ताद्वसति

प्राच्यां प्राच्याः प्राची वा दिक्। प्राक्। उदक्। एवं देशे काले च। उपर्युपरिष्टात्। ५।३।३१। अस्तातेर्विषये। ऊर्ध्वशब्दस्योपादेशः स्याद्रिल्रिष्टा-
तिलौ च प्रत्ययौ। उपरि। उपरिष्टाद्वा वसति आगतो रमणीयं वा। पश्चात्। ५।३।३२। अपरस्य पश्चभावः आतिश्च प्रत्ययोऽस्तातेर्विषये। उ-
त्तराधरदक्षिणादातिः। ५।३।३४। उत्तरात्। अधरात्। दक्षिणात्। एनबन्यतरस्यामदूरेऽपञ्चम्याः। ५।३।३५। उत्तरादिभ्य एनब्वास्तादव-
ध्यवधिमतोः सामीप्ये पञ्चम्यन्तं विना। उत्तरेण। अधरेण। दक्षिणेन। पक्षे यथास्वम्प्रत्ययाः। इह केचिदुत्तरादीननुवर्त्य दिक्शब्दमात्रा-
देनपमाहुः। पूर्वेण ग्रामम्। अपरेण ग्रामम्। दक्षिणादाच्। ५।३।३६। अस्तातेर्विषये। दक्षिणा वसति। अपञ्चम्या इत्येव। दक्षिणत आगतः।
आहि च दूरे। ५।३।३७। दक्षिणाद्दूरे आहिः स्यात् चादाच्। दक्षिणाहि। दक्षिणा। उत्तराच्च। ५।३।३८। उत्तराहि। उत्तरा ॥ ६ ॥ ॥

पुरस्तादागतः पुरस्ताद्रमणीयं। अधस्ताद्वसति अधस्तादागत इत्यादि सिध्यति ॥ ☼ ॥ प्राच्यां प्राच्या इति। प्राच्यां दिशि वसति प्राग्वसति। प्राच्या दिश आगतः
प्रागागत इत्यादि योज्यं। पंचम्यंतं विनेति। नेह उत्तरादागतः। अधरादागतः। उत्तरेणेत्यादि। वसति रमणीयं वा पक्षे यथास्वमिति। दक्षिणतः। उत्तरतः। अधः।
। अधस्तात्। उत्तरात्। अधरात्। दक्षिणात् ॥

प्रकारवचने थाल्। सामान्यस्य भेदको विशेषः प्रकारः। यथा ब्राह्मणसामान्यस्य माठरकाठकादय इति हरदत्तः। यद्यपि प्रकारे गुणवचनस्येत्यत्र सादृश्यं प्रकारस्तथा
पिनेह सादृश्यं गृह्यते अनभिधानात्। अव्ययं विभक्तीति सूत्रे सादृश्यमपि यथाशब्दार्थ इत्युक्तमिह तु केवलस्य थाल्प्रत्ययस्य सादृश्यं नार्थः किं तु प्रकार एवेत्युक्त
मिति नास्ति पूर्वापरविरोध इति बोध्यम्। तेन प्रकारेण तथेति। प्रथमांतात्तु न भवति स प्रकारस्तथेति। अनभिधानादेवेति भावः। किं सर्वनामबहुभ्यो विशेषविहिते

प्रकारवचने थाल्। ५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात्स्वार्थे। तेन प्रकारेण तथा। यथा। इदमस्थमुः। ५।३।२४। थालोपवादः। एतदोपि वा
च्यः। अनेन एतेन वा प्रकारेण इत्थम्। किमश्च। ५।३।२५। केन प्रकारेण कथम्। प्राग्दिशीयानां विभक्तिसंज्ञानां २ गोविधिः दिक्छब्देभ्यः सप्तमीप
ञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः। ५।३।२७। सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिप्रत्ययः स्यात्। पूर्वाध
रावराणामसि पुरधवश्चैषाम्। ५।३।३९। एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात् तद्योगे चैषां क्रमात् पुर् अध् अव् इत्यादेशाः स्युः। अस्ताति च। ५।३।४०। अस्ता
तौ परे पूर्वादीनां पुरादयः स्युः। पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः। पुरस्तात्। अधः। अधस्तात्। अवः। अवस्तात्। विभाषाऽवरस्य। ५।३।४१॥
अवरस्यास्तातौ परेऽव् स्याद्वा। अवस्तात्। अवरस्तात्। एवं देशे काले च। दिशि रूढेभ्यः किम्। ऐन्द्र्यां वसति। सप्तम्याद्यन्तेभ्यः किम्। पूर्वं ग्रामं गतः।
दिगादिवृत्तिभ्यः किम्। पूर्वस्मिन् गुरौ वसति। अस्ताति चेति ज्ञापकादसिरस्तातिं न बाधते। दक्षिणोत्तराभ्यामतसुच्। ५।३।२८। अस्तातेरपवादः।
दक्षिणतः। उत्तरतः। विभाषा परावराभ्याम्। ५।३।२९। परतः। अवरतः। परस्तात्। अवरस्तात्। अञ्चेर्लुक्। ५।३।३०। अञ्चत्यन्ताद्दिक्शब्दादस्ता
तेर्लुक् स्यात्। लुक् तद्धितलुकि॥ १९ नापि थाला जातीयरनबाध्यते। अर्थभेदात्। प्रकारे हि थाल्। जातीयर् तु तद्वति स्वभावात्। एवं च कृत्वा प्रकारमात्रे

थालं विधाय तद्वति प्रकारवति जातीयरं प्रयुंजते। तथाजातीयो यथाजातीयोऽन्यथाजातीय इति। अनेन एतेन वेति। द्वितीयांतादपि थमुर्भवत्येव। इममेतं वा प्र
कारमापन्न इत्थंभूतः। अत्र च लक्षणेत्थंभूताख्यानेत्यादिसौत्रप्रयोगो लिंगम्। एतेन कथंभूतो व्याख्यातः॥ इत्थमिति। एतेतौ रथोरिति इदम इतादेशः। एतद इति
योगविभागादेतदोपि इत्थादेश इति भावः॥ किमश्च। योगविभागः। था हेतौ च छन्दसीत्युत्तरसूत्रे किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति। प्राग्दिशीयानां हर्णौ

ऐकध्यं राशिं कुर्वित्यादि ज्ञेयं एवमग्रेपि द्वेधमित्यादौ योज्यं एधाच्च ॥ द्वित्र्योः संबंधिनो धाप्रत्ययस्य एधाच् स्यात् । योगविभागो यथासंख्यनिरासार्थः याप्येपाशप् ॥ कुत्सिते इत्यत्रैव नायं विहितस्तिङंतादपि प्रसंगात् । स्वरणाद्भागे । स्वरणार्थत्वात्तीयप्रत्ययः । पूरणशब्देनोक्तः । पूरणग्रहणं चोक्तार्थं न त्वपूरणात्तीयप्रत्ययो भवति । सुखतीयः पार्श्वतीय इत्यत्र त्वनर्थकत्वान्नातिप्रसंगः । भाग इति । एतत्स्वं विवक्षितं तेन समानेप्यर्थे विभक्तौ विवक्षितायां चतुर्थी पंचमीत्येव भवति भागे कादशभ्य इत्यनिसति तु द्वापि चतुर्थी पंचमेति प्रसज्यते ॥ ॐ ॥ एकादाकिनिच्चासहाये असहायवाचिन एकशब्दादाकिनिच् स्यात् । कन्लुकाविति । आकिनिचः कनो वा पक्षे लुक् । तयोरेवानसूत्रे णाविधानात् । असहायग्रहणं संख्याशब्दनिरासार्थं । अन्यथा प्रसिद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहणं स्यात् । इष्टापत्तौ तु द्वित्वे बहुत्वे च न स्यादेकाकि एकाकिन इति । न हि द्वयोर्बहुषु वा एकसंख्यास्ति । असहायत्वं तु परस्परातिरिक्तसहायाभावेन द्वयोर्बहूनामपि भवति । इह आकिनिजेवापंचकत्वयः सवर्णदीर्घे

एकादाकिनिच्चासहाये । ५ । ३ । ५२ । चात्कन्लुकौ । एकः । एकाकी । एककः । भूतपूर्वे चरट् । ५ । ३ । ५३ । आढ्यो भूतपूर्वः । आढ्यचरः । षष्ठ्या रूप्य च । ५ । ३ । ५४ । षष्ठ्यन्ताद्भूतपूर्वेर्थे रूप्यस्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः कृष्णचरः । तसिलादिषु रूप्यस्यापरिगणितत्वान्न पुंवत् । शुभ्राया भूतपूर्वः शुभ्रारूप्यः । अतिशायने तमबिष्ठनौ । ५ । ३ । ५५ । अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेनाढ्य आढ्यतमः । लघुतमो लघिष्ठः ॥

सासिद्धमिष्टं यस्येति चेति लोपश्चाकारेच्चारणसामर्थ्यान्न भवतीत्यादि इह दत्तग्रंथे स्थितं । भूतपूर्वे । अत्र वर्तमानाच्चरट् स्यात्तोषा ॥ त् स्वन्नित्यत्रैव नोक्तं । विशेषविहितेन स्वन्नाचरटो वा धामाभूदिति सिन्निधो हि सामान्यविशेषभावः स्फुटो भवति यद्यपि रूप्यस्यापि वाधोन्याय्य एव तथापीह स्वं स्वीकृत्य रूप्यस्यसामर्थ्याद्बाधो नेति भावः । षष्ठ्या रूप्य च । भूतपूर्वे इत्यनुवर्तते । तच्च यद्यपि पूर्वत्र ङ्याप्प्रातिपदिकस्य विशेषणं तथापीह न तथा षष्ठ्यंतविशेषणत्वात्तदाक्षिप्तस्य संबंधिनो गवादेः प्रधानत्वात्प्रधानेतरसन्निधौ च प्रधाने कार्यसंप्रत्ययस्य न्याय्यत्वात्तदेतदाह भूतपूर्वेर्थे रूप्यः स्यादिति । अतिशायने । अतिपूर्वाच्छीङ्स्ते ल्युट् । अतिशयनमेवातिशायनं । अस्मादेव निपातनाद्दीर्घः । नतु सौत्रः तेन लोकेपि दीर्घः साधुः । अवाधकान्यपि निपातनानि भवंतीति नहू स्वोपि साधुः । यद्यपि केवलः शीङ् स्वप्ने वर्तते तथाप्यतिपूर्वः प्रकर्षे प्रकर्षश्चान्येनाधिक्यं किं त्वाभिभवः ॥ ॥

संख्याया विधार्थे धा विधाशब्दस्यार्थो विधार्थः। यद्यप्योदनपिंडो विविधाशब्देनोच्यते तथापीह न गृह्यते। तेन एकाणो विधेत्यादौ न भवति। इह द्विविधा यामिति वक्तव्ये अ
र्थग्रहणस्य प्रयोजनं विधाशब्दो यत्रार्थे प्रसिद्धतरस्तत्रैव यथा स्यात् तादृशश्चार्थः प्रकार एव स च क्रियाविषयक एव गृह्यते अभिधानस्वभावात्तदाह। क्रियाप्रकारे वर्त्तमाना
दिति। कथं तर्हि नव धा द्रव्यं बहु धा गुणा इत्यादि। अत्रापि स्वरूपस्थता क्रिया प्रतीयते उपदिश्यत इति वा भवतीति वेति हरदत्तः। अधिकरणविचाले च। अधिकरणं द्रव्यं क्रिया
लनं विचालोऽन्यथाकरणं णिजन्तादेरच्। तच्चेह संख्यासंनिधानात्संख्यान्तरापादनं इति व्याचष्टे। द्रव्यस्येत्यादिना। संख्यान्तरापादनं हि एकस्यानेकीकरणं अनेक

संख्याया विधार्थे धा ५।३।४२। क्रियाप्रकारार्थे वर्त्तमानात्संख्याशब्दात्स्वार्थे धा स्यात्। चतुर्द्धा। पञ्चधा। अधिकरणविचाले च ५।३।४३। द्रव्यस्य
संख्यान्तरापादने संख्याया धा स्यात्। एकं राशिं पञ्चधा कुरु। एकाद्धो ध्यमुञन्यतरस्याम् ५।३।४४। ऐकध्यं। एकधा। द्वित्र्योश्च धमुञ् ५।३।४५।
आभ्यां धा इत्यस्य धमुञ् स्यात्। द्वैधम्। द्विधा। त्रैधम्। त्रिधा। धमुञन्तात्स्वार्थे डदर्शनम्। पथि द्वैधानि तृणानि। एधाच्च ५।३।४६। त्रेधा द्वेधा
धा या एधा पाशप् ५।३।४७। कुत्सितो भिषक् भिषक्पाशः। पूरणाद्भागे तीयादन् ५।३।४८। द्वितीयो भागो द्वितीयः। तृतीयः। स्वरे विशेषः। तीयादी
कक् स्वार्थे वाच्यः। द्वैतीयीकः। द्वितीयः। तार्तीयीकः। तृतीयः। न विद्यायाः। द्वितीया। तृतीया। विद्येत्येव। प्रागेकादशभ्योऽच्छन्दसि ५।३।४९।
पूरणप्रत्ययान्ताद्भागेऽन्। चतुर्थः। पञ्चमः। षष्ठाष्टमाभ्यां ञ च ५।३।५०। चादन्। षष्ठो भागः। षाष्ठः। षष्ठः। अष्टमः। आष्टमः। मानपश्वङ्गयोः
कन्लुकौ च ५।३।५१। षष्ठाष्टमशब्दाभ्यां क्रमेण कन् लुकौ स्तो माने पश्वङ्गे च वाच्ये। षष्ठको भागः मानं चेत्। अष्टमो भागः पश्वङ्गं चेत्। तत्स्यैनो
वा लुक्। चकाराद्यथाप्राप्तम्। षष्ठः। षाष्ठः। अष्टमः। आष्टमः। महाविभाषया सिद्धे लुग्वचनं पूर्वत्र ञानौ नित्यौ इति ज्ञापयति ॥ • ॥ ॥

स्य च एकीकरणं तत्राद्ये उदाहरणं। एकं राशिं पंचधेति। पंचराशीन् कुर्वित्यर्थः। द्वितीये तु। अनेकं एकधा कुर्वित्युदाहर्त्तव्यं। इह क्रियाविषयकप्रकारो न गम्यत इति
सूत्रारंभः। एकाद्धो। शब्दप्रधानत्वात्सर्वनामकार्याभावः। इह प्रकरणादेव सिद्धे पुनर्द्धोग्रहणं विधार्थे विहितस्यापि यथा स्यादनन्तरस्येति न्यायेनाधिकरणविचाले
विहितस्यैव हि प्राप्नोतीति हरदत्तपदमंजर्योः स्थितं। एतेन स्वतंत्र एव प्रत्ययोऽस्त्वित्याशंका परास्ता। ऐकध्यमिति। विधार्थे ऐकध्यमुक्तं अधिकरणविचाले तु ॥ ॥

प्राकृत्ते र्थे गाजितिगौरणावितिसूत्रे त्युत्पादनादिति दिक्॥ द्विवचने च विभज्यं चेति द्वंद्वस्तस्य उपपदेन कर्मधारयस्तथा च द्वयर्थवाचके विभजनीये चोपपदे सतीत्यस्यार्थः। द्विवचनोक्ते उपपदे इति व्याख्यायां तु दंतोष्ठस्य दंतास्निग्धतराइत्यादि न सिध्यति। न च द्वयोर्वचने द्विवचनमिति पक्षेपि नेदं सिध्यति समाहारस्यैकत्वात्। गुणाभूतवर्त्तिपदार्थाश्रयणेनु द्वाविति शार्दूलाः द्वावोष्ठाविति तेषां बहुत्वात्सुतरां न सिध्येदिति चेदत्राहुः। वृत्तावभेदैकत्वसंख्याप्रपादादिति वर्त्तिपदानि तत्तद्भेदस्य परित्यागाद भेदैकत्वसंख्यायाश्चोपादानादंतोष्ठलक्षणार्थद्वयं दंतोष्ठशब्देनोच्यत इति नास्ति द्विवचनोपपद इति पक्षे दोष इत्ति। विस्तरस्त्वाकरग्रंथेभ्योऽवगंतव्यः। अन्वर्थ्योपपदं उपोच्चारितं पदमिति नत्त्रकृत्रिमौ। तद्धितविधौ तस्यासंभवात्। तत्त्वविग्रहवाक्य एव प्रयुज्यते। वृत्तौ तु गतार्थत्वान्नावश्यकं। एवं स्थिते उपपदग्रहणं स्पष्टार्थ। इह द्वे उपपदे द्वेव सुवंततिङंतरूपे प्रकृती द्वौ च प्रत्ययौ तथापि यथासंख्यं नेष्यते। द्विवचनोपपदमुदाहरति। श्रनयोरिति। लघीयानिति। टेरिति लोपः। उगित्वान्नुम्। सांतमहत्त इति दीर्घः। हल्ङ्यादिसंयोगांतलोपौ। विभज्योपपदमुदाहरति। प्राच्येभ्य इति। पंचमी विभक्त इति पंचमी कथं तर्हि पटुरभवान् पटुरासीत् एषमस्मुपटुत्तर इति। अत्राहुः। एकस्यापि धर्मिणः तत्कालस्थत्वादिरूपधर्मभेदेन भेदाध्यारोपात् अतियोग्यपेक्षः प्रकर्षस्तदाश्रयश्चेहत्तरप्रत्यय इति व्यपदिशंति। अन्य एवासि संवृत्तः कश्चित्स एवासि धनंजयस्त्वमिति। श्रजादी गुणवचनादेव। इष्टतो वधारणार्थ एवकारस्तेन प्रत्ययनियमोयं। एवकाराभावे तु गुणवचनादजादिप्रत्ययावेवेति प्रकृतिनियमोपि संभाव्येत। तथा च पटुतरः पटुत्तम इत्यादि न सिध्येत॥ ॥ तुश्छंदसि पूर्वेण नियमेन व्यावर्त्तितयोः प्रतिप्रसवोयं नतु सर्वो विधिस्तेन उपाधिसंकरोन तुरिष्ठदेरित्यनेनांत्यलोपे सिद्धे प्यारंभसामर्थ्यात्सर्वस्य तृ शब्दस्य लोपस्तदाहा। करिष्ठ इति। दोहीयसीति। इयमनयोरतिशयेन दोग्धी भस्याढे तद्धिते सिद्धस्य प्रत्ययविधावितिवचनात्। तद्धितकर्त्तव्ये प्रागेव पुंवद्भाव इति त्रेपि निवृत्ते दोग्धृशब्दात्प्रत्ययः ततस्तृचि निवृत्ते निमित्ताभावात् घत्वजश्त्वयोरपि निवृत्तिः। अलौकिकविग्रहवाक्ये प्रागेव तयोरप्रवृत्तिरकृतव्यूह परिभाषयेति तु तत्त्वं। गुणा हि प्रवर्त्तते लुप्तेपि तृ विप्रत्ययलक्षणाभावात्। छंदसमपि तु रितिसूत्रे तु रिष्ठेमयस्वि ति चरणा विष्टुवदित्यतिदेशेन लोपे पिकर्त्तारमाचष्टे कारयतीत्यादावपयोस्माणत्वादिहोपन्यस्तं॥

तुश्छन्दसि।५।३।५९॥तृन्तृजन्तादिष्ठन्नीयसुनौ स्तः। तुरिष्ठेमेयः सु॥ तृ शब्दस्य लोपः स्यादेषु परेषु। अतिशयेन कर्त्ता करिष्ठः। दोहीयसी धेनुः॥

पूर्वान्महाभागतयातिशेषे इति प्रयोगदर्शनात्। नन्वेवं प्रकर्षे तमविष्ठनावित्येव कुतो न सून्नितमिति शंक्यं। अतिशायनमिति निपातनार्थमेव तयोक्तत्वात्। अतिशयो नप्रत्ययार्थः। तथाहि सति लघोरतिशायनं लघुतममिति स्यात्। प्रत्ययार्थस्य प्राधान्यात् नापि प्रकृत्यर्थः। तथाहि सति प्रकर्षातिशयातिशयनादिभ्य एव स्यान्न ता ढ्यादिभ्यः। किंतु प्रकृत्यर्थविशेषणं प्रत्ययसूचितकस्तदेतदाह अतिशयविशिष्टेत्यादि। अयमेषामिति। अवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते तदा तरीयसुनावपवादो वक्ष्यते। तथा च परिशेषाद्बहूनां मध्ये यदा एकदेशस्य निर्द्धारणं सोऽस्य विषय इति भावः। आढ्यतम इति। सुबंतात्तमप्। सुपो धात्विति लुक्। यस्य पिड्याप्रातिपदिकादित्येवानुवर्त्तते तथापि सुबंतप्रतयेव व्याख्येय मन्यथा हि पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ घकालतनेषु कालनाम्न इति सप्तम्या अलुग्विधानं कथमुपपद्यते॥ ॥ तिङश्च॥ अस्मादिष्ठन्न भवत्यजादी गुणवचनादेवेति नियमादित्याशयेनाह। तमप्स्यादिति। तरप्तमपौ घः। अस्मिन्नेवातिशायनिक प्रकर

तिङश्च।५।४।५६। तिङन्तादतिशये द्योत्ये तमप् स्यात्। तरप्तमपौ घः।१।१।२२। एतौ घसंज्ञौ स्तः। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे।५।४।११। किमए दन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामु स्यान्नतु द्रव्यप्रकर्षे। किन्तमां। प्राह्णेतमां। पचतितमां। उच्चैस्तमां। द्रव्यप्रकर्षे तु। उच्चैस्तमस्तरुः। द्विवचनविभज्योपपदे तरबीयसुनौ।५।३।५७। द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुर्लघुतरः। लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः। पटीयांसः। अजादी गुणवचनादेव।५।३।५८। इष्ठन्नीयसुनौ गुणवचनादेव स्तः। नेह। पाचकतरः। पाचकतमः॥ कामः॥

णतादेघः। पितौ घ इति वा वक्तव्ये प्रकरणांतरे गुरुसूत्रकरणमत्यंतस्वार्थिकमपि तरपं ज्ञापयति। तेन अल्पाचतरं लोपश्चाबलवत्तर इत्यादि सिद्धं। अल्पाजेव ह्यल्पाच्तरं नत्व द्वयोरेकस्यातिशयविवक्षायां तरप्। अन्यथा शिवकेशवावित्यादिसिद्धावपि शंखदुंदुभिवीणा इत्यादिन सिद्ध्येदित्याहुः। किमेत्। आमोरुकारो यदित्यज्येत तर्हि पचति तरामित्यादौ हस्वनद्यापइति नुट् प्रसज्येत तराणामिति स्यात्। यस्येति लोपस्य परेणाटा बाधात्। सिद्धांते तु निरनुबंधकग्रहणे न सानुबंधस्येति परिभाषया तद्विधौ नास्य ग्रहणं द्वि वचनविभज्योपपदे। द्वयोरर्थयोर्वचनं द्विवचनं कर्मणि ल्युट् कर्मणि षष्ठ्या समासः। येन पदेन द्वावर्थौ वच्येते तद्द्विवचनं विभक्तव्यं विभज्यं। आस्हलोरिति ण्यति मा ने तद्धवाद्यो यत् निपात्यते ण्यति तु चजोरिति कुत्वेन विभाग्यमिति स्यात्। विभाज्यशब्दस्य स्मृतिषु प्रयुक्तस्य साधुत्वं चिंत्यमिति हरदत्तः। किंश्चित्पाएयंतास्योपतिविभा

भूरादेशश्चेत्यपि ज्ञातव्यं। भूयिष्ठ इति। इष्ठस्यादिलोपे कृते यिशब्दस्यागमः। यद्वा लोपापवादो यकारस्यागमः इकारस्तूच्चारणार्थः। पसद्व्यमपीदं भाष्यारूढं। युवाल्प-
योः। युवेति स्वरूपग्रहणानन्तरयुवापत्यस्य अल्पसाहचर्याद्व्याख्यानाच्च। अजादी इत्यनुवर्तनादजाचोरेव पर्यायेऽनन्तरप्रभमयोरित्याशयेनव्याचष्टे। इष्ठेमसोरि-
ति॥ ९ ॥ विन्मतोर्लुक्। स्रजिष्ठ इति विनो लुकि कृते भत्वात्यदकार्याभावः। अस्मादेव ज्ञापकादगुणवचनत्वेऽपि विन्मतोरजादी भवतः। प्रशंसायां रूपप्। प्रकृत्य-
र्थस्य परिपूर्णता प्रशंसा नतु स्तुतिः। तेनेहापि भवति। चोररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति। प्रमवस्त्वपहरणेन चौर्यं परिपूर्यते। पचतिरूपमिति। क्रियाप्रधानमाख्या-
क्रियायाश्चासत्त्वरूपत्वेऽप्यौत्सर्गिकमेकवचनं भवति। तेन पचतोरूपं पचन्तिरूपमित्यादि। इह प्रथमैव विभक्तिः नरूपाणामप्रामेरिति वृत्तिः। वस्तुतस्तु पश्येत्या-

विन्मतोर्लुक्। ५।३। ६५। विनो मतुपश्च लुक् स्यादिष्ठेयसोः। अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान् त्वचिष्ठः। त्वचीयान्। प्रशंसा-
यां रूपप्। ५।३। ६६। सुबन्तात्तिङन्ताच्च। प्रशस्तः पटुः पटुरूपः। प्रशस्तं पचति। पचतिरूपं। ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। ५।३। ६७। ईषदूनो वि-
द्वान् विद्वत्कल्पः। यशस्कल्पम्। यजुष्कल्पम्। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्। विभाषा सुपो बहुच् पुरस्तात्तु। ५।३। ६८। ईषदसमाप्ति-
विशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव न तु परः। ईषदूनः पटुः बहुपटुः। पटुकल्पः। सुपः किम्। पचतिकल्पं। प्रकारवचने जातीयर्। ५।३। ६९। प्रका-
रवति चायम्। थालस्तु प्रकारमात्रे। पटुप्रकारः पटुजातीयः। प्रागिवात्कः। ५।३। ७०। इवे प्रतिकृताविति यतः प्राक् काऽधिकारः। अव्ययसर्वनाम्नामकच् प्राक्टेः।

दियोगे कर्मणि षष्ठी पापिसुलभाक्षीवत्वं लोकान्। एवं पचतिकल्पमित्यादावपि बोध्यं। विभाषा सुपः। सूत्रे सुप इति पञ्चमी १। ५।३।७१। तिङश्चेत्यनुवर्तते॥
तासपञ्चमी तमर्थं प्रत्ययेनेत्युक्तेः। सुबन्तादिति। एतच्च पञ्चम्यन्तमशक्यमेव। पुरस्तादिति बहुच्पर्यायस्य प्रागिति शब्दस्य गौणत्वात्। प्रागित्यपकृष्यत इति मनोरमायां
स्थितं। न च सूत्रस्य पुरस्ताद्बहुच्समानार्थकप्राक्शब्दयोगेऽपि पञ्चम्यन्तमर्थेति षष्ठी स्यादिति वाच्यं। अन्यारादिति सूत्रे उत्तरपदस्य दिक्छब्दत्वेऽपि पञ्चम्यन्तमर्थप्रत्यये
नेत्येतद्वा प्रयनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा प्राक्प्रत्ययवाश्रमादित्युदाहृतत्वात्। काशिकायां वृत्तौ च पुरस्ताद्बहुचः प्रयुक्तः सुबन्तादिति च प्रयुक्तौ तदसमञ्जस-
मिति मत्वा हरदत्तेन कथं चित्समर्थितं। ल्यब्लोपे एषा पञ्चमी। एवंभूतप्रकृतित्वेनाश्रित्येत्यर्थ इति॥ ६॥

प्रशस्यस्य श्रः। अजादीत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह। अजाद्योरिति। अजाद्योः किं। प्रशस्यतरः। प्रशस्यतमः। श्रेष्ठ इति। प्रकृत्यैकाजिति प्रकृतिभावादिष्टेरिति लोपो यस्येति लो
पश्च न भवति। ज्यादादीयसः। ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात्। वृद्धस्य च। स्वरूपस्येह ग्रहणं न तु वृद्धिर्यस्याचामादिरिति पारिभाषिकस्य व्याख्यानात्। अस्य प्रियस्थिरे
त्यादिना वर्षादेशोऽपि पक्षे भवति। न चैत्तस्येमनिचि सावकाशता शंक्या। वृद्धशब्दादिमनिचोऽभावात्। यदि तु वृद्धस्य वर्षिश्चेति सूत्रमिहैव क्रियेत तदा हि वृद्धग्रहणं
न कर्त्तव्यमिति लाघवं भवती

प्रशस्यस्य श्रः। ५।३।६०। अस्य श्रादेशः स्यादजाद्योः। प्रकृत्यैकाच्। ६।४।१६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात्। श्रेष्ठः। श्रेयान्। ज्य च। ५।३।६१। प्रशस्य
स्य ज्यादेशः स्यादिष्ठेयसोः। ज्येष्ठः। ज्यादादीयसः। ६।४।१६०। आदेः परस्य। ज्यायान्। वृद्धस्य च। ५।३।६२। ज्यादेशः स्यादजाद्योः। ज्येष्ठः। ज्याया
न्। अन्तिकबाढयोर्नेदसाधौ। ५।३।६३। अजाद्योः। नेदिष्ठः। नेदीयान्। साधिष्ठः। साधीयान्। स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य
च गुणः। ६।४।१५६। एषां यणादिपरं लुप्यते पूर्वस्य च गुणः इष्ठादिषु। स्थविष्ठः। दविष्ठः। यविष्ठः। ह्रसिष्ठः। क्षेपिष्ठः। क्षोदिष्ठः। एवमीयसुन्। ह्रस्व
क्षिप्रक्षुद्राणां पृथ्वादित्वात्। ह्रसिमा। क्षेपिमा। क्षोदिमा। प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्
द्राघिवृन्दाः। ६।४।१५७। प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु। प्रेष्ठः। स्थेष्ठः। स्फेष्ठः। वरिष्ठः। बंहिष्ठः। गरिष्ठः। वर्षिष्ठः। त्रपिष्ठः। द्राघिष्ठः।
वृन्दिष्ठः। एवमीयसुन्। प्रेयान्। प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वादिमनिच्। प्रेमेत्यादि। बहोर्लोपो भू च बहोः। ६।४।१५८। बहोः परयोरि
मेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा। भूयान्। इष्ठस्य यिट् च। ६।४।१५९। बहोः परस्य इष्ठस्य लोपः स्यात् यिडागमश्च। भूयिष्ठः। युवाल्पयोः कन
न्यतरस्याम्। ५।३।६४। एतयोः कनादेशो वा स्यादिष्ठेयसोः। कनिष्ठः। कनीयान्। पक्षे यविष्ठः। अल्पिष्ठ इत्यादि ॥ ९९

त्याहुः। स्थूलदूर। परग्रहणं यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्लोपो मा भूदिति। पूर्वग्रहणं तु स्पष्टार्थं। परस्मिन्तु सामर्थ्यात्पूर्वस्यैव गुणलाभात्। स्थविष्ठ इति। न चा
त्र ओर्गुण इत्येव सिद्धे गुणग्रहणं व्यर्थमिति वाच्यं परयणादिलोपस्याभीयत्वेनासिद्धत्वात्। क्षिप्रक्षुद्रयोरोर्गुणस्य प्राप्त्यभावात्। क्षेपिष्ठः क्षोदिष्ठ इत्यसिद्धिप्रसं
गाच्च एवमिति। प्रेयान्। स्थेयान्। स्फेयान्। वरीयानित्यादि। इमेयसोर्लोप इति। स चादेः परस्येत्यादेरेव भवति। इष्ठस्य यिट्। पूर्वसूत्रं संपूर्णमनुवर्तते तदाह। बहोरि

त्यपकामयकेति।नन्वत्रसुपः प्रागकचि कृते प्रत्यये परतस्त्वामा देशयोः सतोरपियोचीति यत्वं न स्याद्विभक्तिपरत्वाभावादिति चेन्नैवं। अकृतव्यूहपरिभाषया अनित्यत्वामाश्रित्याकचः पूर्वमेव यत्वविधानात्। एवं युवकामावकामित्यत्राप्यकचः पूर्वमेव युवावादेशाविति बोध्यं। शीलेकइति। शीलं स्वभावो नियमस्त्वनूक्षीकेणइति। ह्रस्वस्तु भाष्यकारप्रयोगान्नकपीत्यत्र नेतियोगविभागाद्वा न भवतीत्याहुः। अकचो द्वितीयअकारउच्चारणार्थ इति ध्वनयन्नुदाहरति। पचतकीत्यादि। अनुकंपायां। रूपादयाऽनुकंपा स्यादित्यमरः॥ ॥ नीतौ च तद्युक्तात् अनुकंपायुक्तादिति यद्यपि पुत्रादिरेव साक्षादनुकंपायुक्तो न तु धानादिस्तथापि तद्द्वारा धानादीनामप्यस्त्यनु

नीतौ च तद्युक्तात्।५।३।७७। सामदानादिरुपायो नीतिस्तस्यां गम्यमानायामनुकम्पायुक्तात्प्रत्ययः स्यात्। हन्त ते धानकाः। गुडकाः। एहकि। अहकि। पूर्वेणात्र कंप्यमानात्प्रत्ययः। अनेन तु परम्परासम्बन्धेपीति विशेषः। बह्वचो मनुष्यनाम्नष्ठज्वा।५।३।७८। पूर्वसूत्रद्वयविषये। घनिलचौ च।५।३।७९। ठाजादावूर्ध्वं द्वितीयादचः।५।३।८३। अस्मिन्प्रकरणे यष्ठोऽजादि प्रत्ययस्तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते।
अनुकम्पितो देवदत्तो देविकः। देवियः। देविलः। देवदत्तकः। अनुकम्पितो वायुदत्तो वायुकः। उग्रहणमुको द्वितीयत्वे कविधानार्थम्। वायुदत्तः। अत्र पितृकः। चतुर्थादचऊर्ध्वस्य लोपो वाच्यः। अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः। अनजादौ च विभाषा लोपो वक्तव्यः। देवदत्तकः। देवकः। लोपः पूर्वपदस्य च। दत्तिकः। दत्तियः। दत्तिलः। दत्तकः। विनापि प्रत्ययम्पूर्वोत्तरपदयोर्वा लोपो वाच्यः। देवदत्तः। दत्तदेवः। सत्यभामा। भामा। सत्या। उवर्णात्ल इलस्य च। भानुदत्तः। भानुलः। ऋवर्णादपि। सवितृियः। सवितृलः। चतुर्थादनजादौ च लोपः पूर्वपदस्य च। अप्रत्यये तथैवेष्ट उवर्णात्ल इलस्य च।

ऊंपासंबंध इति भावः। धानका इति धाना शब्दः स्त्रीलिंगः ततः कः केणइति ह्रस्वः। कप्रत्ययांता टाप्। अत्र प्रत्ययस्थादितीत्वेन न भाव्यं। प्रायेणानुधानका इति पठ्यते। तत्र लिंगातिवृत्तिर्द्रष्टव्येति हरदत्तः। कर्मव्यतिहारे णच्स्त्रियामिति सिद्धे णचः स्त्रियामिति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापितं स्वार्थिकाः प्रकृतिलिंगं क्वचिदतिवर्तन्त इति तेन धानका इत्यत्रठस्त्वमिति भावः। घनिलचौ च चकारो यथाप्राप्तमिति काशिकाग्रहपूर्वसूत्रे यो वठन्विहितः वावचनात्कोपि चकारेणानुकृष्यत इति चिंत्यं। योगविभागफलमपि चिंत्यमिति हरदत्तः। ठाजादौ समाहारद्वंद्वे सौत्रं पुंस्त्वं। आदिग्रहणं चिंत्यप्रयोजनं। यस्मिन्विधिस्तदादा वित्येव सिद्धमिति हरदत्तः। अस्मिन्प्रकरण इति। अनुकंप

प्रागेवेति। सौत्रस्तु शब्दोऽवधारणे वर्त्तत इति भावः। तेन च बहुजेव विकल्प्यते न तु पूर्वत्वात् तु शब्दाभावे तु प्राक्त्वं विकल्प्येत तथा च पक्षे बहुच् परः स्यात्। भाष्यकारस्य मते तु नेदं तु शब्दस्य फलं। तथा हि। उदश्वितोऽन्यतरस्यामित्यादौ प्रधानत्वात् प्रत्यय एव विकल्प्यते न तु परत्वं प्रत्यय एव हि परविशिष्टो विधीयत इति विशेषणं गुणत्वात्। गुणानां च परार्थत्वादिति न्यायात् तद्वदिहापि विभाषाग्रहणे न बहुजेव संभंत्स्यते न पुरस्तादित्येतत्। तु शब्दस्य तु अवधारणार्थस्यान्यदेव प्रयोजनं पुरस्तादेव सर्वे यथा स्यादिति न लिंगसंख्ये अपि प्राक् प्रत्ययोत्पत्तेः। प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः बहु च प्रयोगश्च प्राक् प्रकृतेरेव भवतीति। तेन बहुगुडो द्राक्षा लघु बहु तृणं नर इत्यादौ प्रकृतिवल्लिंगमेव भवति न त्वभिधेयवल्लिंगं॥ ननु स्वार्थिकाः प्रकृतितो लिंगवचनान्यतिवर्तन्ते इत्येव सिद्धमिति किमनेन तु शब्दग्रहणेनेति चेद् दृष्टान्तः एतदेव ज्ञापयति

कस्य च दः। ५।३।७२। कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच् चाज्ञाते। ५।३।७३। कस्यायमश्वोऽश्वकः। उच्चकैः। नीचकैः। सर्वके। विश्वके। ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्। युवकयोः। आवकयोः। युष्माकासु। अस्माकासु। युष्मकाभिः। अस्मकाभिः। ओकारेत्यादि किम्। त्वयका मयका। अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः। मित्वादन्त्यादचः परः। तूष्णीकामास्ते। शीले को मलोपश्च। तूष्णींशीलः। तूष्णीकः। पचतकि। जल्पतकि। धकित्। हिरुकत्। कुत्सिते। ५।३।७४। कुत्सितोऽश्वोऽश्वकः। संज्ञायां कन्। ५।३।७५। कुत्सिते कन् स्यात् तदन्तेन चेत्संज्ञा गम्यते। शूद्रकः। राधकः। स्वरार्थं वचनम्। अनुकम्पायाम्। ५।३।७६। पुत्रकः। अनुकम्पितः पुत्र इत्यर्थः॥ ९९ ईषदसमाप्तौ ये स्वार्थिकास्ते त्वभिधेयवदेव लिंगवचने स्त इति तेन गुडकल्पा द्राक्षा शर्कराकल्पो गुड इत्यादि सिद्धं प्रागिवात्कः। सुप् इत्यनुवर्तते तेन तिङन्तात् कोन। अव्ययसर्वनाम्नोरनुवर्तते इति। मङ्कस्तु त्येति भावः। ज्याश्राति पदिकात्तु वइति चानुवर्त्तत एव॥ ॥ कस्य च दः। कान्ताव्ययस्येति। सर्वनामग्रहणे तिङ्ग्रहणं च नेह संबध्यते तयोः कान्तत्वासंभवात्। न चाधोक् अधेगित्यादौ संभवोऽस्तीति वाच्यं। कत्वस्यासिद्धत्वात्। यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि अशशागिति संभवति तथापि यङ्लुकोऽसार्वत्रिकत्वान्नेदं शंलक्ष्यमस्ति। कुं दसिकचिं त्वस्य संज्ञा वैपि सर्वे विधयश्छन्दसि वा विधीयन्त इति दत्वविधिर्न प्रवर्तत इति भावः। ओकारेति। अकच्विधौ सुपो ऽप्यनुवृत्त्या सर्वनाम्नः सुपा च टेर्विशेषणे कामचारात्। अव्यवस्था प्रसंगे भाष्यकारवचनाद्व्यवस्थाश्रीयते ओकारसकार इत्यादिसंकोचश्च युष्मदस्मन्मात्रविषयकस्तथैव भाष्ये उदाहृतत्वात्। अन्येषां त्वविशेषेण प्रातिपदिकस्यैव टेः प्रागकच् न तु सुवंतस्य तेन सर्वकैः इत्यकेन भवकं तमित्यादि सिध्यति॥

मित्यादि। एचः संध्यक्षरमिति प्राचां संज्ञा। वागाशीरिति। वाचि आशीर्यस्येति विग्रहः॥ ॥ वाचिक इति। अयं च तृतीयादच ऊर्ध्वस्य लोपः स्यात्तदा वाचआरक इति स्थिते यस्येति चेत्याकारस्य लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भत्वेऽन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन कुत्वजश्त्वयोः सतोर्वागिक इति स्यात्। उत्तरपदलोपे तु अच्कलादेशत्वेन स्थानिवत्त्वाभावात्त्यावधिकतया यचि भमिति भसंज्ञया सुप्तिङन्तमिति पदसंज्ञा एकसंज्ञाधिकारात्परत्वाद्बाध्यते स्वादिष्विति पदसंज्ञा तु न शंकनीये यचि भमिति भसंज्ञापास्तदपवादत्वात्। कथमिति। अत्राप्युत्तरपदलोपे जाते जस्त्वं दुर्लभमिति प्रश्नः। षषइति। अत्र सोत्र एव लोप इष्यते। न त्वौपस्थानिक इत्यर्थः। शेवलसुपरि। शेवलिक इति। बह्वचो मनुष्यनाम्न इति ठच्। घनिलचौ तु शेवलियः। शेवलिलः। शेवलादीनां तृतीयात्। लोपो यउच्यते। स च कृत

वाचिकः। कथं षडङ्गुलीदत्तः षडिक इति। षषष्ठाजादिवचनात्सिद्धम्। शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्। ५।३।८४। एषां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात्। पूर्वस्यापवादः। अनुकम्पितः शेवलदत्तः। शेवलिकः। शेवलियः। शेवलिलः। सुपरिकः। विशालिकः। वरुणिकः। अर्यमिकः। अजिनान्तस्योत्तरपदलोपश्च। ५।३।८२। अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन्। तस्य चोत्तरपदलोपः। अनुकम्पितो व्याघ्राजिनो व्याघ्रकः। सिंहकः। अल्पे। ५।३।८५। अल्पं तैलं तैलकम्। ह्रस्वे। ५।३।८६। ह्रस्वो वृक्षो वृक्षकः। संज्ञायां कन्। ५।३।८७। ह्रस्वहेतुकायाः संज्ञायां गम्यमानायां कन्। पूर्वस्यापवादः। वंशकः। वेणुकः। कुटीशमीशुण्डाभ्यो रः। ५।३।८८। ह्रस्वा कुटी। कुटीरः। शमीरः। शुण्डारः। कुत्वा डुपच्। ५।३।८९। ह्रस्वा कुतूः। कुतुपः। कुतूः चर्मस्नेहपात्रम्। ह्रस्वा सा कुतुपः उमान्। कासूगोणीभ्यां ष्टरच्। ५।३।९०। आयुधविशेषः कासूः। ह्रस्वा सा कासूतरी। गोणीतरी॥

९९ संधीनां वक्तव्यः। सुपर्याशीः सुपरिकः सुपरियः सुपरिल इति भाष्ये स्थितम्। कैयटेन तु सुपरिक इति प्रतीकमुपादाय संहिताकार्यं तु कृते लोपे सति सुपर्यिक इति स्यादिति व्याख्यातम्। अयं भावः। संहिताकार्यमणि कृते तृतीयादच ऊर्ध्वलोपे सति शीर्देन इत्यस्यैव लोपः स्यात्। आकारस्य तु यस्येति चेत्यनेन स्यात्तथा च स्थानिवद्भावाद्यणो निवृत्तिर्भविष्यतीति। ह्रस्वात्तैलादौ ह्रस्वदीर्घादिव्यवहाराभावात् वृक्षक इत्युदाहृतम्। यद्यप्यल्पे इत्यनेनैवेदं रूपं सिद्ध्यति तथापि शब्दद्वैधे विशेषोऽस्तीत्याहुः॥ कुटीर इति॥ स्वार्थिकाः प्रकृतितो लिङ्गमतिवर्तन्त इति पक्षे लिङ्गमत्र संगच्छते॥

उध्वे ग्रहणमिह सर्वलोपार्थं अन्यथा आदेः परस्येत्यादेरेव स्यादित्यभिप्रेत्याह। द्वितीयादचऊर्ध्वं सर्वमिति। अजिनान्तस्येत्यतो लोप इत्यनुवर्तनादाह लुप्यत इति।
ननु ठग्रहणं व्यर्थं इकादेशे कृते अजादावित्येव सिद्धत्वादत आह। ठको द्वितीयत्व इति। वायुक इति। वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव लोपे इसुसुक्तान्तादिति
कः। किंच ठग्रहणस्य प्रयोजनान्तरमप्यस्ति यदानुचित्रगप्रभृतिभ्यष्ठच् तदेगतत्वात्कादेशप्राप्त्या प्रथममिकादेशस्यासंभवेनाजादिलक्षणो लोपो न स्यादि
ति तदर्थमपि ठग्रहणं तेन ठावस्थायामुत्तरपदलोपे कादेशस्यासंभवादिकादेशे चित्रक इति रूपं सिध्यतीति बोध्यं चतुर्थादनजादौ चेति वस्यमाणमेव स्लोकं भंक्त्वा
व्याचष्टे चतुर्थादच ऊर्ध्वस्येति। अनजादाविति। हलादावित्यर्थः। अस्मिन्प्रकरण इत्येव। लोपः पूर्वपदस्य चेति। ठाजादावनजादौ चेति बोध्यः। अप्रत्यये तथैवेत्ये
तद्व्याचष्टे। विनापि प्रत्ययमिति। लइलस्य चेति। इलस्य लः। लोप इत्यर्थः। सत्रादेः परस्येति इकारलोपो बोध्यः। ॥८॥ प्राचामुपादेः। बह्वचो मनुष्येत्याद्यनुवर्तते अंदद

प्राचामुपादेरडज्वुचौ च। ५।३।८०। उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषये अडच्वुचौ एतौ स्तः। चाद्यथाप्राप्तम्। प्राचांग्रहणं पूजार्थम्। अनुकम्पित उपे
न्द्रदत्तः उपडः। उपकः। उपिकः। उपियः। उपिलः। उपेन्द्रदत्तकः। षड्रूपाणि। जातिनाम्नः कन्। ५।३।८१। मनुष्यनाम्न इत्येव। जातिशब्दो यो मनुष्य
नामधेयस्तस्मात्कन्स्यादनुकम्पायां नीतौ च। सिंहकः। शरभकः। रासभकः। द्वितीयं संध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः। कहोडः कहिकः। एका
क्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः। वागाशीर्दत्तः॥ ९ तइति। अनुकृतसंधेरुपेंद्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणादुपादेरिति विधीयमानो प्रत्ययो लां

नामलोपकृत्तु न कादेरेव स्यात्तत्रश्च उपक उपड इति रूपे न स्याताम्। किंतु उपयड उपयक इति रूपे स्यातामेवं घनिलच्ठच्स्वपि दोष एव। तस्मादिहेव द्वितीयं संध्यक्षरं चेति वा
र्त्तिकं कुतो नोक्तमिति चेदत्राहुः। प्रकारान्तरेण निर्वाहसंभवान्नोक्तम्। तथाहि। आङ्गुणे कृते द्वितीयं संध्यक्षरमित्यादिना अकारस्यापि लोपप्रसङ्गात्पाणिनेः पूर्वमेवाकृतव्यूह
परिभाषया प्रत्ययः। न च परिनिष्ठितत्वपरेण समर्थग्रहणेन सोऽस्य इतिरित्यत्रैव परिभाषा बाधः शंक्यः। प्राग्दिश इति सूत्रे समर्थग्रहणं निवृत्तमित्युक्तत्वादकृतसंधेरि
ति प्रागुक्तज्ञापकबलेन समर्थग्रहणप्रत्याख्यानपक्षेपि ज्ञापकस्य विशेषपरत्वाश्रयणादिति। उपेंद्र उपग इत्युपकतीत्यादिषु यडादीनां पंचानां रूपाणां साम्येपि संध
यादिस्विवप्रकरणादिना विशेषोऽध्यवसेयः। जातिनाम्नः। ये शब्दा जात्यन्तरे प्रसिद्धाः मनुष्येषु नामत्वेन विनियुक्तास्त इहोदाहरणं द्वितीय॥ 1

त्वादितिभावः। किंयत्तद इतिसूत्रेद्वयोरित्यस्यप्रत्याख्यानादाह। किमोस्मिन्निति। एकाच्चा प्राचांग्रहणं पूजार्थं विकल्पोऽनुवर्त्तत एव॥ ःः॥ अवक्षेपणोकन्। कुत्सि तेऽज्ञकः। खरेविशेषः। येनइत्तरइति। अवक्षिप्यते येनेत्यवक्षेपणं शब्दः करणेल्युडंत्तइतिभावः। प्रागिवीयानां पूर्णो वधिः। अश्वकइति। अश्वशब्दोश्वएववर्त्तते कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इतिनायंस्वार्थिकइत्येके। अन्येतुसादृश्यनिबंधनादभेदोपचारात्तैर्वाहीकइतिवदश्वशब्दएव प्रतिकृतौवर्त्तते। प्रत्ययस्तु तस्यैवोपचारिकत्वस्यबोधकइत्याहुः। प्रतिकृतौ किं। गौरिवगवयः। तृणचर्मकाष्ठादिनिर्मितं प्रतिमापरपर्यायं वस्तु प्रतिकृतिः। गवयस्तु नैवं। समुदायश्चेत्तइतिप्रकृ

अवक्षेपणेकन्। ५।३।९५। व्याकरणकेन गर्वितः। व्याकरणकः। येनेतरः कुत्स्यते तन्नेहोदाहरणम्। खत्तः कुत्सितं नु कुत्सितं इत्यस्य। प्रागिवीया नां पूर्णो वधिः। इवे प्रतिकृतौ। ५।३।९६। कन्स्यात्। अश्वइवप्रतिकृतिः। अश्वकः। प्रतिकृतौ किम्। गौरिवगवयः। संज्ञायां च। ५।३।९७। इवार्थेक न्स्यात्समुदायश्चेत्संज्ञा। अप्रतिकृत्यर्थमारंभः। अश्वसदृशस्य संज्ञा अश्वकः। उष्ट्रकः। लुम्मनुष्ये। ५।३।९८। संज्ञायां विहितस्य कनो लुप्स्यात्म नुष्ये वाच्ये। चंचातृणमयः पुमान् चंचेव मनुष्यः चंचा। वर्धिका। जीविकार्थे चापण्ये। ५।३।९९। जीविकार्थे यद्विक्रीयमाणं तस्मिन्वाच्ये कनो लुप्स्यात्। वासुदेवः। शिवः। स्कंदः। देवलकानां जीविकार्थासु देवप्रतिकृतिष्विदम्। अपण्ये किम्। हस्तिकान्विक्रीणीते। देवपथादिभ्यश्च। ५।३। १००। कनो लुप्स्यात्। देवपथः। हंसपथः। आकृतिगणोयम्। वस्तेर्ढञ्। ५।३।१०१। इवेत्यनुवर्तत एव। प्रतिकृतावितिनिवृत्तम्। वस्तिरिववास्ते यं। वास्तेयी। शिलायाढः। ५।३।१०२। शिलेव शिलेयम्। शिलाया इति योगविभागाढ्ढञपीत्येके। शैलेयं शाखादिभ्योयः। ५।३।१०३। शाखेव शाख्यः। मुख्यः। जघनमिव जघन्यः। अग्र्यः। शरण्यः। द्रव्यं च भव्ये। ५।३।१०४। द्रव्यमयंब्राह्मणः। कुशाग्राच्छः। ५।३।१०५। कुशाग्रमिव कुशाग्रीया बुद्धिः॥

ते प्रत्ययसमुदायश्चेदश्वसदृशस्य संज्ञेत्यर्थः। चंचावध्रिके इति। लुपि युक्तवद्भावात्स्त्रीलिंगता। वासुदेवः शिवइत्यादिया प्रतिमाः प्रतिगृह्य गृहाद्गृहं भिक्षमाणा अटंति ताए वमुच्यंते। देवलकाश्च पित एव भिक्षवोऽभिप्रेताः। यास्त्वायतनेषु प्रतिष्ठाप्यंते पूज्यंते च तासु नारस्त्रेणाप्युपत्तइत्तं। आर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवेप्रतिकृ तौलोपः कनो देवपथादिष्विति। आर्चासु प्रतिमासु कीदृशीषु पूजनार्हासु गृहेष्वायतनेषु वाया पूज्यंते तासु चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यंते आर्चासु

वत्सोक्षाश्वात्तनुत्वं न्यूनता साच प्रवृत्तिनिमित्तस्य प्रत्यासत्तेः। क्वचित्तत्सहचरितधर्मान्तराणां तत्र वत्सः प्रथमवयाः वयसश्च प्रथमस्य न्यूनत्वं नाम वयोन्तरप्राप्तिस्ताराद्वि
तीयमिति। तरुण उक्षा तारुण्यं यस्य च तनुत्वं तृतीयवयःप्राप्तिः। अश्वायामश्वादुत्पन्नोऽश्वः अश्वत्वं च जातिः। तत्सहचरितस्याश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपि
तृकता। तथा च गर्दभेनाश्वायामुत्पादितोऽश्वतरः। ऋषभो भारस्य वोढा तस्य तनुत्वं भारोद्वहने मन्दशक्तिता। तद्वांस्तु ऋषभतरः। किंयत्तदो कतरो वै स्व इति गुणेन निर्द्धा
रणमिदं। क्रियासंज्ञाभ्यां निर्द्धारणे तु कतरोऽध्यापकः। कतरो देवदत्त इत्यादि ज्ञेयं। ननु द्वयोरेकस्य निर्द्धारणे डतरच्चेद्भवति तर्हि कयोरन्यतरो देवदत्तः। ययोरन्यतरस्त
योरन्यतर इत्यत्रापि प्राप्नोति। अत्राहुः। निर्द्धार्यमाणवाचिभ्य एवायं प्रत्ययोऽभिधानस्वाभाव्यात् तेनात्र नातिप्रसंग इति। एकस्येति किं। द्वयोरिति कर्मणि षष्ठी माभूत

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।५।३।९१। वत्सतरः द्वितीयं वयः प्राप्तः। उक्षतरः। अश्वतरः। ऋषभतरः। प्रवृत्तिनिमित्ततनुत्व एवायम्। किंयत्तदो नि
र्द्धारणे द्वयोरेकस्य डतरच् ।५।३।९२। अनयोः कतरो वैष्णवः। यतरः। ततरः। महाविभाषया कः। यः। सः। वा बहूनां जातिपरिप्रश्ने डतमच् ।५।३।९३।
बहूनां मध्ये एकस्य निर्द्धारणे डतमच् वा स्यात्। जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणमकजर्थ
म्। यकः। सकः। महाविभाषया। यः। सः। किमोऽस्मिन्विषये डतरजपि। कतरः। एकाच्च प्राचाम् ।५।३।९४। डतरच्डतमचौ स्तः। अनयोरे
कतरो मैत्रः। एषामेकतमः॥ ९९ तथाहि सत्यस्मिन्सर्वको देवदत्तयज्ञदत्तावित्यादावेव स्यात्। वा बहूनां। किंयत्तद इति वर्त्तते। जातिश्च परिप्रश्नश्चेति समाहा
रद्वन्द्वः अत्र जाताविति सर्वेषां विशेषणं। षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निस्पृष्य संबंधोऽनुपपन्नः स्यात्। परिप्रश्नग्रहणात्तु किम एव विशेषणं तच्चाक्षेप निर्द्दे
त्यर्थं। तत्र जातिग्रहणं प्रायोभिप्रायं क्रियागुणसंज्ञाभिरपि निर्द्धारणेऽपि डतमच्दृष्टत्वात् तथा पूर्वसूत्रे द्वयोरिति प्रायोभिप्राय बहूनां निर्द्धारणेऽपि डतरच्दृष्टत्वात् तथा
च वार्तिके। किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यमिति। अत्र कैयटः। द्वयोरिति जातिपरिप्रश्न इति च न कर्त्तव्यमिति भाव इति तदेतदाह। प्रत्याख्यात
माकर इति। कठ इति। कतमो भवतामध्यापकः स्थूलो देवदत्तो वेत्यप्युदाहर्त्तव्यं। यकः सक इति। ककः इति तु नोक्तं अकच्एहितस्यापि किमः कादेश इति व्या
ख्यातत्वात्। महाविभाषयेति। साक्षिश इति सूत्रे समर्थप्रथमग्रहणयोर्निवृत्तत्वेपि वाग्रहणमनुवर्त्तत इत्युक्तं॥

छः स्यादिति। इवार्थ इति बोध्यं। पूगाञ्ञ इत्यतः प्रागिवेत्यधिकारात्। शस्त्रीश्यामेत्यादौ तु एक एवेवार्थः। स च समासांतर्भूत इति छो न भवत्युक्तार्थानामप्रयोगात्। काकतालीय इति। अकृतसूत्रादेव ज्ञापकादिवार्थे समासः सुप्सुपेति वा। उभयथापि विशेषसंज्ञाविनिर्मुक्तः। स च छप्रत्ययविषय एव तेनेह स्यांतमुपात्तं। उपाध्यंतरयोगो विग्रहश्चनेत्याकरः। इह काकतालेत्यादि। आगच्छतः काकस्याऽकस्मात्तालफलपतनाद्यथा वधस्तथैवाकस्मिकचोरसमागमाद्देवदत्तवधः। एवमज्ञायाऽऽगकंत्याकृपाणपतनात् यथा वधस्तत्सदृशं मरणमिति फलितोऽर्थः। अतर्कितोपनत इति। अचिंतितोपपन्नः। यादृच्छिक इत्यर्थः। पूगाञ्ञ्यो स्वरूपग्रहणान्न भवति। अग्रामणीपूर्वादिति वचनात्। पूर्वशब्दोऽत्यवयववचनः। अग्रामणीपूर्वादिति किं। देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः। स एषां ग्रामणीरिति कन्। अत्र समुदायः पूगवचनः। लोहितध्वज्य इति। लोहितः ध्वजो यस्य संघस्य स लोहितध्वजः। स एव लोहितध्वज्यः। व्रातच्फञो। उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः। उत्सेधः शरीरायासः। कौञ्जा

आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी। क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकिः १ दामनीयः। दामनीयौ। दामनयः। औलपिः। औलपीयः। त्रिगर्तः। कौण्डोपरथीयः। दाण्डकीयः। पार्श्वादियौधेयादिभ्यामणञौ। ५।३।११७। आयुधजीविसङ्घवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे। पार्शवः। पार्शवौ। पार्शवाः। यौधेयः। यौधेयौ। यौधेयाः॥ ((यन्य इति गोत्रे कुंजादिभ्य इति च्फञ्। दामन्यादित्रिगर्तषष्ठात्। समाहारद्वन्द्वात्पंचमी। त्रिगर्तषष्ठेभ्य इति। येषामायुधजीविनां षडंते वर्गाः षड्वर्गास्तु त्रिगर्तास्तेभ्य इत्यर्थः। त्रिगर्तवर्गषष्ठकाः के इत्याकांक्षायामाह॥ ॥ आहुस्त्रिगर्तषष्ठांश्चेति। अत्र जानकयस्त्रिगर्तवर्गः तेषु च त्रिगर्तषष्ठेषु प्रथमपंचमौ कौण्डोपरथब्रह्मगुप्तशब्दौ शिवादयः सांतौ शेषास्त्विञंताः। केचित्तु अतद्धितांतमेव पंचमं ब्रह्मगुप्तशब्दं पठंति। कौण्डोपरथीय इति। बहुवचने तु कौण्डोपरथाः। दाण्डकाय इत्यादि। पारशव इति। पर्शुरिति जनपदशब्दस्ततोऽपत्ये द्व्यञ्मगधेत्यण्। बहुत्वे तद्राजत्वाल्लुक्। पुनस्संघविवक्षायामनेनाण्। अस्याप्यणो बहुत्वे तद्राजत्वाल्लुक्। तदाह। पर्शव इति। ननु पर्शुरिति यो जनपदशब्दस्तस्मादेवानेन यः स्वार्थेण् विधीयतामपत्यवाचि पर्शुशब्दात्संघविवक्षायामणि धौत स्वार्थिकत्वं न सिध्येदिति चेदत्राहुः। केवलः पर्शुशब्द एव जनपदवाचीनत्वसांत इति जनपदवाचिनः स्वार्थेऽण् न विधीयते किंतु द्व्यगधेत्यणंतात्तद्राजस्य बहुष्वित्यादिना लुकि। बहूपत्यवाचि पर्शुशब्दादेव स्वार्थे विधीयते स्वार्थेश्चात्र संघ एव। न च पर्शुशब्दस्य संघवाचित्वं नेति शंक्यं व

ईदृशमेव विषयमभिप्रेत्य पठंति
दाहरणं। शिवः। विष्णुः। चित्रकर्मणि अर्जुनः दुर्योधनः। ध्वजेषु कपिः। गरुडः। सिंहः। सुपर्णो सिंहमकरादयः ध्वजेषु राज्ञां संति। हस्तिकानिति। अयं भावः। अपण्य इत्युक्तत्वात्पण्ये
रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिक् धिक् अस्मिन्नर्थे योपशब्दान्नवेत्ति व्यर्थं प्रवृत्तं पंडितं तं च धिग्धिगिति।

समासाच्च तद्विषयात्। ५।३।१०६। इवार्थे विषयात् समासाच्छः स्यात्। काकतालीयो देवदत्तस्य वधः। इह काकतालसमागमसदृशश्चोरसमागम इति
समासार्थः। तत्रयुक्तः काकमरणसदृशं स्वमत्यथार्थः। अजाकृपाणीयः। अतर्कितोपनत इति फलितोर्थः। शर्करादिभ्योऽण्। ५।३।१०७। शर्करे
वशर्करम्। अङ्गुल्यादिभ्यष्ठक्। ५।३।१०८। अङ्गुलीव आङ्गुलिकः। भरुजेव भारुजिकः। एकशालाया ष्ठजन्यतरस्याम्। ५।३।१०९। एक
शालेव एकशालिकः। एकशालिकः। कर्कलोहितादीकक्। ५।३।११०। कर्कः शुक्लोऽश्वस्तस्येव काकींः
शालाशब्दादिवार्थे ष्ठचपक्षे ठक्। एकशालेव ऐकशालिकः। एकशालिकः। कर्कलोहितादीकक्। ५।३।११०। पूगा
कः। लौहितीकः स्फटिकः। पूगाञ्ञ्योऽग्रामणीपूर्वात्। ५।३।११२। स्वार्थो निवृत्तः। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगा
स्तद्वाचकात्स्वार्थे ञ्यः स्यात्। लोहितध्वज्यः। व्रातच्फञोरस्त्रियाम्। ५।३।११३। व्रातः कापोतपाक्यः। च्फञ्। कौञ्जायन्यः। ब्राध्नायन्यः। आयु
धजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्। ५।३।११४। वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट्। क्षौद्रक्यः। मालव्यः। टित्वान्ङी
प्। क्षौद्रकी। आयुधेति किम्। मल्लाः। सङ्घेति किम्। सम्राट्। वाहीकेषु किम्। शबराः। अब्राह्मणेति किम्। गोपालवाः। शालङ्कायनाः। ब्राह्मणेतद्वि
शेषग्रहणम्। राजन्ये स्वरूपग्रहणम्। वृकाट्टेण्यण्। ५।३।११५। आयुधजीविसङ्घवाचकात्स्वार्थे वार्केण्यः। आयुधेति किम्। जातिशब्दान्माभू
त्। दामन्यादित्रिगर्तषष्ठाच्छः। ५।३।११६। दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात्। त्रिगर्तः षष्ठो वर्गो येषा
न्ते त्रिगर्तषष्ठाः ॥ ॥

हस्तिकानिति वत् रामकं सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव इति। देवपथ इत्यादि। देवपथ इव प्रतिकृतिः। हंसपथ इव प्रति
कृतिरिति विग्रहः। वस्तिरिति। वस्तिर्नाभेरधो द्वयोरित्यमरः। द्रव्यं च भव्ये द्रुशब्दादिवार्थे यप्रत्ययो निपात्यते॥ ॥ समासाच्च तद्विषयात् छः स्वेन प्रशात इवार्थो

स्थूलादिभ्यः। प्रकारो भेदः सादृश्यं च उभयत्रापि यथासंभवं कन्। जातीयरोऽपवाद इति। तेनायमपि तद्वदेव प्रकारवति न तु प्रकारमात्र इत्युक्तं भवति। चंचद्बृहतोरिति। एतावपि स्थूलादिष्वेव पठितव्याविति भावः। चंचत्क इति चंचति स्खलनकर्मा चंचन्नेव कश्चिच्चंचत्कः। एवं बृहद्विशेषो बृहत्कः। यद्वा अचंचन्नबृहन्नपि मणिविशेषा च्चंचन्निव बृहन्निव मणिविशेषो लक्ष्यते स चंचत्कः। बृहत्कः। सुरक इति। केण इति ह्रस्वः। छिन्नकमिति। ईषच्छिन्नमित्यर्थः। क्तप्रकृतिवाच्यया क्रियया कप्रत्ययवाच्यस्य साधनस्य व्याप्तिरत्यंतगतिः सेह नास्ति। नसामिवचने। सामि अर्द्धं उच्यते येन तत्सामि वचनमिति व्युत्पत्त्या वचनग्रहणं पर्यायार्थमित्याह। सामिपर्याय इति। सामिकृतमिति। सामीति समासः। अर्द्धकृतमिति। विशेषणसमासो बहुव्रीहिर्वा प्रकृत्यैवेति। सामिवचने नैवेत्यर्थः। ज्ञापयतीति। अयं भावः। न सामिवचन इत्यनेनानत्यं

स्थूलादिभ्यः प्रकारवचने कन्। ५।४।३। जातीयरोऽपवादः। स्थूलकः। अणुकः। चञ्चद्बृहतोरुपसंख्यानम्। चञ्चत्कः। बृहत्कः। सुराया अहौ। सुरावर्णोहिः सुरकः। अनत्यन्तगतौ क्तात्। ५।४।४। छिन्नकम्। भिन्नकम्। न सामिवचने। ५।४।५। सामिपर्याये उपपदे क्तान्तान्न कन्। सामिकृतम्। अर्द्धकृतम्। अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्पूर्वेणाकन्प्राप्तः। इदमेव निषेधसूत्रमत्यन्तस्वार्थिकमपि कन्ज्ञापयति। बृहत्तरकम्। बृहत्याश्चाच्छादने। ५।४।६। कन्स्यात्। द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। आच्छादने किम्। बृहती छन्दः। अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः। ५।४।७। स्वार्थे। अषडक्षीणो मन्त्रः। द्वाभ्यामेव कृत इत्यर्थः। आशिता गावोऽस्मिन्निति आशितङ्गवीनमरण्यम्। निपातनात्पूर्वस्य मुम्। अलंकर्म्मीणः। अलङ्कर्मीणः। अलम्पुरुषीणः॥ ९९

तगताविति कनोऽनन्निषेधः सामिकृतादिभ्यस्तस्य प्राप्त्यभावात् तेभ्योऽसमासे सामिपदेनैव अनत्यंतगतेर्द्योतनात् समासेऽप्युक्तत्वाभावाच्चानचकृङ्ग्रहणपरिभाषया समासस्योक्तत्वमस्तीति शंक्यं सामिशब्दस्य गतिकारकत्वाभावात्। तस्मात् स्वार्थिक एव कन् निषिध्यत इति इदमेव निषेधवचनं क्वचित्स्वार्थिकं कनं ज्ञापयतीति। अषडक्षीण इति। अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिः। अक्षिशब्दोऽत्र अक्षेन्द्रियवृत्ते। बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्। तदंतादनेन खः। मंत्रो मंत्रणम्। आशितंगवीनमिति। आङ्पूर्वादश्नातेराशितः कर्तरि क्तः। ज्ञापकात्। एवं तात्कर्मणि वा उभयथापि प्रभूतयवसमिति फलितोऽर्थः। अलंकर्मीण इति। अलंकर्म अलंपुरुषेति पर्यादयो ग्लानाद्यर्थे चतुर्थ्येति समासः। अलंपुरुषीण इति। प्रतिमच्छादिः ॥ ९ ॥

वद्धपत्यवा चित्वेसंघवाचित्वश्रोव्यादित्तिनकाप्यनुपपत्तिरिति। यौधेयइति। उच्यते सौयधायुधेरिणपथलक्षणः कः। यथायाम्रपत्यं ह्ममइतिढक्। ततइत्तात्संघवि
वक्षायामनेनाञ्। तेनयौधेयइति आद्युदात्तंभवति। किंचयौधेयस्यांकोलक्षणेवायौधेयः संघांकलक्षणेत्यञ् तादण। एवंयौधेयादिषुयेंढगंताः शौकेयादयस्तेषुसर्वं
षुप्रयोजनद्वयमूह्यं। यौधेयाइति। अनोऽलुक्। अंतोदात्तं। नचनप्राच्यभर्गेत्यादिना निषेधः शंक्यः स्त्रियामेवतन्निषेधात्॥ ॥ आभिजित्यइति। अभिजितशब्दादस्मात
न्यञ्। एवंविदभृत्प्रभृतिभ्योऽणितदंतेभ्यो वैदभृतशालावत ———— शैखावतादिभ्योयञ्। पादशतस्य संख्यादेः। पादशतस्यकिम्। द्वौद्वौमाषौददाति। संख्यादेरि
ति किं। पादंपादंददातिवीप्सायामिति किं। द्वौपादौददाति। अनैमित्तिकत्वार्थमिति। निमित्तेभवोनैमित्तिकः। अध्यात्मादित्वाट्ठञ्। तद्धितार्थइतिसमासइति। यद्यपिप्रकृत्यु

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणोयञ्। ५।३।११८। अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थेयञ्स्यात्। अभिजितोऽपत्यंआ
भिजित्यः। वैदभृत्यः। शालावत्यः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः। ञ्यादयस्तद्राजाः। ५।३।११९। पूगाञ्ञ्य इत्यारभ्य उक्ताएतत्संज्ञाः
स्युः। तेनास्त्रियाम्बहुषु लुक्। लोहितध्वजाः। कपोतपाकाः। कौञ्जायनाः। ब्राध्नायनाइत्यादि। पादशतस्य संख्यादेर्वीप्सायांवुन्लोपश्च। ५।४।१। लोप
वचनमनैमित्तिकत्वार्थम्। अतोनस्थानिवत्। पादःपत्। तद्धितार्थइतिसमासेकृते प्रत्ययः। वुन्नन्तंस्त्रियामेव। द्वौद्वौपादौददाति। द्विपदिकाम्। द्वि
शतिकां॥ पादशतग्रहणमनर्थकमन्यत्रापिदर्शनात्। द्विमोदकिकाम्। दण्डव्यवसर्गयोश्च। ५।४।२। वुन्स्यात्। अवीप्सार्थमिदं। द्वौपादौदण्डितः।
द्विपदिकां। व्यवसृजतिददातीत्यर्थः॥ ९९ पादिर्वीप्सात्तथापिवुनोवोत्येतितद्धितार्थोभवत्येवेतिभावः। ददातीति। समर्पणमात्रमिहददत्तेरर्थः। ननुपरस्वत्वा
पादनपर्यंतंतथात्वेहिउत्तरसूत्रविषयत्वंस्यात्। केचित्तुव्यवसृजतेर्द्योतः प्रयोगेसत्येवउत्तरसूत्रस्यप्रवृत्तिमाहुः। अन्यत्रापिदर्शनादिति। द्वौद्वौमाषौददातीत्यादौत्व
नभिधानान्नातिप्रसंगइतिभावः। दण्डव्यवसर्गा। दण्डनंदण्डः। दण्डेश्चुरादिण्यंतात्घञेवघञ्। अत्राप्युदाहरणेतद्धितार्थइतिसमासः स्त्रीलिंगंचतद्धितार्थः। यद्वाप्रकृत्य
र्थएवतद्धितार्थः। स्वार्थिकत्वाद्वुनः। द्वौपादौदण्डितइति। देवदत्तेनयज्ञदत्तइतिशेषः। दण्डेरप्रधानेकर्मणिक्तः इतियज्ञदत्तस्यत्रप्रथमा। द्वौपादावित्यत्रद्विपदिका
मित्यत्रचद्वितीयाभवतिदंडिग्रहणार्थ इतिद्विकर्मकेषूक्तम्। तथाचद्विपदिकाकर्मकग्रहणविषयीभूतोयज्ञदत्त इत्यादिरर्थइतिनव्याः ॥ ॥

रूढोपि वंधुशब्दः आप्तपर्यायस्तु त्रिलिंगोस्ति तथापि सनेह गृह्यते वेधुनीति नपुंसकनिर्देशादिति भावः। सस्थानेनेत्यस्येव व्याख्यानं तुल्येनेति पितृस्थानीय इति स्थान
मत्रसंबंधविशेषः। पदमितिपस्यप्रसिद्धिः। पितुरिव स्थानमस्य पितृस्थानः पितृतुल्य इत्यर्थः। गोस्थानमिति। तिष्ठंत्यस्मिन्निति स्थानं देशः। इति करणे विवक्षार्थस्ते
ननत्पुरुषो वहुव्रीहिर्वा। यस्तु तुल्यस्थानशब्दस्तस्माच्छो न भवति अनुगादिनः। प्रकृतिस्वरूपप्रदर्शनपरं चैतत्। नत्वयं केवलः प्रयोगार्हः ठञो नित्यत्वादिति हरद
त्तः। सुप्यजातावितिणिनिः ॥ ःः ॥ विसारिणः। पूर्ववदिहापि णिनिः। हरदत्तस्तु सुप्यजाताविति णिनिरुपसर्गभिन्न एव सुप्युपपदे भवतीत्याशयेन पूर्वसूत्रेस्मिंश्च
तएव निपातनात् णिनिरित्याह। तदयुक्तं। सवभूवोपजीविनां। अनुपायिवर्गः। नवंचनीया। प्रभवोनुजीवि भिरित्यादिप्रयोगानुरोधेन उपसर्गात्सुप्युपपदे पि णिनेरेव
विसारिणो मत्स्ये। ५।४।१६। अण्स्यात्। वैसारिणः। मत्स्येति किम्। विसारी देवदत्तः। संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्। ५।४।१७ अभ्या
वृत्तिर्जन्म क्रियाजन्मगणनवृत्तेः संख्याशब्दात्स्वार्थे कृत्वसुच् स्यात्। पञ्चकृत्वो भुङ्क्ते। संख्यायाः किम्। भूरिवारान् भुङ्क्ते। द्वित्रिचतुर्भ्यः सुच्।
५।४।१८। कृत्वसुचोपवादः। द्विर्भुङ्क्ते। त्रिः। रात्सस्य। चतुः। एकस्य सकृच्च। ५।४।१९। सकृदित्यादेशः स्याच्चात्सुच्। सकृद्भुङ्क्ते। संयोगान्तस्येति सुचो लो
पः। न तु हल्ङ्याविति। अभैत्सीदित्यत्र सिच इव सुचोपि तस्योगात्। विभाषा वहोर्धा विप्रकृष्टकाले। ५।४।२०। अविप्रकृष्टे आसन्नः। वहुधा। वहुकृ
त्वो वा दिवस स्य भुङ्क्ते। आसन्नकाले किम्। वहुकृत्वो मासस्य भुङ्क्ते। तत्प्रकृतवचने मयट्। ५।४।२१। प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपाद
नम्। भावेधिकरणे वा ल्युट्। आद्ये। प्रकृतमन्नं अन्नमयं। अपूपमयम्। यवागूमयी। द्वितीये॥ ९९ प्रपस्वो कर्तव्यतया निपातनात् अपराणस्य व्यर्थत्वात् अणिनु

णा इत्यतोऽनुवर्त्तनादाह। अण्स्यादिति। वैसारिण इति। इनण्यनपत्य इति प्रकृतिभावः। संख्यायाः। अभ्यावृत्तिशब्देन यद्द्वितीयादिप्रवृत्तिर्गृह्यते तदा घङ्कृत्वः प्रवृत्तौ पं
चकृत्व इति स्याद्दतोत्र विवक्षितमर्थमाह। अभ्यावृत्तिर्जन्मेति। भूरिवारानिति। भूरिशब्दस्य लौकिकसंख्यावाचित्वेपि नेह ग्रहणं वहुगणेति सूत्रे वहुग्रहणस्य नियमार्थ
त्वात्। अनियतसंख्यावाचिनां चेद्भवति वहोरेवेति नियमशरीरमिति मनोरमा। वहुगणयोरेवेति नियमशरीरमित्यन्ये। वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात्का
लाध्वनोरिति द्वितीयेति हरदत्तः। वारशब्दस्य कालवाचित्वे भूरिशब्दोपि तत्समानाधिकरणत्वात्काल एव वर्त्तत इति कथमत्र प्रसंग इति चेदत्राहुः। कालवाचित्वेपि क्रि

ईश्वराधीन इति। अधिशब्दः शौण्डादिरित्युक्तं। तमबादय इति। अतिशायने तमबिष्ठनावित्यादयः। प्राक्तन इति। अवक्षेपणे कन्निति विहितात्। त्यादय इति। इगास्योग्रामणी श्रर्वौ दि
त्यादयः। प्राग्घुन इति। पादशतस्य संख्यादेरिति विहितात्। अमादय इति। किमेत्तिङव्ययघादाभित्यादयः। प्राङ्मयट इति। तत्प्रकृतवचने मयडित्यतः प्रागित्यर्थः। बृह
तीजात्यंता इति। बृहतीशब्देन बृहत्याच्छादने इति विहितः कन् उपलक्ष्यते। जात्यंतशब्देन जात्यंताच्छ इति छः। बहुवचननिर्देशात्पाशबादयो गृह्यंते। यो हि वैयाकरण
पाशादिशब्दैरर्थः प्रतीयते नासौ प्रकृतिमात्रेण प्रतीयत इति तेपि तमबादिवन्नित्या एवेति स्थितमाकरे। कनन्तोऽप्यत्वामूले बृहतीमात्र प्रयोगो जात्यंतमात्रप्रयोगश्च क्व
चित्स्तु अवाचकोप्यार्षग्रंथानुवादत्वान्न दोषाय। विभाषांचेर दिक्स्त्रियामिति दिक्स्त्रीति तत्र प्रतिषेधो न तु दिशि स्त्रियां च। स्त्रीलिंगैकवचननिर्देशात् प्राचीनमि

ईश्वराधीनः। नित्योयमुत्तरसूत्रे विभाषाग्रहणात्। अन्येपि केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते। तमबादयः प्राक्तनः। त्यादयः प्राग्घुनः। अ
मादयः प्राङ्मयटः। बृहतीजात्यन्ताः समासान्ताश्चेति। विभाषाञ्चेरदिक्स्त्रियाम्। ५।४।८। अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात्खः स्यात्स्वा
र्थे। प्राक्। प्राचीनं। प्रत्यक्। प्रतीचीनम्। अवाक्। अवाचीनम्। निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः। अर्वन्तमञ्चतीति। अर्वाक्। अर्वाचीनम्। अ
दिक्स्त्रियां किम्। प्राची दिक्। उदीची दिक्। दिग्ग्रहणं किम्। प्राचीना ब्राह्मणी। स्त्रीग्रहणं किम्। प्राचीनं ग्रामादाम्राः। जात्यन्ताच्छ बन्धुनि। ५।४।९।
ब्राह्मणजातीयः। बन्धुनि किम्। ब्राह्मणजातिः शोभना। जातेर्व्यञ्जकं द्रव्यं बन्धु। स्थानान्ताद्विभाषा सस्थानेनेति चेत्। ५।४।१०। सस्थानेन तुल्ये
न चेत्स्थानान्तमर्थवदित्यर्थः। पितृस्थानीयः। पितृस्थानः। सस्थानेन किम्। गोस्थानम्। अनुगादिनष्ठक्। ५।४।१२। अनुगादीत्यनुगादी स ए
वानुगादिकः॥

ति। अच इत्यकारलोपे कृते चाविति दीर्घः। एवमग्रेऽपि द्रष्टव्यं। प्राचीना ब्राह्मणीति। प्रकर्षेण अंचतीति प्राचीनेत्येवं क्रियानिमित्तको वा देशकाल
निमित्तको वा अयं शब्दः ब्राह्मण्यां वर्त्तते न तु दिशीति प्रतिषेधाभावः। प्राचीनमिति। प्राच्यां दिशीत्यर्थे दिक्शब्देभ्य इत्यस्ताति अंचेर्लुगिति लुक्। लुक्तद्धितलुकीति ङीपो लु
क्। तद्धितश्चासर्वविभक्तिरित्यव्ययत्वात् स्त्रीत्वाभावः। स्वभावकृते स्वभावान्नपुंसकत्वं। ब्राह्मणजातीय इति। द्येकयोरिति वद्भावप्रधानो ब्राह्मणशब्दः तस्य जातिशब्दे
न सह बहुव्रीहिः ब्राह्मणत्वजात्याधारभूतः पिंड इत्यर्थः। ब्राह्मणजातिरिति। षष्ठीतत्पुरुषः भावप्रधानेन सह कर्मधारयो वा। जातेर्व्यंजकमिति। वक्ष्यते जातिरस्मि

मोदकिकं शाष्कुलिकमिति। अचित्तहस्तिधेनोष्ठक्। आवसथ इति। उपसर्गे वसेरित्यथप्रत्ययः। निपातसमुदाय इति। उपदेशापारंपर्येण वर्तते वचनाच्चाप्रातिपदिकादेव प्रत्ययः ऐतिह्यमिति ह्यव्ययमिति कोशः। भेषजमिति। भिषज्यतेः कंड्वादियगन्तात्क्विप् भिषजामिदं भेषजं। अस्मादेव निपातनादेकारः। पितृदेवत्यमिति। पितरश्च ता देवताश्च पितृदेवताः पितृदेवताभ्य इदमिति विग्रहः। अर्घ्यमिति। मूल्ये पूजाविधावर्घ इत्यमरः। पूर्वोक्ता इति। त्नप्तनप्खप्रत्यया इत्यर्थः। आग्नीध्रमिति। अग्नी

मोदकिकम्। मोदकमयं। शाष्कुलिकम्। शाष्कुलीमयं। द्वितीयेऽर्थे मोदकिको यज्ञः। मोदकमयः। अनन्तावसथेतिहभेषजाञ्ञ्यः। ५।४।२३। अनन्त एवानन्त्यम्। आवसथ एवावसथ्यम्। इतिहेति निपातसमुदायः। ऐतिह्यं। भेषजमेव भैषज्यम्। देवतान्तात्तादर्थ्ये यत्। ५।४।२४। तदर्थ एव तादर्थ्यम्। स्वार्थे ष्यञ्। अग्निदेवतायै इदमग्निदेवत्यम्। पितृदेवत्यम्। पादार्घाभ्यां च। ५।४।२५। पादार्थमुदकं पाद्यम्। अर्घ्यम्। नवस्य नू आदेशः त्नप्तनप्खाश्च प्रत्यया वक्तव्याः। नूत्नम्। नूतनम्। नवीनम्। नश्च पुराणे प्रात्। पुराणार्थे वर्तमानात्प्रशब्दान्नो वक्तव्यः। चात्पूर्वोक्ताः। प्र णम्। प्रत्नम्। प्रतनं। प्रीणं। भागरूपनामभ्यो धेयः। भागधेयः। भागधेयम्। रूपधेयम्। । नामधेयम्। आग्नीध्रसाधारणादञ्। आग्नीध्रम्। साधा रणम्। स्त्रियां ङीप्। आग्नीध्री। साधारणी। अतिथेर्ञ्यः। ५।४।२६। तादर्थ्य इत्येव। अतिथये इदमातिथ्यम्। देवात्तल्। ५।४।२७। देव एव देवता। अवेः कः। ५।४।२८। अविरेवाविकः। यावादिभ्यः कन्। ५।४।२९। याव एव यावकः। मणिकः। लोहितान्मणौ। ५।४।३०। लोहित एव मणिर्लो हितको मणिः ॥ ९९

धः शरणं रणं चेति शेषिके ष्वृत्यादिं तत्त्वांतोदात्तं ततः स्वार्थेऽनेनाञ्। आद्युदात्तत्वं फलं। फलान्तरमप्याह। स्त्रियामि ति आग्नीध्रीति शालेति विशेष्यं। समानं धारणमस्याः साधारणी। अनेकं प्रत्य विशिष्टसंबंधा भूम्यादिः। पृषोदरादित्वात्समानस्य साभावः। विभाषाप्रकरणादञ् भावे टाप्। आग्नीध्रा शाला। साधारणा भूमिः। नन्वञभावपक्षे समानस्य सभावे ऽपि साधारणा इत्येव स्यान्नत्वनादिवृद्धिरिति चेदत्राहुः। साधारणादञित्यत एव नि पातनात्समानस्य सभावविधानादिष्टसिद्धिरिति। देवतेति तलन्तं स्त्रियां॥ ॥ ॥ ॥ ॥

पंचपाकाः दशपाकाः इत्यत्र क्रियामात्रगणने मा भूत्। क्रियाग्रहणं किमर्थं। यावता अभ्यावृत्तिः क्रियाया एव भवति साध्यार्थविषयत्वात्तस्याः न द्रव्यगुणयोः तयोस्तु सिद्धस्वभावत्वात् शब्दाभिधानात्। पुनः पुनरीडे पुनः पुनः स्थूल इत्यत्रापि गम्यमाना या भवति क्रियाया एवाभ्यावृत्तिर्न तु द्रव्यगुणयोरिति चेन्नैवं। उक्तार्थं क्रियाग्रहणस्यावश्यकत्वात्। एकस्य सकृच्च। अभ्यावृत्तिरिति न संबध्यते। एकशब्देन त्वेकैव क्रियाव्यक्तिराख्यायते तस्यास्त्वावृत्तेरसंभवात्। क्रियाग्रहणमिहार्थमावश्यकमन्यथात्रा दशतः संख्याः संख्येये वर्तंत इत्येको भुंक्ते इत्यत्रापि स्यादिति। इह साधु पचतीत्यादिवदेकं भुंक्ते इति प्रयोगे प्राप्ते सकृच्छब्दप्रयोगार्थमिदं सूत्रमिति कैयटः। एकः पाक इत्यत्र तु अनभिधानान्नेति काशिका संयोगांतस्येति। हल्ङ्यादिना सुलोप इति प्राचोऽयं ग्रंथोऽयुक्त इत्याह नत्विति। सुतिसीति साहचर्याद्विभक्तय एव तत्र गृह्यंत इत्यभिप्रेत्याह सि

॥ अन्नमयो यज्ञः। अपूपमयं पर्व। समूहवच्च बहुषु। ५।४।२२। सामूहिकाः प्रत्यया अतिदिश्यन्ते चान्नमयट्। मोदकाः प्रकृताः ॥ ॥

च इत्वेति। बहुधा दिवसस्य भुंक्ते इति शेषत्वविवक्षायां षष्ठी। कृत्वोर्थप्रयोगे कालेऽधिकरणे इत्यनेन षष्ठीति हरदत्तोक्तिस्तु नादर्तव्या। शेषाधिकारबलेनाप्युक्त्या समासनिवृत्तिफलकतया निर्देशं तेनोदाहरणमिति प्रागुक्तनिष्कर्षविरोधादित्याहुः। तत्प्रकृत। प्राचुर्येण प्रस्तुतमिति। यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढः तथापि वचनग्रहणाद्यं विशेषो लभ्यते वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थं। आद्ये इति। प्रथमांतात्प्रकृतो चोत्ये प्रत्ययः स्वार्थिकत्वात्प्रकृतितो लिंगं। अपूपमयमित्यपि क्वचित्पठ्यते। प्रस्तुतोऽपूपोऽपूपमयं क्वचित्स्वार्थिकाः प्रकृतितो लिंगवचनान्यतिवर्तंते। अस्मिन्पक्षे तद्ग्रहणं व्यर्थं। द्वितीये त्वावश्यकं प्रथमांतादेव प्रत्ययलाभार्थं। द्वितीये इति। अस्मिन्पक्षे उच्यमानता प्रकृततायां च प्रकृत्यर्थविशेषणं ल्युटोक्तमधिकरणं तु मयडर्थः। अत एव विशेष्यनिघ्नतात्र

ह०॥ ॥ अन्नमयो यज्ञ इति। अन्नं प्रकृतमुच्यतेऽस्मिन्नित्यर्थः ॥ ॥

मृदस्तिकन्। प्रत्ययस्यादित्येव सिद्धे इकारोच्चारणं प्रक्रियालाघवार्थम्। यद्यपि श्रवणार्थं च पंचभिर्मृत्तिकाभिः क्रीतः पंचमृत्तिकः पटः। सस्नौ। इह प्रशंसायां रूप
वित्यस्यानन्तरं वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि। मृदः सस्नौ तिकश्चेति वक्तुमुचितं। नन्वेवं सस्नौ विवक्तिकन्प्रत्ययोपि प्रशंसायामेवेत्यति प्रसंगः। तिकं श्चेत्यत्र प्रशंसा
यामिति निवृत्तमिति कल्पनायां मानाभावादिति वाच्यं। मृदः सस्नौ तिकन इति वक्तव्ये तिकनः पृथक्करणस्यैवात्र मानत्वात्। प्रशस्ता मृदिति। मृन्मृत्तिका प्रशस्ता तु मृत्सा।
मृत्स्ना च मृत्तिकेत्यमरः। नित्योयमिति। मृदित्येतावदुक्ते प्रशस्तत्वानवगमाद्विभाषात्र नानुवर्त्तत इति सस्नाविति स्वयं विधिः। नित्य एव अत एव सूत्रस्यान्यतरस्यां ग्रहणात्
सुतरामिति भावः। बह्वल्पार्थात्। बहूनीति। बहुभ्यो ददाति बहुशः। अल्पेभ्य अल्पशः। इत्याद्यपि बोध्यं। बह्वल्पार्थात्किं। गां ददाति। अश्वं ददाति। अर्थग्रहणात्पर्याये
भ्यो विशेषेभ्यश्च। भूरिशो ददाति। त्रिशः। कारकात्किं। बहूनां स्वामी। अल्पानां स्वामी। मंगलवचनमिति। बहुशो ददात्याभ्युदयिकेषु कर्मसु। अल्पशो ददात्यनिष्टेषु।

मृदस्तिकन्। ५।४।३९। मृदेव मृत्तिका। सस्नौ प्रशंसायाम्। ५।४।४०। रूपपोऽपवादः। प्रशस्ता मृत्। मृत्सा। मृत्स्ना। उत्तरसूत्रेऽन्यतरस्यांग्रहणान्नि
त्योऽयम्। बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्। ५।४।४२। बहूनि ददाति बहुशः। अल्पानि अल्पशः। बह्वल्पार्थान्मङ्गलामङ्गलवचनम्।
नेह बहूनि ददात्यनिष्टेषु। अल्पं ददात्याभ्युदयिकेषु। संख्यैकवचनाच्च वीप्सायाम्। ५।४।४३। द्वौ द्वौ ददाति द्विशः। माषं माषं माषशः। प्रस्थ
शः। परिमाणशब्दा वृत्तावेकार्था एव। संख्यैकवचनात्किम्॥ ९९ आभ्युदयिकेषु बहुदानं अनिष्टेष्वल्पदानं च मंगलं। तद्वैपरीत्येन दानं तु अमंगलं न भव

तीत्याशयेनाह नेहेति। अनिष्टेष्विति। भयादिनिमित्तेषु दानेषु। आभ्युदयिकेष्विति। अभ्युदयप्रयोजनेष्वग्न्याधेयादिषु। मूलपुस्तके तु मंगलामंगलवचनमिति प्रा
ग्णापठ्यते तत्रामंगलग्रहणं चार्थेत्याहुः। प्रायिकं चैतन्मंगलवचनमन्यत्रापि हि दृश्यते अपेतापोढमुक्तपतितापत्रस्तैरल्पश इति। कारकत्वं तु समसनक्रियां प्रति
चम्याः कर्मत्वात्तदभिधायित्वाच्चाल्पशब्दस्य तथा च व्याचक्षते अल्पा पंचमी समस्यत इति। आचार्येणेति शेषः। परिमाणशब्दा इति। तथा चैकवचनग्रहणेन एको
र्थः। उच्यते येनेत्यर्थके न वृत्तावेकार्थता नियता। परिमाणशब्दा एवंभूता इति भावः। माषं माषमिति। माषं ददातीत्युक्ते माषमात्रस्य हिरण्यादेर्दानमिति प्रतीयते न तु
माषाणामिति प्रतीतिरिति भवत्ययं वृत्तावेकार्थता नियमः। एवं प्रस्थादिरपि। घटादयस्तु नैवं। घटं ददातीत्युक्ते तु घटानां दानेऽप्यर्थस्यापि प्रतीयमानत्वादत एव च

वर्णे चानित्ये अनित्ये किं। लोहितं रुधिरं। लोहिता स्त्री अनित्यत्वमिह स्वसमानाधिकरणध्वंसप्रतियोगित्वं। अत एव रक्ते इत्युत्तरसूत्रं सार्थकं। लाक्षादिना रक्ते लोहित्यस्य यावद्द्रव्यमवस्थानेन नित्यतया पूर्वेणासिद्धेः। लोहितक इति। कोपेन लोहितो यः पुरुषस्तस्मिन्नेव क्षणाद्धर्ध्वं कोपशान्तौ लोहितो नश्यतीति भवत्यत्रानित्यो वर्णः। प्रातिपदिकात्तद्धिता इति पक्षस्य प्रतिपद्विधानमात्रेणापवादत्वमिति पक्षस्य चाश्रयणे वर्णादनुदात्तादित्यतः प्रागेव। कनि कृते लोहितिकेति रूपं न स्यादित्याशङ्कायामाह लिंगबाधनं वेति। लोहितादित्युपलक्षणं। एतिका एनिकेत्यादेरपि संग्रहत्वात्। एवं तान्तद्धिता इति पक्षस्य निरवकाशत्वमपवादत्वमिति पक्षः।

वर्णे चानित्ये। ५।४।३१। लोहितकः कोपेन। लोहितात्लिङ्गबाधनं वा। लोहितिका। लोहिनिका॥ रक्ते। ५।४।३२। लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात्कन्स्यात्। लिङ्गबाधनं वेत्येव। लोहितिका। लोहिनिका शाटी। कालाच्च। ५।४।३३। वर्णे चानित्ये रक्ते इति द्वयमनुवर्तते। कालक मुखं वैरस्येण। कालकः पटः। कालिका शाटी॥ विनयादिभ्यष्ठक्। ५।४।३४। विनय एव वैनयिकः। सामयिकः। उपायाद्ध्रस्वत्वं च। औपयिकः। वाचो व्याहृतार्थायाम्। ५।४।३५। सन्दिष्टार्थायां वाचि विद्यमानाद्वाक्शब्दात्स्वार्थे ठक्स्यात्। सन्देशवाग्वाचिकं स्यात्। तद्युक्तात्कर्मणोऽण्। ५।४।३६। कर्मैव कार्म्मणम्। वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः। ओषधेरजातौ। ५।४।३७। स्वार्थेऽण्। औषधं पिबति। अजातौ किम्। ओषधयः क्षेत्रे रूढाः। प्रज्ञादिभ्यश्च। ५।४।३८। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः॥ ८९

स च कुत्स्यत्वात्तदाश्रयत्वेऽनु वर्णादनुदात्तादित्यस्यानन्तरमेव कनः प्रवृत्तेः कन्प्रत्ययस्य उत्लिंगे सावकाशतया निरवकाशत्वाभावाच्च वार्तिकमिदं न कर्त्तव्यं। अत एव ज्ञापग्रहणं व्यर्थमिति संपीति रूपं प्रबलमिति च मनोरमादावुक्तमिति दिक्। उपायेति। उपायशब्दष्ठकं लभते ह्रस्वत्वं चेत्यर्थः। अकस्मान्कुर्वीत परोक्षते सत्तु दातो नत्तां तस्ते न कादेशो न भ्रव्ययानां भमात्रे टिलोपः। आकस्मिकं। वाचो व्याहृता। व्याहृतार्थायां किं। मधुरा वाग्देवदत्तस्य। वाचिकमिति। अतिवर्तन्ते स्वार्थिकाः क्वचिल्लिंगमिति नपुंसकत्वं। प्रज्ञ एवेति। प्रजानातीति प्रज्ञः। इगुपधज्ञेति कः। ततः स्वार्थेऽण् प्राज्ञः। प्राज्ञीति। टिड्ढेति ङीप्। प्रज्ञानं प्रज्ञा। आतश्चोपसर्गे इत्यङ्। टाप्। प्रज्ञा विद्यते यस्याः सा तु प्राज्ञा भवति। प्रज्ञाश्रद्धा

खरटखरटाकरोतीतिद्वित्वपररूपादिप्राग्वत्। ध्वजवराद्धीदित्युक्तेत्वत्रडाच् नस्यात्। नंत्यनार्द्धेद्यचर्किंतुत्र्यच्। अनेकाच इत्येवेति। ध्वजवराद्धीदित्यपनीयेत्यर्थः
पटितीति। अव्यक्तानुकरणास्यात इताविति पररूपं। नन्वत्रकरोतिनायोगोदुर्लभ इतिशब्देनव्यवधानात्तथापिनिता वितिव्यर्थमिति चेदत्राहुः इतिशब्देनकरो

खरटखरटाकरोति। त्रपटत्रपटाकरोति। अनेकाच इत्येवसूत्रयितुमुचितम्। एवंहिडाचीतिपरसमम्येवद्वित्वेसुवचेत्यवधेयम्। अनितौ किम्। पटि
तिकरोति। कृञोद्वितीयतृतीयशम्ववीजात्कृषौ। ५।४।४८। द्वितीयादिभ्योडाच्स्यात्कृञएवयोगेकर्षणोर्थे वहुलोक्तेरव्यक्तानुकरणादन्यस्यडाचि
नद्वित्वम्। द्वितीयं तृतीयंवाकर्षणंकरोति। द्वितीयाकरोति। तृतीयाकरोति। शम्वशब्दः प्रतिलोमे। अनुलोमकृष्टं क्षेत्रंपुनः प्रतिलोमंकर्षति। शम्वा
करोति। वीजेनसहकर्षति। वीजाकरोति। संख्यायाश्चगुणान्तायाः। ५।४।५९। कृञोयोगेकृषौडाच्स्यात्। द्विगुणाकरोतिक्षेत्रम्। क्षेत्रकर्मकन्द्वि
गुणंकर्षणंकरोतीत्यर्थः। समयाच्चयापनायाम्। ५।४।६०। कृञोयोगेडाच्स्यात् समयाकरोति कालंयापयतीत्यर्थः। सपत्रनि
ष्पत्रादतिव्यथने। ५।४।६१। सपत्राकरोतिमृगम्। सपुङ्खशरप्रवेशेनेनसपत्रंकरोतीत्यर्थः। निष्पत्राकरोति। सपुङ्खस्यशरस्यापरपार्श्वेनिर्गमनान्निःप
त्रंकरोतीत्यर्थः। अतिव्यथने किम्। सपत्रन्निष्पत्रम्वाकरोतिभूतलम्। निष्कुलान्निष्कोषणे। ५।४।६२। निष्कुलाकरोतिदाडिमम्। निर्गतंकुलमन्त
रवयवानांसमूहोयस्मादितिवहुव्रीहेर्डाच्। सुखप्रियादानुलोम्ये। ५।४।६३। सुखाकरोति। प्रियाकरोतिगुरुम्। अनुकूलाचरणेनानन्दयतीत्यर्थः।
दुःखात्प्रातिलोम्ये। ५।४।६४। दुःखाकरोति। स्वामिनम्पीडयतीत्यर्थः। शूलात्पाके। ५।४।६५। शूलाकरोतिमांसम्। शूलेनपचतीत्यर्थः। सत्यादशप
थे। ५।४।६६। सत्याकरोतिभाण्डंवणिक्। क्रेतव्यमितितथ्यंकरोतीत्यर्थः। शपथेतुसत्यंकरोतिविप्रः। मद्रात्परिवापणे। ५।४।६७। मद्रशब्दोमङ्गला
र्थः। परिवापणंमुण्डनम्। मद्राकरोतिकुमारंमाङ्गल्यमुण्डनेनसंस्करोतीत्यर्थः। भद्राच्चेतिवक्तव्यम्। भद्राकरोति। अर्थःप्राग्वत्। परिवापणेकिं
म् भद्रङ्करोतिभिद्रङ्करोति॥ ॥ इतितद्धितप्रक्रियासमाप्ता ॥ ॥

त्यर्थगतप्रकारएवपराम्रुश्यतइत्येवंप्रकारेणाकरोतीति। तथाचपटश

घटंघटमिति। घटादयो हि जातिशब्दा नैकार्था भवंति जातियोगस्यैकानेकसाधारणत्वात् किं त्वभेदैकत्वसंख्यां उपाददते। एतच्च सर्वं नयादित्यमतानुसारेणोक्तं।
मनमते तु जातिशब्देभ्योपि भवत्येव तथा च जश्शसोरिति सूत्रे तेनोक्तं जसा सहचरितस्य शसो ग्रहणाद्धि न भवति। कुंडशो ददातीति वनशः प्रविशतीति तस्याप्रमार
यः। जातिशब्दोपि यद्यर्थप्रकरणादिना वृत्तावेकार्थो भवति तदा भवत्येव ततोपि शसिति। अथ कथमेकैकशः पितृसंयुक्तानीति। द्विवचनशसोः सहप्रयोगर्

घटं घटं ददाति। वीप्सायां किं। द्वौ ददाति। कारकादित्येव। द्वयोर्द्वयोः स्वामी। प्रतियोगे पञ्चम्यास्तसिः। ५।४।४४। प्रतिना कर्मप्रवचनीयेन योगे
या पञ्चमी विहिता तदन्तात्तसिः स्यात्। प्रद्युम्नः कृष्णतः प्रति। आद्यादिभ्य उपसंख्यानं। आदौ। आदितः। मध्यतः। अन्ततः। पृष्ठतः। पार्श्वतः।
आकृतिगणोयं। स्वरेण। स्वरतः। वर्णतः। अपादाने चाहीयरुहोः। ५।४।४५। अपादाने या पञ्चमी तदन्तात्तसिः स्यात्। ग्रामादागच्छति ग्रामतः। अ
हीयरुहोः किं। स्वर्गाद्धीयते। पर्वतादवरोहति। अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः। ५।४।४६। अकर्तरि तृतीयान्ताद्वा तसिः स्यात्। अतिक्र
म्य ग्रहोतिग्रहः। चारित्रेणातिगृह्यते। चारित्रतोऽतिगृह्यते। चारित्रेणान्यानतिक्रम्य वर्तत इत्यर्थः। अव्यथनमचलनम्। वृत्तेन न व्यथते वृत्ततो न
व्यथते। वृत्तान्न चलतीत्यर्थः। क्षेपो। वृत्तेन क्षिप्तः। वृत्ततः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः। अकर्तरीति किम्। देवदत्तेन क्षिप्तः। हीयमानपापयोगाच्च।
५।४।४७। हीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः। वृत्तेन हीयते वृत्ततो हीयते। वृत्तेन पापः वृत्ततः पापः। क्षेपस्याविवक्षायामिदं। क्षेपे तु पूर्वे
णा सिद्धं। अकर्तरि किम्। देवदत्तेन हीयते। षष्ठ्या व्याश्रये। ५।४।४८। षष्ठ्यन्ताद्वा तसिः स्यान्नानापक्षसमाश्रये। देवा अर्जुनतोऽभवन्। आदित्याः क
र्णतोऽभवन्। अर्जुनस्य पक्षे इत्यर्थः। व्याश्रये किम्। वृक्षस्य शाखा। रोगाच्चापनयने। ५।४।४९। रोगवाचिनः षष्ठ्यन्ताद्वा तसिः स्याच्चिकित्सायां। प्रवा
हिकातः कुरु। प्रतीकारमस्याः कुर्वित्यर्थः। अपनयने किम्। प्रवाहिकायाः प्रकोपनं करोति॥ ९९ तिष्ठेत्। कुंदो ववृषयः कुर्वंतीति हरदत्तः। अत एव सुप इ

ति सूत्रे एकैकश इति प्राचो ग्रंथः प्रामादिक इत्यवोचामेति मनोरमायामिह स्थितं। वस्तुतस्तु एकैकमेव एकैकशः स्वार्थे शसन्तु वीप्सायां एकां कपिलामेकैकशः सहस्र
शत्वो दत्वेति भाष्यादिति तान्येकवचने त्यादि सूत्रे वक्ष्यामः। द्वौ ददातीति। कथं तर्हि अव्रतानाममंत्राणां जातिमात्रोपजीविनां ॥ ॥ ॥

सर्वस्य द्वे॥ सर्वशब्दस्य द्वे भवत इति विधिस्तु न शंक्यः। किंतु नित्यवीप्सयोरित्येवमादीनां विधेयकार्यिणोर निर्देशेन साकांक्षत्वात्स्वरितत्वाच्चाधिकारोयं तत्सह। इत्यधिकृत्येति। एतदर्थरूपमधिकृत्येत्यर्थः। स्वरूपग्रहणं तु न भवति नाम्रेडितस्यांत्यस्य तु वेतिलिंगात्। स्वरूपग्रहणे हि सति द्विरुक्तसर्वशब्दस्यैव परमाम्रेडितं स्यात्तत्तु द्विरुक्तस्याव्यक्तानुकरणशब्दस्य परमितिनाम्रेडितस्येति पररूपनिषेधोंत्यस्य तकारस्य विकल्पविधिश्च कथं संगच्छेत्। ननु नित्यवीप्सयोरित्यादौ पदस्येति वक्ष्यमाणमपकृष्य पदस्यैव द्वित्वं विधीयत इति किमनेन सर्वस्येति ग्रहणेनेति चेदत्राहुः। स्वादिष्विति पदसंज्ञामादाय पचद्भ्यामित्यादौ प्रकृतिभागमात्रस्य द्विर्वचनं स्यात्कृते तु सर्वस्येति ग्रहणे सर्वशब्दोऽवयवकात्स्र्न्ये वर्तते इति सर्वावयवोपेतस्य द्वित्वं न तु कश्चिदवयवो वर्ज्यत इत्यर्थलाभादिष्टसिद्धिरिति। इहेदं इत्यस्य संख्येयापेक्षायां शब्दरूपे गृह्येते शब्दानुशासनप्रस्तावात्। सर्वस्येति स्थानषष्ठी सोयं स्थाने द्विर्वचनपक्षः। यदि तु उच्चारणे संख्येयेत दा स्थान्यादेशभावो न संभवति। निवृत्तिधर्मा हि स्थानी भवति सर्वे चेत् निवृत्तकस्योच्चारणं स्यादतः सर्वस्येत्यध्याहृतोच्चारणशब्दापेक्षया कर्तृकर्मणोः कृतीति कर्मणि षष्ठी

## ॥ सर्वस्य द्वे॥ ८।१।१॥ इत्यधिकृत्य॥

सर्वं द्विरुच्चारयेदिति फलितोर्थः सोयं द्विःप्रयोगो द्विर्वचनमिति पक्षः। ननु आद्यपक्षे स्थानिवद्भावेन समुदायस्यैव पदत्वं स्यान्न त्ववयवयोस्ततश्च पदकार्याणि न स्युरनचेष्टापत्तिः अपचन्नपचन्नित्यत्र ङमुट्। वृक्षान्वृक्षानित्यत्र पदांतस्येति णत्वनिषेधः अग्रेऽग्रे इत्यत्र एङः पदांतादिति पूर्वरूपत्वं च न सिध्येत्। किंचापरं तत्वप्रयुक्तकार्याणि स्युस्तद्यथा पयः पयः इत्यत्र सोपदादाविति सत्वं स्यात् पपीः पपीरित्यत्र णः ष इति षत्वं स्यात्। पाशकल्पकाम्येष्विति वृत्तिग्रंथमवष्टभ्य कथंचित्सत्वषत्वपरिहारेप्यश्रौताश्रौतेत्यत्र अतो गुण इति पररूपं स्यादिति चेदत्राहुः। यदि प्रत्यस्तमितावयवभेदः समुदाय एक एवादेशः स्यात्तद्वे इति वचनमनुपपन्नं स्याद्‌ द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते। तत्र स्थानिवद्भावेन समुदायस्य पदत्वे सत एव चावयवयोरपीति न कश्चिद्दोष इति। स्यादेतत्। द्विःप्रयोगपक्षे प्रत्येकं पदसंज्ञायां सिद्धायामपि समुदायस्य सा न सिध्यति। ततश्च देवदत्तः पचति पचतीत्यादौ तिङ्ङतिङ इति सर्वस्य पदस्य निघातो न सिध्यतीति चेदत्राहुः। पचति पचतीत्यादौ हि स एव धातुः प्रत्ययश्चात्र द्विः पठ्यते ततश्च यस्मात्प्रत्ययो विहितस्तदादि तदंतमिति विधीयमा

त्वस्यार्थद्वारापोगोस्त्येवेति। वीजेनसहेति।। ननुवीजेनसहभूतलस्यकर्षणेवीजानामपिकर्षणप्रसंगाद्विवक्षितार्थोनसिध्यतीतिचेदत्राहुः। वृत्तिविषयेवी
जशब्दोवीजावापसहितेविले। खनेवर्त्तते। तथाचवीजावापसहितेविलेखनंकरोतीत्यर्थ इति समयाच्चा। कालंयापयतीत्यर्थइति। कर्तव्यस्यावसरप्राप्तिस्स
मयस्तस्यातिक्रमणंयापनेवृत्तिर्ग्रंथमुपादायहरदत्तआह। अद्यमेपारवश्यंश्वःपरश्वोवाअस्यसमयइत्येवंवहुशइदिवसेषुयआहसएवमुच्यतइति। सपत्रनि
ष्पत्रात्। लक्ष्येशरान्यतेत्यनेनेतिपत्रं। शराणांपुंखगतोवर्हः सपत्रंनिष्पत्रंवाकरोतीति। पत्राणिपर्णानितत्सहितंतद्रहितंवेतियथासंभवमर्थः। निष्कुलात्।
निष्कोषणमंतरवयवानांवहिर्निष्कासनंनिष्कोषणंकिंनिष्कुलंकरोतिशत्रुं। सूलात्याके। पाकेकिं। सूलंकरोतिकदन्नं। सूलमुदररोगः। सत्यादशपथेसत्
सुसाधुसत्यं। तत्रसाधुरितियत्प्रत्ययःतत्रसाधुरितिप्राग्घितीयत्त्वाच्चातिप्राप्तेश्मत्एवनिपातनात्यः। श्वेतोदात्तोयं। सत्येनोत्तेमित्ताभूमिः। ऋतेनचसत्यंचेत्यत्रतथादर्शनात्। सत्या
करोतीतिभांडरत्नादिद्रव्यजातंक्रेतव्यमिति। मयैवतत्क्रेतव्यमितिव्यापरीक्षादिनासत्यंकारद्रव्यप्रदानेनचदृढंकरोतीत्यर्थः। तथ्यमिति। तथैवृतथ्ये।
पाद्यार्घाभ्यांचेतिचकारस्यानुक्तसमुच्चयार्थत्वात्त्वार्थेयत्परिवापणामिति। कर्मव्यापारमात्रवाचिनोवपेर्हेतुमण्णिच्। वित्स्विति हरदत्तः। कर्मव्यापारः
फलंतस्यकर्मनिष्ठत्वात्तथाचफलमात्रवाचिनइत्यर्थः। फलितइत्याहुः मांगल्यमुंडनेनेति। चौलदीक्षादौ। भद्राच्चेति। भद्रादित्यर्थेग्रहणामितिव्याख्या
नेनमंगलादिभ्योपिस्यादितिवोध्यं। इतितद्धितप्रक्रिया ॥ ॥

कृत्वेसोरुत्यत्तौतस्यलुकिचसुवं तत्त्वंप्रातिपदिकत्वं चसंभवंत्येवेतिवाच्यं।यत्रसंघात्ते पूर्वोभागःपदंतस्यचेद्भवतिसमासस्यैवेतिनियमेनप्रातिपदिकत्व
स्यासंभवेनसुवंतत्वस्याप्यसंभवात्त। नचद्विःप्रयोगपक्षेसएवधातुः प्रत्ययश्चद्विःप्रयुक्तइतिसमुदायस्यापिपदसंज्ञाप्रवर्त्ततेइत्यधुनैवोक्तत्वात्तुनःपु
नरितिसमुदायस्यसुवंतत्वमस्त्येवेतिशंक्यं।अंतरंगत्वात्तसोलुकिप्रकृतिभागस्यद्विर्वचनेसतियस्मात्प्रत्ययोविहितस्तदादितदंतमिति विधीयमानायाःप
दसंज्ञायाःसमुदायस्यदुर्लभत्वात्।ततश्चैकपद्याभावेपुनःपुनर्जायमानाप्रणीत्यादाववग्रहोपिनसिध्येदिति।आभीक्ष्ण्यमितितद्धिक्रियानिष्ठधर्मः।।
तेनद्योतनार्थेद्वित्वंक्रियाप्रधानानामेवन्याय्यं।क्रियाप्राधान्यंचाख्यातेस्तिकृद्विशेषेच।।अव्ययकृतोभावेइतिवक्ष्यमाणत्वादितिभावः।केचित्तुक्रियाप्रधा
नानामेवद्वित्वेपरिगृहीतसाधनायाएवक्रियायाःव्यवहारोपयोगित्वात्तदनभिधानाच्चधातुमात्रस्यद्वित्वंनभवति।किंतुतादृशक्रियाभिधायिनःपदस्यैवस्या
दितिपदस्येत्यस्यापकर्षणाभावेपिनक्षतिरित्याहुस्तच्चिंत्यं।उक्तरीत्यानानाकारकविशिष्टक्रियासमर्थस्यवाक्यस्यैवद्वित्वापत्तेः।किंचभावार्थकलकारांत
नामव्ययकृतांचभवदुक्तरीत्याद्वित्वंनस्यात्।ननुतत्रनित्यतावगत्यनंतरंपदांतरैःसाधनाकांक्षापरिपूर्यतइतिभूयतेपत्वेत्यादिपदानांद्वित्वंस्यादेवेतिचेत्तर्हि
तत्रैवधातुमात्रस्यद्वित्वेकेनवार्यतां।किंचात्तद्देवकर्त्रकर्मलकारस्थलेपिधातुमात्रद्वित्वंदुर्वारमितिपदस्येत्यपकर्षणमावश्यकमेवेतिदिक्।वीप्सायामि
ति।व्याप्तुमिच्छावीप्सा।व्याप्तिप्रतिपिपादयिषेतियावत्।साचप्रयोक्तुर्धर्मः।आबाधवत्।गतगतइत्युक्तेप्रियस्यचिरगमनादिनापीडितोवाक्यंप्रयुंक्तेइति।यथा
प्रतीपत्ततथावृक्षंवृक्षंसिंचतीत्यादावपिव्याप्तिंबोधयिषोरिदंवाक्यमित्यवगमात्।शाब्दबोधविषयस्तुव्याप्तिरेव।तथाचनित्यव्याप्त्योरित्येवसूत्रयितुंश
क्यं।व्याप्तिरिहकार्त्स्न्यंतच्चाधिकारिकं।सर्वेब्राह्मणाआमंत्रितास्त्यादौयथानहिजगतीतलेविद्यमानाब्राह्मणाःसर्वेपिकेनचिदामंत्रयितुंशक्यंतइति।
मस्य।स्वजातीयब्राह्मणपरतयातत्रसंकोचोयथाभ्युपेयतेतथैवात्रापिसकलवृक्षसेचनसामर्थ्यंकस्यापिमनुष्यस्यनास्तीतियत्रवाटिकादौवृक्षसेचना
मधिकारस्तद्वाटिकास्थवृक्षाणामेवकार्त्स्न्यंवृक्षंवृक्षंसिंचतीत्यादौगम्यतेइत्यभ्युपेयं।यत्रतुसंकोचेकारणंनास्तितत्रासंकोचइष्टएव।जातोजातोनिंन
ध

पदसंज्ञासमुदायस्यापिप्रवर्त्तते।तेनावग्रहादिः सिध्यतीति॥ ॥नित्यवीप्सयोः॥नित्यमिहपौनःपुन्यमित्याह।आभीक्ष्ण्यइति।द्योत्यइति।नपुंसकमनपुंसके
नेत्येकशेषः एकवद्भावश्चबोध्यः।पदस्येतितेननित्यतायांविधीयमानंद्विर्वचनंधातुमात्रस्यनभवति॥किंचक्रियासमभिहारेधातोर्विहितोयङंतरंगःपदस्योच्य
मानंद्विर्वचनंतुबहिरंगमितियङ्नबाधते।अन्यथाहिपौनःपुन्यंभृशार्थश्चक्रियासमभिहारइतिभृशार्थेसावकाशोऽयंयङ्पौनःपुन्येपरत्वाद्द्विर्वचनेनबाध्येत।अन
मानंद्विर्वचनंतुबहिरंगमिति।सगतिकस्यद्वित्वेएकपद्यं
चपदस्यद्विर्वचनाभ्युपगमेसगतिकस्यप्रपचतिप्रपठतीत्यादेर्द्विर्वचनंनस्यादितिवाच्यं।वार्त्तिककारवचनात्तत्सिद्धेः।अन्नवदंति।सगतिकस्यद्वित्वेएकपद्यं

नित्यवीप्सयोः।८।१।४।आभीक्ष्ण्येवीप्सायांचद्योत्येपदस्यद्विर्वचनंस्यात्।आभीक्ष्ण्यंतिङन्तेष्वव्ययसंज्ञककृदन्तेषुच।पचतिपचति।भु
क्त्वाभुक्त्वा।वीप्सायां।वृक्षंवृक्षंसिञ्चति।ग्रामोग्रामोरमणीयः।परेर्वर्जने।८।१।५।परिपरिवङ्गेभ्योवृष्टोदेवः।वङ्गान्परिहृत्येत्यर्थः।परेर्वर्ज
नेवावचनम्।परिवङ्गेभ्योवृष्टोदेवः।उपर्यध्यधसःसामीप्ये।८।१।७।उपर्युपरिग्रामम्।ग्रामस्योपरिष्टात्समीपेदेशेइत्यर्थः।अध्यधिसुखम्।
सुखस्योपरिष्टात्समीपकालेदुःखमित्यर्थः।अधोऽधोलोकं।लोकस्याधस्तात्समीपदेशेइत्यर्थः।वाक्यादेरामन्त्रितस्याऽसूयासम्मतिकोपकु
त्सनभर्त्सनेषु।८।१।८।असूयायाम्।सुन्दरसुन्दरवृथातेसौन्दर्यम्।सम्मतौ।देवदेववंद्योसि।कोपे।दुर्विनीत दुर्विनीतइदानींज्ञास्यसि।कुत्स
ने।धानुष्कधानुष्कवृथातेधनुः।भर्त्सने।चौरचौरघातयिष्यामित्वाम्॥ ((नास्त्येवस्थानिनःपदत्वाभावेनआदेशेपितस्यदौर्लभ्यात्।द्विःप्रयोग

पक्षेतुप्रथमगतिंविहायावशिष्टस्यसमुदायस्यपदत्वंप्राप्तं।तस्मिन्सत्यपिनक्षतिः।वस्तुतस्त्विहस्थानेद्विर्वचनपक्षएवमुख्यःस्थानिनःसुबंतत्वेनादेशस्या
पिसुबंतत्वात्सुबंतात्तद्धितइतिपक्षेसमुदायात्ष्यञ्ठञोःसंभवेनपौनःपुन्यंपौनःपुनिकइतिरूपसिद्धेः।प्रातिपदिकात्तद्धितइतिपक्षाभ्युपगमेपिश्रूयमाण
प्रत्ययांतस्यैवप्रातिपदिकत्वनिषेधात्पुनरित्यस्यैवप्रातिपदिकत्वेनादेशस्यापिप्रातिपदिकत्वात्पौनःपुन्यमित्यादिसिध्यत्येव।द्विःप्रयोगपक्षेत्वंतरंगत्वाद
व्ययात्सुपोलुकिद्वित्वंप्रवर्त्ततइतिसमुदायस्यसुबंतत्वाभावात्प्रातिपदिकत्वाभावाच्चष्यञ्ठञोनभवतः।नचार्थवदधातुरित्यादिनासमुदायस्यप्रातिपदि

एकं बहुव्रीहिवत्। द्विरुक्तमित्यनुवर्त्तते। तच्चानुवाद्यसमर्पकं तदाह। द्विरुक्तमिति। तेनेति। यद्यप्येतौ बहुव्रीहौ विशिष्य न विहितौ तथापि तत्र दृष्टावित्येतावत्तैवातिदिश्येते
तदेकं बहुव्रीहिवत्स्यादित्यनुवर्त्तते। तच्चानुवाद्यसमर्पकं तदाह। द्विरुक्त इति। तेनेति। यद्यप्येतौ ...
तरत्तिभावः सुब्लोपपुंवद्भावाविति। पूर्वपदप्रकृतिस्वरश्च बोध्यः समुदायात्सुविति। तच्चैकवचनमेवेति भेतरंगेकसंख्यावरुद्धो द्विरुक्तार्थः संख्यान्तरे निराकांक्षः
तदर्थं इतिभावः। सुब्लोपपुंवद्भावाविति। पूर्वपदप्रकृतिस्वरश्च बोध्यः समुदायात्सुविति। तच्चैकवचनमेवेति ...
तरत्तिभावः सुब्लोपपुंवद्भावाविति। पूर्वपदप्रकृतिस्वरश्च बोध्यः। समुदायात्सुविति। तच्चैकवचनमेवेति। भेतरंगेकसंख्यावरुद्धो द्विरुक्तार्थः संख्यान्तरे निराकांक्षः
तिप्रागेवोक्तत्वात्पूर्वभागे इति नत्वुत्तरभागेपि तथा हि द्विधा यत्र पुंवद्भावः सर्वनाम्नो वृत्तिमात्र इति वा स्त्रियाः पुंवदिति वा। तत्राद्यः पूर्वभागस्यैव भवतीति त्यकादि
स्तूक्तो द्वितीयस्तु समानाधिकरणे परे विधीयते। न चोत्तरभागस्य समानाधिकरणपरत्वमस्तीति भावः। अवग्रहे विशेष इति। एकैकयेत्येकएकयेति भवतीत्यर्थः।
। एकैकस्मै इति। ननु सुब्लोपपुंवद्भावावि बहुव्रीहौ सर्वनामसंज्ञाभावोपि दृष्ट इत्ययमपि बहुव्रीहिवद्भावेनातिदिश्यतां तथा च स्मायादेशोत्र दुर्लभ इति चे

एकं बहुव्रीहिवत्। ८।१।९। द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात्। तेन सुब्लोपपुंवद्भावौ। एकैकमक्षरम्। इह द्वयोरपि सुपोर्लुकि कृते बहुव्रीहि
वद्भावादेव प्रातिपदिकात्समुदायात्सुप्। एकैकया आहुत्या। इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः। न बहुव्रीहावित्यत्र न बहुव्रीहिग्रहणमु
ख्यबहुव्रीहिलाभार्थम्। तेनातिदिष्टबहुव्रीहौ सर्वनामतास्त्येवेति भाष्यम्। वस्तुतस्तु भाष्यमते प्रत्याख्यानमेवतत् सूत्रमत्तेपि बहुव्रीहावयं
लौकिके विग्रहे निषेधकं न बहुव्रीहावितीहातिदेशशंकैव नास्ति। एकैकस्मै देहि। आबाधे च। ८।१।१०। पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च।
गतगतः विरहात्पीड्यमानस्येयमुक्तिः। बहुव्रीहिवद्भावात्सुब्लुक्। गतगता। इह पुंवद्भावः॥ ९९ इत्याहुः। सुब्लोपपुंवद्भावावित्र सर्वनामसंज्ञाभावः

शास्त्रेण न दृष्टः किंतु बहुव्रीहेर्गौणत्वात्स्वेवाचकत्वं न संभवतीति तद्भावो दृष्ट इति नापमतिदिश्यते। न बहुव्रीहावितिशास्त्रं तु लौकिकवाक्ये निषेधकं तत्तु बहुव्री
हावित्युक्तत्वादिति। आबाधे चेति। इहेति बहुव्रीहिवद्भावादित्यनुषज्यते। तथा च स्त्रियाः पुंवदिति प्रवर्त्तते। न च द्विरुक्तस्य परस्योत्तरपदं नेति वाच्यं। बहुव्रीहिवदित्य
तिदेशबलेनैव उत्तरपदत्वस्यापि लाभात्। ननु बहुव्रीहिवद्भावेनोत्तरपदत्वलाभे सति नन्नेस इत्र नलोपः कस्मान्न भवति। उच्यते। नलोपो नञ इत्यत्र उत्तरपदे इ
तिवर्तते। नञ इति च कार्यिणो निर्देशः तत्र साक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते। यथा भ्रस्जहदोभ्रस्जह इति। अत्र रेफस्य चोरहाभ्यां इति द्वित्वप्र
संगे आकारे उक्तेन भोरहो कार्यिणो किंतु निमित्तमतो द्विर्वचनस्येति॥ नन्वेवमपि धूर्धूः पथ्याः पथ्या इत्यादौ ऋक्पूरब्धूः इति समासांतः स्यादिति चेन्न समासा

नशुष्येतीतियथा।नचैवं वृक्षमित्यादौ बहुवचनप्रसंगः बहूनांभानेपि बहुत्वसंख्यायास्तत्राभानात्। प्रत्येकनिष्ठमेकत्वमेव हितत्रभासत इत्यादि मनोरमायां स्थि
ता। वृक्षंवृक्षमितिसमुदायस्यतु प्रातिपदिकत्वाभावाद्बहुवचनस्य प्रसंगएव नास्ति। नवार्थवदधातुरित्यनेन प्रातिपदिकत्वं शंक्यं। यत्र संघाते पूर्वोभागः पदं त
स्यचेद्भवति समासस्यैवेति नियमात्। नचाष्टमिकं द्विर्वचनमादेशरूपमिति संघातो न भवतीत्यपि शंक्यं द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदा
देशत्वेन विधीयेते इति प्रागुक्तत्वात्। नन्वेवमपि सरित्सरित् योषायोषेत्यादौ बहुवचनोत्पत्तिर्दुर्वारैव। सरिदित्यादिस्थानिनः प्रातिपदिकत्वसंभवेन तदादेशस्या
पि सरित्सरिदित्यादेः स्थानिवद्भावेन प्रातिपदिकत्वसंभवादिति चेदत्राहुः। अंतरंगैकसंख्यावरुद्धो हि रुक्तार्थः संख्यांतरे निराकांक्ष एव न हि वस्तुगत्या बहुत्व
मस्तीत्येतावतैव तस्य शाब्दबोधमापादयितुं शक्यते। असत्त्वार्थकेष्वपि तदापत्तेः। न हि शयनवाहुल्याभिप्रायेणादेवदत्तेन शय्यंत इति भावे कश्चित्प्रयुंक्ते। त
त्रायोग्यं तदिति चेत्समं प्रकृतेपि। अत्र च लिंगं एकैकस्य प्राचामिति निर्देश इति। परेर्वर्जने। अत्र वार्तिकं परेर्वर्जने समासेनेह परित्रिगर्त्तं वृष्टो देवः वेति च व
क्तव्यं। तथा चापहरेः परिहरेः संसार इति कारके दृष्टाहर्तापरिवंगेभ्य इति। अपपरी वर्जन इति कर्मप्रवचनीयसंज्ञायां पंचम्यपाङ्परिभिरिति पंचमी। उपर्यध्य
सामीप्यं प्रत्यासत्तिः तच्च कालकृतं देशकृतं वा। अध्यधि सुखमिति। कालकृतस्योदाहरणमिदं। सामीप्य इति किं। उपरि चंद्रमाः। उपरि शिरसो घटं धारयतीत्यत्र
वस्तुतो विद्यमानमपि सामीप्यं न विवक्षितं किंत्वौत्तराधर्यमेव केवलं विवक्षितमिति द्विर्वचनं न भवति। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं। अत्र चोपज्ञोप
त्रो मतसाद्या विख्यासायामिति सन्नंतप्रयोगो ज्ञापक इत्याहुः। वाक्यादेः। सुंदरसुंदरादि। स्वरितमाम्रेडितेसूयासंमतिकोपकुत्सनेषु आम्रेडितं भर्त्सन इति सूत्रा
भ्यां यथायथं प्राप्तः प्लुतः वैकल्पिकत्वान्नेह कृतः। उक्तं हि प्राक् सर्वः प्लुतो वैकल्पिक इति। नन्वत्र कोपासूयाभ्यां पृथक्कुत्सनभर्त्सनग्रहणमपार्थकं नत्यसूयां
विनाकुत्सयते न वा अकुपितो भर्त्सयत इति चेदत्राहुः गुरवो हि हितैषित्वादकुपिता अपि भर्त्सनं कुर्वंति विनाप्यसूयया कुत्सां कुर्वंतीति पृथक्तया निर्देशः सूत्रका
रेणाकृतः सामृतैः पाणिभिर्घ्नंति गुरवो न विषोक्षितैः। लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणा इति॥

॥ ॥

मुख्येद्रत्यागुणापरगणामेवद्वित्वंनत्वन्येषामिसाकरः नवंनवंप्रीतिरहोकरोतीत्यत्रवीप्सायांद्विर्वचनं अनेनतुद्विर्वचनेउक्तंस्यात्।नवनवावनवानुभिरा
ददेरित्यत्रत्वनेनैवद्विर्वचनंनतुवीप्सायामितिपुंवद्भावः।कथंभीतभीतइवशीतमयूखइतिभारविः।इवशब्देनसादृश्यस्योक्ततयाइहप्रकारेद्वित्वायोगात्।
सत्यं।भीतेभ्योभीतइतिकथंचिद्व्याख्येयं।तेनातिभीतइतिफलितं।आधिक्येद्वेवाच्येइतिवार्तिकेनभीतभीतादौद्वित्वमितिदुर्घटादिभिरुक्तंसमाधानंनाद
र्तव्यं।तादृशस्यवार्तिकस्याप्रसिद्धत्वात्।अथकथंखिन्नःखिन्नःशिखरिषुपदंन्यस्यगंतासियत्रक्षीणःक्षीणःपरिलघुपयःस्रोतसांचोपभुज्येतिमेघदूतः।
पदार्थभेदस्याभावेनवीप्सार्थस्यासंभवादितिचेदत्राहुः।एकस्यापिखेदावस्थासुक्षयावस्थासुचभेदंपरिकल्प्यवीप्साबोध्येति।अथकथंमंदंमंदंनुदति
पवनश्चानुकूलोयथात्वामितिमेघदूतवीप्सार्थस्यासंभवादनेनैवद्विर्वचनेकृतेमंदमंदमुदितःप्रययौखमितिवत्कुत्वंस्यादितिचेत्सत्यं।स्वतोमंदगामिनंत्वां
पवनोमंदंनुदतीतिकथंचिद्व्याख्येयंसिद्धस्यगतेश्चिंतनीयत्वात्।शुक्लंशुक्लमिति।केवलगुणवाचिनउदाहरणमितिध्वनयति।रूपमिति।आनुपूर्व्येइति।वी
प्साभावादयमारंभः।मूलेमूलेइति।अग्रेअग्रेसूक्ष्मइत्यप्युदाहर्तव्यं।एकस्यवस्तुनोवेणुदंडादेरेकमेवमुख्यंमूलमग्रंचाइतरेषांभागानामापेक्षिकोग्र
मूलव्यपदेशः।स्थौल्यसौक्ष्म्येअपिनैकरूपेकिंतर्हियथामूलमुपचीयतेस्थौल्यंयथाग्रंसौक्ष्म्यंतथानेतरेभागाइतिवीप्साया असंभवः।मूलेमूले
पथिविटपिनामित्यत्रतुवीप्सायांद्विर्वचनमेतच्चहरदत्तग्रंथेस्पष्टं।न्यायसिद्धइति।यावद्भिःशब्दैःसंबोध्योर्थमवगच्छतितावतांप्रयोक्तव्यत्वादितिभावः
।पौनःपुन्यइति।पुनःपुनर्भवतिरिवर्तमानात्पुनःपुनःशब्दात्भावेप्रत्ययः।लोटासहसमुच्चित्येति।नन्वत्रलोटासहसमुच्चित्ययथाद्विर्वचनंभवतितथाकि
समभिव्याहारेयङ्‌पङ्गासहसमुच्चित्यद्विर्वचनंस्यात्।पापच्यतेपापच्यतेवोक्ष्यतेवोक्ष्यतेइति।अत्राहुः।लोट्क्रियासमभिव्याहारंव्यभिचरतिसमुच्चयेपि
जायमानत्वात्।ततश्चलोड्द्विर्वचनयोरेवतद्योतकत्वंनत्वेकैकस्येतिप्रणेलोडंतस्यद्विर्वचनं।यङ्स्तुक्रियासमभिहारंनव्यभिचरतीतिद्विर्वचनंविनैव
तस्यद्योतकत्वंतेनतदंतस्यनद्विर्वचनमिति॥

न्नतद्विषयादित्यतः समासादित्यनुवर्त्तमाने समासांता इतिपुनः समासग्रहणं हि समासाधिकारविहितोयः समासस्तत्परिग्रहार्थं। तेनातिदेशिके समासे स
मासांतानामप्रवृत्तिरितिदिक्॥ ॥ कर्मधारयवदुत्तरेषु। अधिकारोयं एवसिद्धे वदुत्तरेष्विति वचनं विस्पष्टार्थमितिवृत्तिः। प्रकारेगुणवचनस्य। यद्यपि प्रका
रशब्दो भेदे सादृश्ये च वर्त्तते बहुभिः प्रकारैर्भुक्तो बहुभिर्भेदैर्विशेषैरित्यवगमात् ब्राह्मणप्रकारोयं माणवकः ब्राह्मणसदृश इत्यवगमाच्च तथापीह विवक्षि
तमाह। सादृश्य इति। व्याख्यानमेवात्र शरणं पुंवद्भाव इति। पुंवत्कर्मधारयेति सूत्रात् तच्च कोपधादिष्वपि कालककालिकेत्यादिषु प्रवर्त्तते न बहुव्रीहिवद्भावे

कर्मधारयवदुत्तरेषु। ८।१।११। इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यं। प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि॥ प्रकारे गुणवचनस्य॥
८।१।१२। सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत्कार्यम्। कर्मधारयवदुत्तरेष्वित्यधिकारात्। तेन पूर्वभागस्य पुंवद्भावः। समासस्ये
त्यन्तोदात्तत्वञ्च। पटुपट्वी। पटुपटुः पटुसदृशः ईषत्पटुरिति यावत्। गुणोपसर्ज्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह ग्रहणं नेष्टं शुक्लः शु
क्लं रूपं। शुक्लशुक्लः पटः। आनुपूर्व्ये द्वे वाच्ये। मूले मूले स्थूलः। संभ्रमेण प्रवृत्तो यथेष्टमनेकधा प्रयोगो न्यायसिद्धः। सर्प्प सर्प्प बुध्यस्व॥ २॥
सर्प्प इ। ध्यस्व इ। क्रियासमभिहारे च। लुनीहि लुनीहीत्येवायं लुनाति। नित्यवीप्सयोरिति सिद्धे भृशार्थे द्वित्वार्थमिदम्। पौनःपुन्येपि लोटास

वु

ह समुच्चित्य द्योतकता लभ्येत॥ ॥

प्रकृते कर्मधारयवद्भावोक्तिर्व्यर्थेति शंकायां निरवकाश इति बोध्यं। पटुपटुरिति। इह द्वित्वेन जातीयरो बाधानेष्यते पटुजातीय इति वामनः। अन्यथा ब्राह्मणा
जातीय इत्यादावगुणवचनेगुणवचनेपि भेदरूपेऽर्थे सावकाशो जातीयर् गुणवचनेषु सादृश्ये परेण द्वित्वेन बाध्येतेति भावः। गुणवचनस्येति किं। अग्निर्माण
वकः। सिंहो माणवकः। यद्यपीहाग्निसिंहशब्दाभ्यां गौण्यावृत्त्या तैक्ष्ण्यक्रौर्यादिगुणो गम्यते तथापि प्रकारे वर्तमानस्येत्येव सिद्धे गुणवचनग्रहणसामर्थ्यात्।

अन्योन्यमिति। न चात्र आमभावेपिटःप्स्यादिति शंक्यं। बहुलग्रहणाट्टाबभाव इत्यनुपदमेव वक्ष्यमाणत्वात्। स्त्रीनपुंसकयोरुत्तरोत्तरोयादिस्त्वंवदिति प्राचोक्तं यंपरिष्कुर्वन्नाह। अत्र केचिदिति। वक्ष्यतिमाह अन्येत्विति। अतिप्रसंगादिति। तथा च एकशेषं प्रति वंद्याद्विर्वचनस्याप्रवृत्तित्वमाश्रित्य ताद्दृत्ते नपुं

परस्पराक्षिसादृश्यमदृश्यपरस्परैरित्यादौ सोर्लुक्प्राप्तः सर्वं स्वाहुलकावलेन समाधेयम्। प्रकृतवार्त्तिकभाष्योदाहरणं। स्त्रियामिति सूत्रेऽन्यो न्यसंश्रयं त्वेतदिति भाष्यस्थानमप्रामाणिमिति। अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्। ८।१।१३॥ प्रियप्रियेण ददाति। प्रियेण वा। सुखसुखेन ददाति। सुखेन वा। द्विर्वचने कर्मधारयवद्भावात्सुप्लुकि तदेव वचनम्। अतिप्रियमपि वस्तु नायासेन ददातीत्यर्थः॥ यथास्वे यथायथम्। ८।१।१४॥ यथास्वमिति वीप्सायामव्ययीभावः। योयं आत्मा यच्चात्मीयं तत्तद्यथास्वम्। तस्मिन्यथाशब्दे क्लीबत्वञ्च निपात्यते। यथायथं ज्ञाता यथास्वभा वमित्यर्थः॥ यथात्मीयमिति वा। द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु। ८।१।१५। द्विशब्दस्य द्विर्वचनं पूर्वपदस्या ऽम्भावोऽत्वञ्चोत्तरपदस्य नपुंसकत्वञ्च निपात्यते एष्वर्थेषु। तत्र रहस्यं द्वन्द्वशब्दवाच्यं॥ इतरे विषयभूताः। द्वन्द्वं मन्त्रयते रहस्यमित्य र्थः। मर्यादास्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेणापीति मर्यादार्थः। व्युत्क्र मणं पृथगवस्थानम्। द्वन्द्वं व्युत्क्रान्ताः। द्विवर्गसम्बन्धेन पृथगवस्थिताः इत्यर्थः। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। द्वन्द्वं संकर्षणवासुदेवौ। अभिव्यक्तौ। सा हचर्येणेत्यर्थः। योगविभागादन्यत्रापि द्वन्द्वमिष्यते॥ इति द्विरुक्तप्रक्रिया॥ इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्द्धं स मा

वद्भावेन शंक्यः। लक्ष्यविरोधात्। कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेदित्यकथितसूत्रस्य यां यामिति भाष्यप्रयोगविरोधाच्चेति भावः। नव्यास्तु यां यां प्रि यः प्रैक्षतेत्यादिमाघप्रयोगे सा सेति द्विर्वचनमयुक्तं। द्विरुक्तार्थस्य सेत्यनेनैव परामर्ष्टुं शक्यत्वात्। अत एव भाष्ये यां यां मन्येत सा भवेदित्येवोक्तमित्याहुः ॥

कर्मव्यतिहार इति। क्रियाविनिमय इत्यर्थः॥ द्वे इति। नित्यमेवेदं द्वित्वं बाहुलकं तु समासवद्भावस्यैव सुपः सुर्वक्तव्य इति। अत्र केचिद् उक्तं द्वितीयादीनामेवेदं
स्वादेशविधानं अत एवोत्तरदलेपि द्वितीयादय एव न तु प्रथमा तत्रायेवावचनमेव न तु वचनान्तरमिति। तत्पाणिनीयभाष्यादावनुक्तत्वात्। तदेतद्धनसन्

कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्। बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्। असमासवद्भावे पूर्वप
दस्थस्य सुपः सुर्वक्तव्यः। अन्योऽन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्यान्। अन्योन्येन कृतम्। अन्योऽन्यस्मै दत्तमित्यादि। अन्योन्येषां पुष्क
रैरामृशन्त इति माघः। एवं परस्परम्। अत्र कस्कादित्वाद्विसर्गस्य सः। इतरेतरम्। इतरेतरेणेत्यादि। स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्ते
राम्भावो वा वक्तव्यः। अन्योन्यां अन्योन्यम्। परस्परां परस्परं। इतरेतरां। इतरेतरं वा। इमे ब्राह्मण्यौ कुले वा भोजयतः। अत्र केचित्। आमादे
शो द्वितीयाया एव। भाष्यादौ तथैवोदाहृतत्वात्। तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः। अन्ये तूदाहरणस्य दिङ्मात्रत्वात्स
र्वविभक्तीनामादेशमाहुः। दलद्वयेटाव्भावः। क्लीबे वा द्विरहःसमोः समासे सोरलुक्चेति सिद्धं बाहुलकात्रयम् १ तथाहि। अन्योन्यम्परस्पर
मित्यत्र दलद्वयेपि टाप्प्रसङ्गः। न च सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावः। अन्यपरयोरसमासवद्भावात्। न च द्विर्वचनमेव वृत्तिः। यांयां प्रियः प्रैक्ष
तकातरा क्षीं सा सेत्यादावतिप्रसङ्गात्। अन्योन्यमित्तरेतरमित्यत्र चादड्डतरादिभ्य इत्यदड्प्रसङ्गः॥ अन्योन्यसंसक्तमहस्त्रियामम्। अन्योन्यास्र

वचनान्तरमुदाहरन्ति। अन्योन्यावन्योन्यानिति माघ इति। स च भाष्यानुगुण एवेति भावः। एतेनार्वाचीनमतं कवयोपि नाद्रियन्त इत्युक्तं भवति। भारविश्चाह॥ स्थि
तिनभस्सुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैरिति। अत्राहुः। परस्परा ये इति विग्रहः। यदि तु द्वितीयादीनामेव स्वादेशविधानं न तु प्रथमायाः तर्ह्ययम्प्रयो

॥ ॥

सोलुक्चाप्राप्तइतिसुपःस्वादेशविधानस्यान्योन्यंपरस्परमित्यत्रकेवलेचरितार्थत्वादितिभावः।योपआत्मेत्यादि।आत्मात्मीययोरपिस्वशब्दवाच्यत्वात्।यथायथ
मिति।नलोकेत्यनेनकृद्योगषष्ठीनिषेधः।ज्ञातेत्यस्यक्तान्तत्वात्।योपआत्मेत्यर्थेविद्यमानयथायथशब्दस्यार्थमाह।यथास्वभावमिति।आत्मीयत्वोधृतिवुद्धिः
स्वभावोत्रह्मवर्ष्मचेत्यमरः।पूर्वपदस्येति।द्विश्रोद्विश्रोइतिस्थितेकर्मधारयवद्भावात्सुप्लुकिकृतेपूर्वपदावयवस्यैकारस्येत्यर्थः।अत्वमुत्तरपदस्येति।उत्तरप
दावयवस्यैकारस्येत्यर्थः।नपुंसकत्वंचेति।चकारादेकवद्भावइत्यपिवोध्यते।नातोमित्यमादेशेद्वंद्वमितिसिध्यति।रहस्यंद्वंद्वशब्दवाच्यमिति।द्वाभ्यांनिर्वृत्तेरहस्ये
योगरूढिरेवेत्यर्थः।द्वंद्वंमंत्रयतेइति।द्वौद्वौभूत्वामंत्रयतेइत्यर्थः।एवंहितत्रहस्यंभवति।आचतुरमिति।आङ्मर्यादाभिविध्योरित्यव्ययीभावः।अव्ययी
भावेशरत्प्रभृतिभ्यइतिटच्।चतुःशब्दोत्रचतुर्णांपूरणोलक्ष्यः।आचतुर्थादित्यर्थः।द्वंद्वंयज्ञपात्राणीति।स्फ्यश्चकपालानिचेत्यादीनिपात्राणि।द्वंद्वंप्रयुनक्ति।
आसादयतीत्यर्थः।अभिव्यक्तौसाहचर्येणेत्यर्थइति।अत्रद्वंद्वमित्यत्रस्वार्थेद्विर्वचने।एकवद्भावादिकंतुपूर्ववत्।अन्यत्रापीति।द्वंद्वंयुद्धंवर्तते।इहवीप्सायां
द्विर्वचने।द्वयोर्द्वयोर्युद्धमित्यर्थः।द्वंद्वानिसहते।शीतमुष्णमेकंद्वंद्वंसुखदुःखंचापरंक्षुत्पिपासाचापरंइहस्वार्थेद्विर्वचनमेकवद्भावादिपूर्ववत्।वहुत्वंत्वेकशेषव
शात्॥ ॥ सिद्धांतकौमुदीव्याख्यायाःतत्त्वबोधिनीसमाप्तं तत्रपूर्वार्द्धंतेनतुष्यतुशंकरः॥ ॥ इतिश्रीपरमहंसपरिव्राजकाचार्यवामनेंद्रस्वामिचरणा
रविंदसेवकज्ञानेंद्रसरस्वतीकृतौसिद्धांतव्याख्यायांतत्त्वबोधिन्याख्यायांपूर्वार्द्धंसमाप्तम्॥ ॥ मितीवैशाषशुक्ला ८ वारशुक्रवारे॥ श्रीसम्वत् १९३९ ॥

॥ ॥

सि॰कौ॰टी॰ त॰ति॰ १

श्रीगणेशायनमः॥अज्ञाननाशनेदक्षंदीक्षितंभक्तरक्षणे।वटमूलाश्रयंवन्दे दक्षिणामूर्त्तिमाश्रये १ ग्रंथमध्येविघ्नविघातायकृतंमंगलंशिष्यशिक्षार्थंनिबध्नाति श्रोत्रेत्यादिना श्रोत्रियस्यभावः श्रौत्रंहायनांतयुवादिभ्योणितिसूत्रेश्रोत्रियस्ययलोपश्चेतिवार्त्तिकाद्यलोपेअणप्रत्ययेचयस्येतिचेतिइकारलोपः।अर्हतोभावआर्हंती॥गुणवचनब्राह्मणादिभ्यइतिसूत्रेअर्हतोनुम्चेत्युक्तेर्नुम्ष्यञ्चषित्वात्ङीषिहलस्तद्धितस्येतियलोपः ताभ्यांवित्तैः श्रौत्रार्हंतीचणैः।तेनवित्तइतिचणप् श्रोत्रियत्वयोग्यताभ्यांप्रसिद्धैरित्यर्थः किंचगुण्यैर्गुणवद्भिः प्रशस्तगुणयुक्तैरितियावत् रूपादाहतप्रशंसयोरितिसूत्रेअन्येभ्योपिदृश्यतइत्युक्तः॥गुण्याः ब्राह्मणाइत्यस्यभाष्यादावुदाहृतत्वात् अहर्दिवमिति अहन्यहनि प्रसहमित्यर्थः अचतुरेत्यादिनानिपातनात्साधुः तोष्टूय्यमानइति स्तौतेर्यङ् तात्कर्मणिशानच् सार्वधातुकेयगितिधातोर्यक् आनेमुगितिमुक् अपिशब्देनआपाततोविरोधंद्योतयति वस्तुतस्तुनविरोधः स्तुतिप्रयोजकीभूतानामनंतकल्याणगुणानांश्रुतिस्मृतिसिद्धत्वेपिवियदादिवद्व्यावहारिकत्वात्तदभावस्यपारमार्थिकत्वादेतच्चोत्तरमीमांसायांस्पष्टमेव विभुर्व्यापकः परमेश्वरः अतिशयेनविजयतेविजयतेतरां सर्वोत्कर्षे

॥ श्रीगणेशायनमः श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् तोष्टूय्यमानोप्यगुणो विभुर्विजयतेतराम् १ पूर्वार्द्धेकथितास्तु

णवर्त्ततइतिफलितोर्थः विपराभ्यांजेरितितङ् तदंतात्द्विवचनविभज्येत्यादिनातरपि किमेत्तिङव्ययघादाम्विति (१)र्थंपञ्चमाध्यायवर्त्तिनः म् नन्विहतरप् दुर्लभएवविजयतइत्यस्यअप्रातिपदिकत्वादतिङंतत्वाच्च नचसहसुपेत्यत्रसहेतियोगविभागात्तिङंतेनविशब्दस्यसमासेप्रातिपदिकत्वंस्यादेवेतिवाच्यं सचकं दस्येवेति तत्रत्यग्रंथेनसहविरोधापत्तेः किंचप्रातिपदिकत्वाभ्युपगमेसोरुत्पत्तिः स्यात्लिंगसर्वनामताभ्युपगमेननपुंसकत्वात्सोर्लुक्चपिह्रस्वोनपुंसकइतिह्रस्वोदुर्वारःस्यात् समुदायांतर्गतस्यजयतइत्यस्यतिङंतत्वेपिसाकांक्षत्वेनअसामर्थ्यात् ततोपिभवितुंनार्हति समर्थः पदविधिरितिपरिभाषितत्वात् आमंतेनविशब्दोयुज्यतइतिकल्पनायांतुअंतरंगत्वात् परस्मैपदप्रवृत्तौविजयतित्तरामितिस्यादितिचेदत्राहुः॥समुदायांतर्गता[?]यतइत्यस्मादेवतरप्॥नचतस्यविशब्देनसहसाकांक्षत्वेनासामर्थ्यंशंक्यंतिङंतस्यप्रधानत्वेनसापेक्षत्वेपिदोषाभावादुपसर्गस्यद्योतकत्वेनप्रत्येकमर्थएवनास्तीतिसाकांक्षतायावक्तुमशक्यत्वाच्चेति वृत्तकथनपूर्वकंवर्तिष्यमाणमाह पूर्वार्द्धइति हलंतेषुस्थशोजुदकेकिन् ऋत्विक्दधृक्स्रग ८

॥अथतिङंतप्रारंभः ॥६॥

चकारआवश्यकः नचैवं भावेचाकर्मकेभ्यइत्येवास्त्वितिवाच्यं भावेकर्तरिचाकर्मकेभ्यएवेतिनियमापत्तौसकर्मकेभ्योभावद्वकर्तर्यपिलकारानापत्तेः नन्वेवम
पिलश्चभावेचाकर्मकेभ्यइत्येवास्तु चकारेणकर्तरीत्यनुकर्षणाल्लकाराः सकर्मकेभ्यः कर्तरिस्युरकर्मकेभ्योभावेकर्तरि चस्युरित्यर्थेपर्यवसितेकर्मणितुकुत्ता
पकाद्विभ्यतीतिकिमनेनकर्मणीत्यनेनेतिचेत् मैवं उत्तरसूत्रेतयोरित्यनेनकर्मणोपिपरामर्शार्थंतस्यावश्यकतयाज्ञापकानुसरणक्लेशस्यवैयर्थ्यात् त
स्माद्यथान्यासमेवरमणीयं अत्रनैय्यायिकाः लकाराणांकृतावेवशक्तिर्लाघवान्नतुकर्तरिकृतिमतः कर्तृत्वेनतत्रशक्तौगौरवात् देवदत्तइत्यादिप्रथमांतप
देनतल्लाभाच्चदेवदत्तःपचतीत्यत्रहिदेवदत्तोविशेष्यः यत्नोविशेषणमाश्रयत्वंतुसंसर्गः तथाचपाकानुकूलकृत्याश्रयोदेवदत्तइत्यादिशाब्दबोधोपिसुपप
द्यतइति तन्न पचतीत्युक्तेपाककर्ताकः इत्याकांक्षानुरोधेनलकाराणांकर्त्तरिशक्तिरित्यभ्युपगन्तुमुचितत्वात् पाकानुकूलाकृतिरितिशाब्दबोधा
भ्युपगमेतुकस्मिन्नित्याकांक्षास्यात् कस्येतिवा नचैककर्तृकापचिक्रियेतिशाब्दबोधाभ्युपगमेपिकइत्याकांक्षानोपपद्यतएवेतिशंक्यं कर्तृसामान्यबो
धेसतिकइतिकर्तृविशेषाकांक्षायांबाधकाभावात् नापिदेवदत्तकर्तृकापचिक्रियेत्युक्तेपिकस्मिन्नस्तिकस्यवेत्याकांक्षादुर्वारैवेतिशंक्यं विक्लित्त्यनुकूल
व्यापारस्यैवपचिक्रियात्वात् तदाश्रयस्यदेवदत्तस्यकर्तृत्वात् क्रियाश्रयत्वेननिश्चितेकस्मिन्नित्याद्याकांक्षायाअप्रवृत्तेः किंच पचंतंदेवदत्तंपश्यपचतेदेवदत्ताय
देहिपचमानस्यदेवदत्तस्यद्रव्यमित्यादौशतृशानजादीनामपितिबादिवल्लादेशत्वाविशेषेणतेभ्योपिकृतिमात्रबोधापत्तेः नचेष्टापत्तिराश्रयत्वंसंसर्गइत्युक्तत्वेन
पाकानुकूलकृत्याश्रयंदेवदत्तंपश्येत्याद्यर्थस्वीकारेदोषाभावादितिवाच्यं नामार्थयोर्भेदान्वयस्यस्वपरसिद्धांतविरुद्धत्वात् नचैवंनामार्थयोरभेदसंसर्गव्युत्प
त्त्यनुरोधेनशतृशानजादीनांकर्तरिशक्तिस्तिबादीनांकृतावेवेतिवैषम्यंस्वीक्रियते प्रामाणिकगौरवस्यादोषत्वादितिवाच्यं स्थान्येववाचकोलाघवान्नत्वादेशो
गौरवादितिस्वसिद्धांतस्यपरित्यागापत्तेः एवं ज्ञानंकतरदित्यादौसोर्विसर्गेसोरमिसोरद्डिचकृतेलाघवात्सुत्वेनैवशक्तिर्नतुतत्तद्रूपेणेत्यादिभवदीयमव
हारस्यअसंगत्यापत्तेश्चएवंचतिबादीनांशत्रादीनांचस्मारकतयालिपिस्थानीयत्वंबोधकस्तुलकारएवेतिस्थितेसचशत्राद्यंतेकर्तरिशक्तइत्यभ्युपगमेतिङंतेक
र्तृकृतिंबोधयेदन्यायश्चानेकार्थत्वमितिन्यायात् यदितुवैय्याकरणरीतिमाश्रित्यसर्वत्रादेशाएववाचकाइत्याद्यभ्युपगम्यतेतर्हिघटंघटेनहरेवविष्णोवेत्यादिष्वस

त्वादिनाकिन्नादिव्युत्पादनं प्रासंगिकमितिभावः तुर्यश्चतुर्थः चतुरश्छयतावाद्यक्षरलोपश्चेत्युक्तत्वात् अथेति इहापिकृत्सु णचः स्त्रियामञ् अणिनुणइत्य
आदिव्युत्पादनंप्रासंगिकंवोध्यंप्राधान्येनतुतृतीयाध्यायस्यारवेहोच्यंतइतिभावः अनुबंधभेदेनभेदमाश्रित्याह दशलकाराइति प्रदर्श्यंतइति यद्यपिपंचमल
कारेरूपाणिअधुनानव्युत्पाद्यंतेतथापिलकारःस्वरूपेणप्रदर्श्यते लः कर्मणिचभावेचाकर्मकेभ्यः लस्येत्यादिसूत्रविषयतांव्युत्पादयितुमितिभावः पंचमइति ले
डित्यर्थः॥लट्लिडितिसूत्रोक्तक्रमापेक्षयैवलेटः पंचमत्वंनतुसूत्रोक्तक्रमेणेतिवोध्यं वर्त्तमानेलट्इति वर्त्तमानइत्येतत् प्रकृत्यर्थविशेषणमित्याह वर्त्तमान
क्रियावृत्तेर्धातोरिति धातोरितिसूत्रमातृतीयाध्यायांतमधिक्रियतइतिभावः लट्स्यादिति तस्यवाच्यंत्वनुपदमेव स्फुटीभविष्यति वर्त्तमानकालस्तुनतद्वाच्यः
किंतुद्योत्यएवलङादिष्वपिभूतादिकालोयथायथंद्योत्यएवेत्यवगंतव्यं वस्तुतस्तुवाच्यत्वाभ्युपगमोपिसुगमइतिविध्यादिसूत्रेवक्ष्यामः अटावितावितिअका

प्रत्ययाअथकथ्यन्तेतृतीयाध्यायगोचराः २ तत्रादौदशलकाराःप्रदर्श्यन्ते लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् ॥:
एषुपञ्चमोलकारश्छन्दोमात्रगोचरः वर्त्तमानेलट् ३।२।१२३ वर्त्तमानक्रियावृत्तेर्धातोर्लट्स्यात् अटावितौ॥लः कर्मणिच ।
भावेचाकर्मकेभ्यः ३।४।६९ लकाराःसकर्मकेभ्यःकर्मणिकर्त्तरिचस्युरकर्मकेभ्योभावेकर्त्तरिच॥ (( रउच्चारणार्थ इतितुनोक्तंलिडादि

वैलक्षण्यसंपादनात्तस्यावश्यवक्तव्यत्वात्।लः कर्मणिच चकारात्कर्त्तरिकृदित्यतः कर्त्तरि इत्यनुकृष्यते सकर्मकविषयंचेदं अकर्मकेषुकर्मणोत्यंतासत्वा
धितत्वात् भावेचेत्युत्तरवाक्येनतत्रविशेषविधानाच्च तदेतदाह सकर्मकेभ्यइति भावेचेति चकारेणकर्त्तैवानुकृष्यतेनतुकर्मअसंभवात्तदाहभावेकर्त्तरिचे
ति ननुभावकर्मणोरात्मनेपदविधानाच्छेषात्कर्त्तरीतिपरस्मैपदविधानाच्चज्ञापकाल्लकाराणांभावकर्मकर्त्तारोर्थाअनुमातुंशक्यंतेइतिकिमनेनसूत्रेणमैवंअ
सत्यस्मिन्सूत्रेसकर्मकेभ्योपिघञादिवद्भावेलकारापत्तौ घटंक्रियतेदेवदत्तेनेत्यादिप्रयोगः प्रसज्येत तन्माभूदित्येतदर्थमेतत् सूत्रस्यावश्यकत्वात् नचैवमक
र्मकेभ्योभावेलइत्येवसूत्र्यतांभावेअकर्मकेभ्यएवेतिनियमार्थमितिवाच्यं अकर्मकेभ्योभावएवेतिविपरीतनियमापत्त्याकर्त्तरितेभ्योलकारानापत्तेः तस्माद्भावेचेति

सि·कौ· विशेषणतयाध्याहार्येणधातुतएवलाभात् जानातीत्यादावाश्रयत्वंप्रत्ययस्यार्थः इतिस्वीकृत्ययत्नार्थत्वस्यत्वयापिवक्तव्यत्वात् नहियत्नमन्तरेणज्ञा
टी·त· नंनोदेतीतिकश्चिद्भ्युपैति तस्मात्कृत्तांतिङांचवैलक्षण्यंदुर्लभमितिकर्त्रर्थकत्वमभ्युपेयंए तेनकर्त्रधिकरणेआख्यातवाच्यत्वंकर्तुर्निरस्यजंजभ्य
ति·उ· मानाधिकरणेमडं· तादृहितस्यजंजभ्यमानइतिशानचःकृतिवाचकत्वंस्वीकुर्वतोमीमांसकाअपिप्रत्युक्ताः यत्तुतेरुक्तंशानजशेकर्तरिकृदितिव्याकर
२ णंशक्तिग्राहकमस्तीति तन्न कृद्वाक्यशेषोह्ययमर्थाकांक्षायामनिर्दिष्टार्थेषुण्वुलादिष्वेवोपतिष्ठतेआकांक्षितविधानंज्यायइतिन्यायात् नतुशत्रादिषु
स्थानिभूतलकारार्थेनैवतेषांनिराकांक्षत्वात् अन्यथाभावेकर्मणिचशानचोदौर्लभ्यापत्तेः ततश्चशय्यमानेआस्यमानेचायंगतइत्यादिप्रयोगोभावेनस्यात्
कर्मणितुाक्रियमाणइत्यादिप्रयोगोनस्यात् यत्तुभट्टपादाआहुः कर्त्तरियदेकत्वंतत्रतिप् कर्त्तरियद्द्वित्वंतत्रतसइत्यादिक्रमेणलः कर्मणीत्यस्यद्व्येकयोरि
त्यादेश्चैकवाक्यतयाख्यानान्नकर्तृवाच्यतासूत्रादायातीति तच्चिंत्यम् तान्येकवचनद्विवचनेतिविहितद्विवचनादिसंज्ञाहितिवाद्यादेशनिष्ठा ततश्च
द्विवचनादिसंज्ञकतिवादिविधिनाद्व्येकयोरित्यस्यैकवाक्यतास्तु नचतिवादिविधौकर्त्तरीत्यस्ति यद्विस्त्वेकत्वादिविशेषणतयाकर्त्रंचिन्वीयेत ननुलःकर्मणीति
सूत्रेकर्त्तरिकृदित्यतोऽनुवृत्तंकर्तृग्रहणंतिवादिविधावस्तोवलविधिति वादिविध्योरप्येकवाक्यतास्वीकारादितिचेत् सत्यं वाक्यैकवाक्यताहिसानतुपदैकवा।
क्यताल: कर्मणीति विहितलकारानुवादेनतिवाद्यादेशविधेः प्रवृत्तत्वात् तथाचलविधौश्रूयमाणंकर्तृग्रहणंकथंसंख्याविशिनष्टु नहियत्रकर्तृग्रहणंतत्रसंख्यो
पस्थापकमस्ति लकारस्यद्विवचनादिसंज्ञाविनिर्मुक्तत्वात् ततश्चकर्त्तरियदेकत्वमितिव्याख्याकथमपिनसंभवत्येवस्यादेतत् लःकर्मणीतिसूत्रेलइत्सकारानुबं
धकयोर्लङ्लटोःसामान्यग्रहणंभवतिकिंतूत्सृष्टानुबंधलकाराणांसामान्यग्रहणमितिनिर्विवादं तत्रलइतिजसंतंमाभूत् किंतुङसंतमस्तुलः परस्मैपदमितिव
त् आदेशापेक्षायेयंषष्ठीलस्ययआदेशःसकर्मणिचेत्यादि नचाविहितस्यलस्यानुवादोनसंभवतीतिवाच्यं वर्त्तमानेलडित्यादिभिरेवलविधानात् तथाचलस्यस्थाने
यआदेशःस सकर्मकात्कर्मणिकर्त्तरिच स्यादकर्मकाद्भावेकर्त्तरिचेत्यर्थः सुलभइतिभट्टपादोक्तयोजनिकानिर्बाधैवचेदत्राहुः लइत्यस्यषष्ठ्यंतत्वेआदेशनामे
वार्थउक्तःस्यात्।सोपितिवादीनामेवनतुशत्रादीनांतेषांद्विवचनादिसंज्ञाविरहात् द्व्येकयोरित्यादिनाअस्यैकवाक्यतायाभवद्भिरुक्तत्वात् नचभवदुक्तरीत्याकर्त्तरि

वैसर्वपदादेशाइतिन्यायेनपदस्फोटोवाक्यस्फोटश्चासिद्धोदितिभवतांतन्महदनिष्टं किंचकर्त्तरिकृदितियत्कर्त्तृग्रहणंतदेवलः कर्मणीतिसूत्रेचकारे
णानुकृष्यतइतिकथंण्वुलादीनांलकारादीनांचशक्तौवैलक्षण्यं नचनामार्थयोरभेदान्वयसंसर्गाभ्युपगमएवण्वुलादौकर्तुर्वाच्यत्वेवीजमितिवाच्यं पचतिरू
पंपचतिकल्पंदेवदत्तइत्याद्यनुरोधेनतिङ्स्वपिकर्त्तुर्वाच्यतौचित्यात्ननुसमुदायस्यनामत्वेपितिङ्प्रत्ययोननामेतिचेत्याचकइत्यत्राप्यकइत्येतन्ननामेतितुल्यं
अकांतंनामेति चेत्रूपवाद्यंतमपिनामेतितुल्यं अतश्चात्रप्रशस्तपाककर्त्तादेवदत्तइत्याद्यभेदान्वयोभवद्भिरभ्युपगंतव्यइतितिङ्स्वपिकर्त्तुर्वाच्यतास्वीकर्त
व्यैव किंचकर्तुर्वाच्यत्वानभ्युपगमेयुष्मदिसमानाधिकरणेमध्यमःअस्मद्युत्तमइतिसामानाधिकरण्यप्रयुक्तापुरुषव्यवस्थाअभिहितेकर्त्तरिप्रथमेत्यादिकंचभ
वन्मतेकथंसंगच्छतां यत्तुअनभिहितइत्यस्यानभिहितसंख्याकइत्यर्थवर्णनेनदेवदत्तः पचत्योदनमोदनः पच्यतेदेवदत्तेनेत्यादौप्रथमाद्वितीयादिव्यवस्थाप
नमुक्तं तन्न कृत्तद्धितसमासेषुसंख्याभिधानस्याप्रसिद्धत्वात् ततश्चपक्तव्यस्तंडुलः शत्यः शतिकोऽश्वः प्राप्तोदकोग्राम इत्यादिषुकर्मणिद्वितीयेत्यस्यप्रवृत्तौ
प्रथमानस्यात् नचतिष्ठतीत्यध्याहारेणसंख्याभिधानमिहाप्यस्तीतिवाच्यंास्थितइत्याद्यध्याहारेतदभावात् शाब्दिकोयंदेवदत्तोननुनैयायिकइत्यादिषुनीलमि
दंनतुरक्तमित्यत्रेवक्रियापदाध्याहारस्यानावश्यकत्वयाआख्यातेनशब्दद्दुरं करोतीतिठक्प्रत्ययेनवाकर्त्तृसंख्यायाअनुक्तत्वाद्देवदत्तेकर्त्तरितृतीयोत्पत्ति
प्रसंगाच्च तस्मादनभिहितेकर्त्तरिइत्यादिव्याख्यानमेवाभ्युपेतव्यं।अपिचधातूपात्तव्यापाराश्रयः कर्त्तातत्राश्रयमात्रंकृतांलकाराणांचार्थः नतुव्यापारोपितस्य
धातुनैवलब्धत्वात् अतएवकर्त्ता।कारकइत्यादौप्रकृतिप्रत्ययार्थयोर्नानन्वयः व्यापाराश्रयस्यप्रत्ययार्थत्वेतुतस्यप्रकृत्यर्थेनव्यापारेणान्वयः क्लिष्टःस्या
त्।यस्तुवदतिकृधातोःकृतिरर्थः कृत्प्रत्ययस्यापिकृतावेवशक्तिर्नतुकर्त्तरि कृदित्यत्रहिकर्त्तरीतिभावप्रधानोनिर्देशः कर्तृत्वंकृतिमत्त्वं तच्चकृतिरे
व यत्रतुदेवदत्तादिपदसमभिव्याहारस्तत्रतुजादौकृतिमतिलक्षणेत्यादि तन्मतेपूर्वोक्तकर्त्रेत्यादौसुतरामनन्वयः कर्मवत्कर्मणेतिसूत्रेकरोतिरुत्पा
दनार्थःउत्पत्तिश्चकर्मस्था यत्नार्थत्वेतुकरिष्यते घटइत्यादिनासिद्धेदितिवक्ष्यमाणदूषणं चदुरुद्धरं आश्रयमात्रस्यप्रत्ययार्थत्वेतुरथोगच्छतीत्यत्ररथस्याचे
तनस्ययत्नाभावेपिगमनानुकूलचक्रभ्रमणादिव्यापाराश्रयत्वात् नकाचिदनुपपत्तिः एवंस्थितेकृत्तौशक्तिरित्यस्योक्तिसंभवएवनास्ति कृतेरपिव्यापार

त्वानेएधेवर्द्द
तोपितिवाद्यादेशानुवादेनकर्त्राद्यर्थविधिरितिकल्पनानिरस्ता लस्यानिकतिवादीनांकर्त्राद्यर्थविधानंकर्त्राद्यर्थेविहितस्यलस्य तिवादिविधानमित्यन्योन्याश्रयापत्तेः य
द्वाधातोरितिअधिकारात्धातोर्विहितस्यैवलस्येहग्रहणमितिनोक्तातिप्रसंगः लस्येतत्संज्ञातुनभवतिफलाभावात् नचलितस्वरः फलंणलोलित्वेनतदभाव
ज्ञापनात्नाप्यश्रवणमेवफलंतदुच्चारणस्यानर्थक्यापत्तेरादेशविधिनैवाश्रयणलाभाच्चलस्यतिवादिस्यानितास्युपगमेतुलः परस्मैपदमित्यादिस्वरसतःसंग
च्छतइतिदिक् तिपूतसझिसमाहारेद्वंद्वः इटश्टकारआगमलिंगंनभवति सप्तदशभिरादेशैः समभिव्याहारात् किंतुइटोदितिविशेषणार्थः एरदित्युच्यमानेएधेव
हिएधेमहीत्यत्रापिस्यात्वर्णग्रहणेप्रत्ययग्रहणार्थवद्ग्रहणपरिभाषयोरप्रवृत्तेः केचित्तुइटोदित्यत्रलिङ्इत्यनुवर्त्तनाल्लिङादेशस्यैववर्णस्येतिसामानाधिकरण्येन
व्याहिएधेमहीत्यादावतिप्रसंगोनास्त्येवानहितत्रइकारमात्रमादेशोभवति तेनेटोदित्यत्रटकारःस्पष्टप्रतिपत्त्यर्थएवेत्याहुः तच्चिंत्यं इकारस्यविशेषणत्वेविशेषणे
नतदंतग्रहणाद्वर्णांतस्यलिङोत्यादिरित्यर्थप्रसक्त्याउक्तातिप्रसंगस्यतदवस्थत्वात् वहिमहीत्यस्यापिस्यानिवत्वेनलिङ्त्वात् महिङोङकारस्तङ्तिङितिप्रत्या

तङानावात्मनेपदम्।१।४।१००।तङ्प्रत्याहारःशानच्कानचौचैतत्संज्ञाःस्युःपूर्वसंज्ञापवादः अनुदात्तङितआत्मनेपदम्।१।३।१२।
अनुदात्तेतउपदेशेयोङित्तदन्ताच्चधातोर्लस्यस्थानेआत्मनेपदंस्यात्॥ ( हारार्थः सचसमुदायानुबंधोनत्ववयवानुबंधोव्याख्यानात्तेनेषेःक
र्मणिआशीर्लिङिएषिषीमहीत्यत्रगुणनिषेधोन तथा वृश्चतेःएच्छतेश्चकर्मणिलिङिवव्रश्चिमहेपप्रच्छिमहेइत्यत्रग्रहिज्येतिसंप्रसारणंन॥ ःऽः ॥तङानौल
स्येत्यस्यानुवृत्तेर्लादेशएवानोगृह्यतेइत्याशयेनाह शानच्कानचौचेति तेनपरस्मैपदिभ्योपिताच्छील्यवयोवचनेतिचानश्भवत्येव कर्त्तीहनिघ्नानाः अनुदात्त
ङितः अनुदात्तश्चङश्चअनुदात्तङौतौइतौयस्य सः अनुदात्तङित् द्वंद्वांतेश्रूयमाणइच्छब्दः प्रत्येकंसंबध्यते तत्रानुदात्तांशेतदंतविधेःफलाभावात् अंशांत
रएवतदंतग्रहणंइत्याशयेनाहानुदात्तेतइत्यादिउपदेशेजनुनासिकइत्यतोनुवृत्तमुपदेशग्रहणमपिङिदंशएवसंबध्यतेनान्यत्रअव्यभिचारात्तदाह उपदेशेयोङिदि
तिविशेष्यमंतरेणतदंतविधिरिहदुर्लभइत्यतआह धातोरिति लस्येति नन्विहानुवृत्तेरभावादुभयमपिदुर्लभंभूवादयइतिसूत्रान्मंडूकप्लुत्यानुवृत्तस्यधातवइत्यस्य
विभक्तिविपरिणामात्कथंचिद्धातोरितिपदेलब्धेपिलस्येत्येतन्नलभ्यतइतिचेदत्राहुः इकोमलित्यत्रसनाधातोरिवेहात्मनेपदेनलकारधात्वोराक्षेपोबोध्यः तिङोलादेश

कृदित्यनेनैवनिर्वाहः भावेकर्मणिचशानचोदौर्लभ्यापत्तेरुक्तत्वात् नचशानज्विधिनासहात्मनेपदमवस्थापकानामेकवाक्यतयाभावकर्मणोरित्यनेनेष्टसिद्धिः स
कर्मकादपिभावेशानजापत्तेः किंचजसंततलेष्वतेनैवसंबंधः षष्ठ्यंतत्वेलादेशइत्यध्याहाराद्गौरवमित्यादि अत्रेदंबोध्यं भावेचाकर्मकेभ्यइत्यकर्मकग्रहणेना
विवक्षितकर्मणोपिगृह्यंते अतएवणेरणाविति सूत्रेनेहपच्यतेनेहयुज्यतइतिभावेलकारइतिहरदत्तः अत्यंताविद्यमानकर्मकाणामेवग्रहणंनेहपच्यतइत्या
दौतुकर्मण्येवलकारः गम्यमानत्वाच्चकर्मनप्रयुज्यतइतिमतांतरमेतच्चगतिबुद्धीत्यादिसूत्रेहरदत्तग्रंथेस्पष्टं यत्तुकैश्चिदुक्तंइहअविवक्षितकर्मणांभावेलकारइ
तिप्रसादकृतोक्तंभाष्यादिविरोधादयुक्तमिति तच्चिंत्यं पक्षद्वयस्यापिभाष्यकैयटादिग्रंथारूढत्वात् प्रस्तुताविवक्षितकर्माणोप्यकर्मकाइतिपक्षएवप्र
बलस्तथाहिसमानकर्तृकेषुतुमुन्इतिसूत्रेइच्छताक्रियतइतिभावेलडुक्तोहरदत्तेन णेरध्ययनेवृत्तमितिसूत्रेकैयटहरदत्तादिभिरपिनपुंसकेभावेक्तः

## लस्य॥३।४।७७॥

अधिकारोयम् तिप्तस्झिसिप्थस्थमिप्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३।४।७८॥ एतेऽष्टादशलस्यादेशाः स्युः लः परस्मैपदम् १।४।९९॥ लादेशाः परस्मैपदसंज्ञाः स्युः॥ ९९ अकर्मकेभ्यएव तयोरेवकृत्यक्तखलर्थाइत्यत्रकर्मात्रसग्र

हणात्तत्रभावेचाकर्मकेभ्यइत्यनुवर्त्तनादन्यथापरंकृतमितिप्रसज्येतेतिसिद्धांतितं एवंस्थितेयद्यविवक्षितकर्माणोपीहसूत्रेअकर्मकग्रहणेननगृह्येरन्॥
तर्हिपीतागावोभुक्ताब्राह्मणाइत्यादौभावेक्तोनस्यात् दर्शआग्रजित्यादिकर्मणिक्तइतिसूत्रेहरदत्तेनवक्ष्यमाणंकृतपूर्वीत्यत्रभावेक्तइतिकैयटाद्युक्तंचकथंसंगच्छतां
कथंचगतंतिरश्चीनमित्यादिप्रयोगाः संगच्छेरन् गतिबुद्धीतिसूत्रेत्वकर्मकग्रहणेनाविवक्षितकर्माणोनगृह्यंतइत्युक्तंतेनाणौयःकर्त्तासण्यंतेकर्मनभवतीति
देवदत्तेनपाचयतीतिसिद्धं गत्यर्थाकर्मकेतिसूत्रेपिनगृह्यंतेतेनहिसूत्रेणकर्त्तर्यपिक्तोविधीयतइतिदत्तवान् पक्ववान्इत्याद्यर्थेदत्तः पक्वइत्याद्यापत्तेः इहसू
त्रेत्वविवक्षितकर्मणामकर्मकत्वेनग्रहणेनकोपिदोषइत्यास्तांतावत्॥ ॥ लस्यवर्णग्रहणेप्रत्ययग्रहणपरिभाषाअर्थवद्ग्रहणपरिभाषाचनप्रवर्त्ततेइति
लुनातिचूडालइत्यादौतिबाद्यादेशःकुतोनभवतीतिचेत् अत्राहुः लःकर्मणीतिसूत्रेनिर्दिश्यमानांकर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थेविहितस्यलकारस्यग्रहणमितिअ

कशेषआश्रीयतां तथाहि सतिसंज्ञाअपिषडितिपरस्मैपदात्मनेपदग्रहणानुवृत्तिक्लेशम्विनैवेष्टसिद्धिरितिचेन्नैवं एकशेषाश्रयणेगौरवाद्वैयर्थ्याच्च तयापिपरस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव अन्यथाशतृक्वसोः सावकाशपरस्मैपदसंज्ञाप्रथमादिसंज्ञयाबाध्येत ततश्चक्राम्यति क्रामतीत्यादौक्रमः परस्मैपदेष्विति दीर्घोनस्यात् आक्रामन्नित्यादौतस्यसावकाशत्वात् यदितुपरस्मैपदानामितिविहितस्यणलोणलुत्तमोवेतिणित्वविकल्पविधानात् ज्ञापकात् परस्मैपदसंज्ञाप्रथमादिसंज्ञयानबाध्यतइतिब्रूषेत्तर्हिसुतरांप्रतिपत्तिगौरवं॥ ❀ ॥ तान्येकवचन॥ तानीत्यस्यारम्भानंतुलभ्येत्यादि अन्यथाएकसंज्ञाधिकारात् प्रथमादिसंज्ञानामेकवचनादिसंज्ञानांचपर्यायः स्यात् इष्टापत्तौतुअत्तेर्लोटोमेर्निरितिकृतेएकत्वविवक्षायामुत्तमसंज्ञाभावादाडुत्तमस्येत्यस्याप्रवृत्त्याअद्मीत्यादिप्रयोगोपिसाधुःस्यादितिभावः प्रत्येकमितियत्तुप्राचाए

तान्येकवचनद्विवचनबहुवचनान्येकशः॥१।४।१०२॥ लब्धप्रथमादिसंज्ञानितिङस्त्रीणित्रीणिवचनानि प्रत्येकमेकवचनादिसंज्ञानिस्युः युष्मद्युपपदे समानाधिकरणेस्थानिन्यपिमध्यमः १।४।१०५। तिङ्वाच्यकारकवाचिनियुष्मद्यप्रयुज्यमाने प्रयुज्यमानेचमध्यमःस्यात् प्रहासेचमन्योपपदेमन्यतेरुत्तमएकवच्च।१।४।१०६। मन्यधातुरुपपदंयस्यधातोस्तस्मिन्प्रकृतिभूतेसतिमध्यमःस्यात् परिहासेगम्यमानेमन्यतेस्तूत्तमःस्यात्सचैकार्थवाचकः अस्मद्युत्तमः १।४।१०७। तथाभूतेऽस्मद्युत्तमःस्यात् शेषेप्रथमः १।४।१०८। मध्यमोत्तमयोरविषयेप्रथमःस्यात् भूसत्तायां।कर्त्तृविवक्षायांभूतिइतिस्थिते॥

१९ कैकशइत्युक्तंतदयुक्तम् शसैववीप्सायाउक्तत्वेनद्विर्वचनायोगात् येननाप्राप्तिन्यायेनद्विर्वचनापवादः शसितिसिद्धांतात् तथासुपइतिसूत्रेप्येकैकशइतिप्राचोक्तमयुक्तमेव एतच्चमनोरमाग्रंथानुरोधेनोक्तम् अन्येतुएकैकमेवैकैकशः स्वार्थेशस्नत्वत्रवीप्सायाम् नचस्वार्थेयः शस्सआकरग्रंथात्नावगम्यतेइतिवाच्यम् एकांकपिलांएकैकशः सहस्रकृत्वोदत्वेतिभाष्यात्। शसंतस्यप्रत्येकमित्यर्थकत्वेनकैयटेनव्याख्यानाच्चस्वार्थिकस्यापिशसोवगम्यमानत्वात् ततश्चएकैकशइतिप्राचोक्तमयुक्तमितियदुक्तंतदेवायुक्तमित्याहुः युष्मदि।समानाधिकरणइत्यस्यव्याख्या

त्रुकुटिश्रुति गाङ्कुटादिभ्य इति सनआतिदेशि कङिन्त्वं धातोः किं चङ्ङ्भ्यांमाभूत् अदुद्रुवत् अवोचत् ननु लावस्थायामेव वृतादिभ्यः स्यतासीत्यादिना स्यप्रत्यये कृते व्यवधानादात्मनेपदपरस्मैपदरूप नियमाप्रवृत्तावपि लकारसामान्याश्रयत्वेनांतरंगत्वात् स्यप्रसंगात् पूर्वमेव लस्य तिबादिषु सत्सु पक्षे परस्मैपदं पक्षे चात्मनेपदं सिद्धत्येवेति रङ्ग्रः स्यसनोरिति सूत्रे स्यग्रहणं व्यर्थं सत् तेनैव स्यग्रहणेन विकरणेभ्यो नियमो बलीयानिति ज्ञापितं तेनात्र दातेत्वादृर्तिष्यत इत्येवं नित्यमात्मनेपदे प्राप्ते वृद्भ्यः स्यसनोरिति परस्मैपदमपि पक्षे भवति तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङ्ङोर्न दोषः विकरणात् प्रागेव परस्मैपदप्रवृत्तिरिति चेत् सत्यं स्यग्रहणं विकरणव्यवधानेपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङ्ङोर्दोषः स्यादेव अयं पक्षः शदेः शित इति सूत्रे भाष्यकैयटयोः स्पष्टं किं च तदंतविधिलाभार्थमपि धातुग्रहणमावश्यकं धातोरेकाच इत्यादिना यङ् वोभूयते ऋतेरीयङ् ऋतीयते शेते हुते इत्यत्र तु व्यपदेशिवद्भावेन ङिदंतत्वं नमो वरिवश्चित्रङ इति क्यचि चित्री यते इत्येतत्

स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२। स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले शेषात्कर्तरि परस्मैपदं १।३।७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्त्तरि परस्मैपदं स्यात् तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १।४।१०१। तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥ ९ कथमिति चेदत्राहुः अवयवे अचरितार्थो ङकारः क्यजंतस्य विशेषणं भवति तथा च समुदायानुबंधो ङकार इति व्यपदेशिवद्भावे नैव ङिदंतत्वं बोध्यमिति स्वरितञितः पूर्ववदिद्द्वन्द्वः प्रत्येकं संबध्यते कर्त्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायं कर्मण्यण् धातोरिति धातोर्लस्येत्यर्थः लकारधात्वोराक्षेपः पूर्ववद्बोध्यः तिङस्त्रीणि त्रीणि तिङः षट् त्रिकाः संज्ञास्तु तिस्र इति यथासंख्यं न प्राप्नोतीत्यत आह उभयोरिति परस्मैपदमात्मनेपदमिति चानुवर्त्तते तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथासंख्यं संज्ञाप्रवर्त्तत इति भावः ननु प्रथमश्च प्रथमश्च प्रथमौ मध्यमश्च मध्यमश्च मध्यमावित्येवं कृतैकशेषाणां प्रथमादीनां प्रथमौ च मध्यमौ च उत्तमौ च प्रथममध्यमोत्तमा इति द्वंद्वेऽभ्युपगते त्रिकद्वयस्य त्रिकद्वयस्य यथासंख्यं प्रथममध्यमोत्तमसंज्ञाः स्युः न त्वेकैकस्येति एवं णलुत्तमो वेति सूत्रे विरुद्धो तणलुत्तमसंज्ञकत्वालाभात् ततश्च प्रथममध्यमोत्तमा इत्यत्र कृतद्वंद्वानां प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा

इट् तस्यागमेनादित्वविधानात्प्रत्ययाद्युदात्तत्वं न प्राप्नोतीत्याशंक्य प्रत्ययस्वरे कर्त्तव्ये आगमा अविद्यमानवदित्यतिदेश आद्युदात्तश्चेति सूत्रे भाष्यादौ स्वीकृतः नचैतत्केव
लस्यापि प्रत्ययत्वे युज्यते नचतन्मते आगमसहितस्यापि प्रत्ययत्वादिकारस्याप्युदात्तः स्यात्तद्वारणाय प्रत्ययस्वरे कर्त्तव्ये इत्यादि ग्रंथः स्वीकृतः नचैतत्केव
विरोध इति वाच्यं आगमा अनुदात्ता इति विशेषवचनेनागमस्याप्यनुदात्तत्वे कृते आद्युदात्तत्वस्य तत्राप्रवृत्तेरिति दिक् रुस्येति रुकारादकार उच्चारणार्थः अतोगु
णइति अतो दीर्घो यञीति तु न प्रवर्त्तते स्थान्यत्वादेशविधौ स्थानिवत्त्वनिषेधादिति भावः॥ अतो दीर्घो तुरुस्तुशम्यम इति सूत्रात्सार्वधातुक इत्यनुवर्तते सार्व
धातुके किं केशवः अंगना अत आ इति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथा स्यादित्येवमर्थं अन्यथाऽपासीरोदनं देवदत्त न नु पचामि भोरित्यत्रानंत्यस्यापि प्रश्नाख्या
नयोरिति प्लुतः स्यात् केचित्तु अत आदिति सुवचम् तपरकरणसामर्थ्याद्विकारनिवृत्तिर्भवेदिति प्लुतस्यापि प्रसंगात् उदात्तस्थाने उदात्त आकारः अनुदात्तस्था

अतो दीर्घो यञि॥७।३।१०१॥ अतोंगस्य दीर्घः स्यात् यञादौ सार्वधातुके परे भवामि भवावः भवामः सभवति तौ भवतः ते भवंति त्वं
भवसि युवां भवथः यूयं भवथ अहं भवामि आवां भवावः वयं भवामः एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः एतं एत वा मन्ये
ओदनं भोक्ष्येथे भोक्ष्यध्वे भोक्ष्ये भोक्ष्यावहे भोक्ष्यामहे इत्यादि मन्यसे मन्येथे मन्यध्वे इत्यादिरर्थः युष्मद्युपपदे इत्याद्यनुवर्त्तते तेने
ह न एतु भवान्मन्यते ओदनं भोक्ष्ये इति प्रहासे किम् यथार्थकथने माभूत् एहि मन्यसे ओदनं भोक्ष्ये भुक्तः सोऽतिथिभिरित्यादि॥ परो
क्षे लिट्॥३।२।११५॥ भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् लस्य तिवादयः॥ ९ नेअनुदात्त आकार इत्यादि तु स्थानेंतरतमद्द

त्यनेनैव सिद्धं अत एव रषाकप्यग्नीति सूत्रे रषाकपि शब्दो मध्योदात्त एक एवोदात्तत्वं प्रयोजयत्यग्न्यादिषु तु स्थानेंतरतम इ
मादावुक्तं ततश्च प्रयोजनाभावात्तपरकरणमनणिविध्यर्थमिति नाशंकनीयमेव यदि तु हल ङ्याब्भ्य इत्यत्र आ आवितिवत् अत आ इत्यत्रापि आ
आ इति प्रश्लेषः क्रियते तदा तपरकरणं विनापीष्टसिद्धिरित्याहुः प्रहासे चेति सूत्रस्योदाहरणमाह एहि मन्ये इति ओदनं भोक्ष्ये इति त्वं मन्यसे इत्यर्थः एतं गात्रेति
एतं मन्ये ओदनं भोक्ष्येथे एत मन्ये ओदनं भोक्ष्यध्वे इत्यन्वयः भोक्ष्यावहे इति युवां मन्येथे भोक्ष्यामह इति यूयं मन्यध्वे इति क्रमेणार्थः परोक्षे लिट् यद्यप्यधिश्रयणा

नं तिङ्वाच्यकारकवाचिनीति भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। स्थानिनीत्यस्य व्याख्यानमप्रयुज्यमानइति समा नाधिकरणे किम् त्वां पश्यति त्वया क्रियते तुभ्यं ददाति मन्योपपदइति सप्तम्यंतस्यानुगुणत्वेन व्याचष्टे। तस्मिन्प्रकृतिभूते सतीति तस्माद्धातोर्लस्यस्थानइ त्यर्थः तथाभूतेति तिङ्वाच्यकारकवाचिनि प्रयुज्यमाने ऽप्रयुज्यमाने चेत्यर्थः॥ ॥ तिङ्शित्॥ धात्वधिकारोक्तादिति किम् हरीन् शसः सार्वधातुकमपि द्वितिडित्वेपि ङ्गिति तीति गुणः स्यात् लिहः श्रियइत्यादि शसंतेषु सार्वधातुके यमिति पिकुच स्यात् केचित्तु वारिणी इत्यत्र तुमिक कृते पिलघूपधगुणः स्यादित्याहुस्त न्न क्ङितीति निषेधात् इगंतत्वप्रयुक्तस्य नुमो गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च कर्त्तरि शप्॥ सार्वधातुके यगित्यतः सार्वधातुकइत्यनुवर्त्तते धातो रेकाचइति सूत्राद्धातोरिति च तदाह कर्त्रर्थ इत्यादि। मोंतः। तकारादकार उच्चारणार्थः आयनेयीनीति सूत्रात्प्रत्ययग्रहणमनुवर्त्तते नत्वादिग्रहणमेकदेशेस्व

तिङ्शित्सार्वधातुकं ३।४।११३। तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः॥ कर्त्तरि शप् ३।१।६८। कर्त्रर्थे सार्वधातुके परे धा तोः शप् स्यात् शपावितौ॥ सार्वधातुकार्द्धधातुकयोः ७।३।८४। अनयोः परयोरिगंतांगस्य गुणः स्यात् अवादेशः भवति भवतः झो न्तः ७।१।३ प्रत्ययावयवस्य झस्यांतादेशः स्यात् अतो गुणे भवंति भवसि भवथः भवथ॥ १ रितत्वप्रतिज्ञानात् तस्यापि अनुवृत्तौ तु शयां

ते इति न सिध्येत् शीङो लेट् लेटोडाटावित्यंतरंगत्वादंतादेशात्प्रागाटि कृते झस्यादित्वाभावात्तदेत्तदाह प्रत्ययावयवस्येति प्राचा तु प्रत्ययादेर्झस्येत्युक्तं तदनेन प्रत्यु क्तं इहमनोरमायामादिग्रहणं निवृत्तमित्युक्तं तदापाततः अन्यत्राप्रवृत्तस्यादिग्रहणस्य निवृत्तत्वायोगात् निवृत्तमित्यस्याननुवृत्तमित्यर्थ इति वा कथंचित् व्याख्येयम् यत्तु प्रत्ययादेरिति ग्रंथसमर्थनाय व्याचक्षते आडागमे कृते तत्सहितोपि प्रत्ययो स्तु नाम न तु तत्सहित एव प्रत्यय इति नियमोस्तीति तन्न अवयवविनिर्मुक्तस्यावय वित्वायोगात् अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः ननु अंगात्परस्य प्रसपसइट् यासुडंतं तु नांगमिति चेन्न आगमविनिर्मुक्तस्यापि प्रत्ययत्वमिति वदतां मते भवामि भविष्यामीत्यादौ विकरणांतस्येव तदादिग्रहणबलेन यासुडंतस्याप्यंगतापादुर्वारत्वात् किंच लविषीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङः स्थाने

स्तुभयोर्ग्रहणं। निरनुबंधपरिभाषयालुग्विकरणालुग्विकरणयोरिति परिभाषया च। न च साहचर्याल्लुग्विकरणस्यैव ग्रहणमिति शंक्यं। तस्यानित्यत्वात्। ष्णुते जने। शीङ् स्वप्ने। ष्णु प्रस्रवणे। णु स्तुतौ। टु क्षु शब्दे। टुओश्वि गतिवृद्ध्योः॥ डीङ् विहायसा गतौ। श्रिञ् सेवायां। वृङ् संभक्तौ। वृञ् वरणे। नन्वेतद्विना नामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येन्नैवं। ऊर्णोतेर्णुवद्भावो वाच्य इति वक्ष्यमाणवार्तिकेनेष्टसिद्धेः। अत एव ऊर्णोतेर्नूयते इत्यत्र धातोरेकाच इति यङ्। ऊर्णुनावेत्यत्रानेकाच्त्वेन प्रवृत्तस्याम्भावस्यासिध्यति। उक्तं च भाष्ये। वाच्य ऊर्णोर्णुवद्भावो यङ् प्रसिद्धिः प्रयोजनं। आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहादिति। विभाषागुणेस्त्रियामिति। हेतावियं पंचमी हेतुरिह फलं। एतच्च केचिदेसर्ष्ट उपग्रहः प्रतिषेधः। इट्प्रतिषेधार्थमित्यर्थः। एवं च णुवद्भावेनैकाच्त्वात् श्र्युकः कितीति निषेधप्रवृत्तेः। ऊर्णुत इत्यादि सिध्यति। एकाच उपदेश इतीण्निषेधस्तु न प्रवर्तते णुवद्भावेनैकाच्त्वेप्यनुदात्तत्वाभावात्। ऊर्णधातोर्णुधातोश्च उदात्तत्वात्। तथा चोर्णविता और्णवीदित्याद्यपि सिद्धं। वसति घस्ल् घसस्य इति प्राचो ग्रंथस्य पाठमुपेक्ष्य हलंतेषु कादिक्रमेणाह शक्लृ इति कांतएकः। चांतेषु पच मुच रिच वच विच सिचः षट्। डुपचष् पाके। पचि व्यक्तीकरणे। द्वावपि पचित्यनेन गृह्येते। रिचित्यनेन रिचिर् विरेके। रिच वियोजनसंपर्चनयोरिति यौजादिकश्च गृह्येते वचित्यनेन तु वच परिभाषणे ब्रुवो वचिरपि। वचि यौजादिकोपि गृह्यते। छांतेषु प्रच्छ एकः। जांतेषु त्यज निजिर् भज भंज भुज भ्रस्ज मस्ज यज युज रुज रंज विजिर् स्वंज संज सृजः पंचदश भुजित्यनेन भुज पालनाभ्यवहारयोः। भुजो कौटिल्ये इति च गृह्यते। युजित्यनेन युजिर् योगे। युज समाधाविति च गृह्यते। केचित्तु न्याप्रभृतिश्लोके भाष्ये च युजिस्से तत्र युजिर् योग इत्यस्यैकदेशोच्चारणमित्याहुः तन्मते युज समाधौ सेट्। सजित्यनेन तु सृज विसर्गे दिवादिस्तुदादिश्च गृह्यते। दांतेषु। अद सद स्विद छिद् तुद नुद पद्य भिद् विद्यति विनद् शद सद स्विद्य स्कंद हदः पंचदश खिदित्यनेन खिद दैन्ये खिद्यतिः खिंदतिः खिनत्तिश्च गृह्यते। विद्यतीति विद सत्तायां। विन्त्तीति विद सिध्य एकादश। रुधितिरुधिर् आवरणे। अनो रुध कामे इति दिवादिश्च गृह्यते। नांतेषु मन्य हनौ द्वौ। मनज्ञाने दिवादिः॥ पांतेषु आप् — क्षिप् छुप् तप् तिप् तृप्य दृप्य लिप् लुप् वप् शप् स्वप् सृप् त्रयोदश। क्षिपित्यनेन क्षिप प्रेरणे क्षिप्यतिः क्षिपति श्च गृह्यते। छुप स्पर्शे तपित्यनेन तप संतापे। तप ऐश्वर्ये दिवादिः। तपदाहे इत्यपि णिजभावपक्षे गृह्यते। तिपृ क्षरणे। तृप्यतिदृप्यत्योर्वेट् त्वेप्यनुदात्तस च दुपधस्येत्यमर्थोत्र पाठः। भांतेषु यभ रभ लभस्त्रयः। मांतेषु गमनविचारणे। धान्तेषु क्रुध क्षुध बुध्य बंध युध रुध राध व्यध शुध साध २ त्रु

नचवार्णादांगंवलीयइतिवृद्धेः प्रागल्लोपएवस्यादितिशंक्यं। व्याश्रयत्वात्। वार्णादांगमितिपरिभाषायाअनित्यत्वाद्वा। तत्रहिश्नसोरल्लोपइतितपरकरणमेव लिंगंयदिवृद्धेः प्रागेवाल्लोपःस्यात्तर्हिकिंतेनतपरकरणेनेति। यद्यपिवैदिकप्रक्रियायामानट् आवः इत्यादौकंदस्यपिदृश्यतइत्याडागमस्यवक्ष्यमाणत्वात्तदर्थमाट् सूत्रंकर्तव्यंतथाप्याटंविनैवअजाद्यस्ययेनआङ्पूर्वकत्वेनवातत्कथंचित्व्याख्येयमितिस्थितस्यगतिमाहुः। सलोपइतिलिङः सलोपोनंसस्येत्यनेन। एधयाताम् इति। सीयुटः सलोपेआद्गुणः। एधिषीध्वमिति। इणः परत्वेपिइणंतादंगात्परत्वाभावादिणः षीध्वमितिढत्वंनभवति॥ ॥आत्मनेझोंतइत्यतोझइतिअदभ्यस्तादि

आत्मनेपदेष्वनतः।७।१।५॥ अनकारात्परस्यात्मनेपदेषुझस्यअतइत्यादेशःस्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथां। इणः षीध्वंलुङ्लिटाम्धोः ङ्गात्। ऐधिढ्वम्। इड्भिन्नएवइणिहगृह्यतेइतिमतेतु। ऐधिध्वं। ढधयोर्द्वस्यमस्यचद्वित्वविकल्पात्षोडशरूपाणि। ऐधिषि। ऐधिष्वहि। ऐधि ष्महि। ऐधिष्यत। ऐधिष्येतां। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथां। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। उदात्तत्वाद्वलादेरिट्। प्रसङ्गा दनुदात्ताःसंगृह्यन्ते। ऊदृदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ्श्रिभिः। वृङ्वृञ्भ्यांचविनैकाचोजन्तेषुनिहताःस्मृताः १ शक्लृपचमुचरिचवच् विचसिच्प्रच्छित्यजनिजिर्भजः। भञ्जभुजभ्रस्जमस्जियजयुजरुजरञ्जविजिरस्वञ्जिसञ्जसृजः २ अद्क्षुद्खिद्छिद्तुदिनुदःपद्यभिद्वि द्यतिर्विनद्शद्सदीस्विद्यतिःस्कन्दिहदीक्रुधक्षुधिबुध्यती ३ बन्धिर्युधिरुधीराधिव्यधशुधःसाधिसिध्यतीमन्यहन्नाप्क्षिप्छुपितप्तिपस्त प्यतिदृप्यती ४ लिपलुपवपशपस्वपसृपियभ्रम्लभगमनम्यमोरमिः। क्रुशिर्दंशिदिशीदृश्मृशरिशरुशलिशविशस्पृशःकृषिः॥५॥ त्विषतुष् द्विषदुषपुष्यपिषविषशिषशुषश्लिष्यतयोघसिः। वसतिर्दहदिहदुहोनहमिहरुहलिहवहिस्तथा॥६॥ अनुदात्ताहलन्तेषुधातवोद्व्यधिकं



त्सस्मात् अदितिचानुवर्ततेतदाह। झस्यात्स्यादिति। आत्मनेपदेषुकिं। अदंति। सुन्वंति। अनतः किं। एधंते। प्रवंते। इड्भिन्नएवेणिति। विभाषेटइतिइटोविशिष्यग्र हणाद्गोवलीवर्दन्यायेनकैश्चिदिड्भिन्नएवेणिहगृह्यतइतिभावः। ऊदृदंतैरिति। ऊदृदंतेर्विनायौत्यादिभिर्विनावृङ्वृञ्भ्यांचविनाअन्येयेएकाचोऽजंताःस्तेनिह ताःअनुदात्ताइत्यर्थः। तथाचदाता। धाता। चेता। स्तोते त्यादिषुइणनभवति। ऊदंताः। भूलूप्रभृतयः। ऋदंताःकृतृप्रभृतयः। युमिश्रणादौ। रुशब्दे। रुङ्गतिरेषणयोःरि

सि.कौ. पद्गतौ। षिधुसंराद्धौ। बुधअवगमे। मनज्ञाने। पुषपुष्टौ। श्लिषआलिंगने। वसनिवासे। एते भनिटः। पुमिश्रणामिश्रणयोः। अयंसेट्। अमीतयेतिं। णिजिशुद्धौ। ओविजी
टी.त. भयचलनयोः। शकमर्षणे। इत्येषांक्रमेणआदादिकतौदादिकदैवादिकानां व्याख्यानेयेमानुबंधानिर्दिष्टाइत्यर्थः। विंदतिरिति। विदिर्लाभे। दृष्टइति। अनिड्वेनेतिशेषः। भाष्या
ति.उ. नुक्ताइति। भाष्यकृताऽनुक्ताः। ननुप्रत्याख्याता इति। नास्तीह तद्विरोधः। ततश्चग्याघ्रभूत्यादिग्रंथानुरोधात् मुकयशेक्तेननञ्विशिष्टेनानञ्इत्यादिसौत्रप्रयोगादत्तुप्र
२० तिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्चउपलक्षणतयैवभाष्यंनेयमितिभावः। अकर्मकइति। अत्रकेचित्। अभिभवेच्छाधात्वर्थस्तयाचस्पर्द्धार्थकस्यसकर्मकतादृश्य

शर्पूर्वाः खयः। ७।४।६१॥ अभ्यासस्यशर्पूर्वाः खयः शिष्यन्ते। हलादिःशेषइत्यस्यापवादः। पस्पर्द्धे। स्पर्द्धिता। स्पर्द्धिष्यते। स्पर्द्धतां। अस्पर्द्धत। स्पर्द्धेत।
स्पर्द्धिषीष्ट। अस्पर्द्धिष्ट। अस्पर्द्धिष्यत॥३॥ गाधृप्रतिष्ठालिप्सयोर्ग्रन्थेच। गाधते। जगाधे॥४॥ बाधृलोडने। लोडनंप्रतिघातः। बाधते॥५॥ नाथृना
धृयाच्ञोपतापैश्वर्याशीःषु। आशिषिनाथइतिवाच्यं॥ अस्याशिष्येवात्मनेपदंस्यात्। नाथते॥६॥ अन्यत्र। नाथति। नाधते॥७॥ दधधारणे दधते॥
अतएकहल्मध्येऽनादेशादेर्लिटि। ६।४।१२०॥ लिण्निमित्तादेशादिकंनभवतियदङ्गंतदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यएकारःस्यादभ्यास
लोपश्चकितिलिटि। थलिचसेटि। ६।४।१२१॥ प्रागुक्तंस्यात्। आदेशश्चेहवैरूप्यसम्पादकएवग्राह्यः। शसिदद्योः प्रतिषेधवचनात् ज्ञापकात्। ते
नप्रकृतिजश्भरान्तेषुसत्स्वपिएत्वाभ्यासलोपौस्तएव। देधे देधाते। देधिरे। अतः किम्॥ दिदिवतुः। तपरः किम्। ररासे। एकेत्यादि किम्। तत्सरतुः।
अनादेशादेः किम्। चकनतुः। लिटि। आदेशविशेषणादिहस्यादेव। नेमिथ। सेहे॥८॥ स्कुदिआप्रवणे। आप्रवणमुत्प्लवनमुद्धरणञ्च। इदितोनुम्धातोः।
७।१।५८॥ स्कुन्दते। चस्कुन्दे॥९॥ श्विदिश्वैत्ये। अकर्म्मकः। श्विन्दते। शिश्विन्दे॥१०॥ वदिअभिवादनस्तुत्योः। वन्दते। ववन्दे॥११॥ भदिकल्याणेसुखेच।

ते। आह्वास्तमेणवमरावतींयेति उदाहरिष्यतेचस्पर्द्धायामाङः इत्यत्रस्वयमेव। कृष्णश्चाणूरमाह्वयतेस्पर्द्धतइत्यर्थइति। श्रीहर्षोपिप्रायुंक्त। तन्नासत्यगुणांतवात्रेतास्पर्द्धि
तुमर्हतीति। अतोस्यसकर्मकत्वंन्याय्यमित्याहुः॥ ॥ शर्पूर्वाः। अतद्गुणसंविज्ञानोऽयंबहुव्रीहिः। तेनशरोनशेषः। किंतुखयामेव। इहस्पर्द्धइत्यत्ररेफस्यापिहल्त्वंभ
वतिद्वितीयस्यैकाचःसंबंधिरेफस्यैवनन्द्राइतिनिषेधादितिबोध्यं। गाधृ। ऋकारोनाग्लोपिशास्वृदित्तामितिनिषेधार्थः। अजगाधत्। आस्पदंस्थापनाअवस्थानंवाप्र

म्यमृम्म्ग्रवारः। शांतेषु क्रुश दंश दिश दृश मृश रिश रुश लिश विश स्पृश षोदश। रिश रुश हिंसायां। लिशित्यनेन लिश अल्पीभावे दिवादिः लिश गतौ तुदादिश्च गृह्य ते॥ षांतेषु कृष त्विष तुष द्विष दुष पुष्य पिष विष शिष शुष श्लिष एकादश। कृषिति भौवादिक तौदादिकौ गृह्येते। विषिस्यनेन विष्लृ व्याप्तौ। जिष विषु मिषिति दंडकस्थो पि गृह्यते। शिषित्यनेन तु शिष्लृ विशेषणे कश्रवषशिषे ति दंडकस्थश्च गृह्यते। विषिति विष्लृ व्याप्तौ विति जौहोत्यादिक एव गृह्यते न तु दंडस्थः। शिषित्यनेनापि षिष्लृ विशेषणे इति रौधादिक एव न तु दंडकस्थ इति वोपदेवादयः। सांतेषु घस्लृ वसती द्वौ। घस्लृ अदने लुङ् सनोर्घस्लृ इत्यत्र आदेशस्तु स्थान्यनुदात्तत्वेनापि सिद्धः। हांतेषु दह दिह दुह मिह नह रुह लिह वहोऽष्टौ। दुहित्यनेन दुहिरिति भौवादिको न गृह्यते किंतु दुह प्रपूरणे इति आदादिक एवेति प्रांचः। इह मनोरमायां संग्रह श्लोक उक्तः। कचवर्जा दधनपाभमशाषसहाः क्रमात्। कचकाणणताः खडो गघजाष्टखजाः स्मृता इति तत्र पूर्वार्द्धोपात्ता ये चतुर्दश वर्णास्तदंता धातवः कादिक्रमेण येवर्णास्तत्संख्याकाः॥ ८॥

तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ७ तृपदृपी तौ वारयितुं श्यना निर्देश आदृतः। किञ्च। स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना॥ ९॥ विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येपि दृश्यते। वसिः शयालुकायैतिर्निर्दिष्टोऽन्यनिवृत्तये। निजिर् विजिर् शक्लृ इति सानुबन्धा अमी तथा॥ १०॥ विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्यानुक्तान वेहोक्ता व्याघ्रभूत्या। व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम्॥ १०॥ रञ्जि मस्जी अदि पदी तुदक्षुधशुषिपुषी शिषिः भाष्यानुक्तान वेहोक्ता व्याघ्रभूत्या। दिसम्मतेः॥ ११॥ स्पर्द्धसङ्घर्षे। संघर्षः पराभिभवेच्छा। धात्वर्थेनोपसंग्रहादकर्मकः। स्पर्द्धते॥ ९ ध्यादयर्थः। अतएवकांत एकः। चांताः षट्।

क्षांत एकः। जांताः पंचदशेत्यादिव्याख्यानं। कद्रत्येकस्य चद्रति षण्णां। णद्रति पंचदशानां संज्ञेत्याद्यभ्युपगमात्। पांतेषु द्वयोः॥ ःःः॥ श्यना निर्देशस्य फलमाह। तुदादाविति। तृपदृपी मतभेदेन तुदादौ स्थितौ चुरादौ तु तृपिः सर्वमते स्थितः दृपिः स्वकीयमतेनेति विवेकः। अतएव वक्ष्यति। तृपतृफतृम्फौ। द्वावपि द्वितीयांताविस्त्यन्ये। तृपदृफ उत क्लेशे प्रथमः प्रथमांतः द्वितीयांत इत्येके इति च तुदादौ। चुरादौ तु तृप तृम्फौ। तृपदृपसंदीपन इत्येके इति च। अन्यनिवृत्तये इति। निवर्तनीयास्तु जिस्विदा स्नेहनमोचनयोः। पद स्थैर्ये। षिध गत्यां। षिधू शास्त्रे मांगल्ये च। बुधिर् बोधने इति भौवादिकाः। मनु अवबोधने तानादिकः। पुष पुष्टौ भौवादिकः क्रैयादिकश्च। श्लिष दाहे भौवादिकः। वस आच्छादने आदादिकः। एते अनुदात्तत्वरहिता सेटः। युज बंधने क्रैयादिकः। अयमनुदात्त इत्यनिट्। श्यना निर्देशेन संग्राह्यास्तु जिष्विदा गात्रप्रस्रवणे

वृत्तयेशपानिर्देशएवास्त्विति शंक्यं। वकारांतानामूठ्भाविनांयङ्लुक्नास्तीतिवक्ष्यमाणत्वात्। षेवृ सेवायां। परिषेवते। षिञ् बंधने क्तांतः सितशब्दः एरजंतः पचाद्यजंतो वा सयशब्दः विषितः। विषयः। प्रत्यपविशिष्टग्रहणं किं। विसिनोति। षिवु तंतुसंताने। परिषीव्यति। षह मर्षणे। परिषहते। सुडागमः। परिष्करोति। स्तुस्वंजोरुपसर्गात्सुनोतीत्येव सिद्धे परिनिविभ्यः परयोरेतयोः सिवादीनां वाड्व्यवायेपीति विकल्पार्थं पुनर्वचनं। प्राक्सितात्। उपसर्गात्सुनोतीत्यादिना विहितं षत्वं अड्व्यवाय एवेति भ्रमनिवारणार्थमपिशब्दस्योपादानं। तेषामिति। पंचदशानामित्यर्थः। अभ्यषुणोदित्यादीन्युदाहर्तव्यानि॥ ⁂ ॥स्यादिषु। इह द्वे वाक्ये आद्यं षत्वविध्यर्थं द्वितीयं तु नियमार्थमित्याशयेनाह। व्यवायेपि षत्वमेषामेव चेति। स्यादीनां दशानामेवाभ्यासस्य षत्वमित्यर्थः। तत्फलं तु षू प्रेरणे अभिसुसूषति। अत्रोक्तनियमादभ्यासस्य कारस्य न षत्वं द्वितीयस्य तु स्तौतिण्योरिति नियमान्न भवति। अभिसिषासतीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं पूर्वस्य तु उक्तनियमान्नेति बोध्यं। स्यादेतत्। निषिषेधे

स्यादिष्वभ्यासेन चाभ्यासस्य। ८।३।६४॥ प्राक्सितात्स्यादिष्वभ्यासेन व्यवायेपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्॥ निषिषेध निषिषिधतुः। १०॥ सेधतेर्गतौ। ८।३।११३॥ गत्यर्थस्य सेधतेः षत्वं न स्यात्। गङ्गामभिसेधति॥ ११॥ षिधू शास्त्रे माङ्गल्ये च। शास्त्रं शासनम्। स्वरतिसूतिसूयतिधूञूदितो वा। ७।२।४४॥ स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात्। झषस्तथोर्धोऽधः। ८।२।४०॥ झषः परयोस्तथोर्धः स्यान्न तु दधातेः। जश्त्वं। सिषेद्ध। सिषेधिथ। सेद्धा। सेधिता। सेत्स्यति। सेधिष्यति। असैत्सीत्॥ ९ स्यादौ अभ्यासस्योपसर्गात्सुनोतीत्यनेन सिद्धं अभ्यासात् परस्य तु आदेशप्रत्यययोरित्यनेनेति किमाद्यवाक्येन। अत्राहुः। फलत्रयार्थमाद्यं वाक्यं। तथाहि। अषोपदेशार्थं सेनया अभियातुमिच्छति अभिषिषेणयिषति। अवर्णांताभ्यासार्थं च। अट्ठीसनं गोत्रभिदोऽधितष्ठौ। षणि प्रतिप्रसवार्थं च। अभिषिषिक्षति। षिच क्षरणे। स्तौतिण्योरेवेति नियमात् षभूते सनि निवर्तितमपि सत्वमुपसर्गमाश्रित्य अत्र भवतीति। सेधतेर्गतौ। श्तिपा निर्देशाद्यङ्लुकि न निषेधः। तेन उपसर्गमाश्रित्य षत्वं भवत्येव। विषेषिधीति। न च सेधतिश्पानिर्देशाद्यङ्लुकि उपसर्गात्सुनोतीति षत्वं न भवेदिति शंक्यं। दैवादिकनिवृत्त्यर्थतया शपानिर्देशस्य चरितार्थत्वात्। अन्यथा सेधतेरिति श्तिपादिनिर्देशस्य वैयर्थ्यापत्तेरिति दिक्। षिधू शास्त्रे। मांगल्यं मंगलक्रिया। स्वार्थे ष्यञ्। स्वरतिसूति। सू शब्दोपतापयोः भ्वादिः। ननु स्वरतिसूधूञूदितो वेति सूत्रतां

सस्य षत्वं न स्यादिति शंक्यं। षत्वविधौ नुम्विसर्जनीयशर्व्यवायेपीत्यधिकारात्। इणंतादुपसर्गादिति व्याख्याने तु स्यादेवात्राव्याप्तिः। दुरः षत्वणत्वयोरुपसर्गत्वप्र
तिषेधाद्दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक्। मूर्द्धन्यादेशे फलितमाह। सस्य षः स्यादिति। स्थादिषु प्राक् सितादित्यत्र क्रमज्ञानस्यापेक्षितत्वात्तेनै
व क्रमेण षत्वसूत्राणि व्याचष्टे। सदिरप्रतेः। अप्रतेः किं। प्रतिसीदति। षष्ठ्यर्थे प्रथमेत्याह। सदेरिति॥ ❁ ॥स्तन्भेः॥ सौत्रस्येति। स्तन्भुस्तुन्भु इति सूत्रे निर्दिष्टस्य रोधनार्थ
र्थस्य न तु ष्टभिप्रतिबंध इत्यस्येति भावः। एवं च स्तन्भु इत्यङ्विधायकसूत्रेपि सौत्रस्यैव ग्रहणमिति बोध्यं। एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। सौत्रो हि धातुर्न
कारोपध इति प्रतिपदोक्तः। इदित्वान्नुमि ष्टभिर्लाक्षणिकस्तेन विस्तंभत इत्यादौ षत्वं न। उदः स्थास्तंभोरिति सूत्रे मकारोपधग्रहणेन उभयोरपि ग्रहणादुत्तंभत इति द्व
योरपि रूपं तुल्यं। मकारस्योभयत्रापि लाक्षणिकत्वात्। उत्तरार्थ इति। उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थ इति भावः। ननु सदिस्तन्भ्योरिति सूत्रिते पि एकदेशे स्वरितत्वप्रति

स्तन्भेः। ८।३।६७॥ सौत्रस्य सस्य षः स्यात्। योगविभाग उत्तरार्थः। किञ्च। अप्रतेरिति नानुवर्त्तते। बाहुप्रतिष्टम्भविवृद्धमन्युरिति रघुवंशे। अवा
च्चाऽऽलम्बनाऽऽविदूर्य्ययोः। ८।३।६८॥ अवात्स्तम्भेरेतयोरर्थयोः षत्वं स्यात्। वेश्च स्वनो भोजने। ८।३।६९॥ व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने। परि
निविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। ८।३।७०॥ परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति। प्राक् सितादड्व्यवायेपि
। ८।३।६३॥ सेवसितेत्यत्र सितशब्दात् प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्॥ ❁ ॥
ज्ञानात् कथंचिदनुवृत्तिर्भविष्यतीत्यत आह। किं चेति। नानुवर्तत इति। तथा च स्तन्भेरित्यत्रा ननुवृत्तये योगविभाग आवश्यक इति भावः। अवाच्च। चकारः किं
स्य प्रयोजन इत्याहुः। आलंबनमाश्रयणं। यथा यष्टिमवष्टभ्य आस्ते। तामाश्रित्य तिष्ठतीत्यर्थः। आविदूर्य्ये। सामीप्यं। तच्च प्रयोगोपाधिः। अवष्टब्धा गौः। निरुद्धा स
तीसमीपे आस्त इत्यर्थः। एतयोः किं। अवस्तब्धो वृषलः शीतेन केचिदिह अविदूरशब्दात् स्वार्थे ष्यञ्। आविदूर्यमनतिदूरं ईषद्दूरमित्यर्थः तथा च अविदूरशब्दान्नञ्
पूर्वान्नत्पुरुषादिति निषेधे प्राप्ते अत एव निपातनाद्भावप्रत्यय इति मनोरमाग्रथोक्तिर्नातीवोपयुज्यत इत्याहुः। वेश्च विषणोति। सशब्दं भुंक्ते इत्यर्थः। अट्कुप्वाङि
ति णत्वं। एवमवषणति। व्यषणत्। विषषाण। स्थादिष्वभ्यासेनेति षत्वं। भोजने किं। विस्वनति वीणा। परिनिविभ्यः सेवेत्यत्र अकार उच्चारणार्थः। न च यङ्लुग्नि

नेर्गदनदागदादीनांचतुर्णांशपानिर्देशःस्सादीनामेकादशानांश्तिपानिर्देशश्चयङ्लुक्निवृत्त्यर्थः।तेनप्रनिजागदीति।प्रनिनानदीतिप्रनिसांसेति।प्रनिजंघनीति।दू
दोणलवन।घुशब्देनघुसंज्ञकादाधादयःषट्गृह्यन्ते।डुदाञ्प्रणिददाति।दाण।प्रणियच्छति।दो।प्रणिद्यति।देङ्।प्रणिदयते।धेट्।प्रणिधयति।डुधाञ्प्रणिदधाति॥

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्साति वपतिवहतिशाम्यतिचिनोतिदेग्धिषु च।८।४।१७॥ उपसर्गस्थान्निमित्तात्पर
स्यनेर्नस्यणस्स्यात्गदादिषु।प्रणिगदति॥१६॥रदविलेखने।विलेखनम्भेदनम्।रराद।रेदतुः॥१७॥णदअव्यक्तेशब्दे।णोनः ६।१।
६५।धातोरादेर्णस्यनःस्यात्।णोपदेशास्त्वनर्द्दनाटिनाथ्नाधनन्दनक्कनॄनृतः।नाटेर्दीर्घाहस्यपर्युदासाहृटादिर्णोपदेशएव।तवर्गचतुर्था
न्तनाधते र्नृनद्योश्चकेचिणोपदेशतामाहुः।उपसर्गादसमासेऽपिणोपदेशस्य।८।४।१४॥उपसर्गस्थान्निमित्तात्परस्यणोपदेशस्यधा
तोर्नस्यणःस्यात्समासेऽसमासेपि।प्रणदति।प्रणिनदति॥१८॥अर्दगतौयाचनेच।अतआदेः।तस्मान्नुड्द्विहलः।७।४।७१॥द्विहलोधा
तोर्दीर्घीभूतादकारात्परस्यनुट्स्यात्।आनर्द।आर्दीत्॥१९॥नर्दगर्दशब्दे।णोपदेशत्वाभावान्नणः।प्रनर्दति॥२०॥गर्दति।जगर्द॥२१॥
तर्दहिंसायाम्।तर्दति॥२२॥कर्दकुत्सितेशब्दे।कुत्सितेकौक्षे।कर्दति॥२३॥खर्ददन्दशूके।दंशाहिंसादिरूपायांदन्दशूकक्रियायामित्य
र्थः।खर्दति।चखर्द॥२४॥अतिअदिबन्धने।अन्तति।आनन्त॥२५॥अन्दति।आनन्द॥२६॥इदिपरमैश्वर्ये।इन्दति।इन्दाञ्चकार॥२७॥विदिअ
वयवे।पवर्गतृतीयादिः।विन्दति।अवयवङ्करोतीत्यर्थः।भिदीतिपाठान्तरम्॥२८॥गडिवदनैकदेशे।गण्डति।अन्तसादयःपञ्चैतेनतिङ्विष
याइतिकाश्यपः।अन्येतुतिङमपीच्छन्ति॥२९॥णिदिकुत्सायाम्।निन्दति।प्रणिन्दति॥३०॥टुनदिसमृद्धौ॥ ९ माशब्देनमेङ्माङोरेवग्रहणंघुप्रकृतिमा

डितिपठित्वाभाष्यादौतथाव्याख्यानात्।णोनः।धातोरिति।धात्वादेःषःसदूसतोऽनुवर्तनाद्धात्वादेरित्येव।नेह।अणति।णोपदेशान्पर्युदासमुखेनाह।णोपदेशा
स्त्विति।नर्दशब्दे।नटअवस्यंदने।चुरादिः।यस्तुनटनृत्तावितिघटादिःसनेहगृह्यते।नाटीतिदीर्घनिर्देशात्।नाथृनाधृयांचादौ।टुनदिसमृद्धौ।नक्कनाशने।

किमनेनसू़तिसूयत्योः पृथक् ग्रहणेन। मैवं। तथाहि सतिनिरनुबंधकपरिभाषयाषूप्रेरणेइतितौदादिकस्यैवग्रहणंस्यान्नत्वादादिकदैवादिकयोरेतयोः। नचै वंषूङ् इतिपठ्यतामितिवाच्यं। लुग्विकरणा ऽलुग्विकरणयोरितिपरिभाषयाअलुग्विकरणस्यसूयतेरेवग्रहणप्रसंगात्। अस्याश्चपरिभाषायाः सूतिसूयत्योः पृथक् ग्रह णमेवज्ञापकमित्याहुः। धूञ्कंपनेस्वादिः। क्र्यादिश्चसानुबंधनिर्देशोधूविधूननइत्यस्यनिवृत्त्यर्थः इटसनिवेत्यतोवेतिवर्तमानेपुनर्वाग्रहणंलिङ्सिचोर्विकल्पनिवृत्त्यर्थं ॥झषस्तथोः। अधइतिकिं। धत्तः। असेत्सीदिति। अस्तिसिचइतिईडागमः। वदव्रजेतिवृद्धिः। ततश्चलं॥ ः॥ झलोझलि। संयोगांतस्येत्यतोलोपइतिरास्तस्येत्यतः। सस्ये तिचानुवर्ततेतदाह। सस्यलोपः स्यादिति। पदस्येत्यधिकारात्प्रत्यासत्त्या झलोझलिसस्येति निर्दिष्टानांत्रयाणामेकपदसंबंधित्वेलोपोयं। तेनसोमसुत्स्थानमित्यत्रनभवति

झलोझलि। ८।२।२६॥ झलः परस्यसस्यलोपः स्यात् झलि। असेद्धां। असेत्सुः। असेत्सीः। असेद्धं। असेद्ध। असेत्सम्। असेत्स्व। असेत्स्म। पक्षेअसेधी त्। असेधिष्टामित्यादि॥ १२॥ खादृभक्षणे। ऋकारइत्। खादति। चखाद॥ १३॥ खदस्थैर्य्ये हिंसायाञ्चचाद्भक्षणे। स्थैर्य्येअकर्म्मकः। खदति। अतउपधायाः। ७।२।११६॥ उपधायाअतोवृद्धिः स्यात् ञितिणितिचप्रत्ययेपरे। चखाद। णलुत्तमोवा। ७।१।९१॥ उत्तमोणल्वाणित्स्यात्। च खाद। चखद। अतोहलादेर्लघोः। ७।२।७॥ हलादेर्लघोरकारस्यइडादौपरस्मैपदेपरेसिचिवृद्धिर्वास्यात्। अखादीत्। अखदीत्॥ १४॥ वदस्थैर्य्ये। पवर्गीयादिः। वदति। ववाद। वेदतुः। वेदिथ। ववाद। ववद। अवादीत् अवदीत्॥ १५॥ गदव्यक्तायाम्वाचि। गदति॥ जगाद ॥

। झलः किं। अनेष्टां। झलिकिं। असेत्सीत्। असेधीदिति। नेटीतिवृद्धिप्रतिषेधः। गुणः। खादृ। ऋकारइदिति। तेननाग्लोपीतिनिषेधे अचखादत्। अतउप। अतःकिं। तुतोद। उपधायाः किं। गणयति। इहअतोलोपंबाधित्वापरत्वाद्वृद्धिःस्यात्। अतोहलादेः। इहसिचिवृद्धिरितिसूत्रमनुवर्तते। नेटीतिसूत्रादिटिइतिऊर्णोतेर्विभा षेत्यतोविभाषाग्रहणंचतदाह। इडादावित्यादि। अतः किं। अदेवीत्। हलादेः किं। माभवानतीत्। अटीत्। लघोः किं। अगर्दीत्। अरक्षीत्। इडादौ किं। अपाक्षीत्। परस्मैपदे किं। अयतिष्ट अयतिषातां। अचकासीदित्यत्रचकाराद्कारस्यवृद्धिवारणाययेननाव्यवधानमितिन्यायेनयद्येकवर्णव्यवधानमेवाश्रीयतेतदात्वरक्षीदित्यत्रापिप्रसक्त्यभा वाल्लघोरितिशक्यमकर्तुमित्याहुः। तपरकरणंस्पष्टार्थं। पवर्गीयादिरिति। दंत्योष्ठ्यादित्वेतुनशसददेत्येत्वाभ्यासलोपनिषेधाद्वेदतुः वेदिथेत्यादिनसिध्येदितिभावः॥ ॥

उपधायाञ्च। सिपिधातोरित्यतः धातोरित्यनुवर्तते। र्वोरुपधाया इत्यतः र्वोरिक इति। हलि चेत्यतो हली ति च। तदाह। धातोरित्यादि। धातोः किं। ऊङ् तः। कुरूः। कुर्वौ। कुर्वे इत्यत्रेकोदीर्घो माभूत्। न चात्र रेफस्य प्रातिपदिकोपधात्वेपि मदोपधात्वाभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तनमिहानावश्यकमिति वाच्यं। पदस्येत्यनुवृत्तौ तु कुर्दते खूर्दते इत्याद्यसिद्धिप्रसंगात्। वस्तुतस्तु पूर्वत्रासिद्धेन स्थानिवदिति स्त्रीकाराद् चुः परस्मिन्निति स्थानिवत्वस्य निषेधाभ्युपगमेपि कार्यकालपक्षे असिद्धं बहिरंगमिति परिभाषया। प्रवृत्तेर्बहिरंगस्य यणोऽसिद्धत्वात् कुर्वौ कुर्वे इत्यत्रोपधायां चेति दीर्घो न भवेदिति धातुग्रहणानुवर्तनस्य नास्त्यावश्यकता पदस्येत्यननुवृत्त्या कूर्दते इत्यादौ तु दीर्घः सिद्ध्यत्येवेत्याहुः। रेफवकारयोः किं। पुष्प विकसने पुष्प्यति। हल्परयोः किम्। चिरिणोति जिरिणोति इकः किं। अर्वते। नर्दति। ननु हलि चेत्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्यायां कूर्दते गूर्दते इत्यादि सिद्ध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत्। अत्राहुः। हलि चेत्यत्र धातुग्रहणमनुवर्तनीयमेव। अन्यथा दिवमिच्छति दिव्यतीत्यादाव

उपधायाञ्च। ८।२।७८॥ धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। ऊर्दते। ऊर्दाञ्चक्रे॥ २०॥ कुर्द खुर्द गुर्द गुद क्रीडायामेव। कूर्दते। चुकूर्दे॥ २१॥ खूर्दते॥ २२॥ गूर्दते॥ २३॥ गोदते। जुगुदे॥ २४॥ षूद क्षरणे। सूदते। सुषूदे। सेकृ स्रेकृ स्रकि श्रकि श्लकि गत्यर्थाः। दन्त्याज न्तसादयः। एकाचः षोपदेशाः स्मिङ् स्वद स्वञ्ज स्वपश्च स्मिङः। दन्त्यः केवलदन्त्यः न तु दन्तोष्ठजोपि। ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात्॥ ॥ २५॥ ह्लाद अव्यक्ते शब्दे। ह्लादते। जह्लादे॥ २६॥ तिप्रसंगः स्यात्। तथा चोपधायां चेति सूत्राभावे उपधाभूतयोः र्वोः परतो दीर्घो न स्यात्। किं तु रेफवान्तयोरेव धात्वोर्हलि चेति सूत्रेण स्यादित्येतत्सूत्रमावश्यकमेवेति। सूदते इति। स्रवतीत्यर्थः। ननु स्वर्दति वत् स्वद सूदेति दन्त्यादय एव धातवः पठ्यन्तां षोपदेशान्पठित्वा सत्वविधौ गौरवात्। मैवं। तथा हि सति णिजन्ताच्च ङि असिष्वदत् असूषुदत् इत्यादौ लिटि सुषूदे सिषेधेत्यादौ च आदेशप्रत्यययोरिति षत्वं न स्यात् इणः परस्य सकारमात्रस्य षत्वविधौ तु सुपिसोऽसुपिस इत्यादावपि स्यादिति धातुपाठे पाणिनिना तालव्यदंत्यादि पाठवत् षोपदेशा अपि व्यवस्थयैव पठिताः स च पाठ इदानीं परिभ्रष्टः साधादिषु सादिपाठस्यैव दृश्यमानत्वात् अतो लक्षणमुखेन तान्व्यवस्थापयति। सेगित्यादि। दन्त्यश्च अच् च दन्त्याचौ तौ अव्यवहितपरौ यस्य सः दन्त्याजन्तः —

— दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः स आदिर्येषां धातूनां ते दन्त्याजन्तसादयः अजन्तसादयश्चैकाचः षोपदेशा बोध्याः। तथा च साधादौ सांप्रतं पठ्यमानः सकार उपदेशे न स्थित

ष्ठाएकत्रस्थापनं संदर्भो वा ग्रंथः। नाथृ नाधृ। उपतापो रोगः। अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह। आशिष्येवेति। अत एकहल्मध्ये। एकशब्दोत्रा सहायवचनः। एकयोर्हलोर्मध्ये इत्यर्थः तद्व्याचष्टे। अ संयुक्तेति। इष्टानुरोधेन लिटीत्यावर्त्यं आदेशविशेषणमेत्वस्य निमित्तं च क्रियत इत्याह लिणिमित्ते किति लिटीति च यद्यपि गमहनेति सूत्रे क्ङितीति वर्तते। तथापि प्रयोजनाभावात् ङितीत्येतन्नानुवर्तत इति भावः। किति किम्। ननाद। लिटि किं। पापच्यात्। चकणतुरिति। न चैवमपि वभणतुरित्यत्र अभ्यासे चर्त्वस्यासिद्धत्वादेत्वाभ्यासलोपौ स्त एवेति वाच्यं। फलभजग्रहणेन एत्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात्। एवं चादेशश्चेह वैरूप्यसंपादक एव गृह्यते इति व्याख्यानमवश्यं कर्तव्यमेवेति दिक्॥ ॥ मदिस्तुति। मोदः संतोषः। मदो गर्वः। स्वप्न आलस्यं। न शसद द। शसु हिंसायां दस्यांतः। सूत्रे ऽवयवावयविभावः षष्ठ्यर्थः। तथा च शसदद्वादीनां यो ऽकार इत्यन्वयसंभवे ऽपि अकारस्य गुणरूपत्वाद्भेदनिबंधना षष्ठी न संभव

मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु मन्दते। ममन्दे॥१३॥ स्पदि किञ्चिच्चलने। स्पन्दते। पस्पन्दे॥१४॥ क्लिदि परिदेवने। शोक इत्यर्थः। सकर्म्मकः। क्लिन्दते चैत्रं। चिक्लिन्दे॥१५॥ मुद हर्षे। मोदते॥१६॥ दद दाने। ददते। न शसददवादिगुणानाम्। ६।४।१२६॥ शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च यो ऽकारस्तस्य एत्वाभ्यासलोपौ न। दददे। ददाते। ददिरे॥१७॥ षद स्वर्द आस्वादने। अयमनुभवे सकर्म्मकः। रुचावकर्म्मकः। धात्वादेः षः सः। ६।१।६४॥ धातोरादेः षस्य सः स्यात्। सात्पदाद्योरिति षत्वनिषेधः। अनुस्वदते। सस्वदे। स्वर्दते। सस्वर्दे॥१८॥ उर्द माने क्रीडायां च॥

तीत्याशंक्य तन्निर्वाहार्थं व्याचष्टे। गुणशब्देन भावितस्येति। भावितत्वं च साक्षात्परंपरासाधारणं। तथा च शशरतुः। पप्तरतुरित्यादौ गुणशब्देन क्रियमाणयो रत्नदवयोः ऽकारः लुलविथेत्यादौ तु गुणशब्देन क्रियमाणयो ओकारस्तत्स्थानिकस्यावादेशस्यावयवो ऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः। दददे इति। शशसतुः। शशसुः। ववमतुः। ववमुरित्यादावपि निषेधो बोध्यः। षद स्वर्द। अयमिति। प्रत्येकाभिप्रायेणोक्तमित्याहुः। सकर्मक इति। स्वदस्वदह्याहमान्यनुभवे इत्यर्थः। अकर्मक इति। अपां हित्वा प्रायन वारिधारास्वादुः सुगंधिः स्वदते तुषारेति श्रीहर्षः। न स्वदते न रोचते। इत्यर्थः। धात्वादेः॥ धातुग्रहणं किं। षट् षड्। आदेः किं। लषति॥ ॥

नेदि॥ प्रागुक्तंनेति। हलंतत्वादेवसिद्धेवदव्रजोर्विशिष्यविधानान्ननिषेधः। किंतुहलंतलक्षणायाएववृद्धेर्निषेधस्तस्याअनिडादौसिचिचरितार्थत्वात्। अमुमेवार्थमनसि निधायक्वचित्पुस्तकेषुहलंतलक्षणावृद्धिर्नेत्येवपठ्यते। इरइत्संज्ञेति। इकारस्यउपदेशेजनुनासिकइतिरेफस्यतुहलंत्यमितिप्रत्येकमित्संज्ञायामिदितइ तिनुम्स्यादितिभावः। एतस्यवैय्यर्थ्यंचसिद्धव्यक्तायांवाचीयत्रस्फुटीभविष्यति। चुश्च्योतेतिशर्पूर्वाःखयः। यकाररहितोप्ययमिति। तथाचप्रयुज्यतेमधुश्चु तंघृतमिवसुपूतमिति। मंथ। अयंक्र्यादावपिषिधगत्यां। अयमुदिदितिकेचित्। तच्चुसिस्यतिवुस्यत्योःश्यनानिर्देशात्सिधितंवुधितं — मितिवृत्तिग्रंथविरुद्धं। उदित्वेत्वूदितोवेतिक्त्वायांइड्विकल्पान्निष्ठायामिड्नस्यात्यस्यविभाषेतिनिषेधात्। सिषेधेति। आदेशप्रत्यययोरितिषत्वं। उपसर्गात्। सुनोतिसुवतीत्यादिस्तिपानि

नेदि। ७।२।४॥ इडादौसिचिप्रागुक्तंनस्यात्। माभवानतीत्। अतिष्टां। अतिषुः॥१॥ चिती संज्ञाने। चेतति। चिचेत। अचेतीत्। अचेतिष्टां। अचेतिषुः॥२॥ च्युतिर् आसेचने। सेचनमार्द्रीकरणं। आङीषदर्थेभिव्याप्तौच। इरइत्संज्ञावाच्या। च्योतति। चुच्योत। इरितोवा। ३।१।५७॥ इरितोधातोश्च्लेरङ्वास्यात्परस्मैपदेपरे। अच्युतत्। अच्योतीत्॥३॥ श्च्युतिर् क्षरणे। श्च्योतति। चुश्च्योत। अश्च्युतत्। अश्च्योतीत्। यकाररहितोप्ययं। श्चोतति॥४॥ मन्थ विलोडने। विलोडनंप्रतीघातः। मन्थति। ममन्थ। यासुटःकिदाशिषीतिकित्वादनिदितामितिनलोपः। मथ्यात्॥५॥ कुथिपुथिलुथिमथिहिंसासंक्लेशनयोः। इदित्वान्नलोपोन। कुंथ्यात्। मंथ्यात्॥९॥ षिधु गत्यां। सेधति। सिषेध। सेधिता। असेधीत्। सात्पदाद्योरितिनिषेधेप्राप्ते। उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्। ८।३।६५॥ उपसर्गस्थान्निमित्तादेषांसस्यषःस्यात्। सदिरप्रतेः। ८।३।६६॥ प्रतिभिन्नादुपसर्गात्सदेःसस्यषःस्यात्॥ १ ईशोयङ्लुकनिरत्यर्थस्तेनअभिसोषवीति। अभिसोषोतीत्यादौषत्वंनेतिप्राञ्चः। स्यादिष्वेवाभ्यासस्यषत्वंनसुनो त्यादिष्विति नियमान्नेहषत्वप्राप्तिरितिमर्थः। प्रतिषेधःइतिमनोरमादौस्थितं। सेनयेतिणिजंतोनामधातुः। सेनयाअभियातिअभिषेणयति। सेधेतिशपानिर्देशाद्दैवादिकस्यग्रहणंनतुसिध्यतेः। परिसिध्यति। गृहादाराद्लत्रेवतात्स्याद्वाच्छव्यमित्याह। उपसर्गस्थादिति। निमित्तादिति। इणरूपात्कवर्गस्तुनेहसंवध्यते। असंभवात्। नचनिःषुणोतिनिःषेधतिनिःषिंचतीत्यादौव्यवधानेनइणःपरत्वाभावात्।

दंतेत्य दिकिं। चुस्कुंदे। एकाचः किं। सोसूच्यते। सोसूत्र्यते। सूचिसूत्रीचुरादावदंतौ॥ उक्तलक्षणस्यातिव्याप्तिंवारयितुमाह। सेगिति। सेकृगतौ। सृ.म्रगतौ। सृ.गतौ। स्तृञ् आच्छादने। सृजविसर्गे। स्तृञ्आच्छादने। स्त्यैशब्दसंघातयोः। एभ्योऽन्ये। पूर्वेणकेषांचिदसंग्रहादाह। ष्वष्केति। ष्वष्कगतौ। ञिष्विदागात्रप्रक्षरणे। स्वद्आस्वादने। षंजपरिष्वंगे। ञिष्वप्शये। स्मिङ् ईषद्धसने। एतेषोपदेशाइत्यन्वयः। स्वाद्आस्वादनेइत्यादावतिव्याप्तिमाशंक्याह। दंत्यः केवलदंत्यइति। तथाच असिस्वददित्यादौषत्वंनेतिभावः॥ ॐ ॥ ह्लादीसुखेच। चादव्यक्तेशब्दे। ईकारः श्वीदितोनिष्ठायामितीण्निषेधार्थः। प्रह्लन्नः। प्रह्लन्नवान्। इहल्हादोनिष्ठायामित्युपधाह्रस्वः। श्लाघायामितिअविद्यमानगुणसंबंधज्ञापनंश्लाघा आततुरिति। हलमध्यस्थत्वाभावादेत्वंन। इटईटि। संयोगांतस्यलोपइत्यतोलोपइति। रात्सस्येत्यतः सस्येतिचानुवर्ततेतदाह लोपः

ह्लादीसुखेच। चादव्यक्तेशब्दे। ह्लादते॥ २७॥ स्वाद् आस्वादने। स्वादते॥ २८॥ पर्दकुत्सितेशब्दे। गुदरवइत्यर्थः। पर्दते॥ २९॥ यतीप्रयत्ने। यततेयेते॥ ३०॥ युतजुतभासने। योतते। युयुते। जोतते॥ ३१॥ जुजुते॥ ३२॥ विथृवेथृयाचने। विविथे॥ ३३॥ विवेथे॥ ३४॥ श्रथिशैथिल्ये। श्रन्थ्यते॥ ॥ ३५॥ ग्रथिकौटिल्ये। ग्रन्थ्यते॥ ३६॥ कत्थिश्लाघायाम्। कत्थ्यते॥ ३७॥ एधादयोऽनुदात्तेतोगताः। अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपदिनः। अतसातत्यगमने। अतति। अतआदेः। आत। आततुः। आतुः। लुङि आतिस् ईदिति स्थिते॥ इटईटि। ८।२।२८॥ इटः परस्यसस्यलोपः स्यादीटि परे। सिज्लोपएकादेशेसिद्धोवाच्यः॥ आतीत्। आतिष्टां। आतिषुः। वदव्रजहलन्तस्याचः। ७।२।३॥ वदेर्व्रजेर्हलन्तस्यचाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचिपरस्मैपदेषु। इतिप्राप्ते॥ ९ स्यादिति। इटः किं। अहार्षीत्। ईटि किं। आतिष्टां। आतिषुः। सिज्लोपइति। अत्रवदंति। सलोपइति वक्तव्ये सिज्ग्रहणंझलोझलीत्यादिसूत्रत्रयंसिज्विषयकमितिव्याख्यानार्थं। तेनेह न। सोमसुत्स्तोता॥ द्विष्टराम्। द्विष्टमाम्। धिचेतिसूत्रेतुवामनमतेसिचोलोपः। भाष्यमतेतुसस्येतिभेदोबोध्यइति। वदव्रज। अवादीत्। अव्राजीत्। अतोहलादेरितिदिकल्पंबाधित्वाअनेननित्यंवृद्धिः। हलंतस्योदाहरणमपाक्षीत्। अधाक्षीत्। तदंतविधिनैवसिद्धेअंतग्रहणंसस्पष्टप्रतिपत्त्यर्थं। हलोऽचइत्युक्तेव्रजंतांगस्यहलः स्थानेवृद्धिरितिकदाचिदाशंक्येत। अचइतितुइक्परिभाषयाअनुपस्थानार्थं अन्यथाअभैत्सीदित्यत्रस्यान्नलपा

धतिस्त्वर्गीयांतस्तदनुरोधेन कतिचित्तवर्गीयांताः पठिताः। इदानीं लोकप्रसिद्धकादिपाठक्रमेणाह। अयेत्यादि। चुकुके इति। परमपि गुणं बाधित्वा नित्यत्वाद संयोगादिति किल्त्वं॥ ॐ॥ सुभ्रातेत्यादि। सुभ्रातोरुदाहरणानि। षट्टते। अस्य षोडन्तमाचष्टे णिचि टिलोपः षोडयति एवं षंडकरोत्याचष्टे वा षंडयति। षंडीयतीत्यत्र तु षंडशब्दात्क्यचि ईत्वं बोध्यं। एतच्च वार्तिकं भाष्ये प्रत्याख्यातं तथाहि। धात्वादेरिति सूत्रे उपदेश इति वर्तते। नच सुभ्रातॄनाम्रपदेशोऽस्ति। ष्ठिवुष्वष्कतीनां तु

सुभ्रातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः॥ ष्वष्कते। षष्वष्के। अत्र तृतीयन्दन्त्यादिमेके। लषि भोजननिवृत्तावपि॥३५॥ अघि वृघि मघि गत्याक्षेपे। आक्षेपो निन्दा। गतौ गत्यारम्भे चेत्यन्ये। अङ्घते। आनङ्घे। वङ्घते। मङ्घते। मघि कैतवे च॥३८॥ राघृ लाघृ द्राघृ सामर्थ्ये। राघते॥३९॥ लाघते॥४०॥ ध्राघृ इत्यपि केचित्। द्राघृ आयामे च। आयामो दैर्घ्यं द्राघते॥४१॥ श्लाघृ कत्थने। श्लाघते॥४२॥ अथ परस्मैपदिनः पञ्चाशत्॥५०॥ फक्क नीचैर्गतौ। नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क॥१॥ तक हसने। तकति॥२॥ तकि कृच्छ्रजीवने। तङ्कति॥३॥ बुक्क भषणे। भषणं श्वरवः। बुक्कति॥४॥ कख हसने। प्रनिकखति॥५॥ ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः। ओखति। ओखाञ्चकार॥१०॥ शाखृ श्लाखृ व्याप्तौ। शाखति॥१२॥ उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः। कवर्गद्वितीयान्ताः पञ्चदश। तृतीयान्ताः त्रयोदश। इह खान्तेषु रिख त्रख त्रिखि शिखि इत्यपि चतुरः केचित्पठन्ति॥ अभ्यासस्याऽसवर्णे। ६।४।७८॥ अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि। उवोख॥ ९

यकारादी। लोपो व्योरिति यलोपः। प्रनिकखतीति। शेषे विभाषेत्यत्र अकखादाविति पर्युदासान्नेणत्वं नेति भावः। असवर्णेऽचीति। असवर्णे किं। ऊखतुः। अचि किं। इयाज उवाप। उवोखेति। द्विर्वचनेचीति निषेधात्पूर्वं द्वित्वं पश्चादुकारस्य लघूपधगुणे कृते अभ्यासस्योवङ्। एवं इयेषेत्यत्रेयङ्। असवर्णग्रहणसामर्थ्यादियङादौ कर्तव्ये गुणोऽत्रस्थानिवदिति बोध्यं॥ ॐ॥

नृनये। नृती गात्रविक्षेपे। एभ्यः षड्भ्यो भिन्नादुल्यर्थः। तवर्गेति। तेषां मते तु पंचभ्यो भिन्नाणोपदेशाः उपसर्गादसमासेऽपि ‍लेः संग इत्यतोऽनुवर्तनात्समासएव स्यादित्यसमा
सग्रहणं कृते तु तस्मिन्समासएव स्यादित्यपेर्ग्रहणं कृतं। प्रणिनदतीति। नेर्गदेति णत्वं। धातुनकारस्य तु उपसर्गादसमासेऽपीति णत्वं न भवत्यड्डादिभिन्नेन व्यवधानात्।
तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह। दीर्घीभूतादिति। खर्दे दंदशूकस्य सर्पत्वान्नद्यं बिले धातुत्वेन संगच्छत इत्यत आह। दंदशूक क्रियायामिति। दंदशूक

आदिर्ञिटुडवः। १।३।५। उपदेशे धातोराद्या एते इतः स्युः। नन्दति। इदित्वान्नलोपो न। नन्द्यात्॥ ३१॥ चदि आह्लादे। चचन्द॥ ३२॥ त्रदि चे
ष्टायाम्। तत्रन्द॥ ३३॥ कदि क्रदि क्लदि आह्वाने रोदने च। चकन्द॥ ३४॥ चक्रन्द॥ ३५॥ चक्लन्द॥ ३६॥ क्लिदि परिदेवने। चिक्लिन्द॥ ३७॥ शुन्ध
शुद्धौ। शुशुन्ध। नलोपः। शुध्यात्॥ ३८॥ अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत्। शीकृ सेचने। तालव्यादिः दन्त्यादिरित्येके। —— शि
कते। शिशीके॥ १॥ लोकृ दर्शने। लोकते। लुलोके॥ २॥ श्लोकृ सङ्घाते। सङ्घातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा। आद्ये अकर्म
को द्वितीये सकर्मकः। श्लोकते॥ ३॥ द्रेकृ ध्रेकृ शब्दोत्साहयोः। उत्साहो वृद्धिरौद्धत्यञ्च। दिद्रेके॥ ४॥ दिध्रेके॥ ५॥ रेकृ शङ्कायाम्। रेक
ते॥ ६॥ सेकृ स्रेकृ स्रकि श्रकि श्लकि गतौ। त्रयो दन्त्यादयः द्वौ तालव्यादी। अषोपदेशत्वान्न षः। सिसेके॥ ११॥ शकि शङ्कायाम्। शङ्कते। शश
ङ्के॥ १२॥ अकि लक्षणे। अङ्कते। आनङ्के॥ १३॥ वकि कौटिल्ये। वङ्कते॥ १४॥ मकि मण्डने। मङ्कते॥ १५॥ कक लौल्ये। लौल्यङ्गर्वश्चापल्यञ्च।
ककते। चकके॥ १६॥ कुक वृक आदाने। कोकते। चुकुके॥ १७॥ वर्कते। ववर्के॥ १८॥ ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन। चकते। ते
प्रतिघाते च। चकते। चेके॥ १९॥ ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः। कङ्कते। डुढौके। त

कर्तृकायामित्यर्थः। आनंतेति इदित्वान्नुम् तस्मान्नुड् द्विहल इति नुट्। वदनेकदेश इति। तत् क्रियायामित्यर्थः॥ ॥ आदिर्ञिटुडवः उपदेशे जनुना
सिक इत्यतोऽनुवर्तनादाह। उपदेशे इति। उपदेशे किं। जिकारीयति। जिषुपाजीतःक्तः। सुप्तः। द्वितोऽथुच्। नंदथुः। ड्वितः क्त्रिः। कृत्रिमं। क्लिदि परिदेवने। अनुदात्ते
त् सु पठितस्येह पाठः परस्मैपदार्थः। क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं स्वरितेत्सु अयं न पठितः। शुंध शुद्धौ। अयं शौचकर्मणि युजादौ। मांगलिकः स

वृत्तौ तन्न सिध्येदिति दिक्। परत्वाच्चेति। आपाततोयंहेतुः ह्रस्वस्यांगत्वेन बहिरंगत्वादंतरंगं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात्। उंखतीति दूदित्वान्नुम्। लिटि। उंखांचकार। आशिषि उंख्यात्। ववख तुरिति। वादित्वादेत्वाभ्यासलोपौ न। रखति। इंखति। इंखांचकार। ईखति। ईखांचकार। इंगति। इंगांचकार। त्वगि कंपने इ
ति। अयं उख उखीति दंडके गतौ पठितस्य गतिविशेषे वृत्तिं बोधयितुं पठ्यते। अत एवानतिप्रयोजनत्वाद्बहुषु पुस्तकेषु न पठितः। सेवने चेति। यं पूर्वोत्तरहणं सचं
ते इत्यादौ सेवं ते इत्यभियुक्तैर्व्याख्यातत्वात्। स्वरिते त्वस्य च समवाय इति वक्ष्यते। लोचृ। ऋदित्वान्नाग्लोपीति ह्रस्वनिषेधः। अलुलोचत्। पचि व्यक्तीकरणे। पचि वि
स्तार वचन इति चुरादौ। ऋज गति। अर्जनं प्राधान्येन उपार्जनं तु प्रासंगिकं॥ ॐ ॥उद्विधा वित्सादि उद्वि थिलादेश विधिना मेघ प्रति विधेयमिति वचनान्नुडादि
नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते। तेनद्विहल्त्वान्नुट्। आनृजे॥१५॥ ऋजि भृजी भर्ज्जने। ऋञ्जते। उपसर्गादृतीति वृद्धिः। प्रा
र्ञ्जते ऋञ्जाञ्चक्रे। आर्ञ्जिष्ट॥१६॥ भर्ज्जते। बभृजे। अभर्ज्जिष्ट॥१७॥ एजृ भ्रेजृ भ्राजृ दीप्तौ। एजाञ्चक्रे॥२०॥ ईज गतिकुत्सनयोः। ईजाञ्चक्रे॥२१॥
अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः। शुच शोके। शोचति॥१॥ कुच शब्दे तारे। कोचति॥२॥ कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः। अनिदिता
मिति नलोपः। कुच्यात्॥३॥ क्रुच्यात्॥४॥ लुञ्च अपनयने। लुच्यात्॥५॥ अंचु गतिपूजनयोः। अच्यात्। गतौ नलोपः। पूजायान्तु। अञ्च्यात्
॥६॥ वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु म्लुञ्चु म्रुचु म्लुचु गत्यर्थाः। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। अम्रुञ्चीत्। अम्लुञ्चीत्॥ ॐ ॥
विधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणादिति भावः। यद्वा द्विहल्ग्रहणं भाष्यादौ प्रत्याख्यायते। न च। आट आटतुरित्यत्रातिप्रसंगः। अश्नोतेश्चेत्यनेन अवर्णोप
धस्य यदि भवति तर्ह्यश्नोतेरेवेति नियमात्सिद्धमिष्टमित्यन्यत्र विस्तरः। ऋजि भृजी। भर्जनं जलं विना तंडुलादेः संतापविशेषः। ईदित्वात् श्वीदितो निष्ठायामि
ति नेट्। भृक्तः। भृक्तवान्। एज् भ्रेज् भ्राज। भ्राजेर्ऋदित्करणमनुदात्तेत्वमात्रफलं। भ्राजभासेत्यादिना चङ्परे णौ उपधाह्रस्वस्य विकल्पितत्वात्। अबिभ्र
जत्। अबभ्राजत्। परस्मैपदिन इति। चवर्गीयांत परस्मैपदिनः। पूजायां लिति। नांचेः पूजायामिति निषेधादिति भावः॥ ॐ ॥ ॐ ॥ ॐ ॥

सन्निपातपरिभाषयेति। आमि सति लिट्परत्वं धातोर्न सिध्येदिति भावः। अन्ये तु इजादेरिति सूत्रे गुरुमानिति नित्ययोगे मतुप्। ततश्च निसंयोगुरुमान् एधरूद्वा
वित्यादिस्तत्रैव स्यादिति नात्र आमः प्रसक्तिरित्याहुः। ऊखतुरित्यत्र किलाद्गुणाभावे अभ्यासस्यासवर्णे इति उवङ् न भवति। ननु इयेष उवोषेत्यत्रापि अंतरंगत्वा
त् सवर्णदीर्घकृते ऽच्परत्वाभावादियङुवङौ न स्त इति इष्टरूपासिद्धेः किं तत्रासवर्णग्रहणेनेति चेत्। अत्राहुः। वार्णादांगं बलीय इति परिभाषाज्ञापनार्थमेवा
सवर्णग्रहणं कृतं। तेन भवतीत्यत्रांतरंगमपि यणं बाधित्वा गुणो भवति। तथा करोतेर्घञि कार इत्यत्र यणं बाधित्वा वृद्धिर्भवति। न चैवं सिवेरौणादिके न प्रत्यये

सन्निपातपरिभाषयाद्इजादेरित्याम्न। ऊखतुः। ऊखुः। इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति। सकृत्प्रवृत्तत्वा
त् आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः। वार्णादाङ्गं बलीय इति न्यायात्परत्वाच्च। उङ्खति। ववखतुः। वङ्खति।
मेखतुः। त्वगि कम्पने च॥४४॥ युगि जुगि वुगि वर्ज्जने। युङ्गति॥४७॥ घघ हसने। घघति। जघाघ॥४८॥ मघि मण्डने। मङ्घति॥४९॥ शि
घि आघ्राणे। शिङ्घति॥५०॥ अथ चवर्गीयान्ताः। तत्रानुदात्तेत एकविंशतिः। वर्च दीप्तौ। वर्चते॥१॥ षच सेचने सेवने च। सचते। सेचे। सचिता
॥२॥ लोचृ दर्शने। लोचते। लुलोचे॥३॥ शच व्यक्तायां वाचि। शेचे॥४॥ श्वच श्वचि गतौ। श्वचते। श्वञ्चते॥६॥ कच बन्धने। कचते॥७॥ कचि दीप्ति
बन्धनयोः। चकञ्चे। चकाञ्चे॥९॥ मच मुचि कल्कने। कल्कनं दम्भः शाठ्यं च। कथनमित्यन्ये। मेचे। मुमुञ्चे॥११॥ मचि धारणोच्छ्रा
यपूजनेषु। ममञ्चे॥१२॥ पचि व्यक्तीकरणे। पञ्चते॥१३॥ ष्टुच प्रसादे। स्तोचते। तुष्टुचे॥१४॥ ऋज गतिस्थानार्ज्जनोपार्ज्जनेषु। अर्ज्जते॥

स्योन इत्यत्र क्वौः शूठि स्यूठि कृते लघूपधगुणं बाधित्वा यण् न स्यात् इति वाच्यं। समानाश्रय एव वार्णादांगस्य बलीयस्त्वात् इह तु निमित्तभेदेन व्याश्रयत्वमिति। अभ्या
सग्रहणेनेति। पूर्वसांतवत्त्वेनेत्यर्थः। पर्जन्यवल्लक्षणेति। उपयोगानुपयोगाविचारेण प्रवर्तमानं शास्त्रं ह्रस्वस्थानेपि ह्रस्वं प्रवर्तयतीत्यर्थः। तथा चैकस्मिन् लक्ष्ये लक्ष
णं सकृदेव प्रवर्तत इति न तस्य पुनः प्रवृत्तिरिति भावः। आंगं बलीय इति। न च ह्रस्वसवर्णदीर्घयोर्निमित्तभेदात् समानाश्रयत्वाभावे कथमांगस्य बलीयस्त्वमिति चेत्।
सत्यं। दृष्टानुरोधेन स्थानिनमादाय क्वचित् समानाश्रयत्वाभ्युपगमात्। अत एवोङ् शब्दे इत्यस्माल्लिटि ऊवे। उवाते इत्यादीष्टं सिध्यति। उवङः प्राक् सवर्णदीर्घप्र

अजेर्व्यी। वीइति च्छेदः। तेन संवीतः। संवीतिरित्यादि सिध्यति। आर्धधातुकविषय इति। तेन वीभावोत्तरं यङि वेवीयत इत्यादि सिध्यति परस्मप्तम्यां तु हलादित्वाभावाद्य
ङ् न स्यादिति भावः। यङ्लुक् तु अस्मान्न भवति। लुका यङोपहारे आर्द्धधातुकविषयत्वाभावान्नार्द्धधातुकाभिव्यक्तिरिति वीभावस्यैवाप्रसक्तेः। एतच्च न लुमतेति सूत्रे
कैयटे स्पष्टं। अघञपोः किं। समाजः। समुदोरजः पशुष्विति प। समजः। विव्यतुरिति। एरनेकाच इति यण्। लोपाजादेश एवेति। एतच्च न पदांतेति सूत्र एवाऽस्माभिरुपपा
दितं। एकाच इतीति। अजेरुदात्तत्वेपि वीभावोऽनुदात्तः ऊदॄदंतादि भिन्ना एकाचोऽजंताः सर्वेप्यनुदात्ता इत्यभ्युपगमात्। कृसृ भृ। डुकृञ् करणे॥ कृञ् हिं
यां। इह निरनुबंधग्रहणादेकानुबंध द्व्यनुबंधयोरुभयोर्ग्रहणं। एवमग्रेपि। भृञ् भरणे। डुभृञ् धारणपोषणयोरित्युभयोर्ग्रहणं। सृ गतौ। वृङ् संभक्तौ। वृञ् व

अजेर्व्यघञपोः। २।४।५६॥ अजेर्वीत्ययमादेशः स्यादार्द्धधातुकविषये घञमपञ्च वर्जयित्वा। वलादावार्द्धधातुके वेष्यते। विवाय। विव्यतुः
विव्युः। अत्र वकारस्य हल्परत्वादुपधायाञ्चेति दीर्घप्राप्तेः चः परस्मिन्निति स्थानिवद्भावेनाच्परत्वं न च न पदान्तेति निषेधः। स्वरदीर्घयलो
पेषु लोपाजादेश एव न स्थानिवदित्युक्तेः थलि एकाच इतीण्निषेधे प्राप्ते॥ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि॥ ७।२।१३॥ एभ्यो लिट इण् न स्यात् क्रा
दीनाञ्चतुर्णां ग्रहणं नियमार्थं। प्रकृत्याश्रयः प्रत्ययाश्रयो वा यो वा निण्निषेधः स लिटि चेत् र्हि क्रादिभ्य एव नान्येभ्य इति। ततश्चतुर्णामन्य लि
भारद्वाजनियमप्रापितस्य वमादि स्वक्रादिनियमप्रापितस्य चेटो निषेधार्थं॥ ९

रणे। इह निरनुबंधग्रहणाद्भिन्नानुबंधयोरप्युभयोर्ग्रहणं। कृ
सृ भृ एषामनुदात्तत्वादेकाच उपदेश इति प्रकृत्याश्रये निषेधे प्राप्ते वृङ् वृञोस्तूदात्तत्वात् श्रयुकः किती ति प्रत्ययाश्रये निषेधे प्राप्ते नियमोऽयमित्याह। क्रादी
नां चतुर्णामिति। इह हि स्तुद्र्वादीनां चतुर्णां ग्रहणस्य भारद्वाजनियमप्रापितेण्निषेधोपि प्रयोजनमिति बोधयितुमष्टानां ग्रहणमिति नोक्तं इण्निषेध इति। ने
डुशीति प्रक्रमान्न अप्रापितस्यैवाभावस्य नियमो न तु विभाषावललभ्यस्यापि अनंतरस्येति न्यायादपि संनिहितस्यैव नियम उचितः। तेन सिषेधिथ सिषेद्ध
सिषिधिव। सिषिध्व। इत्याद्युभयं भवति। नान्येभ्य इति। तेन पेचिव। बभूविवेत्यादि सिद्धं। न चैवं क्रादिनियमे नैव नेड्वशि कृतीति निषेधस्याप्रवृत्तौ सेदिवान् जग्मि
वानित्यादि सिध्यत्येवेति वस्वेकाजाद्घसामिति इड्विधानं किमर्थमिति शंक्यं। तस्य नियमार्थत्वेन व्याख्यास्यमानत्वात्। अन्यथा बभूवानित्यत्रापि इडागमः

जृस्तम्भु। स्तन्भुः सौत्रः। अजरत्। अजारीत्। अस्तभत्। अस्तम्भीत्। अम्चत्। अम्चीत्। अम्चन्। अम्चयीत्। विभाषा धेट्श्व्योरिति चङि अशिश्वियत्। अर्च पूजायां। अर्यं पूजा
दौ सरितेत्। इह पाठस्तु कर्तृगेपि फले परस्मैपदार्थः। दीर्घाभावादिति। स्वाभाविकह्रस्वस्यानिकदीर्घाभावादित्यर्थः। मुखसुखार्थमिति। कृतह्रस्वस्यानिकदीर्घाकार

जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥३।१।५८॥ एभ्यश्च्लेरङ् वा स्यात्। अम्रुचत्। अम्रोचीत्। अम्लुचत्। अम्लोचीत् ॥१४॥ ग्रुचु ग्लुचु कु
जु खुजु स्तेयकरणे। जुग्रोच। अग्रुचत्। अग्रोचीत्। जुग्लोच। अग्लुचत्। अग्लोचीत्। अकोजीत्। अखोजीत् ॥१८॥ ग्लुञ्चु षस्ज गतौ। अ
ग्लुचत्। अग्लुञ्चीत् ॥१९॥ सस्य श्चुत्वेन शः जश्त्वेन जः। सज्जति। अयमात्मनेपद्यपि। सज्जते ॥२०॥ गुजि अव्यक्ते शब्दे। गुञ्जति। गु
ञ्ज्यात् ॥२१॥ अर्च पूजायाम्। आनर्च ॥२२॥ म्लेच्छ अव्यक्ते शब्दे। अस्फुटे ऽपशब्दे चेत्यर्थः। म्लेच्छति। मिम्लेच्छ ॥२३॥ लछ लाछि लक्षणे। ल
लच्छ ॥२४॥ ललाञ्छ ॥२५॥ वाछि इच्छायां। वाञ्छति ॥२६॥ आछि आयामे। आञ्छति। अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहा
र्थं। तेन दीर्घाभावान्नुट्। आञ्छ। तपरकरणं सुखमुखार्थमिति मते तु नुट्। आनाञ्छ ॥२७॥ ह्रीच्छ लज्जायाम्। जिह्रीच्छ ॥२८॥ हुर्छा कौटिल्ये।
कौटिल्यमपसरणमिति मैत्रेयः। उपधायां चेति दीर्घः। हूर्छति ॥२९॥ मुर्छा मोहसमुच्छ्राययोः। मूर्छति ॥३०॥ स्फुर्छा विस्तृतौ। स्फूर्छति ॥३१॥
युच्छ प्रमादे। युच्छति ॥३२॥ उछि उञ्छे। उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः। उञ्छति। उञ्छाञ्चकार ॥३३॥ उछी विवासे। वि
वासः समाप्तिः। प्रायेणायं विपूर्वः। व्युच्छति ॥३४॥ ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ। ध्रजति। ध्रञ्जति। धर्जति। धृञ्जति। ध्वजति। ध्वञ्जति ॥४०॥
कूज अव्यक्ते शब्दे। चुकूज ॥४१॥ अर्ज षर्ज अर्जने। अर्जति। आनर्ज ॥४२॥ सर्जति। ससर्ज ॥४३॥ गर्ज शब्दे। गर्जति ॥४४॥ तर्ज भर्त्सने। तर्जति। तत
र्ज ॥४५॥ कर्ज व्यथने। चकर्ज ॥४६॥ खर्ज पूजने च। चखर्ज। अज गतिक्षेपणयोः। अजति ॥ ९ तु परस्यापि तुग्भवत्येवेति भावः। युच्छ प्रमादे युच्छती
ति अन्तरङ्गत्वाच्छे चेति तुक्किल घूपधत्वाभावान्न गुणः। न च वर्णादाङ्गं बलीय इति वाच्यं। आङ्गवार्णयोर्युगपत्प्रवृत्तावेव आङ्गस्य बलीयस्त्वात्। न च युच्छेति
चकारछकारावुच्चार्येतां किमनेन तुग्विधिनेति शंक्यं। बहुषु धातुरूपेषु चकारछकारयोरुच्चारणे गौरवात्। छे चेत्यस्य शिवच्छायेत्यादावावश्यकत्वाच्च ॥

ऋतोभारद्वाजस्येतप्रकरणात्कृगप्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्त्तते ह्रस्वान्तेषु हृञ्धृञादिषु अचस्तास्वदित्येव तिङ्कृदन्तड्ञोपद्यपिसेटौ तथापि वृङः
लेवनास्ति आत्मनेपदित्वात् वृञः स्तुक्रुंदसिववर्थेति निपातनाद्वव्रिथेति भाषायामिटा भाव्यं तस्मान्नियमोयमित्याह। ऋदन्तादेवेति। जहर्थ। दधर्थ अन्यस्मादेवे
ति। एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः फलितः। पपिथ। पपाथ। पेचिथ पपक्थ इयजिथ इयष्ठ अकारवानिति। ह्रस्वाकारवानित्यर्थः। ईदृगिति।
स्यनिट् सन्नदन्तः। थलि नित्यानिट् भवतीत्यर्थः। ननु स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात्। न चैवं क्रादिसूत्रे तेषां पठनं निरर्थकं स्यादिति वाच्यं। तत्पठनस्यव

ऋतो भारद्वाजस्य। ७।२।६३॥ तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन। तेनान्यस्य स्यादेव। अयमत्र संग्रहः। अजन्तोऽकारवान्वा यस्ता
स्यनिट् थलि वेडयं। ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत्। न च स्तुद्र्वादीनामपि थलि विकल्पः शंक्यः। अचस्तास्वदिति। उपदेशेत्वत इति च
योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्त्तकः। अनन्तरस्येति न्यायात्। विवयिथ। विवेथ। आजिथ। विव्यथुः विव्य। विवाय। विवय। वि
व्यिव। विव्यिम। वेता। अजिता। वेष्यति। अजिष्यति। अजतु। आजत्। अजेत्। वीयात्। सिचि वृद्धिः परस्मैपदेषु। ७।२।१। इगन्ताङ्गस्य वृद्धिः स्यात्परस्मै
पदे परे सिचि। अवैषीत्। आजीत्। अवेष्यत्। आजिष्यत्॥ ४७॥ तेज पालने। तेजति॥ ४८॥ खज मन्थे। खजति॥ ४९॥ खजि गतिवैकल्ये। खञ्ज
ति॥ ५०॥ एजृ कम्पने। एजाञ्चकार॥ ५१॥ टुओस्फूर्जा वज्रनिर्घोषे। स्फूर्जति। पुस्फूर्ज॥ ५२॥ क्षि क्षये। अकर्म्मकः। अन्तर्भावितण्यर्थस्तु स
कर्म्मकः। क्षयति। चिक्षाय। चिक्षियतुः। चिक्षियुः। चिक्षयिथ। चिक्षेथ। चिक्षियिव। चिक्षियिम। क्षेता॥ ९ मादिष्विण्णिवृत्त्यर्थतया सफलत्वात्। अन्य

थाक्रादिनियमात्तत्रेडागमो दुर्वारः स्यादित्याशंक्याह। न चेति। योगद्वयेति। क्रादियोगप्रापितस्य तु न निवर्त्तक इति भावः। कुत इत्याकांक्षायामाह। अनन्तरस्येति।
न चैवमुपदेशेऽत्वत इत्यस्यैव बाधः स्यादिति वाच्यम्। अत्वत्सु धातुष्वऋदन्तत्वादर्शनेन यद्यत्वतः थलि इण्णिषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात्। ननु त
र्हि अचस्तास्वदित्यस्यैव बाधोस्तु तत्कथं योगद्वयप्रापितस्येत्युक्तं। अत्राहुः। उपदेशेऽचस्तास्वदित्येवं सूत्रे कृते पितास्वस्य लीत्यादिपदानामिवोपदेशपदस्याप्यनु
वृत्तिसंभवे अत्वत इति सूत्रे उपदेशपदस्याचइति पूर्वसूत्रे तु तास्वत्थलिस्यादेश्च करणादुभयोः समानयोगक्षेम इति ज्ञायते। तस्मादिष्टानुरोधाच्च योगद्वयमपि भार

दिति। नन्विहऋादिभ्यश्चेदिण्नस्यात्तर्हि लिट्येवेति विपरीतनियमः किंनस्यात्। तथाच कर्ता अकार्षीदित्यादाविडागमः स्यादितिचेत्। मैवं। कृते ग्रंथे। तमधीष्टो भृतः।
परिवृतो रथ इत्यादिनिर्देशविरोधापत्तेः। वमादिषिति। आदिशब्देन सेध्वेव हिमहीनां ग्रहणं। तुष्टुषे। तुष्टुध्वे। तुष्टुवहे तुष्टुमहे इत्यादि। स्यादेतत्। अस्तु प्रकृत्याश्रयनिषे
धस्य नियमः प्रत्ययाश्रयस्तु न संभवति। वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात्। नह्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति। थलो अकित्त्वात्। नापि प्रकृत्याश्रयः वृ
ञ उदात्तत्वात्। न चैवमपि वृङो नियमार्थत्वमस्तीति वाच्यं। तस्य विशिष्याग्रहणात् यद्यपि विशिष्य ग्रहणं वृञोपि नास्ति तथाप्यप्राप्तनिषेधप्राप्तिफलकत्वात् वृ इति
वृञ एव ग्रहणं भवेत्। विधिनियमयोर्विधिरेव ज्यायानिति न्यायात्। एवं च बभूविवेत्यादौ श्र्युकः कितीति इण्निषेधो दुर्वार इतिचेत्। अत्राहुः। बभूथाततंथ जगृभ्मव
वर्थेति निगम इति सूत्रेण छंदसि ववर्थेति निपातनाद्भाषायां वृञस्थल इट् स्वीकर्तव्य तथा वृग्रहणस्य थल् विषयत्वायोगात् भ्वादीनां च कित्त्वेन नियमस्य सुस्थत्वादि
ति॥ ःॐः॥ अचस्तास्वत्। उत्तरसूत्रादुपदेश इत्यपकृष्यते तच्चाजंतस्य विशेषणमित्याह। उपदेशेऽजंत इति। धातुरित्याक्षेपाल्लभ्यते। नह्यधातोस्थल् संभवति। नित्यग्र

अचस्तास्वत्थल्यनिटो नित्यम्। ७।२।६१॥ उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात्॥ उपदेशेऽत्वतः। ७।२।६२॥

उपदेशे अकारवतस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात्॥ ९ हणमनिटो विशेषणं। क्वचनित्यमनिडित्यपेक्षायां सन्निधानात्तासावेव विज्ञा

यते तासि च क्लृप इति संनिहितं वाऽनुवर्तते। न तु ह्य इत्यस्मान्नेत्यनुवर्तते तदाह। तासौ नित्यानिट् ततः परस्येति। तासौ विवतास्वत् इति सप्तम्यंताद्वतिः यथा
तासौ न भवति एवं थल्यपीत्यर्थः। अच इति किं। बिभेदिथ। रुरोधिथ। उपदेश इति किं। जहर्थ। इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते अजंतत्वाभावादेतस्याप्रवृ
त्ताविट् प्रसज्येतेत्युपदेश इत्युक्तं। थलीति किं। पपिव। पपिम। नित्यमनिटः किं। सस्वरिथ सस्वर्थ॥ नायं तासौ नित्यमनिट्। स्वरतिसूतीति विकल्पितेट्त्वात्। इह ता
सीति नेति चानुवर्त्यैवेष्टसिद्धे तास्वदित्येतन्नातीवोपयुज्यत इति केचित्। अन्ये तु यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तत् तेन उ
वयिथ। जघसिथेत्यत्र न निषेध इत्याहुः। उपदेशेऽत्वतः। पपक्थ। इयष्ठ। उपदेशे किं। कर्ष्टा। चकर्षिथ। अकारवदिति किं। भेत्ता। बिभेदिथ। तपरकरणं किं। राद्धा। रराधि
थ। तासौ किं। जिघत्सति। जग्रहिथ। सनि ग्रहगुहोश्चेति सनि नित्यमनिट्। क्रांतः। चक्रमिथ। उदित्त्वेन क्त्वायां वेड्वात् यस्य विभाषेति निष्ठायां नेट्। नित्यानिटः किं। अंक्ता।
अंजिता। आनंजिथ। किंच। नित्यग्रहणानुवर्तनाच्चक्रमिथेत्यपि सिध्यति। नहि क्रमिस्तासौ नित्यानिट्। स्नुक्रमोरनात्मनेपदनिमित्त इति परस्मैपदे सेट्त्वात् ॥

गजगजि। गंजांतुमदिरागृहं। गजमदनेच। मदनंमदः चित्तविकारः। वजव्रज। वादित्वादेत्वाभ्यासलोपौन। ववजतुः। वव्रजतुः। शाडन्ताइति। शाडृश्लाघायामित्यंता

गजगजिगृजगृजिमुजमुजिशब्दार्थाः॥ ६९॥ गजमदनेच॥ ७०॥ वजव्रजगतौ। वदव्रजेतिवृद्धिः। अव्राजीत्॥ ७२॥ अथटवर्गीयान्ताः शाडन्ता
अनुदात्तेतः षट्त्रिंशत्। अट्टअतिक्रमहिंसयोः। दोपधोयम्। तोपधइत्येके। अट्टते। आनट्टे॥ १॥ वेष्टवेष्टने। विवेष्टे॥ २॥ चेष्टचेष्टायाम्। अचेष्टि
ष्ट॥ ३॥ गोष्टलोष्टसङ्घाते। जुगोष्टे॥ ४॥ लुलोष्टे॥ ५॥ घट्टचलने। जघट्टे॥ ६॥ स्फुटविकसने। स्फोटते। पुस्फुटे॥ ७॥ अठिगतौ। अण्ठते। आनण्ठे।
॥ ८॥ वठिएकचर्य्यायां। ववण्ठे॥ ९॥ मठिकठिशोके। शोकइहआध्यानं। मण्ठते॥ १०॥ कण्ठते॥ ११॥ मुठिपालने। मुण्ठते॥ १२॥ हेठविबा
धायां। विबाधाशाठ्यम्। जिहेठे॥ १३॥ एठच। एठाञ्चक्रे॥ १४॥ हिडिगत्यनादरयोः। हिण्डते। जिहिण्डे॥ १५॥ हुडिसङ्घाते। जुहुण्डे॥ १६॥
कुडिदाहे। चुकुण्डे॥ १७॥ वडिविभाजने। मडिच। ववण्डे॥ १९॥ भडिपरिभाषणे। परिहासः सनिन्दोपालम्भश्चपरिभाषणं। बभण्डे॥ २०॥
पिडिसङ्घाते। पिपिण्डे॥ २१॥ मुडिमार्ज्जने। मार्जनंशुद्धिर्न्यग्भावश्च। मुण्डते॥ २२॥ तुडितोडने। तोडनंदारणंहिंसनञ्च। तुण्डते॥ २३॥ हुडिव
रणेवरणंस्वीकारः। हरणइत्येके। हुण्डते॥ २४॥ चडिकोपे। चण्डते॥ २५॥ शाडिरुजायांसङ्घातेच। शण्डते॥ २६॥ तडिताडने। तण्डते॥ २७॥
पडिगतौ। पण्डते॥ २८॥ कडिमदे। कण्डते॥ २९॥ खडिमन्थे॥ ३०॥ हेडृहोडृअनादरे। जिहेडे॥ ३१॥ जुहोडे॥ ३२॥ वाडृआप्लाव्ये। वशादिः॥
आप्लाव्यमाप्लवः। वाडते॥ ३३॥ द्राडृध्राडृविशरणे। द्राडते॥ ३४॥ ध्राडते॥ ३५॥ शाडृश्लाघायाम्॥ शाडते॥ ३६॥ अथआटवर्गीयान्तसमा
प्तेःपरस्मैपदिनः। शौटृगर्वे। शौटति। शुशौट॥ १॥ यौटृबन्धे। यौटति॥ २॥ म्लेटृम्रेडृउन्मादे। द्वितीयोडान्तः। टान्तमध्येपाठस्त्वर्थसाम्यान्नाथति
वत्। म्लेटति॥ ३॥ म्रेडति॥ ४॥ कटेवर्षावरणयोः॥ चटेइत्येके। चकाट। सिचि। अतोहलादेर्लघोरितिवृद्धौप्राप्तायां ॥ ❁ ॥ ॥

त्यर्थः। दोपधोयमिति। तथाचष्टुत्वशास्त्रस्यासिद्धत्वान्नन्द्राइतिद्वित्वनिषेधेनदकारंविहायटिशब्दस्यद्वित्वेपश्चात्दकारस्यष्टुत्वेचर्त्वेचअटिटिषते। आट्टिटदित्यादि

स्तास्वस्थत्यनिटोनित्यमितिएकोयोगः स्वीक्रियतेतदाअत्रनास्त्येवशंकालेशोपीतिबोध्यमिति।अन्येतुव्याचक्षते।अचस्तास्वदितिसूत्रानंतरमेवऋतोभारद्वा
जस्येतिपठनीयंद्वयोरनंतरमस्यारंभादिहतास्वस्थत्यनिटोनित्यंतासीसत्त्वनुवर्त्स्यपोअयंतासिनित्यानिटस्थलिट्ण्निषेधः सभारद्वाजमतेऋकारांतस्यैवेति
व्याख्यायतेतेनसर्वेष्टसिद्धिः।यद्वा।क्रादिसूत्रेस्तुप्रभृतीनांग्रहणमेवेड्द्वयस्यापिबाधकमस्तु।पुरस्तात्प्रतिषेधकांडारंभसामर्थ्यात्।अनाश्रितविधानविशेष
मिणमात्रमनारभ्याधीतेनप्रतिषेधेनयथाबाधेतेस्यतदर्थोहिसआरंभः।अमुमेवार्थंसिद्धवत्कृत्यततश्चतुर्णांथलिभारद्वाजनियमप्रापितस्यवमादिषुक्रादिनिय
मप्रापितस्यचेटोनिषेधार्थमितिमूलेप्युपनिबद्धमिति।विव्यिव।विव्यिमेति।क्रादिनियमान्नित्यमिट्।सिचिवृद्धिः।इकोगुणवृद्धीतिपरिभाषोपस्थानादाह।इगंते
ति।परस्मैपदेष्वितिकिं।अथविष्ट।अधोष्ट।सिचिकिं।एति।विभर्ति।गुणंबाधित्वावृद्धिःस्यात्।खजमंथे।कंजेतिकेचित्पठंति।एजकंपने॥दीप्तौत्वात्मनेपदीगतः।ट

अकृत्सार्वधातुकयोर्दीर्घः।७।४।२५॥अजंतस्याङ्गस्यदीर्घःस्याद्यादौप्रत्ययेपरेनतुकृत्सार्वधातुकयोः।क्षीयात्।अक्षैषीत्॥५३॥क्षीजअ
व्यक्तेशब्दे।कूजिनासहायम्पठितुंयुक्तः।चिक्षीज॥५५॥लजलजिभर्जने॥५७॥लाजलाजिभर्त्सनेच॥५८॥जजजजियुद्धे॥६१॥तुजहिंसाया
म्।तोजति।तुतोज॥६२॥तुजिपालने॥६३॥ ९ ओस्फूर्जा।द्वितोऽशुच्।स्फूर्जथुः।ओदितश्चेतिनिष्ठानत्वार्थमोकारः।स्फूर्गणः।स्फूर्गणवान्आकारस्तुआदि
तश्चेतिनिष्ठायामिटोनिषेधार्थोविभाषाभावादिकर्मणोरितिविकल्पार्थश्च।स्फूर्गणं।स्फूर्जितमनेनेत्यादि।उपधायांचेतिदीर्घस्यानित्यत्वज्ञापनार्थंइह दीर्घोपदेशः।
तेनदुर्छतिमुर्छति ——— इत्यपिभवतीतिकेचित्।क्षिपये।अजंतेषस्यपाठोयुक्तः।क्षिनिवासगत्योरितितुदादौ।अकृत्सार्व॥दीर्घग्रहणेनाचश्चेतिपरिभाषो
पस्थानादाह।अजंतेति।यादौप्रत्ययइति।अयङ्यिक्ङितीत्यतोपीत्यनुवर्त्यअंगाक्षिप्तप्रत्ययस्तेनविशेष्यतेविशेषणेनतदादिविधिःयस्मिन्विधिरितिपरिभा
षोपस्थानादितिभावः नत्विति।कृद्यकारेप्रकृत्य।प्रहृत्य।उच्चैःकृत्यतुकंबाधित्वापरत्वात्दीर्घःस्यात्तुग्विधिस्तुअग्निचित्सोमसुदित्यादौचरितार्थः।स्पपः
पित्वमपिअनुदात्तार्थंतयाचरितार्थमित्याहुः।सार्वधातुकयकारेतुचिनुयात्।सुनुयात्।कूजिनेति।अर्थैक्यादेकत्रपाठउचितइतिभावः लजलजिलज्यात् लंज्यात्।

भ्यासलोपेन। खरअशू पुषिलटिखटिकणिविशिभ्यः क्तनू। खट्ठ। णटनृत्तौ। प्रणटति। णोपदेशपर्युदासेनाटीतिसरूढिकनिर्देशेननटअवस्यंदनेइतिचौरादिकस्यैवग्र हणादयंणोपदेशएव। हठदीप्तौ। हाटकंसुवर्णं संज्ञायांचेतिण्वुल्। बाहुलकात्स्त्रियामपि। षट्। पचाद्यजंतात्टाप्। सटाजटाकेसरयोः चिटसर्वधातुभ्यइतिऔणादि

ईयतुः। ईयुः। इययिथ। इयेथ। इयाय। इयय। दीर्घस्यत्विजादेरित्यामिअयांचक्रारेत्यादिउदाहरन्ति॥ ३५॥ मडिभूषायाम्॥ ३६॥ कुडिवैक ल्ये। कुण्डति। कुण्डलइतितुदाहेगतं॥ ३७॥ मुटपुटमर्दने॥ ३८॥ चुडिअल्पीभावे॥ ३९॥ मुडिखण्डने। मुण्डति॥ ४०॥ पुडिचेत्येके। पुण्डति॥ ४१॥ रुटिलुटिस्तेये। रुण्टति॥ ४२॥ लुण्टति॥ ४३॥ रुठिलुठिइत्येके॥ ४५॥ रुडिलुडीत्यपरे॥ ४७॥ स्फुटिर्विशरणे। इरित्वादङ्वा। अस्फुटत्। अस्फो टीत्॥ ४८॥ स्फुटीत्यपिकेचित्। इदित्वान्नुम्। स्फुण्टति॥ ४९॥ पठव्यक्तायांवाचि। पेठतुः। पेठिथ। अपठीत्। अपाठीत् ॥ ५० ॥ वठ। स्थौल्ये। ववठतुः। ववठिथ॥ ५१॥ मठमदनिवासयोः॥ ५२॥ कठकृच्छ्रजीवने॥ ५३॥ रटपरिभाषणे॥ ५४॥ रठेत्येके॥ ५५॥ हठप्लुतिशठत्वयोः। बलात्कारेइत्येके। जहाठ॥ ५६॥ रुठलुठउठउपघाते। ओठति॥ ५९॥ ऊठेत्येके। ऊठति। ऊठाञ्चकार॥ ६०॥ पिठहिंसासंक्लेशनयोः॥ ६१॥ श ठकैतवेच॥ ६२॥ शुठप्रतिघाते। शोठति॥ ६३॥ शुठीतिस्वामी। शुण्ठन्ति॥ ६४॥ कुठिच। कुण्ठति॥ ६५॥ लुठिआलस्येप्रतिघातेच॥ ६६॥ शुठिशो षणे॥ ६७॥ रुठिलुठिगतौ॥ ६९॥ चुड्डभावकरणे। भावकरणमभिप्रायसूचनं। चुड्डति। चुचुड्ड॥ ७०॥ अड्डअभियोगे। अड्डति। आनड्ड॥ ७१॥ कड्डका र्कश्ये। कड्डति॥ ७२॥ चुड्डादयस्त्रयोदोपधाः। तेनक्विपि। चुत्। अत्। कत्। इत्यादि। क्रीडृविहारे। चिक्रीड॥ ७३॥ तुडृतोडने। तोडति। तुतोड॥ ७४॥ तू डृइत्येके॥ ७५॥ हुडृहूडृहोडृगतौ॥ हूड्यात्। हूड्यात्। होड्यात्॥ ७८॥ रोडृअनादरे॥ ७९॥ रोडृलोडृउन्मादे॥ ८१॥ अडउद्यमे। अडति। आड। आडतुः। आ डुः॥ ८२॥ लडविलासे। लडति॥ ८३॥ लडयोर्लरयोश्चैकत्वस्मरणाल्ललतीतिसाम्पादयः। कडमदे। कडति॥ ८४॥ कडिइत्येके। कण्डति ॥ ८५ ॥ ॐ ॥

कडन्। चेटिः। कृदिकारादितिङीष्। चेटी। विट। इगुपधलक्षणः कः। विटः। इयायेति। द्विर्वचनेणलिवृद्धौसत्यामायादेशः। अभ्याससासवर्णइतिइयङ्॥ ॐ॥ ईयतुरि ति। द्विर्वचनेकृतेएरनेकाचइतियणं बाधित्वाअंतरंगत्वात्सवर्णदीर्घः। ततोअचिश्नुधात्विति इयङ्। एकादेशस्यपूर्वान्तत्वेनअभ्यासग्रहणेनग्रहणात्। अभ्यासस्यासवर्ण

टोपधत्वेतु।अटिट्टिषते।आटिटृदितिस्यादितिभावः।तोपधइति।अस्मिंस्तुपक्षेअतिट्टिषतेआतिटृदित्यादिवोध्यं।हलादिःशेषेणटकारनिवृत्तौतन्निमित्तस्यापिष्टु
त्वस्यनिवृत्तत्वादितिनव्याः।मनोरमायांतुपूर्वत्रासिद्धीयमद्विर्वचनइतिष्टुत्वस्यासिद्धत्वाभावात्टकारद्वयसहितस्यद्वित्वेहलादिःशेषेअटिट्टिषते।आटिटृदि
त्यादिसिध्यतीत्युक्तं।निमित्तापायेनैमित्तिकस्याप्यपायइतित्वनित्यमितितदाशयः।आनहेइति।इहनन्द्राइतिनिषेधोन।तत्रद्वितीयस्येत्यनुवर्तनात्।द्वितीये
काचएवनद्राणांनिषेधात्।घट्टचलने।अयंचुरादावपि।स्फुट।अयंकुटादावपि।आनंठेइति।तस्मान्नुड्द्विहलइतिनुट्।वंठनेइति।सहायंविनाचरतीत्यर्थः।म

ह्यन्तक्षणश्वसजागृणिश्व्येदिताम्।७।२।५॥हमयान्तस्यक्षणादेर्ण्यन्तस्यश्वयतेरेदितश्चवृद्धिर्नस्यादिडादौसिचि।अकटीत्॥६॥अ
टपटगतौ।आट।आटतुः।आटुः।७॥पपाट।पेटतुः।पेटुः॥८॥रटपरिभाषणे।रराट॥९॥लटवाल्ये।ललाट॥१०॥शटरुजाविशरणग
त्यवसादनेषु।शशाट॥११॥वटवेष्टने।ववाट।ववटतुः।ववटुः।ववटिथ॥१२॥किटखिटत्रासे।केटति॥१३॥खेटति॥१४॥शिटषिट
अनादरे।शेटति।शिशेट॥१५॥सेटति।सिषेट॥१६॥जटझटसङ्घाते॥१८॥भटभृतौ॥१९॥तटउच्छ्राये॥२०॥खटकाङ्क्षायां॥२१॥
णटनृत्तौ॥२२॥पिटशब्दसङ्घातयोः॥२३॥हठदीप्तौ॥२४॥षटअवयवे॥२५॥लुटविलोडने।डान्तोयमित्येके॥२७॥चिटपर
प्रेष्ये॥२८॥विटशब्दे॥२९॥विटआक्रोशे वशादिः।हिठेत्येके॥३१॥इटकिटकटीगतौ।एटति॥३२॥केटति॥३३॥कटति॥३४॥ईका
रःश्वीदितोनिष्ठायामितीण्निषेधार्थः।केचित्तुइदितंमत्वानुमिकृतेकण्टतीत्यादिवदन्ति।अन्तेचइईइतिप्रश्लिष्य।अयति।इयाय ॥

डिच।पृथक्पाठादयंवेष्टनेपीत्याहुः।मडिभूषायामित्यग्रेपरस्मैपदिषु।भडि।यःसनिंदउपालंभस्तत्रस्यात्परिभाषणमित्यमरः॥शाडि।शंडोःसुरपुरोहितः।द्राङ्क्ष।विश
रणमवयवविभागः।शाड्क्ष।डलयोरैक्यात् शालतेइतिकाश्यपः।शौट्ऋगर्वे।अस्योणादिषुईरन्वक्ष्यते।तदेतदतिशौटीर्यमौड्लोमेर्नमृष्यतीतिकल्पतरुः।कटे॥ः॥
ह्म्यन्तक्षण।अग्रहीत्।टुवम्।अवमीत्।हयगतौ।अहयीत्क्षणुहिंसायां।अक्षणीत्।श्वसप्राणने।अश्वसीत्।जागृनिद्राक्षये।अजागरीत्।ण्यंतेऊंदसिनोनयतिध्वनयतीत्यादिना
चङि निषिद्धेऔनयीदितिउदाहरणं।टुओश्वि।अश्वयीत्।इडादौसिचीति।इडादेःकिं।दहभस्मीकरणे।अधाक्षीत्।किटखिट।इटकिटेतिक्रिटिर्गतौपठिष्यते॥इहपाठस्त्वर्थभे

दान्।जटझटा।जेटतुः।जझटतुः।१इलादेशादित्वादेला

पशुः। केष्टगेष्टग्लेष्टच। योगविभागात्पूर्वोत्तरार्थौचकारेणानुकृष्येतेतदाह। चाल्कंपनेगतौचेति। योगविभागसामर्थ्यादेवअर्थद्वयलाभेचकारोऽनर्थद्वयं। पुनः पाठइ
ति। दैन्येपठितस्यकंपनाद्यर्थलाभार्थमितिभावः॥ ॥तृफलतरतेरकारस्यगुणशब्देनभावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात्त्रपतेस्त्वेकहल्मध्य
स्थत्वाभावादप्राप्तेविधिरयं। तेरतुः। तेरुः। फेलतुः। फेलुः। भेजतुः। भेजुः। अविशब्दे। अस्मादुरोऽश्चहलइतिअप्रत्ययेअंवाशब्दः। तिस्रः अंवाः अकारोकारमकारात्मकाः

तृफलभजत्रपश्च। ६।४।१२२॥ एषामतएकारोऽभ्यासलोपश्चस्यात्किति लिटि सेटि थलि च। त्रेपे। त्रेपाते। त्रेपिरे। ऊदित्वादिड्वा। त्रपिता। त्रप्ता
त्रपिषीष्ट। त्रप्सीष्ट॥ १३॥ कपि चलने। कम्पते। चकम्पे॥ १४॥ रबि लबि अबि शब्दे। ररम्बे। ललम्बे। आनम्बे। लबि अवस्रंसने च॥ १७॥ कबृ वर्णे। चक
बे॥ १८॥ क्लीबृ अधार्ष्ट्ये। चिक्लीबे॥ १९॥ क्षीबृ मदे। क्षीबते॥ २०॥ शीभृ कत्थने। शीभते॥ २१॥ चीभृ च॥ २२॥ रेभृ शब्दे। रिरेभे॥ २३॥ अभि रभि क्वचित्प
ठ्यते। अम्भते॥ २४॥ रम्भते॥ २५॥ ष्टभि स्कभि प्रतिबन्धे। स्तम्भते। उत्तम्भते। उदः स्थास्तम्भोरिति पूर्वसवर्णः। विस्तम्भते। स्तम्भेरिति षत्वन्तु न भ
वति। सुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात्। तद्धि जन्तुस्थास्तम्भोरिति पवर्गीयोपधपाठः। स्तन्भेरिति तवर्गीयोपधपाठश्चेति माधवः।
केचिदस्य टकारमौपदेशिकमित्याहुः। तन्मते। ष्टम्भते। टष्टम्भे॥ २७॥ जभि जृभि गात्रविनामे॥ रधिजभोरचि। ७।१।६१॥ एतयोर्नुमागमः स्यादचि
। जम्भते। जजम्भे। जम्भिता। अजम्भिष्ट। जृम्भते। जजृम्भे॥ २९॥ शल्भ कत्थने। शशल्भे॥ ३०॥ वल्भ भोजने दन्त्योष्ठ्यादिः। ववल्भे॥ ३१॥ गल्भ धा
र्ष्ट्ये। गल्भते॥ ३२॥ श्रम्भु प्रमादे। तालव्यादिर्दन्त्यादिश्च। श्रम्भते। स्रम्भते॥ ३३॥ ष्टुभु स्तम्भे। स्तोभते॥ विष्टोभते। तुष्टुभे। व्यष्टोभिष्ट॥ ३४॥ अथ पर
स्मैपदिनः। गुपू रक्षणे। गुपूधूपविच्छिपणिपनिभ्य आयः। ३।१।२८। एभ्य आय प्रत्ययः स्यात्स्वार्थे। पुगन्तेति गुणः ॥ ॥ ॥

शब्दा यस्य इति बहुव्रीहौ शेषाद्विभाषेति कप्रत्यये त्र्यंबक इत्येके। केचित्तु त्रीणि अंबकानि नेत्राणि यस्येति विग्रहं ति। अभि रभी इति। सर्वधातुभ्योऽसुन्
इत्यधिकारे उदके नुम् भौ चेति वक्ष्यमाणत्वात् धात्वंतरेणापि अंभः शब्दः सिध्यतीति बोध्यं। अंभस्तोयं। तस्यापत्यमांभिः भीष्मः। अंभसोर्लोपश्चेति बाह्वादि
पाठादिञि सलोपः। तद्धि जंतु इति। पूर्वसवर्णप्रवृत्तेः षत्वाप्रवृत्तेश्च बीजमित्यर्थः। रधिजभोरचि। रंधयति। परापि वृद्धिर्नित्येन नुमा बाध्यते। अचीति किम्। रद्धा। जब्धा।

इत्यनेनेत्येके। केचित्तु वार्णादांगं बलीय इति दीर्घं बाधित्वा यण्। न चेह समानाश्रयत्वं नेति वाच्यं। अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणोः प्रतिस्थानित्वेन तयोः समानाश्रय
त्वात्। अत एव ईयतुरित्यत्र इणो यणि तियणि ततो दीर्घ इणः कितीत्यभ्यासदीर्घो विधीयते। अन्यथा सूत्रमिदं निर्विषयं स्यात्। अभ्यासाभावादित्याहुः। स्यादेतत्। णल् थ
लोस्त्वभ्यासस्येयङ् दुर्लभः। तस्मिन् कर्तव्ये अचः परस्मिन्निति वृद्धिगुणयोः स्थानिवद्भावेन असवर्णे इति प्रतिषेधादिति चेत्। मैवं। असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्व
स्याप्रवृत्तेः ननु नास्ति सामर्थ्यं इयर्ति इयृतइत्यादौ सावकाशत्वादिति चेत्। अत्राहुः। न ह्येकमुदाहरणं योगारंभं प्रयोजयति। अन्यथा ह्यभ्यासस्यान्नौ वितिब्रूयात्। एवं चा
तरंगत्वात् सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोः णलि आय थलि एथ। इट्पक्षे तु अयिथ इति स्यादित्याशंकापि न कार्या। अभ्यासस्यासवर्ण इत्यस्य वैयर्थ्यापत्तेरिति। ए

गडि वदनैकदेशे। गण्डति॥ ८६॥ इति टवर्गीयान्ताः॥ अथ पवर्गीयान्ताः। तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत्। तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः
आद्योऽनुदात्तः। क्षीरस्वामी त्वयं सेडिति बभ्राम। तेपते। तितिपे। क्रादिनियमादिट्। तितिपिषे। तेप्ता। तेप्स्यते। लिङ्सिचावात्मनेपदेषु॥ १।२।११॥
इक्समीपाद्धलः परौ झलादी लिङ् आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः। कित्वान्न गुणः। तिप्सीष्ट। तिप्सीयास्तां। तिप्सीरन्। लुङि। झलो झलीति स
लोपः। अतिप्त। अतिप्सातां। अतिप्सत। तेपते। तितेपे। तिष्टिपे। तिष्टिपाते। तिष्टिपिरे। तिष्टेपे। तिष्टेपाते। तिष्टेपिरे॥ तेपृ कम्पने च॥ ४॥ ग्लेपृ दैन्ये। ग्लेप
ते॥ ५॥ टुवेपृ कम्पने। वेपते॥ ६॥ केपृ गेपृ ग्लेपृ च। चात्कम्पने गतौ च॥ ८॥ सूत्रविभागादिति स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्ष
त इत्याह। ग्लेपेरर्थभेदात् पुनः पाठः। मेपृ रेपृ लेपृ गतौ॥ १२॥ त्रपूष् लज्जायां। त्रपते॥ ९ ता। एप्यति। अकृत्सार्वेति दीर्घः। ईयात्। ऐषीत्। कुडि। वैकल्यमविवे

कः। तुडक्र। तोडनं दारणं हिंसनं च। रोड्र लोड्क्र। उन्मादश्चित्तविभ्रमः॥ ⁂ ॥ गडि वदनैकदेशे। टवर्गीयप्रकरणादिह पाठस्तु उचितः। अंतत्यादिषु तु पंचैते न तिङ्विषया
इति मतांतरं बोधयितुं प्रसंगादुपन्यस्तः। तिपृ तेपृ। लिङ्सिचावात्मनेपदेषु। इको झल् हलन्ताच्चेति वर्तते। असंयोगाल्लिट् किदित्यतः किदिति च तदाह। इक्समीपादित्यादि
इकः किं। यक्षीष्ट। सति कित्वे संप्रसारणं स्यात्। आत्मनेपदेति किं। अद्राक्षीत्। कित्वे सति सृजिदृशोर्झल्यमकितीत्यम् न स्यात्। आत्मनेपदपरत्वं सिच एव विशेषणं न तु लि
ङः। लिङ्स्थानिकस्यात्मनेपदस्य लिङः परत्वासंभवात्। तेपृ कंपने च। चकारात् क्षरणार्थस्य लाभाद्स्य पूर्वत्र पाठस्य कुंशक्यः। केचित्तु तिपृ टेपृ इति पठंति। टुवेपृ वे

गोपायामिति। नन्विह आयप्रत्ययस्यादंततामाश्रित्य लोपकरणे फलाभावादुच्चारणार्थ एव तत्राकारोऽस्त्विति चेदत्राहुः। गोपायतं न इत्यत्र गोपायशब्दस्य धातुत्वात् धातोरंत
गोपायाञ्चकार गोपायाम्बभूव गोपायामास जुगोप जुगुपतुः ऊदित्वाद्वेट् जुगोपिथ जुगोप्थ। गोपायिता। गोपिता। गोप्ता। गोपाय्यात्। गोप्यात्। अगो
पायीत्। अगोपीत्। अगौप्सीत् १ धूप सन्तापे। धूपायति। धूपायाञ्चकार। दुधूप। धूपायितासि। धूपितासि २ जप जल्प व्यक्तायां वाचि। जप मानसे च
४ चप सान्त्वने ५ षप समवाये। समवायः सम्बन्धः सम्यगवबोधो वा। सपति ६ रप लप व्यक्तायां वाचि ८ चुप मन्दायां गतौ। चोपति। चुचोप। चोपिता
९ तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ हिंसार्थाः। तोपति। तुतोप। तुम्पति। तुतुम्प। तुतुम्पतुः। संयोगात्परस्य लिटः कित्वाभावान्न लोपो न। कि
दाशिषीति कित्वान्नलोपः। तुप्यात्। प्रात्तुम्पतौ गवि कर्त्तरीति पारस्करादिगणे पाठात्सुट्। प्रस्तुम्पति गौः। तिपा निर्देशाद्यङ्लुकि न। प्रतोतुम्पी
ति। त्रोपति। त्रुम्पति। तोफति। तुम्फति। त्रोफति। त्रुम्फति १७ इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः। अन्ये सरेफाः। आद्याश्चत्वारः प्रथमान्ताः। ततो
द्वितीयान्ताः। अष्टावप्युकारवन्तः। पर्व्व रफ रफि अर्व्व पर्व्व लर्व्व बर्व्व मर्व्व कर्व्व खर्व्व गर्व्व शर्व्व षर्व्व चर्व्व गतौ॥ आद्यः प्रथमान्तः ततो द्वौ द्वितीयान्तौ त
त एकादश तृतीयान्ताः। द्वितीयतृतीयौ मुक्त्वा सर्व्वे रोपधाः। पर्व्वति। पपर्व्व। रफति। रम्फति। अर्व्वति। आनर्व्व। पर्व्वति। लर्व्वति। बर्व्वति। पवर्गीया
दिरयम्। मर्व्वति। कर्व्वति। खर्व्वति। गर्व्वति। शर्व्वति। सर्व्वति। चर्व्वति॥ ३१॥ कुबि आच्छादने। कुम्बति ३२ लुबि तुबि अर्दने। लुम्बति। तुम्बति ३४ चुबि वक्त्र
संयोगे। चुम्बति ३५ षृभु षृम्भु हिंसार्थौ। सर्भति। ससर्भ। सर्भिता। सृम्भति। ससृम्भ। सृम्भ्यात् ३७ षिभु षिम्भु इत्येके। सेभति। सिम्भति ३९॥ शुभ शुम्भ भा
षणे। भासने इत्येके। हिंसायामित्यन्ये ४१ अथ त्रयोऽनुनासिकान्ताः। तत्र कम्यन्ता अनुदात्तेतो दश। घिणि घुणि घृणि ग्रहणे। नुम्। इत्त्वम्। घिण्णते। जिघिण्णे। घु
ण्णते। जुघुण्णे। घृण्णते। जघृण्णे ३ घुण घूर्ण भ्रमणे। घोणते। घूर्णते। द्वावेतौ तुदादौ परस्मैपदिनौ ५ पण व्यवहारे स्तुतौ च। पनच॥ १९ उदात्तो भवति ततः शवका
रैकादेशोऽप्येकादेश उदात्तेनोदात्त इत्युदात्त एव तकाराकारस्तु तास्यनुदात्तेन्ङिदुपदेशादित्यनुदात्तस्ततश्चोदात्तादनुदात्तस्येति स्वरितो भवति। स्वरितात्संहितायामनुदात्ता

सनाद्यंता। सनादय इति। सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विप् णिज् यङौ तथा। यगादिर्ईयङ् णिङ् चेति द्वादशामी सनादयः। धातुत्वादिति। प्रत्ययविशिष्ट
स्य धातुत्वादित्यर्थः सुप्तिङंतमित्यनेन संज्ञाविधौ प्रत्ययग्रहणे तदंतग्रहणं नास्तीति ज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञालाभाय अस्मिन् सूत्रे अंतग्रहणं कृतं। भूवाद
यो धातव इत्यस्यानंतरं सनाद्यंताश्चेति न सूत्रितं। सनादयो द्वादश एवेति निर्धारणालाभापत्तेः। सनाद्यंता धातव इत्यस्यानंतरं तु भूवादयश्चेति पठित्वा धातव इ
त्येतत् तत्रत्यं कर्तुं शक्यं। आयादयः। आय ईयङ् णिङ् इत्यर्थः। विवक्षायामिति। परसप्तम्यां तु आर्द्धधातुकोपदेशकाले यददंतमित्यनुपदं वक्ष्यमाणं न संगच्छेतेति भावः।
अन्ये तु गुपूरक्षण इत्यस्मात् क्तिनि पश्चादाय प्रत्यये गोपायतिरित्यनिष्टं प्रसज्येत विवक्षायामित्युक्ते तु आय प्रत्यये कृते क्तिनं बाधित्वा अ प्रत्ययादित्यकारप्रत्यये टा
पि च गोपाया धूपायेति सिध्यतीत्याहुः। कास्प्रत्यया। अमंत्रेति किं। कृष्णो नोनाव। अच्छंदसीति तु नोक्तं। मंत्रभिन्ने छंदसि आम इष्टत्वात्। यथा पुत्रमामंत्रयामा

सनाद्यन्ता धातवः। ३। १। ३२॥ सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषान्ते धातुसंज्ञाः स्युः। धातुत्वाल्लडादयः। गोपायति। आयादय आर्द्धधातु
के वा। ३। १। ३१॥ आर्द्धधातुकविवक्षायामायादयो वा स्युः। कास्प्रत्ययादाममन्त्रे लिटि। ३। १। ३५॥ कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि न तु
मन्त्रे। कास्यनेकाज्ग्रहणं कर्तव्यम्। सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः। अतो लोपः। ६। ४। ४८॥ आर्द्धधातुकोपदे
शकाले यदकारान्तन्तस्याकारस्य लोपः स्यादार्द्धधातुके परे॥ ९ सा। प्रत्ययांतत्वादाम्। अथाह शुनः शेपईक्षांचक्रे। इजादेश्चेत्याम्। इह तु लुप्त वकास. द

रिद्रादिभ्य आमोऽप्राप्तौ कास्यनेकाजिति वार्तिकमारभ्यते। प्रत्ययग्रहणमपनीयेति। अन्यथा अद्व आचरति अतिअस्य लिटि औ अतुरित्यादि वक्ष्यमाणं न सिध्येदि
ति भावः। अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुक्त्वा प्रत्ययांतादेकाचोप्याम् भवत्येव। अद्वाचरति इत्याचारक्विपि लिटि आंचकार आंचक्रतुरित्यादीत्या
हुः। अतो लोपः। अनुदात्तोपदेश इति सूत्रादुपदेश इत्यनुवर्तते तदाह। आर्द्धधातुकोपदेश इत्यादि उपदेशेति किं। अय पय गतौ। आभ्यां क्विपि वेरपृक्तलोपात् हलि
लोपः पूर्वविप्रतिषेधेनेति। वार्तिकाल्लोपो व्योरिति यलोपे अतो लोप इति लोपो मा भूत्। अत्यत। इह ह्रस्वस्य पिती तिति तुक्। आर्द्धधातुके परे इति किम्। कृष्णयति।
रङ्वो कर्तव्यायां अचः परस्मिन्निति स्थानिवत्त्वं यथा स्यात्॥

डिजिनंदिभ्यश्चेत्यौणादिकोज्झच्।झोऽन्तः।स्टहिगृहीत्यालुच्।स्टहयालुः।शुदक्षिस्टहिगृहिभ्य इत्यौणादिक आय्यः।स्टहयाय्यः।स्तनिहृषिपुषीत्यौणादिक एवइत्नुच्।
स्तनयित्नुः।णेरध्ययने वृत्तमिति सूत्रे इस्नुच्।वीरुधः।पारयिष्णवः।णिश्रिद्रुस्रुभ्यः सिचोपवादः।णेरनिटि।णेरिति णिङ्णिचोर्ग्रहणं।एवमन्यत्रापि बोध्यं।अनिटीत्यनेनाधिकृतमार्द्ध
धातुक इत्येतद्विशेष्यते।यस्मिन्विधिरिति तदादिविधिः।अतो लोप इत्यस्माल्लोप इति चानुवर्त्तते तदाह।अनिडादावित्यादि।यणि प्राप्त इति।ननु परत्वादियङ्यणादिवि
धयो यथासंभवमत्र संतु नाम तेषु स्थानिवद्भावाविणग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेत् नैवं शंक्यं।इयङादेशेह्यंत्यलोपः प्रसज्येतेति दोषः स्यात्।एतच्च अतो लोप
इति सूत्रे भाष्ये स्थितं।न चात्र कारणाकारक इत्यादौ गुणवृद्ध्योः कृतयोरंतरंगत्वादयायादेशयोः कृतयोरंत्यस्य लोपः प्राप्नोतीति कथमियङादेश एव दोष उक्त इति शं
क्यं।वार्णादांगं बलीय इत्ययायावाधित्वा णिलोपो भविष्यतीति भाष्याशयात्।णयल्लोपाविति।णिलोपः इयङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन।अल्लोपस्तु र

णौ चङ्युपधाया ह्रस्वः।७।४।१॥चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्।चङि।६।१।११॥चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्र
थमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य।सन्वल्लघुनि चङ्परेऽनग्लोपे।७।४।९३॥चङ्परे इति बहुव्रीहिः।स चाङ्गस्येति द्वयमप्यावर्त्तते।अङ्गसं
ज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तस्मिन् यल्लघु तत्परो योऽङ्गस्याऽभ्यासस्तस्य सनीव कार्यं स्यात्।णावग्लोपे सति।अथवाङ्गस्येति नाव
र्त्तते।चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् ॥ ९ ह्रिदीर्घाभ्यामिति विवेकः।णिलोपस्य निरवकाशत्वेन वार्त्तिकस्योक्तिसं
भव एव नास्तीत्यत आह।यान्तिरित्यादि क्तिजंतमिति।तत्र तितुत्रेति णिनिषेधादिति भावः।वचनसामर्थ्यादिति॥अयं भावः।णेरनिटीत्येतावति सूत्रे कृते ह्यार्द्धधा
तुक इत्यनुवृत्त्या आर्द्धधातुके परतः प्रवर्त्तमानो णिलोपः इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यात् इत्यनिटीत्यस्य वैयर्थ्यं प्रसज्येत तथा चानिडा
द्यार्द्धधातुके सर्वमप्यस्य विषयो न तु क्तिजंतमेवेति।अयमिति।णिलोप इत्यर्थः।अल्लोपांशे तु वचनमपेक्षितमेव।तेन चिकीर्षक इत्यत्र वृद्धिः चिकीर्ष्यादित्यत्र अ
कृत्सार्वधातुकयोरिति दीर्घं बाधित्वा पूर्वविप्रतिषेधेनातो लोप इति लोपो भवतीत्याहुः॥ ःः ॥णौ चङ्युपधाया ह्रस्वः।उपधायाः किं।अचकांक्षत्।सन्वल्लघुनि।चङ्पर इत्ये
तावतैव णिरिति न लभ्यते।श्विदुस्रुवामपि चङ्परत्वादत आह।अंगसंज्ञानिमित्तमिति।अंगस्याभ्यास इति।अंगस्य ये द्वे विहिते तयोः पूर्वोऽभ्यास इत्यर्थः।अंगस्ये

स्तुतावेवेति। भट्टिस्तु व्यवहारेपि प्रायुंक्त। नचोपलेभे वणिजां पणायामिति। वणिजां व्यवहारमित्यर्थः। अप्रत्ययादिति आय प्रत्ययांतादकार प्रत्ययेदाप्। चक्षंसेदिति। इह
अनुनासिकस्य क्विझलोरिति उपधादीर्घो न कृतः संज्ञापूर्वक विधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयंति॥ कमुकांतौ॥ अस्यणिङ् भावे उदितो वेति क्त्वायामिड्विकल्पः

स्तुतावित्येव सम्बध्यते एष्यङ्गि ईशात्। पनिसाहचर्य्यात्पणेरपि स्तुतावेवाय प्रत्ययः। व्यवहारे तु। पणते। पेणे। पणितेत्यादि। स्तुतावनुव
न्धस्य केवले चरितार्थत्वादाय् प्रत्ययान्तान्नात्मनेपदं। पणायति। पणायाञ्चकार। पेणे। पणायितासि। पणितासे। पणाय्यात्। पणिषीष्ट।
पनायति। पनायाञ्चकार। पेने॥ ७॥ भामक्रोधे। भामते। बभामे॥ ८॥ क्षमूष्सहने। क्षमते। चक्षमे। चक्षमिषे। चक्षंसे। चक्षमिध्वे॥ चक्षमि
वहे॥ म्वोश्च। ८।२।६५॥ मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे। णत्वं। चक्षण्वहे। चक्षमिमहे। चक्षण्महे। क्षमिष्यते। क्षं
स्यते। क्षमेत। आशिषि। क्षमिषीष्ट। क्षंसीष्ट। अक्षमिष्ट। अक्षंस्त॥ ९॥ कमुकान्तौ। कान्तिरिच्छा। कमेर्णिङ्। ३।१।३०॥ स्वार्थे॥ ङित्वात्तङ्। काम
यते। अयामन्ताल्वाय्येत्न्विष्णुषु॥ ६।४।५५॥ आम् अन्त आलु आय्य इत्नु इष्णुषु णेरयादेशः स्यात्। वक्ष्यमाणणिलोपापवादः। का
मयाञ्चक्रे। आयादय आर्द्धधातुके वा। चकमे। कामयिता। कमिता॥ कामयिष्यते। कमिष्यते। णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्। ३।१।४८॥
ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे। काम इ अ त इति स्थिते। णेरनिटि। ६।४।५१॥ अनिडादावार्द्धधातुके परे णेर्लोपः
स्यात्। परत्वादेरनेकाच इति यणि प्राप्ते। ण्यल्लोपावियङ् यण् गुण वृद्धि दीर्घेभ्यः पूर्व्वविप्रतिषेधेनेति वार्त्तिकम्। णिलोपस्य तु
पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः। वस्तुतस्त्वनिटीति वचनसामर्थ्यादार्द्धधातुकमात्रमस्य विषयः। तथा चे
यङादेरपवादएवायमियङ्। अततक्षत्। यण्। आटिटत्। गुणः कारणा। वृद्धिः कारकः। दीर्घः कार्य्यते॥ ९ कमित्वा। कांत्वा। निष्ठायां तु यस्य
विभाषेति निषेधात्कांतः। अयामंता॥ नामंते तिसूत्रितेपि णेरनिटीति वक्ष्यमाणलोपस्य निषेधे गुणायादेशयोः सतोः कामयांचक्रे इत्यादि रूपाणि सिध्यंत्येव
तथापि स्यपि लघुपूर्वादित्येवमर्थमायादेशवचनं। प्रस्तनय्य। संगमय्य। न ह्यत्र गुणायादेशौ लभ्येते। आम्। कारयामास। गंडयंतो मंडयंतः। नृभूवहिवसिसाधिगडिमं

यथोद्देशं संज्ञापरिभाषमिति पक्षद्वयमप्यस्ति। जातिव्यक्तिपक्षवत्। तथा च। पूर्वोभ्यास इत्यस्य सन्वल्लघुनीत्यादिना सह पक्षद्वयेपि एकवाक्यता समानैव तथापि कार्यकालपक्षे पदैकवाक्यता। यथोद्देशपक्षे तु वाक्यैकवाक्यता इत्यस्ति विशेषः। तत्रेदानीं कार्यकालपक्षपाति माधवमतं तावद्व्याचष्टे। संज्ञाया इत्यादिना श्लोकद्वयेन। अंगं यत्रेति। अयं भावः। सन्वल्लघुनि दीर्घो लघोरिति सूत्रद्वये अंगस्येत्यनुवर्तते। अभ्यासस्येति च। ते नांगस्य ये हेतयोः पूर्वोभ्याससंज्ञकस्तस्येति फलितं। द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते तच्च कृदन्तं तद्योगादंगस्येति कर्मणि षष्ठी तेन यत्रांगं द्विरुच्यते तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति। अचीकरत्। अपीपचत्। युक्तं चैतत्। अंगस्येति षष्ठ्या कारकविभक्तित्वसंभवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात्। नांगं द्विरुच्यते इति। एवं चाचचकासत्। आते

वस्तुतो ङस्याः वयवो योभ्यास इति वर्णनात्। ऊर्णौ दीर्घो प्राप्तौ द्वयं स्यादिति मन्महे। चकास्तौ तूभयमिदं न स्यात्स्यायच्च मवस्य पाणेर्विशेष्यसन्निहितं लघुनीत्यंगमेव वा इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात्। णेरग्लोपेपि सम्बन्धस्त्वगितामपि सिद्धये॥१०॥ अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः। अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण शब्दार्थाः। अणति। रणति। वणति। वकारादित्वादेत्वाभ्यासलोपौ न ववणतुः। ववणिथ॥१०॥ धणिरपि केश्चित्पठ्यते। धणति। ओणृ अपनयने। ओणति। ओणाञ्चकार॥११॥ शोणृ वर्णगत्योः। शोणति। शुशोण॥ ॥१२॥ श्रोणृ सङ्घाते। श्रोणति॥१३॥ श्लोणृ च॥१४॥ शोणादयस्त्रयो ऽमीतालव्योष्मादयः। पैणृ गतिप्रेरणश्लेषणेषु। पिपैण॥१५॥ ध्रण शब्दे। उपदेशे नान्तोयं रषाभ्यामिति णत्वं। ध्रणति। णोपदेशफलं यङ्लुकि ॥

∽ यपत्। और्णुनवद् इत्येव भवतीति भावः। अवयवः कश्चिदिति॥ हलादेः प्रथमावयवो द्विरुच्यते। अजादेस्तु द्वितीयावयव इत्यर्थः। अंगं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधीयमानौ एकाच्स्वेवेति च फलितौ। किं च। अस्मिन्पक्षे एकाच इत्यंगस्य विशेषणं शब्दतोपि सुलभमेकाचो द्वे इत्यधिकारादित्याशयेनाह। तस्मादेकाच्स्विति स्यादेतत्। उक्तरीत्या ह्रस्वहलादिः शेषत्वादीन्यपि अनेकाच्सु न स्युः। न चेष्टापत्तिः। दिद्रासति। दिदरिद्रासति जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात्। तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत् तर्हि इहापि स एवोचितः। अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वात्। इत्यादि प्रसीकृतत्वाच्चेति अभिप्रेत्याह॥ ∴ ॥ वस्तुत इति। ऊर्णौ दीर्घ इति। स्या

तिनावर्ततइति। अस्मिंस्तुव्याख्यानेचङ्परइत्येतावतैवणिरितिलभ्यतेश्विदुस्तुक्षुपरेषुअंगत्वासंभवादतोव्याचष्टे॥ चङ्परेणौयदंगमिति। चङ्परइत्यस्यैवव्याख्यानं णाविति ज्ञेयं। अनग्लोपेकिं। अचकथत्॥ ⁘ ॥सन्यतः। अत्रलोपोभ्यासस्येत्यतोऽभ्यासस्येतिभृञामिदित्यतइद्ग्रहणंचानुवर्ततेतदाह। अभ्यासस्येत्यादि। तपरकरणंकिं। पापच्यतेस्सन्। पापचिषते। नचसनियोऽभ्यासःसन्निमित्तइतिविज्ञानात्तपरकरणाभावेपिनोक्तातिप्रसंगः। अभ्यासस्येहयङ्निमित्तत्वादितिवाच्यं। तादृशाविवक्षायामधीषिषतिप्रतीषिषतीत्यादावव्याप्तेःनहिकार्यीनिमित्तत्वेनाश्रीयतेपद्माश्रीयेततर्हिद्विर्वचनेचीतिनिषेधेनरिसशब्दस्यद्वित्वाप्रवृत्तावरिरिषतीत्यादिनसिध्येत्। नन्वेवंपिपक्षतीत्यादावव्याप्तिःअभ्यासस्यसन्परत्वाभावात्। नचयेननाव्यवधानन्यायेनसन्त्रकृत्याव्यवहितेप्यभ्यासस्येत्वस्यादेवेतिवाच्यं। प्रतीषिषतीत्यादावभ्यासस्याव्यवहितसन्परत्वसंभवादुक्तन्यायस्याप्रवृत्तिरितिचेदत्राहुः। सनाधातुमाक्षिप्यसनिसतियोधातुःसन्नंतस्तदीयाभ्यासस्येतिव्याख्यानेनोक्तदोषः नचसनिप

सन्यतः। ७।४।७९॥ अभ्यासस्यातइकारःस्यात्सनि। दीर्घोलघोः। ७।४।९४। लघोरभ्यासस्यदीर्घःस्यात्सन्वद्भावविषये। अचीकमत्। णिङभावपक्षेकमेश्च्लेश्चङ्कक्तव्यः॥ णेरभावान्नदीर्घसन्वद्भावौ। अचकमत्। संज्ञायाःकार्यकालत्वादङ्गंयत्रद्विरुच्यतेतत्रैवदीर्घःसन्वच्चनानेकाल्त्विति माधवः। चकास्त्यर्थापयत्पूर्णोत्यादौनाङ्गंद्विरुच्यते। किन्त्वस्यावयवःकश्चित्तस्मादेकाल्त्विदन्दूयम्॥ ९२ अभ्यासस्येतियथाश्रुतंपरित्यज्योक्तव्याख्यानेकिंमानमितिवाच्यं। तपरकरणस्यैवतत्रमानत्वात्। किंचअकारग्रहणमपितत्रमानं। अन्यथासनीत्येवब्रूयात्। तावताप्यधीषिषतीत्यादावित्वप्रवृत्तिसिद्धेरिति। दीर्घोलघोः। लघोरभ्यासस्येति। ननुअज्हल्समुदायस्याभ्यासस्यलघुसंज्ञादुर्लभाह्रस्वंलघ्वितिसूत्रितत्वात्। नैषदोषः। इमेहिनसमानाधिकरणेषष्ठ्यौ। किंतुव्यधिकरणे। तथाचाभ्यासावयवस्यलघोर्दीर्घइत्यर्थः॥ लघुनिचङ्परेऽनग्लोपेइतिसर्वमिहानुवर्तते। तच्चप्राग्वदेवद्वेधाव्याख्येयंतदाह। सन्वद्भावविषयइति। हलादेरितिप्राचोक्तमिहोपेक्षितंनिष्प्रमाणत्वात्। नहिमुनित्रयोक्तिंविनाहलादेरितिव्याख्यातुमुचितं। नचैवंऔंदिदत्आट्टिटदित्यादौदीर्घःस्यादितिशंक्यं। अंगलघ्वोरुभयोरपिणिचंप्रतिविशेष्यत्वेदीर्घस्यतत्राप्राप्तेः। चङ्परेहियदंगंउदइतिनतदीयोभ्यासोनवाचङ्परणिच्यरंयल्लघुतत्परः। एतेनआट्टिटदित्यादिभाष्योदाहरणमेवहलादेरितिव्याख्यानेप्रमाणमितिकेषांचिदुक्तिरपिप्रत्युक्तादीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात्। लघोःकिंणुहिंसायां॥ अचिक्षणत्। शास्त्रेअस्मिन्कार्यकालंसंज्ञापरिभा

दंधंतीति। नुगतोनुनासिकांतस्येत्यभ्यासस्यनुक्। गत्यादिष्विति गतिशब्दसंभक्तिष्वित्यर्थः। मीमृ। ऋदित्। फलंतु नाग्लोपीति निषेधः। अमिमीमत्। ष्ठिवु
क्रमु। ष्ठीवति। क्राम्यति। आङि·चमइति। ष्ठिवुक्लमुआचमामितिवृत्तिकारोक्तपाठोऽयुक्तइति भावः। जिमिंकेचिदिति। तथाचजेमनमितिभोजनेप्रयुंजते
।वाभ्राश। उभयत्रविभाषेयं। अनवस्थानार्थोभ्रमिः क्लमित्रसीचदिवादयस्तेभ्योनित्यंप्राप्तेइतरेषामप्राप्तेचारंभात्भ्राशृभ्लाशृदीप्तौ। फणादावेतौ। भ्रमुचल

दंधन्ति॥१६॥ वणेत्यपिकेचित्। वेणतुः। वेणिथ। कनीदीप्तिकान्तिगतिषु। चकान॥१७॥ ष्टनवनशब्दे। स्तनति। वनति॥१९॥ व
नषणसंभक्तौ। वनेरर्थभेदात्पुनःपाठः। सनति। ससान। सेनतुः। येविभाषा। ६।४।४३॥ जनसनखनामात्स्याद्यादौक्ङिति। सायात्।
सन्यात्॥२१॥ अमगत्यादिषु। कनीदीप्तिकान्तिगतीत्यत्रगतेःपरयोःशब्दसम्भक्त्योरादिशब्देनसंग्रहः। अमति। आम॥२२॥ द्रमहम्म
मीमृगतौ। द्रमति। दद्राम। ह्म्यन्तेतिनवृद्धिः। अद्रमीत्। हम्मति। जहम्म। मीमति। मिमीम॥२५॥ अयंशब्देच। चमुछमुजमुझमुअ
दने। ष्ठिवुक्लमुचमांशिति। ७।३।७५। एषामचोदीर्घःस्याच्छिति। आङि·चमइतिवक्तव्यम्॥ आचामति। आङि·किं। चमति। विचमति।
।अचमीत्॥२९॥ जिमिंकेचित्पठन्ति। जेमति। क्रमुपादविक्षेपे। वाभ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः। ३।१।७०॥ एभ्यःश्य
न्वास्यात्कर्त्रर्थेसार्वधातुकेपरे। क्रमःपरस्मैपदेषु। ७।३।७६॥ क्रमेर्दीर्घःस्यात्परस्मैपदेपरेशिति। क्राम्यति। क्रामति। चक्राम। क्राम्यतु।



नेभ्रादिः ज्वलादिः। फणादिरपिमनोरमायांपठ्यतेतद्भ्रसादितिनभ्राः। भ्रमुअनवस्थाने। दिवादिःपुषादिः। शमादिस्तत्रभ्रादेःभ्रम्यति। भ्रमति। श
मादेस्तुश्यनिदीर्घेभ्राम्यतीतित्रैरूप्यं। क्लमुग्लानौ। त्रसीउद्वेगे। त्रुटछेदने। लषकांतौ। क्रमः। ष्ठिवुक्लमुचमामित्यतोऽनुवर्तनादाह। परस्मैपदेशितीति। परस्मैपदेकिं। उपक्रमते। पराक्रमते ॥

दित्यपकृष्यते।और्णुनवत् इह सन्वद्भावस्तुनोपयुज्यते णौकृतस्यादेशस्यस्थानिवद्भावेन निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाभावादिति भावः।अर्थापयताविति।अर्थमाचष्टे इत्यर्थे णिच्यापुगागमे च ततश्च ङ्गेश्चङि दीर्घस्य सन्वदितीत्वस्य च प्रवृत्तौ आर्तीथयदित्येव भवतीति भावः।अर्थउपयाज्ञायामित्यस्य तु चङ्परे णौ आर्तथ्यते ति भवति न तु तत्र दीर्घसन्वद्भावयोः प्रवृत्तिरिति चुरादौ स्फुटीभविष्यति।उभयमिति।दीर्घः सन्वच्चेत्येतद्द्वयमित्यर्थः।न स्यात्स्याच्च व्यवस्थयेति।चङ्परे णौ यल्लघ्विति व्याख्यानेन स्यात् चङ्परे णौ यदङ्गमिति व्याख्याने तु स्यात्।एवं च अचचकासत्।अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः।ननु यथा चङ्परे णौ यल्लघ्विति व्याख्याने येन नाव्यवधानन्यायेन अपीपचदित्यादावेव उभयं भवति न त्वनेकव्यवाये अचचकासदित्यादौ तथा न्यायसाम्येन लघुनियोभ्यास इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वाद् चिक्षणदित्यादौ सन्वदितीत्वं न स्यादिति चेदत्राहुः।अत्स्मृदृत्वरेतीत्वापवादेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेपि इत्वस्य ज्ञापितत्वान्नोक्तदोषः।अत एव दीर्घो लघोरिति सूत्रे लघोरिति सार्थकं माधवोपि जागृधाताविस्यमेवाह।एवं च वदन्नयथोद्देशपक्षमेवाशिश्रियत्।तथा च ऊर्णुधातो यत्तेनोक्तं और्णुनवदित्यत्र दीर्घो लघोरित्यभ्यासस्य दीर्घो न भवति चङ्परे णौ यदङ्गं तस्य यो भ्यास इति सूत्रार्थात्।अत्र तु अंगावयवाभ्यासो न त्वंगस्येत्यादि।तत्र तस्यापि आग्रहो नास्तीति गम्यते अत एव चकास्तावचीचकासदित्युदाजहार।तथा च मतभेदाभिप्रायेण पूर्वापरग्रंथविरोधः समाधेय इति।कातंत्रपरिशिष्टे त्वित्वदीर्घयोः अजीजागरदित्युदाहृतं।तन्मतद्वयेप्यसंभवादुपेक्ष्यं।व्यवस्थामेव विवृणोति।णेरिति।सन्निहितमिति हेतुगर्भं विशेषणं लघुनीत्येतत् णेर्विशेष्यं भवति सन्निहितत्वादित्यर्थः।अंगमेवेति।अस्य चङ्परे इत्यत्र आदेशरूपचङः शे आकांक्षाभावेपि णाविति प्रत्ययांशे उत्थिताकांक्षत्वादिति हेतुः स्पष्ट एवेति भावः।कैयटेनैवेति।तथा च एकं हरदत्तमतं अपरं तु कैयटमतमिति विषयविभागेन व्याचक्षाणाउपेक्ष्या इति भावः।चङ्परइत्यावर्त्य अग्लोपविशेषणतयापि योजितं तस्य फलमाह णेरिति श्रिद्रुस्रुषु परतो अग्लोपित्वासंभवादिहापि चङ्परइत्येतावतैव णाविति लभ्यते इति बोध्यं।अगितामपीति।पचिकमिशकिप्रभृतीनामित्यर्थः।नह्यत्र नकारानुलोपो णिचं प्रतीक्षत इति भावः।नोपदेशफलमिति।अनुस्वार इत्यर्थः।

चिणोलुक्। परस्यलुक्स्यादिति। तशब्दस्येतिकैश्चिदुच्यते। तदार्थिकार्थकथनं। तशब्दे परतः चिणिविहितेचिणः परस्यजायमानोलुक् प्रत्ययस्यलुक् श्लुलुपइतिवच नात्तशब्दस्यैवेतिसष्टत्वात्। अयमिति। षेवृधातुः। भाष्यविरुद्धमिति। यदिसोपदेशः स्यात्तदास्यायतिरिवायमपिषोपदेशलक्षणे पर्युदस्येतलदकरणान्नास्तिसोप देशइतिभावः। प्लवगताविति। केचित् प्लवेतिधात्वंतरमिच्छन्ति। तद्धिमनोरमायांदूषितं। प्लवेतिधात्वंतरत्वेविभाषाङि रुप्लुवोरित्यत्रप्लुवः पसेघञ्विधानंव्यर्थंस्यात्। प्लवेत्येतस्माद्धञिआप्लावशब्दस्यसिद्धत्वात्। तथाल्लवतिशृणोतीतिसूत्रेणप्लवतेरभ्यासोकारस्यइत्वविधानमपिव्यर्थंस्यात्। तद्धिपक्षेअपिप्लवदितिरूपसिध्यर्थं

चिणोलुक्। ६।४।१०४। चिणः परस्यलुक्स्यात्। अप्यायि। अप्यायिष्ट॥१५॥ तायृसन्तानपालनयोः। सन्तानः प्रबन्धः। तायते। तताये। अतायि। अतायिष्ट॥१६॥ शलचलनसम्वरणयोः १७ शेले वलवल्लसंवरणेसञ्चरणेच। ववले। ववल्ले॥१९॥ मलमल्लधारणे। मेले। ममल्ले २१ भलभल्लपरिभाषणहिंसादानेषु। बभले। बभल्ले २३ कलशब्दसंख्यानयोः। कलते। चकले २४ कल्लअव्यक्तेशब्दे। कल्लते २५ अशब्दइति। स्वामी। अशब्दस्तूष्णींभावइतिच। तेवृदेवृदेवने। तितेवे। दिदेवे २७ षेवृगेवृग्लेवृपेवृमेवृम्लेवृसेवने। परिनिविभ्यइतिषत्वम्। परिषेवते। सिषेवे। अयंसोपदेशोपीतिन्यासकारादयः। तद्भाष्यविरुद्धं। गेवते। जिगेवे। जिग्लेवे। पिपेवे। मेवते। म्लेवते ३३ शेवृखेवृकेवृइत्यप्येके। ३६। रेवृप्लवगतौ। प्लवगतिः प्लुतगतिः। रेवते ३७ अथावस्यन्ताः परस्मैपदिनः। मव्यबन्धने। ममव्य १ सूर्क्ष्यईर्क्ष्यईर्ष्यईर्ष्यार्थाः॥४॥ हयगतौ। अहयीत्। यान्तत्वान्नवृद्धिः ५ शुच्यअभिषवे। अवयवानांशिथिलीकरणंसुरायाःसन्धानम्वाऽभिषवः। स्नानञ्च। शुशुच्य ६ चुच्यइत्येके॥७॥ हर्य्यगतिकान्त्योः। जहर्य्य॥८॥ अलभूषणपर्य्याप्तिवारणेषु। अलति। आल॥ ९ क्रियते। तच्चरूपंप्लवधातोःसन्यतइत्यनेनसिद्धमिति किंतदुपादानेने ति। ममव्येति। यस्यहलइतिलोपस्तुनभवतियस्येतिसंघातग्रहणमितिसिद्धांतितत्वात्। वर्णग्रहणेत्वर्थग्रहणपरिभाषयाअप्रवृत्यापुत्रकाम्येत्यादावपिलोपःस्यादि तिदिक्। लुङि। मव्यिता। आशिषि। मव्यात्। हलोयमामितिधातुयकारस्यलोपः। सूर्क्ष्यईर्क्ष्य। णलि। सुषूर्क्ष्य॥ ईर्क्ष्यांचकार। ईर्ष्यांचकार। एभ्यः क्विपिलोपोव्योरितिलोपे स्कोरितिकलोपेजश्त्वचर्त्वयोः। सूर्ट्। ईर्ट्। संयोगांतलोपस्त्विहनभवति। रात्सस्येतिनियमात्सूर्क्ष्यआदरइतिवक्ष्यते। तस्यापिसूर्ट्इत्येवरूपं। हयगतौ।

स्नुक्रमोः। अनात्मनेपदनिमित्ते इति। आत्मनेपदनिमित्ताभावे इत्यर्थः। अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनं अनात्मनेपदनिमित्तयोरित्यर्थ इत्याहुः। उभयोरपि भावकर्मकर्मव्यतिहारास्तङ्निमित्तं क्रमे स्नुवृत्तिसर्गादयोपीति बोध्यं। स्नुक्रमोरुदात्तत्वादिति सिद्धे नियमार्थोयमित्याह। अत्रैवेडिति। अनात्मनेपदे इति किं। उपस्नोष्यते जलेन। उपक्रंस्यते। आक्रंस्यते। निमित्त इति किं। स्नौतीति स्नविता सद्वाचरति स्नवित्रीयते इह क्यङ् आत्मनेपदनिमित्तं न तु स्नौति

स्नुक्रमोरनात्मनेपदनिमित्ते। ७।२।३६॥ अत्रैवेट्। अक्रमीत्॥२०॥ अथ रेवत्यन्ता अनुदात्तेतः। अय वय पय मय चय तय णय गतौ। अयते॥ दयायासश्च। ३।१।३७॥ दय अय आस् एभ्य आम् स्याल्लिटि। अयाञ्चक्रे। अयेत। अयिषीष्ट। विभाषेटः। ८।३।७९॥ इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्द्धन्यादेशः स्यात्। अयिषीढ्वम्। अयिषीध्वम्। आयिष्ट। आयिढ्वम् आयिध्वम्। उपसर्गस्यायतौ। ८।२।१९॥ अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते। निस्दुसोरुत्वस्यासिद्धत्वान्न लत्वम्। निरयते। दुरयते। निर्दुरोस्तु निलयते। दुलयते। प्रत्यय इति ष्विणो रूपम्। अय कथमुदयति विततोर्ध्वरश्मिरज्जाविति माघः। इट किट कटी इत्यत्र प्रश्लिष्टस्य भविष्यति। यद्वा अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्। चक्षिङो ङित्करणात् तज्ज्ञापकात्। वादित्वात्। ववये। पेये। मेये। चेये। तेये। प्रणयते। नेये॥ ७॥ दय दानगतिरक्षणहिंसादानेषु। आदानं ग्रहणं। दयाञ्चक्रे॥ ८॥ रय गतौ॥ ९॥ ऊयी तन्तुसन्ताने। ऊयाञ्चक्रे॥ १०॥ पूयी विशरणे दुर्गन्धे च। पूयते। पुपूये॥ ११॥ क्नूयी शब्दे उन्दे च। चुक्नूये॥ १२॥ क्ष्मायी विधूनने। चक्ष्माये॥ १३॥ स्फायी ओप्यायी वृद्धौ। स्फायते। पस्फाये। प्यायते॥ लिड्यङोश्च। ६।१।२९॥ लिटि यङि च प्यायः पीभावः स्यात्। पुनः प्रसङ्गविज्ञानात् पीशब्दस्य द्वित्वं॥ एरनेकाच इति यण्। पिप्ये। पिप्याते॥ पिप्यिरे। दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्। ३।१।६१॥ एभ्यश्च्लेश्चिण् वा स्यात्। एकवचने तशब्दे परे॥ ❁ ॥

रित्याहुः। लुङ्लिटां धस्येति। लिटि। लिलिहिढ्वे। लिलिहिध्वे। अयमकथमिति। शानचाभाव्यमिति शंकितुराशयः। क्नूयी शब्दे उंदे च। उंदः क्लेदनं। लिड्यङोश्च। यङि। पेपीयते। दीपजन। दीपी दीप्तौ। जनी प्रादुर्भावे। बुध अवगमने। पूरी आप्यायने। एते दिवादयः ॥ ❁ ॥ ❁ ॥ ❁ ॥ ॥

अंगस्यातःलृरोः समीपत्वात्लंच तदंतश्चेति समीपवाचिनांतशब्देनकर्मधारयपक्षेलंतशब्दस्यविशेषणत्वात् पूर्वनिपातः स्यादत आह। लुप्तषष्ठीकमितिअं
त शब्दःसमीपवाचीत्यभिप्रेत्याह अतःसमीपाविति अतोवृद्धिःस्यादितिइह अतइत्यस्यतत्रावृत्त्यादिकंस्वीकर्तव्यं। अन्यथाप्रयोजनाभावादिकपरिभाषानुप
स्थानेप्यलोंत्यपरिभाषयाअंत्यस्यस्यादितिभावः। यद्यपिअतोलरस्येत्युक्तेपिलरांतस्यांगस्यअतः सिचिपरे वृद्धिरित्यर्थेस्वीकृतेयेन नाव्यवधानन्यायेनेष्टंसिध्यति
तथाप्यंगस्यसिचिपरेअतोवृद्धिरित्यर्थोपिप्रतीयेत। ततश्चाश्वल्लीदित्यत्रातिप्रसंगः स्यात्तद्वारणायसूत्रेअंतग्रहणंकृतमिति। तदनुरोधेनांतशब्दस्यसमी
पवाचित्वमतइत्यस्यचानुवृत्तिःस्वीकृतेतिबोध्यं। अतःसमीपाविति किं। अखोरीत्। अमीलीत्। लांतस्यांगस्य किं। श्वल्ल आशुगमने। अश्वल्लीत्। अत्र अकार
समीपोयोलकारःसनांगस्यांतः यस्त्वंगस्यांतः सतुनाकारसमीपः। ननुल्रेत्यस्यलुप्तषष्ठीकत्वाभ्युपगमेप्यतशब्दस्यावयववाचित्वंस्वीकृत्यअगस्यांतंयत्लंतं
स्यातःतत्समीपस्यातोवृद्धिरितिव्याख्यानेलतइत्यस्यावृत्तिर्नापेक्षितेतिचेत्। अत्राहुः। हलंत्यमितिसूत्रेमनोरमायांसामीप्यंषष्ठ्यर्थइतिपक्षस्यनिराकर
णात्तदनुरोधेनात्रातइत्यस्यावृत्तिराश्रितेति। अत्रकेचित्। अतोल्रांतेल्रेति लुप्तसप्तमीकं। अथवाअतोलांतइतिव्यस्तमेवसूत्रयितुंशक्यं। तथाचअंग
तंयत्लं तस्मिन्परेऽव्यवहितस्यातोवृद्धिरितिव्याख्यानसंभवात्तत्रावृत्त्याद्याश्रयणक्लेशः नचांगस्यविशेष्यत्वेनैवान्वयोयुज्यतेनतुविशेषणत्वेनपदां
गाधिकारेतस्यचतदंतस्येतिपरिभाषायाःपदमंगचविशेष्यंभवतीत्यभिप्रायवर्णनादितिवाच्यं। अल्लोपोनइतिसूत्रेऽवयवोऽसर्वनामस्थानेत्येवंभाष्य
कारादिभिर्विशेषणतयाव्याख्यानात् क्वचिद्विशेषणत्वेप्यंगस्यनक्षतिरित्याहुः। नेटीत्यादि। यद्यपिपुरस्तादपवादन्यायेननेटीत्यस्यापवादोनतुविकल्पस्या
पितथापिबाध्यसामान्यचिंतायांस्वविषयेप्राप्तंसर्वंबाध्यतइतिपुरस्तादपवादन्यायोत्रनप्रवर्ततइतिभावः। मीलसंकोचेइति। नेत्रसंकोचेतुप्रचुरप्रयोगः।
तिलगतौ। तिलस्नेहनइतिचुरादौ। दलविशरणे। विशरणमवयवानांविभागः। धोर्ऋ धोरितकमश्वानांगमनविशेषः। निष्ठांतात्संज्ञायांकन्। त्सर। छद्मनाकपटे
नगतिः छद्मगतिः। क्मरहूर्छने। हूर्छनंकौटिल्यं। ष्ठिवुनिरसने। असत्युदिष्ठेवनं। ष्ठीवनाऽसकृशकृन्मूत्ररेतांस्यप्सुननिक्षिपेदित्यत्रपृषोदरादित्वात्स्येदीर्घईकारइत्याहुः ॥

जहायाहृस्यात्।शिथिलीकरणमिति।सोममभिषुणोतीत्यादौदर्शनात्।सुरायाइति।तत्प्रकरणेसंधानंस्यादभिषवइत्यमरोक्तेः॥ ॐ ॥अतोल्रांतस्य।यद्यवयव

अतोल्रान्तस्य।७।२।२॥ल्रेतिलुप्तषष्ठीकम्।अतः समीपौयौल्रौ तदन्तस्याङ्गस्यातोवृद्धिःस्यात्परस्मैपदपरेसिचि।नेटीतिनिषेध स्यातोहलादेरितिविकल्पस्यचापवादः।माभवानालीत्।अयंस्वरितेदित्येके।तन्मतेअलतेइत्याद्यपि॥९॥त्रिफलाविशरणे।तृफले त्येत्वम्॥फेलतुः।फेलुः।अफालीत्॥१०॥मीलश्मीलस्मीलक्ष्मीलनिमेषणे।निमेषणंसंकोचः।द्वितीयस्तालव्यादिः।तृतीयोदन्त्यादिः।१४।षी लप्रतिष्टम्भे।प्रतिष्टम्भोरोधनम्॥१५॥नीलवर्णे।निनील॥१६॥शीलसमाधौ।शीलति॥१७॥कीलवन्धने॥१८॥कूलआवरणे॥१९॥शूलरु जायांसङ्घोषेच॥२०॥तूलनिष्कर्षे।निष्कर्षोनिष्कोषणं।तन्त्रान्तर्गतस्यवहिर्निःसारणं।तुतूल॥२१॥पूलसङ्घाते॥२२॥मूलप्रतिष्ठायाम्॥२३॥ फलनिष्पत्तौ।फेलतुः।फेलुः॥२४॥चुल्लभावकरणे।भावकरणमभिप्रायाविष्कारः॥२५॥फुल्लविकसने॥२६॥चिल्लशैथिल्ये भावकरणेच ॥२७॥तिलगतौ।तेलति॥२८॥तिल्लेत्येके।तिल्लति॥२९॥वेलृचेलृकेलृखेलृक्ष्वेलृवेल्लचलने।पञ्चऋदितः।षष्ठोलोपधः॥३५॥पेलृफेलृ शेलृगतौ॥३८॥षेलृइत्येके॥३९॥स्खलसञ्चलने।चस्खाल।अस्खालीत्॥४०॥खलसञ्चये॥४१॥गलअदने।गलति।अगालीत्॥४२॥ष लगतौ।सलति॥४३॥दलविशरणे॥४४॥श्वलश्वल्लआशुगमने।शश्वाल।अश्वालीत्।शश्वल्ल।अश्वल्लीत्॥४६॥खोलृखोर्ऋगतिप्रतिघाते ।खोलति।खोरति॥४८॥धोर्ऋगतिचातुर्य्ये।धोरति॥४९॥त्सरछद्मगतौ।तत्सार।अत्सारीत्॥५०॥क्मरहूर्छने।चक्मार॥५१॥अभ्रवभ्रम भ्रचरगत्यर्थाः।चरतिर्भक्षणेपि।अभ्रति।आनभ्र।माभवानभ्रीत्।अङ्गान्तरेफस्यातःसमीपत्वाभावान्नवृद्धिः॥५५॥ष्ठिवुनिरसने।ष्ठिवुक्लम्वि तिदीर्घः।ष्ठीवति।अस्याद्वितीयस्यकारष्ठकारोवेतिरक्षितः।तिष्ठेव।तिष्ठिवतुः।तिष्ठिवुः।टिष्ठेव।टिष्ठिवतुः। ——— टिष्ठिवुः।हलिचेतिदीर्घः।ष्ठी व्यात्॥५६॥जिजये।अयमजन्तेषुपठितुंयुक्तः।जयउत्कर्षप्राप्तिः।अकर्मकोयम्।जयति ॥ ९ वचनेनांतशब्देनबहुव्रीहिरंगंचान्यपदार्थस्तस्यचवि शेषणेनतदंतविधेःसिद्धत्वादंतग्रहणमनर्थकं।अश्वल्लीदित्यत्रातिव्याप्तिश्चासमीपवाचिनाअंतशब्देनषष्ठीसमासपक्षेरपरिणिशल्लप्रभृतिष्वतिव्याप्तिः ॥ ॐ ॥

सि·कौ टी·त ति·उ ३८

अ
तत्वात् अकारादेशे कृते चानुकृष्टस्य पश्चाज्जायमानत्वादिति भावः। लोपश्च। यप्रत्ययो कार इति असंयोगपूर्वो यः प्रत्यय इति। प्रत्ययविशेषणं तु न कृतं। अस्नुवः। अ
स्नुमहूत्यादावनिष्टाभावेपि अश्नुवहे इत्यादावतिप्रसंगात्। एवमुतश्चेति सूत्रेपि अस्नुहीत्यत्र दोषाभावेपि अश्नुहीत्यत्रातिप्रसंगः स्यादित्यसंयोगपूर्वेति प्रस
यविशेषणं न कृतमित्याहुः। अश्नुहीति परस्मैपदं यद्यपि लोके दुर्लभं तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यं। आप्नुहीति पाठस्तूचितः। कृवि। अयमिति।
कृणोतीत्यादिरित्यर्थः। स्वादौ हि कृवी इत्ययं धातुर्न पठ्यते किंतु कृञ् हिंसायामिति। तस्य च परस्मैपदे प्रसार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितो

अवति। आव।
अवरक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु। अवति। आव।
माभवानवीत्॥ ९६॥ धावु गतिशुद्ध्योः। स्वरितेत्। धावति। धावते। दधाव। दधावे॥ ९७॥ अथोष्मान्ता आत्मनेपदिनः। धुक्ष धिक्ष सन्दीपनक्ले
शनजीवनेषु। धुक्षते। दुधुक्षे। धिक्षते। दिधिक्षे॥ २॥ वृक्ष वरणे। वृक्षते। ववृक्षे॥ ३॥ शिक्ष विद्योपादाने। शिक्षते॥ ४॥ भिक्ष भिक्षायामलाभे लाभे चाभि
क्षते॥ ५॥ क्लेश अव्यक्तायां वाचि। बाधन इति दुर्गः। क्लेशते। चिक्लेशे॥ ६॥ दक्ष वृद्धौ शीघ्रार्थे च। दक्षते। ददक्षे॥ ७॥ दीक्ष मौण्ड्येज्योपनयननियमव्र
तादेशेषु। दीक्षते। दिदीक्षे॥ ८॥ ईक्ष दर्शने। ईक्षांचक्रे॥ ९॥ ईष गतिहिंसादर्शनेषु। ईषांचक्रे॥ १०॥ भाष व्यक्तायां वाचि। भाषते॥ ११॥ वर्ष स्नेह
ने। दन्त्योष्ठ्यादिः। ववर्षे॥ १२॥ गेषृ अन्विच्छायाम्। ग्लेषृ इत्येके। अन्विच्छा अन्वेषणं। जिगेषे॥ १३॥ पेषृ प्रयत्ने। पेषते॥ १४॥ जेषृ णेषृ एषृ प्रेषृ गतौ। जे
षते। नेषते। एषांचक्रे। पिप्रेषे॥ १८॥ रेषृ हेषृ ह्रेषृ अव्यक्ते शब्दे। आद्यो वृकशब्दे। ततो द्वौ अश्वशब्दे। रेषते। हेषते। ह्रेषते॥ २१॥ कासृ शब्दकुत्सायाम्॥

र्थः॥ ॐ॥ अवरक्षण एकोनविंशतिरर्थाः। कान्तिः शोभा। दीप्तिस्तेज इत्याहुः। तृप्तिरिच्छानाशः। स्वाम्यर्थः स्वामित्वं। हिंसा हननं। आदानं ग्रहणं। न चात्र दानमेवार्थो
स्त्विति वाच्यं। भागे वृद्धौ ग्रहे वधे इत्येवमर्थानां विशिष्य वोपदेवेन गणितत्वात्। भिक्ष। याच्ञालाभालाभास्त्रयोऽर्थाः। स्वामी तु क्लेशमव्यक्तायां वाचि चेति पठित्वा इमाव
पि भिक्षधातोरर्थाविति मन्यते। क्लिश उपतापे इति दिवादौ। क्लिशू विबाधने इति क्र्यादौ। दीक्ष। पंचार्थाः। ईष गति। गुरोश्च हल इत्यप्रत्यये टाप्। ईषा। मनस ईषा मनीषा। प्र
कंध्वादिः। मनीषामभिनिविष्टं मनीषितं। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति णिचि तदंतात् क्तः। ईषउंछे इति तु परस्मैपदिषु हृस्वादयं त्वयः। इष गतौ दिवादिः। ईषद्

॥ क्वादयः इदृशेआभीष्पादिः॥
राम: ३८

सन्लिटोर्जेः। सन्लिणिनिमित्तइति। यदितुसनि लिटि चपरेयोभ्यास इति प्राचोव्याख्यानमाद्रीयेत तदा येन नाव्यवधानन्यायेन प्रकृतिव्यवधानं सोढव्यमेव। परंतुय
ङ्लुगन्तात्सनिजेजयिषतीत्यत्रकुत्वंस्यात्। नचतन्माधवग्रंथसंमतमितिभावः। धिन्विकृण्व्योरच। अलोन्त्यस्येति वकारस्याकारादेशः अकारेणतु उप्रत्ययोनुकृष्य

सन्लिटोर्जेः। ७। ३। ५७॥ जयतेः सन्लिणिनिमित्तोयोऽभ्यासस्ततः परस्य कुत्वंस्यात्। जिगाय। जिग्यतुः। जिग्युः। जिगयिथ। जिगेथ। जिगा
य। जिगय। जिग्यिव। जिग्यिम। जेता। जीयात्। अजैषीत्॥ ५७॥ जीव प्राणधारणे॥ जिजीव॥ ५८॥ पीव मीव तीव नीव स्थौल्ये। पिपीव। मिमीव। ति
तीव। निनीव॥ ६२॥ क्षीवु क्षेवु निरसने॥ ६४॥ उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः। उर्वाञ्चकार। उपधायां चेति दीर्घः। तुतूर्व॥ ६९॥ गुर्वी उद्यमने। गूर्व
ति। जुगूर्व॥ ७०॥ मुर्वी बन्धने॥ ७१॥ पुर्व पर्व मर्व पूरणे॥ ७४॥ चर्व अदने॥ ७५॥ भर्व हिंसायाम्॥ ७६॥ कर्व खर्व गर्व दर्पे॥ ७८॥ अर्व शर्व षर्व हिंसाया
म्। आनर्व। शर्वति। सर्वति॥ ८१॥ इवि व्याप्तौ। इन्वति। इन्वाञ्चकार ८३ पिवि मिवि णिवि सेचने। तृतीयो मूर्धन्योष्वादिरित्येके। सेवन इति तरङ्गिण्याम्।
पिन्वति। पिपिन्व॥ ८६॥ हिवि दिवि धिवि जिवि प्रीणनार्थाः। हिन्वति। दिन्वति। धिन्विकृण्व्योरच। ३। १। ८०। अनयोरकारोन्तादेशः स्यादुप्रत्यय
श्च शब्विषये। अतो लोपः। तस्य स्थानिवद्भावाल्लघूपधगुणो न। उप्रत्ययस्य पित्सु गुणः। धिनोति। धिनुतः। धिन्वन्ति। लोपश्चास्यान्यतरस्याम्वोः
। ६। ४। १०७॥ असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः। धिन्वः। धिनुवः। धिनुमः। धिन्मः। मिपि तु परत्वाद्गुणः। धि
नोमि। उतश्च प्रत्ययादसंयोगपूर्वात्॥ ६। ४। १०६॥ असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात्। धिनु। नित्यत्वादुकारलोपा
त्पूर्वमाट्। धिनवाव धिनवाम। जिन्वति इत्यादि॥ ९०॥ रिवि रवि धवि गत्यर्थाः। रिण्वति। रण्वति। धन्वति॥ ९३॥ कृवि हिंसाकरणयोश्च। चकारा
द्गतौ। कृणोति। इत्यादि धिनोतिवत्। अयं स्वादौ च॥ ९४॥ मव बन्धने। मवति। मेवतुः। मेवुः। अमवीत्। अमावीत्॥ ९५॥ ९ ते। वोपदेवेन तु लनयो
स्तनादित्वं स्वीकृतं। तन्मते तु चकारं विनाप्युप्रत्ययलाभः। अतो लोप इति। यद्यप्युपदेशे ऽदंतत्वं नास्ति तथाप्यार्द्धधातुकोपदेशे तदस्त्येव। धिन्विकृण्व्योरचेतिसू

नचकृतेपिसलोपेप्रत्ययलक्षणेनसिच्परत्वाद्गुणभावोदुर्वारइतिशंक्यं।वर्णाश्रयेप्रत्ययलक्षणाभावात्।अन्यथागवेहितंगोहितमित्यत्रावादेशःस्यादितिदिक्॥ः॥
जगृहे।ऋदुपधेभ्योलिटःकित्वंगुणात्पूर्वविप्रतिषेधेन।जगृहिषे।जघृक्षे।जघृढ्वे।गर्हिता।गर्ढा।गर्हिष्यते।घर्क्ष्यते।गर्हिषीष्ट।घृक्षीष्ट।लुङि।अगर्हिष्ट।इड्भावे।शलइगुपधादनिटःक्सः।३।१।४५।इगुपधोयःशलन्तस्तस्मादनिटश्च्लेःक्सादेशःस्यात्।अघृक्षत।क्सस्याचि।७।३।७२।अजादौतङिक्सस्यलोपःस्यात्।अलोन्त्यस्य।अघृक्षाताम्।अघृक्षत॥४९॥ग्लहच।ग्लहते॥५०॥घुषिकान्तिकरणे।घुंषते।जुघुंषे।केचिद्घुषेत्यदुपधंपठन्ति॥५१॥अथार्हत्यन्ताःपरस्मैपदिनः।घुषिर्अविशब्दने।विशब्दनम्प्रतिज्ञानन्ततोन्यस्मिन्नर्थइत्येके।शब्देइत्यन्येपेठुः।घोषति।जुघोष।घोषिता।इरित्त्वादङ्वा।अघुषत्।अघोषीत्॥१॥अक्षूव्याप्तौ।अक्षोन्यतरस्याम्।३।१।७५।अक्षोवाश्नुप्रत्ययःस्यात्कर्त्रर्थेसार्वधातुकेपरे।पक्षेशप्।अक्ष्णोति।अक्ष्णुतः।अक्ष्णुवन्ति।अक्षति।अक्षतः।अक्षन्ति।आनक्ष।आनक्षिथ।आनष्ठ।अक्षिता।अष्टा।अक्षिष्यति।स्कोरितिकलोपः।षढोःकःसि।अक्ष्यति।अक्ष्णोतु।अक्ष्णुहि।अक्ष्णवानि।आक्ष्णोत्।आक्ष्णवं।अक्ष्णुयात्।अक्ष्यात्।उदित्वादेट्।नेटिमाभवानक्षीत्।अक्षिष्टाम्।अक्षिषुः।इड्भावेतुमाभवानाक्षीत्।आष्टाम्।आक्षुः॥२॥तक्षूत्वक्षूतनूकरणे।तनूकरणेतक्षः।३।१।७६।श्नुःस्याद्वाशब्विषये।तक्ष्णोति।तक्षतिकाष्ठं।ततक्षिथ।ततष्ठ।अतक्षीत्।अतक्षिष्टाम्।अताक्षीत्।अताष्टाम्।तनूकरणेकिम्।वाग्भिःसन्तक्षति।भर्त्सयतीत्यर्थः॥४॥उक्षसेचने।उक्षाञ्चकार॥५॥रक्षपालने॥६॥णिक्षचुम्बने।प्रणिक्षति॥७॥तृक्षस्तृक्षणक्षगतौ।तृक्षति।स्तृक्षति।नक्षति॥१०॥वक्षरोषेसङ्घातेइत्येके॥११॥मृक्षसङ्घाते।म्रक्षइत्येके॥१३॥तक्षत्वचने।त्वचनंसंवरणं।त्वचोग्रहणञ्चपक्षपरिग्रहइत्येके॥१४॥सूर्क्ष्यआदरे।सूर्क्ष्यति।अनादरइतितुक्वाचित्कोपपाठः।अवज्ञावहेलनमसूर्क्षणमित्यमरः॥१५॥काक्षिवाक्षिमाक्षिकांक्षायाम्॥ १८॥ ॥
जगृहेइतिकित्वात्सरलत्वात्सुगंतेतिगुणेप्राप्तेऋदुपधेभ्यइतिवार्तिकात्किलेगुणाभावः।शलइगुपधा।शलइतिधातोर्विशेषणात्तदन्तलाभः।शलइतिकिं।अतिष्ठाइगि

कांसांचक्रे इति। कास्प्रत्ययेत्याम्। भासृ दीप्तौ। अस्य ऋदित्त्वं भ्राजतेरिव तङ्मात्रफलकम्। भ्राजभासेत्यादिनोपधाह्रस्वस्य विकल्पितत्वात्। णस कौटिल्ये। लिण्णिमित्तादेशादित्वाभावादेत्त्वं। नेसे। आङः शासि शंसुस्तुताविति तु परस्मैपदिषु वक्ष्यते। ग्रसु ग्लसु। उदितो वेति क्त्वायां वेट्। ग्रसित्वा। ग्रस्त्वा। यस्य विभाषेति नेट्। ग्रस्तः। वेहृ जेहृ। आद्य इति वेहतेरतिप्रत्यये वेहत्शब्दो निपातितः। पोटायुवतीति सूत्रे इति भावः। वेहत् गर्भोपघातिनी। अंसइति। बाहुशब्दस्य भुजपर्यायस्य सुब्धस्वांतध्वांतेति निपातितत्वाद्ढशब्दस्य च निर्विवादत्वादिति भावः। दंत्योष्ठ्यादीइति। उभावपीत्यनुषज्यते अनुदात्तेत्त्वकृतमात्मनेपदमनित्यं। तेन ववाहरक्तं पुरुषास्ततो जाताः सहस्रशः इति सि

कासांचक्रे॥२२॥भासृ दीप्तौ। बभासे॥२३॥णासृ रासृ शब्दे। नासते। प्रणासते॥२५॥णस कौटिल्ये। नसते॥२६॥भ्यस भये। भ्यसते। बभ्यसे॥२७॥आङः शासि इच्छायाम्। आशंसते। आशशंसे॥२८॥ग्रसु ग्लसु अदने। जग्रसे। जग्लसे॥३०॥ईह चेष्टायाम्। ईहांचक्रे॥३१॥वहि महि वृद्धौ। वंहते। ववंहे। मंहते॥३३॥अहि गतौ। अंहते। आनंहे॥३४॥गर्ह गल्ह कुत्सायाम्। जगर्हे। जगल्हे॥ ३६॥वर्ह वल्ह प्राधान्ये। ओष्ठ्यादी॥३८॥वर्ह वल्ह परिभाषणहिंसाच्छादनेषु। दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः॥४०॥प्लिह गतौ। पिप्लिहे॥४१॥वेहृ जेहृ वाहृ प्रयत्ने। आद्यो दन्त्योष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके। दन्त्योष्ठ्यादी इत्यपरे। जेहतिर्गत्यर्थोऽपि ववाहे॥४४॥द्राहृ निद्राक्षये। निक्षेपे इत्येके॥४५॥काशृ दीप्तौ। चकाशे॥४६॥ऊह वितर्के। ऊहांचक्रे॥४७॥गाहू विलोडने। गाहते। जगाहे। जगाहिषे। जघाक्षे। जगाहिढ्वे। जगाहिध्वे। जगाढ्वे। गाहिता। ढो ढे लोपः।८।३।१३। ढस्य लोपः स्याड्ढे परे। गाहित्वा। गाढा। गाहिष्यते। घाक्ष्यते। गाहिषीष्ट। घाक्षीष्ट। अगाहिष्ट। अगाढ। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाढ्ढ्वम्। अघाक्षि॥४८॥गृहू ग्रहणे। गर्हते॥ ९ ॥ढ्वं। न चात्रार्थासंगतिः धातूनामनेकार्थत्वात्स्त्रवणार्थकत्वे बाधकाभावादित्याहुः। ऊह। कथं तर्हि अनुक्रमप्यूहतिपंडितो जन इति। अत्राहुः। अनुदात्तेत्त्वलक्षणस्य तङो नित्यत्वान्न दोष इति। गाहू। ऊदित्वादिड्वा। इडभावे ढत्वं एकाच इति भष्भावः। षढोः कः सीति कः। कास्य रस्य षत्वं। जघाक्षे। विभाषेट इति वा मूर्द्धन्यः। जगाहिढ्वे। जगाहिध्वे। इडभावे तु भष्भावः। ढो ढे लोपः। जघाढ्वे। ढे किं। ऊढः। इह पूर्वं ढलोपो मा भूत्। कृते तु ढग्रहणे ष्टुनाष्टुरित्यस्य आश्रयात् सिद्धत्वं भवतीति सिद्धमिष्टमित्याहुः। अगाढेति। झलो झलीति सलोपः। ढत्वधत्वष्टुत्वढलोपाः। सिचो लोपात्पूर्वं भष्भावस्तु न असिद्धत्वात्। भष्भाव

स्य सिज्लोपानंतरमपि ढकारपरत्वाभावात्॥

सि·कौ· दी·त· ति·उ ४०

उवोषेति। पुगंतेति गुणः। अभ्यासस्यासवर्णे इति उवङ्। घसुसंघर्षे। ल्युटि घर्षणं। घस्लृ अदने। अयमिति। यद्ययं सार्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत। ततश्च लिट्यन्यतरस्यामिति विकल्पेनादेशविधानं व्यर्थं भवेदिति भावः। अत्रैव पाठ इति। भ्वादौ परस्मैपदे पाठ इत्यर्थः। क्मरचीति। सृघस्यदः क्मरचीति सूत्रे। सः स्याऽर्द्धे। सः सीतिच्छेदः। सादेः किं घस्मरः। आर्द्धधातुके इति किं। वस्से। आशिषीति। आशीर्लिङीत्यर्थः। एतच्च कर्तरि प्रयोगमभिप्रेत्योक्तं। कर्मणि तु यग्विषये प्रयोगो नेति बोध्यं। पुषादिद्युता। पुष

उवोष। ऊषतुः। उवोषिथ॥४५॥ जिषु विषु मिषु सेचने। जिजेष। क्रादिनियमादिट्। विवेषिथ। विविषिव। वेष्टा। वेक्ष्यति। अविक्षत्॥४८॥ पुष पुष्टौ। पोषति। पोषिता। पोषिष्यति। अपोषीत्। अनिट्सु पुष्येति श्यना निर्देशादयं सेट्। अतो न क्सः। अङ्विधौ दैवादिकस्य ग्रहणान्नाङ्॥४९॥ श्रिषु श्लिषु प्रुषु प्लुषु दाहे। श्रेषति। शिश्रेष। श्रेषिता। श्लेषति। शिश्लेष। श्लेषिता। अयमपि सेट्। अनिट्सु दैवादिकस्यैव ग्रहणमिति कैयटादयः। यत्त्वनिट्कारिकासु न्यासे द्वयोर्ग्रहणमित्युक्तम्। तत्त्वोक्तिविरोधाद्ग्रन्थान्तरविरोधाच्चोपेक्ष्यम्। पुप्रोष। पुप्लोष॥५३॥ पृषु वृषु मृषु सेचने। मृषु सहने च। इतरौ हिंसासंक्लेशनयोश्च। पर्षति। पपर्ष। पृष्यात्॥५६॥ घृषु संघर्षे॥५७॥ हृषु अलीके॥५८॥ तुस ह्रस ह्लस रस शब्दे। तुतोस। जह्रास। जह्लास। ररास॥६२॥ लस श्लेषणक्रीडनयोः॥६३॥ घस्लृ अदने। अयमसार्वत्रिकः। लिट्यन्यतरस्यामित्यदेर्घस्लादेशविधानात्। ततश्च यत्र लिङ्गं वचनं चास्ति तत्रैवास्य प्रयोगः। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। ऌदित्करणमङि। अनिट्कारिकासु पाठो वलाद्यार्द्धधातुके। क्मरचि तु विशिष्योपादानं। घसति। घस्ता। सः स्यार्द्धधातुके।७।४।४९। सस्य तः स्यात्सादावार्द्धधातुके। घत्स्यति। घसतु। अघसत्। घसेत्। लिङ्गाद्यभावादाशिष्यस्याप्रयोगः। पुषादिद्युताद्यॢदितः परस्मैपदेषु।३।१।५५॥ १ धातुः भ्वादौ दिवादौ क्र्यादौ चुरादौ पठ्यते। यदि तु पु

षपुष्टाविति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकं भवेत्। पुषेरुत्तरत्र द्युतादीनां पाठात्। नापि क्र्याद्यन्तर्गणः। तत्र हि पुषधातोरग्रे मुषस्तेये खच भूतप्रादुर्भावे हेठ च ग्रह उपादाने इति चत्वार एव पठ्यन्ते। यदि तु त एव जिघृक्षिताः स्युस्तर्हि लाघवाल्लृदित एव क्रियेरन्। ग्रहेः स्वरितत्वेपि लृकारेणैव तन्निवार्हादनेकानुबन्धासंगगौरवशंकाया अपि अभावात्। नापि चुरादिः। णिचा व्यवधानेन ततो ऽनन्तरस्य च्लेरसंभवात्। अतः परिशेषात् दिवादय एव गृह्यंत इत्याह॥

रामः ४०

अंगासिप्रप्रत्ययोत्रविशेष्यः। तङीतितुकेचांचित्प्रसेपत्लस्य काशिकादावनुक्तत्वादित्याहुः। अन्येतुलुग्वाडु
अगाढ। अनिटः किं। ओदिश। क्स। स्याचि। अजादाविति। अंगासिप्रप्रत्ययोत्रविशेष्यः। तङीतितुकेचांचित्प्रसेपत्लस्य काशिकादावनुक्तत्वादित्याहुः। अन्येतुलुग्वाडु
हेत्यत्र आत्मनेपदइत्यपकर्षणात्तङीतिलभ्यते। तेनदशेक्सइतिवार्तिकोक्तक्सप्रत्ययस्य लोपोनभवति। सदक्षाः। अन्यादक्षाइत्यत्रेत्याहुः। घुषिकांतिकरणे। घु
ङिः। अघुषिष्ट। अघुंषिषातां। अदुपधपाठेतु। अघाषीत्। अघषीत्। अतक्षीदिति। नेटीतिवृद्धिनिषेधः। इडभावेतु अताक्षीत्। प्रणिसतीति। उपसर्गादसमासेपीतिनि
संणत्वं। वानिंसनिक्षनिंदामितितुकृद्विषयेण्वुलत्चौ। प्रणिक्षकः। प्रनिक्षकः। प्रणिक्षिता। प्रनिक्षिता। अवज्ञेत्यादि। सूर्क्षणमादरस्ततोऽन्यदसूर्क्षणमित्यमरग्रंथा

द्राक्षिध्राक्षिध्वाक्षिघोरवासितेच॥२१॥चूषपाने। चुचूष॥२२॥तूषतुष्टौ॥२३॥पूषवृद्धौ॥२४॥मूषस्तेये॥२५॥लूषरूषभूषायाम्॥२७॥शूषप्रसवे। तालव्योष्मादिः॥२८॥यूषहिंसायाम्। जूषच॥३०॥भूषअलङ्कारे। भूषति॥३१॥ऊषरुजायाम्। ऊषाञ्चकार॥३२॥ईषउञ्छे३३
कषखषशिषजषझषशषवषमषरुषरिषहिंसार्थाः। तृतीयषष्ठौतालव्योष्मादी। सप्तमोदन्त्योष्ट्यादिः। चकाष। चखाष। शिशेष। शिशेषिथ। शे
ष्टा। क्सः। अशिक्षत्। अशेक्ष्यत्। जेषतुः। जझषतुः। शेषतुः। ववषतुः। मेषतुः। तीषसहलुभरुषरिषः। ७।२।४८॥इच्छत्यादेः परस्यतादेरार्द्धधातुक
स्येड्वास्यात्। रोषिता। रोष्टा। रोषिष्यते। रेषिता। रेष्टा। रेषिष्यति४३भषभर्त्सने। इह भर्त्सनंश्वरवः। भषति। बभाष॥४४॥उषदाहे। ओषति। उषविदजा
गृभ्योऽन्यतरस्याम्। ३।१।३८॥एभ्योलिट्याम्वास्यात्। ओषाञ्चकार॥ ९ थेः। यदितुसूर्क्षणमनादरइतिउच्येततर्हिअसूर्क्षणमवज्ञापर्यायोनस्यादितिभा
वः। काक्षि। कांसाइक्ता॥ ॐ ॥द्राक्षिध्राक्षिध्वाक्षि। घोरवासितंघोरशब्दः। वासशब्दे। ध्वांक्षतीतिध्वांक्षः काकः। द्राक्षिधातोर्गुरोश्चहलइतिअप्रत्ययेद्राक्षा। पवादि
गणेनिपातनान्नलोपः। द्राक्षासामान्। इहमतोर्वत्वंतुनभवति। अयवादिभ्यइत्युक्तेः। तूषतुष्टौ। दिवादौतुह्रस्वोपधः। मूषस्तेये। संज्ञायांकुनिमूषकः। क्र्यादौतुह्रस्वो
पधोयं। भूषअलंकारे। अयंचुरादावपि। ईषउञ्छे। गुरोश्चहलइत्यप्रत्यये। ईषालांगलदंडः। कषखष। शिषेस्त्ययमप्यनिट्कः। नतुरौधादिकएव। संकोचेमानाभावा
दित्यभिप्रेत्योदाहरति। शेष्टा। अशिक्षदित्यादि। तीषसह। इषइच्छायां। षहमर्षणे। लुभगार्ध्ये। रुषरिषहिंसायां। एषिता। एष्टा। सहिता। सोढा। लोभिता। लोब्धा॥

चकारात्समाधौ। शश प्लुतगतौ। नशसददेति प्रतिषेधसूत्रे सांतस्य ग्रहणमित्यभिप्रेत्याचष्टे। शेशतुरिति। प्राचातु शशतुरित्युक्तं तदयुक्तमिति भावः। अचहीदिति। ह्यंते
चकारात्समाधौ। शश प्लुतगतौ। नशसददेति प्रतिषेधसूत्रे सांतस्य ग्रहणमित्यभिप्रेत्याचष्टे। ... नेकुंतीति। व्याख्यानमेवात्रावलंबनं। माभवानुहदिति। नमाङ्योगे इत्याडभावः।
तिनवृद्धिः। रह त्यागे। अयं कथादावपि। ज्ञपमिच्चेति मित्त्वकरणेप्ययमेकीयमतेन पठितः। नेकुंतीति। व्याख्यानमेवात्रावलंबनं। माभवानुहदिति। नमाङ्योगे इत्याडभावः।
दूरितो वेत्यङ्। अथद्युतादिः। द्युत दीप्तौ॥ ❁ ॥द्युतिः स्वाप्योः। स्वापीति णिजंतग्रहणं। दिद्युते इति। संप्रसारणे कृते संप्रसारणाच्चेति पूर्वरूपं। स्वापेरुदाहरणंतु सुषाप

द्युतिस्वाप्योः सम्प्रसारणम्॥ ७।४।६७॥ अनयोरभ्यासस्य संप्रसारणं स्यात्। दिद्युते। दिद्युताते। द्योतिता। द्युद्भ्यो लुङि॥ १।३।९१॥ द्युतादिभ्यो लु
ङः परस्मैपदं वा स्यात्। पुषादीति सूत्रेण परस्मैपदे ऽङ्। अद्युतत्। अद्योतिष्ट॥ १॥ श्विता वर्णे। श्वेतते। शिश्विते। अश्वितत्। अश्वेतिष्ट॥ २॥ ञिमिदा
स्नेहने। मेदते। मिदेर्गुणः॥ ७।३।८२॥ मिदेरिको गुणः स्यादित्संज्ञक शकारादौ। एश आदिशित्वाभावान्नानेन गुणः। मिमिदे। अमिदत्। अमेदिष्ट॥ ३॥
ञिष्विदा स्नेहनमोचनयोः। मोहनयोरित्येके। स्वेदते। सिष्विदे। अस्विदत्। अस्वेदिष्ट॥ ४॥ ञिक्ष्विदा चेत्येके। अक्ष्विदत्। अक्ष्वेदिष्ट ५ रुच दीप्तावभिप्रीतौ
च। रोचते सूर्यः। हरये रोचते भक्तिः। अरुचत्। अरोचिष्ट॥ ६॥ घुट परिवर्त्तने। घोटते। जुघुटे। अघुटत् अघोटिष्ट॥ ७॥ रुट लुट लुठ प्रतिघाते। अरुट
त्। अरोटिष्ट॥ १०॥ शुभ दीप्तौ॥ ११॥ क्षुभ सञ्चलने॥ १२॥ णभ तुभ हिंसायां। आद्यो ऽभावेपि। नभन्तामन्यके समे। माभूवन्नन्यके सर्वे इति निरुक्तम्।
अनभत्। अनभिष्ट। अतुभत्। अतोभिष्ट। इमौ दिवादौ क्र्यादौ च॥ १४॥ स्रंसु ध्वंसु भ्रंसु अवस्रंसने। ध्वंसु गतौ च। अङि नलोपः। अस्रसत्। अस्रंसिष्ट।
नास्य सल्करिणां ग्रैवमिति रघुकाव्ये॥ १७॥ भ्रंशु इत्यपि केचित्पेठुः। अत्र तृतीय एव तालव्यान्त इत्यन्ये। भ्रशु भ्रंशु अधः पतन इति दिवादौ। स्रम्भु
विश्वासे। अस्रभत् अस्रम्भिष्ट। दन्त्यादिरयम्। तालव्यादिस्तु प्रमादे गतः॥ २०॥ वृतु वर्त्तने। वर्त्तते। ववृते ॥ ९ पिषति। इह स्वापेर्णिजंतस्याभ्यासनिमित्त

प्रत्ययेनानंतर्ये सति संप्रसारणमिष्यते। तेनेह न। स्वापेर्ण्वुल्। स्वापकः। तमिच्छति स्वापकीयति। ततः सन्। सिस्वापकीयिषति। द्युद्भ्यो लुङि। बहुवचननिर्देशात् शेंडे रित्यत्रे
वृतदादिग्रहणं। तदाह। द्युतादिभ्य इति। द्युतादयो घट चेष्टायामित्यवधिकाः। ङः सीत्यत्रेव लुङीति सप्तम्याः षष्ठ्यर्थतेत्यभिप्रेत्याह। लुङः परस्मैपदमिति। ञिमिदा। मिदे
र्गुणः। श्विदुक्रमु चमामित्यतः शितीत्यनुवर्तते तत्र शप्श्यासौ इत्यचेति कर्मधारयात्सप्तमी। अंगात्सिप्रत्ययस्तु विशेष्यः। तेन यस्मिन्विधिरिति तदादिविधिः प्रवर्ततेत

श्यन्विकरणप्रुषादेरिति।केचित्तुदिवाद्यंतर्गणएवपुषादिर्गृह्यतेव्याख्यानादित्याहुः।चुरादीनांसर्वेषांणिज्विकल्पइतिपक्षेचौरादिकपुषादेरपिपरःच्लिःसंभवतीति तेषामाशयः।नंदिग्रहिपचादिभ्यइतिवत्पुषद्युताद्यृदितइतिसूत्रयितुमुचितं।ननुपुषाद्योद्युताद्यश्च्लृदितएवकुतोनकृताःइतिचेदत्राहुः।निरनुबंधेपुसानुबंधे षुचप्रत्येकंलृकारपाठेविपरीतगौरवंस्यात्।नचअनुबंधांतरस्ययत्प्रयोजनमात्मनेपदंतत्लृदित्करणेपिसिध्यतीतिअनेकानुबंधासंगगौरवदोषोनास्तीत्यपि श्या

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्चपरस्यच्लेरङ्स्यात्परस्मैपदेषु।अघसत्॥६४॥जर्जचर्चझर्झपरिभाषणहिंसातर्जनेषु॥६७॥पिसृपेसृगतौ। पिपिसतुः।पिपेसतुः॥६९॥हसेहसने।एदित्वान्नवृद्धिः।अहसीत्॥७०॥णिशसमाधौ।तालव्योष्मान्तः।प्रणेशति॥७१॥मिशमशशब्देरोषकृते च।तालव्योष्मान्तौ॥७३॥शवगतौ॥दन्त्योष्म्यान्तः।तालव्योष्मादिः।शवति।अशावीत्।अशवीत्॥७४॥शशप्लुतगतौ।तालव्योष्माद्यन्तः।शशाश ।शेशतुः।शेशुः।शेशिथ॥७५॥शसुहिंसायाम्।दन्त्योष्मान्तः।नशसददेत्येत्वन्न शशसतुः।शशसुः।शशसिथ॥७६॥शंसुस्तुतौअयन्दुर्गतावपी तिदुर्गः।नृशंसोघातुकःक्रूरइत्यमरः।शशंस।आशिषिनलोपः।शस्यात्॥७७॥चहपरिकल्कने।कल्कनंशाठ्यं।अचहीत्॥७८॥महपूजायाम् ।अमहीत्॥७९॥रहत्यागे॥८०॥रहिगतौ।रंहति।रंह्यात्॥८१॥दहदृहिवृहवृहिरवृद्धौ।दर्हति।ददर्ह।ददृहतुः।दृंहति।वर्हति।वृंहति।व हिशब्देच।वृंहितङ्करिगर्ज्जितम्॥८१॥वृहिरइत्येके।अवृहत्।अवर्हीत्॥८६॥तुहिरदुहिरउहिरअर्दने।तोहति।तुतोह।अतुहत्।अ तोहीत्।दोहति।अदुहत्।अदोहीत्।अनिट्कारिकास्वस्यदुहेर्ग्रहणंनेच्छन्ति।ओहति।उवोह।ऊहतुः।ओहिता।माभवानुहत्।औहीत् ॥८९॥अर्हपूजायाम्।आनर्ह॥९०॥अथकृपूपर्यन्ताअनुदात्तेतः।द्युतदीप्तौ।द्योतते ॥ ९कं।आदितामीदितामृदितांचतेषुसत्वात्लृकारे णतत्तत्कार्याणामनिर्वाहादनेकानुबंधासंगगौरवस्यदुर्निवारत्वादिति॥जर्जचर्च।एषांपरिभाषणादिभिःसहयथासंख्यंनास्तिव्याख्यानादित्याहुः।परिभाषणंस निंदोपालंभः।त्रयाणामपिचवर्गीयांतेषुपाठउचितोनत्विहोष्मांतेषु।णिशसमाधौ।समाधिरंतःकरणनिरोधः।प्रणेशतीति।उपसर्गादसमासेपीतिणत्वं।रोषकृते

स्यंतेति। अत्रानिदितामितिनलोपोनभवति। सिज्लोपस्यासिद्धत्वेनात्रपधात्वात्॥ ःः॥अनुविपर्यभिनिभ्यः एभ्यइति। पंचभ्यइत्यर्थः। षत्वंभवत्येवेति। प्राण्यप्राणिकर्तृकस्यंतेति। अत्रानिदितामितिनलोपोनभवति।
स्याप्यप्राणिकर्तृकत्वानपायादितिभावः। असमर्थसमासवाक्यभेदापतिदोषाभ्यांप्रसज्यप्रतिषेधोनसूत्रेअभिप्रेतइत्याशयेनाह। प्राणिषुनेत्युक्ताविति। कृपूसामर्थ्ये

अनुविपर्य्यभिनिभ्यःस्यन्दतेरप्राणिषु। ८।३।७२॥ एभ्यःपरस्याप्राणिकर्तृकस्यस्यन्दतेःसस्यषोवास्यात्। अनुष्यन्दते। अनुस्यन्दतेवाजलम्। अ
प्राणिषुकिम्। अनुस्यन्दतेहस्ती। अप्राणिष्विति पर्य्युदासान्मत्स्योदके अनुष्यन्दतेइत्यत्रापिपक्षेषत्वंभवत्येव। प्राणिषुनेत्युक्तौतुनस्यात्॥२४
कृपूसामर्थ्ये। कृपोरोलः। ८।२।१८॥ कृपउइतिच्छेदः। कृपेतिलुप्तषष्ठीकम्पदंतच्चावर्त्तते॥ कृपोयोरेफस्तस्यलःस्यात्। कृपेर्ऋकारस्यावय
वोयोरःरेफसदृशस्तस्यचलकारसदृषःस्यात्। कल्पते। चकॢपे। चकॢपिषे। चकॢप्से। इत्यादिस्यन्दिवत्। लुटिचक्लृपः। १।३।९३॥ लुटिस्य
सनोश्चकृपेःपरस्मैपदम्वास्यात्। तासिचक्लृपः। ७।२।६०॥ कृपेःपरस्यतासेःसकारादेरार्द्धधातुकस्यचेण्नस्यात्। तङानयोरभावे। कल्प्ता
सि। कल्प्तास्थः। कल्पितासे। कल्प्तासे। कल्प्स्यति। कल्पिष्यते। कल्प्स्यते। कल्पिषीष्ट। क्लृप्सीष्ट। अक्लृपत्। अकल्पिष्ट। अक्लृप्त। अकल्प्स्य
त्। अकल्पिष्यत। अकल्प्स्यत। वृत्। वृत्तः सम्पूर्णो द्युतादिर्वृतादिश्चेत्यर्थः॥२५॥ अथत्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च। घट चेष्टायाम्।
घटते। जघटे। घटादयोमितइतिवक्ष्यमाणेनमित्संज्ञा। तत्फलन्तुणौ मितांह्रस्वः इतिचिण्णमुलोर्दीर्घोऽन्यतरस्यामितिचवक्ष्यते। घटयति।
विघटयति। कथन्तर्हिकमलवनोद्घाटनंकुर्वतेये। प्रविघाटयितासमुत्पतन्हरिदश्वःकमलाकरानिवेत्यादि। शृणुघटसङ्घातइतिचौरादि
कस्येदम्। नचतस्यैवार्थविशेषेमित्वार्थमनुवादोऽयमितिवाच्यम्। नान्येमितोऽहेताविति निषेधात्। अहेतौस्वार्थेणिचिज्ञपादिपञ्चकव्य
तिरिक्ताश्चुरादयोमितोनेत्यर्थः॥१॥ व्यथभयसञ्चलनयोः। व्यथते॥ ९ भाष्यकृतांव्याख्यामाह। कृपउइति। कृपोरोलइतिअर्वाचीनपाठ
स्तुनादर्तव्यइतिध्वनयति। कृपेर्ऋकारस्येत्यादिना। वर्णैकदेशास्सवर्णग्रहणेनाग्रहणादाह। रेफसदृशइति। एवंचात्रकृपेस्स्याद्वृत्तिरवश्यंस्वीकर्तव्या। तथाच

दाह। इत्संज्ञकशकारादाविति। आदिशित्वाभावादिति। मेद्यतिमेद्यत इत्यादौ दिवादिभ्य इति श्यन्। आदिशित्वात् गुणो भवत्येव। मिमिदे इति। शिनीति वक्ष्वीहो लिहस्यादेव गुणः तयापपेतस्येत्यादौ पिवादयोपि स्युरिति भावः। ञिष्विदा। अनिट्कारिकायां स्विद्यतिरिति श्यना निर्देशादयं सेट्। स्वेदिता स्वेदिष्यते। ञिक्ष्विदा चेति पूर्वोक्तयोरेवार्थयोरयमिति बोध्यं। हरयेइति। रुच्यर्थानामिति संप्रदानसंज्ञायां चतुर्थी। घुट परिवर्तने। परिवर्तनमितस्ततो भ्रमणं। जुघुटे इति। असंयोगादिति कित्वाद्गुणाभावः। क्षुभ संचलनं प्रकृतिविपर्यासो मंथनं च। क्षोभते। क्षुभ्यतीति दिवादौ। क्षुभ्नातीति क्र्यादौ। नाभ्रसदिति। नाभ्रंसदित्यपपाठ एव। न चेदं लङो रूपं तत्र परस्मैपदासंभवादिति भावः॥ ॥ वृद्भ्यः। वृतादयः पंच॥ न वृद्भ्यः। गणकार्यत्वादुभयोर्यङ्लुकप्रवृत्तिः। वर्वर्तिष्यति। वर्वर्तिषति। चतुर्ग्रहणफलं तु स्फुटीभविष्यति। सेसिचीति सूत्रात्से इ

वृद्भ्यः स्यसनोः। १।३।९२॥ वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च। न वृद्भ्यश्चतुर्भ्यः। ७।२।५९॥ एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे। वर्त्स्यति। वर्तिष्यते। अवृतत्। अवर्तिष्ट। अवर्त्स्यत्। अवर्तिष्यत्॥ २१॥ वृधु वृद्धौ॥ २२॥ शृधु शब्दकुत्सायाम्॥ वृधोवृत्तिवत् २३ स्यन्दू प्रस्रवणे। स्यन्दते। सस्यन्दे। सस्यन्दिषे। सस्यंत्से। सस्यन्दिध्वे। सस्यंध्वे। स्यन्दिता। स्यन्त्ता। वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदित्त्वलक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः। स्यंत्स्यति। स्यन्दिष्यते। स्यंत्स्यते। स्यन्दिषीष्ट। स्यंत्सीष्ट। द्युद्भ्यो लुङीति परस्मैपदपक्षे अङ्। नलोपः। अस्यदत्। अस्यन्दिष्ट। अस्यन्त्त। अस्यंत्सातां। अस्यंत्स्यत्। अस्यन्दिष्यत। अस्यंत्स्यत॥ ९ स्यनुवर्तते तदाह। सकारादेरिति। इण्न स्यादिति। स्यंदेरूदित्त्वाद्विकल्पे प्राप्ते इतरेषां नित्यमिटि प्राप्ते निषेधोयं। तङानयोरिति। जिगमिषिता। जिगमिषितारौ। इत्यादौ तु चिपरतः सनइडागमसिद्धये गमेरिट् परस्मैपदेषिति सूत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयतीत्यभ्युपगम्यते। तच्चात्रापि तथैवानुवर्तते। अर्थाधिकाराश्रयणात्तेन परस्मैपदाभावेपि न। चिविवृत्सिता। विवृत्सितारौ। विवृत्सातेहे रिति हेर्लुकि त्वं विवृत्से यत्र च सनइण्निषेधः सिध्यतीति भावः। अत्र भाष्यवार्तिकयोर्वृतादीनामात्मनेपदेन समानपदस्थस्येट्वचनादन्यत्र निषेध इति स्थितं। तेन विवर्तिषते विवर्धिषते इत्यादाविड् भवति। विवृत्सितेवाचरति विवृत्सित्रीयते इत्यत्र त्वात्मनेपदोत्पत्तेः पूर्वं तत्समानपदस्थत्वाभावादन्तरंगोऽपि निषेधः प्रवर्तते। स च पश्चात्तङि कृतेपि न निवर्तते। चतुर्ग्रहणसामर्थ्यादिति। अत्र व्याचख्युः। पंचभ्य इति वक्तुमुचितं तास्ति चेत्येव सूत्रं कर्तव्यं न च वृतादिषु तिव्याप्तिस्तङानयोः सत्वादिति। अ

असंत्स्यत ६।

अक्रांदि।क्रंदंक्रंदं।क्रांदंक्रांदं।ञित्वरा आदित्वमिहन्यर्थं।ह्रस्वोच्चारणेनापिआत्मनेपदसिद्धेः।नचनिष्ठायामादितश्चेतीट्प्रतिषेधार्थमितिशंक्यं।रुष्यमत्वरेतिनिष्ठा
ज्वररोगे।ज्वरति।जज्वार १ गडसेचने।गडति।जगाड॥२॥हेडवेष्टने।हेड्ऋ अनादरइत्यात्मनेपदिषुगतः।सएवोत्सृष्टानुबन्धोनूद्यते।अर्थ
विशेषेमित्वार्थम्।परस्मैपदिभ्योज्वरादिभ्यः प्रागेवानुवादेकर्तव्येतन्मध्येनुवादसामर्थ्यात्परस्मैपदम्।हेडति।जिहेड।हिडयति।अहिडि।अहीडि।
हीडि।अनादरेतुहेडयति॥३॥वटभटपरिभाषणे।वटवेष्टने भटभृतावितिपठितयोःपरिभाषणेमित्वार्थोनुवादः।५।नटनृत्तौ।इत्थमेवपूर्वमपि
पठितम्।तत्रायंविवेकः।पूर्वपठितस्यनाट्यमर्थः।यत्कारिषुनटव्यपदेशः।वाक्यार्थाभिनयोनाट्यं घटादौतुनृत्यंनृत्तंचार्थः।यत्कारिषुनर्तकव्यपदे
शः।पदार्थाभिनयोनृत्यम्।गात्रविक्षेपमात्रंनृत्तम्।केचित्तुघटादौनटनतावितिपठन्ति।गतावित्यन्ये।णोपदेशपर्युदासवाक्येभाष्यकृतानाटीतिदी
र्घपाठात्घटादिर्णोपदेशएव॥६॥ष्टकप्रतिघाते।स्तकति।७।चकतृप्तौ।तृप्तिप्रतिघातयोःपूर्वपठितस्यतृप्तिमात्रेमित्वार्थोनुवादः।आत्मनेप
दिषुपठितस्यपरस्मैपदिष्वनुवादात्परस्मैपदम्॥८॥कखेहसने।एदित्वान्नवृद्धिः।अकखीत्॥९॥रगेशङ्कायां॥१०॥लगेसङ्गे॥११॥हगेह्लगेषगे
ष्टगेसंवरणे।कगेनोच्यते।अस्यायमर्थइतिविशिष्यनोच्यते।क्रियासामान्यार्थत्वात्।अनेकार्थत्वादित्यन्ये॥१५॥अकअगकुटिलायांगतौ॥१७॥कण
रणगतौ।चकाणरराण॥१९॥चणशणश्रणदानेच।शणगतावित्यन्ये॥२२॥श्रथक्नथक्रथक्लथहिंसार्थाः।जासिनिप्रहणेतिसूत्रेक्राथेतिमित्वेपि
वृद्धिर्निपात्यते।क्राथयति।मित्वन्तुनिपातनात्परत्वाच्चिण्णमुलोरितिदीर्घचरितार्थम्।अक्रथि।अक्राथि।क्रथंक्रथं।क्राथंक्राथं॥२६॥वनचहिंसा
यामितिशेषः२७वनुचनोच्यते।वनुइत्यपूर्वएवायम्धातुःनतुतानादिकस्यानुवादः।उदित्करणसामर्थ्यात्।तेनक्रियासामान्येवनतीत्यादि।प्र
वनयति।अनुपसृष्टस्यतुमित्वविकल्पोवक्ष्यते॥२८॥ज्वलदीप्तौ॥ ९ यामिदोविकल्पितत्वात्।तूर्णः।त्वरितः॥ ॥ज्वररोगे।णौ।ज्वरयति।
अज्वरि।अज्वारि।ज्वरंज्वरं।ज्वारंज्वारं।गडसेचने।णौ।गडयति।अगडि।अगाडि।गडंगडं।गाडंगाडं।एवमन्यत्रापूह्यं।हेडवेष्टने।उत्सृष्टानुबंधइति।तेनवेष्टने

लुटिचक्लृपद्त्यादिसौत्रनिर्देशोप्युपपद्यतइतिभावः। तासिचक्लृपः। चकारात्साद्यार्द्धधातुकंगृह्यते। क्लृप्सीष्टेतिलिङ्सिचावात्मनेपदेष्विति कित्वान्नगुणः। वृदिति। वृतुवर्तनेइत्यस्मात्क्विप्। ञित्वरासंभ्रमइत्यस्यानंतरं घटादयःषितइत्युक्तंत्वरस्यंतास्त्रयोदशैवषितोनतुफणांताःसर्वेपीतिसिद्धं। तथापिस्पष्टप्रतिपत्त्यर्थमाह। षितश्चेति। प्रयोजनंतुषिद्भिदादिभ्यइत्यङ्टाप्। घटा। व्यथेत्यादिरूपसिद्धिः। घटचेष्टायां। येधातवोऽन्यत्राऽधीतास्तेषामिहपाठोऽर्थनियमार्थः। येत्विहैवपठ्यन्ते तेषामुपसर्गादिनाऽर्थांतरपरत्वेपिमित्वमस्त्येवेतिधातुवृत्त्यादिषुस्थितंतदेवध्वनयन्नुदाहरति। विघटयतीति॥ ៖ ॥व्यथोलिटि। हलादिःशेषापवादइति। हलादिशेषप्रक्रमणादितिभावः। एवंचोत्सर्गसदेशश्चापवादइतिपरस्यैवसंप्रसारण``भवतिनपूर्वस्येतिकैय्यटाद्युक्त्यानसंप्रसारणइतिनिषेधोऽत्रनापेक्षितः। केचित्तु

व्यथोलिटि। ७।४।६८॥ व्यथोऽभ्यासस्यसम्प्रसारणंस्याल्लिटि। हलादिःशेषापवादः। यस्यहलादिःशेषेणनिवृत्तिः विव्यथे॥२॥ प्रथप्रख्याने। पप्रथे॥३॥ प्रसविस्तारे। पप्रसे॥४॥ म्रदमर्दने॥५॥ स्खदस्खदने। स्खदनम्विद्रावणम्॥६॥ क्षजिगतिदानयोः। मित्वसामर्थ्यादनुपधात्वेपिचिण्णमुलोरितिदीर्घविकल्पः। अक्षञ्जि। अक्षाञ्जि। क्षञ्जंक्षञ्जं। क्षाञ्जंक्षाञ्जं॥७॥ दक्षगतिहिंसनयोः। योयंवृद्धिशैघ्र्ययोरनुदात्तेत्सुपठितस्तस्येहार्थविशेषमित्त्वार्थोऽनुवादः॥८॥ क्रपकृपायाङ्गतौ॥९॥ कदिक्रदिक्लदिवैक्लव्ये। वैकल्यइत्येके। त्रयोप्यनिदितइतिनन्दी। इदितइतिस्वामी। कदिक्रदीइदितौ। क्रदक्लदेतिचानिदिताविति मैत्रेयः। कदिक्रदिक्लदीनामाह्वानरोदनयोःपरस्मैपदिषूक्तानाम्पुनरिहपाठोमित्वार्थआत्मनेपदार्थश्च॥१२॥ ञित्वरासंभ्रमे। घटादयःषितः। षित्त्वादङ्। कृत्सुवक्ष्यते॥१३॥ अथफणान्ताःपरस्मैपदिनः॥ ९ हलादिःशेषेणयकारनिवृत्तावपिवकारस्यसत्त्वात्सूत्रमिदंसावकाशमितिअपवादत्वंनसंभवतीतिमत्वासंप्रसारणंतदाश्रयंचकार्यंबलवदितिवचनाद्धलादिःशेषंबाधित्वापरस्यसंप्रसारणेपूर्वस्यनिषेधःसंप्रसारणंतदाश्रयंचेतिवचनाभावेतुव्यथोलिटीतिसंप्रसारणस्यधातुविशेषप्रत्ययविशेषाश्रयत्वेनइग्यणइतिसंज्ञाविशेषरूपाश्रयत्वेनच त्वपेक्षस्यबहिरंगत्वात्संप्रसारणंबाधित्वाहलादिःशेषेजातेवकारस्यसंप्रसारणंस्यादित्याहुः। यस्येति। संप्रसारणस्याभ्यासांतर्गतयकारनिवृत्तेरपवादत्वंनतुयकारनिवृत्तेरितिभावः। लिटीतिकिं। विव्यथिषते॥ इहसन्यतइति इत्वं। वाव्यथ्यते। वाव्यथीति। क्रपकृपायांगतौ। चकाराभावेपीहार्थद्वयमित्येवबोध्यमित्याहुः। कदिक्रदि।

सि॰कौ॰
टि॰त॰
ति॰उ॰
४४

तस्मात्पृथक्ग्रहणं व्यर्थं सत् ज्ञापकमेवेति। लक्षणप्रतिपदोक्तपरिभाषा तु न्यायसिद्धा। लाक्षणिकं हि विलंबितोपस्थितिकं प्रतिपदोक्तं तु शीघ्रोपस्थितिकमिति। परिभाषाभ्यामिति। यद्यपि उक्तपरिभाषयोः परस्परविरोधेनाप्रवृत्तावपि इष्टं सिध्यति तथाप्यविशेषादुभयोः प्रवृत्तिरप्यत्रयुक्तैवेति भावः॥ ॥ मारणतोषण। निशामन मित्यस्य शम आलोचन इत्यस्मान्निष्पन्नत्वादाह। चाक्षुषं ज्ञानमिति। एष्वर्थेष्विति। पशुं संज्ञपयति। मारयतीत्यर्थः। विष्णुं विज्ञपयति। संतोषयतीत्यर्थः। संज्ञपयति रूपं माधवमते दर्शयतीत्यर्थः। मत्तान्तरे तु बोधयतीत्यर्थः। प्रज्ञपयति शरं। तीक्ष्णीकरोतीत्यर्थः। स्यादेतत्। निशामनं ज्ञापनमात्रमिति वदतां मते। श्लाघह्नुङ्स्थेति सूत्रे शीप्सा

मारणतोषण निशामनेषु ज्ञा निशामनं चाक्षुषं ज्ञानमिति माधवः। ज्ञापनमात्रमित्यन्ये। निशानेष्विति पाठान्तरम्। निशानं तीक्ष्णीकरणम्। एष्वेवार्थेषु जानातिर्मित्। ज्ञपमिच्चेति चुरादौ। ज्ञापनं मारणादिकं च तस्यार्थः। कथं विज्ञापनाभर्तृषु सिद्धिमेतीति तज्ज्ञापयत्याचार्य इति चाश्रूणां माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात्। ज्ञापनमात्रे मित्त्वमिति मते तु ज्ञा नियोग इति चौरादिकस्य धातूनामनेकार्थत्वात्। निशानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः॥ २६॥ कम्पने चलिः। चलकम्पने इति ज्वलादिः। चलयति शाखाम्। कम्पनादन्यत्र तु शीलं चालयति। अन्यथा करोतीत्यर्थः। हरतीत्यर्थ इति स्वामी। सूत्रं चालयति। क्षिपतीत्यर्थः॥ २७॥ छदिरूर्जने। छद अपवारण इति योजादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः। अनेकार्थत्वादूर्जनेऽर्थे वृत्तिः। छदन्तमस्य युङ्क्ते। छदयति। बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। अन्यत्र छादयति। अपवारयन्तमस्य युङ्क्ते इत्यर्थः। स्वार्थे णिचि तु। छादयति। बलीभवति। प्राणी भवति। अपवारयति वेत्यर्थः॥ २८॥ जिह्वोन्मथने लडिः। लड विला

सइति पठितस्य मित्त्वार्थोऽनुवादः। उन्मथनं ज्ञापनम्। जिह्वा

शब्देन षष्ठीतत्पुरुषः॥

मानो बोधयितुमभिप्रेत इति वृत्तिग्रन्थः संगच्छतां नाम माधवमते तु तद्ग्रन्थस्य का गतिरित्यत आह। ज्ञपमिच्चेति। ज्ञापनमिति। एवं च वृत्तिग्रन्थो माधवमतेऽपि संगच्छत इति भावः। मारणादिकं चेति। एतच्च मतान्तराभिप्रायेणोक्तं चुरादिषु तु ज्ञपमिच्च अयं ज्ञाने ज्ञापने च — वर्तत इति वक्ष्यमाणत्वात्। कथमिति। ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वान्न ह्रस्वेन भवितव्यमिति भावः। मित्त्वाभावादिति। एवं च बोधने ज्ञाधातोः ज्ञापयति ज्ञपधातोस्तु ज्ञपयतीति रूपद्वयं माधवमते बोध्यं। छदिरूर्जने। ऊर्जबलप्राणनयोः। अत्र छदिर्मित्। चुरादौ तु गणो योजादिकः॥ स्वार्थे णिजभाव इति आधृषाद्वेति वे

त्वादिति भावः

पीतिनिषेधशंकैव नास्तीति भावः। णोपदेशएवेति। प्रणटति। प्रणाटयति। नाटीत्यस्य तु प्रनाटयति। वृद्धिर्निपात्यत इति। तेन मित्त्वाद्ध्रस्व इति न प्रवर्तत इति भावः। निपातनात्परत्वा
दिति। निपातनविषयीभूत मित्त्वाद्ध्रस्व इत्यस्मात्परत्वान्मित्त्वाद्ध्रस्व इत्येतदेव निपातनं बाधते न तु ततः परं चिण्णमुलोरित्येतदित्यर्थः। वनचा संभक्तावपठितस्य हिंसायां
मित्वार्थोऽनुवादः। वनति। णौ। वनयति। अवानि। वनंवनं। वानंवानं। तानादिकस्येति। वनुयाचन इत्यस्येत्यर्थः। सामर्थ्यादिति। अनुवादे तु तत्र इतो नोदित्वेन क्त्वायामिड्विकल्पस्य नि
ष्ठायामिट्प्रतिषेधस्य च सिद्धेः। उनरुदित्वकरणं व्यर्थं स्यादिति भावः। वनतीत्यादीति। णौ। वनयति। तानादिकस्य तु वनुते। वानयति। मित्त्वविकल्प इति। ग्ला स्ना वनु वमां
चेति गणसूत्रेण। ॥ ः ॥ णप्रत्ययार्थमिति। ज्वलतिकसंतेभ्यो ण इति ज्वलादिभ्यो णप्रत्ययार्थं। दृभये। धातोरनेकार्थत्वाद्भयार्थकत्वाद् दृणाति। दरयति। तन्नेतीति माधव

णप्रत्ययार्थं पठिष्यमाण एवायं मित्वार्थमनूद्यते। प्रज्वलयति॥२०॥ ह्वल ह्मल संचलने प्रह्वलयति। प्रह्मलयति॥२१॥ स्मृ आध्याने। चिन्ताया
म्पठिष्यमाणस्य आध्याने मित्वार्थोऽनुवादः। आध्यानमुत्कण्ठापूर्वकं स्मरणं॥२२॥ दृ भये। दृ विदारणे इति क्र्यादेरयं मित्वार्थोऽनुवादः॥दृणान्त
म्प्रेरयति। दरयति। भयादन्यत्र दारयति। धात्वन्तरमेवेदमिति मते तु दरतीत्यादि। केचित्तु ह्रस्वान्तं पठन्ति। ऋदृत्वर इति सूत्रे च दृ इति दीर्घस्थाने ह्रस्वम्प
ठन्ति। तन्नेति माधवः॥२३॥ नॄ नये। क्र्यादिषु पठिष्यमाणस्यानुवादः। नयादन्यत्र नारयति॥२४॥ श्रा पाके। श्रै इति कृतात्वस्य श्रा इत्यादादिकस्य
च सामान्येनानुकरणं। लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषाभ्याम्श्र
पयति। विक्लेदयतीत्यर्थः। पाकादन्यत्र। श्रापयति। स्वेदयतीत्यर्थः॥२५॥ ॥ ११ स्पायमाशयः। सूत्रे दीर्घान्त एव पाठः सर्वसंमतः। घटादावपि दीर्घान्त ए
व सर्वैः पठ्यते। यद्ययं ह्रस्वान्तो भवेत्तर्हि श्रदृप्रां ह्रस्वो वेति ह्रस्वविकल्पविधायके सूत्रे दृग्रहणमनर्थकं स्यात्। धातुद्वयेन दद्रतुः। दद्ररतुरिति रूपद्वयसिद्धेः। न च विदारणे रूपद्व
यलाभार्थं दृग्रहणमावश्यकमिति वाच्यं। धातूनामनेकार्थत्वात्समीहितसिद्धेरिति। नॄ नये। नृणाति। नरयति। अनरि। अनारि। नरंनरं। नारंनारं। श्रै इति। अयं हि वक्ष्यमाणो भौ
वादिकः। लुग्विकरणोति। अत्र व्याचक्षते। स्वरतिसूतीति सूत्रे सूङ इति पठितेऽपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सदिमां परिभाषां ज्ञापयति। न च लुग्विकर
णावलीयइति वैपरीत्यं किं न स्यादिति शंक्यं। इष्टानुरोधात्। सूङ इति पठिते स्वरति साहचर्यादलुग्विकरणस्यैव ग्रहणं स्यान्न तु यमोरित्यपि न शंक्यं। साहचर्यस्यानित्यत्वात्।

जनीजृष्। जनी प्रादुर्भावे। जृष् वयोहानौ। क्नसु ह्वरणदीप्त्योः। रञ्जो पि दिवादयः। रञ्ज रागे। देवादिको भौवादिकश्च। अमन्ताः। क्रमि गमीत्यादयः। जनयति। जरयति। क्न सयति। रञ्जयति मृगान्। रञ्जयति पक्षिणः। कमयति। गमयति। रमयति। ज्वलह्वला एषां मित्वमिति। मितः इत्यनुवृत्तस्येह भाव प्रधानता। अनुपसर्गादिति नुषष्ठ्यर्थे यं पंच मीत्येवं क्लेशेन व्याख्येयमिति भावः। नमोनुपसर्गाद्वेति पाठान्तरं तत्र न कश्चित्क्लेशः। प्राप्तविभाषेति। ज्वलदीप्तौ। ह्वल ह्मल चलने इति त्रयाणां पूर्वं पठितत्वान्नेमे ष्वमन्तत्वादिति भावः। कथं संक्रामयतीति। क्रमेर्नोदात्तोपदेशस्येति वृद्धिप्रतिषेधात् घञि क्रम इत्येव भवति। ननु क्राम इति पूर्वोक्तसमाधानस्यात्रासंभवात्

ग्लास्नावनुवमां च। अनुपसर्गादेषां मित्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा॥ ६२॥ न कम्यमिचमाम्। अमन्तत्वात्प्राप्तं मित्व मेषां न स्यात्। कामयते। आमयति। चामयति॥ ६५॥ शमोदर्शने। शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु प्रणयिनो नि शमय्य वधूः कथाः। कथं तर्हि निशामय तदुत्पत्तिं विस्तराद्गदतो मम इति। शम आलोचन इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छृणोत्यर्थे वृत्तिः शाम्यतिवत्॥ ६६॥ यमोऽपरिवेषणे। यच्छतिर्भोजनादन्यत्र मिन्न स्यात्। आयामयति। दीर्घयति। व्यापारयति वेत्यर्थः। परिवेषणे तु। यम यति ब्राह्मणान्। भोजयतीत्यर्थः। पर्य्यवसितं नियमयन्नित्यादि तु नियमनं च्छन्दान्तत्करोतीति णौ बोध्यम्॥ ६७॥ स्खदिरवपरिभ्यां च। आभि न्नैत्येव। अवस्खादयति। परिस्खादयति। अपाव परिभ्य इति न्यासकारः। स्वामी तु न कमीति न ज्ञप्त इत्यनुवृत्य शम अदर्शने इति चिच्छेद। यमस्त्वपरिवेषणे मित्वमाह। तन्मते पर्य्यवसितं नियमयन्नित्यादि सम्यगेव। उपसर्गस्य स्खदेश्च स्वादि पूर्वस्येवेति नियमा त् प्रस्खादयतीत्याह। तस्मात्सूत्रद्वये उदाहरणमत्युदाहरणयोर्व्यत्यासः फलितः। इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम्॥ ६९ ॥

पृथक्प्रश्नः। व्यवस्थितविभाषेत्यादि। क्वचिन्णौ मितां ह्रस्वो न प्रवर्तत इति भावः। वृत्तिकृदिति। केचित्तु घञन्तात्क्रामशब्दात् प्रज्ञाद्यणि क्रामशब्दः स्वार्थिकः तस्मात्तत्करो तीति णौ संक्रामयतीति समादधत इति भावः। इतरयोः प्राप्ते इति। वनोः पूर्वपाठाद्धमेरमन्तत्वाच्चेति भावः॥ ❀ ॥ ग्लापयति। ग्लपयति। स्नापयति। स्नपयति। वनयति। वानयति। वमयति। वामयति। शाम्यतिवदिति यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शम धातुरपि श्रवणे भविष्यतीत्यर्थः॥

लडयति जिह्वामिति। जिह्वां ज्ञापयतीत्यर्थः। जिह्वयेति। जिह्वया पदार्थान्तरं ज्ञापयतीत्यर्थः। जिह्वाव्यापारे उदाहरणमाह। लडयति शत्रुमिति। शत्रुमुद्दिश्य गालनादि करोतीत्यर्थः। लडयति दधीति। उन्मथ्नाति। विलोडयतीत्यर्थः। केचित्तु जिह्वाव्यापारे लडयति दधि उन्मथने तु लडयति शत्रुमिति व्युत्यासेन योजयन्ति। लाडयति उ-त्रमिति। शर्करादिदानेन अनुकूलयतीत्यर्थः। ध्वनिरणी उदाहृताविति। ध्वनिरव्यवधानेनोदाहृतः। रणिस्तु करणे रणगताविप्यत्रेत्यर्थः। स्वन अवतंसने॥ अवतं

लडयति जिह्वां तृतीयातत्पुरुषो वा। लडयति जिह्वया अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते समाहारद्वन्द्वोयं लडयति शत्रुम्। लडयति दधि। अन्यत्र ला-डयति पुत्रम्॥ ३९॥ मदी हर्षग्लेपनयोः। ग्लेपनं दैन्यं दैवादिकस्य मित्त्वार्थोयमनुवादः। मदयति। हर्षयति। ग्लेपयति वेत्यर्थः। अन्यत्र मादयति। चित्तविकारमुत्पादयतीत्यर्थः॥ ४०॥ ध्वनशब्दे। भाव्ययमित्त्वार्थमनूद्यते। ध्वनयति घण्टाम्। अन्यत्र ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः॥ ४१॥ अत्र भोजः। दलि वलि स्खलि रणि ध्वनि त्रपि क्षपयश्चेति पपाठ। तत्र ध्वनिरणी उदाहृतौ। दल विशरणे। वल सम्वरणे। स्खल सञ्चलने। त्रपूष् ल-ज्जायामिति गताः। तेषां णौ। दलयति। वलयति। स्खलयति। त्रपयति। क्षैक्षये इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः। क्षपयति॥ ४८॥ स्वन अ-वतंसने। शब्दे इति पठिष्यमाणस्यानुवादः। स्वनयति। अन्यत्र स्वानयति॥ ४९॥ घटादयो मितः। मित्संज्ञा इत्यर्थः॥ ५०॥ जनी जृष् क्नसु रञ्जोऽम-न्ताश्च। मित इत्यनुवर्तते। जृषिति षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम्। जृणातेस्तु जारयति। केचित्तु जनी जृष् क्नसु इति पठित्वा क्नसु निरसने इति दैवा-दिकमुदाहरन्ति॥ ५४॥ ज्वल ह्वल ह्मल नमामनुपसर्गाद्वा। एषां मित्त्वं वा प्राप्तविभाषेयम्। ज्वलयति। ज्वालयति। उपसृष्टे तु नित्यं मित्त्वम्। प्रज्व-लयति। कथं तर्हि प्रज्वालयति। उन्नामयतीति। घञन्तात्तत्करोतीति णौ। कथं संक्रामयतीति। मितां ह्रस्व इति सूत्रे वा चित्तविराग इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत्। एतेन रञ्जो विश्रामय पन्नगानाम्। धर्म्यां न्विश्रामयेति स इत्यादि व्याख्यातम्॥ ५८॥ ॥

सनं भूषणं। स्वनयतीति। भूषयतीत्यर्थः। अस्वानीत्। अस्वनीत्। अस्वनि। अस्वानि। स्वनं स्वनं। स्वानं स्वानं। घटादयो मितः मित्संज्ञा इत्यर्थ इति। अन्ये तु मकारानुबं-धा इति व्याचक्षते। घटम् चेष्टायामिति प्रत्येकं पाठे गौरवादेकत्रैव सर्वेषां मित्संज्ञा मकारानुबंधकत्वं वाऽनेन सूत्रेण विधीयते इति भावः ॥

सोऽनुनिरणमुल्लोरिति वा दीर्घः। अफणि। अफाणि। फणं फणं। फाणं फाणं। असंभवादिति। मित्त्वप्राप्तिं विना निषेधासंभवादिह नेत्येतन्न संबध्यते। किंतु मित्संज्ञैव तद्
तदाह। फणायतीति। सामर्थ्यादिति। फणादिषु पाठसामर्थ्यादित्यर्थः। तन्वहीति षत्वविधोहीत्यर्थः। तथा च विभ्राट्। विभ्राड्भ्यां पूर्वं पठितस्य तु विभ्राक् विभ्राग्भ्या
मित्यादि सिध्यतीति भावः। अस्यमीदिति। मांतत्वान्न वृद्धिः। अयं ज्वलादिः अज्वालीदिति। अतो ल्रांतस्येति वृद्धिः। वेल्लव्य इति। वेल्लत्वं भयाद्द्विज नितो ह्यनतात
द्व्यापार इति। वंधनानुकूलो व्यापारः॥ ॐ॥ यतः शुम्। मित्त्वादेत्यादयः परः। अक्नथीदिति। एदित्त्वान्न वृद्धिः। एवं अपथीत्। अमथीदित्यत्रापि। टुवम्। केचित्तु
उदितं पठित्वा वांत्वा वमित्वेत्युदाहरंति। तत्तु वामनेन विरुध्यते। तेन हि आदितश्चेति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य वांत इत्यत्र इडभावः साधितः। उदित्त्वे तु य
स्य विभाषेत्यनेनैव वांत इति सिद्धे तदसंगतं स्यात्। एवं च क्त्वाप्रत्यये वमित्वेत्येव साधु निपातनादिति। अन्यथा गुणे सति उद्धरणा इति स्यात्। यद्यपि अर्थनिर्दे श

यतः शुम्। ७।४।१९॥ अङि परे। अपप्तत्। नेर्गदेति णत्वं। प्रण्यपप्तत्॥ २०॥ क्नथे निष्पाके। क्नथति। चक्नाथ। अक्नथीत्॥ २१॥ पथे गतौ। अपथी
त्॥ २२॥ मथे विलोडने। मेथतुः। अमथीत्॥ २३॥ टुवम् उद्गिरणे। इहैव निपातनात् ततरत्वमिति सुधाकरः। ववाम। ववमतुः। वादित्वादेत्वाभ्यास
लोपौ न। भागवृत्तौ तु वेमतुरित्याद्युदाहृतम्। तज्ज्ञाप्यासौ न दृष्टं॥ २४॥ भ्रमु चलने। वा भ्राशेति श्यन् वा। भ्रम्यति। भ्रमति। भ्राम्यतीति तु दिवादेर्वक्ष्यं

आधुनिकास्तथापि पृषोदरादित्वादित्त्वमित्यनेनैव तात्पर्यमवोध्यं इत्याद्युदाहृतमिति। वेमुश्च केचिद् धिरमित्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहुः।
न च वादित्वेन निषेधादेत्वाभ्यासलोपौ कथमिह स्यातामिति चेदत्राहुः न शसददवादिगुणानामिति सूत्रितेऽपि वेत्यकारांतसंघातग्रहणेन इष्टसिद्धे
रादिग्रहणमौपदेशिकप्रतिपत्त्यर्थमेकांता अनुबंधा इति च स्वीक्रियते। तथा च नायं वादिः। किंतु ट्वादिरिति अन्ये तु वमेरादौ लोपो व्योरिति लोपेन यकारः
प्रश्लिष्यते। ततश्चोपदेशे वादित्वाभावान्निषेधो नेत्याहुः। भ्रमु चलने। मंडलाकारेण चलनमेव धात्वर्थो न तु चलनमात्रं। तदभाव वह्निशेष्यकतन्प्रकारक
ज्ञानं च धात्वर्थः। शुक्तिं पश्यन् रजतमिति भ्रमतीति प्रयोगात्। उदितो वेति क्त्वायां वेट्। भ्रमित्वा। भ्रांत्वा। यस्य विभाषेति निष्ठायां नेट्। भ्रांतः। नन्वस्य ज्व
लादिगणे पाठः किमर्थः। न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यं। पचादेराकृतिगणत्वादच्प्रत्ययेनापि भ्रम इति रूपसिद्धेः। नोदात्तोपदेश ।

यमोऽपरिवेषणे। यङ्कृतिरिति। यमउपरमे इत्ययं धातुः। भोजनाशब्दोऽयमास्त्रे यो युजिति युज्जेतोऽज्ञेयः। परिवेषणमिह भोजनानुकूलव्यापारस्ततोऽन्यस्मिन्नर्थे मित्त्वि
षेधः। नियमयन्तीति नियमवन्ध्रव्याणि। चिविन्मतोर्लुकि शतरि शप्रत्यये गणे च ज्ञेयं। व्यत्यासः फलितः इति। स्वामिमते तत्त्वपरिवेषणे आयमयति। परिवेषणेनु याम

फणगतौ। नेतिनिवृत्तमसम्भवात्। निषेधात्पूर्वमसौ न पठितः। फणादिकार्य्याविरोधात्। फणां च सप्तानाम्। ६।४।१२५॥ एषां वा एत्वाभ्यासलो
पौस्तः किति लिटि सेटि थलि च। फेणतुः पफणतुः फेणुः पफणुः पफाण पफणिथ फणयति। वृत्। घटादिः समाप्तः। फणेः प्रागेव वृदित्येके। तन्म
ते फाणयतीत्येव॥ ६०॥ राजृ दीप्तौ। स्वरितेत्। राजति। राजते। रेजतुः। रराजतुः। रेजे। रराजे। अत इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वं॥ ६१॥
टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ। अनुदात्तेतः। भ्राजते रिह पाठः फणादिकार्य्यार्थः। पूर्वेम्पाठस्तु भ्रश्चादिषत्वाभावार्थः। तत्र हि राजि साहचर्यात् फणादेरेव ग्रहणाम्। भ्रेजे। वभ्राजे। वा भ्राशेति श्यन्वा। भ्राश्यते। भ्राशते। भ्रेशे। वभ्राशे। भ्लाश्यते भ्लाशते भ्लेशे वभ्लाशे। द्वावपीमौ
तालव्यान्तौ॥ ६४॥ स्यमु स्वन ध्वन शब्दे। स्यमादयः स इत्यन्ताः परस्मैपदिनः। स्येमतुः। सस्यमतुः। अस्यमीत्। स्वेनतुः। सस्वनतुः। सस्वनुः।
अस्वानीत्। अस्वनीत्। विस्वणति। अवष्वणति। सशब्दं भुङ्क्ते इत्यर्थः। वेश्च स्वन इति षत्वं। फणादयो गताः। दध्वनतुः। ३। षम ष्टम अवैकल्ये
ससाम तस्ताम। ५। ज्वल दीप्तौ। अज्वालीत्। ६। चल कम्पने। ७। जल घातने। घातनं तैक्ष्ण्यं॥ ८ टल ट्वल वैक्लव्ये। १० ष्ठल स्थाने॥ ११॥
हल विलेखने॥ १२॥ णल गन्धे। वन्धन इत्येके॥ १३॥ पल गतौ। पलति॥ १४॥ वल प्राणने धान्यावरोधे च। वलति। वेलतुः। वेलुः॥ १५॥ पुल
महत्त्वे। पोलति। १६। कुल संस्त्याने बन्धुषु च। संस्त्यानं सङ्घातः। बन्धुशब्देन तद्व्यापारो गृह्यते। कोलति। चुकोल॥ १७॥ शल हुल पत्लृ गतौ॥
शशाल। जुहोल। पपात। पेततुः। पतिता। ॥ ९९ पतिज्ञाह्मणान् अवादि पूर्वस्य स्वदेरवस्वदयति परिस्वदयति प्रपूर्वस्य तु प्रस्वादयतीत्ये
वं व्यत्यासो ज्ञेयः। उपेत्यमिति। न पादम्येति सूत्रे आयाम यत इत्युदाहृत्य वृत्तावुक्तं यमोऽपरिवेषण इत्यनेन मित्त्वं प्रतिषिध्यत इति। न्यासे पि तत्र नकम्पमीत्य
तो नेत्यनुवर्तत इत्युक्तं। एवं हि निषेधानन्तरं पाठ उपपद्यते। अन्यथा नकमीत्यतः प्रागेव निषूत्रीं पठेदिति भावः॥ ॥ फणगतौ। फणति। डुडि। अफाणीत्॥ अ

रध्ये। शितीति बहुव्रीहिरित्यभ्युपगमे त्विह पिबाद्यादेशाः स्युरेव ॥ ॐ ॥ सेदिथेति। उपदेशेऽत्वत इति क्रादिनियमप्राप्तस्येटो निषेधे पि भारद्वाजनियमादिट्। सदेः परस्य। सदेरिति षष्ठी। फलितमाह। अभ्यासात्परस्येति। स्थादिष्वभ्यासेन चेति प्राप्तिः। लिटीति किं। निषिषित्सति। सदिस्वञ्ज्योरिति वृत्त्यारूढो पि यारहो पेक्षितः। भाष्यानतुगुणत्वात्। निषसादेति। सदिरप्रतेरित्यत्राप्रतेरिति यथा सात्प्रतिससादेत्यत्राभ्यासस्यापि षत्वं नेति बोध्यं। शद्लृ विशीर्णतायामिति वक्तव्ये शातन इत्युक्तिरसंगतेत्याशंक्य कथंचित्समाधत्ते। शातने त्विति। शदेरेव हि णिचि शदेरगताविति तत्वे ल्युटि च शातनमिति रूपं। तथा चास्यैव धातोरिदं रूपं प्रसिद्धं चेत्यभिप्रेत्य तन्निर्देशः कृतः। यथा गम्लृगतौ डुपचष् पाक इत्यादाविति भावः। कुच संपर्चनादौ। कुच शब्दे तारे इति च वर्गीयान्ते

सेदिथ। ससत्थ। सत्ता। सत्स्यति। लृदित्वादङ्। असदत्। सदिरप्रतेः। निषीदति। न्यषीदत्। सदेः परस्य लिटि ॥ ८।३।११८ ॥ सदेरभ्यासात्परस्य षत्वं न स्यात् लिटि। निषसाद। निषेदतुः १ शद्लृ शातने। विशीर्णतायामयं शातनं तु विषयतया निर्दिश्यते। शदेः शितः ॥ १।३।६०। शिङ्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद। शेदतुः। शेदिथ। शशत्थ। शत्ता। अशदत् ॥ २॥ क्रुश आह्वाने रोदने च। क्रोशति। क्रोष्टा। क्रुशः क्सः। अक्रुक्षत् ॥ ३॥ कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। कोचति। चुकोच ॥ ४॥ बुध अवगमने। बोधति। बोधिता। बोधिष्यति ॥ ५॥ रुह बीजजन्मनि प्रादुर्भावे च। रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। अरुक्षत् ॥ ६॥ कस गतौ। अकासीत्। अकसीत् ॥ ७॥ वृत्। ज्वलादिगणः समाप्तः ॥ ॥ अथ गूहत्यन्ताः स्वरितेतः ॥ हिक्क अव्यक्ते शब्दे। हिक्कति। हिक्कते ॥ १ ॥ ॥

पुपठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितं अत्र नव्याः। अनेनैव ग्रंथेन पाणिनिनापि क्वचित् क्वचित् अर्थनिर्देशः कृत इत्यनुमीयते। अन्यथाऽत्र त्यग्रंथस्वारस्यभंगापत्तेरित्याहुः। बोधितेति। बुध्यतेरेवानिट्कारिकासु पठितत्वादयं सेडिति भावः। अकासीदिति। हलन्तलक्षणाया वृद्धेर्नेटीति निषेधे प्राप्ते हलादेरिति वैकल्पिकी वृद्धिः। वृदिति। अत्र नव्याः। ज्वलिति कसन्तेभ्य इति निर्देशाद्धृत्कारणमिहानार्षमित्यनुमीयते। अन्यथा ज्वलादिभ्यो णः इत्येव सूत्रयेदित्याहुः ॥

स्येति वृद्धिनिषेधात् णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादिति चेत् । अत्राहुः । यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि अभ्रमरित्यत्र अच्कावशक्ताविति नञः परमे
तोदात्तं स्यात् णप्रत्यये त्विह तत्पुरुषे तुल्यार्थेत्यादिना आद्युदात्तमेव भवतीति ॥ ॥ वाज्भ्रमुत्रसां । अप्राप्तविभाषेयं । अभ्रमीदिति । मान्तत्वान्न वृद्धिः । अक्षारीदिति ।
हलन्तलक्षणा या वृद्धिर्नेटीति निषेध्यते । तस्येति वृद्धिः । षह । अपराधे सत्यपि कोपानाविष्करणं मर्षणं । सहिवहोः । इह रेफलोपस्यासंभवात् ढ्लोपे पूर्वस्ये
त्यतो ढ्लोप एवानुवर्तते तदाह । ढ्लोप इति ॥ ढ्लोपे किं । सहते । वहते । सोढः । षत्वं नेति । न रपरेति सूत्रान्नेत्यनुवर्तत इति भावः । सिवादीनां । सिवुसहसुट्स्तुस्व
जः सिवादयः पर्यषीव्यत् । पर्यसीव्यत् । पर्यष्करोत् । पर्यस्करोत् न्यषेधत् न्यसेधत् व्यषजत् व्यस्वजत् । रम क्रीडायां । अयमुदित्त्वं मत्वा रन्त्वा रमित्वेति केचिदुदाज

वाज्भ्रमुत्रसाम् । ६ । ४ । १२४ ॥ एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः बभ्रमतुः । अभ्रमीत् ॥ २५ ॥ क्षर सञ्चलने । अक्षारीत्
॥ २६ ॥ अथ द्वावनुदात्तेतौ । षह मर्षणे । परिनिविभ्य इति षत्वं । परिषहते । सेहे । सहिता । तीषसहेति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः स
हिवहोरोदवर्णस्य । ६ । ३ । ११२ ॥ अनयोरवर्णस्य ओत्स्यात् ढ्लोपे सति । सोढः । ८ । ३ । ११५ ॥ सोढरूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा ।
— । सिवादीनां वाऽड्व्यवायेपि । ८ । ३ । ७१ ॥ परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेपि पर्यषहत पर्यसहत १ रम क्रीडायाम् । =
रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त ॥ २ ॥ अथ कसन्ताः परस्मैपदिनः । षद्ऌ विशरणगत्यवसादनेषु । पाघ्राध्मास्था — म्नादाण्दृश्यर्त्तिसर्त्ति
शदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ॥ पादीनाम्पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । सीदति । ससाद ।

दुःसन्माधवादयोन सहन्ते । तथा च त्वायां रन्त्वेत्येव साधु रेमिषे इति । क्रादिनियमादिट् । पचाद्यच् । चिटा परमा । घञि तु रामः । अमन्तत्वेन मित्वात् णौ ह्रस्वः । रमयति ।
षद्ऌ । विशरणमवयवानां विश्लेषः । अवसादनं नाशः । पाघ्राध्मा । पा पाने । पारस्मणे इति तु न गृह्यते लुग्विकरणत्वात् । द्रष्टीति केषांचित् पाठस्तत्र स्त्रजि दृशो
रित्यम् अर्तीत्यादौ स्थादेशाद्यभावश्च सौत्रत्वात् पश्यादेशाभाव इति बोध्यं । दृश्यर्त्तीति पाठस्तु निर्दुष्ट एव । पादीनामिति । एकादशानामेषां यथासंख्यं एका
दशपिबाद्यादेशाः स्युरित्यर्थः । ष्ठिवुक्लमुचमामित्यतः शितीत्यनुवर्तते स च कर्मधारय इत्यभिप्रेत्याह । इत्संज्ञकशकारादाविति । शकारादावित्येव किं ॥ पपौ । जघ्रौ ।

सि॰कौ॰ ति॰त॰ ति॰उ॰ ४८

दयः पंचार्थाः। चाद्यंभांडस्यवादनार्थेग्रहणं नादिग्रहणं। वेणिः वेणी। वेणुरित्यादिरूपाण्यस्यैवधातोः। नांतोपीति। उतमातामहिषमन्ववेनदित्यत्रनांतदर्शनादितिभावः। खनुः खनित्वा। खात्वा॥ निष्ठायां। खातः। गमहन। अविश्रुधातुश्रुवामित्यतोऽचीत्यनुवर्तते। ऊदुपधायागोहइत्यतउपधाग्रहणंचानुवर्तताहाएवमुपधायाइत्यादि। जग्मतुः जग्मुः। जघ्नतुः जघ्नुः जज्ञे जज्ञाते जक्षतुः जक्षुः अनङीति किं। अगमत्। चीवृ चीवरं वस्त्रं चीवरपीवरमीवरेत्युणादिषुनिपातितोऽयमाचयतौ। विन्नत्यागेतुनित्यमात्मनेपदीगतइतमनोरमा। नकुत्रापिगतइतिचिंत्येवस्त्रा। अव्ययीदिति। पोतत्वान्मन्यदिः। स्पशबाधनस्पर्शनयोः। णिश्रीनिजन्ते स्वाङि। अपस्पशत्। अतस्मृदृत्वरप्रथेत्यादिनाअभ्यासस्यात्वंसन्वदित्वापवादः। पस्पशायइंतादचियङोविचेतिलुक्। अजाद्यतइतिदाप्। दीर्घोकितइत्यभ्या

ऊदुपधायागोहः ।६।४।८९। ग्रहउपधायाउत्स्यादजादौप्रत्यये। गूहतिगूहतेऽदित्वाद्वागूहिता। गोढा। गूहिष्यति। घोक्ष्यति। गूहेताग्रूह्यात्। अगूहीत्। इड्भावेक्सः। अघुक्षत्। लुग्वादुहदिहलिहगुहामात्मनेपदेदन्त्ये ।७।३।७३। एषांक्सस्यलुग्वादन्त्येतङि। ढत्वधत्वष्टुत्वढलोपदीर्घाः। अगूढ। अघुक्षत। क्सस्याचीत्यन्त्यलोपः। अघुक्षाताम्। अघुक्षन्त। अगूढ्वहि। अघुक्षावहि। अघुक्षामहि॥ ३५॥ अथाजन्ताउभयपदिनः। श्रिञ् सेवायाम्। श्रयति। श्रयते। शिश्रियतुः। श्रयिता। णिश्रीतिचङ्। अशिश्रियत्॥ १॥ भृञ्भरणे। भरति। बभार। बभ्रतुः। बभर्थ। बभृव। बभ्रषे। भर्ता। ऋद्धनोःस्ये ।७।२।७०। ऋतोहन्तेश्चस्यस्येट्स्यात्। भरिष्यति। रिङ्शयग्लिङ्क्षु ।७।४।२८। शयकियादावार्द्धधातुकेलिङि चऋतोरिङादेशःस्यात्। रीङि प्रकृतेरिङ्विधिसामर्थ्याद्दीर्घोन। भ्रियात्॥ ॥ ९९ सस्पदीर्घस्तुनभवति। संज्ञापूर्वकविधेरनित्यत्वादित्याहुः। जपजभदहदशभंजपसां चेत्यत्रपसेतिसौत्रोधातुः। पसतीत्यादि। यङ्लुकोऽजपजभेत्यनेनैवाभ्यासस्यनुक्। यङि पंपस्यते। लुकि पंपसीति पंपस्ति। कंडवादिष्वेयपस्यति॥ ॥ ऊदुपधायाः। गुणहेतावित्ति। एतच्चगोहइतिविकृतनिर्देशाल्लब्धं। अविश्रुधातुरित्यतोऽनुवर्तनाचीत्यनेनोगाश्रित्रप्रत्ययोविशेष्यतेविशेषणेनतदादिविधिरित्याह। अजादाविति। इत्येतङीति। दित्यादित्वादीर्घत्वर्थः। अघुक्षत। अघिक्षत। अलीढ। अलिक्षतेत्यादि। रिङ्शयग्लिङ्क्षु। अयङ्यिकिङितीत्यतोऽनुवृत्तयीत्येतलिङएवविशेषणं शेऽसंभवाद्यक्यविकिद्वैय्यर्थ्यात्। तथाअकृत्सार्वधातुकयोरित्यनुवृत्तमपिलिङएवविशेषणमित्यभिप्रेत्याहयादावित्यादि। शे। म्रियते। तुदादिभ्य

अंचुगतौ।अनिदितामितिनलोपः।अच्यात्।अचीत्येकीयमतेतुइदित्वादंच्यात्।मेधृसंगमेच।चात्पूर्वोक्तेर्थे।मेधायेगृहमेधिनामित्यत्रगृहेदीरैर्मेधंतेसंगच्छं

अञ्चुगतौयाचनेच।अञ्चति।अञ्चते॥२॥अचुइत्येके॥३॥अचिइत्यपरे॥४॥डुयाचृयाञ्चायाम्।याचति।याचते॥५॥रेटृपरिभाषणे।रेटति।रेटते॥६॥चतेचदेयाचने।चचात।चेते।अचतीत्।चचाद।चेदे।अचदीत्॥८॥प्रोथृपर्याप्तौ।पुप्रोथ।पुप्रोथे॥९॥मिदृमेदृमेधाहिंसनयोः।मिमेद।मिमेदे।थान्ताविमावितिस्वामी।नमामिमेथ।धान्तावितिन्यासः॥११॥मेधृसङ्गमेच।मेधति।मिमेधे॥१२॥णिदृणेदृकुत्सासन्निकर्षयोः।निनेद।निनिदतुः।निनिदे॥१४॥शृधुमृधुउन्दने।उन्दनंक्लेदनम्।शर्धति।शर्धते।शर्धिता।मर्धति।मर्धते॥१६॥बुधिर्बोधने।बोधति।बोधते।इरित्वादङ्वा।अबुधत्।अबोधीत्।अबोधिष्ट।दीपजनेतिचिण्तुनभवति।पूर्वोत्तरसाहचर्येणदैवादिकस्यैवतत्रग्रहणात्॥१७॥उबुन्दिर्निशामने।बुबुन्दे।अबुदत्।अबुन्दीत्॥१८॥वेणृगतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु।वेणति।वेणते।नान्त्यप्ययम्॥१९॥खनुअवदारणे।खनति।खनते।गमहनजनखनघसांलोपःक्ङित्यनङि।६।४।९८॥एषामुपधायालोपःस्यादजादौक्ङितिनत्वङि।चख्नतुः।येविभाषा।६।४।४३॥खायात्।खन्यात्॥२०॥चीवृआदानसंवरणयोः।चिचीव।चिचीवे॥२१॥चायृपूजानिशामनयोः॥२२॥व्ययगतौ।अव्ययीत्॥२३॥दाशृदाने।ददाश।ददाशे॥२४॥भेषृभये।गतावित्येके।भेषति।भेषते॥२५॥भ्रेषृभ्लेषृगतौ॥२६॥असगतिदीप्त्यादानेषु।असति।असते।आस।आसे।अयंषान्तोपि॥२७॥स्पशबाधनस्पर्शनयोः।स्पर्शनेग्रथनम्।स्पशति।स्पशते॥२८॥लषकान्तौ।वाभ्राशेतिश्यन्वा।लष्यति।लषति।लेषे॥२९॥चषभक्षणे॥३०॥छषहिंसायाम्।चच्छषतुः।चच्छषे॥३१॥झषआदानसम्वरणयोः॥३२॥भ्लक्षभक्षअदने॥३४॥भक्षइतिमैत्रेयः॥३५॥दासृदाने॥३६॥माहृमाने॥३७॥गुहूसम्वरणे॥ ॥ ९ तेइतिविग्रहः।सुप्यजातावितिणिनिः।शर्धु स्पृ

धुक्लेदनमिति।आर्द्रीभावइत्यर्थः।उदित्वात्क्त्वायांवेट्।शर्धित्वा।शृद्ध्वा।उबुंदिर।उंदित्वा।उत्वा।निष्ठायांउन्नम्।निशामनं।चाक्षुषंज्ञानं।वेणृ।गत्या

धातुग्रहणात्क्विप्प्रत्ययस्य शितीति कर्मधारयेण विशेषणाद्विषयसप्तम्यां तु श्त्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्वमित्यर्थात्पर्युदासेपि न क्षतिरिति ॥ ॥ आत्तऔ णलः ॥ इह अंगस्येत्यनुवर्तते धातोरिति तु फलितार्थकथनं आदन्ताद्धातोरित्यर्थः। आतो लोप इटि च। आर्द्धधातुक इत्यनुवर्तते दीङो युडचि क्ङितीत्यतोऽचि क्ङितीति च तदेतत्फलितमाह। अजाद्योरार्द्धधातुकयोरिति। अजाद्योः किं। ग्लायते। यक्। जाग्लायते। यङ्। दासीय। इड् दाने। लिङुत्तमैकवचनमिट्। आर्द्धधातुकयोः किं। यांति। वांति। व्यत्यरे। रा दाने। कर्मव्यतिहारे धातोर्लङुत्तमैकवचनमिट्। दधिथेति। एवं च अजाद्यार्द्धधातुकत्वेन दधिव दधिमेत्यादिषु आतो लोपसिद्धावपि दधिथेत्यादिरूपसिद्धये सूत्रेस्मिन्निटीति ग्रहणमावश्यकमिति ज्ञेयम्। यदि तु इडागम एवात्र गृह्यते व्याख्यानात्तदाऽचि क्ङितीत्येव तदार्द्धधातुकस्यैव विशेषणं न तूभयोः। दाध्वदाप्। इह दारूपाश्चत्वारः। डु दाञ् दाने। दाण् दाने। दो अवखण्डने। देङ् रक्षणे। धारूपौ तु द्वौ। डुधाञ् धारणपोषणयोः। धेट् पाने। अत्र वेधा नाम नेकांतत्वादा

आतऔणलः।७।१।३४॥ आदन्ताद्धातोर्णल औकारादेशः स्यात्। ददौ। आतो लोप इटि च।६।४।६४॥ अजाद्योरार्द्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात्। द्वित्वात्परत्वाल्लोपे प्राप्ते द्विर्वचनेचीति निषेधः। द्वित्वे कृते आलोपः। ददतुः। ददुः। ददिथ। ददाथ। ददिव। ददिम। धाता। दाधा घ्वदाप्।१।१।२०॥ दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। एर्लिङि।६।४।६७॥ घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्द्धधातुके किति लिङि। धेयात्। धेयास्ताम्। धेयासुः॥ ॥ ((देच उपदेशे इत्यात्वे दो देङ् धेयामनुकरणे दाधारूपत्वमस्ति। एवं च दाश्च दाश्च दाश्च दाः। धाश्च धाश्च धौ। दाश्च धौ च दाधाः इति विग्रहः। दाप्दैपौ विनेति। दाप् लवने। दैप् शोधने। एतन्भिन्ना इत्यर्थः। दैपः पित्वमिह प्रतिषेधार्थं न त्वनुदात्तार्थं। अनुदात्तो सुप्पितौ इति प्रत्ययस्यैव पितोऽनुदात्तत्वात्। न च दैपो लाक्षणिकत्वान्नास्य प्रतिषेध इति शंक्यं। पित्करणस्य आनर्थक्यप्रसंगात्। इदमेव दैपः पित्वे गामादाग्रहणेष्वविशेष इति परिभाषाया ज्ञापकमित्याहुः। अदाविति किं। दातं बर्हिः लूनमित्यर्थः। इह दो दद्घोरिति दद्भावो न। अवदातं मुखं। शुद्धमित्यर्थः। इह त्वच उपसर्गादिति तादेशो न। एर्लिङि। मास्थादीनामिति। मास्थागापाजहातिसामित्यर्थः। मा माने। गामादाग्रहणेष्वविशेषे पि माङ् मेङोर्न ग्रहणं त्र्येते। लिङि कित्त्वासंभवात्। ष्ठा गतिनिवृत्तौ। गै शब्दे। गाङ् गताविति तु न गृह्यते लिङि कित्त्वासंभवादेव। पा पाने। ओहाक् त्यागे। षोंऽतकर्मणि। देयात्। धेयात्। मेयात्। स्थेयात्। गेयात् । ।

उश्चा इको झल इत्यतो झल्ग्रहणं लिङ्सिचाविति पूर्वसूत्रं चात्र वर्ततेतेत्याह। ऋवर्णादित्यादि। अभार्षीदिति। सिचि वृद्धिरिति वृद्धिः ह्रस्वादङ्गात् ह्रस्वात् किं। अ च्योष्ट। अप्लोष्ट। अंगग्रहणादिह ग्रहणात्सस्येत्यतः सस्येत्यनुवृत्तावपि प्रत्ययस्यैव तन्नापि इष्टत्वात् सिच एव लोपो भवति। तेनेह न। अहं द्विष्मां। केचित्विह अंगग्रह णाभावे अपाविष्टां। अलाविष्टामित्यादावपि अतिप्रसंगः स्यादित्याहुः तदपरे न सहमन्ते। सन्निपातपरिभाषयापि परिहारसंभवादिति। झलीति किं। अभृषातां। अ भृषत। हृञ् हरणे। चत्वार इहार्थाः। भारं हरति। प्रापयतीत्यर्थः। अंशं हरति। स्वीकरोतीत्यर्थः। स्वर्णं हरति। चोरयति। पापं हरति। नाशयति। धृञ् धारणे अनुः। दधर्थ। दध्रे। दध्राते धर्ता। ध्रियात्। णीञ्। निनयिथेति भारद्वाजनियमाद्विकल्पः। आदेच उपदेशे शिति। लिटि धातोरित्यतो धातोरित्यनुवृत्तेर् एचो विशेष्यते। तदा ह। एजन्तस्य धातोरिति। उपदेशे किं। चेता स्तोता। ननु लाक्षणिकत्वादेवात्र न भविष्यतीति चेन्न। अत्राहुः। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति ज्ञा

उश्चा ०१।२।१२॥ ऋवर्णात्परौ झलादी लिङ्सिचौ तङ्परः सिच्चेत्येतौ कितौ स्तः। भृषीष्ट। भृषीयास्तां। अभार्षीत्। अभार्ष्टाम्। अभार्षुः। ह्रस्वादङ्गात्। ८। २। २७॥ सिचो लोपः स्यात् झलि। अभृत। अभृषातां। अभरिष्यत्॥ २॥ हृञ् हरणे। हरणम्प्रापणं स्वीकारः स्तेयं नाशनं च। जहर्थ। जह्रिव। जह्रि षे। हर्ता। हरिष्यति॥ ३॥ धृञ् धारणे। धरति। अधार्षीत्। अधृत॥ ४॥ णीञ् प्रापणे। निनयिथ। निन्यिषे॥ ५॥ अथाजन्ताः परस्मैपदिनः। धेट् पा ने। धयति। आदेच उपदेशेऽशिति॥ ६। १। ४५॥ उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति॥ ९९ पनार्थमुपदेशग्रहणं तेन क्रीड्जीनां णाविति

कृतात्वे ज्ञापयतीत्यादौ पुक् सिध्यतीति मनोरमाकृत्। धातोः किं। गोभ्यां। अस्तित्वत्रापि गमेर्डो ग्लाजदिभ्यां डा वित्युपदेशे एच्। अशितीति प्रसज्यप्रतिषेधर् त्याह। न तु शितीति। पर्युदासे तु जग्ले मम्ले इत्यादौ द्विर्वचनेचीति निषेधादात्वं न स्यादभ्यासे इकारश्च श्रूयेत। किंचा सुग्ल इत्यत्र आतश्चोपसर्ग इति कः सुग्ले इत्यत्र आ तश्चोपसर्ग इति स्त्रियामङ् सुग्लान इत्यत्र आतो युक् चिण्कृतोरिति युक् च न स्यात्। प्रत्ययनिमित्तत्वात्त्वमादन्तात्त्वं प्रत्यय इत्यन्योन्याश्रयात्। प्रसज्यप्रतिषेधे तु न कोपि दोषः। व्हा वामश्चेति सूत्रेणाकवाधनार्थं पुनरणो विधानं च प्रतिषेधपक्षे ज्ञापकं तदाहुः। अनैमित्तिकमात्वं शिति तु प्रतिषेध इति। नन्वेवमपि एशः शित्वाज्जग्ले इत्यादि न सिध्यतीति चेन्न। अत्राहुः। यदि तु शितीति बहुव्रीहिः स्यात्तदा तत्स्यादेव दोषः किंतु कर्मधारयोयं। तथा चाशितीत्यत्र तां न तु शकारादौ प्रत्यये परे नेत्यर्थः ॥

सि.कौ.
टि.त.
ति.उ.
५०

पार्थेत्यतो लुगनुवर्तते गातिस्थेत्यतः सिचः परस्मैपदेष्विति च तदाह। सिचो लुग्वेत्यादि। अधुरिति। आत इति। श्लेर्जुस्। परस्मैपदे किं। व्यस्य आस्त। पमरमनमा। इह अ-
धातुकस्येड्वलादेरितीडनुवर्तते अंजेः सिचीत्यतः सिज्ग्रहणं स्तुसुधूञ्भ्य इत्यतः परस्मैपदग्रहणं च तदाह। एभ्यः सिच इडित्यादि। अयंसीत्। अयंसिष्टां। व्यरंसीत्। व्यरं-
सिष्टां। अनंसीत्। अनंसिष्टां। परस्मैपदेष्विति किं। उदायत भारं। अरंस्त। अरंसातां। वान्यस्य। अन्यस्य किं। स्थेयात्। चैन्यक्रु रणा। घ्रायति। दच्चो अघ्रासीत्। घुमास्थेत्यत्र नेति
व्याख्यानात्तत्रात्त रेजहातिस्यतीनामिति श्यना निर्देशाच्चेति भावः। विभाषाघ्रेति स्यन् विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः। एवं शाच्छासेति गुणविधावपि
स्यते स्वग्रहणमिति बोध्यं। तेनास्य अर्तिह्रीति पुगेवासापयति। पै। ओ वै॥ पायति। वायति। शुष्यतीत्यर्थः। ओदितश्चेति निष्ठानत्वं। वानं। शुष्कं वा नसुभेत्रि स्वित्यम-
रः। अदन्तत्वादिति। केचित्तु अंगवृत्तपरिभाषया पिगुणाभावं समर्थयंति। घ्राणं घोपादाने। गंधोपादानं गंधग्रहणं। नन्वेवं कर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वे
नजिघ्रतिकुसुममित्यादिप्रयोगो न सिध्येदिति चेत्। अत्राहुः। यद्धात्वर्थेन कर्तृनिष्ठकर्मणा उपसंग्रहस्तस्यैव धातोरकर्मकत्वं नान्यस्य भवति हि जीवति नृत्यतीत्या-

ऋतश्च संयोगादेर्गुणः ।७।४।१०॥ ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदम्परत्वा-
त्कित्यपि भवति। रपरत्वं। उपधावृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। ऋद्धनोः स्ये। ह्वरिष्यति॥

रकर्मकत्वं। तदर्थोपसंगृहीतकर्मणः कर्तृनिष्ठत्वात्। घ्राधातोः कर्मणस्तथात्वान्नाकर्मतेति। ध्मा शब्दाग्निसंयोगयोः। शब्दशब्देन तदनुकूलो वायुरिह गृह्यते तेन शं-
खं धमतीतिवत् मृदंगं धमतीति प्रयोगो नेत्याहुः। अग्निसंयोगे सुवर्णं धमति। अग्निना संयुनक्तीत्यर्थः। स्थेयादिति एर्लिङीति नित्यमेत्वं। लुङि। अस्थात्। म्ना अभ्यासे। म-
नति विद्यां। अभ्यस्यतीत्यर्थः। मम्नौ। अम्नासीत्। अदादिति। गातिस्थेति सिचो लुक्॥ ॥ ॥ ऋतश्च संयोगादेः। किं। चक्रतुः। चक्रुः। तपरकरणं स्पष्टार्थं। स्तॄञ् इत्यादेर्लि-
टि। तस्तरतुरित्यादौ ऋच्छत्यॄतामिति गुणस्य जायमानत्वात्। चकारो मंदप्रयोजनः। दयतेर्दिगि लिटीत्यतोऽनुवर्तनादाह। गुणः स्याल्लिटीति। अवृद्धिनिमित्ते
लिटीति प्राचो व्याख्यानं तु नादर्तव्यं। न च स्वविषये वृद्धिर्बाधिकेति फलितार्थकथनपरतया तदुक्तिः संगच्छत इति वाच्यं। परत्वेन गुणस्यैव न्याय्यत्वादिति भावः॥

येयात्। हेयात्। अवसेयात्। आङ्इ धातुके किं। मायात्। मायातां। मायुः। कितीति किं। दासीष्ट। इह दीङो युड्वीत्यतः क्ङितीत्यनुवर्तमानेपि प्रकृतोपयोगितया किती

विभाषा घेट्श्व्योः। २।१।४९। आभ्यां श्लेश्चङ् स्यात्कर्त्तवा चिलि लुङि परे। चङीति द्वित्वं। अदधत्। अदधतां। विभाषा घ्राधेट्शाच्छासः। २।४।७८

। एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे। अधात्। अधाताम्। अधुः। यमरमनमाऽऽतां सक्च। ७।२।७३। एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु

अधासीत्। अधासिष्टाम्। अधासिषुः। १। ग्लै म्लै हर्षक्षये। हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लिथ। वाऽन्यस्य संयोगादेः। ६।४।६८।

घुमास्थादेरन्यस्य संयोगादेर्ङीतो राग एत्वं वा स्यादार्द्धधातुके किति लिङि। ग्लायात्। ग्लेयात्। अग्लासीत्। म्लायति। २। द्यै न्यक्करणे। न्यक्कर

णन्तिरस्कारः। ४। द्रै स्वप्ने। ५। ध्रै तृप्तौ। ६। ध्यै चिन्तायाम्। ७। रै शब्दे। ८। स्त्यै ष्ट्यै शब्दसङ्घातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्य

म्। षोपदेशफलन्तु तिष्ट्यासति। अतिष्ट्यपदित्यत्र षत्वम्। १०। खै खदने। ११। क्षै जै षै क्षये। क्षायति। जजौ। ससौ। साता। घुमास्थेत्यत्र विभाषा घ्रा

धेट्ड्त्यत्र च स्यतेरेव ग्रहणान्नत्वस्य। तेन एत्व सिज्लुकौ न। सायात्। असासीत्। १४। कै गै शब्दे। गेयात्। अगासीत्। १६। शै श्रै पाके। १८। पै ओ

वै शोषणे। पायात्। अपात्। अपासीत्। घुमास्थेतीत्वन्न दपवादत्वा(?) लिङीत्येत्वं ज्ञातिस्थेति सिज्लुक्च न। पारूपस्य लाक्षणिकत्वात्। २०। ष्टै वेष्टने।

स्तायति। २१। ष्णै वेष्टने। शोभायान्त्वित्यन्ये। स्नायति। २२। दैप् शोधने। दायति। अघुत्वादेत्वसिज्लुकौ न। दायात्। अदासीत्। २३। पा पाने। पाघ्रा

ध्मेति पिबादेशः। तस्यादन्तत्वान्नोपधागुणः। पिबति। पेयात्। अपात्। २४। घ्रा गन्धोपादाने। जिघ्रति। घ्रायात्। घ्रेयात्। अघ्रासीत्। अघ्रात्। २५।

ध्मा शब्दाग्निसंयोगयोः। धमति। २६। ष्ठा गतिनिवृत्तौ। तिष्ठति। स्थादिष्वभ्यासेनेति षत्वं। अधितष्ठौ। उपसर्गादिति षत्वम्। अधिष्ठाता। स्थेया

त्। २७। म्ना अभ्यासे। मनति। २८। दाण् दाने। प्रणियच्छति। देयात्। अदात्। २९। ह्वृ कौटिल्ये। ह्वरति। ॥ ॥ त्यस्यैव लुङ्वृत्तिः कृता। ॥ विभा

षा धेट्श्व्योर्लुङि त्यनुवर्त्तते णिश्रीत्यस्मात्कर्त्तरीति च तदाह श्लेश्चङ्वेत्यादि। अदधदिति। चङि आतो लोपः। श्वयतेरुदाहरणमशिश्वियत्। विभाषा घ्रा। इह एप श्वि

गुणोर्त्ति। अर्त्तीति भ्वादि ह्वाद्योर्ग्रहणं लुकानिर्देशस्तु सौत्रः। ऋग्रहणे कर्त्तव्ये श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः। रीङ् ऋत इत्यस्मादृत इति वर्त्तते तच्च संयोगादित्वे न विशेष्यते। तदाह। संयोगादेरिति। अर्तिसंयोगाद्योरः इत्यकारे विधेये गुणग्रहणं चिंत्यप्रयोजनं। अयङ् यि क्ङितीति सूत्रात् यीत्यनुवर्त्तते तच्च लिङो विशेषणं रिङ् शयग्लिङ्क्ष्विति

गुणोर्त्तिसंयोगाद्योः। ७।४।२९॥ अर्त्तेः संयोगादेर्ॠदन्तस्य च गुणः स्याद्यकि यादावार्द्धधातुके लिङि च। ह्वर्य्यात्। अह्वार्षीत्। अह्वार्ष्टां॥३०॥ स्वृ शब्दोपतापयोः। स्वरति सस्वार। ऋतो भारद्वाजस्य। स्वरतिसूतीति वेट्। सस्वरिथ। सस्वर्थ। वमयोस्तु श्र्युकः किति। ७।२।११॥ श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्न स्यात्। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वादृद्धनो रिति नित्यमिट्। स्वरिष्यति। स्वर्य्यात्। अस्वारीत्। अस्वारिष्टाम्। अस्वार्षीत्। अस्वार्ष्टाम्॥३१॥ स्मृ चिन्तायाम्।३२॥ ह्वृ संवरणे॥३३॥ सृ गतौ। ऋद्धित्वान्नेट्। ससर्थ। ससृव। रिङ्। स्रियात्। असार्षीत्। असार्ष्टाम्। सर्त्तिशास्त्यर्त्तिभ्यश्च।३।१।५६॥ एभ्यश्च्लेरङ् स्यात्कर्त्तरि लुङि। इह लुमशापा शासिना साहचर्य्यात्सर्त्यर्त्ती जौहोत्यादिकावेव गृह्येते। तेन भ्वाद्योर्नाङ्। शीघ्रगतौ तु पाघ्राध्मेति शितिधौ रादेशः। धावति॥३४॥ ऋ गतिप्रापणयोः। ऋच्छति। ऋच्छत्यृताम्।७।४।११॥ तौदादिक ऋच्छेर्ॠधातोर्ॠतां च गुणः स्याल्लिटि। णलि प्रागवद्दुपधावृद्धिः। आर। आरतुः। आरुः। इडत्त्यर्तिव्ययतीनाम्।७।२।६६॥ अद ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आरिथ। अर्त्ता। अरिष्यति। अर्य्यात्। आर्षीत्। आर्ष्टाम्॥३५॥ गृ घृ सेचने। गरति। जगर्थ। जग्रिव। रिङ्। ग्रियात्। अगार्षीत्॥३७॥ ध्वृ हूर्च्छने॥३८॥ स्रु गतौ। सुस्रोथ। सुस्रुव। स्रूयात्। णिश्रीति चङ्। लघूपधगुणादन्तरङ्गत्वादुवङ्। असुस्रुवत्॥३९॥ षु प्रसवैश्वर्य्ययोः। प्रसवोऽभ्यनुज्ञानम्। सुषोथ। सुषविथ। सुषुविव। सोता॥ स्तुसुधूञ्भ्यः परस्मैपदेषु।७।२।७२॥ एभ्यः सिच इट् स्यात्परस्मैपदेषु। असावीत्। सुवतिसूतिभ्यां निर्द्धसाहचर्य्यात्सुनोतेरेव ग्रहणमिति पक्षे। असौषीत्॥ ४० ॥ श्रु श्रवणे ॥ ॥

सूत्रे द्युग्रहणस्य लिङ् ग्रहणस्य चानुवर्तनादित्यभिप्रेत्याह। यकि यादावि। आर्द्धधातुके इत्येतदकृत्सार्वधातुकयोरित्यनुवृत्तिपर्य्यालोचनया फलितार्थकथनमिति ज्ञेयं। संयोगादेरिति किं। क्रियात्। यादीति किं। संस्कृषीष्ट। आर्द्धधातुके किं। इयात्। स्वृ। उपतापो रोगः। श्र्युकः किति। एकाच उपदेश इत्यतः एकाच इत्यनुवर्त्तते तच्च उ

पंचमीसमासपक्षस्यानित्यत्वाभ्युपगमादिति भावः। च्युङ्॰ वेदृत्ति। कुहो श्चुरिति ङस्यान्तः। च्यु ङ्॰ इति। असमान्नपचाद्यचिविकृतवः ववयोरभेदाद्धिकृतचरत्यन्येनाभेद्॰
॥ ॥ ॥ ॥ ॥ प्रणिमयतइति। नत्वनेर्गदेतिकथमिहणत्वंस्यात्‌शिद्विषयेआत्वाभावेन मो रूपाभावाद्शिद्विषयेकृतात्वेप्यस्मिन्‌णत्वंदुर्लभमेवाग्रतिपदोक्ते
स्यैवंमाधातोर्ग्रहणेचित्यात्‌नत्वस्यलाक्षणिकस्य। गामादाग्रहणेष्वविशेषइत्यभ्युपगमेतुमीनातिमिनोत्योरात्वेकृतेप्रनिमाताप्रनिमास्यतीत्यादावतिप्रसंगः
स्यादित्यतआह। तत्रेति। इत्त्वादिति। अयंभावः। घुसंज्ञासूत्रेप्रणिदयतेप्रणिधयतीत्यादौणत्वसिद्धयेभाष्यकारेरित्थंसिद्धांतितं। नेर्गदनदेतिणत्वविधौघु
मेत्यस्यस्थानेघुप्रकृतिमाङितिपठनीयं। घुश्च प्रकृतिश्च माङ् चेति द्वंद्वः। प्रकृतिश्च कस्येत्याकांक्षायांसन्निधानात्‌ पूर्वोत्तरयोरेवातेननकाप्यव्याप्तिः। नापि
मामानेइत्यत्र मीनातिमिनोत्योश्चातिव्याप्तिः। माङ्॰ इति ङकारानुबंधकस्यैवपठितत्वादिति। दिग्यादेशेनेति। दयतेर्लिटि परे द्वित्वंप्राप्तंदिग्यादेशश्च तत्रवि

प्रणिमयते। नेर्गदेतिणत्वं। तत्रघुप्रकृतिमाङितिपठित्वाङितोमाप्रकृतेरपिग्रहणस्येष्टत्वात्‌॥ १५ ॥ देङ्॰ रक्षणे। दयते। दयतेर्दिगि
लिटि। ७।४।९॥ दिग्यादेशेनद्वित्वबाधनमिष्यतइतिवृत्तिः। दिग्ये। स्याघ्वोरिच्च। १।२।१७॥ अनयोरिदादेशः स्यात्‌। सिच्चकित्स्यात्‌। अ
दित अदिषाः। अदिषि॥ १६॥ श्यैङ्॰ गतौ। श्यायते। शश्ये॥ १७॥ प्यैङ्॰ वृद्धौ। प्यायते। पप्ये। प्याता॥ १८॥ त्रैङ्॰ पालने। त्रायते। तत्रे॥ १९॥ पूङ्॰
पवने पवते। पुपुवे। पविता॥ २०॥ मूङ्॰ बन्धने। मवते॥ २१॥ डीङ्॰ विहायसागतौ। डयते। डिड्ये। डयिता॥ २२॥ तॄ प्लवनतरणयोः ॥ ॥

शेषविहितेनदिग्यादेशेनद्वित्वशास्त्रस्यबाधः। नचैवंप्यायः पीचस्थिङः स्फायाञ्जितिपीस्फाञ्जोरपिविशेषविहितत्वात्ताभ्यांद्वित्वबाधः स्यादितिवाच्यं विषयसप्त
मीमाश्रित्यलिङ्त्ययोः प्रागेवतयोः प्रवृत्तत्वात्‌। दिग्यादेशविधौतुलिटीतिपरसप्तम्येवनतुविषयसप्तमीत्वस्यानुरोधात्तदेतत्सूचयति। इष्यतइति। दयतेर्लि
टिद्वित्वेप्राप्तेतत्‌ बाधित्वापरत्वाद्दिग्यादेशइतितुनोक्तं। परस्परलब्धावकाशयोरेवपरस्यबलीयस्त्वात्‌। दिग्यादेशविनाद्वित्वस्यसावकाशत्वेपिद्वित्वं
विनादिग्यादेशस्यतदभावादितिदिक्‌। स्याघ्वोरिच्च। इहलिङ्सिचावितिसूत्रादात्मनेपदेष्विति नानुवर्तितं। परस्मैपदेषु गातिस्थेति लुकः प्रवृत्तेर्व्यावर्त्या
लाभात्‌। अस्थित। अस्थिषातां। भाव्यमानेणाच्चचित्सवर्णान्गृह्णातीत्यत्रइदपितपरकरणालिंगमित्याहुः। अत्रवदेतिविधीयमानस्यसवर्णग्राहकत्वेयित

दिति भावः। स्यादेतत्। यङ्लुक् 'कण्ठोऽस्त्वाचोयवतीत्यादौ प्रत्ययस्य छन्दस्युभयथेत्यनेन आर्द्धधातुकत्वाश्रयणे यणादेशो न भवेदिति किमनेन हुश्नुग्रहणेन। न
च य्वोर्वत्तिनुर्वे तिरित्यत्रातिप्रसंगवारणार्थं तद्ग्रहणमिति वाच्यम्। अनेकाच इत्यस्यानुवर्तनेनोक्तदोषाभावादिति चेत्। अत्राहुः। दाधर्ति दर्धर्षि बोभूत्विति छन्दसि
निपातनाद्भाषायां यङ्लुकि बोभवीतीत्यादौ भूसुवोरिति गुणनिषेधो न प्रवर्तते। अत एव भाषायामपि यङ्लुक् सिद्ध इति वक्ष्यमाणत्वात्। योयुवतीत्यादावति
प्रसंगवारणाय हुश्नुग्रहणं कर्तव्यमेवेति। हुश्नुग्रहणात्तु ज्ञापकात् भाषायामपि क्वचिद्यङ्लुक् भवतीति भाष्यकाराः। एवं च सार्वधातुकपरयोर्हुश्नुवोरनेका
च्त्वाव्यभिचारादनेकाच इत्यस्यानुवृत्तिरिह किमर्थेत्याशंकायां निरवकाश एवातदनुवृत्त्यभावे हुश्नुग्रहणस्य ज्ञापकत्वासंभवादिति दिक्। इदं वि ध्ये

गाङ् गतौ। गाते। गाते। गाते। इट एत्वे कृते वृद्धिः। गे। लङ् इति। अगे। गेत। गेयाताम्। गेरन्। गासीष्ट। गाङ्कुटादिसूत्रे इङादेशस्यैव ग्रा
ङो ग्रहणं न त्वस्येति नाङित्वाद्घुमास्थेतीत्वं न। अगास्त। आदादिकोयमिति हरदत्तादयः। फले तु न भेदः॥ ३॥ कुङ् घुङ् गुङ् ङुङ् शब्दे
अन्ये तु उङ् कुङ् खुङ् गुङ् घुङ् ङुङ् इत्याहुः। कवते। चुकुवे। घवते। अवते। उवे। वर्णादाङ्गं बलीय इत्युवङ्। ततः सवर्णदीर्घः। ओता।
ओष्यते। ओषीष्ट। ओष्टाङ् वते। ङुङु वे। ङोता॥ ७॥ च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ॥ ११॥ क्लुङ् इत्येके॥ १२॥ रुङ् गतिरेषणयोः। रेषणं हिं
सा। रुरुवे। रविता से॥ १३॥ धृङ् अवध्वंसने। धरते। दध्रे॥ १४॥ मेङ् प्रणिदाने। प्रणिदानम् विनिमयः प्रत्यर्पणं च॥ ॥ ॥

ति। भारद्वाजनियमादिट्। दुद्रोथ। दुद्रुवेति। क्रादित्वान्नित्यमिट् नेट्॥ ॥ गाङ् गतौ। गाते गाते गात इति। पूर्वं शपा सह सवर्णदीर्घे कृते आतो ङितः इति न प्रवर्तते
। आत्मनेपदेष्वनतः इति तु प्रवर्तते इति तु आताम् आथामोस्तु तुल्यरूपमिति भावः। गै गावहे। गामहे। जगे। जगाते। गाता। गाता। गाताम्। गास्व। उत्तमे तु गे। गावहे॥
गामहे। अगात। अगाताम्। अगात। नत्वस्येति। गाते इत्यादौ तङः प्रवृत्त्येङ्कारस्य चरितार्थत्वात्। आदेशङकारस्तु न चरितार्थः स्थानिवद्भावेन ङित्त्वादेव
तङः सिद्धत्वात् इति भावः। आदादिकोयमिति। एवं च गाते। गाथे इत्यादावाताम् आथामोः परतः आतो ङितः इत्यस्य प्रवृत्तिशंकैव नास्ति इति भावः। फले तु न भे
द इति। न च गाते गाथे इत्यादौ शपा सह सवर्णदीर्घे कृतेपि पूर्वस्मात् परस्य विधौ कर्तव्ये स्थानिवत्त्वादतः परत्वेन ङिताम् आकारस्य इय् स्यादिति शंक्यं

भागस्येवद्वित्वप्रसक्तेरतआह।सन्नंतस्येति।ननुसप्तमीपक्षेपिसन्यङोरेवद्वित्वंस्यान्नतुप्रकृतिभागस्य।शपो कारेणैवतुगप्रसक्तो।तितिक्षतेइत्यादिरूपसिद्धेस्तयोरका
रोच्चारणस्यअजादेर्द्वितीयस्येतिद्वित्वार्थत्वात्।यद्यपिनिमित्तस्यकार्यित्वंसौकारेआट।आटश्चेत्यादौलिटिपरतःपूर्वभागमात्रस्यद्वित्वंनसिध्येत्तथाप्यकारोच्चारण
सामर्थ्यात् सन्यङोःकार्यित्वमभ्युपगंतुंशक्यमितिचेत्।मैवं।अकारफलानांबहूनांसत्वात्।तथाहिदित्संबित्समित्यत्रानोपतिकृतेयतोनावरत्वाद्युदात्तःसिध्यतिअकारा
भावेतुअतोहलोरितिएयतीपस्वरोनसिध्येत्।किंचपिपठिषिआस्नणाकुलानीत्यत्राल्लोपस्यस्थानिवत्वात्स्वलंतलक्षणोनुम्नभवत्यकाराभावेतुस्यादेवनुम्।अपिच।पाप
चकइत्यादावल्लोपस्यस्थानिवत्वादतउपधायाइतिवृद्धिर्नप्रवर्तते।अपिच।यस्यहलइत्यत्रयस्येतिसंघातग्रहणमहर्यादित्यादौयलोपव्यावृत्त्यर्थमितिसर्वसंमतं।तथा

रभराभस्ये।आरभते।आरेभे।रब्धा।रप्स्यते॥५॥डुलभष्प्राप्तौ।लभते॥६॥ष्वञ्जपरिष्वङ्गे॥दंशसञ्जस्वञ्जांशपि।६।४।२५॥रञ्जेश्च।६।४।
२६॥एषांशपिनलोपः।स्वजते।परिष्वजते।श्रन्थिग्रन्थिदम्भिस्वञ्जीनांलिटःकित्वंवेतिव्याकरणान्तरम्।दंभञ्जःसस्वजइतिभाष्योदाहरणादेक
देशानुमत्याइहाप्याश्रीयते।सदेःपरस्यलिटीतिसूत्रेस्वञ्जेरुपसंख्यानम्॥अतोभ्यासात्परस्यषत्वन्न।परिषस्वजे।परिषस्वञ्जे।सस्वजिषे।सस्व
ञ्जिषे।स्वङ्क्ता।स्वङ्क्ष्यते।स्वजेत।स्वङ्क्षीष्ट।प्रत्यस्वङ्क्त।प्राक्सितादितिषत्वम्।परिनिविभ्यस्तुसिवादीनांवेतिविकल्पः।एतदर्थमेवोपसर्गा
त्सुनोतीत्येवसिद्धेस्तुस्वञ्जोःपरिनिवीत्यत्रपुनरुपादानम्।पर्यष्वङ्क्त।पर्यस्वङ्क्त॥७॥हद पुरीषोत्सर्गे।हदते।जहदे।हत्ता।हत्स्यते।हदेत।ह
त्सीष्ट।अहत्त॥८॥अथपरस्मैपदिनः।ञिक्ष्विदा अव्यक्ते शब्दे॥१॥स्कन्दिर् गतिशोषणयोः।चस्कन्द।चस्कन्थ।स्कन्ता।स्कंत्स्यति।नलोपः।स्क
द्यात्।इरित्वादङ् वा।अस्कदत्।अस्कांत्सीत्।अस्कान्ताम्।अस्कांत्सुः॥ १ चअपापचिषेत्यादौयलोपोप्यकारफलमितिसन्यङोरितिषष्ठ्येवयुक्ता।एवंहियङ्

लुकिप्रत्ययलक्षणेनयङंतत्वात्द्वित्वंसिध्यति।परसप्तम्यांतुद्वित्वस्यांगकार्यत्वान्नलुमतेतिनिषेधःप्रवर्ततेतिदिक्।दानशानोचेति।आर्जवनिशानार्थाविति भावः।अर्थान्तरेत्वि
ति।धातुपाठोपात्तेगोपनादिरूपेऽर्थेइत्यर्थः।अननुबंधकइति।सानुबंधकस्तेजकेवलेनचरितार्थत्वात्अनुबंधस्य सन्नंतोदिवअकर्त्रगफलात्एयतादपितङ्स्यादितिभावः।एवंचाऽ
नुपूर्वीमात्रसाम्येपिभ्वादयस्सुरादिभ्योभिन्नाएवेतिफलितं।इड्गुणोनेति।यद्यपिहलंताच्चेतिसनःकित्वेनापिगुणाभावःसुसाधस्तथापिइडभावार्थंमुक्तहेतुरेवाश्रयणीयइतिकिं
हेत्वंतराश्रयणेनेतिभावः।कोनेनुअर्थेवज्ञहणपरिभाषयाइक्कोसनएवहलंताच्चेतिसूत्रेग्रहणमितिनासस्यार्थसनःकित्वमित्याहः॥ॐ॥रभराभस्ये।राभस्यंउपक्रमः। ॥

परकरणमिहव्यर्थं। नचात्र दीर्घः स्यादिति वाच्यं। घुमास्थेत्यनेनैव तात्सिद्धो विधिवैयर्थ्यापत्तेः। नचैवमपि प्लुतः स्यादिति वाच्यं। प्लुताः प्लुतप्रसंगे प्लुतश्च विषये स्मृत इति सिद्धान्तादिति। डीङ् विहायसा आकाशेन। विहायसामिति पाठस्तु नाकर इत्याहुः॥ ॐ ॥ ऋतइद्धातोः। किरति। गिरति। —— कीर्णः। गीर्णः। स्तीर्णः। धातोः किंमातॄणां। इत्वोत्वाभ्यामिति। परत्वात्गुणवृद्धी भवत इति वक्तव्ये किमिदं वार्तिकमिति चेदत्राहुः। परादन्तरंगं प्रबलमिति इत्वप्राप्ते वार्तिकमिदमारब्धमिति। वृतो वा इहार्द्धधातुकस्येडित्यत इडित्यनुवर्तते ग्रहोलिटीत्यतो लिटि दीर्घ इति च तदाह। इटो दीर्घो वेत्यादि। सिचि च। नलिङीत्यतो नेत्यनुवर्तनादाह। इटो दीर्घो नेति। मा

ऋतइद्धातोः।७।१।१००॥ ऋदन्तस्य धातोरङ्गस्य इत्स्यात्। इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन। तरति। ऋच्छत्यॄतामिति गुणः। तृफलेत्येत्वम्। तेरतुः। तेरुः। वृतो वा।७।२।३८॥ वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वास्यान्नतु लिटि। तरीता। तरिता। अलिटीति किम्। तेरिथ। हलि चेति दीर्घः तीर्यात्। सिचि च परस्मैपदेषु।७।२।४०॥ अत्र वृत इटो दीर्घो न। अतारिषाम्॥ २३॥ अथाष्टावनुदात्तेतः। गुप गोपने॥ १॥ तिज निशाने २ मान पूजायां॥ ३॥ बध बन्धने। गुप्तिज्किद्भ्यः सन्।३।१।५॥ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य।३।१।६॥ सन्त्रयो नैभ्यः सन्स्यात्मानादीनामभ्यासस्येकारस्य दीर्घश्च। गुपेर्निन्दायां। तिजेः क्षमायाम्। कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च। मानेर्जिज्ञासायाम्। बधेश्चित्तविकारे। दानेरार्जवे। शानेर्निशाने। सनाद्यन्ता इति धातुत्वम्। सन्यङोः।६।१।९॥ सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। अभ्यासकार्यम्। गुपिप्रभृतयः किद्भिन्नाः निन्दाद्यर्थ एवानुदात्तेतो दानशानौ च स्वरितेतौ। एते नित्यसन्नन्ताः। अर्थान्तरे त्वनद्बन्धकाश्चुरादयः। अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ्। धातोरित्यविहितत्वात्सनो नार्द्धधातुकत्वम्। तेनेड्गुणौ न। जुगुप्सते। जुगुप्साञ्चक्रे। तितिक्षते। मीमांसते। भषभावः। चर्त्वम्। बीभत्सते॥ ४ ॥ ॥ ९

नधा आभ्यासस्येति छेदः। अभ्यासस्य विकार आभ्यासः। सन्वान्तु सन्यत इतीत्वमेव। यदि तु ह्रस्व इत्येव गृह्येत तर्हि तित इति निर्देशो व्यर्थः स्यात्तदेतदाह। अभ्यासेकारस्येति। वृत्तिकारास्तु पनिबद्धार्थान्दर्शयन्ति। गुपेर्निन्दायामित्यादिना सन्यङोः। सप्तमीमाश्रित्य सनियङि च परे इति व्याख्यायां प्रतीषिषति अटाट्यते इत्यादि न सिध्येत्। सन्यङोः प्रकृति

तिसूत्रं त्यज्यतामिति चेत्। अत्राहुः। आदेशावयवस्य षत्ववारणाय आदेशस्येत्यंशस्तावश्यकः। तद्ग्रहणोक्तेधातुभिन्नसकारस्य चेद्भवति आदेशरूपस्यैवेति नियमप्रसं
गवारणाय प्रत्ययग्रहणमपि कर्तव्यमेवेति॥ ❁ ॥ अवात्सीदिति॥ वद व्रजेति वृद्धिः। सः स्यार्धधातुके इति तः। अस्ति सिचइतीट्। उच्चारणार्थ इति। इत्संज्ञाया मिदित्त इति तु मुम्स्यादि
तिभावः। उवायेति। ग्रहिज्येत्यत्र वयिग्रहणाद्वेञ इति निषेधोऽत्र न प्रवर्तत इत्याहुः। ग्रहिज्यावयि व्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च। तिङि तिवये कृत्वाहरणं नास्ति

अवात्सीत्। अवात्ताम्॥१२॥ वेञ् तन्तुसन्ताने। वयति। वयते। वेञो वयिः। २।४।४१। वा स्याल्लिटि। इकार उच्चारणार्थः। उवाय। ग्रहिज्यावयिव्य
धिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च। ६।१।१६। एषां किति ङिति च सम्प्रसारणं स्यात्। यकारस्य प्राप्ते। लिटि वयो यः। ६।१।
३८। वयो यस्य सम्प्रसारणं न स्याल्लिटि। ऊयतुः। ऊयुः। वश्चास्यान्यतरस्यां किति। ६।१।३९। वयो यस्य वो वा स्यात्किति लिटि। ऊवतुः। ऊवुः। व
यस्तासावभावात्थलि नित्यमिट्। उवयिथ। स्थानिवद्भावेन णित्त्वात्तदृ। ऊयोऊवे। वयादेशाभावे। वेञः। ६।१।४०। वेञो न सम्प्रसारणं स्याल्लि
टि। ववौ। ववतुः। ववुः। वविथ। ववाथ। ववे। वाता। ऊयात्। वासीष्ट। अवासीत्॥१३॥ व्येञ् संवरणे। व्ययति। न व्यो लिटि। ६।१।४६॥ व्येञ आत्त्वं
न स्यात् लिटि। वृद्धिः। परमपि हलादिःशेषं बाधित्वा यस्य सम्प्रसारणम्। उभयेषां ग्रहणसामर्थ्यात्। अन्यथा वच्यादीनां ग्रस्यादीनां चानुव
त्त्यैव सिद्धे किं तेन। विव्याय। विव्यतुः। विव्युः। इडत्त्यर्तीति नित्यमिट्। विव्ययिथ। विव्याय। विव्ये। व्याता। वीयात्। व्यासीष्ट। अव्यासीत्। अव्यास्त
॥१४॥ ह्वेञ् स्पर्धायां शब्दे च। अभ्यस्तस्य च॥ ६।१।३३॥ अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात्। ततो द्वित्वं॥ जुहाव। जुहुवतुः। जु
हुवुः। जुहोथ। जुहविथ। जुहुवे। ह्वाता। हूयात्। ह्वासीष्ट॥ ॥ ९ तिनुवचिस्वपियजादीनामिति सिद्धं। यजादिषु वेञः पाठात्। अत ए
वाभ्याससंप्रसारणमपि सिद्धं। वेञ इति संप्रसारणनिषेधस्तु लिटि वयो यः इति निषेधारंभान्न प्रवर्तते। तस्मात् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थमेवे
ति बोध्यं। वश्चास्य। अस्येत्यनेन वयो य इति परामृश्यते। तदाह। वयो यस्येति। वो वा कितीत्येव सुवचं। लिटि वयो य इति प्रकृतत्वात्। उपदेशेऽत्वत इति निषे
धमाशंक्याह। वयस्तासावभावादिति। ननु स्थानिनस्तासो विद्यमानत्वात् स्थानिवद्भावेनास्यापि विद्यमानत्वं सुलभमिति चेत्। अत्राहुः। शास्त्रीयकार्ये हि

लिटि रेभे रेभाते। लुङि। अरब्ध। अरप्साताम्। डुलभष्। इङ्गितः। त्रिः। लप्स्यते। मेथिते मिदादिभ्यः। त्रपूष्। लभ्। लिटि। लेभे। लुङि। अलब्ध ॥ ॥ वेः स्कन्देर् निष्ठायां। सिवादीनामि
त्यतो वेति प्रवर्तते। अषोपदेशत्वात् अप्राप्ते विभाषेयं। माधवादिग्रन्थानुरोधेनाह। कृत्येवेदमिति। प्राचा तु विष्कन्ता इत्युदाहृतं तत्र मूलं मृग्यमिति भावः। न सम्बध्यत इति। अ

वेः स्कन्देरनिष्ठायाम्। ८।३।७३॥ षत्वम्वा स्यात्। कृत्येवेदम्। अनिष्ठायामिति पर्युदासात्। विष्कन्ता। विस्कन्ता। निष्ठायान्तु। विस्कन्नः। परेश्च। ८।३।
७४॥ अस्मात् परस्य स्कन्देः सस्य षो वा। योगविभागादनिष्ठायामिति न सम्बध्यते। परिष्कन्दति। परिस्कन्दति। परिस्कन्नः। परिष्कण्णः। षत्वपक्षे णत्व
म्। न च पदद्वयाश्रयतया बहिरङ्गत्वात् षत्वस्यासिद्धत्वम्। धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात्। पूर्वं धातुरुपसर्गेण युज्यते। ततः साधने
नेति भाष्यं। पूर्वं साधनेनेति मतान्तरे तु न णत्वं ॥ २॥ यभ मैथुने। येभिथ। ययब्ध। यब्धा। यप्स्यति। अयाप्सीत् ॥ ३॥ णम प्रह्वत्वे शब्दे च। नेमिथ। ननन्थ। नन्ता। अनंसीत्। अनंसिष्टाम् ॥ ४॥ गम्लृ सृप्लृ गतौ। इषुगमियमां छः। ७।३।७७॥ एषां छः स्यात् शिति परे। गच्छति। जगाम। जग्मतुः। जग्मुः।
जगमिथ। जगन्थ। गन्ता। गमेरिट् परस्मैपदेषु। ७।२।५८॥ गमेः परस्य सकारादेरार्धधातुकस्य इट् स्यात्। गमिष्यति। लृदित्वात् अङ्। अनङीति पर्युदासान्नोपधालो
पः। अगमत्। सर्पति। ससर्प्य। अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्। ६।१।५९॥ उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे। स्रप्ता।
सर्प्ता। स्रप्स्यति। सर्प्स्यति। असृपत् ॥ ६॥ यम उपरमे। यच्छति। येमिथ। ययन्थ। यन्ता। अयंसीत्। अयंसिष्टाम् ॥ ७॥ तप सन्तापे। तप्ता। अताप्सीत्। नि
सत्तपतावनासेवने। ८।३।१०२॥ षः स्यात्। आसेवनम्पौनःपुन्यन्ततोऽन्यस्मिन् विषये। निष्टपति ॥ ८॥ त्यज हानौ। तत्यजिथ। तत्यक्थ। त्यक्ता। अत्याक्षी
त् ॥ ९॥ षञ्ज सङ्गे। दंशसञ्जस्वञ्जां शपीति नलोपः। सजति। सङ्क्ता ॥ १० ॥ दृशिर् प्रेक्षणे। पश्यति ॥ ॥ ॥ ॥ ॥

त एव तिङन्तेऽपि षत्वमुदाहरन्ति। परिष्कन्दतीति। जग्मतुरिति। गमहनेत्युपधालोपः। णम प्रह्वत्वे। केचित्तु समुदितं पठन्ति तत् प्रामादिकमित्याहुः। अनुदात्तस्या
देव उपदेशे। शितीत्यत उपदेशे इत्यनुवर्तते। उपदेशे किं ॥ सृपं तमुनि उदात्तः ऋदुपधः किं कर्तीम लिति किं ससर्प अकितीति किं ॥ ॥ ॥

संप्रसारणं नेति। अन्यथा शुश्वापेत्यादि स्यादिति भावः। स्वपतेः। अलोऽन्त्यपरिभाषालभ्यमाह। रकारस्येति। पररूपमिति। अतो लोपस्तु न भवति। आर्द्धधातुकोपदेशे यदकारान्तमिति व्याख्यातत्वात्। स्यडिति। लघूपधगुणापेक्षया अन्तरङ्गत्वादिति भावः। अस्वपीदिति। नन्विह अन्तरङ्गत्वाद्गुणाऽयादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधो भवेत् इति किमनेन णिश्विग्रहणेनेति चेत्। अत्राहुः। न सिच्यन्तरङ्गमस्तीति ज्ञापनार्थं णिश्विग्रहणं। तेन चिरिणोति जिरिणोत्योर्यङ् लुगन्तानां चिनिप्रभृतीनां च सिचि बहिरङ्गा वृद्धिरेव भवति। अचिरायीत्। अजिरायीत्। अचेचायीत्। अनेनायीत् इति। नेनेति। उक्तं च वार्तिककृता। कासनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति। चुलुम्पतीति। लुम्पतीत्यर्थः। चुलुम्पलोप इति कविकल्पद्रुमे उक्तत्वात्॥ इति स्वादयः॥ ॐ ॥ ऋतेरीयङ्। तान्तोऽयं धातुरिकानिर्दिष्टो न त्वि

ऋतेरीयङ्। ३।१।२९॥ ऋतिः सौत्रो धातुस्तस्मादीयङ् स्यात्तदर्थो जुगुप्सायामयं धातुरिति बहवः। कृपायां चेत्येके। सनाद्यन्ता इति धातुत्वं। ऋतीयते। ऋतीयांचक्रे। आयादय आर्द्धधातुके वेतीयङ् भावे शेषात्कर्तरिपरस्मैपदं। आनर्त। अर्तिष्यति। आर्तीत्। अद भक्षणे। द्वौ परस्मैपदिनौ। अदिप्रभृतिभ्यः शपः। २।४।७२॥ लुक्स्यात्। अत्ति। अत्तः। अदन्ति। लिट्यन्यतरस्यां। २।४।४०॥ अदो घस्लृ वा स्याल्लिटि। जघास। गमहनेत्युपधालोपः। तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधात् घकारस्य चर्त्वं। शासिवसीति षत्वं। जक्षतुः। जक्षुः। घसस्तासावभावात्थलि नित्यमिट्। जघसिथ। आद। आदतुः। इडत्यर्तीति नित्यमिट्। आदिथ। अत्ता। अत्स्यति। हुझल्भ्यो हेर्धिः। ६।४।१०१॥ होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्।

कारान्तः। केचित्तु चृतश्चेति निर्देशात्। केचित्तु ईयङ् इति दीर्घोच्चारणात्तान्तोऽयमिति ज्ञायते इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादित्याहुस्तच्चिन्त्यम्। इदन्तत्वे त्विरनेकाच इतियणा सवर्णदीर्घस्य बाधात्। न च ऋतेर्यङ् विधानसामर्थ्यादेवेति दीर्घोपपत्तेरीयङ् विधानं तान्तत्वे लिङ्गं भवत्येवेति वाच्यं। यङ् विधौ सन्यङो रिति द्वित्वापत्तेः। कृपायां चेति। अत एव ऋतीया च घृणीया च घृणार्थकाः इति जुगुप्सा करुणा घृणा इति चामरः। हुझल्भ्यो हेर्धिः। जुहुधि घसि भसो हेलीत्यतो हलीत्यनुवर्त्य हलादेरिति व्याख्यानात् रुदिहि स्वपिहि इत्यादावि डादेर्हेर्धिर्न भवति। अत्तादित्यत्र तु षित्वात्परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्वं तु सकृद्गताविति न्यायान्नेत्याहुः। अन्ये तु हेर्धिरित्यत्र स्थान्यादेशयोर्द्वयोरपि इकार उच्चारणार्थ इति हकारस्य धकार आदेशः। तेन हलीत्यनुवृत्तिर्न कर्तव्या। नापि तातङो धित्वप्रसङ्ग इति सङ्क्षेपः।

स्थानिवद्भावो न तु लौकिके अचस्तास्वदिति निषेधस्य शास्त्रीयत्वेपि सोऽत्र नातिदिश्यते। अचइत्युक्तेरल्विधित्वादिति। वेञः। लिटि किं। उतं उतवान्। नव्यो लिटि। लिटि किं
व्याता। व्यास्यति। हलादिशेषं बाधित्वेति। हलादिशेषे तु वस्य संप्रसारणं स्यादिति भावः। अजंतोऽकारवान्वा यस्तास्यनिट् थलि वेड् भवतीत्याशंकायामाह। नित्यमि
डिति। वीयादिति। संप्रसारणे अकृत्सार्वेति दीर्घः। ह्वेञ्शब्द इति सामान्योक्तावपि आकाररूपशब्द एवात्र गृह्यते इत्याहुः। तथा च माघे। पातोऽन्य ॥
तः श्रुत कृतस्वरमाशु दूरादुद्बाहुना जुहुविरे मुहुरात्मवर्ग्या इति कर्मणि प्रयोगः। ह्वः संप्रसारणमभ्यस्तस्य चेति सूत्रं योगविभागेन व्याचष्टे। अभ्यस्तस्य चेति
। इत्ययोगस्तु णौ च संश्चङोर्विषये प्रवर्तते। जुहावयिषति। अजूहवत्। अभ्यस्तीभविष्यतो ह्वेञ इति। अभ्यस्तनिमित्ते प्रत्यये परे द्विर्वचनात्प्रागेव ह्वेञः संप्र

लिपिसिचिह्वश्च। ३।१।५३॥ एभ्यश्च्लेरङ् स्यात्। आत्मनेपदेष्वन्यतरस्याम्। ३।१।५४॥ आतो लोपः। अह्वत। अह्वत। अह्वास्त॥ १५॥ अथ
द्वौ परस्मैपदिनौ। वद व्यक्तायां वाचि। अकुं वदति। उवाद। ऊदतुः। उवदिथ। वदिता। उद्यात्। वदव्रजेति वृद्धिः। अवादीत्॥ १॥ टुओश्वि
गतिवृद्ध्योः। श्वयति॥ विभाषा श्वेः॥ ६।१।३०॥ श्वयतेः सम्प्रसारणं वा स्यात्लिटि यङि च। शुशाव॥ शुशुवतुः। श्वयतेर्लिट्यभ्यासलक्षण
प्रतिषेधः। तेन लिट्यभ्यासस्येति संप्रसारणं न। शिश्वाय। शिश्वियतुः। श्वयिता। श्वयेत्। शूयात्। जृस्तम्भिवित्यङ्वा। श्वयतेरः। ७।४।१८॥
श्वयतेरिकारस्य अकारः स्यादङि। पररूपम्। अश्वत्। अश्वताम्। अश्वन्। विभाषा धेट्श्व्योरिति चङ्। इयङ्। अशिश्वियत्। ह्म्यन्तेति न वृ
द्धिः। अश्वयीत्। चत। यजादयो वृत्ताः। भ्वादिस्त्वाकृतिगणः। तेन चुलुम्पतीत्यादिसंग्रहः ॥ २॥ इति भ्वादयः ॥ ॥

सारणमिति फलितोऽर्थः। अभ्यस्तमस्यास्तीति अभ्यस्तः सनादिस्तस्य यो ह्वेञ् तत्र कृतिभूतस्तस्येत्यादि व्याख्यानस्य स्वीकारात्। तेन जिह्वायकीषिषतीत्यत्र
ह्वेञः संप्रसारणं न भवति। एवं लोहित्वनिमित्तत्वाभावात्। अत एव णिचो द्वित्वनिमित्तत्वं नेति ह्वः संप्रसारणमिति योगविभागः क्रियते एतच्च आकरे स्पष्टं॥ ॥
लिपिसिचि॥ लिप उपदेहे। षिच क्षरणे। अलिपत्। असिचत्। अकुं वदतीति। अकुं इत्यस्य वद्योगे गतित्वाद्धातोः प्राक्प्रयोगः। विभाषा श्वेः। लिटि यङि चेति। लि
ड्यङोश्चेति पूर्वसूत्रमिहानुवर्तत इति भावः। उभयत्र विभाषेयं लिटि शो। अत्र सादेर्नित्यं प्राप्ते णलादावप्राप्ते यङि शोत्वप्राप्तविभाषा। शोशूयते। शेश्वीयते ॥

सि॰कौ॰
या॰त॰
ति॰उ
५७

नेनितित्र नेति इणिनिषेधाज्झलि क्विति न लोपः। लोपः स्यादिति। अतोऽन्त्यस्येत्यंत्यस्येति भावः। अनुनासिकांताऽनुदात्तोपदेशान्दर्शयति। यमिरमीति। तनोत्यादीनप्यनुना
सिकांतान्दर्शयति। तत्र क्षणु क्षिणु इति। करोति वर्जिताः तनोत्यादयो नव तन्मध्ये सनोते र्जनसनखनामित्यात्वं वक्ष्यतीति न स परिगणितः। ततः। क्षतः। क्षित इत्यादीन्यु
दाहरणानि। तनोत्यादीनामुदित्वात् क्त्वायामिड्विकल्पनान्निष्ठायां नेट्। अनुनासिकांतानामिति किं। शक्तः। रुद्रः। झलीति किं। गम्यते नम्यते। क्ङितीति किं। गंता मंता
जघान जघ्नुरिति। यद्यप्यत्राभ्यासाच्चेत्यस्यापि प्रवृत्तिरस्ति तथाप्यंतरंगत्वात् होहंतेरित्युपन्यस्तं। आभीयतयेति। सन्निपातपरिभाषयापि हे लुङ्नेति वक्तुंश

दुह प्रपूरणे दोग्धि। दुग्धः। धोक्षि। दुग्धे। धुक्षे। धुग्ध्वे। दोग्धु। दुग्धि। दोहानि। धुक्ष्व। धुग्ध्वं दोहै। अधोक्। अदोहं। अदुग्ध। अधुग्ध्वं अ
धुक्षत। अधुक्षत। लुग्वा दुहेति लुक्पक्षे तथा स्यध्वंवहि षु लङ्वदपि॥ दिह उपचये। प्रणिदेग्धि। दिग्धे। लिह आस्वादने। लेढि। लीढः। लि
हंति। लेक्षि। लीढे। लिक्षे। लीढ्वे। लेढु। लीढि। लेहानि। अलेट्। अलिक्षत। अलीढ। अलिक्षावहि। अलिह्वहि॥ चक्षिङ् व्यक्तायां वाचि
अयं दर्शनेऽपि। इकारोऽनुदात्तो युजर्थः। विचक्षणः प्रथयन्। नुमत्तु न। अंते ॰ दित इति व्याख्यानात्। ङकारस्तु अनुदात्तेत्व प्रयुक्त मात्मने
पदमनित्यमिति ज्ञापनार्थः। तेन स्फायन्निमीक संधीत्यादि सिध्यति। चष्टे। चक्षाते। आर्द्धधातुके। चक्षिङः ख्याञ्। २।४।५४॥ वालिटि।
२।४।५५॥ अत्र भाष्ये ख्शादिरयमादेशः। असिद्धकांडे शस्य यो वेति स्थितं। नित्वात्पदद्वयं। चख्यौ। चख्ये। चक्शौ। चक्शे। चयौ द्विती
यार्द्धितत्र न चर्त्वस्यासिद्धत्वात्। चचक्षे। ख्याता। क्शाता। ख्यास्यति। ख्यास्यते। क्शास्यति। क्शास्यते। अचष्ट। चक्षीत। ख्यायात्
ख्येयात्। क्शायात्। क्शेयात् ॥

क्यमिति केचित् तन्मंदं। अतोहेरित्यारंभसामर्थ्यात्तस्या अप्रवृत्तेरिति नव्याः। वधादेशोऽअदंत इति तेनआ ११ [illegible]
देशोपदेशेऽनेकाच्त्वात् अवधीदित्यत्रैकाच इतीण्निषेधाप्रवृत्ताविडादौ सिच्यतो हलादेरिति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्त्वान्नेति भावः॥ ः ॥
दुह प्रपूरणे। प्रपूरणं त्याजनं। लङ्वदपीति। अदुग्ध। अदुग्धाः। अधुग्ध्वं। अदुह्वहि॥ दिह। उपचयो वृद्धिः। प्रणिदेग्धीति। नेर्गदेति णत्वं। अलिक्षतेति। शलइ
गुपधेति क्सः। अलिक्षाता। अलिक्षत। अलीढेति। लुग्वा दुहेति वा लुक्। अलीढाः। अलीढ्वं। चक्षिङ् दर्शनेपीति। विश्वा रूपा अभिचष्टे। शचीभिरित्यत्र दर्शना

अदः सर्वेषां। अङ्गार्ग्यगालवयोरित्यत्र अडित्यनुवर्त्तते। गार्ग्यगालवयोरित्यस्यात्रानुवृत्तिशंकां निवारयितुं सर्वेषांग्रहणं। लुङ् सनोः जिघत्सति। प्रणिहंतीति। ने
र्गदेति णत्वं। अनुदात्तोपदेशा यद्यत्र एतेषां अनुनासिकलोप इति व्याख्यायेत तदा मन्यतेर्नमनहमिहमुचमस्जादीनां च अनेत्यस्यापि लोपः स्यात् तथा च मतः

अदः सर्वेषां। ७।३।१००॥ अदः परस्यापृक्तस्य सार्वधातुकस्याडागमः स्यात् सर्वेषां मतेन। आदत्। आत्तां। आदन्। आदः। औत्तं। आत्त। आदं। आ
द्व। आद्म। अद्यात्। अद्यातां। अद्युः। अद्यास्तां। अद्यासुः। लुङ् सनोर्घस्लृ। २।४।३७॥ अदो घस्लृ स्याल्लुङि सनि च। लृदित्वादङ्। अघसत्। हन हिंसा
गत्योः। प्रणिहंति। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। ६।४।३७॥ अनुनासिकेति लुप्तषष्ठीकं। वनतीतरेषां वि
शेषणं। अनुनासिकांतानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः। तनुक्षणुक्षिणुऋ
णुतृणुघृणुवनुमनुतनोत्यादयः। हतः। घ्नंति। वमोर्वा। ८।४।२३॥ उपसर्गस्थान्निमित्तात्परस्य हंतेर्नस्य णो वा स्याद्वमयोः परतः। प्रहण्मि। प्रह
न्मि। प्रहण्वः। प्रहन्वः। हो हंतेर्ञ्णिन्नेषु इति कुत्वं। जघान। जघ्नतुः। जघ्नुः। अभ्यासाच्च। ७।३।५५॥ अभ्यासात्परस्य हंतेर्हस्य कुत्वं स्यात्। जघनिथ। जघंथ। हंता।
ऋद्धनोः स्ये इतीट्। हनिष्यति। हंतु। हतात्। घ्नंतु। हंतेर्जः। ६।४।३६॥ हौ परे। आभीयतया जस्यासिद्धत्वान्न हेर्लुक्। जहि। हनानि। हनाव। हनाम। अहन्। अ
हतां। अघ्नन्। अहनं। आर्द्धधातुके। २।४।३५॥ इत्यधिकृत्य॥ हनो वध लिङि। २।४।४२॥ लुङि च। २।४।४३॥ वधादेशोऽदंतः। आर्द्धधातुक इति वि
षयसप्तमी। तेनार्द्धधातुकोपदेशेऽकारांतत्वादतो लोपः। वध्यात्। वध्यास्तां। आर्द्धधातुके किं। विध्यादौ हन्यात्। हंतेरिति णत्वं प्रहण्यात्।
अवधीत्। अथ चत्वारः स्वरितेतः॥ द्विष अप्रीतौ। द्वेष्टि। द्विष्टे। द्वेष्टा। द्वेक्ष्यति। द्वेष्टु। द्विष्टात्। द्विड्ढि॥ द्वेषाणि। द्वेषै। द्वेषावहै। अद्वेट्।
द्विषश्च। ३।४।११२॥ लङो झेर्जुस् वा स्यात्। अद्विषुः। अद्विषन्। अद्वेषं। द्विषीत। द्विक्षीष्ट। अद्विक्षत् ॥ ॥ ॥ ॥

नतः नङ्मीढः प्रत्तः मग्न इत्यादिन सिध्येत् अत आह। लुप्तषष्ठीकमिति। वनतीतरेषामिति। वनतेरव्यभिचारात् द्विशेषणं व्यर्थमिति भावः। 

सि॰कौ॰
टी॰त॰
ति॰उ॰
५९

र्य इत्यर्थः। इह काशिकादौ जनेरुदाहरणमुक्तं। तथाहि। जनीप्रादुर्भाव इत्यस्मात् श्यनः श्लौ दसोऽनुकृ उपधालोपाभावश्च। जनिषे। जनिध्वे। जनिष्व। जनिध्वं।
जंनजननेइति श्रुविकरणस्याप्युपधालोपे व्यतिजज्ञिये। व्यतिजज्ञिध्वे। कर्तरि कर्मव्यतिहार इति तङ्। नमोवाकमिति। नमस्ते रुद्र मन्यव इत्यादिनमो वचनं।
वचेर्घञ्। चजोरिति कुत्वं। ववसे इति। वादित्वादेत्वाभ्यासलोपौ न। णिसिंतु वने। वभ्रामेति। तृम् विसर्जनीये तिसूत्रे चान्तिपदसंज्ञयादिभिरुक्तं तुमादिभिः
त्येकं व्यवाये षत्वमिष्यते तेन निंस्से निंस्व इत्यत्र न भवतीति। तच्चास्य सांतत्वेऽप्युज्यते। सांतत्वेन नस्य द्वित्वे षढो रिमिकत्वेकवर्गात्परत्वेन षत्वं दुर्वारमिति प्रस्यु
दाहरणमिदं न संगच्छत इति भावः। णिजिशुद्धौ अनिट्कमणिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति। निंजितेति॥ ॥ शिजि अव्यक्ते

शिजि अव्यक्ते शब्दे। शिंक्ते। पिजि वर्णे। संपर्चन इत्येके। उभयत्रेत्यन्ये। अवयव इत्यपरे। अव्यक्ते शब्द इतीतरे। पिङ्क्ते। पृजी इत्येके
पृंक्ते। वृजी वर्जने। दंत्योष्ठ्यादिः। ईदित्। वृंक्ते। वृजाते। वृक्षो ईदित् इत्यन्ये। वृङ्क्ते। पृची संपर्चने। पृक्ते। षूङ् प्राणिगर्भविमोचने। सूते
सुषुविषे। सोता। सविता। भूसुवोरिति गुणनिषेधः। सुवै। सविषीष्ट। सोषीष्ट। असविष्ट। असोष्ट। शीङ् स्वप्ने। शीङः सार्वधातुके गुणः।
। ७।४।२१। क्ङिति चेत्यस्यापवादः। शेते। शयाते। शीङो रुट्। ७।१।६। शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे। शेध्वे। शे
ये। शेवहे। शिश्ये। शयिता। अशयिष्ट। अथ कौत्यंताः परस्मैपदिनः। उर्णुञ्भयपदी। यमिश्चरोऽभिस्त्रणोच ॥ ॥ ॥

शब्दे। क्तप्रत्यये शिंजितं। आवश्यकणिन्यंतान्ङीपि शिंजिनी। भूषणानां तु शिंजितं मौर्वी ज्या शिंजिनी गुण इति चामरः। सुषुविषे इति। स्वरतिसूतीति वि
कल्पं वाधित्वा श्र्युकः किंतीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। शीङ् स्वप्ने। क्ङिति चेत्यस्येति। अन्यत्र सार्वधातुकार्द्धधातुकयोरित्यनेन सिद्ध इति भावः॥
शीङो रुट्। भ्रांत इत्यतो ग इत्यनुवर्तते। अदभ्यस्तादित्यतोऽदिति च तथा चेष्टानुरोधेनाऽदिति प्रथमांतस्य षष्ठ्यंतत्वमाश्रित्य व्याचष्टे। झादेशस्याऽत इति। गस्ये
व रुडागमे तु अदादेशो दुर्लभ इत्यदित्यस्यानुवृत्तिः कृता। णिस्फ्रेति। एरनेकाच इति यण्। शेतां। शयातां। शेरतां। शेष्व शयाथां। शेध्वं ॥ ॥

पसिद्धेः क्तीतिव्यर्थं नचदीर्घस्येयङि दीर्घविधानंव्यर्थमितिवाच्यं। ईयतुः ईयुरित्यत्रवाणोदंगंवलीयइतियणिकृतेदीर्घविधेरावश्यकत्वात्। किंचालिशी त्यनुवर्तनमपीहव्यर्थमेवव्यावर्त्याभावादिति। एता। एष्यति। एतु। इतात्। इत्तां। यंतु। इहि। उत्तमेतु अयानि। अयाव अयाम।। लङ्॰ मध्यमे। ऐः। ऐत्तं। ऐत। उत्तमेत्वायोऐव। ऐम। ईयादिति। अकृत्सार्वेतिदीर्घः।। ॐ ।। एतेर्लिङि॰। इहआई धातुकइतिस्वरूपकथनार्थं प्रक्षिप्तं। क्तिति लिङीत्येतावत्तैवेष्टसिद्धेः उभयतआश्रयइति। अंतादिशब्दो अवयवविशेषवाचिनोतत्रयदिपूर्वस्यअवयवबुध्याएकादेशआश्रियतेतदातस्यैवपरस्यकथमादिवद्भावः स्यात्एवंपरस्यादिव

एतेर्लिङि॰।। ७।४।२४।। उपसर्गात्परस्यइणोऽणोह्रस्वः स्यादार्द्धधातुकेकिति लिङि॰। निरियात्। उभयतआश्रयणेनांतादिवत्। अभीयात्। अणः किं। समेयात्। समीयादितिप्रयोगस्तुभौवादिकस्य।। इणोगालुङि॰।। २।४।४५।। गातिस्थेतिसिचोलुक्। अगात्। अगातां। अगुः। इङ्॰ अध्ययने। नित्यमधिपूर्वः। अधीते। अधीयाते। अधीयते। गाङ्लिटि। २।४।४९।। इङोगाङ्॰ स्याल्लिटि। लावस्थायांविवक्षितेवा अधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अध्ययै। गुणायादेशयोः कृतयोरुपसर्गस्ययण्। पूर्वंधातुरुपसर्गेणेतिदर्शनेऽन्तरंगत्वाद्गुणात्पूर्वंसवर्णदीर्घः प्राप्तः। शोरध्ययनेवृत्तमितिनिर्देशान्नभवति। अध्येत। परत्वादियङ्। ततआट्। वृद्धिः। अध्ये यातां। अध्येयत।। अध्येयि। अध्येवहि। अधीयीत। अधीयीयातां। अधीयीध्वं। अधीयीय। अध्येषीष्ट।। विभाषालुङ्लृङोः।। २।।४।। ५।। ।। इङोगाङ्वास्यात्।। लुङ्लृङोः।। ११ त्वेपूर्वस्यांतवद्भावोनस्यादेकस्योभयापेक्ष्ययापारतंत्र्यविरोधादितिभावः। नन्वेवंरणोर्ऽत्यस्यसुप्तिङंतमितिपद त्वंनस्यात्परादित्वेरामेतिप्रकृतेरभावात्। यस्मात्प्रत्ययविधिस्तदादेस्तदंतस्यग्रहणमितिस्वीकाराद्रामइत्यस्यप्रकृतित्वात्पूर्वांतत्वेतुपरस्त्रप्रत्ययाभावात्अत्राहु। पूर्वपरसंज्ञापश्चादेकादेशइतिनोक्तदोषः। इहत्वत्तायकंसुपिस्थितिसमाइति। विध्यादोसमीपादितिनभवत्येव। आशीर्लिङि॰ उअकृत्सार्वेतिदीर्घेकृतेपिह्रस्वेनभाव्यमित्याशंक्याह। भौवादिकस्येति। इटकिटकटीत्यत्रप्रश्लिष्टस्यईधातोराशीर्लिङिइदंरूपं। वीगतीत्यत्रईकारोपिधात्वंतरंप्रश्लिष्यतइतिमतेतुविध्यादिलिङ्यपिभवत्येवेतिबोध्यं। गाङ्लिटि। लावस्थायामितिवार्तिकमतेएकादेशात्प्रागेवगाङादेशेद्विर्वचनेचीतिसूत्रंनप्रवर्ततेद्वित्वनिमित्ताचोऽभावात्।।

उतो वृद्धिः। नाभ्यस्तस्याचि पितीत्यतो निषेधानुवृत्तेराह न त्वभ्यस्तस्येति। उतः किं। एति। एषि। लुकीति किं। सुनोति। जुहोति। हलि किं। यवानि। यवाव। आडुत्तमस्येत्या
डागमः पित्। पिति किं। युतः। रुतः। नाभ्यस्तस्येति किं। योयोति। रोरोति। सार्वधातुके किं। यूयात्। न चात्र ङित्त्वं पिन्नेति व्याख्यानान्निर्वाहः। शंक्यः। किदाशिषीति याशु
टः कित्त्वात्। केचित्तु यूयात् स्नुयात् इत्यादावपि ङिच्च पिन्नेत्यनाश्रित्य व्याचक्षते संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति। अन्यथा उत ओदित्येव वदेदिति। तु
रुस्तुवः सौत्रो धातुरिति वक्ष्यति। अपिदर्थमिति। एभ्यः परस्यापितः सार्वधातुकस्येति प्राचो व्याख्यानं प्रामादिकं। रुवीतः। स्तुवीत इत्याद्यसिद्ध्यापत्तेरिति भावः।

उतो वृद्धिर्लुकि हलि। ७।३।८९॥ लुग्विषये उकारस्य वृद्धिः स्यात् पिति हलादौ सार्वधातुके। न त्वभ्यस्तस्य। यौति। युतः। युवंति। यौषि। यावा। यविता।
युयात्। इह उतो वृद्धिर्न। भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात्। विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात्। यूयात्। अयावीत्। रुश
ब्दे। तु रुस्तु शम्यमः सार्वधातुके। ७।३।९५॥ एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड् वा स्यात्। नाभ्यस्तस्येत्यतोऽनुवृत्तिसंभवे पुनः सार्वधा
तुकग्रहणमपिदर्थं। रवीति। रौति। रुवीतः। रुतः। हलादेः किं। रुवंति। तिङः किं। शाम्यति। सार्वधातुके किं। आशिषि रूयात्। विध्यादौ तु
रुयात् रुवीयात्। अरावीत्। अरविष्यत्। तु इति सौत्रो धातुः। गतिवृद्धिहिंसासु। अयं च लुग्विकरण इति स्मरंति। तवीति। तौति। तुवीतः।
तुतः। तोता। तोष्यति। अतौषीत्। णु स्तुतौ। नौति। नविता। टुक्षु शब्दे। क्षौति। क्षविता। क्ष्णु तेजने। क्ष्णौति। क्ष्णविता। ष्णु प्रस्रवणे॥
स्नौति। सुष्णाव। स्नविता। स्नुयात्। स्नूयात्। ऊर्णुञ् आच्छादने। ऊर्णोतेर्विभाषा। ७।३।९०॥ वृद्धिर्वा स्याद्धलादौ पिति सार्वधातुके। ऊर्णौ
ति। ऊर्णोति। ऊर्णुतः। ऊर्णुवंति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। ऊर्णोतेराम्नेति वाच्यं॥ ॥

॥ शम्यमो रुदाहरणं तु शमीध्वं। अभ्यमीति।
अभ्यंति। शम्यमोऽश्छंदसि विकरणस्य लुकि सति हलादि सार्वधातुकमनंतरं संभवतीति काशिकायामुक्तं। आपिशलास्तु तु रु स्तु शम्यमः सार्वधातुके छं
दसीति पठंति तन्मते सूत्रमिदं छंदस्येव। ऊर्णोतेर्विभाषा। उतो वृद्धिरिति नित्ये प्राप्ते विभाषेयं। हलादौ किं। ऊर्णवानि। पिति किं। ऊर्णुतः। सार्वधातुके
किं। ऊर्णूयात्। ऊर्णोतेराम्नेति। ऊर्णोतेर्णुवत् आवो वाच्य इति वक्ष्यमाणस्य आमभावोऽपि फलमिति भावः॥ ॥ ॥ ॥

ड्यमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः तच्च रलो व्युपधादिति सूत्रस्थेन लिखित्वा लेखित्वा लिलिखिषति लिलेखिषति इति ग्रन्थेन श
कुनि चालेखने इति सौत्रप्रयोगेण च विरुध्यते। अग्नेरिति किं। घनिकोटः पोटः णालिचुकोटघपोटघुमास्थाशीङो य्वडचीत्यतः क्ङितीत्यनुवर्तते। आर्द्धधातुक इति चाधिक्रियत एव क्ङि
ति किं दाता धाता हलादौ किं दद्तुः दद्युः अन्यथा आतो लोप इत्यत्र लादौ लिङ्स्यात् आर्द्धधातुके किम् मातः माथः अध्यगीष्ट इति सिचो ङित्त्वादीत्वं स्यात् इकस्सरो ककार इह इरेव द्धिक
इति विशेषणार्थः एरित्युक्ते तु इटकिटकटी त्यत्र प्रश्लिष्टस्य धातोरपि ग्रहणं स्यादित्याहुः केचित्तु इति आर्द्धधातुकाधिकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्याणामुपस्थि
तत्वादिति देश इति भावः अधीयन्निति। स्मरन्नित्यर्थः। राघवयोरित्यत्राधीगर्थदयेशां कर्मणि इति षष्ठी। वीगतौ। अविपन्निति। अडागमात्परत्वादियङ्। अडागमे सतीति। कृताकृ
तप्रसंगित्वमात्रेण अटो नित्यत्वादिति भावः। अत एवापरितोषादसिद्धवदत्राभादिति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङेवोचित इत्याशयेन वा केचिद्
त्युक्तं। लावस्थायामेवाडागम इति पक्षे तु यणेवेति बोध्यं। ईकारोपीति। प्रयुंजते चानहितरणीरुदीते दिक् पराधीनवृत्तिरिति व्याख्यातं च मनोरमायां। कर्मव्यतिहारे तङ्।
न च न गतिहिंसार्थेभ्य इति निषेधः शंक्यः। उतस्वस्या विभावार्थत्वादिति। अत्र वदंति। व्यतिशब्दं विना कर्मव्यतिहारकल्पने क्लेशावहा परकीयकर्मच कर्मव्यति
हारेऽपेक्ष्यते। तच्चात्र नोपात्तं। परस्परकरणं तु न संभवत्येवात तश्चोदीते इति भावे निष्ठा ज्ञेया। तथा चोदयेदिक् पराधीनवृत्तिस्तरणिरित्यर्थः। सुगम इति
प्रणिदातीति। शेषे विभाषेति णत्वविकल्पः। अदासीदिति। अघुत्वान्न सिज्लुक्। नमः ख्यात्रे इति यद्यपि माङ्धातुके पि प्रयुज्येत तर्हि तत्र जतेऽस्मिन् परे शर
परे विसर्जनीय इत्यस्याप्रवृत्त्या कुप्वोरिति जिह्वामूलीयोऽदुर्वारः स्यादेवेति तदभावः। खशादित्वे प्रयोजनमिति वार्तिककाराद्युक्तिर्व्याकुप्येत इति भावः। संख्या
वैस्येत्यादि। संख्यातीत्यादिप्रयोगो नास्त्येव। संख्येति प्रयोगस्तु ख्याञादेशस्येति न्यासकाराशयः। मामाने। नास्येति। घुप्रकृतिमाङ् इति पाठात् ङितामेवात्र ग्रहणा
त्तत्र शेषे विभाषेति विकल्प एव प्रवर्तत इत्याह। प्रणिमातीत्यादि। वच परिभाषणे। उवाच। वक्ता। वक्ष्यति। वक्तु। वक्तात्। अवक्। अवक्तां। अयमंति पर इ
ति। तथा च वचंति। वक्ष्यति। वचंतु। अवचन्। अवाचन्। अवक्ष्यन्नित्येते असाधवः। बहुवचनपर इति। अस्मिन्पक्षे लटि मध्यमे वक्थ। उत्तमे तु। वच्मः। लिटि। ऊ
चुः। मध्यमे। ऊच। उत्तमे तु। ऊचिम। लुटि वक्तारः। लिङि वच्यासुः। उच्यासुरित्यादयोप्यसाधवः। झिपर इति। अस्मिंस्तु पक्षे। वक्थ वच्मः। ऊच। ऊचिमेत्यादयः साधव इति

विवक्षितइति। भाष्यमतेतु सुतरांनप्रवर्त्ततेअनैमित्तिकत्वादिति भावः निर्द्देशान्नभवतीति। वार्णादांगंवलीयइतिसमाधानंतुनप्रवर्त्ततेव्याश्रयत्वादितिभावः॥
अध्येयतेति। आत्मनेपदेष्वनतइतिझस्यअत। लङ् मध्यमेतुअध्यैथाः अध्यैयाथां। अध्यैध्वं। अध्यैषी ध्वेति। लिङः सीयुट्। अध्यैषी यास्तां। अध्यैषीरन्॥ ॐ ॥
गाङ् कुटादिभ्यो। इहगाङ् गतावित्यस्यनग्रहणं। तङर्थंतयाङ्कारानुवंधस्यतत्रचरितार्थत्वात्। आदेशङकारस्तुअचरितार्थः। स्थानिवद्भावेनैवतङः सि

गाङ्कुटादिभ्योऽञ्णिन्ङित्॥१।२।१॥ गाङादेशात्कुटादिभ्यश्चपरेञ्णितः प्रत्ययाङितःस्युः। घुमास्थागापाजहातिसांहलि। ६।४।६६। एषामा
तईत्स्यात् हलादौक्ङित्यार्द्धधातुके। अध्यगीष्ट। अध्यैष्ट। अध्यगीष्यत। अध्यैष्यत। इकुस्मरणे। अयमप्यधिपूर्वः। अधीगर्थदयेशामितिलिंगा
त्। अन्यथाहीगर्थेत्येवब्रूयात्। इणवदिकइतिवक्तव्यं। अधीयन्ति अध्यगात् केचित्वार्द्धधातुकाधिकारोक्तस्यैवातिदेशमाहुस्तन्मतेयण्न
तथाचभट्टिः ससीतयोराघवयोरधीयन्निति। वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु प्रजनोगर्भग्रहणं असनंक्षेपणं वेतिवीतः वियन्ति
वेषिवेमिवीहि अवेत् अवितां। अवियन् अडागमेसत्यनेकाच्त्वाद्यणीतिकेचित् अत्रईकारोपिक्षात्वत्तरंप्रश्लिष्यते एतिईतः इयति इय
त् ऐषीत्। यापाप्रापणे प्रापणमिहगतिः प्रणियाति यातः यान्ति लङः शाकटायनस्यैव १।४।१११ आदन्तात्परस्यलङोझेर्जुस्वास्यात् अयुः अ
यान् यायात् यायातां यायास्तां वागतिगंधनयोः भादीप्तौ ष्णाशौचे श्रापाके द्राकुत्सायांगतौ प्साभक्षणे पारक्षणे पायास्तां अपासीत् रादानेला
आदानेद्वावपिदानेइतिचन्द्रः दाप्लवने प्रणिदाति प्रनिदाति दायास्तां अदासीत् ख्याप्रकथने अयंसार्वधातुकमात्रविषयः सस्थानत्वेनमः
ख्यात्रइतिवार्त्तिकंतज्ज्ञापयतिहलिंगं सस्थानोजिव्हामूलीयः सनेतिख्याञादेशस्यखशादित्वेप्रयोजनमित्यर्थः संचक्ष्वस्याख्यातेःप्रयोगोनेतिन्यासका
रः प्राप्नूरणे माभाने अकर्मकः तनोममुस्तत्रनकेटभद्विषइतिमाघः उपसर्गवशेनार्थान्तरेसकर्मकः उदरंपरिमातिमुष्टिनानेर्गदेत्यत्रनास्यग्रहणं प्र
णिमाति प्रनिमाति वचपरिभाषणे वक्ति वक्तः अयमन्तिपरोनप्रयुज्यते वहुवचनेइत्यन्येझिपरइत्यपरेवग्धि वच्यात् उच्यात् अवोचत् विदज्ञाने॥

अयन्॰

ङित्वादत्तआह। गाङादेशादितिकुटादिस्तुदादंतर्गणः केचित्तुकुटआदिर्येषांतेकुटादयः। कुटस्यआदिः कुटादिः कुटादिश्चकुटादयश्चकुटादयः इति समास

परस्वरूपमित्याह। श्नस्यास्तेश्चेति। श्नस्योदाहरणं। रुंधंतीत्यादि। क्ङितिकिं। रुणद्धि। अस्ति। तपरकरणमास्ताम् आसन्नित्यत्राडागमे कृतेतस्यलोपोमाभूत् इत्येतदर्थेनिष्कर्षस्तुअत्रपरंस्फुटीभविष्यति॥ ॥ध्वसोरेद्धा। एत्वमलोन्त्यस्याशित्वात्सर्वस्येतिभाष्यादौस्पष्टं। देहि। धेहि। असिद्धत्वादाडिति। नन्वेवमाटोऽसिद्धत्वात्श्नसोरित्यल्लोपोनभवेदिति तपरकरणंतव्यर्थमितिचेत। अत्राहुः। आभाच्छास्त्रस्यानित्यताज्ञापनायतपरकरणं। तेनदेभतुरित्यादिसिद्धमिति। स्यादेतत्। अत्रकेचित्। अङ्ग्रहणस्यनिःफलत्वेतपरकरणस्यज्ञापनार्थत्वेनसिध्येत्। नचातउदितिसूत्रस्थतपरकरणमेवज्ञापनार्थमस्त्विति वाच्यं। अस्येत्युक्तौगौरवादर्द्धमात्रालाघवापत्तेः तपरत्वमितिसुवचत्वात्। तस्मादत्तज्ञापनार्थमङ्ग्रहणमावश्यकमित्याहुः। उपसर्गप्रादुर्भ्यां। प्रादुस् इतिसांतमव्ययं। प्रादुषश्चेति

ध्वसोरेद्धावभ्यासलोपश्च। ६।४।११९। घोरस्तेश्चैत्वंस्याद्धौपरेऽभ्यासलोपश्च आभीयत्वेनैत्वस्यासिद्धत्वाद्धेर्द्धिः श्नसोरित्यल्लोपः एधितात्तङ्पक्षे एत्वनपरेणतातङाबाधात्सकृद्गताविति न्यायात् तात्तस्तंत असानि असाव असाम अस्ति सिचइतीट आसीत् श्नसोरित्यल्लोपस्याभीयत्वेना सिद्धत्वादाट आस्तां आसन् स्यात् भूयात् अभूत् सिचोस्तेश्चविद्यमानत्वेनविशेषणादीत्वं उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। ८।३।८७ उपसर्गेणःप्रादुसश्चपरस्यास्तेः सस्यषः स्याद्यकारेऽचिपरे निष्यात् प्रादुःष्यात् निषन्ति प्रादुःषन्ति यच्परः किं अभिस्तः मृजूशुद्धौ मृजेर्वृद्धिः। ७।२। ११४॥ मृजेरिकोवृद्धिः स्याद्धातुप्रत्ययेपरे क्ङित्यजादौवेष्यते व्रश्चेतिषः मार्ष्टि मृष्टः मृजन्ति मार्जन्ति ममार्ज ममार्जतुः ममृजतुः ममार्जिथ ममार्ष्ठ मार्ष्टा मृड्ढि अमार्ट् अमार्जं अमार्जीत् अमार्क्षीत् रुदिर् अश्रुविमोचने रुदादिभ्यः सार्वधातुके। ७।२।७६॥ रुद्स्वप्श्वस्अन्जक्ष एभ्योवलादेः सार्वधातुकस्येट् स्यात् रुदितः होपरत्वादिटिधित्वन्नरुदिहि॥ ११

प्रामादिकः। परस्येति। अयमस्तेः सस्यविशेषणंनत्वस्तेः तेनप्रादुरस्तीत्यत्रनषत्वं। उपसर्गेत्यादिकिं। दधिस्यात्। अस्तेः किं। परिसृजति। मृजूशुद्धौ। अयंनषित्। भिदादिपाठसामर्थ्यात्। मृजेर्वृद्धिः। गुणापवादः। धातोः स्वरूपग्रहणेतत्प्रत्ययेकार्यविज्ञानमित्याह। धातुप्रत्यये इति। धातुप्रत्ययेकिं। कंसपरिमृड्भ्याम्। क्ङित्यजादाविति। एतच्चान्येषांवैय्याकरणानांमतं इकोगुणवृद्धीतिसूत्रेभाष्यकृतास्वीकृतं। मृड्ढीति। हुझल्भ्यइतिहेर्धिः। षत्व

पाठेप्रादुर्भ्यामितिनिर्देशोनयुज्यतेइतिप्राचांषांतपाठः

विदो लटो वा। पंचमीयं न तु षष्ठी। तेन विद्यति विंदत्योः अव्यवहितपरस्य लटोऽभावान्नैते आदेशास्तदाह वेत्तेरिति। लोटो लुगिति। आम इति सूत्रे मंत्रे घसेत्यतो लेरिति
अनुवर्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मतेनेदमुक्तं। निष्कर्षे तु तेनैव लुगिति बोध्यं। पुरुषवचने इति। प्रथमपुरुषो बहुवचनं चेत्यर्थः। परस्मैपदम
प्यविवक्षितमेवेति केषांचित् मते कर्मव्यतिहारे तङि व्यति विदांकुरुतां। व्यति विदांकुर्वीतामित्यादि ज्ञेयं। तेनेति। विश्वसेदित्यत्र शपो लुगभावः सिद्ध इति भा
वः। एवमप्यविश्वस्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्यानित्यत्वादिति गृहाण। अत उत्सार्व। क्ङिति किं। करोषि। लुकोऽसिद्धत्वादिति। सार्वधातुकग्रहण

विदो लटो वा ३।४।८३ वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म पक्षे वेत्ति वित्तः विदन्तीत्यादि विवेद वि
विदतुः उषविदेत्याम्पक्षे विदेत्यकारान्तनिपातनान्न लघूपधगुणः विदांचकार वेदिता विदांकुर्वन्त्वित्यन्यतरस्याम् ३।१।४१ वेत्तेर्लोट्याम् गुणाभावो लो
टो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते पुरुषवचनेन न विवक्षिते इति शब्दात् तनादिकृञ्भ्य उः ३।१।७९॥ तनादेः कृञश्च उप्रत्ययः स्यात् श
पोऽपवादः तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिंगं तेन न विश्वसेदविश्वस्तमित्यादि सिद्धं विदांकरोतु। अत उत्सार्वधातुके।
।६।४।११०। उप्रत्ययान्तस्य कृञोऽकारस्योत्स्यात्सार्वधातुके क्ङिति। उदिति तपरकरणसामर्थ्यान्न गुणः विदांकुरुतात् विदांकुरुतां उतश्चेति हे
र्लुक् आभीयत्वेन लुकोऽसिद्धत्वादुत्वं विदांकुरु विदांकरवाणि अभवेत् अवित्तां सिजभ्यस्तेति झेर्जुस्। अविदुः। दश्च। ८।२।७५॥ धातोर्दस्य पदा
न्तस्य सिपि परे रुः स्याद्वा। अवेः अवेत्। अस भुवि अस्ति श्नसोरल्लोपः।६।४।१११॥ श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति स्तः सन्ति तासस्त्योरिति
सलोपः। असि॥ स्थः स्थ अस्मि स्वः स्मः आर्द्धधातुक इत्यधिकृत्य। अस्तेर्भूः।२।४।५२॥ बभूव भविता अस्तु स्तात् स्तां सन्तु॥ ९ उत्तरार्थमेवान्नमत्र आवश्य

कं। इह भूत्व पूर्वं गत्या सार्वधातुकपरत्वमाश्रीयत इति वृत्तिमते त्वसिद्धत्ववर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयं। दश्च। सिपि धातो रुर्वेत्यनुवर्तते परस्मैतिमलां
जशोऽन्ते इत्यस्माद्दन्त इति च तदाह। धातोर्दस्येत्यादि। सिपि किं। तिपि। अवेत्। दान्तस्य धातोः सिपि रुर्वेत्येतावतैव इष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः। तच्चिंत्यं
वेत्सीत्यत्रातिप्रसंगात् चर्त्वस्यासिद्धत्वेन दान्तत्वात्। श्नसोरल्लोपः। अत उदिति सूत्रादत इत्यनुवर्त्य अत्ग्रहणं त्यक्तुं शक्यमित्याहुः। श्नसोरिति शकंध्वादित्वात्

उपसर्गस्थादित्यादि। अंतापवाद इति। ओर्णोतेरदादेशोऽपवादः। अस्यत्वपवादो जुसितिज्ञेयः। वभ्रामेति। जक्षन्नौऽन् रममाणा इत्युपनिषदि जक्षादित्वस्य निर्विवादत्वात्। नाभ्यस्ताच्छतुरिति निषेधेन जक्षन् इतिरमः छांदसत्वेपि जक्षादित्वस्य तत्कल्पनायाः अन्याय्यत्वात्। धातुवृत्त्यादौ जक्षादिपाठाच्च॥ ❁ ॥जाग्रो विचिण्णल्ङित्सु। विचि णल्ङि इभ्योऽन्यस्मिन्निति। जागृविः। विशब्देन वादिप्रत्ययो गृह्यते। इकारस्तु उच्चारणार्थ इतिवदतां मते क्वसावपि न भवति। जजागृवान्। जजागृवांसौ। चिण् अजागारि। णल्। जजागार। ङित्। जागृतः। जागृथः। वृद्धिविषये इति। एवुलि। जागरकः। घञि। जागरः। णिचि। जागरयति। न चैतेषु गुणो कृतेप्यत उपधाया इति वृद्धिः स्यात् इति वाच्यं। गुणविधेश्चि सल्प्रतिषेधस्य चाऽनर्थक्याय

जाग्रो विचिण्णल्ङित्सु।७।३।८५॥ जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च जजागरतुः अजागः अजागृतां अभ्यसत्वाज्जुस् जुसि च।७।३।८३॥ अजादौ जुसीगन्तांगस्य गुणः स्यात् अजागरुः अजादौ किं जागृयुः आशिषि तु जागर्यात् जागर्यास्तां जागर्यासुः लङि अजागरीत् जागृ इ स इ दित्यत्र यण्प्राप्तः तं सार्वधातुक गुणो बाधते तं सिचि वृद्धिः तां जागर्त्तिगुणः तत्र कृते हलन्तलक्षणा प्राप्ता नेटीति निषिद्धा ततोऽतो हलादेरिति बाधित्वाऽतो ल्रान्तस्येति प्राप्ता ह्म्यन्तेति निषिध्यते तदाहुः गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनं पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नवेति दरिद्रा इगीतो दरिद्राति इद्दरिद्रस्य।६।४।११४॥ दरिद्रातेराकारस्य इकारः स्यात्क्ङिति सार्वधातुके दरिद्रितः॥

तेः। जुसि चा। चकारः स्पष्टप्रतिपत्त्यर्थः। क्सस्याचीत्यत्तोऽचीत्यनुवर्तत इत्याह। अजादाविति। जागृयुरिति। एवं शृणुयुः। चिनुयुरित्यादावपि गुणो नेति बोध्यं। पायुयोङित्वाच्छृणुयुरित्यादौ गुणो नेति प्राचोक्तिस्तु मनोरमायां दूषिता। जुसि चेति गुणस्य निषेधापवादत्वादिति। केचित्तु जुसि चेत्यत्र उसीत्याचार्यौ उस् रूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः। अजादौ जुसीति समाधानं तु भाष्यारूढं। जागर्तेः सिच् इटि कृते यणादि प्राप्तिक्रमं दर्शयति। जागृ इ स इ त्यत्रेति। तत्र कृत इति हलंतलक्षणापाः वृद्धेर्जागर्त्तिगुणो न बाधस्तेन गुणो न हलंतत्व संपादनात्। याहि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते नान्येति भावः। अजागरिष्टां अजागरिषुः अजागरीरित्यादि। दरिद्रा इद्दरिद्रस्य। इद्दरिद्र इति वक्तुमुचितं॥

षुत्वजश्त्वानि। वलादेः सार्वधातुकस्येति। वलादेः किं। रुदन्ति। सार्वधातुके किं। स्वप्ना। धित्त्वेनेति। सन्नुतगना वितिन्पायात्। हेर्धिरिति स्थान्यादेशयोरिका रुच्चारणार्थ इत्यादि प्रागुक्तसमाधाना द्वेतिभावः॥ ॥ रुदश्च पंचभ्यः किं। जागर्तेर्लेडि अजागः। प्रकृतिप्रत्ययेत्यादि हलादिपित्सार्वधातुकापृक्तो पेक्षत्वाच्च वहिरंगत्वमडीटोः। अरुदद्दिति। इरितो वेत्यङ्। अरोदीदिति। अस्तिसिचइति ईट्। रुदश्चेत्यनेनतुना। सिचाव्यवधानेन रुदादेः परत्वाभावात्। सुषु

रुदश्च पंचभ्यः। ७।३।९८॥ हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात्। अड्गार्ग्यगालवयोः। ७।३।९९॥ अरोदीत् अरोदत् अरुदिताम् अरुदन्। अरोदीः अरोदः। प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरंगत्वाद्यासुट् रुद्यात्। अरुदत् अरोदीत्। ञिष्वप् शये स्वपिति स्वपितः सुष्वाप सुषुपतुः सुषुपुः सुष्वपिथ सुष्वप्थ सुविनिर्दुर्भ्यः सुपिसूतिसमाः। ८।३।८८॥ एभ्यः सुप्यादेः सस्य षः स्यात्। पूर्वं धातुरुपसर्गेणायुज्यते किति लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वं पूर्वत्रासिद्धीयमद्विर्वचने सुषुपतुः सुषुपुः अकित्तु द्वित्वे ऽभ्यासस्य संप्रसारणं षत्वस्या सिद्धत्वात्ततः पूर्वं हलादिः शेषः नित्यत्वाच्च ततः सुपिरूपाभावान्न षः सुसुष्वाप सुस्वप्ता अस्वपीत् अस्वपत् स्वप्यात् सुप्यात् सुषुप्यात् अस्वाप्सीत् श्वस प्राणने श्वसिति श्वसिता अश्वसीत् अश्वसत् श्वस्यात् श्वस्यातां ह्म्यन्तक्षणेति न वृद्धिः २ अश्वसीत् अन च। अनिति आनअनिता आनीत् आनत् अनितेः। ८।४।१९॥ उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् प्राणिति जक्ष भक्षहसनयोः जक्षिति जक्षितः अदभ्यस्तात्। ७।१।४॥ झस्यात्स्यादंतापवादः जक्षति। सिजभ्यस्तेति जुस् अपमजक्षुरित्युज्ज्वलदत्तो बभ्राम रुदादयः पंच गताः जागृ निद्राक्षये। जागर्ति जागृतः। जाग्रति उषविदेत्याम्वा जागरांचकार जजागार॥ ॥ षुरिति। वचिस्वपीति संप्रसारणं। ततो द्वित्वं। सुपिसूतिसमा इति। सूतीति तिन्नंतः। समेति पचाद्यजंतः। सुषुप्तिः सुषूतिः सुषमा। विषमः। अद्विर्वचन इति। तेन षत्वं सहि तस्य द्वित्वे। सुपिरूपाभावादिति। एकदेशविकृतमनन्यवदिति तु न प्रवर्तते। तस्य स्थानिवत्सूत्रशेषत्वात्। षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवद्भावादित्याहुः। वस्तुतस्तु स्थानिवत्सादेशस्येन प्रतिनिपादी सिद्धत्युक्तं। तस्मादिह समाधानान्तरमूह्यमित्यन्ये। अनितेः। उपसर्गादसमासे पीत्यत उपसर्गादिति वर्तते रषाभ्यामित्यतो नो ण इति च तत्सह॥

शास इदङ्हलोः। अङि। अशिषत्। अशिषताम्। क्ङिति शिष्टः शिष्टवान्। शिष्यात्। शिष्यास्ताम्। अङ्साहचर्यात् परस्मैपद एवेत्त्वं नेह। आशास्ते। अन्ये तु यस्मात्क्सेरङ् संभवति तस्यैवेत्त्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिड्ढ्वे इत्यात्मनेपदेपीत्त्वं स्वीकुर्वते। शा हौ। पूर्वसूत्रे उपधापदान्वयानुरोधेन शास इत्यवयवषष्ठ्यपि इह स्थानषष्ठ्येव उपधाया इत्यस्य निवृत्तत्वादित्याह। शासेः शादेश इति। धि चेति सलोपेन शाधीति रूपे सिद्धेपि सलोपस्यासिद्धत्वाच्छास इदिति

शास इदङ्हलोः ६।४।३४॥ शास उपधाया इत्स्यादङि हलादौ क्ङिति च शास्ति वसीति षः शिष्टः शासति शशास शशासतुः शास्तु शिष्टात् शिष्टां शासतु शा हौ ६।४।३५। शास्तेः शादेशः स्याद्धौ परे तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः शाधि अशात् अशिष्टां अशासुः अशाः अशात् शिष्यात् सर्तिशास्तीत्यङ् अशिषत् अशासिष्यत् दीधीङ् दीप्तिदेवनयोः एतदादयः पंच धातवश्छान्दसाः दीधीते एरनेकाच इति यणादीध्याते यीवर्णयोर्दीधीवेव्योः ७।४।५३॥ एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे इति लोपं बाधित्वा नित्यत्वाद्गुणे रत्वे दीध्ये दीधीवे वीयमित्यगुणनिषेधः दीध्यांचक्रे दीधिता दीधिष्यते वेवीङ् वेतिना तुल्ये वीगतीत्यनेन तुल्यार्थे वर्तत इत्यर्थः अथ त्रयः परस्मैपदिनः षस सस्ति स्वप्ने सस्ति सस्तः ससंति ससास सेसतुः सस्तु सधि रुत्वं त्वासिद्धमिति सलोपस्यासिद्धत्वाद्दतो हेरिति लुग्न असत् असस्तां असुः असत् सस्यात् असासीत् असत् सीत् सन्ति सन्तः संस्तंति बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य स्कोरिति लोपाभावात् संस्ति संस्त इत्येके वश कान्तौ कान्तिरिच्छा। वष्टि उष्टः उशंति उवाश ऊशतुः वशिता वष्टु उष्टात् उष्टां उड्ढि अवट् औष्टां औशन् अवशं उश्यात् उश्यास्तां चर्करीतं च यङ्लुगंतमदादौ बोध्यं ह्नुङ् अपनयने ह्नुते जुह्नुवे ह्नोता ह्नोषीष्ट अह्नोष्ट॥ इत्यदादयः॥ ॥ ९

इत्वं स्यात् तद्वारणाय शाविधानमित्याहुः। यीवर्णयोः॥ य्योरित्युक्तेपीष्टसिद्धौ यकार इकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम्। यिश्च इवर्णश्च यीवर्णौ तयोः। यिश्चेति इकार उच्चारणार्थो न तु विवक्षित इत्याह। यकारे इवर्णे चेति। यिवर्णयोरिति पाठः सूचितः। लोपं बाधित्वेति। लोपस्य तु उदाहरणम्। आदीध्यगतः। आवेव्यगतः। दीधिष्यते। वेविता॥

श्नाभ्यस्त।क्रीणंति।क्रीणते।पुनंति।पुनते।दधति।दधते।क्ङितिकिं।क्रीणाति।पुनाति।दधाति।आतः किं।बिभ्रति।ओइत्येवसिद्धेइति।प्रथमत्यागेमानाभा
वादितिभावः।निर्मूलमेवेति।यत्तुव्याख्यातृभिः समर्थ्यते।आमोऽभावेआतोलोपेकृतेआदंतत्वाभावादौत्वंनेतितन्न।आतओणलइत्यत्रप्राथम्यादौकारेक
र्तव्ये औकारविधानंदरिद्रातेरालोपेपिश्रवणार्थंसत्आमभावेलिंगमितिहरदत्तमाधवादिग्रंथैःस्वग्रंथेनचविरोधात्ततकथमौत्वस्याप्रवृत्तिर्भवेत्।।यदप्युक्तं
।ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानमितितदपिस्थवीयः तस्मिन्पक्षेआमोऽद्ध्वीत्वप्रसंगात्।विवक्षितइति।तेनदरिद्रातीतिदरिद्रइतिपचाद्यजे
वभवतिपरसप्तम्यांतुश्याद्व्यधेत्यादंतलक्षणोणःस्यात्।सतितुतस्मिन्आतोयुक्चिण्कृतोरितियुकिदरिद्रायइतिस्यादितिभावः।सनिण्वलीति।एतेषालोपोने

श्नाभ्यस्तयोरातः ॥६।४।११२॥अनयोरातोलोपःस्यात्क्ङितिसार्वधातुके।दरिद्रतिअनेकाच्त्वादाम् दरिद्रांचकार।आतओणलइत्यत्रओइ
त्येवसिद्धेऔकारविधानंदरिद्रातेरालोपेकृतेश्रवणार्थं अतएवज्ञापकादाम्नेत्येके।ददरिद्रौददरिद्रतुरित्यादि यत्तुणलिददरिद्रेतित
न्निर्मूलमेव दरिद्रातेरार्द्धधातुकेविवक्षितेआतोलोपोवाच्यः।लुङिवासनिण्वुलि ल्युटिचन।दरिद्रिता अदरिद्रात् अदरिद्रिता अदरिद्रुःद
रिद्रियात् दरिद्र्यात्अदरिद्रीत् इट्सकौ अदरिद्रासीत् चकासृदीप्तौ गस्यअत् चकास्ति चकास्तःचकासति।चकारधिचेतिसलोपः।सिचएवेत्येके च
काद्धिचकाधीत्येवभाष्यं तिप्यनस्तेः।८।२।७३॥पदान्तस्यसस्यदः स्यात्तिपिनत्वस्तेः।अचकात् अचकाद् अचकासुः सिपिधातोरुर्वा।८।
२।७४॥ पदान्तस्यसस्यरुःस्याद्वापक्षेदः।अचकाः अचकात् शासुअनुशिष्टौ शास्ति॥ ९ त्यर्थः।दिदरिद्रासति।दरिद्रायकः।दरिद्राणम्।अद

रिद्रुरितिसिजभ्यस्तेतिजेर्जुसालङः शाकटायनस्यैवेत्यादंतलक्षणोविकल्पस्तुनभवतिपरत्वात्श्नाभ्यस्तयोरित्यालोपेआकारांतस्यैवाभावात्।ईहल्यघो
रित्यात्तईत्वमिहनशंक्यमेव।भेर्जुसिहलादिपरत्वाभावादितिभावः।ननुदरिद्राभिइतिस्थिते जुसःप्रागेवआल्लोपात्परत्वादपवादत्वाच्चईत्वंस्यात्।मैवं।अकृत
व्यूहपरिभाषयाजागरूकत्वात्।ईत्वनिमित्तंहिहलादित्वंतच्चविनाशोन्मुखंजुसोभावित्वात्।गस्यअदिति।अदभ्यस्तादित्यनेन।तिप्यनस्तेः।पदांतस्यकिं।च
कास्ति।सस्येतिकिं।वशेर्लङितिपिअवट्।तिपिकिं।क्विपिचकाः।अनस्तेःकिं।सर्वमाइद्।आइतिलङितिपिअस्तेःरूपं।वहुलंछंदसीतिईट्न ॥ ॥ ॥

द्विर्वचनाभ्यासकार्यो धात्वेव गृह्यते तेन जुहुधि धारयत्ययमिति व्याचष्टे। द्विरुक्तस्येति। अर्थवत्त्वस्य किं। दधाति। नन्वेवं धत्त इत्यादावपि न स्यादाल्लोपस्य स्था निवत्त्वेनार्थवत्त्वादत आह। वचनसामर्थ्यादिति। निजां। एलाविति किं। निनेज। नाभ्यस्तस्य। अभ्यस्तस्य किं। देह्याणि। अचि किं। देदेष्टि। पिद्ग्रहणमुतो वृद्धिर्लुकि हलीत्युत्तरार्थं। सार्वेति किं। निनेज। बहुलं छन्दसीतीत्वमिति। एतच्च शर्वोऽन्यान्वपि इयर्तीति अभ्यासस्यासवर्णे। अभ्यासाडुत्तरस्य गुणः। इयर्तीति। अदभ्यस्तादित्यत्॥ ॥ अर्यादिति। गुणोऽर्तीतिगुणः। आरदिति। सर्तिशास्तीत्यङि ऋदृशोऽङीति गुणः। वभ्धइति। तसस्तकारस्य झषस्तथोरिति धत्वं।

अर्थीत आरत्ससर्त्ति भसभर्त्सेनदीप्त्योः बभस्ति घसिभसोर्हलीत्युपधालोपः झलोझलीति सलोपः बब्धः भ प्सति कित्ज्ञाने चिकेति तुरत्वरणे तुतोर्ति तुतूर्तः तुतुरति धिषशब्दे दिधेष्टि दिधिष्टः धनधान्ये दधन्ति दधनः दधनति। जनजनने जजन्ति जनसनखनां सञ्झलोः। ६।४।४२ ॥ एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च जजातः जज्ञति जजंसि जजान जजन्यात् जजायात् जन्यात् जायात् गा स्तुतौ देवात् जिगाति सुम्नयुः जिगीतः जिगति॥ इति जुहोत्यादयः॥ दिवु क्रीडा विजिगीषा व्यवहार द्युति स्तुति मोद मद स्वप्न कान्ति गतिषु कृषन्नाः परस्मैपदिनः दिवादिभ्यः श्यन्। ३। १। ६९॥ शपोऽपवादः हलि चेति दीर्घः दीव्यति दिदेव देविता देविष्यति दीव्यतु अदीव्यत् दीव्येत् दीव्यात् अदेवीत् अदेविष्यत् षिवु तन्तुसन्ताने परिषीव्यति परिषिषेव न्यषेवीत् न्यसेवीत् स्रिवु गतिशोषणयोः स्रिव निरसने केचिदिह मं न पठन्ति ष्णुसु अदने आदाने इत्येके अदर्शन इत्यपरे स्नुस्यति सुष्णोस ष्णसु निरसने स्नुस्यति सस्नास क्नसु ह्वरणदीप्त्योः ह्वरणं कौटिल्यं चक्नास व्युष दाहे वव्योष प्लुष च॥ ॥ ९ तुतूर्त इति। हलि चेति दीर्घः। धन धान्ये धान्यार्जन इत्यर्थः। दधंत इति। छांदसत्वाज्ञ्वनासिकस्येति नेह दीर्घ इत्याहुः। जनसनखनां। जनजनने। जनी प्रादुर्भावे इत्युभयोरपि ग्रहणं। झलादौ सनि सिषासति। जज्ञतीति। गमहनेत्युपधालोपः। जनाया दिति। ये विभाषेति वा आत्वं। एवं जायादित्यत्रापि। जिगातीति। बहुलं छन्दसीति इत्वं॥ इति जुहोत्यादिः॥ दिवु क्रीडा। उदित्करणात्क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं च। देवित्वा। द्यूत्वा। द्यूतं। क्रीडायां दीव्यति माणवकाः। विजिगीषायां शत्रुं दीव्यति

वेविष्यते। यीवर्णयो रिति क्वि। आदीध्यनं। आवेव्यनं। षस। असदिति। तिपनस्ते रिति दत्वे। अस इति। सिपि धातो रिति रुर्वा। एक्षे दः। संतीति। इदित्वान्नुमि संस्त् तिरिति स्थिते स्को रिति सलोपे झरो झरि सवर्ण इति तकारस्य वा लोपः। संस्ति संस्त इति। इहापि पूर्ववत् लोपो वा बोध्यः। वशकान्तौ भाषायामप्यस्य प्रयोगो दृश्यते। वष्टि भाग्यरिरल्लोपं। जयाय सेनान्य मुशंति देवा इति। चर्करीतं च। गणसूत्रमिदं। चर्करीतमिति यङ्लुगंतस्य पूर्वाचार्याणां संज्ञा। अदादौ बोध्यमिति। तेन यङ्लुगंतेष्वदिप्रभृतिभ्य इति शपो लुक् भवतीति भावः। प्राचा तु चर्करीतमिति यङ्लुगंतं परस्मैपदमित्युक्तं तच्चेहाप्रकृतत्वादुपेक्षितं। इत्यदादयः॥ ॥हु दाना यद्यपि स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादानमेव दानं तथापि प्रयोगमनुसृत्य व्याचष्टे प्रक्षेप इति। वैध इति। आहवनीयादौ। हविष इति। विधिबोधितद्रव्य

हु दानादनयोः आदाने चेत्येके प्रीणनेपीति भाष्यं दानं चेह प्रक्षेपः स चेह वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते इतश्चत्वारः परस्मैपदिनः
जुहोत्यादिभ्यः श्लुः। २। ४। ७५॥ शपः श्लुः स्यात्। श्लौ। ६। १। १०॥ धातो द्वे स्तः। जुहोति जुहुतः। अदभ्यस्तादित्यत्। हुश्नुवो रिति यण्। जुह्वति। भीह्रीभृहुवां श्लुवच्च। ३। १। ३९॥ एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च। जुहवांचकार जुहाव। होता। होष्यति। जुहोतु। हुझल्भ्यो हेर्धिः। जुहुधि। आटि परत्वाद्गुणः। जुहवानि। परत्वाज्जुसि चेति गुणः। अजुहवुः। जुहुयात्। हूयात्। अहौषीत्। ञिभी भये। बिभेति। भियोऽन्यतरस्याम्। ६। ४। ११५॥ इकारः स्याद्धलादौ क्ङिति सार्वधातुके। बिभीतः। बिभितः। बिभ्यति। बिभयांचकार। बिभाय। भेता। ह्री लज्जायाम्। जिह्रेति जिह्रीतः। जिह्रियति। जिह्रयांचकार। जिह्राय। पॄ पालनपूरणयोः। अर्तिपिपर्त्योश्च। ७। ४। ७७॥ अभ्यासस्येकारोन्तादेशः स्याच्छ्लौ॥ ९ स्येत्यर्थः। स्वभावादिति। तेन आहवनीये पुरोडाशे प्रक्षेपव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः पुरोडाशो वा गर्तादौ सतु प्रक्षेपो न होम इति ज्ञेयं। परस्मैपदिन इति। तेन होष्ये इति केषांचित्प्रयोगोऽसाधुरेव। स्मरायैवं जुह्वाना इत्यादि ॥ इत्यत्र हरिप्रयोगस्तु साधुरेव। आशानचोऽप्रवृत्तावपि चानशंतत्वात्। आटीति। आडुत्तमस्येत्यनेन। परत्वादिति। हुश्नुवो रिति यणपेक्षया परत्वादित्यर्थः। भियोन्यतरस्यां। सार्वधातुके किं। भीयते। वेभीयते। हलादौ किं। बिभ्यति। क्ङिति किं। बिभेति। केचित्तु हलादौ क्ङितीत्येतन्नातीवोपयुज्यते। इत्वविधानस्य बिभित इत्यादौ चरितार्थत्वात्। बिभ्यति बिभीतात्यादौ यणो दुः प्रवृत्तिसंभवादित्याहुः। अर्तिपिपर्त्योश्च। अर्तेरुदाहरणं मियर्तीति वक्ष्यति॥

षूङ् । प्रसवः उत्पत्तिः । पूतन्पिंडो घटं सूयत इत्यादि प्रयोगाभावात् णीत्युक्तं । स्वादय ओदित इति वक्ष्यमाणत्वात् ओदितश्चेति निष्ठातस्य नत्वं प्रसूनं । विकल्प
मिति । परमपीति शेषः । निषेधे प्राप्त इति । उरस्मात् प्रतिषेधकांडारंभसामर्थ्यादि तिभावः । दीङो पंचमीत्यभिप्रायेण व्याचष्टे । परस्येति । ङः सीत्यत्रेव उ
भयनिर्देशे पंचमीनिर्देशो बलीयानिति सप्तम्याः षष्ठी कल्पना । अचि किं । देदीयते । क्ङितीति किं । उपदानं । आभीयत्वेनासिद्धत्वमाशंक्याह । वुग्युटाविति ।
दिदीये इति । परमपि यणं बाधित्वा नित्यत्वादादौ युट् । सति तु यणि ईकारस्य श्रवणं न स्यादिति युटः सिद्धत्वमुक्तं । मीनाति । मीञ् हिंसायां । डुमिञ् प्रक्षेपणे ।
प्रमाय । उपदाय । प्रमातव्यं । उपदातव्यं । एज्निमित्त इति विषयसप्तमी । तेन आदावात्वं पश्चात् घञ् । आतो युगिति युक् । उपदाय इति सिध्यति । अन्यथा एरचित्यते

षूङ् प्राणिप्रसवे सूयते सुषुवे स्वरतिसूतीति विकल्पं बाधित्वा श्र्युकः किंतीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् सुषुविषे सुषुविवहे सो
ता सविता दूङ् परितापे दूयते दीङ् क्षये दीयते दीङो युडचि क्ङिति । ६।४।६३ । दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् वुग्युटावु
वङ्यणोः सिद्धौ वक्तव्यौ दिदीये मीनातिमिनोतिदीङां ल्यपि च । ६।१।५० । एषामात्वं स्याल्ल्यपि चकारादशित्येज्निमित्ते दाता दास्यते अदास्त अ
दास्थाः डीङ् विहायसा गतौ डीयते धीङ् आधारे धीयते दिध्ये धेता मीङ् हिंसायां हिंसात्र प्राणवियोगः मीयते रीङ् श्रवणे रीयते लीङ् श्लेषणे
विभाषा लीयतेः । ६।१।५१ । लीलयोरिति युका निर्देशो न तु श्यना लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च लेता लाता लेष्यते लास्यते एज्विषये किं
लीयते लिल्ये ॥

१ आत्वे उपदाः इति स्यात् ॥ अदास्तेति । दीङः प्रतिषेधः स्थाघ्वोरिच्चेति न घुत्वमित्यदितेति रूपं न भवतीत्येके । अन्ये
तु स्थाघ्वोरिच्चेत्येतत्तु न भवति दीङो उकारणो दारूपासंभवेन अघुत्वात् । अत एव प्रनिदातेत्यादौ नेर्गदेति णत्वमपि न भवतीत्याहुः । अयं भावः । दोअ
वखंडने इत्यादेर्दारूपत्वं संभवति । आदेच उपदेश इत्यस्य अनैमित्तिकत्वात् । दीङ् तु एज्निमित्तप्रत्ययविषये आत्वं दा इत्यत्र करणे एज्निमित्तस्याभावि
त्वान्न घुत्वं । एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याप्रसक्तिरिति । डीङ् । डीनः । डीनवान् । स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न । इटि हि सति व्यवधानादोदि
तश्चेति नत्वं न स्यादिति । स्वादिषु पाठसामर्थ्यात् इड्व्यवधानेपि णत्वमस्त्विति न शंक्यमिष्टानुरोधात् । डयित इति प्रयोगस्तु भोवादिकस्य । निष्ठाशी

स्यादिष्विवाभ्यासस्येति नियमो नेह प्रवर्तते तत्र प्राक्सितादित्यनुवृत्तेः। अस्य चाप्राक्सि
विजिगीषतेरित्यर्थः। कांक्षितिरिच्छा। द्युतेः पृथग्ग्रहणात्। षिडापरिषिषेवेति। स्यादिष्विवाभ्यासस्येति विकल्पः॥ ॥ नृती। ईदित्करणं श्वीदित इति निष्ठायामिण्निषेधार्थ
तीयत्वात्। तेनाभ्यासस्य षत्वं परिनिविभ्य इत्यनेन भवत्येवान्यथेवीदिति सिवादीनां वेति विकल्पः। स्यस्य अनित्यत्वज्ञापनार्थमीदित्करणं तेन धावितमिभराजयियेत्या
। यद्यपि सेसिचीति इटो विकल्पितत्वाद्यस्य विभाषेत्यनेनैवेष्टं सिध्यति तथापि यस्य विभाषे त्यस्य अनित्यत्वज्ञापनार्थमीदित्करणं तेन धावितमिभराजयियेत्या
दिसिद्धं। सेऽसिचि। नर्तिष्यति। नर्त्स्यतीति। निनर्तिषति। निनृत्सति। कर्तिष्यति। कर्त्स्यति। चिकर्तिषति। चिकृत्सति। इत्यादि। रयं। अनर्तीदिति। असिचीत्युक्तत्वादिह
नित्यमिट्। अत्रेसतुरिति। वाजॄभ्रमुत्रसामित्येत्वाभ्यासलोपौ। कुथ पूतीभावः पवित्रभवनं। कुथ्यति। भूमिः पवित्रीभवतीत्यर्थः। पुष्प विकसने कालात्साधुपुष्प्यत्पच्य

नृती गात्रविक्षेपे नृत्यति ननर्त सेऽसिचिकृतचृतछृदतृदनृतः। ७।२।५७। एभ्यः परस्य सिज्भिन्न स्यसादेरार्धधातुकस्येड्वा स्यात् नर्तिष्यति न
र्त्स्यति नृत्येत् नृत्यात् अनर्तीत् त्रसी उद्वेगे वाभ्राशेति श्यन्वा त्रस्यति त्रसति त्रेसतुः तत्रसतुः कुथ पूतीभावे पूतीभावो दौर्गन्ध्यं पुथ हिंसायां गुध प
रिवेष्टने क्षिप प्रेरणे क्षिप्यति क्षेप्ता पुष्प विकसने पुष्प्यति पुपुष्प तिम ष्टिम ष्टीम आर्द्रीभावे तिम्यति स्तिम्यति स्तीम्यति व्रीड चोदने लज्जा
यां च व्रीड्यति इष गतौ इष्यति षह षुह चक्यर्थे चकार्थस्तृप्तिः सह्यति सुह्यति जॄष झॄष वयोहानौ जीर्यति जजरतुः जेरतुः जरिता
जरीता जीर्यात् जॄस्तम्भ्वित्यङ्वा ऋदृशोऽङि गुणः अजरत् अजारीत् अजारिषां झीर्यति जझरतुः अझारीत्॥ १९ मानेष्विति सूत्रे पुष्प्य
दिति शत्रंतः। एवाद्यच्चि पुष्प्यं। संज्ञायां कन्। पुष्पकं। व्रीड। गुरोश्च हल इत्यप्रत्यये टाप्। व्रीडा। घञि तु व्रीडः। अत एव व्रीडमावहति मे स संप्रतीति कालिदासः। व्रीडादि
वाभ्यासगतेर्बिलिल्पेरितिमाघश्चास हषहा। परिनिविभ्य इत्यत्र सहेत्यकारउच्चारणार्थ इति षत्वमिह भवति। परिषस्यति। तीषसहेतीड् विकल्पस्तु नास्य भवति सहेति
शवंतनिर्देशान्। किंतु षह मर्षण इत्यस्यैव स इत्यात्रेपादयः सहेति निर्देशस्योभयत्र तुल्यत्वे तीषसहेत्यत्र शपा निर्देशः। परिनिविभ्य इत्यत्र तु नेत्यर्ङ्जरतीयमिदंहे
यमेवातत्वंतु प्रयोगमनुसृत्य महद्भिरेव निर्द्धार्यं। नपुंसके भावे क्तः। सुहितं तृप्तिरत एव पूरणगुणेति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्यातं। जेरतुरिति। ऋच्छ
त्यॄतामिति गुणो न्हतेन शसददेति गुणशब्देन भावितस्य निषेधादत्त एकहल्मध्ये इत्यप्रवृत्तौ वाजॄभ्रमुत्रसामित्येत्वाभ्यासलोपविकल्पः॥ ० ॥

सि·कौ· दीपीदीप्तौ। ईदित्वान्निष्ठायामिण्न दीप्तः। एवं पूरित्यादेरीदित्वात्पूर्णोरत्यादिरते ये। केचित्तितितेषांमते ऐश्वर्येतप्यतेइत्येवप्रयोगोनतुतपतीति। अन्यविस्तते
टी·त·
ति·उ·
६८

प

दीपीदीप्तौ दीप्यते दिदीपे अदीपि अदीपिष्ट पूरीआप्यायने पूर्यते अपूरि अपूरिष्ट तूरीगतित्वरणहिंसयोः तूर्यते तुतूरे धूरीगूरीहिंसागत्योः
धूर्यते दुधूरे गूर्यते जुगूरे घूरीजूरी हिंसावयोहान्योः घूरीहिंसासंमनयोः चूरीदाहे तपऐश्वर्येवा अयन्यात्तरे ऐश्वर्यवातङ् क्ष्पनोलभते अन्यदातु
शाचिकारणापरस्मै पदीत्यर्थः केचित्तु वायहणं तनुधातोराधवयवमिच्छन्ति तप्यते तेपे तप्ता तप्स्यते पतेति व्यत्यासेन पाठान्तरं वृतुवरणे निवृत्तः
पत्यमानः वृतुवरणेवृत्यते पक्षान्तरेवावृत्यते ततोवावृत्यमानासारामशालोन्यविस्ततेतिभट्टिः क्लिशउपतापे क्लिश्यते क्लेशिता काश्रृदीप्तौ का
श्यते वाश्रृशब्दे वाश्यते ववाशे अथपंचस्वरितेतः मृषतितिक्षायां मृष्यति मृष्यते ममर्ष ममृषे ईशुचिर्पूतीभावे शुचीभावः क्लेदः शुच्यति शुच्यते
शुशोच शुशुचे अशोचीत् अशोचिष्ट णहबंधने नह्यति नह्यते ननाह नन्हेहिथ नेहे नद्धा नत्स्यति अनात्सीत् रंजरागे रंजति रंजते शपआ
क्रोशे शप्यति शप्यते अथैकादशअनुदात्तेतः पदगतौ पद्यते पेदे पत्ता पद्येत पत्सीष्ट चिण्तेपदः।३।१।६० पदश्चिण्स्यात्तशब्देपरे अपादि
अपत्सातां अपत्सत खिददैन्ये खिद्यते चिखिदे खेत्ता अखित्त विदसत्तायां विद्यते वेत्ता बुधअवगमने बुध्यते बुबुधे बोद्धा भोत्स्यते भुत्सीष्ट अबो
धिअबुद्ध अभुत्सातां युधसंप्रहारे युध्यते युयुधे योद्धा अयुद्ध कथंयुध्यतीति युधमिच्छतीतिक्यच् अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमि
तिवा अनोरुधकामे अनुरुध्यते अणप्राणने अण्यते आणे अणिता अनेति दन्त्यांतोयमित्येके मनज्ञाने मन्यते मेने मन्ता युजसमाधौ समाधि
श्चित्तवृत्तिनिरोधः अकर्मकः युज्यते योक्ता सृजविसर्गे अकर्मकः संसृज्यते सरसिजैरुरुणांशुभिन्नैः सस्रजिषे स्रष्टा स्रक्ष्यते लिङ्सिचाविति
कित्वान्नगुणो नाप्यम् सृक्षीष्ट असृष्ट असृक्षातां लिशअल्पीभावे लिश्यते लेष्टा लेक्ष्यते लिक्षीष्ट अलिक्षत अलिक्षातां अथागणान्ताः परस्मै

ति॥ निष्ठायांद्विशतेर्लुङि· शलइगुपधेतिक्सः नेर्विशइतितङ्। वाश्रृशब्दे। मंदिवाशीत्वरत्वां वाश्राणत्रिः। तितिक्षायामिति। ग्रपत्तिजकिइम्यादतिसन्। तत्रहि

ङित्यत्र निष्ठेति योगविभागादकित्त्वेगुणइत्याहुः। मीङ् हिंसायां। मीञ् इति क्र्यादौ। प्राणवियोग इति। मीयते प्राणैर्वियुज्यत इत्यर्थः। लीङ्। ली श्लेषण इति क्र्यादौ। य केति। सार्वधातुके यगिति विहितेन। नतु श्यनेति। अन्यथा लीङ् इत्येव ब्रूयात् इति भावः। यकारनिर्देशस्य फलमाह। लीलीङोरिति। ल्यपि। विलाय। विलीय ॥ ॥
॥ ❁ ॥ व्रीङ् वृणोत्यर्थो वरणं। वृञ् वरण इति स्वादौ पठिष्यमाणत्वात्। वरण इति वक्तव्ये वृणोत्यर्थ इति वचनं वैचित्र्यार्थं। व्रीवरण इति क्र्यादौ। माङ् मायत इति। घुमास्थेतीत्वं तु न। तत्रार्द्धधातुक इत्यधिकारात्। षोऽन्त। अन्तकर्मणा। शनं। एघवस्य शरैर्वा रणो घोरं रावरणमाहवे इति। राघवेति संबुध्यंत। स्यति

व्रीङ् वृणोत्यर्थे व्रीयते विव्रिये स्वादय ओदितः तत्फलं तु निष्ठायान्नत्वं पीङ् पाने पीयते माङ् माने मायते ममे ईङ् गतौ ईयते अयांच
क्रे प्रीङ् प्रीतौ सकर्मकः प्रीयते पिप्रिये अथ परस्मैपदिनश्चत्वारः शो तनूकरणे ओतः श्यनि। ७।३।७१ ।लोपः स्यात् श्यनि श
शौ शातौ शास्यति विभाषा घ्राधेटिति सिचो वा लुक् लुग्भावे यमरमेतीट् स कौ अशात् अशासीत् छोछेदने छ्यति षोन्तकर्मणि।
स्यति ससौ अभिष्यति अभ्यष्यत् अभिससौ दोअवखण्डने द्यति ददौ देयात् अदात् अथात्मनेपदिनः पंचदश जनीप्रादुर्भावे ज्ञाज
नोर्जा। ७।३।७९॥ अनयोर्जादेशः स्याच्छिति जायते जज्ञे जनिता जनिष्यते दीपजनेति वा चिण् जनिवध्योश्च। ७।३।३५॥ अनयोरुपधा
याः वृद्धिर्न स्याच्चिणि ञ्णिति कृति च अजनि अजनिष्ट ॥ ॥ ॥

लोण् मध्यमैकवचने। अभिष्यतीति। उपसर्गात्सुनोतीति षत्वं। अभ्यष्यदिति। प्राक्सितादड्व्यवायेपीति षत्वं। अभिससाविति। स्थादिष्विति नियमान्न षत्वं। दो अवखण्डने। अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः। खण्डन इत्येतावत्युक्तेपि इष्टसिद्धेः। प्रणिदाते ति। नेर्गदेति णत्वं। दे यादिति। एर्लिङि इत्येत्वं। अदादिति। गातिस्थेति सिचो लुक्। ज्ञाजनोर्जा। जानाति। शितीति किं। ज्ञाता। ज इति ह्रस्वोच्चारणं प्सतो दीर्घो यमीति दीर्घे सिद्धे जाग्रहणमंगवृत्तपरिभाषाज्ञापनार्थं। तेन पाधातोः पिबादेशकृते गुणो न भवति पिबादेशस्यादन्तत्वाश्रयणं नुपायात इत्याहुः। ञ्णिति णिति कृति चेति। ञितिकृत्युदाहरणं घञि जनः। णितिकृति तु जनकः। जनयतीत्यत्र उपधावृद्धौ सत्यां जनीजॄष्षिति मित्त्वान्मितां ह्रस्व इति ह्रस्वः ॥ ॥ ॥

श्लिष इति। अनिटः श्लेः क्स इति। एतच्च श्लेः सिच् शल इगुपधादित्यतोऽनुवर्तते इति भावः। अनिटः किम्। श्लिषु दाह इति भौवादिकस्य सेटो मा भूत्। अश्लेषीत्। श
ल इगुपधेति सिद्धे पुनः क्सविधेः फलमाह। अधाक्षुः इति। सामर्थ्यादिति। यदि हि श्लिष इति प्राप्त एव क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः। श
ल इगुपधादित्यस्यापीति। तेन कर्मण्यातोऽप्रभृति ष्वनालिंगने च्लेः क्स न भवति न तु क्सः। समाश्लिक्षत् जतूनि काष्ठे इति। क्तप्रत्यये सति तु समाश्लिष्टे ते इति स्यादिति भावः
। प्रत्यासत्ताविति। आलिंगने हि स्त्रीकर्तृकं न तु काष्ठादिकर्तृकमिति भावः। श्लिषश्च राक्षिगन एव क्स इति व्याख्यानफलं दर्शयति। कर्मणीत्यादिना। अश्लि-

श्लिषः ३।१।४६॥ अस्मात्परस्यानिटश्च्लेः क्सः स्यात्। अधाक्षीत्। योयवादो नतु चिणः। पुरस्तादपवादन्यायात्। आलिंगने ३।१।४६॥ श्लिषश्च्लेरालिं
गने एव क्सो नान्यत्र योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः। अश्लिक्षत्कन्यां देवदत्तः। आलिंगन एवेति किम्। समश्लिष
ज्जतु काष्ठं अत्र प्रत्यासत्ताविह श्लिषिः कर्मण्यनालिंगने सिजेव न तु क्सः। एकवचने चिण्। अश्लेषि अश्लिक्षातां अश्लिक्षत अश्लिक्षाः अश्लि
क्षाः। शक विभाषितो मर्षणे। विभाषित इत्युभयपदीत्यर्थः। शक्यति शक्यते हरिं द्रष्टुं भक्तः। शशाक शेकिथ शशक्थ शेके शक्ता शक्ष्यति शक्ष्यते
अशकत् अशक्त। सेट्कोयमित्येके। तन्मतेनानिट्कारिकासु लृदित्यादिः। शकिता शकिष्यति। ष्विदा गात्रप्रक्षरणे। घर्मस्रुताविस्यर्थः। अपंचाद्दितिन्यास
कारादयः नेति हरदत्तादयः। स्विद्यति सिष्वेद सिष्वेदिथ स्वेत्ता अस्विदत्। क्रुध कोपे क्रोद्धा क्रोत्स्यति। क्षुध बुभुक्षायां क्षोद्धा कथं क्षुधित इति
सम्पदादिक्विबन्तात्तारकादित्वादितजिति माधवः। वस्तुतस्तु वसतिक्षुधोरिति इट् स्यात्। शुध शौचे शुध्यति शुशोध शोद्धा। षिधु संराद्धौ। ऊदित्वा
ठः प्रामादिकः। सिध्यति सेद्धा सेत्स्यति असिधत्। रध हिंसासंराध्योः। रध्यति रधिजभारचौतिन्नुम् ररन्ध ररन्धतुः ॥ ॥ ॥

स्नातामित्यादौ यद्यपि क्सासिचोर्विशेषो नास्ति क्सस्याचीत्यकारलोपात् यापियासादावस्ये च निःशेष इति ध्वनयन्नुदाहरति। अश्लिक्षाः। अश्लिट्ट् मिति। न्यास
कारादय इति। तथा च तन्मते नीतः क्त इति च तेमाने क्तो भवति। आदितान्निष्ठायां ने दा स्विन्नः। विभाषाभावादिकर्मणोः। स्विन्नः स्वेदितमित्यादि षिधु संराद्धौ निष्पत्तिः
। ऊदितो चेति क्त्वायामिड्विकल्पः। रलो व्युपधादिति वा कित्त्वं। सिधित्वा सेधित्वा। सिध्वा प्रामादिक इति। ऊदित्वे तत्र दातेषु सिध्यतेः पाठो व्यर्थः स्यादिति भावः॥

तिजेः क्षमायामित्युक्तौ। ईशुचिर्। ईदित्वान्नेट् श्रुक्तौ। क्लिन्नमित्यर्थः। ननद्धेति। नहो धइति धत्वं। चिण्ते पदः तशब्दइति। सामर्थ्यादात्मनेपदप्रथमपुरुषै
कवचनं तशब्दे किं। अपत्स्याः। प्रेण्यपादीति। चिणो लुगिति तशब्दस्य लुक्। नेर्गदेति णत्वं। अबोधीति। दीपजनबुधेति चिण्। अनोरुध कामे। अनोः परो रुध
धातुः कामे काम इच्छा। दिवादिषु पाठसामर्थ्यादनुधादिभ्यइति श्नमं बाधित्वा श्यन्। नानाप्यमिति। सृजिदृशोर्झल्यमकितीत्यकित्येव विधानात्। लिश। आतपादि
नाभनल्यस्य अल्पभावोऽल्पीभावः। लिक्षीष्टेति। लिङ्सिचावात्मनेपदेष्विति कित्वान्न गुणः। अलिक्षतेति। शल इगुपधेति क्सः॥ ॐ ॥ राधोऽक

राधोऽकर्मकाद्वृद्धावेव एवकारो भिन्नक्रमः राधोऽकर्मकादेव श्यन् उदाहरणमाह वृद्धाविति यन्मृत्यमपराध्यति डुत्युमीत्यर्थः विराध्यन्तं
क्षमेत कः डुत्यन्तमित्यर्थः राध्यत्योदनः सिध्यतीत्यर्थः कृष्णायराध्यति दैवं पर्यालोचयतीत्यर्थः दैवस्य धात्वर्थेऽन्तर्भावाञ्जीवत्यादिवद
कर्मकत्वं रराध रराधतुः रराधिथ राधो हिंसायामित्येत्वाभ्यासलोपाविह न हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् राद्धा रात्स्यति अयंसा
दिस्तु रादिस्त्व व्यधताडने ग्रहिज्येति संप्रसारणं विध्यति विव्याध विविधतुः विव्यद्ध विव्यधिथ व्यद्धा व्यत्स्यति विध्येत् अव्यात्सीत् पुष
पुष्टौ पुष्यति पुपोष पुपोषिथ पोष्टा पोक्ष्यति पुषादित्वादङ् अपुषत् शुष शोषणे अशुषत् तुष प्रीतौ दुष वैकृत्ये श्लिष आलिंगने श्लि
ष्यति शिश्लेष श्लेष्टा श्लेक्ष्यति ॥ ॥

मकान्भिन्नक्रमं दर्शयति। अकर्मकादेवेति। राधो वृद्धावेव श्यनिति व्याख्यायामकर्मकादिति विशे
षणं व्यर्थं स्यात् वृद्धावस्याकर्मकत्वात्। अकर्मकात् किं। शत्रुमपराध्नोति। हिनस्तीत्यर्थः। राधसंसिद्धाविति स्वादेः। राधो हिंसायामित्युक्तत्वाद्धिंसायामप्यय
म्। उदाहरणमाहेति। अकर्मकत्व प्रयोजकस्य कस्य चिदर्थस्य इति भावः। अकर्मके श्यन्नतस्य प्रयोगान् दर्शयति। यन्मृत्युमित्यादिना। कृष्णायेति। रा
धीक्ष्योरिति चतुर्थी। अपुषदिति। ङित्वान्न गुणाभावः। शुष। शोष्टा। शोक्ष्यति। श्लिष आलिंगन इति सूत्रं योगविभागेन व्याचष्टे ॥ ॥ ॥

सि.कौ.
टी.त.
ति.उ.
७०

प्रणश्यतीति। उपसर्गादसमासेपीति णत्वं। नशेः। नभाभूपूकमिगमीत्यतो नेत्यनुवर्तते तदाह। णत्वेन स्यादिति। षस्येत्युक्तेपि पदस्येत्यस्य विशेषणेन षां

चक्षमे चक्षमिषे चक्षंसे क्षमिता क्षन्ता अयं नषित् भ्वादिस्तु षित् अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा क्लमु ग्लानौ क्लाम्यति क्लामति श
मीवष्ठन्यपि ष्ठिवुक्लम्वित्येव सिद्धे शमादिपाठो घिनुणर्थः अङ्. अक्लमत् मदी हर्षे माद्यति शमादयो गताः असु क्षेपणे अस्यति आस असिता अस
तेस्थुक् ७।४।१७॥ अङि परे आस्थत् अस्यपुषादित्वादङ् सिद्धे अस्यति वर्त्तीति वचनं तङर्थं तत्र उपसर्गादस्यत्यूह्योरिति वस्यते पर्यास्थत यसु
प्रयत्ने यसोऽनुपसर्गात् ।३।१।७१। संयसश्च ३।१।७२॥ श्यन्वा स्यात् यस्यति यसति संयस्यति संयसति अनुपसर्गात्किं प्रयस्यति जसु मोक्षणे।
जस्यति तसु उपक्षये दसु च तस्यति अतसत् दस्यति अदसत् वसु स्तम्भे वस्यति ववास ववसतुः न शसददेति निषेधः वशादिरयमिति मतेनुवे
सतुः वेसुः व्युष विभागे अयं दाहे पठितः अर्थभेदेन त्वङर्थं पुनः पठ्यते अव्युषत् ओष्वादि इत्यान्ये प्युस इत्यन्ये अयकार इत्यपरे प्लु
ष दाहे अप्लुषत् पूर्वत्र पाठस्त्विजर्थ इत्याहुः तङ्खादिपाठेन गतार्थमिति सुवचं बिस प्रेरणे बिस्यति अबिसत् कुस संश्लेषणे अकुसत् बुस उ
त्सर्गे मुस खण्डने मसी परिणामे परिणामो विकारः समीत्येके लुठ विलोडने उच समवाये उच्यति उवोच ऊचतुः मा भवानुचत् भृशु भ्रंशु अ
धःपतने बभर्श अभृशत् अनिदितामिति नलोपः भ्रश्यति अभ्रशत् वृश वरणे वृश्यति अवृशत् कृश तनूकरणे कृश्यति ञितृष पिपासा
यां हृष तुष्टौ श्यन्नन्तो भौवादिकादिशेषः रुष रिष हिंसायां तीषसहेति वेट् रोषिता रोष्टा रेषिता रेष्टा डिप क्षेपे कुप क्रोधे गुप व्याकुलत्वे
युप रुप लुप विमोहने युप्यति रुप्यति लुप्यति लोपिता सेद्धः अनिट्कारिकासु लुपि साहचर्यात्तौदादिकस्यैव तत्र ग्रहणात् लुभ गार्ध्ये गार्ध्यमा
कांक्षा तीषसहेति वेट् लोभिता लोब्धा लोभिष्यति लुभ्येत् लुभ्यात् अलुभत् भ्वादेरचुत्त्वात्त्वाच्लोभतीत्यपीत्याहुः क्षुभ संचलने क्षुभ्यति ॥

स्येति लाभादेतद्ग्रहणं व्यर्थं सत् ज्ञापयतीत्याह। भूतपूर्वेति। काष्ठानामिति। करणस्य शेषत्वविवक्षायां षष्ठी। तत्र पृथ्येति। अनुदात्तस्य चर्दुपधस्येति विक

रधादिभ्यश्चा स्वरतिसूतीत्यतो वेत्यनुवर्तते। योगविभागो वैचित्र्यार्थः। गणनिर्देशाद्यङ्लुकि ररधितेत्येव न तु रारद्धेति। नेट्यलिटि रधेरिति किं। रंधकः। अलिटीति

रधादिभ्यश्च ७।२।४५ एभ्यो वलाद्यार्धधातुकस्येड्वा स्यात्। ररन्धिथ ररद्ध ररन्ध्म ररन्धिव। रेध्व। नेट्यलिटि रधेः ७।१।६२॥ लिड्वर्जे इटि रधेर्नुम्न स्यात्। रधिता
रधिष्यति रत्स्यति। आङि नुम्। अनिदितामिति नलोपः। अरधत्। णश अदर्शने। नश्यति ननाश नेशतुः। नेशिथ ननंष्ठ। मस्जिनशोर्झलि ७।१।६०॥
रधिष्यति। नश्येत्। नश्यात्। अनशत्। प्रणश्यति। नशेः षान्तस्य ८।४।३६ णत्वन्न
नुम्स्यात्। ननंष्ठ नेशिव नेश्व नेशिम नेश्म नशिता नंष्टा नशिष्यति नंक्ष्यति नश्येत् नश्यात् अनशत्। प्रणश्यति नशेः षान्तस्य ८।४।३६ णत्वन्न
स्यात्। प्रनंष्टा। अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थं। प्रनंक्ष्यति। तृप प्रीणने। प्रीणनं तृप्तिस्तर्पणं च। नाग्निस्तृप्यति काष्ठानां पितृन्तर्प्यासीदि—
—त्युभयत्र दर्शनात्। ततर्पिथ ततर्प्थ ततृपथ ततृप्थ तर्पिता तर्प्ता त्रप्ता। स्पृशमृशकृषेति सिज्वा। अतर्प्सीत् अताप्सीत् अतृपत्। दृप हर्षमो-
हनयोः। मोहनं गर्वः। दृप्यतीत्यादि। रधादित्वादिमौ वेड्भावमर्थमनुदात्तता। द्रुह जिघांसायां। वा द्रुहेति वा घः। पक्षे ढः। दुद्रोग्ध दुद्रोढ दुद्रोहिथ
द्रोहिता द्रोग्धा द्रोढा द्रोहिष्यति ध्रोक्ष्यति। ढत्वघत्वयोस्तुल्यं रूपं। अद्रुहत्। मुह वैचित्त्ये। वैचित्त्यमविवेकः। मुह्यति मुमोहिथ मुमोग्ध मुमोढ मोग्धा मो-
ढा मोहिता मोहिष्यति मोक्ष्यति। अमुहत्। ष्णुह उद्गिरणे। स्नुह्यति सुष्णोह सुष्णोहिथ सुस्नोग्ध सुस्नोढ सुस्नुहिव सुस्नुह्व स्नोहिता स्नोग्धा स्नो-
ढा स्नोहिष्यति स्नोक्ष्यति। अस्नुहत्। ष्णिह प्रीतौ। स्निह्यति सिष्णेह। वृत्। रधादयः समाप्ता इत्यर्थः। पुषादयस्त्वागणान्ता इति सिद्धान्तः। शमु उपशमे। शमा-
मष्टानां दीर्घः श्यनि। ७।३।७४। शमादीनामित्यर्थः। प्रणिशाम्यति शशाम शेमतुः शेमिथ शमिता अशमत्। तमु कांक्षायां। ताम्यति तमिता अतमत्। द-
मु उपशमे। उपशमेरिति ण्यन्तस्य तेन सकर्मकोऽयं न तु शमिवदकर्मकः। अदमत्। श्रमु तपसि खेदे च। श्राम्यति अश्रमत्। भ्रमु अनवस्थाने। वा भ्राशेति
श्यन्वा। तत्र कृते शमामष्टानामिति दीर्घः। भ्राम्यति। लुङि पुषादिङ्। अभ्रमत्। शेषं भ्वादिवत्। क्षमू सहने। क्षाम्यति चक्षमिथ चक्षन्थ चक्षमिव ॥

किं। ररंधिव। अत्र सिकृते संयोगात् परत्वेनाकित्त्वान्न लोपो न। नंष्ठेति। नशेर्वेति कुत्वमिह न शंक्यं। पदान्त एव तद्विधानात्। अन्यथा नष्टं नष्टिरित्यादि न सिध्येत्॥

षुञ्। सुन्वइति। लोपश्चास्येत्युकारस्य वा लोपः। सुनवानीति। आडुत्तमस्येत्याटि कृते हुश्नुवोरिति यणं बाधित्वा परत्वाद्गुणः। सुनोतेः स्यसनोः। नरपरेत्यस्मा न्नेत्यनुवर्तनादाह। षोनस्यादिति। सनितु अभिसुसूः। सन्नेतादस्मात् क्विप्यतो लोपे रुत्वे दीर्घः। सुसूषतीत्येतत्तु नोदाहरणं। स्तौतिण्योरेव षणीति नियमेन

षुञ् अभिषवे अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च तत्र स्नाने अकर्मकः। स्वादिभ्यः श्नुः ३।१।७५॥ सुनोति सुनुतः। हुश्नुवोरिति यण् सुन्व न्ति सुन्वः सुनुवः सुन्वहे सुनुवहे सुषाव सुषुवे सोता सुनु सुनवानि सुनवै सुनुयात् सूयात् सुसुधूञ् स्मृइतीट् असावीत् असोष्ट अभिषुणो ति। अभ्यषुणोत्। अभिसुषाव। सुनोतेः स्यसनोः। ८।३।११७॥ स्ये सनि च परे सुञः षो न स्यात्। विसोष्यति। षिञ् बन्धने। सिनोति। विसिनोति। सि षाय। सिष्ये। सेता। शिञ् निशाने। तालव्यादिः। शेता। डुमिञ् प्रक्षेपणे। मीनातिमिनोतीत्यात्वम्। ममौ। ममिथ। ममाथ। मिम्ये। माता। मीयात्। मा सीष्ट। अमासीत्। अमासिष्टां। अमास्त। चिञ् चयने। प्रणिचिनोति। विभाषा चेः। ७।३।५८॥ अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च। प्रणि चि काय चिचाय चिक्ये। चिच्ये। अचैषीत्। अचेष्ट। स्तृञ् आच्छादने। स्तृणोति। स्तृणुते। गुणोर्तीति गुणः। स्तर्यात्। ऋतश्च संयोगादेः ७।२।४३॥ ऋदन्तात् संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि। तरिषीष्ट स्तृषीष्ट। अस्तरिष्ट अस्तृत। कृञ् हिंसायाम्। कृणोति। कृणुते। चकार। चकर्थ। चक्रे। क्रियात् । कृषीष्ट। अकार्षीत्। अकृत। वृञ् वरणे। वभूथाततन्थजगृम्भववर्थेति निगमे। ७।२।६४॥ एषामेषेडभावो निपात्यते। तेन भाषायां थलीड्व वरिथ। ववृव। ववृवहे। वरिता। वरीता। लिङ्सिचोरात्मनेपदेषु। ७।२।४२॥ वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि। न लिङि। ७।२।३९॥ वृतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट वृषीष्ट। अवारीत्। अवरिष्ट। अवरीष्ट। अवृत। धुञ् कम्पने। धुनोति। धुनुते। अधौषीत्। अधोष्ट। दीर्घान्तोऽप्ययम्। धूनोति। धूनुते। स्वरतिसूतीति वेट्। दुधविथ। दुधोथ। किति लिटि तु श्र्युकः इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्

वषत्वाभावसिद्धेः। एतच्च काशिकायां स्पष्टं। चिञ्। चयनं रचनाविशेषः। विभाषा चेः। चजोरिति सूत्रात् कुरनुवर्तते सन्लिटोर्जेरित्यतः सन्लिटोरिति चास्य

त्येनं अमागमः। रधादय इति। रध नश तृप दृप द्रुह मुह ष्णुह ष्णिह इत्यर्थः। शमु॥ उदित्वात्क्त्वायां वेट्। शमित्वा। शांत्वा। यस्य विभाषेति निष्ठायामनिट्। शांतः। श्रमु अनवस्थाने। शेषमिति। ष्ठ्यनि दीर्घो लुङि अङ् च विशेष उक्तस्ततोऽन्यदित्यर्थः। त्वक्ष एवेति। म्वोश्चेति मस्य नत्वे कृते णत्वं। शमादि पाठ इति। शमित्यष्टाभ्यो घिनुण्। शमादय इति। शम तम दम श्रम भ्रम क्षम क्लम मद इत्यर्थः। यसोऽनुपा। अत्र च दंति। यस इत्येवास्तु। ततः समः नियमार्थमि

णाभनुभहिंसार्थाः क्षभिनभितुभयोस्तु तौ क्र्या दौ च पठ्यंते तेषां क्षुतादित्वादङ्कि ङः क्र्यादित्वात्पक्षे सिज्य वत्येव इह पाठस्तु श्य न्नर्थः। क्लिदू आर्द्रीभावे क्लिद्यति चिक्लेदिथ चिक्लेत्थ चिक्लिदिव चिक्लिद्व क्लेदिता क्लेत्ता ञिमिदा स्नेहने मिदेर्गुणः मेद्यति अ मिदत् क्षुतादिपाठादेवामिदद् मेदिषेति सिद्धे इह पाठोऽमेदीदिति माभूदिति क्षुतादिभ्यो वहिरेवात्मनेपदिषु पाठस्तूचितः ञि ष्विदा स्नेहनमोचनयोः ऋधु वृद्धौ आनर्द्ध आर्द्धत् गृधु अभिकांक्षायां अगृधत् रधत् पुषादयो दिवादयश्च वृत्ताः केचित्तु पुषा दिसमाप्त्यर्थमेव वृत्करणं दिवादिस्तु भ्वादिवदाकृतिगणः तेन क्षीयते मृग्यतीत्यादि सिद्धिरित्याहुः॥ इति दिवादयः॥

दं। सोपसर्गाच्च स्वश्चेत् संपूर्वकाद्वेति। एवं च पूर्वसूत्रे अनुपसर्गादिति ग्रहणमुत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति। दाहे पठित इति। व्युष दाह इत्यस्मिन्नेव गणे पठित इत्यर्थः। अङर्थमिति। दाहे पठितस्य तु सिजेव। अव्योषीत्॥ इति दिवादयः॥ ॥ ॥ ॥

हिंसमीना। प्रमीणाति। हेरचङि। जेघीयते। अचङीति किं। अजीहयत। इह णयं तस्य धात्वन्तरत्वात् केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावान्न कुत्वप्राप्तिरेव नास्ति। त्यचङीति निषेधो व्यर्थः सन् ज्ञापयति। ण्यधिकस्यापि कुत्वं भवतीति। तेन जिघाययिषतीत्यादि सिद्धं। आप्नुहीति। संयोगपूर्वत्वादुतश्च प्रत्ययादिति हेर्लुङ्न। राधो हिंसायां। अत इत्यनुवर्तमाने पि सामर्थ्यादकारमात्रस्यानित्वेन। श्रीयते। अश्नोतेश्च। तस्मान्नुडित्यनुवर्तत इत्याह। दीर्घादिति। श्नुविकरणानिर्देशः किं। व्यादेरशभोजन इत्यस्य माभूत्। आश। आशतुः। त्रिधृषा। शूलेन धृष्णोति प्रगल्भत इति शूलधृक्। शूलधृषौ। ऋत्विग्दधृगिति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वं। दंभु दंभने। लोकवंचनाय विहितकर्मानुष्ठानं दंभः। दभ्नोति। दंभितेति। दंभितवान्। दम्भित्वा। अदम्भीत्। अधश्च। ददम्भ। ददम्भिथ। दम्भेत्यस्य स्थाने अत्र दंभूत इति तत्र उदात्तमदंहस्वमित्यत्रासाभिरुपपादितं। अन्ये त्वाहुः। शतचनयोस्त्वोर्वत्तिनिरित्यत्र अत्य इति पक्षं तमेव। घोङितीति गणस्तु अहि शब्दस्य छांदसत्वान्नेति। रिक्षि। एते षड्धातवः एक एव अजादिरिति मते तु पंच धातवः। इति स्वादयः॥ तुदतीति। लघूपधगुणं बाधित्वा नित्यत्वात् इत्येके। अन्तरङ्गत्वाद्गुणे ऊह परिभाषया गुणो न प्रवर्तत इत्यन्ये। भ्रस्ज पाके। भजनरूपः पाकोऽन्यधात्वर्थोन्नत्वोदनादेः पाकस्तत्र प्रयोगाभावादित्याहुः॥

तन्मते तिपृसिपृ मिपु। देभा देभिथा देभेति रूपान्तरम्बोध्यम्। अपिहिविषयकमिति न्यासकारादिमते तु। ददम्भ। ददम्भिथ। दम्भेत्येवादम्भात् ऋधु वृद्धौ। तृप प्रीणन इत्येके। स्तुभ्नादित्वात्सात्वन्ना। तृप्नोति। छन्दसि। आगणान्तादधिकारोयम्। अहव्याप्तौ। अह्नोति। दघ घातने पालने च। दघ्नोति। चमु भक्षणे। चम्नोति। रि क्षि चिरि जिरि दाश दृ हिंसायां। रिणोति। क्षिणोति। अयं भाषायामपीत्येके। नतद्युशः शस्त्रभृतां क्षिणोति। ऋक्षीत्येक एवाजादिरित्यन्ये। ऋक्षिणोति। चिरिणोति। जिरिणोति। दाश्नोति। दृणोति। दृन्॥ इति स्वादयः॥ ॥ तुद व्यथने॥ तुदादिभ्यः शः। ३।१।७७॥ तुदति। तुदते। तुतोद। तुतोदिथ। तुतुदे। तोत्ता। अतौत्सीत्। अतुत्त॥ णुद प्रेरणे। नुदति। नुदते। नुनोद। नुनुदे। नोत्ता। दिश अतिसर्जने। अतिसर्जनन्दानम्। देष्टा। दिक्षीष्ट। अदिक्षत्। अदिक्षत। भ्रस्ज पाके॥ ग्रहिज्येति संप्रसारणं। सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति। भृज्जते॥

दाहरणं।विकीर्षति।चिचीषति।ऋतश्च संयोगादेः।इट् सनि वेत्यत इडित्यनुवर्तते लिङ्सिचोरिति सूत्रादात्मनेपदेष्विति च तदाह।इट् वा स्यात् ङीति।तङि किं।अस्तार्षीत्।वभूथाततंथ।भूधातोस्तनोतेश्च थलि इडभावो निपात्यते।त्वं हि होता प्रथमो वभूथ।येनांतरिक्षमुर्वाततंथ।भाषायां तु वभूविथ।तेतिथ।जगृभ्मा ते दक्षिणं।

दधुविवासु सुधून्भ्य इति नित्यमिट्।अधावीत्।अधविष्ट।अधोष्ट।अथ परस्मैपदिनः।दुदु उपतापे।दुनोति।हिगतौ वृद्धौ च।हिनुमीना।८।४।१५॥उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्।प्रहिणोति।हेरचङि।७।३।५६।अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि।जिघाय।पृ प्रीतौ।पृणोति।पर्ता।स्पृ प्रीति पालनयोः।प्रीतिचलनयोरित्यन्ये।चलनं जीवनमिति स्वामी।स्पृणोति।पस्पार।स्मृ इत्येके।स्मृणोति।पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः।आप्लृ व्याप्तौ।आप्नोति।आप्नुतः।आप्नुवन्ति।आप्नुवः।आप्ता।आप्नुहि।लृदित्वादङ्।आपत्।शक्लृ शक्तौ।अशकत्।राध साध संसिद्धौ॥राध्नोति।राधो हिंसायाम्।६।४।१२३॥एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। रेधतुः।रेधुः।रेधिथ।राद्धा।साध्नोति।साद्धा।असात्सीत्।असाद्धाम्।अयं द्वावनुदात्तेतौ।अशूङ् व्याप्तौ संघाते च।अश्नुते।अश्नोतेश्च।७।४।७२॥दीर्घादभ्यासादृणात्परस्य नुट् स्यात्।आनशे।अशिता।अष्टा।अशिष्यते।अक्ष्यते।अशुवीत।अशीष्ट।अशिषीष्ट।आशिष्ट।आष्ट।आक्षाताम्।ष्टिघ आस्कन्दने।स्तिघ्नुते।तिष्टिघे।स्तेघिता।अथ आगणान्तात्परस्मैपदिनः।तिक तिग गतौ च।चाद् आस्कन्दने।तिक्नोति।तिग्नोति।षघ हिंसायाम्।सघ्नोति।ञिधृषा प्रागल्भ्ये।धृष्णोति।दधर्ष।धर्षिता।दम्भु दम्भने।दम्भनं दम्भः।दभ्नोति।ददम्भ।श्रन्थिग्रन्थि दम्भि स्वञ्जीनां लिटः कित्वं वेति व्याकरणान्तरम्।इहाप्याश्रीयत इत्युक्तम्।अनिदितामिति नलोपः।तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ।दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ॥देभतुः।ददम्भतुः।इदङ्कित्वम्पिदपिह्नियपकमित्तिसुधाकरादयः॥

मिंद्रहस्तं।भाषायां जगृहिम।वृणोतेः थलि क्रादिसूत्रेणाइण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणं।ववर्थ त्वं हि ज्योतिषां।भाषायां ववरिथ।ववृषे।लिङ्सिचोः।वृत इत्यनुवर्तते।आत्मनेपदेषु किं।अवारीत्।अवारिष्टः।सिचि च परस्मैपदेष्विति निषेधादिह वृतो वेति न दीर्घः। ।   ॥

सि॰कौ॰
टी॰त॰
ति॰उ॰
७४

मू॰ पृणाति। पपर्ण। वृण च। वृणाति। मृण हिंसायाम्। तुण कौटिल्ये। तुतोण। पुण कर्मणि शुभे। पुणति। मुण प्रतिज्ञाने। कुण शब्दोपकरणयोः। शुन गतौ।
द्रुण हिंसागतिकौटिल्येषु। घुण घूर्ण भ्रमणे। षुर ऐश्वर्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्यात्। कुर शब्दे। कुरति। कूर्यात्। अत्र न भकुर्छुरामिति निषेधो न
करोतेः स्वतन्त्रग्रहणादित्याहुः। खुर छेदने। मुर संवेष्टने। क्षुर विलेखने। घुर भीमार्थशब्दयोः। पुर अग्रगमने। वृहू उद्यमने। दन्त्योष्ठ्यादिः। पवर्गीयादिरि
त्यन्ये। तृहू स्तृहू तृंहू हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता। तर्ढा। स्तर्हिता। स्तर्ढा। अतृहीत्। अतार्क्षीत्। अतार्ढाम्। इष इच्छायाम्। इष्ग
मीति छः। इच्छति। एषिता। एष्टा। एषिष्यति। इष्यात्। ऐषीत्। मिष स्पर्द्धायाम्। मिषति। मेषिता। किल श्वैत्यक्रीडनयोः। तिल स्नेहने। चिल वसने। चल वि
लसने। इल स्वप्नक्षेपणयोः। विल संवरणे। दन्त्योष्ठ्यादिः। बिल भेदने। ओष्ठ्यादिः। णिल गहने। हिल भावकरणे। शिल षिल उञ्छे। मिल श्लेषणे। लिख
अक्षरविन्यासे। लिलेख। कुट कौटिल्ये। गाङ्कुटादिभ्य इति ङित्त्वम्। चुकुटिथ। चुकोट। चुकुट। कुटिता। पुट संश्लेषणे। कुच सङ्कोचने। गुज शब्दे। गुड रक्षा
याम्। डिप क्षेपे। छुर छेदने। न भकुर्छुरामिति न दीर्घः। छुर्यात्। स्फुट विकसने। स्फुटति। पुस्फोट। मुट आक्षेपमर्दनयोः। त्रुट छेदने। वा भ्राशेति श्यन्वा। त्रुट्यति त्रुटति। तुत्रोट।
त्रुटिता। तुड कलहकर्मणि। तुटति। तुतोट। तुटिता। चुट छुट छेदने। जुड बन्धने। कड मदे। लुट संश्लेषणे। कृड घनत्वे। घनत्वं सान्द्रता। चकर्ड। कृडिता। कुड बाल्ये। पुड उत्सर्गे।
घुट प्रतिघाते। तुड तोडने। तोडनं भेदः। थुड स्थुड संवरणे। थुडति। तुथोड। तुस्थोड। खुड छुड इत्येके। स्फुर स्फुल सञ्चलने। स्फुर स्फुरणे। स्फुल सञ्चलने इत्येके।
स्फुरति स्फुलत्योर्निर्निविभ्यः। ८।३।७६। वा षत्वं स्यात्। निष्फुरति। निःस्फुरति। स्फर इत्यकारोपधं केचित्पठन्ति। पस्फार। स्फुड चुड व्रुड संवरणे। कुड भृड नि
मज्जन इत्येके। गुरी उद्यमने। अनुदात्तेत्। गुरते। जुगुरे। गुरिता। णू स्तवने। दीर्घान्तः। परिणूतगुणोदयः इत श्रवणात्परस्मैपदिनः। नुवति। अनुवीत्। धू विधून
ने। धुवति। गु पुरीषोत्सर्गे। जुगविथ। जुगथ। गुता। गुष्यति। अगुषीत्। ह्रस्वादङ्गात्। अगुताम्। अगुषुः। ध्रु गतिस्थैर्ययोः। ध्रुव इति पाठान्तरम्। आद्यस्य ध्रुवतीत्यादि
गवतिवत्। द्वितीयस्तु सेट्। दुध्रुविथ। ध्रुविता। ध्रुविष्यति। ध्रूव्यात्। अध्रुवीत्। अध्रुविष्ट। कुङ् शब्दे। दीर्घान्त इति केचित्। अयं दयः। कुविता। अकुविष्ट। ह्रस्वान्त इति न्यास
कारः। कुता। अकुत। वृत्। कुटादयो वृत्ताः। पृङ् व्यायामे। प्रायेणायं व्याङ्पूर्वः। रिङ्। इयङ्। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। व्यापृत। व्यापृषाताम्। मृङ् प्राण

भ्रस्जोरोपधयोः रमन्यतरस्यामित्यत्र उपधाग्रहणं व्यर्थम् ॥ ❋ ॥ भ्रस्जोरोपधयोः रम्यकार उच्चारणार्थः रमित्यस अं
भ्रस्जो इति केषांचित् पाठे तु ओदित्त्वेति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत् ॥ ❋ ॥ भ्रस्जोरोपधयोः रम्यकार उच्चारणार्थः रमित्यस अं
भ्रस्जो इति केषांचित् पाठे तु ओदित्त्वेति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत् अयंभावः स्थानविशेषलाभायमित्त्वस्याकरणात् रोपधयोः स्थाने रम्भवति यत्र स्य
त्वाच्चः परत्वे रोपधयोरिति षष्ठीनिर्देशस्य वैयर्थ्यमाशंक्याह । निवृत्तिरिति । अयंभावः स्थानविशेषलाभायमित्त्वस्याकरणात् रोपधयोः स्थाने रम्भवति यत्र स्य
त्वाच्चः परत्वे रोपधयोरिति षष्ठीनिर्देशस्य वैयर्थ्यमाशंक्याह । निवृत्तिरिति । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थानेन भवति । ए
निर्द्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स ततः स्थाने भवति । यथा इकोयणचीत्यादौ यणादिः । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थानेन भवति । ए
वंचास्य आदेशागमत्वे भवतो यथा श्नमः प्रत्यागमत्वे इति । अन्ये त्वेतादृग्व्याख्यानमयुक्तमिति मत्वा सनः क्तिचि इत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयो र्लो

भ्रस्जो रोपधयोरमन्यतरस्याम् । ६ । ४ । ४७ ॥ भ्रस्जेरेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्द्धधातुके । मित्त्वादन्त्यादचः परः स्थान
षष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज्ज । बभर्ज्जतुः । बभर्ज्जिथ । बभर्ष्ठ । बभर्ज्ज । रमभावे । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति स
लोपः व्रश्चेति षः । बभ्रष्ठ । बभ्रज्ज । भर्ष्टा । भ्रष्टा । भर्क्ष्यति । भ्रक्ष्यति । क्ङिति रमागमम्बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन । भृज्ज्यात् । भृज्ज्यास्ता
म् । भर्क्षीष्ट । भ्रक्षीष्ट । अभार्क्षीत् । अभ्राक्षीत् । अभर्ष्ट । अभ्रष्ट । क्षिप प्रेरणे । क्षिपति । क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त । कृष विलेखने । कृषति ।
कृषते । क्रष्टा । कर्ष्टा । कृष्यात् । कृक्षीष्ट । स्पृशमृशकृषेति सिज्वा पक्षे क्सः । सिचि अम्वा । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । तङि लिङ्सिचावितिकि
त्त्वादम्रा । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षत । अकृक्षाताम् । अकृक्षन्त । ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष । जुषी प्रीतिसेवनयोः आत्म
नेपदिनश्चत्वारः । जुषते । ओविजी भयचलनयोः । प्रायेणायमुत्पूर्वः उद्विजते ॥ ११ पः रमात्तु आगम एवेत्याहुः । अपरे तु भ्रस्जो रसरन्यतर

स्यामित्येव सूत्रमस्तु रसः ऋ इति छेदः रस इति रेफाकारसकाराणां यः संघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः । ततश्च अक्ङिति भर्जको भर्जनं बभर्जेत्यादि सिध्य
ति ऋकाराभावपक्षे तु भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि क्ङिति तु ऋकारपक्षे भृष्टिः । भृज्ज्यादित्यादि । तदभावे संप्रसारणे सति तदेव रूपं । एवं च वरी भृज्ज्यत इत्यादौ
रीङो रेफस्य निवृत्तिं वारयितुमनुदात्तोपदेशा इत्यत उपदेशग्रहणमनुवर्त्य इदानीं तु नानुवर्त्यं क्ङिति रमागमं बाधित्वा संप्रसारणमिति पूर्वविप्रतिषेधश्च न क
र्त्तव्य इति महदेव लाघवमित्याहुः इदं च रसो वचनात्सिद्धमिति वार्त्तिकाशयवर्णनमेव न त्वपूर्वं वचनादित्यस्य वा ऋ ॥ ॥ ॥

तुमित्यत्र संप्रसारणं भवति। व्यचित्यादौ तु ति ङित्त्वयेन भवति। विव्याचेत्यत्र कुटादित्वे जातेपि न क्षतिः। गाङ्कुटादिभ्य इति सूत्रे अञ्णितः प्रत्ययाः ङितः स्युरिति
उक्तत्वात्। उत्तमे णलि तु णित्त्वाभावपक्षे ङित्वात् संप्रसारणे विव्यचेति न सिध्येदिति अनसीति पर्युदास आवश्यक इति बोध्यं। उछि उंछे। उछी विवासे। इमौ
भ्वादिगणे व्याख्यातौ। इह पाठस्तु उंछतीत्यत्र आच्छीनद्योरिति नुम् विकल्पार्थः। पूर्वपाठस्तु स्वरार्थः। तथाहि। उंछति उच्छतीत्यादौ पि हि वनेश प्रतिवादी
नां पित्वात् अनुदात्तत्वे धातुस्वरेण आद्युदात्तं पदं। शे तु प्रत्ययस्वरेण मध्योदात्तमिति। न च सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वक्ष्यमाणत्वा
त् कथमिह मध्योदात्ततेति वाच्यं। कुरुत इत्यादौ तसादेर्विकरणात् परत्वेन तत् स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेपि शस्य धातोः परत्वेन धातुस्वरा
पेक्षया शस्वरस्योदात्तस्य प्रबलत्वात्। उपलक्षणत्वादिति। अत एव अङ्गपदस्य चेत् अश्नोतेरेवेति नियममाश्रित्य हल्ग्रहणं भाष्यकारैः प्रत्याख्यातं। अ
न्यथा तन्न संगच्छेतेति भावः। आनर्छेति। अनर्छ इति पर्युदासान्नाम्। नन्यास्तु नः च्छत् प्रतामिति लिटि परे गुणनिषेधानसामर्थ्यादाम भावः सिद्ध इति इजादे
रिति सूत्रे अनृच्छ इत्येतत्त्वस्य प्रतिपत्त्यर्थमित्याहुः। अन्ये तु नः च्छत् प्रतामित्यत्र तौदादिकात्त ऋच्छेरिति सर्वैरेव व्याख्यातत्वात् गणान्तरेपि त्र्यच्छेर
स्तीत्यनुमीयते तद्धातो स्तु लिट्याम् निवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः। मिछ। उत्कदः क्लेश। उत् क्लेशः। त्र्यच्छ तुतौ। त्र्यच्छ्यते स्तूयते देवतादिकम
नयेति ऋक्। वाहनकादिह करणे किप्। लोभिता। लोब्धा। तीषसहेति वेट्। शिशुं न विप्रा इति। न शब्द इवार्थे। विप्रा ब्राह्मणाः शिशुमिव मतिभी रिहंति। हिंसं
ति न्यूनीकुर्वतीत्यर्थः। चृती हिंसाग्रंथनयोः। ईदित्करणं श्वीदितो निष्ठायामिति इण्निषेधार्थं। यद्यप्यस्य वेट्कत्वान्निष्ठायामिण्निषेधः सिध्यति तथापि
यस्य विभाषेत्यस्यानित्यतां ज्ञापयितुमीदित्करणं। तेन भावितमि भराजभियेत्यादि सिद्धमित्याहुः। कुरशब्दे। करोत्तेरेवेति। तु गमसिद्धत्वात्। कुर्यादित्युक्तेहि
लोकानां भ्रम एवोपस्थितिर्भवति न त्वस्येति भावः। मुरसंवेष्टने। इगुपधलक्षणः कः। मरोदैत्यः मुरारिर्विष्णुः। क्षुर विलेखने। विलेखनं छेदनं। को शा
न् क्षुरति। इगुपधेति कः। क्षुरः शस्त्रं। तिल स्नेहने। तिलति। इगुपधेति क प्रत्यये तिलः। तिलयतो। तेलतीति श पिलिखअक्षरविन्यासे। लिखितं लिखिष्यतीति
प्रयोगः प्रामादिकः। यत्तु कैश्चित् कुटस्यादिः कुटादिः कुटः आदिर्येषां ते कुटादयः कुटादिश्च कुटादयश्च कुटादयः इत्येकशेषं स्वीकृत्य लिखितुमित्यादि स

विजइट्।इहवृद्धिर्यस्येति सूत्रान्मेङ्कवञ्चुत्पाय स्यादिरिति अनुवर्तते तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितं तन्न व्याकु इह इडित्यनेन उक्तमेकवचनेन गृ
ह्यते।तथा च सति विजिषीयेत्यत्रैव स्यान्न तु ह्विजितेत्यादौ।ततश्च इष्टसिध्यर्थमिडागमो गृह्यते तस्य तु ङित्त्वं व्यर्थं तन्निमित्तगुणस्याप्राप्तेरतो लक्षणया इड्ज्ञान
गृह्यते।इट्प्रत्ययस्यादिरिति फलितार्थकथनम् इडादिप्रत्ययो ङिद्वदिति।एवं च इडादिरिति लाभाय यस्यादिरिति अनुवर्तनक्लेशो व्यर्थ एवेत्याहुः।इह ओविजी
ति तुदादिः रुधादिश्च गृह्यते न तु विजिर् पृथग्भावे इति जुहोत्यादिर्व्याख्यानात्।यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः तस्यानिट्कत्वादिति तदयुक्तं।
क्रादिनियमेन लिटि इट्संभवात्।न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यं।अपित्लिटः कित्त्वेपि विविजिथेत्यत्र पित्त्वेन ङित्त्वाभावात्।वव्रश्चे
ति।अत्र नव्याः।वव्रश्चेत्यादौ लिट्यभ्यासस्येत्यभ्यासावयवयोर्द्वयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय न संप्रसारण इति सूत्रं स्वीक्रियते
ततश्च अत एव ज्ञापकात् परस्य प्रथमं संप्रसारणमिति परिकल्प्य आपादपरिसमाप्तेरङ्गाधिकार इति पक्षमभ्युपगम्य उरदत्त्वस्याङ्गाक्षिप्तप्रत्ययनिमित्त
कत्वस्वीकाराच्च परस्मिन्निति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपाद्यते परस्य संप्रसारणं परस्य यणः
संप्रसारणमिति वा सूत्रिते परस्यैव संप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभात् उक्तक्लेशं विनैव वव्रश्च यून इत्यादि सर्वं सिध्यति।न चैवं लिटि वयो यः वेञ इत्यत्र संप्रसार
णानिषेधाय न ञोऽनुवृत्तिर्न लभ्येतेति वाच्यं।न लिटि वयो य इति सूत्रकरणे बाधकाभावान्न संप्रसारण इति यथाश्रुतसूत्रप्रणयने त्वेततो गत्वा मात्राद्वयस्याधिक्याच्च।एवं
च लघूपायेनेष्टसिद्धौ न संप्रसारण इति सूत्रारंभो ज्ञापयति निमित्तभेदाभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तत इति।तथा च सुध्युपास्य इत्यादौ उकारात्परस्य धकारस्य द्वित्वे
कृते पुनरुकारात् परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव।यदि स्थानिभेदेऽपि निमित्तैक्ये कार्यप्रवृत्तिः क्वचिद्दृश्यते तत्र तु ज्ञापकसिद्धं न स
र्वत्रेति स दोषः परिह्रियतामित्याहुः।अत्र श्वीदितो।ऊदित्वात् पक्षे इट् वव्रजेति वृद्धेर्नेटीति निषेधः।अत्र स्यादिति।स्कोरिति सलोपः व्रश्चेति षः।षढोरिति कः।ततः
सस्य षत्वं।न चात्र सकारस्य कथं लोप इति वाच्यं।धातुपाठे सकारस्य पाठात्।तदाहुः।नकारजावनुस्वारपंचमौ झलि धातुषु।सकारजः शकारश्चे षाट्टवर्गस्त
वर्गजः इति।व्रश्चाद्याजीकरणं छकरणं पर्युदासेनेति।प्रसज्यप्रतिषेधे हि वाक्यभेदः समर्थसमासश्च प्रसज्येतेति भावः।कृन्मात्रविषयत्वादिति।त्ते न उद्विचिता उद्वि

किरतौ लवने। उपात्प्रतियत्नेति सूत्राद् उपादिति वर्त्तते। लवने किं। उपकिरति। हिंसायां प्रतेश्चा चाड् पात्। उरोविदार प्रतिचस्करे नखैरिति माघः। कर्मणि लिट् अत्र

किरतौ लवने। ६।१।१४०॥ उपात्किरतेः सुडागमः स्याच्छेदे। उपस्किरति। अडभ्यासव्यवायेपि सुट्कात्पूर्व इति वक्तव्यम्। उपास्किरत्। उ पचस्कार। हिंसायाम्प्रतेश्च। ६।१।१४१॥ उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ निगरणे। अचि विभा षा। ८।२।२१ गिरते रेफस्य लत्वं वा स्यादजादौ। गिरति। गिलति। जगार। जगाल। जगरिथ। जगलिथ। गरिता। गलिता। दृङ् आदरे। आद्रि यते। आद्रियेते। आदद्रे। आदद्रिषे। आदर्त्ता। आदरिष्यते। आदृषीष्ट। आदृत। आदृषाताम्। धृङ् अवस्थाने। ध्रियते। अथ परस्मैपदिनः षोड श। प्रच्छ ज्ञीप्सायाम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छिथ। पप्रष्ठ। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। वृत्। किरादयो वृत्ताः। सृज विसर्गे। विभा षा सृजिदृशोः। ससर्जिथ। ससृष्ठ। स्रष्टा। स्रक्ष्यति। सृजिदृशोर्झल्यमकिति इत्यमागमः। सृजेत्। सृज्यात्। अस्राक्षीत्। टुमस्जो शुद्धौ। मज्ज ति। ममज्ज। मस्जिनशोर्झलीति नुम्। मस्जेरन्त्यात्पूर्वो नुम्वाच्यः। संयोगादिलोपः। ममङ्क्थ। ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षी त्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो भङ्गे। रोक्ता। रोक्ष्यति। अरौक्षीत्। अरौक्ताम्। भुजो कौटिल्ये। रुजिवत्। छुप स्पर्शे॥ छोप्ता। अच्छौप्सीत्। रु श रिश हिंसायाम्। तालव्यान्तौ। रोष्टा। रोक्ष्यति। रेष्टा। रेक्ष्यति। लिश गतौ। अलिक्षत्। स्पृश संस्पर्शने। स्प्रष्टा। स्पर्ष्टा। स्प्रक्ष्यति। स्पर्क्ष्य ति। अस्प्राक्षीत्। अस्पार्क्षीत्। अस्पृक्षत्। विच्छ गतौ। गुपूधूपेत्यायः। आर्द्धधातुके वा। विच्छायति। विच्छायाञ्चकार। विविच्छ। विश प्रवेशने। विशति। वेष्टा। मृश आमर्शने। आमर्शनं स्पर्शः। अम्राक्षीत्। अमार्क्षीत्। अमृक्षत्। णद्ऌ शरणे। कर्त्रभिप्राये पि फले परस्मैपदा र्थः पुनः पाठः। षद्ऌ विशरणगत्यवसादनेषु। सीदतीत्यादि भौवादिकवत्। इह पाठो नुम्विकल्पार्थः। सीदन्ती। सीदती। ज्वलादौ पाठ

कृत्पृतामिति गुणः। दृङ् आदरे। तथाद्रियंते न बुधाः सुधामपीति श्रीहर्षः। प्रच्छ ज्ञीप्सायां। ज्ञातुमिच्छा ज्ञीप्सा। अत्र ज्ञपिज्ञाने। आ प्रच्छ पृथामीत्

मर्थितं। तदसत्। लेखिता लेखिष्यतीत्यादौ गुणनिषेधापत्तेः। न चेष्टापत्तिः। वृत्तिकारहरदत्तादिग्रंथविरोधात्। गाङ्कुटादिभ्य इत्येव सूत्रितव्ये कुटादिभ्य
इति पठनस्य स्वारस्यभंगापत्तेश्च। किंच। शकुनिष्वालेखने इति सौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तं इत्यास्तां तावत्। लिखापयतीति प्रयोगस्तु मनोरमायामि
त्थं समर्थितः। आपनं आयः प्राप्तिः लिखस्यायो लिखायस्तं करोति। स्फुट् विकसने। स्फुटत्यर्थोऽस्मादिति स्फोटः। स च पदस्फोटवाक्यस्फोटादिभेदेन अनेक
विधः। कुङ् शब्दे। कुटादिकार्याभावेऽपि ङित्तानुरोधेनायं कुटादौ पठितः। भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः। पूर्वं पाठस्तु उच्छतीत्यादावि
वकङ इतीत्यादौ आद्युदात्तार्थः। स्फुरति स्फुलत्योः सिवादीनामित्यतो वेत्यनुवर्तते । नादाह। षत्वं वा स्यादिति। परिणूतेति। स्नुक्रमोरिति नेट्। णू स्तवने। अथ धूञ् कम्पने... ॥ ० ॥
॥ ❁ ॥ म्रियतेर्लुङ्लिङोश्च। चात् शित इति अनुकृष्यते तदाह। शितश्च प्रकृतिभूतादिति। तङिति। आत्मनेपदमित्यर्थः। तेन म्रियमाण इति सिद्धम्।

म्रियतेर्लुङ्लिङोश्च ॥१।३।६१॥ लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र। ङित्त्वं स्वरार्थम्। म्रियते। ममार। ममर्थ। मम्रिव। मर्तासि
। मरिष्यति। मृषीष्ट। अमृत। अग्रयपरस्मैपदिनः सन्ना। रिपिगतो लघूपधगुणात् अन्तरंगत्वादियङ्। रियति। पियति। रेता। पेता। धिधारणे।
क्षिनिवासगत्योः। षूप्रेरणे। सुवति। सविता। कृ विक्षेपे। किरति। किरतः। चकार। चकरतुः। करिता। करीता। कीर्यात्। अकारीत् ॥ ॥

रार्थमिति। माहि मृतेत्यत्र तास्यनुदात्तेन्ङित इत्युपदेशाल्लसार्वधातुकमनुदात्तमित्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः
ङित्त्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात्। न च सिज्लोपस्यासिद्धत्वान्न ङितः परत्वं लसार्वधातुकस्य इरूपपादत्वमिति तस्य कथमनुदात्तता स्या
दिति शंक्यं। ङित्त्वसामर्थ्यात् सिज्लोपस्यासिद्धत्वं नेति तु वचनत्वात्। अमृतेत्यत्र आडागमस्यैवोदात्तत्वात् मृङो ङित्त्वस्य न किंचित् प्रयोजनमिति अण्निवारणा
यमाहि मृतेति माङः प्रयोगे तिङ्ङतिङ इति तिङ्न निघाते पि ङित्त्वं व्यर्थमेव स्यात् इति हि शब्दप्रयोगः। हि प्रयोगे तु हि चेत्यनेन तिङ्ङ्तनिघातनिषेधादिष्टस्व
॥ ॥ रः सिध्यतीति बोध्यं। रिपिगतो रपरत्वाल्लघूपधगुणः स्यादित्याशंकायामाह। अंतरंगत्वादिति। ॥

चाप्राप्तविधिः इरित्वेन विकल्पेन प्राप्तो नित्यार्थो विधिरिति फलाभावः । पिंशन्निति दीपयतीत्यर्थः । इति तुदादयः ॥ ॥ रुधादिभ्यः श्नम् । प्रत्ययत्वेपि मित्वादं
त्यादचः परः । प्रत्ययसंज्ञाफलं तु श्नसेत्संज्ञा । शसो चारणं तु श्नसोरल्लोपः श्नान्नलोप इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं फलाभावात् । न चापित्सार्वधातुक

रुधादिभ्यः श्नम् ।३।१।७८। शपोऽपवादः । मित्वादन्त्यादचः परः नित्यत्वाद्गुणं बाधते । रुणद्धि । श्नसोरल्लोपः । णत्वस्यासिद्धत्वादनुस्वारः प
रसवर्णः । तस्यासिद्धत्वाण्णत्वं न । नपदान्तेति सूत्रेणाऽनुस्वारपरसवर्णयोर्लोपो न स्थानिवत् । रुन्धः । रुन्धन्ति । रुन्धे । रोद्धा । रोत्स्यति । रोत्स्य
ते । रुणद्धु । रुन्द्धात् । रुन्द्धि । रुणधानि । रुणधै । अरुणत् । अरुन्धां । अरुणत् । अरुणः । अरुणधम् । अरुधत् । अरौत्सीत् । अरुद्ध । भिदिर् विदा
रणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । अभिनत् । अभिनः । अभिनदम् । अभिन्त । अभिदत् । अभैत्सीत् । अभित्त ॥ छिदिर् द्वैधीकरणे । अच्छिद
त् । अच्छैत्सीत् । अच्छित्त । रिचिर् विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त । विचिर् पृथग्भा
वे । विनक्ति । विङ्क्ते । क्षुदिर् सम्प्रेषणे । क्षुणत्ति क्षुन्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त । युजिर् योगे योक्ता । उछृदिर् दीप्तिदेवनयोः
छृणत्ति । छृन्ते । चच्छर्द । सेऽसिचीति वेट् । चछृदिषे । चछृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अछृदत् अच्छर्दीत् । अच्छर्दिष्ट । उतृदिर् हिंसा
नादरयोः तृणत्ति इत्यादि । कृती वेष्टने । परस्मैपदी । कृणत्ति । आर्द्धधातुके तौदादिकवत् । ञिइन्धी दीप्तौ । अथ आत्मनेपदिनः । श्नान्नलोपः
।६।४।२३। श्नमः परस्य नस्य लोपः स्यात् । श्नसोरल्लोपः । इन्धे । इन्त्से । इन्धिता । इन्धे । ऐन्ध ॥ ऐन्धाः । खिद दैन्ये । खिन्ते । खेत्ता । विद विचारणे । विन्ते
। वेत्ता । अथ परस्मैपदिनः । शिषॢ विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । शिण्ढि । हुंझल्भ्यो हेर्धिरिति वा ऽडलोपः
। अनुस्वारपरसवर्णौ । शिण्ढि । शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्वादङ् । अशिषत् । पिषॢ संचूर्णने । शिषिवत् । पिनष्टि । भञ्जो आम
र्दने । भनक्ति । बभञ्जिथ । बभङ्क्थ । भङ्क्ता । भुज पालनाऽभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । तृह हिसि हिंसायाम् ॥ ॥

स्यादिः त्वेशणनिषेधः फलमिति शंक्यं । रणं तस्यां गत्वाभावात् । अरुण इति । सिपिरश्चेति रुर्वा । एवमभिनरत्यत्रापि । उच्छृदिर् उकारः त्वापामिड्विकल्पार्थः । घृत्वा । छर्दित्वा

अत्रलोपइत्यभ्यासलोपः।पवुलि।प्रच्छकः।प्रच्छाशब्दात्तत्करोतीतिणिजंतात्ण्वुलिनुप्रच्छकः।प्रच्छाशब्दस्तुभिदादेराकृतिगणत्वात्अङिसंप्रसारणेबो ध्यः।किरादयोवृत्ताइति।एतेचभूषाकर्मकिरादिसनामितिवक्ष्यमाणयकिणादिनिषेधवार्तिकेउपयोक्ष्यंते।किरश्चपंचभ्यइत्यत्रपंचभ्यइत्येतदत्तरसूत्रेऽ नुवृत्त्यर्थमितिबोध्यं।ससर्जिथेतिविभाषासृजिदृशोरितिथलिवेट्।विच्छगतौ।तुदादिपाठसामर्थ्यादायप्रत्ययांतादपिशोनतुशप्।तेनविच्छायती।

सृणार्थः।सादः।स्वरार्थश्चशावत्तुदात्तः।शासूदात्तः।शद्ऌशातने।स्वरार्थएवपुनःपाठः।शतात्तुनास्ति।शदेःशितइत्यात्मनेपदोक्तेः।अथषट्स्व रितेतः।मिलसङ्गमे।मिलसंश्लेषणेइतिपठितस्यपुनःपाठःकर्त्रभिप्रायेतङर्थः।मिलति।मिलते।मिमेल।मिमिले।मुच्ऌमोक्षणे।शेमुचादीना म्।७।१।५९।।नुम्स्यात्।मुञ्चति।मुञ्चते।मोक्ता।मुच्यात्।मुक्षीष्ट।अमुचत्।अमुक्त।अमुक्षाताम्।लुप्ऌछेदने।लुम्पति।लुम्पते।अलुप त्।अलुप्त।विद्ऌलाभे।विन्दति।विन्दते।विवेद।विविदे।व्याघ्रभूत्यादिमतेसेडयम्।वेदिता।भाष्यादिमतेऽनिट्कः।वेत्ता।परिवेत्ता।परिवर्जने। ज्येष्ठंपरित्यज्यदारानग्नीश्चलब्धवानित्यर्थः।नुम्नचौ।लिप्उपदेहे।उपदेहोवृद्धिः।लिम्पति।लिम्पते।लेप्ता।लिपिसिचीत्यङ्।।ततङि वा।अलिपत्।अलिपत।अलिप्त।षिचक्षरणे।सिञ्चति।सिञ्चते।असिचत्।असिचत।असिक्त।अभिषिञ्चति।अभ्यषिञ्चत्।अभिषि षेच अथत्रयःपरस्मैपदिनः।कृतीछेदने।कृन्तति।चकर्त्त।कर्तिता।कर्तिष्यति।कर्त्स्यति।अकर्तीत्।खिद्परिघाते।खिन्दति।चिखेद। खेत्ता।अयन्दैन्येदिवादौरुधादौच।पिशअवयवे।पिंशति।पेशिता।अयन्दीपनायामपि।त्वष्टारूपाणिपिंशतु।इतिमुचादयस्तुदादय श्च।।रुधिर्आवरणे।नवस्वरितेतइरितश्च।। ।। ९९ विच्छायंतीइतित्वम्विकल्पः।केचित्तुतुदादिपाठसामर्थ्यादायप्रत्ययस्यपा

क्षिकत्वंस्वीकृत्यविच्छतीविच्छंतीइतिनुम्विकल्पंविच्छतिविच्छतःविच्छंतीत्यादिरूपाणिचोदाजह्रुस्तेषांतुमतेतुदादिपाठस्यकेवलेचरितार्थत्वा दायप्रत्ययांतान्नैवेव।तेनविच्छायंतीइतिनित्यमेवशप्श्यनोरितिनुम्।पठितस्येति।अस्मिन्नेवगणेपरस्मैपदिषुपठितस्येत्यर्थः।तङर्थइति।स्वपा ठस्तुसंश्लेषणेकर्त्रभिप्रायेपिपरस्मैपदार्थः।षिचक्षरणे।षिचिरितिकेचिदिरितंपठंति।तत्तुफलाभावादुपेक्ष्यं।इहलिपिसिचिह्वश्चेतिच्लेरङ्विधीयतेस

सि·कौ·
ति·उ·
७८

अतनिष्ट। अतानिष्टेति। तस्थस्थमिपामिति तादेशः। अतो हलादेरिति वा वृद्धिः। अतत्तेति। तनादिभ्यस्तथासोरिति सिज्लुक्पक्षे अनुनासिकलोपः। अतनिष्ठेति। लुगभावपक्षे। षणु दाने। नांतोऽयं णकारस्तु लाक्षणिकः। तेन यङ्लुकि संसंति संसंत इत्यादावनुस्वारपरसवर्णौ। क्षणु हिंसायाम्। क्षिणु च। इमावपि लाक्षणिकत्वा

अथ सप्त स्वरितेतः। तनु विस्तारे। तनादिकृञ्भ्य उः। तनोति। तन्वः। तनुवः। तनुते। ततान। तेने। तनिता। अतनीत्। अतानीत्। तनादिभ्यस्तथासोः। २।४।७९। तनादेः सिचो वा लुक् स्यात्तथासोः। थासा सहचर्यादेकवचनस्य तशब्दो गृह्यते तेनेह न। यूयमतनिष्ट। अतानिष्ट। अतत। अतनिष्ट। अतथाः। अतनिष्ठाः। षणु दाने। सनोति। सनुते। ये विभाषा। सायात्। सन्यात्। जनसनेत्यात्त्वे। असात। असनिष्ट। असाथाः। असनिष्ठाः। क्षणु हिंसायाम्। क्षणोति। क्षणुते। ह्म्यन्तेति न वृद्धिः। अक्षणीत्। अक्षत। अक्षणिष्ट। अक्षथाः। अक्षणिष्ठाः। क्षिणु च। उप्रत्ययनिमित्तो लघूपधगुणः। संज्ञापूर्वको विधिरनित्य इति न भवतीत्यात्रेयः। भवत्येवेत्यन्ये। क्षिणोति। क्षेणोति। क्षेणितासि। क्षेणितासे। अक्षेणीत्। अक्षित। अक्षेणिष्ट। ऋणु गतौ। ऋणोति। अर्णोति। अर्णुतः। अर्णुवंति। आनर्ण। आनृणे। अर्णितासि। आर्णीत्। आर्त। आर्णिष्ट। आर्थाः। आर्णिष्ठाः। तृणु अदने। तृणोति। तर्णोति। तृणुते। तर्णुते। घृणु दीप्तौ। जघर्ण। जघृणे। अथ द्वावनुदात्तेतौ। वनु याचने। वनुते। ववने। चान्द्रमते परस्मैपदी। वनोति। ववान। मनु अवबोधने। मनुते। मेने। डुकृञ् करणे। करोति। अत उत्सार्वधातुके। उतः प्रत्ययान्नामकुरुश्च इमिति न दीर्घः। कुर्वन्ति। नित्यं करोतेः। ६।४।१०८। प्रत्ययोकारस्य नित्यं लोपः स्याद्म्वोः परयोः। कुर्वः। कुर्मः। चकर्थ। चकृव। कर्ता। करिष्यति। ये च। ६।४।१०९। कृञ उलोपः स्यात् यादौ प्रत्यये परे। कुर्यात्। आशिषि। क्रियात्। कृषीष्ट। अकार्षीत्। तनादिभ्य इति लुकोऽभावे ह्रस्वादङ्गादिति सिचो लोपः। अकृत। अकृथाः

कारो तेन नर्वक्षंति चंक्षंति इत्यत्रानुस्वारपरसवर्णौ। सिचो लोप इति। नचास्मिन्पक्षे प्रत्ययलक्षणप्रवृत्त्या अरुतेत्यत्र गुणः स्यादिति वाच्यं ॥

इट्पक्षेन क्त्वासेडितिकित्त्वनिषेधाद्गुणः। श्नान्नलोपः। अस्य मुख्योदाहरणं। अनक्ति। श्नादित्युक्तेः षष्ठमकारानुबन्धस्य श्नमो ग्रहणमित्याह। श्नमः परस्येति। एवं च यज्ञ
इत्यपक्षेन क्त्वासेडिति कित्त्वनिषेधाद्गुणः। इन्धे इंत्से श्नमो नकारस्यानुस्वारपर
याचेति विश्वशब्दस्यामित्युटि विश्वानामित्यत्र लक्षणप्रतिपदोक्तप्रत्ययग्रहणपरिभाषयोः प्रवृत्त्यानलोपशंकैव नास्तीत्याहुः। भञ्जः। भुजपालनादौ भुजोऽनवनइ
स्वरौ। अनिदितामिति नलोपस्तु न भवति। अल्लोपस्यासिद्धवदत्रेत्यसिद्धत्वात् स्थानिवत्त्वाद्वा। भंजो। ओदित्करणं निष्ठानत्वार्थं। भग्नः। भुजपालनादौ भुजोऽनवन इ
त्यात्मनेपदं वक्ष्यते। भुंक्ते। भुंजाते। भुंजते॥ ॥ तृणह इम्। तृहइति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो मा भूदित्येवमर्थं। न च तौ दादिकस्य तृह इत्य

तृणह इम्। ७।३।९२॥ तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्। हिनस्ति। जिहिंस। हिंसिता।
उन्दी क्लेदने। उनत्ति। उन्तः। उन्दन्ति। उदाम्। उवकार। औनत्। औन्ताम्। औन्दन्। औनः। औनत्। औनदम्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। अन
क्ति। अंक्तः। अञ्जन्ति। आनञ्ज। आनञ्जिथ। आनङ्क्थ। अङ्क्ता। अञ्जिता। अङ्ग्धि। अनजानि। आनक्। अञ्जेः सिचि। ७।२।७१॥ अञ्जेः सिचो
नित्यमिट् स्यात्। आञ्जीत्। तञ्चु संकोचने। तनक्ति। तञ्चिता। ओविजी भयचलनयोः। विनक्ति। विक्तः। विजइडिति ङित्त्वं। विविजिथ। विजिता।
अविनक्। अविजीत्। वृजी वर्जने। वृणक्ति। वर्जिता। पृची सम्पर्के। पृणक्ति। पपर्च॥ इतिरुधादयः॥

स्याद्वृत्त्यर्थमेवाक्तिति घो

कथं ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणो न व्यवधायक इत्यतः पितीति उतो वृद्धिरित्यतो हलीति च वर्तते तेनाह। हलादौ पिती
ति। प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते किं तु पितीति अनुवर्तते एव। तेन तृढ इत्यत्र नातिप्रसंगः। न च हलीत्यन
नुवृत्तौ तृणाहानीत्यत्रातिप्रसंग इति वाच्यं। अचिनेत्यनुवर्तनात्। उंदी क्लेदनम् आर्द्रीभावः। अञ्जू व्यक्ति विवेचनं। म्रक्षणं स्निग्धता। अञ्जेः सिचि। नित्यमिट्
स्यादिति। विभाषाग्रहणानुवर्तते इति भावः। सिचि किं। अंक्ता। पृची। ईदित्त्वान्निष्ठायां नेट्। पृक्तः। अपृणक्। एकाल्लित्यत्र नन्पूर्वः॥ इतिरुधादयः॥ ॥

नेण्देष्वनत्तइत्यनेन।सौत्राइति।नकारोपधाइत्यपि ज्ञेयाः।विष्कभ्नोतीति।अनिदितामितिनलोपः।स्तन्भेरितिषत्वं।वेस्कभ्नातेर्नित्यं।सिवादीनां वेत्यतो वेतिनानुव
र्ततेइतिध्वननार्थमिहनित्यग्रहणं।विस्कभ्नोतीति।स्कभ्नातेरित्यत्रश्नाविशिष्टंरूपंनविवक्षितंकिंतुधातुमात्रं।अन्यथाविष्कंभिता।विष्कंभितइत्यादावपि

मिम्यतुः।ममिथ।ममाथ।मिम्ये।माता।मास्यति।मीयात्।मासीष्ट।अमासीत्।अमासिष्टाम्।अमास्त।षिञ् बन्धने।सिनाति।सिनीते।सिषाय।सि
ष्ये।सेता।स्कुञ् आप्रवणे।स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यःश्नुश्च।३।१।८२।चात् श्ना।स्कुनोति।स्कुनुते।स्कुनाति।स्कुनीते।चुस्काव।चुस्कुवे।स्को
ता।अस्कौषीत्।अस्कोष्ट।स्तम्भ्वादयश्चत्वारः सौत्राः।सर्वेरोधनार्थाइत्येके।माधवस्तु प्रथमतृतीयौस्तम्भार्थौ।द्वितीयोनिष्कोषणार्थः।चतुर्थोधा
रणार्थइत्याह।सर्वेपरस्मैपदिनः।नलोपः।विष्टभ्नोति।विष्टभ्नाति।अवष्टभ्नोति।अवष्टभ्नाति।अवतष्टम्भ।जॄस्तम्भित्यङ्वा।व्यष्टभत्।व्यष्ट
म्भीत्।स्तुभ्नोति।स्तुभ्नाति।वेःस्कभ्नातेर्नित्यम्।८।३।७७।वेःपरस्यस्कभ्नातेःसस्यषःस्यात्।विष्कभ्नोति।विष्कभ्नाति।स्कुभ्नोति।स्कुभ्नाति।हल्
श्नः शानज्झौ।३।१।८३।हलःपरस्यश्नःशानजादेशःस्याद्धौपरे।स्तभान।स्तुभान।स्कभान।स्कुभान।पक्षेस्तभ्नुहीत्यादि।युञ् बन्धने।युनाति।युनीते।
योता।क्नूञ् शब्दे।क्नूनाति।क्नूनीते।क्नविता।द्रूञ् हिंसायाम्।द्रूणाति।द्रूणीते।पूञ् पवने।प्वादीनांह्रस्वः।७।३।८०।शितिपरे।पुनाति।पुनीते।प
विता।लूञ् छेदने।लुनाति।लुनीते।स्तॄञ् आच्छादने।स्तृणाति।स्तृणीते।तस्तार।तस्तरतुः।स्तरिता।स्तरीता।स्तृणीयात्।स्तृणीत।आशिषि।
स्तीर्यात्।लिङ्सिचोरितिवेट्।नलिङि।वृतइत्योलिङिदीर्घोनस्यात्।स्तरिषीष्ट।उश्चेतिकित्त्वम्।स्तीर्षीष्ट।सिचिचपरस्मैपदेष्वितिनदीर्घः।अ
स्तारीत्।अस्तारिष्टाम्।अस्तारिष्ट।अस्तीर्ष्ट।कॄञ् हिंसायाम्।कृणाति।कृणीते।चकार।चकरे।वृञ् वरणे।वृणाति।वृणीते।ववार।ववरे।वरिता।वरीता।
आशिषिउदोष्ठ्यपूर्वस्य ॥ ।

षत्वंनस्यात्।नचेष्टापत्तिः।माधवादिग्रंथविरोधादितिभावः।हलःश्नः।स्तभानेति।अतोहेरित्यारंभसामर्थ्यात्संनि
पातपरिभाषायाअप्रवृत्तेर्हेर्लुक्।अतएवजहीत्यत्रहिलोपवारणायेयंपरिभाषानोपन्यस्तेत्याहुः।यत्तुकेचित्शानजादेशोधातुपाठपठितेभ्यःपरस्यश्नो

उश्चेति सिचः कित्त्वेन तन्निषेधात्। संपर्युपेभ्य इति वृत्तिस्थपाठं विहाय भाष्यवार्त्तिकानुसारेणाह सम्परिभ्यामिति। इति तनादयः॥ एवं गस्याभाव इति। आत्म

सम्परिभ्यां करोतौ भूषणे॥६।१।१३७॥ समवाये च॥६।१।१३८॥ सम्परिपूर्वस्य करोतेः सुट् स्याद्भूषणे सङ्घे चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्। संस्कृतम्भक्षा इति ज्ञापकात्। परिनिविभ्य इति षः। परिष्करोति। सिवादीनां वा। पर्यष्कार्षीत्। पर्यस्कार्षीत्। उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च॥६।१।१३९॥ उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्यस्याध्याहारः आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। अलंकृतेत्यर्थः। उपस्कृता ब्राह्मणाः। समुदिता इत्यर्थः। एधोदकस्योपस्कुरुते। गुणाधानं करोतीत्यर्थः। उपस्कृतं भुङ्क्ते। विकृतमित्यर्थः। उपस्कृतं ब्रूते। वाक्याध्याहारेण ब्रूत इत्यर्थः। सुट् कात्पूर्वः॥६।१।१३५॥ अडभ्यासव्यवायेऽपीत्युक्तम्। सञ्चस्कार। कात्पूर्व इत्यादि भाष्ये प्रत्याख्यातम्। तथा हि पूर्वं धातुरुपसर्गेण युज्यते। अन्तरङ्गत्वात्सुट्। ततो द्वित्वम्। एवं च। ऋतश्च संयोगादेर्गुणः। सञ्चस्करतुः। स्कृसृभृ इति सूत्रे कृञो भारद्वाजस्येति सूत्रे च कृञोऽसुट इति वक्तव्यम्। तेन ससुट्कात्परस्येट्। सञ्चस्करिथ। सञ्चस्करिव। गुणोऽर्तीति सूत्रे नित्यं छन्दसीति सूत्रान्नित्यमित्यनुवर्तते। नित्यं यः संयोगादिस्तस्येत्यर्थात्सुटि गुणो न। संस्क्रियात्। ऋतश्च संयोगादेरिति लिङ्सिचोर्नेट्। एकाच उपदेशे इति सूत्रादुपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरिति व्याख्यानात्। संस्कृषीष्ट। समस्कृत। समस्कृषाताम्॥ इति तनादयः॥ डुक्रीञ् द्रव्यविनिमये॥ क्र्यादिभ्यः श्ना॥३।१।८१॥ क्रीणाति। ई हल्यघोः। क्रीणीतः। ईत्वात्पूर्वं गेरन्तादेशः परत्वान्नित्यत्वादन्तरङ्गत्वाच्च। एवं गस्याभावः। ततः श्नाभ्यस्तयोरित्याल्लोपः। क्रीणन्ति। क्रीणीते। क्रीणाते। क्रीणते। चिक्राय। चिक्रियतुः। चिक्रयिथ। चिक्रेथ। चिक्रियिव। चिक्रियिषे। क्रेता। क्रेष्यति। क्रीयात्। क्रेषीष्ट। अक्रैषीत्। अक्रेष्ट। प्रीञ् तर्पणे कान्तौ च। प्रीणाति। प्रीणीते। श्रीञ् पाके। मीञ् हिंसायाम्। हिनुमीना। प्रमीणाति। प्रमीणीतः। मीनातिमिनोतीत्येज्विषये आत्त्वम्। ममौ॥

अत्तो दीर्घो यञीति दीर्घ सिद्धेः। तथा च दीर्घ निर्देश सामर्थ्यस्योपक्षयात् कथमिह ह्रस्वाभाव सिद्धिरिति चेत्। अत्राहुः ह्रस्वाभावे सत्येव दीर्घ निर्देश उक्त परिभाषाया ज्ञापकः सति तु ह्रस्वे पुनरंग कार्यं प्रवृत्तमेवेति न ज्ञापकः। तथा च ह्रस्वाभाव सिद्धौ न किंचिद्बाधकमिति किंचांगवृत्ते पुनर्वृत्ता वविधिरित्येव परिभाषा शरीरं तच्चोक्त ज्ञापकात् सिद्धं यदि तु म्यसोऽम्यम् इति सूत्रे भाष्ये परिनिष्ठितस्येत्येव पाठस्तर्हि स्वतंत्रमेवेदं वचनं न तु ज्ञापक सिद्धमिति पक्षोऽपि

वध्नाति। ववन्धिथ। ववन्ध। वन्धा। वन्धारौ। भंत्स्यति। वधान। अभांत्सीत्। पूर्वत्रासिद्धमिति भष्भावात् पूर्वं वक्ष्यमाणो हलि लोपः लीति सिज्लोपः। प्रत्यय लक्षणेन सादि प्रत्ययमाश्रित्य भष्भावो न। प्रत्यय लक्षणं प्रति सिज्लोपस्यासिद्धत्वात्। अवन्द्धाम्। अभान्त्सुः। वृङ् सम्भक्तौ। वृणीते। वव्रे। ववृषे। ववृढ्वे। वरिता। वरीता। अवरिष्ट। अवरीष्ट। अवृत। श्रन्थ विमोचन प्रतिहर्षयोः। इतः परस्मैपदिनः। श्रथ्नाति। श्रन्थिथ। श्रन्थीत्यादिना कित्त्व पक्षे एत्वाभ्यास लोपावप्यत्र वक्तव्यौ। इति हरदत्तादयः। श्रेथतुः। श्रेथुः। इदं कित्त्वमिपितामपीति सुधाकरमते। श्रेथिथ। अस्मिन्नपि पक्षे णलि। शश्रन्थ। उत्तमे तु शश्रन्थ। शश्रथेति माधवः। तत्र मूलं मृग्यम्। मन्थ विलोडने। श्रन्थ ग्रन्थ सन्दर्भे। अर्थ भेदात् ग्रन्थ्योः पुनः पाठः। रूपं तूक्तम्। कुन्थ संश्लेषणे। संक्लेश इत्येके। कुथ्नाति। चुकुन्थ। कुथेति दुर्गः। उकोथ। मृद क्षोदे। मृद्नाति। मृदान। मृड च। अयं सुखेऽपि। ष्टुत्वम्। मृड्णाति। गुध रोषे। गुध्नाति। कुष निष्कर्षे। कुष्णाति। कोषिता ॥ ॥ ॥ ॥

एवम् दृश्यत्वाद्व्यग्रतमनोरमायां श्रथादवगम्यते तस्मिंस्तु पक्षे दीर्घ ग्रहण सामर्थ्येनोपक्षीणमिति सम्यगेवायं ग्रन्थ इति। केचित्तु संज्ञापूर्वक विधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः ॥ ॐ ॥ वध्नातीति। अनिदितामिति नलोपः। अभांत्सीदिति। वदव्रजेति वृद्धिः। भष्भावः। अवान्द्धामिति। झषस्तथोरिति तस्य धत्वे। झरो झरीति वा लोपः। वृङ् संभक्तौ। भक्तिर्भजनं। श्रथ कित्त्वपक्षे इति। श्रथिग्रंथि दंभीनां लिटः कित्त्वं वेति व्याकरणान्तरमित्युक्तत्वात् ॥ ॥ ॥

भवति न तु सोऽत्रेभ्य इति व्याख्यायस्तन्नीहीत्युदाहृतं तन्निः प्रमाणाभावाद्ग्रंथविरुद्धं च। प्वादीनां ह्रस्वः। ष्ठिवुक्लमुचमामित्यतः शितीत्यनुवर्तत इत्याह। शिति
पर इति। न लिङीति। अनेन सूत्रद्वयो लिङि दीर्घो नेति स्मारितं। उदोष्ठ्यपूर्वत ओष्ठ्योपि ओष्ठ्यग्रहणेन गृह्यत इत्याह॥ ॥ वूर्यादिति। वरिशीष्टेति। लिङ्सिचो
रात्मनेपदेष्विति वेट्। वूर्षीष्टेति। उश्चेति लिङ्सिचोः कित्त्वाद्गुणाभावे सत्युत्वं। हलः। संप्रसारणस्येत्यनुवर्तते। अंगस्येत्यवयवषष्ठी। हल इति पंचमी। तद्दे

वूर्यात्। वरिषीष्ट। वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट। अवरीष्ट। अवूर्ष्ट। धुञ् कम्पने। धुनाति। धुनीते। दुधविथ। दुधोथ। दुधुविव। धोता। ध
विता। स्तुसुधूञ्भ्य इतीट्। अधावीत्। अधविष्ट। अधोष्ट। अथ ब्व्यन्ताः परस्मैपदिनः। शॄ हिंसायाम्। शॄदॄप्रां ह्रस्वो वेति ह्रस्वपक्षे यण्। अन्यदा ऋ
च्छत्यृतामिति गुणः। शश्रतुः। शशरतुः। श्र्युकः कितीति निषेधस्य क्रादिनियमेन बाधः। शशरिव। शश्रिव। शरिता। शरीता। शृणाहि। शीर्यात्
अशारिषाम्। पॄ पालनपूरणयोः। पप्रतुः। पपरतुः। आशिषि। पूर्यात्। वॄ वरणे। भरण इत्येके। भॄ भर्त्सने। भरणेऽप्येके। मॄ हिंसायाम्। मृणाति।
ममार। दॄ विदारणे। दद्रतुः। ददरतुः। जॄ वयोहानौ। झॄ इत्येके। धॄ इत्यन्ये। नॄ नये। कॄ हिंसायाम्। ॠ गतौ। ॠणाति। अराञ्चकार। अरिता। आरीत्।
आरीताम्। ईर्यात्। आरीत्। आरिष्टाम्। गॄ शब्दे। ज्या वयोहानौ। ग्रहिज्या। हलः। अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्ताङ्गस्य दीर्घः स्यात्।
इति दीर्घे कृते। प्वादीनां ह्रस्वः। जिनाति। जिज्यौ। जिज्यतुः। री गतिरेषणयोः। रेषणं वृकशब्दः। ली श्लेषणे। विभाषा लीयतेरित्येज्विषये आ
त्वम्वा। ललौ। लिलाय। लाता। लेता। व्ली वरणे। व्लिनाति। प्ली गतौ। वृत्। ल्वादयो वृत्ताः। प्वादयोऽपीत्येके। व्री वरणे। भ्री भये। भर इत्येके। क्षीष हिं
सायाम्। एषां त्रयाणां ह्रस्वः। केचिन्मते तु न। ज्ञा अवबोधने। ज्ञाजनोर्जा। जानाति। दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः। बन्ध बन्धने। ९ ॥

तदाह। अंगावयवादिति। अंगावयवात्किं। निरुतं दुरुतं। तरं तांगस्य किं। विध्यति। क्षीष हिंसायां। षित्त्वादङ्। क्षिया। हेति क्षिपायां। क्षियाशीरित्यादौ क्षिया धर्म
व्यतिक्रम आचारभेद इति वक्ष्यति। दीर्घनिर्देशसामर्थ्यादिति। न तु दीर्घग्रहणेन अंगवृत्तपरिभाषात्राप्युत इत्याकरे स्थितं। अन्यथा ज्ञाजनोर्जे विदध्यात्।

ग्रहोऽलिटि दीर्घः। एकाचः किम्। जाग्रहिता। जाग्रहिष्यति इत्यादौ यङ्लुकि मा भूत्। विहितस्येति किम्। ग्राहिता। न चात्र णिलोपस्य स्थानिवद्भावात् ग्रहेः परत्वं नेति वाच्यम्। दीर्घविधौ स्थानिवत्त्वनिषेधात्। त्रैयादिकदीर्घविधावेव स्थानिवत्त्वनिषेध इत्यभ्युपगमे तु विहितविशेषणं व्यर्थमेवेत्याहुः। प्रकृतस्येटो ग्रह

ग्रहोऽलिटि दीर्घः।७।२।३७॥ एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि। ग्रहीता। लिटि तु जग्रहिथ। अग्रहीष्ट। ग्रहीषीष्ट। हस्यन्तेति न वृद्धिः। अग्रहीषाम्। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत॥ इति क्र्यादयः। चुर स्तेये। सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्।३।१।२५॥ एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे। पुगन्तेति गुणः। सनाद्यन्ता इति धातुत्वम्। तिप्शबादि गुणायादेशौ। चोरयति। णिचश्च।१।३।७४। णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। चोर्यात्। चोरयिषीष्ट। णिश्रीति चङ्। णौ चङीति ह्रस्वः। द्वित्वम्। हलादिः शेषः। दीर्घो लघोरित्यभ्यासदीर्घः। अचूचुरत्। अचूचुरत। चिति स्मृत्याम्। चिन्तयति। अचिचिन्तत्। चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्। तेन चिन्त्यात्। चिन्त्यते इत्यादौ न लोपो न। चिन्तति। चिन्तेत्। एतच्च ज्ञापकं सामान्यापेक्षमित्येके। अत एव हल इत्यत्र वृत्तिकृता जगणानुं जगणुरित्युदाहृतत्वात्। विशेषापेक्षमित्यपरे। अत एवाधृषाद्वेत्यस्य नैयर्थ्यमप्यन्तिसङ्गो वा। यन्त्रयति। यन्त्रेति पठितुं शक्यम्। यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम्। एवं कुद्रि तन्त्रि मन्त्रि। स्फुडि परिहासे। स्फुण्डयति। इदित्करणात् स्फुण्डति। स्फुटीति पाठान्तरम्। स्फुण्टयति। लक्ष दर्शनाङ्कनयोः। कुद्रि अनृतभाषणे। कुन्द्रयति। लड उपसेवायाम्। लाडयति। मिदि स्नेहने। मिन्दयति। मिन्दति। ओलडि उत्क्षेपणे। ओलण्डयति। ओलण्डति॥

९९ णात् ग्राहिता ग्राहिष्यत इत्यादौ चिण्वदिटो न दीर्घः। ग्रहीषीष्टेति। वृत इत्यत्र चतेर्न लिङीति दीर्घनिषेधो न प्रवर्तते। अग्रहीषातामिति। ङित्त्वादात्मनेपदद्विवचनं॥ इति क्र्यादयः॥ सत्यापपाश

निरंकुषः। स्वरतीतिसूत्रादिडित्यनुवर्तते आर्द्धधातुकस्येडित्यधिक्रियत एव तदाह। बलादेरित्यादि। निरः किं। कोषिता। कोषितुं। निरकुषदिति। इडभावे क्तः ॥ सहिनासाहचर्यादिति। यद्यपि षह सुह चक्यर्थ इति दिवादिरपि सहिरस्ति तथापि सहेति शपा निर्देशात् भौवादिकेनैव सहिना साहचर्यमित्याहुः। श्यन् प्रत्ययादिति। बहुव्रीहिरयं। श्यन्प्रत्ययवत इषेस्तकारे परत इड्विकल्पप्रतिषेध इति वार्त्तिकार्थः। तथा च दैवादिकादिड्विकल्पो नेति फलितं। एवं च तीषसहेत्यत्र

निरः कुषः। ७।२।४६॥ निरः परात्कुषो वलादेरार्द्धधातुकस्येड्वा स्यात्। निष्कोषिता। निष्कोष्टा। निरकोषीत्। निरकुक्षत्। क्षुभ संचलने। क्षुभ्नादिषु च। ८।४।३९॥ क्षुभ्नाति। क्षुभ्नीतः। क्षोभिता। क्षुभाण। णभ तुभ हिंसायां। नभ्नाति। तुभ्नाति। नभते। तोभते। इति शपि। नभ्यति। तु भ्यतीति श्यनि। क्लिशू विबाधने। शादिति ष्टुत्वनिषेधः। क्लिश्नाति। क्लेशिता। क्लेष्टा। अक्लेशीत्। अक्लिक्षत्। अश भोजने। अश्नाति। आश। उध्रस उञ्छे। उकार इत्। ध्रस्नाति। उकारो धात्ववयव इत्येके। उध्रसांचकार। इष आभीक्ष्ण्ये। पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यं। इष्णा तितीषसहेत्यत्र सहिना साहचर्याद् दकारविकरणस्यतो दादिकस्यैव इषेर्ग्रहणान्न तु इष्यतीष्णात्योरित्याहुः। एषिता। वस्तुतस्तु इष्णातेर पि इड्विकल्प उचितः। तथा च वार्त्तिकम्। इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति। विष विप्रयोगे। विष्णाति। वेष्टा। प्रुष प्लुष स्नेहनसेवनपूरणेषु। प्रुष्णाति। प्लुष्णाति। पुष पुष्टौ। पोषिता। मुष स्तेये। मोषिता। खच भूतप्रादुर्भावे। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः॥ खच्नाति। वान्तोऽयमित्येके। च्छ्वोः शूडनुनासिके च। ६।४।१९॥ सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। खौनाति। चखाव। खविता। शानचः परत्वाद् ठित्त्वे हलन्तत्वाभावान्न शानच्। खौनीहि। हिठ च ष्टुत्वं महिठ राणाति। ग्रह उपादाने। स्वरितेत्। ग्रह्णाति। गृह्णीते। इष्णातेरपि ग्रहणमिति बोध्यं। पोषितेति। अनिट्सु पुष्यतीति श्यना निर्देशादयं सेडिति भावः। च्छ्वोः शूडनु। क्वाविति सतुक्कस्येति करणं। चुत्वेन तकारस्थाने चकार इत्याह सतुक्कस्येति। एवं च सूत्रे छकारात् पूर्वं चकारोऽशेयः। सतुक्कस्य किं। विच्छ प्रच्छाभ्यां नङ् प्रत्यये छकारस्य शकारे कृते तुकोऽश्रवणं यथा स्यात् असुतव्यूह परिभाषा त्वनित्या। अस्मादेव सतुक्कग्रहणात्। तेनातिक्रांतो भवकं तमतिभवकानित्यादि सिद्धमित्याहुः। सूत्रस्थेन च शब्देनाविमलोः क्ङितीत्यनुकृष्य

भ्राजभासेति ह्रस्वपक्षे सन्वद्भावविषयत्वाद्दीर्घो लघोरित्यभ्यासस्य दीर्घः। ह्रस्वाभावपक्षे तु न दीर्घ इत्याह। अपीपिडदित्यादि। दृपूरणे। दीर्घोच्चारणमि

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्। ७।४।३॥ एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ। अपीपिडत्। अपिपीडत्। नट अवस्यन्दने। अवस्यन्दनं नाट्यम्। श्रथ प्रयत्ने। प्रस्थाने इत्येके। बध संयमने। बधयति। बन्धेति चान्द्राः। दृ पूरणे। पारयति। दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गं तद्धि सेट्कत्वाय। एवम्पृणाति पिपर्तिभ्याम्पारितेत्यादिसिद्धावपि परति परत इत्यादिसिद्धिः फलम्। ऊर्ज बलप्राणनयोः पक्षपरिग्रहे। वर्ण चूर्ण प्रेरणे। वर्णं वर्णन इत्येके। प्रथ प्रख्याने। प्राथयति। नान्ये मितोऽहेताविति त्वस्यमाणत्वान्नास्य मित्त्वम्। अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्। ७।४।९५॥ एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ। इत्त्वापवादः। अपप्रथत्। पृथ प्रक्षेपे। उर्ऋत्। ७।४।७॥ उपधाया ऋवर्णस्य स्थाने ऋत् स्याद्वा चङ्परे णौ। इररामपवादः। अपीपृथत्। अपपर्थत्। पथ इत्येके। पाथयति। षम्ब सम्बन्धने। सम्बयति। अससम्बत्। शम्ब च। अशशम्बत्। साम्ब इत्येके। भक्ष अदने। कुट्ट छेदनभर्त्सनयोः। पूरण इत्येके। कुट्टयति। पुट्ट चुट्ट अल्पीभावे। अट्ट षुट्ट अनादरे। अट्टयति। अयं दोपधः। ष्टुत्वस्यासिद्धत्वान्न न्द्रा इति निषेधः। आट्टिटत्। लुण्ठ स्तेये। लुण्ठयति। लुण्ठतीति लुठिस्तेये इति भौवादिकस्य। शठ श्वठ असंस्कारगत्योः। श्वठि इत्येके। तुजि पिजि हिंसाबलादाननिकेतनेषु। तुञ्जयति। पिञ्जयति। इदित्करणात्। तुञ्जति। पिञ्जति। तुज पिज इति केचित्। लजि लुजि इत्येके। पिस गतौ। पेसयति। पेसतीति तु शपि गतम्। षान्त्व सामप्रयोगे। श्वल्क वल्क परिभाषणे। ष्णिह स्नेहने। ष्मिट इत्येके। ष्मिङ् अनादरे। अषोपदेशत्वान्न षः। असिस्मिटत्। ष्मिङ् अनादर इत्येके। ङित्त्वस्यावयवेऽचरितार्थत्वात्सिजन्तात्तङ्। स्माययते। श्लिष श्लेषणे। पथि गतौ। पन्थयति। पन्थति। पिच्छ कुट्टने। छदि संवरणे। छन्दयति। छन्दति। श्रण दाने।

त्यादि। पारयतीत्यादिरूपाणि ह्रस्वोच्चारणेऽपि सिध्यन्तीति परतीत्याद्यर्थं दीर्घोच्चारणमित्यर्थः। अत्र वदन्ति। धातुपाठकर्त्ता पाणिनिना विशिष्यैव उदात्तानुदात्त

एतस्योदाहरणानि अग्रे नामधातुप्रस्तुटीभविष्यंतीति नास्माभिरुपपाद्यंते। त्वच शब्दोऽकारांतः। प्रपंचार्थमिति। सत्यापग्रहणंतु आपुगर्थमिति ज्ञेयं। अन्येत्वाहुः। सायेक्षेभ्योपि णिजर्थमेषामुपादानं। अन्यथा स्मरणीयं घटं करोतीत्यादाविव स्मरणीयं रूपयतीत्यादावपि णिज् न स्यादिति। अचूत्तुरदिति। अत्र प्राचां व्याख्यात्रा सन्वल्लघुनीति सन्वत्भाव इत्युक्तं तद्भ्रमसात्। सन्वत्भावविषये हि जायमानो दीर्घः सन्वत्भावं नापेक्षत इति। सामान्यापेक्ष मिति। सर्वेपि चुरादयो विकल्पेन णिचं लभंत इत्येतदर्थकमित्यर्थः। नचैवमाधृषाद्वेति व्यर्थमिति वाच्यं। ज्ञापकसिद्धस्यासार्वत्रिकत्वात्। एवंचास्मिन् पक्षे आधृषीयाणामेवैछिको विकल्पः। अन्येषांतु शिष्टप्रयोगान्व्यवस्थित इत्यर्थः। जगाराजगरात्तुरिति। ववृतौ चकाराचकरात्तुरिति प्रचुरः पाठस्तस्मिंस्तु पाठे नास्त्येव प्रकृतार्थसिद्धिः। केचित्तु णिजभावे गणयामासेत्यादिरूपाभावेपि गणधातोरदंतत्वाद्गणामासेत्यामाभवितव्य

ओकार इदित्येके। लण्डयति। लण्डति। उकारादिरयमित्यन्ये। उलण्डयति। जल अपवारणे। लज इत्येके। पीड अवगाहने। पीडयति

मिति जगाराणेत्यादिपाठश्चिंत्य इत्याहुः। नचैवमपार्थ्यमिति। वैयर्थ्यशंकापि नेत्ययमेव पक्षोयुक्त इति भावः। न च पूर्वोक्तपक्षस्य शिथिलत्वे जगाराजगरात्तुरिति वृत्तिप्रयोगः कथं संगच्छतामिति शंक्यं। भ्वादेराकृतिगणत्वात् तत्रत्यधातोस्तद्रूपसिद्धेः। तच्चिंत्यमिति। पत्रितत्रिमत्र्यादिष्विदकारो व्यर्थ एव नत्वज्ञापनार्थः। तेषां संयोगांतत्वात् यंत्रतंत्रमंत्र इति नकारे पठितेप्यनिदितामिति लोपो न लभ्यते नकारस्यानुपधात्वात्। चिंत्यादित्यत्रतु चिन्तत्स्मृत्यामिति नकारोपधपाठेन लोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः। लड इत्येके पूर्विकासेवा उपसेवा। लाडयति पत्नी। लडयोरभेदाल्लालयति॥ ॐ ॥ ओकार इदित्येक इति। ओदित्करणमोदितश्चेति धातोरव्यवहितस्य निष्ठातकारस्य नत्वार्थमिति तद्धलान्नेडित्येके। लंडिनः। ओदिद्धलादिड्व्यवधानेपि नत्वमित्यन्ये। लंडिनः। पीड अवगाहने ॥ ॥

थदित्यादावय इति विवेकः। नन्विह उरित्यनूद्यमानः सवर्णान् गृह्णाति ऋदिति विधीयमानस्तु न गृह्णाति। तथा च अचीक्लृपदित्यत्र उर्ऋदित्यनेन ऋवर्णे सति। अचीकृपदिति प्रसज्येतेति चेत् मैवं लत्वस्यासिद्धत्वेन प्रथमम् उर्ऋदित्यस्य प्रवृत्तौ पश्चात् कृपो रो ल इत्यनेन ऋकारैकदेशस्य ऌकारैकदेशविधानादिष्टसिद्धेः। न च चलीक्लृप्यत इत्यादौ रीगागमादेर्लत्वार्थं कृपो रो ल इत्यस्यावश्यकत्वेऽपि कृपू धातुः कृपूसामर्थ्य इत्येव पठ्यतां एवं हि प्रक्रियालाघवं लभ्यते ऋकारैकदेशस्य ऌकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीति वाच्यं। अचीक्लृपदित्यत्र उर्ऋदित्यस्य प्रवृत्तावनिष्टरूपप्रसंगात्। कृपो रो ल इत्यनेन ऋकारैकदेशस्य ऌकारैकदेश इत्यभ्युपगमे तु उक्तव्याख्यानक्लेशो ध्रौव्यात् इदं चवैपटरीत्योक्तं। न त्विदं क्षोदक्षमं। ऋत उदित्यनेन तपरकरणेन ऌवर्णग्राहकत्वे रूपसिद्धेः स्पष्टत्वात्। अयं टोपध इति। टोपधत्वे त्वाट्टिटिदिति स्यादिति भावः। शठ श्वठ। शाठयति। असंस्कृतो भवति गच्छति वेत्यर्थः। श्वाठयत इति। आत्वं तु नेह भवति। नित्यं स्मयते रिति निर्देशेन स्मिङ् ईषद्धसन इति भौवादिकादेव हेतुमण्णौ। तद्विधानात्। श्रण दाने। विश्राणनं वितरणं। खुद संक्षोदने। एयास श्रेय इति प्रत्विचोदना। वज मार्ग। वाजयति मार्गयति। केचित्तु मार्गेति न धात्वंतरं किंतु वजेत्येक एव धातुर्मार्गसंस्कारे गतौ चेति व्याचख्युः। ज्ञप मिच्च। आज्ञप्यामित्येकोऽत्र पथानुरोधं लभते मित्त्वं ज्ञकश्चेत्यन्ये। ज्ञाने ज्ञापने चेति प्रतिपद् ज्ञसिं चेतनाः। प्रज्ञस्त्री ज्ञायामित्यत्र ज्ञाने। ष्ठा घन्तुड् सूत्रे ज्ञीप्समानो बोधयितुमिच्छमाना इति व्याख्यया ज्ञापने च प्रयोगदर्शनादिति भावः। वेष्टनमिति। परिवेषस्तु परिधिरित्यमरः। नन्वित्यादि। अयं भावः। घटादौ यमो परिवेषणे इति पठितं तत्र परिवेषणमिति हेतुमण्यंतस्य रूपं हेतुमण्यंतस्य हि भोजनावेष्टनाद्यर्थः तथा च परिवेषण इत्यनेन भोजनात्तो वेष्टनात् तस्मादन्यत्र मित्त्वनिषेधेऽपि तयोरर्थयोस्त्वमंतत्वादेव मित्त्वसिद्धेरिति। यद्यपि घटादौ यच्छति भोजनात्तोऽन्यत्र भिन्नेति व्याख्यातं तथाप्यत्र यत्यथानुगुण्येनोपलक्षणतया तद्व्याख्येयमित्याहुः। अत्रेदं बोध्यं। घटादौ यमो परिवेषण इत्यत्र परिपूर्वकस्य विषेर्णिजंतस्य ल्युटि रूपं यम च परिवेषण इत्यत्र तु केवलस्यैव ल्युटि रूपं न तु णिजंतस्य। तथा च भोजनावेष्टनायामपि परिवेषणशब्दार्थत्वादुभयत्राप्यमंतत्वेनैव मित्त्वं सिध्यति। वेष्टने तु अपरिवेषण इत्यनेन अमंतत्वप्रयुक्तमित्त्वस्य निषेधेऽपि यम च परिवेषण इत्यनेन मित्त्वं सिध्यतीति दिक्॥

श्रपठिताः। नहि श्रकारान्ताः सेट्काः इति। तेन परिभाषितं येनेत्यं तस्याशयः कल्प्येत। क्वचिकल्पद्रुमे तस्य नित्यएवं तत्प्रयुक्तमिति। एवं चास्मिन् पक्षे दीर्घोच्चारणं व्यर्थमिति फलितं। अन्ये तु दीर्घोच्चारणं परिता परीतेत्यादौ वृत्तो वेति रटो दीर्घ विकल्पार्थं। ततश्च णिज्विकल्पः सिद्धएवेति परतीत्यादि रूपमाहुः। ऊर्ज। ऊर्जे

प्रायेणायं विपूर्वः। विश्राणयति। तड आघाते। ताडयति। खड खडि भेदने। खाडयति। खण्डयति। कुडि रक्षणे। गुडि वेष्टने। रक्षणे इत्येके। कुठि इत्यन्ये। अवकुण्ठयति। अवकुण्ठति। गुठि इत्यपरे। खुडि खण्डने। वटि विभाजने। वडि इत्येके। मडि भूषायां हर्षे च। भडि कल्याणे। छर्द वमने। पुस्त बुस्त आदरानादरयोः। चुद सञ्चोदने। नक्क धक्क नाशने। गोपदेश लक्षणे पर्यं दस्तो यमप्रनक्कयति। चक्क चुक्क व्यथने। क्षल शौचकर्मणि। तल प्रतिष्ठायाम्। तुल उन्माने। तोलयति। अतूतुलत्। कथन्तु लयति तुलना इत्यादि — अतुलोपमाभ्यामिति निपातनाद् उन्नस्य तुलाशब्दस्य सिद्धौ ततो णिच्। दुल उत्क्षेपे। पुल महत्वे। चुल समुच्छ्राये। मूल रोहणे। कल क्षेपे। बिल भेदने। तिल स्नेहने। चल भृतौ। पाल रक्षणे। लूष हिंसायाम्। शुल्व माने। शूर्प च। चुट छेदने। मुट सञ्चूर्णने। पडि पसि नाशने। पण्डयति। पण्डति। पंसयति। पंसति। व्रज मार्गसंस्कारगत्योः। शुल्क अतिस्पर्शने। चपि गत्याम्। चम्पयति। चम्पति। क्षपि क्षान्त्याम्। क्षम्पयति। क्षम्पति। छजि कृच्छ्रजीवने। श्वर्त गत्याम्। श्वभ्र च। ज्ञप मिच्च। अयं ज्ञाने ज्ञापने च वर्त्तते। मितां ह्रस्वः। मितामुपधाया ह्रस्वः स्यात् णौ परे। ज्ञपयति। यम च परिवेषणे। चान्मित्। परिवेषणमिह वेष्टनं न तु भोजनं नापि वेष्टनं। यमयति चन्द्रं। परिवेष्टत इत्यर्थः। चह परिकल्कने। चहयति। अचीचहत्। कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचचहत्। चप इत्येके। चपयति। रह त्यागे इत्येके। अरीरहत्। कथादेस्तु। अररहत्। बल प्राणने। बलयति। चिञ् चयने॥ ॥ ९

यति। बलवान् भवति जीवतो वेत्यर्थः। ऊर्जितं। जिघ्रतेर्वेत्यतो वेति वर्तते। इररा मिति। ऋकारो पधे उपधाया श्रेत्यचीकृतदित्यादौ रर प्राप्तः अमीमृजदित्यत्र मृजेर्वृद्धिः रार प्राप्तः इतरेषां त्वड् उपधानां गुणेन। अपीप्ट

चेत।मेवं।तथा हि सति।क्न कारीयतीत्यत्रापि इत्वप्रसंगात्॥ ॥ अर्हेनइत्येक इति। अत्र वदंति। अर्हेनेत्तु वितु वीभ्वा दीर्घविती। तपोस्त्वत्रपाठे चथास्यादित्वा देवलुं वति तुं वती त्यादिरूपसिद्धेः। अदर्शनेत्वर्थेऽर्थभेदात्म्वादिपाठः सार्थक इत्यदेनार्थत्वे चौरादिकयोरयत्तमित्यस्वरसादेक इत्युक्तमिति। म्रक्ष म्लेच्छने। म्रक्षणोऽप्ययं। त्त्रचतेत्वादिनाऽभ्यंजने म्रक्षयति। अममम्रक्षत्। गर्द पूर्वनिकेतने। गूर्दयति। गूर्वयति कि चित्तु पूर्वनिकेतने इति पठित्वा गर्द्धातुः पूर्वति वा

अर्देनेइत्येके। ह्रूप व्यक्तायां वाचि। लूपेत्येके। चुटि छेदने। इल प्रेरणे। एलयति। ऐलिलत्। म्रक्ष म्लेच्छने। म्लेच्छ अव्यक्तायां वाचि। ब्रूसवर्ह हिंसायाम्। केचिदिह गर्ज गर्द शब्दे। गर्ध अभिकांक्षायामिति पठन्ति। गुर्द पूर्वनिकेतने। जसि रक्षणे। मोक्षणे इति केचित्। जंसयति जंसति। ईड स्तुतौ। जसु हिंसायाम्। पिडि सङ्घाते। रुष रोषे। रुट इत्येके। डिप क्षेपे। ष्टुप समुच्छ्राये। आकुस्मादात्मनेपदिनः। कुस्म नाम्नो वेति वक्ष्यतेत मभिव्याप्येत्यर्थः। अकर्तृगामिफलार्थमिदम्। चित सञ्चेतने। चेतयते। अचीचितत। दशि दंशने। दंशयते। अददंशत इदित्त्वासिजभावे। दंशति। आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः। नलोपे संज्ञिसाहचर्यात् ज्ञादेरेव ग्रहणम्। दसि दर्शनदंशनयोः। दंसयते। दंसति। दसेत्यप्येके। डप डिप सङ्घाते। तत्रि कुटुम्बधारणे। तन्त्रयते। चान्द्रा धातुद्वयमिति मत्त्वा कुटुम्बयते इत्युदाहरन्ति। मन्त्रि गुप्त परिभाषणे। स्पश ग्रहणसंश्लेषणयोः। तर्ज भर्त्स तर्जने। वस्त गन्ध अर्दने। वस्तयते। गन्धयते। विष्क हिंसायाम्। हिष्केत्येके। निष्क परिमाणे। लल ईप्सायाम्। कूण संकोचे। तूण पूरणे। भ्रूण आशाविशङ्कयोः। शठ श्लाघायाम्। यक्ष पूजायाम्। स्यम वितर्के। गूर उद्यमने। शम लक्ष आलोचने। नान्ये मित इति मित्त्वनिषेधः। शामयते॥ ॥ ९ सेवर्तते इति व्याचक्षते। जसु हिंसायां। त्क्तायामिड्विकल्पमुदित्करणमिति तत्सामर्थ्यादस्य णिज् नित्यः। जासयति। जसति। जसित्वा। जस्त्वा। जस्तः। चितसंचेतनं मूर्च्छा च वस्थानिवृत्त्युत्तरकालिकं ज्ञानं। दंशतीति। इह दंशसंजेति नलोपमाशंक्याह। संज्ञिसाहचर्यादिति। स्पश। स्पाशयते। अत्स्मृदृत्वरेत्यादिनाऽभ्यास ।

त्विस्फुरोर्णौ। आदेच उपदेशे इत्यत आदित्यनुवर्तते विभाषा लीयतेरित्यतो विभाषाग्रहणं च तदाह। आत्वं वास्यादिति। अर्तिह्री। परत्वादन्तरंगत्वाच्च आदोपक्
पश्चात् गुणः। अर्पयति। ह्रेपयति। व्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति। चपयतीति। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते।
आतो उपसर्गे इति कबाधनाय ह्वावामश्चेत्यारंभादिति भावः। ज्ञपादिष्व इति। मुख्यमते पंच ज्ञपादयः। मतान्तरे तु सप्त। चूर्णेत्येके। उणेत्यन्ये इति। ईदृशेषु पाठ
आतो उपसर्गे ... शुद्धिर्निर्णेतुमशक्या। अत एव क्षीरस्वामिनोक्तं। पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः। न विद्मः किं जहीमोऽत्र किमुपादद्महे वयमिति। चूल चूर्णादिषु

त्विस्फुरोर्णौ। ६।१।५४॥ आत्वं वा स्यात्। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ। ७।३।३६॥ चपयति। चपयति। नित्करणसामर्थ्यादस्य णिज्वि
कल्पः। चयत्ते। प्रणिचयति। प्रनिचयति। नान्ये मितोऽहेतौ॥ अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः। तेन शमादीनाममन्तत्वप्रयुक्तं मि
त्वम्। घट्ट चलने। मुस्त सङ्घाते। खट्ट संवरणे। षट्ट स्फिट्ट चुबि हिंसायाम्। चूल सङ्घाते। चूर्ण इत्येके। पूर्णेत्यन्ये। पुंस अभिवर्द्धने। टकि बन्धने
टङ्कयति। टङ्कति। धूस कान्तिकरणे। धूसयति। दन्त्यान्तः। मूर्द्धन्यान्त इत्येके। तालव्यान्त इत्यपरे। कीट वर्णे। चूर्ण सङ्कोचने। पूज पूजायाम्।
अर्क स्तवने। तपन इत्येके। शुठ आलस्ये। शुठि शोषणे। शुण्ठयति। शुण्ठति। जुड प्रेरणे। गज मार्ज शब्दार्थौ। गाजयति। मार्जयति। मर्च च।
मर्चयति। घृ प्रस्रवणे। स्रावण इत्येके। पचि विस्तारवचने। पञ्चयति। पञ्चते इति व्यक्तार्थस्य शपि गतम्। तिज निशाने। तेजयति। कृत सं
शब्दने। उपधायाश्च। ७।१।१०१॥ धातोरुपधाभूतस्य ऋत इत् स्यात्। रपरत्वम्। उपधायां चेति दीर्घः। कीर्तयति। उ चीकृतत्। अचीकृतत्। अचिकी
र्तत्। वर्द्ध छेदनपूरणयोः। कुबि आच्छादने। कुम्बयति। कुभि इत्येके। लुबि तुबि अदर्शने ॥ ॥ ११

पाठभ्रंशः वज धातोर्मार्गसंस्कारार्थ उ
त संस्कार एवेत्यपर्थभ्रंशः। आगमभ्रंशात्। शास्त्रभ्रंशात्। चूर्ण संकोचने। प्रेरणे पठितस्य पुनः पाठोऽर्थभेदकृतः। मर्च चेति। कचिद्भ्रातु पाठोऽस्माद
प्यत्वेऽपि नायमप्रामाणिक इति मन्तव्यम्। इदं चोत्पात्परइति सूत्रे कैयटेनास्योपन्यस्तत्वात्। मर्त्तोर्मर्त्तमर्चयति ह्ययेनेति प्रयोगदर्शनाच्च। उपधायाश्च। ऋत
इद्धातोरिति वर्तते तदाह। धातोरुपधाया इति। न तु ऋत इद्धातोरिति सूत्रे धातोर्ऋत इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति किमनेन सूत्रेणेति

इत्याकुस्मीयाः॥चर्चा।सर्वोपि चुरादिर्णिच्पाक्षिक इति पक्षे गरोश्च हल इत्य प्रत्ययः।चर्चा।कणनिमीलने।एकनेत्रनिमीलन एवायं शब्दः स्वभावात्।काणः।का
णयादीनामिति।एते हेत्वमसंयंते षवस्यंते।हेत्यथश्चातेन घातयति हंति।त्येतौ समानार्थौ।अर्जी प्रतियत्ने।गुणाधाने।अर्जयतीति।संस्करोतीत्यर्थः।घुषिर् अविशब्द

इत्याकुस्मीयाः।चर्चअध्ययने।वक्कभाषणे।शब्द उपसर्गाद्भाविष्कारे च।चाद्भाषणे।प्रतिशब्दयति।प्रतिश्रुतमाविष्करोतीत्यर्थः।अनुपस
र्गाच्च।आविष्कार इत्येव।शब्दयति।कणनिमीलने।काणयति।णौ चङ्युपधाया ह्रस्वः।काण्यादीनां वेति विकल्प्यते।अचीकणत्।अच
काणत्।जभि नाशने।जम्भयति।जम्भति।षूद क्षरणे।सूदयति।असुषुदत्।जसु ताडने।जासयति।जसति।पश बन्धने।पाशयति।अम
रोगे।आमयति।नान्ये मित इति निषेधः।अमगत्यादौ शपि गतः।तस्मादेवमसौ।आमयति।चट स्फुट भेदने।विकासे शपोः स्फुटति।
स्फोटते इत्युक्तं।घट सङ्घाते।घाटयति।हन्त्यर्थाश्चान वगणपठिता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः।दिवु मर्दने।उदित्वाद्देवती
त्यपि।अर्ज प्रतियत्ने।अयमर्थान्तरेपि।द्रव्यमर्जयति।घुषिर् विशब्दने।घोषयति।घुषिर् विशब्दन इति सूत्रेऽविशब्दन इति निषे
धाल्लिङ्गादनित्योऽस्य णिच्।घोषति।इरित्वाद्वा अघुषत्।अघोषीत्।ण्यन्तस्य तु।अजूघुषत्।आङः क्रन्दसातत्ये भौवादिकः।क्रन्द धा
तुराह्वानार्थ उक्तः।स एवाङ्पूर्वो णिचं लभते सातत्ये।आक्रन्दयति।अन्ये तु आङ्पूर्वो घुषिः क्रन्दसातत्ये इत्याहुः।आघोषयति।लस शि
ल्पयोगे।लसि भूष अलङ्करणे।अवतंसयति।अवतंसति।भूषयति।अर्ह पूजायाम्।ज्ञा नियोगे।आज्ञापयति। भज विश्राणने।श्र
धु प्रहसने।अशशर्द्धत्।अशीशृधत्।यत निकारोपस्कारयोः।रक लग आस्वादने।रघ इत्येके।रग इत्यन्ये ॥ ॥ ॥

नं प्रतिज्ञाने।निषेधाल्लिंगादिति।घुषिर् विशब्दन इति सूत्रेणाऽविशब्दने निष्ठायामिण्निषिध्यते विशब्दनार्थोदितस्मादनंतराणि निष्ठानास्येव णिचाँ वधानात्।
अतो घुषिर् विशब्दन इति भौवादिकादेव निष्ठायामिण्निषेधो भवेदिति किं विशब्दनप्रतिषेधेन।ततश्चानेनैव विशब्दनप्रतिषेधेनानित्योऽस्य णिजिति ज्ञाप्यते इ

स्यअत्वंरत्वापवादः अयस्यशतत्तर्जभर्त्सतर्जते।भर्त्सयते। तर्जयन्निवकेतुभिरितिप्रयोगस्तुणिजंतादस्माड्डोवादिकान्ततर्जनेर्वाहे तुमणिविवोध्यः।भूणाभू
स्यअत्वंरत्वापवादः अयस्यशतत्तर्जभर्त्सतर्जते।भर्त्सयते। हूस्वोपधस्तुदिवादेरुदादेंचेतिमनोरमापांस्थितं।यद्यपितुदादेगुरीउद्यमने इतिपा
रायते।भूणोऽर्भकेस्त्रेणगर्भेइत्यमरः।शूरउद्यमने।दीर्घोपधोयं।शूरयते।हूस्वोपधस्तुदिवादेरुदादेंचेतिमनोरमापांस्थितं।यद्यपितुदादेगुरीउद्यमनेइतिपा
ठाद्धूस्वोपधएवतथापिदिवादेशूरीगूरीहिंसागत्योरितिपाठान्नास्तिहूस्वोपधइतिनव्याः।शामलक्षानन्तनिशामयतइत्युत्तिमित्यत्रशामयइत्येतन्नशमुउ
यशमइत्यस्माण्णिचिरूपंचेत्।अमंतत्वान्मित्वेसतिहूस्वेनभाव्यमित्याशंक्यकथमनेनसिद्धमितिवदंति।आकुस्मीयत्वात्तङ्‌। निशामयस्वेतिरूपस्यसर्वे
संमतत्वादितिचेत्।अत्राहुः।स्वार्थण्यंतादस्माद्धेतुमण्णिचिनिशामयेतिरूपं।नचार्थासंगतिः।निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थेणिजुच्यतेइतिसिद्धांता

कुत्सअवक्षेपणे।त्रुटछेदने।कुटइत्येके।गलस्रवणे।भलआभण्डने।कूटआप्रदाने।अवसादनेइत्येके।कुट्टप्रतापने।वञ्चुप्रलम्भ
ने।वृषशक्तिवन्धने।शक्तिवन्धनम्प्रजननसामर्थ्यंशक्तिवन्धस्त्र्या।वर्षयते।मदतृप्तियोगे।मदयते।दिवुपरिकूजने।गृविज्ञाने।गार
यते॥विदचेतनाख्याननिवासेषु।वेदयते।सत्तायांविद्यतेज्ञानेवेत्तिविन्तेविचारणे।विन्दतेविन्दतिप्राप्तौश्यन्लुकुस्मकुत्स्मितेक्रमा
ता।मनस्तम्भे।मानयते।यत्रुसंयमने।यन्त्रयते।कुस्मनाम्नोवा।कुस्मेतिधातुः।कुत्सितस्मयनेवर्तते।कुस्मयते।अचुकुस्मत्।अथवाकु
स्मेतिप्रातिपदिकात्ततोधात्वर्थेणिच्॥

दिति॥ ॥कुत्सअवक्षेपणे।धनस्वकुत्सायामितिनिर्देशादूः।कुत्सा॥एयासश्रंथेतिधुचा।कुत्सनाभलो॥ आभंडनंनिरूपणमित्याहुः।वंचुप्रलंभने।त्लुटिवंचनं।उदित्करणास्यक्त्वायामिड्विकल्पार्थत्वाण्णिजनित्यः।वंचयति।वंचति।वचित्वा।वंचित्वा।वक्त्वा।वंचि
तुंच्युततश्चेतिसेटः।क्त्वः।कित्वविकल्पनात्पाक्षिकोनलोपः।इडभावेतुनित्यं।निष्ठायांतुवक्तः।यस्यविभाषेतिइण्निषेधः।नाम्नोवेतिवाशब्दंव्याचष्टे।अथवेति।प्रा
तिपदिकमिति।अन्येष्वपिदृश्यतइतिसूत्रेअन्येभ्योपीतिवक्ष्यमाणत्वात्कुपूर्वात्स्मयतेर्डप्रत्ययेटिलोपेकुगतीतिसमासेचनिष्पन्नमित्यर्थः।यद्यपिकु
पूर्वस्यस्मिङोलडादिषुकुस्मयतेइत्यादिसिद्धंतथापिप्रकुस्मयतेइत्यादिनसिध्येदुपसर्गस्यधातुनाव्यवधानायोगात्।कुस्मयांचक्रेइत्याद्यर्थमपिकुस्मेतिप्रा

षादागर्वीदिति परत्र च आङोऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपतितेऽत्रापि तथैव व्याख्यानमुचितमिति भावः। अन्ये त्वाङ्पूर्वकात्स्वदः सकर्मकाणि। जिरिति व्याचख्युः। आस्वदीयेषु धातवः सर्वे सकर्मकाः। घाटयतीति। अयं चुरादावेव संघाते गतः। पुनः पाठस्तु अर्थभेदात्॥ ॥ स्वादइत्येक इति। अस्मिन्मते पूर्वत्राप्या स्वादः सकर्मकादिति पाठ्यं। न तु दीर्घपाठो व्यर्थः। ह्रस्वपाठे णुपधा स्वद्ध्या स्वादयतीति रूपाणां तुल्यत्वादत आह। दीर्घस्य त्विति सः स्विदिस्वदिसहीनां चेति सूत्रेण अभ्यासेणः परस्य सस्य सकारेण तु षत्वमिति वक्ष्यमाणत्वात्सन्नंतेपि सिस्वादयिषतीत्यादि रूपं तुल्यमेवेत्यभिप्रेत्याह। असिस्वददिति।

स्वादइत्येके। असिस्वदत्। दीर्घस्य त्वषोपदेशत्वात्। असिस्वदत्। आधृषाद्वा। इतउर्ध्वं विभाषितणिचः। युजधातुमभिव्याप्य युजपृच संयमने। योजयति। योजति। अयोक्षीत्। पर्चयति। पर्चति। पर्चिता। अपर्चीत्। अर्च पूजायाम्। षह मर्षणे। साहयति। स एवायं ल्लागः सहति। कालभेभ्यः परिभवमाङ्रिक्षेपे। लीङ् द्रवीकरणे। लापयति। लयति। लेता। वृजी वर्जने। वर्जयति। वर्जति। वृञ् आवरणे। वारयति। वरति। वरते। वरिता। वरीता। जृ वयोहानौ। जारयति। जरति। जरिता। जरीता। ज्रिच। ज्रापयति। ज्रयति। ज्रेता। रिच वियोजनसम्पर्चनयोः। रेचयति। रेचति। रेक्ता। शिष असर्वोपयोगे। शेषयति। शेषति। शेष्टा। अशिषत्। अयम्विश्वोऽति शये तपदाहे। तापयति। तपति। तप्ता। तृपत्सौ। सन्दीपने इत्येके। तर्पयति॥ तर्पति॥ ॥

इत्यास्वदीयाः॥ आधृषाद्वा। व्याख्यानाद्योग्यतावलाद्वा णिजितिसंबध्यते। आधौक्षीदिति। णिजभावपक्षे अनिड्ढोयमिति भावः। लीङ्द्रवीकरणे लिनातिलीयत्योर्यकानिर्देश इति भाष्यकारोक्त्या विभाषा लीयतेरित्यात्वमिह न प्रवर्तत इति ध्वनयति लेतेति। वरीतेति। वृतो वेति वा दीर्घः। लिङि वृषीत् आत्मनेपदे तु वृषीष्ट। वरिषीष्ट। लिङ्सिचोरात्मनेपदेष्विति वेट्। न लिङीति इटो दीर्घनिषेधः। इडभावपक्षे उश्चेति कित्त्वान्न गुणः। लुङि अवारीत्। अवारिष्टां। अवारिषुः सिचि च परस्मैपदेष्विति दीर्घनिषेधः। आत्मनेपदे तु अवरिष्ट। अवरीष्ट। इडभावे सिचो लोपः। अवृत। रिच। णिजभावे अयमनिडित्याह। रेक्तेति। अशिषदिते

उरित्करणादपि णिज्विकल्पः सिध्यतीति केचित्। शिल्पयोग इति क्रियाकौशलं शिल्पं। यत्तनिकारोपस्कारयोः यत्नो वा प्रेषो वा निकारः। निराकारोपस्कारयोरिति
पाठांतरं। क्रियानिर्वृत्तौ च यत्ने प्रेषे निराकारे पात यत्स्युपस्कृतौ निसो यं धान्यधनयोः प्रतिदाने इत्युक्तं। अस्यार्थः। यत्नाद्यर्थेषु वर्तमानाद् यत धातोः प्रयुंजीत॥ निसः प

अञ्चु विशेषणे। अञ्चयति। उदित्त्वमिड्विकल्पार्थम्। अत एव विभाषितो णिच्। अञ्चति। एवं श्वभ्रजसुप्रभृतीनामपि बोध्यम्। लिगि चि
त्रीकरणे। लिङ्गयति। लिङ्गति। मुद संसर्गे। मोदयति सक्तून् घृतेन। त्रस धारणे। ग्रहणे इत्येके। वारणे इत्यन्ये। उध्रस उञ्छे। उकारो धात्वव
यव इत्येके। नेत्यन्ये। ध्रासयति। उध्रासयति। मुच प्रमोचने। मोदने च। वस स्नेहनच्छेदापहरणेषु। चर संशये। च्युस हनने। हसने चेत्येके। च्या
वयति। च्युसेत्येके। च्योसयति। भुवोऽवकल्कने। अवकल्कनं मिश्रीकरणमित्येके। चिन्तनमित्यन्ये। भावयति। कृपेश्च। कल्पयति। आ
स्वदः सकर्मकात्॥ स्वदिमभिव्याप्य सम्भवत्कर्मभ्य एव णिच्। ग्रस ग्रहणे। ग्रासयति फलम्। पुष धारणे। पोषयत्याभरणम्। दल वि
दारणे। दालयति। पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पु
थ लोक लोच णद कुप तर्क वृतु वृधु भाषार्थाः। पाटयति। पोटयति। लोटयति। तुञ्जयति। तुञ्जति। एवमप्येषाम्। घाटयति। घण्टयति।
नाग्लोपि शास्वृदिताम्। ७।४।२। णिच्यग्लोपिनः शास्तेरृदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ। अलुलोकत्। अलुलोचत्। वर्त
यति। वर्धयति। उदित्त्वाद् वर्तति। वर्धति। रुट लजि अजि दसि भृशि रुशि शीक नट पुटि जिवि रघि लघि अहि रहि महि च। लडि तड नल च।
पूरी आप्यायने। ईदित्त्वं निष्ठायामिण्णिषेधाय। अत एव णिज्वा। पूरयति। पूरति। रुज हिंसायाम्। ष्वद आस्वादने॥ ॥ ॥

रभागे चेत् प्रयुज्यते तदा ऽयं धान्यधनयोः प्रतिदाने वर्तत इति। ऋणं निर्यातयति। प्रतिददातीत्यर्थः। अंचु विशेषणे। विशेषणं व्यावर्तनं। भुवोऽवकल्कने भू
धातोर्णिच् स्यात्। भावयतीति। मिश्रीकरोति चिंतयति वेत्यर्थः। कृपेश्च कृपेर्णिच् स्यात् अवकल्कने। आस्वदः। अभिव्याप्येति। आकुस्मादिति पूर्वत्र आधृ

अथादन्ता इति। वक्ष्यमाणोऽयं धातुर्भ्रंत्योऽवयवोऽकारोऽनेन तु चारणार्थ इत्यर्थः। स्थानिवत्त्वान्न वृद्धिरिति। अचः परस्मिन्निति सूत्रेणेत्यर्थः। न च स्थानिनि सति य
त्कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते। न त्वादेशप्रयुक्तं कार्यं तेऽन्यथा नायकः पावकः इत्यादि न सिद्ध्येदिति वृद्धिरनुवर्तीरेति वाच्यम्। अचः परस्मिन्नि

चन्दनमञ्जरीस्थ १ श्रीऋत पणो॥ श्रीणायति। धून् श्रीणो रिति हरदत्तोक्तपाठेत्तु। मापयति। श्रयति। श्रन्थ ग्रन्थ सन्दर्भे। आलृलम्भने। आ
पयति। आपयति। आपन्। आप्ता। स्वरितेदयमित्येके। आपते। तनु श्रद्धोपकरणयोः। उपसर्गाच्च दैर्घ्ये। तानयति। वितानयति तन
ति। वितनति। चन श्रद्धोपहसनयोरित्येके। चानयति। चनति। वद सन्देशवचने। वादयति। स्वरितेत्। वदति। वदते। अनुदात्ते
दित्येके। ववदतुः। ववदिथ। ववदे। वद्यात्। वच परिभाषणे। वाचयति। ——— । वचति। वक्ता। अवाक्षीत्। मान पूजायाम्। मानयति।
मानति। विचारणे तु भौवादिको नित्यसन्नन्तः। स्तम्भे मानयते। इत्याकुस्मीयाः। मन्यते इति दिवादौ। मनुते इति तनादौ च। भू प्राप्तावात्म
नेपदी। भावयते। भवते। णिच् सन्नियोगेनैवात्मनेपदमित्येके। भवति। गर्ह विनिन्दने। मार्ग अन्वेषणे। कठि शोके। उत्पूर्वो यमुत्क एठा
याम्। कएठते इत्यात्मनेपदी गतः। मृजू शौचालङ्कारयोः। मार्जयति। मार्जति। मार्जिता। मार्ष्टा। मृष तितिक्षायाम्। स्वरितेत्। मर्षयति।
मर्षति। मर्षते। मृष्यति। मृष्यते इति दिवादौ। सेचने शपि। मर्षति। धृष प्रसहने। धर्षयति। धर्षति। इत्याधृषीयाः। अथादन्ताः। कथ
वाक्यप्रबन्धे। अल्लोपस्य स्थानिवद्भावान्न वृद्धिः। कथयति। अग्लोपित्वान्न दीर्घसन्वद्भावौ। अचकथत्। वर ईप्सायाम्। वरयति। वा
〃 रयतीति गतम्। गण संख्याने। गणयति॥

त्यत्र स्थानिवदित्यनुवर्त्य शब्दाधिकारपक्षाश्रयेणाभावाभावादभावप्यतिदिश्यते इति सिद्धान्तात् स्था
निनि सत्यभवत्या वृद्धेरादेशेऽप्यभावात्। स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्यत्र तु न पदान्तेति सूत्रस्थयलोपादिग्रहणमेव लिंगमित्ति दिक्

शलइगुपधेतिक्सः। तप। अनिट्सु श्यना निर्देशाद्यं सेडिति ध्वनयति॥ ॐ ॥ तर्पितेति। छृदी। ईदित्वान्निष्ठायामनिट्। ऋवर्णान्नस्य णत्वं। छृणः। छृणवान्। ह्रस्वश्चेति। धुञ् कम्पने इत्यर्थः। अवाक्षीदिति। अस्यतिवक्तीति लुका निर्देशादङ् नेति भावः वचिस्वपीति संप्रसारणं। उच्यात्। धृष प्रसहने। केचि

तर्पिता। छृदी सन्दीपने। छर्दयति। छर्दति। छर्दिता। छर्दिष्यति। सेसिचीति विकल्पो न। साहचर्यात्तत्र रोधादिकस्यैव ग्रहणात्। चृप छृप दृप सन्दीपन इत्येके। चर्पयति। छर्पयति। दर्पयति। दृभी भये। दर्भयति। दर्भति। दर्भिता। दृभ सन्दर्भे। अयमनुदात्तेदित्। श्रथ मोक्षणे। हिंसायामित्येके। मी गतौ। माययति। मयति। मेता। ग्रन्थ बन्धने। ग्रन्थयति। ग्रन्थति। शीक आमर्षणे। चीक च। अर्द हिंसायाम्॥ स्वरितेत्। अर्दयति। अर्दति। अर्दते। हिसि हिंसायाम्। हिंसयति। हिंसति। हिनस्तीति श्नमि गतम्। अर्ह पूजायाम्। आङः षद पद्यर्थे। आसादयति। आसीदति। पाघ्रेति सीदादेशः। आसत्ता। आसात्सीत्। शुन्ध शौचकर्मणि। शुन्धिता। अशुन्धीत्। अशुन्धिषाताम्। छद अपवारणे। स्वरितेत्। जुष परितर्कणे। परितर्कणमूहो हिंसा वा। परितर्पण इत्यन्ये। परितर्पणमपरितृप्तिः। जोषयति। जोषति प्रीतिसेवनयोर्जुषते इति तुदादौ। धूञ् कम्पने। णाविति धिकृत्य। धूञ्प्रीञोर्नुग्वक्तव्यः॥ धूनयति। धवति। धवते। केचित्तु धूञ् प्रीणोरिति पठित्वा प्रिणातिसाहचर्याद्धूनातेरेव नुकमाहुः। धावयति। अयं स्वादौ क्र्यादौ तुदादौ च। स्वादौ ह्रस्वश्च। तथा च कविरहस्ये धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम्। वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति॥

त्वादित माहुस्तन्मते धृष्टो मुख्यमते तु धर्षितः। नन्वत्र निष्ठा शीङित्यादिना सेण्निष्ठायाः कित्वनिषेधात् गुणेन भाव्यमिति चेत्। अत्राहुः। आदित्त्वाहञ्च यीरादित एवञ्जिधृषेत्यस्यात्र ग्रहणात्। न च आदितो निष्ठायामिट् दुर्लभ इति शंक्यं। विभाषाभावादिकर्मणोरिति तत्संभवादिति। इत्याशुषी पाययजा इत्यः

ऊनपरिहारो। अस्मात्‌णौ चङि द्वित्वात्‌ परत्वादन्तरंगत्वाच्च अल्लोपेन अजादेर्द्वितीयस्येति णिचा सह द्वित्वे ओ। निनदित्यनिष्टं प्रसज्येत किन्तु ओननदित्येवरूप
मिष्टं तच्च नशब्दस्य द्वित्वं विना न संभवति। न च द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्त्तव्ये अल्लोपस्य स्थानिवत्‌भावात्‌ निषेधाद्धा नशब्दस्य द्वित्वं सिध्यतीति वाच्यं। णि
चो द्वित्वनिमित्तत्वाभावात्‌ तत आह। ओः पुयणजीत्यादि। संज्ञासूत्रे लिंगमिति केषांचित्‌ भ्रमं निवर्त्तयितुमाह। पयपयोरिति। अयं भावः। सिपूङ्‌ रञ्जशासनि
सनीवंतर्द्धीति सूत्राभ्यां पूङ्‌ यौतिभ्यां परस्य सन इडागमे कृते द्विर्वचनेऽचीति स्थानिवत्‌भावादादेशनिषेधाद्वा उवर्णात्‌ तस्यैव द्वित्वमिति उपविषते।

ऊनपरिहारो। ऊनयति। ओः पुयणज्जीति सूत्रे पयपयोरिति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गं। णिचि अच आदेशो न स्याद्‌ द्वित्वे कार्ये इति प
त्र द्वित्वं तौ अभ्यासोत्तरखण्डस्य आद्योऽच्‌ प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायन्निषेधः। ज्ञापकस्य सजातीयापेक्षत्वात्तेना
चिकीर्त्तदिति सिद्धम्‌। प्रकृते तु नशब्दस्य द्वित्वं तत उत्तरखण्डेऽल्लोपः। औननत्‌। मा भवान्‌ ननत्‌। ध्वन शब्दे। अदध्वनत्‌। कूट परितापे। परिदा
हे इत्यन्ये। सङ्केतग्रामकुणगुणचामन्त्रणे। चात्‌ कूटोऽपि। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति। पाठान्तरम्‌। केत श्रावणे निमन्त्र
णे च। केतयति। निकेतयति। कुण गुण चामन्त्रणे चकारात्‌ केतने। कूण सङ्कोचने इति। स्तेन चौर्य्ये अतिस्तेनत्‌। आगर्वादात्मनेपदिनः। पद ग
तौ। पदयते। अपपदत्‌। गृह ग्रहणे। गृहयते। मृग अन्वेषणे। मृगयते। मृग्यतीति कण्ड्वादिः। कुह विस्मापने। शूर वीर विक्रान्तौ। स्थूल परिबृंहणे।
स्थूलयते। अतुस्थूलत्‌। अर्थ उपयाञ्चायाम्‌॥ अर्थयते। आर्त्तथत्‌। सत्र सन्तानक्रियायाम्‌। असससत्रत्‌। अनेकाच्त्वान्न षोपदेशः। सिसत्रयि
षते। गर्व माने। गर्वयते॥ ॥ ॥ पुपविषतीत्यनिष्टं प्रसज्येत। ततश्च अभ्यासोवर्णस्येत्वार्थं पयपयोरित्यपेक्षितं। अन्यथा पिपविष
ते। पिपविषतीति न सिद्ध्येत्‌ इति। वर्गप्रत्याहारेत्यादि। पुयणजीति वर्गादिग्रहणफलं तु अबीभवत्‌ अमीमवत्‌ अरीरवत्‌ अलीलवत्‌। अजीजवत्‌ वि
भावयिषति। मिमावयिषति। रिरावयिषति। लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यं। तद्रूपपादम्‌। णिचि परत्वादन्तरंगत्वाच्च वृद्ध्यादौ कृते द्वित्वेस
त्यभ्यासे उवर्णस्य दुर्लभत्वादकारस्य सन्यत इतीत्वेन रूपसिद्धेश्च। ततो वर्गादिग्रहणं व्यर्थं सज्ज्ञापकार्थं ज्ञापकमिति भावः। ज्ञापकफलं तु यत्र ओः ॥

ईच्गणः। अत्र स्मृदृत्वरेत्यत्र योऽत् स च कारेण समुच्चीयते। स्तनगदी। गदीत्यत्र इकानिर्देशात्तो लोपः। अनेकाच्त्वेनाषोपदेशत्वात्। षत्वं न। तिलनपिषति
स्तनिहृषिपुषीति णेरित्युच्यमानेत्ययादेशः। स्तनयित्नुर्वलाहकः। पतगतौ वा। गणसूत्रमिदं। रूपयतीति। रूपोराल इति न प्रवर्तते। तत्र रूपसामर्थ्य इत्य
स्य ग्रहणात् रूपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात्। स्पृह। आप्तुमिच्छा ईप्सा। अवभामत् इति। अल्लोपस्य स्थानिवत्वाण्णौ चङ्युपधाह्रस्वो न।। सूत्र।। पि

ईच्गणः। ७।४।९७।। गणोरभ्यासस्य ईत्स्याच्चङ्परे णौ चादत्। अजगणात्। अजीगणात्। शठश्वठ सम्यगवभाषणे। पटवट ग्रन्थे। रह त्या
गे। अररहत्। स्तनगदी देवशब्दे। स्तनयति। गदयति। अजगदत्। पतगतौ वा। वाणिजन्तः। वादन्त इत्येके। आद्ये। पतयति। पततिपता
न्वकार। अपतीतत्। द्वितीये। पातयति। अपीपतत्। पष अनुपसर्गात्। गतौ वित्येच। पषयति। स्वर आक्षेपे। स्वरयति। रच प्रतियत्ने। रचय
ति। कल गतौ संख्याने च। वह परिकल्पने। परिकल्पनं दम्भः शाठ्यञ्च। मह पूजायाम्। महयति। महतीति शपि गतं। सार कृप श्रथ दौर्ब
ल्ये। सारयति। कृपयति। श्रथयति। स्पृह ईप्सायाम्। भाम क्रोधे। अवभामत्। सूच पैशुन्ये। सूचयति। अषोपदेशत्वान्न षः। असूसूचत्।
खेट भक्षणे। तृतीयान्त इत्येके। खोट इत्यन्ये। क्षोट क्षेपे। गोम उपलेपने। अजुगोमत्। कुमार क्रीडायाम्। अचुकुमारत्। शील उपधारणे। उपधा
रणमभ्यासः। साम सान्त्वप्रयोगे। अससामत्। साम सान्त्वने इत्यतीतस्य तु। असीषमत्। वेल कालोपदेशे। वेलयति। काल इति पृथग्धातुरि
त्येके। कालयति। पल्यूल लवनपवनयोः। वात सुखसेवनयोः। गतिसुखसेवनेष्वि त्येके। वातयति। अववातत्। गवेष मार्गणे। अज
गवेषत्। वास उपसेवायाम्। निवास आच्छादने। अनिनिवासत्। भाज पृथक्कर्मणि। सभाज प्रीतिदर्शनयोः। प्रीतिसेवनयोरित्यन्ये। स भाजयति ।।

ञुनोऽर्जनस्तस्य कर्म पैशुन्यं। अषोपदेशत्वादिति। अनेकाच्त्वादिति भावः। साम सान्त्वने इत्यतीतस्य त्विति। अयं धातुः इतः प्रा ९
रुः मूलपुस्तके न कुत्रापि पठितः पुस्तकान्तरेषु मृग्यः। केचित्तु साम सान्त्वने इत्यस्य क्वाप्यपठितत्वेपि षान्त्व साम प्रयोगे इति प्राक् पठितमेव तत्र च षान्त्व सामे
ति धातुद्वयं प्रयोगे वर्तते। प्रयोगश्च सान्त्वप्रयोगपरः स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयन्ते। गवेषा मार्गणमन्वेषणं ।।

उं. सि. कौ. टी. त. ८९

त्वायतोजरितुःकाममूनपीरित्यादावेवतन्निषेधात्।यद्यपिपरिनिष्ठितएवअवर्णपरत्वमित्याशयेनउवर्णादेशएवस्थानिवत्स्यात्नान्यइतिवदतोवोपदे
वादीनांमात्तेओनिनदित्येवभाव्यं।अवर्णादेशस्यस्थानिवत्त्वेतुपरिनिष्ठितरूपेअवर्णपरत्वालाभात्तथापिअचिकीर्त्तदित्यादौस्थानिवत्त्वमाशंक्यउत्तरभागेअ
वर्णाभावादितिभाष्यकारोक्तपरिहारपर्यालोचनयाउवर्णादेशएवस्थानिवदितिनियमोनास्तीत्योननदितिरूपंनिर्बाधमेवाकिंच।उवर्णादेशएवेतिनि
यमेलोपःपिबतेरीच्चाभ्यासस्येतिसूत्रेअपीप्यदित्यत्रपिबतेर्णौशाच्छासेत्यादिनायुकिचङि उपधालोपेतस्यस्थानिवत्त्वात्याप्शब्दस्यद्वित्वमितिवृत्ति
ग्रंथोविरुध्येत।अपिच।शुष्किकाशुष्कजंघाचक्षामिमानोजटत्तथेतिवैयाघ्रपद्यवार्त्तिकस्यओजटदितिप्रयोगोपिविरुध्येत।एतद्धिपूर्वत्रासिद्धमित्यस्य
प्रयोजनकथनंवार्तिकं।तद्यथा।शुष्किकेत्यत्रोदीचामातइतिइत्वविकल्पोनाशुषःकइतिकत्वस्यासिद्धत्वेनयकपूर्वत्वाभावात्।शुष्कजंघेत्यत्रकत्वस्या
सिद्धत्वादेवनकोपधायाइतिपुंवत्भावनिषेधोन।क्षामिमानित्यत्रतुमादुपधायाइतिवत्वंन।क्षायोमइतिमत्वस्यासिद्धत्वात्।वहेःक्तान्तात्स्मिन्चिच
ङि ओजढदित्यत्रढत्वस्यासिद्धत्वाण्णौकृतस्यटिलोपस्यस्थानिवत्त्वाच्चहत्तशब्दस्यद्वित्वंकुहोश्चुरभ्यासेचर्त्वेसन्वदित्वंतुअनग्लोपीतिप्रतिषेधा
न्नभवति।एवंकाशिकायामपिपूर्वत्रासिद्धमितिसूत्रेओजढदित्युदाहृत्यऊढिमाख्यदोजिढदित्येतत्तुचिन्त्यं तस्यऊढिशब्दस्यभवतीत्युक्तंतदपिविरु
ध्येत।उवर्णादेशएवस्थानिवत्इतिनियमे।णौकृतस्यटिलोपस्यात्रस्थानिवत्त्वाभावेनहत्तशब्दस्यहतिशब्दस्यवाद्वित्वासंभवात्।एवंचाकथातोर्णौ
च्यलोपेचङि स्थानिवत्त्वात्कशब्दस्यद्वित्वेअचकथदितिरूपमेवसर्वसंमतंनत्वाचिकथदितिवोपदेवोक्तमितिबोध्यं।नन्वाचिकीर्तदित्यादौस्थानिव
त्त्वमाशंक्योत्तरभागेअवर्णाभावादितिवदन्भाष्यकारेणवोपदेवग्रंथस्यप्रतिकूलःउत्तरभागेपरिनिष्ठितरूपेअवर्णपरत्वउवर्णादेशस्यैवसंभव
तिनान्यस्येत्याशयेनैवभाष्यकारेणतथोक्तमितिवक्तुंशक्यत्वादितिचेत्।मैवं।तथाहि।सतियत्रओःपुयणजीत्यस्यप्राप्तिस्तत्रायुवर्णादेशएवस्थानि
वत्।ज्ञापकस्यसजातीयापेक्षत्वादित्येवमेवभाष्यकारोवदेत्।ऋजुमार्गेणासिध्यतोर्थस्यवक्रेणासाधनायोगात्इतिदिक्।संकेतिताश्चत्वारोन्यधात
वः।पाठांतरमिति।संकोचनइत्येतत्पर्यंतं।अनेकाच्त्वेनाषोपदेशत्वात्षत्वंनेतिध्वनयति।अतिसेनदिति।शृहयतेइति।अल्लोपस्यस्थानिव

पुयण्जीत्यस्य प्राप्तिस्तत्र बोध्या। तद्यथा। युस्नावयिषति। च्न्नु स्नु स्रवत्। उडुरिवाचरति उडवति। सर्वप्रातिपदिकेभ्य इत्याचारे क्विप्। तदंताद्धातोर्णौ सन्। उडुडा
वयिषति। चङि औडुडवत्। जुरिति सौत्रो धातुस्ततो णौ सन्। जुजावयिषति। चङि अजूजवत्। जुनावयिषति। अनूनवत्। पुस्फारयिषति। अपुस्फुरत्। विस्फुरोर्णा
विति वा आत्वं। अपुस्फरदित्यादिष्वभ्यासे उकारश्रवणं भवति ज्ञापनवशादन्यथा विस्नावयिषतीत्यादि प्रसज्येतेत्येतत्सकलमभिप्रेत्य वार्तिककृतोक्तं।
ओः पुयण्जिष्ववचनं ज्ञापकं णौ स्थानिवद्भावस्येति स्थानिवद्भावः प्रतिषेधस्याप्युपलक्षणं। अच आदेशो न स्यादिति। प्रतिषेधपक्षो मुख्य इत्यभिप्रे
त्येदमुक्तं। प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति बोध्यं। नन्वेवं कृते संशब्दे नेति धातोर्णौ चङि इरादेशात्प्रागेव कृते द्वित्वे उरदत्वे च अच
कीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह यत्र द्विरुक्तौ विति। चङ्सहितस्योत्तरखंडत्वमभ्युपेत्येदमुक्तं। अन्ये तु आद्यग्रहणस्य प्रतिपत्त्यर्थो धातोरवयवस्येकाचो द्वि
त्वे सत्यभ्यासोत्तरखंडे अज्झ्यासंभवादित्याहुः। औज ढत् औननदित्यादौ परिनिष्ठितेऽवर्णस्यालाभादाह। प्रक्रियायामिति। युस्नावयिषतीत्यादौ प्रक्रिया
यामवर्णो न लभ्यत इत्याह। परिनिष्ठिते रूपे वेति। वाशब्दोऽनास्थायां। क्वचिदवर्णपरत्वं विवक्षितं न तु अमुकत्रैवेत्याग्रह इति भावः। सजातीयापेक्षत्वादि
ति। पुयण्जोत्वभ्यासोत्तरखंडे अवर्णपरा भवंति अतः तथैव ज्ञापकमित्यर्थः। अत एव भाष्यकृता पवर्गादेरन्यस्मिन्नपि हलि अवर्णपर एव स्थानिवत्त्व
मिति अचिकीर्तदित्यादौ नातिव्याप्तिरिति सिद्धांतितं। ननु ओः पुयण्जीति सूत्रे णिचि इति नास्ति। तथा च णिच्यच आदेशो न स्यादित्यर्थे कथमिदं ज्ञापकं भवेत्।
न च सामान्यतो द्वित्वे कार्ये अच आदेशो न स्यादित्येव ज्ञाप्यतामिति वाच्यं। दिद्वनीयिषति निनवनीयिषतीत्यादावभ्यासे उकारश्रवणप्रसंगादिति चेत्। अत्रा
हुः। येन नाव्यवधानमित्येकेन प्रत्ययेन द्वित्वनिमित्तप्रत्ययस्य व्यवधानमाश्रीयते तच्च णौ एव संभवतीति णिज्विषयकमेव ज्ञापकं दिद्वनीयिषतीत्यत्र तु
त्सुटाक्यचा च व्यवधानादनेकव्यवधानमिति न तद्विषयं ज्ञापनमिति। अस्मिन्मते आचारक्विंताद्वनशब्दात्सनि दिद्वनिषतीति स्यात् तच्चनेष्यते णौ
स्थानिवद्भावस्य ज्ञापकमिति वार्तिकोक्तेः। स्थानिवत्त्वेन प्रतिषेधे न वा णावेवाभ्यासे उकारेण भवितव्यमतो वार्तिककारवचनादेव णौ स्थानिवदिति स्वीकर्त
व्यं। तथा च न पूर्वोदाहरणेषु दोष इति दिक्। फलितमाह। सन्वते त्विति। औननदिति। नो नयति ध्वनयतीति चङि निषेधस्त्विह न। तत्र कृते दसीत्यत्र टत्त्वामा

दिकग्रहणं प्रत्ययकार्याणामतिदेशो मा भूदित्येवमर्थं। तेनात्र णिचो पो एन भवति। तरभावे भूभावेनापि न भवितव्यं। संनियोगशिष्टत्वात्। किंतु वहयतीत्येव भवितव्यमिति मतांतरं। एतच्च तत्रैव सूत्रे केयटे स्पष्टमिति। अन्ये त्वाहुरिष्ठवदिति हि सप्तम्यंताद्वतिर्णा वितु यमे ये सप्तमी दर्शनात्तेनइष्ठनि परे शब्दस्य यत् कार्यं तत् इति दिश्यते तेन त्विष्ठनो पीति। एवंवद्भावेति। अतिशयेन पट्वी पटिष्ठेत्यत्र भस्याढेतद्धिते इति पुंवद्भावः। काशीष्टः। द्रढिष्ठ इत्यत्र रऋतो हलादेरिति रभावः साधिष्ठ इत्यादौ टिलोपः। अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र विन्मतोर्लुगिति विनो लुक्। अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक्। स्थविष्ठ इत्यादौ स्थूलदूरेत्यादिना यणादिलोपः। प्रेष्ठ इत्यादौ प्रियस्थिरेत्यादिना प्रस्थाद्यादेशः। तद्भावपीति। पुंवद्भावस्योदाहरणमेनीमाचष्टे एतयति। टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिद्ध्यर्थमिति बोध्यं। द्रढयतीत्यादौ रभावः। स्रग्विणमाचष्टे स्रजयतीत्यत्र विनो लुक्। गोमंतमाचष्टे गवयतीत्यत्र मतुपो लुक्। अंगवृत्तपरिभाषया वृद्धिरत्र न भवति। प्रियमाचष्टे प्रापयति। स्थिरमाचष्टे स्थापयतीत्यादौ तु वृद्धिर्भवत्येव। ह्वयोरित्ति निर्देशेन तस्याः परिभाषायाः अनित्यत्वज्ञापनादिति दिक्। परत्वाद्वृद्धाविति। लोपः शब्दांतरप्राप्त्याऽनित्यः वृद्धिरप्यनित्या उभयोरनित्ययोः परत्वाद्वृद्धिस्तस्यां कृतायामौकारस्यावादेशात् प्रागेव परत्वाद्वाराणां गस्यवलीयस्त्वाच्च लोप इत्यर्थः। एवं चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्त इत्याह। अपीपटदिति। इह टिलोपस्य स्थानिवद्भावेन व्यवधानाद्दीर्घसन्वद्भावौ नेति न भ्रमितव्यं। स्थानिवत्त्वे ण्यंगस्य णिच्परत्वानपायात्। चङ्परे णौ यत्र ग्विति पक्षे पि अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव। केचित्तु चङ्परे णौ यत्र ग्विति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिपरं लघु दुर्लभमिति सन्वद्भावाप्राप्त्याऽपपटदित्येव रूपं। प्रथमं टिलोपः पश्चाद्द्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत्तन्नादर्तव्यं। णौ च च आदेशो न स्यात् द्वित्वे कर्तव्य इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुस्तन्मंदं। अपीपटदित्यत्र द्वितीयाच्चर्यत्तस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादं। तथा च द्वितीयस्याचो द्वित्वाकरणात् प्रथमं टिलोपः स्यादेवेति। वृद्धेर्लोप इति। कृताऽकृतप्रसंगित्वेन लोपो नित्यः। वृद्धिस्त्वनित्या। टिलोपे सति स्थानिनः पूर्वत्र कर्तव्यायां लोपस्य स्थानिवत्त्वात् स्वविधौ स्वस्य स्थानिवत्त्वाभावाच्च। अस्मिंस्तु प

त्वान्नगुणः। लुङि अजगृहत्। अग्लोपान्न सन्वद्भावः। मृगयते इति। मार्गयति मार्गतीति तु मार्ग अन्वेषणे इत्याधृषीयस्य अर्थ। अर्थयत इति। ऋद्ध्ईलोपो वलीयानित्य
स्लोपान्न वृद्धिः। वोपदेवस्तु वृद्धौ कृतायां यकि चार्थापयते इति रूपमाह। तत्र भसात्। न चार्थे वेद सत्यानामित्यापुक् स्यादेवेति वाच्यं। तत्र प्रातिपदिकस्य ग्रहणा
त्॥ ॐ ॥ अदंतत्व सामर्थ्यादिति। कथादिषु उपधा वृद्धिदीर्घ सन्वद्भाव विरहेण सारभाम प्रभृतीनां उपधा ह्रस्वस्य गृहमृग प्रभृतीनां उपधा गुणस्य च व्याव
र्तनेन अदंतत्वं सार्थकं इह त्वदंतत्वे प्रागुक्त फलाभावात् णिचः पाक्षिकत्वं ज्ञापयतीति भावः। ननु अदंतत्व सार्थकत्वाय वाऽल्लोप इति प्राचोक्तमेवाभ्यु प
गम्यतामिति चेत्। अत्राहुः। चिंतयते रिदित्वं सामान्यापेक्षं ज्ञापकमिति मते इह अदंतत्वस्य फलं स्पष्टमेव। विशेषापेक्षं ज्ञापकमिति मते तु तत्र तत्र आका

अदन्तत्व सामर्थ्यात् सिद्धि विकल्पः। धातोरन्त उदात्तः लिट्यामश्च फलम् एवमग्रेऽपि। इत्यागर्वीयाः। सूत्र वेष्टने। सूत्रयति। असूसूत्रत्। मूत्र प्र
स्रवणे। मूत्रयति। मूत्रति। रूक्ष पारुष्ये। पार तीर कर्म समाप्तौ। अपपारत्। अतितीरत्। पुट संसर्गे। पुटयति। धेक दर्शने इत्येके। अदिधेकत्। क
त्र शैथिल्ये। कत्रयति। कत्रति। कर्त्रेत्यप्येके। कर्त्रयति। कर्त्रति। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च॥ प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे प
था प्रातिपदिकस्य पुंवद्भाव रभाव टिलोप विन्मतुब्लोप यणादिलोप प्रस्थ स्फाद्यादेश भसंज्ञास्तद्वणाविष्युः। पटुमाचष्टे पटयति। परत्वाद्
वृद्धौ सत्यां टिलोपः। अपीपटत्। गौ चङीत्यत्र भाष्ये तु वृद्धेर्लोपो वलीयानिति स्थितम्। अपपटत्। तत्करोति तदाचष्टे॥ पूर्वस्य प्रपञ्चः करोत्या

रइकार ईकार उकार ऊकाराश्चेत्यनुबंधाः यथा ज्ञापकतया स्वीकृताः तथा अदंतता पि णिच् विकल्पमेव ज्ञापयतु लृ॥ ष्ट इति धात्वर्थ मात्रं णिजर्थः
मेनैव णिज्विकल्पेन कृतार्थत्वे अपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात्। एवं हि सति मतद्वयेऽप्येकरूपमेव फलं लभ्यते इति। असूसूत्रदिति अने का
च्वान्नषत्वं। प्रातिपदिकादिति। यदि सुवंताण्णिच् स्यात्तदा स्वजयतीत्यादौ कुत्वं स्यात् इति भाव इति केचित्। तन्न। इष्ठवद्भावे न भत्वे कुत्वस्याप्रस
क्तेः। अत्र बहुलं णिच् स्यात् स च णिच् इष्ठवत् भवतीति अन्वयात् पक्षे वाक्यमपि भवतीत्याह। पटुमाचष्ट इति। धात्वर्थ इत्यनेन करणाख्यानादिर्गृह्य
ते इति भावः। ननु बहून्याचष्टे भावयतीत्यत्र इष्ठस्य यिट्ट इति णिचोऽपि यिट् स्यात्। अत्राहुः। टेरिति सूत्रे णाविष्ठवत् प्रातिपदिकस्येति वार्तिके प्राति प

हिलप्रत्यये। तेन वार्त्रघ्नमित्यत्र हनस्तइति तत्वं न भवतीति ज्ञेयं। उक्तदोषान् परिहरति। सत्यमिति॥ ॥ प्रकृतिवच्चेति चकारोऽनुक्तसंग्रहार्थ इत्याह॥

प्रकृतिवच्चेति चकारो भिन्नक्रमः। कारकञ्च चात्कार्य्यम्। हेतुमति च। प्रकृतेर्हेत्वादेर्हेतुमस्योपादेशक्ष्कारकञ्धातावनन्तर्भूतं द्वितीयान्तं या
दृशान्वकार्य्यं कृत्वा तत्वादिति इहापीत्यर्थः। कंसमङ्गीघतत्। कर्तृकरणाद्धात्वर्थे। कर्तुर्व्यापारार्थयत्करणं तत्र चक्षुरादिमात्रमित्यर्थः। अ
सिना हन्ति। असयति। वष्कदर्शने। चित्र चित्रीकरणे। आलेख्यकरण इत्यर्थः। कदाचिद्दर्शने। चित्रेत्यपमद्भुतदर्शनेपि चं लभते। चित्रयति॥
अंससमाघाते। वट विभाजने। लज प्रकाशने। वटिलजि इत्येके। वण्टयति। लञ्जयति। अदन्तेषु पाठबलाद्दन्तत्वं वृद्धिरित्यन्ये। वण्टापयति। ल
ञ्जापयति। शाकटायनस्तु कथादीनां सर्वेषां उकमाह। तन्मते कथापयति। गणापयतीत्यादि। मिश्रसम्पर्के। संग्राम युद्धे। अयमनुदात्तेत्। अ
कारप्रश्लेषात्। असंसंग्रामत। स्तोम श्लाघायाम्। अतुस्तोमत्॥ छिद्र कर्णभेदने। करणभेदन इत्यन्ये। कर्णेति धात्वन्तरमित्यपरे। अन्धं दृष्टयु
पघाते। उपसंहार इत्यन्ये। आन्दधत्। दण्ड दण्डनिपातने। अङ्क पदे लक्षणे च। आञ्चकत्। अङ्ग च। आञ्जगत्। सुख दुःख तत्क्रियायाम्। रस आ
स्वादनस्नेहनयोः। व्यय वित्तसमुत्सर्गे। अवव्ययत्। रूप रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। छेद द्वैधीकरणे। अचिच्छेदत्।
छद अपवारण इत्येके। छदयति। लाभ प्रेरणे। व्रण गात्रविचूर्णने। वर्ण वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्ण
म्वर्णयति। कथाम्वर्णयति विस्तृणातीत्यर्थः। हरिं वर्णयति स्तौतीत्यर्थः। बहुलमेतन्निदर्शनम्। अदन्तधातुनिदर्शनमित्यर्थः। बाहुलका
दन्येपि बोध्याः। तद्यथा। पर्ण हरितभावे। अपपर्णत्। विष्क दर्शने। क्षप प्रेरणे। वस निवासे। तुत्थ आवरणे। एवम् आन्दोलयति। प्रेङ्खोलयति।
विडम्बयति। अवधीरयतीत्यादि। अन्ये तु दशगणीपाठो बहुलमित्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः ॥

चात्कार्यमिति। यद्यप्यन्यतराति देशेनाप्युद्धिर्वचने सिध्यतः। तथापि धातावनन्तर्भूतद्वितीयान्तादिलाभाय कारकातिदेशः कार्यातिदेशस्तु कृत्वतत्वा

क्षेमुंडमिश्रेति सूत्रे हलिकल्योरदंतत्वनिपातनस्य वैयर्थ्यमेव। टद्देःप्राक् टिलोपे सति अग्लोपित्वसंभवात्। तथा चादंतत्वनिपातनसामर्थ्यात् टिलोपात्पूर्वं टद्दि
रेवेत्यनग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते। आब्यद्वयप्रामाण्याद्रूपद्वयमपि साध्विति बहवः॥ ॥ लडर्थस्त्विति। करोत्याचष्टे इति हि कर्त्तरि वर्त्त
मानेलडेकवचनं। लडर्थाविवक्षायां तु एयंतात् भावकर्मणोः भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययो भवत्येवेति भावः। यद्यप्येकत्वादिसंख्या लडर्थो न भवति
तथापि लडादेशतिङर्थोपीह लडर्थत्वेन गृहीत इति ज्ञेयं। तेनातिक्रामति। तृतीयाप्रकृतिभूतात्प्रातिपदिकात् णिच्। तृतीयांतात् णिजित्यन्ये। एवं तत्करो
तीत्यत्रापि द्वितीयाप्रकृतिभूतात् द्वितीयांताद्वा णिच्। न च सुवंतात् णिचि विवाचं करोत्याचष्टे वा वाचाऽतिक्रामति वा वाचयतीत्यत्र कुत्वं स्यादिति शंक्यं। इष्टवत् भा

लडर्थस्त्वविवक्षितः। तेनातिक्रामति। अश्वेनातिक्रामति। अश्वयति। हस्तिनातिक्रामति। हस्तयति। धातुरूपञ्च। णिच्प्रकृतिर्धातुरूप
म्प्रतिपद्यते। चशब्दोऽनुक्तसमुच्चयार्थः। तथा च वार्त्तिकम्। आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति॥
कंसवधमाचष्टे कंसं घातयति। इह कंस हन् इति स्थिते। हनस्तोऽचिण्णलोः।७।३।३२॥ हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति। न
न्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता। ततश्चाड्द्वित्वयोर्दोषः। किञ्च। कुत्वं तत्वेन स्यात्। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य्य
विज्ञानात्। सत्यम् ॥

वेन भसंज्ञया पदसंज्ञायाः बाधात्। यशस्विनमाचष्टे यशसयति। स्रग्विणमाचष्टे स्रजयतीत्यादौ विनोर्लुकिम
स्स्य पदकार्यस्य बाधार्थं भसंज्ञातिदेशस्य आवश्यकत्वात् तत्करोतीत्यादिनिर्देशानुगुणत्वाच्च सुबंतात् णिजिति पक्षएव ज्यानित्याहुः॥ णिच्प्रकृतिरिति
। वधशब्दो णिच्प्रकृतिरिदानीं तु ——— कृल्लुकपवशिष्टभाग एव प्रकृतिरित्यर्थः। आख्यानात् कृत इति। यद्यपि वधशब्दः कृदंतः स आख्यानं न भवति तथाप्या
ख्यानवाची कृदंतश्च कंसवधशब्दो भवत्येव कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। कृल्लुगिति। हनश्च वध इति विहितस्य अप्प्रत्ययस्य लुक्। प्रकृतिप्रत्यापत्ति
रिति। विकारपरित्यागेन स्वरूपेणावस्थितिरित्यर्थः। तदेतत्सकलमभिप्रेत्याह। कंस हन् इति स्थिते इति। कंसविशिष्टस्येति। तस्मादेव णिचो विधानादिति
भावः। दोष इति। कशब्दात् पूर्वमडागमः कंस इत्यस्य द्विर्वचनं स्यादित्यर्थः। किंचेति। एवं च कंसमजीघतदिति इष्टम् न सिध्येदिति भावः। णौ प्रत्यये धातोर्वि

ब्देन सुखदुःखे प्रातिपदिकार्थौ परामृश्येते। प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे अनयोः पाठः सोपसर्गात्प्रत्ययार्थ इत्येके। सुखदुःखाभ्यां तत्क्रियायामेव णिच् स्या न्न त्वाचष्ट इत्यस्मिन्नर्थ इत्येतदर्थः पाठ इत्यन्ये। उक्तादिष्विति भीमसेनस्य वाक्यो ग्रंथांत इति। भूसत्तायामित्यादिधातुपाठ स्यांत इत्यर्थः॥ इति चुरादयः ॥
तत्प्रयोजको हेतुश्च। तच्छब्देन स्वतंत्रः कर्तेति पूर्वसूत्रोपात्तः कर्ता परामृश्यते। तस्य कर्तुः प्रयोजकः प्रेरकः तद्व्यापारानुकूलव्यापारवानित्यर्थः। चकारः एकसंज्ञाधिकारबाधनार्थस्तदाह। हेतुसंज्ञः कर्तृसंज्ञश्चेति। हेतुसंज्ञायाः प्रयोजनं भीस्म्योर्हेतुभये भियो हेतुभये षुगित्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः। कर्तृसंज्ञायास्तु लः कर्मणि च भावे चेति सूत्रेण प्रयोजके वाच्ये लकारादयः॥ हेतुमति च। स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यत्रास्ति स हेतुमान् व्यापारः। तस्मिन्वाच्ये णिजित्याह। प्रयोजकव्यापार इति। प्रयोजकश्चेतनाचेतनसाधारण्येन विवक्षितः स च क्वचित्सिद्धः क्वचित्फलरूपः देवदत्तः पाचयति गमयतीत्यादौ सिद्धः। भिक्षा वासयति संग्रामो वासयतीत्यादौ तु फलरूपः। प्रेषणादाविति। भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणा।

तत्प्रयोजको हेतुश्च। १।४।५५॥ कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्। हेतुमति च। ३।१।२६॥ प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति भावयति। ।णिचश्चेति कर्तृगे फले आत्मनेपदम्। भावयते। भावयाम्बभूव॥ ॥

आज्ञेत्यर्थः। आदिशब्देन अध्येषणानुमत्यादीनामुपादानं। समानस्याधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना अध्येषणा। प्रार्थनेत्यर्थः अनुमतिस्तु राजादेः संमतिः तां विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादिः प्रयोजकः। अनुमत्यादीत्यादिशब्देनाज्ञोपदेशानुग्रहयोरुपादानं ज्वरितः कषायं पिबेदित्युपदेशमात्रेण वैद्यादिः प्रयोजकः। यस्तु केनचिद्रुमिष्टं पलायमानं निरुणद्धि सोपि हेतुरनुग्राहकत्वेन प्रयोजकः। सर्वेष्वेते विशेषाः कथं णिच्प्रत्ययगम्या इति चेत् अत्राहुः। सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः विशेषास्तु अर्थप्रकरणादिगम्या इति। नन्वेवं णिचो लोडादीनां च पर्यायता स्यात् तत इदानीं त्वं भुङ्क्ष्व भवानिति वक्तव्ये भोजयतीति णिजपि प्रयुज्येतेति चेन्न। मैवं। कर्तुः प्रयोजको हि हेतुः प्रेष्यविषयो यः संबोध्यो देवदत्तादिः स तु नाद्यापि प्रकर्तृत्वेनावधारितः। तथा च प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा णिजर्थस्तदुपहि

पवर्गजकारयोरसंभवाच्चणः संभवेपि अव्यभिचारात्तदाह। अवर्णपरे यात्व इत्येव इति। अस्रश स्रवतिश्रृणोति। अपर इत्यनुवर्तते तेनतु पण जीति। पवर्गजकारयोरसंभवाच्चणः संभवेपिअव्यभिचारात्तदाह। अवर्णपरेयात्व स्येरेइति। अस्रश स्रवतिश्रृणोति। अपरइत्यनुवर्ततेतेनतुपयणजीति। अपिप्रवत्। अपुप्रवत्॥ अचिच्यव द्रोत्रवर्णपरः। अवर्णपरे किं। सुश्रूषति। श्रृणोत्यादेरुदाहरणंतु अशिश्रवत्। अशुश्रवत्। अदिद्रवत्। अदुद्रवत्। अपिप्रवत्। अपुप्रवत्॥ अचिच्यव त्। अचुच्यवत्। अडुढौकदिति। ढौकृगतौ। चङ्परेणोयदंगंतस्य योऽभ्यासोलघुपरइति पक्षाश्रयेणाह। अचीचकासदिति। मतान्तरइतिअंग यत्रद्विरुच्यते इतिमतेचङ्परेणोयत्तद्घतत् परो योअंगस्याभ्यासइतिमते चेत्यर्थः। सुप् धातुप्रकरणाइत्ति। अतितिरायत्। अससभ्रायत्। अविवि द्रायत्। अदिदेवद्रायदित्याद्युदाहरिष्यत इत्यर्थः। वृद्धिंबाधित्वेति। एयत्वोपाविघङित्यादिवचनात्। णिलोपंशमत्पाख्यानपक्षेअपवादत्वाद्धेत्यर्थः। असंभवइति। तथाच। अचुचौरदित्येवरूपमितिभावः। एपाश्रुतिनिर्देशादिति। चङ्परेणावित्यत्र चङ्परेणित्वेइत्यर्थस्तेन णि द्वये सत्यपि णित्वं चङ्परमस्तीतिह्रस्वदीर्घयोरस्तिसंभवइतिभावः। एतेनअवीवरद्वीणांपरिवादकैनेत्यादौसन्वद्भावो व्याख्यातस्तत्रापीत्यमेवपूर्वपक्षसिद्धं

स्तम्भुसिवुसहांच्वङि। ८।३।११६ एषांसस्यषोनस्याच्चङि। अवातस्तम्भत्। पर्यसीषिवत्। न्यसीषहत्। आटिटत्।
आशिशत्। वहिरङ्गोप्युपधाह्रस्वो द्वित्वात्प्रागेव। ओणोर्ऋदित्करणाल्लिङ्गात्। माभवानिदिधत् ॥ ॥ ॥

सन्यतः। संप्रसारणमित्यतः संप्रसारणमनुवर्तत एवेत्याह। सन्परे णौ। स्तुत्यत्वात्। णौच। विभाषाश्वेरित्यनुवर्ततेसंश्चङोरितिणावित्यस्यविशेषणंव्हः संप्रसारणमित्यतः संप्रसारणमनुवर्तत एवेत्याह। सन्परे चङ्परे चेत्यादिवचनादिति। इयंच परिभाषा लिट्यभ्यासस्योभयेषामित्यत्रवच्यादीनांग्रहादीनामनुवृत्त्यैवेष्टसिद्धावुभयेषांग्रहणसामर्थ्याल्ल भ्यते। अन्यथावन्नस्त्रेत्यत्रहलादिःशेषेकृतेवस्यसंप्रसारणंस्यादित्याहुः ॥ स्तंभुसिवु॥ स्तंभुः सौत्रः। षिवुतंतुसंताने। षहमर्षणे। स्तंभतेः स्तन्नेरि त्यनेन प्राप्तिरन्ययोस्तु परिनिविभ्यइत्यनेनेति विवेकः। आटिटत्। आशिशदिति। णिचासहद्वित्वात्सन्वत्भावोनेतितत्तद्विषयेविहितोयोदीर्घो लघोरितिदीर्घः सनप्रवर्तते। ऋदित्करणाल्लिंगादिति। यदि पूर्वं द्विर्वचनंभवेत्तर्हि णिशब्दस्यद्वित्वे सत्युपधाह्रस्वस्याप्राप्तेस्तत्प्रतिषेधार्थमृदि त्करणंव्यर्थंस्यादतस्तदुक्तोऽर्थे ज्ञापकमेव॥

प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः। उक्तं चाद्यव्यमात्रस्य तु प्रैषे प्रच्छादेर्लोड् विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति। अस्यार्थः। कर्तृत्वेनानवधारितस्य देवदत्तादेस्तु प्रैषे प्रच्छ ज्ञीप्सायामि त्यादेर्लोड् भवति प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा सा णिचो विषय इति। किंच प्रयोक्तृनिष्ठा प्रवृत्तिर्लोडर्थः प्रयोक्तृप्रयोक्तृ कार्त्स्न्यकात्तु णिजर्थः। पचेद्देवदत्ते त्यत्र हि वक्तैव प्रेरकः पाचयतीत्यादौ वक्तृभिन्नः पाचयामीत्यादौ तु वक्तेति दिक्॥ ॥ ओः पुयण्ज्यि। पुयण्जी ति समाहारद्वन्द्वात् सप्तम्येकवचनं। अपर इति बहुव्रीहिः। अत्र लोपोऽभ्यासस्येत्यतः अभ्यासस्येत्यनुवर्त्तते भृत्वा

ओः पुयण्ज्यपरे।७।४।८०॥ सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्वं स्यात् पवर्ग यण् जकारेष्ववर्णपरेषु परतः। अबीभवत्। अपीपवत्। मूङ्। अमीमवत्। अयीयवत्। अरीरवत्। अलीलवत्। अजीजवत्॥ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा।७।४।८१॥ एषामभ्यासोकारस्य इत्वं वा स्यात् सन्यवर्णपरे धात्वक्षरे परे। असिस्रवत्। असुस्रवत्। नाग्लोपीति ह्रस्वनिषेधः। अशशासत्। अडुढौकत्। अचीचकासत्। मतान्तरे अचचकासत्। अग्लोपीत्तु सुध्यातुप्रकरणे उदाहरिष्यते। एयन्ताण्णिचा पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिम्बाधित्वा णिलोपः। चोरयति। णौ चङ्युपधाया ह्रस्वः। दीर्घो लघोः। न चाग्लोपित्वाद्द्वयोरप्यसम्भवः। एयाद्वृत्तिनिर्देशात्। अचूचुरत्। णौ च संश्चङोः।२।४।५१॥ सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात्। सम्प्रसारणान्तरङ्गत्वात् कार्य्यं बलवदिति वचनात् सम्प्रसारणं पूर्वरूपम्। अशूशवत्। अलघुत्वान्न दीर्घः। अशिश्वयत्॥

मिदित्यनुवृत्तौ हणः संन्यन्तत्वात् सनीति च अंगस्येत्यधिकृतत्वं तदेतदभिप्रेत्याह। सनि परे यदङ्गमित्यादि। अपरे किं। बुभूषति। पवर्गयणजीति किं। ऊर्णुनविषति। अबीभवदित्यादि। भू सत्तायां। पूङ् पवने। मूङ् बंधने। यु मिश्रणामिश्रणयोः। रु शब्दे। लूञ् छेदने। जु गतौ। सौत्रोयं धातुर्जे चंक्रम्येत्यत्र निर्दिष्टः। ननु भूमूरितिहित्वोत्तरं स्वज्ञावादेशो भवतस्ततः कृतस्य णौ चङ्युपधायाह्रस्वस्यानिवद्भावेन लघुपरत्वाभावात् सन्वद्भावाप्रवृत्त्याऽबीभवदित्यादावभ्यासोवर्णस्येत्वं दुर्लभमिति चेत्। अत्राहुः। आरभ्य सामर्थ्याद्देवतस्या निवत्त्वमिति॥

एवञ्चकारनिपातनाभ्युपगमात्। यद्वा। अभ्युद्ध इत्यादिरूपं द्युपसर्गात्क्रमेडं प्रत्यये ज्ञेयं। उद्जेस्तु घञि अनभिधानान् प्रयोगाभाव इति न दोषः। तदेतद्भाष्यादि मतमभिप्रेत्याह उपदेश इकारोप ध इत्यादि॥ ॥ अजादेरित्येवेति। नन्द्रा इत्यत्र अजादेरित्यनुवर्तते तेन आदिभूतादचः परा एव नदरा द्विर्न्नोच्यन्ते नान्ये इत्यर्थः। ननु लावस्थायामेव अडिति भाष्यकारोक्तपक्षे अदिद्रपदित्यत्र अजादित्वमस्त्येवन्याय्यश्च प्रथममड् परत्वाद्रन्तरङ्गत्वाच्चेति चेत्। अत्राहुः। द्वितीयस्येत्यप्यत्रानुवर्तते तत्सामर्थ्याच्च नित्यं द्वितीयस्येति तदर्थः। तेन लावस्थायामडि कृते पि धातुसंज्ञाप्रवृत्तिकाले अजादित्वाभावान्नोक्तदोषः। नित्यं द्वितीयस्यैकाचो येन दरास्तेषामेव निषेधात्। न चैवं नित्यं द्वितीयस्येति व्याख्याने च इष्टसिद्धावजादेरित्यस्यानुवृत्तिर्मास्त्विति वाच्यं। इंदिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनि

अजादेरित्येव नेह। अदिद्रपत्। रभेरशब्लिटोः। ७। १। ६३॥ रभेर्नुम् स्यादचि न तु शब्लिटोः। लभेश्च। ७। १। ६४॥ अररम्भत्। अललम्भत्। हेर चङीति सूत्रे ऽचङीत्युक्तेः कुत्वन्न। अजीहयत्। अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्। असस्मरत्। अददरत्। तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः। विभाषा वेष्टिचेष्ट्योः। ७। ४। ९६॥ अभ्यासस्यात्त्वं वा स्याच्चङ्परे णौ। अववेष्टत्। अविवेष्टत्। अचचेष्टत्। अचिचेष्टत्। भ्राजभासेत्यादिना वोपधाह्रस्वः। अबिभ्रजत्। अबभ्राजत्। काण्यादीनां वेति वक्तव्यम्। एयन्ताः कणरणभणश्रणलुपहेठः काण्यादयः षड्भाष्ये उक्ताः। द्यापिवा णिलोपे टिलोपः पश्चात्तद्वैषिकान्यासो वा। णिलोटीत्यपप्यत्र इत्यंद्वादश। अचीकणत्। अचकाणत्॥ ॥ ९९ षेधापत्तेः। अजादेरित्युक्तो त्वा

दिभूतादचः परत्वे दकारस्य नेति सिद्धमिष्टं। न च अजादेरित्युक्तावपि चैवं दिद्रीयिषतीत्यत्र दोषः स्यादेव आद्यवयवस्य हलत्वान्नकारस्य द्वित्वनिषेधाप्रसं गादिति वाच्यं। अजादेरिति कर्मधारयात् पंचमीत्युक्तत्वात्। इह च एकदेशस्वरितत्वं प्रतिज्ञाय अच इत्येवानुवर्त्यतां। अथवा आदेरित्यस्याप्यनुवर्तनमस्तु तस्य नावयवपरत्वं किंतु पूर्ववर्तिमात्रपरत्वं शब्दाधिकाराश्रयणादिति ज्ञेयं। नन्वेवमुत्तरार्थतया द्वितीयस्येति ग्रहणस्य सार्थकत्वेऽस्थि ते द्वितीयस्येति नवक्त व्यमिति भाष्यं विरुध्येतेति चेन्न। मैवं। यस्मिन् सूत्रे पठितं तत्र मास्त्विति तदाशयात्। न च अजादेरित्येतावत्युक्तेयस्य कस्यचिदेकाचो द्वित्वं स्यादिति वाच्यं प्र थमस्यैकाचः पूर्वेणैव सिद्धेः पुनरारंभो द्वितीयस्य द्वित्वार्थमिति सुवचत्वात्। रभेरशब्लिटोः। रधिजभोरित्यतोऽचीति इदितो इत्यतो नुमिति चानुवर्तते

एजादावेधतौ विति। एत्येधत्यूठ्स्विति सूत्रे एजाद्योरेत्येधत्योरिति व्याख्यातत्वादिति भावः। न च मा भवान्प्रेदिधत् इत्यत्र गोश्च इति ह्रस्वे कृते नायमेधतिरिति वृद्धेर प्रवृत्तौ किमेधतेरेजादिविशेषणेनेति वाच्यं। एकदेशविकृतस्यानन्यत्वात्। न चैवमपि अजादेर्द्वितीयस्येति धिशब्दस्यानेधिधिशब्दादेशे सति वस्तुतोऽखिवप्रकृतिप्रत्ययविभागसंमोह इति वाच्यं। द्विःप्रयोगो द्विर्वचनं षाष्ठमिति भाष्ये सिद्धांतितत्वात्। अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात्। जिघांसतीत्यादौ सकृतिप्रत्ययविभागसंमोह इति वाच्यं। द्विःप्रयोगो द्विर्वचनं षाष्ठमिति भाष्ये सिद्धांतितत्वात्। अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात्। जिघांसतीत्यादौ सन्ः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यादिति दिक्। उब्ज आर्जवे इति। अयमुपध्मानीयोपध इति वार्तिककृतो मतं। तस्य स्फुलांजग्ध्वस्शीति जश्त्वेन वकारे कृते उज्जिता। उज्जितुमिति रूपं। एतच्चायोगवाहानां शर्षु पाठस्य फलं। भाष्यकारादयस्तूपध्मानीयोपधपाठे उज्जिजिषतीति रूपं न सिध्येत्। यदि पूर्वत्रासिद्धीयमद्विर्वचने इत्याश्रित्य वकारात्तरं द्वित्वं क्रियते यदि वा अस्या नित्यतामाश्रित्य वकारात्पूर्वमेवोपध्मानीयस्य द्वित्वमुभयथापि इष्टरूपासिद्धिः। आद्ये उविज्जिषतीति द्वितीये तूपध्मानीयस्याचत्वात्तदादेरजादेर्द्वितीयस्येति द्वित्वे हलादिः शेषे द्वितीयोपध्मानीयस्य जश्त्वेन वकारे पश्चात्प्रथमस्यापि तथैव वकारे

एजादावेधतौ विधानान्न वृद्धिः। मा भवान्प्रेदिधत्। नन्द्रा इति न दराणां न द्वित्वं। औन्दिदत्। आड्डिडत्। आर्चिचत्। उब्ज आर्जवे। उपदेशे दकारोपधः। भुजन्युब्जौ पाण्युपतापयोरिति सूत्रे निपातनाद्बत्वं। स चान्तरङ्गोऽपि द्वित्वविषये न न्द्रा इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते। न तु ततः प्राक् दकारोच्चारणसामर्थ्यात्। औज्जिजत्॥

॥ ९ रेउवज्झिषतीत्यापत्तेस्ततश्चेष्टसिद्धये दकारोपधोयं स्वीकार्यः। भुजन्युब्जाविति निपातनादुपधादकारस्य बो भवतीति वाक्यं कल्प्यते तत्र च सोऽस्थुनास्थुरित्यस्यायं तदपमर्थः। स्थुना योगे उद्जे दकारस्य बकार इति। अभ्युद्गः समुद्ग इत्यत्र तु उज्जिता उज्जितुमित्यत्रैव चवर्गयोगो नास्तीति न बकारः। दकारोपधे चास्मिन्स्वीकृते नन्द्रा इति निषेधाज्जिशब्दस्य द्वित्वे जातो बकारे च उज्जिजिषतीति सिध्यति रूपं। ननु पूर्वत्रासिद्धीयमद्विर्वचने इति बकारोत्तरं द्विर्वचने सति स्यादेवानिष्टमिति वाच्यं। द्विर्वचने हि त्रैपादिकं सिद्धं न तु तन्निषेधे पितथा च निषेधे निपादीस्थस्यासिद्धत्वान्न न्द्रा इति निषेधः प्रवर्तते। यद्वा। तादृशवाक्यमिह न कल्प्यते किं तु भुजन्युब्जाविति निपातनेन दस्य बइति। न चैवं बकारसहितस्य द्वित्वप्रसंगः। धातोर्दकारोच्चारणसामर्थ्यात्। न चाभ्युद्ग इत्यादावपि बकारश्रवणप्रसंगः। अकुत्वविषय

त्वं विधीयते व्लेपयतीत्यादिः। ज्ञी वरणे। रीङ् क्षये। क्रूयीशब्दे। उंदे च। क्ष्मायी विधूनने। तिष्ठतेरित्। तकारो मंदप्रयोजनः। श्तिपा निर्देशो यङ्लुक्निवृत्त्यर्थः। अ
तास्थ पत् लरिति। स्थापयीति। स्थापेति। उर्ऋत्। चुरादौ व्याख्यातं। अनि की र्तदिति। ऋदादेशाभावपक्षे उपधायाश्चेतीत्वे रपरत्वमुपधायां चेति दीर्घः। एको
पधादित्यादि। आदंतत्वान्युकः प्राप्तिः। एवं च लुगागमस्य पुङ् निवृत्तिरेव फलं। पालयतीति रूपस्य पाल रक्षण इति धातुनाऽपि सिद्धेरिति भावः ॥ ॐ ॥ वो विधू
लुग्विकरणाऽलुग्विकरणपरिभाषया ओवै शोषण इत्यस्यैव ग्रहणं न तु वा गतिगंधनयोरित्यस्य लक्षणप्रतिपदोक्तपरिभाषा त्वस्मिन्प्रकरणे न प्रवर्तत इत्यु
क्तं प्राक्। ओवै शोषणे इत्यस्य रूपमिति वदन् वामनोप्यत्रानुकूलः। वज गतावितिधातुना वाजयतीति रूपे सिद्धे जुगागमस्य पुक्निवृत्तिरेव इहापि फ
लं। वातेरिति। वायतेरिति वक्तुं युक्तं। आत्वविधायकसूत्रं स्मारयति। विभाषा लीयतेरिति। लीयतेरिति यका निर्देशो न तु श्यना। अन्यथा विभाषाली

वो विधूनने जुक्। ७।३।३८। वातेर्जुक् स्यात्सो कम्पे पर्णे। वाजयति। कम्पे किं। केशान्वापयति। विभाषा लीयतेः। लीलोर्नुग्लुकावन्यतर
स्यां स्नेहविपातने। ७।३।३९। लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो णौ स्नेहद्रवे। विलीनयति। विलापयति। विलालयति। विलाय
यति वा घृतम्। लीई इति ईकारप्रश्लेषादात्वपक्षे नुक्। स्नेहद्रवे किम्। लोहं विलापयति। प्रलम्भनाभिभवपूजासु लियो नित्यमात्वमि
ति वाच्यम् ॥ ॥
ङ इत्येवावस्यत्। तेन लीलीङोरुभयोरप्यात्वं भवति। लीलोः। लीङ् श्लेषणे दिवादिः। ली श्लेषणे क्र्यादिः। ला ग्रहणे न ला
आदाने अदादिः। कृतात्वो लीलीङौ चात्र योपि गृह्येते। लीयतेरिति औचित्यादिहापि यका निर्देशः। उभयोरपि ग्रहणं। न च निरनुबंधकग्रहणे न सानुबंध
कस्य ग्रहणमिति परिभाषया सूत्रे पि लीङो न ग्रहणमिति वाच्यं। इयं हि परिभाषा वामदेवाड्ड्यड्डा वित्यत्र डित्वेन ज्ञापिता। ज्ञापनं च उत्सर्गतः। सजातीया
पेक्षमिति प्रत्ययग्रहणविषयत्वमस्याः कल्प्यते। यथा सद्व्यपतव्यसमानाधिकरणे नेत्यनन्तव्यस्यैव ग्रहणं न तु तव्यतः। अत एव जॄव्रश्च्योः क्त्वि इति सू
त्रे जॄणातिजीर्यत्योरुभयोर्ग्रहणमिति न्यासकृतोक्तं। अतोऽत्र लीलीङोर्ग्रहणमिति सम्यगेवा। न चैवं दिव औदित्यत्र निरनुबंधपरिभाषया दिवितिप्राप्ति
यदिकस्यैव ग्रहणं न तु धातोरिति ग्रंथः कथं संगच्छत इति वाच्यं। उत्सर्गतः प्रत्ययग्रहणविषयत्वेन क्वचिदन्यत्रापि प्रवृत्तौ बाधकाभावादिति वदंति।

अचिकिं। आरब्धं अशव्लियोः किं रभन्ते। रेभे। लभेश्च योगविभागआङोयीत्यत्र लभेरेवानुवृत्तिर्यथा स्यादिति। काणयादीनामिति। कणनिमीलने। रणशब्देभ
णशब्दे। श्रण दाने। लुट लुठ स्तेदने। हिठ विबाधायां। षट। हुल स्पर्द्धायां शब्दे च। वण शब्दे। लुठ प्रतिघाते। लुप छेदने। लोपी तिणिजन्त निर्देशः लापय इतिपाठांत
रे। लपव्यक्तायां वाचि। केचित्तु लपटेठ इति पठंति। न्यासे चत्वारः। चण दाने। लुठ स्तेयेभ्वादिः। चुरादौ दंडक पाठे भाषार्थकोपि। अरीरणत्। अरणत्। अबीभण
त्। अवभाणत्। अशिश्रणत्। अशश्राणत्। अलूलुपत्। अललोपत्। अजीहिठत्। अजिहेठत्॥ ॥ स्वापेश्चङि। चङि किं। स्वापयति। असूषुपदिति। इह संप्रसार
णात्तरं द्वित्वं। शाच्छासा। शो तनूकरणे। छो छेदने। षोऽन्तकर्मणि। ह्वेञ् स्पर्द्धायां। व्येञ् संवरणे। वेञ् तंतुसंताने। पापाने। युग्विकरणात् युग्विकरणोतिपरि

स्वापेश्चङि। ६।१।१८॥ ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं स्यात्। असूषुपत्। शाच्छासाह्वाव्यावेपां युक्। ७।३।३७॥ पुकोपवादः। शायय
ति। ह्वाययति ह्वः सम्प्रसारणम्। ६।१।३२॥ सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात्। अजूहवत्। अजुहावत्। लोपः पिबतेरीच्चाभ्या
सस्य। ७।४।४॥ पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। अर्तिह्रीति पुक्। अर्पयति। ह्रेपयति। व्लेपय
ति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति। तिष्ठतेरित्। ७।४।५॥ उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्। जिघ्र
तेर्वा। ७।४।६॥ अजिघ्रिपत्। अजिघ्रपत्। उर्ऋत्। अचीकृतत्। अचिकीर्त्तत्। अवीवृतत्। अववर्त्तत्। अमीमृजत्। अममार्जत्। पातेर्णौ लु

भाषया पारक्षणे इति नेह यत्त्वात्तोत्तस्य नपालयतीति रूपमनुपदं वक्ष्यति। शाययति। अशीशयत्। छाययति। अ [illegible] एवन्तावः पुकोपवादः। पालयति॥
विव्हयत्। साययति असीषयत्। ह्वाययति अविहूयत्। व्याययति। अविव्ययत्। वापयति अवीवयत्। पाययति। अपीप्यत्। इह शाच्छासादीनां कृतात्वानां निर्देशः पुकःप्रा
प्तिं ध्वनयितुं तत्प्रयोजनं त्वस्मिन्नकरणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः। तेन ध्मापयति क्नापयतीत्यादि सिद्धं। ह्वः संप्रसारणं च संस्वङोरिति वर्तते त
दाह। सन्परइत्यादि। अजूहवत्। अजुहावदिति। काणयादीनां वेति ह्रस्वविकल्पः। अपीप्यदिति उपधालोपस्य द्वित्वे कर्त्तव्ये प्रतिषेधात् कृते लोपे स्थानिव
द्भावाद्वा पायशब्दस्य द्वित्वे हलादिः शेषे ईकारः। स च अनभ्यासविकार इति निषेधादंतस्य स्यादेशः। इहाग्लोपित्वादलघूपधत्वाच्च सन्वदित्वदीर्घयोरप्राप्ता वि

विलापय
विलीनयतीति। लीलीङोरीकारान्तयोर्युकि रूपं। विलाययतीति। जुगभावपक्षे तयोरेव रूपं। विलालयतीति। लातेः स्नेहद्रवे तयोर्लीलीङोः स्थले नुकि रूपं। विलापय
तीति। लुगभावपक्षे आदन्तानां तेषामेव रूपं। लोहं विलाययतीति। नुक्लुकोरभावादात्वपक्षे पुक्। आत्वाभावे तु वृद्ध्यायादेशौ। प्रलम्भनेति। प्रलम्भनं वञ्चनं। अ
शितिकिं। लीयते। लिनाति॥ ॐ ॥ लियः संमाननशालीनीकरणयोश्च। विभेतेर्हेतुभये। हेतुः प्रयोजकः। इह आदेच उपदेशे इत्यत एच आदित्यनुवर्तते विभाषा ली
लियः सम्माननशालीनीकरणयोश्च ॥१।३।७०॥ लीङ्-लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्त्रभिप्राये फले पूजाभिभवयोः प्रलम्भने चार्थे। जटाभिर्लाप
यते। पूजामधिगच्छतीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते। अभिभवतीत्यर्थः। बालमुल्लापयते। वञ्चयतीत्यर्थः। विभेतेर्हेतुभये ॥६।१।५६॥ विभेते रे
च आत्वं वा स्यात्प्रयोजकाद्भये च्विते। भीस्म्योर्हेतुभये ॥१।३।६८॥ आभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ। सूत्रे भयग्रहणं धात्वर्थोपलक्षण
म्। मुण्डो भापयते। भियो हेतुभये षुक् ॥७।३।४०॥ भी इ इतीकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्यात् णौ हेतुभये। भीषयते। नित्यं स्मयते ः
॥६।१।५७॥ स्मयतेरेचो नित्यमात्वं स्यात् णौ हेतोः स्मये। जटिलो विस्मापयते। हेतोश्चेद्भयस्मयाविति ते नेह। कुञ्चिकया एनं भापयति। विस्मापयति। कथं तर्हि विस्मापयन् विस्मितमात्मवृत्ताविति मनुष्य—वा चेति करणादेव हि तत्र स्मयः। अन्यथा शानजपि स्यात्। सत्यम्। वि
स्मापयन्नित्येव पाठ इति साम्प्रदायिकाः। यद्वा। मनुष्यवाक्प्रयोज्यकर्त्री विस्मापयते। तेन पासिंहो विस्मापयन्निति एयन्तात् शतेति व्याख्येयम्। स्फा
यो वः ॥७।३।४१॥ स्फावयति। शदेरगतौ तः ॥७।३।४२॥ शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु। गाः शादयति गोपालः। विन्दः गमय
तीत्यर्थः। रुहः पोऽन्यतरस्याम् ॥७।३।४३॥ णौ। रोपयति। रोहयति॥ ९९ यतेरित्यतो विभाषाचिस्फुरोरित्यतो णाविति चानुवर्तते इत्याह। विभेतेरेचइ
त्यादि। भीस्म्योः। व्यत्ययेन षष्ठीत्याह आभ्यामिति। णेरणावित्यतो णेरित्यनुवृत्तेर्ण्यन्ताभ्यामेव विधिरकर्त्रभिप्रायार्थः। ईकारान्तस्येति। तेन आत्वपक्षे भापय
ते इत्येव न त्वत्र षुगित्यर्थः। करणादेव हीति। तथा च करणात् स्मये आत्वाभावे न षुक् दुर्लभ इति भावः। प्रयोज्यकर्त्रीति। यद्यपि प्रथमं णिजर्थप्रति मनुष्यवा
गेव प्रयोजिका अत एव आत्वप्रवृत्तं तथापि द्वितीयणिजर्थाभिप्राये स्मत्तमिति मनोरमायां। केचित्तु प्रयोज्यस्य कर्त्री प्रयोजकस्य कर्त्रीति या वृद्धि इति प्रथम

॥

तनकारार्थमिदं णत्वं स्यात् अनंतरस्य गुतकौ ङिन्यन्यायेन न स्यादिति उभा नित्यच्यत इति स्थितं। अभ्यासस्येति किम्। प्राणन्नमति। असत्यस्मिन् भनितेरिति म
ष्टी संबंधसामान्ये स्यात्तत्र अनंतपीदिसंबंधो विगृह्येत। सति त्वस्मिन् अवयवावयविभावसंबंधो लभ्यते। भतो अर्थवत्त्वाभ्यासग्रहणं। यदि तु नितरां नेनानि
तेरिति षष्ठी अवयवसंबंधे व्याख्यायते अनितेश्च नकाररूपाभावात् सामर्थ्याद्द्वित्वे न नं प्राप्तणानितिशंद्वस्येतत् अभ्यासस्येति मंदप्रयोजनं। रहपूर्वेणत्वं
कृत्वा द्वित्वे कृते प्राणिणादित्यादि सिद्धावयमारंभः इर्वेनासिद्धीयमद्वित्वं च गेरत्वस्यानित्यत्वज्ञापनार्थः। तेन रणुनाचेत्यत्रणत्वात् पूर्वमेव नुशब्दस्य द्वित्वा
दभ्यासोत्तरखंडे णत्वाभावः सिद्धः। प्रत्याययतीति। प्रतिश्वस्यणोज्ञानार्थत्वात्तुडिः प्रत्यायिपत्। रहरणोणिचि कृते रणो यणीति यणं बाधित्वा परत्वाद् वृद्धिः
न च ओः पुयण्जीति ज्ञापकात् पूर्वं द्वित्वे पश्चाद् वृद्धिरिति वाच्यं। भतादेर्द्वितीयस्येति णिचोद्वित्वे भभ्यासोत्तरखंडस्यावर्णपरत्वाभावात्। इति वार्थ इति। व्याख्या
नद्वयमप्याकारारूढमिति भावः। यकारस्येति रेफस्य तु न भावाद्यनेन निषेधादिति भावः। द्वितीये त्विति। तृतीयस्येकाच इति पक्षे सत्रंतेप्रनतीतेरिति न च न
सामर्थ्यादिति भावः। ऐर्ष्यिषदिति। तृतीयस्य व्यंजनस्येति पक्षे ईर्ष्यग्रादरणो। ऐर्षिष्यादिति रूपस्यासाधुत्वमाशंक्योपकारयति द्वितीयव्याख्यायामित्यादिना॥
द्वितीयस्यैवेति। एकाच इति शेषः। अप्रवृत्तेरिति। किं तु सन्नंत एव प्रवर्तते। तनरत्वनुपदेऽर्षिषिषति इत्युदाहरिष्यति। भर्थ उपपाज्ञापामित्यस्य आगमोऽयं पता
दात्मनेपदेन भाव्यमिति प्रार्थयंतीति माधवाद्यादिप्रयोगाः साधुरित्याशंक्य तत्समर्थनायाह। निवृत्तप्रेषणादिति। उक्तंच। निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे
णिजुच्यत इति नेत्यादि। प्रार्थयेनां कुर्वंतीति विवक्षितार्थे प्रयोगः सिद्ध इति भावः। कोऽनि तु परस्मैपदसिद्ध्यर्थं प्रार्थयेनं प्रार्थं तं कुर्वंति प्रार्थयंतीति व्याचक्षते तद
सत्। धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षितेऽप्युपसर्गाणां पृथक्करणस्य वक्ष्यमाणतया अर्थेनेत्यागमस्यानर्थकत्वात्॥ इति सन्नंतप्रक्रिया ॥

॥ ॥

तेदुष्यति स्नानसंध्यादौ विरक्तो भवति। तत्प्रयुंक्त इत्यर्थः॥ ॐ ॥ जृणातेस्त्विति। अमित्वादस्य मित्वं नेति भावः। आखेटकमिति। मृगयेत्यर्थः। रजयतीति। रंजति मृगाः
ते ग्रहणमरणाद्यनुकूलव्यापारविषया भवंति तान्मृगान्तादृग्व्यापारविषयान् करोतीत्यर्थः। च्णपादिश्चिन्नित्यनेन मित्वादुक्तस्वरतिभावः। स्वादिगणस्थस्य तु मित्वे ने
त्युदाहरति चापयतीत्यादि। अपस्फारदिति। द्वित्वे कर्तव्ये अजादेशस्य स्थानिवत्त्वान्निषेधाद्वा स्फुरित्युक्ता एवतो द्वित्वं ततः चिस्फुरोर्णौ वितिवा आत्वं॥ उभौसा
। रषाभ्यामिति सूत्रेन इति षष्ठ्यंतं प्रथमा द्विवचनांततया विपरिणम्यते इत्याह। उभौ नकाराविति। ननु साभ्यासस्येत्युक्त्या उभयोरपि भविष्यतीत्यभौग्रह

जृणातेस्तु जारयति। रंजेर्णौ मृगरमणे नलोपो वक्तव्यः। मृगरमणमाखेटकम्। रजयति मृगान्। मृगेति किम्। रंजयति पक्षिणः। रमण
इत्यत्र तु रंजयति मृगान्रणदानेन। चुरादिषु ज्ञपादिश्चिन्। चिस्फुरोर्णौ। चपयति। चययतीत्युक्तम्। चिनोतेस्तु चापयति। चायय
ति। स्फारयति। स्फोरयति। अपस्फारत्। अपुस्फुरत्। उभौ साभ्यासस्य ८।४।२१॥ साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति।
प्राणिणत्। णौ गमिरबोधने। २।४।४६॥ इणो गमिः स्यात्सौ। गमयति। बोधने तु। प्रत्याययति। इण्वदिकः। अधिगमयति। हनस्तोऽचि
ण्णलोः। हो हन्तेरिति कुत्वम्। घातयति। ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्॥ तृतीयव्यञ्जनस्य तृतीये वाचइति वार्थः। आद्ये यकारस्य द्वित्वे
वारयितुमिदम्। द्वितीयेत्वजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्तते। एर्ष्यियत्। ऐर्षिष्यत्। द्वितीयव्याख्यायां णिजन्ताच्च
ङि षकार एवाभ्यासे श्रूयते। हलादिः शेषात्। द्वित्वं तु द्वितीयस्यैव। तृतीयाभावेन प्रवृत्तवार्तिकाप्रवृत्तेः। निवृत्तप्रेषणाद्धातोर्हेतुम
सो स्पुद्धेनतुल्योर्थः। तेन प्रार्थयन्ति शयनोत्थितं प्रियाइत्यादि सिद्धम्। एवं सकर्मकेषु सर्वेषूह्यम्॥ इति ण्यन्तप्रक्रिया॥ ॥

णां व्यर्थमिति चेत्। अत्राहुः। साहित्यमात्रं विवक्षितं न तु तुल्ययोग इत्यभ्युपगमे द्वयोर्युगपन्न सिद्धेरित्युभौग्रहणं। न च तुल्ययोगाविवक्षायां तेन सहेति तुल्ययोग इति समासोऽ
त्र न स्यादिति शंक्यं। तुल्ययोगग्रहणं प्रायिकं सकर्मकः सलोमक इत्युक्तत्वादिति। केचित्तु उभाविति अस्मिन्नसति साभ्यासस्यानितेर्णो भवतीत्युच्यमाने वचन
सामर्थ्याच्च पूर्वत्रासिद्धीयमद्विर्वचन इत्यनाश्रीयमाणे अन्तरत्वस्य द्विर्वचनेकृतेऽनन्तरस्यानितेरिति पूर्वणोव णत्वस्य सिद्धत्वात् व्यवहि

किरश्च पंचभ्यः। पंचग्रहणमत्रार्थस्पष्टप्रतिपत्तये। इहैव कृतं। एवं च प्रच्छ धातोरनंतरं गणपाठस्थं कृत्कारणात्प्रयुक्तं शक्यं। अत एव पंचभ्य इत्यनेनैव कृत्कर णं यत्तदपाणिनीयमिति व्याख्येयमित्याहुः॥ केचित्तु भूषा कर्म किरादिसनामिति वार्तिके किरादिशब्दानार्थे कृत्करणमावश्यकमित्याहुः। अत्र इट इति वृत्तो वेति प्राप्ते भाष्यकारेष्टिरियं भौवादिकयोरिति। तथा चाज्झनगमामिति वक्ष्यमाणेन दीर्घ इति भावः। इको झल्। रुदविदेत्यतः सनन्नुवर्तते सना झिन्मो धातुरिका विशेष्यते विशेषणे न च तदंत विधिरित्याह। इगंतादिति। इगंतात्किं। पिपासति। तिष्ठासति। झलिति किं। शिशयिषते। किन्स्यादिति। असंयोगाल्लिट्किदित्यतः किदनुव र्तते इति भावः। एज्विषयत्वाभावादिति किल्वेन गुणाप्राप्तेरित्यर्थः। अत एवेति। यच्चेज्विषयादन्यत्राप्यात्वं भवेत्तदा मीग्रहणं तत्र न कुर्यात् मादाग्रहणेष्वविशे

किरश्च पंचभ्यः। ७। २। ७५॥ कृगृदृङ्धृङ्प्रच्छ एभ्यः सनइट्स्यात्। पिपृच्छिषति। चिकरिषति। जिगरिषति। जिगलिषति। अत्रेयो वृत्तो वेति दीर्घो नेष्टः। दिदरिषते। दिधरिषते। कथमुद्दिधीर्षुरिति। भौवादिकयोर्धृङ्धृञोरिति गृहाण॥ इको झल्। १। २। ९॥ इगन्ताज्झलादिः सन् कित्स्यात्। बुभूषति। दीङ्। दातुमिच्छति दिदीषते। एज्विषयत्वाभावान्मीनातिमिनोतीत्यात्वन्न। अत एव सनि मीमेति सूत्रे माधा तोः पृथग्मीग्रहणं कृतम्। हलन्ताच्च। १। २। १०॥ इक्समीपाद्धलः परो झलादिः सन् कित्स्यात्। गुह्। जुघुक्षति। बिभित्सति। इकः किम्। यि यक्षते। झल्किम्। विवर्द्धिषते। हल्ग्रहणं जातिपरं। तृन्हू। तितृक्षति। तितृंहिषति। अज्झनगमां सनि। ६। ४। १६॥ अजन्तानां हन्तेरजादे शगमेश्च दीर्घः स्याज्झलादौ सनि। सनलिटोर्जेः। जिगीषति। विभाषा चेः। चिकीषति। चिचीषति। जिघांसति॥ ॥ ९९

षादिति भावः। हलन्ताच्च। इगित्यनुवर्तते तद्वपवत्त्वं हलो न संभवतीति समीपवाच्यत्रांत शब्द इत्याशयेन व्याचष्टे। इक्समीपादिति। सौत्रत्वाद्विशेषणस्यांतशब्दस्य परनिपातः। तितृक्षतीति। किल्वे सत्यनिदितामिति नलोपः। अस्य नगमां। गमः सामान्येन ग्रहणे गम्लृगतावित्यस्मात्संजिगंसते इत्यत्रातिप्रसंगः स्यादतः स निचइङ्श्चेति सूत्राभ्यां विहितस्य णिङो गादेशस्य इण्वदिक इति इक आदेशस्य च ग्रहणमित्याशयेनाह। अजादेशगमेरिति। एतच्च सूत्रे ऽजग्रहणात्तु भ्य ते। तथाहि। इह सनीत्येव सूत्रं कर्तव्यं दीर्घश्रुत्योपस्थितेनाचइत्यनेनांगस्य विशेषणादजंतांगस्य दीर्घः। चिचीषति। ततो हनिगम्योरित्यपरं कर्तव्यं।

एकनिष्ठापाठगोचरा वर्तमाने च्छेत्य
धातोः कर्मणः इषिकर्मण इत्यादि। इच्छायामिति श्रुतत्वात् कर्मत्वं कर्तृत्वं च तदपेक्षमेव गृह्यत इति भावः। पठितुमिच्छतीति। एकनिष्ठापाठगोचरा वर्तमाने च्छेत्य
र्थः। षिसनो रिति। तृतीयव्यञ्जनस्येति पक्षे यकारस्य द्वित्वं तृतीयस्यैकाच इति पक्षे तु सन इत्यर्थः। रुदविदा रुदसाहचर्यात् वेत्तेरेव ग्रहणं। रहरुदविद मुषां ग्रह
णं रलो व्युपधादिति विकल्पे प्राप्ते ग्रहेर्नित्यं सेडिति निषेधात्। क्त्वायाम प्राप्ते स्वपि प्रच्छ्योस्तु कित्वेपि सनः कित्वस्याप्राप्तौ वचनं। रुदित्वा विदित्वा मुषित्वा। एते
ष्वगुणाभावः कित्वस्य फलं। गृहीत्वा सुप्त्वा पृष्ट्वा। एतेषु संप्रसारणमपि फलं। सनिग्रहगुहोश्च। ग्रहेर्नित्यं ग्रहेर्विकल्पेन प्राप्ते निषेधोयं। सनः षत्वस्यासिद्धत्वा

धातोः कर्मणः समानकर्तृकादिच्छायां वा। ३। १। ७। इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहित
त्वादिह सन आर्धधातुकत्वम्। सन्यतः। पठितुमिच्छति पिपठिषति। कर्मणः किम्। गमनेनेच्छतीति। करणान्माभूत्। समानकर्तृकात् किं
शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणात् पक्षे वाक्यमपि। लुङ् सनोर्घस्लृ। एकाच उपदेश इति नेट्। सस्यतत्वम्। अत्तुमिच्छति। जिघत्सति।
इको झल्। हलन्ताच्च। ग्रहगुहोश्च। एभ्यः सञ् झलादिः कित् स्यात्। रुदविदमुषग्रहिस्वपिप्रच्छः संश्च। १। २। ८।
ईर्ष्यतेस्तृतीयस्येति यिसनोर्द्वित्वम्। ईर्ष्यियिषति। ईर्ष्यिषिषति। रुदविदमुषग्रहिस्वपिप्रच्छः संश्च। १। २। ८। एभ्यः संश्च क्त्वा च कितौ स्तः।
रुरुदिषति। विविदिषति। मुमुषिषति। सनिग्रहगुहोश्च। ७। २। १२। ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात्। ग्रहिज्येति सम्प्रसारणम्। सनः षत्व
स्यासिद्धत्वाद्भष्भावः। जिघृक्षति। जुघुक्षति॥ ॥ ९

न भष्भाव इति। कत्वस्यासिद्धत्वात् भष्भाव इत्येवमुचितं। केचित्तु ढत्वे सति भष्भाव इ
त्यध्याहारेण योजयंति। तथा च जगृह स इति स्थिते इणः परत्वेन सस्य षत्वे प्राप्ते तस्यासिद्धत्वात् ढत्वे भष्भावः। ततश्च कत्वे कवर्गात् परस्य षत्वमिति विधिक्र
मः। अन्ये तु षत्वे ढत्वे च कृते पश्चात् भष्भावे कर्तव्ये सकारपरत्वाभावात् भष्भावो न स्यात् इत्याशंकायां सनः षत्वस्यासिद्धत्वादिति ग्रंथः प्रवृत्त इति कार्यासि
द्धिपक्षावलंबनेन व्याचक्षते। जिघृक्षतीति। ग्रहेर्जुघुक्षतिसूत्रे चकारात् श्र्युकः किती त्यत्र उक इति अनुवर्त्यते। उगंतात्। बुभूषति। लुलूषति। श्रयतिस्तु ना ॥
नुवर्त्यते। तस्य सनीवंतर्द्धेति विकल्पविधानात्। ॥ ॥ ॥

विभ्रञ्जिषतीति। इटित्वभावे चरमागमविकल्याच्चत्वारि रूपाणि। सुस्वूर्षतीति। अज्झनगमामिति दीर्घे सत्युत्वं। यियविषतीति। द्विर्वचनेचीत्यादेशनिषेधा
त् द्वित्वे कृते अभ्यासस्योवर्णस्येत्वं। उर्णूनूषतीति। इडभावे अज्झनगमामिति दीर्घः। इडपक्षे तु विभाषोर्णोरिति वा ङित्वं। न चेह सन्निति। किंतु न शब्दर

विभ्रञ्जिषति। विभर्जिषति। विभ्रक्षति। विभर्क्षति। दम्भ इच्च। ७।४।५६। दम्भेरच इत्स्यादीच्च सादौ सनि। अभ्यासलोपः। हलन्ताच्चेत्यत्र हल्ग्र
हणाज्ञातिपरमित्युक्तम्। तेन सनः कित्वान्नलोपः। धिप्सति। धीप्सति। दिदम्भिषति। शिश्रीषति। शिश्रयिषति। उदोष्ठ्यपूर्वस्य॥ सु
स्वूर्षति सिस्वरिषति युयूषति यियविषति। उर्णुनूषति। उर्णुनविषति उर्णुनविषति। न च परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारेण श्रूये
तेति वाच्यम्। द्विर्वचनेचीति सूत्रेण द्वित्वे कर्त्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा। न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता
कथमिति वाच्यम्। कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते न त्वननुभवन्। पान चेह सन् द्वित्वमनुभवति। उभूर्षति। विभरिष
ति। ज्ञपिः युगन्तो मित्संज्ञः पकारान्तश्चौरादिकश्च। इडभावे। इको झल् इति कित्वान्न गुणः। अज्झनेति दीर्घः परत्वाण्णिलोपेन वाध्यते।
आप् ज्ञपी तिर्ईत्। जीप्सति। जिज्ञपयिषति। अमितसु। जिज्ञापयिषति। जनसनेत्यात्वं। सिषासति। सिसनिषति। तनिपतिदरिद्रातिभ्यः
सनो वा इड्वाच्यः। तनोतेर्विभाषा। ६।४।१७। अस्योपधाया दीर्घो वा स्याज्झलादौ सनि। तितांसति। तितंसति। तितनिषति। आशङ्कायां सन्व
क्तव्यः॥ श्वा मुमूर्षति। कूलम्पिपतिषति। सनि मीमाघुरभलभशकपतपदामच इस्। ७।४।५४। एषामच इस् स्यात्सादौ सनि। अभ्यास
लोपः। स्कोरिति सलोपः। पित्सति। दिदरिद्रिषति। दिदरिद्रासति। डुमिञ् मीञ् आभ्यां सनन्तात्तदीर्घस्य मिनोतेरपि मी रूपाऽविशेषादिस्।

॥ सं: सितिति:॥

त्यर्थः। कित्वान्न गुण इति। णिच्स्थाने इत्यर्थः। श्वा मुमूर्षतीति। एकस्य विषया मरणशंकेति बोधः। मरणशंका विषयो भवतीत्यन्ये। पूर्ववत्सन इत्यात्म
नेपदमिह न शंक्यं। शदेरित्यादिसूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयमिति वक्ष्यमाणत्वात्। सनि मीमा ॥ ॥ ॥

एवंचाज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थं।अजंतस्य दीर्घो भवति।अजादेशगमेश्चेति।इत्यादावितिकिं।जिगमिषति।गमेरिट् परस्मैपदेषु
तिइट्॥ ॐ॥ सनि च।णौ गमिरबोधन इत्यतोऽबोधन इत्यनुवर्त्तते।प्रतीषिषतीति।तत्र कौण्डिन्यन्यायस्यानित्यत्वात्तन्न रूपस्याभ्यासस्येत्वं।अनित्यत्वे लिंगं तु नि
त्यं कौटिल्ये गताविति त्यत्र नित्यग्रहणमिति वक्ष्यते।संजिगंसते इति।समो गमृच्छिभ्यामिति तङ्।पूर्ववत्सन इति सन्नंतादपि भवति।रलो व्युपधा।न क्त्वा सेडित्य

सनि च।२।४।४७॥ इणो गमिः स्यात्सनि न तु बोधने।जिगमिषति।बोधने प्रतीषिषति। इणवदिकः।अधिजिगमिषति।कर्म्मणि तङ्।
परस्मैपदेष्वित्युक्तेर्नेट्।हलादौ सनीति दीर्घः।जिगांसते।अधिजिगांसते।अजादेशस्येत्युक्तेर्गाङ्कृतेर्न दीर्घः।जिगंसते।सञ्जिगंस
ते।इङश्च।२।४।४८॥ इङो गमिः स्यात्सनि।अधिजिगांसते।रलो व्युपधाद्धलादेः संश्च।१।२।२६॥ उश्च इश्च वी ते उपधे यस्य तस्माद्धला
देरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः।द्युतिस्वाप्योः सम्प्रसारणम्।दिद्युतिषते।दिद्योतिषते।रुरुचिषते।रुरोचिषते।लिलिखिष
ति।लिलेखिषति।रलः किं।दिदेविषति।व्युपधात्किम्।विवर्तिषते।हलादेः किम्।एषिषिषति।इह नित्यमपि द्वित्वं गुणेन बाध्यते।उप
धाकार्य्यं हि द्वित्वात्प्रबलम्।ओर्णोर्न्नोदित्वकरणस्य सामान्यापेक्षज्ञापकत्वात्॥ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्।७।
२।४९॥ इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा स्यात्।इडभावे।हलन्ताच्चेति कित्त्वम्।च्छ्वोः शूडित्यूठ्।यण्।द्वित्वं।दुद्यूषति।दिदेविषति।
सोऽतिरयोरेवेति वक्ष्यमाणनियमान्न षः।सुस्यूषति।सिसेविषति।आप्ज्ञप्यृधामीत्।७।४।५५॥ एषामच ईत्स्यात्सादौ सनि।अत्र लोपोऽ
भ्यासस्य।७।४।५८॥ सनि मीमेत्यारभ्य पद्ङन्तानां त्रयोऽभ्यासस्य लोपः स्यात्।आप्तुमिच्छति।ईप्सति।अर्द्धितुमिच्छति।रपरत्वम्।चर्त्वम्।ईर्त्स
ति।अर्दिधिषति॥ ॥

तः सेडिति वर्त्तते।चकारेण क्त्वायाः संग्रहः।असंयोगादित्यतः किदिति नोपधादित्यतो वेति चानुवर्त्तते न दा
हा।क्त्वा सना वित्यादि।सेड्डि॥ भित्वा छित्वा वभुक्षते॥ आप्ज्ञप्यृ सनि मीमेत्यतः अच इत्यनुवर्त्तते सस्यार्द्धधातुक इत्यतः सीति च तदाह।अच ई
स्यात्सादाविति।सीत्यस्य सनो विशेषणात्सादाविति लाभः।ईप्सतीति।अजादेर्द्वितीयस्येति प्सशब्दस्य द्वित्वं॥ ॥ ॥ ॥

स्मिपूङ्रञ्ज्वशां सनि। इति कात्रवंधग्रहणान् पूञः पुपूषतीत्येवा सनित्यहेतौ णिनिषेधात्। सिस्मयिषते इति। स्मिङ् इत्यङ्गस्य सनो ऽस्यानिट्त्वादिडागमस्याप्राप्तिः। सोति एयोरेवेति नियमान्नषः। अरिरिषतीति। अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः रिसशब्दस्येति। सनरिटि गुणे च कृते अरिस इति स्थिते अजादेर्द्वितीयस्येति रिसश ब्दस्य द्वित्वमित्यर्थः। अंजिजिषतीत्यादि। अंजू व्यक्तिम्रक्षणादौ। अशू व्याप्तौ। अनयोरूदित्वाद्विकल्पे प्राप्ते नित्यमिट्। अशभोजने इति क्र्यादिस्तु नित्यसेडेव। सू

स्मिपूङ्रञ्ज्वशां सनि। ७।२।७४॥ स्मिपूङ् ऋ अञ्जू अशू एभ्यः सनः इट् स्यात्। सिस्मयिषते। पिपविषते। अरिरिषति। इह रिसशब्दस्य द्वित्वे। इस इति सनो ऽवयवः कार्यभागिति कार्यिणो निमित्तत्वायोगाद्विर्वचने चेति न प्रवर्तते। अञ्जिजिषति। अशिशिषते। उभौ साभ्यासस्य॥ प्राणि णिषति। उच्छे सुरका खत्वं। पूर्वत्रासिद्धीयमद्वित्वे इति च ऊरभ्यासहितस्येटो द्वित्वं हलादिः शेषः। उचिच्छिषति। निमित्तापाये नैमित्तिकापाय इति त्वनित्यं। च्छ्वोरिति सनुक् ग्रहणाज्ज्ञापकात्। प्रकृतिमत्यापत्ति वचनाद्वा। णौ च संश्चङोरिति सूत्राभ्यामिङो गाङ् स्वयतेः सम्प्रसार णाच्च वा। अधिजिगापयिषति। अध्यापिपयिषति। शिश्वापयिषति। सुशावयिषति। ह्रस्सम्प्रसारणं। जुहावयिषति। णौ द्वित्वात्प्राग चआदेशो नेत्युक्तत्वादिकारस्य द्वित्वम्। पुस्फारयिषति। चुस्रावयिषति। ओः पुयण्ज्यपरे। पिपावयिषति। यियावयिषति। बिभावयिषति। रिरावयिषति। लिलावयिषति। जिजावयिषति। पुयण्जि किम्। नुनावयिषति। अपरे किम्। बुभूषति। स्रवतीतीत्वं वा। सिस्रावयिषति। सु स्रावयिषतीत्यादि। अपर इत्येव। सुश्रूषते। स्तौतिण्योरेव षण्यभ्यासात्। ८।३।६१॥ अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्। सुष्टू षति। सिषेवयिषति। तुष्टूषति। स्तौतिण्योः किम्। सिसिक्षति। उपसर्गात्तु स्थादिष्वभ्यासे नचेति षत्वम्। परिषिषिक्षति। षणि किम्। तिष्ठासति। सुषुप्सति। अभ्यासादित्युक्तेर्नेह निषेधः। इण। ॥ १९ ऋभ्यामिति। एकं द्वितीये

परं तु पष्ठे तन्नाचेनगा इादेशो ऽपरेणां सम्प्रसारणं। ह्रः संप्रसारणं। इदं च णिजंतेभ्यः व्याप्यात मिहतु स्मारितं। जिजावयिषतीति। जुः सौत्रो धातुर्जवने गत्यां त्वरायां च। सुश्रूषते इति। ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदं। स्तौतिण्योरेवा एवं च सिषाधयिषेति प्रयोगस्य साधुत्वेन तु सिसाधयिषेत्येव इति ज्ञेयं। उपसर्गात्विति॥

मीग्रहणेन ग्रहणं न प्राप्नोति। नतु मिनोतेर्मीरूपस्य लाक्षणिकत्वात् मीग्रहणेन ग्रहणं न प्राप्नोति।
सः सीत्यतः सीत्यनुवर्तते तस्य सनो विशेषणत्वात् सादौ सनीति लाभः। मीरूपाविशेषादिति। ननु मिनोतेर्मीरूपस्य लाक्षणिकत्वात् ... इको झलिति सूत्रे कै
नैष दोषः। यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तयोरिति परिभाषोपस्थानं न तु यत्र प्रयोगाश्रयणं तत्रेति। ... समासशब्दस्याश्रयणाद्द्विगुनामान्यतराल
पठेनोक्तत्वात्। तस्यायमाशयः मीरूपमात्रस्य प्रयोगोत्राश्रितः विभाषादिक् समासे इत्यत्र तु लक्षणाभिनिर्वृत्तस्य समासशब्दस्याश्रयणात् ... निष्कृष्टोऽर्थः॥ ॥मित्सतीति।
इति प्रतिपदोक्त एव समास आश्रीयते इति। लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात् क्वचिदुपतिष्ठते क्वचिन्नोपतिष्ठते इति तु निष्कृष्टोऽर्थः॥ दित्सते। धेट्॥ धित्सति। धान्।

मित्सति। मित्सते। मा माने। मित्सति। माङ् मेङोः। मित्सते। दो दाणोः। दित्सति। देङ्। दित्सते। दाञ्। दित्सति। दित्सते। धेट्॥ धित्सति। धान्। राधो हिंसायां सनी
धित्सति। धित्सते। रिप्सते। लिप्सते। शक्लृ। शिक्षति। शक मर्षण इति दिवादिः। स्वरितेत्। शिक्षति। शिक्षते। पित्सते। राधो हिंसायां सनी
सवाच्यः॥ रित्सति। हिंसायां किम्। आरिरात्सति। मुचोऽकर्मकस्य गुणो वा। ७।४।५७॥ सादौ सनि। अभ्यासलोपः। मोक्षते। मुमुक्षते वत्सः
स्वयमेव। अकर्मकस्य किम्। मुमुक्षति वत्सं कृष्णः। न वृद्भ्यश्चतुर्भ्यः। विवृत्सति। तङि तु विवर्तिषते। ससिचीति वेट्। निनर्तिषति। नि
नृत्सति। इट् सनि वा। ७।२।४९॥ वृङ्वृञ्भ्यामृदन्ताच्च सन इड्वा स्यात्। तितरिषति। तितरीषति। तितीर्षति। विवरिषति। विवरीषति। वु
वूर्षति। वृङ्। वुवूर्षते। विवरिषते। दधूर्षति॥ ॥ ९ हलन्ताच्चेति कित्वान्नोपधागुणः। शिक्षतीति। ननु निरनुबन्धपरिभाषया शकमर्षण इत्य
स्यैव ग्रहणमुचितमिति चेत्। अत्राहुः। इयं हि परिभाषा प्रत्ययग्रहणविषया। अत एव जृव्रश्च्योरित्यत्र जॄजृषोरुभयोर्ग्रहणमिति न्यासकारेणोक्तमतोऽत्रा
पि स्वादिदैवादिकयोर्ग्रहणं युक्तमेवेति। मुचोकर्मकस्य। हलन्ताच्चेति कित्वेन गुणाभावे प्राप्ते विधिरयं। विवृत्सतीति। वृद्भ्यः स्यसनोरिति विकल्पेन परस्मैपदं
... उपदेश इत्यतः उपदेश इत्यनुवर्त्य उपदेशे ऋकारान्तादिति व्याख्यानात्। अन
इट् सनि वा। चिकीर्षतीत्यादाव ज्झनगमामिति दीर्घः कृते नेदं प्रवर्तते। एकाच उपदेश इत्यतः ॥ ॥
एवेट विनेवोदाहरति। दुधूर्षतीति। धृ कौटिल्ये। अज्झनेति दीर्घः। उदोष्ठ्यपूर्वस्येत्युत्वं रपरत्वं हलि चेति दीर्घः॥ ॥

तुवर्थिकः अतइनिठना वितिठन् इति सन्नंतप्रक्रिया॥ धातोरेकाचो॥ क्रियासमभिहार इत्युक्तत्वाद्धातोरेव स्यान्नतु प्रातिपदिकादिति पृच्छति धातोः किमिति। सुवो व पिरित्यादीति। वावच्यते वास्व्यायत इत्यादि रूपसिद्धिः प्रयोजनमित्यर्थः। धातुग्रहणाभावे धिगित्यव्ययादपि स्यात्तस्य क्रियावाचित्वादेकाच्त्वाच्चेति तद्वारणार्थ मपि धातुग्रहणमावश्यकमित्याहुः॥ ॥ यस्य हलः। संघातग्रहणमिति। तेन ईर्ष्यिता अहर्यादित्यादौ यलोपो न। संघातग्रहणे न चार्थवत्ग्रहणपरिभाषोप स्थित्या प्रत्रकाम्येत्यादौ नातिप्रसंगः। वर्णग्रहणे तु उक्तपरिभाषाया अनुपस्थित्या स्यादेवात्र यलोप इति भावः। हलः किं। लोलूयिता। पोपूयिता। दीर्घो कितः। अ कितः किं। यंयम्यते। रंरम्यते। ननु दीर्घश्रुत्योपस्थितेनाचात्र लो दोभ्यासस्येत्यतो। उरत्तमभ्यासस्येत्येतद्विशिष्येत। ततश्चाजंताभ्यासस्य दीर्घो भवतीत्यर्थात्। पापच्यत इत्यादावेव दीर्घो भवेन्नतु यंयम्यते जेगीयते इत्यादौ। तत्र हि परत्वान्नुकि कृतेऽभ्यासस्याजंतत्वाभावाद्दीर्घस्य प्रसक्तिरेव नास्तीति कि

यस्य हलः। यस्येति सङ्घातग्रहणम्। हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके। आदेः परस्य। अतो लोपः। सोसूचाञ्चक्रे। सोसूचि ता। सोसूत्रिता। मोमूत्रिता। दीर्घोऽकितः। ७।४।८३॥ अकितोभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च। अटाट्यते। यङि च। ७।४। ।३०॥ अर्त्तेः संयोगादेश्चर्त्तोर्गुणः स्याद्यङि। यकारपररेफस्य न द्वित्वनिषेधः। अराय्र्यते इति भाष्योदाहरणात्। अरारिता। अशा शिता। उर्णोनूयते। वेभिद्यते। अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः। वेभिदिता॥ ११ मनेनाकित इत्यनेन। न चाभ्यासावयवस्याचो दी र्घ इति वैयधिकरण्यान्वये स्वीकृतेऽकित्ग्रहणं प्रयोजनवदिति वाच्यं। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। येन नाप्राप्तिन्यायेन उ कोदीर्घापवादत्वस्वीकाराच्च। तस्मादकित इति व्यर्थमिति चेत्। अत्राहुः। डोढौकते इत्यत्राभ्यासहृस्वं बाधित्वा परत्वाद्दीर्घोऽकित इति दीर्घे कृते डोढौक्यत इति स्यात्। तस्मात् अभ्यासविकारेषु उत्सर्गान्निधीन् बाधका न बाधंत इति ज्ञापनायाकित इति ग्रहणं कर्त्तव्यमिति। तथा चोक्तज्ञापकनिर्वाहाय दीर्घोऽकि त इत्यत्राभ्यासस्याच इति वैयधिकरण्यपक्षस्याश्रयणात् यंयम्यत इत्यादौ दीर्घान्मागेव नुकि कृतेपि दीर्घः स्यात्तद्वारणार्थमकित इत्यावश्यकमिति दिक्। अटाट्यत इति। इहट्यशब्दस्य द्वित्वं। यङि चार्ह्युणोर्ति संयोगाद्योरित्येतत्सर्वमप्यनुवर्त्तते। यकारपरस्येति। यदि भाष्योदाहरणं सामान्यापेक्षं

रोपकं स्यात्तद्धारणार्थमास्वितमार्स्वदिरत्यादिशिष्यति

मध्येपवाऽस्याप्यात् स्तौतिण्योरिति नियमेनादेशप्रत्यययोरिति षत्वमेव वाध्यते न तु स्थादिष्वभ्यासेन चेत्युत्तरेण विहितमिति भावः। सुषुप्सतीति। रुदविदेति सनः कि
त्वान्न गुणः॥ प्रतीषिषतीति। इह षभूतेसनीणगमावितिधातोः परस्य सस्य षत्वं भवत्येवेत्यर्थः। नियमान्नेहेति। न चात्र नियमादेव निषेधसुनोतेः स्यसनोरिति

प्रतीषिषति। इक्। अधीषिषति॥ सः स्विदिस्वदिसहीनां च ८।३।६२॥ अभ्यासेणः परस्य एयन्तानामेषां सस्य स एव न षः षणि परे। सिस्वेदयि
षति। सिस्वादयिषति सिसाहयिषति। स्थादिष्वेवाभ्यासस्येति नियमान्नेह। अभिसुसूषति। शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः। सरूप
प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते। शैषिकाच्छैषिकः सरूपो न। तेन शालीये भव इति वाक्यमेव न तु छान्ताच्छः। सरूपः किम्। अहिछत्रे भव आ
हिछत्रः। आहिछत्रे भव आहिछत्रीयः। अणान्ताच्छः। तथा मत्वर्थात्सरूपः सन। धनवानस्यास्ति। इह मतुबन्तान्मतुन्न। विरूपस्तु स्यादेव। दण्डिमती शाला। सरूप इत्यत्र पठ्यते। अर्थद्वारा सादृश्यं तु स्वार्थः। तेन इच्छासन्नन्तात्स्वार्थसन्नन्तात्तु स्यादेव। जुगुप्सिषते। मीमां
सिषते॥ इति सन्प्रक्रिया॥ धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। ३।१।२२॥ पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन्द्योत्ये य
ङ् स्यात्। गुणो यङ्लुकोः। ७।४।८२॥ अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। सनाद्यन्ता इति धातुत्वाल्लडादयः। ङिदन्तत्वादात्मनेपदम्।
पुनः पुनरतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः किम्। आई धातुकत्वं यथा स्यात्। तेन नबूबोवचिरित्यादि। एकाचः किम्।
पुनः पुनर्जागर्ति। हलादेः किम्। भृशमीक्षते। भृशं शोभते। रोचते इत्यत्र यङिति भाष्यम्। पौनःपुन्ये तु स्यादेव। शोशुच्यते। शोशुभ्यते। सूचि
सूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः॥ आद्यास्त्रयः स्वरादावदन्ताः। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते॥ अनेकाच्त्वेनाषोपदेशत्वात्पत्वन्न॥

सूत्रं सन्विषये निर्विषयं स्यादिति वाच्यं। अभिसुसूषतेरप्रत्ययः। अभिसुसूरित्यत्र षत्वनिषेधाय तस्यावश्यकत्वात्। एतच्च काशिकायां स्पष्टं। शैषिकेति।
एतच्च श्लोकवार्तिकमिति केचित्। भाष्यमिति बहवः। शेषे भवः शैषिकः। अध्यात्मादित्वाट्ठञ्। मतुवर्थे भवो मतुवर्थीयः। गहादित्वाच्छः। मत्वर्थोऽस्यास्तीति म

यदितु इष्टानुरोधेन श्वेर्धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तर्हि अडभ्यासव्यवायेपीति वचनं स्वीकर्तव्यमेव स्यादिति चेन्न। अत्राहुः। अडभ्यासेत्यादिवा
र्त्तिकं विनापि संचस्कारेत्यादिरूपसिद्धये भाष्यकृता श्वेर्धातुरुपसर्गेण युज्यते इति पक्ष आश्रितः। संचेस्क्रीयते इत्यादिसिद्धिस्तु वार्त्तिकाय त्तैवेति॥ ❀ ॥
सिचो यङि॥ अभ्याससकारस्योपसर्गात्तु नेति। तिनतः परस्य तस्यादिष्वभ्यासेनचेति षत्वे प्राप्ते निषेधोयं। यङि किं। अभिषिषिक्षति। नकवतेर्यङि। इह कोरि
त्येव वाच्ये कवतेरिति शपा निर्देशात् कुङ् शब्दे इति भ्वादिरेव गृह्यते न तु कु शब्दे इति अदादिः कूङ् शब्दे इति तुदादिश्चेत्याशयेनाह। कौतिकुवत्योस्त्विति। न
नु कोरित्युक्तेपि कूङः प्रसंगो नास्ति दीर्घोच्चारणात् लुग्विकरणापरिभाषया च कौतेरपि प्रसंगो नास्तीति चेन्न। अत्राहुः। कोरित्युक्तेतु निरनुबन्धकपरिभाषया अपि

सिचो यङि॥ ८।३।११२॥ सिचः सस्य षो न स्याद्यङि। सेसिच्यते। नकवतेर्यङि॥ ७।४।६३॥ कवतेरभ्यासस्य चुत्वन्न स्याद्यङि। कोकूय
ते। कौतिकुवत्योस्तु। चोकूयते। नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्॥ ७।४।८४॥ एषामभ्यासस्य नीगागमः स्याद्यङ्लुकोः।
अकित इत्युक्तेर्न दीर्घः। नलोपः। वनीवच्यते। सनीस्रस्यते इत्यादि। नुगतोऽनुनासिकान्तस्य॥ ७।४।८५॥ अनुनासिकान्तस्याङ्गस्य
स्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात्। नकारस्यानुस्वारेऽनुस्वारपरसवर्णौ। यंयम्यते। यंयम्यते। तपरत्वसामर्थ्याद् भूतपूर्वदीर्घस्यापि न।
भामन्यते। वाभाम्यते। येविभाषा। जाजायते। जञ्जन्यते। हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः॥ जेघ्नीयते। हिंसायां किं। जङ्घन्यते॥

जागरूकत्वात् उभयोर्ग्रहणं स्यादिति कौतिग्रहणार्थं शपा निर्देशः कर्त्तव्यः कृते च तस्मिन् कुवतिमपि व्यावर्त्तयतीत्यत्र तात्पर्यमिति। कुङ इत्येवानुव
र्त्यतामिति। स्नीध्वस्यते। वनीभ्रस्यते। चनीकस्यते। पनीपत्यते॥ पनीपद्यते। चनीस्कद्यते। एवं वनीवञ्चीति सनीस्रंसीति। दनीध्वंसीतीत्यादि। यङ्लुकः
राहर्तव्यं। घ्नीभाव इति। घ्नीभावे कृते अभ्यासाच्चेति कुत्वेन जेघ्नीयत इति सिध्यति तथापि भक्तिपाला घवाय घ्नीरित्युक्तमिति मनोरमा॥ अन्ये तु से हिंमेर्निरिति र
कारोच्चारणसामर्थ्याद्यथा एत्त्वं न भवति तथा हो भावे हि कृते अभ्यासाच्चेति कुत्वं न स्यादित्याशयेन घ्नीभावः कृत इत्याहुः। अत्र च दिग्व्यादेशेनैव घ्नीभावे
न हित्वेन बाध्यते पुनः प्रसंगविज्ञानादिति केचित्। वस्तुतस्तु यङन्तावयवस्य हन्तेर्याजधानिकस्य हित्वं घ्नीभावस्तु प्रकृतिमात्रस्येति विषयभेदाद् हित्वं निर्बाधमेव॥

नित्यं कौटिल्ये। नित्यंशब्दो अवधारणार्थक इत्याह। कौटिल्ये एवेति। तन्न कौण्डिन्यन्यायेनैव चेत्सिद्धे नित्यग्रहणं तस्यापवादनित्यत्वज्ञापनार्थं तेन मतिबुद्धि
पूजार्थेभ्यश्चेति वर्तमाने क्तेन बाधनात् पूजार्थेभ्यो भूते क्तः सिध्यति ततश्च क्तस्य च वर्तमान इति षष्ठी न प्रवर्तत इति पूजितो यः सुरासुरैरिति न, तृतीया साधुरेव
। इत्यादीति। जंजभ्यते। दंदश्यते। दंदह्यते। बंभज्यते। पसधातुर्दैत्यान्तः सौत्रो गत्यर्थ इति। स्पश बाधनस्पर्शनयोरित्यत्र माधवः। पंपस्यते। काशिकायां तु ता
लव्यान्तः क्वचिद्दृश्यते। एवं जंजपीति। जंजभीति। दंदहीतीत्यादि यङ्लुकि उदाहर्तव्यम्। ग्रो यङि। रूपो रो ल इत्यतो रो ल इति वर्तते तदाह रेफस्य लत्वमिति। चे
क्रीयते इति। परत्वाद्रीङि कृते द्विर्वचनं। संचेस्क्रीयते इति। रीङि द्वित्वे च सुट् न च संस्कृ इत्यस्यामवस्थायां द्वित्वात्परत्वा —— त्सुटि कृते संयोगादित्वे न रीङ् प्रवृत्तेः प्रा

नित्यं कौटिल्ये गतौ।३।१।२३॥ गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे। कुटिलं व्रजति वाव्रज्यते। लुपसदचरजपजभद
हदशशॄभ्यो भावगर्हायाम्।३।१।२४॥ एभ्यो धात्वर्थगर्हायामेव यङ् स्यात्। गर्हितं लुम्पति लोलुप्यते। सासद्यते। चरफलोश्च।७।४।
८७॥ अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः। नुगित्यनेनानुस्वारो लक्ष्यते। स च पदान्तवद्वाच्यः। वा पदान्तस्येति यथा स्यात्। उत्परस्या
ऽतः।७।४।८८॥ चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः। हलि चेति दीर्घः। चञ्चूर्यते। पम्फुल्यते। पंफुल्यते। जपजभदहदशभ
ञ्जपशां च।७।४।८६॥ एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः। गर्हितं जपति जञ्जप्यते इत्यादि। ग्रो यङि।८।२।२०॥ गिरते रेफस्य ल
त्वं स्याद्यङि। गर्हितं गिलति जेगिल्यते। घुमास्थेतीत्वम्। गुणः। देदीयते। पेपीयते। सेषीयते। विभाषाश्व्योः। शोशूयते। शेश्वीयते। यङि च
सास्मर्य्यते। रीङ् ऋतः। चेक्रीयते। सुट् संचेस्क्रीयते ॥

॥ ९९ कृगणः स्कादिति वाच्यम्। अड्भ्यासव्यवायेपीत्यस्यारंभे अड्भ्यासयोः कृतयोरेव सुट्
नन्वत्र ततः प्रागिति सिद्धान्तात् एतेन सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण इति केषांचित्समाधानं परास्तं अभ्यासात्परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदंतत्वं
च नास्तीति गुणप्राप्तेरभावात्। नन्वड्भ्यासव्यवायेपि सुट्कात्पूर्व इति वार्तिकप्रत्याख्यानाय पूर्वं धातुरुपसर्गेण युज्यते इति पक्षं स्वीकृत्य भाष्यकृता संचस्करतुरित्यादा
वन्तरंगत्वात्सुटि संस्कृ इत्यस्यैव द्वित्वाभ्युपगमात् संचेस्क्रीयते इति न सिध्येत्। तत्र हि सुटि कृते रीङं बाधित्वा परत्वात् यङि चेति गुणे संचास्कर्यत इत्यनिष्टरूपप्रसंगात्।

उ०
सि०कौ०
टी०त०
१०३

मानोयङ्लुक्तन्निमित्तकएं वातेन लोलुवः पोपुवइत्यादौ न धातुलोपइतिनिषेधः सिध्यति। यङ इत्यादि। सन्यङोरिति षष्ठी न तु सप्तमी अन्यथा यङोलुकि
लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेर्द्वित्वं न स्यादिति भावः। न चांगाधिकारविहितकार्यस्यैव न लुमतेति निषेधात् द्वित्वमत्र स्यादेवेति सप्तमीपक्षोपि निर्दुष्ट इति वाच्यम्
न लुमतेत्यत्रांगाधिकारो न गृह्यते किं तु अंगमनंगं वा प्रत्यये परतः पूर्वस्य विधीयमानं सर्वमिति सिद्धान्तात्। अन्यथा राजपुरुष इत्यादौ नलोपो न स्यात्। तद्उक्तं रीत्या
प्रत्ययलक्षणाप्रवृत्तौ भत्वेन पदत्वबाधात्। यद्यप्येकाच इति विधीयमानं द्वित्वं श्लिपाशयेत्यादिना निषिध्यते तथापि तस्मादेवाग्रणीयङ्लुकोः रुग्रिकौ च लुकि इ
त्यादभ्यासकार्यविधिभिर्द्वित्वानिषेधस्य ज्ञापनात्। प्रत्ययाप्रत्ययेति। प्रत्यये ङित्वं दृश्यते चरीतेरीयङ् इत्यादिषु अप्रत्यये पि दृश्यते चित्तद्यादिषु। एवं च यङो

यङो वा।७।३।९४॥ यङन्तात्परस्य हलादेः पितः सार्वधातुकस्येड्वा स्यात्। भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न। बोभूतु तेतिक्ते
इति छन्दसि निपातनात्। अत एव यङ्लुग्भाषायामपि सिद्धः। न च यङ्लुक्प्राप्त एव गुणाभावो निपात्यतामिति वाच्यं। प्रकृतिग्रह
णे यङ्लुगन्तस्यापि ग्रहणात्। द्विःप्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्तात्। बोभवीति। बोभोति। बोभूतः। बोभुवति। बोभवाञ्चकार। बो
भविता। अबोभवीत्। अबोभोत्। अबोभूताम्। अबोभवुः। बोभूयात्। बोभूयाताम्। बोभूयासुः। गातिस्थेति सिचो लुक्। यङो वेतीट्पक्षे गुण
म्बाधित्वा नित्यत्वाद्वुक्। अबोभुवीत्। अबोभोत्। अबोभूताम्। अभ्यस्ताश्रयो जुस्। नित्यत्वाद्वुक्। अबोभवुः। अबोभविष्यदित्यादि। पास्प
र्द्धीति। पास्पर्द्धि। पास्पर्द्धः। पास्पर्द्धति। पास्पर्त्सि। हुझल्भ्यो हेर्धिः। पास्पर्द्धि। लङ्। अपास्पर्त्। अपास्पर्द्। सिपि दश्चेति रुत्वपक्षे रोरि। अपास्पाः

लुकि प्रत्ययलक्षणेन यङाश्रितङित्वप्रयुक्तं कार्यमात्मनेपदमत्र न शंक्यमिति भावः। ङितइत्यनुबन्धनिर्देशादिति परिहारस्त्वत्र नोक्तः। शीङादीनामिव भूइत्यादिधातू
नामनुबन्धेनानिर्दिष्टत्वात् यङोङकारस्य प्रत्ययानुबन्धत्वेन समग्रपानानुबन्धत्वात् यङन्तोपि धातुरनुबन्धेनानिर्दिष्ट इति बोध्यम्। सुरुषदिति शोभनाः दृषदो ऽस्मिन्निति बहुव्रीहौ
दृषच्छन्दो जसन्तः। दीर्घो नेति। असिति प्रत्ययो प्रत्ययश्चास्तीति। प्रत्ययस्यासाधारणरूपानाश्रयणात् प्रत्ययलक्षणेनासंतत्वाभावादिति भावः। तेभ्यो पीति। पित्त्वनुदात्तेतः
प्रत्ययलक्षणं विनैव ङित्त्वं तेभ्योपीत्यर्थः। अदादौ पाठादिति तथा च अदिप्रभृतिभ्यः शप इत्यनेन यङ्लुगन्तात्परस्य शपो लुगित्यर्थः॥ ॥ यङो वा। नाभ्य

रीगृदुपधस्य च। ऋदिति किम्। चेकीर्त्यते। णिजभावपक्षे एकाच्त्वाद्यङ्। स्वपिस्यमि। यङि किम्। स्वप्नक्। सेसिम्यते इति। स्यमुशब्देऽत्याजंतसादित्वाभावेनाघोपदे
शत्वान्नषः। वेवीयते इति। हल इति चाऽकृत्सार्वधातुकेति वा दीर्घः। चायः की। यङि परे चायः की स्यात्। दीर्घोच्चारणं यङ्लुगर्थम्। अत एव न लुमतेति निषेधोपि न प्रवर्त्तते इ
ति यङ्लुक्यपि चायः की स्यादेव। चेकीतः। इ घ्राध्मोः। दीर्घोच्चारणं प्राग्वत्। जेघ्रीतः। अस्य च्वावित्याद्यर्थं दीर्घग्रहणमिति तु प्रवचनम्। शाशप्यते इति। परत्वादंत

रीगृदुपधस्य च। ७। ४। ९०॥ ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः। वरीवृत्यते। क्षुभ्नादित्वान्नणः। नशि नृत्यते। जरीगृ
ह्यते। उभयत्र लत्वम्। चलीक्लृप्यते। रीगृत्वत इति वक्तव्यम्॥ वरीवृश्च्यते। परीपृच्छ्यते। स्वपिस्यमिव्येञां यङि। ६। १। १९॥ सम्प्रसारणं
स्यात् यङि। सोषुप्यते। सेसिम्यते। वेवीयते। न वशः। ६। १। २०॥ वावश्यते। चायः की। ६। १। २१॥ चेकीयते॥ ई घ्राध्मोः। ७। ४। ३१। जेघ्रीयते। दे
ध्मीयते। अयङ् यि क्ङिति। ७। ४। २२॥ शीङोऽयङादेशः स्याद्यादौ क्ङिति परे। शाशय्यते। अभ्यासस्य ह्रस्वः। ततो गुणः। डोढौक्यते। तोत्रौक्यते।
इति यङन्तप्रक्रिया॥ यङोऽचि च। २। ४। ७४॥ यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनापि बहुलं लुक् स्यात्। अनैमित्तिकोऽयम्। अन्तरङ्गत्वा
दादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम्। अभ्यासकार्य्यम्। धातुत्वाल्लडादयः। शेषात्कर्त्तरीति परस्मैपदम्। अनुदात्तङित
इति तु न। ङित्त्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत्। अत एव सु
दृषत्प्रासाद इत्यत्राऽत्वसन्तस्येति दीर्घो न। येपि स्य ई शीङादयोऽनुदात्तङितस्तेभ्योपि न। अनुदात्तङित इत्यनुबन्धनिर्देशात्। तत्र च
शितपाशोपत्तिनिषेधात्। अत एव श्यन्नादयो न। गणेन निर्देशात्। किन्तु शप्येव। चर्करीतञ्चेत्यदादौ पाठाच्छपो लुक्॥ ॥ ॥

रंगत्वाच्चायङादेशे कृते द्वित्वम् इति यङन्तप्रक्रियायां यङोऽचि च। यङसाहचर्यादचीति प्रत्ययो गृह्यते न तु प्रत्याहारः। एयस्त्रियार्थेत्यतोऽनुगनुवर्त्तते। तदाह अच्प्रत्य
ये लुक् स्यादिति। चकारेण बहुलं छन्दसीत्यतो बहुलमित्यनुकृष्यत इत्याह। बहुलं लुक् स्यादिति। येनु छन्दसीत्यनुकर्षन्ति तेषामपि क्वचिद्भाषायां यङ्लुग्भव
त्येव। भूसुवोरिति गुणनिषेधे सिद्धे बोभूत्विति छन्दसि निपातनात् ज्ञापकात्। एतच्च मूले एव स्फुटी भविष्यति। अनैमित्तिकोऽयमिति। अच्प्रत्यये विधीय

उ॰
सि॰कौ॰
टी॰त॰
९०४

जागाद्धीति। गाधृ प्रतिष्ठादौ ङ्द्पक्षे जागाधीति। जाघातीति। एकाचइति भष्भावः धस्य चर्त्वे। लोटि। जागाधि जगाद्धि जागाद्धि। जागाधत्। लङि। अजागाधी

जागाद्धि। जाघात्सि। अजाघात्। सिपि। रुत्वपक्षे। अजाघाः। नाथृ। नानात्ति। नानात्तः। दधाराद्द्धि। दाद्धः। दाधत्सि। अदाधत्। अदाद्धः। अदाधः
अदाधत्। लुङि। अदादाधीत्। अदादधीत्। चोस्कुन्दीति। चोस्कुन्ति। अचोस्कुन्। अचोस्कुन्ताम्। अचोस्कुन्दुः। मोमुदीति। मोमोत्ति। मोमोद्धान्व
कार मोमोद्धि। अमोमुदीत्। अमोमोत्। अमोमुत्ताम्। अमोमुदुः। अमोमुदीः। अमोमोः। अमोमोत्। लुङि। गुणः। अमोमोदीत्। चोकूर्त्ति। चोकू
र्दीति। लङ् तिप् अचोकूर्त्त्। अचोकूर्दीत्। सिप्पक्षे। अचोकूः। अचोखूः। अजोगूः। वनीवञ्चीति। वनीवङ्क्ति। वनीवक्तः। वनीवञ्चति। अ
वनीवञ्चीत्। अवनीवन्। जङ्घमीति। जङ्घन्ति। अजदात्तोपदेशेत्यनुनासिकलोपः। जङ्घतः। जङ्घमति। म्वोश्च। जङ्घन्मि। जङ्घन्वः। एकाज्
ग्रहणोक्तत्वान्नेण्निषेधः। जङ्घमिता। अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक्। जङ्घहि मोनो धातोः। अजङ्घन्। अनुवन्धनि
र्देशान्न च्लेरङ्। ह्म्यन्तेति न वृद्धिः। अजङ्घमीत्। अजङ्घमिष्टाम्। हन्तेर्यङ्लुक्। अभ्यासाच्चेति कुत्वं। पदाघपिहोहन्तेरित्यतोहन्तेरित्यनुव
र्त्यविहितं। तथापि यङ्लुकि भवत्येवेति न्यासकारः। श्तिपा शपेति निषेधस्त्वनित्यः। गुणोयङ्लुकोरिति सामान्यापेक्षज्ञापकादितिभावः
। जङ्घनीति। जङ्घन्ति। जङ्घतः। जघ्नति। जङ्घनिता। श्तिपा निर्देशाज्जादेशो न। जङ्घहि। अजङ्घनीत्। अजङ्घन्। जङ्घन्यात्। आशिषि तु व
ध्यात्। अवधीत्। अवधिष्टामित्यादि। वधादेशस्य द्वित्वं न भवति। स्थानिवत्त्वेनानभ्यासस्येति निषेधात्। तद्धि समानाधिकरणान्यातो विशे
षणाम्। वहुव्रीहिवलात्। आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम्। आजङ्घ्नते इत्यादि। उत्परस्येति तपरत्वान्न गुणः। हलि चेति दीर्घस्तु सादे
वा तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात्। चञ्चुरीति। चञ्चूर्त्ति। चञ्चूर्तः। चञ्चुरति। अचञ्चुरीत्। अचञ्चुः। चङ्क्नीति। चङ्क्ति। जनसनेत्या॥

त। अजाघात्। अजागाद्धाम्। अजागाधुः। लुङि। अजागाधीत्। अजागाधिष्टाम्। नाथना धपा च्चाये नानात्तीति। ईट्पक्षे नानाथीति। दधधारणे। ईट्पक्षे दाधीति

॥

सस्थानीतिसूत्रात्पितिसार्वधातुकइतिउतोवृद्धिरित्यतोहलीतिचानुवर्त्ततेभुवईडित्यतः ईड्ग्रातदेतदाह। यङः नादित्यादि। यङोलुकापिप्रत्ययलक्षणेनात्र
यङंतत्वम्। एतेनयङंताद्धलादिपित्सार्वधातुकंनसंभवतीतियङ्शब्देनयङ्लुगंतंलक्ष्यतइतिव्याख्यानंपरास्तम्। उक्तरीत्यायङंततत्वानपायात्। किंचायङंताद्धलादिपिन्नसंभवती
तियङ्शब्देनयङ्लुगंतेलक्षितेपिसन्यङोरितिद्वित्वस्ययङंतेचरितार्थतयायङ्लुगंतलक्षणायांबीजाभावाच्च। लुकि द्वित्वाभावप्रसंगादितिदिक्। कुंदसिनिपातना
दितिगुणनिषेधेसिद्धेनिपातनमिदंकुंदस्येवगुणनिषेधोनान्यत्रेतिनियमार्थमित्यर्थः। बोभूत्वितिसमुदायस्यातिरिक्तत्वाद्भूसुवोरितिगुणनिषेधोनप्राप्नोतीतिनि
पातनमिदंननियमार्थमित्याशंकायामाह। नचेति। द्विःप्रयोगइतितथाचप्रकृति ग्रहणेयङ्लुगंतस्यापिग्रहणमित्येतन्न्यायसिद्धंनापूर्ववचनमितिभावः। बो
भुवतीति। अरभ्यस्तादित्यन्। अबोभूवीदिति। केचिदिहभुवोवुगितिसूत्रेओः सुपीत्यतोओरित्यनुवर्त्तते। तथाचउवर्णांतस्यभुवोवुगित्यर्थाद्गुणेकृतेउकः प्राप्ति
र्नास्तीत्यनित्योवुक्। सचपराभ्यांगुणवृद्धिभ्यांबाध्यते। तेनाबोभवीदितिरूपमाहुः। तच्चिंत्यम्। भुवोवुकोनित्यत्वादितिभाष्यग्रंथविरोधात्। तस्माद्वुकोनित्यत्व
माश्रित्यइर्धिभवतिभ्यांचेतिसूत्रंप्रत्याख्यातवतोभाष्यकृतःओरित्यनुवर्त्तनमसंमतमेव। आतइतिनियमाज्जुसभावमाशंक्याह। अभ्यस्ताश्रयइति। अयंभावः
।सिजभ्यस्तेतिसूत्रेणसिचःपरत्वमाश्रित्ययोजुस्प्राप्तस्तस्यैवायंनियमोनत्वभ्यस्ताश्रयस्यजुसइति। जुसिचेतिगुणमाशंक्याह। नित्यत्वाद्वुगिति। अबोभवुरिति। न
चात्रपरत्वादरभ्यस्तादितिअरादेशःस्यादितिवाच्यम्। अभ्यस्ताश्रयजुसोऽरादेशापवादत्वात्। पास्पर्धीतीतिस्पर्धसंघर्षेदीर्घोऽकितइत्यभ्यासस्यदीर्घः। यङोवेतिई
ड्विकल्पः। इडभावपक्षेझषस्तथोरितिधत्वंझरोझरिसवर्णइतिवाधलोपः। लिटिपास्पर्धांचकार। लुटिपास्पर्धिता। लृटिपास्पर्धिष्यति। लोटिपास्पर्धीतुपास्पर्द्धपास्पर्धात्। पा
स्पर्धाम्। पास्पर्धतुपास्पर्धीतिहेर्धित्वेवाधिलोपः। लिङि। इडागमपक्षेअपास्पर्धीत्। रुत्वपक्षेइति। पक्षांतरेतुअपास्पर्त्। अपास ईत्। लिङि। पास्पर्ध्यात्। पास्पर्ध्यात्ताम्। पा
स्पर्ध्यास्ताम्। लुङि। अस्तिसिचोपृक्तइतिनित्यमिट्। इटईटीतिसलोपः। अपास्पर्धीत्। अपास्पर्धिष्टाम्। अपास्पर्धिषुः। लृङि। अपास्पर्धिष्यत्॥ ॥ ॥

॥

पाशपेतिसर्वेषामपिनिषेधानांक्ङिच्चङ्लुक्यप्रवृत्तिंज्ञापयतीति।तथाचप्रयुज्यते।राजावृन्तेजंघनदित्यादि।द्वित्वंतुनभवतीति।वध्यात् अवधीदित्यत्रकृत
द्विर्वचनस्यहनोवधलिङि।लुङि चेतिवधादेशात्तुनद्वित्वंनभवतीत्यर्थः।तत्रहेतुमाहास्यानिवत्त्वेनेति।आङ् पूर्वादिति।प्रकृतिग्रहणेयङ्लुगन्तस्यापिग्रहणा
दितिभावः।चंचूर्तीति।चरतिगतौभक्षणेच।चरफलोश्चेत्यभ्यासस्यनुक्।उत्परस्यातइत्युत्त्वं।हलिचेतिदीर्घः।अचंचूरित्यत्रतुपदान्तविषयत्वाद्धोरुपधाया इति
दीर्घः।चंखनीति।खनुअवदारणे।चंखात इति।यत्तुकेचिद्धातुग्रहणेनकृतंकार्यंयङ्लुकिनेतिजनसनेत्यात्वाभावेऽनुनासिकस्यक्विझलोरितिदीर्घोपिन
भवतिक्विसाहचर्याज्झलादिःकृदेवतत्रगृह्यतेनतुतिङितिअभ्युपेत्यचंखन्तइतिरूपमाहुस्तदयुक्तम्।धातुग्रहणेनकृतस्ययङ्लुक्यप्रवृत्तौमानाभावात्।स
त्यपिप्रमाणेआत्त्वंवेतिविकल्पोक्तयाचंखातइतिरूपंकेनवार्यंताम्।यच्चोक्तमनुनासिकस्येतिसूत्रेक्विसाहचर्यात्।झलादिरपिकृदेवगृह्यतइतितदप्ययु
क्तमेव।यदिहिकृदेवक्विस्यात्तदासाहचर्योक्तिःसंगच्छेत।किंतुकृङ्क्तिनोपिअस्त्येवाचारक्विप्।अतएवराजानतिचर्मीणतिइत्यादौमाधवादिभिःक्विनिमित्तोदी
र्घउक्तः।चंखाहीति।हेरपित्त्वेनङित्वाज्जनसनेत्यात्वम्।अचंखानीदिति।अतोहलादेरितिवावृद्धिः।जाहेतीत्यादिहाङ्हाकोस्तुल्यानिरूपाणि।ङित्त्वप्रयुक्तस्यात्म
नेपदस्ययङ्लुक्यप्रवृत्तेः।भृञामिदितिहाङ इत्वस्यतुनिमित्ताभ्यासस्यैवविहितत्वाच्चानचअकितइतिनिषेधेनहाकोभ्यासस्यदीर्घोदुर्लभइतिकथमुभयोस्तु
ल्यरूपतेतिशंक्यम्।अकितइत्यत्रहिनविद्यतेकिद्यस्याभ्यासस्येतिबहुव्रीहिराश्रीयते।तेननद्विःप्रयोगोद्विर्वचनंषाष्ठमित्यभ्युपगमाज्जातेःकित्त्वेअभ्यासस्यकि
त्त्वेपिवनीवंचीत्यादाविवकित्त्वाभावान्नदोषः।किंचद्वित्वाभावेकेवलस्यार्थवत्त्वेपिद्वित्वेसतिसमुदायएवार्थवानितिहिसर्वसंमतम्।तथाकित्त्वमपिसमुदायस्यै
वाऽस्तुनत्वप्रत्त्यवयवमितिनास्त्येवदीर्घप्रतिबंधः।जाहीयादिति।ईहल्यघोरितीत्त्वम्।उकाउप्रइति।सर्वविधिभ्योलुग्विधेर्बलीयस्त्वादकृत्वव्यूहपरिभाषयाचलुकः
पूर्वंनशंक्यमेवेतिभावः।उत्त्वंनेत्ति।फलितार्थकथनमिदंस्वपिस्यमीत्यादिनाविधीयमानंयत्संप्रसारणंतन्नेत्यर्थः।असास्वापीदिति।अतोहलादेरितिविकल्पेनवृद्धिः॥

लुङि अतो हलादेरिति वा वृद्धिः चोस्कुन्नीति। स्कुदि आप्रवणे। इदित इति नुम्। ईड्भावेक्रोशम् रिसवर्णे इति वा लोपः। लङि। ई इ पक्षे अचोस्कुंदीत्। लुङि तु अस्तिसिच इति
नित्यमी इ। अचोस्कुंदीत्। अचोस्कुंदिष्टाम्। मोमुदीनीति मुद हर्षे। नाभ्यस्तस्याचीति लघूपधगुणनिषेधः। मोमोदितेति। नचात्र न धातुलोपइति गुण निषेधः शंक्यः व
हलयहणेन सामस्यङ्लुकोऽनैमित्तिकत्वात्। लुङि गुण इति सिच्निमित्तकोऽयं गुणस्तेन नाभ्यस्तस्याचीति निषेधो न शंकनीय इति भावः चोकूर्तीति। कुर्द खुर्द गुर्द
क्रीडायाम्। लङि तिपि ईट्पक्षे अचोकूर्दीत्। अचोखूर्दीत्। अजोगूर्दीत्। पक्षे अचोकूरिति। दश्चेतिरुत्वपक्षे इत्यर्थः। वनीवंचीतीति। वंचु गतौ। नित्यं कौटिल्ये गताविति
यङ्। नीग्वंचीत्यभ्यासस्य नीगागमः। यङोलुकाश्रयत्वान्न तदाश्रितो नलोपः। वनीवतीति तिसोडि त्वादिहस्यादेवानिदितामिति नलोपः। लोटि वनीवंचीत्।

चञ्चूर्यात्। चञ्चून्यात्। अचञ्चूर्तः। गम्हनेत्युपधालोपः। चंचन्नतीति। चञ्चूर्हि। चञ्चूनानि। अचंचनीत्। अचञ्चून्। अचञ्चूर्ताम्। अचञ्चुः यिविभाषा। चञ्चूर्यात्। चञ्चून्यात्। अ
चञ्चूनीत्। अचञ्चूर्नीत्। उतो वृद्धिरित्यत्र नाभ्यस्तस्येत्यनुवृत्तेरुतो वृद्धिर्न। योयोति। योयवीति। अयोयवीत्। अयोयोत्। योयुयात्। आशिषि दीर्घः।
योयूयात्। अयोयावीत्। नोनवीति। नोनोति। जाहेति। जाहाति। ईहल्यघोः। जाहीतः। इहजहातेश्चआचहो लोपो यि घुमास्थाएल्लिङीत्येते न स्त्रापि
न भवन्ति। श्तिपा निर्देशात्। जाहाति। जाहासि। जाहेषि। जाहीथः। जाहीथ। जाहीहि। अजाहेत्। अजाहात्। अजाहीताम्। अजाहुः। जाहीयात्।
आशिषि। जाहायात्। अजाहासीत्। अजाहासिष्टाम्। अजाहिष्यत्। लुका लुप्ते प्रत्ययलक्षणाभावात्स्वपिस्यमीत्युत्वं न। रुदादिभ्य इति गणनिर्दिष्ट
सूत्वादिष्टेन। सास्वपीति। सास्वप्ति। सास्वप्तः। सास्वपति। असास्वपीत्। असास्वप्। सास्वप्यात्। आशिषि तु वचिस्वपीत्युत्वम्। सासुप्यात्। असास्वपीत्।
असास्वपीत् ॥

वनीवञ्च्यात्। वनीवञ्च्यात्। वनीवञ्चीत्। वनीवच्यात्। वनीवंचानि। जंगमीति। जगतोजनासिकांतस्येति नकारः जंगमतीति आगमहते
वनीवङ्कुः। वनीवङ्कात्। वनीवङ्का। वनीवङ्कतु। वनीवङ्ग्धि। वनीवंचानि। जंगमीति। जगतो जनासिकांतस्येति। जंगन्तीति। गमहने
त्युपधालोपः। अजंगन्निति। ईडुपक्षे त्व जंगमीत्। अजंगताम्। अजंगमुः। अजंगमीः। अजंगतम्। अजंगत। अजंगमम्। अजंगन्व। अजंगन्म। सामान्यापेक्षेति। अ
यंभावः। एकाचो द्वे इत्यनेकाच्ग्रहणात् चञ्चूः किं द्विर्वचनं न कृतमिति मा भोत्। तथा च गुणो यङ्लुकोरित्यभ्यासस्य विधीयमानो गुणो द्विर्वचनं विना निवेशाभावश्च

अर्तेरिति। भौवादिकजौहोत्यादिकयोर्ग्रहणम्। उरदत्वमिति। के विजुगणोपङ्क्त्वकोरित्यभ्यासस्य ग्रहणमाहुः फले तु न विशेषः। रिङ्गरीको स्विति। एवं च अरियर्तीति रूपमुभयो
स्तुल्यमिति भावः। आरतीति। रोरीति लोपे ढ्रलोपइति दीर्घः। दीर्घोऽकित इति दीर्घस्तु न भवति। कित्त्वात्। अरिप्रतीति। परत्वात्पूर्वं यङ्। ततो यण्। रिश्रीको स्तुल्यमिदं मध्यमोत्तम
योस्तु अरर्षि अरियर्षि। अररीषि। अरियरीषि। अर्कृथः। अरिष्टथः। अरर्मि अरियर्मि अररीमि अरियरीमि। अर्कृवः। अरिष्टवः। लिटि अरराञ्चकार। रिश्रीकोस्तु। अरियराञ्चकार। लुटि। अरारितारि,
कोस्तु अरियरिता। अररिष्यति। अरियरिष्यति। अरर्तु। अरियर्तु। अर्कृतात्। अरिष्टतात्। अर्कृताम्। अरिष्टताम्। अरिप्रतु। अर्कृहि। अरिष्टहि। अरराणि। अरियराणि। अररावा। अरियराव ल
ङि। आरः। आरियः। आररीत्। आरियरीत्। आर्कृताम्। आरिष्टताम्। आरुरुः। आरियरुः। आरियः। आररीः। आरियरीः। आर्कृतम्। आरिष्टतम्। आर्कृत। आरिष्टत। आररम्। आ
परम्। आर्कृव। आरिप्रव। विधिलिङि अर्कृयात्। अरिष्टयात्। अर्कृयाताम्। अरिष्टयाताम्। अर्कृयुः। अरिष्टयुः। लिङीति। आशीर्लिङीत्यर्थः। अरिप्रियादिति। रिश्रीकोः अरि
पृ इति स्थिते लिङि रिङ्। बहिरङ्गत्वेन रिङोऽसिद्धत्वाद्यलोपो न भवत्यचः परस्मिन्निति स्थानिवत्त्वाच्च। न च नपरान्ते इति निषेधः शङ्क्यः। स्वरदीर्घयलोपेषु लोपाजादेश ए
व न स्थानिवदित्युक्तत्वात्। न च अकृतव्यूहपरिभाषया यङ् नेति शङ्क्यम्। रिङः स्थानिवत्त्वेन निमित्तविनाशाभावात्। उक्तपरिभाषाया अप्रवृत्तेः। अत एव अरिप्रतीत्यपि सि
द्धम्। तत्रापि यणः स्थानिवत्त्वेन निमित्तविनाशाभावात् तत्परिभाषाऽप्रवृत्तेरियङो निर्बाधत्वात्। क्वचित्तु मूलपुस्तकेषु परत्वान्नित्यत्वाच्च पूर्वं रिङि कृते इयङोऽप्रवृत्तिरित्या
ग्रहेण अरिरियात् आरीरियादिति पठ्यते तदापाततः। अरिप्रतीति रूपासिद्ध्या पूर्वोत्तरग्रन्थयोर्विरोधापत्तेः। लुङि। आरारीत्। आरियारीत्। लृङि। आररिष्यत् आरिपरिष्यत्।
जर्गृहीतीति। नाभ्यस्तस्याचीति गुणनिषेधः। मध्यमोत्तमयोस्तु जर्गृहीषि २ जर्घर्षि २ जर्गृढः २ जर्गृढ २ जर्गृहीमि २ जर्गर्हिम २ जर्गृह्वः २ जर्गृह्मः २ जर्गृहाञ्चकार। जर्गर्हिता।
जरीगर्हिता। रुहात्रवं बधनिर्देशाद्दूदित्त्वस्य णङ्कित्यौ न। जर्गृहीतु जर्गृढु। जर्गृढात्। जर्गृहाणि २ जर्गृढि २ मिपि। जर्गृहाणि २ लुङि। अजर्गृहीत् २ ईडभावे एकाचइति भष्
भावः। अजर्घट् २ यद्यपि रुहयत्नेकाच्ग्रहणं चेति निषेधाद्भष्भावो दुर्लभस्तथापि गुणोयङ्लुकोरित्यनेन नश्तिया शपेत्यादिनिषेधस्यानित्यत्वज्ञापनान्भष्भावोऽत्र
प्रवर्तत इत्याहुः। अजर्गृढाम् अजगृहुः। २। अजर्गृहीः। अजर्घट् २ अजर्गृढ २ अजर्गृढ २ अजर्गृहम् २ अजर्गृह्व २ जर्गृह्यात् २ अजर्गर्हीत्। अजर्गर्हिष्टाम् २ अजर्गर्हिष्यत्
जाग्रहीतीति। ग्रह उपादाने। यङो लुक्। लुमतात्तन्निमित्तग्रहिज्येति संप्रसारणमिह नेति भावः। जार्गृढ इति। उरत्। दीर्घोऽकितः। तत्रैकाच इति अनुवर्तत इत्येकाचोद्र इति अ

रुग्रिकौ च चकारेणारीगृदुपधस्येत्यतो रीगनुकृष्यते रुक उकार उच्चारणार्थः ऋतश्च ऋतोऽनुवर्तमानमंगं विशेष्यते ऋदन्तस्यांगस्य योऽभ्यासस्तस्येत्यर्थः ऋदन्ताद्धातो
रिति पाठस्तु फलितार्थकथनपरतया नेयः लोटि वर्वर्तीतु २ वर्वृतु वर्वृतात् वर्वृतां वर्वृताम् २ वर्वृतत २ वर्वृद्धि २ अडिति एषादिद्युतादीत्यनेन चर्करीतीति डुकृञ् करणे च

रुग्रिकौ च लुकि। ७।४।९१॥ ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि। ऋतश्च ७।४।९२॥ ऋदन्तधातोरपि तथा। व
र्वृतीति। वरिवृतीति। वरीवृतीति। वर्वर्ति। वरिवर्ति। वरीवर्ति। वर्वृतः ३। वर्वृतति ३। वर्वर्तामास। वर्वर्तिता ३। गणनिर्दिष्टत्वान्न वृद्भ्यः स्यसनोः इत्य
त्र न। वर्वर्तिष्यति ३। अवर्वृतीत् ३। अवर्वर्त् ३। सिपि दश्चेति रुत्वपक्षे रोरि। अवर्वाः ३। गणनिर्दिष्टत्वादङ्। अवर्वर्तीत् ३। चर्करीति ३।
चर्कर्ति। चरिकर्ति। चरीकर्ति। चर्कृतः ३। चर्क्रति ३। चर्करांचकार ३। चर्करिता ३। अचर्करीत् ३। अचर्कः ३। चर्क्रियात् ३। आशिषि रिङ्। च
र्क्रियात् ३। अचर्कारीत् ३। ऋतश्चेति तपरत्वान्नेह। कॄ विक्षेपे। चाकर्ति। तातर्ति। तातीर्तः। तातिरति। तातीर्हि। ताततरणि। अतातरीत्। अतातः।
अतातीर्ताम्। अतातरुः। अतातारीत्। अतातारिष्टामित्यादि। अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्त्वं रपरत्वं हलादिः शेषः। रुक्। रियौ कौ तु
अभ्यासस्यासवर्णे इतीयङ्। अरर्ति। अरिअर्ति। अरिआर्ति। अररीति। अरियर्ति। अरृतः। अरियृतः। जिअत्। पण् रुको रो रीति लोपः। न च तस्मि
न्कर्तव्ये परणत्वस्यासिद्धत्वम् पूर्वत्रासिद्धे तन्निषेधात्। आरर्ति। अरिप्रति। लिङि श्तिपा निर्देशाद्गुणो नेति गुणो न। रिङ्। रलोपः दीर्घः।
आरियात्। अरिरियात्। अरीरियात्। गृह ग्रहणे। जर्गृहीति ३। जर्गाढि ३। जर्गृढः ३। जर्गृहति ३। अजर्घट् ३ गृहेस्तु जाग्रहीति जाग्रा
ढि तत्सादौ ङिन्निमित्तं सम्प्रसारणम्। तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः। जागृढः। जागृहति। जाग्रहीषि। जाग्रक्षि। लुटि जाग्रहिता।
ग्रहोऽलिटीति दीर्घस्तु न। तत्रैकाच इत्यनुवृत्तेः॥ ॥ ९९ कॄयादिति। सार्वधातुकत्वाद् ऋत्त्वाभावे तिन दीर्घः। लुङि। सिचि वृद्धिरिति वृद्धिः। अ
चर्कारीत् २ अचर्कारिष्टाम् २ अचर्कारिषुः २ अचर्कारीः २ चाकर्तीति। ऋदुपधे चाकरीति। लोटि। चाकरीतु। चाकर्तु। चाकीर्तात्। चाकीर्ता। चाकिरतु। चाकी
र्हि लङि। अचाकरीत्। अचाकः। अचाकीर्ताम्। अचाकरुः। लिङि। चाकीर्यात्। आशिषि तु चाकीर्यास्ताम्। लुङि। अचाकारीत्। अचाकारिष्टाम् एवं ताताररीतीत्यादि

॥

विधौ स्थानिवद्भाव इति ग्रहेर्विहितस्य यङ्‌ इत्तस्य दीर्घ इति च प्रागुक्तसमाधानमुपायस्योपायांतरं दूषकत्वादि तिन्यायेन यङंतांशे उपायांतरपरतया नेयम्। न च ग्रहि
तियथाश्रुतरूपाश्रयणे गृहीत इत्यादावि टो दीर्घो न स्यादिति वाच्यम्। अंगसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव सत्त्वात्। ग्राहितमित्यादौ तु नैवं। एकाच इति स
माधानं तु णिज्भिन्नविषयकमेव निष्ठायां सेटीति णिलोपे ग्राहितमित्यादावेकाच्त्वानपायात्। तदित्थम्। यङ्‌ लुगंतात् णिजंताच्च यङंताच्च ग्रहेरिटः द्विधा विधा च तु दी
र्घप्राप्तिः समाहिता। अस्यार्थः। यङ्‌लुगंतात् दीर्घप्राप्तेः समाधानद्वयम्। ग्रहेरंगादिति व्याख्यानमेकाच इत्यनुवृत्तिश्चेति। णिजंतात्तु ग्रहिस्वरूपाभावः विहितविशे
षणं स्थानिवद्भावश्चेति समाधानत्रयम्। यङंतात् समाधानचतुष्टयं एकाच इत्यनुवृत्तिः पूर्वोक्तसमाधानत्रयं चेति। अजर्घा इति गृधु अभिकांक्षायाम्। इह अपदांतस्या
पि रेफस्य रो रीति लोपो भवत्येव तत्र मंडूकप्लुत्या पदस्येत्यनुवर्त्तनात्। पाप्रष्टीति। प्रच्छ ज्ञीप्सायाम्। व्रश्चेति षः। पाप्रच्छिता पाप्रच्छिष्यति। पाप्रष्टु पाप्रष्टात् पाप्रष्टा
म्। पाप्रच्छतु पाप्रड्ढि। पाप्रच्छानि। अपाप्रच्छीत्। अपाप्रट्। अपाप्रष्टां। अपाप्रच्छुः। अपाप्रच्छीः अपाप्रट् अपाप्रष्टं अपाप्रष्ट अपाप्रच्छम्। अपाप्रच्छ्व अपाप्रच्छ्म। भाष्ये ध्व
नितमिति। च्छ्वोः शूडिति सूत्रे भाष्ये किद्ग्रहणमनुवर्तते न वेति विकल्प्य कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तमेतावानेव विशेषः। अनुवर्त्तमाने किद्ग्रहणे च्छ्वोः
षत्वे वक्तव्यमिति। अननुवर्त्तमाने न च्छ्वः शत्वे कृते शांतत्वाद्वषो भविष्यतीति प्रष्टा प्रष्टुमित्यादिसिद्धये व्रश्चादिसूत्रे च्छग्रहणं न कर्तव्यमिति भावः। एवं हि व
दता भाष्यकृता ऊठ् भाविभ्यो यङ्‌लुक् नास्तीत्युक्तप्रायम्। अन्यथा दिवेर्यङ्‌लुकि ईडभावपक्षे देद्येति देदेषि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात्। तत्र किद्ग्रहण
नानुवृत्ता वूठः प्रवृत्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्। ततश्चैतावानेवेत्येवकारो विरुध्येत। स्त्रि विमर्द्यो स्वितीति। स्त्रि गति शोषणयोः। मव बंधने। जाहामीति।
इट्पक्षे जाहमीमि। लोटि। जाहमीतु। जाहत्तु। जाहत्तात्। जाहयानि। जाहयाव। जाहयाम। लङि अजाहयीत्। अजाहत्। अजाहताम्। अजाहयुः अजाहयीः। अजा
हः अजाहतम्। अजाहत। अजाहयम् अजाहाव। अजाहाम। जाहय्यात्। ह्म्यंतक्षणेति वृद्धिनिषेधः अजाहयीत्। अजाहयिष्टाम्। अजाहयिष्यत् ॥ ॥

॥

भूदिति इग्लक्षणो गुणवृद्धी न स्त इति व्याख्यातं तथापि इह प्रयोजनाभावादिक्लक्षण इति नोक्तं धात्विति किम् लूञ् लविता इत्यत्र पविता नन्वत्रापि वंधलोपनिमि
त्तमार्द्धधातुकं न भवतीति व्यंगविकलमिदमिति तन्न अत्राहुः धातुग्रहणे सति धातोर्लोपो यस्मिन्न् इति बहुव्रीहिलाभान् लोपनिमित्ते इत्यर्थो लभ्यते तेन रभावे तु लोपे सत्या
र्द्धधातुक इत्यर्थो लवितेत्यादौ दोषः स्यादेवेति॥ यदा तु लोपयतीति लोपः तस्मिंल्लोपनिमित्ते आर्द्धधातुके इको गुणवृद्धी न स्त इति व्याख्यायते तदा धातुग्रहणस्य क्रमति
पन्न्यर्थम् उत्सृष्टानुबंधस्य धातुत्वमिति केयटादिमते तु धातुलोप इत्यत्र बहुव्रीह्याश्रयणं विनापि धात्ववयवलोपे सत्यार्द्धधातुक इति व्याख्यायां लवितेत्यादौ नातिप्रसंग इति बो
ध्यम् आर्द्धधातुके किम् त्रिधा बद्धो वृषभो रोरवीति रु शब्द इत्यस्माद्धातो रेकाच इति यङ् तस्य लुक् यङंतस्य धातुत्वे यङो धात्ववयवत्वात्तु मत्वा चात्रापि निषेधः स्यात् नन्वा
भूदिति नन्वत्र यङ्लुको नैमित्तिकत्वादिको लोपनिमित्तपरत्वं नास्तीति व्यंगविकलमिति चेत् अत्राहुः आर्द्धधातुकग्रहणे सति अन्यपदार्थलाभाद्बहुव्रीहिर्लभ्यते तदभा
वे त्ववयवलोपे सति गुणवृद्धी न स्त इत्यर्थो रोरवीतीत्यत्र दोषः स्यादेवेति केचित्तु धातुं लोपयतीति धातुलोपः इह लोप इत्यनेन कर्मण्युपपदे ण्यन्तात् इत्यभ्युपेत्य व्यधिकरणबहु
व्रीह्याश्रयणं विनैव धात्ववयवलोपनिमित्ते गुणवृद्धी न स्त इति व्याचक्षते इक इति किम् रागः अभांजि घञि च भावकरणयोरिति रंजेर्नलोपे कृते वृद्धिः अभा
जीत्यत्र तु भंजेश्च चिणीति नलोपे वृद्धिर्नेह निषेध इति सूत्रस्योदाहरणं तु लोलुवः पोपुवः मरीमृज इत्यादि बोध्यम् तत्र लोलूय पोपूय शब्दाभ्यां पचाद्यचि यङोचि चेति
यङ्लुकि कृते अच्प्रत्ययमाश्रित्य प्राप्तो गुणो निषिध्यते मरीमृज इत्यत्र तु वृद्धिः न तु लोलूयादिभ्योऽच्प्रत्यये अतो लोप इत्यल्लोपयकारस्य यङोचि चेति लुक्यल्लोप
स्य स्थानिवत्त्वादच्प्रत्ययनिमित्तः सार्वधातुकार्द्धधातुकयोरिति गुणो मृजेर्वृद्धिरिति वृद्धिश्च न भवेदिति किमनेन निषेधसूत्रेण न चैवमपि लोलुव इत्यादावुवङि
कृते लघूपधगुणः स्यात् तद्वारणाय निषेधोपमावश्यकः उवङ् आदिष्टादचः पूर्वत्वेन लघूपधगुणे कर्त्तव्ये स्थानिवत्त्वाभावादिति वाच्यम् स्थानिद्वारा नादिष्टादचः पूर्वत्वे
न उवङो दृष्टत्वात् स्थानिद्वारादृष्टत्वेपि स्थानिवद्भवतीत्येतत्तु न परं तेति सूत्रे सवर्णग्रहणेन ज्ञापितम् न हि शिण्ढि इत्यत्र स्थानिभूतादचः पूर्वत्वेनानुस्वारो दृष्टः किंतु
स्थानिद्वारा तथा च अनुस्वारस्य परसवर्णे कर्त्तव्ये श्नम् अल्लोपस्य स्थानिवत्त्वनिषेधाय तत्र सवर्णग्रहणं कृतमिति हस्थानिवद्भावः सिद्धः नो ना चेत्यत्र तु लि
ङ्त्यते: प्रागेव बहुलग्रहणादकारविशिष्टस्य यङो लुकि स्थानिवद्भावाप्रसक्त्या न वृद्ध्यभावशंकेति न धातुलोप इति सूत्रस्य न किंचित्प्रयोजनमिति चेत्

ज्वरत्वर। ज्वर रोगे। ञि त्वरा संभ्रमे। अत्र वृत्तौ झलादौ क्ङितीत्युक्तं तत्र क्ङितीत्येतद्भसङ्गतमेवेत्याह। क्ङितीति नानुवर्तत इति। अवतेस्तुनीति। ज्वरत्वरेत्युपधावकारयो रूठि गुणे च कृते ओतुरिति सिध्यति नान्यथा। तेनात्र क्ङितीति नानुवर्तनीयमिति भावः। अवतेरिति। उपधावकारयोरूठि गुणे च कृते मन्प्रत्ययस्य टिलोपे ओमिति सिध्यतीत्यर्थः। ज्वरादेरुदाहरणं क्विपि जूः। जुरौ। जूरः। झलादौ तु जूर्तिः। जूर्णः। जूर्णवान्। त्वर तूः तुरौ तूरः। तूर्तिः। तूर्णः। तूर्णवान्। स्रिवि। स्रूः। स्रुवौ। स्रुवः। स्रूतिः। अवि। ऊः। उवौ। उवः। ऊतिः। मव। मूः। मुवौ। मुवः। मूतिः। मूतः। मामोषिरित्यादिरिट्पक्षे मामवीषि। मामवीमि। मामवीतु। अमामवीत्। अमामवीरिति बोध्यम्। राल्लोपः छ्वोः शूडि ऊः। उवौ। उवः। ऊतिः। मवा। मूः। मुवौ।

ज्वरत्वरस्रिव्यविमवामुपधायाश्च। ६। ४। २०॥ ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्तते। अवतेस्तुनि ओतुरिति दर्शनात्। अनुनासिकग्रहणाच्चानुवर्तते। अवतेर्मन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात्। ईडभावे ऊठि पिति गुणः। मामोति। मामवीति। मामूतः। मामवति। मामोषि। मामोमि। मामावः। मामूमः। मामोतु। मामूतात्। मामूहि। मामवानि। अमामोत्। अमामोः। अमामवम्। अमामाव। अमामूम। तुर्वी हिंसायाम्। तोतूर्वीति। राल्लोपः। ६। ४। २१॥ रेफात्परयोश्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। लघूपधगुणः। न धातुलोप आर्धधातुके। १। १। ४॥ धात्वंशलोपनिमित्ते आर्धधातुके परे इकोगुणवृद्धी न स्तः। इति नेह निषेधः। तिवादीनामनार्धधातुकत्वात्। तोतोर्ति। हलि चेति दीर्घः। तोतूर्तः। तोतूर्वति। तोथोर्ति। दोदोर्ति। दोधोर्ति। मूर्छा। मोमोर्ति। मोमूर्तः। मोमूर्च्छीतीत्यादि। आर्धधातुक इति विषयसप्तमी। तेन यङ्विवक्षिते। अजेर्वी। वेवीयते। अस्य यङ्लुग्नास्ति। ङित्त्वापहारेण विषयत्वासम्भवेन वीभावस्याप्रवृत्तेः॥ इति यङ्लुक्॥

त्यतः छ्वोरित्यनुवर्तते। क्वावुदाहरणं। तूः। तुरौ। तुरः। धुर्वी धूः। धुरौ। धुरः। मुर्छा मूः। मुरौ। मुरः। न धातुलोप आर्धधा तुके धातुलोपो नास्तीति लक्षणया व्याचष्टे। धात्वंशेति। यद्यपि द्वरिणो लोपश्चेत्यौणादिके रक्प्रत्यये धातुलोपः प्रसिद्धस्तथापि प्रयोजनवान् प्रसिद्धः। इरणो अप्रत्वादेव गुणाप्रसङ्गात्। प्रत्ययसन्नियोगेन धातुलोपविधानात्। आर्धधातुकस्य निमित्तत्वमपि नास्ति। अत एव दूरमित्यत्र दुलोप इति दीर्घकर्तव्ये धातुलोपस्यस्यानिवत्त्वं नास्ति। इह धातोर्लोपो यस्मिन्निति बहुव्रीहिर्विशेष्यं वार्धधातुकमित्याशयेनाह। लोपनिमित्ते इति। गुणवृद्धी न स्त इति पदद्वयं क्ङिति चेति सूत्रे लेगवायनइत्यत्र गुणनिषेधो मा

क्तं। वस्तुतस्तु उक्तरीत्या तु शं वै वनेति वो ध्यं। अन्ये तु वार्तिक एव सम्बन्धे स्वरति द्वितीय पक्षमाश्रित्येदं सूत्रं वकार प्रश्लेषे लोपासंभवात्। नहि कार्यी तिन्यापात्। न च वलीति निमित्त
त्वेनाश्रयणात् तत्रापि लोपो भवत्येव। अन्यथा रलीत्येव कुर्यादिति वाच्यं। वकारे परतो यकार लोपाय तेश्च निमित्तत्वेनाश्रयणावश्यकत्वादिति द्वितीय कल्प एव युक्त इत्याहुः।
अनु परा भ्यां कृञ इति सूत्रस्य भाष्यग्रंथ पर्यालोचनया तत्पक्षावगमात्। यत्तु नलोपः सुप्स्वर इति सूत्रे मनोरमायामुक्तं नियमसूत्राणां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रतात्प
र्यसंकोचकता चेति पक्षस्य शुभ्यो डुडीति सूत्रे भाष्यकृता ध्वनितत्वादिति तच्चिंत्यं। तत्सूत्रस्य भाष्यकारैरस्पष्टत्वात्। केचित्तु शुभ्यो डुडीत्यत्र ध्वनितत्वादिति वक्तव्ये सूत्रग्रहणं बहुव्रीहि लाभा
र्थं॥ शुभ्यो डुडीति सूत्रे यस्मिन् प्रकरणे तच्छुभ्यो डुडीति सूत्रं। परस्मैपदप्रकरणमित्यर्थः। तत्र हि अनु पराभ्यामिति सूत्रं वर्तत इति तत्सूत्रे पद्धनितं तत्तु परस्मैपदप्रकरणे ध्व
नितं भवति। यद्वा अनु पराभ्यां कृञ इत्यत्र हि भाष्यकृता शुभ्यो डुडीति परामृष्टं। तथा च शुभ्यो डुडीति सूत्रं यस्मिन् तत्तच्छुभ्यो डुडीति सूत्रं अनु पराभ्यां कृञ इति सूत्रमित्यर्थे
इत्येवं कन्निकृतिवन्नकथंचिन्नस्थितस्यगतिस्समर्थनीयेत्याहुः॥ ❀ ॥ पूर्गिरोः साम्यादिति। पृशब्दो पृपालनपूरणयोरित्याभ्यां क्विपि कृते उदोष्ठ्यपूर्वस्येति प्र

पूर्गिरोः साम्यात्। दीव्यतीति दीर्घस्तु प्राचः प्रामादिक एव। अदस्यति। रीङृतः। कर्त्रीयति। क्यच्व्योश्च। ७।४। १५२॥ गार्गीयति। वाच्यति। अकृत्सा
र्वेति दीर्घः। कवीयति। समिध्यति। क्यस्य विभाषा। ६।४।५०। हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके। आदेः परस्य। अतो लोपः। तस्य स्थानि
वत्त्वाल्लघूपधगुणो न। समिधिता। समिध्यिता। मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न। किमिच्छति। इदमिच्छति। स्वरिच्छति। अशनायोदन्य
धनाया बुभुक्षापिपासागर्धेषु। ७।४।३४। क्यजन्ता निपात्यन्ते। अशनायति। उदन्यति। धनायति। बुभुक्षादौ किम्। अशनीयति उदकीयति। धनीयति॥

वृत्ते रिति भावः। प्रामादिक एवेति। दिवु धातोः क्विपि ऊठि द्यूरिति स्यात्। ततः क्यचि द्यूयतीति भवति। क्विपं विहाय दिवि च्विकृते तु सधातु गुणे वलोपश्च स्यात् ततः क्यचि तु दे
यतीति भवति। तथा च हलि चेति सूत्रे वृत्ता च पिथातोरित्येव नेह दिवमिच्छति दिव्यतीत्येवोक्तमिति भावः। अपत्य यकारस्य लोपं स्मारयति क्यच्व्योश्चेति। नः क्ये इ
ति नियमेन पदत्वाभावात् कुत्वं नेत्याह। वाच्यतीति। एवं समिध्यतीत्यत्र जश्त्वं नेति बोध्यं। मान्ताव्ययेभ्यः प्रतिषेध इति वार्तिकस्य यथाश्रुतव्याख्याने इदमिच्छतीत्यत्रापि
न स्यात्। अत्रोपञ्चान्तानाद्व कृतीत्यादावेव स्यात् अतो व्याचष्टे। मान्तप्रकृतिकादिति। अशनायोदन्या क्यजन्ता इति। उदकशब्दस्योदन्भावोऽन्ययोर्दीर्घ इत्यपि ज्ञेयो इहयः
स चाय एव भोक्तुमशनमिच्छति यश्च पातुमुदकं यश्च धने सत्यपि पुनर्धनं तत्रोदाहरणानि। यस्तु कालांतरोपयोगार्थमशनमिच्छति यश्च स्नातुमुदकं यश्च दरिद्रः सन् धन

सत्यम्। अतएवभाष्येप्रत्याख्यातमिदमितिसंक्षेपः। तोतोर्त्ती। यच्चप्यत्रलोपोव्योरित्यनेनवलोपः सिध्यतितथापितोतूर्त्ते इत्यादौवलोपार्थंराज्ञोपरत्त्वपन्यत्तम्। अन्य
यातत्रलोपोव्योरितिलोपंबाधित्वावस्यज्वोःशूठितिऊठ्स्यात् तोयोर्त्तिइत्यादि। धुर्वीदुर्वीहिंसायाम्। मूर्छामोहसमुच्छ्राययोः। मोमूर्त्ती। क्षि। मोमोर्षि। मोमूर्थः। मोमूर्थ। मोमूर्छ्मि।
मोमोमि। मोमूर्छ्रः। मोमूर्मः। मोमूर्छ्रीचकाराम्। मोमूर्छ्रिता। मोमुर्छ्रीता। मोमोर्त्तु। मोमूर्त्तात्। मोमूर्हि। अमोमूर्छ्रीत्। अमोमोः। अमोमूर्छ्रुः। मोमूर्छ्र्यात्। अमोमोर्छ्रीत्। अमोमूर्छ्रिष्टाम्।
अमोमूर्छ्रिष्यत्। इतियङ्लुगन्तप्रक्रिया॥ ॥ सुपआत्मनःक्यच्। धातोःकर्मणइतिपूर्वसूत्रात्कर्मणइच्छायांवेत्यनुवर्त्तते। ततश्चसन्निधानादिच्छाकर्मणएवभवतीत्याह।
इषिकर्मणइति। परस्यपुत्रमिच्छतीत्यत्रातिप्रसंगवारणायसूत्रेआत्मशब्दउपात्तः। स्तुस्वशब्दपर्यायःस्वश्चकइत्याकांक्षायामिच्छायासन्निधापितत्वादेषितैवगृह्यतेतदा

सुपआत्मनःक्यच्। ३।१।८। इषिकर्मणःएषितुःसम्बन्धिनःसुबन्तादिच्छायामर्थेक्यच्प्रत्ययोवास्यात्। धात्ववयवत्वात्सुब्लुक्। क्यचिच। ७।४।३३॥
अस्यईत्स्यात्। आत्मनःपुत्रमिच्छतिपुत्रीयति। वान्तोयिप्रत्यये। गव्यति। नाव्यति। लोपःशाकल्यस्येतितु न। अपदान्तत्वात्। तथाहि नःक्ये। १।४।१५॥ क्य
चिक्यङिचनान्तमेवपदंस्यान्नान्यत्। सन्निपातपरिभाषयाक्यचोयस्यलोपोन। गव्याञ्चकार। गव्यिता। नाव्याञ्चकार। नाव्यिता। नलोपः। राजीय
ति। प्रत्ययोत्तरपदयोश्च। त्वद्यति। मद्यति। एकार्थयोरित्येव। युष्मद्यति। अस्मद्यति। हलिच। गीर्यति। पूर्यति। धातोरित्येव। नेह। दिवमिच्छतिदि
व्यति। इहपुरमिच्छतिपुर्यतीतिमाधवोक्तमप्रत्युदाहरणंचिन्त्यम्॥ १ हा। एषितृसंबंधिनइति॥ सुबंतस्योक्तविशेषणद्वयमर्थद्वारकंबोध्यम्। नःक्ये। लोहित
डाज्भ्यःक्यष्वचनंभृशादिष्वितराणिइतिवक्ष्यमाणेनयाहलंतान्क्यङ्दुर्लभइत्यभिप्रेत्याहक्यचिक्यङीति। एवंचेहक्यषीत्यपिकेचिदुक्तंतदपेक्ष्यं। यस्यहलइतिलोपमाशं
क्याह। संन्निपातपरिभाषयेति। यकारेपरेवांतादेशविधानाद्वकारोयलोपस्यनिमित्तंनभवतीतिभावः। राजीयतीति। क्यचिचेत्यवर्णस्यईत्वेकर्त्तव्येपूर्वत्रासिद्धमितिन
लोपोऽसिद्धोनभवतिनलोपःसुप्स्वरेतिनियमात्। यद्यपिनियमसूत्राणांनिषेधमुखेनप्रवृत्तिरितिनलोपःसुप्स्वरेतिसूत्रेराजीयतीत्यादिषुपठनीयंराजभ्यामित्यादौ
तुपूर्वत्रासिद्धमितिनलोपस्यासिद्धत्वेनदीर्घाद्यभावसिद्धेस्तथापिविधिमुखेनप्रवृत्तिरितिपक्षाभ्युपगमेनहलंतेषुराजभ्यांराजभिरित्यत्रैवपठितमितिज्ञेयं। नचविधि
मुखप्रवृत्तिपक्षोनिरालंबएवेतिवाच्यं। गव्यतीति। अत्रांतर्वर्तिविभक्त्यापदत्वाद्लोपोदुर्वारःस्यादित्याशंक्याह। अपदत्वादिति। इदंचसमाधानस्यसमाधानांतरादूषकत्वादिति

विद्वस्यत इति।नांतस्यैव पदत्वात्तस्य रुत्वं न। पुंवद्भावं स्मारयति। क्यङ्मानिनोश्चेति। सपत्नीवेति त्रितयसाधारणं विग्रहवाक्यं। सपत्नायत इति। शत्रुपर्याया

विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वेतु। युष्मद्यते। अस्मद्यते। क्यङ्मानिनोश्च। कुमारीवाचरति कुमारायते। हरिणीवाचरति ह
रितायते। गुर्वीव गुरूयते। सपत्नीव सपत्नायते। सपतीयते। सपत्नीयते। युवतिरिव युवायते। पट्वीमृद्व्याविव पट्वीमृदूयते। न कोपधा
याः। पाचिकायते। आचारेऽवगल्भक्लीवहोडेभ्यः क्विब्वा। वाग्रहणात् क्यङ्पि। अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्व
मनुनासिकत्वञ्च प्रत्ययस्य प्रतिज्ञायते तेन तङ्। अवगल्भते। क्लीवते। होडते। भूतपूर्वोऽप्यनेकाच्त्वाऽऽम्। एतद्वार्तिकारम्भसामर्थ्या
त्। न च अवगल्भतेरित्यादि सिद्धिस्तत्फलं। केवलानामेवाचारेपि वृत्तिसम्भवात्। धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। होडाञ्च
क्रे। वार्तिकेऽवेत्युपसर्गाविशिष्टपाठात् केवलादुपसर्गान्तरविशिष्टाच्च क्यङ्वेति माधवादयः। तङ्नेतिन्न्यितम्। सर्वप्रातिपदिके
भ्यः क्विब्वा वक्तव्यः॥ पूर्ववार्तिकन्तु अनुबन्धासञ्जार्थं न तत्र क्विबनूद्यते। प्रातिपदिकग्रहणादिहसुप इति न सम्बध्यते। तेन परकार्ष्ण
न्। कृष्ण इवाचरति कृष्णति। अतो गुणे इति शपा सह पररूपम्। अ इवाचरति अति। अतः। अन्ति। प्रत्ययग्रहणमपनीय अनेकाचस्त्व
तैन्नाम्। औ। अतुः। ऊः। द्वित्वम्। अतो यणो। अत आदेरिति दीर्घः। णल् औ। वृद्धिः। अतुर्णादिवत्वात्तो लोप इटि चेत्यालोपः। मालेवाचरति मा
लाति। लिङ्विशिष्टपरिभाषयैकादेशस्य पूर्वान्तत्वाद्वा क्विप्। मालाञ्चकार। लङि। अमालात्। अत्र हल्ङ्याबादिलोपो नाङीसाहचर्यात्
दापोपि सोरेव लोपविधानात्। रइ स्को। अमासासीत्। कविरिव कवयति। आशीर्लिङि। कवीयात्। सिचिवृद्धिरित्यत्र धातोरित्यनुवर्त्य
धातोरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः। अकवयीत्॥ ॥ ११ त्सपत्नशब्दात् क्वाङ् स्वादि ङीनंतात् क्यङि पुंवद्भावे
अकृत्सार्वेति दीर्घं च रूपमिदं सपतीयत इति। समानस्वामिकाभिधायिनो भाषितपुंस्कस्य नित्यं सपत्न्यादिष्विति नादेशो नांतत्वान्ङीप् ततः क्यङि पुं

सान्त इति निर्देशे परस्परसामानाधिकरण्येन स्यात् उदन्याशब्दस्य उदके छावा चित्त्वादिति चेत्। अत्राहुः। अशनायतीत्यादिषु अविवक्षितप्रकृत्यर्थे उभयस्यापि पा
सार्थिकमेवार्थस्तथा चनोक्तदोष इति॥ ॐ ॥ अश्वक्षीर। आज्जसेरित्यतोऽसुगिति वर्तते। अश्वस्यतीति। मैथुनार्थमश्वमिच्छतीत्यर्थः। एवं वृषमिच्छति मैथुनार्थे
वृषस्यति गौः। नन्विति। एभ्यो वृषस्यन्तीमिति प्रयोगो मनुष्यविषये कथं संगच्छते इति चेत्। अत्राहुः। अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छैवार्थोऽत एव वृष
स्यन्ती तु का प्रकीर्तिता इति कोशोऽपि स्वरसतः संगच्छते इति। लालसायामिति। उत्कटेच्छायामित्यर्थः। काम्यच्च। उच्चारणसामर्थ्यान्नकस्येत्संज्ञा। मान्ताव्ययेभ्यः प्रतिषेध

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि।७।१।५१॥ एषां क्यचि असुगागमः स्यात्। अश्ववृषयोर्मैथुनेच्छायाम्॥ अश्वस्यति वडवा॥
वृषस्यति गौः। क्षीरलवणयोर्लालसायां। क्षीरस्यति बालः। लवणस्यति उष्ट्रः॥ सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ॥ दधि
स्यति। दध्यस्यति। मधुस्यति। मध्वस्यति। काम्यच्च।३।१।९॥ उक्तविषये काम्यच् स्यात्। पुत्रमात्मन इच्छति पुत्रकाम्यति। पुत्रकाम्यिता।
इह यस्य हल इति लोपो न। अनर्थकत्वात्। यस्येति सङ्घातग्रहणमित्युक्तम्। यशस्काम्यति। सर्पिष्काम्यति। मान्ताव्ययेभ्योऽप्ययं स्यादे
व। किंकाम्यति। स्वःकाम्यति। उपमानादाचारे।३।१।१०॥ उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छा
त्रम्। विष्णूयति द्विजम्। अधिकरणाच्चेति वक्तव्यम्। प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे। कर्तुः क्यङ् सलोपश्च।३।१।११॥ उप
मानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्। सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। क्यङ् वेत्युक्तेः पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ् स
न्नियोगशिष्टः। स च व्यवस्थितः। ओजसोऽप्सरसो नित्यमितरेषां विभाषया॥ कृष्ण इवाचरति कृष्णायते। ओजःशब्दो वृत्तिविषये तद्वति। ओ
जायते। अप्सरायते। यशायते। यशस्यते। विद्वायते॥ ॥ ९९

इत्यस्यानुवृत्त्यभावं सूचयति अपस्यादेवेति। आचरतीति। व्यवहरतीत्यर्थः। अधिक
रणाच्चेति। समर्थ्यंतरूपात् सुबन्तादित्यर्थः। कर्तुः क्यङ् सलोपश्च। धातोः कर्मण इति सूत्रादित्यनुवर्तत इत्याह। क्यङ् स्यादिति। सेति। ङमपञ्चमी कर्तृविशेषणा
मित्याह। सान्तस्येति। चकारस्तु अन्वाचये बोध्यः। तद्वतीति। तथा च ओजायत इत्यत्र ओजस्वीवाचरतीति विग्रहो बोध्यः ॥ ॥ ॥ ॥

क्यङिति क्यङो विषय एव नास्ति। तथा च। केवलादुपसर्गात्तद्विशिष्टाच्च क्यङ्प्रयुक्त इति चेत्। अत्र वदन्ति। प्रातिपदिकेभ्यः क्विप्सु वं तेभ्यः क्यङिति विषयभे
देनापि गल्भते गल्भायते प्रगल्भते प्र  गल्भायते इत्यादि सिध्यत्येवेति। स्यादेतत्। गल्भधार्ष्ट्ये इत्यादीनामनग्रायत्तत्वादवगल्भते इत्यादिप्रयोगसिद्धावपि
अवगल्भादिसूत्रवार्तिकेन क्विपि सत्यवगल्भतीत्याद्यनिष्टप्रयोगः स्यात्तद्वारणार्थमाचारेऽवगल्भ इति वार्तिकारंभस्यावश्यकतया सामर्थ्यस्योपक्षीणत्वा
त् भूतपूर्वाद्यनेकाच आमित्येतत् अयुक्तमिति चेत्। सत्यं। अत्रत्ययमाशयः सर्वप्रातिपदिकेभ्य इति वार्तिके वाग्रहणेन व्यवस्थितविभाषाश्रियते। तथा च।
अवगल्भक्लीबहोडेभ्यः क्विपोऽभावादनिष्टप्रयोगो न भविष्यतीति स्वीकृते सामर्थ्यं नोपक्षीणमिति दिक्। पदकार्यं नेति। सवर्णदीर्घो यद्यपि पदमात्रका
र्यं न भवति तथापि पदस्य जायमानं कार्यं नेत्यत्र तात्पर्यं बोध्यं तनोतीति तत् स इव आचरति ततति। अत्र जश्त्वं नात्वगिव आचरति त्वचति। अत्र कु
त्वं नेत्याद्यपि बोध्यं। द्वित्वमिति। अणल् इति स्थिते द्विर्वचनेऽचीति निषेधादतो लोपो न भवतीति भावः। अतो गुण इति। द्वित्वे कृते प्यतो लोपो न भवति अंत
रंगेणानेन बाधितत्वादिति भावः। यद्यप्यत्र फले विशेषो नास्ति तथापि शास्त्रप्रक्रियामनुरुध्योक्तं। यद्यप्येवं वार्णादांगं बलीय इति परिभाषयाऽतो लोप
एवोचित इति चेन्न। मैवं। तस्याः समानाश्रये कारस्य कारेत्यादौ प्रवृत्तिस्वीकारान्न तु व्याश्रयेऽपि। न च परत्वान्नित्यत्वाच्च अत आदेरित्यनेनैव प्रथमं भाव्यमिति
वाच्यं। तस्य बहिरंगत्वेनासिद्धत्वात्। न चापवादत्वादत आदेरित्यनेन भाव्यमिति वाच्यं। अपवादो यद्यन्यत्र चरितार्थस्तर्हि अंतरंगेण बाध्यत इत्युक्तत्वात्।
आनर्देत्यादौ तस्य चरितार्थत्वात्। तत्र हलादिशेषात् प्रागेव परत्वादत आदेरित्यस्य प्रवृत्तेः। न च नित्यत्वाद्धलादिशेष एव प्रथमं स्यादिति वाच्यं। नित्यत्व
स्यात आदेरित्यत्रापि तुल्यत्वात्। एतच्च मनोरमानुसारेणोक्तं। केचित्तु वदंति। अतो गुण इति पररूपापवादस्यात आदेरित्यस्य आनर्देत्यादौ चरितार्थत्वा
दंतरंगमेव भवतीति मनोरमोक्तं चिंत्यं। स्वविषयमध्ये एकत्रोदाहरणे चरितार्थस्योदाहरणांतरेऽपि प्रवृत्त्यभ्युपगमात्। नहि गोद इत्यत्राऽतोऽनुपसर्गे क इति च
रितार्थमिति गोपरत्यादौ न प्रवर्तते तस्माद्गणं बाधित्वा कप्रत्ययो यथा स्वविषये सर्वत्र प्रवर्तते तथेहापि प्रवर्तत इति। तदपरे न क्षमंते। गोदगोपादौ सर्वत्राणः
कस्य च प्राप्तिसंभवे विनिगमनाविरहाद्गणं बाधित्वा कप्रत्यय एव भवति प्रकृते त्वानर्देत्यादौ हलादिशेषात् प्राक् अतो गुण इत्यस्य प्राप्त्यभावाद्वैषम्यमस्तीति।

वङ्क्षावेचदीर्घः। सपत्नीयत इति। विवाहजन्यसंस्कारविशेषनिमित्तकेन पतिशब्देन समासे सति नित्यस्त्रीत्वान्न पुंवत्। युवायत इति। न चङ्याः सूत्रे भाष्ये युवतीति
तरेत्युदाहरणात् यौवनं जातिरिति जातेश्चेति निषेधो युवतीयत इत्युदाहरणमिहोचितमिति वाच्यं वयसोऽनित्यत्वेनाजातित्वात्। अन्यथा युवजानिरित्यत्र
परस्मिन्निति सूत्रस्थभाष्यग्रन्थो विरुध्येत। युवतितरेति भाष्यस्य तु का गतिरिति चेत्। अत्राहुः। तसिलादिष्विति पुंवद्भावे प्राप्ते भाष्यनिर्देशादेव न पुंवदिति। युव
तीशब्दस्य तु तरपि घरूपेति ह्रस्वे युवतितरेति भवत्येव। पट्वीमृद्व्यत इति। पूर्वपदस्य काङ्परत्वाभावान्न पुंवत्। पाचिकायत इति। पुंवद्भावे सति कात्पूर्वस्येत्वं
न श्रूयेतेति भावः। एवं पञ्चमीयते। स्तोत्रीयते। सुकेशीयते। ब्राह्मणीयत इत्यादि। आचारेऽवगल्भ। गल्भ धार्ष्ट्ये। क्लीब अधार्ष्ट्ये। होड़ अनादरे। क्यङ्पीति। अपि
शब्दाद्वाक्यं। तत्र सर्वप्रातिपदिकेभ्य इत्यत्र वाग्रहणाल्लभ्यत इत्याहुः। क्विप्संनियोगेनेत्यादि। तेन क्यङ्संनियोगेनानुदात्तत्वानुनासिकत्वयोरभावादित्संज्ञा

माधवस्तु। नामधातोरपि वृद्धिमिच्छति। अकावायीत्। विरिवचयति। विवाय। विव्युः। अववीत्। अवावीत्। श्रीरिवाश्रयति। शि
श्राय। शिश्रियतुः। पितेव पितरति। आशिशिरिङ्। पित्रियात्। भूरिव भवति। अंकणातिस्थितिभुवोगिति भवतेरङितिच न भवति। अ
भिव्यक्तत्वेन धातुपाठस्यस्यैव तत्र ग्रहणात्। अभोवीत्। उभावाडुरिवद्रवति। शौश्रीति चङ्। अद्रावीत् ॥ ॥ ॥

लोपो न स्यादिति। अकृत्सार्वेति दीर्घे सति अवगल्भायते क्लीबायत इत्यादि भवति। तेन तङिति। आत्मनेपदमित्यर्थः। तथा च अवगल्भमानः क्लीबमान इ
त्यादि सिध्यति। ॥ ॥ माधवादय इति। केचित्तेषामाशयमाहुः। आचारेऽवगल्भेत्यत्र तु परस्य तु वर्तते। तथा च केवलादुपसर्गोत्तरविशिष्टाद्गल्भप्रा
त्यादिसुवन्तात् क्यङेव न तु क्विप्। तङ्नेति तूचितमिति। उत्तरवार्तिकेन प्रातिपदिकमात्रात् क्विब्विधीयत इति एतेभ्योऽपि त्रिभ्यः क्विपि सिद्धे तत्संनियो
गेनानुदात्तत्वानुनासिकत्वमात्रमत्र प्रत्ययस्य आचारे वगल्भेत्यवगल्भादिषु प्रतिज्ञायते। लाघवादन्यत्र तु गल्भप्रगल्भादिप्रातिपदिकेषु क्विपि प
रस्मैपदमेव भवति न तु तङिति भावः। नन्वेवमाचारेऽवगल्भेत्यत्र वाग्रहणात् क्यङमनुवर्त्य अवगल्भादिप्रातिपदिकेभ्यः क्यङ्विधानेऽप्यन्यत्र तु वं तादेव

त्येव रूपमित्यन्ये। येषामिन्नादीनां शावुपधादीर्घः क्रियते परमदण्डीनीत्यादौ तेषामेव दंडिन् वृत्रहन् इन्नादीनामिन्हन्निति नियमो न तु पथ्यादीनामेतेषां तु शौ परतः
सुपंथानीत्यादावुपधादीर्घप्रवृत्तावपि इत्सर्वनामस्थान इत्यत्वे कृते इन्हन्निति नियमाप्रवृत्तेः। अन्यथा पंथानौ पंथान इति न सिध्येत् पात्व पथीनतीत्याद्येवसा
ध्वित्यपरे। देवतीति माधव इति। अपदांतत्वाद्दिव उन्ना अनेति। लघूपधगुणं बाधित्वांतरंगत्वाद्वृद्धि परात् तस्मिन् कर्तव्ये बहिरंगस्याप्यूठो नासिद्धत्वं नाजानंतर्य इ
तिनिषेधात्। न च वारणादंगस्य वलीयस्त्वाद्गुणं बाधित्वा लघूपधगुणः स्यादिति वाच्यं व्याश्रयत्वात्। अत एव सिवेरौणादिकेन प्रत्यये स्योनशब्दः सिध्यतीति भा
वः। करवेति। को ब्रह्मा। चक इति। नन्वेवमो अतुरित्यत्राप्यत आदेरिति दीर्घं बाधित्वा अतो लोप एव स्यादिति चेन्न। अत्राहुः। एयस्त्रोपाविति वचनेन जायमानो यो

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः।३।१।१२। अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् हलंतानामेषां लोपश्च अभृशो भृशो भव
ति भृशायते। अच्वेरिति पर्युदासबलादभूततद्भाव इति लब्धम्। तेनेह न। क्वचिद्दिवा भृशा भवन्ति ये रात्रौ भृशाः नक्षत्राद्यस्ते दिवाऽभवन्तीत्यर्थः।
सुमनस्। अस्य सलोपः सुमनायते। चुरादौ संग्राम युद्ध इति पठ्यते तत्र संग्रामेति प्रातिपदिकम्। तस्मात् तत्करोतीति णिच् सिद्धः। तत्सन्नियोगेनात्र
वन्य आस्यते। युद्ध्ये यो यं ग्रामशब्द इत्यन्ते पि सामर्थ्यात्संग्रामशब्दे लक्ष्ये विशिष्टपाठो ज्ञापयति। उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके
प्रत्यये चिकीर्षितं पृथक्क्रियते इति। तेन मनश्शब्दात्प्रागट् असमनायत॥ ९

ऽतो लोपः स तु सन्निहितमेव अकारत्वाद्वेति दीर्घं बाधते। अनन्तरस्येति न्याया
त् न तु व्यवहितमपि। अत आदेरिति दीर्घमिति माधवाशयात् नानेन तद्ग्रन्थस्य विरोध इति। अनाकरमेवेति। अनेकाल्त्वाभावादित्यर्थः। अन्ये तु भाष्ये प्रत्ययग्रहणमपनी
येत्यव्यक्तत्वात् प्रत्ययान्तत्वाभावात् मासेत्यादि रूपं शुद्धमेवेत्याहुः॥ ॥ भृशादिभ्यो भवीत्येतत् व्याचष्टे भवत्यर्थ इति। भृश। शीघ्र। मंद। पंडित। उर्मनस्। सुमनस्। उन्म
नस्। इत्यादयो भृशादयः। चादिवेत्यादि भाष्यकारीयं प्रत्युदाहरणं व्याचष्टे ये रात्राविति। आदिना। प्रातिपदिकमिति। न तु धातुः। ग्रसेरा चेत्यौणादिकेन मन्प्रत्ययान्तत
यानि ष्यादितत्वादेवं च तस्य माराज्ञापकं संगच्छत इति भावः। अवयव इति। संग्रामेति मशब्दाकारात् भिन्नोऽकारोऽवयव इत्यर्थः। तथा च। अत्र अतोग।

नन्वत आदेरित्यस्य पररूपापवादत्वमेधामासेत्यत्र यदुक्तं तत्कथं संगच्छते। आनृधतुरित्यादौ आद्गुण इति गुणस्यापि प्राप्तेः। न च यथासवर्णदीर्घो यणगुणयो रपवादस्तथायमप्युभयोरपवाद इति वाच्यं। एवमप्यानर्द्वेत्यत्र वहलादिशेषात् प्रागेवासेत्यत्रापि अत आदेरित्यस्य प्रवृत्तौ किं तेन पररूपापवादत्व कथनेने ति चेत्। अत्र केचिदाहुः। इहाप्यपवाद एकशेष इति केषांचित्प्रवादे यथाऽपवादशब्दो बाधकपरः सरूपाणामित्येकशेषानारंभे हि स्वाद्युत्पत्तौ द्वंद्वस्य प्रवृत्तेरे कशेषसूत्रारंभे तु पदांतरभावेन तत्प्रवृत्तेस्तथाऽत्रत्य अपवादशब्दोपि बाधकपरः। अत आदेरित्यनारंभे हि हलादिशेषे पररूपप्रवृत्तावेधामसेति स्यादार ब्धे तु तत्सूत्रे परत्वाद्धलादिशेषात्प्रागेव दीर्घप्रवृत्त्या पररूपस्याप्रसक्तेरिति। यद्यप्यासेत्यादौ प्रथमत अत आदेरिति दीर्घाकरणेपि हलादिशेषे पररूपे च कृ तेऽतस्यश्वीतवद्भावे सति अभ्यासग्रहणेन ग्रहणात् अत आदेरिति दीर्घप्रवृत्त्या समीहितरूपसिद्धिस्तथाप्यानर्द्वेत्यादि न सिध्यत्येव। तत्र हि तस्मान्

अनुनासिकस्य क्विझलोः क्ङिति। ६।४।१५॥ अनुनासिकांतस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति। इदमिवाचरति। इदामति। ए जेव राजानति। पन्थाइव पथीनति। मथीनति। ऋभुक्षीणति। घोरिव देवतीति माधवः। अत्र ऊठि घ वतीत्युचितमाकारवकृतिचकावि ति। हरदत्तः। माधवस्तु एयल्लोपाविति वचनात् णिलि वृद्धिं बाधित्वाऽतोलोपाच्चक इति रूपमाह। स्वरवस्स्वोपस्त्रायन्त्र। स्वामासास्वान्व कारेतितदनाकरमेव॥

इद्धि हलइति दीर्घीभूतादकारान्नुटि नकारे पर्यकारश्रवणाभावप्रसंगादिति दिक्। प्रत्ययांतत्वेनाप्रातिपदिकत्वात् क्विपोः नुत्पत्तिमाशंक्याह। लिंगविशिष्टेत्यादि। सिद्धिरित्यत्रेति। सिचा धातोराक्षेपात् ऋत इद्धातोरित्यतो धातोरित्यनुवर्तनाच्च धातुरेव यो धातुरिति व्याख्याल भ्यत इति ज्ञेयं। विरिवेति। विंपसी॥ ॥ अनुनासिकमंगस्येति विशेष्यसंनिधानात्तदंतलाभः। ढ्लोप इत्यतो दीर्घग्रहणं नोपधाया इत्यत उपधाग्रहणं चा नुवर्तते तदाह। अनुनासिकांतस्येत्यादि। झलादाविति। एतच्च यस्मिन्विधिस्तदादावल्ग्रहण इति परिभाषया लभ्यते। झलादौ किं। तिशांतो दांत इत्युदाहरणं डिःगित्युयङ्लुकि त्तसि शंशांतः दंदांतः। पथीनतीति। अंतरंगत्वाद्दीर्घस्ततो नगणा इत्याहुः। इन्हन्नित्यनेन शावेवेति नियमाद्दीर्घाभावे शरोसति पथेनती

अन्यथा तेषां तेन समासे सति ल्यप् स्यादिति भावः। पृथक्करणस्य फलमाह। तेनेति। सुमिमनायिषति उन्मिमनायिषतीत्यादौ मनःशब्दस्य द्विर्वचनमपि फलमि
ति बोध्यं। अवागल्भतेति। आचारे वगल्भेति क्विबिधौ अवेत्यस्य पृथक्करणात् गल्भशब्दात् प्रागट्। किं तत्साध्यमित्यत आह। तेनेति। उस्राम् इति। माहेयी
सौरभेयी गौ रुस्रा माता च शृङ्गिणीत्यमरः। ओस्रीयदिति। क्यजन्तात् उस्राशब्दात् लङि अङागमस्याटि च कृते उस्य पदान्तादिति पररूपं प्राप्तं। न च अनर्थकोऽयम्
स्न ग्रहीष्यत इति वाच्यं। क्विं चक्षुर्भिं चक्षुरित्यादौ वस्युसोऽनर्थकत्वादागमसहितस्यैवार्थवत्त्वात्। तथा चायं रस्युरित्यादौ वैवस्यात् एवं चायमेवाऽडाग
मस्य उसि परे प्रतिषेधोऽर्थवद्ग्रहणापरिभाषाया अनित्यत्वे ज्ञापक इति स्थितं। अत एवोस्य पदान्तादित्यत्राऽपदान्तात् किं को स्रेति भाष्ये प्रत्युदा
हृतं। ओंकारीयदिति। ओमाङोश्चेति पररूपं प्राप्तं। आडागमस्याङि परे। उदाहरणमाह। ओढीयदिति। यत्रादेशेन अपहृतं तत्रापि यदि पृथक्कृति
स्तदा आङः परत्वाभावात् इत्याडागमस्याङि परे पररूपनिषेधो व्यर्थः स्यात्। तथा च ज्ञापकस्य विशेषविषयत्वे प्रमाणमयमेव निषेध इति भावः। चश
ब्दं प्रयुञ्जानः सूत्रकारोऽपि विशेषविषयत्वेऽनुकूल इत्याह। चशब्देनेति। पाठे स्थितमिति। भाष्यकारेणुक्तार्थे प्रमाणभूत इति भावः। स्यादेतत्। अवधीरयती
त्यादाववशब्दस्य पृथक्करणमस्ति वा न वा। आद्ये चोपदेशेनावशब्दात् प्रागाडागमं वकाररहितत्वं च कृत्वा चङि आववधीरदित्युदाहृतं तन्न संगच्छेत हि
ती येन। इतीषधारामवधीर्य मंडली क्रियाश्रियामंडितरंगमेमहीति श्रीहर्षप्रयोगो न संगच्छेतेति चेत्। अत्राहुः। नायं धातुसूत्रे पठितः किंतु बहुलमे
तन्निदर्शनमिति वाहुलकाद्रहितः। उहस्वधीरेत्यस्यापि संभवति अवधीरेत्यस्यापि। प्रयोगद्वयप्रामाण्यात् मुनित्रयविरोधाभावाच्च। यदा त्ववधी
रेति विशिष्टस्यैव धातुत्वं तदाऽवधीरयित्वेति साधु धीरेत्यस्यैव धातुत्वेन अवधीर्येत्यस्य साधुत्वमिति। तस्येति। आदिशब्दस्येत्यर्थः। तस्यापीति। क्यषः
ककारस्येत्यर्थः। एतेन नः क्ये क्यस्य विभाषेति सूत्रद्वये क्यषोऽपि ग्रहणं वदन्तः परास्ताः। लोहिणीयतीति। क्यङि सति तङ् स्यात्। क्यङ्मानिनोश्चेति पुंवद्भावश्च

णाइतिपररूपंज्ञेयं।यदित्वमकारादकारोऽनुबन्धःस्यात्तर्हिअससंग्रामतेत्यत्रणौचङीतिउपधाह्रस्वःस्यात्।णिज्संनियोगेनानुबन्धो
स्यआत्मनेपदस्याप्रवृत्त्याणिचश्चेतिकर्तृगामिनिक्रियाफलएवआत्मनेपदंस्यान्नतुपरगामिनीतिविवेकः।सामर्थ्यादिति।केवलस्यग्रामशब्दस्ययुद्धेप्र

उन्मनायते।उदमनायत।एवञ्चावागल्भत अवागल्भिष्टेत्यादावप्यवेत्यस्यपृथक्करणम्बोध्यम्।ज्ञापकन्त्वसजातीयविषयम्।तेन
यत्रोपसर्गस्वरूपंसकलंश्रूयतेनत्वादेशेनापहृतन्तत्रैवपृथक्कृतिः।एवञ्च।आऊढः ओढः।स्वरवाच्यर्येओढायित्वा।अत्रउन्मनाय्यअ
वगल्भ्येतिवन्नल्यप्।ज्ञापकस्यविशेषविषयत्वेभाष्यवार्त्तिकेनतद्भाष्यन्त्वप्रमाणम्।तथाहि।उस्योमाङ्क्ष्वाटः प्रतिषेधः।उसिओमाङो
श्चपरयोराटः पररूपन्नेत्यर्थः।उस्रामैच्छत्।औस्रीयत्।औङ्कारीयत्।औढीयत्।आटश्चेतिचशब्देनपुनर्वृद्धिविधानादिदंसिद्धमिति
भाष्ये स्थितम्।लोहितादिडाज्भ्यःक्यष्।३।१।१३।।लोहितादिभ्योडाजन्ताच्चभवत्यर्थेक्यष्स्यात्।वाक्यषः।१।३।९०।।क्यषन्तात्परस्मै
पदम्वास्यात्।लोहितायति।लोहितायते।अत्राचेरित्यनुवृत्त्याऽभूततद्भावविषयत्वंलब्धन्तच्चलोहितशब्दस्यैवविशेषणम्।नतुडा
चोऽसम्भवात्।नाप्यादिशब्दग्राह्याणान्तस्यप्रत्याख्यानात्।तथाचवार्त्तिकम्।लोहितडाज्भ्यःक्यष्वचनंभृशादिष्वितराणीति।नचै
वङ्काम्यच्वत्क्यषेऽपिककारःश्रूयतउच्चारणसामर्थ्यादितिवाच्यम्।तस्यापिभाष्येप्रत्याख्यानात्।पटपटायति।पटपटायते।कृभ्वस्ति
योगाद्विनापिडाच्।डाजन्तात्क्यषोविधानसामर्थ्यात्।यत्तु।लोहितश्यामदुःखानिहर्षगर्वसुखानिच।मूर्च्छानिद्राकृपाधूमाःकरुणानित्य
चर्मणीतिपठित्वाश्यामादिभ्योपिक्यषिपदद्वयमुदाहरन्तितद्भाष्यवार्त्तिकविरुद्धम्।तस्मात्तेभ्यःक्यङेव।श्यामायते।दुःखायते।दुःखादयोवृ
त्तिविषयेतद्वतिवर्त्तन्ते।लिङ्गविशिष्टपरिभाषयालोहिनीशब्दादपिक्यष्।लोहिनीयति।लोहिनीयते॥ ९ योगाभावादितिभावः।क्रियायोगाभावा

उपसर्गानेत्यभिप्रेत्याह।समानाकारमिति।पूर्वपदमिति।तच्चसमासएवसंभवतितेनआंदोलयित्वाप्रेंखोलयित्वेत्यादौआप्रेत्यादीनांनपृथक्करणम्॥

उ॰ कौ॰
सि॰ कौ॰
शु॰ न॰
११५

अपीपटदिति सिध्यतीत्यादि तुरादिष्ठेवोपपादितः। हस्तयतीति। उपकारं स्वीकरोतीत्यर्थः। पठितुं यत्नाः इति। एकसूत्रकरणे लाघवमिति भावः। सापेक्षेभ्यो पीति। विधानसामर्थ्यादिति भावः। अन्यत्र तु रमणीयं पटुमाचष्टे इत्येवमत्र पटयतीति वृत्तिः। सापेक्षत्वमेव दर्शयति माणवकमित्यादिना। अयं भावः। द्वितीयान्ताद्विधीयमानस्य णिचः पदविधित्वात् सापेक्षेभ्यो न भवेत् किंतु यदा प्रकरणादिना माणवकस्येति ज्ञायते तदैवमुंडयतीति वृत्तिः स्यात्। न तु माणवका दिप्रयोगे। णिजंतस्य सनाद्यंतवृत्तित्वात्तद्विशेषणानां तु तत्वभावाच्चेति। घटतीति। पुंसि संज्ञायामित्यनेन। एवं वङ्गादाद्य इति। आदिशब्देन रभावटिलोपादयः। टिलो पे नैवैतयतीत्यादि रूपसिद्धौ एवं तद्भावग्रहणं दारदयतीति सिद्ध्यर्थमिति तु एदिघेवास्माभिरुक्तः। दरदोपत्यं दारदः। द्व्यञ्मगधेत्यण्। तस्य स्त्रियामतश्चेति

न स्तद्धित इति टिलोपः। प्रकृतिभावस्तु नयेन नाप्राप्तिन्यायेन टेरित्यस्यैव बाधको हि सः। भत्वात् सम्प्रसारणं। अन्ये तु न स्तद्धित इति नेह त्रिदिश्यते। इष्ठनि तस्या दृष्टत्वात्। ब्रह्मिष्ठ इत्यादौ परत्वाट्टेरित्यस्यैव प्रवृत्तेः तेन शुनयतीति रूपमाहुः। विद्वांसमाचष्टे विदयति। अङ्गवृत्तपरिभाषया सम्प्रसारणं नेत्येके। सम्प्रसारणे कृतानादेशे च विदावयतीत्यन्ये। नित्यत्वाट्टिलोपात् प्राक् सम्प्रसारणम्। अन्त रङ्गत्वात् पूर्वरूपे टिलोपः। विदयति। इत्यपरे। उदञ्चमाचष्टे उदीचयति। उदैचिचत्। प्रत्यञ्चम्। प्रतीचयति॥ ॥

११ लुकि दरद्गतामाचष्टे दार दयति। इह एवं वङ्गाद्यभावे टिलोपे सति दरयतीति। स्यात् प्रथयतीति। इरकृतो हलादेरिति रभावः। अपिप्रथदिति। इह दोस्त्यां टिलोपे नाग्लोपित्वात् सन्वद्भावे सति सन्यत इतीत्वं वृद्धेः पूर्वं टिलोपे तु अपप्रथत्। ओजढदिति। इह टिलोपे सति णिच् सहितस्य द्वित्वे पश्चादभ्यासे ऽकारो ऽङ्लभ इत्यत आह। ओः पुयण्जीत्यादित्वमविति। प्रत्ययोत्तरपदयोश्चेत्यनेन। अंतरङ्गत्वादिति। न च वार्णादाङ्गमिति टिलोपस्यैव प्रवृत्तिरुचितेति वाच्यं। व्याश्रयत्वात्। भाष्यस्येति। इति कारैः हि प्रकृत्यैकाजि ति सूत्रे प्रेयान् प्रेष्ठ इत्यादयउदाहृताः। तेच प्रस्थादेशविधायकस्य प्रियस्थिरेत्यादि शास्त्रस्यासिद्धवदत्राभादित्यसिद्धवद्भावेन प्रस्थादावकारोच्चार णसामर्थ्याद्वा भाष्ये प्रकृतिभावं विनैव साधिताः। स्रग्वान् स्रजिष्ठ इत्यादावपि टिलोपो न भविष्यति लोपापवादस्य विन्मतोर्लुक् सूत्रप्रवर्तनात्॥

कष्टायक्रमणे। ङ्यङ् वानुवर्तते स्वरितत्वात्। ननु क्यप् एककष्टायेति निर्देशादेव चतुर्थ्यन्तं लभ्यते। क्रमणमुत्साहः। इति सर्गतायनेष्विति क्रमेरात्मनेपदं विधाय
कसूत्रे सर्ग उत्साह इति सर्वैर्व्याख्यातत्वात्। कष्टं कृच्छ्रं गहनयोः कष इतीडभावः। न च दुःखं कर्तुमुत्साहः संभवतीति तत्साधनं पापमिह गृह्यत इत्याह।
पापं कर्तुमिति। द्वितीयान्तेभ्य इति। चिकीर्षायां द्वितीयान्तस्यैवान्वययोग्यत्वादेवमुक्तम्। कर्मणो रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात् कर्मण इति पंच-

कष्टायक्रमणे ॥३।१।१४॥ चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः। सत्रकक्षक-
ष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्॥ कण्वं पापम्। सत्रादयोऽत्र विषये पापार्थाः। तेभ्यो द्वितीयान्तेभ्यः चिकीर्षायां क्यङ्।
पापं चिकीर्षतीत्यस्वपदविग्रहः। सत्रायते। कक्षायते इत्यादि। कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥३।१।१५॥ रोमन्थतपोभ्यां कर्मभ्यां क्रमे-
ण वर्त्तनायां चरणे चार्थे क्यङ् स्यात्। रोमन्थं वर्त्तयति रोमन्थायते। हनुचलन इति वक्तव्यम्॥ चर्वितस्य पुनश्चर्वणमित्यर्थः। नेह। कीटो
रोमन्थं वर्त्तयति। अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः तदश्नातीत्यर्थ इति कैयटः। वल्गुलङ्करोतीत्यर्थ इति न्यासकारहरदत्तौ। तपसः पर-
स्मैपदं च। तपश्चरति तपस्यति। बाष्पोष्मभ्यामुद्वमने ॥३।१।१६॥ आभ्यां कर्मभ्यां क्यङ् स्यात्। बाष्पमुद्वमति बाष्पायते। ऊष्मायते। फेनाच्चे-
ति वाच्यम्। फेनायते। शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥३।१।१७॥ एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते। पक्षे तत्क-
रोतीति णिजपीष्यत इति न्यासः। शब्दयति। सुदिनदुर्दिननीहारेभ्यश्च॥ सुदिनायते दुर्दिनायते। सुखादिभ्यः कर्तृवेदनायाम् ॥३।१।१८॥ सुखादिभ्यः
कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः। सुखं वेदयते सुखायते। कर्तृग्रहणं किम्। परस्य सुखं वेदयते ॥ ॥

मी। प्रत्येकं संबन्धादेकवचनमित्याह। कर्मभ्यामिति। वर्तनायां चरणे इति। सूत्रे वर्तीति ण्यन्तात् इति ण्यासश्रन्थो युजिति युचं बाधित्वा अस्मादेव निपातनात् क्तिन्।
चरतेस्तु संपदादित्वाद्भावे क्विबिति भावः। केचित्तु वर्त्तिशब्दो वर्त्तयतेरिक्श्तिपाविति इकि रूपमिति स्वरूपाचार्य लाभ इत्याहुः। शब्दवैर। कर्मण इत्य

प्रत्यचिचदिति। इह धात्वकारस्याचइतिलोपे चिशब्दात्प्रागटि पूर्वस्यपण्। नचास्तामासनदित्यादिवदलोपस्यासिद्धत्वादाडस्यादितिवाच्यं। व्याश्रयत्वात्। गिनिमित्तोहिलोपः लुङ्निमित्तश्चाट्। आसन्नित्यादौ तु नतथेति वैषम्यं। तिरापयतीति। उपसर्गसमानाकारत्वाभावादिह तिरसः पृथक्करणं नास्ति तेन प्र

प्रत्यंचिचत्। इकोसवर्णे इति प्रकृतिभावपक्षे। प्रति अचिचत्। सम्यञ्चमाचष्टे समीचयति। सम्यचिचत्। समिअचिचत्। तिर्यञ्चमाचष्टे तिरापयति। अत्रैव टिलोपेनापहारेपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः। असिद्धवदत्रेति चिणोलुङ्न्यायेन प्रथमटिलोपोऽसिद्धः। अतः पुनष्टिलोपोन। अङ्गवृत्तपरिभाषयावा चङ्युग्लोपित्वादुपधाह्रस्वोन। अतितिरापत्। सध्र्यञ्चमाचष्टे सध्रापयति। असस्ध्रापत्। विष्वद्र्यञ्चम्। अविविष्वद्रायत्। देवद्र्यञ्चम्। अदिदेवद्रायत्। अदद्र्यञ्चम्। आददद्रायत्। अदमुयञ्चम्। अदमुआपयति। आददमुआयत्। अमुमुयंचम्। अमुमुआपयति। चङ्। आमुमुआपयत्। भुवम्भावयति। अबीभवत्। भुवम्। अबुभ्रवत्। श्रियं। अशिश्रयत्। गाम्। अजूगवत्। रायम्। अरीरयत्। नावम्। अनूनवत्। स्वश्वम्। स्वाशश्वत्। स्वः। अव्ययानांभमात्रे टिलोपः। स्वयति। असस्वत्। असिस्वत्। बहून्भावयति। बहयतीत्यन्ये। स्रग्विणम्। स्रजयति। संज्ञापूर्वकत्वान्नवृद्धिः। श्रीमतीं श्रीमन्तम्वा। श्रययति। अशिश्रयत्। पयस्विनीम्। पयसयति। इह टिलोपोन। तदपवादस्यलुकः प्रवृत्तत्वात्। स्थूलं। स्थवयति। दूरात्दवयति। कथन्तर्हि दूरयत्यवनतेविवस्वतीति। दूरमततिअय तेवादूरात्। दूरान्तं कुर्वतीत्यर्थः। युवानं। यवयति। कनयति। युवाल्पयोरितिवाकन्। अन्तिकं। नेदयति। बाढं। साधयति। प्रशस्यं। प्रशस्ययति। इह श्रज्यौन। उपसर्गस्य पृथक्कृतेः। वृद्धं। ज्यापयति। वर्षयति। प्रियं। प्रापयति। स्थिरं। स्थापयति। स्फिरं। स्फापयति। उरुं वरयति। वारयति। बहुलं। बहयति। गुरुं। गरयति। तृप्रं। त्रपयति। दीर्घं। द्राघयति। वृन्दारकं। वृन्दयति॥ इतिनामधातुप्रक्रिया॰॥

कृत्यैकाजित्यप्रवृत्ते ष्टिलोपस्तदाह। अंचेरिति। चिणोलुङ्न्यायेनेति। यथाऽपाचितरामित्यत्र चिणः परस्यतशब्दस्यलुकि पुनः स्तरप्रत्ययस्यलुङ्नभवति

॥
एषेवानेकास्सुपयस्तान्पयसिष्ठः चंपकस्रजिष्ठ इत्यादिषु गतिः। नचैतावता प्रकृत्यैकाजिति सूत्रं प्रत्याख्यातमिति मंतव्यं। स्वापयतीत्यादौ तस्यावश्यकत्वा
त् इति भावः। युवामावामिति। युष्मानस्मानिति विग्रहेपि युष्मयति अस्मयतीत्येवरूपा न च ह्योरुक्तौ युवावौ भवत इति रूपे विशेषः शंक्यः। विभक्तिप
रत्वाभावात्। नच प्रत्ययलक्षणं। लुका लुप्तत्वात्। नच प्रागेवादेशोस्त्विति वाच्यं। अंतरंगानपि विधीन्बहिरंगो लुग्बाधत इति न्यायात्। अकृतव्यूहपरि
भाषाया जागरूकत्वाच्च। येन नाप्राप्तीति। यत्र यत्र प्रकृत्यैकाच् इत्यस्य प्रवृत्तिस्तत्र टेरित्यस्य प्रवृत्तिर्न तु नस्तद्धित इत्यस्य। स्रजिष्ठ इत्यादौ तस्याप्रवृत्तेरि
ति भावः। अनंतरस्य विधिर्वा प्रतिषेधो वेति न्यायेनेत्यन्ये। संप्रसारणमिति। नच टिलोपे सत्यन्नंतत्वाभावात् श्वयुवमघोनामिति कथमिह संप्रसारणप्र
वृत्तिरिति शंक्यं। स्थानिवत्त्वादसिद्धवदत्रेत्यसिद्धत्वाद्वा टिलोपेप्यन्नंतत्वलाभात् अतद्धित इति हि तत्र पर्युदासो न तु प्रतिषेधः तेन तद्धिते न विधिर्न नि
षेधः किंतु तद्धितभिन्ने परे विधिस्तद्धितभिन्नत्वं तु णाचोऽस्त्येवेति न संप्रसारणप्रतिबंधः। नापि द्विष्ठ इत्यादौ इष्ठनि ओर्गुणो दृष्ट इति इहापि वृद्धि
न्बाधित्वा गुणः स्यादिति वाच्यं। जातेपि गुणेऽवनर्द्धौ रूपसिद्धेः। अथवा टिलोपसंप्रसारणयोर्गुणं प्रति असिद्धवदत्रेत्यसिद्धत्वादिष्ठवद्भावेन ना
स्ति गुणप्रसंगः। श्वुनयतीति। इष्ठवद्भावेन भत्वात् संप्रसारणं प्रकृत्यैकाजिति प्रकृतिभावः। नित्यत्वादिति। शब्दांतरप्राप्त्या तु टिलोपस्यानित्यत्वमिति
भावः। उरीचयतीति। उपसर्गं पृथक्कृत्याचूशब्दादेव णिजिति प्रकृत्यैकाजिति प्रवृत्तेः टिलोपो न। उदई दितीत्वं। अनिदितामिति किन्निमित्तो नलो ॥
पः। उदैचिचदिति। लुङि द्विर्वचने चीति णिलोपस्य निषेधाच्चिशब्दस्य द्वित्वं। प्रतीचयतीति। अच इत्यल्लोपे चाविति पूर्वस्य दीर्घः ॥ ॥

र्थमिदमुपन्यस्तमिति चेत्। अत्राहुः। प्राधान्यादिष्ठवदिति कार्यातिदेशो न त्वयं शास्त्रातिदेशः। तथा चेष्ठनिदृष्टं भूभावं स एवातिदेशो विधत्त इति नात्र संनियोग
शिष्टपरिभाषायाः प्रवृत्तिः इत्थं च भावयतीत्येव रूपं सम्यगिति। स्रजयतीति। इष्ठवद्भावेन विन्मतोर्लुगिति लुक्। नन्वजादी गुणवचनादेवेत्युक्तत्वादिष्ठन्प्रत्ययः स्रग्विन्
शब्दाद्दुर्लभ इति इष्ठवद्भावोऽत्रायुक्त इति वाच्यम्। अस्मादेव लुग्वचनात् ज्ञापकाद्विन्नन्तात् मतुबन्ताच्च अजादी भवत इत्यभ्युपगमात्। श्रीमतीमिति। मतुपो लुक्
श्रापयति। अशिश्रयदिति। एतेन ससंचरिष्णुर्भुवनान्तरेषु यां याचदृच्छया शिश्रयदाश्रयः श्रियामिति माघश्लोके प्रचुरः पाठो व्याख्यातः। श्रीमतीमकरोदि
त्यर्थादिति मनोरमायां स्थितम्। अत्र केचित्। सापेक्षाणां वृत्त्यभावान्मनोरमोक्तं यत्तदयुक्तम्। न हि कश्चित् यं घटं करोति तमानयेत्यर्थे यं घटयति तमानये
ति प्रयुंक्ते। अत एव तत् करोतीत्यनेनैव सिद्धे मुण्डादिग्रहणं सापेक्षेभ्योऽपि णिजर्थमिति पूर्वोक्तं संगच्छते यद्यन्यत्रापि सापेक्षेभ्यो णिच् स्यात्तत्तन्न संग
च्छेत। न चात्र सापेक्षत्वं नेति विवदितव्यम्। यादृशं श्रीमतीमकरोदिति स्वयमेव व्याख्यातत्वात्। नापि सविशेषणानां वृत्त्यभावेऽपि विशेष्ययोगस्यादेव
वृत्तिरिति नात्रानुपपत्तिरिति श्रीमतीमित्यर्थे प्रतिदिशो विशेष्यत्वादिति वाच्यम्। विशेष्ये हि वहिर्भूते विशेषणानां वृत्तिर्नाङ्गीक्रियते। न हि कश्चित् श्रीमतो
त्तरद्रमित्यर्थे राज्ञः श्रीमतमिति वृत्तिमभ्युपैति। किं च माघश्लोके अशिश्रियदित्येव पाठो बहुषु पुस्तकेषु दृश्यते। न त्वशिश्रयदित्यलमसुद्देश्यसमर्थना
भिनिवेशेनेत्याहुः। पयसयतीति। इह विन्मतोर्लुकि अग्लोपात्सन्वदित्वादिकं च न। अगनग्लोपे पि सन्वद्भावाभावात् णौ च ङौ इति सूत्रे अत्वरादिति
भाष्यमिह प्रमाणम्। लुङि· अपपयसत्। एवं स्रग्विनमाख्यत् असस्रजदित्यत्रापि सन्वदित्वं न। गोमन्तं गवयति। लुङि·। अजुगवत्। इहाग्लोपादीर्घोल घोरिति
दीर्घो न। गोस्त्वजं पयइति। विग्रहे तु अजूगवत् असिस्रजत् पयसति। अपपयत्। टेर्लोपस्य वहिरङ्गत्वेन असिद्धत्वाद्दिद्वृद्धिर्न। अग्लोपित्वान्न सन्वद्भाव
दीर्घौ न। तदपवादस्येति। येन नाप्राप्तिन्यायेन टिलोपापवादो लुक्। स्थवयतीति। स्थूलदूरेति यणादिलोपो गुणश्च। न च गुणस्यावोऽन्तोतीति वृद्धिः
स्यादिति वाच्यम्। अङ्गकार्ये कृते पुनरङ्गकार्यस्याप्रवृत्तेः। प्रातिपदिकाद्धात्वर्थे इति बहुलग्रहणाद्वा। लुङि·। अतुस्थवत्। दवयति। यवयति इत्यादि
इहापि पूर्ववद्ध्रस्वाभावः। लुङि· अदुदवत्। अयुयवत्। अचीकनत्। नेदयतीति। अन्तिकबाढयोर्नेदसाधौ। टिलोपः। लुङि·। अनिनेदत्। असस्साधत्॥

प्रथमलुकोऽसिद्धत्वेनव्यवधानान्नयेत्यर्थः। उनद्धि लोपो नेति। तिर्यादेशस्येकारस्य लोपो नेत्यर्थः। अग्लोपित्वादिति। अगमन्ग्लोपिनोपि अग्लोपित्वस्वीका
रादितिभावः। देवद्यंचमिति। नन्वाख्यानात्कृतस्तदाचष्ट इति कारकस्य पृथक्करणाद्देवानंचयतीति प्रसज्येत। वलिवंधनमाचष्टे बलिं बंधयतीतिवत्। इष्यते
तुदेवद्र्यंचयतीत्येवरूपं। किंच। कारकस्य पृथक्करणेऽदेवद्र्यंचयदित्याद्यपि न सिध्येत। न च पूरणप्रसिद्ध्याख्यान एव कारकस्य पृथक्करणादिकमिति वाच्यं।
राजानमागमयतीत्यत्राव्याप्तेरिति चेत्। अत्राहुः। यत्राख्यानेऽन्वयते तत्रैवेदं प्रवर्तते कृत्तु गिति संनियोगशिष्टविधानात्। किंच। आख्यानग्रहणसामर्थ्यात्
महाजनप्रसादविषयीभूतार्थविषयकमेवतत्। भाष्यादौतादृशानामेवोदाहृतत्वात्। यदि तु देवांचनमाचष्टे इत्यादौ महाजनप्रसिद्धिरस्ति तदा देवानंचय
तीतिभवत्येवेति। आमुमुआयदिति। पूर्वत्रासिद्धीयमद्विर्वचन इत्यसिद्धत्वनिषेधान्मुशब्दस्य द्वित्वं। अवीभावदिति। ओः पुयण्ज्यपर इत्यभ्यासोवर्णस्ये
त्वं। दीर्घो लघोरिति दीर्घः। ननु परत्वात्प्रथमं दीर्घे कृते पश्चादित्वं स्यात्। न चैवं दीर्घो लघोरित्यस्य वैयर्थ्यमिति वाच्यं। अजूहवदित्यादौ तस्य सार्व
काशत्वादिति चेत्। अत्राहुः। विप्रतिषेधे परमित्यत्र परशब्दस्येष्टवाचित्वाल्लक्ष्यानुरोधेन दीर्घात्प्रागित्वमेव भवति। लक्ष्यभेदात्पुनरिकारस्य
दीर्घो वा भवतीति अबभ्रूवदिति। इहाभ्यासात्परो यः पवर्गः स त्ववर्णपरो न यस्त्ववर्णपरो यण् न सा वभ्यासात्पर इत्यभ्यासोकारस्येत्वं न। गोमा
वयति। स्वश्वमिति। शोभनः अश्वः स्वश्वः। शोभनः अश्वो यस्येति बहुव्रीहिर्वा। स्वाशश्वदिति। उपसर्गसमानाकारस्य पृथक्करणात् अजादेरिति द्विती
यस्य द्वित्वमाडागमश्चास्वयतीति। प्रकृत्यैकाजिति प्रकृतिभावस्तु येन नाप्राप्तिन्यायाट्टेरित्यस्यैव बाधको न त्वव्ययानां भमात्रे टिलोप इत्यस्येति भावः।
असस्वदिति। ओः पुयण्ज्यपर इति ज्ञापकेन द्वित्वे कार्येऽजादेशस्य स्थानिवत्त्वान्निषेधाद्वास्वरशब्दस्य द्वित्वमिति मतेनेदं। अगमन्ग्लोपिन्यग्लोपित्वाभ्युपगमे
ऽप्यलादेशेऽजादेशत्वव्यवहारो नास्तीति मते तु णिचसहितस्यैव द्वित्वं तदाह। असिस्वदिति। भावयतीति। वहो लोपो भूच वहो रिष्ठस्य यिट् चेति भूभावः।
ननु चैवं यिडागमोपि णेरस्त्विति वाच्यं। णाविष्ठवदित्यत्र सप्तमीनिर्देशादिष्ठवदित्यत्र सप्तम्यंताद्वतिरित्यभ्युपगमात्। एवं चेष्ठनिपरे स्थविरस्य यत्कार्यं त
देवातिदिश्यते न त्विष्ठनोपि कार्यमिति स्थितं। वहयतीत्यन्ये। यिडभावे तत् संनियोगशिष्टस्य भूभावस्यापि अभाव इति भावः। नन्वेवमनयत्वे न किं

रेकाचइत्यस्माद्धातो रितिवर्तते वेति निवृत्तं। अन्यथा कंड्वयतीतिस्यान्नदाह। धातोर्नित्यमिति। केचित्तु नित्यं कौटिल्ये गतावित्यतो नित्यमित्यनुवर्तनइ त्याहुः। तच्चिंत्यं। तत्र हि नित्यग्रहणमेवकारार्थं वर्तते तत्र कौण्डिन्यन्यायस्यानित्यतां ज्ञापयितुमिति प्राग्व्याख्यातत्वात्। किंच। नित्यं कौटिल्ये गतावित्यत्रापि वे त्यनुवर्तते। अन्यथा गत्यर्थेभ्यो नित्यं यङ् स्यादिति। स्वार्थे इति। कंड्वादिभ्यो यक् स्यात् कृदर्थे इति प्राचोक्तमयुक्तमिति भावः। द्विधा इति। यकः कित्त्वेन धातव इति ज्ञायते। कंडूञ् इति दीर्घपाठेन प्रातिपदिकान्यपीति। यदि तु धातव एव स्युस्तर्हि ह्रस्वांते पठितेपि यकि परे अकृत्सार्वेति दीर्घेण कंडूयतीत्यादिसिद्धेः किं तेन दीर्घपाठेन। द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्त्वं सार्थकं। कंड्वित्यादिपूर्वहितरूपसिद्ध्यादौ दीर्घपाठोपि सार्थकः। अत एवोक्तं भाष्ये। धातुप्रकरणा द्धातुः कस्य चासंजनादपि। आह चायमिमं दीर्घं मन्ये धातुर्विभाषित इति। एतेन कंडूं करोति कंडूयति इति प्राचोक्तविग्रहोपि परास्तः। कंड्वादयः प्राति पदिकान्येवेत्यनभ्युपगमात्। न च द्वैविध्याभ्युपगमेपि प्रातिपदिकादेव यक् स्यादिति वाच्यं। तथा हि सति धातो लंडादौ कंडूवतीत्याद्यनिष्टप्र संगात्। सुखदुःखादिप्रातिपदिकेभ्यो यकि अच्छोपासंभवेन सुख्यतीत्याद्यसिद्धिप्रसंगाच्च। यत्तु केश्चित् शब्दवैरकलहेतिसूत्रात् करण इत्य नुवर्तनात् कृदर्थे यमिति प्राचोक्तव्याख्यानं किंचित् बाधकमित्युक्तं तच्चिंत्यं। अनुवृत्तौ मानाभावात्। अन्यथा णिजंतेष्विव प्रकृतिप्रत्ययाभ्यां पारद्वयापत्तेरिति दिक्। इर्वभाव इति। इर्वत्वमित्यर्थः। लेटितेति। यस्य हल इति यलोपः। सुख्यतीति। उरादौ तु सुखदुःखतत्क्रियायां सुखयतीत्यादयु दाहृतं। सपर। यगंतादप्रत्ययाद्गुरोश्च हल इत्यनेन वा अप्रत्यये टाप्। सपर्या। अररं आराप्रतोदः। तत्करणं कंकार्म आराकर्म। अदंतो यमिति। लेख्य ति। आदंतपक्षे तु लेखायति। महीङ्। प्रेत्य स्वर्गे महीयत इति रामायणं। प्रसृतावीति। प्रसृतिः परिमाणविशेषः। प्रभूतभावे इति। बाहुल्य इत्यर्थः। प्र भूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु इत्यमरः। संभूयस्यति। असंभूयसीत्। नइह संगावस्य पृथक्कृतिर्यत्र प्रातिपदिकावृत्तसंज्ञाप्रयोजकप्रत्ययस्य विधानं तत्रैव पृथक्कृतिरित्याहुः। आकृतिगण इति। तेन दुवस्यं दीपन इत्यादिसिद्धं। प्रयुज्यते च सभि आ यिंदुवस्यत इत्यादि॥ इति कंड्वादयः॥

प्रशास्यं। प्राशशासत्। पृथक्कृतेरिति। तेन विशिष्टस्य स्थानिनोऽभावात् नादेशाविमौ भवत इत्यर्थः। ज्ञापयतीति। हस्वश्चेति ज्यादेशः। सच प्रियस्थिरेति वर्षी देशेन सह विकल्प्यत इत्याह। वर्षयतीति। लुङि। अजिज्ञपत्। अववर्षत्। प्रियं। अपिप्रयत्। स्थिरं। अतिस्थपत्। सस्यादेशावयवत्वात् षत्वं न। स्फिरं अपिस्फपत्।

कण्ड्वादिभ्यो यक्। ३। १। २७॥ एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे। धातुभ्यः किम्। प्रातिपदिकेभ्यो मा भूत्। द्विधा हि कण्ड्वादयः। धातवः प्रातिपदिकानि च। कण्डूञ् गात्रविघर्षणे। कण्डूयति। कण्डूयते। मन्तु अपराधे। रोष इत्येके। मन्तूयति। चन्द्रस्तु जितमाह। मन्तूयते। वल्गु पूजामाधुर्ययोः। वल्गूयति। असु उपतापे। असू असूञ् इत्येके। अस्यति। असूयति। असूयते। लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च। दीप्तावित्येके। लेट्यति। लेटिता। लोट्यति। लोटिता। लेला दीप्तौ। इरस् इरज् इरञ् ईर्ष्यायाम्। इरस्यति। इरज्यति। हलि चेति दीर्घः। ईर्ष्यति। ईर्ष्यते। उषस् प्रभातीभावे। वेट् धौर्त्ये स्वप्ने च। मेधा आशुग्रहणे। मेधायति। कुषुभ क्षेपे। कुषुभ्यति। मगध परिवेष्टने। नीचदास्य इत्यन्ये। तन्तस पम्पस दुःखे। सुख दुःख तत्क्रियायाम्। सुख्यति। दुःख्यति। सुखं दुःखं वाऽनुभवतीत्यर्थः। सपर पूजायाम्। अरर आराकर्मणि। भिषज् चिकित्सायाम्। भिष्णज् उपसेवायाम्। इषुध शरधारणे। चरण वरण गतौ। चुरण चौर्ये। तुरण त्वरायाम्। भुरण धारणपोषणयोः। गद्गद वाक्स्खलने। एला केला खेला विलासे। इलेत्यन्ये। लेख स्खलने च। अदन्तोऽयमित्यन्ये। लेख्यति। लिट् अल्पकुत्सनयोः। लिट्यति। लाट जीवने। हृणीङ् रोषणे लज्जायां च। महीङ् पूजायाम्। महीयते। पूजां लभत इत्यर्थः। रेखा श्लाघासादनयोः। द्रवस परितापपरिचरणयोः। तिरस् अन्तर्द्धौ। अगद नीरोगत्वे। उरस् बलार्थः। उरस्यति। बलवान् भवतीत्यर्थः। तरण गतौ। पयस् प्रसृतौ। सम्भूयस् प्रभूतभावे। अम्बर सम्बर सम्भरणे। आकृतिगणोऽयम्॥ इति कण्ड्वादयः॥

रमिति। वरादेशे कृते संज्ञापूर्वकविधेरनित्यत्वाद्धातुलकाद्वा माधवेन विकल्पेन उपधावृद्धिरुदाहृतेति स्वयमपि तथैवाह। वरयति वारयतीति। अवीवरत् वहयतीति। अग्लोपित्वाद्वववहत्। गरयतीति। अजीगरत्। त्रपयतीति। अतित्रपत्। द्राघयतीति। अदद्राघत्। दृंहयतीति। अदढ़ंहत्॥ इति नामधातुप्रक्रिया॥ कण्ड्वादिभ्यो यक्। धातो

तस्यात्मनेपदमित्यर्थः। कर्त्तरि कर्म। अन्यस्येति। शूद्रस्य योग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः। परस्परकरणमपि कर्मव्यतिहारः। संप्रहरंतेराजानः। पृथक्सूत्रारंभादेव सिद्धे कर्तृग्रहणमुत्तरार्थं। व्यतिस्ते इति। यच्चृत्वाभावान्नषः। व्यतिस इति। उपसर्गप्रादुर्भ्यामिति नेह षत्वं। सकारस्यास्य वृयवत्वाभावात्। आदेशप्रत्यययोरिति षत्वं तु सात्पदाद्योरिति निषिद्धं। एकदेशविकृतन्यायेन प्रत्ययमात्रस्य पदत्वात्॥ ॥ नगतिहिंसार्थेभ्यः अर्थशब्दः प्रत्येकमभिसंबध्यते। कर्मव्यतिहारे यदात्मनेपदं तस्य निषेधः। अर्थग्रहणसामर्थ्यात् येशब्दांतरमनपेक्ष्य गतिहिंसयोर्वर्त्तंते तेन एवेह गृह्यंते। हरतिस्तु उपसर्गवशात् हिंसायां वर्त्तते इति हरतेरप्रतिषेधः इति वार्त्तिकमर्थग्रहणलभ्यमेवेत्याहुः। इतरेतरान्नित्ति इतरेतरादिशब्दैरेव कर्मव्यतिहारस्य द्योतितत्वात् तद्द्योतकमात्मनेपदं न प्राप्नो-

नगतिहिंसार्थेभ्यः ॥१।३।१५॥ व्यतिगच्छन्ति। व्यतिघ्नन्ति। प्रतिषेधे हसादीनामुपसंख्यानम्। हसादयो हसप्रकाराः शब्दक्रियाः। व्यतिहसन्ति। व्यतिजल्पन्ति। हरतेरप्रतिषेधः। संप्रहरन्ते राजानः। इतरेतरान्योऽन्योपपदाच्च ॥१।३।१६॥ परस्परोपपदाच्चेति वक्तव्यम्। इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति। नेर्विशः ॥१।३।१७॥ निविशते॥ परिव्यवेभ्यः क्रियः ॥१।३।१८॥ अकर्त्रभिप्रायार्थमिदम्। परिक्रीणीते। विक्रीणीते। अवक्रीणीते। विपराभ्यां जेः ॥१।३।१९॥ विजयते। पराजयते ॥ ॥

तीति किमर्थो निषेधः अत्राहुः।

लौकिके व्यवहारे लाघवानादरादात्मनेपदं प्रसज्येतेति निषेधोयमारभ्यते। अत एव व्यतिलुनीत इत्यादौ कर्मव्यतिहारद्योतनाय व्यतीत्युपसर्गो वात्मनेपदं च समभिव्याहृत्य प्रयुज्यत इति। नेर्विशः। नेः किं। प्रविशति। अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणं। तेनेह न। मधूनि विशंति भ्रमराः। इत्युक्त्वा मैथिली भर्तुरंके निविशतीभयादित्यत्र तु अंगानि विशती तिपाठ्यम् न च पदसंस्कारपक्षे त्वं के निविशती इति पाठेऽप्यदोष इति वाच्यं। त्वं करोति भवान् करोषीत्यादिप्रयोगस्यापि त्वदुक्तरीत्या साधुत्वापत्तेः। वालिप्रायामित्यादेर्वैयर्थ्यापत्तेश्च। स्यादेतत्। न वा उदस्यामतनुर्न्यविक्षते त्यत्रात्मनेपदं न स्यात् अटा व्यवधानात्। न च स्वांगमव्यवधायकमिति वाच्यं। अंगभक्तस्याटो विकरणविशिष्टस्याच यतत्वेपि धातोरनवयवत्वादिति चेत्। अत्राहुः।

स्नुनमामिति निषेधः। उक्तप्रयोगानुरोधात् द्विकर्मकेषु गौणस्यैव कर्मणः कर्तृत्वविवक्षा न मुख्यस्येत्याहुः। अन्ये त्वेवमवधेयम्। अधिकरणत्वाविवक्षायां व्रजो
गौणकर्मेति रुणद्धि व्रजो गां स्वयमेवेति भवति। यदा तु व्रजस्य न कर्मत्वं तदा मुख्यकर्मणोऽपि कर्तृत्वविवक्षा भवति। रुध्यते व्रजे गौः स्वयमेवेति। तथा गोः सम्प्रदा
नत्वविवक्षायां गौर्दुग्धे पयः स्वयमेवेत्यादि। कर्मवत्कर्मणा। वत्करणं किमर्थम्। यथा अब्रह्मदत्ते प्रयुज्यमानो ब्रह्मदत्तशब्दः ब्रह्मदत्तवदित्यर्थं वदति तथा
कर्मेत्युच्यमानेऽपि कर्मवदित्यर्थलाभात्। सत्यं। कर्मणा तुल्यक्रियः कर्ता कर्मेत्युच्यमाने कर्मसंज्ञक इत्यर्थः स्यात्। तथा हि सति अकर्मकव्यपदेशाभावात् भावे
लकारो न स्यात्। किं तु कर्मणि स्यात्। पच्यते ओदनः भिद्यते काष्ठमिति। यद्यप्ययं प्रयोगः सिद्धान्ते इष्ट एव तथापि पच्यते ओदनेन भिद्यते काष्ठेनेति भावे न स्या
दिति बोध्यम्। कर्मशब्देनात्र कर्मस्था क्रिया लक्ष्यत इत्याह। कर्मस्थयेति। कर्मकारकस्थयेत्यर्थः। कर्तरि शबित्यतः कर्तरीत्यनुवर्त्य प्रथमया विपरिणम्य तु
ल्यक्रियस्य विशेष्यस्तदाह तुल्यक्रियः कर्तेति। कार्यातिदेशोऽयमिति। यद्यपि शास्त्रातिदेशेऽपि लक्ष्यं सिध्यति तथापि शास्त्रस्यापि कार्यार्थतया मुख्यत्वात् कार्यातिदे
श एवाश्रितः। भावे लकार इति। तत्र कर्तुरनभिहितत्वादिति भावः। हिलकारकादिति। व्यत्ययो बहुलं लिङ्याशिष्यङिति संहितया पाठेऽनुस्वारस्य परस
वर्णेन जाते लकारे तस्योपरि लड्यमित्यर्थः। तेन लकारवाच्यः कर्ता कर्मवदित्यर्थलाभाद्यगादिकमेव भवति न तु द्वितीयेत्यभिमतसिद्धिः। यत्र लकारवा
च्यः कर्ता तत्रैव कर्मवत्त्वमिति व्युत्पादनस्य फलमाह। अत एवेति। न भवन्तीति। लकारेण न कर्मकर्तुरुपस्थानात् कृत्यादीनां प्रसक्तिर्नास्त्युक्तार्थानामप्रयो
गात्। लविधेः पूर्वं तु सुतरां नास्ति लकारोपस्थाप्यकर्तुरभावेन कर्मवत्त्वाभावादिति भावः। अत्रेदं बोध्यम्। कृत्यक्तखलर्था इत्यत्र क्तग्रहणात्त्यक्तुमुचितं तत
स्य कर्मकर्तरि इष्टत्वात् भिन्नः कुसूलः स्वयमेवेति। वक्ष्यति च स्वयमपि सिनोतेर्ग्रासकर्मकर्तृकस्येति वार्तिके सिनो ग्रासः स्वयमेवेति। ननु गत्यर्था
कर्मकेत्यत्राविवक्षितकर्मणोऽकर्मकत्वमिति न स्यात् ते दत्तवान् पक्ववान् इत्यर्थे दत्तः पक्व इत्यापन्ने इति चेत्। अत्राहुः। सिनोतेर्ग्रासकर्मकर्तृकस्येति नि
ष्ठातकारस्य नकारविधानसामर्थ्यादविवक्षितकर्मणोऽपि क्वचित् इष्यन्ते। अन्यथा निष्ठातकारस्तत्र न लभ्येत तेन सिनो ग्रासः स्वयमेव भिन्नः कुसूलः ॥

कर्मणास्त्विति। सौकर्यातिशयं द्योतयितुमित्यनुषंगः। प्रायेणेति। येभिदिच्छिदिप्रभृतय एककर्मकास्ते अकर्मकाः। ये तु द्विकर्मकास्ते सकर्मका इति भावः। अकर्म-
कत्वस्य फलमाह। भावे कर्तरि चेति। भावे चाकर्मकेभ्य इत्युक्तत्वादिति भावः। द्विकर्मकेषु कर्मणः कर्तृत्वविवक्षायामुदाहरणं। मथ्नाति सागरो ऽमृतं। स्वयं प्रदुग्धे

यदा तु सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते। स्वव्यापारे स्वतन्त्रत्वात्। तेन पूर्वेङ्क्त रणा-
त्वादि सत्त्वेपि सम्प्रति कर्तृत्वात् कर्तरि लकारः। साध्वसिश्छिनत्ति। काष्ठानि पचन्ति। स्थाली पचति। कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्म-
का अपि प्रायेणाकर्मकास्तेभ्यो भावे कर्तरि च लकाराः। पच्यते ओदनेन। भिद्यते काष्ठेन। कर्तरि तु। कर्मवत् कर्मणा तुल्यक्रियः। ३।१।८७। कर्मस्थ-
या क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात्। कार्यातिदेशोऽयम्। तेन यगात्मनेपद चिण्चिण्वदिटः स्युः। कर्तुरभिहितत्वात् प्रथमा। पच्यते ओदनः
। भिद्यते काष्ठम्। अपाचि। अभेदि। ननु भावे लकारे कर्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न। लकारवाच्य एव कर्ता कर्मवत्। लिङ्याशिष्यङि-
ति द्विलकारकाद्नुवृत्तेः। भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः। अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति किन्तु भाव एव। भेत्तव्यं
कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनञ्च। सैवेदानीं कर्तृस्था न तु तत्तुल्या। सत्यं। कर्मत्वकर्तृत्वावस्थाभेदोपाधि-
कं तत्समानाधिकरणं क्रियाया भेदमाश्रित्य व्यवहारः। कर्मणेति किम्। करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत्।
किन्त्वा कर्तृस्थक्रियेभ्यो मा भूत्। गच्छति ग्रामः। आरोहति हस्ती। अधिगच्छति शास्त्रार्थः। स्मरति श्रद्दधाति चायत्र कर्मणि क्रियाकृतो विशे-
षो दृश्यते यथा पच्येषु तण्डुलेषु यथा वाच्छिन्नेषु काष्ठेषु तन्न कर्मस्था क्रिया। नेतरत्रा न हि पक्वापक्वात्तण्डुलेष्विव गतागतग्रामेषु वैलक्षण्य-
मुपलभ्यते। करोतिरुत्पादनार्थः। उत्पत्तिश्च कर्मस्था। तेन कारिष्यते घट इत्यादि यत्नार्थत्वे तु नेत्यसिद्धो न। ज्ञाने च्छादिवद्यत्नस्य कर्तृस्थत्वात्

स्यग्रोरु पस्नुता वत्सूपमानस्य वत्सूनि मे दिनीति। प्रदुग्धे इत्यत्र कर्मवत् कर्मणेति शासनस्य सकर्मकाणामिति निषेधे दुहिपच्योरिति प्रतिप्रसूतस्य यकोनदुह

च्छिल्यादावपि वैलक्षण्यं नोपलभ्यते इति बोध्यं। कारिष्यते इति। स्यसिच्सीयुट्तासिषु इति वैकल्पिकः चिण्वदिट्। पक्षे ऋद्धनोः स्ये इति इट्। कारिष्यते। एवं लृङि अकारिष्यत अकरिष्यत सिचि च्लि एवदिट् अकारिष्ट। पक्षे अकृत। सीयुटि च्लिण्वदिट्। कारिषीष्ट। पक्षे कृषीष्ट। तासि तु कारिता कर्त्ता। यत्र चिणो लुङ् क्रियते घटः स्वयमेव। अकारीत्यादि। नैतत्सिद्ध्येदिति। कर्मवत्कर्मणेति कर्मवत्त्वं न सिध्येदित्यर्थः। एतेन पचति पाकं करोतीति विवरणाद्व्याख्यातस्य यत्ने शक्तिरिति नैयायिकोक्तिः परास्ता। करोतेर्यत्नार्थत्वे तु यतते इतिवत् सकर्मकता पि न स्यादिति॥ ॥ एतेनेति। त्वानस्य कर्तृस्थत्वाभ्युपगमेनेत्यर्थः। यगभावादिति। सति तु यक्यनव्यवसीयमान इति स्यादिति भावः। ओलोप इति। ओतः श्यनीत्यनेन। ननु कर्मवत्त्वाभावे कथमिह शानजित्यत आह। ताच्छील्यादाविति॥

एतेन अनुव्यवस्यमानेऽर्थे इति व्याख्यातम्। कर्तृस्थत्वेन यगभावाच्छ्यनि कृते ओलोपे च रूपसिद्धेः। ताच्छील्यादावयं चानश् न त्वात्मनेपदं। सकर्मकाणां प्रतिषेधो वक्तव्यः। अन्योन्यं स्पृशतः। अजा ग्राममन्नयति। दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यं। न दुह स्नु नमां यक्चिणौ। ३।१।८९। एषां कर्मकर्तरि यक् चिणौ न स्तः। दुहेरनेन यक एव निषेधः। चिण् तु विकल्पिष्यते। शप्लुक्। गौः पयो दुग्धे। अचः कर्मकर्तरि। ३।१।६२। अजन्तात् च्लेश्चिण् वा स्यात्कर्मकर्तरि तशब्दे परे। अकारि अकृत॥ ॥

॥ नत्विति। शानच् न भवतीत्यर्थः। देवदत्तयज्ञदत्तावन्योन्यं स्पृशत इत्यत्र तयोरेव कर्मत्वं कर्तृत्वं चास्ति इति कर्मस्थक्रियायाः कर्तृस्थत्वात्कर्मवद्भावप्राप्तिमाशंक्याह सकर्मकाणामिति। न चात्र देवदत्तो यज्ञदत्तं स्पृशति यज्ञदत्तस्तु देवदत्तमिति क्रियाभेदोऽवश्यमाश्रयितव्यः। तथा च स्वनिष्ठक्रियां प्रति कर्तृत्वं इतरक्रियां प्रति तु कर्मत्वं भवति। अन्यथा द्वयोरपि कर्तृत्वमेव स्यात्। इमौ गंगां स्पृशत इत्यत्र यथा। एवं च कर्मस्थक्रियायाः कर्तृस्थत्वाभावात्कर्मवद्भावो न प्राप्नोति। न च संयोगस्य द्विष्ठत्वात्कर्मस्थफलस्य कर्तृस्थत्वमस्त्येवेति शंक्यं। तत्तन्निरूपितसंयोगस्य भिन्नत्वात्। अन्यथा फलव्यापारयोरेकाश्रयत्वे सकर्मकत्वमेव न लभ्येत। किंच। रुहिगम्योः कर्तृस्थक्रियत्वादारोहति हस्ती गच्छति ग्राम इत्यत्र कर्मवद्भावो नेति भाष्यकैयटादिसंमतं। तथा च संयोगरूपफलस्य सर्वत्र तुल्यतया रुहिगमिभ्यां स्प

स्वयमेवेत्यादि संगच्छते इति। अत्र केचिद्वदन्ति। लकारवाच्यस्यैव कर्तुः कर्मवत्त्वे कर्मवत्कर्मणेत्यत्र वत्ग्रहणं व्यर्थं। न च कर्तुः कर्मसंज्ञायां भावे लकारो न
स्यादित्युक्तमिति वाच्यं। कर्मणः कर्तृत्वविवक्षायां धातुरकर्मक इत्यकर्मकात्कर्तरीव भावे लकारस्य निर्बाधत्वात्। लकारवाच्यस्य कर्मसंज्ञायामपि केव
लकर्तुस्तदनभ्युपगमात्। नहि भावे लकारः कर्तारं वक्ति। न च वत्करणाभावे कर्तुः कर्मसंज्ञायां कर्तृव्यपदेशाभावात् नमते दंड इत्यत्र नद्रुहस्नु
नमामिति यक्चिणोर्निषेधे पि शप्न स्यात्तत्करणे कृते तु कर्तृकार्यमपि स्यादिति वाच्यं। एकसंज्ञाधिकारादन्यत्र संज्ञाद्वयसमावेशादिष्टसिद्धेरिति।
न तु तत्तुल्येति। तुल्यत्वं हि सादृश्यं तच्च भेदनिबंधनं। न च प्रकृते भेदोस्ति। कर्मणः कर्तृत्वविवक्षायां कर्मस्थफलरूपक्रियाया एव कर्तृस्थत्वात्। त
थाच सूत्रमिदमसमंजसमिति भावः। वास्तविकभेदाभावेप्यौपाधिकभेदोस्तीत्याह। कर्मत्वेति। कर्मत्वकर्तृत्वावस्थयोर्भेदस्तद्भेदौपाधिकं अवस्था
भेदसमानाधिकरणं क्रियाभेदमाश्रित्येत्यर्थः। एवं चावस्थाभेदेन क्रियाभेदात्कर्मस्थक्रियातुल्यक्रियत्वं कर्तुरस्तीति भावः। करणाधिकरणाभ्या
मिति। तुल्यक्रियः कर्तेत्येतावत्युच्यमाने असिना छिनत्ति स्थाली पचतीत्यादौ करणाधिकरणयोर्यो व्यापारस्स एव इदानीमसिः छिनत्ति स्थाली पच
तीत्यादौ कर्तृस्थ इत्यतिप्रसंगः स्यात्तन्माभूदित्यर्थः। न च कर्मत्वावस्थायां विच्छित्त्यादिरिव करणत्वावस्थायामसिस्थाल्योर्व्यापारो वस्तुतः सन्नपि
धातुनानोपात्त इति कथमतिप्रसंग इति वाच्यं। सादृश्यप्रतियोगिक्रियाया धातूपात्तत्वेनाविशेषितत्वात्। न त्वेतस्मिन्सूत्रे धातूपात्तक्रियया तुल्य
क्रिय इत्युक्तमस्ति येनातिप्रसंगो न भवेत्। ननु तुल्यक्रियः कर्ता कर्मवद्भवतीत्युक्ते केनेत्याकांक्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्यास
त्त्या कर्मणेति लभ्यत एवेत्यत आह। किं चेति। अभिगच्छतीत्यादिश्लोकस्योत्तरार्द्धं तु यत्कृपावशतस्तस्मै नमोस्तु गुरवे सदा। ननु फलव्यापारयोर्धा
त्वर्थः स एव क्रियाशब्दवाच्यः। तत्र व्यापाराश्रयः कर्ता फलाश्रयस्तु कर्म। एवं च पच्विभिदिप्रभृतीनां गमिरुहिप्रभृतीनां च सकर्मकत्वे फलस्य कर्मनिष्ठ
त्वे च तुल्ये कर्तृस्थभावकागम्यादय इति कथं ज्ञातव्या इत्यत आह। यत्र कर्मणीति। ग्रामेष्विति। आरूढा नारूढहस्तिषु अधिगता नधिगतशास्त्रार्थे

दुहश्चाकर्मकर्तरीत्येव। अदोहि गौर्गोपेनेत्यत्र तु नित्यं। उदुम्बरः फलमिति। कालः उदुम्बरं फलं पचतीति स्थितेः गौणकर्मण उदुम्बरस्य कर्तृत्वविवक्षायामिह कर्मवद्भावः। ननु द्विकर्मकेषु पचेः सामग्रीकः पाठ इति येवदन्ति तेषाम यं ग्रन्थः कथं संगच्छते इति चेत्। अत्राहुः। उदुम्बरः फलं पचतीत्यत्र कर्मवत्कर्मणेत्यस्य प्राप्तौ दुहिपच्योरित्यनेन कर्मवद्भावो बहुलं विधीयते सृजि युज्योरिवेति न काप्यनुपपत्तिरिति। सृजि युज्योः श्यंस्तु। श्यनो नित्यमाद्युदात्तार्थो यकि तु तास्व

दुहश्च। ३।१।६३॥ अदोहि। पक्षे क्तः। लुग्वेति पक्षे लुक्। अदुग्ध अधुक्षत। उदुम्बरः फलम्पच्यते। सृजि युज्योः श्यंस्तु। अनयोः सकर्मकयोः कर्ता बहुलं कर्मवत्। यगपवादश्च श्यन्वाच्यः। त्यर्थः। सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्। सृज्यते स्रजं भक्तः। श्रद्धूपानिष्पादयतीत्यर्थः। असर्जि। युज्यते ब्रह्मचारी योगम्। भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्॥ भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् नेति वाच्यमित्यर्थः। अलङ्कुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीष्ट। गिरते अगीर्ष्ट। आद्रियते। आदृत। किरादिस्तुदादयन्तर्गणः। चिकीर्षते कटः। अचिकीर्षिष्ट। इच्छायाः कर्तृस्थत्वेपि करोतिक्रियापेक्षमिह कर्मस्थक्रियात्वम्॥ न रुधः। ३।१।६४॥ अस्माच्चिण्न। अवारुद्ध गौः। कर्मकर्तरीत्येव। अन्वरोधि गौर्गोपेन। तपस्तपः कर्मकस्यैव। ३।१।८८। कर्ता कर्मवत्स्यात्। नियमार्थमिदं। एवकारस्त्वर्थ एवेति वृत्त्यनुसारिणः। तप्यते तपस्तापसः। अर्जयतीत्यर्थः। तपोनुतापे चेति चिण्निषेधात्सिच्। अतप्त। तपः कर्मकस्येति किं। उत्तपति सुवर्णं सुवर्णकारः। न दुहस्नुनमां यक्चिणौ। प्रस्नुते। प्रास्नोष्ट। नमते दण्डः। अनंस्त। अन्तर्भावितण्यर्थोऽत्र नमिः। यक्चिणोः प्रतिषेधे हेतु

दात्तेत्यादिना लसार्वधातुकानुदात्तत्वे कृते पकउदात्तत्वं श्यनैवाश्रद्धोपपन्न इति। अश्रद्धायुक्ते कर्तरि तु यगेव। भूषाकर्मेति। कर्मशब्दः क्रियावाचीत्याह। भूषावाचिनामिति। अन्यत्रेति। आत्मनेपदादन्यस्य निषेधः आत्मनेपदमेव भवतीत्यर्थस्तदेतदाह अवाकीर्ष्टेति। लिङ्सिचोरिति वेट्। आद्रियत इति। तुदादित्वाच्छे रिङ्शयग्लिङ्क्षु इति रिङ् इयङ्। आदृतेति। उश्चेति कित्वं। ह्रस्वादङ्गादिति सिचो लोपः। न रुधः। चिण्ते पद इत्यतश्चिण्णनुवर्तते ।

॥ ॥

शेवैषम्यं दुरुपपादमिति नात्र कर्मवत्त्वप्रसक्तिरित्युदाहरणांतरमाह। अजेति। ग्रामं नयतीति। इह प्रतिषेधाभावे यक्स्यात् क्रियाफलस्याकर्तृगामित्वे
प्यात्मनेपदं स्यादिति भावः। नन्विहापि कर्मणि क्रियाकृतो विशेषो नोपलभ्यत इति कर्मस्थक्रियत्वं दुरुपपादमिति चेत्। अत्राहुः क्रियाकृतविशेषोपलं
भात् पूर्वं भवदुद्देश्यतापि नियामिका। यत्र कर्मस्थांशस्योद्देश्यता सा कर्मस्थक्रिया यत्र तु व्यापारांशस्य सा कर्तृस्थेति। तथाहि। दर्शनारोहणाभ्यां विषयेन्य
गभूते च विशेषानुपलंभात् कर्तृस्थता। उद्देशान्तरो यथा च। अहं पश्येयमित्युद्देशो न त्वयं विषयो भवत्विति। एवमहमुपरिगच्छेयमित्युद्देशो न तु हस्तिनोऽन्यग
भावो भवत्विति। ऊर्ध्वदेशसंयोगानुकूलव्यापारविशेष उपरिगमनं तदेव रुहेरर्थः। न तु न्यग्भावमात्रं। वृक्षस्य शाखां हस्ताभ्यामवनमयत्यपि भूमिष्ठे पुरुष
आरोहतीत्यप्रयोगात्। अत एव हि यद्विजुपरंक्तुंदसीत्यत्र भाष्यं रुहिर्गत्यर्थ इति। अत एव चारोहंति हस्तिनं हस्तिपकाः स्तानारोहयति महामात्र इत्यादिप्र
योगेष्वणौ कर्तुर्णौ कर्मत्वं संगच्छते। पच्चिभिद्योस्तु विक्लृप्तिर्द्विधाभवनरूपो विशेषः कर्मणि दृष्टस्तदुद्देशेनैव कारकव्यापार इति कर्मस्थक्रियत्वात् पच्यते
ओदनः भिद्यते काष्ठमित्यत्र कर्मवद्भावो भवत्येव। अजा ग्रामं नयतीत्यत्रापि कर्मस्थांशस्य संयोगस्योद्देश्यता न तु व्यापारांशस्येति कर्मवद्भावे प्राप्ते प्रतिषेधोऽ
यमावश्यक इति दिक्। दुहिपच्योरिति। द्विकर्मकत्वादनयोरेकस्य कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वान्निषेधे प्राप्तेऽयमारंभः। गोः पयो दुग्धे इति। अत्र
कर्मवत् भावेन आत्मनेपदं नित्यं गौणे कर्मणि दुह्यादेरित्युक्तत्वात् मुख्यकर्मणः कर्तृत्वविवक्षया पयो गां दुग्धे इति नोदाहृतमित्याहुः। एवं च प्रधाने नीहृकृ
ष्वहामित्युक्तत्वात्तुल्यन्यायेन न्यादीनां मुख्यकर्मण एव कर्तृत्वविवक्षेति फलितं। अचः कर्मा। चिण्ते पद इत्यतश्चिण् ते शब्दावनुवर्तेते दीपजनेत्यतो
ऽन्यतरस्यामिति च तदाह। अजंतादित्यादि। अचः किं। अभेदि काष्ठमत्र नित्यं चिण्। कर्मकर्तरि किं। अकारि घटः कुलालेन। अत्रापि नित्यमेव ॥ ॥

॥ ॥

॥

मू०। प्रष्टव्यः प्रश्नः। आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्तः। अगच्छत्किम्। जगाम किं। अनासन्ने तु। कंसं जघान किम्। लट् स्मे।३।२।११८।
लिटोपवादः। यजति स्म युधिष्ठिरः। अपरोक्षे च।३।२।११९॥ भूतानद्यतने लट् स्यात् स्मयोगे। एवं स्म पिता ब्रवीति। ननौ पृष्टप्रतिवचने।३।२।१२०॥ अन
द्यतनपरोक्ष इति निवृत्तम्। भूते लट् स्यात्। अकार्षीः किम्। ननु करोमि भोः। नन्वोर्विभाषा।३।२।१२१॥ अकार्षीः किम्। न करोमि ना कार्षम्। अहन्नु करो
मि। अहन्न्वकार्षम्॥ पुरि लुङ् चास्मे।३।२।१२२॥ अनद्यतनग्रहणं मण्डूकप्लुत्यानुवर्त्तते। पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् चाल्लट् न तु स्मयोगे प
क्षे यथाप्राप्तम्। वसन्तीह पुरा छात्राः। अवात्सुः। अवसन्। ऊषुर्वा। अस्मे किम्। यजति स्म पुरा। भविष्यतीत्यनुवर्त्तमाने। यावत्पुरानिपातयोर्लट्।३।३।
४॥ यावद्भुङ्क्ते। पुरा भुङ्क्ते। निपातावेतौ निश्चयं द्योतयतः। निपातयोः किम्। यावद्दास्यते तावद्भोक्ष्यते। करणभूतया पुरा यास्यति॥ विभाषा कदाक
र्ह्योः।३।३।५॥ भविष्यति लट् स्यात्। कदा कर्हि वा भुङ्क्ते। भोक्ष्यते। भोक्ता वा। किंवृत्ते लिप्सायाम्।३।३।६॥ भविष्यति लड्वा स्यात्। कं कतर
तमं वा भोजयसि। भोजयिष्यसि। भोजयितासि वा। लिप्सायां किम्। कः पाटलिपुत्रं गमिष्यति। लिप्स्यमानसिद्धौ च।३।३।७। लिप्स्यमानेनान्न
दानस्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लड्वा स्यात्। योऽन्नं ददाति। दास्यति दाता वा। स स्वर्गं याति। यास्यति। याता वा। लोडर्थलक्षणे च।३।३।८॥
लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानाद्धातोर्भविष्यति लड्वा स्यात्। कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय। पक्षे लट्लृटौ। लिङ् चोर्द्ध्वमौहूर्त्ति
के।३।३।९॥ ऊर्ध्वं मुहूर्त्ताद्भवः ऊर्ध्वमौहूर्त्तिकः निपातनात्समासः। उत्तरपदवृद्धिश्च। ऊर्ध्वमौहूर्त्तिके भविष्यति लोडर्थलक्षणे वर्त्तमानाद्धा
तोर्लिङ्लटौ वा स्तः। मुहूर्त्तादुपरि उपाध्यायश्चेदागच्छेत्। आगच्छति। आगमिष्यति। आगन्ता वा। अथ त्वं छन्दोऽधीष्व० ॥ ॥

॥ ॥

मू०१ मस्मिश्रिब्रूञामुपसंख्यानम्। कारयते। अचीकरत। उत्पुच्छयते दण्डः। उदशिश्रियत। चिण्वदिट् तु स्यादेव। कारिष्यते। उच्छ्रायिष्यते। ब्रूते कथा। अवोचत। भारद्वाजीयाः पठन्ति। णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्॥ उत्पुच्छमुदस्यति। उत्पुच्छयते गौः। अन्तर्भावितण्यर्थतायाम् उत्पुच्छयते गाम्। पुनः कर्तृत्वविवक्षायाम्। उत्पुच्छयते गौः। उदपुपुच्छत। यक्चिणोः प्रतिषेधाच्च पूर्ववत्। श्रन्थिग्रन्थ्योः राधषीयत्वात् क्लिजभावपक्षे ग्रहणम्। ग्रन्थति ग्रन्थम्। श्रन्थति मेखलां देवदत्तः। ग्रन्थ्यते ग्रन्थः। अग्रन्थिष्ट। श्रन्थ्यते। अश्रन्थिष्ट। क्र्यादिकयोस्तु। श्रथ्नीते। ग्रथ्नीते स्वयमेव। विकुर्वते सैन्धवाः। वल्गन्तीत्यर्थः। वेः शब्दकर्मणोऽकर्मकाच्चेति तङ्। अन्तर्भावितण्यर्थस्य पुनः प्रेषणत्यागे। विकुर्वते सैन्धवाः। व्यकारिष्ट। व्यकारिषाताम्। व्यकारिषत। व्यकृत। व्यकृषाताम्। व्यकृषत। कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च। ३।१।९०॥ अनयोः कर्मकर्तरि न यक् किन्तु श्यन् परस्मैपदं च आत्मनेपदापवादः। कुष्यति। कुष्यते पादः। रज्यति। रज्यते वस्त्रम्। यग्विषये तु नास्य प्रवृत्तिः। कोषिषीष्ट। रंसीष्ट॥ इति कर्मकर्तृप्रक्रिया॥ अभिज्ञावचने लृट्। ३।२।११२॥ स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात्। लङोऽपवादः। स्मरसि कृष्ण गोकुले वत्स्यामः। एवं बुध्यसे चेतयसे इत्यादियोगेऽपि। तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवात्। न यदि। ३।२।११३॥ यद्योगे उक्तं न। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि। विभाषा साकाङ्क्षे। ३।२।११४॥ उक्तविषये लृट् वा स्यात्। लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः। स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः। वासो लक्षणं चारणं लक्ष्यम्। पक्षे लङ्। यच्छब्दयोगेऽपि न यदीति बाधित्वा परत्वाद्विकल्पः। परोक्षे लिट्। चकार। उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्। सुप्तोऽहं किल विललाप। बहु जगद पुरस्तात्तस्य मत्ता किलाहम्॥ अत्यन्तापह्नवे लिड् वक्तव्यः। कलिङ्गेष्ववात्सीः। नाहं कलिङ्गान् जगाम। हशश्वतोर्लङ्च। ३।२।११६॥ अनयोरुपपदयोर्लिड्विषये लङ् स्यात्। चाल्लिट्॥ इति हाकरोच्चकार वा। शश्वदकरोच्चकार वा। प्रश्ने चासन्नकाले। ३।२।११७

स्लङि·त्यतः अनद्यतन इति वर्तते। अभिज्ञास्मृतिः सा उच्यते बोध्यतेऽनेनेति विग्रहस्तदाह। स्मृतिबोधिनीत्यादि। वत्स्याम इति। अवसामेत्यर्थः। पश्य
मृगो धावतीत्यत्र वाक्यार्थरूपमृगकर्तृकधावनमिव स्मरसीत्यत्र गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासो वाक्यार्थः कर्मस्त्वेषोऽति संबोध
नं स्मरणक्रियायां विशेषणं। तथाच। पूर्वोक्तनिवासकर्मकं कृष्णसंबोध्यकं स्मरणमिति फलितोऽर्थः। नयदि। लटः प्रतिषेधे उत्तरो गोलङ्। वासोऽलक्षण
मिति। प्रसिद्धत्वात् ज्ञापकमित्यर्थः। चारणं लक्ष्यमिति। सहसावध्यवारोहात् ज्ञाप्यापक्षे लङिति। वने अवसाम। गाः अचारयाम। यद्व्यत्ययोगे पीतीति।
अत एव न यदीति योगात् पूर्वं विभाषा सा काङ्क्ष इति न कृतमिति भावः। अत्यंतापन्हव इति। अपन्हवोऽपलापस्तत्र आत्यंतिकत्वं नाम धेयं दभिप्रेतास्त्वदेतो
रप्यपन्हुतिः। नाहमित्यादि। कलिंगो नाम निषिद्धो देशः। अंगवंगकलिंगेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हतीति स्मरणात्तस्मि
न्देशे त्वयागतं चिरं स्थितमिति केनचित् कश्चिदुक्तः सन्नाह। नाहं कलिंगान् जगामेति। न केवलमवस्थानमेव निषिध्यते किं तर्हि तद्देशगमनमपी
ति भवत्यत्यंतापन्हवः। यद्वा तु कलिंगेषु गतम इत्युक्तः सन्नागमनमेवापलपति न तरामत्यंतापन्हव इति लङेव भवति न कलिंगेषु गतमिति प्रश्ने च।
भूतानद्यतनपरोक्षे इति वर्तते प्रश्न इत्यत्र कर्मणि नङित्याह। प्रष्टव्य इति। आसन्नेति। पंचवर्षाभ्यंतरमासन्नकालं पंचवर्षातीतं तु विप्रकृष्टकाल
मित्याहुः। पृच्छ्यमान इति। आसन्नकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थे प्रष्टव्ये सतीत्यर्थः। प्रश्ने किं। भूतानद्यतनपरोक्षे लिडेवाजगाम
चैत्रः। लट् स्मे। स्म इत्यव्ययं भूतकालद्योतकं। ननौ। पृष्टस्य प्रतिवचनमिति विग्रहः समाहारद्वंद्वे नूभयत्र स्याश्रियते च प्रतिवचने एव लट्। तदाह
ननु करोमीति। नच पृष्टग्रहणं व्यर्थं यावता प्रश्नपूर्वकमेव प्रतिवचनं भवतीति वाच्यं। विरुद्धमपि वचनं प्रतिवचनं। वचनाभिप्रत्ययमपि प्रतिवचनमि
ति पृष्टग्रहणं कर्तव्यमिति केपरे स्थितत्वात्। नन्वोः भूतएत्येवापक्षे लुङ्। अनद्यतने तु लङ्। पक्षे यथाप्राप्तमिति। लुङ्लटोरभावपक्षे लङ्। पारो
क्ष्ये तु लिडित्यर्थः। भविष्यतीति। भविष्यति गम्यादयः इति सूत्रात्। यावत्पुरा। लक्षणप्रतिपदोक्तपरिभाषाऽनित्येति निपातग्रहणे नज्ञाप्यते।

अचः कर्मकर्तरीत्यतोऽनुवर्तनादाह। कर्मकर्तर्येवेति। अत एवेति। तपस्तापस इत्यनुषज्यते। नदुहस्नु। ननु दोग्धिपर्यायत्वेन स्नौतेरपि द्विकर्मकत्वाद्गो
रूपकर्मणः कर्तृत्वविवक्षायामपि पयोरूपकर्मणो विद्यमानत्वात्सकर्मकाणां प्रतिषेधेन यक्चिणोः प्राप्तिरेव नास्तीति चेत्। अत्राहुः। वत्सादियोगेन क्षी
रप्रस्रवणात्प्राग्या उत्कंठा स्नुधातोरर्थः। सा च गोनिष्ठा। स्नुप्रस्रवण इत्यस्यापि करणे ल्युट्। प्रस्नूयतेऽनेनेति प्रस्रवणं सा चोत्कंठा। स्वयंप्रस्नुग्व्येऽस्यगुणेरु
पस्नुता वत्स्यमानस्य वत्सं निमेदिनीति। प्रयोगे उपस्नुता उत्कंठितेत्यर्थः। वत्सो गां प्रस्नौतीति उत्कंठयति। अंतर्भावितण्यर्थोऽत्र स्नौतिः। गोः कर्तृत्वविवक्षायां प्र
स्नुते गौरिति। प्रास्नाविष्टेति। चिण्वदिट्। न च चिणि निषिद्धे चिण्वदिडपि न स्यादिति शंक्यं। चिण्वदित्यनेन हि चिणीव कार्यमतिदिश्यते। न च चिण्नेत्युक्त्या
सोऽतिदेशो निषेद्धुं शक्यते येन चिण्वदिटो निषेधः स्यात्। प्रास्नोष्टेति। स्नुक्रमोरनात्मनेपदनिमित्त इति नियमाद्वलादिलक्षण इण्न। नमते दंड इति। इह न
मितानमितयोर्विशेषदर्शनादुद्देशानुरोधाच्च कर्मस्थक्रियत्वमस्ति कर्मस्थांशस्य नमनस्य उद्देश्यता न तु तदनुकूलव्यापारस्येति कर्मवद्भावस्य प्रा
प्तिरस्तीति भावः। अचीकरतेति। णिश्रिप्रतिषिद्धे णिश्रीति चङ्। णिश्रंथीति णोः सामान्यग्रहणस्य फलमाह। पुच्छमुदस्यतीत्यादि। पुच्छभांडेति णि
ङ्। आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति। विकुर्वते सैंधवा इति। कुषिरंजोः। नदुहस्नुनमामित्यतो नेति वर्तते तदाह। न यगिति। किंतु श्यन्निति
तस्मिन्नेव विषय इति भावः। न गिरा गिरेति ब्रूयादित्यादौ रंजत्वौ हेयमित्यत्र गिरापदं प्रतिषिध्य पदं विधीयमानं गिरापदस्थान एव यथा भवत्येवमिहा
पि यकः प्रतिषेधं कृत्वा विधीयमानः श्यन् तदीयस्थान एव भवति। अतो व्याचष्टे यग्विषये तु नास्येति। श्यना सन्नियोगशिष्टं परस्मैपदं श्यनभावेन भवती
त्यात्मनेपदमेवोदाहरति। कोषिषीष्टेति। कोषिष्यते। चुकुषे। अकोषि। अकोषिष्यत। रंक्ष्यते। ररंजे। अरंजि। अरंक्ष्यत। इत्याद्यपि ज्ञेयं। श्यन्पक्षे कुष्यंतीत्यत्र
नित्यं नुम्। यक्पक्षे तु आच्छीनद्योरिति विकल्पः। स्वरे विशेषोऽप्यस्त्येव। इह प्रकरणे भिद्यते काष्ठं स्वयमेवेति वृत्त्यादौ प्रयुज्यते तत्र स्वयंशब्दः प्रकरणार्थको ज्ञे
यः। आत्मना करणेनेति। कर्त्रर्थत्वे तु कर्मणि लः स्यात्। स्पष्टं चेदं कैयटादौ॥ इति कर्मकर्तृप्रक्रिया॥ अभिज्ञा। भूते इत्यधिक्रियते अनद्यतने

आगच्छामीत्युदाहरणे भूतकालाभिव्यक्तये ऽयमिति प्रयोगस्त्विदानीमेवागतमिति वर्त्तमानसमीपभूतकालद्योतनाय। तेन त्वागमनाविनाभूतं यत् रूपं धूलीधू
सरताप्रस्वेदादि युक्तं तत् प्रतिनिर्दिश्यते एवं कदा गमिष्यसीति भविष्यत् कालेन प्रश्नवक्यं। गच्छामीत्युदाहरणे भविष्यत् कालाभिव्यक्तये। एष इति प्रयोग
स्त्विदानीमेव गमिष्यामीति वर्त्तमानसमीपभविष्यत्कालद्योतनाय। तेन हि गमनाऽविनाभूतं यत् रूपं परिकरबंधादि युक्तं तत् प्रतिनिर्दिश्यते। न च कदेति
प्रश्ने उत्तरवाक्ययोः कालाऽनुपादानात् संगतिः शंक्या। उत्तरत्रायमेषशब्दाभ्यामिदानीमिति कालावगमात्। सामीप्ये किं कदा आगतो भवान्। अस्मात्

आशंसायां भूतवच्च। ३।३।१३२॥ वर्त्तमानसामीप्य इति नानुवर्त्तते। भविष्यति काले भूतवद्वर्त्तमानवच्च प्रत्यया वा स्युराशंसाया
म्। देवश्चेद्वर्षीत्। वर्षति। वर्षिष्यति वा। धान्यमवाप्स्म। वपामः। वप्स्यामो वा। सामान्यातिदेशे विशेषानतिदेशस्तेन लङ्लिटौ न
। क्षिप्रवचने लृट्। ३।३।१३३॥ क्षिप्रपर्य्याये उपपदे पूर्वविषये लृट् स्यात्। वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति। शीघ्रं वप्स्यामः। नेति
वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात्। श्वः शीघ्रं वप्स्यामः। आशंसावचने लिङ्। ३।३।१३४॥ आशंसावाचिन्युपपदे भविष्यति लि
ङ् स्यात्। नु भूतवत्। गुरुश्चेदुपेयादाशंसेऽधीयीय। आशंसे क्षिप्रमधीयीय। नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः। ३।३।१३५॥
क्रियायाः सातत्ये सामीप्ये च लङ्लुटौ न। यावज्जीवमन्नमदाद्दास्यति वा। सामीप्यं तुल्यजातीयेनाव्यवधानम्। येयं पौर्णमास्यतिक्रा
न्ता तस्यामग्नीनाधित। सोमेनायष्ट। येयं अमावस्यागामिनी तस्यामग्नीनाधास्यते। सोमेन यक्ष्यते ॥ ॥ ॥

पूर्वस्मिन्मासे आगच्छं। एतच्च सूत्रमाकरे प्रत्याख्यातं। गंगासमीपे गंगात्वारोपवत् वर्त्तमानसमीपे वर्त्तमानत्वारोपसंभवात्॥ ❈ ॥ आशंसायां।
आशंसनमाशंसा। अप्राप्तस्य प्राप्तुमिच्छा। आशंसायां वर्त्तमानत्वेपि तद्विषयस्य वर्षादेर्भविष्यत् कालसंबंधाद्भविष्यतीत्युक्तं। आशंसायां किं। ग
मिष्यति। क्षिप्रवचने। वचनग्रहणं स्वरूपग्रहणनिरासार्थं। तदाह। क्षिप्रपर्यायइति। पूर्वविषयइति। आशंसायामित्यर्थः ॥ ० ॥ ॥

पावत्भुंक्त इति। निश्चितं भोक्ष्यते इत्यर्थः। यावद्दास्यत इति। अनद्यतनभविष्यति तु यावद्दाता तावत्भोक्ते ति प्रत्युदाहर्तव्यं। विभाषा। नन्वनद्यतने र्हिलन्यतरस्यां मित्यनद्यतने किमो र्हिल्विहितस्तत्श्च कर्हि यो गेलुट्वेव भाव्यमिति कथमुदाहियते कर्हि भोक्ष्यत इति। अत्राहुः। भविष्यत्सामान्ये भोक्ष्यते इति लृट्। कर्हि यो गे तु अनद्यतनावगतिर्लक्षणयेति। भोक्ता वेति। ननु भविष्यत्सामान्येऽपलङ्विहितस्तस्य लुटा सह कथं विकल्पो विषयभेदादिति चेत्। अत्राहुः। अनद्यतने लङि त्यत्र विभाषा कदेत्यादीनि कानिचित्सूत्राणि इहानुरोधेन अनुवर्तन्ते तेन लुङ्विषयेऽपि लङ्भवति न त्वनद्यतने लुटा लङ् वाध्यत इति। किंवृत्ते। किमा वृत्तं किं वृत्तं। केचित्तु यद्यपि कदा कुत्रेत्याद्यपि किंवृत्तं तथापि तन्न गृह्यते। अनभिधानात्। तेन कदा भोजयिष्यसीत्यादौ भविष्यति लण्नेत्याहुः। लिप्समाना। लिप्समानः सि द्धो लिप्सा याः सत्वात्पूर्वेण सिद्धेऽप्यकिंवृत्तार्थमिदमिति ध्वनयन्नुदाहरति। योन्नमिति। लोडर्थे लोडर्थस्य लक्षणमिति षष्ठीतत्पुरुषः। कृष्णाभोजनं लोड

वर्तमानसामीप्ये वर्तमानवद्वा।३।३।१३१॥ समीपमेव सामीप्यम्। स्वार्थे ष्यञ्। वर्तमाने लडित्यारभ्य उणादयो बहुलमिति यावत्
येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः। कदा आगतोऽसि। अयमागच्छामि। अयमागमम्। कदा गमि
१ ष्यसि। एष गच्छामि। गमिष्यामि वा ॥ २ ॥

र्थेस्य गोश्चारणप्रैषस्य लक्षणं। भोजनकाले गोचारणं त्वया कर्तव्यमित्यर्थः। पक्ष इति।
कृष्णाश्चेत्भोक्ता कृष्णाश्चेत्भोक्ष्यते त्वं गाश्चारयेत्यर्थः। लिङ्चोर्ध्वा। कालानुज्ञा तद्धितार्थोत्तरपदइत्य — त्रदिक्संख्ये इत्यनुवर्तनादिह समासोऽड र्ले
भ इत्याशंकायामाह। निपातनादिति॥ ः ॥ वर्तमानसामीप्ये इति। अस्मादेव सामीप्य इति निर्देशात्ष्यञ् सिद्धे चतुर्वर्णादिभ्य इति वार्तिकं प्रपञ्चार्थ
मित्याहुः। न चात्र पूरणगुणेति निषेधात्षष्ठीसमासो न प्राप्नोतीति वाच्यं। अनेनैव निर्देशेन तन्निषेधस्य अनित्यत्वाभ्युपगमात् तेन अद्दिमांचमित्यादि
सिद्धं। येनोपाधिनेति। धातुविशेषाद्युपाधिना। तथाहि। इङ्घ्यजेभ्यः शानन्विहितः सत्ताभ्यामेव धातुभ्यां भवति न तु धात्वन्तरात्। तच्छीलादिविशिष्टे कर्तरि
अलंकृञित्यारभ्य भ्राजभासेति यावद्विष्णुजादयउक्तास्ते पिकृञादिभ्यो धातुभ्यस्तस्मिन्नुपाधौ सत्येव भवन्ति॥ कदा आगतोसीति भूतकालेन प्रश्नवाक्ये

यदवरं मासात्तत्र पयः पातास्मः। पंचदशरात्र इति। नन्वत्र संख्यापूर्वं रात्रमिति क्लीबत्वेन भाव्यं। न च पंचदश रात्रयो यस्मिन्पक्षे इति बहुव्रीह्याश्रयणात्पुंल्लिंगः सिद्ध इति वाच्यं अहस्सर्वैकदेशेत्यच्प्रत्ययस्याभावप्रसंगादिति चेन्न। सत्यं। अत एव हि भाष्यप्रयोगान्न क्लीबत्वमित्याहुः ॥ ॥ परस्मिन्। भविष्यत्यनद्यतनवच्चेति विकल्पेन निषिध्यते। वर्ज्यमिति णिजन्तात् चो यदिति कर्मणि यत्। वर्जमिति पाठे तु द्वितीयायां चेति णमुल्। अनहोरात्राणामित्येव योऽयं संवत्सर आगामी तस्य यत्परं पंचदशरात्रात्तत्र पयः पातास्म इत्यादि। लिङ्निमित्ते। अतिपत्तिरनिष्पत्तिः। भूते च लिङ्निमित्ते लृङ् स्यात्। भूते भविष्यति च क्रिया-

परस्मिन्विभाषा॥ ३।३।१३८॥ अवरस्मिन्नित्यादि पूर्वसूत्रद्वयमनुवर्तते अप्राप्तविभाषेयम्। योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे। अध्येतास्महे॥ लिङ्निमित्ते लृङ् क्रियातिपत्तौ॥ ३।३।१३९॥ भविष्यतीत्येव। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्। भूते च॥ ३।३।१४०॥ पूर्वसूत्रं सम्पूर्णमनुवर्तते। वोताप्योः॥ ३।३।१४१॥ वा आ उताप्योः। उताप्योरित्यतः प्राग्भूते लिङ्निमित्ते लृङ् वा त्वधिक्रियते। पूर्वसूत्रं तु उताप्योरित्यादौ प्रवर्तत इति विवेकः। गर्हायां लडपिजात्वोः॥ ३।३।१४२॥ आभ्यां योगे लट् स्यात्। कालत्रयेऽपि गर्हायाम्। लुङाद्यपवादः। अपि जायां त्यजसि। जातु गणिकामाधत्से। गर्हितमेतत्। विभाषा कथमि लिङ् च॥ ३।३।१४३॥ गर्हायामित्येव। कालत्रये लिङ् लट् च। कथं धर्मं त्यजेस्त्यजसि वा। पक्षे कालत्रयपलकाराः। अत्र भविष्यति नित्यं लृङ् भूते वा। कथं नाम तत्र भवान्धर्ममत्यक्ष्यत्॥

तिपत्तौ। अद्यतनानद्यतनसाधारणं भूतसामान्यमिह ज्ञेयम्। अस्योदाहरणानि उताप्योः समर्थयोर्लिङ् इत्यारभ्य समानकर्तृकेषु तुमुन्निति विहायस्तत्सूत्रेषु बोध्यानि। ततः प्राचीनेषु वोताप्योरित्यनेन विकल्पोऽतः। लृङ् चेति। लिङ्निमित्ते भूते एवायं विकल्पो भविष्यति तु नित्यमेव लृङ्। गर्हायां। अत्र वोताप्योरिति न संबध्यते। वर्तमाने लड् उक्तः। कालत्रये तु न प्राप्नोतीति विधिरयं। कालत्रय इति। कालविशेषानुपादानादिति भावः। परत्वादिति। निरवकाशत्वादित्यपि बोध्यं। अपि जायामिति। त्यजस्यसि अत्याक्षीरित्यादिविषयेऽपि त्यजसीत्यादि लडेव प्रयुज्यत इति भावः ॥ ॥

तेन पूर्वं लकार एव आदेयः। आशंसावचने भूतवद्वर्तमानवत्प्रत्यययोरपवादः। न भूतवदिति। न वर्तमानवदित्यपि बोध्यम्। आशंसे अधीयीयेति। एवं प्रार्थये अधीयीय इच्छामो वयमधीयीमहीत्यादि ज्ञेयम्। क्षिप्रमिति। क्षिप्रप्रयोगेऽपि परत्वाल्लिङिति भावः। नानद्यतन। भूतानद्यतने लङ्विहितो भविष्यत्यनद्यतने लुट्। तौ चानयोरर्थयोर्निषिध्येते तेन दाहा लङ्लुटौ नेति। एवं च भूते लुङ् भविष्यति लृडित्याशयेनोदाहरति। अदाद्यास्यतीत्यादि। अग्नीनिति। आहवनीयादीन्॥ ॥ भविष्यति मर्यादा। अक्रियाप्रबन्धार्थमसामीप्यार्थं चेदं वचनं। नानद्यतनवदित्यनुवर्तत इत्याह। अनद्यतनवन्नेति। लुडत्र नेत्यर्थः। इह सूत्रे देशकृता मर्यादा उत्तरत्र कालकृता तत्र विशेषं वक्ष्यति। तस्य पदवरमिति। पाटलिपुत्रावधिकमार्गस्य यदवरं कौशाम्ब्याः सकाशादित्यर्थः। कौशाम्ब्याः पूर्वमिति यावत्। भविष्यतीति किं। योऽध्वा अतिक्रान्त आपाटलिपुत्रात्तस्य पदवरं कौशाम्ब्यास्तत्र सक्तूनपिबाम। मर्यादावचने इति किं। योऽ

भविष्यति मर्यादावचनेऽवरस्मिन्। ३।३।१३६॥ भविष्यति काले मर्यादोक्ताववरस्मिन्प्रविभागेऽनद्यतनवन्न। योयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्यामः। कालविभागे चानहोरात्राणाम्। ३।३।१३७॥ पूर्वसूत्रं सर्वमनुवर्त्तते। अहोरात्रसम्बन्धिनि विभागे प्रतिषेधार्थमिदम्। योगविभाग उत्तरार्थः। योयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे। अनहोरात्राणां किम्। योयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः तत्राध्येतास्महे॥ ११ ध्वा गंतव्यो निरवधिक

स्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पातास्मः। अवरस्मिन्निति किं। योऽध्वा गंतव्य आपाटलिपुत्रात्तस्य यत्परं कौशाम्ब्यास्तत्र सक्तून्पातास्मः। कालविभागे च। कालविभागे भविष्यत्यनद्यतनवन्न स चेत्कालविभाग अहोरात्रसंबंधी न चेदित्यर्थः। इह कालविभागे सत्यवरस्मिन् अनद्यतनवन्न इत्युक्ते कस्मादित्यपेक्षायां मर्यादात्कालविशेषादिति लभ्यत इत्येके। केचित्तु कालविभाग इति पंचम्यर्थे सप्तमीत्याहुः। उत्तरार्थ इति। परस्मिन्विभाषेति सूत्रे कालमर्यादायामेवानुवृत्तिर्यथा स्यात्। भविष्यतीति किं। यः संवत्सरोऽतीतस्तस्य यदवरं मासात्तत्र पयोऽपिबाम। मर्यादायामिति किं॥ यो निरवधिस्समयस्तस्य

लृटः प्राप्तयोर्वचनमिदं लृटो बाधनार्थं॥ तत्राह लटोऽपवाद इति। अयं कालत्रये। लृङ् प्राग्वदिति। क्रियातिपत्तौ भूते वा भविष्यति नित्यमित्यर्थः। जातु भवा हरिमनिंदिष्यदित्याद्युदाहर्तव्यं। अगर्हायामिदं। गर्हायां तु जातु योगे लङुक्तः॥ ॥ यच्चयत्रयोः अनवक्लृप्त्यमर्षयोरिति वर्तते यथासंख्यमिह नेष्यते। अयमपि लिङ्लृटोऽपवादः। योगविभागस्तु उत्तरसूत्रद्वये यच्चयत्रयोरेवानुवृत्तिर्यथा स्यादित्येतदर्थः। क्रियातिपत्तौ लृङ् प्राग्वत्। यच्च यत्र वा त्वमेवमकरिष्यो न श्रद्दधे न मर्षयामीत्यादि। गर्हायां च। कालत्रये यं भवतीति सर्वलकारापवादः। लिङ्वत् स्यादिति। गर्हायां विभाषा कथमिति लङ् प्राप्तस्तन्नेव किंवृत्त इति लृट् प्राप्तस्तयोरपवादोऽयं यच्चयत्रयोर्योगे विहितोऽयं लिङिति भावः। लृङ् प्राग्वत्। यच्च यत्र वा त्वं शूद्रमयाजयिष्यस्तदन्याय्यमित्यादि। चित्रीकरणे च। अयमपि कालत्रये। लृङ् प्राग्वत्। यच्च यत्र वा त्वं शूद्रमयाजयिष्यः आश्चर्यमेतत्। शेषे। सर्वलकारापवादः। सोऽधीयीतेति। यदायद्योरुपसंख्यानाज्जातुयदोरिति लिङ्। लिङ्निमित्ताभावादिह लृङ् न। उताप्योः धातोर्लिङ् स्यात् कालत्रये। भूतेऽपि नित्य इति। वाग्रहणस्य निवृत्तत्वात् भविष्यतीव भूतेऽपि नित्यं लृङ्। उताहनिष्यद् घोरं राजा नाहनत्। हनिष्यतीति गम्यते। कामप्रवेदने। लिङ् स्यादिति। कालत्रये सर्वलकारापवादः। कच्चि

यच्चयत्रयोः।३।३।१४८॥ यच्च यत्र वा त्वमेवं कुर्य्याः न श्रद्दधे न मर्षयामि। गर्हायां च।३।३।१४९॥ अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। यच्चयत्रयोर्योगे गर्हायां लिङ्वत् स्यात्। यच्च यत्र वा त्वं शूद्रं याजयेः अन्याय्यमेतत्। चित्रीकरणे च।३।३।१५०॥ यच्च यत्र वा त्वं शूद्रं याजयेः आश्चर्यमेतत्। शेषे लृडयदौ।३।३।१५१॥ यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात्। आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति। अयदौ किं। आश्चर्यं यदि सोऽधीयीत। उताप्योः समर्थयोर्लिङ्।३।३।१५२॥ बाढमित्यर्थेऽनयोस्तुल्यार्थता। उत अपि वा हन्याद् घोरं हरिः। समर्थयोः किम्। उत दण्डः पतिष्यति। अपिधास्यति द्वारम्। प्रश्नः प्रच्छादनं च गम्यते। इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ्। कामप्रवेदनेऽकच्चिति।३।३।१५३॥ स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्नतु कच्चिति। कामो मे भुञ्जीत भवान्। अकच्चितीति किं। कच्चिज्जीवति।

एवं योजायां तत्याज अत्यजत् । अत्याक्षीत् त्यक्ता त्यक्ष्यतीत्यादिविषयेपि योजायामपि त्यजति जातु गणिकामाधत्ते इति लडेव कालत्रये लकारापवादत्वात् प्र योक्तव्यः । लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति । कालत्रये लकारा इति । परोक्षानद्यतनभूते लिट् । कथं धर्मं तत्यक्थ । भूतानद्यतने लङ् । कथं धर्म मत्यजः । भूतसामान्ये लुङ् । अत्याक्षीः । भविष्यत्यनद्यतने लुट् । त्यक्तासि । भविष्यत्सामान्ये लृट् । कथं धर्मं त्यक्ष्यसि इत्यादि । अत्रेति ॥ क्रियातिपत्तावितित्रयं । किंवृत्तौ लिङ्लृटौ कालत्रये तः । नानुवर्तते इति । एवं चास्मिन् विषये निन्दति निन्दिष्यति निन्ददिति कालत्रये लकाराः पक्षे न भवन्तीति भावः । प्राग्वदिति । क्रियाति

किंवृत्ते लिङ्लृटौ ॥ ३।३।१४४ ॥ गर्हायामित्येव । विभाषा तु नानुवर्तते । कः कतरः कतमो वा हरिं निन्देत् । निन्दिष्यति वा । लृङ् प्राग्वत् ॥ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ ३।३।१४५ ॥ गर्हायामिति निवृत्तम् । अनवक्लृप्तिरसम्भावना । अमर्षोऽक्षमा । नसम्भावयामि न मर्षये वा भवान् हरिं निन्देत् निन्दिष्यति वा । कः कतरः कतमो वा हरिं निन्देत् । निन्दिष्यति वा । लृङ् प्राग्वत् ॥ किंकिलास्त्यर्थेषु लृट् ॥ ३।३।१४६ ॥ अनवक्लृप्त्यमर्षयोरित्येतद्गर्हायाञ्चेति यावदनुवर्तते । किंकिलेति समुदायः क्रोधद्योतक उपपदम् । अस्त्यर्थाः । अस्तिभवतिविद्यतयः । लिङोऽपवादः । न श्रद्दधे न मर्षये वा किंकिल त्वं शूद्रान्नं भोक्ष्यसे । अस्ति भवति विद्यते वा शूद्रीं गमिष्यसि । अत्र लृङ् ॥ जातुयदोर्लिङ् ॥ ३।३।१४७ ॥ यदायद्योरुपसंख्यानम् ॥ लृटोऽपवादः । जातु यद्यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि न मर्षयामि । लृङ् प्राग्वत् ॥

पत्तौ भविष्यति नित्यं लृङ् । भूते वेत्यर्थः । अनवक्लृप्त्यमर्षयोः लिङ्लृटावनुवर्तेते ते च कालत्रये भवतस्तेन सर्वलकाराणामपवादौ । किंवृत्तस्यानधिकारादेवाविशेषादुभयोर्भविष्यतीत्यकिंवृत्तेपीति न कर्तव्यं । पूर्वनिपाताहेस्यान्याचः परनिपातो यथासंख्यनिवृत्त्यर्थः । लृङ् प्राग्वदिति । भूते वा भविष्यति नित्यमित्यर्थः नानभावयामि चेन्नो हरिम निंदिष्यदित्याद्युदाहर्तव्यं । किंकिलास्त्यर्थेषु । लिङ्लृटोः प्राप्तयोरिह लृङ्ग्रहणात्त्विङ् निवर्तते इत्याशयेनाह । लिङोऽपवाद इति । अस्तिभवतीति । त्वत्कर्तृकं शूद्रागमनमस्तीत्यादिरर्थः । लृङ् नेति । लिङो निवृत्तत्वेन तन्निमित्तत्वाभावात् । जातुयदोर्लिङ् ॥ अनवक्लृप्त्यमर्षयोरिति लिङ्

हेतुहेतु। विभाषेत्यस्यानुवर्तनादाह। वास्यादिति। नमेच्चेदिति। कृष्णानतिः सुखप्राप्तौ हेतुः। भविष्यत्येवेति। लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणं काल
विशेषप्रतिपत्त्यर्थमिति भावः। हंतीत्यादि। ननु लक्षणहेत्वोः क्रियाया इति हेतौ शतृप्रत्ययः स्यात्। हननस्य पलायने हेतुत्वात्। मैवं। देवत्रातो गलो ग्राह इ
तियोगे च सद्विधिः। मिथस्ते न विभाष्यंते गवाक्षः संशितव्रत इति शाकल्यो रन्यतरस्यामिति सूत्रे भाष्ये व्यवस्थापितत्वात्। व्याख्यातं चैकेयटेन तत्रैव सूत्रे। देव
त्रात इति संज्ञा। तत्र तु दविदोरत्राप्राहीभ्योऽन्यतरस्यामिति न नत्वं भवति। देवत्राण इति। किंतु देवत्रात इत्येव। ग्रो यङि। अचि विभाषेति प्राण्यंगे नित्यं लत्वं।
गलः। विषवाचके गर इत्यत्र न भवति। विभाषाग्रह इति णप्रत्ययो जलचरे भवति ग्राहः। ज्योतिषि न। ग्रहः। लक्षणहेत्वोरिति सूत्रेऽन्वो विभाषेत्यतो विभाषे
त्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति शब्दयोगे सद्विधिः। शतृशानचौ न भवतः। हंतीति पलायते। वातायने गवाक्षः। अन्यत्र त्ववङ् न भवति। गोऽक्षः।

हेतुहेतुमतोर्लिङ्। ३।३।१५६॥ वास्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। भविष्यत्येवेष्यते। नेह। हन्तीति प
लायते। इच्छार्थेषु लिङ्लोटौ। ३।३।१५७॥ इच्छामि भुञ्जीत भुङ्क्तां वा भवान्। एवं कामये प्रार्थये इत्यादियोगे बोध्यम्। कामप्रवेदन इति
वक्तव्यं॥ नेह। इच्छन्करोति॥

संशितव्रत इति बहुव्रीहिः। अत्र शाकल्योरन्यतरस्यामिति संशात इति इत्वविकल्पो न भवति अन्यत्र तु शातः।
शितः। तेष्वेतेषु नत्वादिविधयो मिथः परस्परमेकविषयेन विकल्प्यंते तत्तद्विधायकसूत्रे व्यवस्थितविभाषाश्रयणादिति भावः। क्रियातिपत्तौ तु भूते भवि
ष्यति च नित्यं लृङ्। यद्यवर्षिष्यत् सस्यमुदपत्स्यत। इच्छार्थेषु लिङ्लोटौ एषूपपदेषु धातोरेतौ स्तः। सर्वलकाराणामपवादः। लिङ् चेत्यनेन समानकर्तृकेषु
लिङो विधानादिह लिङ्लोटौ असमानकर्तृकेषु भवत इति बोध्यं। इच्छन्करोतीति। अत्रानभिधानात् समानकर्तृकेषु इति तु मन्दं। न तु कामप्रवेदनेऽकच्चि
तीत्यनेनैव लिङः सिद्धत्वादिह लिङ्ग्रहणमास्तु लोडेव विधीयतामिति चेन्न। लोटा लिङो बाधा माभूदिति लिङ्ग्रहणस्यावश्यकत्वात्। न चैवमिच्छार्थे
षु लोडेवेत्येव सूत्र्यतामिति वाच्यं। चकारेण लिङोऽनुकर्षेणैतत्संबद्धस्य विभाषाग्रहणस्यानुकर्षणप्रसङ्गात् लकारान्तरमपि स्यादिति। न चैवमपि कालप्रवे

ज्जीवतीति। कामो मे इत्यत्र भुंजनीयं। वर्तमानसामीप्य इति लट्॥ ॐ ॥ संभावनेलाप्रौढिरिति। पर्याप्तिरित्यर्थः। प्रथमया सप्तम्या चेति। संभावने इति सप्त
म्यंतं प्रथमया विपरिणाम्यते अलमिति प्रथमांतं सप्तम्येति संबंधः। संभावनेऽर्थे इति। न च प्रथमया विपरिणमितत्वात्कथमत्र सप्तम्यर्थलाभ इति चेत्। अत्रा
हुः। संभावनेऽलमित्यावर्त्य द्वितीयस्यैव विपरिणामात्सर्वेष्टसिद्धिरिति। संभावनं क्रियाप्रयोग्यताध्यवसायः। अलमितीति। तच्च संभावनं समर्थ इति चेत्
भवति तदा लिङ् स्यादित्यर्थः। सिद्धेति। सिद्धः अप्रयोगो यस्य तस्मिन्नलमि सति। यत्रालंशब्दो न प्रयुज्यते तदर्थस्तु गम्यते तत्रेति फलितोऽर्थः। मनोरमायां

सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे।३।३।१५४ अलमर्थोऽत्र प्रौढिः। सम्भावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणाम्यते।
सम्भावनेऽर्थे लिङ् स्यात्तच्चेत्सम्भावनं अलमित्यलमिति सिद्धाप्रयोगे सति। अपि गिरिं शिरसा भिंद्यात्। सिद्धाप्रयोगे किं। अलं कृष्णो
हस्तिनं हनिष्यति। विभाषा धातौ सम्भावनवचनेऽयदि।३।३।१५५॥ पूर्वसूत्रमनुवर्त्तते। सम्भावनार्थे धातावुपपदे उक्तेऽर्थे लिङ् वाऽस्या
त्। न तु यच्छब्दे। पूर्वेण नित्ये प्राप्ते वचनं। सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान्। अयदि किं। सम्भावयामि यद्भुञ्जीथास्त्वम् ॥

तु अलमिति संभावने सिद्धाप्रयोगश्चेदिति सूत्रयितुमुचितमित्युक्तं। तत्र सिद्धस्याप्रयोग इति विग्रहः। कस्याप्रयोग इत्याकांक्षायामर्थादलंशब्द
स्येति बोध्यं। अपि गिरिमिति। संभावनद्योतकोऽपिशब्दः। गिरिविदारणे पर्याप्त इति संभावनात्र गम्यते। कालसामान्येऽयं लिङ् लृङ् प्राग्वत्। अपि
गिरिं शिरसाऽभेत्स्यत्। अलमिति चेत्किं। प्रायेणागमिष्यति। विभाषा धातौ। संभावनमुच्यते येन तत्संभावनवचनं तस्मिन्धातौ। संभावनार्थकधातावि
त्यर्थः। भुंजीथास्त्वमिति। अत्र पूर्वेण नित्यो लिङ्। धातौ किं। संभावनवचनस्वरूपग्रहणं माभूत्। कृते तु संभावनवचने तद्वाचकधातोरप्रयोगादिह वि
भाषा न भवति। भुंजीत भवान्। पूर्वेणात्र नित्यो लिङ्॥ ॥
॥

लिङ्यदि। कालसमयवेलासु चेति। उपपदेष्विति वचनविपरिणामेन संबध्यते। तुमुनोपवादः। यद्भुञ्जीतेति। यत्कालः पचतीत्यत्र तु न। प्रैषादीनामनु
वृत्तेः। अर्हे। योग्ये कर्तरि गम्यमाने कृत्यतृचो भवंति। त्वया कन्या वोढव्या। वहनीया। त्वं कन्यां वोढा। कन्यां वहेरिति। कन्योद्वहने योग्यस्त्वमित्यर्थः। नन्व
र्हे किमर्थं कृत्यतृचो विधीयंते। यावता सामान्येन विहितत्वादर्हेपि भविष्यंतीति चेत्। अत्राहुः। अर्हतायां चोत्पाद्यमप्राप्तो लिङ् विधीयते तेन तु लिङा बाधामा
भूदिति कृत्यतृचोर्विधानं। न च वासरूपविधिना समीहितसिद्धिः स्त्र्यधिकारादूर्ध्वं तदप्रवृत्तेरिति। धातुसंबंधे। इह धात्वोर्विशेषणविशेष्यभावादिसंबंधो
ऽत्रपपन्नः। स्वार्थस्मारणेनोपक्षीणत्वात्। पदार्थसंसर्गो वाक्यार्थः कारकविशिष्टा क्रिया चेति स्वीकारात्। शाब्दानुगमादेतेन शाब्दोस्ति प्रत्यय इत्यव

लिङ्यदि। ३।३।१६८॥ यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात्। कालः समयो वेला वा यद्भुञ्जीत भवान्। अर्हे कृत्यतृचश्च। ३।
।३।१६९॥ चाल्लिङ्। त्वं कन्यां वहेः। शकि लिङ् च। ३।३।१७२॥ शक्तौ लिङ् स्यात्। चात्कृत्याः। भारं त्वं वहेः। माङि लुङ्। मा कार्षीः। कथं माभ
वतु मा भविष्यतीति। नायं माङ् किंतु माशब्दः। धातुसम्बन्धे प्रत्ययाः। ३।४।१॥ धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः
। तिङ्वाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन्ददर्श। भूते लट्। अतीतवासकर्तृकं कर्तृकं दर्शनम
र्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम्॥ ९९

सम्यक्शाब्दबोधे शाब्दोपि भासत इत्यभ्युपगमेपि शब्दस्य
स्वार्थप्रत्ये[...]वप्रकारत्वं न तु शब्दांतरं प्रतीति। तथा च धातुसंबंधो वाक्येन न तूपपद्यत इति तस्य वाक्यार्थत्वासंभवाद्धातुशब्देन धात्वर्थो लक्ष्यते। ननु धातोः कर्मणः समान
कर्तृकादिति सन्विधौ कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं विशेषणमाश्रितं तथेहापि धात्वोरर्थद्वारकः संबंधोऽस्त्विति चेत्। मैवं। तथा हि सति परस्परसं
बंधार्थबोधकानेकधातुप्रयोग एव प्रत्ययाः स्युस्ततश्च गोमानासीत् गोमान्भवितेत्यादि न सिध्येत्। न त्वत्र वसन्ददर्शेत्यत्र वर्तमानकालो वसिरिव व
र्तमानकालोऽस्तिः प्रयुज्यते। न चाप्रयुज्यमानस्य धात्वंतरेणासंबंधोस्ति। अर्थयोः संबंधाभ्युपगमे तु धातुद्वयाभावेपि धात्वर्थद्वयस्य सत्त्वात् गोमाना

दनइत्युपसंख्यानादनेनैवसिद्धेकामप्रवेदनेकच्चिदितीतिसूत्रंमास्त्विति वाच्यं।यत्रार्थप्रकरणादिनाकामप्रवेदनंगम्यतेइच्छार्थकमुपपदंनास्ति
तदर्थंतदारंभात्॥ ※ ॥ लिङ्चासमानकर्तृकेषुतुमुन्नित्यनेनइच्छार्थेषुलिङ्लोटावितिविहितयोर्लिङ्लोटोर्बाधेप्राप्तेलिङः प्रतिप्रसवार्थंसूत्रं।न
चात्रवासरूपविधिनालिङ्लोटोर्नित्यंबाधानेतिशंक्यं।तत्त्वुदतुमुन्खलर्थेषुतदभावात्।अथापिवासरूपविधिः स्यादेवमपिलिङेवयथास्याल्लोट्
माभूदित्येवमर्थंतदारब्धव्यमेवा।किंयातिपत्तौल्टृङ्प्राग्वत्।इच्छार्थेभ्यो।इच्छार्थेभ्यः किं।पचतिगच्छति।प्रैषातिसर्गप्रैषोविधिरिति।विधिग्रहणेक

लिङ्।३।३।१५९॥समानकर्तृकेषुइच्छार्थेषूपपदेषुलिङ्स्यात्।भुञ्जीयेतीच्छति।इच्छार्थेभ्योविभाषावर्त्तमाने।३।३।१६० ।
लिङ्स्यात्पक्षेलट्।इच्छेत्।इच्छति।कामयेत्।कामयते।विधिनिमन्त्रणेतिलिङ्विधौ।यजेत्।निमन्त्रणे।इहभुञ्जीतभवान्।आ
मन्त्रणे।इहासीत।अधीष्टे।पुत्रमध्यापयेद्भवान्।सम्प्रश्ने।किम्भोवेदमधीयीयउततर्कं।प्रार्थने।भोभोजनंलभेय।एवंलोट्।प्रैषाति
सर्गप्राप्तकालेषुकृत्याश्च।३।३।१६३॥प्रैषोविधिः।अतिसर्गः।कामचाराज्ञा।भवतायष्टव्यं।भवान्यजताम्।चकारेणलोटोनुकर्षणं
प्राप्तकालार्थम्।लिङ्चोर्ध्वमौहूर्तिके।३।३।१६४॥प्रैषादयोऽनुवर्त्तन्ते।मुहूर्तादूर्ध्वंयजेत।यजताम्।यष्टव्यं।स्मेलोट्।३।३।१६५ पूर्वसू
त्रस्यविषये।लिङः कृत्यानाञ्चापवादः।ऊर्द्ध्वंमुहूर्त्तात्यजतांस्म।अधीष्टेच।३।३।१६६॥स्मेउपपदेऽधीष्टेलोट्स्यात्।त्वंस्मअध्यापय।

तव्येप्रैषग्रहणंशिष्यबुद्धिवैशद्यार्थमित्याहुः।लोटोऽनुकर्षणमिति।लोट्चेतियोगस्येदमेवप्रयोजनमेकयोगत्वेतुलिङोप्यनुकर्षणंस्यात्।प्राप्तका
लार्थमिति।प्रैषातिसर्गयोः पूर्वेणैवसिद्धत्वादितिभावः।लिङ्चोर्द्ध्वं।प्राप्तकालविशेषेऽप्राप्तस्यलिङोविधानार्थमिदंसूत्रं।प्रैषातिसर्गयोस्तुपूर्वेण
प्राप्तएवलिङ्।लोट्कृत्यानांकालविशेषेऽस्मिन्लिङाबाधामाभूदितिचकारः।पूर्वसूत्रविषयइति।प्रैषादयऊर्द्ध्वंमौहूर्तिकेइतिचानुवर्तन्तेइतिभावः।
॥ अधीष्टेचालिङोपवादः।योगविभागस्तुऊर्द्ध्वंमौहूर्तिकानुवृत्त्यर्थः ॥ ॥

गपत्प्रयोगो न स्यात्। भाविशब्दार्थस्य आसीच्छब्देनैव लाभात्। ततश्चैतावंतं कालं भावितया व्यवहृतं तदिदानीमासीदित्यर्थोऽत्रावश्यं स्वीकर्तव्यः। स्वीकृते तु गोमानासीदित्यत्रापि गोमानिति व्यवहारविषय आसीदित्यर्थोऽस्तु। वसन्ददर्शेत्यादौ भूते लक्षणायां यथायथं लडादिः स्वीकर्तव्यः। सोमयाजीत्यत्र तु भूत एव णिनिप्रत्यये जातेऽपि भवितेति लुडंतसमभिव्याहारे सति सोमयाजीति व्यवहरिष्यमाण इत्यध्याहारेणाणिनेर्भविष्यदर्थे लक्षणया वा प्रयोगो भवेदिति किमनेन सूत्रेणेति चेत्। अत्राहुः। अध्याहारलक्षणाप्रयुक्तक्लेशं विनैव प्रायशो निर्वाहार्थं सूत्रारंभः। न हि भावि इत्यमासीदित्यादौ क्वचिदध्याहारादिकमगत्या भवतीति सर्वत्र तत्स्वीकर्तुमुचितमिति॥ ❋ ॥ क्रियासमभिहारे। द्योत्य इति। क्रियासमभिहारो धातोरेवार्थः। लोट् तु द्योतक इति भावः। तस्य

क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः। ३।४।२। पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः। तिङामपवादः॥ तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तः। तिङ्संज्ञौ च तध्वमोर्विषये तु हिस्वौ वा स्तः। पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते। हिस्वविधानसामर्थ्यात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि। आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु॥ समुच्चयेऽन्यतरस्याम्। ३।४।३। अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात्। यथाविध्यनुप्रयोगः पूर्वस्मिन्। ३।४।४। आद्ये लोड्विधाने लो

च हिस्वौ स्त इति। ननु लोट इत्यनेन तिङो लक्ष्यंते तिङामेव हिस्वौ विधीयेताम्। तथा सति तिङ्त्वात्पदत्वं लभ्यत इति ॥ टॅत्ति भूत एव धातुरनुप्रयोगः। णोऽप्यस्तु। वा च तध्वमोरिति वाक्यशेषोऽपि स्वरसतः संगच्छते। अन्यथा येन नाप्राप्तिन्यायेन हि स्वपोस्तिङ्पवादत्वे सति तध्वमोः स्थाने तयोर्विकल्पेन विधानासंभवाद् उक्तवाक्यशेषो दुरुपपाद इति चेत्। अत्राहुः। लोट्शब्दस्य तिङ्लक्षणानन्याप्त्या। असंजातविरोधित्वेनोपक्रमस्य प्राबल्याद्विषयसप्तम्याश्रयणे न वाक्यशेषस्योपपन्नत्वाच्च। किंच तिङामादेशत्वे तिप्सिप्मिपां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्वात् ङित्त्वाभावेन ब्रूहीत्यत्र ई हल्यघोरितीत्वं न स्यात्। ब्रूहीत्यत्र तु ब्रुव ईडिति ईडागमे ब्रवीहि इति स्यात्। तृण्ढीत्यत्र तु तृणह इमिति ईमागमे तृणेढीति स्यात्। किंच। लादेशानामेव प

सीदित्यादौनानुपत्तिः। तदेतदभिप्रेत्याह धात्वर्थानामिति। विषयबहुत्वापेक्षं बहुवचनं एकैकविषयापेक्षायां तु धात्वर्थयोरिति बोध्यं। एतच्च मनोरमानु
सारेण व्याख्यातं। केचित्तु धात्वोरर्थद्वारकसंबंधेऽभ्युपगते गोमानासीद्भवितेत्यादि न सिध्येदिति मनोरमोक्तं चिंत्यमेव। तत्करोति तदाचष्ट इत्यत्रेव तदस्या
स्त्यस्मिन्नित्यत्राप्येकत्ववर्तमानत्वयोरविवक्षितत्वात् प्रकृतसूत्रानपेक्ष्यैव तत्सिद्धेः। न त्वत्र मतुविधौ वर्तमाने लडित्यादाविव कालविशेषपरिग्रहो
ऽस्तीत्याहुः। तत्भाष्यकैयटाद्यननुगुणं। तथाहि भाष्ये प्रत्यय इत्यत्र वर्तमाने पुनरत्र प्रत्ययग्रहणं किमर्थमित्याक्षिप्य अथ मतुमत्वपानामपि संबंधेस
त्त्वं यथा स्यात् गोमानासीत् भविता वेति समाहितं। कैयटेन तु तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तो विहित इत्युक्तं
। तथा च मतुब्विधावस्तीत्यत्र एकत्वस्याविवक्षितत्वेऽपि वर्तमानत्वं विवक्षितमिति तत्सामर्थ्यबलादवगम्यते। किं चादंडिनमानयेत्युक्ते वर्तमानसत्ताविशिष्टदंडयुक्त एवाऽऽनीयते नान्यः। तथा च आसीत् भवितेति तिङंतपदानुरोधेन गोमान्नित्यत्र गावोऽस्यासन् गावोऽस्य भवितार इत्यतीतानागतसत्ताविशिष्टप्रकृत्यर्थयुक्ते मतुप्प्रत्ययः प्रकृतसूत्रेणैव विधीयते न तु तद्धितसूत्रीत्या लभ्यत इति दिक्। ननु तत्तद्विधिवाक्यैरेव स्वस्वविषये प्रत्ययाः सिद्धाः किमनेन सूत्रेणेत्यत आह। यत्र काल इति। वर्तमानसामीप्य इत्यारभ्य कालान्यत्वं प्रायेण प्रतिपाद्यते तदेवं चेह गृह्यत इति भावः। वनानि पश्यन्नयावित्यादौ वर्तमानभूतकालादिप्रत्ययेषु कौवाखकालात् प्रच्युतो भवतीत्याकांक्षायामाह। तिङंतवाच्येति। प्रधानानुरोधेन गुणस्य नयनमुचितं न तु विपरीतमिति भावः। प्रत्यया इति। कालांतरभाजो भवंतीत्यर्थः। भूते लडिति। एवं च दृष्टवान् द्रष्टा दर्शेत्यर्थः। अतीतेति। अतीतवासकर्तीयस्य दर्शनस्येति बहुव्रीहिः।
सोमयाजीति। करणे यज इति भविष्यति णिनिः। अत एवाह। सोमेन यक्ष्यमाण इति। एवं च पश्यन्नयावित्यत्र दृशेर्भूते लड् दृष्ट्वा प्रयावित्यर्थः। निवे
दयिष्यतो मनोन विव्ययेरित्यत्र वेदयते भूते लृट् तस्य लृटः सद्वेति शतृप्रत्ययः। निवेदनं कृतवत इत्यर्थ इत्याहुः। स्यादेतत्। भाविकृत्यमासीदित्यत्र
सूत्ररीत्या भाविशब्दस्य भूतकालत्वे स्वीकृते सत्यतीतं भवनमित्यर्थो दासीच्छत्रस्याप्येककर्तृकमतीते भवनमित्यर्थात् भाव्यासीच्छत्रयो र्ये

हि स्वो लोड्वाच तध्वमोरिति सूत्रमस्तु तथा च हिस्वौ लोटो न भवत इति लोट् धर्मकावित्यर्थः पूर्वोक्तरीत्या स्यादिति सर्वेष्टसिद्धौ किमनेन लोट इति
षष्ठ्यंतकरणेनेति चेत् अत्राहुः हिस्वयोर्यदि लोट्स्थानिकत्वेन स्वीक्रियते तर्हि तयोर्लोडादेशवद्भावेन ईहल्यघोरित्यादिप्रवृत्त्या अनीहीत्यादिसि
द्धावपि हिस्वांतस्य लोडंतत्वं न सिध्येत् तथा च अहंत चेत्यनुदात्तविकल्पो न स्यात् अहंतमनुनीहीत्यर्थं अनुनाति एवं च लोडंतत्वलाभार्थं लोटो हिस्वाविति
विधीयते यदि तु हिस्वौ लोडित्युक्तेऽपि लोडन्तभावाश्रयेण लोडंतकार्यं अहंत चेति स्वरविकल्पः सिध्यतीति ब्रूषे तर्हि स्थानिवद्भावलब्धलोट्धर्मको
हिस्वावित्यर्थस्यानाश्रयणाल्लोडादेशकार्याणि परस्मैपदात्मनेपदतिङ्संज्ञास्तु न सिध्यंति तथा च पूर्वोक्तदोषस्तदवस्थः स्यात् लोटो हिस्वौ
इत्युक्ते तु स्थानिवद्भावेन हिस्वयोर्लोड्वात् लोडंतकार्यं स्वरविकल्पः सिध्यति क्रियासमभिहारे लोट् इति वाक्यात् लोडित्यनुवर्त्य हिस्वौ लोडिति प्रा ॥
गवद्व्याख्यातत्वात् लोडादेशवद्भावेन परस्मैपदात्मनेपदसंज्ञादीन्यपि सिध्यंतीति ॥ ॥ ॥

स्मैपदात्मनेपदसंज्ञोनतुलादेशातिङादेशानामितिसर्वेषांतिङांह्यावपिहिस्वोपर्यायेणस्यातांनतुतिवादीनांहिस्तडंस्वइतिपदव्यवस्थया।तत
श्चलकारस्यैवादेशौहिस्वौनतुतिङामित्यवश्यंस्वीकर्तव्यमिति।नन्वेवंद्वयोरपिलः परस्मैपदमितिपरस्मैपदसंज्ञास्यात्ततश्चपरस्मैपदिभ्यएवहिस्वौ
स्यातामतआह।तौचेति।अयंभावः।लोटोहिस्वौइतिवाक्येक्रियासमभिहारेलोडितिवाक्याल्लोडित्यनुवर्ततेतच्चहिस्वावित्यस्यविशेषणं।नचहिस्वौ
लोटौभवतइतिसामर्थ्याल्लोट्धर्मकावित्यर्थः संपद्यते।तच्चापिमुख्यलोट्संबंधिनोधर्मस्यप्रत्ययत्वस्यातिदेशोव्यर्थः।स्थानिवत्त्वेनैवतत्सिद्धेः।किं
तुस्थानिवद्भावलब्धलोट्व्यपदेशकौतिङ्भूतौयौहिस्वौतयोरेवधर्मइहातिदिश्यते।केचित्तुक्रियासमभिहारेलोडित्यनंतरंलाघवात्तस्यहिस्वाविति
वक्तव्येलोट्ग्रहणसामर्थ्याल्लोड्धर्मकावेवहिस्वौलोटः स्थानेभवतइत्यर्थः संपद्यते।तथाचपूर्वोक्तरीत्यातिङ्भूतौयौहिस्वौतयोरेवधर्मइहातिदि
श्यतेइतिसिद्धमिष्टं।एवंचलोटोहिस्वावितिवाक्येपूर्ववाक्याल्लोड्ग्रहणंनानुवर्तनीयमित्याहुः।तिङ्संज्ञौचेति।तेनपदत्वंतिङ्ङ्तिङइतिचभवति।हि
स्वविधानइति।यदिहिपुरुषवचनसंज्ञेअपिस्यातांतर्हियुष्मत्सामानाधिकरण्येएकत्वेचसत्येवहिस्वाभ्यांभाव्यंतत्रचव्यर्थोहिस्वविधिरितिभावः।
हिः कर्तरिस्वोभावकर्मकर्तृष्विति।उक्तंचकैयटेनापिहिशब्दस्यकर्तावाच्यःस्वशब्दस्यतुभावकर्मकर्तारइति।अत्रनव्याः।अत्यैकृस्वेइत्यादौकमत्य
यवत्क्रियासमभिहारेलोडयंस्वार्थिकएवानत्वस्मिन्लोटिलः कर्मणिचेत्याद्यर्थोनाभ्युपेयः प्रयोजनाभावात्।यदितुहिशब्दस्यकर्ताअर्थःस्यात्पु
नःपुनरतिशेपनवायानंस्यंतत्स्वार्थइतिवक्ष्यमाणग्रंथःस्वरसतोनसंगच्छेत।याहियाहीत्यादौतुकर्त्रादिप्रतीतिर्यातीत्यादिसमभिव्याहारेणमूल
भैवायथाएधांचक्रेइत्यत्रतङादेशात्प्रागेवआमः परस्यलेर्लुक्यामंत्रेसंख्याप्रतीत्यभावेपिचक्रेइत्यनुप्रयोगवशेनएककर्तृकद्विरूपाक्रियेत्य
विद्यमानापिसंख्याप्रतीयतेतथैवहिस्वांतेष्वपिकालकारकसंख्याप्रतीतिर्यातीत्याद्यनुप्रयोगबलेनभवतीत्याहुः। स्यादेतत्।क्रियासमभिहारे

तन्निवृत्तिपरत्वात्तथापीह कदाचिद्यातीत्यस्य कदाचिन्न गच्छतीत्यस्यानुप्रयोगे प्राप्ते यथाविधीत्ययमप्राप्तांशपरिपूरणाय व्रीहीनवहन्तीत्यादिवद्वि
धीयत इति नियमविधिरेव। एतेन मीमांसकप्रसिद्धनियमविधिः शब्दशास्त्रेऽप्रसिद्ध इति वदन्तः परास्ताः। द्विवाच्य इति। वार्तिकमिदं हरिदत्तप्रक्रियो
र्व्याख्यातं। इति शब्दस्त्विति। ननु इति शब्देन व्यवधानाद्यातीत्यस्यानुप्रयोगत्वं कथमिति चेत्। अत्राहुः। अत्र शब्दस्येहानुवादित्वमात्रपरत्वान्न व्य

तविपरीतप्रयोगयोरिष्टापत्तिः। एतच्च भाष्यकारीयोदाहरणसूत्रप्रत्याख्यानाभ्यां निर्णीयते। न च समुच्चये सामान्यवचनस्येति विशेषस्योक्तत्वा
त् सूत्रैकदेशस्य पूर्वस्मिन्निति पदस्य वैयर्थ्यमस्तु नाम। यथाविध्यनुप्रयोग इति तु यथाविधीति नियमार्थं स्वीकर्तव्यमेव अन्यथा याहि याहीति गच्छ
तीत्यादि स्यादिति वाच्यं। यस्माल्लोड्विधिस्तत्प्रकृतिकतिङन्तस्यैवोपस्थितत्वेनानुप्रयोक्तुमर्हत्वात्तदनुपस्थितपरित्यागेन यत् किंचिद्धातुप्रकृतिक
तिङन्तस्यानुप्रयोगार्हतेति। अत एव स्वं रूपं शब्दस्येत्यपि सूत्रं प्रत्याख्यातं भाष्यकारेण। अग्नेर्ढगित्यादौ विधिवाक्यगतस्याग्नेरवाचकाग्निशब्दादेरुप
स्थितत्वात्तत्परित्यागेनानुपस्थितवन्ह्यादिशब्देभ्यो ढगादिर्न भवेदिति। एवं चास्मिन् प्रत्याख्याते यथाविध्यनुप्रयोगसूत्रे मीमांसकप्रसिद्धनि
यमविधेः स्थितोदाहरणमन्यदन्वेषणीयमिति दिक्। एवमिति। याहि याहीति यातः याहि याहीति यातीत्येवमूह्यमित्यर्थः। पक्षे इति। वाचत ध्वमोरित्यु
क्तत्वात्तर्हि स्वाभाविकपक्षे इत्यर्थः। तध्वमोरित्यत्र तशब्देन मध्यमपुरुषबहुवचनं गृह्यते ध्वंसाहचर्यात्। यद्यपि ध्वमित्यस्यात्मनेपदत्वमस्तीति तत्साह
चर्येण प्रथमपुरुषैकवचनस्य ग्रहणं प्राप्नोति। तथापि बहुवचनत्वमध्यमत्वरूपधर्माभ्यां मध्यमपुरुषबहुवचनमेव गृह्यत इत्याशयेनोदाहरति या
तपातेति यूयमिति। अस्यापि लोटो लङ्वत्त्वात्तस्थस्थमिपामिति यात इत्यत्र थस्य तादेशः। विध्यादिलोड्विषये त्वनुप्रयोगेऽपि थस्य तादेशप्रवृत्तेर्यूयं या
॥ तेत्यनुप्रयोक्तव्यं। अधीध्वं अधीध्वमिति। सवाभ्यामित्यम् ॥
॥

यथाविध्यनुप्रयोगः पूर्वस्मिन् क्रियासमभिहारविषये।
समुच्चय इति। चिनोतेर्भावे एरजित्यच्। प्रागुक्तमिति। धातोर्लोट् लोटो हिस्वौ तध्वमोर्विषये वेत्यर्थः। यथाविधीतिनियम्यते। तथा च पक्षे प्राप्तस्य नियम
अत्र संख्याकारकादीनां हिस्वाभ्यां तादृप्रतीतेस्तद्बोधनाय अनुप्रयोगो न्याय्यत एव प्राप्तस्तद्नुवादेन यथाविधीति नियम्यते। तथा च पक्षे प्राप्तस्य नियम

समुच्चये सामान्यवचनस्य। ३।४।५॥ समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाच्च यथायथं लडादयस्ति
वादयश्च। ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः। क्रियासमभिहारे द्वे वाच्ये। याहि याहीति याति। पुनः पुनरतिशयेन वा यानं त्वं तस्यार्थः एककर्तृकं वर्तमानं यानं याती त्यस्य इति शब्दस्वभेदान्वये तात्पर्यग्राहयति। एवं यातः। यान्ति। यासि। या
थः। याथ। यात याते ति यूयं याथ। याहि याहीत्ययासीत्। यास्यति वा। अधीष्वाधीष्वेत्यधीते। ध्वंविषये पक्षे ऽधीध्वमधीध्वमिति यूयम
धीध्वे। समुच्चये तु सक्तून्पिब धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरते। तध्वमोस्तु पिबत खादतेत्यभ्यवहर
थ। भुङ्ग्ध्वं आस्वादयध्वमित्यभ्यवहरध्वे पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः। पक्षे सक्तू
न्पिबति धानाः खादति अन्नं भुङ्क्ते दाधिकमास्वादते। एतेन पुरीमवस्कन्द लुनीहि नन्दनं मथाण रत्नानि हरामराङ्गनाः विगृह्य चक्रे
नमुचिद्विषा वलीय इत्यमस्तास्थ्यमहर्दिवं दिव इति व्याख्यातम्। अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अ
खास्थ्यक्रियेत्यर्थान्। इह पुनः पुनस्त्वं स्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव द्वितीयसूत्रे क्रियासमभिहार इत्यस्यानन्वृत्तेः
लोडन्तस्य हित्वापत्तेश्च। पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचिद्भ्रम एव। पुरुषवचनसंज्ञे इह नेत्युक्तत्वात्॥ ॥
इति लकारार्थप्रक्रिया ॥ ॥ इति भट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धे तिङन्तं समाप्तम् ॥ ९९ नाद्याहि याहीति गरुती

त्यादिन भवति। यच्चाप्यन्यत्र इनहन्पूषार्यम्णां शौ इत्यादौ नियमशब्देन परिसंख्या व्यवह्रियते सर्वनामस्थाने चेत्यादिना शौ नत्विन्ने च दीर्घप्राप्ते शेरन्यत्र तु

अधीध्वे इति। विध्यादिलोड्विषयेतु अधीध्वमित्येवानुप्रयोक्तव्यं। भावकर्मणोस्तु भूयस्व भूयस्वेति भूयते। पच्यस्व पच्यस्वेति पच्यतेइत्याद्युन्नेयं। समुच्चयेन्यतरस्यामिति सूत्रे क्रियासमभिहार इत्यनुवर्तनात्। हित्वमकृत्वैवोदाहरति। सक्तून्पिब धानाः खादेति। अभ्यवहरयेति। विध्यादिलोड्विषये तु अभ्यवहरतेत्यत्र प्रयोक्तव्यं एवं अभ्यवहरध्वे इत्यत्राप्युक्तविषये अभ्यवहरध्वमित्यनुप्रयोक्तव्यं। पक्षेहिस्वाविति पिबखादेत्यभ्यवहरथ। भुंक्ष्व आस्वादस्वेत्यभ्यवहरध्वे इत्युदाहार्यं। लवनादीति। आदिशब्देनमोषणाहरणेग्राह्ये। अत्र इत्यभ्युपगमे बाधकमाह। लोडंतस्य विभ्रमएवेति। पुरुषांशे वचनांशे च लोडंशेतु भ्रमएवेति भावः। एवमुक्तोदाहरणेषु हिस्वांतेषु तिङंतत्वं यथायथं परस्मैपदात्मनेपदांतत्वं च सिद्धं पुरुषवचनसंज्ञेतु विधानसामर्थ्याद्द्वियोनेस्तइत्युक्तमितिसर्वं सुस्थिरं॥ ॥ इतिश्रीपरमहंसपरिव्राजकाचार्यश्रीवामनेंद्रस्वामिचरणारविंदसेवकज्ञानेंद्रसरस्वतीकृतौ सिद्धांतकौमुदीव्याख्यायां तत्वबोधिन्याख्यायां तिङंतकांडं समाप्तम् ॥ ॥

नन्वायततयाकथिताद्वैउपयोस्यतइतिवाकयंचिन्त्येयम्॰ अंचेःउदित्वात्॰ क्त्वायांविकल्पेप्राप्ते निष्ठायांयस्यविभाषेतिनिषेधेवचनम्॰ अंचितइति॰ नांचेः पूजायामितिनलोपनिषेधः अक्तइति॰ अनिदितामितिनलोपः लुभोतीषसहेति क्त्वायां विकल्पेनिष्ठायांनिषेधेचप्राप्ते वचनम् पूङ॰ श्र्युकः कितीतिनिषेधे प्राप्तेवचनम्॰ ॥ ॥ पूङः क्त्वाच॰ नक्त्वासेडित्यनेनैवसिद्धेक्त्वाग्रहणमिहव्यर्थमित्यतआह॰ उत्तरार्थमिति॰ क्त्वेवेति॰ ननुनिष्ठाचानुकृष्टत्वादितिभा व॰ शेश्यितइतिअनेकाचइतियण्॰ आदिकर्मणीति॰ आद्येषुक्षणेषुभूतेषुसर्वस्याःक्रियायाभूतत्वाभावान्निष्ठानप्राप्नोतीतिवचनमादि कर्मणिक्तस्यक

पूङः क्त्वानिष्ठयोरिड्वास्यात्।पूङः क्त्वाच१।२।२२॥पूङः क्त्वानिष्ठाचसेट्किन्नस्यात्।पवितः।पूतः।क्त्वाग्रहणमुत्तरार्थम्।नोपधादित्यत्रहिक्त्वै वसम्बध्यते।निष्ठाशीङ्॰स्विदिमिदिक्ष्विदिधृषः१।२।१९॥एभ्यःसेण्निष्ठाकिन्नस्यात्।शयितः।शयितवान्।अनुबन्धनिर्देशोयङ्लुङ्निवृत्त्यर्थः। शेश्यितः।शेश्यितवान्।आदिकर्मणिनिष्ठावक्तव्या॥आदिकर्मणिक्तःकर्तरिच॥३।४।७१॥आदिकर्मणियःक्तःसकर्तरिस्यात्।चाद्भावकर्म णोः।विभाषाभावादिकर्मणोः।७।२।१७॥भावेआदिकर्मणिचादितोनिष्ठायाइड्वास्यात्।प्रस्वेदितश्चैत्रः।प्रस्वेदितन्तेन।ञिष्विदेतिभ्वादि रत्रगृह्यतेञिड्डिःसाहचर्य्यात्।स्विद्यतेस्तुस्विदितइत्येव।ञिमिदा।ञिक्ष्विदा।दिवादीभ्वादीच।प्रमेदितः।प्रमेदितवान्।प्रक्ष्वेदितः।प्रक्ष्वेदि तवान्।प्रधर्षितः।प्रधर्षितवान्।धर्षितन्तेन।सेड्किम्।प्रस्विन्नः।प्रस्विन्नन्तेनेत्यादि।मृषस्तितिक्षायाम्।१।२।२०॥सेण्निष्ठाकिन्नस्यात्मर्षितः मर्षितवान्।क्षमायांकिम्।अपमृषितंवाक्यम्॥

॥ नैरिविधानार्थंचेत्याहुः चादिति॰ अन्यथातत्रकौण्डिन्यन्यायेनभावकर्मणोर्नस्यादितिभावः प्रस्वेदि तइति॰ चशब्दआदिकर्मद्योतनार्थः स्वेदितमित्यादिभावे॰ भ्वादिरत्रेति ञिष्विदास्नेहनमोहनयोरितिपठितः स्विद्यतेस्त्विति॰ ष्विदागात्रप्रस्रवणेइतिदिवा दिषुपठितस्यस्विदितइत्येवेति॰ कित्त्वनिषेधाभावादितिभावः नचष्विदेतिदेवादिकोपिञीदितिवाच्यम्॰ हरदत्तग्रंथविरोधादितिभावः अत्रहरदत्तःञि ष्विदास्नेहनमोचनयोरितिदिवादिर्गृह्यतेनतुञिस्विदाअव्यक्तशब्देइतिभ्वादिरपिमिदिनासाहचर्यादित्याहतच्चिन्त्यम्॰ भ्वादिष्वपिमिदेःपठ्यमानत्वात्॰

नंध्या· ध्यै चिंतायाम्· ख्या प्रकथने· पृ पालन पूरणयोः मुर्छा मोहसमुच्छ्राययोः मदी हर्षे ष्टूत्तेइति· श्युकः कितीति इण्निषेधः कृलोप विभिंस्मारयतिरात्तोप इति· मूर्तेइति· आदितश्चेतिनेट्मत्तइति· श्वीदितइतिनेट्· वित्तो· ज्ञानार्थकाद्विदेरीटाभाव्यं सत्तार्थकविदेर्विचारणार्थकाविदेश्च भोगप्रत्यययोर्वृत्तिर्नसंभव तीत्याशयेनाह· विंदतेरिति· विद्लृलाभइत्यस्येत्यर्थः भुज्यतइतिभोगः प्रतीयतइतिप्रत्ययइतिकर्मसाधनावेतावितिव्याचष्टे भोग्यप्रतीतेचार्थेइतिभिन्नंशकल म्· भिदेः क्तो रदाभ्यामितिप्राप्तनत्वस्याभावोनिपात्यतेभिन्नंशकलखंडेवेत्यमरः॥ भिन्नमन्यदिति· विदीर्णमित्यर्थः॥ ॐ॥ त्रणमाधमर्ण्ये· अधमर्ण्डः खमर्दत्र

ऋणमाधमर्ण्ये।८।२।६०॥ ऋधातोः क्तात्तकारस्य नत्वं निपात्यते आधमर्ण्ये व्यवहारे। ऋतमन्यत्। स्फायः स्फी निष्ठायाम्।६।१।२२॥ स्फीतः इण्निष्ठायाम्।७।२।४७॥ निरः कुषो निष्ठाया इट् स्यात् यस्य विभाषेति निषेधे प्राप्तेऽयं विधिः। निष्कुषितः। वसतिक्षुधोरिट्।७।२।५२॥ आ भ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात्। उषितः। क्षुधितः। अञ्चेः पूजायाम्।७।२।५३॥ पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात्। अञ्चितः। गतौ तु अक्तः। लुभो विमोहने।७।२।५४॥ लुभः क्त्वानिष्ठयोरिट् स्यान्नतु गार्ध्ये। लुभितः। गार्ध्ये तु लुब्धः। क्लिशः क्त्वानिष्ठयोः।७।२।५०॥ इड्वा स्यात्। क्लिश उपतापे नित्यम्प्राप्ते। क्लिशू विबाधने। अस्य क्त्वायां विकल्पे सिद्धेपि निष्ठायां निषेधे प्राप्ते विकल्पः। क्लिशितः। क्लिष्टः। पूङः स्च।७।२।५१॥

णमस्यसोऽधमर्णस्तस्य भाव आधमर्ण्यं तेन व्यवहारविशेषो लक्ष्यते तत्र उत्तमर्णोपि सिध्यतीत्याशयेन व्याचष्टे अधमर्णव्यवहार इति· स्वव्यवहारो दातव्यहीनोऽसंबंधी भवतीत्युत्तमर्णेऽपि प्रयोगो न विरुध्यते लक्षणायां तु धारेरुत्तमर्ण इति निर्देशो लिंगम्· स्फायः स्फी स्फायी वृद्धौ कथं तर्हि स्फीतिका मइति· स्फीतमाचष्टे इति एयंताद्‌च इः अल्लोपणिलोपौ यस्येति· निरः कुष इति विकल्पिते इडादितिभावः उषित इति· यजादित्वात् संप्रसारणम्· शासिवसीति षः वसतीति शपा निर्देशः स्पष्टार्थः· वस्तेः से इक्त्वा इड्वि तव्य मेवेटा क्षुधित इति· एवं च तस्यालमेषा क्षुधितस्येति प्रयोगो निर्बाध एवेति सुधीर्धीः तोऽर्भावे किपितारकादित्वादितजिति धातुवृत्ति प्रयइक्तं तन्नादर्तव्यं समा।

ढत्वधत्वष्टुत्वढलोपदीर्घाः वृत्तः ततइति· अनुदात्तोपदेशेतिनलोपः सनिवेड्कृत्वादिति· तनिपतिदरिद्रातिभ्यः सनो वाइड्वाच्य इति वचनात्· ऋत्तत्यादीनामिति स्त्रीदित इति निष्ठायामनिड्वार्थं ऋतीच्छे इनेच्तीहिं साग्र्यनयोः नृतीगात्रविक्षेपइत्येतेषामिदित्वकरणेन यस्यविभाषेत्यस्यानित्यत्वज्ञापनाद्वा पतित इति सिद्धमित्यर्थः स्तुभसंचलनेभ्यस्तथेति षत्वम्· स्वनध्वनशब्देइडभावे अनुनासिकस्यक्विझलोरिति दीर्घः लगेसंगे लग्नं अव्यक्ते शब्दे ग्रन्थेतिषत्वेष्टुत्वम्· रेभृशब्दे फाणागतौ दीर्घः स्टुत्वम्· वाहृ प्रयत्ने· इडभावे ढत्वधत्वष्टुत्वढलोपाः अनायासशब्देन तत्साध्योलक्ष्यत इत्याह· अनायाससाध्य इति· सुखमोषधजातमुद्धृत्य चके प्रक्षिप्यसद्योऽभिषुत्य पूत्वा यत्पीयते तत्फांटमित्याह· वेदभाष्य इति· तद्धे नवनीतं भवति घृतं देवानां फांटं मनुष्याणामिति शतपथश्रुतेर्व्याख्यायामित्यर्थः ॥ ❁ ॥अन्य

अन्यत्र धर्षितः। विशसितः। भावादिकर्म्मणोस्तु वैयात्ये धृषिन्नास्ति। अत एव नियमार्थमिदं सूत्रमिति वृत्तिः। धृषेरादित्त्वे फलञ्चिन्त्यमिति हरदत्तः। माधवस्तु भावादिकर्म्मणोर्वैयात्ये विकल्पमाह। धृष्टम्। धर्षितम्। प्रधृष्टः। प्रधर्षितः। दृढः स्थूलबलयोः ।७।२।२०॥ स्थूले बलवति च निपात्यते दृह दृहि वृद्धौ। क्तस्येडभावः। तस्य ढत्वम्। हस्य लोपः। इदितो नलोपश्च। दृहितः। दृंहितोन्यः। प्रभौ परिवृढः ।७।२।२१॥ वृह वृहि वृद्धौ निपातनं प्राग्वत्। परिवृहितः। परिवृंहितोन्यः॥ ॥

〃 त्विति· मंथादेरवाच्यत्वेत्तित्यर्थः· ञिधृषा प्रागल्भ्ये शसु हिंसायाम्· अन् योरादितश्चयस्य विभाषेति सूत्राभ्यामिट्प्रतिषेधे हि सिद्धे प्यनयोर्वैयात्य एवा निट्त्वं नान्यत्रेति नियमार्थमित्याह· अविनय एवेति· विरुद्धं यातो वियातः अविनीतस्तस्य भावो वैयात्यम्· ननु धृषेर्विभाषा भावादिकर्मणोरिति· विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवतीत्याशंकायामाह नास्तीति अनभिधानादिति भावः अत्र प्रमाणमाह· अत एवेति· माधवस्त्विति· एवं च आदित्त्वस्य फलवत्वात् हरदत्तोक्तं यच्चिंत्यं तदेव चिंत्यमिति भावः। दृढः स्थूल बलमस्यास्तीति बलः अर्शआदिभ्योच्चन्नाह· बलवतीति स्थूलो मांसलः सच निर्बलोपि बलवांस्तु कृशोपि दृढ इति फलितोर्थः· तस्येति· तकारस्येत्यर्थः· हस्येति· ननु हो ढ इति ढत्वे ढो ढे लोपे नैव सिद्धमिति तस्य ढत्वं हस्य लोपश्च न निपात्यतामिति चेन्नैवम्· तथाहि सति ढलोपस्यासिद्धत्वेन दृढिमेत्यत्र रऋतो हलादेर्लघोरिति रभावो न स्यात्यरिवृ

तस्मादविशेषादुभयोर्ग्रहणं न्याय्यं तदेतदाह· दिवादौ भ्वादौ चेति· स्विदादीनामादितश्चेति· इराणिषेधात्सेण्निष्ठा न संभवतीत्यादि कर्मणि निष्ठोदाहृता ॥ ∴ ॥
॥ अविस्पष्टमिति· मृष धातोः क्तिति क्षायामेव वृत्तिः सत्त्वेपि सूत्रस्य तितिक्षाग्रहणमेव ज्ञापयत्यनेकार्थाः धातव इति· रुचितमिति· रुच दीप्तौ गत्यर्थाकर्मकेति कर्त

अविस्पष्टमित्यर्थः। उदुपधाद्भावादिकर्मणोरन्यतरस्याम्। १।२।२१॥ उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात्। द्युतितम्
द्योतितम्। मुदितम्। मोदितं साधुना। प्रद्युतितः। प्रद्योतितः। प्रमुदितः। प्रमोदितः साधुः। उदुपधात्किम्। विदितम्। भावेत्यादि किम्। रुचितं को
द्योतितम्। मुदितम्। ... निष्ठायां सेटि। ६।४।५२॥ णेर्लोपः स्यात्। भावितः। भावितवान्। स्री
षीयणाः। सेट् किम्। क्रुष्टम्। शब्विकरणेभ्य एवेष्यते नेह। गध्यते र्गधितम्। निष्ठायां सेटि। ६।४।५२॥ णेर्लोपः स्यात्। भावितः। भावितवान्। श्री
दित इति नेट्। सम्प्रसारणम्। शूनः। दीनः। गुहू। गूढः। वन्। वतः। तनु। ततः। पतेः सनि वेट्कत्वादिड्भावे प्राप्ते। द्वितीया श्रितेति सूत्रे निपात
नादिट् पतितः। से सिचीति वेट्कत्वात् सिद्धे क्रन्तादीनामीदित्वेन नित्यत्वज्ञापनाद्वा। तेन धावितमिभराजधियेत्यादि सिद्धम्। यस्य विभाषेत्य
त्रैकाच इत्येव। दरिद्रितः। क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु। ७।२।१८॥
क्षुब्धादीन्यष्टावनिट्कानि निपात्यन्ते। समुदायेन मन्थादिषु वाच्येषु द्रवद्रव्यसंश्लिष्टाः सक्तवो मन्थो मन्थनदण्डश्चा। क्षुब्धो मन्थः। अन्यत्र क्षुभितम्। स्वा
न्तं मनः। ध्वान्तं तमः। लग्नं सक्तम्। निष्ठानत्वमपि निपातनात्। म्लिष्टमविस्पष्टम्। विरिब्धः स्वरः। म्लेच्छ रेभृ अनयोरुपधाया इत्त्वमपि निपात्यते। फा
ण्टमनायाससाध्यः कषायविशेषः। माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यम् फाण्टमिति वेदभाष्ये आह। बाढं भृशम्। अन्यत्र क्षुभितम्॥
क्षुब्धो राजेति त्वागमशास्त्रस्यानित्यत्वात्। स्वनितम्। ध्वनितम्। लगितम्। म्लेच्छितम्। विरेभितम्। फणितम्। बाहितम्। धृषिशसी वैयात्ये।
(( ७।२।१९॥ एतौ निष्ठायामविनये एवानिटौ स्तः। धृष्टो विशस्तः॥

शितः· क्रुष्टमिति· क्रुश आह्वाने रोदने च· भ्रस्जादिना षत्वे ष्टुत्वम्· गधितमिति· गृध परिवे
ष्टने दिवादिः· संप्रसारणमिति वचिस्वपीत्यनेन· शूनइति· टुओश्वि गतिवृद्ध्योः· हल इति दीर्घः· ओदितश्चेति निष्ठातस्य नः· गूढ इति यस्य विभाषेति नेट्· ॥

श्टतंश्रातिश्रपयत्योरिति॰ श्रापाकेइत्यस्यादौपक्यतेश्रुणद्यावपिघटादिषपिपक्यतेमित्यार्थम्॰ श्रेपाकइतिचभ्वादौतस्यापिकतात्वसेहत्यहणंनिपातनसामर्थ्याञ्च स्वणाञ्प्रतिपदोक्तपरिभाषानाश्रीयतइत्याहुः श्टभावोनिपात्यतइति॰ ष्पड॰स्तंप्रसारणमितिप्रसक्तमेवसंप्रसारणंनविहितम्॰ श्रयतेरपिश्रितमेवयथास्यादिति अत्रविभाषाभ्यवपूर्वस्येतिविभाषानुवर्ततेसाचव्यवस्थितातेनक्षीरहविषोरेवश्टभावोनित्यश्च॰ अन्यत्रतुनेवभवतीत्याशयेनाहक्षीरहविषोः पाकइति॰ अन्यत्तु इतिशाकादिः॰ श्रपितमिति॰ णौमितांह्रस्वः॰ वादान्त॰ शमुदमुउपशमे॰ पूरीआप्यायने॰ दिवादिस्तुरादिश्चदसुउपक्षये स्पशबाधने रुदअपवारणेज्ञपिर्मित्॰ संज्ञाया

श्टतंपाके ७।२।२७ ॥ श्रातिश्रपयत्योः क्तेश्टभावोनिपात्यतेक्षीरहविषोःपाके॰ श्टतंक्षीरंस्वयमेवविक्लिन्नंपक्कंवेत्यर्थः॰क्षीरहविर्भ्यामन्यत्तु॥ श्राणं॥ श्रपितंवा॥ वादान्तशान्तपूर्णदस्तस्पष्टछन्नज्ञप्ताः ७।२।२७॥ एतेणिचिनिष्ठान्तावानिपात्यन्ते॥ पक्षे॰ दमितः॥ शमितः॥ पूरितः॥ दासितः॥ स्पाशितः॥ छादितः॥ ज्ञपितः॥ रुष्यमत्वरसंघुषास्वनाम् ७।२।२८॥ एभ्योनिष्ठायाइड्वा॥ रुषितः॥ रुष्टः॥ आन्तः॥ अमितः॥ तूर्णः॥ त्वरितः॥ अस्यादित्वेफलम्न्यम्॥ संघुष्टः॥ संघुषितः॥ आस्वान्तः॥ आस्वनितः॥ हृषेर्लोमसु ७।२।२९॥ हृषेर्निष्ठायाइड्वास्यात्लोमसुविषये॥ हृष्टं॥ हृषितंलोमं॥ विस्मितप्रतिघातयोश्च॥ हृष्टो हृषितोमैत्रः॥ विस्मितः प्रतिहतोवेत्यर्थः॥ अन्यत्रतु॥ हृषअलीके॥ उदित्वान्निष्ठायान्नेट्॥ हृष्टः॥ अपचितश्च ७।२।३०॥ चायतेर्निपातोयंवा॥ अपचितः॥ अपचायितः॥ प्यायःपी ६।१।२८॥ वास्यान्निष्ठायाम्॥ व्यवस्थितविभाषेयम्॥ तेनस्वाङ्गे नित्यं॥ पीनंमुखम्॥ अन्यत्रप्यानः॥ पीनःस्वेदः॥ सोपसर्गोस्यन॥ प्रप्यानः॥ आङ्॰ पूर्वस्यांधूधसोः स्यादेव॥ आपीनोन्धुः॥ आपीनमूधः॥ ह्लादोनिष्ठायाम् ६।४।९५॥ ह्रस्वःस्या

मारणतोषणनिशामनेषित्यक्तेः रुष्य॰ रुषरोषेक्तीषसहेति॰ विकल्पितेट्कत्वात्यस्यविभाषेतिनित्येनिषेधेप्राप्तेविकल्पोविधीयते॰ अमगत्यादिषुअमरोगेइति चौरादिकस्तुनगृह्यतेएकाचइत्यधिकारादित्याहुः॰ आंतइति अनुनासिकस्येतिदीर्घः॰ तूर्णइतिञित्वरासंभ्रमेज्वरत्वरेत्यूठनिष्ठानत्वम्॰ आदितश्चेतिनिषेधेप्राप्तेविकल्पः॰ एवंचआदित्त्वस्यफलमात्मनेपदमात्रंतच्चएधत्यादिवत्स्वानुबंधत्वेपिसिध्यत्येवेत्याशयेनाह॰ फलमंदमिति॰ संघुष्टइति॰ संपूर्वात्घुषे

ढ्यगत इत्यत्रत्यपि लघुपूर्वादित्ययादेशोन स्यात्· परिवृढस्यापत्यं पारिवृढीकन्ये त्यत्रगुरूपोत्तमलक्षणः ष्यङ् स्यात्· अतोऽसिद्धत्वनिवृत्तयेहलोपोनिपात्य
तइति भाष्यादौ स्थितम्· अतएव ढ्रलोपइतिसूत्रेअणः किं दृढ इति प्राचोग्रंथस्यप्रामादिकतामभिप्रेत्य तृढोवृढइति प्रत्युदाहृतम्· प्रभोनिपातनमिति हलोपप्रयो
जनमपि वृद्धिमापरिवृढय्येत्यादिसिद्धिरिति प्राग्वदेवबोध्यम्·॥ ॥ कृच्छ्गहनयोः कृच्छ्रं दुःखं तत्कारणं च वलक्षणया गृह्यते कषतिर्हिंसार्थः कष्टो मोहइ
ति· दुःखहेतुरित्यर्थः घुषिरविघुषिरविशब्दार्थ इति भ्वादिः घुषिरविशब्दन इति चुरादिर्द्वयोरपि सामान्येन ग्रहणम्· ननु विशब्दनार्थाद्धुषेश्चुरादिणिचा
भाव्यं ततश्चणिचो व्यवधानात् घुषेः परा निष्ठानास्तीति कथमिण्   निषेधप्रसंगः किंच विशब्दने त्विण्निषेधाभावाण्णिच्युपधागुणो निष्ठायां सेटीति णि

कृच्छ्गहनयोः कषः।७।२।२२॥ कषो निष्ठाया इण्न स्यादेतयोरर्थयोः कष्टं दुःखं तत्कारणं च्वास्यात्कष्टं कृच्छ्रमाभीलम्। कष्टो मोहः
कष्टं शास्त्रं दुरवगाहमित्यर्थः। कषितमन्यत्। घुषिरविशब्दने।७।२।२३॥ घुषिर्निष्ठायामनिट् स्यात्। घुष्टा रज्जुः। अविशब्दने किं
म्॥ घुषितम्वाक्यम्। शब्देन प्रकटीकृताभिप्रायमित्यर्थः। अर्देः सन्निविभ्यः।७।२।२४॥ एतत्पूर्वादर्देर्निष्ठाया इण्न स्यात्। समर्णः
न्यर्णः व्यर्णः अर्दितोन्यः। अभेश्चाविदूर्ये।७।२।२५। अभ्यर्णम्। नातिदूरम्। आसन्नम्वा। अभ्यर्दितमन्यत्। णेरध्ययने वृत्तम्।७।
२।२६॥ ण्यन्ताद्वृत्तेः क्तस्येडभावो णिलुक्चाधीयमानेर्थे। वृत्तश्छन्दोऽनेन सम्पादितः अधीतमिति यावत्। अन्यत्र तु वर्त्तिता रज्जुः।

लोपे च घोषितं वाक्यमित्यपि स्यादिति चेन्न· अत्राहुः एवं तर्हि विशब्दन प्रतिषेध एव ज्ञापकः विशब्दनार्थस्य चुरादिणिजनित्य इति नास्त्युक्तदोष इ
ति दिक् अभेः विशेषेण दूरं विदूरं ततोऽन्यदविदूरं तस्य भावः आविदूर्यम्· ब्राह्मणादित्वात्ष्यञ्। अस्मादेव निर्देशान्नञ्पूर्वात्तत्पुरुषादिति निषेधोन भ
वति सामीप्य इत्येव तु नोक्तं नातिदूरस्यासंग्रहापत्तेः तदेतद्ध्वनयन्व्याचष्टे नातिदूरमासन्नं चेति· एवं च सामीप्य इति प्राचो व्याख्यानमुपलक्षणतयानेयमि
त्याहुः णेः अधीयत इति अध्ययनम्· कृत्यल्युट इति बहुलवचनात्कर्मणि ल्युट् णिलुक्चेति· निपात्यत इति शेषः लोपे हि प्रत्ययलक्षणेन गुणः स्या ॥

इति॰दाप्लवने॰अदाविति निषेधान्नघुत्वम्॰इहसर्वेपक्षास्सूपपादाइत्याह॰तांतोवेत्यादिनादीर्घापत्तिरितिविदत्तमित्यादावुपसर्गोस्येत्यर्थः दस्तीत्यत्रद्वोप
क्षौदाइत्यस्यपंआदेशास्सतकारांतस्तकारादिर्वेति॰तत्राद्यपक्षेऽयंदोषोनात्यइत्याशयेनोक्तदोषंपरिहरति॰तकारादाविति॰निष्ठानत्वमिति॰रदाभ्यामित्यने
न॰सन्निपातेति॰तादिंनिमित्तीकृत्यविहितोयोदाताधादेशास्सतकारविघातकनत्वादिविधेर्निमित्तंनभवतीतिभावः॥ ॥अचउपसर्गात्तः तकाराद् का
रउच्चारणार्थःअचइत्यावर्त्ततेतत्रैकंपंचम्यंतमुपसर्गविशेषणंषष्ठ्यपरंषष्ठ्यंतंस्थानलाभायेति व्याचष्टे॰अजंतादित्यादिनायद्वा अचइत्यनावर्ततंपंचम्यंतमे
वास्तुकिंतुद्वितकारकोऽयमादेशस्तेनानेकाल्त्वात्सर्वस्यघोर्भविष्यति॰एकतकारोत्वलोंत्यस्येतिवाधित्वाआदेः परस्येत्यादेरेवस्यादचइतिपंचमीनि

अचउपसर्गात्तः।७।४।४७॥अजन्तादुपसर्गात्परस्यदाइत्यस्यघोःअचस्तःस्यात्तादौकिति।चर्त्वम्।प्रत्तः।अवत्तः।अवदत्तंवित्तंत्वमप्रत्तत्त्वा
दिकर्मणि॥सुदत्तमनुदत्तत्त्वनिदत्तमितिवेष्यतेचशब्दाद्यथाप्राप्तमृदस्तिद्दा।३।१२४।इगन्तोपसर्गस्यदीर्घःस्याद्दादेशोयस्तकारस्तदादौ
वुत्तरपदेखरिचेति चर्त्वमाश्रयात्सिद्धं।नीत्तम्।घुमास्थेतीत्वम्।धेट्।धीतम्।गीतम्।पीतम्।जनसनेत्यात्वम्।जातम्।सातम्।खातम्।अदो
जग्धिर्ल्यप्तिकिति।२।४।३६॥ल्यपितिलुप्तसप्तमीकं।अदोजग्धिःस्यात् ल्यपितादौ किति च।इकारउच्चारणार्थः।धत्वं।झरोझरि।जग्धः॥

ईंशात्॰यद्येवमपोभीत्युत्तरसूत्रेपिद्वितकारएवेतिसर्वादेशःस्यादितिचेत्॰अत्राहुः पंचम्यंतस्याचइत्यनुवृत्तेरेवः परस्यपकारस्यैवभविष्यतितन्नात्यस्यसंयोगांतलोपेपू
र्वस्यजश्त्वेनसिद्धमिष्टमिति॰अवदत्तमित्यादि॰आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैवविशेषणंनेतरेषामसंभवात्॰दातुंप्रक्रांतमारब्धमितिप्रदत्तमित्यस्यैवार्थः इष्यतेइति॰ता
देशबाधनार्थंनिपातनमिष्यतइत्यर्थः अन्येतुअवादीनामुपसर्गप्रतिरूपकत्वाश्रयणेत्ववदत्तंविदत्तमित्यादिसिद्ध्यतिउपसर्गत्वाश्रयणेतु पूर्वोक्तमवत्तवीत्तमित्यादी
तिनापूर्वमिदंवचनमित्याहुः दस्ति॰इकःकाशइत्यतइकइत्युपसर्गस्यघञीत्यतउपसर्गस्येति ढ्रलोपेत्यतोदीर्घइति चानुवर्त्तते॰अणुत्तरपदइन्यतोऽनुवर्त्तंस्योत्तरपदे
इत्यस्यतीतिविशेषणंयस्मिन्विधिरितितदादिविधिस्तदेतत्सकलमभिप्रेत्यव्याचष्टे॰इगंतोपसर्गस्येत्यादिनानचर्त्वस्यासिद्धत्वादादेशतकारेणास्तीत्यतआश्रयात्सिद्ध

र्वि शब्देनेइटिप्राप्ते विकल्पोऽयम् · अविशब्देनेपि संपूर्वस्य परत्वादयं विकल्प एव · आस्वांतइति आङ्पूर्वस्य स्वनेर्मनोभिधानेप्ययमेव विकल्पः परत्वात् आस्वां तमनः आस्वनितं मन इति · हृषेः हृषु अलीके उदित्वान्निष्ठायामनिट् हृषगुष्टो से ट् उभयोरपि ग्रहणमित्यभ यत्र विभाषेयम् · पीनमिति ओदित्वान्निष्ठानत्वं प्यान इ ति श्वीदितो निष्ठायामितीड्भावेय लोपः नत्वे व्यवस्थांतरमाह · सोपसर्गस्य नेत्यादि अंधः कृपः पूह न्न इति हादीसु खेईदित्वादिड्भावे रदाभ्यामिति नत्वम् · ॥ ॥ ॐ ॥ द्यति स्यति दो अवखंडने · षो अंतकर्मणि माङ् माने · मेङ् प्रणिदाने · ष्ठा गतिनिवृत्तौ · श्तिपा निर्देशो धातुविशेषणार्थः नहि श्तिपं विनाश्यनुगुल भः यत्र प्रसारश्च तोत्तः श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः दादाः सासात इति तन्न यङ्लुकि हि इत्त्वाभावं दादितः सासित इति · तत्रेति कित्तीति वचनान्नास्तिम

द्यतिस्यतिमास्थामित्तिकिति ।७।४।४०॥ एषांइकारोन्तादेशः स्यात्तादौ किति । ईत्वइत्वयोरपवादः । दितः । सितः । मामाङ्मेङ् । मितः । स्थितः ।
शाच्छोरन्यतरस्याम् ।७।४।४१। शितः । शातः । छितः । छातः । व्यवस्थितविभाषात्वाद्व्रतविषये श्यतेर्नित्यम् ॥ संशितं व्रतं । सम्यक्संपादितमित्य र्थः । संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः । दधातेर्हिः ।७।४।४२। तादौ किति । अभिहितं । निहितम् । दोदद्घोः ।७।४।४६। घुसंज्ञकस्य दा इत्य स्य दथ् स्यात्तादौ किति । चर्त्वं । दत्तः । घोः किम् । दातः । तान्तो वायमादेशः । नचैवं विदत्तमित्यादा उपसर्गस्य दस्तीति दीर्घोपत्तिः । तकारादेशे तद्विधा नात् दान्तो वा । थान्तो वा । न च दान्तत्वे निष्ठानत्वम् । धान्तत्वे झषस्तथोरिति धत्वं शङ्क्यं सन्निपातपरिभाषाविरोधात् ॥ ११ संगः किंच दोदद्घोरितिवि धीयमान आदेश अनेकाल्त्वात्सर्वस्येति निर्विवादः · तथा च हंते यङ्लुगंतस्य वधादेशवत्साभ्यासस्य प्रवर्तेतेति दादत्त इति त्वद् दाहृतरूपं कथमुक्तिसंभवं लभेते त्याहुः शाच्छो शोतनूकरणे छो छेदने दधातेर्हिः · श्तिपा निर्देशो धेटो निवृत्त्यर्थः तीत्यनुवृत्तेर्यङ्लुकि न दाधितः अत्रापि प्रसादः तानां श्तिपा निर्देशस्य यङ्लुङ्निवृ त्त्यर्थत्वाद्दाधीत इति घुमास्थेतीत्वमुदाहृतं तत्पूर्ववदेव हेयम् · दोदद्घोः इहादेशः थांत एव नतु तदर्थांतः जश्त्वेन तेसंहितायामतुल्यत्वेपि प्रक्रियाया दोषादि ति प्राचः तथा चाहुः तांते दीर्घत्वाख्यो दांते दोषो निष्ठानत्वं धांते दोषो धत्वाख्यः स्यान्निर्दोषत्वात् थांतो आरब्ध इति तदनुसारेणाह · दथ् स्यादिति · दात

भोजनमित्यर्थः विष्व पि अधिकरणवाचिनस्येतिश मुकुन्दस्येति आस्यतेऽस्मिन्नित्यासितमासनमित्यर्थः यायतेऽस्मिन्निति यानम्मार्गः भुज्यतेऽस्मिन्निति भुक्तम् तीघसहेतिवेट्कत्वाचस्य विभाषेतिने डिष्ट्वा इति रुदन्ति षष्ठी रुदितस्येति दिवस्त्वेतिनेट् रुद्रुइति स्वीदित इतिनेट्नलोपः राज्ञामितिक्तस्य च वर्त्तमान इति षष्ठी प्रसूनोतेरिति युञ् अभिषवे यद्यपीह सुगतौ प्रसूनेरिष श्रीस्विणा इति आदितश्चेतिनेट् इट् शीलितइत्यादि शीलसमाधौ रक्षपालने क्षमूष् सहने कुश आह्वाने जुषी प्रीतिसेवनयोः सुयजोर्ङ्वनिप् सुनोतेरिति युञ् अभिषवे यद्यपीह सुगतौ प्रस

इदमि इं यातं रमापते। भुक्तमेतदनन्तस्येत्युचुर्गोप्यो दिदृक्षवः॥ पक्षे आसेरकर्म्मकत्वात्कर्त्तरि भावे च। आसितो मुकुन्दः मुकुन्दस्यासितमिदमिदं यातं रमापते। भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥ पक्षे आसेरकर्म्मकत्वात्कर्त्तरि भावे च। आसितो मुकुन्दः। आसितन्तेन। गत्यर्थेभ्यः कर्त्तरि कर्म्मणि चारमायतिरिदं यातः। तेनेदं यातम्। भुजेः कर्म्मणि। अनन्तेनेदम्भुक्तम्। कथम्भुक्ता ब्राह्मणाः। भुक्तमस्ति एषामिति मत्वर्थीयोऽच्। वर्त्तमाने इत्यधिकृत्य। ञीतः क्तः॥ ३।२।१८७॥ त्रिष्विदा। स्विन्नः। त्रिइन्धी। इद्धः॥ मतिबुद्धिपूजार्थेभ्यश्च॥ ३।२।१८८॥ मतिरिहेच्छा बुद्धेः पृथग्ग्रहणात्। राज्ञाम्मत इष्टः ज्ञायमान इत्यर्थः। बुद्धः। विदितः। पूजितः। अर्च्चितः। चकारो ऽनुक्तसमुच्चयार्थः। शिलितो रक्षितः। क्षान्तः। आक्रुष्टो जुष्ट इत्यादि॥ नपुंसके भावे क्तः॥ ३।३।११४॥ क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्। जल्पितम्। शयितम्। हसितम्॥ सुयजोर्ङ्वनिप्॥ ३।२।१०३॥ सुनोतेर्यजेश्च ङ्वनिप् स्याद्भूते। सुत्वा। सुत्वानौ। यज्वा। यज्वानौ॥ जीर्य्यतेरतृन्॥ ३।२।१०४॥ भूत इत्येव। जरन्। जरन्तौ। जरन्तः। वासरूपन्यायेन निष्ठापि। जीर्णः। जीर्णवान्॥ छन्दसि लिट्॥ ३।२।१०५॥ लिटः कानज्वा॥ ३।२।१०६॥ क्वसुश्च॥ ३।२।१०७॥ इह भूतसामान्ये छन्दसि लिट् तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम्। कवयस्तु बहुलम्प्रयुञ्जते। तन्तस्थिवांसं नगरोपकण्ठे। श्रेयांसि सर्व्वाण्यधिजग्मुषस्त इत्यादि॥ १ नेस्पर्ययोरितिनिरनुबन्धकयोरेव ग्रहणं न्याय्यं तथाप्यनभिधानादुभयपदिना साहचर्य्याद्वा तयोर्ग्रहणं न भवतीति भावः ङकारः सुनोतेर्गुणप्रतिषेधार्थः यकारस्तु स्वरार्थः तुगर्थश्च यज्वेत्यादि क्वनिपि कृते त्वत्र च विस्वपीति सम्प्रसारणं स्यादितिङ्वनिब्वक्तः अतृन्निति नकारः स्वरार्थः ऋरतः जरन्निति ऋकारस्य गुणोरपरोऽकारः उगिदचामिति नुम् संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः

गोरित्युक्तं प्रतिरूत्ववदिति भावः धीतमिति द्यतेर्हिरित्यत्र लुग्विकरणस्य निर्देशात् धेट्पानइति धातोर्हि न भवति नापिदत् दोरद्घोरिति ददस्त्यपाठादिति भावः उच्चारणार्थ इति इदित्वे तु नुम् स्यादिति भावः धत्तमिति झषस्तथोरित्यनेन झरो झरीति अनेन पाक्षिको धलोप इत्यर्थः इदानीं क्तार्थान्प्रपंचयति ॥ ॥ आदिकर्मणि व्याख्यातम् प्रकृतः कटमिति कटकर्तुमारब्धवानित्यर्थः प्रशब्द आदिकर्मद्योतनार्थः क्तेनोक्तत्वात्कर्तरि प्रथमा कर्मण्यनुक्तत्वात् द्वितीया प्रकृतः कटस्तेनेति क

आदिकर्मणि क्तः कर्तरि च ॥३।४।७१॥ प्रकृतः कटं सः । प्रकृतः कटस्तेन ॥ निष्ठायामण्यदर्थे इति दीर्घः । क्षियो दीर्घादिति नत्वम् । प्रक्षीणः सः ॥ वा क्रोशदैन्ययोः ॥६।४।६१॥ क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च । क्षीणायुर्भव । क्षितायुर्वा । क्षीणोऽयं तपस्वी । क्षितो वा ॥ निनदीभ्यां स्नातेः कौशले ॥८।३।८९॥ आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये । निष्णातः शास्त्रेषु । नदीष्णः । सुपीति कः ॥ सूत्रं प्रतिष्णातम् ॥८।३।९०॥ प्रतेः स्नातेः षत्वम् । प्रतिष्णातं सूत्रं शुद्धमित्यर्थः । अन्यत्र प्रतिस्नातम् ॥ कपिष्ठलो गोत्रे ॥८।३।९१॥ कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः । गोत्रे किम् । कपीनां स्थलं कपिस्थलम् ॥ विकुशमिपरिभ्यः स्थलम् ॥८।३।९६॥ एभ्यः स्थलस्य सस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ॥ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥३।४।७२॥ एभ्यः कर्तरि क्तः स्यात् भावकर्मणोश्च । गङ्गां गतः । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिर्दिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे प्राप्ता गङ्गा तेनेत्यादि ॥ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥३।४।७६॥ एभ्योऽधिकरणे क्तः स्यात् । चाद्यथाप्राप्तम् । ध्रौव्यं स्थैर्यम् ॥

र्मणि प्रयोगे तु विपर्ययः नदीष्ण इति नद्यां स्नातो नदीस्नानेन कुशल इत्यर्थः गत इति अत्र दान्तोपदेश इति मलोपः प्राप्त इति प्रपूर्व आप्लृ व्याप्तौ आप्तिरप्यौह्यगतिशब्देन विवक्षितेति भावः ग्लान इति ग्लै हर्षक्षये अकर्मकोऽयम् आदेच इत्यात्वे संयोगादेरात इति नत्वम् शेषमिति अधिशीङ्स्थासां कर्मेति कर्मत्वं अधिष्ठित इति द्यतिस्यति इत्वम् उपोषित इति वसतिक्षुधोरितीट् शासिवसीति षत्वम् अनुजीर्ण इति जॄष् वयोहानौ नेन्द्र इत्द्धातोः हलि चेति दीर्घः नत्वणत्वम् ॥

लोपमिडागमो बाधते कृते त्विडागमे गमहनेत्युपधालोपस्तस्य चाजनिमित्तत्वेन स्थानिवत्त्वाद्द्वित्वम्· यद्वा द्विर्वचनेचीति निषेधपक्षे तूपधालोपात्प्रागेव द्वित्वं प्राप्नुपधालोप·शासिवसिघसीनाञ्चेति षत्वं चर्त्वञ्च· अभ्यासे चर्चेत्यभ्यासघकारस्य जश्त्वमिति ॥ ॥ निषेदुषीमिति· षद्लृविशरणादौ लिटि धातोरिति द्वित्वे कृते एकहल्मध्यइत्येत्वाभ्यासलोपौ· उगितश्चेति ङीपि वसोरिति सम्प्रसारणे वलादित्वाभावान्नेट् सदिरप्रतेरिति षत्वम्· उसितु निषेदिवान्· अध्यूषुषइति· वसनिवासे अधिपूर्वः वचिस्वपीति सम्प्रसारणं द्वित्वं हलादिशेषसवर्णदीर्घाः ऊसिभत्वात्सम्प्रसारणं प्रथमेकवचनेतु अध्यूषिवान्· उपेयिवाननाश्वा ऽनूचानश्च ॥ ३ । २ । १०९ ॥ इति वलादिलक्षण एवेट् नेड्वशि कृतीति निषिद्धः क्रयादिनियमात्तु नः प्राप्तः वस्वेकाजाद्घसामिति सूत्रेण कृतद्वित्वानामेकाचामादन्तानां घसेश्च वसोरिड्नान्येषामिति नि

निषेदुषीमासनबन्धधीरः। अध्यूषुषस्तामभवञ्जनस्य। शुश्रुवान्। उपेयिवाननाश्वाननूचानश्च ॥ ३ । २ । १०९ ॥ एते निपात्यन्ते। उपपूर्वादिणो भाषायामपि भूतमात्रे लिड् तस्य नित्यं क्वसुः। इट्। उपेयिवान्। उपेयुषः स्वामपि मूर्त्तिमग्र्याम्। उपेयुषी। उपेत्यपि विवक्षितम्। ईयिवान्। समीयिवान्। नञ्पूर्वादश्नातेः क्वसुरिडभावश्च। श्नातेर्ज्ञपयते रनाशुषइति भारविः। अनुपूर्वाद्वचेः कर्त्तरि कानच्। विदस्यानुवचनं कृतवाननूचानः। विभाषा गमहनविदविशाम्। ७ । २ । ६८ । एभ्यो वसोरिड्वा। जग्मिवान्। जगन्वान्। जघ्निवान्। जघन्वान्। विविदिवान्। विविद्वान्। विविशिवान्। विविश्वान्। विशिना साहचर्याद्विन्दतेर्ग्रहणम्। वेत्तेस्तु विविद्वान्। नेड्वशि कृतीति इण्निषेधः। दृशेश्चादृदृशिवान्। ददृश्वान् ॥



यच्छ्रुताप्रतिषिद्धो नित्यत्वात् द्वित्वे कृतेऽनेकाच्त्वात्· नचसवर्णदीर्घेणैकाच्त्वं दीर्घइणः किती त्यभ्यासस्य दीर्घे कृते तत्सामर्थ्यात्सवर्णदीर्घाभावइति पक्षाश्रयणात्· सएव वलादिलक्षणइट् इह प्रतिषिध्यते नापूर्वो विधीयते· तेन सम्प्रसारणविषये न भवति अतएवोदाहरति· उपेयुषइति· सतिलिडितस्य यणादेशे उपेयुषइति स्यादितिभावः अविवक्षितमिति· व्याख्यानमेवात्र शरणं· ईयिवानिति· इणो द्वित्वे सवर्णदीर्घं बाधित्वा ओरूत्वादिणो यणीति यण् भवति वसोरिडागमे हि परत्वाजादिप्रत्ययस्य सत्वात् ॥ वचेरिति· वच परिभाषण इत्यस्माद्ब्रुवो वचे र्वा कर्त्तरि नतु भावकर्मणोः एतच्च निपातनाल्लभ्यम्· जग्मिवानित्यादि· इट्पक्षे गमहनेत्युपधालो

छन्दसि लिडिति· सूत्रस्यार्थमाह· भूतसामान्ये इति· न च छन्दसि लुङ्लङ्लिट इत्यनेन गतार्थताशंक्या धातुसम्बन्धाधिकारे हि स विधिः इदन्तु धातुसम्बन्धं विनापि भ
वतीति विशेषात्· अत्र व्याचख्युः कानचः कित्करणं तितिराणा इत्यत्र ऋच्छत्यॄतामिति गुणस्य निषेधार्थं सति प्रतिषेधे विषये आरभ्यते चकाराणा इत्यत्र तु असंयोगा
ल्लिट् किदित्येव सिद्धं कित्त्वमिति· त्रिमुनिमतमिति· सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च· भाष्यवार्तिकयोरपि क्वसुकानचोश्छन्दस्युभयथेति
वचनात्सार्वधातुकत्वेन सार्वधातुकमपिदिति ङित्त्वादेवाजिवानित्यादौ नलोपादीनां कित्कार्याणामन्यथासिद्धिमाशंक्यतीति वीन् तितिराण इत्यादौ ऋच्छत्यॄ
तामिति प्राप्तस्य गुणस्य बाधनार्थं कित्करणमिति सिद्धान्तितत्वात्· अत एव कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इति केषाञ्चिदुत्प्रेक्षा नादर्त्तव्येति
हरदत्तमाधवादिग्रन्थे स्पष्टमिति भावः· कतयस्त्विति· गतानुगतिकतयेति भावः॥ ❀ ॥ वस्वेवस्वित्यविभक्तिको निर्देशस्तथा च व्याख्यास्यति वसोरिति· नि

वस्वेकाजाद्घसाम्।७।२।६७। कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिड् नान्येषाम्। एकाचः। आदिवान्। आत्। ददिवान्। जक्षिवा
न्। एषां किम्। बभूवान्। भाषायां सदवसश्रुवः।३।२।१०८। सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्। तस्य च नित्यं क्वसुः॥ ॥

त्यत्वाद्द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह· कृतद्विर्वचनान्येकाचामिति· कृतेपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः· नेड्वशि कृती
ति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्तस्येटो नियमोऽयमित्याह· नान्येषामिति· आदिवानिति· अद भक्षणे द्वित्वं हलादिशेषाभ्यासदीर्घसवर्णदीर्घेषु कृतेषु।
कृतद्वित्वेऽप्ययमेकाजेवेतीड् भवति· आरिवानिति· ऋ गतौ ऋच्छत्यॄतामिति गुणे कृते द्वित्वादिषु पूर्ववत्कृतेष्वयमप्येकाच् ददिवानिति· डुदाञ् दाने कृते द्वित्वे
नायमेकाच्· इटि निमित्तस्यातो लोपो नासति तस्मिन्भवतीत्यनेकाजर्थमुदाहरणम्· जक्षिवानिति· लिट्यन्यतरस्यामित्यदेर्घस्लादेशः· द्वित्वे कृते नायमेका
जिति घसिग्रहणम्· अत्र व्याचख्युः द्वित्वात्पूर्वं परत्वाद्घसिभसोर्हलीत्युपधालोपस्यास्मिंश्च कृतेऽनच्कत्वात् द्वित्वमेव न स्यात्· न चास्य द्वित्वे कर्त्तव्ये द्वि
र्वचनेऽचीत्यनेन स्थानिवद्भावो निषेधो वाशंक्यः द्वित्वनिमित्तस्याचोऽभावात्· ततश्च नायं कृतद्विर्वचन एकाज्भवतीति घसिग्रहणं तत्सामर्थ्यात्तु परत्वादुपधा

लक्षणहेत्वोः लक्ष्यतेऽनेनेति लक्षणं परिचायकम्. शयाना इति. शीङ् आत्मनेपदित्वात् तस्य लटः शानच्. अत्र शयनं लक्षणं चिन्हं. यवनकर्तृकभोजनस्य तु
फलं नाधिकरणमिति हेत्वपेक्षया लक्षणस्य पृथङ् निर्देशः. अर्जयन्निति. अर्ज प्रतियत्ने चुरादिः. अर्जनार्थो वास इत्यर्थः. हरिमिति. हरिदर्शनं मुक्तौ करणमित्य
र्थः. विदेः. स्थानिवत्त्वादेव सिद्धे वसोरुगित्करणं वसोः सम्प्रसारणमित्यत्र क्वसोरपि सामान्यग्रहणार्थम्. तत्सामर्थ्याच्चैकानुबन्धग्रहणे न द्व्यनुबन्धकस्येत्येतद
पि न प्रवर्तते. पूङ्यजोः शानन्. शकारः सार्वधातुकत्वार्थः. नकारः स्वरार्थः. ण्वुलादिवत्स्वतन्त्रो ऽयं न तु शत्रादिवल्लादेशः. तथा हि सति वेति वाच्यम्. स्यात् पवते य

लक्षणहेत्वोः क्रियायाः।३।२।१२६॥ क्रियायाः परिचायके हेतौ चार्थे वर्त्तमानाद्धातोर्ल्लटः शतृशानचौ स्तः। शयाना भुञ्जते यवनाः। अर्ज्ज
यन्वसति। हरिं पश्यन्मुच्यते। हेतुः फलं कारणञ्च। इत्यत्र च॥८।४।२९॥ प्रपीयमाणः सोमः। ईदासः।७।२।८३॥ आसेः परस्यानस्य ईः स्यात्
आदेः परस्य। आसीनः। विदेः शतुर्वसुः।७।१।३६॥ वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात्। विदन्। विद्वान्। विदुषी। तौ सत्।३।२।१२७॥ तौ श
तृशानचौ सत्संज्ञौ स्तः। लृटः सद्वा।३।३।१४॥ व्यवस्थितविभाषेयं। तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहे
त्वोश्च नित्यं। करिष्यन्तं करिष्यमाणं पश्य। करिष्यतोपत्यं कारिष्यतः। करिष्यद्भक्तिः। हे करिष्यन्। अर्जयिष्यन्वसति। प्रथमासमानाधिकरणे
पि क्वचित्। करिष्यति करिष्यन्। पूङ्यजोः शानन्।३।२।१२८॥ वर्त्तमाने। पवमानः। यजमानः॥ ॥ ॥ ॥ ॥

जत इति तिङोपि यथा स्युरिति. न च वासरूपन्यायेन निर्वाहः. लादेशेषु वासरूपविधिर्नास्तीत्याकरे स्थितत्वात्. किञ्च लादेशत्वे लः कर्मणि चेति भावकर्मणोर्विहि
तं स्यादिति भावकर्मणोरपि प्रयुज्येत. इष्यते तु कर्तर्येव. एवं चानशः इङ्धार्योरिति शतुश्च स्वातन्त्र्यं बोध्यम्. अत्र केचित्. शानन्नो लादेशत्वे लसार्वधातुकानु
दात्तत्वं स्यादित्याहुस्तच्चिन्त्यम्. परत्वान्नित्स्वरप्रवृत्त्या पवमान इत्यादेराद्युदात्तत्वे शानन्नोऽनुदात्तत्वस्येष्टत्वात्. नन्वेषां लादेशत्वाभावे कारे सोमम्पवमान इ
त्यादौ कर्मणि षष्ठी स्यादिति चेन्मैवम्. न लोकेति सूत्रे तृन्निति प्रत्याहारनिर्देश इत्युक्तत्वात्. ॥ ॥ ॥ ॥

लृटः शतृसामानाधिकरण्येऽसतीति· यद्यप्यादेशरहितस्य लटः प्रयोगाभावात्सामानाधिकरण्यं दुर्लभं तथापि शतृशानचोस्तः द्दृष्ट्वास्थानिन्यपि सामानाधिकरण्यं कल्प्य ते· शवादीति शित्वेन सार्वधातुकत्वादिति भावः पचन्तमिति· शतुरुगित्वान्नुम् विक्लित्यनुकूलवर्तमानव्यापाराश्रयमित्यर्थः आनेमुक् अतो येय इति पूर्वसूत्रात्स्तु वृत्ते पञ्चम्यन्तमप्यत इति पदं षष्ठ्या विपरिणम्यते आन इति सप्तमीबलात्· नचात इति पञ्चमीबलादान इति सप्तम्यन्तम्पदं षष्ठ्या विपरिणम्यतामिति शंक्यम्· प ञ्चम्याः पूर्वसूत्रे चरितार्थत्वात्सप्तम्याश्चाचरितार्थत्वात्तदेतदाह· अङ्गस्यात इति· प्राचा त्वदन्ताङ्गस्येति व्याख्यातं तदयुक्तम्· पचमान इत्यादावङ्गपदे शान्तस्य सार्वधा तुकमनुदात्तमिति शानचः स्वरस्यासिद्धिप्रसङ्गात्· अदन्ताङ्गस्येति पक्षे हि अङ्गभक्तो मुक् स चाङ्गमेव न व्यवदध्यात्तदवयवमकारन्तु व्यवदध्यादेव अकारमात्र

लटः शतृशानचावप्रथमासमानाधिकरणे।३।२।१२४॥ अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः। शवादि पचन्तं चैत्रम्पश्य। आनेमुक् ।७।२।८२॥ अङ्गस्यातो मुगागमः स्यादाने परे। पचमानं चैत्रं पश्य। लडित्यनुवर्तमाने पुनर्लड्ग्रहणं अधिकविधानार्थम्। तेन प्रथमासा मानाधिकरण्ये क्वचित्। सन्ब्राह्मणः। माङ्याक्रोशे इति वाच्यं॥ माजीवन्यः परावज्ञादुःखदग्धोऽपि जीवति। माङि लुङि इति प्राप्ते। एत इत्वनसामर्थ्याल्लट्। सम्बोधने च।३।२।१२५॥ हे पचन्। हे पचमान॥ ॥ १ भक्तत्वे तु तदवयवत्वान्नास्ति व्यवधानमित्यदोषः नन्वेवं स्वरविधौ

व्यंजनमविद्यमानवदिति परिभाषया मुकोऽविद्यमानत्वेन व्यवधानाभावात्स्यादेवानुदात्तत्वमिति चेत् अत्राहुः हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवन्नान्यत्रेत्या कराऽऽरूढम्· नचात्र हलः स्वरप्राप्तिरस्तीति प्रकृते परिभाषेयं नोपयुज्यतेऽन्यथा मरुत्वानित्यादावपि ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं स्यादिति दिक्· लडिति यद्यपि प्रथमान्तं प्रकृतं तथापि धातोरित्यधिकारात्पञ्चम्यन्तात्परं प्रथमान्तं षष्ठ्या विपरिणम्यत इति भावः नच वर्तमाने लडित्यत्रैवोक्तरीत्या विपरिणामोऽस्त्विति शंक्यम्· प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वन्नास्तीति यत्रिजक्किद्रुस्त्रन्नित्यत्र भाष्यकारैः स्वीकृतत्वात्· प्रथमासामानाधिकरण्येऽपीति· उपलक्षणमिदम्· ।अप्रथमान्तेन सामानाधिकरण्याभावेऽपीत्यर्थः तेन कुर्वतोऽपत्यं कौर्वतः कुर्वतो भक्तिः कुर्वद्भक्तिः कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिध्यति· अन्यथा कुर्वतोऽपत्यमित्यादौ तद्धित

सि॰कौ॰ शा॰त॰ ३४

अलंकृञ् कृञित्युक्तेऽलङ्करणार्थस्यैव ग्रहणं न तु कृञ् हिंसायामित्यस्य प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्यैव ग्रहणमिति न्यायात्· निराङ्पूर्वोपि कृञ् स एव· प्रपूर्वो जनी
प्रादुर्भावे· इहडुपचष्पाके पत्लृ गतौ मदी हर्षे न योपि उत्पूर्वौ· पठ्यन्ते· तत्र उदः पचपतमदः इत्येव वक्तव्ये प्रत्येकमुत्पूर्वस्य पाठ उपसर्गान्तरनिवृत्यर्थस्तेन समु
त्पतिष्णुरित्यादि न भवतीत्याहुः रुचदीप्तौ अपपूर्वः त्रपूष् लज्जायाम्· वृतु वर्तने वृधु वृद्धौ षह मर्षणे चर गतौ· इत्यादीति· आदिशब्दग्राह्यास्तु निराकरिष्णुः

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्।३।२।१३६॥ अलङ्करिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्प
तिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्तिष्णुः। वर्द्धिष्णुः। सहिष्णुः। चरिष्णुः। णेश्छन्दसि।३।२।१३७॥ वीरुधं पारयिष्णवः। भुव
श्च।३।२।१३८॥ छन्दसीत्येव। भविष्णुः। कथं तर्हि जगत्प्रभोरप्रभविष्णु वैष्णवमिति। निरंकुशाः कवयः। चकारोऽनुक्तसमुच्चयार्थः।
भ्राजिष्णुरिति वृत्तिः। एवं क्षयिष्णुः। नैतद्भाष्ये दृष्टम्। ग्लाजिस्थश्च ग्स्नुः।३।२।१३९॥ छन्दसीति निवृत्तम्। गिदयं न तु कित्। तेन स्थ
ईत्वं न। ग्लास्नुः। गित्वान्न गुणः। जिष्णुः। स्थास्नुः। चाद्भुवः। भूष्णुः। क्ङितीत्यत्र गकारप्रश्लेषान्नेट्। भूष्णुः। दंशेश्छन्दस्युपसंख्यानम्। दंक्ष्ण
वः पशवः। त्रसिगृधिधृषिक्षिपेः क्नुः।३।२।१४०॥ त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः। शमित्यष्टाभ्यो घिनुण्।३।२।१४१॥ उकार उच्चारणार्थ इति काशि
का। अनुबन्ध इति भाष्यम्। तेन शमिनितरा शमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः। न चैवं शमिनावित्यादौ नुम्प्रसङ्गः। झल्ग्रहणमपकृष्य झ
लन्तानामेव तद्विधानात्। नोदात्तोपदेशस्येति वृद्धिनिषेधः। शमी दमी तमी श्रमी भ्रमी क्षमी प्रमादी उत्पूर्वोन्मदेः। अलंकृञादिसूत्रे णोष्णुच्च
कौ वासरूपविधिना घिनुणपि। उन्मादी। ताच्छीलिकेषु वासरूपविधिर्नास्तीति तु प्रायिकं॥

इष्णुसहिष्णू च चेरतुः खरदूषणाविति भट्टिः कालिदासोप्याह एतानामुत्पतिष्णव इति· केचित्तु यत इति स्थाने दाने सूत्रे पठित्वा पदगतावित्यस्मात्त्वयमाहुः उन्मदिष्णुः
रोचिष्णुः अपत्रपिष्णुर्वेतिष्णुः वर्द्धिष्णुः सहिष्णुः चरिष्णुः पारयिष्णव इति· अयामन्तेतिणेरय्· नेतदिति· चकारस्यानुक्तसमुच्चयार्थत्वमित्यर्थः ईत्वं नेति· घुमास्थेत्या

११ प्रजनिष्णुः उत्पचिष्णुः उत्पतिष्णुः उत्पति

ताच्छील्य· वचनग्रहणंस्पष्टार्थम्· चानशोत्रादेशत्वाभावेनात्मनेपदत्वाभावात्परस्मैपदिभ्योपिविधानमितिध्वनयन्नुदाहरति· निघ्नानइति· गमहनेत्युपधालो
पः इङ्‌धार्योः इङ आत्मनेपदित्वात् शत्रानसिध्यतिधारयतेरपिकर्तृगामिनिक्रियाफलेनसिध्यतिलसार्वधातुकानुदात्तत्वञ्चप्राप्नोतीत्ययमारम्भः सुञोयज्ञसं
योगे सुनोतेः शतृप्रत्ययः स्यात् यज्ञेनसंयुज्यमानेर्त्विग्भ्योत्· नन्विहसुञोपज्ञेरत्येवास्तुयज्ञविषयकश्चेत्सुनोत्यर्थइतिव्याख्यायांसुराःसुनोतीत्यादेर्व्यावर्तयितुंश
क्यत्वात् अत्राहुः संयोगग्रहणंप्रधानकर्तृसंप्रत्ययार्थंतेनयजमानादन्यत्रनभवतीति· एवञ्चाप्रधानेकर्तरिलिटः शतृशानचावित्यनेनापिनभवतिसंयोगग्र

ताच्छील्यवयोवचनशक्तिषुचानश्॥३।२।१२९॥ एषुद्योत्येषुकर्तरिचानश्। भोगम्भुञ्जानः कवचंबिभ्राणः। शत्रून्निघ्नानः। इङ्‌धा
र्य्योः शत्रकृच्छ्रिणि॥३।२।१३०॥ आभ्यांशतृस्यादकृच्छ्रिणिकर्तरि। अधीयन्। धारयन्। अकृच्छ्रिणिकिम्। कष्टेनाधीते। धारयतिद्वि
षोऽमित्रे॥३।२।१३१॥ द्विषन्शत्रुः। सुञोयज्ञसंयोगे॥३।२।१३२॥ सर्वेसुन्वन्तः। सर्वेयजमानाः सत्रिणः। अर्हः प्रशंसायाम्॥३।२।१३३॥
अर्हम्। आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु॥३।२।१३४॥ क्विपमभिव्याप्यवक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषुकर्तृ
षुबोध्याः तृन्॥३।२।१३५॥ कर्ताकटम्॥ ॥

हणसामर्थ्यादितिहरदत्तः यः सुन्वंतसुवतीत्यादीनामेकवचनान्तानांयजमानपरत्वसम्भवेपिव
हुवचनान्तानान्तुनसम्भवतिएकस्मिन्यागेएकस्यैवयजमानत्वादित्याशंक्ययोगविशेषेतुसम्भवतीतिदर्शयितुमुदाहरति· सर्वेसुन्वन्तइत्यादि· सत्रयागे
हिवहवोयजमानास्तएवऋत्विजांकर्मसोमाभिषवनंकुर्वंतीतिसुन्वन्तइत्यादिवहुवचनान्तस्यापियजमानपरत्वेसम्भवतीतिभावः अर्हः प्रशंसायांकिम्·
अर्हतिचौरोवधम्· आक्वेः शीलादीनांत्रयाणांविशेषणंसमर्पयितुंनिर्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतधात्वर्थोनिर्दिश्यते· क्विपमभिव्याप्येति· भ्राजभासधु
॥ विद्युतोर्जीतिवक्ष्यमाणमितिशेषः कर्ताकटानिति· नलोकाव्ययेतिषष्ठीनिषेधः॥ ॥

तिविपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः अकारस्त्वागन्तुकः केचित्तु विनाशीति ण्यन्तमेव पठन्ति परिवादीति तु वदेर्ण्यन्तस्य पाठो निर्विवाद एव असूय
तिः कण्ड्वादियगन्तः निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् स्यादेतत् असूयतेरेव वुञ्विधेयो नेतरेभ्यः निन्दादीनां ण्वुलैव सिद्धेः न हि तत्र लित्स्व
रनित्स्वरयोर्विशेषोऽस्ति उभयथाप्याद्युदात्तत्वात् असूयतेस्तु ण्वुलि तितीति प्रत्ययात्पूर्वमुदात्तं वुञि तु ञ्नित्यादिर्नित्यमित्यादिरुदात्त इति विशेषस्तत्राह ण्वुलेति
तन्नाद्योनेति नेदं ण्वुल्विषयकमेव ज्ञापकं किन्तु सामान्यतः प्रत्ययमात्रविषयकमित्यर्थः॥ ॥ देविक्रुशोः दीव्यतेर्हेतुमण्ण्यन्तस्य दिवु कूजने इति चुरादि
ण्यन्तस्य च ग्रहणम् चलनशब्दार्थौ चल कम्पने चुप मन्दायां गतौ कपि चलने शब्द शब्दने चुरादिः रु शब्दे चलन इत्यादिसूत्रे चोरित्यनादेशः अनुदात्तेतश्च हला

देविक्रुशोश्चोपसर्गे ॥३।२।१४७॥ आदेवकः। आक्रोशकः। उपसर्गे किम्। देवयिता। क्रोष्टा॥ चलनशब्दार्थादकर्मकाद्युच् ॥३।२।१४८॥ चल
नार्थाच्छब्दार्थाच्च युच् स्यात्। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात्किम्। पठिता विद्याम्। अनुदात्तेतश्च हलादेः ॥३।२।
१४९॥ अकर्मकाद्युच् स्यात्। वर्तनः। वर्द्धनः। अनुदात्तेतः किम्। भविता। हलादेः किम्। एधिता। अकर्मकात्किम्। वसिता वस्त्रम्। जुचंक्रम्य
दन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥३।२।१५०॥ जु इति सौत्रो धातुर्गतौ वेगे च। जवनः। चंक्रमणः। दन्द्रमणः। सरणः। गृधेर्णा सिद्धे पदग्र
हणं लषपतपदे त्वकञा बाधा माभूदिति। तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति तेनालंकृञस्तृन्न। क्रुधमण्डार्थेभ्यश्च ॥३।२।
१५१॥ क्रोधनः। रोषणः। मण्डनः। भूषणः॥ ॥

॥ देः नत्रसर्वोप्यनुदात्तेत् हलन्त एवेति तदन्तविधिं बाधित्वा सामर्थ्याद्धलादिरेव गृह्यते
तत्किमादिग्रहणेनेति चेत् अत्राहुः आदिग्रहणाभावे हलन्तादित्यर्थः स्यात् यथा हि सत्येधितेत्यादावतिप्रसङ्गः स्यात् जुगुप्सन इत्यादि च न सिध्येत् अस्ति चेहानुदात्तेत्त्वं
गुपादिषु वयवे चरितार्थस्याद्गुवस्यस्य समुदायविशेषकत्वादिति दिक् जुचंक्रम्य कमिद्रमी यङन्तौ क्रमु पादविक्षेपे द्रम हम्म मीमृ गतौ गृधेर्णेति अनुदात्तेतश्चेत्य
नेन ग्रहपदिग्रहणं सकर्मकार्थमिति वृत्तिकृतोक्तम् भाष्ये तु अनभिधानादेव सकर्मकान्न भविष्यतीत्युक्तत्वात् ज्ञापनार्थमेव तदित्याशयेनाह बाधा माभूदित्यादि॥

दिनागित्यादिति· ङ्किति चेत्यत्र गकारं प्रश्लिष्य गिति किति ङितीति व्याख्यानादिति भावः गकारप्रश्लेषादिति· नन्वेवं गकारे चर्त्वे स्यासिद्धत्वाद्दृशि चेत्युत्वं स्यादिति चेत् सत्यम्· सौत्रोऽयं निर्देशः तथा च वार्त्तिकम् ग्लोर्गित्वान्न स्थ ईकारः क्ङितोरीत्वशासनात्· गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरितोरिति दंस्रमावइति· दंश दशने व्रश्चेत्यादिना षत्वे षढोः कः सीति कत्वम् आदेशप्रत्यययोरिति षत्वम्· अनिदितामिति नलोपेन गुणो गित्वेन प्राप्त्यभावात्· त्रसुरिति· नेड्वशि इति नेट्· शमित्यष्टाभ्यो इति शब्द आद्यर्थः शमिनी तरेत्यत्रेति· अत्र नद्याः विद्वत्तरेतिवत्तसिलादिष्विति पुंवद्भावेन शमितरेति भाव्यम्· न च उगित्वाभ्युपगमस्य फलाभावाद्ध्रस्वविकल्प

सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च। ३।२।१४२॥ घिनुण् स्यात्। सम्पर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती। वौ कषलसकत्थस्रम्भः। ३।२।१४३॥ विकाषी। विलासी। विकत्थी। विस्रम्भी। अपे च लषः। ३।२।१४४॥ चाद्वौ। अपलाषी। विलाषी। प्रे लपसृद्रुमथवदवसः। ३।२।१४५॥ प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी। निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्। ३।२।१४६॥ पञ्चम्यर्थे प्रथमा। एभ्यो वुञ् स्यात्। निन्दकः। हिंसक इत्यादि। ण्वुलासिद्धे वुञ्वचनं ज्ञापकम् तच्छीलादिषु वासरूपन्यायेन तृजादयो नेति॥ ॥ १ एवं भवतीति वाच्यम्· पाक्षिकह्रस्वेन उगित्कार्यस्य चरितार्थत्वाद्ध्रस्वाभावपक्षे नुम्वं वा भावस्य दुर्वारत्वादित्याहुः॥ ॥ सम्पृचा· सम्पर्कीति· पृची संपर्के चजोरिति कुत्वे गुणः परिदेवीति· देवृ देवने भ्वादिः ण्यन्तस्य दीव्यतेश्च नेह ग्रहणं लाक्षणिकत्वात्· अण्यन्तैः साहचर्याच्च· अभ्याघातीति· अभ्याङ्पूर्वाद्धन्तेर्हस्य कुत्वेन घः हनस्तोऽचिण्णलोरिति नस्य तः अत उपधाया इति वृद्धिः वौ कष· कष हिंसार्थः लस श्लेषणक्रीडनयोः कत्थ श्लाघायाम्· स्रम्भु विश्वासे· अपे च लषः लष कान्तौ· प्रे लप॥ लप व्यक्तायां वाचि· प्रमाथीति· मथे विलोडने· निन्दहिंस· इहस्ते विनाशे

स्पृहि॰ स्पृह ईप्सायाम्॰ ग्रह ग्रहणे॰ पत गतौ॰ चुरादावदन्ताविति॰ तेन णेरयादेशेन रूपसिद्धिरिति भावः॰ यद्येवं णिचि उपधागुणवृद्धी स्यातामत आह॰ अदन्ता इति॰ तत स्याल्लोपस्य स्थानिवत्त्वान्न दभाव इति भावः॰ तत्पूर्व इति॰ तन्द्रेर्भावस्य समासोऽपि निपातनादिति बोध्यम्॰ डु॰ धाञ्॰ श्रत्पूर्वं॰ श्रद्धालुः॰ धेट् स्तने रूपम्॰ श्रत्पूर्वस्यात्तस्य प्रयोगाभावादिति व्याचख्युः॰ कथं कृपालुः स्पर्द्धालुः॰ कृपां स्पर्द्धां च लातीति विग्रहे मृगय्वादित्वात्कुः॰ दाधेट्॰ डुदाञ्॰ दो दैप्॰ यथाणामेव ग्रहणं न तु दाण्॰ दायोरि त्याहुः॰ भङ्गुर इति॰ चजोरिति कुत्वम्॰ अभिधानस्वभावाद्भञ्जेः कर्मकर्तर्येव इत्याहुः॰ विदिभिदि॰ विदेर्ज्ञानार्थस्यैव ग्रहणं न तु लाभार्थस्य व्याख्यानात्॰ छिदुरमि

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।३।२।१५८॥ आचात्स्वयश्रुत्वाद्वन्ना ।स्पृहयालुः ।गृहयालुः ।पतयालुः ।दयालुः ।निद्रालुः ।तन्द्रेर्वीसितो नान्तत्वं निपात्यते। तन्द्रालुः। शीङो वाच्यः। शयालुः। दाधेट्सिशदसदो रुः ।३।२।१५९॥ दारुः। धारुः। सेरुः। शद्रुः। सद्रुः। सृघस्यदः क्मरच् ।३।२।१६०॥ सृमरः। घस्मरः। अद्मरः। भञ्जभासमिदो घुरच् ।३।२।१६१॥ भङ्गुरः। भासुरः। मेदुरः। विदिभिदिच्छिदेः कुरच् ।३।२।१६२॥ विदुरः। भिदुरम्। छिदुरम्॥ इण्नशजिसर्तिभ्यः क्वरप् ।३।२।१६३॥ इत्वरः। इत्वरी। नश्वरः। जित्वरः। सृत्वरः। गत्वरश्च ।३।२।१६४॥ गमेरनुनासिकलोपोऽपि निपात्यते। गत्वरी। जागुरूकः ।३।२।१६५॥ जागर्तेरूकः स्यात्। जागरूकः। यजजपदशां यङः ।३।२।१६६॥ एभ्यो यङन्तेभ्य ऊकः स्यात्। दशामिति भाविना नलोपेन निर्देशः। यायजूकः। जञ्जपूकः। दन्दशूकः॥ नमिकम्पिस्म्यजसकमहिंसदीपो रः ।३।२।१६७॥ नम्रः। कम्प्रः। स्मेरः। जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते। अजस्रं सन्ततमित्यर्थः। कम्रः। हिंस्रः। दीप्रः॥ ॥ ॥

ति॰ कर्मकर्तरि प्रत्यय इति वृत्तिः॰ नैतद्भाष्ये दृष्टम्॰ तथा च माघः॰ स्वयमेव कर्तरि प्रायुङ्क्त॰ प्रियतमाय वपुर्गुरुमत्सरच्छिदुरया दुरयाचितमङ्गनाः इति॰ इण् अनुरिति केदः॰ इत्वरः॰ इत्वरी इति॰ इणो गतौ ह्रस्वस्य पिति कृति तुक्॰ कित्त्वाद्गुणाभावः॰ टिड्ढेत्यादिना ङीप्॰ जागुरूकः॰ जागृ इति पञ्चम्यन्तं तद्व्याचष्टे जागर्तेरिति॰ जागरूक इति सिद्धरूपमेव न तु निपातितम्॰ उत्तरसूत्रे ऊकस्यानुवृत्तिप्रसङ्गात्॰ यजजपदशां यङ इति॰ यजेर्यङि द्वित्वादिदीर्घोऽकित इत्यभ्यासदीर्घः॰ अतो लोपे यस्य हल इति लोपः॰ जञ्जपूक इत्यादि जपजभदहदशेत्यादिना नुक्॰ नाव ऊकशब्दस्तु उलूकादयश्चेत्यत्र वक्ष्यते॰ माघस्तु आहक्रुक्षाद्दिगन्तोनावदूक इति पाठाद्वेवयङ्॰ नाहदेरूकप्रत्यय

परस्परमिति। निन्दादिसूत्रे हितच्छीलादिषु वासरूपविधानात् ज्ञाद्योनेति ज्ञापितमिह तु ताच्छीलिकेषु परस्परंनेति ज्ञापितमितिविवेकः इतिभावः। कुष। कुषकोथे रुषरोषे मडिभूषायाम्। भूषअलंकारे॥ ॥ नयः॥ अयपयनयतयजयगत्ताविति पठितस्य नयते नीयं निर्देशः। अनुदात्तेत्वादेव युचः सिद्धत्वात् निनेनेति पृथक्पदमिति मत्वाह। यकारान्तादिति। क्रूयिता स्मायितेति। क्रूयी शब्दे उन्दे च। स्मायी विधूनने। सूददीप। सूद क्षरणे। दीपी दीप्तौ। दीक्ष मौण्ड्येज्यादौ। ताच्छीलिकेष्विति। परस्परमितिशेषः। प्रायिकमिति। न केवलं यथाश्रुतभाष्यमवलम्ब्य युजमो रेव समावेश इति मन्तव्यम्। किन्तु प्रायिकत्वमेव भाष्यस्य तात्पर्यं तेन गमेर्लषपतपदेत्युकञ् विषये ल्युरपि गन्ता गामुकः। तथा वेकथलसेति घिनुणो विषये युजपि विकत्थी विकत्थन इत्यादि सिध्यतीति भावः। जल्पजपजल्प व्यक्तायां वाचि। भिक्ष भिक्षायां लाभे ऽलाभे च। कुट्ट छेदने। लुट स्तेये चौरी

नयः॥ ३।२।१५२॥ यकारान्ताच्च युच् न स्यात्। क्रूयिता। स्मायिता। सूददीपदीक्षश्च॥ ३।२।१५३॥ युच् न स्यात्। सूदिता। दीपिता। दीक्षिता। नमिकम्पीति रेणा युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति। ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रायिकमिति। तेन कमा कमना युवतिः। कम्पाकम्पना शाखा। यदि सूदेर्युज् कथं मधुसूदनः नन्द्यादि॥ लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्॥ ३।२।१५४॥ लाषुकः। पातुक इत्यादि॥ जल्पभिक्षकुट्टलुण्टवृङः षाकन्॥ ३।२।१५५॥ जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥ प्रजोरिनिः॥ ३।२।१५६॥ प्रजवी। प्रजविनौ। प्रजविनः॥ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च॥ ३।२।१५७॥ जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। आव्यथी। अभ्यमी। परि

॥ फुलिङ्गा ॥

दिका। विमो अत्र व्याख्युः। जल्पे चलनशब्दार्थादिति भिक्षेरलाभे विधिरिति स्पष्टमेव कुट्टलुण्टयोर्गोश्छन्दसीति षाकन्। विधाने वृङ स्वाद्गमहनजनेति किकिनोः प्राप्तयोरयं विधिरिति सोऽपि षर्थ इत्याह। वराकीति। प्रजोरिति सौत्रो गत्यर्थः। जिदृक्षि जिजये। जि अभिभवे। दृङ आदरे। क्षि क्षये। क्षि निवासगत्योः। श्रिञ् सेवायाम्। विपूर्वः। व्यथ भय चलनयोः। न्यूर्वः। निपातनान्नञोधातुना समासेन लोपे ततः प्रत्ययः। अमगत्यादिषु अभिपूर्वः। प्रसवी। षूप्रेरणे अस्मादिति। षूङ् प्राणिगर्भविमोचने। षूङ् प्राणिप्रसवे इमौ न गृह्येते सानुबन्धत्वात् जिदृक्षीत्यत्रैव प्रजुं पठित्वा पूर्वसूत्रं त्यक्तुमुचितम्। एवं हि पृथग्विभक्तिश्च कारश्च मास्त्विति सुवचम्॥ ॥

षामित्ययंगृह्यतेनतुशंसस्तुताविति·आङ्सहनिर्देशात्·विन्दुरिच्छुः विदज्ञानेइत्यस्यैवग्रहणम्·नेतरेषाम्·एवमिषेरपिइच्छार्थस्यैवग्रहणान्नात्विषग
तौइषआभीक्ष्ण्यइत्यनयोःअनभिधानान्निपातनाद्वेतिभावःविन्दुशब्दस्तुपवर्गीयादिःविदिअवयवेऽस्मान्मृगय्वादित्वात्कुप्रत्ययोबोध्यः·क्याच्छन्दसि·क्य
इतिक्यच्क्यष्क्यङांसामान्यग्रहणम्·क्यान्तधातोश्छन्दसिविषयेतच्छीलादिषुउप्रत्ययोभवतीतिकाशिकाकिंचः·क्यइतिव्याख्यानात्कण्ड्वादियगपिगृह्यते
तेनतुरण्यवोङ्गिरसोनक्षन्तसमर्यैसमर्य्यवः·यमस्ययोनौशकुनंभुरण्यमित्यादिसिद्धम्·तुरणत्वरणायाम्·सपरपूजायाम्·भुरणधारणपोषणयोरित्ये
केतेकण्ड्वादिषुपठिताःअथकथंसन्तप्रणयिवाक्यानिगृह्णन्नित्यनसूयवइतिभट्टपादाः·मृगय्वादिषुअसूयशब्दोद्रष्टव्यइतिहरदत्तः·सुम्नयुरिति·सुम्नशब्दा
त्क्यचितरन्नाद्युःनछन्दस्यपुत्रस्येतिनिषेधात्क्यचिचेति·ईत्वमकृत्सार्वेतिदीर्घश्चनभवति·आदृगमदोरवितिवदादितिदकारोमुखसुखार्थोनत्वयंतकारस्ते
नतात्परत्वाभावादृइत्यनेनदीर्घोपिगृह्यतेजत्तरिर्जग्रुरिः·तृङ्जवनतरणयोरित्यस्यगृनिगरणइत्यस्यचवहुलंछन्दसीत्युत्वेरूपमितिप्राञ्चः·वस्तुतस्तु·आदित्या
द्विप्रकृतिविशेषाणामुदाहरणंप्रपञ्चमात्रम्·किकिनौलिङ्वेत्येतावन्मात्रमेवविवक्षितम्·तथाचवार्त्तिकम्·किकिनावुत्सर्गःछन्दसिसदादिभ्योदर्शनात्
प्रवभ्रिर्वज्रमिति नलोकेतिषष्ठीनिषेधात्·द्वितीयाकिकिनोः·स्थानेतिवारयोनलिङ्वदित्यतिदेशेनस्वरूपावाधेनैवकार्यातिदेशात्·छान्दसस्त्रह्योपन्य
सनेउदाहृतंचभाष्येसेदिर्नेमिरित्यादिएवंस्थितेआदितितपरकरणेपिनस्पतिरितिध्वनयन्नाहआदृन्ताद्दृन्तादिति·॥भाषायांधात्वित्यादिवार्तिकविष
यवोधनार्थम्·इहचवार्तिकेगमियमिश्चपिनदृश्यतेतथापिधातुरन्तोक्तचिह्नत्तिप्रस्तकेचदर्शनादुपन्यस्तः·जग्मिरिति·गमहनजनेत्युपधालोपः·जघ्निरिति·
अभ्यासाच्चेतिकुत्वम्·दधिरिति·आतोलोपः·नेमिरिति·एत्वाभ्यासलोपौ·सासहीत्यादि·यङोऽतोलोपेयलोपः·अभ्यासदीर्घः·नीगभावश्चेति·नीगर्वञ्चीत्यादि
नाप्राप्तस्यनीगागमस्याभावइत्यर्थः·तृप्णगिति·ङित्वान्नगुणः·नजिङ्·इकारउच्चारणार्थः·क्रुकन्नपीतिअतएवभीरुभीलुकभीरुकाइत्यमरः·ईश्वरइतिनेड्
शीतीडभावः·पेस्वरइति·पिसृपेसृगतौ·कस्वरइति·कसगतौ·भ्राज·आक्वेरित्युक्तत्वात्तच्छीलादिष्वयंक्विप्·भ्राजृदीप्तौ·धुर्वीहिंसायाम्·द्युतदीप्तौ·उर्जवल
प्राधानयोः·पृपालनपूरणयोः·जुगतौसौत्रः·ग्रावस्तुवः·ष्टुञ्स्तुतौ·विभ्राडिति·व्रश्चेतिषत्वम्·जश्त्वचर्त्वे·धूरिति·राल्लोपइतिवलोपः·र्वोरितिदीर्घः·उर्गिति·

सनाशंस·सनिति·सत्ययग्रहणात्तदन्तग्रहणम्·षणुदाने षणसंभक्तावितिधात्वोस्तुनेहग्रहणम्·गर्गादिषु विजिगीषुशब्दस्य पाठात्·आशंसेत्याङः शंसु इच्छा।
सनाशंसभिक्ष उः॥३।२।१६८॥ चिकीर्षुः। आशंसुः। भिक्षुः। विन्दुरिच्छुः॥३।२।१६९॥ वेत्तेर्नुम् इषेश्छत्वञ्च निपात्यते। वेत्तीति तच्छीलो विन्दुः। इच्छ
तीच्छुः। क्याच्छन्दसि॥३।२।१७०॥ देवाञ्जिगाति सुम्नयुः। आदृगमहनजनः किकिनौ लिट् च॥३।२।१७१॥ आदन्तादृदन्ताद्गमादिभ्यश्च किकि
नौ स्तः छन्दसि तौ च लिड्वत्। बभ्रिर्वज्रं पपिः सोमं ददिर्गाः। जग्मिर्युवा जघ्निर्वृत्रम्। अमित्रियं जज्ञिः। भाषायां धाञ्कृसृगमिजनिनमि
भ्यः। दधिः। चक्रिः। सस्रिः। जग्मिः। जज्ञिः। नेमिः। सासहिवावहिचाचलिपापतीनामुपसंख्यानम्। यङन्तेभ्यः सहत्यादिभ्यः किकिनौ पतेर्नी
गभावश्च निपात्यते। स्वपितृषोर्नजिङ्॥३।२।१७२॥ स्वप्नक्। तृष्णक्। तृष्णजौ। तृष्णजः। धृषेश्चेति वाच्यमिति काशिकादौ। धृष्णक्। शॄवन्द्यो
रारुः॥३।२।१७३॥ शरारुः। वन्दारुः। भियः क्रुक्लुकनौ॥३।२।१७४॥ भीरुः। भीलुकः। क्रुकन्नपि वाच्यः॥ भीरुकः। स्थेशभासपिसकसो वरच्॥३।२।
१७५॥ स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः। यश्च यङः॥३।२।१७६॥ यातेर्यङन्ताद्वरच्स्यात्। अतो लोपः। तस्य च परस्मिन्निति स्थानि
वद्भावे प्राप्ते। पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। तस्य यलोपं प्रति स्थानिवद्भावनिषेधाल्लो
पो व्योरिति यलोपः। अल्लोपस्य स्थानिवत्त्वमाश्रित्यातो लोपे प्राप्ते ——— वरे लुप्तं न स्थानिवत्। यायावरः। भ्राजभासधुर्विद्युतोर्जिपॄ
जुग्रावस्तुवः क्विप्॥३।२।१७७॥ विभ्राट्। भाः। भासौ। धूः। धुरौ। विद्युत्। ऊर्क्। पूः। पुरौ। दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः। जूः। जुवौ। जुवः। ग्राव
शब्दस्य धातुना समासः सूत्रे निपात्यते। ततः क्विप्। ग्रावस्तुत्। अन्येभ्योऽपि दृश्यते॥३।२।१७८॥ क्विप्। छित्। भित्। दृशिग्रहणं विध्यन्तरोपसंग्रहा
र्थम्। क्वचिद्दीर्घः क्वचिदसम्प्रसारणं क्वचिद्ध्रस्वः। तथा च वार्त्तिकम्। क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च। वचिवची
त्यादिना उणादिसूत्रेणाके प्राप्ते क्विब्विधिस्तच्छीलादौ तृन्नाबाधा माभूदिति वार्त्तिके ग्रहणम्। वक्तीति वाक्। पृच्छतीति प्राट्। आयतं स्तौतीति आयत

ग्रहणाद्व्याख्यानादित्याशयेनाह॰ धर्मेण्यर्थइति॰ अतएव धीयतेपीयतइति धात्रीस्तनदायिनीत्यादिव्याचक्षते॰॥ ः ॥दाम्नीमेढ्रमिति होढः षत्वष्टुत्वढलोपाः दंष्ट्रेति॰ षित्वेपिङीष्इहनभवतिअनित्यः षितांङीषित्युक्तत्वात्॰ अन्येतुनादिपाठदृष्टापमाहुः नधीइति नहोधइतिषत्वम्॰ झषस्तथोर्धः जश्त्वम्॰ सूत्रेदशेतिन॰लोपिनोनिर्देशोज्ञापकः क्वचिदक्ङित्यपिदंशेर्नलोपोभवतीति॰ तेनदंशदशनइत्यस्मात्ष्ट्रदशनादन्नाइतिसिद्धम्॰ नचसन्निधानात्ष्ट्रन्येवनलोपःस्यादितिवा

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे॥३।२।१८२॥दावादेःष्ट्रन्स्यात्करणेऽर्थे।दात्यनेनदात्रम्।नेत्रम्।तितुत्रतथसिसुसरकसेषुच।७।२।९॥एषान्दशानांकृत्प्रत्ययानामिण्नस्यात्।शस्त्रम्।योत्रम्।योक्त्रम्।स्तोत्रम्।तोत्रम्।सेत्रम्।सेक्त्रम्।मेढ्रम्।पत्रम्।दंष्ट्रा।नद्ध्री।हलसूकरयोःपुवः॥३।२।१८३॥पूङ्पूञोःकरणेष्ट्रन्स्यात्।तच्चेत्करणंहलसूकरयोरवयवः हलस्यसूकरस्यवा।पोत्रम्।मुखमित्यर्थः।अर्तिलूधूसूखनसहचरइत्रः॥३।२।१८४॥अरित्रम्।लवित्रम्।धवित्रम्।सवित्रम्।खनित्रम्।——।सहित्रम्।चरित्रम्।पुवःसंज्ञायाम्॥३।२।१८५॥पवित्रम्।येनाज्यमुत्पूयते यच्चानामिकावेष्टनम्।कर्त्तरिचर्षिदेवतयोः॥३।२।१८६॥पुवइत्रःस्यात्।ऋषौकरणेदेवतायाङ्कर्त्तरि।ऋषिर्वेदमन्त्रः तदुक्तमृषिणेति दर्शनात्।पूयतेऽनेनेतिपवित्रम्।देवतायान्तुअग्निःपवित्रंसमापुनातु॥ अथोणादयः॥कृवापाजिमिस्वदिसाध्यशूभ्यउण्।करोतीतिकारुःशिल्पीकारकश्च।आतोयुक्॥३।३।१२८॥वातीतिवायुः।पायुर्गुदम्।जयत्यभिभवतिरोगान्।जायुरौषधम्।मिनोतिप्रक्षिपतिदेहेउष्माणमितिमायुःपित्तम्।स्वादुः।साध्नोतिपरकार्य्यंसाधुः।अश्नुतेआशुशीघ्रम्।आशुर्व्रीहिःपाटलःस्यात्॥ ॥ ॥

च्चम्।शुनोदन्तदंष्ट्रेतिनिर्देशात्तच्चेत्करणमित्यादि एतेनहलसूकरयोरभिधेयत्वमुपपादितञ्चनिरस्तम्॰ मुखमित्यर्थइति॰ तत्रैवरूढिरितिभावः अर्त्तिलूधूसूइति॰ धूविधूननेइतिकुटादेरेवग्रहणं॰ निरनुबन्धकत्वात्॰ अतएवगाङ्कुटेतिङित्वात्गुणनिषेधेउवङ्तदाह धुवित्रमिति॰ पुवः पूङ्पूञोरुभयोर्ग्रहणमविशेषात्॰ करणइत्यनुवृत्तेराह येनाज्यमिति॰ कर्त्तरिचर्षि॰ इत्रःस्यादिति॰ करणेकर्त्तरिचेत्यर्थः काशिकानुसारेणयथासंख्यंव्याचष्टे॰ ऋषौकरणेइति॰ कर्त्तरिस्यादितिसूत्र

चोक्तुः रात्सस्येति नियमान्न संयोगान्तलोपः ऊरिति उदोष्ठ्यपूर्वस्येत्युत्वं र्वोरिति दीर्घः। वा क्यप्राडिति इह दीर्घः सम्प्रसारणाभावश्च सम्प्रसारणप्राप्तिस्तु वचिस्वपि
यजादीनां किति ग्रहिज्यावयीत्यादिना॥ ॥ श्रयति हरिं श्रीरिति साक्षात्तु श्रयन्त्येतामिति कर्मणि क्विउदाहृतस्तत्र कर्तरि रूढिरिति स्वविरोधः स्पष्ट एव बाहुलकात्तु अगतिका
तिः स्रुति द्रवेति क्वतेपि द्वित्वे अभ्यासस्य इह दुर्लभा प्रत्यासत्त्या धातुद्वित्वएव प्रवृत्तेरत एव आङ्गमिके सानेत्याशंकायामाह इशिग्रहणादिति दिद्युदिति द्यु
तिस्वाप्योरित्यभ्यासस्य सम्प्रसारणम् जगदिति गमः क्वाविति मलोपतुकौ अन्नद्रूचेति चकारेण दीर्घः समुच्चीयमानो द्युतिगम्योर्न भवति दीर्घस्तु श्रा अच
श्चेति परिभाषोपस्थानाद्जन्त जुहोतेरेव सम्भवतीत्याशयेनाह जुहोतेर्दीर्घश्चेति जुहोतीति जुहूः हृस्वश्चेति चकारेण द्वित्वं समुच्चीयते धीरिति ध्यायतीति धीः ह

श्रयति हरिं श्रीः। द्युतिगमिजुहोतीनां द्वे च। इशिग्रहणादभ्याससंज्ञा। दिद्युत्। जगत्। जुहोतेर्दीर्घश्च। जुहूः। दृ भये। अस्य ह्रस्वश्च दीर्घश्च। दद्रूः। ध्यायतेः सम्प्रसारणञ्च। धीः। भुवः संज्ञान्तरयोः ३।२।१७९॥ मित्रभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः।
विप्रसंभ्योड्वसंज्ञायाम् ३।२।१८०॥ एभ्यो भुवो डुः स्यान्न तु संज्ञायाम्। विभुर्व्यापकः। प्रभुः स्वामी। सम्भुर्जनिता। संज्ञायां तु विभूर्नाम कश्चित्। मितद्र्वा
दिभ्य उपसंख्यानम्॥ मितं द्रवतीति मितद्रुः। शम्भुः। अन्तर्भावितण्यर्थोऽत्र भवतिः। धः कर्मणि ष्ट्रन् ३।२।१८१॥ धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्या
त्। धात्री जनन्यामलकी वसुमत्युपमातृषु॥

लइति दीर्घः नतु ध्यायतिः उपरुषोन्तु धीः एवं जुहोत्यनयापरुष इति सर्वे सम्मतत्वात् कथं हि भवद्रतार्थः॥
संगच्छत इति चेत् अत्राहुः इहतः करणस्य कर्तृत्वविवक्षायां क्विप् भवति भुवः संज्ञा धनिकेत्यादि तेन श्यामयोरन्तरे यत्तिष्ठति तत्र नेति भावः एतच्च इशिग्र
हणादुपत्त्या लभ्यते नन्वेवं प्रतिभूः शब्दः संज्ञेति फलिततत्र संज्ञायामित्येव च सिद्धं किमन्तरग्रहणेन अत्राहुः यावद्द्रव्यभाविन्यः संज्ञाः प्रतिभूः शब्दस्तु सत्येव त
स्मिन् ऋणप्रदानेन निवर्तेत उत्तमर्णयोर्भेद इति शंकुरव भावयतीति शम्भुरित्यर्थोऽभ्युपगमनायाह अन्तर्भावितेति शम्भवति सुखस्वरूपो भवतीति शम्भुरित्यन्ये शम्भ
वत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाभावाच्चिन्त्ये  तिमाधवः धः कर्मणि  कर्मणीति नोपपदम् ह्यावामश्चेत्यनन्तरमेव धः ष्ट्रनिति वक्तव्ये पृथक् मि

रस्मृतः कांस्ये च कांस्यपात्रे च मानभेदे च कीर्तितः इति विश्वः कसास्यादन्तरीयस्य पश्चादञ्चलपल्लवे स्यन्दीयान्नात्वदोर्मूले कक्षो वीरुत्तृणे च वेति मेदिनी ॥ ॥ पुष्टेः
शुष दाहे अस्मात् सः स्यादुपधाया आकारश्च शुष्को जटीगर्दभाण्डद्वीपभित्कुञ्जराशने इति मेदिनी प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः पिप्पले द्वारपार्श्वे च
गृहस्य परिकीर्तित इति विश्वः मनेः मन ज्ञाने मांसं स्यादामिषं क्लीबं कक्कोलीजटयोः स्त्रियामिति मेदिनी अशेः अशूङ् व्याप्तौ अस्माद्देवने वाच्ये सः स्यात् अश्नुश्चभ्रस्ले
स्त्यादिना षत्वादिकार्यं अथाक्षमिन्द्रिये नापुंतार्क्ष्ये कर्षचक्रे व्यवहारे कलिद्रुमे इत्यमरः अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके रुद्राक्षेन्द्राक्षयोः सर्पे विभीत
कतरावपि चक्रे कर्षे पुमान् क्लीबं तुत्थसौवर्चलेन्द्रिये इति मेदिनी स्नुव्रश्चि स्नु प्रस्रवणे ओव्रश्चू छेदने कृती छेदने ऋषी गतौ एभ्यः सः कित्स्यात् स्नुषा पुत्रवधूः
वृक्ष इति सस्य कित्त्वाद् ग्रहिज्येति सम्प्रसारणम् ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् कृत्तिवे धनेऽन्यलिङ्गं नक्षत्रे पुंनपुंसकमिति मेदिनी ऋषेर्जातौ

शुषेरञ्चोपधायाः प्लक्षः मनेर्दीर्घश्च मांसं अशेर्देवने अक्षः स्नुव्रश्चिकृत्यृषिभ्यः कित् स्नुषा वृक्षः कृत्समुदकम् ऋक्षं नक्षत्रम् ऋषे
र्जातौ ऋक्षोऽद्रिभेदे भल्लूके इति च उन्दिगुधिकुषिभ्यश्च उत्सः प्रस्रवणं गुत्सः स्तवकः कुक्षौ जठरम् गृधिपण्योर्दकौ च गृत्सः काम
देवः पक्षः अशेः सरन् अक्षरम् ॥

पूर्वसूत्रेणैव सिद्धे ऋषेर्जातावेवेति नियमार्थं सूत्रम् तेनान्येभ्यः त्रिभ्यः केवलयौगिकत्वेऽपि स प्रत्ययो भवति उ
न्दिगुधि उन्दी क्लेदने गुध रोषे कुष निष्कर्षे एभ्यः सः कित्स्यात् अनिदितामिति नलोपः उत्सः प्रस्रवणं वारीत्यमरः गुत्सः स्यात्स्तवके स्तम्बे हारभिद्ग्रन्थिपर्णयोरिति
दिनी गुत्सस्य गुत्सो गुच्छो गुच्छवदिति द्विरूपकोशात् स्याद्गुच्छः स्तवके स्तम्बे हारभेदे कलापयोरिति चवर्गद्वितीयान्ते मेदिनीकोशाच्च गृधिपण्योः अभिकाङ्
क्षायाम् पण व्यवहारे स्तुतौ च ननु गृधेश्चर्त्वेन गृत्स इति सिद्धे दकारविधानं व्यर्थमिति चेन्मैवम् चर्त्वस्यासिद्धत्वेनैकाचो बश इति भष्भावप्रसङ्गात् न चै
वमपि प्रक्रियालाघवाय तकार एव विधीयतामिति शङ्क्यम् चयो द्वितीया इति पक्षे तकारस्य थकारापत्तेः पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः केशादेः
परतो वृन्दे बले सखिसहाययोः चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोरिति विश्वमेदिन्यौ अशेः अशूङ् व्याप्तौ अश्नोत्यादिना षत्वादिकार्यम् अक्षरं स्यादपव

अर्जेः ऋजगतिस्थानार्जनोपार्जनेषु ॥ अस्मादुनन् स्यात् गोश्च लुक् रहगोर निर्दीतिणिलोपेनै
तिमध्यतालव्येषु विश्वः लसवे तिदन्त्यमध्यपाठस्तु प्रामादिकः ॥ ॥ अर्जेः ऋजगतिस्थानार्जनोपार्जनेषु अस्मादुनन् स्यात् गोश्च लुक् इहगोर निर्दीतिणिलोपेनै
वसिद्धेणिलुक् चेत्युक्तेः फलं चिन्त्यम् अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः मातुरेकसुते पिस्याद्धवले ऽपुनरन्यवत् नपुंसकं तृणे नेत्ररोगे वाप्यर्जुनी गवि उषायां
वाहुदानद्यां कुट्टन्यामपि च त्वाविदितिविश्वमेदिन्यौ अर्तेश्च ऋगतावस्मादुतन्स्यात्स च डित् अरुणो ऽव्यक्तरागे ऽर्के सन्ध्यारागे ऽर्कसारथौ निःशब्दे कपिले कु
ष्ठभेदेना गुणि निविषु अरुणातिविषाश्यामामंजिष्ठा त्रिवृतासु चेति मेदिनी अजिअजगतिक्षेपणयोः यमुउपरमे शीङ् स्वप्ने एभ्यः उनन्स्यात्स च डित् । अर्जे
र्वीभावः वीयतेगम्यते ऽनेनेति वयुनम् विश्वानिदेव वयुनानि विद्वानिति मन्त्रे वयुनानि प्रज्ञानानीति वेदभाष्यम् वेदिकनिघण्टौ प्रज्ञापर्याये प्रशस्य पर्याये च
वयुनशब्दः पठितः यमुना शमनस्वसेत्यमरः वृत्त्व वरणे त्वलवनतरणयोः वरव्य कायास्यां चि हनहिंसागत्योः कमुकान्तौ कषहिंसायाम् वेसुतसेमिति

अर्जेर्णिलुक् च अर्जुनः तृणाख्यायां च वित् चित्वाद्न्तोदात्तः अर्जुनं तृणं अर्तेश्च अरुणाः अजियमिशीङ्भ्यश्च वयुनं देवमनि
रम् यमुना शयुनो ऽजगरः वृत्त्वदिहनिकमि कषिभ्यः सः वर्षे तर्षः त्वसमुद्रयोः वत्सः वत्सम्वक्षः हंसः कंसो ऽस्त्रीपानभाजनम्
कसन्नसत्रम् ॥

तितुत्रेति नेट् षत्वन्तु न भवति वाहुलकेन षत्वे कर्त्तव्ये प्रत्ययसंज्ञाया अप्रवृत्तेः कसशब्दे तु षत्वं भवत्येव एतच्च भाष्ये ऽपि यदा
दिपर्यालोचनयोक्तम् कथं तर्हि सर्वैरप्युणादिवृत्तिकारैरिह षत्वमुदाहृतमिति चेत् अत्राहुः अस्तु भाष्यप्रामाण्यात् वर्सतर्समिति दन्त्यपाठो ऽपि साधुः पक्षे तु ष
त्वमस्तु वाहुलकलभ्यषत्वाभावस्य पाक्षिकत्वे ऽपि वाधकाभावात् वृषितृषिभ्यां घञि कृते ऽप्यन्तादेश्च घञर्थे क विधानमिति एवं तात्कप्रत्यये वाकृते वर्षतर्षशब्द
योर्ईवरितत्वात् अव्विधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थमित्यत्र वर्षमित्याकरे ऽउदाहृतत्वाच्च तस्मादिह द्विरूपता फलितेति वर्षो ऽस्त्री
भारतादौ साङ्गवृष्टौ पाव्दवृष्टिषु प्रावृट्कालेस्त्रियां भूम्नीति मेदिनी तर्षो लिप्सा दन्यपोरिति च पुनादौ तर्णके वर्षे वत्सः क्लीवं तु वक्षसीति त्रिकाण्डशेषः सद्योजात
सर्णकः हंसः स्यान्मानसौकसि निर्लोभनृपविष्ण्वर्कपरमात्मसु मत्सरे योगभेदमन्त्रभेदे शारीरमरुत्यन्तरेतुरङ्गमप्रभेदे चेति मेदिनी कंसो देत्यान्त ॥ ॥

कपिवद्ध्यर्केनापरोज्ञापि निविञ्चितिमेदिनी उज्वलदत्तस्तु कठिकविष्म्यामितिपठित्वा कपशिखेति दराडके धातुसुपन्यस्य कषाकुरित्युदाजहार तत्कोशविरु
द्धम् मेदिनी कोशेत्युकारप्रश्नमेपाठात् ॥ ॐ ॥ सर्तेः सृगतावस्मात्काकुः स्याद्वातोडुगागमश्च सृदाकुर्नोनिले चकेज्वलने प्रतिसूर्य केइतिमेदिनी वृतेः वृ
द्धम् मेदिनी कोशेत्युकार... वृतेवर्तनेवार्त्ताकुरपिवार्त्ताकी वृन्ताकोपिचदृश्यतइति द्विरूपे विश्वः वार्त्ताकी हिङ्गुलीसिंहीभण्टाकी दुष्प्रधर्षणीत्यमरः वार्त्ताकं पित्तलं किञ्चिदङ्गा
रपरिपाचितमिति वैद्यशास्त्रम् पर्देः पर्दकुत्सिते शब्दे ऽस्मात्काकुः स्यात् चनित् धातो रेफस्य सम्प्रसारणमकारलोपश्च विश्वकोशस्थमाह पृदाकुरिति

सर्तेर्द्वित्वं सृदाकुर्वीतसरितोः वृतेर्वृद्धिश्च वार्त्ताकुः वाहुलकादुकारस्य अत्वम् वार्त्ताकम् पर्देर्नित्सम्प्रसारणमल्लोपश्च पृदाकु
र्वृश्चिके व्याघ्रे चित्रके च सरीसृपे सृयुवचिभ्योन्युजागूजक्नुचः अन्युच् आगूच् अक्नुच् एतेनामास्युः सरण्युर्मेघवातयोः यवा
गूः वचक्नुर्विप्रवाग्मिनोः आनकः शीङ् भियः शयानकोऽजगरः भयानकः आणकोलूधूशिङ्घिधाञ्भ्यः लवाणकान्दात्रम् । ध
वाणकी वातः सिन्धाणकः श्लेष्मा पृषोदरादित्वात्सेकलोपः सिन्धाणं नासिकामले धाणकोदीनारभागः उल्मुकदर्विहोमि
नः उषदाहे षस्यलः शकन्ध्वादित्वात्पररूपम् उल्मुकं ज्वलदङ्गारः दृणातेर्विः दर्विः जुहोतेर्म्मिनिः होमी हियः कुक्रस्वलोवा हीकुः ह्री
कुः लज्जावान् हसिमृग्रिण्वामिदमि लूपूधुर्विभ्यस्तन् दशभ्यस्तन्स्यात् तितुत्रेतिनेट् हस्तः मर्त्तः गर्त्तः एतः कर्त्तरः वातः अ
न्तः दन्तः लोतः स्यात् रस्त्रुचिह्नयोः पोतो वालवहित्रयोः धूर्त्तः वाहुलकाद्गुसे दीर्घश्च नृतमव्यापम् भूलिङ्ग्रेटाच नत्यापरञ्च नापितः ॥

पृदाकुर्वृश्चिके व्याघ्रे सर्पे चित्रकयोः उमानितिमेदिनी सृगतौ यमिश्रवो च परिभाषरो सरण्युस्तु पमान् वारिवाहे स्यान्मातरिश्वनीतिमेदिनी सरण्युर
स्यसूनरप्स्वरितिमन्त्रस्य भाष्ये सरण्युः शीघ्रगामीतिव्याख्यातम् यवागूरुष्णिकाश्राणाविलेपीतरलाच सेत्यमरः वचक्नुस्तु पमान् विप्रेवावदूकेऽभिधे
पवदितिमेदिनी आनकः शीङ् स्वप्ने ञिभी भये विभेत्यस्मादिति भयानको भयंकरः भयानकः स्मृतो व्याघ्रे रसे राहौ भयंकरे इतिमेदिनी आणकोलूजके ने

र्गे परमब्रह्म वर्णयोरिति हेमचन्द्रः अशेः सरन्नित्युज्ज्वलदत्तादिपाठस्तु प्रामादिकः नित्स्वरापत्तेः इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम् ऋचोऽक्षरे
परमे व्योमन्नित्यादिस्वरादृ मन्त्रे त्रीणि च शतानि षष्टिश्चाक्षराणीति यजुषि च तथैव पाठात् अत एवाश्नोतेर्नाक्षरोऽक्षरमिति द्वितीयाह्निकान्ते भाष्यकृतोक्तम्॰
॥ ७ ॥ वसेश्च वस निवासे अस्मादपि सरः स्यात् सस्यार्द्धधातुक इति तत्त्वम् सम्पूर्वाच्चित् पूर्वसहिताद्वसतेः सरः स्यात्स च चित् चित्वादन्तोदात्तः इद्वत्सराय प
रिवत्सराय सम्पूर्वादिति पाठान्तरम् तच्चलस्य विरोधादुपेक्ष्यम् कृधूमदिभ्यः कित् कृतन् करणे धूञ् कम्पने मदी हर्षे एभ्यः सरः कित्स्यात् कृसर इत्यादि हारावलीस्थम्
धूसरो किन्नरीभेदे ना खरे त्रिषु पाण्डुरे इति मेदिनी मत्सरा मक्षिकायां स्यान्मात्सर्य्ये क्रोधयोः पुमान् असत्यपरसम्पत्तौ कृपणे चाभिधेयवदिति च मत्सरोन्यशु
भद्वेषे तद्वत्कृपणयोस्त्रिष्वित्यमरः अथ मत्सरश्च असत्यपरसम्पत्तौ मात्सर्ये कृपणे क्रुधीति विश्वः वेदे तु मदी हर्षे इति यागार्थे पुरस्कृत्य प्रयुज्यते इन्द्रमिन्द्राय मत्स

वसेश्च वत्सरः सम्पूर्वाच्चित् सम्वत्सरः कृधूमदिभ्यः कित् बाहुलकान्नषत्वम् कृसरः स्याज्जिलौदनम् धूसरः मत्सरः मत्सरा मक्षिका
त्तेयाभम्भराली च सा मता पतेरश्वलः पत्सलः पन्थाः तन्यृषिभ्यां क्सरन् तसरः सूत्रवेष्टने ऋक्षरः ऋत्विक् पीयुक्वणिभ्यां कालन्
ह्रस्वः सम्प्रसारणञ्च पीयुः सौत्रः पियालो वृक्षभेदः कुणालो देशभेदः कठिकुषिभ्यां काकुः कठाकुः पक्षी कुषाकुरग्निः सूर्यश्च ॥

रम् तं सिञ्चथो मत्सरमिन्द्रिपानमित्यादि मत्सरं हर्षहेतुमिति तद्भाष्यम् पतेः पत्लृ गतावस्मात्सरः स्याद्रेफस्य लश्च तन्यृषि तनु विस्तारे ऋषी गतौ अमरोक्ति
माहत्तसर इति कित्वादनुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः ऋक्षरः ऋत्विगिति ऋक्षरस्वारिधारायामक्षरस्तु त्विजि स्मृत इति मेदिनी अनृक्षरा ऋज
वः सन्तु पन्थाः इति मन्त्रस्य वेदभाष्ये तु ऋक्षरः कण्टक इति व्याख्यातम् पीयुक्वणिभ्यां अणरणा इति दण्डके क्वणिः पठ्यते स च शब्दार्थकः आभ्यां कालन्स्या
त् यथा क्रमं ह्रस्वः सम्प्रसारणञ्च राजादनं प्रियालः स्यादित्यमरः प्रियालः स्यात्प्रियालवदिति द्विरूपकोशः बाहुलकाद्गुणेरपि कालन् कित्वान्न लोपः न्यङ्क्वा
दित्वात्कुत्वम् भगालं नरमस्तकम् मत्वर्थे इति चण्डीकान्तो भगालीन्चलेलिहानो वृषध्वज इति राजशेखरः कठिकुषि कठ कृच्छ्रजीवने कुष निष्कर्षे कुषाकुः

विश्वकोशेहिव्यस्तंव्यासेचसंकुलेइतिस्थितत्वात्· तथाचमेदिन्यांचकारादिमन्तमेव्यस्तन्तुव्याकुलेव्यासेइत्युक्तम्· घृतमाज्येपजलेक्लीवंमदीसेत्त्वभिधेयवत्° सितमवसितेत्ववद्धेधवलेत्रिषुशर्करायांस्त्रीइतिमेदिनी·वाहुलकात्· अगताविद्यस्मात्·क्तः·अक्तमुंक्तेपिलेजलेसत्येदोमेष्टन्तिस्यादितिमेदिनी॥ ः॥इतनि·इगतौ·तनुविस्तारेआभ्यांक्तःस्याद्धातोर्दीर्घश्चइतःमेघ्यः·गौरादित्वान्ङीष्·कथन्तर्हितेनइतिविदितंनिषिद्धेषतिरघुरितिचेत्· अत्राहुः·इङ्·परितापइत्यस्मात्क्तिचिद्दतिरिति·इत्यांदृतिरपिस्मृतेतिद्विरूपकोशः·ताताऽनुकम्प्येजनकेइतिविश्वमेदिन्यौ·वाहुलकात्·शीङ्·स्वप्नेइत्यस्माद्यिक्तः·शीतालाङ्गलपद्धतिःरामपत्नीचशीतानभःसरितिलाङ्गलपद्धतौचशीतादशाननारिपोःसहधर्मिण्यांचशीतंस्मृतंहिमगुणेचतदन्वितेचशीतोलसेचवहुवारतरौच इष्टइतितालव्यादौधरणिःसीतादन्त्यादिरप्यस्तिसीतालाङ्गलपद्धतिःवैदेहीस्वर्गगङ्गासुइतिदन्त्यादौमेदिनीःसीतालाङ्गलेरेखास्याद्व्योमगङ्गाचजान

इतनिभ्यान्दीर्घश्च इतः ताताः जेर्मुक्च्चोदात्तः जीमूतः लोष्ठपलितौ लुनातेः क्तः तस्यसुट् धातोर्गुणः लोष्ठम् पलितम् हृश्याभ्यामितन् हरितश्येतौ वर्णभेदौ रुहेरश्चलोवा रोहितो मृगमत्स्ययोः लोहितं रक्तम् पिशेः किच्च पिशितम्मांसम्॥ ९९ कीतिदन्त्यादौरभसकोशाच्च

जेः जिजयेऽस्मात्·क्तप्रत्ययस्तस्योदात्तमूडागमःस्याद्दीर्घइत्यनुवृत्त्याधातोर्दीर्घश्चस्यात्· इदंसूत्रमनार्षमितिकेचित्·अतएववृत्त्यादिग्रन्थेष्वेषोदृश्यते· दिष्टुजीमूतशब्दउदाहृतः·जीमूतोद्रौभूतिकरेदेवताडेपयोधरे इतिमेदिनी·वेणीखरागरीदेवताडोजीमूतइत्यमरः·जीमूतःस्याद्हन्तिकरेशाक्रेऽद्रौघोषकेघने इतिविश्वः·लोष्ठ·लूञ्·छेदनेपलगतौ·एतौक्तान्तौनिपात्येतेलोष्ठानिलेष्ठवःपुंसीत्यमरः·अत्रपुंसीत्युभयान्वयि·तेनपुन्नपुंसकलिङ्गोलोष्ठशब्दःतथाचस्थानेऽन्तरतमइतिभाष्यम्·लोष्ठःक्षिप्तोवाहुवेगङ्गत्वेत्यादि अतएवलोष्ठःशण्डेपिलोष्ठःस्यादितिपुल्लिङ्गकाण्डेवोपालितःपलितंशैलजेतापेकेशपाकेचकर्दमेइतिमेदिनीहृश्याहृञ्हरणेश्येङ्·गतौ·हरितास्त्रीचदूर्वायांहरिद्वर्णेघृतेऽन्यवदितिमेदिनी·शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराइत्यमरः·रुहेः·रुहवीजजन्मनिप्रादुर्भावेऽस्मादितन्·रोहितकुङ्कुमेरक्तेऋजुशक्रशरासनेपुंसिस्यान्मीनमृगयोर्भेदेरोहितकद्रुमेइतिमेदिनी·लोहितंरक्तगोशीर्षकुङ्कुमाजिकुचन्दने।

शिघि आघ्राणे डुधाञ् धारणपोषणयोः हारावलीस्थमाह शिंघाणमिति · शिंघाणं काचपात्रे स्यात् ह्लो हृन्नासिकयोर्मले इति विश्वः शिङ्घाणः फेनडिण्डीरे नक्रेतश्च पिच्छल इति विक्रमादित्यकोशः उल्मुक एते निपात्यन्ते निपातनप्रकारमेवाह · उषदाहे इत्यादिना · हारावलीस्थमाह उल्मुकमिति दर्विः । कम्बिः खजाका चेत्यमरः ह्रियः ह्रीलज्जायाम् अस्मात् कुक् प्रत्ययः स्यात् ककारो गुणनिषेधार्थः हसि · हसे हसने · मृङ् प्राणत्यागे गॄ निगरणे इण् गतौ वा गतिगन्धन योः अम गत्यादिषु दसु उपशमे लूञ् छेदने · पूञ् पवने धुर्वी हिंसायाम् · हस्तः करे करिकरे सप्रकोष्ठकरेपि च ऋक्षे कोशात्परे मानेर इति मेदिनी · अत्रायमर्थः केशवाचकात्परो योहस्तशब्दः स समूहवाची तथा च केशहस्तशब्दः केशसमूहशब्दपर्याय इति · मर्त्तो भूलोकस्तत्र भवो मर्त्यः दिगादेराकृतिगणत्वाद्यत् · गर्तास्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे इति मेदिनी · एतः कर्बुरआगते इति · अन्तः स्वरूपेनाशे नान्तस्त्रीशेषे प्रान्ते विष्वितिच · दन्तोऽङ्के कटके कुञ्जे दशने चोषधौ स्त्रियामिति च मेदिनी · लोतमश्रुणि चोरिते इति विश्वः क्तक्त वन्तूति ष्ठतिसूत्रे लोतो मघ इति कैयटः सोतः शिशौ वहित्रे चेति विश्वमेदिन्यौ धूर्त्त इ

॥ तनिमृङ्भ्याङ्किच्च ततम् मृतम् अञ्जिघृसिभ्यः क्तः अक्तम् घृतम् सितम् ॥

तिलोपो व्योर्वलीति वलोपः राल्लोप इत्यनेन लोपस्तु क्तिति त्यननुवृत्तिपक्षे बोध्यः हलि चेति दीर्घः धूर्त्तं तु खण्डलवणयोः ग्नूरेनाशे वत्रिष्विति मेदिनी तनुतमिति तु सखण्डनत्यस्मात्तन् · तन्या आप्लृव्याप्तौ अस्मात्त्वपपदे तस्या दिडागमस्य · बाहुलकान्न जो न लोपाभावः ॥ ॥ तनि तनुविस्तारे मृङ् प्राणत्यागे · आभ्यां तनप्रत्ययः स्यात् स च कित् · कित्त्वादनुनासिकलोपः ततं वीणादिकं वाद्यमित्यमरः अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् · क्लीबं वीणादिवाद्ये स्यात्तत्वं क्लि ङ्क्स्तु समीरणे इति मेदिनी · मृतं तु याचितं मृत्यो क्लीबं मृत्युमति त्रिष्विति च · अञ्जि अञ्जू व्यक्तिम्रक्षणादौ घृक्षरणदीप्त्योः षिञ् बन्धने एभ्यः क्तः स्यात् · निष्ठासंज्ञात्वेतस्य नाभवाति उणादीनामव्युत्पन्नत्वाद्वा हलकाद्वा · अन्यथा निष्ठा वच्चजनादित्या द्युदात्तत्वं स्यादिति क्तक्तवतू निष्ठेति सूत्रे कैयटः अक्तम्परिच्छिन्नम् · अक्तः परिमाणवाचक इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात् · अक्तं व्याप्ते च संकुले इति विश्व इत्युज्ज्वलदत्तेनोक्तम् · तच्च लिपिभ्रमप्रयुक्तम् ॰

ति॰ नभ्राण्नपादिति सूत्रेनञः प्रकृतिभावेन नप्त्रमिति साधितं तत्तु व्युत्पत्त्यन्तरमिति बोध्यम्॰ यजत्रमग्निहोत्रमिति प्राञ्चः वस्तुतस्तु यजत्रो यष्टव्य देवतासन्तेवा युवीतेन गच्छतां संयजत्रैरङ्गैरिति मन्त्रे तथैव व्याख्यातत्वात्॰ अमरकोशस्थमाह पतत्रश्चेति॥ ॥गडेः॥ गड सेचने ऽस्मादत्रन्स्यात् कारस्य ककारादेशश्च कलत्रं श्रोणिभार्ययोरित्यमरः॰ वृञः॰ वृञ् वरणे ऽस्मादत्रन् चित्स्यात्॰ चित्वादन्तोदात्तः नध्रीवध्रीवरत्रा स्यादित्यमरः॰ वरत्रायां दार्वीनद्धमानद्धर्यादौ चित्स्वरः स्पष्टः सुविदेः कत्रन् विद ज्ञाने द्रहक वत्रिति नितङ्क चित्त्यठनितत्स्रामादिकम्॰ द्रहस्यत सुविदत्राणि राध्येत्यादौ नित्स्वरादर्शनात्॰ कृदुत्तरपदप्रकृतिस्वरेणाप्रत्ययस्वरस्यैवदर्शनाच्चेत्याहुः कृतेः॰ कृती छेदनेऽस्मात्कत्रः स्यान्नुम्‌चागमश्च धन्वच यत्कृन्तत्रं चेति मन्त्रे कृन्तत्रं कर्त्तनीयमरण्यमिति वेदभाष्यम्॰ भृञ्॰ भृञ् भरणेऽम

गडेरादेश्च कः कडत्रं डलयोरेकत्वस्मरणात् कलत्रम् वृत्रश्चित् वरत्रा चर्ममयी रज्जुः सुविदेः कत्रन् सुविदत्रं कुटुम्बकम् कृतेर्नुम् च

कृन्तत्रं लाङ्गलम् भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्येभ्योऽतच् दशभ्योऽतच् स्यात् भरतः मरतो मृत्युः दर्शतः सोमसूर्य्यौ॰ यजतः ऋत्विक् पर्वतः पचतोऽग्निः अमतो रोगः तमतस्तस्मापरः नमतः प्रह्वः हर्य्यतोऽश्वः पृषिरञ्जिभ्यां कित् पृषतो मृगो विन्दुश्च रजतम् खलतिस्खलतेः सलोपः अतच्प्रत्ययान्तस्यइत्वञ्च खलतिर्निर्केशशिराः॥ ९ इ॰ प्राणत्यागे दृशिः प्रेक्षणे यज देवपूजादौ पर्व पूरणे॰ डुपचष् पाके अमगतौ तमु काङ्क्षायाम्॰ णमप्रह्वत्वे शब्दे हर्य गतिकान्त्योः दशपायाद्यानुभूः दृशीडि॰ तिपठित्वाद्दङ्॰ आद्रे ड्रियते दरतः शेते शयते इत्युदाहृतं तन्नरूशन्तमग्निं दर्शतं बृहन्तम्॰ तरणिर्विश्वदर्शतः देवो दर्शतो रथ इत्यादिमन्त्रे सङ्ग्राह्येण च विरोधात्॰ भरतो नाट्यशास्त्रप्रणेता॰ रामानुजश्च दौष्यन्तौ॰ इतिमेदिनी यजतः ऋत्विगिति उज्ज्वलदत्ताद्युक्तो धेन एवमुक्तम्॰ वेदभाष्ये तु हिरण्यशम्यं यजतो बृहन्तमित्यादिषु यजतशब्दो यष्टव्यपरतया व्याख्यातः पर्वतः पारदेपुंसि शाकमत्स्यप्रभेदयोः देवमुन्यन्तरे शैले इति मेदिनी॰ हर्यतोऽश्व इति परित्यं हर्यतं हरिमित्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम्॰ पृषि सेचने रंजरागे॰ आभ्यामतच् कित्स्यात्॰ पृषन्मृगे पुमान् विन्दौ न द्वयेपृषतोऽपिना॰ अनयोश्च त्रिषु श्वेतविन्दुयुक्ते पुंभाविमाविति मेदिनी॰ रजतं त्रिषु शुक्लेऽस्यात्

स्य

पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वतीति च पिशेः पिश अवयवे ऽयं दीपनायामपि अस्मादितन्स्यात्स च कित् पिशितम् मांसं मांस्यां स्त्रीति मेदिनी मांस्यां जटामां स्याम् तथा च जटा च पिशिता पेशीति धन्वन्तरिः ॥ ८४ ॥ सुदक्षि सुश्रवणो दक्ष वृद्धो स्पृह ईप्सायाम् गृह ग्रहणे चुरादावदन्तौ उच्यतः सुवे भवति आप्य इति मन्त्रे श्रवाय्यो मन्त्रे श्रवणीय इति वेदभाष्यम् दक्षाय्यो यो दम आस नित्य ई दिक्षु अपि यौगिकार्थ एव भाष्ये उपरस्तात् स्पृहयाय्य इति अयामन्तेति णेरयादेशः एवं गृहया य्य इति दिधिषाय्य इति डुधाञ् धारणपोषणयोः उज्ज्वलदत्तस्तु दधिषाय्य इति सूत्रे पठित्वा दधिपूर्वात् स्यतेराय्यः षत्वञ्च दधिषाय्यो घृतमिति व्याख्यात् द शपादौ वृत्तिकारस्तु धिव्रशब्दे अस्य हि त्त्वगुणाभावः अत्वञ्चाभ्यासस्य निपात्यत इत्याह प्रसादकारादयो ऽप्येवमेवाहुस्तदेतत्सर्वं प्र[illegible]दिकम् मित्र इ वयो दि

सुदक्षिस्पृहिगृहिभ्य आय्यः श्रवाय्यो यज्ञपशुः दक्षाय्यो गरुडो गृध्रश्च स्पृहयाय्यः गृहयाय्यो गृहस्वामी दिधिषाय्यः दधातेर्द्वित्व मित्त्वं षत्वञ्च मित्र इ वयो दिधिषाय्यः वृञ एण्यः वरेण्यः स्तुवः क्तेण्यन्छन्दसि स्तुषेय्यं पुरुवर्चसं राजेरन्यः राजन्यो वह्निः शॄ र म्योश्च शरण्यं रमण्यं अर्तेर्निच्च अरण्यं पर्जन्यः पृषु सेचने षस्य जः पर्जन्यः शक्रमेघयोः वदेरान्यः वदान्यस्त्यागिवाग्मिनोः। अमिनक्षियजिवधिपतिभ्यो ऽत्रन् अमत्रम्भाजनं नक्षत्रम् यजत्रः वधत्रमायुधम् पतत्रन्तनूरुहम् ॥ ८९ धिषाय्यो भूदिति वैदिकप्रयोगा

दिधिषाय्य इत्येव सूत्रं युक्तमिति प्रामाणिकाः वृञः वृञ् वरणे वरेण्यः श्रेष्ठः स्तुवः ष्टुञ् स्तुतौ स्तुषेय्यं स्तोतव्यं पुरुवर्चसं बहुरूपमिति वेदभाष्यम् स्तुवः केय्य इति पठित्वा कित्त्वाद्गुणाभावे उवङि सति स्तुवेय्यः पुरन्दर इत्युदाहरन् उज्ज्वलदत्तस्तु उदाहृतश्रुतितद्भाष्यादिविरोधादुपेक्ष्यः तस्मादिह क्तेय्य प्रत्यये पठन् दशपा दीवृत्तिकृदेव ज्यायानित्याहुः राजेः राजृ दीप्तौ क्षत्रियजातौ तु राजश्वशुराद्यदिति यत्प्रत्यये राजन्य इत्यन्तस्वरितः शॄरम्योः शॄ हिंसायाम् रमु क्रीडायाम् आ भ्यामन्यः स्यात् अर्तेः ऋ गतौ अस्मादन्यः स च नित् अटव्यरण्ये विपिनमित्यमरः पर्जन्यः पृषु सेचने षस्य जः पर्जन्यो मेघशब्दे ऽपि ध्वनदम्बुदशक्रयोरिति मेदि नी वदेः वद व्यक्तायाम्वाचि अजयं कोशस्थमा हवदान्य इति अमिनक्षि अम गत्यादिषु णक्ष गतौ यज देवपूजादौ वध हिंसायाम् पत्लृ गतौ नक्षत्रमि

तपसन्तापे पल्लृगतौ पणव्यवहारे स्तुतौ च पनच महश्रूजायां गौरादित्वात् ङीष् अतसीस्यादुमाक्षुमाइत्यमरः चमसोयज्ञपात्रस्यभेदेऽस्त्रीपिष्टकेस्त्रियामिति मेदिनी पनसः कण्टकिफले कन्टकेवानरान्तरे स्त्रियांरोगप्रभेदेस्यादितिच॥ ❀ ॥ वेत्रः वेञ्तन्तुसन्ताने अस्मादसन्स्यात्तस्यतुट् दशपादीवृत्तौतुविय सुट्चेतिपठित्वावीगतिप्रजनकान्त्यादिष्वितिधातोरुदाहृतः वहि वहप्रापणे शमिस्त्रणादौ अजगतौ शयुर्वाहसइत्युभावित्यमरः वातज्ञोवेदिवसवासरा विति च वायसइति असचोणित्वाद्वृद्धिः दिवः दिवुक्रीडादौ कृश्रृ कृविक्षेपे शृहिंसायाम् शलगतौ कलगतौ गर्दशब्दे करभोमणिबन्धादिकनिष्ठान्तोइ

वेत्रस्तुट् वाहुलकाद्वात्वाभावः वेतसः वहियुभ्यांणित् वाहसोऽजगरः यावसस्तृणसङ्घातः वयश्च वयगतौ वायसः काकः दिवः कित् दिवसः दिवसः कृश्रृशलिकलिगर्दिभ्योऽभच् करभः शरभः शलभः कलभः गर्दभः ऋषिवृषिभ्याङ्कित् ऋषभः वृषभः रुषे र्नित्लुक्च रुषहिंसायां अस्मादभच् नित्कित्स्यात्तुषादेशश्च लुषभोमत्तदन्तिनिरासिवल्लिभ्याञ्च रासभः वल्लभः जृविशिभ्याञ्झ च् जरन्तोमहिषः वेशन्तः पल्वलम् रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि रोहन्तोवृक्षभेदः नन्दन्तःपुत्रः जीवन्तऔषधं प्राणन्तोवा युः षित्वान्ङीष् रोहन्ती तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च दशभ्योऽच्स्यात्सचषित् तरन्तः समुद्रः तरन्तीनौकाभव न्तः कालः वहन्तोवायुः वसन्तऋतुः भासन्तः सूर्यः साधन्तोभिक्षुः गडर्घटादित्वान्मित्वंह्रस्वः अपामन्तेतिणेरयः गडयन्तोजलदः म ण्डयन्तोभूषणं जयन्तः शक्रपुत्रः नन्दयन्तोनन्दकः ॥ ९९

तत्सुतेइतिमेदिनी मणिबन्धादाकनिष्ठंकरस्यकरभोवहिरित्यमरः शरभस्तुपशो र्भिदिकरभेवानरभिदीतिमेदिनी समौपतङ्गशलभावित्यमरः कलभः करियोतकइतिच गर्दभश्वेतकुमुदेगर्दभोगन्धभिद्यपिरासभेगर्दभीक्षुद्रजन्तुरोगप्रभेदयो रितिमेदिनी ऋषिऋषीगतौ वृषिसेचने आभ्यांअभच्स्यात्सचकित् ऋषभस्त्वौषधान्तरे स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छकूपोःउत्तरस्थः स्मृतः श्रेष्ठेत्वीनरा कारयोषिति शूकशिम्ब्यांशिरालायां विधवायांक्वचिन्मतेतिमेदिनी वृषभः श्रेष्ठवृषयोरितिच रासिवल्लिरासशब्दे वल्लसम्वरणेवल्लभोदयितेऽध्यक्षेसलक्ष

शीङ्‌·शपि·शीङ्‌·स्वप्ने शप आक्रोशे· रूशृ्‌ रेषृ गम्लृ गतौ वञ्चु गतौ भ्वादिः वञ्चु प्रलम्भने च चुरादिः जीव प्राणधारणे अन प्राणने प्र पूर्वः उज्ज्वलदत्तेन । वञ्चि जीवी
तिपठ्यते· अन्यैस्तु वञ्चिस्थाने वन्दिः पठ्यते वञ्चथ वन्दथयोरन्यतरस्वेदादुपलभ्य बहुश्रुतैः पाठो निर्णेयः वन्दथ इति· कर्मणि कर्त्तरि वा प्रत्ययः प्राणथ इति
अनितेरिति णत्वम्‌· शमिदमिभ्यामिति· शम उ शमे दमु उपशमे· शमथः शान्तिमन्त्रिणोरिति मेदिनी· दमथस्तु पुमान्‌ दण्डे दमे च परिकीर्तित इति च· भृञः उ
भृञ्‌ धारण पोषणयोरस्मादथः स्यात्स च चित्‌· रुदिर्‌ रुदिर्‌ अश्रुविमोचने· विद ज्ञाने आभ्यामथः स्यात्स च ङित्‌· विदिथो योगि ज्ञातिनोरिति मेदिनी· अत्रोज्ज्वलदत्तः रु

शीङ्‌ शपि रु गमि वञ्चि जीवि प्राणिभ्योऽथः सम्भ्योऽथः स्यात्‌ शयथोऽजगरः शपथः रवथः कोकिलः गमथः पथिकः पन्थाश्च
वञ्चथो धूर्त्तः वन्दीति पाठे वंद्यते वा वन्दथः स्तोता स्तुत्यश्च जीवथ आयुष्मान्‌ प्राणथो बलवान्‌ बाहुलकाच्छमिदमिभ्याम्‌ श
मथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः भृञः श्चित्‌ भरथो लोकपालः रुदिविदिभ्यां ङित्‌ रोदितीति रुदथः शिशुः वेत्तीति विदथः
पसर्गे वसः आवसथो गृहम्‌ सम्वसथो ग्रामः अत्यविचमितमिनमिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्च त्रयोदशभ्योऽस
च्‌ स्यात्‌ अतनीत्यतसः वायुरात्मा च अवतीत्यवसो राजा भानुश्च चमत्यस्मिन्‌ चमसः सोमपानपात्रं ताम्यत्यस्मिन्‌ तमसोऽन्धकारः
नमसो ऽनुकूलः ॥ रभसो वेगहर्षयोः लभसो धनं याचकश्च नभति नभ्यति वा नभसः आकाशः तपसः पक्षी चन्द्रश्च पतसः पक्षी पनसः
कण्टकफले पणसः पण्यद्रव्ये महसं ज्ञाने ॥

विदिभ्यां किदिति पठित्वा रौतीति रुवथः श्वेत्युदाजहार दशपादी वृत्तिकारस्तु रुदिविदिभ्यां किदिति पपा
ठ इह तु भाष्यानुरोधेन ङिदिति पठितम्‌ तथा हि गाङ्‌कुटादि सूत्रे के पुनश्च ङादयः चङ्‌ अङ्‌ नजिङ्‌ अथङ्‌ नङ्‌ इति भाष्यम्‌· किदिति पठतां तु अथङिति भा
ष्यन्नसङ्गच्छेतेति दिक्‌ उपवसनिवासेऽस्मादुपसर्गे उपपदेऽथः स्यात्‌· उज्ज्वलदत्तेन तु सोपसर्गाद्वसेरिति पठितमन्ये तु आङि· वसेरिति पठितम्‌· अत्य
वि· अत सातत्यगमने अव रक्षणादौ चमु अदने तमु कांक्षायाम्‌· णभ प्रह्वत्वे शब्दे रभ राभस्ये· डु लभष्‌ प्राप्तौ णभ तुभ हिंसायाम्‌ भ्वादौ क्र्यादौ चायम्‌·

शृङ्गारएतौ निपात्येते शृ हिंसायाम् इभृञ् धारणपोषणयोः आभ्यामारन् नुम् गुग्ह्रस्वश्च शृङ्गारः सुरते नाट्यरसे च गजमण्डनेन पुंसकं लवङ्गे पिनागसम्भव
चूर्णयोरिति मेदिनी शृङ्गारी भिल्लिकायां स्यात्कनकालो पुनः पुमान् इति च कजिमृजूस्रुभ्यो नित्वादारन्प्रत्यय अन्तोदात्तः कञ्जारो जठरे सूर्ये विरञ्चौ वारणे मुना
विति विश्वमेदिन्यौ मार्जार ओतौ खट्वाङ्गे इति च ओतुर्बिडालो मार्जार इत्यमरः कमेः कमुकान्तौ अस्मादारन्कित्स्यात् कुमारः स्यात् शुके स्कन्दे युवराजे ऽश्ववार
के बालके वरुणाद्रौ नानड्योजीत्यकाण्डे ने कुमारी शैलतनयावनमाल्यो नेशीभिदि सहायराजिता कन्या जम्बूद्वीपेषु च स्त्रियामिति मेदिनी विश्वप्रकाशे तु कु
मारी रामतरणीति पाठः रामतरणी लताविशेषः सहेति प्रसिद्धः तरणी रामतरणी कर्णिका चारुकेसरा सहाकुमारीगन्धाढ्येति धन्वन्तरिनिघण्टुः जम्बूद्वीपसहाक

शृङ्गारभृङ्गारौ शृभृञ्भ्यामारन् नुम् गुक् ह्रस्वश्च शृङ्गारो रसः भृङ्गारः कनकालुका कञ्जिमृजिभ्याञ्चित् कञ्जिः सौत्रः कञ्जारो मयूरो
मार्जारः कमेः किदुच्चोपधायाः चिदित्यनुवर्त्तेरन्तोदात्तः कुमारः तुषारादयश्च तुषारः कासारश्च सहारश्चाम्रभेदः दीङो नुट् च दीनारः
सुवर्णाभरणं सर्त्तेरपः षुक् च सर्षपः उषिकुटिदलिकचिखजिभ्यः कपन् उषपो वह्निसूर्ययोः कुटपो मानभाण्डम् दलपः प्रहरणं कच
पः शाकपत्रम् खजपं घृतम् क्वणेः सम्प्रसारणञ्च कुणपं कुणपश्चाकृतवर्म्मणास्यस्वरे भेदः विटपपिष्टपविशिपोलपाः चत्वारोऽमी कपन् प्र
त्ययान्ताः विटशब्दे विटपः विशतेरादेः पः प्रत्ययस्य तुट् षत्वं पिष्टपम् भुवनम् विशतेः प्रत्ययादेरित्वं विशिपं मन्दिरम् वर्तेः सम्प्रसार
णं उलपं कोमलतृणम् ॥ ॥

न्याः कुमार्यो धात्र्यश्ववारके बालके कार्त्तिकेये च कुमारो भर्तृदारके इति त्रिकाण्डशेषः तुषार एते निपात्यन्ते तुषतुष्टौ आर
न् तुषारस्तु हिनं हिममित्यमरः कासृ शब्दकुत्सायाम् कासारः सरसी सर इत्यमरः सहार इति षहमर्षणे दीङ् दीङ् क्षये अस्मादारन् तस्य नुडागमश्च सर्त्तेः सृगतौ अ
स्मादपः स्यात् धातोः षुगागमश्च उषिउषदाहे कुटकौटिल्ये दल विदारणे कच बन्धने खजमन्थे क्वणेः क्वण शब्दे अस्मात्कपन् धातुवकारस्य सम्प्रसारणञ्च कुणपः
पूतिगन्धे शवे पि च इति मेदिनी कुणपः शवमस्त्रियामित्यमरः विटपः विटपो न स्त्रियां स्तम्बशाखा विस्तारपल्लवे विटाधिपे ने इति मेदिनी विशतेरिति विश प्रवेशने

ग्रात्तुरङ्गमेइतिमेदिनी· जॄविशि जॄवयोहानौ ·विशप्रवेशने वेशन्तः पल्वलंचाल्पसरइत्यमरः वाहुलकाद्हेतेरपि झच् अर्हन्तः क्षपणकोजिनइतिविक्रमादि
त्यकोशः रुहि रुहवीजजन्मनि इन्दिसमृद्धौ जीवप्राणधारणे अनप्राणनेप्रपूर्वः एभ्यः आशिषिझच् सचषिद्भवति· प्राणन्तइति· अनितेरितिणत्वम्· तॄभू· तॄप्ल
वनतरणयोः भूसत्तायाम्· वहप्रापणेवसनिवासेभासृदीप्तौसाधसंसिद्धौगडसेचने· मडिभूषायाम्· उभौरयन्तौ· जिजयेडुनदिसमृद्धौरयन्तः नन्दयन्तइति·उ
ज्ज्वलदत्तस्तुनन्दन्तइत्युदाहृत्यपूर्वसूत्रेणगतार्थमाशंक्य· अनाशीरर्थनन्दिग्रहणमित्याह· तच्चिन्त्यम्· इहाप्याशिषीत्यस्यस्वयमेवानुवर्तितत्वात्·॥ॐ॥हन्तेः
हनहिंसागत्योरस्मात् ·झच्प्रत्ययः स्यात्तस्यमुडागमः धातोर्हिंशब्दादेशश्च भन्देः भदिकल्याणेसुखेचअस्मात्· झच्स्यान्नातोनेकारलोपश्च· ऋच्छेः ऋच्छगतौवा
हुलकादिति· जर्जचर्चझर्झपरिभाषणहिंसातर्जनेषुपरिभाषणभर्त्सनयोरितितुदादौ· जर्जरंशैवलेशक्रध्वजेत्रिषुजरन्तेरङ्गझर्झरः स्यात्कलियुगेवाद्यभेदेन

हन्तेर्मुड्हिच हेमन्तः भन्देर्नलोपश्च भदन्तः प्रव्रजितः ऋच्छेररः ऋच्छरावेश्या वाहुलकाज्जर्जरझर्झरादयः अर्तिकमिभ्रमिच
मिदेविवासिभ्यश्चित् षड्भ्योऽरश्चित्स्यात् अररङ्कपाटं कमरः कामुकः भ्रमरः चमरः देवरः वासरः कुवः करन् कररः पक्षिभेदः
अङ्गिमदिमन्दिभ्य आरन् अङ्गारः मदारो वराहः मन्दारोऽमरः गडेः कडच कडारः ॥ १९ दानारेइतिचमेदिनी· वाहुलकादेवकस्यजादेशे

जर्झरइत्युज्ज्वलदत्तः अर्तिकमि ऋगतौकमुकान्तौ· भ्रमुअनवस्थाने चमुअदने दिवुक्रीडादौवसनिवासे उभावपिरयन्तौ· अररं छदकपाटयोरितिमेदिनी· कपा
टमररं तुल्ये इत्यमरः भ्रमरः कामुके भृङ्गे इतिमेदिनी चमरंचामरेस्त्रीतमञ्जरीमृगभेदयोरितिच चमरोमृगभेदः देवरः पत्युः कनिष्ठभ्राता वासर इति केचित्तु सूत्रेवाशि
भ्य इति ज्ञालव्यं पठित्वा वाशृशब्दे इत्यस्मादरप्रत्ययो वाशप इति वाशरः कोकिल इत्याहुः कुवः कुशब्दे अङ्गि अगिगत्यर्थः मदीहर्षे मदिस्तुत्यादौ अङ्गारउल्मु
केनस्त्रीपुंल्लिङ्गः कुमहीसुतइतिमेदिनी· मन्दारः स्यात्सुरद्रुमे· पारिभद्रेऽर्कपर्णेचमन्दारोहस्तिधूर्तयोरितिच· मदिस्तुत्यादावित्यस्माद्वाहुलकादारुरपि·॥पारिभ
द्रेतुमन्दारुर्मन्दारःपारिजातकइतिशब्दार्णवः· गडेः गडिवदनैकदेशेगडसेचने· अस्मादारन्प्रत्ययः स्यात्कडादेशश्च· कडारः कपिलदासेइतिमेदिनी· कडारः कपिलः

लक्ष्मीः सम्पत्तिशोभनयोः ऋद्धौषधौ च पद्मायामिति मेदिनी ॥ ॥ इत्युणादिषु तृतीयः पादः ॥ ॥ माधातोरिति मा माने क्वित्वादातो धातोरित्यालोपः वातप्रमी
वातमृग इत्यमरः अयमिति द्विचतुःषट्पदोरगा इत्यमरेण चतुष्पाद्वाचिनामुभयलिङ्गत्वोक्तेः सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः त
न्त्रदिकारादिति पाक्षिको ङीष् केश्चिदिष्यते न च ह्रस्वादेव कृदिकारादिति ङीष् भवतिनतु दीर्घादिति शंक्यम् वर्णनिर्देशो कारप्रत्ययस्य विधानेन दीर्घादपि कृ
दिकारेति ङीष् सम्भवात् अत एव वातप्रमी श्री लक्ष्मीति पक्षे ङ्यन्ताः सुसाधव इति रक्षितः एतच्च उर्षस्यग्रन्थे स्पष्टम् आशीराश्यपहिदंष्ट्रायां लक्ष्मी लेस्मी हरिप्रिया
तिद्विरूपकोशः अत एव आशीविषो विषधर इत्यमरकोशस्सङ्गच्छते अश भोजन इत्यस्मादिणजादिभ्य इति इण्प्रत्यये उपधावृद्धौ कृदिकारादिति ङीषः सी

इत्युणादौ तृतीय पादः ॥ ॥ वातप्रमीः वातशब्दे उपपदे माधातोरी प्रत्ययः स च कित् वातप्रमीः अयं स्त्रीपुंसयोः ऋतन्यञ्जिवन्यं
ज्यर्पिमद्यत्यङ्गि कुणुकृशिभ्यः कतिच् पञ्चजलिजिष्ठुजिषृजिसनस्य निष्ठितुल्यसासातकः द्वादशभ्यः क्रमात्स्युः ऋतिः कतिच्
यण् वड्डसुस्थिः करोरतिः सोरतिः प्रसृताङ्गुलिः तनोतेर्यत्तुच् तन्यतुर्वायुः रात्रिश्च अञ्जेरलिच् अञ्जलिः वनेरिष्ठुच् वनिष्ठुः स्थवि
रः अञ्जेरिषुच् अञ्जिष्ठो भानुः अर्पयतेरिसन् अर्पिसोऽग्रमांसं मदेः स्यन् मत्स्यः अतेरिथिन् अतिथिः अङ्गेः कतिः अंगुलिः कोतेरसः
कावसः अच इत्येके कावचम् ॥

कारात् आशीतिचकलामिन्दोरिति राजशेखरः आशीर्हिताशंसाहिदंष्ट्रयोरिति सान्तेऽमरात्सान्तोऽप्याशिस् शब्दोस्ती
त्यन्यदेतत् ऋतनि ऋगतौ तनु विस्तारे अञ्जू व्यक्त्यादौ वनु याचने अञ्जूस्तव ऋगतौ एयन्तः मदी हर्षे अतसातत्यगमने अगिगत्यर्थः कुशब्दे युमिश्रणे ऋषतनूकार
णे प्रसङ्गादाह अरत्निरिति नरत्निः अरत्निरिति नञ्समासः प्रसृताङ्गुलिः सहस्तः अरत्निरित्यर्थः दशपादीवृत्तौ तु कत्निजित्यत्र ककारमपठित्वा ऋतेरत्निच मकितं
विधाय अरत्निः साधितः उज्ज्वलदत्तानुसारेणाह वायुः रात्रिश्चेति तन्यतुः शब्दो मेघः अशनिश्चेत्यपि बोध्यम् आ विष्कृणोमितन्यतुर्न वृष्टिमिति मन्त्रे तन्यतुर्गर्जि
तमिति स्तनादर्शिन तन्यतुरिति मन्त्रे तन्यतुर्मेघ इति उतस्मात्स्य तन्यतोरिव द्योरिति मन्त्रे दिवश्चित्तन्यतुमिति मन्त्रे च तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात्

आदेः परः इति एतच्च उज्ज्वलदत्तरीत्योक्तम् अन्ये तु सूत्रे विष्टपेति दन्त्योष्ठ्यादिमेव पठन्ति युक्तं चैतत् यतस्तत्र अस्य विष्टपमित्यादौ तथा दर्शनात् अमरकोशे
पि विष्टपं भुवनं जगदिति प्रचुरपाठाच्च वलतेरिति वल वल्ल संवरणे सञ्चरणे च उलपो नस्त्रीगुल्मिन्यां नानातृणान्तरे इति मेदिनी॥ ॥ वृतेः वृतु वर्तने शृ
भिदि हृती छेदने भिदिर् विदारणे लति सौत्रो धातुः इष्यशि इष इच्छायाम् अशूव्याप्तौ वार्थ्यात कित्त्वात् इष्टकेति इष्टकेषीकामालानामिति निर्देशात्
त्यपस्यादिति नेत्वं केचित्तु प्रत्ययस्थादितीत्वमिह न भवत्यनित्यत्वात् तद्ज्ञापकान्तु मृदस्तिकन्निति इकारोच्चारणमित्याहुः इणस्तश एतशा इति अत्वसन्त
स्येति दीर्घः एतशश्शो एतशसः वीपति पत्लृगतौ यततनं पुटभेदनमिति पुरीपर्यायेष्वमरः हृदलि हृविदारणे दलविकसने अर्ति गृ ऋगतौ इ पत्तौत्यर्भः शिशुः सं

वृतेः तिकन् वर्तिका शृतिभिदिलतिभ्यः कित् शृतिका भितिका भितिः लतिका गोधा इष्यशिभ्यान्तकन् इष्टका अष्टका इणस्तश
न्तशसुनौ एतशो ब्राह्मणः स एव एतशाः वीपतिभ्यान्तनन् वीगत्यादौ वेतनं पत्तनं हृदलिभ्यामभः दर्भः दल्भः स्याद्दृषि चक्रयोः
अर्तिगृभ्यामभन् अर्भः गर्भः इणः कित् इभः असिसञ्जिभ्यांक्थिन् अस्थि सक्थि शुषिकुषि शुषिभ्यः क्सिः ॥ शुक्षिर्वह्निः कुक्षिः शु
क्षिर्वातः अशेर्नित् अक्षिः इषेः कुः इक्षुः अवितृस्तृतन्त्रिभ्यईः अवीर्नारी रजस्वला तरीर्नौः स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः यापोः
किद्द्वे च ययीरश्वः पपीः स्यात्सोमसूर्ययोः लक्षेर्मुट् च लक्ष्मीः ॥

९९ ज्ञापकनिअर्भकः गर्भोभ्रूणोऽर्भके कुक्षौ सन्धौ पनसकण्टके इति मेदिनी
इण इणगतौ अस्मान्नन् कित्स्यात् इभः स्तम्बेरमः पद्मीत्यमरः असि असुक्षेपणे षञ्ज सङ्गे कीकसं कुल्यमस्थि चेत्यमरः सक्थि क्लीबे पुमानूरुरित्यमरः शुषि शुष
दाहे कुषनिष्कर्षे शुषशोषणे अशः अशूव्याप्तौ अस्मात् क्तिन्नित्स्यात् अक्षिनयनं इषेः इष इच्छायाम् रसाल इक्षुरित्यमरः अवि अवरक्षणादौ तृप्लवनतरण
योः स्तृञ् आच्छादने तनि कुटुम्बधारणे चुरादिण्यन्तः तरीरिति स्त्रियां नौस्तरणिस्तरीरित्यमरः यापोः या प्रापणे पापाने आभ्यामीः कित्स्यात् द्वित्वञ्च धातोः ल
क्षेः लक्षदर्शनाङ्कनयोः चुरादिण्यन्तः अस्मादीप्रत्ययः स्यात्तस्य मुडागमो णिलोपश्च लक्ष्मीः पद्माविभूतिश्च कृदिकारादिति ङीषि लक्ष्मीरित्यपि भवतीति रक्षितः॥

इतिमन्त्रस्यवेदभाष्येतत्सूत्रमुदाहृतम्॰ अत्रायम्विवेकः इनिप्रत्ययान्तइतिमते॰ अन्तोदात्तत्वंन्याप्यंप्रत्ययस्वरेण॰ इनेरिकारस्योदात्तत्वात्॰ अवग्रहाभावोवाहुलका
त्॰ द्वितीयमतेत्त्ववग्रहाभावोन्याप्यः परन्तुप्रत्ययस्वरेणोकारस्योदात्ततयाभुस्तिनक्प्रत्ययान्तस्यमध्योदात्तत्वेप्रसक्तेवाहुलकादन्तोदात्तःस्वीकर्त्तव्यइति॥ ॥ खजे
खजमन्थे वलाका वलप्राणनेशलगतौ पलगतौएतेभ्यआक्प्रत्ययान्तानिपात्यन्तेवलाकावकपंक्तिः स्याद्वलाकाविसकण्ठिका॰ वलाकाकामुकीप्रोक्तावलाकश्चव
कोमत इतिविश्वशाश्वतो॰ शलाकाञ्जनयष्टिका॰ पताकावैजयन्त्यांचसौभाग्येऽङ्केध्वजेपिचेतिविश्वः पताकावैजयन्त्याञ्चसौभाग्येनाटकाङ्कयोरितिमेदिनी॰ पि
नाका॰ एतेभ्याक्प्रत्ययान्तानिपात्यन्ते॰ पारस्कणोपिनाकोस्त्रीरुद्रचापेपांसुवर्षत्रिशूलयोरितिमेदिनी॰ अमरोक्तिमाहक्लीवपुंसोरिति॰ किन्त्वपिष्टुसञ्चूर्णेनेष

खजेराकः खजाकःपक्षी वलाकादयश्च वलाका शलाका पताका पिनाकादयश्च पातेरित्त्वंनुमश्च क्लीवपुंसोःपिनाकःस्यात् शूलश
ङ्करधन्वनोः तडआघाते तडाकः कषिदूषिभ्यामीकन् कषीकापक्षिजातिः दूषीकानेत्रयोर्मलं अनिहृषिभ्यांकिच्च अनीकं हृषीकं च
ङ्कणः कङ्कणञ्च कणशब्दे असायङ्लुगन्तादीकन्धातोःकङ्कणादेशश्च घण्टिकायांकङ्कणीकासेवप्रतिसरापिच शृपृवञ्चाहे
रुकाभ्यासस्य शर्शरीकोहिंस्रःपर्परीकोदिवाकरः वर्वरीकःकुटिलकेशः॥ १९ कारस्यणत्वंधातोर्यगागमः पिण्याकोस्त्रीतिलकल्केहिङ्गु॰
वाल्हीकसिल्हके इतिमेदिनी॰ कषिकषखषेत्तिदण्डकोहिंसार्थकः दुषवैकृत्येण्यन्तः॰ दोषोणाविन्त्युपधायाऊकारः अमरोक्तिमाहदूषिकेति किन्त्वअस्तेपि ई
कानि दूषयतेरचइतिइप्रत्ययेदूषिःकृदिकारादिति ङीषिदूषी॰ उभाभ्यामपिस्वार्थेकनिदूषिकाहूस्वमध्येव केणइतिङीषोपिह्रस्वादेशात्॰ पिचण्डीदूषिकादूषी
पिचाटंचदृशोर्मलमितिविक्रमादित्यकोशः दूषिकातूलिकायाञ्चमलेस्याल्लोचनस्यचेतिमेदिनी॰ अनिहृषि अनप्राणने॰ हृषतुष्टौ॰ आभ्यामीकन्स्यात्॰ सचकि
त्॰ अनीकोस्त्रीरणेसैन्येपीतिमेदिनीहृषीकंविषयीन्द्रियमित्यमरः॰ चंकणः॰ कणधातोर्यङ्लुकिप्रत्ययलक्षणन्यायेनसन्पङोरितिद्वित्वेकुहोश्चुरित्यभ्यासस्य
चुत्वेतगतोऽननासिकान्तस्येतित्रकिचंकणङ॰ सिङ॰ सोस्तुचंकणःधातोरितिचंकणित्यस्य॰ शृपृ॰ शृहिंसायाम्॰ पृपालनादौ॰ वृञ्वरणे एभ्यईकन्एषांद्विर्वचन
मभ्यासस्यरुगागमश्च शर्शरीकइत्यादिउरदत्वेरपरत्वम्॥ ॥

अञ्जलिस्तु पुमान्हस्तसम्पुटे कुडवेपि चेति मेदिनी· स्थविरान्त्रमिति· वनिष्ठोर्हृदयाद्दधिरिति मन्त्रस्य भाष्येन्तर्थोक्तत्वात् अञ्जिष्ठ इति केचित् अञ्जेरिष्णुच मिष्णुगितितेषाम
ञ्जिष्णुरुदाहरणाम्· अर्पिसइति· अर्त्तिह्रीत्यादिना पुक् णेरनिटीति णिलोपः मदेरिति· मत्स्यो मीनेऽथ पुम्भूम्नि देशे इति मेदिनी अतिथिः कुशपुत्रे स्यात्पुमान्· आगन्तुकेति
थितिच· अङ्गुलिः करशाखायां कर्णिकायां गजस्य चेति च कवसः सन्नाहः कंकटजातिश्च· अच इति· कवचो गर्दभाराडे च सन्नाहे पर्पटेपि चेति मेदिनी ॥ ॥ योतेरि
ति· दुरालभा कटुस्पर्शी यासो धन्वयवास इति धन्वन्तरिनिघण्टुः कृशानुः पावको नल इत्यमरः श्रः शॄ हिंसायाम्· शर्करा खण्डविकृतावुपला शर्करांशयोः शर्करा
न्वितदेशे च रुग्भेदे शकलेपि चेति मेदिनी· पुषः पुषपुष्टौ अस्मात्करन्स्यात्स च कित्· पुष्करं खे सुपद्मयोः तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः कुष्ठौषधि द्वीपतीर्थ
भेदयोश्च नपुंसकम्· नागनागविहगनृपभेदेषु चारुणाविति मेदिनी· कलेश्च· उष्यते· कलन्स्यात्स च कित्· पुष्कलस्तु पूर्णश्रेष्ठ इति हेमचन्द्रः गमेः गम्लृ गतौ· भ

योतेरासः यवासो दुरालभा कृशेरानुक् कृशानुः शृ· करन् उणरसूत्रे किदूहणादिह ककारस्यनेत्वं शर्करा पुषः कित् पुष्करम् क
लश्च पुष्कलं गमेरिनिः गमिष्यतीति गमी आङि णित् आगामी भुवश्च भावी प्रे स्थः प्रस्थायी परमे कित् परमेष्ठी मन्थः मन्थतेरि
निः कित्स्यात् कित्वान्नकारलोपः मन्थाः मन्थानौ मन्थानः पतस्थच पन्थाः पन्थानौ॥ ९ विष्यतिगम्यादयइत्याशयेनाह गमिष्यतीति आग
मीति इनिप्रत्ययस्य णित्वादुपधावृद्धिः आगमिष्यतीत्यर्थः भुवः भू सत्तायाम् अस्मादिनिः स च णित्स्यात्· भविष्यतीति भावी· प्रेस्थः ष्ठा गतिनिवृत्तौ· प्रपूर्वादस्मादिनिः स च णि
त्· णित्वादातो युगिति युक्· प्रस्थायी गन्तुकामः परमे· परमशब्दे उपपदे तिष्ठतेरिनिः कित्स्यात्· कित्वादातो लोपः हलदन्तादित्यलुक्· परमेष्ठी पितामह इत्यमरः मन्थः म
न्थ विलोडने· मन्था इति· पथिमथीत्यात्त्वम् इतोऽत्सर्वनामस्थाने· मन्था मन्थनदण्डे च वज्रे चापेऽपि च स्मृतः पतः पत्लृ गतावित्यस्मादिनिस्थश्चान्तादेशः पथ्येगताविति
स्मात्पचाद्यचि अकारान्तोप्यस्ति वाटः पथश्च मार्गश्चेति सुभूतिचन्द्रः त्वचित्त्वचः किरपि स्यात्किरे स्रोक्तः पथः पथीति द्विरूपेषु विश्वः इह ऋभवो देवाः सन्त्यस्मि
न्निति विग्रहे अन्येभ्योपि दृश्यत इति डः ऋभुक्षः स्वर्गवज्रयोरिति विश्वः ततो मत्वर्थीयो निः ऋभुक्षिन्निति नान्तम्प्रातिपदिकम्· पथिमथीत्यात्वे इतोऽदित्त्वे च ऋ
भुक्षा इन्द्रः ऋभुक्षाणौ॰ ऋभुक्षाण इत्युज्ज्वलदत्तः दशपाद्यान्तु· अर्त्तेः भुक्षिनगिति सूत्रमपन्यस्यतस्य· ऋभुक्षिन्नित्युदाहृतम्· ऋभुक्षिणमिन्द्रमाहुव ऊतये

मृडःकीकच्·मृडसुखने मृडःकीकन्नित्युज्वलदत्तादिपाठः आमादिकः·मृडीकशब्दस्य चित्स्वरेणान्तोदात्तत्वात्·मृलीके अस्य सुमतौ स्यामेत्यादौ चित्स्वरस्यै
वदर्शनात्· अलीकात् अलीकमप्रियेपि स्याद्दिव्यासत्येनपुंसकमिति मेदिनी· अलीकमप्रियेभोक्तमलीकमनृतेदिवीति विश्वः अलीकमप्रियेभालेवित
थेइति हेमचन्द्रः तथाचाभियुक्तैः प्रयुज्यते तेदृष्टिमात्रपतिता अपिकस्य नात्र क्षोभायपक्ष्मलदृशामलकाःखलास्त्वनीचाः सदैवसविलासमलीकलग्नाये
कालतांकुटिलतांच नसन्त्यजन्तीति·इहालीकलग्नाः भाललग्नाः अप्रियेलग्नाइत्याद्यर्थेयथायोग्यम्बोध्यम्·व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने नानाग
रेइतिमेदिनी·वलसम्वरणे वली कनीध्रेपटलप्रान्तेइत्यमरः वलतेरुमागमे वल्मीकंवामलूरश्चनाकुश्चवल्मीकंपुन्नपुंसकमित्यमरः·वहतेर्हस्वश्चवाहीको

मृडःकीकचकङ्कणौ मृडीकोमृगः मृडङ्कणः शिशुः अलीकादयश्च कीकजन्तानिपात्यन्ते अलभूषणादौ अलीकंमिथ्या विपूर्वाद्व्य
लीकंविप्रियम्बृन्दैः दश्च वलीकम्पटलप्रान्तेइत्यादि कृॄदृभ्यामीषन् करीषोऽस्त्रीशुष्कगोमये तरीषः तरीता शॄपॄभ्यांकिच्च शिरीषः
पुरीषम् अर्जेर्ऋजच ऋजीषंपिष्टपचनं अम्बरीषः अयन्निपात्यते अविशब्दे अम्बरीषःपुमान् भ्राष्ट्रम् अमरस्तुक्लीबेऽम्बरीषंभ्रा
ष्ट्रोनाकृ शॄपॄकटिपटिशौटिभ्यईरन् करीरोवंशाङ्कुरः शरीरम् परीरम्फलम् कटीरःकन्दरोजघनप्रदेशश्च पटीरश्चन्दनःकरण्डकः
कामश्च शौटीरस्त्यागिवीरयोः आद्युदात्तत्वात्ष्यञ् शौटीर्यं॥ १

गौरस्यश्च·सुप्रदर्वीदिणात्तु इत्च·सुपतीकःशांप्यतेःशमीकःऋषिःएवमन्ये
प्यूह्याइत्याशयेनाहइत्यादीति·कृत्त्व कृविक्षेपेत्दलवनतरणयोः श्रृॄ शॄहिंसायाम्·पॄपालनादौ आभ्यामीषन्कित्स्यात्·ऋतइद्धातोरितिइत्वेरपरत्वम्·शिरीषोद्रुम
भेदः·उदोष्ठ्यपूर्वस्येत्युत्त्वं·पूर्थं पुरीषं वर्चस्कमस्त्री विष्ठाविशौस्त्रियामित्यमरः अर्जेः·अर्जषर्जअर्जने अस्मादीषन्कित्स्यात्·धातोर्ऋजादेशश्च अमरोक्तिमाह·ऋ
जीषमिति·किन्त्व उद्धृतरसःसोमलतायाःशेषोपिऋजीषम्·एतच्चऋजीषिणंवृषणसम्पतश्रिये·असत्योपात्तमघवान्ऋजीषीइत्यादिमन्त्रेभाष्ये स्पष्टम्·अ
अयमिति·ईषन्प्रत्ययस्तस्य·अरुडागमश्चेत्यर्थःवोपालितोक्तिमाह अम्बरीषमिति क्लीबेऽम्बरीषंभ्राष्ट्रइत्यमरः अम्बरीषरणेभ्राष्ट्रेक्लीबंपुंसिनृपान्तरेनरकस्यपि

पर्फरीकादयः ईकान्ताः एते निपात्यन्ते । पर्फ शब्दे इति एतच्चोज्ज्वलदत्तरीत्योक्तं वस्तुतस्तु धातोर्द्वित्वमकारस्याकारः सलोपः रुक् चाभ्यासस्येति दशपाद्यां यद्यन्तदेवन्याय्यम् । चरेर्नुम् च त्यत्तरग्रन्थानुरोधेन हे रुक् चेत्याद्यनुवृत्तेर्व्यर्थत्वात् । किसलयमिति । नैतो शेवतर्करी पर्फरीकावितिमन्त्रस्य वेदभाष्ये तु निफलावि शरणौ । पृ पालनपूरणयोः पर्वं पुर्वं पूरणे एषामन्यतमस्य निपातनमिदमित्याश्रित्य शत्रूणां विदारयितारौ स्तोतृणां पालकौ इष्टार्थस्य पूरयितारौ चेति व्याख्यातम् । दर्दरीकमिति दृ विदारणे अस्मादीकन्धातोर्दर्दरादेशः मर्मरीकमिति । मृष् वधे हनो अस्मादीकन्धातोर्मर्मरादेशः वस्तुतस्तु दर्दरीकमर्मरीकावपि पर्फरीकवद्धातोर्द्वित्वं रुक् चाभ्यासस्येति व्याख्येयौ । उत्तरखण्डे ऋकारस्य गुणो रपरत्वम् । तितिडीक इति तिम् ष्टीम् आर्द्रीभावे मकारस्यो कारः अभ्यासस्य तु रुक् च तितिडीचिंचाम्लिके त्यमरे तु शब्दोऽन्तरं तथा चिञ्चिका चिञ्चा तितिडीका च तितिडा इति चन्द्रः तिडीत्वम्लिका चिंचा तितिडीका कपिप्रियेति वाचस्पतिः अम्लीका चाम्लिका चि

पर्फरीकादयश्च स्फुरस्फुरणे अस्मादीकन् धातोः पर्फरादेशः पर्फरीकं किसलयं दर्दरीकं वादित्रम् मर्मरीकं शरीरं तितिडीकीदृक्षभेदः चरेर्नुम् च चञ्चरीको भ्रमरः मर्मरीको हीनजनः कर्करीका गलन्तिका पुणतेः पुण्डरीकं वादित्रं पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च ईषेः किद्ध्रस्वश्च इषीका शलाका ऋजेश्च ऋजिक उपहतः सर्तेर्नुम् च सृणीका लाला ॥ ११ ॥

श्चा तितिडीका च तितिडा इति चन्द्रः अम्लीका तु निकाचक्रासाम्ला शुक्राथ शुल्लिका अम्लिका चिञ्चिका चिञ्चा तितिडीका तु तितिडेति धन्वन्तरिनिघण्टुः । चरेः । चर गतिभक्षणयोरस्मादीकन् द्विर्वचनमभ्यासस्य नुमागमश्च भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः इन्दिन्दिरः पुष्पकीटो मधुव्रतो मधुकेशट इति त्रिकाण्डशेषः मर्मरीक इत्यादि मृङ् प्राणत्यागे उज्ज्वलकरणे आभ्यामीकन् धातोर्द्वित्वम् अभ्यासस्य रुक् कर्करी यालुर्गलन्तिकेत्यमरः पुण कर्मणि शुभे अस्मादीकः प्रत्ययस्य रुडागमश्च पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे पुंसि व्याघ्रेऽग्निदिङ्नागकोशकारान्तरेऽपि चेति मेदिनी ईषेः ईष गतावस्मादीकन् ह्रस्वश्च कित्त्वाद्गुणाभावः ह्रस्वविधानसामर्थ्याद्वगुणाभावे सिद्धे पुनरर्थे कित्वमित्याहुः इषीका स्यादिषिकापि वा नाऊजवनाऊजाविति द्विरूपकोशः ऋजेः ऋज गतौ ॥ सर्तेः सृ गतावस्मादीकन् कित्त्याद्धातोर्नुमागमश्च सृणीका स्यन्दिनी लालारव्य

दिवोद्दिवक्रीडादौ· अस्मात्क्विन् कित्त्वाद्गुणाभावः दीदिविर्धिषणान्नयोरिति विश्वः दीदिविर्ना धिषणेऽन्नेतु स्त्रियामिति मेदिनी· धिषणो बृहस्पतिः दीदिवि र्दशकारश्च प्रसूःसुरगुरुर्गुरुरिति त्रिकाण्डशेषः दीदिविर्द्धीदशार्चिः स्याज्जीवः प्राक्फल्गुनीसुत इति हारावली· ओदनो स्त्री सदीदिविरित्यमरः अत्र सदीदिविर्द्दि विसहित इति व्याख्यानं न्याय्यम् अत्र स इति विशेषणाद्दीदिवेः पुंलिङ्ग इति केषांचिद्व्याख्याने नादर्त्तव्यम् स इति छेदनेतु अस्त्रियामिति न लभ्येत ततश्चान्यत रस्त्रियामिति पूर्वोक्तमेदिनी ग्रन्थो विरुध्येतेति ध्येयम्· गोपामृतस्य दीदिविमिति मन्त्रेतु दीप्तमानमित्यर्थः क्विदुस्तन्त्र करणे घृषुसेचने· छो छेदने स्थाग तिनिवृत्तौ· दिवक्रीडादौ एते क्विन्नन्ता निपात्यन्ते· घृष्विर्वराह इति· उग्रस्य सूनस्थविरस्य घृष्वेरिति मन्त्रेतु घृष्वेः कामानां वर्षकस्येत्यर्थ इति व्याख्यातम्॰

दिवोद्वे दीर्घश्चाभ्यासस्य दीदिविः स्वर्गमोक्षयोः क्विघृष्विकुविस्थविकिकीदिवि क्विस्तन्तुवायप्रयत्न घृष्विर्वराहः क्यस्योर्हस्व त्वंञ्चकुविर्दीप्तिः स्थविस्तन्तुवायः दीव्यतेः किकी इवीत् किकीदिविश्चाषः वाहुलकात् ह्रस्वदीर्घयोर्विनिमयः चाषेणाकिकिदीविना पातेर्डतिः पतिः शकेर्ऋतिन् शकृत् अमेरतिः अमतिः कालः वहिवस्यर्तिभ्यश्चित् वहतिः पवनः वसतिर्गृहयामिन्योः अरतिः क्रो धः अञ्चेः कौवा अङ्कतिः अञ्चतिर्वात्तः हन्तेरंहच हनेरतिः स्यादंहादेशश्च धातोः हन्तिदुरितमनया अंहतिर्दानं प्रादेशनत्रिर्व पणमपवर्जनमंहतिः रमेर्नित् रमतिः कालकामयोः ॥ ९ घृषुसेचने इति धात्वर्थानुगमात् कुविः शोभारुचोर्योषिदिति मेदिनी· अथ चाषः कि

कीदिविरित्यमरः विनिमय इति· किकिदिविः किकीदिवावितिद्विरूपकोशः पातेः पारक्षणे डित्त्वाट्टिलोपः पतिर्धवेनाभिषीश इति मेदिनी शकेः शकृच्छत्तौ उच्चा रावस्करौ शमलं शकृत्· गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियामित्यमरः अमेः· अमगतौ अथामतिः पुंसि हिमरीधितिकालयोरिति मेदिनी· वहि· वहप्रा पणे वसनिवासे· ऋगतौ वसतिस्स्वचिवे गवीति विश्वः वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने इति मेदिनी· अञ्चेः· अञ्चुगतौ अस्मादतिः स्यात्ककारश्चा न्तादेशो विकल्पेन· हन्तेः· हनहिंसागत्योः अमरोक्तिमाह· प्रादेशनमित्यादि· रमेः· रमतेरतिः स्यात्स च नित्· रमतिर्नायके नाके पुंसि स्यादिति मेदिनी· नित्वमाद्यु

किशोरेभास्करेपिच· आम्रातकेजुपातेचेतिमेदिनी ·कृस्तृट कृविक्षेपेस्तृहिंसायाम्· स्तृपालनत्रराणयोः कटेवर्षावरणयोः इट किट कटीगतौ चुरादौ पट पुटेति· दण्डको भाषार्थः पोट्टगर्वेवंशांकुरेकरीरोस्त्रीवृक्षभिद्घटयोः पुमान्·करीरचीरिकायाञ्चदन्तमूलेचचरिडनामितिमेदिनी· शीर्यत इतिशरीरम्· शरीरंवर्ष्मविग्रह इत्यमरः अर्द्धर्चादित्वाच्छरीरइतिपुल्लिङ्गोपि परीरमिति· पूर्यतेऽनेनेतिविग्रहः·बाहुलकात् हिडिगत्यनादरयोः हिराडतेइतस्ततोगच्छतीतिहिराडीरः· हिराडीरोऽब्धिकफः·फेनइ त्यमरः डिराडीरोपिचहिराडीरइतिद्विरूपकोशः किर्मीरजम्बीरतूणीरादयोपिबाहुलकादेवबोध्याः·किर्मीरोनागरङ्गेचकर्बुरे राक्षसान्तरेइतिमेदिनी जम्बीरः प्रस्थपुष्पेस्याज्जम्बीरदन्तशठद्रुमेइतिच॥ ॐ॥ वशः·वशकान्तौ अस्मादीरन्कित्स्यात्· कित्त्वात्सम्प्रसारणादि·उशीरंवीरणमूलमुशीरोपि मूलेऽस्योशीर

वशः·कित् उशीरम् कशेर्मुट् च कश्मीरोदेशः·कृन्त्उच्च कुरीरंमैथुनं घसेः किच्च क्षीरम् गभीरगम्भीरौ·गमेर्भः पक्षेनुम्च विषावि हाभ्यांतेजहातेःस्त्वविश्वाभ्यामाप्रत्ययः विषावृद्धिः विहास्वर्गः·अव्ययमेतत् पचएलिमच् पचेलिमोवह्निरव्योः शीडोधुक्लक् वलञ्वालनः चत्वारः प्रत्ययाः स्युः शीधुर्मद्यं शीलंस्वभावः·शेवलः·शेवालम्·बाहुलकात् वस्यपोपि शेवालंशेवलोनस्त्रीशैपालोजल नीलिका मृकणिभ्यामूकोकरणौ मरूकोमृगः·काणूकः काकः॥

॥मस्त्रियाम्·अभयंनलदंसेव्यमित्यमरः·कशेः कशइतिसौत्रोधातुः अस्मादीरन्·तस्यमुडा गमश्च·पृषोदरादित्वात्काश्मीरः·कृञः डुकृञ्करणे अस्मादीरन्·धातोरन्त्यस्यउदादेशोरपरः·घसेः घस्लृ अदने अस्मादीरन्कित्स्यात्·गमहने त्युपधालोपेकर्त्वंषत्वं क्षीरंदुग्धेचनीरेचेतिविश्वः·गभीरगम्लृगतौ अस्मादीरन्भकारान्तादेश·पक्षेनुमागमश्चनिपात्यते निम्नंगभीरंगम्भीरमित्यमरः·विषापोन्तकर्मणि ओहाक्त्यागे आभ्यांविश्वाभ्यामाप्रत्ययोनिपात्यते पचः डुपचष्पाके अस्मादेलिमच्स्यात्·कर्त्तरिअयम्·कृत्यप्रत्ययेषुतुकेलिमरउपसंख्यातः· शीडः· शीड्स्वप्ने शेरतेऽनेने ति शीधुर्मद्यविशेषः·मैरेयमासवः·शीधुरित्यमरः· अर्द्धर्चादिपाठात्क्लीबत्वं पुन्नपुंसकयोर्दीर्घजीवानुस्याणशीधवइतित्रिकाण्डशेषः·शीलंस्वभावेसद्वृत्तेइतिमे दिनी·जलनीलीतुशैवालंशैवलइत्यमरः·शैवलंपद्मकाष्ठेस्यात्·शैवालेतुउमानयमितिमेदिनी· शब्दार्णवोक्तिमाहशेवालंशेवालइति· मृकणि·मृड्प्राण त्यागे·क

मृकणि मृङ् प्राणत्यागे॰ कण शब्दार्थः मरीचिः॰ रूपणोदीतो ऋषिभेदे च दृश्यते इति विश्वः मरीचिर्मुनिभेदे ना गभस्तौ न नपुंसकमिति मेदिनी॰ कणीचिः॰ पुष्पितल
तागञ्जयोः शकटे स्त्रियामिति च॰ श्वयतेः टुओश्वि गतिवृद्ध्योः अस्मादीचिप्रत्ययश्चित्स्यात् वेञः वेञ् तन्तुसन्ताने ऽस्मादीचिर्डित्स्यात्॰ वीचिः स्वल्पे तरङ्गे स्यादवकाशे
सुखे ह्यपीति विश्वमेदिन्यौ॰ ऋ हनि ऋ गतौ हन हिंसागत्योः कुषन॰ कित्वाद्गुणाभावः पुरुषः॰ पुरुषे सांख्यतत्त्वे च पुन्नागपादपे इति विश्वमेदिन्यौ ष्टनहि ष्टूपालन शूर
णयोः णह बन्धने कल शब्दसंख्यानयोः परुषं कर्बुरे रूक्षे निष्ठुरे तन्नो च वाच्यवदिति मेदिनी नहुषो राजविशेषे नागभिद्यपीति हेमचन्द्रः उषच श्वित्त्वान्नहुषशब्दस्या
न्तोदात्तत्वे प्राप्ते ग्रामादित्वा द्वृषादित्वाद्वा आद्युदात्तत्वमित्याहुः एतच्च देवा अक्रं एवन्नहुषस्यवि श्वमिति मन्त्रस्य भाष्ये स्पष्टम्॰ कलुषं त्वाविले न सारिति विश्वः पी

मृकणिभ्यामीचिः। मरीचिः। कणीचिः। पल्लवी निनादः श्वा श्वयतेश्चित्॥ श्वयीचिर्व्याधिः। वेञो डिच्च॥ वीचिस्तरङ्गः। नञ्समासे अवीचि
र्नरकभेदः। ऋहनिभ्यामूषन्। अरूषः सूर्यः। हनूषो राक्षसः। पुरः कुषन्। पुर अग्रगमने। पुरुषः। अन्येषामपीति दीर्घः। पूरुषः। पृनहिकलि
भ्य उषन्। परुषम्। नहुषः। कलुषम्। पीयेरूषन्॥ पीय इति सौत्रो धातुः। पीयूषम्। बाहुलकाद्गुणः। पेयूषोऽभिनवम्पयः। मस्जेर्नुम्च। मञ्जू
षा गडेश्च॥ गण्डूषः। गण्डूषा। अर्तेररुः॥ अररुः शत्रुः। अररू। अररवः॥

इति मेदिनी॰ अमरोक्तिमाह पेयूष इत्यादि मस्जेः टुमस्जो शुद्धौ॰ अस्मादूषन्स्यान्नुमागमश्च धातोः मिदचोन्त्यात्परः सस्य श्चुत्वेन शस्तस्य जश्त्वेन जस्तस्य फरोगरीति वा ((येः पीयूषममृतं सुधेत्यमरः पीयूषं सप्तदिवसावधि क्षीरे तथामृते
लोपः लोपाभावपक्षे जकारद्वयम्॰ मञ्जूषा काष्ठमयं द्रव्यम् पेटक इति यावत्॰ पिटकः पेटकः पेटी मञ्जूषेत्यमरः॰ गडेः गडि वदनैकदेशे गण्डूषो मुखपूरणः॰ अर्तेः ऋ
गतौ उकारान्तोऽयं प्रत्ययो न तु सकारान्त इति स्फोरयति॰ अररू अररवः इत्यनेन न च ओकारान्तत्वे विवदितव्यम्॰ कश्चिद्यद्यावि ररुं श्रूरमर्त्यम्॰ आपाररुमदेवयज
नो जहीत्यादि मन्त्रेषु तथा दर्शनात्॰ अत्र व्याचक्षते मानश्शंसाररुष इति मन्त्रस्य भाष्ये सान्तोऽयमिति माधवेनोक्तम्॰ यत्तत्तौ ढिवादमात्रेन तु वास्तवम्॰ अररुष
इति पदस्य आद्युदात्तत्वानुपपत्तिप्रसङ्गात्॰ तस्माज्जातेः लिटः क्वसुश्चेति क्वसौ ररिवानित्यनेन नञ्समासे ऽस्य ररुष इति व्याख्येयम्॰ तत्तश्च नञ्पुरुषे तत्पार्थेऽत्वा

सूङः षूङ् प्राणिप्रसवे किच्चाद्गुणाभावः सुमान् सूरिः कृती कृष्टिर्लव्धवर्णो विचक्षण इत्यमरः दशपाद्यान्तु सुनो रिन्दीर्घश्चेति पाठः तत्र रिनो नकारो नानुबन्धः उत्तर
सूत्रे क्रिन्नित्यपारम्भात् अनुबन्धत्वे हि लाघवादिहैव क्रिन्नुच्येत तथा च सूरी सूरिणौ सूरिण इत्यादिरूपम् अतएवाभिधानमालायां सूरीति नान्तमुदाहृतमित्यभि
धेयम् दशपादी वृत्तिकारैस्तु नित्वं स्वीकृत्य सूरिरित्युदाहृतम् तदेतेन प्रत्युक्तम् स्वरविरुद्धमपि सदा पश्यन्ति सूरयः विसूरयो रथतो विश्वमापुरित्यादौ सूरिश
ब्दस्यान्तोदात्तत्वदर्शनात् अद्रि अदभक्षणे षद्लृ शातने भू सत्तायाम् शुभ शुम्भ शोभार्थे अद्रयो द्रुमशैलार्का इत्यमरः भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि नपुंसकं
सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गक इति मेदिनी वंक्र्यादयः वकि कौटिल्ये टुवप् वीज सन्ताने निपातनात् सम्प्रसारणाभावः अहि भाषार्थे घुरादिर्ण्यन्तः अघिगतौ ग
त्यारम्भे च ञिभी भये तन्द्रिरिति कृदिकारादिति ङीष् तन्द्री निद्राप्रमीलयोरिति मेदिनी तन्द्री तन्द्रिश्च तन्द्रायामिति द्विरूपकोशः विभज्य नक्तंदिवमस्ततन्द्रि

सूङः क्रिः ॥ सूरिः ॥ अदिशदिभूशुभिभ्यः क्रिन् ॥ अद्रिः शद्रिः शर्कराः भूरि प्रचुरम् शुभ्रिर्ब्रह्मा ॥ वंक्र्यादयश्च ॥ क्रिन्नन्ता निपात्यन्ते ॥ वं
क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च ॥ वप्रिः क्षेत्रं ॥ अंह्रिरंघ्रिश्च चरणः ॥ तदिः सौत्रो धातुः ॥ तन्द्रिर्मोहः ॥ वाहुलकाद्गुणः ॥ भेरिः राशदिभ्या
न्त्रिप् ॥ रात्रिः शत्रिः कुञ्जरः ॥ अदेस्त्रिनिश्च ॥ चात्रिप् ॥ अत्री ॥ अत्रिणौ ॥ अत्रिणः ॥ अत्रिः ॥ अत्रौ ॥ अत्रयः ॥ पतेरत्रिन् ॥ पतत्रिः पक्षी ॥

णो तिभारविः प्रत्ययस्य कित्त्वाद्गुणाभावमाशंक्याह वाहुलकादिति राशदिरादाने शद्लृ शातने शत्रिर्ना म्भोधरे विक्षाविति मेदिनी शत्रिमग्र उपमाकेतुमर्ययइति
मन्त्रस्य वेदभाष्ये नूपमा उपमानभूतं केतुं प्रख्यातं शत्रिं एतन्नामकं राजर्षिमिति व्याख्यातम् अदेः अद भक्षणे अत्री भक्षकः अत्रिर्मुनिभेदः उज्ज्वलदत्तस्तु अ
देस्त्रिन्निति पठित्वा अत्रिरित्युदाजहार तन्न त्रिपैवेष्टसिद्धौ प्रत्ययान्तरवैयर्थ्यात् गोवर्द्धनस्तु अदेस्त्रिन्नि चेति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा अत्री अत्रि
णौ अत्रिण इत्याह तदपि न नित्वे सत्याद्युदात्तत्वापत्तेः न चेष्टापत्तिः जहीन्या अत्रिणं पणिं अग्ने हंसि न्या अत्रिणमित्यादावन्तोदात्तस्य निर्विवादत्वात् अतएव नलुम
ताङ्गस्येति सूत्रे अदेस्त्रिनिश्चेत्येव कैयटोप्याहेति दिक् पतेः पत्लृ गतौ पतत्रिरिति पक्षवाचकात्पतत्रशब्दान्मत्वर्थ इनिस्तु नान्तः पतत्री पतत्रिणौ पतत्रिण इत्यादि

कीटवृक्षयोरिति मेदिनीहेमचन्द्रौ· द्रूपूसामर्थ्यं वाहुलकात्कपोरोलः इति लत्वाभावः· अथ कर्पूरमस्त्रियाम्· घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुकेत्यमरः· वल्ल
सम्वरणे· वल्लूरम् उक्तम् शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकमित्यमरः· एवं शालूरादयो द्रष्टव्याः· भेके मण्डूकवर्षाभूशालूरप्लववर्दुराः इत्यमरः॥ ः॥ लङ्गेः व
गिगित्यर्थः· लाङ्गूलं पुच्छशेफसोरिति मेदिनी· कुसूल इति· कुसश्लेषणे दन्त्यसकारवान्· कुसूलं च कुसीदञ्च मध्यदन्त्यमुदाहृतमिति विश्वः· ताम्बूलादयोऽप्यत्र द्र
ष्टव्याः· तमुग्लानौ वृद्दीर्घत्वञ्च· ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकमिति मेदिनी· शॄ हिंसायां धातोर्वृद्धिर्दुगागमश्च· शार्दूलो राक्षसान्तरे व्याघ्रे च पशुभे
दे च सत्तमे तूत्तरस्थितः इति मेदिनी· विश्वप्रकाशौ· उत्तरस्थितः उत्तरपदभूतः शार्दूलशब्दस्तु· श्रेष्ठवाची राजशार्दूल इति यथा· दुगतौ कुड् शब्दे अनयोः कुक्कचद्दु
कूलं स्यात्क्षौमवस्त्रं स्यात्· क्षौमे चेति मेदिनी· कुकूलं शङ्कुसंकीर्णे श्वभ्रे ना तु तुषानले इति विश्वमेदिन्यौ· शिरीषादपि मृद्वङ्गी· केयमायतलोचना अयं क्वच कुकू
द्य

लङ्गेर्वृद्धिश्च॥ लां गूलं कुसूलः॥ कुवश्च ह्रस्वदीर्घश्च॥ कूची चित्रलेखनिका॥ समीरणः॥ समीचः समुद्रः॥ समीची हरिणी॥ सिवेष्टेरूच॥ सूचो द
भोङ्कुरः॥ सूची॥ शमेर्वन्॥ शम्बो मुसलम्॥ उल्वादयश्च॥ वन्नन्तानि पात्यन्ते॥ उच समवाये॥ चस्य लत्वं॥ गुणाभावश्च॥ उल्वं गर्भाशयः॥ शुल्व
न्ता म्रं॥ विम्बमास्यसेतोऽम्बजवकौ॥ तिष्ठतेरम्बच् अवकः एतौ स्तस्तादेशश्च॥ स्तम्बो गुच्छस्तृणादिनः॥ स्तबकः॥ पुष्पगुच्छः॥ ११ लोमिकर्कशो

मदनानल इति प्रयोगश्च· कुचः कु शब्दे कुचः स्तनः कुचकूचौ स्तनौ मताविति विश्वः· कूचीति टित्वान्ङीप्· समीरणः ईण् गतौ अस्मात्सम्युपपदे च ह्रस्वाद्दीर्घश्च धातोः सि
वेः षिवु तन्तुसन्ताने अस्मा च ट् प्रत्ययः स्यादेस्तत्वञ्च टित्वान्ङीप्· सूची तुसी वनद्रव्ये प्याङ्गि काभिनयान्तरे इति मेदिनी· शमेः शम उपशमे शम्बः स्यान्मुसलाग्रस्थलोह
मण्डलके पवौ· शुभान्विते त्रिष्विति विश्वमेदिन्यौ· उल्वमिति· गर्भाशये जरायुः स्यादुल्वन्तु कललो स्त्रियामित्यमरः· शुच शोके चस्य लत्वं गुणाभावश्च प्राम्वत्· शु
ल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधाविति मेदिनीहेमचन्द्रौ· वीगतिप्रजनकान्त्यसनखादनेषु· अस्य नुमागमो ह्रस्वत्वञ्च· वबयोरभेदाद्बिम्बम्· विम्बस्तु प्रति
विम्बे स्यान्मण्डले पुन्नपुंसकम्· विम्बिकायाः फले क्लीवं कृकलासे पुनः पुमानिति मेदिनी स्थस्तः ष्ठागतिनिवृत्तौ स्तम्बो गुल्मे तृणादीनाम् प्रकाण्डरुमेऽपि चेति विश्व

नापूर्वपदप्रकृतिस्वरे सत्याद्युदात्तत्वं सिध्यति· गुरुहूवोऽररूपे रथनीत्यत्र स्वयमेवगाते· कृसन्तस्यनञ् समास इत्यादि व्याख्यानात्· योनो अग्ने अररिवां अघायुरि
त्यादि मन्त्रान्तर सम्भवाच्चेति ॥ ॥ कुटः कुट कौटिल्ये ऽस्मादरुः स्यात्स च कित्· चिन्त्यमिति· गाङ् कुटादिभ्य इति ङित्त्वे नैव गुणाभाव सिद्धेरिति भावः शकिर्ग
त्यर्थ इति· शक्लृ शक्तौ वित्यस्मादटन्नित्येके क्लीबेन· शकटो स्त्री स्यादित्यमरः· देवट इति· देवृ देवने करट इति· डुकृञ् करणे· कृ विक्षेपे इत्यस्माद्वा अटन्· काकेभ
गण्डौ करटौ इत्यमरः· करटो गजगण्डे स्यात्कुसुम्भे निंद्यजीविनि· एकादशाहादि श्राद्धे दुर्दुरूढेऽपि वाद्य से इति मेदिनी· कृकटि· डुकृञ् करणे कटे वर्षा वरणयोः कर
म्बो मिश्रिते वा नो भाना सुदधि सक्तुष इति विश्वः कदम्बं निकुरुम्बे स्यान्नीप सर्षपयोः प्रमानिति च· कालिः कल संख्याने कर्दकुत्सिते शब्दे कलमः उंसिले खिन्यो

कुटः किच्च ॥ कुटरुर्वस्त्रगृहं । कित्वप्रयोजनं चिन्त्यम् ॥ शकादिभ्योऽटन् ॥ शकटोऽस्त्रियां । ककिर्गत्यर्थः । कङ्कटः सन्नाहः । देवटः शि
ल्पी करट इत्यादि । कृकदिकडिकटिभ्योऽम्बच् ॥ करम्बं व्यामिश्रम् । कदि कडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रं ॥
कदेर्णित्युक्षिणि ॥ कादम्बः कलहंसः । कलिकर्द्योरमः । कलमः । कर्दमः । कुणिपल्योः किन्दच् ॥ कुणाशब्दोपकरणयोः । कुणिन्दः श
ब्दः । पलिन्दो जातिविशेषः । कुपेर्वा वश्च ॥ कुपिन्द कुविन्दौ तन्तुवाये । नौ षञ्जे र्घथिन् ॥ निषङ्गथिः आलिङ्गकः । उद्यर्त्तेश्चित् ॥ उदरथिः
समुद्रः । सर्त्तेर्णिच्च । सारथिः ॥ खर्ज्जिपिञ्जादिभ्य ऊरोलचौ ॥ खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्त्तिः ॥ ॥

शालोपाटश्चोरपि चेति मेदिनी· कुणिपल्योः पल महत्त्वे· कुण· कुपको थेऽस्मात्किन्दच स्यात् वकारस्यान्तादेशो विकल्पेन· तन्तुवायः कुविन्दः स्यादित्यमरः· बाहुल
कादलभूषणादौ· अलिन्दं· यस्यामलिन्देषु न चकुरेव मुग्धाङ्गना गोमय गोमुखानीति माघः· नौ षञ्जे· षञ्ज सङ्गे· नि पूर्वादस्मात् घथिन् स्यात् उपसर्गात्सुनोतीत्यादिना षत्व
म्· चजोरिति कुत्वम्· आभ्ररस्य निषङ्गथिः रथकूवर इत्यर्थः· उदि ऋ गतौ उत्पूर्वादस्मात् घथिन् स्यात्स च चित्· सर्त्तेः सृ गतौ अस्मात् घथिन् णित्स्यात्· नियन्ता प्राजि
ता यन्ता सूतः क्षत्ता च सारथिरित्यमरः· खर्जि खर्ज मार्जने पिञ्ज हिंसायाम्· खर्जादिभ्यः पिञ्जादिभ्यश्च यथाक्रमं ऊर ऊलचौ स्तः· खर्जूरं रूप्यफलयोः खर्जूरः ।

